॥ अथ श्रीमुद्गलपुराणं प्रारभ्यते ॥

भारतसर्वकारस्य शिक्षण-समाजकल्याणमन्त्रालयस्य आर्थिकेन
साहाय्येनेदं श्रीमन्मुद्गलपुराणं प्रकाशतां नीतम् ।
इति श्रीमन्मुद्गलप्रकाशनमण्डलं तस्मै
शतशो धन्यवादान् वितरति ।

॥ श्रीः ॥

# ॥ निवेदनम् ॥

## ॥ ॐ नमः श्रीगजाननाय ॥

महर्षिणा मुद्गलेन प्रणीतस्य मुद्गलपुराणस्य श्रीगणेशस्तुतिपरिप्लुतस्य कियन्महत्त्वमिति नाविदितं सर्वेषां विशेषतश्च श्रीगणेशभक्तानाम् । महर्षिभिर्मुद्गलाचार्यैरस्मिन् पुराणे दक्षाय प्रजापतये श्रीगजाननस्य विविधाऽवतारकथा निवेदिताः । विहाय श्रीगणेशपुराणमेतादृशं पुराणं नैव लभ्यते । परं चेदं पुराणमिदानीं दुर्लभं संजातम् । पंचसप्ततिसंवत्सरेभ्यः प्राक् कुरुंदवाडाधिपतिना केवलं कतिपयानि पुस्तकानि मुद्रितान्यासन् । तानि पुस्तकानि तेनाधिपतिना स्वज्ञातिगृहेषु सुहृत्सु च वितीर्णानि । तदपि न लभ्यतेऽधुना ।

एवं च स्थिते सुविख्यातमिदं पुराणं सर्वे श्रीगजाननचरणकमलवन्दनार्थं लभन्तामिति मनीषया तस्य मुद्रणार्थं सर्वात्मना बद्धपरिकराणां विदुषां मण्डलमेकं श्रीमताम् अप्पाशास्त्रिजोशी महोदयानामध्यक्षत्वे विधिज्ञानां श्री० मा. वि. पुरंदरे महोदयानां सहाय्येन संस्थापितम् । अप्पाशास्त्रिणामशेषमायुः केवलं श्रीगजाननस्य पादवन्दने व्यतीतम् । तैर्महता प्रयत्नेनैकं हस्तलिखितं मुद्गलपुराणस्य समासादितम् । तदनंतरं तैः ज्ञातिजनानामन्येषाञ्च बहूनां साहाय्येन पुराणस्यैतस्य हस्तलिखितं मुद्रणार्थमुपकल्पितम् । एवं ते खलु प्रथमे प्रेरका अस्मिन् विषये । परं चास्य पुराणस्य प्रसिद्धेः प्रागेव दुर्दैववशात्ते स्वानंदवासिनो बभूवुरिति महता दुःखेन निवेद्यते । इदं पुराणं प्रसिद्धिं नेतुं येषां महत्याकांक्षाऽऽसीत् तेऽद्य प्रकाशनमहोत्सवस्यास्यानन्दभाजो न बभूवुरित्यहो करालता कालस्य । ततः पश्चात् श्रीमद्भिः अ. सा. राजाध्यक्षमहोदयैरस्य मण्डलस्याध्यक्षधुरा स्वस्कंधयोर्विधृता । सत्यामपि हृद्रोगपीडायां तैरनल्पेनोत्साहेन कार्यमिदं पुरः प्रचालितम् । तेषां तेषां दातॄणां गृहाणि गत्वा द्रव्यसंचयः कृतः । तेषां सर्वं गृहमेव श्रीगणेशमयं वर्तते । श्रीगजाननादृते अन्यः कश्चन विचारोऽपि तेषां मनसि नागच्छति । विहाय श्री. राजाध्यक्षप्रयत्नान् कार्यमिदं न सफलं स्यात् । मयूरग्रामे (मोरगांव) तैर्विविधा मूर्तयः स्थापिताः । तत्र च पानार्थं जलमानेतुं महान् प्रयत्नः कृतः । तदपीदानीमचिरादेव सफलं भविष्यति ।





'डॉक्टर' इति पदवीधारिणः मीठीबाई महाविद्यालये संस्कृतस्य प्राध्यापकाः श्रीमन्तः सी. ग. देसाई महोदया अस्मिन् कर्मणि प्रायतंत । प्रारंभादेवास्य कर्मणस्तेऽस्मिन् प्रकाशनमंडले समावेशिता आसन् । संस्कृतभाषायां लिखितमिदं पुराणमिति संस्कृतज्ञैर्विना न ज्ञातुं शक्यमिति प्राध्यापकानां श्री. सी. ग. देसाई महोदयानां महत्साहाय्यमुपलब्धम् । प्राध्यापकाः देसाईमहोदया अस्य पुराणस्य महाराष्ट्रभाषायाम् ओवीबद्धमनुवादं कर्तुं बद्धपरिकराः । चतुर्विंशतिसहस्रपरिमितानां श्लोकानां तादृशो महाराष्ट्रभाषायामनुवादः कृतो मुद्रितश्च यदा स्यात् तदा विक्रान्तचरितमिदं स्यादिति न संदेहलवोऽपि । तदनंतरं प्राध्यापकाः व्याकरणाचार्याः श्रीमन्तः मो. वि. महाशब्देमहोदयाः रुइया महाविद्यालये संस्कृतं पाठयन्तः मंडलेऽस्मिन् समागन्तुं विज्ञप्ताः । प्राध्यापकैर्महाशब्देमहोदयैरस्य पुराणस्य संशोधनकार्यस्य भारः स्वीकृतः । केन्द्रसर्वकारस्यानुदानमस्मिन् कार्ये लब्धम् । तत्रैकः समय आसीद्यत् संशोधनमस्य पुराणस्य स्यादिति । प्रा. महाशब्देमहोदयैः विविधानि हस्तलिखितानि पुरतो निधाय महता परिश्रमेण ग्रन्थस्यास्य संशोधनं कृतम् । पुण्यपत्तनस्य श्री. ओंकारमहोदयैस्तेषां सविधे विद्यमानमेकमस्य पुराणस्य हस्तलिखितं सभाष्यं संशोधनार्थं मंडलाय प्रदत्तमिति महान् तेषामनुग्रहः । योगीन्द्रमठे सुनिहितं सुपूजितं यद्धस्तलिखितं विद्यते तदपि श्रीमद्भिः ग. रा. दुराफे महोदयैः कमपि कालं महाशब्देमहोदयेभ्योऽवलोकनार्थं प्रदत्तम् । श्री. रामभाऊ ढेरे महोदयैः श्रीगणपतेः पूजकैरपि हस्तलिखितमेकं स्वायत्तीकृतं कंचित् कालं प्राध्यापकमहोदयानाम् ।

सुमहदिदं पुराणं महता द्रव्यसंचयेन विना मुद्रितुमशक्यप्रायमिति मंडलेन केन्द्रसर्वकारस्य शिक्षण–समानकल्याणमंत्रालयः द्रव्यसाहाय्यार्थमभ्यर्थितः । तेनाऽपि व्ययस्य प्रतिशतं षष्टिपरिमितः भागः दास्यत इति प्रतिश्रुतमिति महान मंडलस्य संतोषः ।

अस्मिन विषये उपकृतं खलु मंडलं मुंबापुरीविद्यापीठस्य संस्कृतविभागप्रमुखैः डॉ. त्र्यं. ग. माईणकरमहोदयैः, देहलीनगरस्थैः प्राध्यापकैः डॉ. बी. एम्. चतुर्वेदीमहोदयैश्च । सर्वकारस्थानेनानुदानेनेदं कार्यं सफलं संपन्नम । श्रीमद्भिरूपल्लोकायुक्तैः ल. मा. नाडकर्णीमहोदयैरस्मिन कार्यविषये विशेषां रुचिं प्रदर्श्य भूयो भूयः सम्यक्तया मार्गदर्शनं कृतमिति उपकृताः स्मः । द्रव्यसाहाय्यार्थं नैकविधानि श्रीगणपतिसंस्थानान्यभ्यर्थितानि । तेषां मध्ये केवलं चिंचवडग्रामस्थसंस्थानेन रूप्यकसहस्रत्रयमेकरूप्यकाधिकं (रु. ३००१) प्रदत्तमिति तत धन्यवादार्हम । अन्यथा शिवाजीउद्यानगणपतिसंस्थानं दादरग्रामस्य, सिद्धिविनायकसंस्थानं प्रभादेवीग्रामस्य, श्रीसिद्धिविनायकमंदिरं टिटवाळग्रामस्य, फडके मंदिरं गिरगांवग्रामस्य, श्रीगजाननसंस्थानं सांगलीग्रामस्थेति नैकविधानि संस्थानानि भूयो भूयः सविनयं





याचितानि । परं नैकेनापि तेषामद्यापि किमपि प्रेषितमिति चेखिद्यते चेतः । वस्तुत एतादृशानां संस्थानानामेवेदं मुद्रणकार्यं गणपतिभक्तिवर्धकम् । महाराष्ट्रभाषायां मुद्रणस्यास्य पुराणस्य यन् महत् कार्यमुर्वरितं तस्मिन् द्रव्यसहाय्यार्थं श्रीगजाननस्तेषां सुबुद्धिं ददात्विति प्रार्थयामहे ।

श्रेष्ठिभिः श्री· **बाबुरावपारखेमहोदयैर्मुद्रणार्थमस्य** सहस्ररूप्यकपरिमितः 'कागजः' (कागद) दत्त इति तेषां ऋणं न विस्मरिष्यामः । आगामिनि महाराष्ट्रभाषायां मुद्रणेऽनल्पं साहाय्यं तैः प्रतिश्रुतमिति धन्यवादार्हास्ते । श्री. **गो. आ. मोकल** इत्येतैरस्मिन्कर्मणि महत् साह्यं कृतम् ।

अनेकैर्ग्राहकैः पूर्वमेव मूल्यं प्रेषितमिति तेभ्योऽपि वितीर्यते धन्यवादाः । तथैव यैः किल **अप्पाशास्त्रिणां** गृहमागत्य मुद्रणार्थमस्य पुराणस्य लेखनं कृतं, **श्री. स. कृ. काळे महोदयैः** श्री. मोहनराव कामत महोदयैश्च चित्राणि चित्रितानि श्री. दि. अ. देसाईमहोदयैः सर्वोदयमुद्रणालये तानि मुद्रितानि, मयूरक्षेत्रदेशालेख्यस्यास्मिन्पुराणे समाविष्टाः प्रतिलेखाः श्री. दिवेकरमित्रैः श्री. वि. वि. ऐतवडेकर महोदयैः विनामूल्यं प्रदत्ता इति ते सर्वे धन्यवादार्हाः । श्रीमताम् अप्पाशास्त्रिणां सुपुत्राः श्री. **गणेश विनायक तथा बापू जोशी** महोदयाः स्वपितुः श्रीगणेशविषयकं कार्यं प्रचालयंति । तथैव श्री. ज. शां. देशपांडेमहोदयैः **श्री. न. भा. दंडवते** महाभागैश्च प्रत्यहं साहाय्यं कृतं मुद्रणकार्येऽस्मिन् । अततेऽपि धन्यवादार्हाः । निर्णयसागराख्यमुद्रणालयेऽखिलस्यास्य पुराणस्य १०४१ **पृष्ठात्मकस्य** मुद्रणं संपन्नम् ।

प्रथमं तु तावदासीत् काचन समस्याऽस्य मुद्रणकार्ये । निर्विघ्नतया पारं गमिष्यति वा न वा इत्यासीत् चिंताकुलं चेतः । परं चान्ततः महतोत्साहेनेदं कार्यं समयमर्यादायाः प्रागेव समाप्तिं नीतमिति मुद्रणालयस्य व्यवस्थापकाः कर्मचारिणश्च धन्यवादमर्हंति । तत्रापि श्री. **वि. अ. सायनेकर**-शास्त्रिणः विशेषतो धन्यवादार्हाः । तैः किल सावधानेन मुद्रितानि संशोध्य यावच्छक्यं विशुद्धं मुद्रणं स्यादिति प्रयत्नः कृतः ।

अन्ततो मयूरग्रामस्य योगींद्रमठे निवसद्भिः इदानीं स्वानंदवासिभिः, **बाळशास्त्री केसकर** महोदयैः, **श्री. हेरंबराज** इत्याख्यैः, तथैव तत्रैव निवसद्भिः **ग रा. दुराफे** महोदयैः समये समये अमूल्याः सूचनाः कृता इति तैरनुगृहीताः स्मः ।

अधस्तनैर्दानशूरैः रूप्यकशतद्वयादूर्ध्वं द्रव्यसाहाय्यं कृत्वा प्रोत्साहिता वयमस्मिन् कार्ये ।

| | रुप्यकाणि |
|---|---|
| डॉ. त्र्यं. द. ताम्हनकर | २१०० |
| श्री. जी त्री. पेंडुरकर आणि कंपनी | ११११ |
| श्री. सौ. आनन्द तथा दादासाहेब पुराणिक | १००२ |
| सु. ई. भन्साळी | १००१ |
| सौ. कुमुदिनी मुकुंद गुगे | ५०१ |
| श्री. के. सी. छेडा | ५०० |
| सौ. मंजिरी नाईक (अमेरिका) | २५१ |
| श्री. वा. वि. [illegible] | २५१ |
| श्री. आर्. [illegible] रावदसकर | २५१ |

श्री. भालचंद्र मंगलमूर्ती जोशीमहोदयैः [illegible] महत्त्वादूर्ध्वं रूप्यकाण्यानीतानि । चिमणलाल पेपर कंपनी इत्यस्या श्री. अरविन्द शहा महोदयैरपि दानादूर्ध्वं पुस्तकानि कॉगीम इति प्रतिष्ठनमिति द्वावपि धन्यवादार्हौ । श्री. ग. का. रायकर महोदयैः स्वकीये श्रीदीपलक्ष्मीमासिके, मराठा-नवशक्ति-महाराष्ट्र टाइम्स-नवाकाळ, सकाळ-केसरी इत्यादिदैनिकानां संपादकैः आत्मनो दैनिके पत्रे, तथैव श्री. वसन्त अ. गाडगीळ महोदयैः शारदायां पुराणस्यास्य प्रकाशनवार्ताः प्रसिद्धिं नीता इति ते सर्वेऽपि धन्यवादार्हाः ।

—: विदुषां वशंवदा :—

प्रकाशनोपसमितिसदस्याः

(१) अ. सा. राजाध्यक्ष

(२) मी. ग. देसाई (४) ग. वि. जोशी

(३) मो. वि. महाशब्दे (५) न. भा. दंडवते

दिनांक—२-१०-१९३६ ।
१८९८ शकाब्दः ।
विजया दशमी ।

* [illegible] स्थाने [illegible] इति महाराष्ट्रभाषाया शब्दः प्रयुक्तः ।

॥ श्रीः ॥

## ॥ प्रस्तावना ॥

अगजाननपद्मार्कं गजाननमहर्निशम् ।
अनेकदं तं भक्तानामेकदंतमुपास्महे ॥ १ ॥

**मौद्गलं पुराणम्**—श्रीगणेशस्य विविधावतारकथाः कथयदिदं श्रीमन्मुद्गलपुराणं श्रीमुद्गलाचार्यैर्महर्षिभिः कदा, कस्मिन् शतके लिखितमिति न ज्ञायते । अंतरा कतिपयेषु संवत्सरेषु विलुप्तमिदं नवखंडात्मकं पुराणं श्रीगणपतिना ब्राह्मणरूपेण मयूरग्रामे (मोरगांव) निवसतां श्रीगणेशयोगींद्राणां हस्ते प्रदत्तमिति विद्यते सुविख्याताऽऽख्यायिका । श्रीमद्गणेशयोगींद्रगौरवनाम्न्यां श्रीमद्गणेशाख्यानमालायां श्रीमन्मौद्गलप्रसादप्राप्तिनामकमाख्यानं वर्तते । तस्मिन्नेतादृशी आख्यायिका सर्वत्र प्रसृता आसीत् । तथाहि—'गणेशयोगी' नामकः कश्चन महान् सत्पुरुषोऽस्मिन् मोरेश्वरक्षेत्रे किलाभूत् । श्रीमयूरेशप्रभुणा ब्राह्मणरूपेण तत्रागत्य तस्मै इदं श्रीमुद्गलपुराणं, तदानीं यावत् सर्वथा प्रलुप्तं प्रदत्तं, ततश्च श्रीगणेशयोगीन्द्राचार्यैः स्वयमिदं लिखितम् । अद्य यावत् तदेव लोकेषु प्रसिद्धम् । इति विद्यते आख्यानम् । (अंकुशाङ्कः शके—१८७४ श्रावणमासे)

श्रीमन्मौद्गलं महापुराणं, अथ च श्रीमन्मौद्गलादेशशास्त्रम्, इति ग्रंथद्वयं विद्यते परं च न कुत्रापि लभ्यत इत्यासीन् महती चिंता श्रीगणेशयोगींद्राणां मनसि । तदानीं तैः भारते विद्यमानानि पुरातनानि विद्यापीठानि, आचार्यस्थानानि, काशीसदृशेषु नगरेषु पंडितानां निवासस्थानान्यवलोकितानि । पृष्टानि च भूयो भूयः । परं च न क्वापि पुराणमेतदुपलब्धम् । यत् सत्यं श्रीयोगींद्रा अपि मुद्गलाचार्याणामवतारा एव । तेषामिदं चिंताकुलं चेतोऽवलोक्य श्रीगजाननेन ब्राह्मणरूपेण तत्रागत्य चतुर्थ्यां चतुर्थ्यां तिथौ पुराणमिदं तेभ्यः समर्पितम् ।

यद्यपि पुराणमिदं न प्रमुखेष्वष्टादशपुराणेष्वंतर्भूतं, न वा उपपुराणेष्वपि समाविष्टं तथापीदमान्त्यं पुराणमित्युल्लेखो दृश्यतेऽस्य पुराणस्याध्यायानां समाप्तौ ।





पुराणरस्य विनिर्मात्रे श्रीगणेशावतारिणे ।
ब्रह्मस्वरूपिणे तुभ्यं मुद्गलाय नमो नमः ॥




**महर्षिर्मुद्गलः**—मुद्गलाचार्याणामवतारकथा पुराणान्तरेषु विशेषतो मारीचे महापुराणे वर्णिता विद्यते । महामुनिरयं मुद्गराकृतितेजोगोलकरूपेणाङ्गिरसो मुनेः पुरस्तात्पतितः । बालकोऽयं तेन स्वपत्न्यै श्रुतिदेव्यै समर्पितस्तया च स्तन्यपानेन पुत्रीकृतः । तदनंतरं 'भो महामुने मम श्रेष्ठो भक्तोऽयं, ममांशरूपो गृहे तेऽवतीर्णस्तस्य मुद्गल इत्यभिधानं कुरु इति श्रीगजाननेनाकाशवाण्याऽऽदिष्टेनाङ्गिरसा तस्य संगोपनं कृतम् । यथाविधि च व्रतबंधादयः सर्वे संस्कारा विहिताः । अत्र्यनसूययोः सुतया दत्तात्रेयस्य भगिन्याऽऽत्रेय्या सह मुद्गलस्य विवाहोऽपि संपन्नः । गच्छता कालेन मुद्गलेन परमात्मतत्त्वमात्मसान् कर्तुं शिलोञ्छा-जीवमाश्रितेन तीव्रं तपश्चरणमारब्धम् । मुद्गलपुराणस्य प्रथमे खण्डेऽष्टादशेऽध्याये मुद्गलेन स्वयमेवास्या वृत्तेर्वर्णनमेवं कृतम्—




**अहं तपसि संविष्टः शिलोञ्छाजीवमाश्रितः ।**
**दश पञ्च दिनेष्वेव द्वादश्यां पारणं मम ॥**
**द्रोणमात्रं चिनोम्यन्नमुपोषणसमन्वितः ।**
**तेनान्नेन यथान्यायं पञ्च यागान् करोम्यहम् ॥**




तपसोऽस्माद् भीतेन देवेन्द्रेण मुनिर्दुर्वासाः प्रेषितोऽन्तरायं तपसि निर्मातुम् । परं मासत्रय-मुपोषितोऽपि मुद्गलो व्रतान्न विचचाल । तेन प्रीतो दुर्वासास्तस्मै वरं दत्त्वा निर्जगाम । निर्गते दुर्वाससि विमानमेकं मुद्गलं स्वर्गं नेतुमागतम् । मुद्गलस्य तदानीं देवदूतेन सह संवादः संजातः । स्वर्गसुखं न शाश्वतम् । तत्र चेतसः स्वास्थ्यं नास्ति । भेदोऽपि वर्तत इति विचार्य स्वर्गगमने स मन्दादरोऽभूत् । विमानं च तेन विनैव प्रतिनिवृत्तम् । ततश्च मुद्गलेन स्थापितोऽङ्गिरा विज्ञप्त उपदेशार्थम् । तदाऽङ्गिरा मुद्गलाय गाणेशमद्वैतं सिद्धान्तं परमं ब्राह्मणस्यतज्ञानमुपदिदेश । एकाक्षरमन्त्रे च स दीक्षितः ।

अत्रान्तरे मुद्गलस्य पत्न्याः आत्रेय्याः सुतमसूत । तस्याभिधानं 'नाक' इति निश्चितम् । ततः पुत्रं तज्जननीं चाश्रमे निधाय मुद्गलः पुनस्तपश्चरितुं निर्जगाम । तस्य तीव्रेण तपसा प्रीतः श्रीगणेश उवाच प्रीतोऽस्मि ते मुद्गल । भक्तिपथं विकासयितुं नियुक्तस्त्वं विरचय श्रीमुद्गलं पुराणम् । मौद्गलीं स्मृतिं चोद्धर्तुं गणेशभक्तानिति । तदनन्तरं शिवशापदग्धाय दक्षाय मुद्गलः स्वचरितं सम्पूर्णं च पुराणं कथयामास ।

विविधेष्वेष्ववतारेषु श्रीगजाननेन हतानां राक्षसानां नामानि किमपि विशेषं सूचयन्ति खलु । मत्सरासुरः, दम्भासुरः, मदासुरः, मोहासुरः, लोभासुरः इत्येतान् राक्षसान् हत्वा नाम षड्रिपून् नाशयित्वा मनःसंयमेन चित्तवृत्तिनिरोधेन योगमार्गेणान्तेन योगानन्दः प्राप्यत इति किल रहस्यमस्य मुद्गलपुराणस्य ।

पुराणेऽस्मिन् श्रीगजाननस्य विविधावताराणां कथाः कथिताः । श्रीरामायणमहाभारतयोः श्रीमद्भागवतस्यान्येषां च पुराणानां कथाभागोऽत्र वर्णितो दृश्यते । अत एवेदं पुराणमान्त्यमित्युच्यते । एतेनेदं पुराणमेतेषां पुराणानां पश्चाल्लिखितमिति ज्ञायते । रचयिताऽस्य पुराणस्य सर्वविद् सर्वज्ञश्च विद्यते । नैकविधानां विषयाणां समूलं विचारः, सर्वासु कथासु गाणेशं तत्त्वं कीदृशं प्रधानम्, सर्वेषु मासेषु याः शुक्लकृष्णचतुर्थ्यौ वर्तन्ते तासां महत्त्वं किम्, तासु व्रताचरणेन का सिद्धिः प्राप्यत इति सर्वं विमृश्यते । विमर्शावसरे च यानि विविधान्युदाहरणानि उल्लिखितानि, यानि नैकविधानि तत्त्वानि प्रसारितानि यज्ज्ञानं प्रकटीकृतं तेन रचयितुः सर्वज्ञत्वं ज्ञातं भवति । व्यासोच्छिष्टं जगत् सर्वमिति यन्महाभारतविषय उच्यते तदेव मुद्गलोच्छिष्टं जगत्सर्वमित्यपि पुराणस्यास्य विषये वक्तुं शक्यम् । प्रारम्भे लिखिताऽनुक्रमणिका द्रष्टव्या । तेन स्यात्काचित्कल्पना । नवमे खण्डे तु सम्पूर्णा योगगीता विरचिता वर्तते । तत्र योगस्य साकल्येन विचारः कृतः । योगस्थितिवर्णनम्, योगभ्रष्टचरितम्, विभूतियोगः, शुक्लकृष्णगतियोगः, क्षेत्रक्षेत्रज्ञज्ञानयोगः, गणेशरहस्ययोगः, इति तत्र वैविध्यं दृश्यते । मम तु मतिः योगविषये यज्ज्ञानं तत्सर्वमत्र संगृहीतमिति । इदमस्य पुराणस्य वैशिष्ट्यमुच्यते । मुद्गलाचार्या योगविषये प्रथमे विद्वांस इति कथयितुं योग्यम् । अत एव मयूरग्रामे विद्यमानो मठो योगीन्द्रमठ इत्युच्यते पीठाचार्याश्च योगीन्द्रा इति । यत् षष्ठे खण्डेऽस्य पुराणस्य मयूरग्रामस्याशेषतो वर्णनं कृतम् । यच्च तस्य ग्रामस्य परिसरोऽपि यथावद्वर्णितस्तेनेदं पुराणमस्मिन्नेव ग्रामे मुद्गलाचार्येण विरचितमिति प्रतिभाति ।

**श्रीमुद्गलांशसंभूतं गाणेशाग्रेसरं परम् ।**
**श्रीमद्गणेशयोगीन्द्राचार्यवर्यं नमाम्यहम् ॥**

**श्रीगणेशयोगीन्द्राः—** श्रीगणेशयोगीन्द्राणां मयूरग्रामेऽनन्यसाधारणं स्थानं विद्यते । पितरौ योगीन्द्राणां गुर्जरप्रान्ते आम्बीग्रामे निवसतः स्म । प्रायः शतकचतुष्टयात् प्राक् सोरटी सोमनाथ इति ख्यातस्य क्षेत्रस्य नातिदूरे वर्तमाने आम्बीग्रामे मोरेश्वर इति विद्वान् विप्रश्रेष्ठो प्रतिवसति स्म । भार्याया-

स्तस्याभिधानं सुशीलेति । अनपत्यतया खिद्यमानौ तौ दम्पती मयूरग्रामस्य माहात्म्यं श्रुत्वा तप आचरितुं गुर्जरदेशान् मयूरेशक्षेत्रमागतौ । तयोस्तपसा प्रीतो मयूरेशो भवतोर्मनीषा सफला भवत्विति वरं दत्तवान् । वरेण तेन स्वस्थानमागतायाः सुशीलायाः पुत्रलाभः सञ्जातः स श्रीमन्मुद्गलाचार्याणामयमवतार इति कथ्यते । दिवसोऽयं १४९९ शकाब्दे ईश्वरनाम्नि संवत्सरे श्रावणमासस्य शुक्लपक्षस्य पञ्चमी-भौमवासरः । बालकस्यास्य 'गणेश' इति निश्चितं नाम । विद्यार्जनानन्तरं शृङ्गेरीपीठस्थैराचार्यैर्गणेशोऽयं संन्यासाश्रमे दीक्षितः । ततश्च योगीन्द्रा इमे मयूरेशक्षेत्रमागताः । चरितमिदं तेषां श्रीअङ्कुधारिभिर्लिखिते श्रीयोगीन्द्रविजयनामके ग्रन्थे लिखितं वर्तते । श्रीगणेशयोगीन्द्रैरस्मिन् क्षेत्रे तीव्रं तपश्चरणं कृतम् । मुद्गलपुराणं दुर्लभमिति चिन्ताकुलेभ्यस्तेभ्यः कदाचिदेकेन ढुंढिराजाख्येन ब्राह्मणेनेदं पुराणमानीय प्रदत्तमिति विद्यते किंवदन्ती । चतुर्थ्यां चतुर्थ्यामादाय प्रदायेति कृत्वाऽस्य पुराणस्य नव खण्डास्तेभ्यः समर्पिताः । ब्राह्मणोऽयं साक्षाद्गजानन आसीदिति कथ्यते । अस्मिन् पुराणे तैः स्वयं विस्तृतं भाष्यं लिखितम् । तेनैतेषां विद्वत्त्वं सर्वज्ञत्वं च प्रतीयते । योगविषये तेषां कोऽपि विशेषोऽभ्यास आसीत् । मुद्गलपुराणे विद्यमानाया योगगीताया उपरि तैर्यद्भाष्यं लिखितं तेनेदं ज्ञायते । स्वयमपि ते योगीश्वरा आसन् । अत एव सप्तविंशत्यधिकशतकद्वयं संवत्सराणां तेषामायुरासीत् १७२७ शकाब्दस्य माघमासस्य कृष्णपक्षे दशम्यां तिथौ ते स्वानन्दवासिनो बभूवुः । श्रीगणेशविषयेऽखिलं सुस्पष्टं ज्ञानं सर्वेषां भवत्वित्यस्ति विशेषोऽवतारकार्यस्याचार्याणाम् ।

निजे भूस्वानन्दे जडभरतभूम्यां परतरे
तुरीयाबास्तीरे परमसुखदे त्वं निवससि ।
मयूरायानाथस्त्वमसि च मयूरेश भगवन्
अतस्त्वां सन्ध्याये शिवहरिविधिब्रह्मजनकम् ॥

**श्रीमयूरेशक्षेत्रम्** —(मोरगाव) अष्टसु विनायकक्षेत्रेषु विख्यातमिदं 'मोरगाव' इति स्थानं महाराष्ट्र-राज्ये पुण्यपत्तनात् दशसु योजनेषु जेजुरीक्षेत्रतश्च द्वयोर्योजनयोरन्तरे । अत्र ब्रह्मा विष्णुर्महेशः शक्तिः सूर्यश्चेति पञ्चभिराश्रितैर्गणेशभक्त्या तपसा च सृष्टिस्थित्यर्थं सामर्थ्यं समासादितमिति श्रूयते । साक्षात् स्वयं ज्योतिर्युतमिदं क्षेत्रं सर्वक्षेत्र-बीजक्षेत्र-क्षेत्रराजेत्यादिभिर्विविधैरभिधानैर्विश्रुतम् । अत्र च मुद्गलः, जडभरतः, शुकः, दत्तात्रेयश्चेति चत्वारो मुनयो दिव्यरूपेण विचरन्तीत्यपि कथयन्ति । इदं क्षेत्रं सर्वेषु गाणपत्यक्षेत्रेष्वाद्यं, श्रीस्वानन्देश-स्येच्छया प्रकटीभूतमिति भूस्वानन्दमित्युच्यते । यस्याः कह्नाख्यायाः सरितस्तीरे स्थानमिदं विद्यते सा नदी 'कह्नागङ्गा' इति तत्रत्यं तीर्थं च ब्रह्मकमण्डलुतीर्थमिति प्रसिद्धम् । अङ्कुशस्य शस्त्रस्यात्रानन्यसाधारणं




महत्त्वमस्ति । अत्रत्या या गणेशमूर्तिस्तस्या हस्तेऽङ्कुशो नास्ति परं श्रीगणेशयोगीन्द्राणां सविधे या मूर्तिरासीत् तस्या हस्तेऽङ्कुशो विद्यते । इयं मूर्तिः ओंकार इत्येतेषां गृहे पुण्यपत्तने दृश्यते । मदरूपिणो गजस्य दमनार्थमङ्कुशोऽयं गजाननेन धार्यत इति कथ्यतेऽस्मिन् विषये । श्रीगणेशयोगीन्द्राणां पश्चाद्ये श्री. टिकेकरमहोदया आचार्याः पीठेऽस्मिन्नागतास्तेऽङ्कुशधारिण इत्यात्मानं कथयन्ति स्म । तैः प्रचालितमेकं नियतकालिकमपि 'अङ्कुश' इति नाम्नाङ्कितम् । आचार्या अप्यत्रत्याः सततमङ्कुशं धारयन्ति स्म । श्रीगणेशमन्दिरमत्रात्युच्चैस्तटेन परिवेष्टितम् । पुरस्तादश्मनो महान् मूषिकस्ततश्च विशालो नन्दी । मन्दिरस्य परितोऽष्टानां विनायकानामितरासां च देवतानां द्वाचत्वारिंशन्मूर्तयः सन्ति । नातिदूरे च नम्रभैरवस्य प्रमुखं स्थानं विद्यते ।




अत्रत्यो **योगीन्द्रमठः**—अस्य प्रमुखं वैशिष्ट्यम् । योगीन्द्राणां परम्परायां श्रीगणेशयोगीन्द्रेणात्र मठे वसतिः कृता । तेभ्यो गणपतिना ब्राह्मणरूपेणेदं **मुद्गलपुराणं** समर्पितम् । तैश्च तत् स्वहस्तेन लिखितम् । तस्मिन् भाष्यमपि लिखितम् । मुद्गलपुराणेऽस्मिन् स्थानस्यास्य माहात्म्यं वर्णितं विद्यते । श्रीगणेशयोगीन्द्राणां सप्तविंशत्यधिकशतकद्वयमायुरासीत् । तेषां पश्चात् श्रीअङ्कुशधारिणः, ततश्च श्रीहेरम्बराज वाळशास्त्रिण इत्यासीत्परम्परा । एतेषां त्रयाणां समाधयोऽस्मिन् स्थानेऽधुना विद्यन्ते । श्रीगणेशयोगीन्द्राणां जन्मनः प्रभृति **योगीन्द्रशकः** प्रारब्धो भवति सोऽस्मिन् १९७६ संवत्सरे योगीन्द्रशकाब्दः ३९९ इति प्रचलति । अन्यच्चैकं वैशिष्ट्यं यदत्रत्या गणेशभक्ता **गा. व. गा.** (गाणेशवरिष्ठगाणपता) इत्युच्यन्ते । मौद्गलप्राप्तिकथायां लिखितम्—अयि भो भारतवर्षीयाः अहो महद्भाग्यं भवतां यदेतादृशमतीव पवित्रं क्षेत्रं युष्माकं देशे वर्तते । भूस्वानन्दनाथः साक्षात् मयूरेशोऽत्र निवसति । सर्वेषां दोषाणामपहारिणी तुरीयतीर्थमयी श्रीब्रह्मकमण्डलुगङ्गा, पञ्चमं ब्रह्मस्वरूपं स्वानंदेशेनाङ्कुशप्रहारेण निर्मितं गणेशतीर्थमङ्कुशतीर्थमत्रास्ति । श्रीयोगीन्द्रमठाधिष्ठिताः श्रीगणेशयोगीन्द्राश्चात्र निवसन्ति स्मेति । अपरञ्च वैशिष्ट्यं **यन्मौद्गलसम्प्रदायनामको**ऽपरः सम्प्रदायोऽपि विद्यते । श्रीमन्महागाणपत्यानां साम्बशिवशास्त्रिणामेकं पत्रं श्रीअङ्कुशधारिणां सविधे आगतम् । तत्र ते लिखन्ति— सूर्यसम्प्रदाय एव मुद्गलसम्प्रदायः । मुद्गलसाम्प्रदायिनां रक्तगन्धानुलेपनं ललाटे **सिन्दूरतिलकधारणञ्च** । एतेषां **प्रस्थानत्रयमपि** भिन्नम् । व्यासाचार्याणां यथा उपनिषदः, ब्रह्मसूत्रं, भगवद्गीता चेति प्रस्थानत्रयी तथा मौद्गलादेशः, गाणेशपञ्चकब्राह्मणस्पतपञ्चकादयो दशोपनिषदः योगगीता चेति प्रस्थानत्रयी मुद्गलाचार्याणाम् । अन्ततश्च **योग** इत्यस्ति असाधारणो विशेषोऽस्य स्थानस्य । मुद्गलाचार्यादारभ्य हेरम्बराजपर्यन्तं सर्वे आचार्या योगीन्द्रा इत्युच्यन्ते । श्रीगणेशयोगीन्द्रास्तु योगाभ्यासनिपुणा दृश्यन्ते । मुद्गलपुराणेऽस्मिन्वर्तमानायां योगगीतायां



तैर्यद् भाष्यं लिखितं तत एव तेषां योगनिष्णातत्वं प्रतीयते । मुद्गलपुराणेऽपि श्रीगणपतिविषये योगशब्दः कतिवारमागत इत्यस्ति संशोधनविषयः । स्वयं श्रीगणेशयोगीन्द्राणां योगाभ्यासेनैव वर्धमानमायुः संवत्सराणां सपादशतकद्वयादूर्ध्वमासीदिति विदितमेव सर्वेषाम् । इत्येवादिभिर्विशेषैः सनाथमिदं स्वानन्दनाथस्थानं कस्य भारतीयस्य चेतो नाकर्षयेत् ।

**श्रीयोगीन्द्रमठस्य** महती खलु परम्परा कथ्यते । योगीन्द्राः श्रीमुद्गलाचार्याः, भृशुंडीमहाराजाः, भगवत्पादाचार्याः, गौडपादयोगीन्द्राः, गिरिजासुतयोगीन्द्राः ब्रह्मानन्दयोगीन्द्राः इत्यादीनामाचार्याणामियं परम्पराऽन्तरा अन्तरा विलुप्ता सती श्रीगणेशयोगीन्द्राणामाचार्यत्वे षोडशे शतके ख्रिस्ताब्दस्य पुनः प्रचलिता । तदनन्तरं संवत्सरशतं भूयोऽपि विलुप्ता ख्रिस्ताब्दस्य गते एकोनविंशतितमे शतके श्रीअङ्कुशधारिणामाचार्यत्वे पुनः प्रतिष्ठापिता । अङ्कुशधारिणां श्री. गणेशाचार्याणां टिकेकरमहोदयानमवतारकालः १८०१ शकाब्दस्य माघमासस्य शुक्लपक्षस्य पूर्णिमापर्यन्तमासीत् । तदनन्तरं श्रीहेरम्बराज बाळशास्त्रिण केसकरमहोदय आचार्या बभूवुरस्य पीठस्य । ते १९७४ ख्रिस्ताब्दस्य १४ डिसें. दिने स्वानन्दवासिनोऽभवन् ।

**मुद्गलपुराणस्य परीक्ष्य विवेचनम् :**—मुद्गलपुराणस्यास्य मुद्रणं कर्तव्यमिति मुद्गलपुराणप्रकाशनमण्डलेन यदा निश्चितं तदैवैतस्य पुराणस्य परीक्षणं–संशोधनं कृत्वा तत्र विविधानि हस्तलिखितानि सन्ति न वा, यदि सन्ति तत्र पाठभेदाः के लेखनदोषाः सन्ति न वेति परीक्ष्य मुद्रणं कर्तव्यमिति सर्वानुमत्या हस्तलिखितानि प्राप्तुं प्रयत्नः कृतः । सभाष्यस्य पुराणस्यैकं हस्तलिखितं पुण्यपत्तने श्री. ओंकारमहोदयानां सविधे आसीत्तत्संग्रहमासीत् । तैरपि विना प्रत्यवायेनास्माकं हस्ते प्रदत्तम् । तदत्र 'क' इत्यभिधीयते । संवत्सराणां पञ्चशतेः प्राक् कुरुंदवाडसंस्थानाधिपतिनाऽस्य पुराणस्य सभाष्यस्य हस्तमुद्रणं कृतमासीत् । तदपि महता प्रयासेन प्राप्तमस्माभिः । तत 'ख' इति कथ्यते । अन्यदेकं हस्तलिखितमिदं पुराणं श्रीयोगीन्द्रमठे विद्यते । तस्य तत्र प्रत्यहं पूजा क्रियते । ततु तस्मात् स्थानादन्यत्र न नीयत इति तत्र गत्वा श्रीमतां ना. दुराणे महोदयानां कृपया मया तदवलोकितम् । तत 'ग' इत्युच्यतेऽत्र । अपरमेकं हस्तेन सम्यक्तया लिखितं पुस्तकं श्री. रामभाऊ देवे महोदयानां श्रीगजाननस्य पूजकानां सविधे तत्र मयूरेशप्रान्ते (मोरगाव) विद्यते तदपि मया निरीक्षितम् । तदत्र 'घ' इति नाम्ना संबोधितम् । एतत् 'घ' इति पुस्तकमेकेन श्री. गणेश दिनकर पाटक इत्यनेन सपादशतकात् प्राक् लिखितमित्युपसंहारे निर्दिष्टम् । चतुर्थस्य खण्डस्य लेखनं १७३४ शकाब्दे ज्येष्ठकृष्णचतुर्थ्यां मन्दवासरे समाप्तम् । पञ्चमस्तु खण्डः १७३८ शकाब्दे समाप्तिं नीतः । एतत् पुस्तकं पूजास्थाने यत् 'ग' इति पुस्तकं विद्यते तस्मादेव

लिखितमिति तत्र न कश्चिद्भेदो दृश्यते 'ग' इति पुस्तकं श्रीमद्भिर्गणेशयोगीन्द्रैः स्वयं लिखितं दृश्यते । स्वहस्तेन लिखितानि तेषां कानिचित्पत्राणि श्री ओंकारमहोदयानां सविधे वर्तन्ते । तानि मयाऽवलोकितानि । तत्र वर्ततेऽक्षरसाम्यम् । अत एव तस्य 'ग' पुस्तकस्य पूजा विधीयते परम्परयेति प्रतिभाति । एतत्पुराणं श्रीगणपतिना ब्राह्मणरूपेण स्वयं योगीन्द्राणां सविध आनीतमिति लिखितपूर्वम् । स ब्राह्मण एकस्यां चतुर्थ्यामानीयैकं खण्डं तं द्वितीयस्यां नीतवानिति श्रूयते । एवं पञ्चदशदिनावसरे स खण्डो लेखितव्यो भवति । तेन त्वरितं लिखितमिति सन्ति केचन दोषाः । विशेषतो वृत्तभङ्गस्य । गणेशयोगीन्द्राणां निवासो गुर्जरदेशे आसीत् । अस्ति च तत्र कश्चनोच्चारणभेदो विशेषतः सकारषकारयोः । देशत उच्चारभेदो न दोषाय कल्पते । परं लेखनेऽपि स दृश्यते कदाचिदत्र । प्रथमखण्डस्य तृतीयाध्यायस्य दशमे श्लोके बहिष्कृतः इत्यस्य स्थाने 'बहिस्कृतः' इति शब्दो क ग पुस्तकयोर्दृश्यते । 'ख' पुस्तकेऽस्माभिश्च स 'बहिष्कृतः' इति कृतः । अस्मिन् पुराणे गणेशयोगीन्द्रैः स्वयं भाष्यं लिखितम् । तत् 'क' पुस्तके तैः स्वहस्तेन लिखितं दृश्यतेऽक्षरसाम्यात । ख-पुस्तकं सभाष्यं मुद्रितं विद्यते । अस्य 'ख' पुस्तकस्य मुद्रणसमये केनापि व्युत्पन्नेन पण्डितेनेदं कार्यं स्वीकृतं दृश्यते । तेन यावच्छक्यं विशुद्धं कृत्वेदं पुस्तकं मुद्रितम् । इदं 'क'–पुस्तकं तस्य पुरस्तादासीदन्यद्वा किंचनेति न जाने । परमिदं 'ख'पुस्तकं विशुद्धकल्पं विद्यते । 'क' पुस्तके क्वचिदशुद्धिः बहुत्र च वृत्तभङ्गो दृश्यते । 'ख' पुस्तके एतत्सर्वं यावच्छक्यं दूरीकृत्य मुद्रणं निर्दोषतां नीतम् । तत्रापि ये केचनोर्वरिता दोषाः प्रायो मुद्रणदोषास्तेऽस्माभिर्निराकृताः । एतेनेदं पुस्तकं यथा पूर्णतया विशुद्धं स्यात्तथाऽस्माभिः प्रयतितम् । कस्मिंश्चित्स्थले 'ख' पुस्तकापेक्षया 'क' पुस्तकस्यैव पाठः समीचीनो दृष्ट इति परिवर्त्य स एव पाठोऽस्माभिः स्वीकृतः । एतस्य सर्वस्य दिग्दर्शनमिति दृश्यतामधस्तनम् । तथाहि—

प्रथम एव श्लोके 'ध्याये स्थिरेण मनसा' इति 'क' पुस्तके वर्तते । वृत्तविचलनादत्र 'स्थिरेण चित्तेन' इति 'ख' पुस्तके कृतमस्माभिरपि स एव पाठः स्वीकृतः । एवं मूलपुस्तकविघटनदोषः स्याच्चेत् प्रथमं स तेषां संश्लिष्यति तदनन्तरमस्माकम् । इदं प्राचीनं पुराणमिति ये गृह्यादिवद्वा सन्धिविच्छेदनस्य वा आत्मनेपदपरस्मैपदव्यत्यासस्य वाऽऽर्षप्रयोगास्ते तथैव निहिताः । 'हस्तपादैः' (२.५०.२७) इतिवत् समासा अपि आर्षा दृश्यन्ते ।

(क) मुद्गलस्य– (ख) दक्षमुद्गल– मुद्गलदक्ष– इत्यनेन वृत्तभङ्गो भवतीति 'ख'–पुस्तके 'दक्षमुद्गल' इति कृतम् । व्याकरणदृष्ट्यापि तदेव निर्दोषं भवति । परं 'ददर्श तत्र मुद्गलः'

(क) इत्यत्र वृत्तभङ्गो भवतीति 'अदर्शत्तत्र मुद्गलः' (ख) इति कृतम्। 'परमदर्शीदिति' सदोषं रूपमित्यस्माभिः 'अपश्यत्तत्र मुद्गलः' इति शुद्धं रूपमुपयोजितम्। 'तदादिरहमञ्जसा' (क) (२-६४-८) इत्यस्य स्थाने 'तदहात्' इति सदोषं रूपं (ख) दृश्यते। द्वे अपि रूपे अशुद्धे। अस्माभिः ख-पुस्तकस्य रूपं स्वीकृतम्। अन्त्ये वयसि (२-२-४६) (क) इत्यस्य स्थाने 'अन्ते वयसि' इति (ख) सदोषं रूपं विद्यते। अस्माभिः 'अन्त्ये' इति कृतम्। (१-३४-४३) इत्यत्र 'प्रभेदुः' (क) 'अभिद्यन्' (ख) इति रूपद्वयमप्यशुद्धं, तत्र 'अभिन्दन्' इति रूपं प्रयुक्तम्। (२-४२-५) क-पुस्तके 'त्रिभुवनं प्रजेष्यामो' इति वर्तते। वृत्तार्थं ख-पुस्तके 'प्रजेष्यामो त्रिभुवनम्' इति सदोषसन्धिसहितः पाठो दत्तः। (प्रजेष्यामत्रिभुवनमित्यपेक्ष्यते)। अत एवास्माभिर्मूलः पाठः स्वीकृतः। (१-४९-१०) 'द्वौ चरू ह्यग्निकुण्डे स' इति (क-ख) पुस्तकयोर्वर्तते। वस्तुतोऽत्र 'हि' इत्यस्य निवेशोऽनावश्यकः। 'चरू' इति प्रगृह्यम्। तेन हि तत्र प्रकृतिभावो भविष्यति। (४-१५-५२) (क) पुस्तके 'अद्यप्रभृतिरारभ्य' (ख) पुस्तके 'अद्यप्रभृतिमारभ्य' इति द्वावपि पाठावशुद्धौ। अस्माभिः 'अद्यप्रभृति रागेण' इति कृतम्। इत्येवाद्यनल्पं संस्करणं कृतम्। तत्तु विवेचकैस्तत्र द्रष्टव्यम्।




एकस्तु विशेषोऽस्माभिरस्मिन् पुराणेऽवलोकितः। अत्र महाराष्ट्रे प्रयुक्तान्यनेकानि रूपाणि नैकवारमुपयोजितानि वर्तन्ते। तथा हि– 'हावभावप्रयुक्तानि चेष्टितानि प्रजापते'। (१-२३-१८). [हावभाव करणे]. 'पुरस्कृत्यासिना हन्तुं नग्नं खड्गं चकार सः'। (२-१९-३३) [नंगी तलवार]. 'ननर्त हृष्टरोमा वै देहभानविवर्जितः'। (२-३०-१२) [देहभान विसरून] 'प्रणेमुर्मुनयो देवा दण्डवत् पृथिवीतले'। (२-३१-४६) [तया माझें दंडवत] 'तत्र चौरा धनं हृत्वा पलन्तश्च समाययुः'। (३-४०-१७) [पळाले]. वस्तुतोऽयं पलधातुः संस्कृते न विद्यते। परमयं धातुर्बहुवारं 'पपाल' 'पेलुः' इत्यादिषु रूपेष्वत्रोपयोजितः। अनेन महाराष्ट्रस्यातीव सामीप्यमस्य पुराणस्य वर्तत इति सुधियो विभावयन्तु। इति शम्।






मो. वि. महाशब्दे

दि० २।१०।१९७६

# ॥ श्रीमन्मुद्गलपुराणस्याध्यायक्रमेण विषयानुक्रमः ॥

## खंडः १ – वक्रतुंडचरितम् ।


| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| १ | शौनकसूतसंवादः । | १–३ |
| २ | दक्षनंदिविवादः । | ३–५ |
| ३ | पार्वती देहत्यागः । | ५–८ |
| ४ | दक्षचरितम् । | ८–१२ |
| ५ | पार्वतीप्रश्नविचारः । | १३–१४ |
| ६ | प्रकृतिपुरुषवरप्रदानम् । | १५–१७ |
| ७ | तत्त्वकृतस्तुतिवर्णनम् । | १७–१९ |
| ८ | गुणेशवरप्रदानम् । | २०–२३ |
| ९ | अष्टधा प्रकृतिवर्णनम् । | २३–२५ |
| १० | नानाब्रह्मांडवर्णनम् । | २५–२७ |
| ११ | पंचदेववरप्रदानम् । | २७–३० |
| १२ | ब्रह्मविष्णुविवादः । | ३०–३२ |
| १३ | पंचदेवविवादः । | ३३–३५ |
| १४ | गणेशप्रादुर्भावः । | ३५–३६ |
| १५ | गणेशप्रसन्नभावः । | ३७–३७ |
| १६ | गणेशगीतासारकथनम् । | ३८–३९ |
| १७ | शिवपार्वतीसंवादसमाप्तिः । | ३९–४१ |
| १८ | मुद्गलदेवदूतसंवादः । | ४१–४४ |
| १९ | अंगिरामुद्गलसंवादः । | ४४–४७ |
| २० | गणेशमुद्गलसमागमः । | ४७–४९ |
| २१ | गणेशस्तोत्रोत्तमवर्णनम् । | ४९–५२ |
| २२ | मुद्गलवरप्रदानम् । | ५२–५४ |
| २३ | मत्सरासुरतपोवर्णनम् । | ५५–५६ |
| २४ | मत्सरासुरसमागमः । | ५७–५८ |
| २५ | मत्सरासुरसेनावर्णनम् । | ५९–६० |
| २६ | पातलविजयः । | ६०–६२ |
| २७ | इंद्रपराजयः । | ६२–६४ |
| २८ | मत्सरासुरचेष्टितकथनम् । | ६५–६६ |
| २९ | शिवमत्सरासुरसमागमः । | ६६–६७ |
| ३० | शिवादिपराजयः । | ६८–७० |
| ३१ | दत्तात्रेयसंगमः । | ७०–७२ |
| ३२ | वक्रतुंडप्रादुर्भावः । | ७२–७४ |
| ३३ | मत्सरासुरविचारणम् । | ७५–७६ |
| ३४ | देवासुरयुद्धप्रसंगः । | ७७–७८ |
| ३५ | शिवविजयः । | ७९–८० |
| ३६ | सुंदरप्रिय–विषयप्रियवधः । | ८१–८३ |
| ३७ | मत्सरासुरसमागमः । | ८३–८५ |
| ३८ | वक्रतुंडविजयः । | ८५–८७ |
| ३९ | वक्रतुंडान्तर्धानम् । | ८८–९० |
| ४० | ब्रह्मणस्तपश्चरणम् । | ९०–९२ |
| ४१ | दंभासुरराज्याभिषेकः । | ९२–९४ |
| ४२ | दंभासुरविजयः । | ९४–९६ |
| ४३ | दंभासुरदूतसंवादः । | ९६–९८ |
| ४४ | दंभासुरविचारः । | ९८–१०० |
| ४५ | दंभासुरशांतिकथनम् । | १००–१०२ |
| ४६ | वामनवरप्रदानम् । | १०२–१०५ |
| ४७ | वामनचरितम् । | १०५–१०७ |
| ४८ | ऋचीकगृहस्थाश्रमवर्णनम् । | १०८–१०९ |
| ४९ | याज्ञवल्क्यविश्वामित्रसमागमः । | ११०–११२ |
| ५० | दिवोदासमहिमवर्णनम् । | ११२–११४ |
| ५१ | काशीशिववरप्रदानम् । | ११५–११७ |
| ५२ | याज्ञवल्क्यनारायणसंप्रश्नवर्णनम् । | ११७–११९ |
| ५३ | नारायणयाज्ञवल्क्यसंवादः । | ११९–१२१ |
| ५४ | वक्रतुंडचरितसमाप्तिः । | १२१–१२३ |


## खंडः २ – एकदन्तचरितम् ।


| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| १ | ब्रह्मसृष्टिप्रारंभः । | १–३ |
| २ | नारदशापनिवर्तनम् । | ३–५ |
| ३ | नारदभक्तिवर्णनम् । | ६–८ |

| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| ४ | मधुकैटभवधः । | ८—११ |
| ५ | स्वायंभुववरप्रदानम् । | ११—१३ |
| ६ | दक्षकन्यावंशवर्णनम् । | १४—१६ |
| ७ | भोगमोक्षवर्णनम् । | १६—१८ |
| ८ | दत्तचरितम् । | १८—२२ |
| ९ | प्रियव्रतराज्यप्राप्तिवर्णनम् । | २२—२४ |
| १० | द्वीपवर्णनम् । | २४—२६ |
| ११ | भूगोलवर्णनम् । | २६—२८ |
| १२ | सूर्यमण्डलवर्णनम् । | २८—३० |
| १३ | नवग्रहरथादिवर्णनम् । | ३०—३१ |
| १४ | ऊर्ध्वस्थलोकवर्णनम् । | ३२—३३ |
| १५ | सप्तपातालवर्णनम् । | ३३—३५ |
| १६ | ऋषभचरितवर्णनम् । | ३५—३७ |
| १७ | पुलहोपदेशवर्णनम् । | ३८—४० |
| १८ | भरतमृगदेहत्यागः । | ४०—४१ |
| १९ | चौरवधः । | ४२—४३ |
| २० | जडभरतरहूगणमिलनम् । | ४३—४५ |
| २१ | रहूगणसिद्धिप्राप्तिवर्णनम् । | ४५—४६ |
| २२ | जडभरतचरितम् । | ४६—४७ |
| २३ | ध्रुवचरितम् । | ४८—४९ |
| २४ | पृथुयशोवर्णनम् । | ४९—५१ |
| २५ | पृथुचरितम् । | ५१—५४ |
| २६ | प्राचीनबर्हिषश्चरितम् । | ५४—५६ |
| २७ | प्रचेतसां चरितम् । | ५६—५७ |
| २८ | कश्यपसृष्टिवर्णनम् । | ५८—५९ |
| २९ | वसिष्ठतपोवर्णनम् । | ६०—६२ |
| ३० | पराशरवरप्रदानम् । | ६२—६३ |
| ३१ | पराशरसुतोत्पत्तिकथनम् । | ६४—६६ |
| ३२ | गजासुरसैन्यवधः । | ६६—६८ |
| ३३ | गजासुरवधाख्यानम् । | ६९—७१ |
| ३४ | व्यासमाहात्म्यम् । | ७१—७३ |
| ३५ | शुकोपाख्यानम् । | ७३—७५ |
| ३६ | गौतमचरितम् । | ७५—७९ |
| ३७ | नृसिंहमाहात्म्यम् । | ७९—८० |
| ३८ | वाराहमाहात्म्यम् । | ८१—८१ |
| ३९ | च्यवनोत्पत्तिकथनम् । | ८२—८४ |
| ४० | अग्निमाहात्म्यम् । | ८४—८६ |
| ४१ | च्यवनतपोवर्णनम् । | ८६—८८ |
| ४२ | भृगुचरितम् । | ८९—९१ |
| ४३ | च्यवनमाहात्म्यम् । | ९२—९२ |
| ४४ | मदासुरस्य राज्याभिषेकः । | ९३—९४ |
| ४५ | मदासुरस्वर्गविजयः । | ९५—९६ |
| ४६ | तारकासुरस्यामवर्णनम् । | ९७—९८ |
| ४७ | इंद्रतारकसमागमः । | ९९—१०१ |
| ४८ | इंद्रपराजयः । | १०१—१०२ |
| ४९ | शिवादिदेवपराजयः । | १०३—१०५ |
| ५० | मदासुरविजयः । | १०५—१०७ |
| ५१ | सनत्कुमारदेवसमागमः । | १०७—१०८ |
| ५२ | एकदंतप्रसन्नभावः । | १०९—११० |
| ५३ | मदासुरपराजयः । | १११—११३ |
| ५४ | मदासुरशांतिप्राप्तिवर्णनम् । | ११३—११४ |
| ५५ | मदासुरचरितसमाप्तिः । | ११४—११६ |
| ५६ | विनायककाशीप्रवेशः । | ११७—११९ |
| ५७ | भ्रूशुंडीभक्तिवर्णनम् । | ११९—१२२ |
| ५८ | यमशापवर्णनम् । | १२२—१२४ |
| ५९ | कुंडसंभवचरितम् । | १२४—१२६ |
| ६० | भ्रूशुंडीब्राह्मणत्ववर्णनम् । | १२६—१२९ |
| ६१ | भ्रूशुंडीचरितम् । | १२९—१२९ |
| ६२ | विनायकचरितम् । | १३०—१३२ |
| ६३ | शनिसमागमः । | १३२—१३४ |
| ६४ | विष्णुदौत्यवर्णनम् । | १३४—१३६ |
| ६५ | पुष्टिपत्युपाख्याने अगस्त्यस्य द्रव्यप्रयत्नः । | १३६—१३८ |
| ६६ | कृष्णराधाशापवर्णनम् । | १३८—१४१ |
| ६७ | राधाकृष्णगोलोकप्राप्तिवर्णनम् । | १४१—१४३ |
| ६८ | पुष्टिपतिचरितम् । | १४३—१४४ |

| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| ६९ | देवहूतिकर्दमशांतिप्राप्तिवर्णनम् । | १४४—१४६ |
| ७० | चिंतामणिहरणम् । | १४७—१४८ |
| ७१ | कपिलवरप्रदानम् । | १४९—१५१ |
| ७२ | गणासुरवधः । | १५१—१५३ |
| ७३ | गृत्समदप्रह्लादसंवादसमाप्तिवर्णनम् । | १५३—१५५ |
| ७४ | चरितमाहात्म्यम् । | १५५—१५६ |


## खंडः ३ – महोदरचरितम् ।


| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| १ | रविवालखिल्यप्रश्नवर्णनम् । | १—२ |
| २ | सूर्यसंजीवनदानम् । | २—५ |
| ३ | सूर्यवरप्रदानम् । | ५—७ |
| ४ | कामचरितम् । | ८—१० |
| ५ | स्कंदमाहात्म्यम् । | १०—१२ |
| ६ | मोहासुरराज्याभिषेकवर्णनम् । | १३—१४ |
| ७ | मोहासुरविजयवर्णनम् । | १५—१६ |
| ८ | देवर्षिवरप्रदानम् । | १७—१८ |
| ९ | मोहासुरज्ञानप्रदानम् । | १९—२१ |
| १० | मोहासुरशांतिवर्णनम् । | २१—२३ |
| ११ | महोदरान्तर्धानम् । | २३—२५ |
| १२ | नरनारायणविष्णुसंवादः । | २५—२७ |
| १३ | नरनारायणमार्कंडेयसमागमः । | २७—२९ |
| १४ | मायावर्णनम् । | २९—३० |
| १५ | कालगतिवर्णनम् । | ३०—३२ |
| १६ | युगधर्मवर्णनम् । | ३२—३३ |
| १७ | कलियुगवर्णनम् । | ३४—३६ |
| १८ | ब्रह्मचर्याश्रमवर्णनम् । | ३६—३७ |
| १९ | आश्रमधर्मवर्णनम् । | ३८—४० |
| २० | वर्णधर्मप्रकाशः । | ४०—४२ |
| २१ | देवपितृधर्मवर्णनम् । | ४२—४३ |
| २२ | मांधातुश्चरितम् । | ४४—४६ |
| २३ | अंबरीषचरितम् । | ४६—४७ |
| २४ | मुचुकुन्दचरितम् । | ४८—४९ |
| २५ | सगरभगीरथचरितम् । | ४९—५१ |
| २६ | रामचंद्रचरितम् । | ५२—५६ |
| २७ | सूर्यवालखिल्यसंवादसमाप्तिवर्णनम् । | ५६—५९ |
| २८ | बुधोत्पत्तिवर्णनम् । | ५९—६१ |
| २९ | पुरूरवसश्चरितकथनम् । | ६१—६३ |
| ३० | नहुषचरितम् । | ६३—६६ |
| ३१ | ययातिचरितम् । | ६७—७० |
| ३२ | धनकस्य व्रतोपदेशः । | ७०—७२ |
| ३३ | कृतवीर्यव्रतप्राप्तिवर्णनम् । | ७३—७४ |
| ३४ | कृतवीर्यचरितम् । | ७४—७६ |
| ३५ | सहस्रार्जुननिमंत्रणम् । | ७७—७९ |
| ३६ | रेणुकाजमदग्निसंजीवनकरणम् । | ७९—८१ |
| ३७ | परशुरामचरितकथनम् । | ८१—८४ |
| ३८ | हरिवंशवर्णनम् । | ८४—८६ |
| ३९ | विष्णुदेहधारणवर्णनम् । | ८६—८८ |
| ४० | मांडव्यचरितम् । | ८८—९० |
| ४१ | युधिष्ठिरकृष्णसमागमः । | ९१—९२ |
| ४२ | लक्ष्मीनारायणसंवादवर्णनम् । | ९२—९३ |
| ४३ | महालक्ष्मीवरप्रदानवर्णनम् । | ९४—९६ |
| ४४ | ज्ञानारिवरप्राप्तिवर्णनम् । | ९६—९७ |
| ४५ | पूर्णानन्दावतारवर्णनम् । | ९७—९८ |
| ४६ | ब्रह्मयज्ञवर्णनम् । | ९९—१०१ |
| ४७ | ब्रह्मयज्ञे वेदनिर्णयवर्णनम् । | १०१—१०४ |
| ४८ | शुक्रशिष्यसुबोधसंवादः । | १०४—१०६ |
| ४९ | सुबोधभक्तिवर्णनम् । | १०६—१०८ |
| ५० | युधिष्ठिरचरितम् । | १०८—११० |
| ५१ | श्रवणफलवर्णनम् । | १११—११२ |


## खंडः ४ – गजाननचरितम् ।


| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| १ | चतुर्थीतपोवर्णनम् । | १—३ |
| २ | शुक्लकृष्णचतुर्थीवरदानवर्णनम् । | ३—५ |
| ३ | प्रतिपदादिव्रतवर्णनम् । | ६—७ |
| ४ | दशरथव्रतोपदेशः । | ८—९ |
| ५ | चतुर्थीविवेकवर्णनम् । | ९—१० |

| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| ६ | चन्द्रदर्शनदोषहरणचरितम् । | ११–२० |
| ७ | भाद्रपदशुक्लचतुर्थीव्रतवर्णनम् । | २०–२४ |
| ८ | शुक्लाऽऽश्विनीचतुर्थीव्रतवर्णनम् । | २४–२७ |
| ९ | कार्तिकशुक्लचतुर्थीव्रतवर्णनम् । | २७–३० |
| १० | मार्गशीर्षशुक्लचतुर्थीव्रतवर्णनम् । | ३१–३२ |
| ११ | पौषशुक्लचतुर्थीमाहात्म्यवर्णनम् । | ३२–३६ |
| १२ | माघशुक्लचतुर्थीमाहात्म्यवर्णनम् । | ३६–३८ |
| १३ | फाल्गुनशुक्लचतुर्थीचरितवर्णनम् । | ३९–४१ |
| १४ | चैत्रशुक्लचतुर्थीव्रतवर्णनम् । | ४२–४४ |
| १५ | वैशाखशुक्लचतुर्थीमाहात्म्यवर्णनम् । | ४४–४७ |
| १६ | ज्येष्ठशुक्लचतुर्थीमाहात्म्यवर्णनम् । | ४७–४९ |
| १७ | आषाढशुक्लचतुर्थीचरितवर्णनम् । | ५०–५२ |
| १८ | श्रावणशुक्लचतुर्थीव्रतकथनम् । | ५२–५५ |
| १९ | मलमासशुक्लचतुर्थीचरितवर्णनम् । | ५५–५७ |
| २० | माघकृष्णचतुर्थीमाहात्म्यवर्णनम् । | ५७–६१ |
| २१ | फाल्गुनकृष्णचतुर्थीवर्णनम् । | ६१–६३ |
| २२ | चैत्रकृष्णचतुर्थीचरितवर्णनम् । | ६३–६५ |
| २३ | वैशाखकृष्णचतुर्थीचरितवर्णनम् । | ६५–६७ |
| २४ | ज्येष्ठकृष्णचतुर्थीवर्णनम् । | ६८–७० |
| २५ | आषाढकृष्णचतुर्थीवर्णनम् । | ७०–७२ |
| २६ | श्रावणकृष्णचतुर्थीमाहात्म्यवर्णनम् । | ७२–७४ |
| २७ | भाद्रपदकृष्णचतुर्थीमाहात्म्यवर्णनम् । | ७५–७७ |

| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| २८ | आश्विनकृष्णचतुर्थीमाहात्म्यवर्णनम् । | ७८–८० |
| २९ | कार्तिककृष्णचतुर्थीमाहात्म्यवर्णनम् । | ८०–८३ |
| ३० | मार्गशीर्षकृष्णचतुर्थीमाहात्म्यवर्णनम् | ८३–८५ |
| ३१ | पौषकृष्णचतुर्थीमाहात्म्यवर्णनम् । | ८५–८७ |
| ३२ | मलमासकृष्णपक्षचतुर्थीवर्णनम् । | ८८–९० |
| ३३ | शमीमूलचतुर्थीव्रताचरणवर्णनम् । | ९०–९१ |
| ३४ | वसिष्ठदशरथसंवादसमाप्तिवर्णनम् । | ९२–९२ |
| ३५ | चतुर्थी - उद्यापननिरूपणम् । | ९३–९४ |
| ३६ | लोभासुरवरप्राप्तिवर्णनम् । | ९४–९६ |
| ३७ | लोभासुरस्येन्द्रपदप्राप्तिवर्णनम् । | ९६–९८ |
| ३८ | विष्णुपराजयः । | ९८–१०० |
| ३९ | लोभासुरब्रह्माण्डविजयः । | १००–१०२ |
| ४० | गजाननप्रादुर्भावः । | १०२–१०४ |
| ४१ | शुक्रोपदेशवर्णनम् । | १०४–१०७ |
| ४२ | लोभासुरशांतिवर्णनम् । | १०७–१०८ |
| ४३ | देवमुनिकृतस्तुतिवर्णनम् । | १०९–१११ |
| ४४ | सिंदूरशिवसमागमः । | १११–११३ |
| ४५ | शिवविचारवर्णनप्रसंगः । | ११३–११५ |
| ४६ | शक्तिमल्लमाहात्म्यवर्णनम् । | ११५–११७ |
| ४७ | गणेशभक्तार्धानन्दवर्णनम् । | ११७–१२० |
| ४८ | सिंदूरवधः । | १२०–१२२ |
| ४९ | गणेशनिर्माल्यमाहात्म्यवर्णनम् । | १२२–१२३ |

| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| ५० | विघ्नासुराश्रमगमनम् । | १२४–१२५ |
| ५१ | विघ्नराजावतारवर्णनम् । | १२६–१२८ |
| ५२ | गजाननचरितमाहात्म्यवर्णनम् । | १२८–१२९ |


## खंडः ५ – लंबोदरचरितम् ।


| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| १ | असितनैध्रुवसंवादे त्रिविधतपोवर्णनम् । | १–३ |
| २ | भस्मासुरवधः । | ३–५ |
| ३ | क्रोधासुरराज्यप्राप्तिवर्णनम् । | ५–७ |
| ४ | क्रोधासुरब्रह्माण्डविजयः । | ७–९ |
| ५ | देवर्षिवरप्रदानम् | ९–११ |
| ६ | देवासुरयुद्धवर्णनम् । | ११–१३ |
| ७ | क्रोधासुरसमागमः । | १३–१५ |
| ८ | क्रोधासुरशांतिवर्णनम् | १५–१७ |
| ९ | लंबोदरदेवर्षिकृतस्तुतिवर्णनम् । | १७–१९ |
| १० | वत्सराऽसितशांतिवर्णनम् । | २०–२१ |
| ११ | लंबोदरब्रह्मवर्णनम् । | २२–२२ |
| १२ | शक्तिस्वरूपावतारवर्णनम् | २३–२५ |
| १३ | शक्तिवरप्रदानम् । | २६–२८ |
| १४ | शिवविष्णुगर्वहरणम् । | २९–३१ |
| १५ | शक्तिविनायकमाहात्म्यम् । | ३१–३३ |
| १६ | शेषानिदुःखवर्णनम् । | ३३–३५ |
| १७ | शेषयोगोपदेशवर्णनम् । | ३५–३७ |

| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| १८ | शेषाख्यानवर्णनम् । | ३७—४० |
| १९ | मूषकदेवसमागमः । | ४०—४२ |
| २० | मूषकगमायाकरासुरसमागमः । | ४३—४४ |
| २१ | मूषकगावतारचरितम् । | ४५—४७ |
| २२ | शक्तिपुत्रचरितम् । | ४७—४८ |
| २३ | गाणपत्यदीक्षावर्णनम् । | ४८—५० |
| २४ | गाणपत्यस्वरूपवर्णनम् । | ५०—५२ |
| २५ | शमीमंदारवरप्रदानम् । | ५३—५६ |
| २६ | शमीमंदारस्पर्शमहिमावर्णनम् । | ५६—५८ |
| २७ | दूर्वोत्पत्तिकथनम् । | ५९—६१ |
| २८ | दूर्वापत्रस्पर्शमहिमावर्णनम् । | ६२—६२ |
| २९ | त्रिशिरसश्चरितवर्णनम् । | ६३—६६ |
| ३० | दूर्वामाहात्म्यवर्णनम् । | ६६—७४ |
| ३१ | तुलसीवर्जनकारणम् । | ७५—७७ |
| ३२ | तुलसीवरप्रदानम् । | ७७—७८ |
| ३३ | तुलसीसमर्पणवर्जनवर्णनम् । | ७९—८० |
| ३४ | रुक्मांगदचरितम् । | ८०—८२ |
| ३५ | गृत्समदगणेशसमागमः । | ८३—८४ |
| ३६ | गृत्समदवरप्रदानम् । | ८५—८६ |
| ३७ | गृत्समदनित्यकर्मवर्णनम् । | ८७—८८ |
| ३८ | गृत्समदप्रोक्तमानसपूजाकथनम् । | ८८—९२ |
| ३९ | गृत्समदप्रोक्तबाह्यपूजावर्णनम् । | ९३—९५ |

| अध्यायः | विषयः | पृष्ठांकः |
|---|---|---|
| ४० | स्वानंदलोकवर्णनम् । | ९६—९८ |
| ४१ | स्वानंदस्थितिवर्णनम् । | ९९—१०१ |
| ४२ | चिंतामण्यंतर्धानवर्णनम् । | १०२—१०३ |
| ४३ | भक्तिमागवर्णनम् । | १०४—१०५ |
| ४४ | ध्यानदूर्वादिपूजाविधिवर्णनम् । | १०६—१०८ |
| ४५ | लंबोदरचरितश्रवणमाहात्म्यवर्णनम् । | १०८—११० |


## खंडः ६ – विकटचरितम् ।


| अध्यायः | विषयः | पृष्ठांकः |
|---|---|---|
| १ | शक्तिध्यानवर्णनम् । | १—३ |
| २ | शिवविष्णवोर्वरप्रदानम् । | ३—५ |
| ३ | कामासुरराज्यप्राप्तिवर्णनम् । | ६—७ |
| ४ | कामासुरविजयवर्णनम् । | ८—९ |
| ५ | मुद्गलदेवसमागमः । | १०—११ |
| ६ | भ्रूशुंडीपंचदेवसमागमः । | १२—१३ |
| ७ | स्वानंदक्षेत्रस्वरूपवर्णनम् । | १४—१६ |
| ८ | नानाक्षेत्रदेवोत्पत्तिवर्णनम् । | १६—१९ |
| ९ | मयूरेशद्वारयात्राविधिवर्णनम् । | १९—२१ |
| १० | द्वाररहस्यवर्णनम् । | २१—२२ |
| ११ | क्षेत्रप्रमाणवर्णनम् । | २३—२५ |
| १२ | मयूरेशक्षेत्रवासशुभाशुभवर्णनम् । | २५—२८ |
| १३ | मयूरेशनामदंडकारण्यवरप्रदानम् । | २८—३० |

| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| १४ | द्वारयात्रावर्णनम् । | ३१—३३ |
| १५ | देवागारद्वारयात्रामाहात्म्यम् । | ३३—३७ |
| १६ | गर्भागारयात्रामाहात्म्यवर्णनम् । | ३८—४० |
| १७ | मयूरेशक्षेत्रमरणप्राप्तिमाहात्म्यवर्णनम् | ४१—४३ |
| १८ | गर्भागारस्य प्रमाणवर्णनम् । | ४३—४६ |
| १९ | क्षेत्रवासिचरितवर्णनम् । | ४६—५५ |
| २० | मलत्यागयातनाकथनम् । | ५५—५७ |
| २१ | यात्रार्थप्रवेशफलादिवर्णनम् । | ५८—६१ |
| २२ | क्षेत्रसंन्यासादिवर्णनम् । | ६१—६७ |
| २३ | गणेशकुंडचरितवर्णनम् । | ६७—६९ |
| २४ | ब्रह्मकमंडलुप्रादुर्भावादिवर्णनम् । | ७०—७३ |
| २५ | ब्रह्मकमण्डलुतीर्थचरितम् । | ७३—७८ |
| २६ | सप्ततीर्थीवर्णनम् । | ७८—७९ |
| २७ | ब्रह्मकमण्डलुस्थतीर्थवर्णनम् । | ८०—८४ |
| २८ | नग्नभैरवप्रशंसा । | ८४—८६ |
| २९ | भ्रूशुंडीदेवेंद्रसंवादसमाप्तिवर्णनम् । | ८६—८७ |
| ३० | मयूरेशक्षेत्रमाहात्म्यसमाप्तिवर्णनम् । | ८८—९० |
| ३१ | विकटप्रादुर्भावः । | ९१—९३ |
| ३२ | देवदैत्यसमागमः । | ९३—९४ |
| ३३ | कामासुरपुत्रवधः । | ९४—९७ |
| ३४ | कामासुरविचारवर्णनम् । | ९७—९९ |
| ३५ | कामासुरशांतिवर्णनम् । | ९९—१०१ |




| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| ३६ | विकटावतारचरितसमाप्तिवर्णनम् । | १०३—१०४ |
| ३७ | गुणेशावतारवर्णनम् । | १०५—१०७ |
| ३८ | बालखेलावर्णनम् । | १०७—११० |
| ३९ | कमलासुरवधः । | ११०—११२ |
| ४० | विष्ण्वादिपराधीनतादर्शनम् । | ११३—११५ |
| ४१ | मयूरेशचरितवर्णनम् । | ११६—११८ |
| ४२ | सूर्यावतारचरितम् । | ११९—१२० |
| ४३ | भानुविनायकचरितम् । | १२०—१२२ |
| ४४ | विकटवरदचरितम् । | १२३—१२५ |
| ४५ | विकटचरितसमाप्तिः । | १२५—१२६ |

## खंडः ७ – विघ्नराजचरितम् ।

| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| १ | दितिशोकवर्णनम् । | १—३ |
| २ | शिवपार्वतीसमागमः । | ३—५ |
| ३ | ममासुरवरप्रदानम् । | ५—८ |
| ४ | शिवममासुरसमागमः । | ८—९ |
| ५ | ममासुरराज्यभोगवर्णनम् । | १०—१२ |
| ६ | विघ्नराजप्रादुर्भावः । | १२—१४ |
| ७ | ममासुरगर्वहरणम् । | १४—१६ |
| ८ | ममासुरशांतिवर्णनम् । | १७—१८ |
| ९ | ममासुरशांतियुक्तविघ्नराजचरित-क्षेत्रवर्णनम् । | १८—२१ |
| १० | विष्ण्ववतारवर्णनम् । | २१—२३ |
| ११ | लक्ष्मीविनायकचरितवर्णनम् । | २३—२६ |
| १२ | शूर्पकर्णावतारवर्णनम् । | २६—२८ |
| १३ | दत्तगीतावर्णनम् । | २८—३१ |
| १४ | दितिवरप्रदानम् । | ३१—३३ |
| १५ | चतुर्भुजावतारविक्रमवर्णनम् । | ३३—३५ |
| १६ | विघ्नराजचरितमाहात्म्यवर्णनम् । | ३६—३७ |

## खंडः ८ – धूम्रवर्णचरितम् ।

| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| १ | अहमुत्पत्तिवर्णनम् । | १—३ |
| २ | अहमासुरराज्यप्राप्तिवर्णनम् । | ३—४ |
| ३ | अहमसुरब्रह्मांडविजयः । | ५—७ |
| ४ | देवमुनिवरप्रदानम् । | ७—९ |
| ५ | अहंकारपराजयः । | १०—१२ |
| ६ | अहंकारासुरज्ञानोपदेशः । | १२—१५ |
| ७ | अहंकारशांतिरूपवर्णनम् । | १६—१७ |
| ८ | धूम्रवर्णावतारसमाप्तिः । | १८—२० |
| ९ | धूम्रवर्णमहिमावर्णनम् । | २०—२१ |
| १० | शिवात्मकावतारचरितम् । | २२—२४ |
| ११ | पार्वतीगणेशचरितम् । | २४—२६ |
| १२ | गुणेशावतारवर्णनम् । | २७—२८ |
| १३ | बाणासुरवरप्रदानम् । | २९—३१ |
| १४ | बाणासुरवर्णसंभवचरितम् । | ३२—३४ |
| १५ | बुद्धावतारवर्णनम् । | ३४—३६ |
| १६ | धूम्रवर्णकलिनिर्जयवर्णनम् । | ३७—३८ |
| १७ | युगवरप्रदानम् । | ३९—४१ |
| १८ | युगप्रभावकर्मसिद्धिवर्णनम् । | ४१—४२ |
| १९ | समासवत्सरचरितम् । | ४३—४४ |
| २० | मलमासादिभ्यो वरप्रदानम् । | ४४—४५ |
| २१ | धूम्रमहिमावर्णनम् । | ४५—४८ |
| २२ | कार्तिकमासमाहात्म्यम् । | ४९—४९ |
| २३ | वज्रपंजरकथनम् । | ५०—५२ |
| २४ | मार्गशीर्षमाहात्म्यसाधुचरितवर्णनम् । | ५३—५४ |
| २५ | विरोचनवधः । | ५५—५७ |
| २६ | नानाजनोद्धरणम् । | ५७—६० |
| २७ | शिवदत्तबोधः । | ६०—६२ |
| २८ | शुकगीताकथनम् । | ६२—६५ |
| २९ | शिवभक्तिप्रदानम् । | ६५—६७ |
| ३० | नानाजनोद्धारवर्णनम् । | ६८—६९ |
| ३१ | श्रावणमासमाहात्म्ये जालंधरवधः । | ६९—७१ |
| ३२ | गालवसंशयनाशवर्णनम् । | ७१—७४ |
| ३३ | श्रावणमासमाहात्म्यवर्णनम् । | ७४—७६ |
| ३४ | दधीचिधौम्यसंवादः । | ७७—७९ |
| ३५ | मलमासमाहात्म्यम् । | ८०—८२ |

| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| ३६ | संवत्सरव्रतमाहात्म्यवर्णनम् । | ८२–८४ |
| ३७ | चातुर्मासमाहात्म्ये विभांडव्रतोपदेशः । | ८४–८९ |
| ३८ | कल्याणदुर्गतिवर्णनम् । | ९०–९१ |
| ३९ | वल्लालेश्वरवर्णनम् । | ९२–९४ |
| ४० | चातुर्मास्यव्रतमाहात्म्यम् । | ९४–९६ |
| ४१ | कौंडिण्यब्रह्मसमागमः । | ९७–९८ |
| ४२ | गणेशनाममाहात्म्यम् । | ९९–१०१ |
| ४३ | चतुर्थीरहस्यवर्णनम् । | १०१–१०२ |
| ४४ | जरत्कारुमंत्रोपदेशवर्णनम् । | १०३–१०५ |
| ४५ | जरत्कारुयोगप्राप्तिवर्णनम् । | १०५–१०६ |
| ४६ | ब्राह्मणस्पत्ययज्ञमाहात्म्यवर्णनम् । | १०७–१०८ |
| ४७ | त्रिविधजगदाधारनिरूपणम् । | १०९–११० |
| ४८ | मासानां माहात्म्यवर्णनम् । | १११–१११ |
| ४९ | गणेशहृदयकथनम् । | ११२–११५ |
| ५० | फलश्रुतिवर्णनम् । | ११६–११७ |


## खंडः ९ – योगचरितम् ।


| अध्यायः | विषयः | पृष्ठांकाः |
|---|---|---|
| १ | स्वसंवेद्यस्वरूपवर्णनम् । | |
| २ | अयोगचरितकथनम् । | १– ३ |
| ३ | गणेशस्वरूपवर्णनम् । | ३– ६ |
| ४ | पूर्णयोगचरितवर्णनम् । | ६–११ |
| ५ | चित्तभूमिनिरोधेन सार्वभौमयोगः । | ११–१३ |
| | प्रथमाऽध्यायः । ( १ ) | १३–१८ |
| ६ | योगचित्तानुभवसुखशांति-वर्णनयोगः । ( २ ) | १८–२४ |
| ७ | योगस्थितिवर्णनयोगः । ( ३ ) | २४–२९ |
| ८ | योगभ्रष्टचरितनिरूपणम् । ( ४ ) | ३०–३१ |
| ९ | अज्ञानिनां क्रमयोगवर्णनम् । ( ५ ) | ३२–३६ |
| १० | विभूतियोगः । ( ६ ) | ३६–३८ |
| ११ | तत्त्वविचारयोगः । ( ७ ) | ३९–४१ |
| १२ | शुक्लकृष्णगतियोगः । ( ८ ) | ४२–४५ |
| १३ | क्षेत्रक्षेत्रज्ञज्ञानयोगः । ( ९ ) | ४५–४८ |
| १४ | नानामतैक्ययोगः । ( १० ) | ४८–५० |
| १५ | गणेशरहस्ययोगः । ( ११ ) | ५०–५३ |
| १६ | भक्तिरहस्यवर्णनयोगः । ( १२ ) | ५३–५५ |
| १७ | दक्षसिद्धिप्राप्तिवर्णनम् । ( १३ ) | ५६–५८ |
| १८ | गणेशस्वरूपक्रमवर्णनम् । | ५८–६१ |
| १९ | पुराणश्रवणादिविधिवर्णनम् । | ६२–६३ |
| २० | पुराणप्रशस्तिमाहात्म्यवर्णनम् । | ६३–६४ |
| २१ | पारायणवर्णनम् । | ६५–६६ |
| २२ | माघपारायणचरितवर्णनम् । | ६६–६७ |
| २३ | ज्येष्ठमासपारायणमाहात्म्यवर्णनम् । | ६८–६९ |
| २४ | विकल्पविजयः । | ६९–७१ |
| २५ | विकल्पप्रतापखंडनम् । | ७१–७३ |
| २६ | माघादिसार्धमासे मौद्गलपुराणश्रवणमाहात्म्यवर्णनम् । | ७३–७४ |
| २७ | भाद्रपदादिसार्धैकमास-श्रवणमाहात्म्यवर्णनम् । | ७४–७५ |
| २८ | महोदरचरितमाहात्म्यम् । | ७६–७७ |
| २९ | वर्षेण मौद्गलश्रवणमाहात्म्यम् । | ७७–७८ |
| ३० | मौद्गलनित्यश्रवणमाहात्म्यम् । | ७९–८० |
| ३१ | वक्रतुंडचरितश्रवणमाहात्म्यवर्णनम् । | ८०–८१ |
| ३२ | एकदंतचरितमाहात्म्यवर्णनम् । | ८१–८२ |
| ३३ | महोदरचरितमाहात्म्यवर्णनम् । | ८२–८३ |
| ३४ | गजाननचरितश्रवणपठनमाहात्म्यम् । | ८३–८४ |
| ३५ | लंबोदरचरितवर्णनम् । | ८५–८५ |
| ३६ | विकटखंडमाहात्म्यवर्णनम् । | ८५–८६ |
| ३७ | विघ्नराजखंडश्रवणपठन-माहात्म्यवर्णनम् । | ८७–८७ |
| ३८ | धूम्रवर्णचरितमाहात्म्यवर्णनम् । | ८८–८८ |
| ३९ | नवमखंडमाहात्म्यवर्णनम् । | ८९–९० |
| ४० | नवमखण्डमाहात्म्यवर्णनम् । | ९०–९० |
| ४१ | पुराणसमाप्तिवर्णनम् । | ९१–९३ |


**॥ इत्यनुक्रमणिका समाप्ता ॥**

॥ श्रीगजाननार्पणमस्तु ॥



खंड १ श्रीगणेशयोगीन्द्राचार्याणां पिता श्रीमोरेश्वरः माता च सौ. सुशीला, मयूरेशं पूजयतः ।



खंड १ चित्र २ — ॥ श्रीमन्मुद्गलावतारः ब्रह्मभूयमहासिद्धिपीठाधीश्वरः ॥ ॥ श्रीयोगीन्द्रमठः ॥ श्रीभूस्वानंदमयूरेश्वरक्षेत्रम् ॥
( योगीन्द्रावतारः श्रावणे शुक्लपंचमी, भौमवासरः, शके १४९९ ) ( अवतारसमाप्तिः माघे वद्यदशमी, भौमवासरः, शके १७२७ )

## ॥ ॐ नमः श्रीस्वानंदेशगणेशाय पूर्णयोगात्मने ॥

॥ श्रीगणेशाय नमः ॥ अथ श्रीमन्मौद्गलपुराणप्रारंभः। ध्याये स्थिरेण चित्तेन गणेशं सर्वसिद्धिदम्। बुद्धिप्रकाशकं पूर्णं योगिनां हृदि संस्थितम्॥१॥ जितं तेनाखिलं नानाब्रह्मवर्णनवर्णितम्। नानाजगत्समूहं वै गणेशेनोभयं कृतम्॥२॥ भक्तसंरक्षणार्थाय निर्गुणः सगुणस्तु यः। नानावतारवान्सोऽपि नानाभेदधरो बभौ॥३॥ तस्मै नमो गणेशाय नरकुंजररूपिणे। सगुणो नररूपो यो निर्गुणो गजवक्त्रकः॥४॥ नमः शिवाय शांताय विष्णवे प्रभविष्णवे। सूर्याय शक्तये चैव चतुर्धा ते विभागिने॥५॥ ब्रह्माणं शेषनागं च नरं नारायणं सदा। नमामि भावयुक्तोऽहं पुराणपुरुषं परम्॥६॥ देवानां योगिनां चैव महर्षीणां महात्मनाम्। व्रजामि शरणं नित्यं पुराणज्ञानसिद्धये॥७॥ पुराकल्पेऽभवन्विप्राः शौनकाद्याः सुसाधनाः। कलिदोषभयात्सर्वे नैमिषारण्यमाश्रिताः॥८॥ तस्मिन्कलियुगावासं ज्ञात्वादौ ब्रह्मणो मुखात्। मुनिधर्मप्रसिद्ध्यर्थं कर्मज्ञान-प्रसिद्धये॥९॥ अन्यच्च ब्रह्मणा प्रोक्तं पुराणश्रवणं सदा। कलिदोषहरं पुण्यं तदर्थमभवन्यताः॥१०॥ कस्मिंश्चित्समये सूतो लोमहर्षण आययौ। मुनीनां दर्शनार्थाय पुराणज्ञो विचक्षणः॥११॥ नैमिषारण्यशोभां च पश्यंस्तत्र सुविस्मितः। अहो धन्यं महारण्यं कलिदोषविवर्जितम्॥१२॥ दृष्टा वै मुनयस्तेन सुप्रसन्नाननाम्बुजाः। नित्यनैमित्तिककराः स्वधर्माचरणप्रियाः॥१३॥ पंचयज्ञरतास्तत्र वेदाध्ययनकारिणः। ब्रह्मतेजःसमायुक्ता ज्वलन्तः पावका इव॥१४॥ विनाऽस्तेन यथा सूर्यो योगिनो वेदवेदिनः। तारकाः सर्वजन्तूनां शौनकाद्या महर्षयः॥१५॥ तत्रागत्य महाभागः स सूतो रोमहर्षणः। साष्टाङ्गं प्रणतः पूर्वं परमाह्लादसंयुतः॥१६॥ अभिवाद्य मुनीन्सर्वान्भक्त्या नम्रात्मकन्धरः। प्राञ्जलिः प्रयतो भूत्वा प्रोवाच मधुरं वचः॥१७॥ सूत उवाच। वंशो धन्यो मदीयोऽद्य पितरौ च कुलं वयः। विद्या व्रतं तपो ज्ञानं धन्यं सर्वं मुनीश्वराः॥१८॥ भवतां पादपद्मं च सर्वाशुभविनाशनम्। काङ्क्षितं यत्सदा देवैर्मया दृष्टं सुपुण्यतः॥१९॥ साक्षाद् ब्रह्मस्वरूपा वै ब्राह्मणा ब्रह्मवित्तमाः। येषां दर्शनमात्रेण कृतकृत्याश्च जन्तवः॥२०॥ कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहं न संशयः।

भवतां दर्शनेनैव मुक्तोऽहं भवसागरात् ॥२१॥ इति ब्रुवाणं साधुं तं सूतं वै रोमहर्षणम्। प्रत्यूचुर्ब्राह्मणाः सर्वे भक्तियुक्तं तपोधनाः ॥२२॥ ब्राह्मणा ऊचुः। सूत सूत महाभाग स्थीयतां पुण्यवर्धन। तव दर्शनमात्रेण संतुष्टाः स्मो वयं खलु ॥२३॥ इत्युक्तस्तत्र सूतस्तु मुनिदत्ते शुभासने। समासीनो महाबुद्धिः साञ्जलिः सन्प्रतापवान् ॥२४॥ सुखासीनं च सूतं तं दृष्ट्वा तत्र महामुनिः। भृगुप्रेष्ठश्च मुख्योऽसौ मुनीनां प्रत्युवाच ह ॥२५॥ शौनक उवाच। सूत सूत महाभाग सर्वज्ञ सुखदायक। आराधितस्त्वया प्राज्ञः कृष्णद्वैपायनो महान् ॥२६॥ नारायणावतारो यः साक्षान्नारायणः स्वयम्। वेदस्य भागकारी स पुराणानां विभागकृत् ॥२७॥ त्वं वै तस्मात्पुराणानि सेतिहासानि वेत्सि च। तेन सर्वज्ञता जाता तवेयं पुण्यवर्धन ॥२८॥ वयं भीताश्च कालेन कलिकल्मषरूपिणा। नैमिषारण्यमास्थाय स्थिताज्ञप्ताः स्वयंभुवा ॥२९॥ तत्र विश्रान्तिदाता वै त्वं प्राप्तोऽसि महाद्युतिः। पुराणानां प्रवक्ता च पुण्यवान्पुण्यवर्धनः ॥३०॥ यत्र पौराणिकी गाथा कलिस्तत्र न तिष्ठति। तस्मात्कारुण्यभावेन पुराणं ब्रूहि नः प्रभो ॥३१॥ तव यद्दर्शनं जातं महापुण्येन सत्तम। धन्यं धन्यं महाभाग साक्षात्संशयछित्त्वयम् ॥३२॥ छेदेन संशयानां वै मतो त्वं रोमहर्षणम्। करोषि तेन ते नाम रोमहर्षण इत्यहो॥ ३३॥ इति पृष्टो महात्मा स शौनकेन महर्षिणा। संहृष्टः समुवाचेदं वचनं धर्मसंस्कृतम् ॥३४॥ सूत उवाच। अद्याऽहं कृतकृत्यो वै कृतोऽनुग्रहकारिणा। सकलं कथयिष्यामि व्यासेन कथितं च यत् ॥३५॥ इत्युक्त्वा कथयामास पुराणानि स कृत्स्नशः। नानाख्यानविभक्तानि नानाधर्मयुतानि च ॥३६॥ सर्वार्थसाधनान्येव दुःखनाशकराणि च। ब्रह्मभूतप्रदान्येव नानामतयुतानि च ॥३७॥ पुराणोपपुराणानि सेतिहासानि भागशः। धर्मार्थकाममोक्षाणां दातृत्वात्पुण्यदानि च ॥३८॥ श्रुत्वा श्रुत्वा मुनीन्द्रास्ते हर्षयुक्ता बभूविरे। नित्यं प्रमुदितास्तेन प्रीताः संपूर्णभावनः ॥३९॥ युगस्योत्क्रमणं तस्य चक्रुस्ते मुनयोऽखिलाः ॥४०॥ पुराणेषु च सर्वेषु सेतिहासेषु सर्वतः। नानाभेदमतादीनि श्रुत्वा भ्रान्ता मुनीश्वराः ॥४१॥ निश्चयं नाधिगच्छन्ति परं किं सर्वसंमतम्। तदर्थं मुनिवर्यस्तं पर्यपृच्छत्स शौनकः ॥४२॥ शौनक उवाच। भो भो सूत महाभाग शृणु मे वचनं लघु। पुराणानि च संश्रुत्य भ्रान्ताः स्मो वै महाद्युते ॥४३॥ इदं परमिदं नेति त्वया सर्वत्र वर्णितम्। भिन्नं भिन्नं महाबुद्धे तेन नो निश्चयः कथम् ॥४४॥ कुत्रापि शंकरः श्रेष्ठः कुत्र विष्णुस्तथा रविः। शक्तिश्चैव गणेशश्च विराजः कुत्र रूपकम् ॥४५॥ कुत्र ब्रह्म च योगश्च ज्ञानं कर्म च कुत्र वै। आत्मा प्राणोऽन्नमित्युक्तं मनो वै परतः परम् ॥४६॥ कुत्र

बुद्धिर्महाभाग सांख्यं स्वानंद एव च । इत्यादिमनभेदेन निश्चयो नैव जायते ॥४७॥ अतस्त्वं कृपया ब्रूहि वेदशास्त्रार्थसंमतम् । सर्वेषां मान्यमेकं च सर्वसंशयनाशनम् ॥४८॥ इति पृष्टो महातेजाः शिष्यो व्यासस्य सत्तमः । एकं श्रुतिस्मृतीनां यत् सारं कथितुमारभत् ॥४९॥ सूत उवाच । शृणुध्वं मुनयः सर्वे सारं मुद्गलभाषितम् । सर्वश्रुतिस्मृतीनां च सर्वमान्यं विशेषतः ॥५०॥ पुरा दक्षाध्वरे जातं यज्ञविध्वंसनं महत् । रुद्रेणागत्य सहसा कृतो विघ्नो महत्तरः ॥५१॥ देवाः पराजिताः सर्वे रुद्रैः परमदारुणैः । दक्षमस्तकसंछेदो वीरभद्रेण वै कृतः ॥५२॥ ब्रह्मणागत्य तत्रासौ सान्त्वितो बहुलोक्तिभिः । शंकरो जीवयामास दक्षं योगेन तत्त्वतः ॥५३॥ यज्ञविध्वंसशोकार्तो दक्षः शापेन मोहितः । अज्ञानावरणेनापि न किञ्चिन्निश्चयं ययौ ॥५४॥ तत्राजगाम भगवान् साक्षात्सूर्य इवोदितः । वेदशास्त्रार्थतत्त्वज्ञो योगीन्द्रो मुद्गलो मुनिः ॥५५॥ गणेशभक्तप्रवरः सर्ववंद्यो महायशाः । तपसां कर्मणां साक्षान्निधिरेष सनातनः ॥५६॥ तं दृष्ट्वोत्थाय दक्षोऽसौ प्रणनाम महामुनिम् । आसनाद्यैः सुसंपूज्य वक्तुं समुपचक्रमे ॥५७॥ दक्ष उवाच । भो भो मुनीन्द्र वन्द्यस्त्वमांगिरस महाद्युते । यज्ञविध्वंसशोकार्तं मां पालय जडीकृतम् ॥५८॥ मुद्गल उवाच । मा चिन्तां कुरु भो दक्ष प्रजापालेन्द्रसत्तम । विघ्नराजं स्मर त्वं वै तेन सर्वं न दुर्लभम् ॥५९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते शौनकसूतसंवादो नाम प्रथमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । दक्षेण मुनिशार्दूलाः श्रुतं मुद्गलभाषितम् । प्रणिपत्य पुनः सोऽपि पप्रच्छ हितकारकम् ॥१॥ शौनक उवाच । दक्षमुद्गलसंवादं श्रोतुमिच्छामहे वयम् । विस्तरेण समाचक्ष्व सूत संतोषकारक ॥२॥ सूत उवाच । शृणुध्वं मुनयः सर्वे कथां लोकैकपावनीम् । यां श्रुत्वा पुरुषस्येह नान्यत्कृत्यं प्रविद्यते ॥३॥ दक्षमुद्गलसंवादं समासेन विवर्णये । सारं सर्वत्र संपूर्णं भवरोगविमोचनम् ॥४॥ मुद्गलोक्तं वचः श्रुत्वा दक्षः प्रोवाच धर्मवित् । प्राञ्जलिः प्रयतो भूत्वा हृष्टरोमा महायशाः ॥५॥ दक्ष उवाच । पुण्यं महन्मेऽस्ति पुरातनं यत्तेनैव जातं तव दर्शनं भोः । मोक्षप्रदं तत्परलोकदं च भोगप्रदं धर्म्यमनंतपुण्यम् ॥६॥ शापेन नष्टो मम सर्वबोधः प्रजापतित्वं प्रगतं मदीयम् । यज्ञस्य भङ्गो विविधं हि कष्टं तत्रैव ते

दर्शनमत्र चित्रम् ॥७॥ तव दर्शनमात्रेण किंचित् स्फूर्तिः समागता । धन्योऽसि योगिनां मध्ये पूतत्वं त्वीदृशं त्वयि ॥८॥ कोऽसौ विघ्नपतिः पूर्णः कीदृशः किंस्वभाववान् । कति तस्यावताराश्च कस्यांशो वाऽपि किंस्तवः ॥९॥ पूजितो विधिवत्कैश्च किं फलं दत्तवान् परम् । किंविहारश्च कस्मिन्वै लोके वसति स प्रभुः ॥१०॥ एतत्सर्वं सुविस्तार्य पृच्छते ब्रूहि सादरम् । ज्ञात्वा तं देवदेवेशं भविष्यामि हितावहम् ॥११॥ इत्येवं कथयन्तं तं मुनयो विस्मयान्विताः । पप्रच्छुः सकलं तद्वै दक्षचेष्टितमादरात् ॥१२॥ शौनकाद्या ऊचुः । दक्षः प्रजापतिः साक्षात्कथं मूढत्वमागतः । प्रजापतित्वं तस्यापि कथं नष्टं महात्मनः ॥१३॥ यज्ञध्वंसः कथं प्राप्तः शंभुः प्रकुपितः कथम् । एतत्सर्वं सुविस्तार्य ब्रूहि सूत महामते ॥१४॥ श्रुत्वा मुनिवचो रम्यं कृष्णद्वैपायनस्य च । शिष्यः प्रोवाच मधुरं वचनं संप्रहर्षयन् ॥१५॥ सूत उवाच । शृणु शौनक यत्नेन कथां भुवनपावनीम् । कथयामि यथातथ्यं श्रुतां व्यासमुखेन याम् ॥१६॥ ब्रह्मणो दश पुत्रा ये तत्र दक्षो महान्प्रभुः । अतः प्रजापतिस्त्राता कृतस्तेन स वेधसा ॥१७॥ स राज्यं प्राप्य मत्तोऽभूद् गर्वेणैव परिप्लुतः । अहं प्रजापतीनां च श्रेष्ठो राजा न मत्समः ॥१८॥ एकदा गिरिवर्ये तु कैलासे शंकरस्य च । दर्शनार्थं गता देवा मुनयः सिद्धकिन्नराः ॥१९॥ गन्धर्वा नागमुख्याश्च विद्याधर्यप्सरोगणाः । ब्रह्मा विष्णुर्महेन्द्रश्च सर्वे तेन सुसत्कृताः ॥२०॥ सभामध्ये समासीनाः शंकरेण च पूजिताः । वामभागे स्थितो विष्णुर्दक्षिणांगे पितामहः ॥२१॥ क्रमेण सर्वे देवाश्च यथायोग्यं स्थिता मुने । गणा नंदिमुखास्तत्र समीपे संस्थिता बभुः ॥२२॥ तत्र ते मुनयो हृष्टा वसिष्ठाद्याः प्रतुष्टुवुः । नारदप्रमुखाः सर्वे गन्धर्वा ललितं जगुः ॥२३॥ नृत्यमप्सरसश्चक्रुस्ते सर्वे पुपूजिरे । शंकरं परिवाराढ्यमानंदेन समन्वितम् ॥२४॥ कथा नानाविधास्तत्र तेऽकुर्वन् भावपूर्वकम् । तत्राजगाम दक्षः स प्रजापतिपतिः स्वयम् ॥२५॥ शिवेन मानितस्तत्र वचसा चैव सत्कृतः । नमनं न कृतं तस्मा ईश्वरेण प्रभावतः ॥२६॥ तेन संकुपितोऽत्यन्तमसूचिवान गर्वमोहितः । शृणुध्वं ये सभाश्रेष्ठा याथातथ्यानुवर्तिनः ॥२७॥ रुद्रस्य श्वशुरोऽहं वै पुत्रतुल्यो ममाप्ययम । नमनं न कृतं कस्मात् तस्मात्त्याज्यो महेश्वरः ॥२८॥ ऐश्वर्यगर्वयुक्तोऽयं स्वधर्मत्यजनतां गतः । देवपंक्तौ कथं योग्यः पिशाचानामधीश्वरः ॥२९॥ वर्णाश्रमविहीनोऽयं नग्नो भिक्षाशने रतः । सर्पभूषणसक्तश्च चिताभस्माङ्गलेपनः ॥३०॥ व्याघ्राजिनपरीतश्च मुण्डमालाधरः सदा । इत्यादिदोषयुक्तत्वान्न स्पृश्योऽयं महात्मभिः ॥३१॥ अशिवः शिवनामा वै वृथेशित्वाभिमानवान् । अतो न भाषणीयोऽयं दोषकारी पिशाचराट् ॥३२॥ इति

ब्रुवन्तमत्यन्तं स्वयंभूस्तं निराकरोत् । न गृहीतं पितुर्वाक्यं क्रोधावेशेन तेन तत् ॥३३॥ नानानिंदायुतं वीक्ष्य भगवान्नन्दिकेश्वरः। उवाच सर्वसान्निध्ये क्रोधेनारक्तलोचनः ॥३४॥ नंदिकेश्वर उवाच। धिक्त्वां व्यर्थं प्रजापाल शिवनिन्दापरायण। शिवतत्त्वं न जानासि मदेनासिक्त दुर्मते ॥३५॥ मायाखेलनवानेष तथा तद्दोषवर्जितः। तेनायं शिवतां प्राप्तः कथं निन्दां करोषि रे ॥३६॥ शिवनिन्दाकराः शास्त्रे नारका ज्ञानवर्जिताः । अतस्त्वं ज्ञानहीनस्तु भवितास्य-पवाक्यतः ॥३७॥ निंदा येनैव वक्त्रेण कृता शंभोर्महात्मनः। अजास्यो भवितासि त्वं भ्रष्टराज्यो भविष्यसि ॥३८॥ इति श्रुत्वा वचः सोऽपि तं पुनः प्रत्युवाच ह। न त्वं जानासि दुर्बुद्धे शंकरं कर्मदूषितम् ॥३९॥ वर्णाश्रमविहीनश्च यस्तिष्ठेत्पुरुषः कदा। पदे पदे महापापो नारकी मरणे भवेत् ॥४०॥ तस्माद्यूयं महापापाः शैवाः स्पृश्या न कुत्रचित्। भुवि ये शांकरा नित्यं ज्ञानहीना भवन्तु ते ॥४१॥ कलौ प्राप्ते च पाखण्डा भविष्यन्ति जटाधराः। शूद्रा नेदं पठिष्यन्ति नग्ना भस्माङ्गलेपनाः ॥४२॥ स्त्रीमांसमदिरासक्ता नानाभोगकरास्तथा। नरके वै पतिष्यन्ति शंभुमार्गपरायणाः ॥४३॥ प्रजापतिं प्रभुः साक्षाद् ब्रह्मा तं निरभर्त्सयत्। ततो जगाम स्वगृहं दक्षः क्रोधपरिप्लुतः ॥४४॥ सर्वे ते स्वस्थलं जग्मुर्दुःखितास्तेन वै कृताः। शिवोऽपि दुःखसंयुक्तो म्लानतां परमां गतः ॥४५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते दक्षनंदिविवादो नाम द्वितीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच। शृणुध्वं मुनयः सर्वे स्थिरीकृत्य मनश्चलम्। विघ्नेशभक्तिहीना ये विघ्नाक्रान्ता भवन्ति ते ॥१॥ दक्षोऽभूत् स्वगृहं गत्वा क्रोधामर्षसमन्वितः । न किंचित् सुखवान् विप्राः शूलयुक्तो यथा नरः ॥२॥ शिक्षां शिवस्य कर्तुं स हृदि व्यवसितोऽभवत् । न किंचित्प्राप्तवांस्तत्र विचारं भृशदुःखितः ॥३॥ एतस्मिन्नंतरे तत्र नारदो दिव्यदर्शनः। आजगाम महातेजा दक्षेणैव सुसत्कृतः ॥४॥ आसनं पाद्यमर्घ्यं च दत्वा सम्यक् प्रपूजितः। पृष्टः स कुशलं प्रश्नैः प्रसन्नो नारदोऽब्रवीत् ॥५॥ नारद उवाच। दक्ष किं दुःखितस्त्वं ते मुखं म्लानतया युतम्। कथयस्व महातेजाः प्रजापतिपतिर्भवान् ॥६॥ दक्ष उवाच । शृणु

नारद येनाहं दुःखिनो म्लानतां गतः । शिवेनासत्कृतस्तत्र सभायां सर्वसन्निधौ ॥७॥ दर्पेणैवावृतः शंभुस्तस्य दर्पहृतिः कथम् । तादृशं ब्रूहि मे शीघ्रं सर्वार्थज्ञ विचक्षण ॥८॥ नारद उवाच । बृहस्पतिसवं दक्ष कुरु त्वं सर्वभावनः । यज्ञभागविहीनं तं तत्र शंभुं कुरुष्व भोः ॥९॥ यज्ञभागेन हीनोऽयं देवपंक्तिबहिष्कृतः । पिशाचेशो भवेच्छंभुर्देवत्वं तत्र संहृतम् ॥१०॥ प्रजापतिपतिः साक्षाद्भवान्सर्वत्र संमतः । करिष्यसि यथा पूर्वं पश्चाद्वै तादृशं भवेत् ॥११॥ एवं परम्पराप्राप्तं तस्यैश्वर्यं प्रकाशितम् । इति मे मनसि प्राप्तं यथेच्छसि तथा कुरु ॥१२॥ इत्युक्त्वा नारदस्तस्माद् गतो ब्रह्माण्डमण्डले । वीणागानरतो भूत्वा योगी ब्रह्मणि तत्परः ॥१३॥ दक्षोऽपि हर्षितो जातः सत्यं मानितवानभूत् । बृहस्पतिसवं कर्तुं समारेभे स तत्क्षणात् ॥१४॥ तत्राजगाम भगवान् विष्णुर्देववरः प्रभुः । आजग्मुर्देवगन्धर्वा नानावाहनशोभिताः ॥१५॥ तत्राजग्मुर्द्विजाः सर्वे नानातत्त्वार्थकोविदाः । जामातरः सपत्नीकाः कश्यपप्रमुखास्तथा ॥१६॥ यथोद्दिष्टं चकारासौ दक्षः परमहर्षितः । गणनाथविहीनं तं यज्ञं शंकरवर्जितम् ॥१७॥ गणेशम्यास्मृतिर्जाता सर्वेषां भाविगौरवात् । दधीचिप्रमुखास्तत्र शैवाः क्रोधेन पूरिताः ॥१८॥ दधीचिस्तत्र तूवाच क्रोधावेशसमन्वितः । शृणु दक्ष महाप्राज्ञ हितं वचनमुत्तमम् ॥१९॥ शंकरेण विहीनोऽयं यज्ञो नैव प्रशोभते । प्राणहीनो यथा देहस्तथैवासौ न राजते ॥२०॥ इति श्रुत्वा वचस्तस्य दक्षो रोषसमन्वितः । उवाच गर्वमोहेन शापेनैव विमोहितः ॥२१॥ शिवोऽशिवरूपश्च पिशाचानामधीश्वरः । वर्णाश्रमविहीनत्वान्न योग्यो यज्ञकर्मणि ॥२२॥ यत्र लक्ष्मीपतिः साक्षाद् भगवान्मंगलालयः । तत्र किं न्यूनता याति मिथ्यावाचं तु मा वद ॥२३॥ श्रुत्वा तस्य वचः क्रूरं दधीचिः पुनरब्रवीत् । शिवनिन्दां करोषि त्वमज्ञानेन विमोहितः ॥२४॥ यज्ञनाशो भवेद् दक्ष शंकरद्वेषतस्तव । न सिद्धिं लभसे त्वं तु नष्टभाग्यो न संशयः ॥२५॥ अत्र ये ब्राह्मणाद्या वै वर्णा नाना समागताः । सर्वे कलियुगे पापाः पाखण्डाश्च भवंतु ते ॥२६॥ स्वधर्मरहिततां प्राप्य नरकेऽन्ते पचन्तु वै । विष्णुः प्रमोदयुक्तोऽत्र स वै पाखंडकारकः ॥२७॥ कलौ देवो भवेन्नित्यं पाखंडानां सहायवान् । पाखंडप्रियवज्जन्तुः कलौ मलकरः सदा ॥२८॥ शिवहीने तथा यज्ञे मुख्यो जातो हि केशवः । वेदबाह्यं स्वयं कर्म कुरुते तेन शापितः ॥२९॥ सर्वे देवाश्च शीघ्रं हि भवितारः पराजिताः । मुनयो दुःखसंयुक्ता एवं शप्त्वा गतो मुनिः ॥३०॥ तमनुप्रययुः सर्वे शैवाः परमधार्मिकाः । गौतमो गालवश्चैव वामदेवो द्वितस्त्रितः ॥३१॥ मार्कण्डेयो ह्यगस्त्याद्याः क्रोधयुक्ता महर्षयः । यज्ञोऽयं नावलोक्यो वै वेदबाह्यक्रियात्मकः ॥३२॥

विष्णुनान्ये ततः सर्वे सान्त्विताः संस्थिताः पदे। देवता मुनयो वर्णा द्रष्टुं यज्ञं प्रहर्षिताः ॥३३॥ भृग्वादिमुनिभिस्तत्र यज्ञारम्भः कृतोऽभवत्। यथाविधि यथाभागं देवास्तत्राश्रिता मखे ॥३४॥ दक्षो हृष्टोऽभवत् तत्र यजमानः सुमंदधीः। वेद-कल्पानुसारेण मुनयस्तन्विरे मखम् ॥३५॥ एतस्मिन्नन्तरे तत्र कैलासे नारदो गतः। शिवया सह शंभुं च प्रणतोऽभूत्स भाविकः ॥३६॥ सतीं प्रति प्रहस्याह नारदः कलहप्रियः। देवि दक्षाध्वरे कस्माद् गमनं न कृतं त्वया ॥३७॥ हृष्टपुष्टजनाः सर्वे महोत्सवसुमोदिताः। भगिन्यस्तत्र ते रेजुः पतिभिः सह मोदिताः ॥३८॥ पितृभर्तृगृहे स्त्रीणां मानामानं न विद्यते। इत्युक्त्वा नारदस्तस्मात्प्रययौ कौतुकी मुनिः ॥३९॥ गते मुनौ सती तत्र मानसे दुःखिता भृशम्। शंकरं प्रणिपत्याह हृदयेन विदूयता ॥४०॥ नीलकण्ठ नमस्तुभ्यं शंकराय शिवाय च। सगुणाय मृडायैव निर्गुणाय नमो नमः ॥४१॥ गन्तु-मिच्छा त्वया सार्धमस्ति मे दक्षमंदिरे। तत्र यज्ञोत्सवो नाथ प्रसीद प्रार्थये विभो ॥४२॥ एवं श्रुत्वा भारतीं तां सतीं शंभुः सुबोधयन्। स्मयमानश्च तामूचे किमिदं भाषसे प्रिये ॥४३॥ मद्द्वेषी जनको दक्षस्तव तेन निमन्त्रितः। नाहं तस्मान्न गन्तव्यं विपरीतं भविष्यति ॥४४॥ भवती च महामाया मायिकोऽहं न संशयः। सृज त्वं मुनिदेवादीनत्र यज्ञं करोम्यहम् ॥४५॥ श्रुत्वा शंभुवचो रम्यं हृदयेन विदूयता। उवाच दुःखिता देवी ममाज्ञां देहि शंकर ॥४६॥ न किंचिदुक्तवान् शंभुस्तदा देवी पितुर्गृहे। न प्रयोजनमाज्ञाया विचार्यैवं जगाम च ॥४७॥ एतज्ज्ञात्वा महाऽऽश्चर्यं विस्मितेन शिवेन च। भावि यद्भविना तद्वै विमानं प्रेषितं वरम् ॥४८॥ विमानमास्थाय शक्तिराजगाम विहायसा। पितुर्गृहं महाभागा मानिना सर्वबन्धुभिः ॥४९॥ मात्रा पित्रा स्वसृभिस्तु सत्कृता हर्षितात्मभिः। दक्षस्तत्र प्रमोदेन जगाद तनयां प्रति ॥५०॥ आगता त्वं महाभागे यज्ञोऽयं शोभितस्त्वया। श्रुत्वा पितृवचो रम्यं तं सा प्रोवाच दुःखिता ॥५१॥ सत्युवाच। शोभयामि कथं यज्ञं नाहूता भवतात्र भोः। अनाहूताऽगता चाहं त्वदीये यजनालये ॥५२॥ ततः स कुपितो दक्ष उवाच शृणु पुत्रिके। मदीयो बहुलो दोषस्तेन त्वां दत्तवान्भ्रमात् ॥५३॥ पिशाचभूतराजाय पित्रा मे कथितं कृतम्। वर्णाश्रमविहीनाय वृषेश्वर-पदाय च ॥५४॥ तस्य दोषेण देवि त्वं नाहूता यज्ञकर्मणि। स्वागतं ते तथाप्यद्य तिष्ठ त्वं मत्समीपगा ॥५५॥ सूत उवाच। पितुर्वचनमाकर्ण्य शिवनिंदायुतं महत्। क्रोधसंतप्तगात्रा सा पश्यन्ती यज्ञमन्दिरम् ॥५६॥ अरुद्रभागसंयुक्तं यज्ञं दृष्ट्वा चुकोप ह। उवाच किं कृतं तात वेदबाह्यक्रियात्मकः ॥५७॥ रुद्रभागविहीनोऽयं यज्ञो नैव फलप्रदः। शिवनिंदां करोषि त्वं

ह्यशिवोऽसि न संशयः ॥५८॥ शिवेति द्व्यक्षरं ब्रह्म निर्गुणं गुणधारणम्। न जानासि यतस्त्वं भोस्तेनाहं दुःखिता भृशम् ॥५९॥ नव देहात् समुद्भूतो मम देहस्त्वयं पितः। न योग्यः शिवनिंदायाः कारणात् तं त्यजाम्यहम् ॥६०॥ इत्युक्त्वा सा हृदि ध्याने नीत्वा तं शंकरं प्रभुम्। योगाग्निना समुज्ज्वाल्य देहं धाम्नि गताऽभवत् ॥६१॥ पुनः स्वमायया देवी हिमाचलसुताऽभवत्। शिवध्यानपरा साक्षात्तं लेभे सा पुनः पतिम् ॥६२॥ तपस्तप्तं सुतीव्रं यत्तेन चात्मवशेन सा। लेभे मुदं शिवेनापि पार्वती प्रेमविह्वला ॥६३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते पार्वतीदेहत्यागो नाम तृतीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच। कैलासशिखरे रम्ये शिवश्चिन्तापरोऽभवत्। अनाहूता गता देवी द्विट्गृहे किं भविष्यति ॥१॥ वटमूले समासीनो नंदिकेशादिभिर्वृतः। योगिभिः सेवितस्तत्र कथा नाना प्रवर्तयन् ॥२॥ नानाऽपशकुनं तत्र बभूवातिभयानकम्। स्तुतिभिस्तेन सर्वे ते उत्पाताशंकया भृशम् ॥३॥ एतस्मिन्नन्तरे तत्र नारदो मुनिरराययौ। तं प्रणम्य स्थितो योगी शिवं कल्याणदं परम् ॥४॥ कथावसरमासाद्य प्रोवाच कठिनं वचः। धन्या सती त्रिभुवने न समा कामिनी तया ॥५॥ सतीत्येव च यन्नाम कृतं तत्सार्थकं परम्। शिवनिन्दां समाकर्ण्य तृणवज्ज्वलितं वपुः ॥६॥ नारदस्य वचः श्रुत्वा वज्रसारसमोपमम्। उवाच तमृषिं शंभुः किं नु देवी मृता मुने ॥७॥ न किंचिदुक्तवांस्तत्र शंभुक्रोधभयाकुलः। शोकाग्निर्मां दहेत्किं वा ततो देवोऽन्वबुध्यत ॥८॥ शोकसागरमग्नोऽभूत्किं मां त्यक्त्वा गता शिवा। शक्तिहीनः कृतोऽहं वै ह्यशक्तः सर्वकर्मणि ॥९॥ निःश्वासपरमोप्यासीदर्धमङ्गं गतं स्विति। जीवितेन च किं कार्यं देहत्यागं करोम्यहम् ॥१०॥ योगिभिर्मान्त्रितो देवो न किंचित्सुखवानभूत्। शिवश्चिन्तापरो भूत्वा विचारं कृतवान् हृदि ॥११॥ अहो विघ्नाकुलोऽहं वै कृतो विघ्नकरेण च। गर्वितः परमैश्वर्यात्कृतं गर्वस्य खण्डनम् ॥१२॥ अतुला शक्तिरर्धाङ्गे जगन्माताऽस्ति मे सदा। अर्धनारीश्वरोऽहं च न वियोगो मम क्वचित् ॥१३॥ शक्तियुक्ततया नित्यं शक्तोऽहं प्रभुरीश्वरः। अखण्डैश्वर्यमोहेन विघ्नराजं च

नामस्मरम् ॥१४॥ इति गत्वा स्वयं शंभुर्मनसा गणपं भजन्। भक्त्यैकचेतसा चैव ध्यात्वा रूपमनुत्तमम् ॥१५॥ चतुर्भुजं महाकायं गजवक्त्रं महोदरम्। मुकुटेन विराजन्तं कर्णकुण्डलधारिणम् ॥१६॥ रत्नमालाधरं पूर्णं नाभिशेषविभूषितम्। किंकिणीकायुक्तपादं क्वणच्चरणनूपुरम् ॥१७॥ सिद्धिबुद्धियुतं चिन्तामणिभूषितवक्षसम्। एकचित्तेन च ध्यात्वाऽसाधयत्तं समाधिना ॥१८॥ तुष्टाव विविधैर्वाक्यैर्गणेशं ब्रह्मरूपिणम्। निराकारं च साकारं विघ्नराजं हृदि स्थितम् ॥१९॥ शिव उवाच। नमस्ते विघ्नराजाय नमस्ते विघ्नहारिणे। विघ्नकर्त्रे गणेशाय विघ्नानां पतये नमः ॥२०॥ लंबोदराय सर्वाय वक्रतुण्डस्वरूपिणे। त्रैगुण्येन जगद्रूपनानाभेदप्रधारिणे ॥२१॥ नैर्गुण्येन च वै साक्षाद् ब्रह्मरूपधराय च। नमो नमो बंधहंत्रे भक्तानां पालकाय ते ॥२२॥ अभक्तेभ्यस्तमोदाय नानाभयकराय च। हेरंबाय नमस्तुभ्यं वेदवेद्याय शाश्वते ॥२३॥ अनंताननरूपायानंतबाह्वंघ्रिकाय ते। अनंतकरकर्णायानंतोदरधराय ते ॥२४॥ नमो नमस्ते गणनायकाय ते अनादिपूज्याय च सर्वरूपिणे। अखंडलीलाकरपूर्णमूर्तये महोत्कटायास्तु नमो महात्मने ॥२५॥ आदौ च निर्माय विधिं रजोमयं तेनैव सृष्टिं विदधासि देव। सत्त्वात्मकं विष्णुमथो हि मध्ये निर्माय पासि त्वमखंडविक्रम ॥२६॥ अन्ते तमोरूपिणमेव सृष्ट्वा शंभुं स्वशक्त्या हरसि त्वमाद्य। एवंविधं त्वां प्रवदन्ति वेदाः तं वै गणेशं शरणं प्रपद्ये ॥२७॥ मायामयं वै गुणपं तु सृष्ट्वा तस्मात्पुरस्त्वं गणराज चादौ। स्वानंदसंज्ञे नगरे विभासि सिद्ध्या च बुद्ध्या सहितः परेश ॥२८॥ तं त्वां गणेशं शरणं प्रपद्ये स्थितं सदा हृत्सु च योगिनां वै। वेदैर्न वेद्यं मनसा न लभ्यं तं वक्रतुण्डं हृदि चिन्तयामि ॥२९॥ अर्धनारीश्वरत्वं यत्तद्गतं मेऽधुना प्रभो। शक्तिहीनत्वमापन्नो नष्टवत्कर्मणा कृतः ॥३०॥ नानैश्वर्ययुता देवी सा गता गणप प्रभो। अनीश्वरपदं प्राप्तं मम वै देवदेव भोः ॥३१॥ निर्गुणोऽहं सदा शंभुः सगुणः सर्वभाववित्। शक्त्या युक्तो यदा स्वामिन्नधुना किं करोम्यहम् ॥३२॥ शक्तिहीनः पदा गन्तुं न शक्नोमि गणेश्वर। अतस्त्वं कृपया देव शक्तं मां कुरु कर्मणि ॥३३॥ ततः प्रादुरभूत्तस्य पुरतः स गणाधिपः। उवाच शंकरं तत्र हर्षयन् श्लक्ष्णया गिरा ॥३४॥ अहो पश्य च मां शंभो किं शोचसि महेश्वर। भवितासि सशक्तिस्त्वं मद्वाक्यान्नात्र संशयः ॥३५॥ अहमेवेश्वरो देवो ह्येको ब्रह्माण्डमंडले। तेन गर्वेण युक्तस्त्वं स विघ्नः सहसा कृतः ॥३६॥ अधुना ते गतो मोहो मदीया स्मृतिरागता। ध्यातस्तुतश्च तेनाऽहं प्रसन्नोऽस्मि न संशयः ॥३७॥ हिमाचलसुता देवी भविष्यति न संशयः। वृणोषि त्वं सतीं तां वै पार्वतीं च पुनः

शिव ॥३८॥ रमसे च तया सार्धं मद्भक्त्या भावितो हृदम्। ईश्वरः सहशक्तिस्त्वं मत्प्रसादात्सदा भव ॥३९॥ स्मृतमात्रस्तवाग्रेऽहं प्रत्यक्षः स्यां सदाशिव। इति दत्त्वा वरं देवस्तत्रैवांतरधीयत ॥४०॥ ततश्च शंकरः क्षुब्धः शक्तो जातः स्वकर्मणि। जटामास्फालयामास गणेशं मनसा स्मरन् ॥४१॥ तस्माज्जातो महाबाहुर्वीरभद्रस्त्रिमस्तकः। त्रिपदः शूलवान् साक्षान्मृत्युरूपो महाद्युतिः ॥४२॥ शंकरं प्रणनामाथ प्रांजलिः सन्पुरः स्थितः। आज्ञां कुरु महादेव दासोऽहं ते वशे स्थितः ॥४३॥ वचनं तस्य संश्रुत्य प्रहृष्टः शंकरोऽब्रवीत्। मयज्ञस्य च दक्षस्य हरणं कुरु सांप्रतम् ॥४४॥ तदाज्ञां शिरसा धृत्वा अट्टहासमथाकरोत्। तेन त्रिभुवनं सर्वं कंपितं भयविह्वलम् ॥४५॥ ततो निर्गम्य वेगेन शरीरान्निर्ममे महान्। नानारुद्रानपारांश्च तैर्वृतः स गतो मखम् ॥४६॥ तमन्वयुर्गणाः शंभोर्नन्दिकेशादयोऽपरे। क्षुभिताः क्रोधसंयुक्ता ब्रह्मांडाशनसन्निभाः ॥४७॥ दुर्निमित्तानि सर्वाणि दक्षगेहेऽभवंस्तदा। शंकिता मुनयो देवाः किं भवेदिति विह्वलाः ॥४८॥ एतस्मिन्नंतरे तत्र दक्षयज्ञं महाबलः। आजगामावृतो रुद्रैर्वीरभद्रो भयानकः ॥४९॥ नंदी भृंगरिटिर्भृंगी पुष्पदंतमुखास्तथा। आगताः क्रोधदीप्तास्या भक्षयन्तो यथान्तकाः ॥५०॥ सहसा वेगतः सर्वे मारयन्त इतस्ततः। पलायंत च दिक्प्रान्ते दक्षस्यानुचरास्तदा ॥५१॥ यज्ञमंडपमासाद्य बभंजुस्तत्क्षणेन च। देवान् सर्वान् मुनींश्चैव पीडयन्तः सुदारुणाः ॥५२॥ ऋषिपत्नीर्दधुस्तत्र देवपत्नीः सहस्रशः। अताडयन्महावीर्या हाहाकाराः प्रवर्तिताः ॥५३॥ कथं त्वसाधुपतयो भवतीभिर्वृताः खलु। शिवद्वेषकरा दुष्टास्तस्य प्राप्तं महत्फलम् ॥५४॥ एवमूचुर्हविर्द्रव्यं बभक्षुस्ते प्रहर्षिताः। वेदिकायां प्रचक्रुस्ते विट्सर्गं मूत्रणं तथा ॥५५॥ जगाम भगवांस्तत्र शंकरः क्रोधसंयुतः। धनुर्बाणधरः साक्षात्प्रलयाग्निरिवोत्थितः ॥५६॥ तत्र युद्धमभूद् घोरं देवानां रुद्रचारिणाम्। स्वयं च युयुधे शंभुः शस्त्रास्त्रैर्मर्मभेदिभिः ॥५७॥ पूष्णो दंतांश्च नाराचैर्भेदयामास शंकरः। भगस्य नेत्रमुन्मूल्य पातयामास संयुगे ॥५८॥ धर्मं धृत्वा महावीरो नंदिकेशोऽब्रवीत्तदा। को धर्मो वद रे दुष्ट शिवहीने मखे खलु ॥५९॥ कश्यपं धृतवांस्तत्र भृंगी तेजस्विनां वरः। वरुणं ताडयामास पुष्पदन्तश्च वीर्यवान् ॥६०॥ भैरवेण धृतस्तत्र देवेन्द्रो मूर्छितः कृतः। वीरभद्रो बलाद्दक्षं पातयामास भूतले ॥६१॥ एवं प्रमथिते यज्ञे शंखचक्रगदाधरः। युयुधे विष्णुरव्यग्रो महाबलसमन्वितः ॥६२॥ शस्त्रास्त्रैर्बहुभिस्तेन मर्दिता बलवत्तराः। रुद्रा भूतपिशाचाद्या हाहाकारं प्रचक्रिरे ॥६३॥ तं दृष्ट्वा सहसा शंभुर्हृदि ध्यात्वा गणाधिपम्। बाणैस्तं हृदि संविध्य पातयामास भूतले ॥६४॥ पुनः

संज्ञां समासाद्य स्वास्त्रं नारायणात्मकम्। मोचयामास गोविंदो जगत्संहारकारकम् ॥६५॥ ततः शंभुर्मुमोचापि स्वास्त्रं पाशुपतं महत्। ते उभे व्योम्नि चात्यन्तं युयुधाने परस्परम् ॥६६॥ तस्माज्जातो महानग्निर्ददाह पृथिवीमिमाम्। भयक्रान्तं त्रिभुवनं जातं तत्र मृतोपमम् ॥६७॥ एतस्मिन्समये तत्र वीरभद्रेण कल्पितम्। पशुरूपं शिरश्छित्वा दक्षस्याग्नौ हुतं ततः ॥६८॥ रुद्रैर्नानाविधैः कोलाहलस्तत्र प्रवर्तितः। छिन्नभिन्नाः सुरा जातास्त्रातारं लेभिरे न ते ॥६९॥ मुनयोऽपि भयोद्विग्ना व्यद्रवंस्तु दिशो दश। पिशाचादिभिराकृष्टाश्चक्रुशुश्चातिदारुणम् ॥७०॥ विष्णुना तत्र चक्रं वै भ्रामितं क्रोधधारिणा। कृतान्तसदृशं मुक्तं शंभोः सन्निधिमागतम् ॥७१॥ चक्रं तच्छंकरं दृष्ट्वा तं नत्वा तत्र संस्थितम्। तेन क्रोधपरीतांगः शिवः शूलं समाददे ॥७२॥ शूलमुद्यम्य तं विष्णुं हन्तुं यावत्प्रवर्तते। तत्राकाशोद्भवा वाणी वारयामास शंकरम् ॥७३॥ न हन्तव्यो हरिः शंभो त्वया पाल्योऽयमच्युत। जहि कोपं महादेव शिवाय सततं नमः ॥७४॥ तत्राजगाम सहसा स्वयंभूस्तं न्यषेधयत्। मा कुरुष्व वधं शंभो विष्णोः संहारकारक ॥७५॥ नमः शिवाय शांताय शूलिने शंभवे नमः। महादेवाय रुद्राय पशूनां पतये नमः ॥७६॥ संहाररूपी त्वं साक्षादकाले किं प्रवर्तसे। जहि कोपं महाबाहो नमस्ते परमेश्वर ॥७७॥ ब्रह्मणा संस्तुतो देवः प्रशांतोऽभून्महामुने। तस्मिन्काले स्वयं विष्णुर्ब्रह्मणा ज्ञापितः प्रभुः ॥७८॥ शिवाय नमनं कृत्वा स्थितः संलज्जितो भृशम्। प्रोवाच मधुरं ब्रह्मा शंकरं वृषभध्वजम् ॥७९॥ शांत उर्वरितं यज्ञे हविर्द्रव्यं च यत्प्रभो। रुद्रभागः स विज्ञेयो गृहाण त्वं सदाशिव ॥८०॥ विघ्नेशमायया भ्रान्ता दक्षाद्याः सततं शिव। मोहितानां विशेषेण द्रष्टव्यं न प्रचेष्टितम् ॥८१॥ अतस्त्वं कृपया देव प्रसन्नो भव शंकर। सर्वेभ्यः सुखदाता वै यज्ञं तं पुनरारभ ॥८२॥ देवानां च मुनीनां च स्त्रीणां दासादिजीविनाम्। यथापूर्वं स्थितं रूपं तादृशं कुरु शंकर ॥८३॥ भगः स नेत्रसंयुक्तः पूषा वै पिष्टभुक् कृतः। देवाश्च मुनयः सर्वे स्त्रियो दासादयस्तथा ॥८४॥ यथापूर्वं कृतास्तेन युक्ता रूपेण तेजसा। गतदुःखाश्च सर्वे ते ववंदुः शंकरं पुनः ॥८५॥ दक्षस्य मस्तकं तत्र दग्धं वै जातवेदसि। तज्ज्ञात्वा शंकरो देवो भृंगिणं प्रत्युवाच ह ॥८६॥ गच्छ चानय तं हत्वा य आदौ दृश्यते त्वया। तस्य मस्तकमेतत्तु भवेद् दक्षस्य मस्तकम् ॥८७॥ तदा तेन पुरो दृष्टो ह्यजः परमशोभितः। तं हत्वा तच्छिरस्तत्र समानीतं च भृंगिणा ॥८८॥ तदेव योजयित्वा तमजीवयत शंकरः। स सद्य उत्थितस्तत्र दक्षोऽजमुखतां गतः ॥८९॥ ब्रह्मणा प्रेरितो दक्षः पुनस्तुष्टाव शंकरम्। गतमानो महाबाहुः

भक्त्या सर्वेश्वरं ततः ॥९०॥ दक्ष उवाच। नमामि शंकरं साक्षाद्यदाधारमिदं जगत्। कालरूपं यथाकालं बोधयामास तं शिवम् ॥९१॥ कालेन फलमूलानि जायंतेऽन्नादिकानि च। शीतोष्णसमभावश्च सदा कालेन जायते ॥९२॥ सूर्यस्तपति कालेन ज्योतिषां गण एव च। कालेन जायते वृष्टिरनावृष्टिस्तथा विभो ॥९३॥ कालेन सृज्यते सृष्टिर्ब्रह्मणा वै पुनः पुनः। कालेन पालनं तत्र कुरुते विष्णुरव्ययः ॥९४॥ कालेन स्वेच्छया शंभुः संहारं प्रकरोति च। यत्किंचिदिह तत्सर्वं कालाधीनं न संशयः ॥९५॥ स एव कालो भगवानीश्वरो ब्रह्मसंज्ञितः। शिवः साक्षाच्च वेदेषु कथ्यते वेदवादिभिः ॥९६॥ क्षमस्व मेऽपराधं त्वं त्वन्मायागर्विनस्य च। यत्कृतं तदयासिंधो नमस्ते परमेश्वर ॥९७॥ सगुणाय नमस्तुभ्यं निर्गुणाय नमो नमः। सृष्टिकर्त्रे च संहर्त्रे पात्रे नानास्वरूपिणे ॥९८॥ अनंतगुणराशिस्त्वं वर्णनीयं किमप्यहो। नान्तं ब्रह्मादयो जग्मुर्महेशानां च का कथा ॥९९॥ नमो नमो ब्रह्ममयाय देवादये शिवायाथ च पूर्णमूर्ते। अनादिमध्यान्तविहीनभूम्ने नमो नमो भक्तभयापहन्त्रे ॥१००॥ इत्येवं स्तुवतस्तत्र प्रेमगद्गदया गिरा। अजवत्तस्य संजातं भाषणं लललल्ललम् ॥१०१॥ तेन हृष्टो महादेवस्तं पुनर्नरमस्तकम्। भगवान् कारयामास यथापूर्वं मुनीश्वराः ॥१०२॥ प्रोवाच मधुरं वाक्यं शिवस्तं सर्वसन्निधौ। प्रजापतिपतिर्दक्ष सर्वमान्यो भविष्यसि ॥१०३॥ त्वया यद्रचितं स्तोत्रं मदीयं मत्प्रियं भवेत्। यस्तोष्यति प्रदास्यामि तस्मै काममनेन माम् ॥१०४॥ इह भुक्त्वाऽखिलान्भोगानंते मल्लोकमाप्नुयात्। मम प्रीतिकरश्चासौ भविष्यति न संशयः ॥१०५॥ त्वया यदजवद्वाक्यं कृतं मे खलु सन्निधौ। तद्वचो मत्समीपे वै करिष्यति नरः सकृत् ॥१०६॥ तेन हृष्टो भविष्यामि वांछितं पूरयामि च। एवं दत्त्वा वरं शंभुस्तत्रैवांतरधीयत ॥१०७॥ सर्वे स्वस्वस्थलं जग्मुर्हर्षिता धर्षितास्तथा। दक्षश्च स्वगृहे विप्रा दुःखितः स्थितवान् स्वयम् ॥१०८॥ तदादि शिवभक्ता ये न कुर्वन्ति शिवालये। अजवन्निनदं तेन हृष्टो भवति शंकरः ॥१०९॥ इति सर्वं समाख्यातं दक्षशापादिकं च यत्। यज्ञभंगस्य हेतुं च पुनः किं श्रोतुमिच्छथ ॥११०॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते दक्षचरितं नाम चतुर्थोऽध्यायः ॥



।। श्रीगणेशाय नमः। शौनक उवाच। श्रुतं दक्षस्य चरितं यज्ञध्वंसादिकं महत्। मुद्गलस्य च दक्षस्य संवादं कथयस्व भोः ॥१॥ सूत उवाच। शृणु शौनक संवादं दक्षमुद्गलसंभवम् । ब्रह्मभूयकरं पूर्णं भावेन च श्रुतं हृदि ॥२॥ दक्षप्रश्नं परं धृत्वा मुद्गलो गणपप्रियः। तं प्रत्युवाच भावेन महर्षिर्योगिनां वरः ॥३॥ मुद्गल उवाच। सर्वेषां गणपो माता पिता चैव न संशयः। तेन सर्वादिपूज्योऽयं सर्वपूज्यः स देवराट् ॥४॥ ज्येष्ठराजेति यद्वाक्यं वेदेन प्रतिपादितम्। ज्येष्ठं भावाच्च तस्यापि ज्ञातव्यं सर्वसंमतम् ॥५॥ तस्य सर्वे कलांशा वै कलांशांशाश्च केचन। न कला तस्य संपूर्णा जगत्यां कुत्र दृश्यते ॥६॥ विनायको नाम तेन जातोऽसौ भगवान् खलु। विशेषेण च सर्वेषां नायकोऽयं गणाधिपः ॥७॥ विगतो नायको यस्य स्वेच्छाचारी विनायकः। स्वानंदलोकवासी च स्वसुखेन प्रभावतः ॥८॥ ब्रह्मविष्णुशिवाद्यैश्च वेदैर्योगिभिरेव च। सर्वैः संपूजितो देवो धर्मकामार्थमुक्तये ॥९॥ अहं ब्रह्मेति माहात्म्याद् गर्वो भवति शाश्वतः। शिवादीनां यदाधारादिदं सर्वं प्रवर्तते ॥१०॥ तदा मदहरोऽयं वै तेषां ज्ञानार्थसिद्धये। विघ्नकर्ता महाराजः स्वयं भवति विघ्नपः ॥११॥ पदभ्रष्टाः कृतास्तेन सर्वे देवादयो द्विजाः। किमाधारमिदं सर्वं विचिन्वंति समाधिना ॥१२॥ तेन पश्यन्ति योगेन चेतसः पंचवृत्तिभिः। तासां प्रकाशकोऽयं वै चिंतामणिरिति स्मृतः ॥१३॥ वेदैः संपादितं ज्ञात्वा शरणं तं व्रजंति ते। ततो विघ्नहरो जातस्तेषां सर्वार्थदः स्मृतः ॥१४॥ सर्वसत्तात्मकोऽयं वै विघ्नराजः प्रकीर्तितः। अत एव गणेशाद्धि परं किंचिन्न विद्यते ॥१५॥ स-विघ्नस्त्वं प्रजातोऽसि तमेव शरणं व्रज। चिन्तामणिं विघ्नहरं गणेशं च विनायकम् ॥१६॥ सूत उवाच। प्रजापतिरिति श्रुत्वा दक्षो हृष्टमनाः पुनः। पप्रच्छ विनयेनैव कथां पापप्रणाशिनीम् ॥१७॥ दक्ष उवाच। कोऽयं स्वानंदवासी वै कथं ज्ञेयो भवेन्मया। वद तत्र विभो मार्गं तेन तं सततं भजे ॥१८॥ मुद्गल उवाच। अत्र ते कथयिष्यामि इतिहासं पुरातनम्। पार्वतीशिवसंवादं यथा जातं शृणुष्व भोः ॥१९॥ कैलासे गिरिवर्ये तु सुखासीनं महेश्वरम्। पार्वती प्रणता भूत्वा पृच्छति स्म मुदायुता ॥२०॥ पार्वत्युवाच। शिव त्वं सर्वदेवानां नागानां रक्षसां तथा। मानवानां च सर्वेषां पूज्यः स्वामी न संशयः ॥२१॥ तेभ्यः पदप्रदाता त्वं सर्वाधीशः पुरातनः। मायाविकारहीनश्च शिवस्तेन प्रकीर्तितः ॥२२॥ त्वं किं समाधिना देव ध्यायसे मां वद प्रभो। त्वत्तः परतरं किंचिन्न दृष्टं नैव संश्रुतम् ॥२३॥ इति पृष्टो महादेवस्तां प्रत्यूचे च सादरम्। सारं वेदादिमान्यं च ब्रह्मभूयकरं परम् ॥२४॥ श्रीमहादेव उवाच। शृणु प्रिये प्रवक्ष्यामि यं ध्यायामि दिवानिशम्।

गणेशं हृदि संस्थं मे स्वानंदावासिनं परम् ॥२५॥ साकारं च निराकारं तस्मिन्देवि न विद्यते । मनोवाणीविहीनं न मनोवाणीमयं न वै ॥२६॥ शिवस्य वचनं श्रुत्वा पार्वती प्रेमसंयुता । उवाच मधुरं वाक्यं वाक्यज्ञा भावपूर्वकम् ॥२७॥ पार्वत्युवाच । कोऽसौ गणेशनामा वै कथं स हृदि तिष्ठति । स्वानंदवसतिः का च यत्र तिष्ठति स प्रभुः ॥२८॥ साकारो न निराकारो कथं स ज्ञायते जनैः । मनोवाणीमयो नैव हीनस्ताभ्यां न च क्वचित् ॥२९॥ तस्य ध्यानं महेशापि कर्तुं नैव प्रशक्यते । ध्यायसे केन मार्गेण भव मे कथय प्रभो ॥३०॥ अहं दासी त्वदीया वै शिष्यभावेन संस्थिता । कथयस्व महादेव ध्यानं गाणेशकं मम ॥३१॥ तमहं साधयिष्यामि साक्षात्कारेण वै यथा । कृतकृत्या भविष्यामि प्रसादात्ते न संशयः ॥३२॥ मुद्गल उवाच । इति पृष्टो महादेवो देव्या भक्त्यादरेण च । पात्रं गणेशमार्गस्य दृष्ट्वा प्रेमयुतोऽब्रवीत् ॥३३॥ तत्तेऽहं शृणु वक्ष्यामि गुह्याद् गुह्यतमं महत् । रहस्यं वेदशास्त्राणां यस्मात्परतरं न च ॥३४॥ दक्ष उवाच । तव वाक्यामृतेनाऽहं प्रीतो मुद्गल सांप्रतम् । उमामहेशसंवादं योगीन्द्र कथयस्व मे ॥३५॥ सूत उवाच । दक्षस्य भावयुक्तं तद्वचनं मुद्गलेन वै । श्रुतं तेन सुसंतुष्टो वक्तुं समुपचक्रमे ॥३६॥ मुद्गल उवाच । शम्भुः स्मृत्वा गणेशानं हृदि ध्यात्वा महायशाः । प्रत्युवाच महादेवीं गाणपत्यः प्रतापवान् ॥३७॥ श्रीशिव उवाच । सर्वं मायामयं विद्धि जायते यच्च चेतसा । चित्तप्रवेशहीनं च मायातीतं निगद्यते ॥३८॥ रचितं द्विविधं येन स एव गणनायकः । स्वसंवेद्यं महः प्रोक्तं वेदयेत्तद्विशेषतः ॥३९॥ तत्रैव दृश्यते देवो योगिभिर्योगपारगैः । तेन स्वानंदवासी स कथ्यते वेदवादिभिः ॥४०॥ चित्तस्य पंचभूमीनां प्रकाशनकरः स्मृतः । चिंतामणिरिति ख्यातो हृदि संतिष्ठति प्रभुः ॥४१॥ समूहं गणधातुश्च तेषां स्वामी गणेश्वरः । अभेदयोगमार्गेण सदा ध्यातुं स शक्यते ॥४२॥ मुद्गल उवाच । श्रुत्वा शिववचो रम्यं पार्वती विनयान्विता । चकिता प्रत्युवाचेदं वचनं हितकारकम् ॥४३॥ पार्वत्युवाच । भगवन्कथितं कूटवचनं योगभावितम् । न बुद्धं तन्मया स्वामिंस्तस्माच्च सुलभं वद ॥४४॥ त्वया मायामयं प्रोक्तं कीदृशं कथय प्रभो । मायाहीनं कथं ज्ञेयं विस्तरेण वदस्व मे ॥४५॥ मुद्गल उवाच । शक्तिप्रश्नं च संश्रुत्य हृष्टः शंभुः सुयोगवित् । साश्रुनेत्रः सरोमांचो भक्त्या जातो महायशाः ॥४६॥ आदिमायां प्रशंसन सन वक्तुं तामुपचक्रमे । योगमार्गस्य सिद्ध्यर्थं विस्तरेण महेश्वरः ॥४७॥

॥ इति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते पार्वतीप्रश्नविचारो नाम पंचमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । पार्वतीशिवसंवादं कथयस्व महामते । पाराशर्यस्य सर्वज्ञ शिष्य सर्वार्थतत्त्ववित् ॥१॥ सूत उवाच । मुद्गलेन यथा प्रोक्तं दक्षे वै शौनिकारकम् । शिवयोस्तं च संजातं संवादं कथयामि भोः ॥२॥ श्रीशिव उवाच । धन्या देवि महाभागे त्वत्समान्या न विद्यते । महापुण्येन ते बुद्धिर्गणेशज्ञानलालसा ॥३॥ कारितोऽहं त्वया शक्ते सत् स्त्रिया नात्र संशयः । ममैवेदं महद्भाग्यं गाणपत्यप्रिया गृहे ॥४॥ गणेशाय नमः कृत्वा कथयामि कथानकम् । आदौ मायामयं विद्धि मायातीतं ततः परम् ॥५॥ स्वस्वरूपमयं सर्वं ज्ञातव्यं योगिना सदा । द्विविधं योगमार्गेण साधनेन विशेषतः ॥६॥ आदौ ब्रह्म स्थितं देवि एकानेकादिवर्जितम् । स्वतः परत उत्थानात्तदेव द्विविधं बभौ ॥७॥ स्वत उत्थानके नैव विकल्पः सदृशः कृतः । अहमस्मीति भावेन बिम्बं भिन्नं विनिःसृतम् ॥८॥ सकलाभेदरूपं यन्निराकारं स्वभावतः । अहमस्मि सदा प्रोक्तं ब्रह्मरूपं च शाश्वतम् ॥९॥ तेनापि स्वस्वरूपं तद् दृष्टमात्मात्मकं परम् । कीदृशोऽहं विकल्पश्च कृतो मोहेन तत्क्षणात् ॥१०॥ चतुश्चतुः पदार्था ये योगरूपेण संस्थिताः । तेषामभेदरूपं च दृष्टं सर्वात्मकं परम् ॥११॥ मायया बिम्बरूपोऽयं जातः सद्यश्च नामतः । माया बिम्बं द्वितीयं तत्तत्र मोहप्रधारणात् ॥१२॥ मोहधारणमात्रेण विस्मृतं स्वस्वरूपकम् । मायासुखेप्सुना जाता तस्य देवस्य तत्क्षणात् ॥१३॥ सर्वाकारा निराकारा माया जाता द्विधापरा । बुद्धिरूपा महाभागा तया सर्वं प्रबुध्यते ॥१४॥ निराकारं च साकारं बुद्ध्या संबुध्यते जनैः । बुद्ध्या यद्बुध्यते क्षेत्रे बुद्धिरूपं तदेव च ॥१५॥ तत्र मोहो च साकारो निराकारः स्वयं प्रभुः । मोहहीन इति भ्रांतिर्द्विधा गुणसमुत्थिता ॥१६॥ सा सिद्धिर्मोहकर्त्री वै नानाभ्रांति-प्रकाशिका । एका बुद्धिश्च सर्वत्र तथा द्वैधे प्रवर्तिता ॥१७॥ सिध्या संमोहिता बुद्धिर्भ्रान्ता जाता च पार्वती । साकार-मोहसंयुक्ता निराकारविमोहिता ॥१८॥ मोहधारकबुद्धिश्च सिद्धिर्मोहप्रदायिनी । तयोः प्रकाशदाता स गणेशानो-ऽभवत् स्वयम् ॥१९॥ स एव नामतस्तत्र न गतो निजरूपधृक् । बिम्बबिंबिप्रभावत्वाद्भासते तादृशो वृथा ॥२०॥ सर्वात्मकं च बिम्बं यत्परं तत्रैव बिम्बितम् । आत्मरूपं निराकारं तयोः संयोगितां गतः ॥२१॥ स एव गणराजोऽयं मायाखेलकरः प्रभुः । तस्येच्छया तद् द्विविधं चलति प्रतिसूत्रवत् ॥२२॥ त्रिविधं चैकभावं च जातं मोहेन पार्वती । विकल्पः प्रकृतस्तेन एकोऽहं स्यां बहुस्त्विति ॥२३॥ विकल्पेन द्विधा भूतं देहदेहिस्वरूपकम् । सोऽहं ब्रह्मेति यत्प्रोक्तं वेद वै वेदवादिभिः ॥२४॥ तदेव देहि रूपं च देहमोहप्रधारणात् । देहरूपं तथा तत्र बिन्दुमात्रं प्रकीर्तितम् ॥२५॥ चतुर्विधानां देहानां ब्रह्मरूपं

पुराननम्। बहुरूपं च तद्विद्धि देहकैवल्यसंज्ञितम् ॥२६॥ सोऽहं ब्रह्मैकरूपं यद्बहुरूपं च बिंदुमत्। स्वस्वकार्येषु नो शक्तं सत्ताहीननया शिवे ॥२७॥ नाभ्यां तपः कृतं घोरं स्वस्वरूपस्य सुंदरि। दिव्यवर्षसहस्रान्ते प्रसन्नोऽभूद् गजाननः ॥२८॥ प्रत्यक्षतां ययौ तत्र शुंडादंडविराजितः। लंबोदरो महाकर्णश्चतुर्बाहुस्त्रिनेत्रभृत् ॥२९॥ तस्य दर्शनमात्रेण स्फूर्तिर्जाता तयोस्तदा। तया तं तौ समाबुध्य नतौ स्तोत्रं प्रचक्रतुः ॥३०॥ प्रकृतिपुरुषावूचतुः। नमस्ते गणनाथाय स्वसंवेद्यमयाय ते। निराकारस्वरूपा वै शुंडा यस्य विराजते ॥३१॥ यस्य देहश्च साकारः कंठाधः परिकथ्यते। अभेद एतयोर्जातस्तेन त्वं वै गजानन ॥३२॥ चतुर्विधं निजानंदाद्वेदेषु कथितं भवेत्। एकमव्यक्तरूपं च द्वितीयं समरूपकम् ॥३३॥ तृतीयं सत्स्वरूपं च चतुर्थं यत्सदा ह्यसत्। चतुर्देहस्वरूपं ते तेन त्वं वै चतुर्भुजः ॥३४॥ नवोदरे स्थितं सर्वं तेन लंबोदरः स्मृतः। मायामायिकरूपं च द्वौ पादौ द्विविधं च ते ॥३५॥ एते सर्वे गणा ढुंढे त्वदीया नात्र संशयः। गणनाथोऽसि तेन त्वं नाम्ना ख्यातश्च सर्वदा ॥३६॥ एतादृशो निजात्मासावावयोर्ध्यान आवभौ। स्वसंवेद्यनया ध्यातो भक्तानुग्रहकारकः ॥३७॥ भक्ताभिमानभावेन देहधारी स्वयं ह्यभूत्। एतैश्च लक्षणैर्युक्तो गणेशो नामधारकः ॥३८॥ धन्यं सर्वं कृतं स्वामिन् येन त्वं दृष्टवानभूः। स्वानंदवासभृत् साक्षाद् हृदि नित्यं स्थिरो भव ॥३९॥ नमस्ते विघ्नराजाय नमस्ते विघ्नहारिणे। भक्तानां वै ह्यभक्तानां विघ्नकर्त्रे नमोऽस्तु ते ॥४०॥ कर्मणां फलदात्रे च ज्ञानानां सिद्धिदायिने। अमेयशक्तये तुभ्यं सर्वाधाराय ते नमः ॥४१॥ किं कर्तव्यं दयासिंधो तदेवाज्ञापय प्रभो। तव भक्तिं महातीव्रां देहि नौ गणनायक ॥४२॥ एवं स्तुतिं समाकर्ण्य परितुष्टो गणाधिपः। मेघगंभीरया वाचा हर्षयन्नब्रवीत्तदा ॥४३॥ श्रीगणेश उवाच। साधु साधु महाभागौ यदुक्तं स्तोत्रमुत्तमम्। मम प्रीतिकरं सर्वकामदं प्रभविष्यति ॥४४॥ धर्मार्थकाममोक्षाणां दायकं पुष्टिवर्धनम्। कारागृहस्थितानां च मोचकं लक्षपाठतः ॥४५॥ मारणोच्चाटनादीनां नाशकं तत्तथैव च। एकविंशतिवारं यः एकविंशद्दिनावधि ॥४६॥ पठेत्तु यदि वै भक्त्या स ईप्सितफलं लभेत्। ब्रह्मभूयकरं चैतन्निष्कामपठनाद्भवेत् ॥४७॥ भवतोस्तपसा तुष्टः स्तोत्रेणानेन भावतः। प्रीतो दास्यामि संपूर्णं भवद्भ्यामीप्सितं च यत् ॥४८॥ बिंदुमात्रस्वरूपेण यत्स्थितं ब्रह्म शाश्वतम्। तस्माच्चतुर्विधं विश्वं प्रकटं संभविष्यति ॥४९॥ प्रकर्षेण च सर्वेषां कृतिस्तस्माद्द्विनिःसृता। प्रकृतिस्तेन ते नाम भविष्यति जनेष्विदम् ॥५०॥ सृष्ट्वा चतुर्विधं विश्वं बंधहीना भविष्यसि। मदीयां भक्तिमचलां प्रकृते प्राप्स्यसि ध्रुवम् ॥५१॥ जनास्त्व-

दीयभक्तिं ये करिष्यंति सकामतः। निष्कामतश्च तेभ्यस्त्वं सर्वं दास्यसि शोभने ॥५२॥ चतुर्विधेप्ययं शेते पुरे तेनैव पूरुषः। सोऽहंमात्रात्मको भावी नाम्ना सर्वत्र तिष्ठतु ॥५३॥ सर्वाकारविहीनोऽयं तत्र भ्रान्तो भविष्यति। बिंबबिंबित-भावेन प्रकृतौ मोहितः सदा ॥५४॥ स्वयं मोहविहीनः स सोऽहंमात्रात्मकः सदा। मत्प्रसादाद्भवेन्नित्यं ब्रह्म सोऽहं सुखात्मकः ॥५५॥ मदीया भक्तिरचला भविष्यति तवापि च। तया बंधविहीनस्त्वं तथा मान्यो भविष्यसि ॥५६॥ तव भक्तिं करिष्यन्ति जना भावेन संयुताः। तेभ्यस्तदीप्सितं सर्वं दास्यसि त्वं न संशयः ॥५७॥ ब्रह्मभूयपदं चैव दास्यसे योगसेवया। साक्षात्पुरुषरूपस्त्वं सर्वसत्तात्मको भव ॥५८॥ प्रकृतौ वीर्यमाधत्स्व सर्वसत्तात्मकं विभो। तेनेयं सर्व-सूर्विश्वं सृजिष्यति न संशयः ॥५९॥ सृष्ट्वा चतुर्विधं सर्वं पालनं हरणं तथा। कर्तव्यं कालयोगेन करणीयमिदं स्मृतम् ॥६०॥ सर्वेषां प्रकृतिर्माता पिता पुरुष उच्यते। नानारूपाणि नामानि कल्पयिष्यन्ति वै जनाः ॥६१॥ इत्युक्त्वा गणराजस्तु तत्रैवांतरधीयत। प्रकृतिः पुरुषश्चैव यथाज्ञप्तौ प्रचक्रतुः ॥६२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते प्रकृतिपुरुषवरप्रदानं नाम षष्ठोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ पार्वत्युवाच। श्रुत्वेदं त्वन्मुखांभोजाद्धर्षश्चेतस्यजायत। पुनर्वदस्व मे स्वामिन् गणराजकथामृतम् ॥१॥ कथानां च रहस्यं यत्तदेवैतन्न संशयः। पुनाति प्राश्निकं श्रोतॄन् वक्तारं भक्तितः श्रुतम् ॥२॥ प्रकृतिः पुरुषश्चोभौ कथं सृष्टिं प्रचक्रतुः। अंतर्हिते निजानंदे गणेशे स्वेच्छया विभौ ॥३॥ मुद्गल उवाच। पार्वतीवचनं श्रुत्वा प्रहृष्टः शंकरोऽब्रवीत्। कथां रसयुतां रम्यां पावनानां च पावनीम् ॥४॥ शंकर उवाच। शृणु देवि प्रवक्ष्यामि गणनाथकथां शुभाम्। धन्यासि सादरा जाता सप्रेमा विघ्ननाशिनी ॥५॥ अन्तर्हिते गणेशे च प्रकृतिः पुरुषस्तथा। सामर्थ्येन युतौ जातौ परस्परमनोनुगौ ॥६॥ तपसा वरदानेन मोहयामास तत्क्षणात्। पुरुषं प्रकृतिः सा वै नानाभावार्थदर्शिनी ॥७॥ नानाविभवयुक्तां तां दृष्ट्वा

पुरुषसत्तमः । मोहितः पूर्णभावेन तदधीनोऽभवत्सदा ॥८॥ संवीक्षिता महामाया पुरुषेण महात्मना । हावभावयुता तत्र संस्थिता भक्तिभावतः ॥९॥ तस्यां सत्तात्मकं वीर्यं पुरुषेण प्रकाशकम् । निक्षिप्तं सहसा देवि तेन सा गर्भवत्यभूत् ॥१०॥ स गर्भो ववृधे तत्र तेजसा स्वेन संवृतः । महता कालयोगेन पूर्णो जातः प्रतापवान् ॥११॥ समये सुषुवे सा तं पुत्रं तेजोमयं परम् । तस्य नामाऽभवल्लोके महानित्यभिविश्रुतम् ॥१२॥ अंतस्तु यत्स्थितं देवि सर्वांतर्यामि तत्परम् । लोकेषु च महत्तत्वं ज्ञातव्यं तत्समाधिना ॥१३॥ सर्वेषामादिभूतोऽयं महानात्माऽभवत्प्रभुः । ज्येष्ठोऽयं तत्त्वजातीनां हृदि तेषां समास्थितः ॥१४॥ महता च ततः सृष्टं यदहंकाररूपकम् । स एव त्रिविधो जातो भिन्नमूर्तिः प्रतापवान् ॥१५॥ अहं सर्वत्र तिष्ठामि मदाधारमिदं स्मृतम् । तेनाहंकारनामा स सदाहंकरणात् शिवे ॥१६॥ स एव बाह्यभावेन स्थितः सर्वत्र सर्वराट् । इच्छितं महता यद्वै तत् कर्तुं सुसमाहितः ॥१७॥ त्रिविधोऽसौ गुणैस्तत्र तन्निबोध जगन्मयि । सात्त्विको राजसश्चैव तामसः कथ्यते बुधैः ॥१८॥ तेनाहंकरणस्यापि त्रिशक्तित्वं समागतम् । सात्त्विकी ज्ञानशक्तिश्च तया भावः प्रबुध्यते ॥१९॥ राजसी या क्रियाशक्तिस्तया कार्यं प्रवर्तते । तामसी द्रव्यशक्तिर्या देहरूपा प्रकथ्यते ॥२०॥ तत्रादौ तामसी शक्तिः प्रेरिता विश्वयोनिना । निर्ममे शब्दरूपं सा तेनाकाशं विनिर्मितम् ॥२१॥ आकाशेन स्पर्श एवं निर्मितः सर्वसिद्धये । स्पर्शेन निर्मितो वायुर्महाबलयुतः प्रभुः ॥२२॥ वायुना निर्मितं रूपं तेजोरूपेण निर्मितम् । तेजसश्च रसोत्पत्ती रसादापो विनिःसृताः ॥२३॥ अद्भिश्च निर्मितो गंधो गंधाद्भूमिरजायत । तमोगुणमयी सृष्टिरेषा जाता महाद्भुता ॥२४॥ तन्मात्रा भूतसर्गश्च पंचपंचात्मकः स्वराट् । पंचभूतात्मको देहः सर्वत्रैव प्रदृश्यते ॥२५॥ ततो राजसशक्त्या च पंचभूतमयानि वै । इंद्रियाणि प्रसृष्टानि क्रियारूपाणि तानि वै ॥२६॥ पंच ज्ञानेंद्रियाण्याहुर्ज्ञानरूपधराणि च । जिह्वा चक्षुस्त्वचा नासा कर्णश्चैवाऽत्र पंचमः ॥२७॥ कर्मेंद्रियाणि पंचैव हस्तौ पादौ गुदं च वाक् । लिंगं पंचममत्रैव एभिः संजायते क्रिया ॥२८॥ पंच प्राणास्तथा ज्ञेयाः प्राणो व्यानस्त्वपानकः । उदानश्च समानो वै राजसाः पंच वायवः ॥२९॥ सप्तधातुविभागार्थं क्रियारूपा उदाहृताः । एषां क्रियात्मिका सृष्टी राजसी कथिता प्रिये ॥३०॥ सात्त्विकया मायया देवा इंद्रियाणां विनिर्मिताः । दिशो वायुश्च वरुणोऽश्विनौ सूर्यः प्रकीर्तितः ॥३१॥ एता ज्ञानेंद्रियाणां च देवताः परिकीर्तिताः । अग्निर्विष्णुः प्रजापाल इंद्रो मित्रश्च पंचमः ॥३२॥ एताः कर्मेंद्रियाणां वै देवताः परिकीर्तिताः । सात्त्विकी सृष्टिरित्युक्ता दशदेवस्वरूपिणी ॥३३॥

एते तत्त्वस्वरूपाख्या आदिदेवाः प्रकीर्तिताः। यथाविधि तथा जाता ज्ञानहीना बभूविरे ॥३४॥ ज्ञानहीनत्वदोषेण सृष्टिं कर्तुं न च क्षमाः। तेभ्यो ज्ञानप्रदानार्थमुपदेशं प्रचक्रतुः ॥३५॥ प्रकृतिः पुरुषश्चोभौ मंत्रमेकाक्षरं परम्। अनुष्ठानविधायुक्तं ददतुर्गणपस्य तौ ॥३६॥ ते तत्रैव स्थिताः सर्वे तपश्चक्रुर्महद् भृशम्। तेन संतुष्टतां यातो गणेशो गणवल्लभः ॥३७॥ प्रत्यक्षतां ययौ तेषां समीपे संस्थितो महान्। तं दृष्ट्वा हर्षिताः सर्वे देवाः स्तोत्रं प्रचक्रिरे ॥३८॥ तत्त्वान्यूचुः। नमस्ते वक्रतुण्डाय भक्तसंरक्षकाय च। सर्वाधीशाय सर्वाय गणानां पतये नमः ॥३९॥ अव्यक्ताव्यक्तरूपाय सत्यासत्याय ते नमः। समाय विषमायैव विघ्नेशाय नमो नमः ॥४०॥ आत्मनेऽनात्मने तुभ्यं निर्गुणाय गुणात्मने। नामरूपधरायैव द्वाभ्यां हीनाय ते नमः ॥४१॥ अनंतोदरसंस्थाय नानाभोगकराय च। भोगहीनाय सर्वत्र स्वानंदपतये नमः ॥४२॥ मायाधाराय वै तुभ्यं मायाहीनाय ते नमः। मायिनां मोहकाराय सर्वज्ञाय च ते नमः ॥४३॥ सर्वसिद्धिधरायैव सिद्धीनां पतये नमः। सिद्धिहीनाय सिद्धाय सिद्धानां पतये नमः ॥४४॥ जगन्मयाय वै तुभ्यं जगद्धीनाय ते नमः। कर्मणां फलदात्रे च कर्मरूपाय ते नमः ॥४५॥ कर्महीनाय तेऽज्ञानज्ञानदात्रे नमो नमः। ज्ञानिनां ज्ञानकर्त्रे च ज्ञानहीनाय ते नमः ॥४६॥ चतुर्विधधरायैव चतुर्विधमयाय च। चतुर्विधविहीनाय स्वसंवेद्याय ते नमः ॥४७॥ पाशाङ्कुशधरायैव दंताभयधराय च। चतुर्भुजाय वै शूर्पश्रुतये तुंदिलाय च ॥४८॥ महते चैकदंताय महतां च महीयसे। लघवे लघुरूपाय लघूनां लाघवे नमः ॥४९॥ गजवक्त्राय देवाय ब्रह्मणे ब्रह्मरूपिणे। ब्रह्मणस्पतये चैव ब्रह्मदात्रे नमो नमः ॥५०॥ किमस्माभिः स्तुतिः कार्या ह्यपारगुणराशये। नमो नमो गणेशाय त्वं तुष्टो भव सर्वदा ॥५१॥ कृतांजलिपुटाः सर्वे ऋषयश्च स्थिताः पुरः। तान् दृष्ट्वा गणराजस्तु हृष्टः सन् प्रत्युवाच ह ॥५२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते तत्त्वकृतस्तुतिवर्णनं नाम सप्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ श्रीशिव उवाच। शृणु देवि गणेशस्य चरितं पापनाशनम्। भुक्तिमुक्तिप्रदं चैव स्मरणेन सुसिद्धिदम् ॥१॥ गजाननः प्रसन्नात्मा परमात्मा परात्परः। भक्तानंदकरः साक्षादूचिवान् भक्तिभावितः ॥२॥ श्रीगजानन उवाच। भो भोस्तत्त्वानि सर्वाणि वरं ब्रूत हृदीप्सितम्। तपसाऽहं प्रसंतुष्टो भक्त्या स्तोत्रेण भावतः ॥३॥ भवत्कृतमिदं स्तोत्रमतिप्रीतिकरं मम। सर्वसिद्धिप्रदं चैव पठते शृण्वते भवेत् ॥४॥ विद्याकामो लभेद्विद्यां धनकामो धनं लभेत्। स्त्रीकामः स्त्रियमाप्नोति पुत्रकामः सुपुत्रकान् ॥५॥ मुक्तिकामो लभेन्मुक्तिं जयकामो जयं लभेत्। अस्य स्तोत्रस्य पठनात् वांछितं लभते परम् ॥६॥ श्रीशिव उवाच। गणेशवचनं श्रुत्वा भक्तिनम्रात्मकन्धराः। ऋषयस्तं प्रणम्यादावूचुस्ते हृष्टमानसाः ॥७॥ आदिकाय ऊचुः। प्रसन्नो भगवन्नद्य यदि देयो वरो महान्। त्वदीयामचलां भक्तिं देहि नो गणनायक ॥८॥ सृष्टिसामर्थ्यमत्यंतमस्माकं त्वत्प्रसादतः। अस्तु वै भजतां सर्वसिद्धिदाश्च वयं तथा ॥९॥ यद्यत् हृदीप्सितं देव तत्तत् सिध्यतु सर्वदा। बंधहीनत्वमनिशं देहि त्वं विघ्ननाशन ॥१०॥ तत्त्वानां वचनं सर्वे श्रुत्वा गणपतिः स्वयम्। ददौ तेषामभीष्टं स महादेवि महाप्रदः ॥११॥ श्रीगजानन उवाच। दत्ता वरा मया देवा ये भवद्भिर्वृताः पराः। इत्युक्त्वान्तर्दधे ढुंढिः ऋषीणां पश्यतां खलु ॥१२॥ स्वानंदे च गते देवे गणेशे परमात्मनि। खिन्ना इवाऽभवन् देवाः परस्परमुखेक्षणाः ॥१३॥ गणेशवरदानेन ज्ञानं प्राप्य महाद्भुतम्। बुद्धियुक्ता महादेवाः सृष्टिं चक्रुः प्रभावतः ॥१४॥ परस्परप्रवेशं च चक्रुस्त ऋषयस्तदा। तेनैकभावनां प्राप्तास्तस्मादण्डं बभूव वै ॥१५॥ तस्मिन्नंडे पुमानादिरेकः सर्वात्मशक्तिमान्। जातो वै भगवान् साक्षाद् गुणेशो गुणवल्लभः ॥१६॥ महता कालयोगेन देहात्तस्य विनिःसृताः। आपस्तत्र स्थितं ह्यण्डं तत्र वृद्धिं ययौ च सः ॥१७॥ कालेनावयवी जातस्ततः संपूर्णदेहवान्। तस्य तेजःप्रभावेण तदण्डं स्फुटितं महत् ॥१८॥ स एव निःसृतः साक्षादसंख्यातार्कसन्निभः। अपारमहिमा यस्य सर्वादिः सर्वभावनः ॥१९॥ सर्वतो हस्तपादो वै सर्वतो नासिकोदरः। सर्वतोऽक्षिमुखोऽनंतः सर्वतः श्रुतिमान् बभौ ॥२०॥ असंख्यावयवो देवो ह्यसंख्योदारविक्रमः। असंख्यलीलया युक्तः परमात्मस्वभाववान् ॥२१॥ आदिमध्यान्तहीनः स सर्वत्र व्याप्य संस्थितः। महतां च महीयान् यो यस्य पारो न दृश्यते ॥२२॥ अणुभ्योऽणुतरो देवो रोमरन्ध्रेषु यस्य वै। ब्रह्माण्डानि भ्रमन्ति स्म पतगा इव चांबरे ॥२३॥ महाकारणनामा वै तुरीयो देहधारकः। आत्मप्रतीतिरूपं यत्कथ्यतेऽसौ महामुनिः ॥२४॥ गुणानामधिपोऽयं वै गुणेशस्तेन कथ्यते। सर्वात्मा सर्वरूपश्च नाददेहधरः

प्रभुः ॥२५॥ गुणेशेन कृतं कर्म नानाचेष्टात्मकं ततः। तेन नामानि जातानि पश्चात्तस्य महात्मनः ॥२६॥ आपः शरीरसंसृष्टास्तत्र सुप्तोऽयमीश्वरः। नारायण इति प्राप्तं नाम तस्य महात्मनः ॥२७॥ आपो नरप्रसूताश्च तेन नाराः प्रकीर्तिताः। ता एवायतनं तस्य कर्मणा तेन स प्रभुः ॥२८॥ भिन्नं भिन्नं सृजति च त्रिविधं त्रिविधं पृथक्। ब्रह्मेति तेन संप्राप्तं नाम तस्य प्रभावतः ॥२९॥ वेदोपनिषदि प्रोक्तो ब्रह्मलोकः सनातनः। सर्वेभ्यो यः परः श्रेष्ठमेनं विद्धि सुनिश्चितम् ॥३०॥ सर्वेषां यत्नदाता स कालरूपेण वर्तते। चालकस्तेन नामाभून् महादेव इति प्रभोः ॥३१॥ कर्मणामयमाधारो जातः सूर्य इति स्मृतः। मोहको वस्तुजातानामादिशक्तिश्च तेन सः ॥३२॥ इत्यादिनामतां प्राप्तो नानाभावेन कर्मणा। गुणेशस्तु तुरीयात्मा सर्वत्राऽसौ महान् प्रभुः ॥३३॥ कारणानां च सर्वेषां कारणं च न संशयः। महाकारणमेतच्च पुराणेषु प्रपठ्यते ॥३४॥ कर्तुः कर्ता स्वयं साक्षाद्धर्तुर्हर्ता न संशयः। पातुः पाता प्रकाशस्य प्रकाशोऽयं गुणेश्वरः ॥३५॥ त्रिदेहो गुणतश्चायं वामे राजसतां गतः। सात्त्विको मध्यभागे स दक्षिणे तामसो बभौ ॥३६॥ एतादृशो महात्मासावादिदेवो गुणेश्वरः। अज्ञानेनावृतो यस्मात्तेन वै तपसि स्थितः ॥३७॥ सोऽतपत्तप उग्रं तु हृदि ध्यात्वा गजाननम्। बहुकाले व्यतिक्रान्ते प्रसन्नोभूद्गजाननः ॥३८॥ आगतो देवदेवेशो धेनुर्वत्समिवादरात्। बोधयामास तं शीघ्रं गुणेशं भक्तवत्सलः ॥३९॥ श्रीगणेश उवाच। एकाक्षरस्य मंत्रस्य जपेन तपसाऽपि ते। प्रसन्नोऽहं महाबाहो गुणेश वृणु वांछितम् ॥४०॥ इत्येवं बोधितो देवि गणेशेन कृपावता। गुणेश्वरः प्रतुष्टाव भक्तिभावसमन्वितः ॥४१॥ गुणेश उवाच। नमामि देवं गणनाथमीशं सदा सुशान्तं हृदि योगिनां वै। अपारयोगं हठयोगनाथं सुशांतयोगेश्वरमानतोऽस्मि ॥४२॥ अयोगरूपं कथितुं त्वशक्यं निवृत्तिमात्रं ह्यसमाधिसंस्थम्। अभेदभेदात्मकमूलहीनं सुशांतयोगेश्वरमानतोऽस्मि ॥४३॥ सदा समाधिस्थमनंतपारं प्रभुं स्वसंवेद्यमयं विभान्तम्। निजात्मयोगेन च लभ्यमेवं सुशांतयोगेश्वरमानतोऽस्मि ॥४४॥ विदेहयोगेन च सांख्यरूपं जनेन लभ्यं गणराजमीड्यम्। सदा ह्युपाधौ न हितं गणेशं सुशांतयोगेश्वरमानतोऽस्मि ॥४५॥ सुसंस्थितं सर्वविलासयुक्तं हृद्बिम्बबोधात्मकमादिदेवम्। अभेदमात्रं परमार्थरूपं सुशांतयोगेश्वरमानतोऽस्मि ॥४६॥ अनादिमध्यान्तमनंतपारं सुसंवृतं संततमात्मरूपम्। गणेशमाद्यं पुरुषं पुराणं सुशांतयोगेश्वरमानतोऽस्मि ॥४७॥ अनादिरूपं प्रकृतिप्रभेदं सदा सुबिंद्वात्मकमप्रमेयम्। अमायिकं मोहकरं प्रसिद्धं सुशांतयोगेश्वरमानतोऽस्मि ॥४८॥ गुणेषु रूपेण विराजमानमपारम-

व्यक्तमयं गणेशम् । गुणैर्विहीनं गुणचालकं च सुशांतयोगेश्वरमानतोऽस्मि ॥४९॥ समस्वरूपं जगदीशमेकं सुषुप्तिरूपं सकलावभासम् । अनादिमायामयमोहधारं सुशांतयोगेश्वरमानतोऽस्मि ॥५०॥ जगन्मयं सूक्ष्मविभूतिधारं हिरण्मयं स्वप्नगतं गणेशम् । जनस्य विज्ञानकरं पुराणं सुशांतयोगेश्वरमानतोऽस्मि ॥५१॥ स्तुतं सदा देवमुनीन्द्रसिद्धैः स्थितं जगन्मोहमयं प्रसिद्धम् । सदा परं स्थूलविहारयुक्तं सुशांतयोगेश्वरमानतोऽस्मि ॥५२॥ असत्स्वरूपं विविधेष्वभेदं गणेशमायामयशक्तिरूपम् । मनोवचोहीनमहानुभावं सुशांतयोगेश्वरमानतोऽस्मि ॥५३॥ रविस्वरूपं ह्यमृतं पुराणमभेदमेकात्मकमात्मरूपम् । अखंडमानंदघनं गणेशं सुशांतयोगेश्वरमानतोऽस्मि ॥५४॥ समं सदा विष्णुमचिन्त्यभावमभेदभेदादिविवर्जितं च । सदा सुखानंदमयं गणेशं सुशांतयोगेश्वरमानतोऽस्मि ॥५५॥ अचिन्त्यरूपं सकलैर्विहीनं सदाशिवं मोहविहीनमाद्यम् । अपारवेशं स्वसुखावभासं सुशांतयोगेश्वरमानतोऽस्मि ॥५६॥ पदार्थरूपं विविधप्रभेदं विकारयुक्तं परमप्रमेयम् । बोधात्मकं त्वंपदरूपमेव सुशांतयोगेश्वरमानतोऽस्मि ॥५७॥ अखंडमेकात्मकविश्वरूपं विकारहीनं महदप्रमेयम् । गणेशमेकं हृदि तत्पदस्थं सुशांतयोगेश्वरमानतोऽस्मि ॥५८॥ गणेश चैते विविधस्वरूपाः कलावतारा भवतो हि भव्याः । सुशांतमेकं भवदीयरूपं कथं विभाव्यं मनसा न लभ्यम् ॥५९॥ यदा च सर्वात्ममयं वदामि तदा तु सोऽहं प्रकृतिस्वरूपम् । गकाररूपं जगदीशभेदं गकारमेकं शरणं प्रपद्ये ॥६०॥ मनोवचोहीनमथो वदामि ह्ययोगसंयोगमयं णकारम् । निवृत्तिरूपं शरणं सदा वै नमामि तं सर्ववरिष्ठमाद्यम् ॥६१॥ न शक्यमेवक्तुमवक्तुमेवमतो भवन्तं प्रणमामि ढुंढे । गणेश विघ्नेश महानुभाव प्रसीद भो ब्रह्मपते महात्मन् ॥६२॥ जन्म धन्यं धन्यमक्षि विद्या ज्ञानं तपः फलम् । येन दृष्टो गणाधीशः कृतकृत्योऽस्मि सांप्रतम् ॥६३॥ मह्यं यदि वरो देयस्तदा भक्तिं दृढां त्वयि । देहि मे परमेशान यया मोहो विनश्यति ॥६४॥ सृष्टिसर्जनसामर्थ्यं भजतां कामपूरणम् । निर्विघ्नं सर्वकार्येषु देहि विघ्नविनाशन ॥६५॥ गुणेशवचनं श्रुत्वा सुप्रसन्नो गजाननः । मेघगांभीर्यसादृश्यं वचनं त्विदमब्रवीत् ॥६६॥ श्रीगणेश उवाच । भविता मे महाभक्तिः सृष्टीनां रचनास्तथा । नानाविधा भविष्यन्ति निर्विघ्नं सर्वदा भवेत् ॥६७॥ भवद्भ्यः सर्वदातृत्वं भविष्यति तथाऽनघ । महाकार्ये समुत्पन्ने दास्येऽहं दर्शनं च ते ॥६८॥ स्तोत्रं त्वया कृतं यच्च सर्वमान्यं भविष्यति । पठतां शृण्वतां चैव ब्रह्मभूतकरं

महत् ॥६९॥ स्तोत्रं ब्रह्मपतेः साक्षान्नाम्ना वै स्तुतिसारकम् । भविष्यति महाभाग सर्वसिद्धिकरं परम् ॥७०॥ सकामेभ्यो जनेभ्योऽपि कामदं चिंतितप्रदम् । निष्कामेभ्यः स्वभक्तेभ्यो मुक्तिदं प्रभविष्यति ॥७१॥ मम प्रीतिकरं पूर्णं सारं सर्वत्र भाषितम् । त्रिकालपठनादस्य साध्योऽहं नात्र संशयः ॥७२॥ श्रीशिव उवाच । इत्युक्त्वान्तर्हितः साक्षाद्गणेशो भक्तवत्सलः । देवस्यापि वियोगेन गुणेशो विमना ह्यभूत् ॥७३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथम खण्डे वक्रतुण्डचरिते गुणेशवरप्रदानं नामाष्टमोऽध्यायः ॥८॥



॥ श्रीगणेशाय नमः । श्रीशिव उवाच । वरदानप्रभावेण गुणेशो ज्ञानवानभूत् । समर्थो भगवान् साक्षात् स्रष्टुं तत्र मनो दधे ॥१॥ तस्य निःश्वासतो वेदा निःसृता रूपधारिणः । सर्वज्ञानकराः साक्षाद्भास्वंतो गुरवः सताम् ॥२॥ पश्चात्तेन गुणेशेन सम-भूतात्मकं जगत् । सृष्टं सुषुप्तिसंज्ञं च महत्तत्त्वादिभिः समैः ॥३॥ आनंदव्यवहारत्वात् प्रधानमिति कथ्यते । कारण द्वंद्व-भावानां तेन कारणकं स्मृतम् ॥४॥ माया तमःकरी यस्मात्तेन तामसतां गतम् । समानव्यवहारं च प्रधानं मोहदं बभौ ॥५॥ स्वस्यापि जडभावश्च तेन न ज्ञायते सदा । किं कर्तव्यमकर्तव्यमिति तेन ततो महत् ॥६॥ तपः कृतं महोग्रं च दिव्यं वर्ष-सहस्रकम् । तेन प्रत्यक्षतां यातो गणेशो भक्तवत्सलः ॥७॥ स्तुतः प्रपूजितस्तेन कारणेन महायशाः । सामर्थ्यं योगरूपं च ददौ परमभावितः ॥८॥ वेदैश्चापि कृतं घोरं तपः परमदारुणम् । तेषां प्रत्यक्षतां यातो विघ्नेशो विघ्नवारणः ॥९॥ वेदैश्च संस्तुतो देवः स्तोत्रैः स्वस्वसमुद्भवैः । ब्राह्मणस्पत्यसूक्तेन बह्वृचः स्तुतवान् प्रभुम् ॥१०॥ गणेशशांतिकेनैव यजुस्तं स्तुत-वत्तथा । नामाष्टकार्थकृत्स्तोत्रं तेन साम्ना च संस्तुतः ॥११॥ अथर्वशीर्षकं नाम तेनैवाथर्वणास्तुतः । इत्यादि गाणपत्यैश्च स्तोत्रैर्नानाविधैः स्तुतः ॥१२॥ पूजितो मूलमंत्रेण संतुष्टस्तेन विघ्नहा । सर्वेषां गुरुरूपा वै भविष्यथ वरं ददौ ॥१३॥ सर्व-मान्या जगत्पूज्या वेदास्तेन कृतास्तदा । सांगोपांगसमाचारा गुरवस्ते मताः खलु ॥१४॥ पार्वत्युवाच । तमोगुणमयं स्वामिन्

प्रधानं समरूपकम्। वरं प्राप्य गणेशात्तु किं कृतं तेन तद्वद ॥१५॥ मुद्गल उवाच। प्रियोक्तं वचनं श्रुत्वा हृष्टरोमा महेश्वरः। तां प्रत्युवाच भगवान् स्मयन्निव सुशांतधीः ॥१६॥ श्रीशिव उवाच। शृणु प्रिये प्रवक्ष्यामि गणेशप्रीतिवर्धने। विभूतिं तस्य देवस्य त्वं वै भाग्यवती शिवे ॥१७॥ गणेशवरदानेन सृष्टं तेनापि सूक्ष्मकम्। हिरण्यगर्भमांतर्यं सात्त्विकं स्वप्नरूपकम् ॥१८॥ महदादिमहातत्त्वैः सूक्ष्मभूतैश्च संवृतम्। द्वंद्वविज्ञानमूलं तदंतरिक्षस्थितं बभौ ॥१९॥ बोधहीनेन तेनैव तपस्तप्तं सुदुष्करम्। तेन तुष्टो गणेशानो वांछितं प्रददौ वरम् ॥२०॥ वरदानप्रभावेण नानासामर्थ्यवानभूत्। हिरण्यगर्भो भगवान् स्वप्नमायाधरः प्रभुः ॥२१॥ तेन स्थूलस्वरूपं यत्सृष्टं राजससंज्ञकम्। जाग्रद्भोगकरं पूर्णं तत्त्वैश्च स्थूलरूपिभिः ॥२२॥ ज्ञानहीनेन तेनाथ तपस्तप्तं सुदारुणम्। तपसा चैव संतुष्टो गणेशः करुणानिधिः ॥२३॥ प्रत्यक्षतां ययौ तस्य जाग्रदन्नमयस्य च। तेनापि पूजितो देवः स्तुतस्तस्मै वरं ददौ ॥२४॥ वरदानप्रभावेण नानासामर्थ्यवानभूत्। ईश्वरोऽन्नमयश्चामावेकोऽनेकमकल्पयत् ॥२५॥ जाग्रत्स्वप्नसुषुप्त्याख्यत्र्यवस्थाप्रचुराणि च। भिन्नभिन्नानि जातानि कोटिशः कोटिशः खलु ॥२६॥ गुणेशरोमकूपेभ्यो निःसृतानि महान्ति च। अंडानि भिन्नभिन्नानि सर्वतः संस्थितानि वै ॥२७॥ व्याप्यरूपाणि चांडानि व्यापकश्च गुणेश्वरः। तयोरभेदभाव सा प्रकृतिर्ब्रह्मबिंदुकम् ॥२८॥ जाग्रता सृष्टमाकाशं ब्रह्म सर्वप्रकाशम्। शब्दमात्रमयं भूतमादिरूपं सनातनम् ॥२९॥ आकाशेन च संसृष्टो वायुः स्पर्शगुणात्मवान्। वायुना रूपतन्मात्रं तेजः सृष्टं प्रकाशवत् ॥३०॥ तेजसा रससंयुक्ता आपः सृष्टाः प्रसारिणा। अद्भिर्गन्धगुणा पृथ्वी सृष्टा धारणधर्मिका ॥३१॥ तत्रैकैकप्रवेशेन पंचीकरणभागतः। पृथ्वी पंचगुणा जाता चतुर्भूतप्रवेशनात् ॥३२॥ आपश्चतुर्गुणा जातास्त्रयाणां संप्रवेशनात्। तेजस्त्रिगुणतां प्राप्तं भूतयोश्च प्रवेशनात् ॥३३॥ वायुर्द्विगुणवान् जात आकाशस्य प्रवेशनात्। आकाशमेकगुणभृद्भूतानां ब्रह्मसंज्ञितम् ॥३४॥ पंच भूतानि जातानि व्यवस्थासंयुतानि च। अष्टधा प्रकृतिः प्रोक्ता कोशरूपा सुशोभना ॥३५॥ तत्र कोशस्वरूपेण गुणेशो विविनो यतः। तेन सामर्थ्यसाप्राप्ता प्रकृतिश्चाष्टरूपिणी ॥३६॥ अष्टावरणसंयुक्तमण्डं सृष्टं स्वभावतः। तत्रैव पुरुषो जज्ञे विराट् स भगवान् शिवे ॥३७॥ पंचाशत्कोटिविस्तारः पृथ्व्याः प्रोक्तो मया च ते। आपो दशाधिकास्तस्यास्तेजस्ताभ्यो दशाधिकम् ॥३८॥ तस्माद्दशाधिको वायुस्तस्मात्खं वै दशाधिकम्। तस्माद्दशाधिकं जाग्रदभिमानं प्रकथ्यते ॥३९॥ तस्माद्दशाधिकं स्वाप्नं महत्तत्त्वमिति स्मृतम्। द्वितीयं नाम तस्यापि

कथ्यते मुनिभिः सदा ॥४०॥ तस्माद्दशगुणा माया ज्ञेया सौषुप्तिकाऽधिका। गुणेशः पुरुषो ज्ञेयोऽनंतोऽपारश्चतुर्थकः ॥४१॥ विराडावरणं कृत्वा स्थिता पृथ्वी सनातना। अद्भिः समावृता पृथ्वी तेजसापः समावृताः ॥४२॥ वायुना चावृतं तेजः खेन वायुः समावृतः। अहंकारेण संवृत्तमाकाशं देवि सर्वतः ॥४३॥ अहंकारश्च महता संवृतो राजसः स्वयम्। मायया च महत्तत्त्वं संवृतं स्वप्नसंज्ञितम् ॥४४॥ मायावरणमान्त्यं च ज्ञातव्यं विबुधैः परम्। अष्टावरणसंयुक्तमण्डं ते कथितं मया ॥४५॥ अण्डान्येतादृशान्येवासंख्यातानि प्रिये बभुः। तिर्यगूर्ध्वमधस्तद्वद् गुणेशेन धृतानि च ॥४६॥

ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते अष्टधा प्रकृतिवर्णनं नाम नवमोऽध्यायः ॥



॥श्रीगणेशाय नमः॥ पार्वत्युवाच। श्रोतुमिच्छामि सर्वेश विराजश्च स्वरूपकम्। कीदृशोऽयं महाभाग तन्मे कथय शंकर ॥१॥ शिव उवाच। पंचकोटिप्रविस्तारे योजनानां समंततः। तस्य देहे च भूतानि स्थावराणि चराणि च ॥२॥ संस्थितानि च सर्वाणि भुवनानि चतुर्दश। तत्तेऽहं संप्रवक्ष्यामि समाहितमनाः शृणु ॥३॥ पादयोस्तस्य पातालं गुल्फे तस्य रसातलम्। पाष्ण्योर्महातलं तस्य जंघयोश्च तलातलम् ॥४॥ सुतलं जानुभागेऽस्य वितलं तूरुमंडले। अतलं कटिसंधौ च कट्यां भूलोकसंस्थितिः ॥५॥ नाभौ तस्य भुवर्लोकः स्वर्लोकश्च हृदि स्थितः। महर्लोकश्च कंठे वै जनो लोको मुखे स्थितः ॥६॥ तपो लोको ललाटे च सत्यलोकः शिरःस्थितः। एतावद्देहरूपो वै विराट् स पुरुषो महान् ॥७॥ सहस्र-शीर्षशोभाढ्यः सहस्राननपादवान्। सहस्रहस्तकर्णः स सहस्रोदरवान् प्रभुः ॥८॥ सर्वत्र व्याप्यभावेन स्थितोऽसौ परमेश्वरः। मर्त्येष्वमृतभोक्ता च स्वप्रकाशेन वर्तते ॥९॥ तस्यांतरे स्थितं रूपं नाम्ना हैरण्यगर्भकम्। एतादृशं तथा स्वप्नं विश्वरूपं विराजति ॥१०॥ बहिर्वैश्वानरश्चायं जाग्रद्वैराटसंज्ञितः। हिरण्यगर्भकोशस्थः स्वप्नवैराटधारकः ॥११॥ उभयोः समभावेन बाह्यांतरसरूपतः। ईश्वरो नाम वैराटः सुषुप्तेर्धारको बभौ ॥१२॥ त्रिविधं यद्विराड् रूपं कथितं ते तु पार्वति।

तुरीयमात्मरूपं यत् त्रिविधेषु प्रवर्तते ॥१३॥ अथ शृणु विभिन्नानामुत्पत्तिं त्वल्पभावनाम्। नानाभावधरां तां वै चराचरमयीं पराम् ॥१४॥ विराडज्ञानभावनावृतस्तेन तपः कृतम्। एकाक्षरविधानेन गणेशं संदधौ हृदि ॥१५॥ सोऽतपत्तप उग्रं च दिव्यवर्षसहस्रकम्। तपसा ध्यानभावेन प्रत्यक्षो गणपोऽभवत् ॥१६॥ बोधयामास तं देवो वरं ब्रूहीति सोऽब्रवीत्। गणेशं सहसा दृष्ट्वा पादयोः प्रणनाम तम् ॥१७॥ धन्यं जन्म तपो मेऽद्य धन्यं ज्ञानं वपुश्च दृक्। धन्या मे संपदो देव त्वदंघ्रियुगदर्शनात् ॥१८॥ इत्युक्त्वा स्तोतुमारेभे गणेशं ब्रह्मनायकम्। वाचा संस्पष्टया हृष्टो भगवान् विश्वधारकः ॥१९॥ विराडुवाच। नमस्ते गणनाथाय गणानां पतये नमः। विघ्नेशाय परेशाय विघ्नहर्त्रे नमो नमः ॥२०॥ सिद्धिबुद्धिपते तुभ्यं नानासिद्धिप्रदायिने। नानाज्ञानप्रदात्रे च ब्रह्मणे ब्रह्मरूपिणे ॥२१॥ मनोवागतिभूताय योगिनां हृदिवासिने। नानावतारकर्त्रे च भक्तसंरक्षकाय ते ॥२२॥ नमो नमो महेशाय शिवाय शिवदायिने। सर्वत्र समभावाय विष्णवे प्रभविष्णवे ॥२३॥ तेजोराशिपते तुभ्यं भानवे ते नमो नमः। नानामायाप्रभेदात्मशक्तये शक्तिरूपिणे ॥२४॥ स्रष्ट्रे पात्रे च संहर्त्रे चराचरमयाय च। सर्वेभ्यो ज्ञानदात्रे च निर्मलाय नमो नमः ॥२५॥ सर्वेभ्यो भिन्नरूपाय मायाहीनाय ते नमः। मायिभ्यो मोहदात्रे च मायाधाराय ते नमः ॥२६॥ गुणान्तं न ययुर्यस्य नानाब्रह्माणि ते नमः। अतो मयि गणेशान कृपयाऽनुग्रहं कुरु ॥२७॥ इति स्तुत्वा गणेशानं मौनवानभवत्स्वयम्। वैराटः पुरुषस्तत्र कृतांजलिपुटः स्थितः ॥२८॥ भगवांस्तं गणेशान ऊचिवान् भक्तिभावितः। वरं वरय दास्यामि शंकां मा कुरु विश्वप ॥२९॥ इदं त्वया कृतं स्तोत्रं मम प्रीतिकरं भवेत। यः पठेद्भावपूर्वं तु सिद्धिस्तस्य भविष्यति ॥३०॥ यं यं चिन्तयते कामं तं तं दास्यामि वांछितम्। भुक्तिमुक्तिप्रदं भावि पठनाच्छ्रवणादपि ॥३१॥ इत्युक्तवन्तं गणनाथमाद्यं वैराटदेवः प्रणनाम तं वै। भावेन युक्तो वचनं जगाद हृष्टः स्वयं विघ्नहरं प्रभुं च ॥३२॥ वैराट उवाच। यदि तुष्टोऽसि देवेश यदि देयो वरो महान्। तव भक्तिं दृढां देहि यया मोहो विनश्यति ॥३३॥ अतुलं सर्जनं सृष्टेः पालनं हरणं तथा। करोमि त्वत्प्रसादेन भक्तेभ्यो भुक्तिमुक्तिद ॥३४॥ ऐश्वर्यमतुलं देहि गजानन महाप्रभो। यं यमिच्छामि तत्सर्वं सिध्यतु त्वत्प्रसादतः ॥३५॥ शिव उवाच। तथेति वचनं चोक्त्वा गणेशोंतरधीयत। विराट् हर्षेण संयुक्तो गणेशं हृद्यभावयत् ॥३६॥ एवं देवि च सर्वत्र नानाण्डेषु स्थितैः परैः। वैराटैस्तैः कृतं पूर्णं गणेशतप उत्तमम् ॥३७॥ ततः सर्वे महात्मानः स्वस्वकर्मणि संस्थिताः। निर्विघ्ना वरदानेन

भगवंतः सनातनाः ॥३८॥ अनंतानि प्रजानीहि ब्रह्माण्डानि न शक्यते । वक्तुं केनापि हेरंबं विना तानि यथायथम् ॥३९॥ सततं गणनाथोऽपि न संख्यातुं प्रवर्तते । गणना शब्दशास्त्रेषु यावती ह्यधिकं ततः ॥४०॥ अतः केनापि संख्यानं न कृतं वेदवादिना । अनंतानि महाण्डानि ज्ञातव्यानि जगन्मयि ॥४१॥ एवं प्रभावयुक्तोऽसौ हृदये मे प्रवर्तते । गणेशो ध्यानलोभी च भक्तेशो भक्तवत्सलः ॥४२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते नानाब्रह्माण्डवर्णनं नाम दशमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ पार्वत्युवाच । भगवन् देवदेवेश कृपां कृत्वा वदस्व मे । वैराटेन कथं सृष्टं जगत्स्थावरजंगमम् ॥१॥ अन्यच्च ब्रूहि मे नाथ ध्यानमार्गं पुरातनम् । येन साक्षात्करिष्यामि गणेशं नाऽत्र संशयः ॥२॥ मुद्गल उवाच । इति पृष्टो महादेव्या महादेवः प्रहृष्टवान् । कथां परमपुण्यां च कथयामास तां शृणु ॥३॥ दक्ष उवाच । गणेशस्य कथां श्रुत्वा हर्षश्चेतसि जायते । कथयस्व महाभाग शिवेन कथितं तु यत् ॥४॥ मुद्गल उवाच । धन्योऽसि दक्ष लोकेषु येन सादरता च ते । गणेशेऽमृतधारायां कथायां नाऽत्र संशयः ॥५॥ प्रहृष्टां गिरिजां दृष्ट्वा शिवो वचनमब्रवीत् । धन्या धन्या महाभागे शृणु सादरमादितः ॥६॥ शिव उवाच । गणेशं मनसा ध्यात्वा वैराटः स्रष्टुमारभत् । तस्य नाभेः समुत्पन्नो ब्रह्मा लोकपितामहः ॥७॥ मुखाद्विष्णुर्जगत्पाता नेत्राच्चाऽहं हरोऽभवम् । सृष्टिस्थितिलयाधारास्त्रिरूपगुणधारकाः ॥८॥ वामांगाच्छक्तिरुत्पन्ना त्वं वै पार्वति मोहिनी । दक्षिणांगाद्रविः साक्षात्कर्माधारः समाभवत् ॥९॥ पंच देवाः समुत्पन्ना भिन्ना जाताः स्वभावतः । न विदुः किंचिदात्मानं वैराटं चापि शोभने ॥१०॥ अंधे तमसि सर्वत्र बभ्रमुर्बहुकालतः । न किंचित्प्रापुरायासात् स्थिताः परमदुःखिताः ॥११॥ किं कर्तव्यं क्व गन्तव्यमज्ञानेनावृता भृशम् । कस्माद्वयं समुत्पन्ना न जानीमो महाप्रभुम् ॥१२॥ अथ चिंतयतां तेषां बुद्धिर्जाता सुनिश्चिता । तपः कर्तुं समारब्धं यस्मै कस्मै नमोस्त्विति ॥१३॥ सर्वेषां मूलभूतं यद्यादृशं

ताहशं खलु। स्वधीस्थं तत्समाचिंत्य तपस्तप्तं सुदारुणम् ॥१४॥ तपसा गणनाथस्तु प्रसन्नोंऽतरमाश्रितः। तत्र दृष्टिः समुत्पन्ना तेषां वै भावितात्मनाम् ॥१५॥ हृदये बीजरूपं यत्स्फुरत्तद् दृष्टमद्भुतम्। एकाक्षरं महामंत्रं प्राप्य तं हर्षमाययुः ॥१६॥ तं मंत्रं जपमानैस्तैस्तदारभ्य जगन्मयि। तेन मंत्रप्रभावेण ज्ञानं प्राप्तं सुनिर्मलम् ॥१७॥ दिव्यवर्षसहस्रेण प्रत्यक्षः समजायत। गणेशो भक्तिभावेन पुरस्तेषां समुत्थितः ॥१८॥ अनंतकोटिसूर्यौजाः शुंडादंडविराजितः। चतुर्बाहुधरो लंबोदरः साक्षात् विभूषितः ॥१९॥ भूषणैरायुधैश्चैव सिद्धिबुद्धिसमन्वितः। भक्तानंदकरः श्रीमानाखुवाहो महाद्युतिः ॥२०॥ तं दृष्ट्वा भयभीतास्ते देवाः शंभुपुरोगमाः। किमिदं तेज आयाति प्रलयाग्निसमं महत् ॥२१॥ अस्मान् धक्ष्यति किं देवः विघ्नेश करुणानिधे। तव भक्ता वयं स्वामिन् कथं विघ्नेन भाविताः ॥२२॥ इति तेषां वचः श्रुत्वा त्वभवत्सौम्यरूपवान्। तं दृष्ट्वा हर्षिताः सर्वे प्रणेमुर्भावपूर्वकम् ॥२३॥ गणेशदर्शनेनैव स्फूर्तिः प्राप्ता महाद्भुता। तया सर्वे यथातथ्यं ज्ञातं तैः पंचभिः पुरः ॥२४॥ ततस्तं तुष्टुवुः सर्वे भक्तिनम्रात्मकंधराः। हृष्टरोमाण एवं ते स्रवदश्रुजलाविलाः ॥२५॥ पंचदेवा ऊचुः ॥

**नमस्ते विघ्नराजाय भक्तानां विघ्नहारिणे। विघ्नकर्त्रे ह्यभक्तानां गणेशाय नमो नमः ॥२६॥ हेरंबाय नमस्तुभ्यं ढुंढिराजाय** ते नमः। विनायकाय देवाय ब्रह्मणां नायकाय च ॥२७॥ लंबोदराय सिद्धेश गजाननधराय च। शूर्पकर्णाय गूढाय चतुर्हस्त नमोऽस्तु ते ॥२८॥ लंबोष्ठायैकदंताय सर्वेशाय गणाधिप। अनंतमहिमाधार धरणीधर ते नमः ॥२९॥ नमो मायामयायैव मायाहीनाय ते नमः। मोहदाय नमस्तुभ्यं मोहहंत्रे नमो नमः ॥३०॥ पंचभूतमयायैव पंचभूतधराय च। इंद्रियाणां चाधिपायेंद्रियज्ञानप्रकारिणे ॥३१॥ अध्यात्मनेऽधिभूतायाधिदैवाय च ते नमः। अन्नायान्नपते तुभ्यमन्नान्नाय नमो नमः ॥३२॥ प्राणाय प्राणनाथाय प्राणानां प्राणरूपिणे। चित्ताय चित्तहीनाय चित्तेभ्यश्चित्तदायिने ॥३३॥ विज्ञानाय च विज्ञानपतये द्वंद्वधारिणे। विज्ञानेभ्यः स्वविज्ञानदायिने ते नमो नमः ॥३४॥ आनंदाय नमस्तुभ्यमानंदपतये नमः। आनंदानंददात्रे च कारणाय नमो नमः ॥३५॥ चैतन्याय च यत्नाय चेतनाधारिणे नमः। चैतन्येभ्यः स्वचैतन्यदायिने नादरूपिणे ॥३६॥ बिंदुमात्राय बिंदूनां पतये प्राकृताय च। भेदाभेदमयायैव ज्योतीरूपाय ते नमः ॥३७॥ सोऽहंमात्राय शून्याय शून्याधाराय देहिने। शून्यानां शून्यरूपाय पुरुषाय नमो नमः ॥३८॥ ज्ञानाय बोधनाथाय बोधानां बोधकारिणे। मनोवाणीविहीनाय सर्वात्मक नमो नमः ॥३९॥ विदेहाय नमस्तुभ्यं विदेहाधारकाय च। विदेहानां विदेहाय सांख्यरूपाय

ते नमः ॥४०॥ नानाभेदधरायैव चैकानेकादिमूर्तये। असत्स्वानंदरूपाय शक्तिरूपाय ते नमः ॥४१॥ अमृताय सदाखंड-भेदाभेदविवर्जित। सदात्मरूपिणे सूर्यरूपाधाराय ते नमः ॥४२॥ सत्यासत्यविहीनाय समस्वानंदमूर्तये। आनंदानंद-कंदाय विष्णवे ते नमो नमः ॥४३॥ अव्यक्ताय परेशाय नेतिनेतिमयाय च। शिवाय शाश्वतायैव मोहहीनाय ते नमः ॥४४॥ संयोगेन च सर्वत्र समाधौ रूपधारिणे। स्वानंदाय नमस्तुभ्यं मौनभावप्रदायिने ॥४५॥ अयोगाय नमस्तुभ्यं निरालंबस्वरूपिणे। मायाहीनाय देवाय नमस्ते ह्यसमाधये ॥४६॥ शांतिदाय नमस्तुभ्यं पूर्णशांतिप्रदाय ते। योगानां पतये चैव योगरूपाय ते नमः ॥४७॥ गणेशाय परेशाय ह्यपारगुणकीर्तये। योगशांतिप्रदात्रे च महायोगाय ते नमः ॥४८॥ गुणांतं न ययुर्यस्य वेदाद्या वेदकारकाः। स कस्य स्तवनीयः स्याद्यथामति तथा स्तुतः ॥४९॥ तेन वै भगवान् साक्षाचिंता-मणिगजाननः। प्रसन्नो भवतु त्राताऽस्माकं त्वं परमा गतिः ॥५०॥ इत्येवमुक्त्वा देवेशास्तूष्णीं भूतास्तथा शिवे। गणेशोऽपि प्रसन्नात्मा हृष्टः सन् प्रत्युवाच तान् ॥५१॥ श्रीगणेश उवाच। पंचदेवा महाभागाः प्रसन्नो भवतां स्तवैः। तपसा च तथा भक्त्या वांछितं ब्रूत वै वरम् ॥५२॥ भवत्कृतमिदं स्तोत्रं परमाल्हादवर्धनम्। मम प्रीतिकरं भक्त्या सर्वदं प्रभविष्यति ॥५३॥ यः पठेद्भावपूर्वं स धर्मकामार्थमोक्षभाक्। पुत्रपौत्रयुतः श्रीमानंते स्वानंदमाप्नुयात् ॥५४॥ सप्तवारं पठेन्नित्यमेकविंशतिवासरम्। कारागृहगतो वाऽपि मुच्यते बंधनात् स्वयम् ॥५५॥ एककालं द्विकालं वा त्रिकाल-मपि यः पठेत्। स वै देवादिकैर्वन्द्यो भविष्यति न संशयः ॥५६॥ मारणोच्चाटनादिभ्य एकविंशतिवारतः। तावद्दिनानि पाठेन तस्य नैव भयं भवेत् ॥५७॥ धनधान्यादिकं सर्वमारोग्यं पशुवर्धनम्। यं यं चिंतयते कामं तं तं प्राप्नोति निश्चि-तम् ॥५८॥ शिव उवाच ॥ गणेशवचनं श्रुत्वा हृष्टा विष्णवादयः सुराः। प्रणिपत्य गणाधीशं कृतांजलिपुटा जगुः ॥५९॥ पंचदेवा ऊचुः। सनाथा हि वयं जाताः सर्वे त्वय्यागते प्रभो। वरं देहि गणाधीश तव भक्तिं दृढां तथा ॥६०॥ तेन माया न बाधेत नरान् देवानपि प्रभो। किमस्माभिः प्रकर्तव्यं तदाज्ञापय सर्वदा ॥६१॥ सामर्थ्यं विविधं देहि भजतां कामपूरणम्। स्थानं सदानंदनाम देहि नाथ नमोऽस्तु ते ॥६२॥ गणेश उवाच ॥ चतुर्मुख महाबाहो रजोगुणसमुद्भव। सृष्टिकर्ता भव त्वं वै ब्रह्मा नाम्ना महाद्युते ॥६३॥ सत्यलोकनिवासी तु हंसवाहनवान् भव। वेदादिज्ञानयुक्तश्च सर्वेषां त्वं पितामहः ॥६४॥ चतुर्भुजोऽसि देवेश त्वं वै सत्त्वसमुद्भवः। पालकः सर्वलोकानां विष्णुनामा भविष्यसि ॥६५॥ वैकुंठे वसतिस्ते स्यात्

वाहनं गरुडस्तव । नानावतारवांश्चापि भविष्यसि महाबलः ॥६६॥ पंचवक्त्र महातेजस्तमोगुणसमुद्भव । संहारकारको नित्यं हरनामा भविष्यसि ॥६७॥ कैलासे वसतिस्तेऽस्तु वाहनं वृषभस्तथा। तृतीयेन स्वनेत्रेण सर्वं भस्मीकरिष्यसि ॥६८॥ सहस्रकिरण त्वं वै सूर्यनामा भविष्यसि । कर्मणां चालकत्वात् षड्ऋतुधर्मप्रकाशकः ॥६९॥ त्रिगुणानामहंभावात्त्वं जातोऽसि प्रकाशकः । रथोश्वालंकृतश्चापि वाहनं ते भविष्यति ॥७०॥ सौरलोक निवासश्च ग्रहराजो भविष्यसि । वृष्टिमूलं त्वमेऽवासि तेजोराशिः प्रतापवान् ॥७१॥ चतुर्भुजे महाशक्ते त्वं जाताऽसि त्रिदेहतः । नानाविषयभोगार्थं सदेहा मोहकारिणी ॥७२॥ शक्तिनाम्नी महामाया भविष्यसि न संशयः। द्विधा मोहप्रदात्री त्वं भुक्तिमुक्तिभ्रमात्मिका ॥७३॥ सिंहवाहनगा नित्यं शक्तिलोकनिवासिनी। नानाभोगविमोहेन जगत्त्वं मोहयिष्यसि ॥७४॥ महाकार्ये समुत्पन्ने प्रत्यक्षोऽहं भवामि वै। मत्तुल्याः सर्वभावेन कृता देवा न संशयः ॥७५॥ आयुधं भूषणं श्रेष्ठं नानासामर्थ्यमद्भुतम्। संकल्पसिद्धतां चैव ददौ तेभ्यो गणाधिपः ॥७६॥ शिव उवाच। इति दत्त्वा वरान् देवो गणेशोऽन्तर्दधे स्वयम् । तेऽपि हृष्टा निजात्मानं कृतकृत्यं च मेनिरे ॥७७॥ भजतां भक्तिभावेन कामपूराः कृता वयम् । परमेश्वरतां प्राप्ताः प्रसादाद्गणपस्य च ॥७८॥

ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते पंचदेववरप्रदानं नामैकादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । सूत सूत महाप्राज्ञ परमानंददायक । कथामम्मृतरूपां च कथयस्व महामुने ॥१॥ वयं प्रसन्नतां याताः कृतकृत्या यथा तथा । सुकथामृतपानेन स्वानंदेन परिप्लुताः ॥२॥ कथयस्व कथां दिव्यां पंचदेवैश्च किं कृतम् । विस्तारेण यथान्यायं येन मुक्ता भवाम च ॥३॥ श्रुत्वा तेषां मुनीनां च वचनं भक्तिभाविनम् । हृष्टः सूतः पुनः प्राह कथां पापप्रणाशिनीम ॥४॥ सूत उवाच । एवमेव स दक्षेण पृष्टो योगीश्वरो महान्। मुद्गलस्तं यथोवाच तथा वच्मि महामुने ॥५॥ मुद्गल उवाच । शृणु दक्ष महाभाग पार्वत्या शिवसन्निधौ । यत्पृष्टं यदुक्तं सर्वं कथयामि सविस्तरम् ॥६॥

पार्वत्युवाच । भगवन् देवदेवेश तारिताऽहं त्वया प्रभो । सुकथामृतपानेन कृतकृत्याऽस्मि सांप्रतम् ॥७॥ पंच देवाः समर्थाश्च प्राभवन् वरदानतः । किं चक्रुस्ते महात्मानः कथयस्व विधानतः ॥८॥ गणेशभक्तियुक्तं चेच्चरितं कथयस्व मे । अथवा गाणपत्यानां चरितं ब्रह्मदायकम् ॥९॥ व्यर्थसंलपनेनायुर्नाशः कार्यो न शोभनैः । धन्यास्ते साधवो लोका गणराड्भक्तिभाविताः ॥१०॥ मुद्गल उवाच । प्रियाया वचनं श्रुत्वाऽतिहृष्टः स महेश्वरः । उवाच स्मयमानश्चालिंग्य देवीं महायशाः ॥११॥ शिव उवाच । धन्याऽसि पार्वति त्वं च सार्थकं जन्म ते परम् । भक्त्या धृतो गणेशोऽयं हृदि तेन वरानने ॥१२॥ गणेशभक्तियुक्ता ये नरास्ते ब्रह्मरूपिणः । दर्शनान्मुक्तिदातारः सर्वेभ्यो नात्र संशयः ॥१३॥ गणेशं यः परित्यज्य सिद्धिमिच्छति शाश्वतीम् । स मूढात्मा तु विज्ञेयो नारकी नात्र संशयः ॥१४॥ अन्यदेवस्य ये भक्ता गणेशं नार्चयंति चेत् । तेषां न भविता सिद्धिर्नरकेषु पतंति ते ॥१५॥ सुधां संत्यज्य रूक्षान्नं सेवते दुर्मतिर्यथा । गणेशानं तथा त्यक्त्वाऽन्यस्य देवस्य सेवकः ॥१६॥ अस्माकं जनको माता सर्वेषां नात्र संशयः । ज्येष्ठराज इति ख्यातस्तेनादौ पूज्यकोऽभवत् ॥१७॥ त्यक्त्वा गणेशं मूढात्मा देवादीनपि पूजयेत् । गणेशोल्लंघनात्तं वै क्षिपामो नरके वयम् ॥१८॥ गणेशनिंदको जंतुरस्माकं भक्तिकारकः । नारकी भविता सद्योस्मद्गुरुद्वेषकारकः ॥१९॥ अतस्त्वं धन्यरूपाऽसि सर्वेषां मूलबीजकम् । भजसि त्वं गणेशानं भक्तिभावसमन्विता ॥२०॥ सत्यं देवि त्वया प्रोक्तं गाणेशानां प्रकीर्तनम् । गणेशस्य च वा कार्ये तेन जन्म कृतार्थकम् ॥२१॥ गणेशं प्रार्थयामीति शृणु चिंतामणे प्रभो । चित्ते निवासकारिन् वै गजानन महोदर ॥२२॥ गाणपत्या महाभागास्तेषां संगः सदास्तु मे । तेषां मध्ये तथा वासं देहि त्वं द्विरदानन ॥२३॥ अग्रे मे गाणपत्यास्ते पृष्ठे वामे च दक्षिणे । सर्वत्र सह तैर्वासो गाणपत्यैर्भवत्विति ॥२४॥ येषां मुखारविंदेषु गणेशचरितं बभौ । भवबंधहरं पूर्णमिहाऽमुत्र सुखप्रदम् ॥२५॥ चरितं गाणपत्यानां गणराट्सेवनात्मकम् । अहर्निशं प्रभवति चेष्टदं ढुंढिभक्तिदम् ॥२६॥ तारितोऽहं त्वया देवि कथां पृच्छसि मां पुनः । गणेशभक्तिपूतां वा भक्तानां तस्य भावतः ॥२७॥ प्रष्टुः श्रोतुश्च वक्तुर्या ब्रह्मभूयपदप्रदा । इह तां तु वदामि त्वां गाणेशीं सुखदायिनीम् ॥२८॥ पंचदेवास्तथा जाता यथा गणपतिः स्वयम् । वरदः कथयामास ईश्वराज्ञानभाविताः ॥२९॥ पंचलोकाः समुद्भूता वरदानप्रभावतः । निराधारा अखंडाश्चावसंस्तेषु विभागशः ॥३०॥ कैलासे शंकरश्चैव वैकुंठे विष्णुरेव च । सौरलोके रविः शक्तिलोके चैव जगन्मयि ॥३१॥ सत्यलोके

तथा ब्रह्मा वसति स्म मुदान्वितः। ऐश्वर्यभोगभोक्तारः परस्परहिते रताः ॥३२॥ सत्यसंकल्पवंतस्त ईश्वरा ब्रह्ममानिनः। बहुकालेन तेषां वै मत्सरः समजायत ॥३३॥ अहं श्रेष्ठतमश्चैव सर्वेषां प्रभुरीश्वरः। हृदये मन्यमानास्ते विवादं चक्रुरंजसा ॥३४॥ आपश्च तत्र संसृष्टा विष्णुना स्वशरीरतः। तासु संसुप्तवान् देवो बहुकालं यथासुखम् ॥३५॥ जले शैवालवल्ली च समुत्पन्ना क्रमेण वै। बहुकालेन तन्मध्ये पृथ्वी जाता स्वभावतः ॥३६॥ लीलार्थे विष्णुना सृष्टं नाभ्यां कमलमुज्ज्वलम्। शतयोजनविस्तारं कर्णिकापत्रशोभितम् ॥३७॥ सुवासबहुलं वीक्ष्य तेन रेमे जनार्दनः। एककाले जगाम स्म तत्र ब्रह्मा पितामहः ॥३८॥ कमलं तेन संदृष्टं विस्मितो हृदये भृशम्। केन सृष्टमिदं दिव्यं पद्मं परमशोभनम् ॥३९॥ तत्र नारायणं दृष्ट्वा प्रसुप्तं स महार्णवे। प्रभुमुत्थापयामास ब्रह्मा तं स्नेहभावनः ॥४०॥ ब्रह्मणो वचनेनैव समुत्तस्थौ जनार्दनः। ब्रह्माणं मानयामास स्वागतं भो पितामह ॥४१॥ तत्र ब्रह्मा महाविष्णुं प्रत्युवाच समत्सरः। किं मोहार्थं त्वया सृष्टं पद्मं परमशोभनम् ॥४२॥ अहं ब्रह्मा जगत्स्रष्टा सर्वादिः सर्वभावनः। मया प्रक्रियते सृष्टिः पश्चात्त्वं पालयिष्यसि ॥४३॥ सृजामि यदि नो तां चेत्किं पासि त्वं जनार्दन। मदधीनश्च सर्वेषां भावस्तेनाहमीश्वरः ॥४४॥ ब्रह्मणो वचनं श्रुत्वा विस्मितः स जनार्दनः। उवाच मधुरं वाक्यं ब्रह्माणं सान्त्वयन्निव ॥४५॥ विष्णुरुवाच। सृष्टवान् कमलं नाहं मोहितुं त्वां पितामह। लीलार्थं पद्ममेवेदं पश्य त्वं नात्र संशयः ॥४६॥ समत्सर-मिदं वाक्यं त्वयोक्तं यत पितामह। अहं त्वां पालयामीदं तेन स्रष्टा भवान् किल ॥४७॥ नान्यो पातास्ति मत्तस्ते सर्वेषां पातृभावनः। अहं स्थितो महाविष्णुर्मत्समो नैव विद्यते ॥४८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुण्डचरिते ब्रह्मविष्णुविवादो नाम द्वादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शिव उवाच ॥ शृणु देवि कथां पुण्यां गणेशप्रीतिवर्धिनीम्। यज्ज्ञातमादिकाले वै तत्तेऽहं कथयामि च ॥१॥ विष्णोर्वचनमाकर्ण्य गर्वयुक्तं प्रभावतः। भगवांस्तमुवाचेदं वेदकर्ता पितामहः ॥२॥ ब्रह्मोवाच ॥ विष्णो त्वं यदि मां पाता सर्वेशश्च महान् प्रभुः। पश्योदरगतो भूत्वा प्रभावं मे जगद्गुरो ॥३॥ ब्रह्मणो गिरमाकर्ण्य प्रविष्टोऽसौ जनार्दनः। योगमायाबलेनैव योगीशो जठरे विधेः ॥४॥ ब्रह्मांडरचनां तत्र दृष्ट्वा नानाविधां पराम्। नाभिपद्मयुतं विष्णुं ददर्श पुरुषोत्तमः ॥५॥ विस्मितो हृदि मोहेन किमद्भुतमिदं महत्। पश्यन्नांतं जगामाऽसौ निःसृतो देहमध्यतः ॥६॥ निःसृतः प्रणिपत्याऽऽदौ तं विधिं त्ववदत्प्रभुः। ब्रह्मन्नांतं प्रजानामि त्वदीयं वै न संशयः ॥७॥ त्वदीयजठरेऽहं वै स्थितस्तेन भवान् गुरुः। सर्वेशो नात्र संदेहः स्रष्टा त्वं स्वप्रभावतः ॥८॥ त्वमेव भगवन् पश्य मदीये जठरे परम्। प्रभावं पूर्णभावेन मदीयं कीदृशं प्रभो ॥९॥ नारायणवचः श्रुत्वा ब्रह्मा विस्मितमानसः। योगस्यैव प्रभावेण गतस्तत्र यथारुचि ॥१०॥ विष्णोश्च जठरे ब्रह्मा ब्रह्मांडं लोकसंकुलम्। ब्रह्माणमपरं तत्र स्थितं पश्यन् विमोहितः ॥११॥ ब्रह्मा नान्तं जगामाऽसौ पश्यन् पश्यन् महात्मनः। बहिर्गंतुं मनश्चक्रे विष्णुना मार्ग आवृतः ॥१२॥ द्वाराणि योगभावेन पिहितानि स्वमायया। भ्रमन् भ्रमन् स्वयं ब्रह्मा प्राप नो मार्गमुत्तमम् ॥१३॥ तत्र योगबलेनाऽपि ब्रह्मा वै पद्मनालतः। निर्भिद्य सहसा द्वारं ययौ तेन बहिर्विधिः ॥१४॥ बहिरागत्य विष्णुं तं क्रोधेन स जगाद ह। वशमानीय मां किं त्वं स्वच्छंदो भवसि प्रभो ॥१५॥ अहं स्वेन प्रभावेण निःसृतो योगमायया। द्वाराणि पिहितान्येव किमर्थं वद माधव ॥१६॥ वचनं प्राह देवस्य श्रुत्वा विष्णुर्महायशाः। प्रहस्य तमुवाचेत्थं स्नेहयुक्तं समाहितः ॥१७॥ विष्णुरुवाच। वशीकर्तुं विधे त्वाहमिच्छामि न जगद्गुरो। द्वाराणि पिहितान्येव मया क्रीडार्थमादरात् ॥१८॥ परस्परं तु लीलार्थं कृतं यत्प्रपितामह। प्रभावं ज्ञातुकामस्य त्वपराधं क्षमस्व मे ॥१९॥ इति प्रसादितो ब्रह्मा प्रसन्नः प्राह तं पुनः। क्रीडार्थं यत्त्वया विष्णो कृतं ज्ञातं न वै मया ॥२०॥ अहं क्रोधसमायुक्तः संजातोऽज्ञानतः प्रभो। अप्रियं भाषणं विष्णो यत् क्षमस्व कृतं मया ॥२१॥ तवांतं नैव जानामि जठरेऽहं समास्थितः। त्वं श्रेष्ठो मे गुरुः साक्षान्नात्र संशयवान् हरे ॥२२॥ भवानहमतः प्राज्ञौ श्रेष्ठौ सर्वेश्वरौ परौ। शंभुः शक्तिश्च सूर्यश्च गर्वयुक्ता बभूविरे ॥२३॥ तेषां प्रमाणं तज्ज्ञेयमिति सस्मरतुः प्रभू। तयोः स्मरणमात्रेण संययुस्तत्र ते त्रयः ॥२४॥ प्रथमं प्राप्तवांस्तत्र शंकरः शूलधृक् प्रभुः। उक्तवांस्तौ

किमर्थं मे स्मरणं वदतं कृतम् ॥२५॥ तत्रोचतुर्हरिर्ब्रह्मा शृणु शंकर मे वचः। तवैश्वर्यं कियन्मात्रं दर्शयस्व सदाशिव ॥२६॥ तयोर्वचनमाकर्ण्य गर्वयुक्तः सदाशिवः। उवाच क्रोधसंयुक्तो वचनं विस्मयन्निव ॥२७॥ शिव उवाच। अहं हर्ता च सर्वेषां युवयोर्नात्र संशयः। मत्तः परं न किंचिद्वै ज्ञातव्यं सर्वभावतः ॥२८॥ इत्युक्त्वा स स्वयं शंभुर्दर्शयामास तौ वपुः। ज्योतीरूपं महालिंगं परं सर्वत्र संस्थितम् ॥२९॥ तत्तौ दृष्ट्वा महाश्चर्यं विस्मितौ विधिमाधवौ। अध ऊर्ध्वं पुरः पश्चाद्वाम-दक्षिणसंततम् ॥३०॥ तत्र ब्रह्मा स्वयं विष्णुमुवाच मधुरं वचः। अधस्त्वं गच्छ देवेश ऊर्ध्वं गच्छामि भावतः ॥३१॥ शिवस्यांतं प्रपश्यावः कीदृशोऽयं महेश्वरः। अतस्त्वं त्वरितो भूत्वा कुरु शीघ्रमिदं वचः ॥३२॥ इत्युक्तो ब्रह्मणा विष्णुस्तं प्रत्यूचे प्रभावतः। ब्रह्मन्मह्यं वरं देहि पश्चाद्गंतुं समुत्सहे ॥३३॥ भ्रांतो ब्रह्माऽभवत्तत्र वरं ब्रूहीति सोऽब्रवीत्। दास्यामि नात्र संदेहः प्रीतस्त्वं वरयाशु च ॥३४॥ विष्णुरुवाच। त्वं मे पुत्रो भव ब्रह्मन्नेष एव वरो मतः। तस्य तद्वचनं श्रुत्वा विस्मितो विधिरब्रवीत् ॥३५॥ वंचितोऽहं त्वया नूनं संभ्रमेऽस्मिन् समुत्थिते। दत्तो वरो यतस्तेन तव पुत्रो भवाम्यहम् ॥३६॥ सृष्टिकाले च संप्राप्ते त्वन्नाभिकमलात् स्वयम्। देहं सृजामि योगेन पद्मजोऽहं तवात्मजः ॥३७॥ इत्युक्तः स हरिस्तत्र तं प्रणम्य तथेति च। प्रविष्टोधः शिवस्यापि द्रष्टुं पारं महात्मनः ॥३८॥ ब्रह्माऽपि त्वरितो भूत्वोर्ध्वं ययौ पारलिप्सया। न तत्र पारमीशस्य प्राप्तवान् स पितामहः ॥३९॥ विष्णुश्च शंकरस्याधो न पारं दृष्टवान् ततः। बहुकालेन तौ तत्राऽऽगतौ तौ खिन्नमानसौ ॥४०॥ परस्परविचारेण शंकरं स्तोतुमुद्यतौ। बद्धांजलिपुटावेतौ स्तोत्रं चक्रतुरुत्तमम् ॥४१॥ ब्रह्मविष्णू ऊचतुः। नमस्ते शंकरायैव नमस्ते शूलपाणये। रुद्राय कालरूपाय त्र्यंबकाय नमो नमः ॥४२॥ उमापते नमस्तुभ्यं वृषभेश्वरवाहन। आदिदेवाय देवाय महादेवाय ते नमः ॥४३॥ प्रसीद भगवन् शंभो नांतं पश्यावहे विभो। किंरूपं किंस्वभावं त्वां न जानीवः कथंचन ॥४४॥ दर्शय स्वात्मरूपं भो महेश्वर नमोऽस्तु ते। येन ते भजनं देव जनाः कुर्वंति निर्भयाः ॥४५॥ तयोर्वचनमाकर्ण्य शंभुः प्राकट्यमास्थितः। ततस्तं तौ ददृशतुर्हरिश्च भगवान् विधिः ॥४६॥ वामभागे स्थितं विष्णुं दक्षिणांगे पितामहम्। विश्वं चराचरं सर्वं लिंगे तत्रास्य संस्थितम् ॥४७॥ अपारमहिमानं तं दृष्ट्वा तेमतुरादरात्। उपसंहर रूपं तत्त्वमेव परमेश्वरः ॥४८॥ तयोर्वचनमाकर्ण्य हृष्टः सन् शंकरः प्रभुः। भगवान् पूर्वरूपेण संतस्थौ वृषभध्वजः ॥४९॥ उवाच तौ महादेवो वृणुतं वरमीप्सितम्। दास्यामि भवतोर्भावात् स्तोत्र-

संतुष्टमानसः ॥५०॥ य एतत्पठति स्तोत्रं स कामान् लभतेऽखिलान्। मत्प्रियः सोऽपि भवति मल्लोकेंऽते प्रगच्छति ॥५१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते पंचदेवविवादो नाम त्रयोदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शिव उवाच। शृणु देवि प्रवक्ष्यामि यज्ञातं चाद्भुतं ततः। गणेशमायामोहेन मोहितानां चरित्रकम् ॥१॥ शिवस्य वचनं श्रुत्वा विष्णुर्ब्रह्माणमब्रवीत्। वरं वृणु विरिंच त्वां शिवात्पुत्रो भवेति मे ॥२॥ तव पुत्रः शिवो जातस्तेन मे पौत्रतां गतः। उभयोः सफलं पूर्णं वांछितं जातमद्भुतम् ॥३॥ विष्णोर्वचनमाकर्ण्य विधिः शंकरमब्रवीत्। मम पुत्रो भव त्वं वै वर एष वृतो मया ॥४॥ विष्णुनाऽपि तदेवोक्तं तथा वै शंकरोऽब्रवीत्। तव भालाद्भविष्यामि रुद्रोऽहं त्वंशतो विधे ॥५॥ शिवस्य वचनं श्रुत्वा संतुष्टौ विधिमाधवौ। ऊचतुः शंकरं तत्र स्नेहात्तं भावपूर्वकम् ॥६॥ विधिवच्छिव पश्य त्वमैश्वर्यं चावयोः पृथक्। तेन तुष्टौ महादेव भविष्यावो न संशयः ॥७॥ तयोर्यदैश्वरं भावं शिवोपि ज्ञानचक्षुषा। दृष्ट्वा नांतं जगामाऽसौ तौ पुनः प्रत्युवाच ह ॥८॥ भवतोर्महिमानं चापारं पश्यामि शाश्वतम्। वयं त्रयः समाख्याता ईश्वराः सर्वतः पराः ॥९॥ एतस्मिन्नंतरे तत्राऽजगाम स दिवाकरः। तेजोराशिः सदात्मा च पृच्छति स्म समाहितः ॥१०॥ किमर्थं स्मरणं देवा मदीयं कृतमादरात्। तन्मे कथयताद्य त्वागतोऽहं स्नेहतः परम् ॥११॥ भानोर्वचनमाकर्ण्य प्रहृष्टास्ते त्रयो भृशम्। ऊचुः प्रसन्नभावेनैश्वर्यं ते दर्शय प्रभो ॥१२॥ तेषां श्रुत्वा गिरं सौम्यां दर्शयामास रूपकम्। तेजोमयमपारं यच्चराचरमयं महत् ॥१३॥ सूर्यस्य तेजसा सर्वे निष्प्रभास्ते त्रयः कृताः। प्रणष्टदृष्टयो जाता न शेकुर्द्रष्टुमंजसा ॥१४॥ ज्ञानदृष्ट्या च तं दृष्ट्वा चराचरतनुं प्रभुम्। अपाररूपं भास्वंतं नतास्तं स्नेहभावतः ॥१५॥ दर्शयित्वा तथात्मानं सौम्यरूपोर्यमाऽभवत्। तमूचुस्ते त्रयो देवा नांतं ददृशिम प्रभो ॥१६॥ अस्माकमपि पश्य त्वमैश्वर्यं स्नेहभावतः। तेषां तद्वचनं श्रुत्वा रविर्हृष्टो बभूव ह ॥१७॥ ज्ञानदृष्ट्या रविस्तेषामैश्वर्यं दृष्टवान् परम्। उवाच प्रणतो भूत्वा विस्मितश्चेतसा भृशम् ॥१८॥ भवंतोऽपि महात्मानो नांतं पश्यामि सर्वतः। युष्माकमैश्वरं भावमद्भुतं

दृष्टवानहम् ॥१९॥ वयं सर्वेश्वराः सर्वे भगवंतः सनातनाः। न्यूनाधिकं कलामात्रं विद्यते नैव निश्चितम् ॥२०॥ तस्मिन् क्षणे स्वयं शक्तिरागता मोहिनी परा। उवाच तान् प्रसन्ना मे किमर्थं स्मरणं कृतम् ॥२१॥ तामूचुस्ते च चत्वारो देवाः स्नेहेन भाविताः। दर्शयस्व महादेवि ऐश्वर्यं कीदृशं तव ॥२२॥ इत्युक्ता सा स्वरूपं तद्दर्शयामास सुंदरम्। चराचरमयं पूर्णं स्थूलसूक्ष्मादिभिर्युतम् ॥२३॥ दृष्ट्वा रूपं तदीयं वै भ्रांतास्ते शरणं ययुः। नांतं ददृशिमार्ये ते रूपस्य महतः किल ॥२४॥ सौम्यरूपा तदा जाता तामूचुः पश्य भावतः। अस्माकं देवि चैश्वर्यं कीदृशा वयमेव च ॥२५॥ तेषां वचनमाकर्ण्य ज्ञानदृष्ट्या स्म पश्यति। नांतं जगाम तेषां वै ततः सा तान्विशेषतः ॥२६॥ उवाच स्नेहभावेन नांतं पश्यामि कुत्रचित्। भवंतोऽपि महात्मान ईश्वराः पूर्णभावतः ॥२७॥ वयं पंच समा नाथा नांतरं दृश्यते क्वचित्। कः समर्थो भवेद्देवो निश्चयो नैव दृश्यते ॥२८॥ गणेशमायया भ्रांता अवदंस्ते परस्परम्। प्रभुरेकश्च सर्वत्र वेदे वै पठ्यते बुधैः ॥२९॥ प्रभवः पंच कुत्रापि नोक्ताः शास्त्रेषु संमताः। अतः कोपि प्रभुर्भाव्यः स च वै कुत्र वर्तते ॥३०॥ एवं विवादे संप्राप्ते विस्मृतं ज्ञानमात्मकम्। गाणेशं चित्तचांचल्यादूर्ध्वं जग्मुः प्रभावतः ॥३१॥ न किंचिद्ददृशुस्तत्राधो भागे प्रययुस्ततः। एवं दश दिशो भ्रांताः पश्यंतस्ते परस्परम् ॥३२॥ न किंचिद्ददृशुस्तत्र स्थिता एकत्र ते पुनः। योगमार्गेण चित्तं स्वं ध्यानं चक्रुः क्रमेण च ॥३३॥ ब्रह्माऽभेदस्वरूपं ते रेमिरे योगभावतः। एकीभूता इवात्मानः शांतिं प्राप्ताः स्वभावतः ॥३४॥ ततस्तान् दर्शयामास योगिध्येयमनुत्तमम्। स्वरूपं गणराजस्तु हृदये संस्थितं परम् ॥३५॥ चतुर्भुजं त्रिनेत्रं तच्छुंडादंडविराजितम्। एकदंतं शूर्पकर्णं वक्रतुंडं महोदरम् ॥३६॥ रक्तवर्णं महाकायं सिंदूरालिप्तमेव च। नाभिशेषं किरीटादिनानाभूषणशोभितम् ॥३७॥ सिद्धिबुद्धियुतं पूर्णं विभूतिभिरुपासितम्। चिंतामणिं मणिं चैव दधत्तु हृदये शुभम् ॥३८॥ प्रसन्नवदनं भक्तानुग्रहाणां प्रकारकम्। हृदि दृष्टाऽभवंस्तत्र विस्मितास्ते सुराः प्रिये ॥३९॥ ततादौ शंकरस्यैव हृदि प्रकटतां गतः। तं पप्रच्छ स्वयं शंभुः को भवान् वद मे प्रभो ॥४०॥ शांतियोगेन संप्राप्तः किं न ब्रह्मपतिः परः। कथयस्व महाभाग त्वां न जानामि तत्त्वतः ॥४१॥

॥ ॐमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते गणेशप्रादुर्भावो नाम चतुर्दशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । शिवस्य वचनं श्रुत्वा भक्तिभावेन तोषितः । उवाच मधुरं वाक्यं विघ्नेशस्तं प्रहर्षयन् ॥१॥ वक्रतुंड उवाच ॥ शृणु शंभो महाभाग मम मायाविमोहित । गणेशोऽहं पुनर्दृष्टस्तपसा भावितात्मना ॥२॥ यः पुरा भवतो देव वरदाताऽभवं परः । उग्रेण तपसा तुष्टोऽकरवं ज्ञानसंयुतम् ॥३॥ ममैषा सततं माया प्रमोहयति मानवान् । तेन विस्मरणं प्राप्तं तवाऽपि न च संशयः ॥४॥ एवमुक्त्वा शिवं मायामोहजालं निराकरोत् । सर्वं च स्मरणं तेन पुनः प्राप्तं शिवस्य च ॥५॥ सर्वं स्मृत्वा शिवस्तत्र स्तोतुं समुपचक्रमे । तावदंतर्हितं जातं रूपं गणपतेः शुभम् ॥६॥ पुनर्ध्यानेन शंभुः स तमेवाचिंतयन् स्थितः । नापश्यद् हृदि तद्रूपं तेनाकुल इवाऽभवत् ॥७॥ आययौ विष्णुरभ्याशे सर्वं त्वकथयच्छिवम् । अदृष्टं तादृशं रूपं कथयामास सोऽपि तम् ॥८॥ एवं पंचाप्यदृष्ट्वा तत् विस्मिता अभवन् परम् । एकत्र मिलिता जाता-स्तुष्टुवुस्तं गतस्मयाः ॥९॥ पंच देवा ऊचुः । नमस्ते वक्रतुंडाय त्रिनेत्रं दधते नमः । चतुर्भुजाय देवाय पाशांकुशधराय च ॥१०॥ लंबोदर नमस्तुभ्यं नाभिशेषाय ते नमः । महते चैकदंताय शूर्पकर्णाय ते नमः ॥११॥ सिंदूरारुणदेहाय रक्तवर्णधराय च । महाकायाय सूक्ष्माय गणेशाय नमो नमः ॥१२॥ सिद्धिबुद्धियुतायैव विभूतिसहिताय च । चिंतामणिधरायैव तथा चिंतामणे नमः ॥१३॥ अव्यक्ताय परेशाय परेषां च पराय ते । मनोवाणीविहीनाय विघ्नेशाय नमो नमः ॥१४॥ नानामाया-धरायैव मायिनां मोहकारिणे । हेरंबाय नमस्तुभ्यं ब्रह्मणां पतये नमः ॥१५॥ दर्शयस्व निजं रूपं भक्तेभ्यः प्रीतिदायकम् । सनाथा हि वयं तेन सर्वनाथाय ते नमः ॥१६॥ स्तुवतां तु पुरः प्रादुरासीद्देवो गजाननः । तं दृष्ट्वा दंडवत् सर्वे प्रणता भक्ति-भावतः ॥१७॥ तानुत्थाप्य स्वयं ढुंढिर्वचनं चेदमब्रवीत् । स्तोत्रेण भावितो देवाः प्रीतो वो नात्र संशयः ॥१८॥ यः पठेत् स्तोत्रमेतद्वै स मे मान्यो भवेत् सुराः । वांछितं पूरयिष्याम्यंते मे सायुज्यमाप्नुयात् ॥१९॥ शृणुध्वं मे वचो रम्यं मा गर्वं कुरुत प्रियाः । भवंतो मदधीनाश्च कलांशा नात्र संशयः ॥२०॥ क्रीडार्थं निर्मिताः सर्वे स्पर्धमानाः परस्परम् । किमर्थं मनसि भ्रांता जाताः पूर्णात्मका अपि ॥२१॥ श्राव्यं ज्ञानं रहस्यं यन् मदीयं तेन भाविताः । सदा मोहविनिर्मुक्ता भविता-रश्च मत्समाः ॥२२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते गणेशप्रसन्नभावो नाम पंचदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शिव उवाच। गणेशवचनं श्रुत्वा प्रणता भक्तिभावतः। पप्रच्छुस्तं पुनः शांता ज्ञानं ब्रूहि गजानन ॥१॥ गणेश उवाच। देहश्चतुर्विधः प्रोक्तस्त्वं पदं ब्रह्मभेदतः। सोऽहं देही चतुर्धा तत्पदं ब्रह्म सदैक्यतः ॥२॥ संयोग उभयोर्यश्चाऽसि पदं ब्रह्म कथ्यते। स्वत उत्थानकं देवा विकल्पकरणाद् द्विधा ॥३॥ सदा स्वसुखनिष्ठं यद्ब्रह्म सांख्यं प्रकीर्तितम्। परतश्चोत्थानकं तत् क्रीडाहीनतया परम् ॥४॥ स्वतः परत उत्थानहीनं यद्ब्रह्म कथ्यते। स्वानंदः सकलाभेदरूपः संयोगकारकः ॥५॥ तदेव पंचधा जातमीश्वरास्तन्निबोधत। स्वतश्च परतो ब्रह्मोत्थानं यद् द्विविधं स्मृतम् ॥६॥ ब्रह्मणो नाम तद्भेदे कथ्यते भिन्नभावतः। तयोरनुभवो यश्च योगिनां हृदि जायते ॥७॥ रूपं तदेव ज्ञातव्यमसद्भेदेषु कथ्यते। सा शक्तिरियमाख्याता ब्रह्मरूपा ह्यसन्मयी ॥८॥ तत्रामृतमयाधारः सूर्य आत्मा प्रकथ्यते। शक्तिसूर्यमयो विष्णुरानंदो नंदनात्तयोः ॥९॥ त्रिविधेषु तदाकारस्तत् क्रियाहीनरूपकः। शिवो नेति चतुर्थोऽयं त्रिनेति करणात्परः ॥१०॥ त्रिविधं मोहमात्रं यत्तिर्मोहस्तु सदाशिवः। तेषामभेदे यद्ब्रह्म स्वानंदः सर्वयोगतः ॥११॥ पंचानां ब्रह्मणां यच्च बिंबं मायामयं स्मृतम्। ब्रह्मा स एव विज्ञेयः सर्वादिः सर्वभावतः ॥१२॥ बिंबेन सकलं सृष्टं तेनायं प्रपितामहः। असत् सत् समनेति स्वानंदरूपा वयं स्मृताः ॥१३॥ स्वानंदाद्यत् परं ब्रह्मायोगाख्यं ब्रह्मणां भवेत्। केषामपि प्रवेशो न तत्र तस्याऽपि कुत्रचित् ॥१४॥ मदीयं दर्शनं तत्रायोगे नो योगिनां भवेत्। स्वानंदे दर्शनं प्राप्तं स्वसंवेद्यात्मकं च मे ॥१५॥ स्वानंदवासिनं तेन वेदेषु प्रवदंति माम्। चतुर्णां ब्रह्मणां भोगास्तं योगाभेदयोगतः ॥१६॥ संयोगश्च ह्ययोगश्च तयोः परतरो मतः। पूर्णशांतिप्रदो योगश्चित्तवृत्तिनिरोधतः ॥१७॥ क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकम्। पंचभूमिमयं चित्तं तत्र चिंतामणिः स्थितः ॥१८॥ पंचभूमिनिरोधेन प्राप्यते योगिभिर्हृदि। शांतिरूपात्मयोगेन ततः शांतिर्मदात्मिका ॥१९॥ एतद्योगात्मकं ज्ञानं गाणेशं कथितं मया। नित्यं युक्तं च योगेन नैव मोहं प्रगच्छथ ॥२०॥ चित्तरूपा स्वयं बुद्धिः सिद्धिर्मोहमयी स्मृता। नानाब्रह्मविभेदेन ताभ्यां क्रीडति तत्पतिः ॥२१॥ त्यक्त्वा चिन्ताभिमानं च गणेशोहं समाधिना। भविष्यंति भवंतोऽपि मद्रूपा मोहवर्जिताः ॥२२॥ शिव उवाच। इत्युक्त्वा विरराम ऽथ गणेशो भक्तवत्सलः। तेऽपि भेदं परित्यज्य शांतिं प्राप्ताश्च तत्क्षणात् ॥२३॥ एकविंशतिसुश्लोकैर्गणेशेन प्रकीर्तितम्। गीतासारं सुशांतेभ्यः शांतिदं योगसाधनैः ॥२४॥ गणेशगीतासारं च यः पठिष्यति भावतः। श्रोष्यति श्रद्धधानश्च ब्रह्मभूतसमो भवेत् ॥२५॥ इह भुक्त्वाऽखिलान्

भोगानंते योगमयो भवेत्। दर्शनात्तस्य लोकानां सर्वपापं लयं व्रजेत् ॥२६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते गणेशगीतासारकथनं नाम षोडशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शिव उवाच। गणेशगीतासारं ते श्रुत्वा पंच सुरेश्वराः। ऊचुस्तं विस्मिताः सर्वे प्रणम्य गणनायकम् ॥१॥ पंच देवा ऊचुः। भगवन् भवता सर्वं कथितं तथ्यमेव च। तेन तृप्ता वयं स्वामिन् मोहशून्याः कृतास्त्वया ॥२॥ तव दर्शनमात्रेण स्मरणं पूर्वकं कृतम्। गुणरूपा वयं ढुंढे कथं ब्रह्ममया वद ॥३॥ तेषां वचनमाकर्ण्य तानुवाच गजाननः। भक्तवत्सलभावेन तोषितोऽसौ महाप्रभुः ॥४॥ गणेश उवाच। स्वपदे जगति ब्रह्मरूपा वै जगदीश्वराः। भिन्नभावे गुणात्मानो भवंतोऽपि मया कृताः ॥५॥ चतुर्विधेन भावेन क्रीडामि ननु तत्र च। क्रीडया पतितं बिंबं तेन पंचविधोऽभवम् ॥६॥ बहलेषु विलासेषु तेषु भावेषु देवपाः। भवंतो मदधीनाश्च संस्थिता नात्र संशयः ॥७॥ एषु भिन्नविहारेषु रजःसत्त्वतमोमयाः। मया ब्रह्मा हरिः शंभुर्भिन्ना जाता हि मायया ॥८॥ अहंकारस्त्रिदेवानां सूर्यो मोहमयी तथा। शक्तिस्त्रिगुणसिध्यर्थमेते पंच मया कृताः ॥९॥ अहमत्र स्थितोंऽशेन वक्रतुंड इति स्मृतः। बिंदुब्रह्ममयः साक्षाद्भिन्नभावप्रकाशकः ॥१०॥ तुरीयं मे मया रूपं कृतं यद् गुणपं सुराः। ज्ञातव्यं बुद्धिरूपं तद्दक्षिणांगं प्रकथ्यते ॥११॥ पंचदेवविहाराख्यं वामांगं सिद्धिरूपकम्। सिद्धिबुद्धियुतोऽहं वै बिंदुमात्रात्मकोऽभवम् ॥१२॥ भक्तानां विघ्नरूपा ये वक्रास्ते कथिताः सुरैः। तांस्तुंडेन हनिष्यामि वक्रतुंडस्ततः स्मृतः ॥१३॥ मम माया मयाज्जीवाद्वक्रं ब्रह्ममुखं यतः। तेनाऽहं वक्रतुंडस्तु लभ्य उन्मनसा भवेः ॥१४॥ भवतां कार्यसिद्ध्यर्थं विहारार्थं तु मायया। बिंदुरूपधरो भूत्वा स्थितोऽहं भावपूर्वकम् ॥१५॥ यदि मे स्मरणं यूयं विस्मरिष्यथ वै तदा। मायामोहेन संभ्रांता भविष्यथ महेश्वराः ॥१६॥ भवद्भिः सततं तस्मात् कर्तव्यं स्मरणं हृदि। आदौ पूज्यो भविष्यामि दैवे पित्र्ये च कर्मणि ॥१७॥ तेन सिद्धियुताः सर्वे भविष्यंति न संशयः। इत्युक्त्वांतर्दधे देवो

गणेशो गणपालकः ॥१८॥ शिव उवाच। इति ते कथितो देवि ध्यानमार्गः पुरातनः। तं ध्यायामि हृदिस्थं मे गणेशं ब्रह्मनायकम् ॥१९॥ अखिलं ब्रह्मणा सृष्टं चराचरमयं शिवे। नानावतारवान् विष्णुः स पाति गणपाज्ञया ॥२०॥ अहं संहारकारी च त्वं प्रमोदप्रदा शिवे। कर्मणां चालकः कालैर्भानुर्जातो न संशयः ॥२१॥ हिमाचलसुता त्वं वै जाता तेन सुविस्मृतम्। त्वयाऽखिलं हृदिस्थं च ज्ञानं गणपबोधकम् ॥२२॥ मया सुस्मारितं तुभ्यं स्मर सर्वं शुचिस्मिते। भवती च महामाया पश्य त्वं गणपं हृदि ॥२३॥ अष्टौ तस्याऽवतारांश्च कथयामि समासतः। भजता तेन मार्गेण भवेद्योगो न दुर्लभः ॥२४॥ प्रथमो वक्रतुंडश्च त्वंपदब्रह्म कथ्यते। द्वितीयं एकदंतश्च तत्पदब्रह्मबोधकः ॥२५॥ महोदरस्तृतीयस्तु ब्रह्मासि पदधारकम्। गजाननश्चतुर्थश्च सांख्यरूपो महेश्वरि ॥२६॥ लंबोदर इति ख्यातो ह्यनद्ब्रह्म त्वयि स्थितम्। षष्ठो विकटनामा च सद्ब्रह्मात्मरविः परः ॥२७॥ विघ्नराजः स्वयं विष्णुः सप्तमः ममतांतगः। धूम्रवर्णोऽष्टमः शंभुरव्यक्तो नेति कथ्यते ॥२८॥ अष्टब्रह्मसु तत्पालाः कलारूपधराः स्मृताः। गणपा गणराजस्य ह्यवताराः प्रकीर्तिताः ॥२९॥ स्वसंवेद्यमयं ब्रह्म तेन वै प्रभुना प्रिये। सर्वेषां ब्रह्मणां देवि खेलकस्तेन स स्मृतः ॥३०॥ अयोगस्यावतारश्च खेलनादि न विद्यते। स्वानंदवासिनं विद्धि खेलकं सततं प्रिये ॥३१॥ पूर्णयोगो गणाधीशः स्वानंदायोगवर्जितः। योगिनां तत्र शांतिश्च ह्यभवद्योगसेवया ॥३२॥ इति सर्वं समाख्यातं यत्पृष्टं देवि शोभनम्। अनेन विधिना नित्यं गणेशं भज सर्वदा ॥३३॥ अस्माकं कुलदेवश्च गणेशो नात्र संशयः। पूज्यते स मया नित्यं चिंतामणिविनायकः ॥३४॥ पंचानां चित्तवृत्तीनां प्रकाशकतया स्थितः। तेन चिंतामणिर्नाम कथ्यते स गजाननः ॥३५॥ गजवक्त्रात्मिकां मूर्तिं पश्य देवि गृहे स्थिताम्। मणिरत्नमयीं साक्षात् पूजयामि सुभक्तितः ॥३६॥ मुद्गल उवाच। इत्युक्त्वा दर्शयामास ध्यानस्थानं सदाशिवः। एकांते वीक्ष्य वै देवी विस्मिता साऽभवत्परम् ॥३७॥ इत्युक्त्वा विरराम च शंकरः करुणानिधिः। तं पुनः प्रत्युवाचेदं महादेवी जगन्मयी ॥३८॥ शक्तिरुवाच। सर्वेषां मोहसंदात्री नामसस्य सदाशिव। तव पत्नी कथं जाता ह्यर्धभागस्थितस्य वै ॥३९॥ अमुं मे संशयं देव छेत्तुमर्हसि सांप्रतम्। त्वदन्यः संशयच्छेत्ता सर्वज्ञो नास्ति कुत्रचित् ॥४०॥ पार्वतीवचनं श्रुत्वा शिवो हर्षसमन्वितः। उवाच मधुरं वाक्यं बोधयंस्तां महत्तुकम् ॥४१॥ शिव उवाच। शृणु देवि पुरा वृत्तं येन त्वं मत्प्रियाऽभवः। तत्तेऽहं कथयिष्यामि कथासारं सुखप्रदम् ॥४२॥ विवादः पंचदेवानां स्पर्धया समभूच्च यः। तत्रैश्वर्यं मया दृष्टं त्वदीयं

महदद्भुतम् ॥४३॥ पंचानां बोधको देवो गणेशोंऽतर्दधे यदा। बोधयित्वा यथान्यायमस्मान् ब्रह्ममयः प्रभुः ॥४४॥ ततो मया तपस्तप्तं तव प्राप्तौ प्रिये महत्। भक्तिभावेन संतुष्टा त्वं जाता शतवर्षतः ॥४५॥ मत्समीपे समागम्य वृणुष्व वरमीप्सितम्। प्रसन्नाऽहं महादेव दास्येऽहमिति चाब्रवीः ॥४६॥ त्वां नत्वा स्तुतवान्नानाचेष्टितैस्त्वत्स्वरूपकैः। तेन तुष्टिः परा जाता तवापि जगदीश्वरि ॥४७॥ मया प्रयाचितं देवि त्वं मे पत्नी भव प्रिये। एष एव वरो मह्यं दातव्यो जगदीश्वरि ॥४८॥ मदीयं वचनं श्रुत्वा सस्मिता भावपूर्वकम्। जाता त्वं मे वरं दत्त्वांऽतर्धानं च कृतं त्वया ॥४९॥ अतस्त्वं मे प्रिया जाता वरदानप्रभावतः। तव वामांगसंभूता लक्ष्मीर्नारायणप्रिया ॥५०॥ दक्षिणांगात् समुद्भूता सावित्री ब्रह्मणः प्रिया। हृदयात्ते च संभूता संज्ञा पत्नी रवेरपि ॥५१॥ इति सर्वं समाख्यातं स्मर सर्वं शुचिस्मिते। साधय त्वं पुनर्योगं गाणेशं शांतिदं परम् ॥५२॥ मुद्गल उवाच। शिवेन कथितं सर्वं श्रुत्वा देवी नगात्मजा। एकांते साधयामास योगं गणपतेः परम् ॥५३॥ पूर्वसंस्कारभावेन स्वल्पकालेन सा शिवा। शांतिं प्राप्ता महाभागा प्रययौ शिवसन्निधौ ॥५४॥ मुद्गल उवाच। इति ते कथितं दक्ष चेष्टितं गणपस्य च। भज त्वं सर्वभावेन गणेशं ब्रह्मनायकम् ॥५५॥ तेन त्वं विघ्नहीनोऽपि भवितासि न संशयः। सर्वमान्यो महायोगी शोकहीनो जगद्गुरुः ॥५६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते शिवपार्वतीसंवादसमाप्तिर्नाम सप्तदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः॥ शौनक उवाच। श्रुतं सूत महाभाग कथितं परमाद्भुतम्। चरितं गणनाथस्य तेन तृप्ता वयं प्रभो ॥१॥ शिवशक्तिमहावादं श्रुत्वा तृष्णा विवर्धते। पुनश्च वद सूत त्वं गणेशस्य विचेष्टितम् ॥२॥ सूत उवाच। शृणु शौनक यत्नेन दक्षेणैवं महामुनिः। सत्कथामृतपानं च कृत्वा पृष्टः पुनश्च यत् ॥३॥ शक्तिशंकरसंवादं ब्रह्मभूयपदप्रदम्। श्रुत्वा

दक्षो महाभागः पप्रच्छ मुनिसत्तमः ॥४॥ दक्ष उवाच । किंचित्पुरातनं पुण्यं फलितं मे महाद्भुतम् । पीतं मुद्गल ते वक्त्रात् कथामृतमिदं मया ॥५॥ धन्योऽसि कृतकृत्योऽसि गणेशे भक्तिमानसि । गणेशाच्च परं नास्ति ज्ञातं त्वद्वाक्यतो मया ॥६॥ वद मुद्गल माहात्म्यं पुनर्गणपतेः शुभम् । न तृप्तोऽहं महायोगिन् पीत्वा ब्रह्मामृतं महत् ॥७॥ शिवशैलसुतावादो महानंदप्रदायकः । तत्राष्टौ गणराजस्य ह्यवतारा: श्रुता मया ॥८॥ तेषां तच्चरितं चाऽपि माहात्म्यं तेऽपि यत् महत् । श्रोतुमिच्छामि योगीश दयां कृत्वा वदस्व मे ॥९॥ किमर्थं गणराजोऽयमवतारं करोति वै । ब्रह्मभूयमयो देवस्तद्वदस्व महामुने ॥१०॥ परोपकरणार्थाय त्वादृशा मुनिसत्तमाः । भ्रमंति धरणीं ब्रह्मन् पतितेभ्यः सुखप्रदाः ॥११॥ दर्शनस्पर्शनेनैव भाषणेन विशेषतः । पावयंति जनान् सर्वान् साधवः समदर्शिनः ॥१२॥ सूत उवाच । श्रुत्वा दक्षवचो रम्यं प्रत्युवाच स मुद्गलः । प्रहृष्टो भावयुक्तस्य दक्षस्य च महात्मनः ॥१३॥ मुद्गल उवाच । शृणु दक्ष महाभाग धन्योऽसि न च संशयः । येन त्वं गणनाथस्य कथां पृच्छसि मां प्रभो ॥१४॥ पापिनां नास्तिकानां वै दांभिकानां कदाचन । सत्कथाऽमृतपानस्य चेच्छा नोत्पद्यते क्वचित् ॥१५॥ द्वंद्वभावविचारज्ञास्तथा सहनकारकाः । भूतेषु समभावाश्च संसारतरणे रताः ॥१६॥ परोपकारकार्येषु मतिस्तेषां प्रवर्तते । एतादृशा महाभागा गणेशे सादराः प्रभो ॥१७॥ कथां गणपतेर्नित्यं शृण्वंति च पठंति ते । श्रावयंति जनानन्यान् भक्तिभावसमन्विताः ॥ १८ ॥ अतस्त्वं सादरो भूत्वा शृणुष्व पापनाशिनीम् । कृत्वा वर्धयसि प्रश्नं कथां गणपतेः शुभाम् ॥ १९ ॥ शृणु यच्च पुरावृत्तं मदीयं भावपूर्वकम् । ततोऽग्रे कथयिष्यामि संशयो येन नश्यति ॥ २० ॥ अवतारकथामग्रे ज्ञास्यसि त्वं यथार्थतः । गणराजपदं सर्वं प्राप्स्यसि त्वं च भक्तिमान् ॥ २१ ॥ अहं तपसि संविष्टः शिलोञ्छाजीवमाश्रितः । दश पंच दिनेष्वेव द्वादश्यां मम पारणम् ॥ २२ ॥ द्रोणमात्रं चिनोम्यन्नमुपोषणसमन्वितः । तेनान्नेन यथान्यायं पंचयागानकुर्व्यहम् ॥ २३ ॥ एवं बहुगते काले तपसि मयि संस्थिते । देवाः सर्वे भयोद्विग्नाः किमयं साधयिष्यति ॥ २४ ॥ ऐंद्रं पदं विधातुर्वा वैष्णवं शैवमेव च । किं वांछति महाभागो मुनिस्तपसि संस्थितः ॥ २५ ॥ इति देवैः प्रेषितस्तु मुनिः सर्वार्थकोविदः । मत्राश्रमे परीक्षार्थं दुर्वासाः कोपवान् ययौ ॥ २६ ॥ नग्न उन्मत्ततुल्यः सन्नागतः पारणे मम । मह्यं भिक्षां मुने देहि यया तृप्तो भवाम्यहम् ॥ २७ ॥ इत्युक्ते तु मया दत्तमन्नं तस्मै महात्मने । न ज्ञातो मुनिमुख्योऽयं दुर्वासा आगतो गृहम् ॥ २८ ॥ तदन्नं सकलं भुक्त्वा द्रोणमात्रं

महामुनिः। उच्छिष्टं लिप्तवान् देहे गतो विकलमानसः ॥२९॥ मानसे मे महानंदः प्राप्तो दक्ष प्रजापते। धन्यं तपो मदीयं वै तृप्तः सर्वान्नभुक् जनः ॥३०॥ उपोषणे समायुक्तोऽहं तत्र तपसि स्थितः। पुनः स द्वादशीघस्रे पारणार्थं समाययौ ॥३१॥ दुर्वाससं पुनर्यातं तादृशं वेषमास्थितम्। महता हर्षयुक्तेनाऽपूजयं च महामुनिम् ॥३२॥ सर्वान्नं भुक्तवान् सद्य एवं षड्वारमाययौ। मम भावपरीक्षार्थं तपःखंडनकारकः ॥३३॥ पूर्वपुण्यप्रभावेण च्यावितो न मनागपि। त्रिमासोपोषितो भावयुक्तेन तपसाऽभवम् ॥३४॥ तपसा भावशुद्धेन परितुष्टो महामुनिः। स्वरूपं दर्शयामास योगरूपं महाद्भुतम् ॥३५॥ उवाच शुद्धिमापन्नो मुद्गल त्वं न संशयः। गच्छ स्वर्गं महाभाग अक्षयं भोक्तुमर्हसि ॥३६॥ स्वर्गलोका जिताः सर्वे त्वयाऽक्षय्यप्रकाशकाः। तपसा शुद्धभावेनाधुना तान् गच्छ मुद्गल ॥३७॥ इत्युक्त्वा मां स दुर्वासा गतः स्वाश्रममंडले। तस्मिन्नेव क्षणे स्वर्गाद्विमानं तत्र चागतम् ॥३८॥ विमानात् पुरुषो दिव्यभूषणैर्भूषितः परः। उत्तीर्य मे सुसान्निध्यमागतः पूजितो मया ॥३९॥ उवाच मधुरं वाक्यं चलेति त्वं मयासह। स्वर्गादागतवंतं वै विद्धि मुद्गल मां तथा ॥४०॥ बृहस्पतिपुरोगः स देव इंद्रः प्रतापवान्। त्वदर्थं संस्थितः स्वामिन् तेनाहं प्रेषितो मुने ॥४१॥ इदं विमानमारुह्य नानाभोगसमन्वितम्। मया सार्धं महाभाग चल स्वर्गं सुभोगदम् ॥४२॥ सूत उवाच। देवदूतवचो रम्यं श्रुत्वैवं मुद्गलो मुनिः। विनयावनतो भूत्वा तं पप्रच्छ मुदान्वितः ॥४३॥ मुद्गल उवाच। स्वर्गेषु सर्वलोकेषु के गुणाः संति तान् वद। दोषाः के तत्र तिष्ठंति श्रुत्वा यामि त्वरान्वितः ॥४४॥ सूत उवाच। मुद्गलस्य वचः श्रुत्वा देवदूतस्तमब्रवीत्। विनयेन च संतुष्टो यथातथ्यं विभागशः ॥४५॥ देवदूत उवाच। कर्मभूमिरियं ब्रह्मन् भोगभूमिस्तु सा मता। स्वर्गरूपा नरादीनां कर्मभोगप्रदायिनी ॥४६॥ नानासुखप्रदं तत्र गुणं वक्तुं न शक्यते। ईप्सितं लभते सर्वं सदा यौवनसंस्थितिः ॥४७॥ क्लमः स्वेदादिकं तत्र नैव शीतोष्णता तथा। अप्सरोभिर्विहाराश्च कामरूपा गतिर्भवेत् ॥४८॥ स्वकर्मतुल्यभोगाश्च भोक्तव्याः सर्वभावतः। ये ये भोगा देहिनां च ते ते तत्र समास्थिताः ॥४९॥ भोगभूमिः समाख्याता स्वर्गरूपा महामुने। वद तत्र च किं न्यूनं यतः पृच्छसि मां प्रभो ॥५०॥ त्वया नानाविधं कर्म तपसा साधितं मुने। स्वर्गलोकाः कृताः सर्वेऽक्षयास्तान् भोक्तुमर्हसि ॥५१॥ तत्र स्वर्गे त्रयो दोषास्तान् शृणुष्व महामुने। इह कर्म कृतं लोकैर्भोक्तव्यं शुभरूपकम् ॥५२॥ तत्र कर्म कृतं लोकैः तदेव फलहीनकम्। तेन लोको हि दुःख्यस्ति तदंते

किं भवेदिति ॥७३॥ एतादृशं मया कर्म पुण्यरूपं कृतं महत् । एतावंतं च कालं मे स्वर्गवासो भविष्यति ॥७४॥ एकं दोषं महांतं च जानीहि मुनिसत्तम । द्वितीयं शृणु दोषं त्वं कथयामि सविस्तरम् ॥७५॥ नाना स्वर्गेषु मित्राणि नाना प्रीतिविवर्धनाः । देवास्तत्र महाभाग सह तैर्मोदते स्वयम् ॥७६॥ सत्कर्म तस्य तैनैव भुक्तं स्वर्गे यथायथम् । पश्चात् पतनकाले तु तमधः पातयंति ते ॥७७॥ क्षणमेकं न तं कोऽपि स्नेहं पश्यति लोकपः । पतनस्य भयं चित्ते दोषोऽयं पातरूपकः ॥७८॥ तृतीयं दोषरूपं यच्छृणु त्वं भावपूर्वकम् । तद्वदिष्यामि ते प्रीत्या येन ज्ञानं भवेत्परम् ॥७९॥ सत्कर्मकारिणस्त्वन्ये महाभोगकरा मुने । संति स्वर्गेषु चानेके तान् दृष्ट्वा तपति स्वयम् ॥८०॥ धिङ् मां न्यूनविहारेण तिष्ठामि स्वल्पपुण्यतः । महापुण्यकरा अन्ये अधिकं विहरंत्युत ॥८१॥ सदा हृदि तपत्येवं स्वर्गभूमिस्वभावतः । हृदि तापात्मको दोषस्तृतीयः कथितो मया ॥८२॥ अनंतगुणसंयुक्तं स्वर्गं जानीहि तापद । दोषैस्त्रिभिः समायुक्तं महापुण्यप्रभावतः ॥८३॥ धन्यस्त्वं मुनिशार्दूल तत् स्वर्गं विजितं त्वया । भुंक्ष्व भोगान मनोज्ञान वै चल शीघ्रं मया सह ॥८४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुण्डचरिते मुद्गलदेवदूतसंवादो नामाष्टादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । देवदूतवचः श्रुत्वा मुद्गलस्तमथाब्रवीत् । शृणु शौनक माहात्म्यं मुनेस्तस्य सुयोगिनः ॥१॥ मुद्गल उवाच । देवदूत मया सर्वं त्वयोक्तं बुद्धिपूर्वकम् । श्रुतं पुनः प्रपृच्छामि तत् मे वद महामते ॥२॥ दोषैस्त्रिभिर्विहीनं तं कं लोकं वद मे प्रभो । सतस्तापविहीनाश्च मोदन्ते यत्र मानवाः ॥३॥ सूत उवाच । मुद्गलस्य वचः श्रुत्वा देवदूत उवाच ह । लोकं च तमहं तुभ्यं कथयामि सविस्तरम् ॥४॥ देवदूत उवाच । निष्कामकर्मणा विप्र ब्रह्मलोकः प्रलभ्यते । वैकुंठः शिवलोकश्च सौरः शाक्तो जनेन च ॥५॥ तत्राऽपि दोषयुक्तत्वं वर्तते मुनिसत्तम । ब्रह्मभूयपदं यच्च दोषहीनं प्रचक्षते ॥६॥ देवदूतमुखादित्थं श्रुत्वा वै मुद्गलो मुनिः । तं पप्रच्छ पुनः साधुर्भक्तिनम्रात्मकंधरः ॥७॥

मुद्गल उवाच। कुत्र तल्लभ्यते स्वामिन् वद सर्वमशेषतः। उपकारपरोऽसि त्वं तेन पृच्छामि तत्त्वतः ॥८॥ देवदूत उवाच। कर्मभूमिरियं ब्रह्मन्नत्र वै लभ्यते जनैः। धर्मार्थकाममोक्षादि ब्रह्मभूयं न संशयः ॥९॥ श्रुत्वा तस्य वचो रम्यं मुद्गलस्त-मुवाच ह गच्छ दूत नमस्तुभ्यं स्वर्गं प्रति नयाम्यहम् ॥१०॥ हृदि संतापसंयुक्तं पुनः पातभयात्मकम्। स्वर्गं नेच्छामि भो विद्वन् ब्रह्म तत्साधयाम्यहम् ॥११॥ देवदूत उवाचेदं मुद्गलं मुनिसत्तमम्। भाग्यहीनोऽसि नूनं त्वं स्वर्गं नैवाभिनंदसि ॥१२॥ स्वर्गेच्छा कस्य नैवास्ति नरस्य वद मां मुने। उग्रैस्तपोभिर्दानैश्च यज्ञैः स्वर्गश्च लभ्यते ॥१३॥ नानापुण्यादिकं कृत्वा सत्कर्मादिसुसाधनैः। इच्छंति मनुजाः स्वर्गं महासौख्यप्रदं परम् ॥१४॥ स स्वर्गश्च त्वया प्राप्तस्तपसोग्रैः सुसाधनैः। नेच्छसि त्वं महामूढ ज्ञानहीनोऽसि मे मतम् ॥१५॥ देवदूतं वदंतं तं तदा पुनरिदं वचः। मुद्गलः स्नेहसंयुक्तः प्रत्युवाच हसन्निव ॥१६॥ मुद्गल उवाच। किं मां मोहयसि प्राज्ञ देहोऽयं बंधनात्मकः। देहसौख्यकरः स्वर्गो मुक्तिदो न बुधैः स्मृतः ॥१७॥ तत्राऽपि हृदि संतापो वर्तते दूतसत्तम। तापत्रयसमायुक्तं विद्वान्नेच्छति कर्हिचित् ॥१८॥ गच्छ त्वं च महाभाग बृहस्पतिपुरोगमम्। इंद्रं प्रणामं कथय नाऽऽगतो मुनिरित्यपि ॥१९॥ एवमुक्त्वा नमस्कृत्य देवदूतमहं प्रभो। अग्रेश्च गतवान् शालां गतो दूतो यथागतम् ॥२०॥ मयाऽपि स्वाश्रमे तत्र स्थितं मनसि धारितम्। विधिना ब्रह्मवेदेषु नानारूपं प्रकथ्यते ॥२१॥ किं प्रमाणं भवेत्तेषां साधनीयं मया कथम्। पूर्णभावमविज्ञाय भ्रांतोऽहं नात्र संशयः ॥२२॥ अतः संशयनाशार्थं गमिष्यामि महामुनिम्। योगिश्रेष्ठैरंगिरसं वंद्यं वेदज्ञमुत्तमम् ॥२३॥ शब्दब्रह्मणि निष्णातं परे ब्रह्मणि तन्मयम्। अस्माकं मूलपुरुषं साक्षाद् ब्रह्मशरीरकम् ॥२४॥ इति निश्चितवांस्तत्र गतोऽहं मुनिसंन्निधौ। आश्रमोऽस्य मया दृष्टः सर्वभूताभयप्रदः ॥२५॥ नातपो न च शीतत्वं न क्रोधः कामसंभवः। न मात्सर्यादिकं तत्र समकालयुतो बभौ ॥२६॥ नावृष्टिर्नातिवृष्टिश्च ह्यकाले मरणं न च। न ग्रहादिकृता पीडा तत्र रक्षो-भयं न च ॥२७॥ सर्वशांतिप्रदः पूर्णस्तापसानां हितावहः। विस्मितेन सुपुण्येन प्रविष्टो भाग्ययोगतः ॥२८॥ तत्र नानामुनीनां च वत्साः परमशोभनाः। मया दृष्टा महाभाग वेदघोषनिनादिताः ॥२९॥ अग्निहोत्रादिभिर्युक्ता नानापक्षि-निनादिताः। वृक्षवल्लीसमायुक्ता नानापुष्पफलाश्रिताः ॥३०॥ नानासरोवराण्येव हंसकारंडवैर्बभुः। नानापक्षिवृतान्येव सुधारूपजलानि वै ॥३१॥ सुनिर्मलपयांस्येव मकरादियुतानि च। कमलैः कुमुदैर्नानाशोभमानानि षट्पदैः ॥३२॥ सिंह-

व्याघ्रमृगा नागा गजा गावश्च मूषिकाः। निर्वैराः प्राणिनस्तत्र निवसंति प्रजापते ॥३३॥ एवं दृष्ट्वा महाभाग आश्रमं हर्षसंयुतः। पश्यन् पुनश्च ह्यभवं विस्मितो निजचेतसि ॥३४॥ तं वै कुशासनस्थं च साक्षात् सूर्यमिवापरम्। तेजसा दीप्यमानं त्वपश्यमंगिरसं मुनिम् ॥३५॥ सिद्धैर्नानाविधैश्चैव योगिभिर्मुनिभिर्वृतम्। शिष्येभ्यो ब्रह्मविद्यां तां कथयंतं यथार्थतः ॥३६॥ दंडवत्तं प्रणम्यादौ भक्तिभावयुतोऽभवम्। प्रांजलिः प्रयतो भूत्वा संस्थितो मुनिसन्निधौ ॥३७॥ तव गोत्रभवं स्वामिन् मुद्गलं मुनिसत्तम। दर्शनार्थं समायातं विद्धि मां ब्रह्मदायक ॥३८॥ मदीयं वचनं श्रुत्वा प्रसन्नः प्राह मां मुनिः। वत्स त्वमागतस्तात तिष्ठाऽत्र मम संन्निधौ ॥३९॥ अविघ्नभावयुक्तेन तपस्तप्तं त्वया सुत। तेन मे दर्शनं प्राप्तं सत्पुत्रोऽसि न संशयः ॥४०॥ मुनेर्वचनमाकर्ण्य प्राप्तोऽहं परमां मुदम्। तत्र स्थितोऽभवं दक्ष सन्निधौ तस्य धीमतः ॥४१॥ कस्मिंश्चिद् दिवसे तत्र लब्ध्वाऽवसरमुत्तमम्। पृष्टो मया महायोगी शृण्वत्सु च मुनिष्वपि ॥४२॥ ज्ञातुमिच्छामि भो स्वामिन् वद मां करुणानिधे। अस्माकं त्वं गतिः साक्षात् सर्वेषां चैव भक्तितः ॥४३॥ सूत उवाच वचनं मुद्गलस्याऽपि श्रुत्वा तं पुनरब्रवीत्। अंगिरा भगवान् योगी प्रहसंस्तं प्रहर्षयन् ॥४४॥ अंगिरा उवाच। मत्तः पृच्छसि किं तात तद् ब्रूहि त्वं महामुने। भावनो मंत्रकर्ता त्वं पुराणाचार्य एव च ॥४५॥ मुद्गल उवाच। कथितं ब्रह्मवेदेषु नानाभावसमन्वितम्। किं प्रमाणं वेदितव्यं ब्रह्मभूयेप्सुभिः प्रभो ॥४६॥ अंगिरा उवाच। शृणु पुत्र प्रवक्ष्यामि वेदांतेयत्प्रभाषितम्। क्रमेण ब्रह्मलाभार्थं नानाब्रह्मनिरूपणम् ॥४७॥ अन्नं ब्रह्मेति यत्प्रोक्तं तत्रोपाधिः समागतः। अन्नरूपो महातेजा अन्नकोशमयं ततः ॥४८॥ प्राणो ब्रह्मेति यत्प्रोक्तं प्राणकोशप्रकाशकम्। मनो ब्रह्मेति जानीहि मनःकोशमयं तथा ॥४९॥ विज्ञानं ब्रह्म चोक्तं विज्ञानकोशप्रधारकम्। आनंदो ब्रह्म समतानंदकोशप्रभासकम् ॥५०॥ चैतन्यं ब्रह्म यत्प्रोक्तं महाकारणधारकम्। बिंदुब्रह्म यदुक्तं तज्ज्ञानदेहमयं मुने ॥५१॥ चिद्ब्रह्मेति समाख्यातं सोऽहं मात्रात्मकं सतम्। बोधो ब्रह्मेति वेदेषु स्वत उत्थानवेदकम् ॥५२॥ सांख्यं ब्रह्मेति यत्प्रोक्तं विदेहाधारकं मुने। कर्मज्ञाने तु वेदे च कथिते तु तदात्मके ॥५३॥ समं ब्रह्मेति जानीहि कथितं तदनात्मकम्। अव्यक्तं सहजं ब्रह्म ज्ञातव्यं ततिरूपकम् ॥५४॥ शक्तिब्रह्मेति वेदेषु ह्यसद्रूपप्रकाशकम्। सूर्यो ब्रह्मेति यत्प्रोक्तमात्मरूपं प्रकीर्तितम् ॥५५॥ विष्णुर्ब्रह्मेति यत्प्रोक्तमुभयात्मकधारकम्। शिवो ब्रह्मेति शास्त्रेषु निर्मोहस्य प्रकाशकम् ॥५६॥ स्वानंदो ब्रह्मवेदे च संयोगमयमुत्तमम्। निर्वृत्तिर्ब्रह्मशास्त्रेषु ह्ययोगाधारकं

परम् ॥५७॥ एवं नानाप्रकारैश्च वेदादौ च प्रकथ्यते। मुनिभिर्ब्रह्मवादज्ञैः सर्वं तथ्यं प्रमाणतः ॥५८॥ बृंहत्यथो बृंहयति यद्ब्रह्म श्रुतिवाक्यतः। तदेव ब्रह्मभूतत्वं ज्ञातव्यं मुनिभिः सदा ॥५९॥ अनाद्यात्मचिदाद्यैर्यद्युक्तं ब्रह्म प्रकथ्यते। तदेवोपाधियुक्तं वै योगिभिः सुविचारितम् ॥६०॥ ब्रह्मेति ब्रह्म विज्ञेयं तच्च योगेन लभ्यते। तदर्थं मथनं सर्वं कर्मज्ञानादिकस्य च ॥६१॥ तदेव ब्रह्म प्रत्यक्षं ब्रह्मणस्पतिवाचकम्। ब्रह्मणां ब्रह्म विख्यातं वेदस्मृतिसुभाषितम् ॥६२॥ बृंहत्यथो बृंहयति गणशब्दः प्रकीर्तितः। समूहे गणधातुश्च कविभिः कथितो भवेत् ॥६३॥ बाह्यांतरादिकानां च समूहो गण उच्यते। तत्राऽभेदेन योगेन प्राप्यते योगिभिः परः ॥६४॥ अन्नानां बहवो भेदा बाह्यांतरविभावतः। तदेव गणवाच्यं च ज्ञातव्यं विबुधैः सदा ॥६५॥ इत्यादयो गणास्तस्यानंता ब्रह्मप्रवाचकाः। तेषां स्वामी गणेशानः स एव ब्रह्मणस्पतिः ॥६६॥ तं भजस्व महाभाग ब्रह्मभूयं यदीच्छसि। तस्यावतारदेहा यं ज्ञानादिब्रह्मसंज्ञिताः ॥६७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते अंगिरामुद्गलसंवादो नामैकोनविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच। वचः श्रुत्वा चांगिरसो हृष्टरोमा स मुद्गलः। विनयावनतो भूत्वोवाच तं विस्मयन्निव ॥१॥ मुद्गल उवाच। तस्यावतारमाहात्म्यं कथयस्व महामुने। तत्क्रमेण भजिष्यामि ब्रह्मभूयस्य सिद्धये ॥२॥ अंगिरा उवाच। अनंता ह्यवताराश्च गणेशस्य महात्मनः। न शक्यंते च ते वक्तुं मया वर्षशतैरपि ॥३॥ संक्षेपेण प्रवक्ष्यामि मुख्यानां मुख्यतां गतान्। अवतारांश्च तस्याष्टौ विख्यातान् ब्रह्मधारकान् ॥४॥ वक्रतुंडावतारश्च देहानां ब्रह्मधारकः। मत्सरासुरहंता स सिंहवाहनगः स्मृतः ॥५॥ एकदंतावतारो वै देहिनां ब्रह्मधारकः। मदासुरस्य हंता स आखुवाहनगः स्मृतः ॥६॥ महोदर इति ख्यातो ज्ञानब्रह्मप्रकाशकः। मोहासुरस्य शत्रुर्वै आखुवाहनगः स्मृतः ॥७॥ गजाननः स विज्ञेयः सांख्येभ्यः सिद्धि-

शक्तिब्रह्माखुगः सद्यत्तस्य धारक दायकः। लोभासुरप्रहर्ता वै आखुगश्च प्रकीर्तितः ॥८॥ लंबोदरावतारो वै क्रोधासुरनिबर्हणः। शक्तिब्रह्माखुगः सद्यत्तस्य धारक दायकः। लोमासुरप्रहर्ता वै आखुगश्च प्रकीर्तितः ॥८॥ विघ्नराजावतारश्च उच्यते ॥९॥ विकटो नाम विख्यातः कामासुरविदाहकः। मयूरवाहनश्चाऽयं सौरब्रह्मधरः स्मृतः ॥१०॥ विघ्नराजावतारश्च

शेषवाहन उच्यते। ममतासुरहंता स विष्णुब्रह्मेति वाचकः ॥११॥ धूम्रवर्णावतारश्चाभिमानासुरनाशकः। आखुवाहन एवाऽसौ शिवात्मा तु स उच्यते ॥१२॥ एतेऽष्टौ ते मया प्रोक्ता गणेशांशा विनायकाः। एत भजनमात्रेण स्वस्व-ब्रह्मप्रदायकाः ॥१३॥ स्वानंदवासकारी यो गणेशानः प्रकथ्यते। स्वानंदे योगिभिर्दृष्टो ब्रह्मण्येव न संशयः ॥१४॥ तस्यावतारभूताश्चाऽष्टौ विघ्नहरणाः स्मृताः। स्वानंदभजनेनैव लीनास्तत्र भवंति ते ॥१५॥ माया तत्र स्वयं लीना भविष्यति सुपुत्रक। संयोगे मौनभावश्च समाधिः प्राप्यते जनैः ॥१६॥ अयोगिगणराजस्य भजनेन विनश्यति। मायाभेदमयं ब्रह्म निवृत्तिः प्राप्यते परा ॥१७॥ योगात्मकगणेशानो ब्रह्मणस्पतिवाचकः। तत्र शांतिः समाख्याता योगरूपा जनैः कृता ॥१८॥ नानाशांतिप्रभेदश्च स्थाने स्थाने प्रकथ्यते। शांतीनां शांतिरूपा सा योगशांतिः प्रकीर्तिता ॥१९॥ योगस्य योगता दृष्टा सर्वब्रह्मसुपुत्रक। न योगात् परमं ब्रह्म ब्रह्मभूतेन लभ्यते ॥२०॥ एतदेव परं गुह्यं कथितं वत्स तेऽखिलम्। भज त्वं सर्वभावेन गणेशं ब्रह्मनायकम् ॥२१॥ मया पूर्णं तपश्चीर्णं गणेशस्य महात्मनः। मह्यं दत्तो वरस्तेन वांछितो भक्तितोषितः ॥२२॥ तव वंशे च गाणेशा भविष्यंति विशेषतः। तत्राऽपि मुद्गलोऽत्यंतं गाणपत्यो भविष्यति ॥२३॥ न भूतो न भविष्यति वा भक्तराजः स एकराट् ॥२४॥ मुद्गलस्य प्रणामेन स्पर्श-मुद्गलसमो भक्तो गणेशस्य प्रदृश्यते। न भूतो न भविष्यति वा भक्तराजः स एकराट् ॥२४॥ मुद्गलस्य प्रणामेन स्पर्श-भाषणदर्शनैः। वायुस्पर्शादिभिर्भावैरुद्धरिष्यंति जंतवः ॥२५॥ मह्यमेवं वरं दत्त्वा गणेशोऽन्तर्दधे मुने। स त्वं मुद्गल-नामासि मम वंशस्य भूषणम् ॥२६॥ धन्यो वंशो मदीयोऽद्य गाणपत्यश्च यत्र वै। समुत्पन्ना महाभागा जंतूनां तारकाः स्मृताः ॥२७॥ त्वं साक्षात् मूर्तिमांस्तेषु गाणपत्यः प्रतापवान्। समुत्पन्नो महायोगी भविष्यसि न संशयः ॥२८॥ मुद्गलं चैवमुक्त्वाऽसौ अंगिरा उपदिष्टवान्। एकाक्षरमहामंत्रं गणेशस्य यथाविधि ॥२९॥ गच्छ पुत्र त्वमद्यैव तपसे वनमुत्तमम्। आराधय गणेशं स दर्शनं ते प्रदास्यति ॥३०॥ प्रणम्याऽसौ चांगिरसं मुद्गलः प्रययौ वनम्। एकनिष्ठतया तेपे तपः पूर्णं महाद्भुतम् ॥३१॥ एकाक्षरविधानेन सांगेन परितुष्टवान्। गणेशोऽब्दसहस्रेण दिव्येन च समागतः ॥३२॥ आखुवाहश्चतु-र्बाहुः सिद्धिबुद्धिसमन्वितः। प्रमोदामोदकाद्यैश्च संवृतो भक्तवत्सलः ॥३३॥ नानाभूषणशोभाढ्यो गजवक्त्रो महोदरः।

एकदंतस्त्रिनेत्रश्च चतुरायुधभूषितः ॥३४॥ चिंतामणिमणिं बिभ्रद् हृदये द्युतिजालकम् । महाभक्तमुवाचेत्थं हर्षयन् सर्वभावतः ॥३५॥ श्रीगणेश उवाच । वरं वृणु महाभाग मुद्गल स्वेप्सितं हृदि। दास्यामि परमप्रीत एकाक्षरविधानतः ॥३६॥ सूत उवाच। गणेशवचनं श्रुत्वा मुद्गलः प्रणनाम तम् । बद्धांजलिपुटो भूत्वा पूजयामास भक्तितः ॥३७॥ पूजयित्वा यथान्यायं प्रहृष्टहृदयो मुनिः । पुलकांकितसर्वांगः साश्रुनेत्रो बभूव ह ॥३८॥ सगद्गदमुवाचाऽथ तं प्रणम्य पुनः पुनः । महता भक्तिभावेन तथा चांगिरसो मुनिः ॥३९॥ मुद्गल उवाच। धन्यो वंशो मदीयोऽद्य धन्यं जन्म वयोऽपि च । विद्या ज्ञानं तपस्तीर्थं धन्यं त्वद्दर्शनात् प्रभो ॥४०॥ इयं धन्याऽद्य पृथ्वी च वृक्षाः पुष्पफलान्विताः। पशुपक्षिलताद्या ये आगतोऽत्र महाप्रभुः ॥४१॥ इत्युक्त्वा तं प्रतुष्टाव गणेशं सर्वसिद्धिदम् । स्तोत्रेण स्वात्मनिष्ठः सन् भक्त्या परमया युतः ॥४२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते गणेशमुद्गलसमागमो नाम विंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः॥ शौनक उवाच । कथं स्तुतिः कृता तेन गणेशस्य महात्मनः । तां मे वद महाभाग सर्वज्ञोऽसि मतो बुधैः ॥१॥ सूत उवाच। भवते कथयिष्यामि भावयुक्तेन चेतसा । स्तुतिं कृतां गणेशस्य मुद्गलेन च तां मुने ॥२॥ मुद्गल उवाच। किं स्तौमि त्वां गणाध्यक्ष वेदैः स्तोतुं न शक्यते । ब्रह्मादिभिश्च योगींद्रैर्यथामति च वच्मि भोः ॥३॥ त्वद्दर्शनप्रभावेण शक्तोऽस्मि न च संशयः । त्वदनुग्रहतः सर्वे स्तोतुं शक्ता भवंति वै ॥४॥ नमस्ते गणेशाय सर्वादिभूम्ने परेषां परेशाय वेदातिगाय । परं मायिने मायिनां मोहदात्रे ह्यगण्याय गण्याय ते वै नमस्ते ॥५॥ पुराणादिशास्त्रैः सदा संस्तुताय शिवाद्यैः सुरेंद्रैर्नमस्ते स्तुताय। अनाद्यंतमध्यादिभेदैर्विहीनाय नानामयायास्तु सर्वेश्वराय ॥६॥ नमो लक्षवेदाष्टयोनिप्रचारतदाकाररूपाय योगेन योगिन् । नमो ह्यन्नभूताय सर्वाकराय कलानंतरूपाय पुष्टिप्रदाय ॥७॥ नमो भूमिरूपाय नानाप्रभेदधरायाथ धाराय नित्याय तेऽस्तु । जलाधिस्वरूपाय तृप्तिप्रदाय तदाकारहीनाय साराय धाम्ने ॥८॥ नमस्तेजसां द्योतरूपाय ढुंढे प्रकाशाय भोक्रे च सर्वस्थिताय। नमो वायुरूपाय ते चालकाय प्रचारस्वरूपाय भिन्नाय तस्मात् ॥९॥ नमः

स्वस्वरूपाय दीप्ताय पूर्णप्रकाशाय भूतादिकब्रह्मदात्रे। नमः स्थूलभोगस्वरूपाय जाग्रन्मयाय प्रभो राजसायाथ तेऽस्तु ॥१०॥ नमः स्वप्नमायामयायापि सूक्ष्मस्वरूपाय सर्वांतरे संस्थिताय। नमः कारणायोभयब्रह्मदाय समायापि सौषुप्तभोगिन्नमस्ते ॥११॥ नमश्चेतनाधाररूपाय तेऽस्तु प्रयत्नप्रदाय त्रिभोगप्रदाय। गुणेशाय चैतन्यधाराय तेऽस्तु नमो नादरूपाय कालाय चात्मन् ॥१२॥ नमो बिंदुरूपाय वक्राननाय नमो देहमायाविहाराय तुभ्यम्। नमश्चित्स्वरूपाय सोऽहंप्रदाय निराकारदेहिस्वरूपाय तेऽस्तु ॥१३॥ सदा ह्येकदंताय जन्मादिगाय परायाथ शून्याय दैत्यांतकाय। सदादेश शत्रो महाखुध्वजाय नमोऽनादिसिद्धाय मायाधराय ॥१४॥ नमो ज्ञानरूपाय नानाविहारप्रदायाथ पूर्णाय सर्वत्रगाय। नमो मायिमायादिभेदाकराय सदा बोधरूपाय ते वै महात्मन् ॥१५॥ नमः सांख्यरूपाय वै देहिनां वै पराय स्वसंभोगहीनाय देव। सदा केवलब्रह्मभूताय तेऽस्तु नमो ज्ञानहीनाय मेधामयाय ॥१६॥ नमः स्वस्वरूपाय चानंददाय समाधिस्वरूपाय मौनात्मकाय। स्वसंवेद्ययोगेन लभ्याय तेऽस्तु विनात्मप्रबोधाय सर्वाधिपाय ॥१७॥ नमः पंचपंचादिमायाकराय चतुर्धा चतुर्धा विभिन्नाय धर्मिन्। असद्रूपकायाऽथ शक्त्यात्मकाय नमोऽभेदभेदादिनानात्मकाय ॥१८॥ नमः सत्स्वरूपाय सूर्यात्मकाय सदात्मप्रबोधाय मायाधराय। अखंडामृतायाद्विनीयाय तेऽस्तु सदा कालकालाय मोक्षप्रदाय ॥१९॥ नमो विष्णुरूपाय चानंददाय समाय स्वमायोभयत्वाच्च एव। अनंताय भेदादिहीनाय भूम्ने सदा भेदरूपाय सर्वात्मकाय ॥२०॥ नमः शंभुरूपाय नेतिप्रदाय सदा मोहहीनाय च त्र्यंबकाय। त्रिधा मायया भासितुर्यस्वरूपपरब्रह्मरूपाय ते धूम्रवर्ण ॥२१॥ चतुर्णामभेदाय संयोगकारिन् स्वसंवेद्यभावेन विघ्नाधिपाय। स्वभक्तस्य पक्षे सदा संस्थिताय गणाधीश हंत्रे महादैत्यकानाम् ॥२२॥ नमः कर्मरूपाय कर्मादिकर्त्रे जनानां स्वकर्मादिना भोगदात्रे। नमो ज्ञानरूपाय निःसंगदाय सदा कर्महीनाय ते केवलाय ॥२३॥ नमस्ते समानप्रदायोभयाय समायाऽथ योगेन चानंददाय। नमः सहजब्रह्मभूयप्रदाय त्रिधाम्ने त्रिहीनाय संतोषदाय ॥२४॥ चतुर्था स्थितीनां सदा पालकाय निजात्मस्वरूपाय संयोगकारिन्। अपाराय नाना चतुर्णां समूहस्वधीशाय हेरंब तुभ्यं नमस्ते ॥२५॥ अयोगाय मायाविहीनाय तुभ्यं नमस्ते निरानंदरूपाय नित्यम्। निवृत्तिस्वरूपाय भिन्नाय तेऽस्तु नमो योगरूपात्समाधिस्थिताय ॥२६॥ नमो योगशांतिस्वरूपाय शांतिप्रदात्रे गणेशाय योगाय तुभ्यम्। सदा ब्रह्मणां ब्रह्मदात्रेऽखिलेश गणानां

पते ज्येष्ठराजाय तेऽस्तु ॥२७॥ नमो ब्रह्मणे सृष्टिकर्त्रे सदा वै रजोधारिणे वेदशास्त्रादिकर्त्रे । सदा सृष्टिहीनाय साम्याय धाम्ने नमो मायिने मध्यवृत्तिस्थिताय ॥२८॥ नमः सत्वरूपाय विष्णुप्रभेदाज्जगत्पालकायाथ मायाधराय । नमः सत्त्वहीनाय सर्वातिगाय कवीनां पते विघ्नहंत्रे नमस्ते ॥२९॥ नमस्तामसायाऽथ संहारकर्त्रे त्रिनेत्रप्रदीपाय शक्तेर्धराय । सदा कालरूपाय कैलासदाय तमोहीनरूपाय लंबोदराय ॥३०॥ नमः कर्मणां मूलबीजाय तेऽस्तु नमो भानुरूपाय तेजोमयाय । त्रिकालादिबोधाय सूर्याय भूम्ने प्रकाशैर्विहीनाय हेरंब तेऽस्तु ॥३१॥ नमः शक्तिरूपाय मोहप्रदाय क्रियाधारभूताय नानाभ्रमाय । अनंतस्वरूपाधिलीलाधराय नमः शक्तिहीनाय सिद्धीश तुभ्यम् ॥३२॥ नमश्चंद्ररूपाय पुष्टिप्रदाय कलाभिस्त्रिलोकस्थभूतादिकेभ्यः । सुधाधारकायाऽथ नक्षत्रकादिप्रकाशाय ते ह्यन्नहीनाय ढुंढे ॥३३॥ नमः कामरूपाय कामारये ते नमस्ते गजाकारतुंडाय तुभ्यम् । हरींद्रादिदेवैः सदा संस्तुताय शुकाद्यैर्महद्भिश्च वंद्याय तेऽस्तु ॥३४॥ अनित्याय नित्याय देवेश देव सकामाय निष्कामभावप्रदाय । सदा सर्वपूज्याय सर्वाधिपाय जलेशेंद्रशेषादिभिः संस्तुताय ॥३५॥ नमः काश्यपायाऽथ वै कापिलाय वरेण्यस्य पुत्राय पाराशराय । नमः शंभुपुत्राय पार्श्वात्मजाय नमो भक्तिभोक्त्रे गणाधीश तेऽस्तु ॥३६॥ नमो माधवस्त्रीसुतायाऽथ तुभ्यं नमः सर्वमात्रे नमः सर्वपित्रे । नमः सर्वपुत्राय सर्वात्मकाय नमः सर्वसर्वाय नानामयाय ॥३७॥ नमः पाशधारिन् नमो दंतधारिन् सृणिं बिभृते वै सदानंददायिन् । नमः पुत्रपौत्रादि राज्यप्रदात्रे नमो भुक्तिमुक्तिप्रदायाऽथ तुभ्यम् ॥३८॥ नमोऽनंतशक्ते गुणानामधीश मयूरेश योगेश मायेश तुभ्यम् । नमोऽव्यक्तसुव्यक्तरूपाय दंतिन् गजाकारसाकारमोहाय तेऽस्तु ॥३९॥ नमो ह्येकरूपाय नानाप्रभेदादये विघ्नपालाय शुंडाधराय । अनाथाय नाथाय देवादिकानां निवासाय सर्वात्मनां ते नमो वै ॥४०॥ नमस्त्वंपदाकारदेहाय तुभ्यं नमस्तत्पदाकारतुंडाय तेऽस्तु । तयोरेकभावाऽसिरूपप्रयुक्तशरीराय साक्षात् सुधाम्ने नमस्ते ॥४१॥ नमो वामभागेन सिद्धिस्वरूपाधृतामोहमायाजनानां जनित्री । सदा बुद्धिरूपा धृता दक्षिणांगे न पुंस्त्रीस्वरूपाऽसिरूपाय तेऽस्तु ॥४२॥ नमो भ्रामरी त्वंपदाधारशक्तिः सदा तत्पदा कामदात्री ह्यभेदा । तयोरेकभावे स्वसंवेद्यनाम्नि पुरे मस्तके वासकारिंश्च तासाम् ॥४३॥ अखंडामृतं यत्र तोयं सुताम्रं समुद्रे स्थितं चेक्षुसंज्ञे नमस्ते । निराधाररूपे च पानेन तस्य न पुंस्त्रीप्रदायाऽत्र खेलंश्च तेऽस्तु ॥४४॥ जनानां सदा त्र्यक्षरं शृण्वतां च गणेशेति चानंददायिन्नमस्ते । सकृज्जल्पतां जन्ममृत्यू न

तेषामपारप्रधाम्ने च ढुंढीश्वराय ॥४५॥ नवोपासका ब्रह्मभूता न चित्रं जनेभ्यश्च संस्पर्शनैर्ब्रह्मदा वै। सुरेंद्रादिपूज्या गणेशस्वरूपा भवयुर्नमस्ते नमस्ते गणेश ॥४६॥ सूत उवाच। इति स्तुत्वा गणेशानं मुद्गलो मौनधारकः। पादौ धृत्वा गणेशस्य पतितो दंडवत् क्षितौ ॥४७॥ समुत्थाप्य स्वभक्तं तं सस्वजे परमादरात्। गजाननः प्रसन्नात्मा तमुवाच महामुनिम् ॥४८॥ गणेश उवाच। त्वया स्तोत्रं कृतं यच्च मदीयं मम संनिधौ। स्तोत्रोत्तमं प्रविख्यातं भविष्यति न संशयः ॥४९॥ स्तोत्रोत्तमेन मां स्तौति तस्मै मुक्तिं सभुक्तिकाम्। ददामि दृढभक्तिं च मदीयां नात्र संशयः ॥५०॥ न संकटं न रोगं च प्राप्नोति स नरोत्तमः। पुत्रपौत्रादिकं सर्वं धनं धान्यं ददामि वै ॥५१॥ मारणोच्चाटनादीनि नश्यंति पठनेन च। एकविंशतिवारं च तथा तावद्दिनावधि ॥५२॥ कारागृहादिजाः पीडा नश्यंति पठनेन च। मनसेप्सितमाप्नोति नरो मे परमप्रियः ॥५३॥ त्वं तु मत्तो वरान् ब्रूहि दास्येऽहं भक्तियंत्रितः। त्वत्समो नास्ति भावज्ञो वशे तेऽहं सदा स्थितः ॥५४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते गणेशस्तोत्रोत्तमवर्णने एकविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच ॥ गणेशवचनं श्रुत्वा भक्तिभावसमन्वितः। मुद्गलः प्रणिपत्यैनमृचिवान् हर्षपूरितः ॥१॥ मुद्गल उवाच ॥ किं मां लोभयसे ढुंढे वृणोमि च न किंचन। तव वाक्यानुरोधेन वृणोमि त्वं ददासि चेत् ॥२॥ तव भक्तिं दृढां देहि सदाऽखण्डात्मिकां प्रभो। संपूर्णां भक्तिमिच्छामि गाणेशीं यत्रकुत्र च ॥३॥ मुद्गलस्य वचः श्रुत्वा विस्मितो गणराट् स्वयम्। अहो संपूर्णभावेन भक्तिमेकां वृणोषि यत् ॥४॥ गणेश उवाच ॥ मदीया त्वचला भक्तिः संपूर्णा प्रभविष्यति। त्रैलोक्ये तव भाग्येन समं भाग्यं न विद्यते ॥५॥ भक्तिः सा नवधा विप्र चित्ते ते रसदायिका। दशमं नास्ति संस्थानं चित्तस्य रसधारणे ॥६॥ श्रवणं कीर्तनं चैव स्मरणं पादसेवनम्। अर्चनं वंदनं दास्यं सख्यं देहनिवेदनम् ॥७॥ नवचिह्नं प्रवक्ष्यामि भक्तिमाहात्म्यमुत्तमम्। तेनैव प्राप्यते भक्तिर्जनैर्मे नाऽत्र संशयः ॥८॥ श्रवणं मद्गुणानां च मननं तादृशं

पुनः। तस्यानुकूलं कर्तव्यं जायतेऽनुभवस्ततः ॥९॥ रसोत्पत्तिस्त्वनुभवे तत्र सर्वा प्रजायते। श्रवणं मे तया कार्यं गुणानां जंतुना सदा ॥१०॥ प्रियं भवति नान्यच्च मदेकरसभावतः। तेनान्यश्रवणे प्रीतिर्यदा नोत्पद्यते क्वचित् ॥११॥ तदा संपूर्णतां प्राप्ता भक्तिर्मे श्रवणात्मिका। अहं वसामि तत्कर्णे सदा तद्भक्तिलालसः ॥१२॥ मद्गुणानां सदा यस्य कीर्तनं रसदायकम्। नान्यकीर्तनभावेषु तस्य वै मनसो रसः ॥१३॥ तदा भक्तिः सुसंपूर्णा मदीया कीर्तनात्मिका। प्राप्ता तेन सदा तस्य जिह्वाग्रे प्रवसाम्यहम् ॥१४॥ मदीयकार्यभावस्य विस्मृतिर्नैव जायते। समये सावधानो यो व्रतपूजादि-मार्गतः ॥१५॥ तेन स्मरणरूपा सा भक्तिः प्राप्ता महामुने। स्मृत्यां वसामि तस्याऽहं भक्तिभोगार्थमेव हि ॥१६॥ मदीय-पादपद्मं यत्सत्यमन्यदसत्यकम्। ज्ञात्वा देहश्रमे वै यो नालस्येन प्रवर्तते ॥१७॥ मम पादाश्रयः पूर्णः सदा येन कृतो मुने। अन्यत्राऽलस्यभावेन मिथ्याभूते स्थितेन च ॥१८॥ तस्य भक्तिः समुत्पन्ना पादसेवनरूपिका। तस्याऽलस-विहीनेऽहं देहे स्थास्यामि निश्चलः ॥१९॥ सांगोपांगं प्रकर्तव्यं मदीयं कर्म भावतः। अन्यच्च यादृशं जातं तादृशं किल तद्भवेत् ॥२०॥ अर्चनात्मकभक्तिः सा सदा प्राप्ता नरेण वै। सांगोपांगतया तत्र वसेयं भक्तिभावितः ॥२१॥ न मत्समं भवेज्जातु वेदादिषु विचारतः। मयि श्रेष्ठत्वमापन्नं श्रेष्ठं मन्नमनं भवेत् ॥२२॥ यदा वै मत्समं नास्ति चित्ते यस्य प्रतिष्ठितम्। तदा वंदनजा भक्तिः प्राप्ता तेन न संशयः ॥२३॥ तस्य श्रेष्ठत्वभावेऽहं सदा तिष्ठामि सर्वतः। भक्तिभोक्ता स्वयं भूत्वाऽन्यत्र श्रेष्ठत्वनाशकः ॥२४॥ गणेशोपासनामार्गो यथा शास्त्रेषु दृश्यते। तं दृष्ट्वा तादृशं भूत्वा गाणपत्योऽभिमानतः ॥२५॥ मां भजेत् यः स्वभावेन गाणेशाऽहंकृतेर्धरः। तेन दास्यं समापन्नं भक्तिभावेन भावितम् ॥२६॥ गाणपत्यस्वभावेऽहं तं स्थास्यामि स्वभावतः। दास्यभक्तिविभोगार्थमेकनिष्ठाप्रकाशकः ॥२७॥ मित्रस्य सन्निधाने तु यथा गोप्यं न विद्यते। बाह्यांतरं च मित्रस्य मित्रं जानाति सर्वतः ॥२८॥ तथा बाह्यांतरैर्हीनो दंभहीनः स्वभावतः। भजते मां नरो यस्तु सख्यं प्राप्तं मदीयकम् ॥२९॥ यत्र कुत्र स्थितेनैव यद्यन् मनसि संधृतम्। गणेश्वरेण तज्ज्ञातं सर्वांतर्यामिनाऽखिलम् ॥३०॥ एतादृशविचारेण भययुक्तेन चेतसा। सर्वभावेन मां यस्तु भजतेऽनन्यचेतसा ॥३१॥ तस्य सख्ये सदाऽहं वै तिष्ठेयं भक्तिलोलुपः। बाह्यांतरैकभावेषु मोहितस्तस्य चेष्टया ॥३२॥ पंचधा चित्तभूमिर्या तां त्यक्त्वाऽहं तया विना। गणेशोऽहं न संदेहो येनात्मेति निवेदितः ॥३३॥ अहंभावविहीनेऽहं भक्तिभावेन संस्थितः। नैव

भिन्नो भविष्यामि तस्माज्जानीहि भो मुने ॥३४॥ इत्येवं नवधा भक्तिं रसयुक्तां करोति यः। सहते क्षणमात्रं न चित्तं मद्रसहीनकम् ॥३५॥ तदा संपूर्णभक्तो मे जातो वै नात्र संशयः। अहं मोहेन संयुक्तस्तत्र तिष्ठामि सर्वदा ॥३६॥ न क्षणं तं परित्यक्तुं शक्नोऽहं भक्तियंत्रितः। नवधा चित्तभावेन तं रक्षिष्यामि सर्वदा ॥३७॥ न च भक्तिसमो भावो मम प्रीतिकरः कदा। तेन बद्धो भविष्यामि हृदये तस्य धीमतः ॥३८॥ नवधा मां भजंते ये नरा नानाविधाः सदा। तेषां यत्राधिकत्वं च भक्ताधिकस्वभावतः ॥३९॥ अधिका च रसोत्पत्तिर्यत्र भक्तौ समागता। तस्यां मुख्यत्वमापन्नं नवधा भवनं सति ॥४०॥ तत्र मुख्यस्वभावेन भक्तराजाश्च ये स्थिताः। तान् वदामि महाभाग शृणु तत्त्वमिदं महत् ॥४१॥ श्रवणे मद्गुणानां यदाधिक्यं खलु विद्यते। तत्र वै कार्तिकेयश्च भक्तराजः प्रकीर्तितः ॥४२॥ कीर्तने भक्तराजस्तु सूर्य आत्मा शरीरिणाम्। स्मरणे रामचंद्रो वै भक्तराजः स्मृतो बुधैः ॥४३॥ पार्वती पादसेवायां भक्ताधीशा च संस्मृता। महाविष्णुः स्वयं राजा भजनामर्चने मम ॥४४॥ वंदने भक्तराजेन्द्रः शंकरः सर्वभावतः। दास्ये भक्ताधिपः प्रोक्तो रामो वै जमदग्निजः ॥४५॥ सख्ये चतुर्मुखः साक्षाद्भक्तानामधिपः स्मृतः। वैयासकिः शुको भूपो मयि त्वात्मनिवेदिनाम् ॥४६॥ एते भक्ताधिपाः प्रोक्ता अंतरायविहीनकाः। मां भजंते महाभागा ब्रह्मभूतास्ततोऽप्यहो ॥४७॥ त्वं तेषां च सदा राजा कृतो मे नाऽत्र संशयः। पूर्णभक्तिस्वभावेन मां भजिष्यसि यत्नतः ॥४८॥ नवधा भक्तिभावेषु नवाधिक्यं भविष्यति। पूर्णभक्तो मदीयस्त्वं भक्तेशश्च कृतो मया ॥४९॥ मद्भक्तो त्वत्समो नैवाभवन्न प्रभविष्यति। वर्तते न कदा विप्र त्वदर्शनोऽहमंजसा ॥५०॥ त्वदंगवायुना स्पृष्टाः पूता वै दर्शनादिभिः। भविष्यंति न संदेहो ब्रह्मबुद्धियुतास्तथा ॥५१॥ सूत उवाच। एवमुक्त्वांतर्दधेऽसौ गणेशो ब्रह्मनायकः। तदादि स मुनिः प्रोक्तः सर्वेषां वेधसां गतः ॥५२॥ मुद्गलस्य चरित्रं यः शृणुयाद्वा पठेन्नरः। श्रावयेद्भावयुक्तेभ्यः स वै सर्वार्थसिद्धिभाक् ॥५३॥ इह भुक्त्वाऽखिलान् भोगानंते ब्रह्ममयो भवेत्। भक्तराजेंद्रता तस्य विघ्नराज्ये भविष्यति ॥५४॥

॥ इति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मुद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते मुद्गलवरप्रदानं नाम द्वाविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच ॥ धन्योऽसि योगिराजोऽसि भक्तराजेन्द्रता च ते। मदीयं भाग्ययोगेन संप्राप्तं दर्शनं प्रभो ॥१॥ अष्टौ ये गणराजस्य ह्यवताराः प्रकीर्तिताः। तान् मे कथय योगीश विस्तरेण महामुने ॥२॥ दैत्याः संनिहिता-स्तैस्तु तेषां जन्मादिकं परम्। सकलं युद्धभागं मां कथयस्व विशेषतः ॥३॥ एतादृशा महादैत्या न श्रुताः कुत्रचित्प्रभो। विस्मापयति चेयं मां कथा पापापनोदिनी ॥४॥ मुद्गल उवाच। प्रजापते कथां दिव्यां तव भावनियंत्रितः। कथयामि समासेन गणनाथप्रमोदिनीम् ॥५॥ प्रथमं वक्रतुंडस्य चरित्रं शृणु पुण्यदम्। मत्सरासुरयुद्धं च गणेशेन महाद्भुतम् ॥६॥ इंद्रस्येंद्रपदप्राप्तिर्जाता यस्मिन् दिने परा। तस्मिन् दिने महोत्साहो वार्षिकः क्रियते मुने ॥७॥ कदाचिदमरावत्यां महोत्सवपरायणः। सुभद्रासनगोतिष्ठद्देवेंद्रः सर्वपूजितः ॥८॥ तावद्देवाः सगंधर्वा अप्सराभिः समागताः। नागा यक्षा मुनींद्राश्च राक्षसा देवयोषितः ॥९॥ आगतो भगवांस्तत्र सर्वभूतगणैर्वृतः। स्कंदनंदीश्वराद्यैश्च पार्वत्या सह शंकरः ॥१०॥ लक्ष्म्या सह स्वयं विष्णुर्विष्वक्सेनादिभिर्गणैः। वेदादिभिर्वृतो ब्रह्मा प्रजापतिभिराययौ ॥११॥ सर्वग्रहैः समायुक्तो भानुस्तत्रागमत् स्वयम्। अग्निश्च धर्मराजश्च कुबेरो वरुणस्तथा ॥१२॥ आदित्या मनवश्चैव वसवो रुद्रकास्तथा। साध्या विद्याधरा विश्वेदेवास्तत्राययुः प्रभो ॥१३॥ अश्विनौ शेषनागश्च बहवस्तत्र चागताः। उपविष्टा मुदा युक्ता उत्सवे वै शतक्रतोः ॥१४॥ तत्र नाना कथाश्चक्रुरानंदपरिवर्धिनीः। मुनयो भावसंयुक्ताः पुरातनभवा मुने ॥१५॥ नृत्यमप्सरसश्च-क्रुर्गंधर्वा ललितं जगुः। हाहाहूहूमुखा अन्ये तुंबरुर्नारदस्तथा ॥१६॥ वादयन्ति स्म वादित्रं तान् स्तुवंति स्म चारणाः। हृष्टा पुष्टा जनास्तत्र स्त्रियः परमहर्षिताः ॥१७॥ तत्र रंभा विचित्राणि नृत्यादीनि चकार ह। हावभावप्रयुक्तानि चेष्टितानि प्रजापते ॥१८॥ कंदुकक्रीडनोद्युक्ता सभायां यत्र तत्र सा। बभ्राम तां प्रपश्यन् सन्निंद्रोऽभूत् कामपीडितः ॥१९॥ मोहितो मंजुलरवैर्नृत्यादिकलया तथा। कर्तव्यं नैव संजज्ञौ तन्मनाः स सुरेश्वरः ॥२०॥ शीघ्रमेव समाप्तं तमुत्सवं कृतवान् स्वयम्। सर्वे स्वस्वस्थलं जग्मुर्मानिता हर्षिता विभो ॥२१॥ रंभां निमंत्र्य चेंद्रश्च जगाम वनमेकलः। नानापरिमलैर्युक्ता यत्र वृक्षाः सुपुष्पिताः ॥२२॥ नानाप्रस्रवयुक्तानि निर्मलानि जलानि च। सुवर्णपद्मशोभानि षट्पदैः शोभितानि च ॥२३॥ इत्यादिकामपुष्टानि नानावस्तुयुतानि च। वनानि तत्र रेमे साविंद्रः कामविमोहितः ॥२४॥ रंभयासक्तचित्तस्य वज्रिणः क्रीडतो भृशम्। न तृप्तिरभवत्तत्र घृतेन दहनस्य वा ॥२५॥ तत्राजगाम दुर्वासाः स्वेच्छया विचरन् मुनिः। तं दृष्ट्वा लज्जितो

राजा देवानां विनयं स्थितः ॥२६॥ त्यक्त्वा रंभां नमस्कृत्य तं मुनिं प्रांजलिः स्थितः। तादृशं तं परित्यज्य जगाम मुनिसत्तमः ॥२७॥ अतिविह्वलगात्रत्वाचस्कंद सुरशत्रुहा। रेतोऽभूत् पतितं भूमौ तस्माद्दैत्यसमुद्भवः ॥२८॥ इंद्रोऽपि स्वगृहं गत्वा रंभां त्यक्त्वा चकार ह। सुराणामखिलं राज्यमात्मानं निंदयन्मुहुः ॥२९॥ अहो धिक् बत राज्यं मे सुरगणां स्त्रीजितस्य च। असुराणामिवात्यंतं मनो मे चंचलं भृशम् ॥३०॥ पुंश्चल्या मोहितं नित्यं धिङ् मां साध्वभिनिंदितम्। कुकर्मकृत्यदोषाच्च भयमग्रे भविष्यति ॥३१॥ इत्येवमात्मनात्मानं निंदयामास देवपः। स्वधर्मे संस्थितो दक्ष वृत्रहा पुनरेव च ॥३२॥ इंद्रवीर्याच्च कालेन भूम्यां जातो महासुरः। तं पृथ्वी पालयामास स्तनपानादिना भृशम् ॥३३॥ स तु संववृधे तत्र हिमाचल इवापरः। आजानुबाहुर्दीर्घाक्षो महावक्षा महाबलः ॥३४॥ रक्तवर्णः क्रूरकर्मा यथाग्निर्ज्वलितो बभौ। नाम तस्याऽकरोद्भूमिर्मत्सरेति स्वभावतः ॥३५॥ पंचवर्षवयोगस्य चोपवीतप्रदानकम्। ब्राह्मणैः कारयामास धरित्री स्नेहभावतः ॥३६॥ स तु वेदादिकं सर्वं शिक्षितुं गुरुसन्निधौ। स्थित आर्जवसंयुक्तो ग्राहकः श्रवणेन वै ॥३७॥ महाबुद्धिः स कालेनाल्पेन वेदादिपारगः। दुर्बुद्धः कन्यकां रम्यां तामुवाह विलासिनीम् ॥३८॥ नाम्ना मदकराख्याता सर्वावयव-शोभिनी। चतुरा सर्वकार्येषु विषयस्य विवर्धिनी ॥३९॥ एकस्मिन् दिवसे तस्य मतिर्जाता दुरात्मनः। विपुलं सुतपस्तप्त्वा जेयं ब्रह्मांडमोजसा ॥४०॥ स शुक्रमुपसंगम्य विद्यां पंचाक्षरीमगात्। तपसा च तया शंभुं तोषयामास भक्तितः ॥४१॥ निर्जने वन एकांते पुष्पपल्लवशोभिते। कंदमूलफलोपेते सुजले संस्थितोऽतपत् ॥४२॥ दिव्यवर्षसहस्रं स निराहारतया स्थितः। जपन् पंचाक्षरं मंत्रं ध्यात्वा हृदि सदाशिवम् ॥४३॥ दीक्षां पाशुपतीं धृत्वा तोषयामास शंकरम्। तस्य प्रतपसा देवाः क्षुभिताश्च समंततः ॥४४॥ न प्रकाशो रविरासीत्राग्निर्जज्वाल भास्वरः। भूतान्याकुलतां तत्र प्रापाणि तपसो बलात् ॥४५॥ देवाः सर्षिगणाः सर्वे शंकरं शरणं ययुः। मत्सरस्य तपस्तप्तात रक्ष नो जगदीश्वर ॥४६॥ शंकरस्तैः समायुक्तः पार्वत्या स्वगणैः सह। तं देशमगमद् द्रष्टुं भक्तं ज्ञातुं महाद्भुतम् ॥४७॥ अस्थित्वचासमायुक्तं श्वास-मात्रावशेषितम्। हीनांगमावृतं तत्र वल्मीकेन समंततः ॥४८॥ महोग्रतपसा युक्तं देवाः सर्वे विसिस्मिरे। ऋषयोऽपि महाभागा दृष्ट्वा तं तापसं परम् ॥४९॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते मत्सरासुरतपोवर्णनं नाम त्रयोविंशतितमोऽध्यायः ॥

॥श्रीगणेशाय नमः॥ मुद्गल उवाच। मत्सरासुरमुग्रं तं तापसं शांभवं प्रभो। बोधयामास तं शंभुर्दानवेंद्रं महाबलम् ॥१॥ शंकर उवाच। भो भो मत्सर चोत्तिष्ठ वरान् वरय सुव्रत। तवोग्रतपसा भक्त्या संतुष्टोऽहं ददामि तान् ॥२॥ अहो धैर्यमहो धैर्यं धन्यं ते तापसोत्तम। देहभावमतिक्रम्य स्थितोऽसि दृढभक्तितः ॥३॥ क्लेशं त्यज तपो जातं सिद्धिं प्राप्तां तपोभुवम्। पश्येच्छसि तथा यं यं तं तं दास्यामि दुर्लभम् ॥४॥ शिवस्य वचनं श्रुत्वा प्रवुद्धो मत्सरासुरः। उन्मील्य लोचनेऽपश्यच्छंकरं पुरतः स्थितम् ॥५॥ शिवदर्शनमात्रेण सत्तावानभवत्किल। उत्थाय तं नमस्कृत्य विनम्रः प्रेमविह्वलः ॥६॥ उवाच तं महाबुद्धिः शिवं कल्याणकारकम्। भक्तानां कल्पवृक्षं च पार्वतीसहितं प्रभुम् ॥७॥ मत्सरासुर उवाच। धन्यो वंशो मदीयोऽद्य जन्म संपत्तिशास्त्रजम्। ज्ञानं मे जनको माता तपो धन्यं महत्प्रभो ॥८॥ मुनयो यं न जानंति योगिनो ध्यानशालिनः। वेदाः स्मृतिसमायुक्तास्तं पश्यामि सदाशिवम् ॥९॥ एवमुक्त्वा नमस्कृत्य पूजयामास हर्षतः। ऋषिदेवयुतं शंभुं भक्तिभावसमन्वितः ॥१०॥ यथाविधि स संपूज्य शंकरं दंडवत् क्षितौ। प्रणिपत्य समुत्थाय प्रांजलिः स्तोत्रमाकरोत् ॥११॥ मत्सरासुर उवाच। नमस्ते त्रिदशेशाय शंकराय शिवाय च। निर्गुणाय गुणानां चेशाय सर्वगुणाय ते ॥१२॥ अपाराय महादेव पिनाकधर ते नमः। नमो नमो महेशाय सर्वाधिपतये नमः ॥१३॥ उमाकांत नमस्तुभ्यं भक्तसंरक्षकाय च। भक्तिप्रियाय देवाय सर्पहाराय ते नमः ॥१४॥ वृषध्वजाय नंदीशवाहनाय त्रिशूलिने। भस्मांगरागधाराय व्याघ्रांबरधराय ते ॥१५॥ भालचंद्र नमस्तुभ्यं पंचवक्त्राय शंभवे। दशबाहुधरायैव त्रिनेत्राय कपालिने ॥१६॥ जटाजूटधरायैव नमो गंगाधराय ते। गिरिशाय नमस्तुभ्यं गजचर्मधराय ते ॥१७॥ सदा ब्रह्ममयायैव नमो ब्रह्मप्रदायिने। निराधाराय नित्याय सुयोगिपतये नमः ॥१८॥ अपारगुणधाराय रुद्राय तु नमो नमः। किं स्तौमि त्वां महादेव यत्र वेदा विकुंठिताः ॥१९॥ इति स्तुत्वा महेशानं मत्सरः प्रणनाम तम्। उत्थितं तं शिवः प्राह वरं वरय सुव्रत ॥२०॥ इदं त्वया कृतं स्तोत्रं मम प्रीतिविवर्धनम्। पठते शृण्वते सर्वकामदं प्रभविष्यति ॥२१॥ विद्यामायुः सुखं राज्यं पुत्रपौत्रादिकं च यत्। भुक्तिं मुक्तिं प्रदास्यामि स्तोत्रेण स्तुवतेऽसुर ॥२२॥ श्रुत्वा शिववचो रम्यं प्रहृष्टो मत्सरोऽब्रवीत्। विनयावनतो भूत्वा शिवं भक्तवरप्रदम् ॥२३॥ मत्सर उवाच। यदि देवेश तुष्टोऽसि यदि दास्यसि मे वरान्। तदाऽभयं ते सर्वत्र भक्तिं देहि सदाशिव ॥२४॥ पंचभूतात्मकं सर्वं त्रिगुणैः सुविराजितम्। तस्मान्मे मरणं शंभो न कदाचिद्भवेदिह ॥२५॥

आरोग्यादिसमायुक्तमैश्वर्यं देहि शाश्वतम् । ब्रह्मांडस्य च राज्यं मे देहि देहि सदाशिव ॥२६॥ मुद्गल उवाच । तस्यैतद्वचनं श्रुत्वा शिवो विस्मितमानसः । देवाः सर्षिगणाः सर्वे विस्मिताः प्राभवन् तदा ॥२७॥ किमुक्तं मत्सरेणैवं का गतिर्वा भविष्यति । तपसोग्रेण संतुष्टः शिवस्तं प्रत्युवाच ह ॥२८॥ शिव उवाच । यत्त्वया प्रार्थितं दैत्य तत्सर्वं ते भविष्यति । उग्रेण तपसा तुभ्यं मया दत्तं सुदुर्लभम् ॥२९॥ मुद्गल उवाच । वरान् सुदुर्लभान् प्राप्य मत्सरो गृहमागमत् । हर्षितो हर्षयन् सर्वान् सुहृदो मातरं स्त्रियम् ॥३०॥ आह्लादेन सदा तत्र स्थितो मान्यैः स मानितः । नानाभोगान् प्रभुंजानः सुहृद्भ्यः सुखदायकः ॥३१॥ पुत्रौ मदकरायां द्वौ जनयामास मत्सरः । अतिकांतियुतौ तुल्यौ पित्रा वीर्येण तेजसा ॥३२॥ सुंदरप्रिय इत्येवं नाम ज्येष्ठस्य सोऽकरोत् । विषयप्रियनामाभूत्कनिष्ठः प्रीतिदः परः ॥३३॥ एकस्मिन् दिवसे दैत्यः श्वशुरस्य गृहं गतः । तत्र नानाविधा दैत्या मिलितास्तमबोधयन् ॥३४॥ दैत्या ऊचुः । किं स्थितोऽसि महातेजस्त्वद्दास्यवशगा वयम् । जेष्यामः सर्वदेवादींस्त्वत्माहात्म्येन मत्सर ॥३५॥ त्वत्समो नैव वीरोऽस्ति ब्रह्मांडे कुत्रचित्प्रभो । वरदानबलाढ्यस्त्वं निर्भयोऽसि महासुर ॥३६॥ आज्ञां देहि गमिष्यामो जेतुं देवान्न संशयः । शस्त्रास्त्रैस्तान्विनिर्भिद्य भवाम स्वर्गभोगिनः ॥३७॥ मुद्गल उवाच । दैत्यानां वचनं श्रुत्वा मत्सरस्तानुवाच ह । भवद्भिः कथितं सर्वं हितकारकमुत्तमम् ॥३८॥ ममापि हृदये नित्यमेवं वसति दानवाः । किं करोमि च मे माता निवारयति मां सदा ॥३९॥ इंद्रस्ते स पिता पुत्र देवाः पूज्याः सवासवाः । अतो धर्मेण वर्तस्व येनेहपरलोकभाक् ॥४०॥ मत्सरस्य वचः श्रुत्वा दैत्यास्ते त्वब्रुवन वचः । अखिलं धर्मकरणं बाधादं भावपूर्वकम् ॥४१॥ दैत्या ऊचुः । शृणु मत्सर वृत्तांतं पुराभूतं स्वधर्मजम् । अस्माकमेव मान्यं यत्तव संशयनाशकम् ॥४२॥ जलंधरः समुत्पन्नः शिववीर्यान्महाबलः । तेन शंभुर्जितः संख्ये देवाः सर्वे च निर्जिताः ॥४३॥ पार्वतीं दारभावार्थं ग्रहीतुं तत्परोऽभवत् । दैत्या एतादृशा जाता बहवो मत्सरासुर ॥४४॥ यत्र मान्याः संति देवास्तत्र दैत्याः प्रदूषिताः । दैत्या मान्यास्तदा देवा दूषिताः प्रभवंति वै ॥४५॥ देवेंद्राः शत्रवः संति दैत्यानां सततं प्रभो । अतस्त्यक्त्वा स्वसंदेहं जय देवान महाबल ॥४६॥ त्यज तां मातरं पूर्वां मुनिदेवसहायिनीम् । वसात्र त्वं महाभाग अस्माभिः सहितः सदा ॥४७॥ तेषां वचनमाकर्ण्य मत्सरोऽहितकारकम् । तथैव कृतवांस्तत्र त्यक्त्वा पृथ्वीमुवास ह ॥४८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुण्डचरिते मत्सरासुरसमागमो नाम चतुर्विंशतितमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच ॥ शृणु दक्ष महाभाग कथां पापप्रणाशिनीम् । वक्रतुंडावतारस्य प्रयोजनविकाशिनीम् ॥ १ ॥ दैत्याः संभूय सर्वे ते गताः शुक्रं महामुनिम् । दंडवत्तं प्रणेमुश्च मत्सरेण समन्विताः ॥ २ ॥ शुक्रस्तान् मानयामास किमर्थं यूयमागताः । भवता कार्यसिद्धिर्या तां करिष्यामि यत्नतः ॥ ३ ॥ शुक्रस्य वचनं श्रुत्वा सुधारससमं मुने । हर्षिताः प्रणिपत्यैनमूचुः सर्वे हितावहम् ॥ ४ ॥ तव स्वामिन् प्रसादेन मत्सरः कुलधारकः । अस्माकं सर्वभागस्य फलरूपस्तथा कृतः ॥ ५ ॥ वरान् प्राप्य महाबाहुरस्माकं हितमाश्रितः । दैत्यानां दानवादीनां राजाऽयमिति निश्चितम् ॥ ६ ॥ तस्य राज्याभिषेकार्थं याहि त्वं सर्वमानद । अस्माकं धामसर्वस्वं त्वमेव मुनिसत्तम ॥ ७ ॥ दैत्यानां वचनं श्रुत्वा शुक्रोऽवादीत् तथेति च । अगमत् राज्यलाभार्थं मत्सरस्य दुरात्मनः ॥ ८ ॥ मिलितास्तत्र सर्वे ते दैत्यदानवराक्षसाः । हर्षेण महता युक्ता महोत्सवपरायणाः ॥ ९ ॥ तेषां मुख्यान् महाभागांस्तान् छृणुष्व प्रजापते । संक्षेपेण प्रवक्ष्यामि प्राधान्येन महत्तमान् ॥ १० ॥ नमुचिः शंबरः शुंभो निशुंभः कालभैरवः । विरोचनो विप्रचित्तिः प्रह्लादो महिषासुरः ॥ ११ ॥ अंधकासुरनामा च रुरुदैत्यः प्रतापवान् । इत्याद्या बहवो दैत्या मिलितास्तस्य चोत्सवे ॥ १२ ॥ यथाविधि तथा तत्र ब्राह्मणैर्वेदपारगैः । ऋग्यजुःसाममंत्रैश्चाभिषिक्तो मत्सरोऽभवत् ॥ १३ ॥ उशनाः सर्वकर्ताभूत्तेषां मध्ये प्रतापवान् । साक्षाद्योगी गणेशस्य महाभक्तो महामुनिः ॥ १४ ॥ दैत्यादीनां स राजाभून् मत्सरः परवीरहा । शुशुभेऽतीव तेजस्वी मध्याह्नार्क इव श्रिया ॥ १५ ॥ सर्वे स्वस्वगृहं जग्मुः सनाथाश्च वयं कृताः । शुक्रेणेति वदन्तस्ते हर्षयुक्ता प्रजापते ॥ १६ ॥ गते कियति काले च मत्सरः स मनो दधे । ब्रह्मांडजयने दुष्टो जुहाव सकलासुरान् ॥ १७ ॥ आगतास्ते त्वराभाजः किं कार्यं वद मानद । तानुवाच जयाकांक्षी त्रैलोक्यं वशमानये ॥ १८ ॥ तस्य तद् वचनं श्रुत्वा हृष्टाः सर्वे महाऽसुराः । नदंतो मेघसन्नादैः कालानां कलनात्मकैः ॥ १९ ॥ शस्त्रास्त्राणि ह्यमोघानि धृत्वा वाहनगा बभुः । सन्नद्धाः सर्वभावेन चतुरंगबलान्विताः ॥ २० ॥ पदातयो ह्यसंख्याता नानाशस्त्रधरास्तथा । पर्वतद्रुमपाषाणहस्ताः संनिःसृताः प्रभो ॥ २१ ॥ सिंदूरारुणभालाश्च मुक्तकेशा महाबलाः । उड्डीयोड्डीय धावंतः शिक्षायुद्धकरास्ततः ॥ २२ ॥ शस्त्रयुद्धे मल्लयुद्धे गदायुद्धे विशारदाः । अस्त्रयुद्धविचारज्ञा निःसृताः प्रासधारकाः ॥ २३ ॥ धूलिव्रजेन तेषां तु भास्करो निष्प्रभः कृतः । अग्रे दैत्यस्य सेनाया भूषणानि यथा बभुः ॥ २४ ॥ तथा हस्तिसहस्राणां सहस्राणि ययुः पुरः । धातुभी रंजितान्येव नानाचित्रैर्महामुने ॥ २५ ॥ सिंदूरारुण-

भालानि लसत्कुंभधराणि च। घंटासांद्रनिनादैश्च नादितानि त्वितस्ततः ॥२६॥ महावीराश्रितान्येव कुंतलाद्यस्त्रकैस्तथा। पूर्णानि चंचलाश्चैव पर्वता इव शोभिताः ॥२७॥ गिरीणां चैव दंताग्रैर्भेदकानि प्रजापते। शुंडाभिर्वृक्षजालानां छेदकानि महांति च ॥२८॥ मदनासिक्तभालानि भ्रमरैर्गुंजितानि च। रणे शत्रुसहस्राणां नाशकाराणि सर्वशः ॥२९॥ निःसृतानि पुरेभ्यश्च सेनाशोभाकराणि च। दैत्यैः सुदारुणैस्तानि स्वाश्रितानि समंततः ॥३०॥ ततोऽश्वानां महासेना निःसृता बलवत्तराः। चंचला वायुवेगाश्च तत्राऽश्वाः पूर्णभूषिताः ॥३१॥ चामरैर्वीजिताश्चैव मनोवेगा महाबलाः। उड्डीयोड्डीय धावंत आकाशे वायवो यथा ॥३२॥ खुराघातैर्विस्फुलिंगान् प्रस्रवंत इतस्ततः। नानाशस्त्रधरास्तत्र दैत्या रजुर्यथा घनाः ॥३३॥ कालस्य भयदाः सर्वे नानायुद्धविशारदाः। अपाराश्च समारूढा दारुणाः पापनिश्चयाः ॥३४॥ तत्र केचिन्महादैत्याः खरारोहा विनिःसृताः। अजयानाधिरूढाश्च गोवाहनविराजिताः ॥३५॥ महिषारूढकाश्चान्ये व्याघ्रारूढा महाबलाः। सिंहशार्दूलवाहाश्च खगवाहास्तथापरे ॥३६॥ इत्यादिचित्ररूपेषु वाहनेषु विराजिताः। निःसृता असुराः सर्वे यममत्युमि-वोद्यताः ॥३७॥ ततो रथसमारूढा रथिनो निःसृताः प्रभो। अपाराश्च महाक्रोधारुणनेत्रा भयंकराः ॥३८॥ रथाश्वालंकृतास्तत्र मणिमुक्तादिभिः परैः। नानाशस्त्रास्त्रभारैश्च पूरिता मेघघोषिणः ॥३९॥ ध्वजैरलंकृताः पूर्णा अश्वैर्जवनशालिभिः। संयुताश्चतुरैः सूतैर्महावीरैः समाश्रिताः ॥४०॥ रथाः खरयुताः केचिद् वृकैर्वै वाहिताः परे। सिंहगोभिर्गजैर्ऋक्षैर्नानापशु-भिरावभुः ॥४१॥ तत्र वज्रसमांगैश्च खरैः शतमितैर्युतम। अलंकृतं रथं दैत्यो मत्सरः स समारुहत् ॥४२॥ तस्याऽग्र तत्सुतौ शूरावश्वारूढौ प्रजग्मतुः। विरोचनादयो दैत्याः समंतात्तत्सुराजिषु ॥४३॥ पृथिव्यां तस्य सैन्यं तत समुद्र इव संबभौ। महारथमहावीरैर्युद्धभूषणभूषितम ॥४४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते मत्सरासुरसेनावर्णनं नाम पंचविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शुक्र उवाच। ततो दक्ष महत्सैन्यं पृथिवीजयनोद्यतम। हनने क्षत्रियाणां तत्प्रवृत्तं कालचक्रवत् ॥१॥ विरोचनादयो दैत्याः स्थिता यत्र यमोपमाः। युद्धं तैः सह कुर्वाणः कः स्थास्यति पुमान् भुवि ॥२॥ दैत्याः पादप्रहारेण

चूर्णयंतोऽद्रिसंचयान्। शेषमस्तकमानम्य भारेणैव प्रचक्रिरे ॥३॥ तान् मेघसदृशान् दृष्ट्वा पर्वताकारसंस्थितान्। अभवन् यमरूपान् ते क्षत्रिया गतजीविनः ॥४॥ केचित्पलायितास्तत्र केचिच्च शरणं ययुः। महावीरास्तु ते युद्धं कृत्वा स्वर्गं ययुर्मृताः ॥५॥ ये मृतास्तत्सुतास्तैस्तु स्थापिताः करदायिनः। शरणागतराजानः स्थापिताः स्वपदे तथा ॥६॥ यच्च राजविहीनं तु दैत्यास्तत्राधिपाः कृताः। राजानः सर्वविषये बभूवुर्भोगसंयुताः ॥७॥ देशे देशे तथा दैत्याः क्षत्रियाणां च सन्निधौ। स्थापिता भावबोधार्थमेवं सर्वत्र कारितम् ॥८॥ सद्वीपां वसुधां सर्वां जित्वा दैत्यो ननंद ह। मत्सरोऽतिवशां पृथ्वीं तत्र दृष्ट्वा प्रजापते ॥९॥ पातालमगमद्दैत्यो दैत्यवृंदसमन्वितः। मत्सरो नागसर्पाणां जयार्थं बलवांस्ततः ॥१०॥ नागोद्यानानि गत्वा ते बभंजुर्दितिनंदनाः। तान् दृष्ट्वा नागराजा वै युद्धार्थं समुपाययुः ॥११॥ वासुकिस्तक्षकश्चैव कंबलाश्वतरौ तथा। इत्याद्या बहवो नागा नागराजाः समाययुः ॥१२॥ सन्नद्धाः क्रोधयुक्तास्ते महाभोगा महाबलाः। रथादिषु समारूढा नानावाहनगा बभुः ॥१३॥ शस्त्रास्त्रनिचयैर्बाणैर्दैत्यान् जघ्नुर्महाबलान्। दैत्यास्तान् शस्त्रसंघातैः पातयामासुरोजसा॥१४॥ नागैर्महाबैलस्तत्र निहता दैत्यसंचयाः। भग्नदर्पाः पलायंत दशदिक्षु सुविह्वलाः ॥१५॥ दैत्यानां कदनं दृष्ट्वा विरोचनमुखाऽऽययुः। असुराः क्रोधसंयुक्ता नागांश्चामर्दयंस्तु ते ॥१६॥ शस्त्रास्त्रैर्विविधैर्दैत्या मारयामासुरोजसा। केषांचिन् मस्तका भग्नाः पादहस्तोदरं तथा ॥१७॥ शोणितानां महानद्यः प्रास्रवन् वै दिशो दश। भग्नदर्पा भयान्नागाः पलायनमकुर्वत ॥१८॥ केचित्तान् शरणं जग्मुर्दैत्यान् परमदारुणान्। हाहाकाररवैर्युक्ता नागास्त्राससमन्विताः ॥१९॥ दैत्यानां पौरुषं दृष्ट्वा वासुकिप्रमुखाऽऽययुः। क्रोधेन परितप्तांस्तान् वारयामासुरोजसा ॥२०॥ तक्षकादिमहानागा विषं क्षुब्धाश्च तत्यजुः। विवरं तद्विषैः सर्वं व्याप्तं तत्र प्रजापते ॥२१॥ महाविषभवा ज्वाला ददाहासुरपुंगवान्। मृता दैत्या अनेके च गरलेन प्रपीडिताः ॥२२॥ न स्थातुं शक्यते तत्र दैत्यैः संग्राममंडले। शस्त्राणि तेषां सर्वाणि दग्धानि च तदा किल ॥२३॥ गजाश्वरथपादातं मृतं दग्धं च सर्वशः। मूर्छिताः पतिता भूमौ विरोचनमुखास्ततः ॥२४॥ नागा मोदं प्रचक्रुस्ते नादयंतो दिशो दश। हर्षेण महता युक्ता नृत्यंति स्म स्थिताः परे ॥२५॥ एतस्मिन्नंतरे तत्र प्रतापी च विरोचनः। उत्थितः समरश्लाघी गतपीडो महाबलः ॥२६॥ शुक्रेण तत्र दैतेया विद्यया निर्विषाः कृताः। उत्थिताः सर्वतः सर्वे अंधकप्रमुखा बभुः ॥२७॥ असुराः क्रोधसंयुक्ता गरुडास्त्रं च तत्यजुः। तस्मात्तु गरुडा जाता नागान् सर्वानभुंजत ॥२८॥ तत्र वासुकिना तेन विषज्वाला प्रवर्तिता।

गरुडाश्च तया दग्धा गरुडास्त्रं तथाऽभवत् ॥२९॥ एतत् दृष्ट्वा महाश्चर्यं वासुकेः पौरुषं महत् । विरोचनादयः सर्वे गरुडा माययाऽभवन् ॥३०॥ तैः सर्वैर्भक्षितं सैन्यं नागानां तद्दिशो दश । पलायंत भयोद्विग्ना महानागाश्च भीरवः ॥३१॥ सर्पराट् तक्षकाद्या ये गरुडैः पीडिता भृशम् । मूर्छिताश्च मृतप्राया जाता युद्धे च दारुणे ॥३२॥ शेषेण सर्ववृत्तांतो ज्ञातो ज्ञातिभयंकरः । आययौ सामभावेन शरणं दैत्यसन्निधौ ॥३३॥ किमर्थं क्रोधसंयुक्ता दैत्या ब्रूत महाबलाः । भ्रातरस्त्व-सुरा यूयं मदीया नात्र संशयः ॥३४॥ किमर्थं युद्धमारब्धं वक्तव्यं दितिनंदनाः । पातालवासिनः सर्वे भवंतो वयमेव च ॥३५॥ सूत उवाच । शेषस्य वचनं श्रुत्वा प्रतापी च विरोचनः । उवाच तं वचो रम्यं तेजोयुक्तं स्वभावतः ॥३६॥ विरोचन उवाच । शेष शेष महाभाग मान्योऽसि च महामते । स्नेहेन वदामि प्राज्ञ सत्यं शृणु च मद्वचः ॥३७॥ अस्माकं मत्सरो राजा ब्रह्मांडं वशमात्मनः । इच्छत्याशासनं तस्य ग्राह्यं युष्माभिरादृतैः ॥३८॥ नोचेन्नागासुराणां च विनाशः प्रभ-विष्यति । त्वं श्रेष्ठः सर्वभावेन सर्वेषां हितमाचर ॥३९॥ विरोचनवचः श्रुत्वा शेषः सर्वार्थकोविदः । प्रहसंस्तमुवाचेदं सामयुक्तं महामतिः ॥४०॥ यदिच्छति महाभागो मत्सरस्तत् करोम्यहम् । इत्युक्त्वा दातुमुद्युक्तः करभारं च वार्षिकम् ॥४१॥ नानारत्नानि दत्त्वा वै साम चक्रेऽसुरैः सह । नागान् वासुकिमुख्यान स गृहीत्वा स्वस्थलं ययौ ॥४२॥ असुरा हर्षिताः सर्वे जितनागा महाबलाः । पातालजयिनो भूत्वा वरुणं जतुमाययुः ॥४३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते पातालविजयो नाम षड्विंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । असुरा जयशोभाढ्या वरुणालयमागताः । दूतं संप्रेषयामासुर्वरुणस्य सभां प्रति ॥१॥ वरुणस्य सभां गत्वा दूतो वचनमब्रवीत । शृणु तोयेंद्र वाक्यं मे प्रेषितो मत्सरेण यत ॥२॥ मम वै वशगो भूत्वा तिष्ठ स्थाने महाबल । नोचेत्संग्रामभूमौ त्वां वधिष्यामि सुरांस्तथा ॥३॥ दूतस्य वचनं श्रुत्वा वरुणः क्रोधमूर्छितः । संग्रामाय च सन्नद्धो बभूवातिभयानकः ॥४॥ मकरारूढ एवाऽसौ पाशाद्यस्त्रप्रधारकः । यादांसि देवरूपाणि गृहीत्वा बहिराययौ ॥५॥ दूतेन कथितः सर्वो वृत्तान्तो वरुणस्य तम् । श्रुत्वा मत्सरदैतेयो दैत्यैर्युद्धोद्यतोऽभवत् ॥६॥ देवानामसुराणां च सैन्ये

परमदारुणे । परस्परं सुसन्नद्धे रणभूमौ प्रजग्मतुः ॥७॥ देवानां सैन्यमत्युग्रं दृष्ट्वा खलु विरोचनः । महिषासुरनामा च शुंभश्चैवांधकासुरः ॥८॥ अन्ये ते बहवस्तत्र धावंतो रणमूर्धनि । नादयंतो दिशः सर्वे जघ्नुर्देवांश्च साहसात् ॥९॥ मिलिता देवदैत्यास्ते परस्परजयेप्सवः । शस्त्रास्त्रैर्वृक्षपाषाणैर्जघ्नुर्वीराननेकशः ॥१०॥ अभवत्तुमुलं युद्धं दैत्यदेवविनाशनम् । दिनत्रयं महाघोरं दैत्या भग्नास्ततोऽभवन् ॥११॥ जलशायिन एवं स्म देवा गर्जंति भैरवम् । मूर्छिता दैत्यभूपाश्च विरोचनमुखास्तथा ॥१२॥ तान् काव्यः सावधानांश्च चकार स्वेन तेजसा । उत्थिताः सर्ववीरास्ते युयुधुस्त्वसुराः पुनः ॥१३॥ क्रोधेन महता युक्ता जघ्नुर्देवान् महाबलान् । पुनश्च तुमुलं युद्धं बभूवातिभयानकम् ॥१४॥ युद्धं चक्रुरहोरात्रं सुराः सर्वे जलौकसः । यादसां च गणाः सर्वे मृता भग्नाः प्रचूर्णिताः ॥१५॥ सर्वे देवगणास्तत्र वव्रजुः सर्वतोदिशम् । वरुणं च दधाराऽपि बलवान् स विरोचनः ॥१६॥ धृतं वरुणमाश्रुत्य दुद्रुवुश्च जलौकसः । मृताः केचित् क्षताः केचिच्छरणं के च तान् ययुः ॥१७॥ हर्षिता नादसंयुक्ता दैतेया जग्मुराहृताः । उत्तरे धननाथं ते जलमार्गेत एव च ॥१८॥ कुबेरेण स वृत्तांतः श्रुतो वरुणलोकतः । पलायनं समालंब्य कैलासे शंकरं ययौ ॥१९॥ तं तथागतमाश्रुत्य दैत्या परमदारुणाः । अलकायां प्रवेशं ते चक्रुश्च जयशालिनः ॥२०॥ एवं जित्वा कुबेरं तं वरुणेन समन्विताः । धर्मराजं ययुः सर्वे दैतेया मृत्युरूपकम् ॥२१॥ यमराजस्तु संनद्धः श्रुत्वा दूतमुखात् कथाम् । यमो रागैश्च रक्षोभिर्विविधैः परिवारितः ॥२२॥ महिषारूढ एवाऽसौ दंडहस्तो महाबलः । आययौ रणभूमिं च महामृत्युसमन्वितः ॥२३॥ यमं समागतं दृष्ट्वा मृत्युरोगादिभिर्युतम् । दैतेयाः क्रोधसंयुक्ता युयुधुः सहसा बलात् ॥२४॥ देवानां चैव दैत्यानां वीराश्च युयुधुर्भृशम् । परस्परं बोधयंतो जघ्नुर्नानाप्रहारतः ॥२५॥ महाद्भुतं पंचदिनं युद्धं दारुणरूपकम् । नाशकं देवदैत्यानां बभूवैवं प्रजापते ॥२६॥ याम्यैश्च मर्दिता दैत्या मृताः केचित् क्षताः परे । वव्रजुः सर्वशस्तत्र मृत्युसंत्राससतापिताः ॥२७॥ एतस्मिन्नंतरे तत्र विषयप्रिय आगतः । मत्सरासुरपुत्रस्तु युयुधे मृत्युना सह ॥२८॥ मत्सरप्रेरणात् शीघ्रं नराणां हृद्यताडयत् । तेनास्त्रेण च शस्त्रेण रोगाः परमपीडिताः ॥२९॥ याम्यास्ते मृत्युरूपा वै पलायनमकुर्वत । यमेन बहुधा शस्त्रैर्योधयामास दारुणम् ॥ महिषं मूर्छितं कृत्वा पातयामास वै यमम् ॥३०॥ उत्थितो धर्मराजश्च कालदंडेन वेगतः । अताडयद्दैत्यपुत्रं तं गर्जन्विषयप्रियम् ॥३१॥ कालदंडस्तु तं दृष्ट्वा पतितो धरणीतले । आगत्य सहसा तेन प्रतापेन धृतो यमः ॥३२॥ तस्यैतच्च महत्कर्म दैत्यपुत्रस्य दैत्यपाः । तुष्टुवुः

परमप्रीता धन्यं धन्यं तमब्रुवन् ॥३३॥ यमं धृत्वा च दैतेया आययुश्चामरावतीम् । इंद्रोऽपि देवसंघैश्च सन्नद्धो वैरभावनः ॥३४॥ अग्निर्वायुः प्रसन्नद्धावागतौ बलसंयुतौ । देवाः सर्वे महाभागाः स्वस्वलोकात् समाययुः ॥३५॥ विश्वेदेवाश्च साध्याश्च रुद्रा वसव एव च । गंधर्वाश्चैव यक्षाश्च विद्याधरसमायुताः ॥३६॥ ग्रहाश्चंद्रश्च सूर्यश्च आदित्या बलवत्तराः । सन्नद्धाः सर्वदेवास्ते वज्रिणं जग्मुरादृताः ॥३७॥ सर्वदेवगणैरिंद्रो रणभूमिं समाययौ । ऐरावतसमारूढो वज्रपाणिर्महाबलः ॥३८॥ देवसैन्यं सुसन्नद्धमागतं स्वबलान्वितम् । दृष्ट्वा दैत्यगणाः सर्वे जघ्नुः शस्त्रप्रहारतः ॥३९॥ देवा जघ्नुश्च तान् शस्त्रैर्महाक्रोधसमन्विताः । एवं परस्परं तत्र तुमुलं युद्धमप्यऽभूत् ॥४०॥ मृता दैत्यास्तथा देवैस्ताडिताः शस्त्रघाततः । दैत्यैर्हताश्च देवास्ते छिन्ना भिन्नाः सुमूर्छिताः ॥४१॥ एवं परस्परं युद्धं देवदैत्यविनाशनम् । सप्तरात्रमभूत्तीव्रं ततो दैत्याः पलायिताः ॥४२॥ विरोचनादयः सर्वे मूर्छिता धरणीतले । जयवंतः सुरेंद्रास्ते वदंतः स्म प्रहर्षिताः ॥४३॥ एतद् दृष्ट्वा महाश्चर्यं सुंदरप्रिय आगतः । ज्येष्ठपुत्रो मत्सरस्य युयुधे सर्वदैवतैः ॥४४॥ शस्त्रास्त्रैर्मल्लयुद्धैस्तेन मर्दितं तेन सर्वशः । देवसैन्यं दिक्षु तत्र पलायत भयातुरम् ॥४५॥ शोणितप्रस्रवास्तत्र नद्यो जाताः प्रजापते । इंद्रोऽपि युयुधे तेन दैत्यपुत्रेण धीमता ॥४६॥ वज्रेण निहतस्तत्रेंद्रेण दैत्यो महाबलः । न चचाल तदाश्चार्यमिंद्रचेतसि संगतम् ॥४७॥ दैत्यपुत्रः समागत्य खड्गेनैरावतं गजम् । मूर्छितं कारयामास वज्रिणं च पदाग्रहीत ॥४८॥ मर्दयित्वा सुरेशानं स्ववशं च चकार ह । धृत्वा पुरंदरं सोऽपि स्वस्थानमगमन्मुदा ॥४९॥ दैत्यैः संप्रजितस्तत्र महाबलपराक्रमः । सुंदरप्रियपुत्रोऽभूत् मत्सरस्य प्रहर्षितः ॥५०॥ देवाः केचिद् धृतास्तत्र केचिद्वै मूर्छिताः कृताः । केचित् पलायिता दक्ष भग्नाः केऽपि विचूर्णिताः ॥५१॥ एवं स सकलान् देवान् वशांश्चक्रे महाबलः । मत्सरासुर एवाऽयं स्वर्गाधीशो बभूव ह ॥५२॥

॥ ॐमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते मत्सरासुरविजय इंद्रपराजयो नाम सप्तविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । देवाश्च शरणं केचित् कश्यपादीन् समाययुः । विह्वला भयभीतास्ते शशंसुर्दैत्यचेष्टितम् ॥१॥ देवा ऊचुः । मत्सरेण प्रदुष्टेन जिता देवाः सवासवाः । इंद्रो धृतो महाभाग वयं शरणमागताः ॥२॥ रक्ष त्वं मुनिशार्दूल त्वं पिता भयविह्वलान् । जीवनाशसमाद् दुःखादिंद्रं मोचय मत्सरात् ॥३॥ देवानां वचनं श्रुत्वा वसिष्ठादिसमन्वितः । ब्रह्माणं प्रययौ देवैः कश्यपो वंशवृद्धये ॥४॥ सत्यलोके समासीनं गत्वा दृष्ट्वा ननाम च । स्तुत्वा तं विविधैर्वाक्यैः प्रांजलिः प्रत्युवाच ह ॥५॥ कश्यप उवाच । मत्सरेण धृतः स्वामिन्निंद्रो देववरैः सह । देवस्थानपतिर्जातो दैत्यः परमदारुणः ॥६॥ देवा दैत्याः पदे स्वे स्वे यथायोग्ये वसंति वै । तथा कुरु जगन्नाथ त्वं धाता च गतिर्हि नः ॥७॥ कश्यपस्य वचः श्रुत्वा देवांश्चर्षीनथाऽब्रवीत् । पितामहः प्रजानाथ हृदयेन विदूयता ॥८॥ ब्रह्मोवाच । शृणुध्वं मुनयो देवाः शिवप्राप्तवरोऽसुरः । अजेयः सर्वभूतानां देवादीनां विशेषतः ॥९॥ न शक्तोऽहं कदा कर्तुं यथायोग्यं स्वभावतः । गच्छामि शरणं विष्णुं भवद्भिः सह पालकम् ॥१०॥ वैकुंठमगमद् ब्रह्मा देवैश्च मुनिभिः सह । गत्वा विष्णुं नमस्कृत्य स्तुत्वोवाच प्रजापतिः ॥११॥ मत्सरेण धृतो युद्धे इंद्रो देववरः प्रभो । किं स्थितोऽसि महाविष्णो त्वं पालक इति श्रुतः ॥१२॥ ब्रह्मणो वचनं श्रुत्वा विष्णुस्तं प्रत्युवाच ह । न शक्यते मया धातर्वशं कर्तुं महासुरम् ॥१३॥ शिवस्य वरदानेन मत्तोऽसौ दैत्यपुंगवः । तस्माच्च शरणं यामः शंकरं नात्र संशयः ॥१४॥ ब्रह्मादिभिः स्वयं विष्णुः कैलासमगमत्किल । शंकरं प्रणिपत्याऽह सर्वैर्मुनिगणैः सह ॥१५॥ विष्णुरुवाच । नमस्ते भगवन् शंभो नमस्ते शूलपाणये । नमस्ते जगतां नाथ सर्वसाक्षिन्नमोस्तु ते ॥१६॥ नमो नमो महादेव स्रष्ट्रे राजसरूपिणे । पात्रे विष्णुस्वरूपाय हंत्रे रुद्रस्वरूपिणे ॥१७॥ पंचवक्त्रधरायैव योगिने योगदायिने । निर्गुणाय निरूपाय ब्रह्मभूताय ते नमः ॥१८॥ मत्सरेण महादेव पीडितास्ते सुरर्षयः । धृत इंद्रः सुराधीशो मर्दयित्वा सुरान् परम् ॥१९॥ भयभीता वयं तेन शरणं त्वामुपागताः । रक्ष नो देवदेवेश त्वं श्रेष्ठो देवपालक ॥२०॥ विष्णोर्वचनमाकर्ण्य शिवश्चिंतातुरः स्वयम् । उवाच तान् देवमुनीन् विष्णुमुख्यान् महेश्वरः ॥२१॥ शिव उवाच । तपसोग्रेण देवेश मया दैत्यो विवर्धितः । वरैर्महादुर्लभैश्च किं करोमि जनार्दन ॥२२॥ दैत्यो नाशयितुं विष्णो न शक्यः स कदाचन । विचारं कुरु देवेश त्वं बुद्धियुत एव हि ॥२३॥ शिवस्य वचनं श्रुत्वा विष्णुः परमकंपितः । उवाच दुःखयुक्तेन हृदयेन सुरेश्वरम् ॥२४॥ विष्णुरुवाच । कर्ता त्वमन्यथा कर्ता ह्यकर्ता नात्र संशयः । विपरीतं त्वयोक्तं चेद्वयं किं करवामहे ॥२५॥ तव वै सन्निधौ

देव वसामश्च सदाशिव। वयं दैत्यवशा नैव चराम इति मे मतिः ॥२६॥ वैकुंठादिपदं त्यक्त्वा तव सन्निधिमागताः। अधुना मत्सरो दैत्य आगमिष्यति तत्र सः ॥२७॥ वैकुंठं सत्यलोकं च गृहीत्वा सुखमेष्यति। तव स्थानं न कैलासं भक्तत्वाद्वै ग्रहीष्यति ॥२८॥ विष्णोश्च वचनं श्रुत्वा शिवो निःश्वाससंयुतः। स्थितस्तत्रैव दक्ष त्वं शृणु मत्सरचेष्टितम् ॥२९॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते मत्सरासुरचेष्टितकथनं नाम अष्टाविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। इंद्रं धृत्वा महादैत्यो मत्सरो हर्षसंयुतः। ऐरावतसमारूढो ययौ नाममरावतीम् ॥ १ ॥ विरोचनमुखैर्वीरैः संवृतो दैत्यपुंगवः। शुशुभे तत्र तेजस्वी प्रभावेण बलेन च ॥ २ ॥ इंद्रासने समासीनं तं ययुश्चाप्सरोगणाः। गंधर्वाश्चारणाश्चैव भयभीताः समंततः ॥ ३ ॥ सिषेविरे महाभागं मत्सरं त्वमितौजसम्। सर्वभावेन तं हृष्टं चक्रुः सर्वे स्वविद्यया ॥ ४ ॥ देवोद्यानेषु सर्वेषु विचचार महासुरः। कुशलो देवभोगेषु भोगांश्च बुभुजे परान् ॥५॥ देवस्थानानि सर्वाणि विभज्य प्रददौ स्वयम्। दैत्येभ्यो मुख्यमुख्येभ्यो बलेन सहितो मुने ॥ ६ ॥ दत्तानि यानि स्थानानि स्थितास्तेषु महासुराः। नानारूपान् देवभोगान् बुभुजुस्तत्र संस्थिताः ॥ ७॥ मत्सरं सेवमानास्ते ह्यतिदर्पेण संवृताः। एकस्मिन् दिवसे सौम इंद्रासनसमाश्रितः ॥ मत्सरो हर्षयुक्तः सन् दैत्यान् प्रोवाच गर्वितः ॥ ८ ॥ मत्सरासुर उवाच। भो भो विरोचनाद्याश्च शृणुध्वं च वचोऽसुराः। ब्रह्मादयो महाभागाः कथमत्रैव नागताः ॥ ९ ॥ नमस्यंति न देवेशा मां यदा मत्सरान्विताः। सर्वं मदं तदा तेषां हरिष्यामि न संशयः ॥१०॥ मत्सरस्य वचः सर्वे तुष्टुवुर्दैत्यदानवाः। दूतं संप्रेषयामास मत्सरः क्रोधसंयुतः ॥११॥ गच्छ दूत त्रयाणां त्वं ब्रह्मादीनां पदेषु वै। देवेशान् वद वाक्यं मे सावधानेन चेतसा ॥१२॥ दर्शनार्थं मत्सरस्य यांतु देवा मया सह। नोचेन्मत्सरदैत्यस्ताडयिष्यति निश्चितम् ॥१३॥ मत्सरस्य वचः श्रुत्वा गतो दूतो बलान्वितः। अंधको नाम दैत्येंद्रो महावेगसमन्वितः ॥१४॥ सत्यलोके स धातारं न ददर्श महाबलः। शून्यां तां नगरीं वीक्ष्य गतो वैकुंठमादरात् ॥१५॥ तत्राऽपि तादृशं दृष्ट्वा गतः कैलासमेव सः। तत्रानंदयुतान् सर्वान् देवांश्चर्षीन् ददर्श च ॥१६॥ सभामध्यगतो दैत्यः शिवचारैः प्रवेशितः। आसनस्थेन शर्वेण आसने विनिवेशितः ॥१७॥ कैलासविभवं दृष्ट्वा विस्मितो मानसेऽभवत्। सदानंदमयं धन्यं मन्यमानः स्वचेतसि ॥१८॥ पृच्छंतं शंकरं दैत्य उवाच

बलगर्वितः। तृणीकृत्य महेशानं सर्वान् देवांस्तदांधकः ॥१९॥ अंधक उवाच। मत्सरासुरवाक्यं च शृणुध्वं सुरसत्तमाः। जित्वेंद्रं देवनाथं च जातोऽहं जगदीश्वरः ॥२०॥ अतो मद्दर्शनार्थं च भवंतोऽपि सहानुगाः। ब्रह्मा विष्णुश्च रुद्रश्च आगच्छंतु मदंतिकम् ॥२१॥ तस्माद्भवद्भिरद्यैव मया सह सुरेश्वराः। आगंतव्यं मत्सरस्य दर्शनार्थं तु सत्वरम् ॥२२॥ अंधकस्य वचः श्रुत्वा शिवः क्रोधसमन्वितः। उवाच तं महादैत्यं मुखादग्निं समुद्गिरन् ॥२३॥ शिव उवाच। किं मां वदसि पापिष्ठ तृणीकृत्य च यत् वचः। मद्वरस्य प्रभावेण मत्सरो विजयी ध्रुवम् ॥२४॥ यदाऽहं क्रोधसंयुक्तस्तदा भस्ममयं खलम्। करिष्यामि न संदेहः सासुरं मत्सरं खलु ॥ २५ ॥ मत्सराज्ञावशोऽहं रे किं प्रजातोऽसुराधम। मत्वा त्वां मूढ दूतेति मोचयामि न संशयः ॥ २६ ॥ गच्छ तं मत्सरं दैत्यं वद वाणीं मयेरिताम्। नोचेत्त्वां भस्मसात् कुर्यां कुपितोऽहं खलोत्तम ॥ २७ ॥ शिवस्य वचनं श्रुत्वा मत्सरं त्वंधको ययौ। कथयामास वृत्तांतं सर्वदैत्ययुताय च ॥ २८ ॥ विभवं वर्णयामास कैलासस्य यथायथम्। ब्रह्मांडे न समं किंचित् कैलासस्य महासुराः ॥ २९ ॥ अंधकस्य वचः क्रूरं श्रुत्वा दैत्याः महाबलाः। विरोचनमुखाः सर्वे मत्सरं क्रूरमब्रुवन् ॥ ३० ॥ किं स्थितोऽसि महाबाहो जेष्यामस्त्वत्प्रसादतः। देवत्रयं न संदेह आज्ञां देह्यसुरेश्वर ॥३१॥ दैत्यानां वचनंश्रुत्वा तेजोयुक्तं स मत्सरः। उवाच क्रोधसंयुक्तस्तान् दैत्यान् हर्षयन्निव ॥३२॥ मत्सर उवाच। मया तपःप्रभावेण प्राप्तं तेजो महाद्भुतम्। तत्र शंभुर्वृथा मानी स्वात्मानं मन्यतेऽर्थदम् ॥ ३३॥ तपोहीनाय राज्यं वै ब्रह्माण्डस्य ददाति चेत्। तदायं जगदीशो वै मन्यते नान्यथा मया ॥ ३४ ॥ अतः शंभुं विजेष्यामस्तपस्तेजः-समन्वितः। दर्पं तस्य हरिष्यामि वृथा ब्रह्मेति मानिनम् ॥ ३५ ॥ वेदांते ब्रह्मवेदेषु कथितं निर्विकल्पकम्। तदेव सर्वमान्यं वै जगदीशतया बभौ ॥ ३६ ॥ सकामकर्मणा सर्वं प्राप्यते मनुजस्तथा। ब्रह्मार्पणतया कर्म कृतं चेन्मुक्तिराप्यते ॥ ३७ ॥ अखिलं कर्मणा सृष्टं पालितं च प्रहीयते। तत्र किं तैस्त्रिभिर्देवैः क्रियते कर्मजैः खलु ॥ ३८ ॥ कर्मणाऽहं सृजाम्येव पालयामि हरामि च। कर्माधीनं जगत्सर्वं सदेवासुरमानुषम् ॥ ३९ ॥ एवमुक्त्वा महादैत्यो विरोचनमुखैर्वृतः। आययौ शंकरस्थानमावेशेन समन्वितः ॥ ४० ॥ नानाशस्त्रास्त्रधाराभिर्हतास्तत्र बहिः स्थिताः। शिवचाराश्च तैः सर्वे पलायंत च पीडिताः ॥ ४१ ॥ छिन्नभिन्नांगदेहाश्च ययुः शंकरसंनिधौ। ऊचुः समागतो दैत्यैः सर्वैः साकं स मत्सरः ॥ ४२ ॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते शिवमत्सरासुरसमागमो नाम एकोनत्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः॥ मुद्गल उवाच । गणानां च पिशाचानां वचनं दारुणं महत्। श्रुत्वा शिवः स्वयं तत्र युद्धार्थं दंशितोऽभवत् ॥ १ ॥ ब्रह्मा विष्णुश्च कामश्च वसवो धनदोऽभवत् । चंद्रः सूर्यस्तथा वह्निसमीराद्याश्च दंशिताः ॥ २ ॥ कालाग्निरुद्रमुख्या ये भैरवो भूतनायकः । कृत्वा युद्धक्षमं वेषं स्थिताः शंकरसंनिधौ ॥३॥ अष्टभैरवमुख्याश्च वीरभद्रादयोऽभवन् । नंदी भृंगी पुष्पदंतमहाकालरवाः स्थिताः ॥४॥ महाकालीमुखास्तत्र देव्यः शस्त्रधराऽऽययुः । एवं नानाविधैः सैन्यैर्वृतः शंभुर्महेश्वरः ॥५॥ वृषारूढो महातेजा आययौ युद्धलालसः । यत्र दैत्याः स्थितास्तत्र कार्तिकेयादिभिर्युतः ॥६॥ शंकरं सैन्यसंयुक्तं नानायुद्धविशारदम् । नानाशस्त्रधरं दृष्ट्वा दैत्येशाश्चिक्षिपुः शरान् ॥७॥ तद् दृष्ट्वा कुपिता देवाः शस्त्रास्त्रैस्तानताडयन् । एवं परस्परं युद्धमभवद्दारुणं महत् ॥८॥ देवानां चैव दैत्यानामन्योन्यजयकांक्षिणाम् । शस्त्रास्त्रनिचयैर्बाणैरंधकारः प्रवर्तितः ॥९॥ सैन्यानां रजसा व्याप्तमाकाशं सर्वतो बभौ । न प्राज्ञायत तत्रैव स्वीयो वाऽपर एव च ॥१०॥ घंटानां शंखतूर्याणां वीराणां रथिनां तथा । बृंहितानां हेषितानां शब्दैस्तद्बधिरीकृतम् ॥ ११॥ देवान् दृष्ट्वा सुरा जघ्नुर्दैत्यान् देवास्तथापरे । असंबंधं महायुद्धं चक्रिरे सुरदानवाः ॥१२॥ शस्त्रैः शस्त्राणि संवार्य तथास्त्रैरस्त्रसंचयम् । मल्लयुद्धं महावीराश्चक्रुस्तत्र मदान्विताः ॥१३॥ संग्रामे तुमुले तत्र प्रवृत्ते घोररूपिणि । मृता मुमूर्षवः केचिच्छिन्नभिन्नास्तथाऽभवन् ॥१४॥ नानाजंतुशरीरेभ्यः प्रवृत्ता रक्तसंभवा । नदी बभौ महाघोरा मांसकर्दमशालिनी ॥१५॥ रक्तास्थिबलाका च केशशैवालशोभिता । चापसर्पा शिरःपद्माकबंधद्रुमवाहिनी ॥ १६ ॥ भल्लकाष्ठा महाघोरा चामरैस्तृणकैर्युता । छत्रावर्ता दुर्गमा च चर्मपट्टिशदर्दुरा ॥ १७॥ भीरुभीतिकरा चैव वीरहर्षप्रवर्धिनी । तां दृष्ट्वा दैत्यराजास्ते क्रोधयुक्ताः समाययुः ॥१८॥ तैः समंताद्बलं भग्नं देवानां सर्वमंजसा । बाणजालैर्दिशो व्याप्ता गंतुं मार्गो न विद्यते ॥१९॥ पलायनपरा देवाः सर्वे दशदिशोऽगमन् । तद् दृष्ट्वा देवराजास्तान् वारयामासुरोजसा ॥२०॥ द्वंद्वयुद्धं च तत्रासीत्परस्परविनाशनम् । देवानां मुख्यदैत्यानां किंचित्तेषां वदामि ते । २१॥ नमुचिः कामदेवेन युयुधे बलसंयुतः । शंबरो वायुना सार्द्धं शुंभो देव्या महाबलः ॥२२॥ चंद्रेणाऽपि निशुंभश्च गुहेन च विरोचनः । कालभैरवदेवेन कालभैरवदानवः ॥२३॥ महिषासुरदैत्यः कालाग्न्याख्यहरेण च । प्रह्लादो विष्णुना सार्धं विप्रचित्तिश्च भानुना ॥२४॥ अंधकासुरनामा च वीरभद्रेण संयुतः । अग्निना चैव दुर्बुद्धिर्युयुधे बलसंयुतः ॥२५॥ विषयप्रिय एवाऽसौ ब्रह्मणा युयुधे भृशम् । शंभुना

युयुधे तत्र सुंदरप्रिय एव सः ॥ २६ ॥ मत्सरासुरदैत्येशो युद्धं द्रष्टुं स्थितोऽभवत् । एवं नानाद्वंद्वयुद्धं शतशोथ सहस्रशः ॥ २७ ॥ संख्यातुं नैव शक्यं तदपारत्वात् प्रजापते । शस्त्रास्त्रैरसुरा जघ्नुः सुरांस्तानपि ते सुराः ॥ २८ ॥ अग्निवाय्वादिकास्त्राणि तत्यजुः क्रोधसंयुताः । चकंपे च त्रिभुवनं दारुणे संयुगे तदा ॥ २९ ॥ देवासुरप्रणाशश्च महांस्तत्र प्रवर्तितः । शोणितौघैः प्रवृत्तास्तु नद्यः परमदारुणाः ॥ ३० ॥ एवं सप्त दिवानक्तं गतं तेषां प्रयुध्यताम् । नासुरा न च देवास्ते विरामं चक्रुरंजसा ॥ ३१ ॥ ततश्च कुपिता देवा अत्यंतं शंकरादयः । दैत्यानामस्त्रसंघातानस्त्रैः संवार्य तान् पुनः ॥ ३२ ॥ ताडयामासुरव्यग्रा अस्त्रैर्नानाविधैः परम् । मूर्छितान् पतितांश्चक्रुर्मृतान् संचूर्णितान् परान् ॥ ३३ ॥ ततो दश दिशो दैत्या वव्रजुर्भयसंकुलाः । त्रिशूलादि महाशस्त्रैस्तत्राऽपि तु सुरा बभुः ॥ ३४ ॥ सुंदरप्रियकाद्याश्च मूर्च्छिता धरणीं गताः । मृतप्रायाः कृतास्तैस्ते विष्णवादिभिरथो मुने ॥ ३५ ॥ तद् दृष्ट्वा क्रोधसंयुक्तो मत्सरः स्वयमाययौ । कृत्वा नादं महाघोरं ब्रह्मांडं कंपयन्निव ॥ ३६ ॥ धनुश्चक्रे सनादं वै तेन संशयिताः सुराः । बाणवृष्टिं ससर्जासौ दारुणां शत्रुनाशिनीम् ॥ ३७ ॥ तस्य बाणैः सुराः सर्वे मर्दिता बलवत्तरम् । मृताः केचित् क्षताः केचिन् मूर्च्छिता पतिता मृधे ॥ ३८ ॥ पंचबाणैश्च सेनान्यं ताडयामास वक्षसि । पतितः स धरापृष्ठे मूर्च्छितो भृशविह्वलः ॥ ३९ ॥ अग्निं च सप्तभिर्बाणैर्नंदिनं दशभिस्तथा । ताडयामास दैत्येंद्रः पतितं रणमूर्धनि ॥ ४० ॥ दशभिर्वीरभद्रं स सवितारं ततोष्टभिः । चंद्रं च सप्तभिर्बाणैः पातयामास दैत्यपः ॥ ४१ ॥ अनिलं नवभिश्चैव कालाग्निं रुद्रमष्टभिः । दशभिश्च महाकालीं ताडयामास मत्सरः ॥ ४२ ॥ पंचभिः पंचभिश्चैव गणपान् भृंगिमुख्यकान् । बाणैः स पातयामास प्रलयाग्निसमद्युतिः ॥ ४३ ॥ कुबेरं दशभिश्चैव ताडयामास वक्षसि । ब्रह्माणं शतबाणैश्च पातयामास भूतले ॥ ४४ ॥ एवं तस्याद्भुतं कर्म दृष्ट्वा विष्णुः समाययौ । बाणैः सहस्रसंख्याकैर्ववर्ष घनवद् भृशम् ॥ ४५ ॥ दैत्यो बाणान्निवार्यैव तैः शरैः क्रोधसंयुतः । शतेन ताडयामास पतितः स धरातले ॥ ४६ ॥ ततश्च शंकरः क्रुद्धस्त्रिशूलेनाहनद् भृशम् । त्रिशूलं निष्फलं तत्र पतितं धरणीतले ॥ ४७ ॥ पाशं दैत्यपतिः क्षिप्त्वा सहसा शंकरं ततः । गृहीत्वा पशुवत् कंठे आनयामास सन्निधौ ॥ ४८ ॥ धृत्वा शंभुं महाबाहुर्वदति स्म च तं मुने । अतुलं किं त्वया मेऽद्य दत्तं वद सदाशिव ॥ ४९ ॥ कर्मणा त्वं समर्थश्च तथाहं कर्मणा किल । जगदीश्वरतां प्राप्तो वृथाहं-

कारवानसि ॥ ५० ॥ क्रमेण विष्णुमुख्यांश्च देवान् धृत्वा महाबलः । कैलासशिखरे रम्ये रेमे दैत्यसमन्वितः ॥ ५१ ॥ सर्वपूज्यतमो भूत्वा दैत्यः परमहर्षितः । नानाकौतुकयुक्तश्च भोगांश्च बुभुजे परान् ॥ ५२ ॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते शिवादिपराजयो नाम त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच ॥ शृणु दक्ष महाश्चर्यं दैत्यस्य च विचेष्टितम् । ब्रह्मांडाधिपतिर्जातो मत्सरः कर्मणा स्वयम् ॥ १ ॥ सुंदरप्रियपुत्रं च कैलासाधिपतिं ततः । चक्रे वैकुंठनाथं तं पुत्रं स्वं विजयप्रियम् ॥ २ ॥ प्रह्लादं सत्यलोकेशं माहेंद्रेशं विरोचनम् । एवं चक्रे च राजेशः स्वर्गाधीशान् स दैत्यपान् ॥ ३ ॥ स्वयं भूमिं समागम्य नगरं निर्ममे ततः । मत्सरावासकं नाम तत्रैव न्यवसन्मुदा ॥ ४ ॥ त्रैलोक्यं वशगं सर्वं चकार स्वेन तेजसा । शिवादयश्च देवेंद्रा गृहे तस्य समास्थिताः ॥ ५ ॥ तान् समानाय्य दैत्येशो हर्षयुक्तेन चेतसा । उवाच मधुरं वाक्यं सामयुक्तं महासुरः ॥ ६ ॥ शृणु शंभो महाभाग देवेंद्रैः सह देवप । यत्रेच्छा गच्छ तत्र त्वं मदाज्ञां पालयन् सदा ॥७॥ एवमुक्त्वा स दैत्येंद्रो मोचयामास शंकरम् । देवैः सह महाभागो मत्सरो हर्षसंयुतः ॥ ८ ॥ शिवोऽपि देवसंघातैः पर्वतद्रोणिमाश्रितः । चिंताविष्टो महादेवः कालं पश्यंश्च संस्थितः ॥ ९ ॥ यत्र तत्र गुहायां ते देवा विष्णुपुरोगमाः । संस्थिता भयभीताश्च दिवसाननिचक्रमुः ॥ १० ॥ पृथिव्यां दैत्यराजेन ततो धर्मस्य खंडनम् । कृतं सर्वत्र तेनैव हाहाकारोऽभवत् महान् ॥ ११ ॥ देवानां प्रतिमा यत्र तां भङ्क्त्वा चिक्षिपुर्जले । दैत्यास्तदाज्ञया दक्ष धर्मलोपं प्रचक्रिरे ॥ १२ ॥ मत्सरस्य च दैत्याः प्रतिमाः सर्वभावतः । देशे देशे पुरे ग्रामे स्थापयामासुरंजसा ॥ १३ ॥ गृहे गृहे च देवानां प्रतिमां संस्थितां पराम् । तां भङ्क्त्वा जलमध्ये ते चिक्षिपुश्च प्रजापते ॥ १४ ॥ मत्सरप्रतिमां कृत्वा प्रतिगेहं ददुस्ततः । दैत्याः सुदारुणा विश्वं त्रासयामासुरेव च ॥ १५ ॥ ब्राह्मणांश्च समानीय ताडयामास मत्सरः । ममैव मंत्रसूक्तेन यज्ञादि क्रियतां द्विजाः ॥ १६ ॥ मम नाम्ना च गायत्रीं युक्तां जपत मा चिरम् । अग्निहोत्रादिकं कर्म कुरुध्वं मन्मतं तथा ॥ १७ ॥ अहमेवेश्वरो देवो ब्राह्मणादि जनस्य च । भजतां मम पादौ च दुर्लभं किं भविष्यति ॥ १८ ॥ धनधान्यादिकं सर्वं स्वर्गभोगादिसंयुतम् । दास्यामि नात्र संदेहो मदधीनं

जगत्सदा ॥ १९ ॥ मम प्रीतिकरा येन दैत्या भोज्यैः प्रपूजिताः। तेन संतर्पितो नूनं वांछितं पूरयाम्यहम् ॥ २० ॥ एवमादि स सर्वत्र नानाधर्मनिकृंतनम्। कारयामास दुर्बुद्धिर्मत्सरो मत्सरान्वितः ॥ २१ ॥ केचिद्दषिगणा दक्ष वनं व्याघ्रादिसंयुतम्। जग्मुस्तत्र क्रियाः सर्वाश्चक्रुर्धर्मपरायणाः ॥ २२ ॥ देहरक्षणसक्ताश्च मुनयो भ्रंशमागताः। सर्ववर्णपरिभ्रष्टा जना जाताः प्रजापते ॥ २३ ॥ यजनं याजनं तत्र स्वधर्मादिस्वभावजम्। कर्म सर्वं न चक्रुस्ते जनास्तद्भयभाविताः ॥ २४ ॥ न स्वाहा न स्वधा कुत्र न वषट्कार आभवत्। वर्णसंकरकृल्लोकाः स्थिता भयसमन्विताः ॥ २५ ॥ एवं पापस्य वृद्धिश्च संजाता भयदायिनी। ततो देवगणाः सर्वे उपोषणनिपीडिताः ॥ २६ ॥ विचारं तत्र चक्रुस्ते मत्सरस्य विनाशने। न च किंचिद्भयोद्विग्ना नाशार्थं शेकुरोजसा ॥ २७ ॥ एतस्मिन्नंतरे तत्र दत्तात्रेयः समाययौ। साक्षाद् ब्रह्ममयो योगी न्यस्तस्वपरविभ्रमः ॥ २८ ॥ मलिनो जडवल्लोके भ्रमति स्म पिशाचवत्। चेष्टितैश्चेष्टते नग्नो बालवद् द्वंद्वकारकः ॥ २९ ॥ उन्मत्तवन्महाभागो भयं नैव प्रविंदति। आत्रेयो गणराजस्य भक्तः परमशोभनः ॥ ३० ॥ तं दृष्ट्वा देवसंघास्ते समुत्तस्थुः सुसादराः। प्रणेमुः कार्यसिध्यर्थं पूजयामासुरंजसा ॥ ३१ ॥ पादसंवाहनं तस्य चक्रुः केचन भावतः। फलादिना च नैवेद्यमर्पयामासुरादरात् ॥३२॥ पप्रच्छुर्भुक्तवंतं तं विनयेन समन्विताः। शंभुविष्णुमुखाः सर्वे भयभीता महामुनिम् ॥३३॥ शिव उवाच। स्वामिंस्त्वं द्वंद्वहीनश्च नित्यमानंदभाक् परः। न्यस्तस्वपरभावश्च तथाऽपि जनवत्सलः ॥ ३४ ॥ गणेशस्य वरो भक्तः साक्षाद्गणपतिः स्वयम्। योगभावेन संपन्नो योगी योगविदां वरः ॥ ३५ ॥ तथापि दुःखितान् दृष्ट्वा मनस्ते कलिलं भवेत्। उपाधिहीनभावेन दुःखनाशं करोषि वै ॥ ३६ ॥ अतो वयं महाभाग पीडिता मत्सरेण वै। भ्रष्टस्थाना वने सर्वे चरामः श्वापदा इव ॥ ३७ ॥ अत्राऽपि धर्मलोपेन पीडिता वयमुत्कटम्। उपोषणपराः स्वामिन् मरिष्यामो महामते ॥ ३८ ॥ अत्र ते दर्शनं प्राप्तं पूर्वपुण्यबलेन भोः। तेन दुःखविहीनाश्च भविष्यामो न संशयः ॥ ३९ ॥ अतो मत्सरदैत्यस्य नाशोपायं वद प्रभो। येन सर्वं जगत्क्लिष्टं तत् सुखं कुरु मानद ॥ ४० ॥ एकस्य दोषयोगेन बहवः पीडिता यदि। अनुपाधितया योगी तं दोषं नाशयिष्यति ॥ ४१ ॥ शक्तश्चेत् स्वस्वभावेन सर्वेभ्यः सुखदायकः। अतस्त्वं रक्ष योगीश जगत् कृत्स्नं विशेषतः ॥ ४२ ॥ मुद्गल उवाच। शिवस्य वचनं श्रुत्वा देवान् दीनतमान् परान्। दृष्ट्वा स करुणायुक्तः प्रत्युवाच च हर्षयन् ॥ ४३ ॥ दत्तात्रेय उवाच।

शृणु शंभो जगन्नाथ त्वं साक्षादीश्वरः शिवः । तवाधीनमिदं सर्वं त्वां ब्रुवे किं महामते ॥ ४४ ॥ तथापि वच्मि देवेश त्वदाज्ञासंप्रचोदितः । येन त्वं देवसंयुक्तः सुखं विंदसि शाश्वतम् ॥ ४५ ॥ त्वदीये हृदये शंभो मत्सरः संस्थितोऽधुना । ईश्वरोऽहमिदं सर्वं मदधीनं प्रवर्तते ॥ ४६ ॥ न मत्समस्त्रिभुवने इति यत् मत्सरः स च । जहि तं योगमार्गेण हृदयस्थं महासुरम् ॥ ४७ ॥ श्रेष्ठं दृष्ट्वा मदहर्ष्या ते जायते या महासते । जहि तां तपसा शंभो गणेशस्य प्रसेवया ॥ ४८ ॥ एकाक्षरविधानेन मयाऽसौ सेवितः पुरा । तेनाऽहं च गणाधीशो न भिन्नौ मयि निष्ठतः ॥ ४९ ॥ अतस्त्वं योगमार्गेण गणेशं सर्वसिद्धिदम् । एकाक्षरविधानेन तमाराधय यत्नतः ॥ ५० ॥ हृदिस्थं मत्सरं हत्वा पश्चात्तं जहि दानवम् । योगेन त्वं समर्थो हि भवितासि न संशयः ॥ ५१ ॥ एवमुक्त्वा महादेवं गतोऽसौ मुनिसत्तमः । यदृच्छया चरन् सन् वै सेवते गणनायकम् ॥ ५२ ॥

॥ ॐमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते दत्तात्रयसंगमो नामैकत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच ॥ शृणु दक्ष महाप्राज्ञ चेष्टितं परमं महत् । यत्कृतं सर्वदेवैस्तत कथयामि समासतः ॥१॥ गते मुनौ महाभागे शिवो हर्षसमन्वितः । गणेशं हृदि संचिन्त्य ब्रह्मादींश्च वचोऽब्रवीत् ॥ २ ॥ शृणु विष्णो विधे देवाः शृणुध्वं सर्वतापसाः । कश्यपः संस्थिता अत्र वचनं हितकारकम् ॥ ३ ॥ आत्रेयेण च दत्तेन कथितं दुःखनाशनम् । अत एकाक्षरेणैव प्रसादयत विघ्नपम् ॥ ४ ॥ शंभोर्वचनमाकर्ण्य मुनयो देवनायकाः । साधुसाध्वब्रुवन् सर्वे प्रसन्नाश्च तथाऽभवन् ॥ ५ ॥ तत एकाक्षरेणैव मंत्रेण गणपं मुने । देवाश्च मुनयः सर्वे सेवयामासुरादरात् ॥ ६ ॥ महोग्रतपसा युक्ताः स्थितास्तत्र शिवादयः । आराधयंस्तु देवेशं गणेशं सर्वनायकम् ॥ ७ ॥ पद्मासनगताः केचिद्वीरासनगताः परे । स्वस्तिकासने आसीना एवं नानासने स्थिताः ॥ ८ ॥ निराहारतया केचित स्थितास्तत्र प्रजापते । पत्रवायुभुजश्चान्ये प्राणायामपरायणाः ॥ ९ ॥ जलभक्ष्याः स्वपादाग्रस्थिताः केचिद् दृढासनाः । केचिन्मानसपूजाभिः पूजयामासुरंजसा ॥ १० ॥

केचित् पुष्पोपहाराद्यैर्यत्नतः समपूजयन्। प्रदक्षिणापराः केचिद्देवं नानाविधानतः ॥ ११ ॥ तपंतो गणपं चैव मंत्रेण विधिपूर्वकम्। एकचित्तेन सर्वे ते तोषयामासुरंजसा ॥१२॥ एवं वर्षसहस्रेण दिव्येन तपसा स्वयम्। प्रसन्नोऽभून् महातेजा वक्रतुंडः प्रतापवान् ॥ १३ ॥ देवानां च ऋषीणां च ययौ चाग्रे गणाधिपम्। तेजसां पुंज एवाऽसौ साक्षाद् ब्रह्ममयो बभौ ॥ १४ ॥ सिंहगो गजवक्त्रश्च शूर्पकर्णो महोदरः। चतुर्बाहुश्च पाशेनांकुशेन वरदेन च ॥ १५ ॥ अभयेन समायुक्तो वामांगे सिद्धिधारकः। दक्षिणांगे च बुद्धिं वै दधानो भगवान् परः ॥ १६ ॥ नाभिशेषो मुकुटवान् कुंडली कटकान्वितः । चिंतामणिलसद्वक्षा व्यालयज्ञोपवीतवान् ॥ १७ ॥ नानाभूषणशोभाढ्यस्तेजसा ज्वलदद्भुतः । पुष्करं पुष्करे धृत्वा भ्रामयन् समुपाययौ ॥ १८ ॥ तं दृष्ट्वा देवविप्रास्ते भयभीताः समंततः। उदितं किमिदं तेजः प्रलयानलसंनिभम् ॥१९॥ अथवा गणराजोऽयं किं वा स्वामी समागतः। अथवा प्रलयो भावी अकाले दैवनिर्मितः ॥ २० ॥ इति तर्कसमायुक्तान् देवान् मुनिसमन्वितान् । उवाच वक्रतुंडस्तान् मेघगंभीरनिस्वनः ॥ २१ ॥ वक्रतुंड उवाच । भो भो मुनिगणा देवाः स एवाऽहं समागतः। यं ध्यायथ महाभागास्तं जानीत गणेश्वरम् ॥ २२ ॥ तपसा मंत्रराजेन मम ध्यानेन सर्वशः। परितुष्टो वरं दातुमागतोऽहं न संशयः ॥ २३ ॥ मुद्गल उवाच । वक्रतुंडवचः श्रुत्वा हर्षिता अमरर्षयः। प्रणेमुः प्रार्थयामासुः सौम्यभावं प्रविह्वलाः ॥ २४ ॥ तेषां प्रार्थितमाकर्ण्य सौम्यतेजा अभूत् प्रभुः। यथा तं मुनयो देवा अपश्यन् स्वेन चक्षुषा ॥ २५ ॥ सौम्यभावेन संयुक्तं वक्रतुंडं सुरेश्वराः। मुनयस्तं प्रणम्योचुर्धन्या धन्या वयं प्रभो ॥ २६ ॥ अपूजयन् प्रयत्नेन भावेन स्नेहतस्तथा। उपचारैः षड्दशभिर्यथाविधि महेश्वराः ॥ २७ ॥ यथाविधि प्रणम्यैव तुष्टुवुः कृतमंगलाः। बद्धांजलिपुटाः सर्वे भक्तिनम्रात्मकंधराः ॥२८॥ साश्रुनेत्राः सरोमांचास्तद्दर्शनमहोत्सवाः। यथाज्ञानं यथान्यायं वक्रतुंडं महौजसम् ॥ २९ ॥ देवर्षय ऊचुः । नमस्ते वक्रतुंडाय गजवक्त्राय ते नमः। एकदंताय देवाय सर्वाधिपतये नमः ॥ ३० ॥ निर्गुणाय निरूपाय चतुर्बाहुधराय ते। सिंहवाहाय नागानां पत्युर्नाभौ धराय च ॥ ३१ ॥ अनंताय ह्यपाराय दुर्लक्ष्याय नमो नमः। पाशांकुशधरायैव नागयज्ञोपवीतिने ॥ ३२ ॥ वरदाभयहस्ताय सिद्धिबुद्धिवराय च। ब्रह्मभूताय भक्तानां ब्रह्मभूयकराय ते ॥ ३३ ॥ नमस्ते शंभुरूपाय विष्णुरूपाय ते नमः। सूर्यरूपाय धात्रे च नमः शक्तिमयाय च ॥ ३४ ॥ दैत्यदानवरूपाय देवरूपधराय च। नमः पक्षिस्वरूपाय शुकरूपाय ते नमः ॥ ३५ ॥ ग्रहनक्षत्ररूपाय लतावृक्षस्वरूपिणे।

पर्वनाय नमस्तुभ्यं सरित्सागररूपिणे ॥३६॥ जलजंतुस्वरूपाय सर्परूपाय ते नमः। वेदाधिकाशीनिलक्षयोनिसंस्थाय ते नमः ॥ ३७ ॥ चराचरमयायैव नमो नानाप्रभेदिने। कर्माकर्मस्वरूपाय नमः खलु विकर्मणे ॥ ३८ ॥ ज्ञानयोगाय देवाय स्वात्मरूपधराय ते। स्वसंवेद्यस्वरूपाय सदा योगमयाय ते ॥३९॥ नानाधारप्रधाराय शब्दब्रह्ममयाय ते। मायारूपाय मायायै मायाहीनाय ते नमः ॥ ४० ॥ मायिभ्यो मोहदात्रे च सर्वकाराय ते नमः। स्थूलसूक्ष्मादिभेदाय भेदहीनाय ते नमः ॥ ४१ ॥ भेदाभेदमयायैवानंतपाराय ते नमः। भक्तेभ्यो वरदात्रे च भक्तसंरक्षकाय ते ॥ ४२ ॥ नमो नमः परेशायाव्ययाय च नमो नमः। गणेशाय नमस्तुभ्यं योगाधीशाय ते नमः ॥ ४३ ॥ यं स्तोतुं न समर्थाश्च वेदाः सांगाश्च योगिनः। तं किं स्तुमो गणेशानं वक्रतुंडस्वरूपिणम् ॥ ४४ ॥ मायादुःखं च सर्वेषां मनसि ज्ञानकारकम्। ब्रह्म तस्मात्तथा वक्रं ज्ञानहीनं बुधैः स्मृतम् ॥ ४५ ॥ माया च ब्रह्मतुंडं यद् द्वयोर्योगे भवत्परम्। योगशांतिश्च सर्वेषां योगिनां हृदि संस्थिता ॥ ४६ ॥ मायादेहस्वरूपा ते ब्रह्म वक्रं स्मृतं मुखम्। उभयोर्योगभावे त्वं वक्रतुंडः प्रकथ्यसे ॥ ४७ ॥ तं वक्रतुंडं पश्यामः साक्षाद् योगमयं परम्। धन्या वयं गणाध्यक्षं स्तुत्वा तं प्रणताः स्तवैः ॥ ४८ ॥ धन्यं जन्म त्वक्षि धन्यं धन्याः संपद एव च। ज्ञानं धन्यं तपश्चैव येन दृष्टो गजाननः ॥ ४९ ॥ प्रसन्नो यदि देवेश यदि देयो वरः शुभः। तदा त्वदीयपादाब्जे भक्तिरस्तु सदा च नः ॥ ५० ॥ प्रार्थयामो वरं चैतं यतस्त्वं चिंतितार्थदः। मत्सरासुरनाशं च वक्रतुंड कुरु प्रभो ॥ ५१ ॥ जगत्सर्वं वयं चैव पीडितास्तेन विघ्नप ॥ सर्वेषामुपकारार्थं जहि दैत्यं महाबलम् ॥ ५२ ॥ स्तुत्वैवं प्रार्थयित्वा तं प्रणतास्ते सुरर्षयः। तानुत्थाप्य स्वयं साक्षाद्वक्रतुंड उवाच ह ॥ ५३ ॥ वक्रतुंड उवाच। भवत्कृतमिदं स्तोत्रं सर्वसिद्धिप्रदं परम्। भविष्यति महाभागा ईप्सितार्थप्रदं महत् ॥ ५४ ॥ मत्सरासुरनाशं च करिष्यामि सुरर्षयः। भवतां भक्तियोगेन प्रसन्नः पूर्णतां गतः ॥ ५५ ॥ पंचभूतमयं सर्वं त्रिगुणं जगदुच्यते। अष्टावरणसंयुक्तं ब्रह्मांडं हि सुरर्षयः ॥ ५६ ॥ अष्टावरणसंयुक्ता देवाः सर्वे च मानवाः। नागाश्चराचरं सर्वं तस्य तेभ्यो भयं नहि ॥ ५७ ॥ अतो मत्सरदैत्यस्य नाशश्च कठिनो महान्। तथापि भवतां देवाः करिष्यामि प्रियं द्विजाः ॥ ५८ ॥

॥ इति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते वक्रतुण्डप्रादुर्भावो नाम द्वात्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। एवमुक्त्वा सुरान् विप्रान् सस्मार बलमुत्कटम् । तस्य स्मरणमात्रेण प्रादुर्भूता गणाः प्रभोः ॥ १ ॥ प्रमोदामोदकाद्याश्च वक्रतुंडा गजाननाः। चतुर्बाहुधराः सर्वे नानाशस्त्रास्त्रपाणयः ॥ २ ॥ केचित् सिंहसमारूढाः केचिन्मूषकवाहनाः । केचिन्मयूरमारूढाः शेषारूढास्तथापरे ॥ ३ ॥ अश्वारूढास्तथान्ये च मुकुटैः सुविराजिताः। कटकैः कुंडलैश्चैव नानाभूषणराजिताः ॥ ४ ॥ भयंकराश्च शत्रूणां भक्तेभ्यः सुखदायकाः। महात्मानो महाशब्दा ब्रह्मांडस्फोटकारकाः ॥ ५ ॥ नानाक्रीडासमायुक्ताः सदा स्वानंदभाविताः। गणेशनाममाहात्म्यं कथयंतः परस्परम् ॥ ६ ॥ वक्रतुंडं नमस्कृत्य स्थिताः प्रांजलयोऽभवन्। आज्ञां कुरु गणाध्यक्ष करवामस्तवेप्सितम् ॥ ७ ॥ अस्माकं स्मरणं देव किमर्थं कृतमादरात्। दासान् त्वदीयपादस्य करिष्यामोऽखिलान् जनान् ॥ ८ ॥ तेषां वचनमाकर्ण्य वक्रतुंडः प्रतापवान्। उवाच तान् महाभागान् मेघगंभीरनिस्वनः ॥ ९ ॥ वक्रतुंड उवाच । शृणुध्वं मोदकाद्याश्च मत्सरासुरदैत्यपम्। हनिष्यामि महावीर्यं तेन युद्धं भविष्यति ॥ १० ॥ अधुना दारुणं तत्र मया सह महाबलाः। एतदर्थं विशेषेण स्मरणं भवतां कृतम् ॥ ११ ॥ वक्रतुंडवचः श्रुत्वा सर्वे हर्षसमन्विताः। गणा ऊचुः प्रणम्यैनं निबद्धकरसंपुटाः ॥ १२ ॥ गणा ऊचुः । स्वामिन् वदसि यत्सर्वं तदाश्चर्यमयं बहु। मत्सरासुरनाशश्च एकेन क्रियतेऽधुना ॥ १३ ॥ त्वत्प्रसादात् सदा सर्वं सुलभं नो गणाधिप। आज्ञां कुरु महाभाग पश्य चैकस्य पौरुषम् ॥ १४ ॥ गणानां तद्वचो रम्यं श्रुत्वा प्राह गणाधिपः। वक्रतुंडः प्रसन्नात्मा हर्षयन् सकलानिव ॥ १५ ॥ वक्रतुंड उवाच। भवद्भिः कथितं सर्वं तत्तथा न तदन्यथा। क्रीडार्थं निर्मितो दैत्यो मया मायाप्रभावतः ॥ १६ ॥ यदि क्षणेन तं दैत्यं नाशयामि प्रभावतः। तदा क्रीडा कथं देवा मया प्रक्रियते परा ॥ १७ ॥ अतस्तेन महाभागा युध्यध्वं मम सन्निधौ। अष्टावरणहीनेन हन्मि रूपेण तं क्षणात् ॥ १८ ॥ इति तस्य वचः श्रुत्वा गणा हर्षसमन्विताः। जगर्जुर्नादयंतस्ते दिशो विदिश एव च ॥ १९ ॥ तद् दृष्ट्वा परमाश्चर्यं विस्मितास्ते सुरर्षयः। हर्षेण महता युक्ता मेनिरे मत्सरं हतम् ॥ २० ॥ ततः सर्वान् समादाय गणान् देवान् मुनीनपि। वक्रतुंडो ययौ तां च पुरीमीर्ष्याह्वयां पराम् ॥ २१ ॥ यत्र राज्यं च कुरुते मत्सरः स प्रतापवान्। ब्रह्मांडस्य महावीरो नानाभोगसमन्वितः ॥ २२ ॥ देवांगनापरिवृतः सदा तिष्ठति दैत्यपः। मद्यादिपानसंयुक्तो नानावीरप्रपालितः ॥ २३ ॥ यद्यन्मनसि तेनापि चिंतितं सफलं सदा। तत्तद्भवति

सर्वं स्म तपसा वरदाननः ॥ २४ ॥ न बुबोध गतं कालं कालेनैव च वंचितः । धन्योऽहंमन्यमानो न मत्समो मानसेऽपरः ॥ २५ ॥ एकस्मिन् दिवसे तत्र सभायां संस्थितोऽभवत् । वीरैः परिवृतो नाना नृत्यं पश्यन् विनोदतः ॥ २६ ॥ तत्राकाशात्तदा वाणी बभूव भयदायिका । आगतो मत्सरं हंतुं वक्रतुंडो महाबलः ॥ २७ ॥ श्रुत्वाऽऽकाशभवां वाणीं मूर्छितो मत्सरासुरः । पतितः शुष्ककंठश्च कंपमानांगविह्वलः ॥ २८ ॥ तं तथा पतितं दृष्ट्वाऽसुराः सर्वे भयातुराः । केनोक्तं परुषं वाक्यं हन्मस्तं त्वद्य निश्चितम् ॥ २९ ॥ ततः केचिन्नभोमार्गे बभ्रमुर्यत्र तत्र ते । ददृशुस्तं न तत्रापि सभायां पुनरागमन् ॥ ३० ॥ सर्वैः कृतः स दैत्येशः सावधानो यथा पुरा । उपविष्टः सभामध्ये हृदयेन विदूयता ॥ ३१ ॥ उवाच हि स्वतो वाचं मत्सरो भयविह्वलः । वचनं किमिदं सत्यमनृतं वा भविष्यति ॥ ३२ ॥ कालस्य कालरूपोऽहं मम मृत्युः कथं भवेत । असत्या नभसो वाणी न ज्ञाता न श्रुताऽपि च ॥ ३३ ॥ अष्टावरणसंयुक्तं ब्रह्मांडं सर्वसंजसा । अष्टावरणयुक्तेभ्यो मम मृत्युर्न जायते ॥ ३४ ॥ कोऽसौ वक्राननो जंतुः कथितः कुत्र वर्तते । तं हनिष्यामि दृश्यश्चेत् क्षणमात्रान्न संशयः ॥ ३५ ॥ इति श्रुत्वा वचस्तस्य मत्सरस्य दुरात्मनः । ऊचुः प्रह्लादमुख्यास्तं विनयेन समन्विताः ॥ ३६ ॥ प्रह्लादादय ऊचुः ॥ मा कुरुष्व महाभाग चिंतां शत्रुनिषूदन । तव मृत्युः कथं भावी पश्चात् सूर्योदयः कथम् ॥ ३७ ॥ अस्माकं शत्रुभावेन स्थिता देवाः सहेश्वराः । जितास्तदपि सर्वे ते छिद्रदर्शिन एव च ॥ ३८ ॥ तैश्च माया कृता च स्यादीदृशी वाऽसुरोत्तम । अन्यथा ते महामृत्युः कथं भवति मानद ॥ ३९ ॥ तेयमाकाशवाणी भोस्तस्माद्देवान सहेश्वरान । हनिष्यामोऽद्य दैत्येश शत्रुहीनास्तदा वयम ॥ ४० ॥ तेषां वचनमाकर्ण्य मत्सरश्चैव हर्षितः । सत्यमुक्तं भवद्भिर्यद्धंतव्यं विद्विषां वधे ॥ ४१ ॥ मत्सराज्ञां समादाय निःसृता दैत्यपुंगवाः । विचिन्वंति स्म सर्वत्र देवान् सर्वान प्रयत्नतः ॥ ४२ ॥

ॐ इति श्रीमदन्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते मत्सरासुरविचारो नाम त्रयस्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । दैत्या भ्रमणयुक्तास्ते आययुर्दुंढिसन्निधौ । यत्र देवगणैर्युक्तो वक्रतुंडः प्रतापवान् ॥ १ ॥ दृष्ट्वा तं वक्रतुंडं ते भयभीतास्तदाऽभवन् । महाकायं महावीर्यं नरनागस्वरूपिणम् ॥ २ ॥ नानावीरैः परिवृतं प्रलयाग्निसमैः परैः । देवैर्हर्षसमायुक्तैः संस्तुतं भक्तिभावितैः ॥ ३ ॥ मनसा दैत्यपाः सर्वे मेनिरे मृत्युमात्मनः । सत्याकाशभवा वाणी सोऽयं वक्राननो भवेत् ॥ ४ ॥ वक्रतुंड जय त्वं वै जय त्वं जय सर्वदा । देवैः प्रकथ्यते तस्माद्वक्रतुंडोऽयमागतः ॥ ५ ॥ यदि युद्धं करिष्यामोऽनेन सार्धं महाद्भुतम् । युद्धे वयं मृताश्चेद्वा वृत्तांतं को निवेदयेत् ॥ ६ ॥ अतो मत्सरदैत्येशं गमिष्यामो जवान्विताः । एवं निश्चययुक्तास्ते मत्सरं जग्मुरादरात् ॥ ७ ॥ स देवो वक्रतुंडस्तु दूरतः पंचयोजनम् । ईर्ष्यापूरं परित्यज्य स्थितः कृत्वा सभां प्रभुः ॥ ८ ॥ दैत्यास्ते मत्सरं गत्वा वृत्तांतं तं न्यवेदयन् । भो राजन् सत्यमेवेदं वचनं खसमुद्भवम् ॥ ९ ॥ नरकुंजररूपेण दृष्टो वक्राननः प्रभुः । देवैः समावृतो भूप विचारं कुरु सर्वथा ॥ १० ॥ तेषां वचनमाकर्ण्य मत्सरश्चिंतयान्वितः । बभूव म्लानतुंडश्च ज्ञात्वा शत्रुं महाबलम् ॥ ११ ॥ ततः क्रोधसमाविष्टस्तं हंतुं कृतवान् मनः । आज्ञापयत् स दैत्येंद्रान् सज्जिता भो भवंत्विति ॥ १२ ॥ गमिष्यामि रिपुं हंतुं वक्रतुंडं महाबलम् । सदेवं सपरीवारं ततो हृदि सुखं भवेत् ॥ १३ ॥ आज्ञामात्रेण दैत्येशाः सन्नद्धाः समुपाययुः । हर्षेण महता युक्ता देवमर्दनलालसाः ॥ १४ ॥ चतुरंगं महत्सैन्यं निःसृतं नगराद्बहिः । तन्मध्ये मत्सरो वीरः शुशुभे रथसंगतः ॥ १५ ॥ आगतास्ते त्वराभाजो वक्रतुंडः स्थितो यतः । तान् दृष्ट्वा देवसंघास्तं शशंसुर्गणनायकम् ॥ १६ ॥ स्वामिन् समागतो दैत्यः स्वयमेव महाप्रभो । यत्करिष्यसि देवस्त्वं त्वरया तत् कुरु प्रभो ॥ १७ ॥ अस्मान्नोचेच्च दैतेया हनिष्यंति महाबलाः । मरणं प्राप्तमस्माभिः कुत्र स्थातुं न शक्यते ॥ १८ ॥ देवानां वक्रतुंडश्च श्रुत्वा वचनमादरात् । उवाच विस्मितो भूत्वा मा भयं कुरुत प्रियाः ॥ १९ ॥ स दैत्यं मत्सरं देवा हनिष्यामि न संशयः । पश्यंतु कौतुकं युद्धे मदीयं परमाद्भुतम् ॥ २० ॥ इत्युक्त्वा वक्रतुंडः स सिंहारूढोऽभवत्प्रभुः । पाशांकुशकरो गर्जन्मेघनादसमस्वनः ॥ २१ ॥ तस्य शब्देन संत्रस्तं त्रैलोक्यं सचराचरम् । भयभीता दैत्यगणा बभूवुश्च प्रजापते ॥ २२ ॥ मत्सरो हृदि संत्रस्तो वचनं चेदमब्रवीत् । दृश्यते प्रबला सेना किं भविष्यति दैत्यपाः ॥ २३ ॥ भययुक्तं वचस्तस्य श्रुत्वा तं दैत्यपा जगुः । वयं योत्स्यामहे स्वामिन् पश्य त्वं युद्धजं महः ॥ २४ ॥ इत्युक्त्वा मत्सरं सर्वे प्रह्लादप्रमुखाः सुराः । वक्रतुंडं ययुर्वीरा

नादयंतस्त्रिविष्टपम् ॥ २५ ॥ बाणवृष्टिं महोग्रां ते चक्रुः क्रोधसमन्विताः । ववर्षुरस्त्रशस्त्राणि वर्षाकाले घना इव ॥ २६ ॥ तैरस्त्रैर्दैत्यराजैश्च हता सेना दिवौकसाम् । देवा विष्णुमुखास्तत्र युयुधुस्तान् समागतान् ॥ २७ ॥ घोरयुद्धं ततस्तेषां देवासुरविनाशनम् । अभवद्दारुणं क्रूरं द्रष्टुं नैव प्रशक्यते ॥ २८ ॥ देवाश्च दानवाश्चैव युयुधुः शस्त्रपाणयः । मरणे निश्चयं कृत्वा परस्परजयेप्सवः ॥ २९ ॥ केचिद्बाणमयीं वृष्टिं चक्रुः शक्तीस्तु केचन । चिक्षिपुर्भिंदिपालांश्च खड्गैर्वै चिच्छिदुः परे ॥ ३० ॥ बबंधुरपरे पाशैर्भल्लैर्वा विव्यधुः परे । गदायुद्धं महाघोरं चक्रिरे वीरसत्तमाः ॥ ३१ ॥ मुद्गरैश्च महावीरा मारयामासुरोजसा । मल्लयुद्धं परे चक्रुर्नादयंतो दिशो दश ॥ ३२ ॥ सैन्यस्य रजसा सर्वं व्याप्तमासीद् दिगन्तरम् । नाभूत् स्वपरबोधोऽपि पुरोगान् जघ्निरे तदा ॥ ३३ ॥ शस्त्रैः शस्त्राणि संवार्य तथास्त्रैरस्त्रसंचयम् । बाणैर्बाणान् समारुह्य चिच्छिदुस्ते परस्परम् ॥ ३४ ॥ शस्त्रे भग्ने च ते वीरा मल्लयुद्धं सुदारुणम् । चक्रिरे क्रोधसंयुक्ता मंडलानि प्रबभ्रमुः ॥ ३५ ॥ हस्तेन हस्तमापीड्य पादैः पादान् प्रगृह्य च । कूर्परं कूर्परेणैव मर्दयामासुरोजसा ॥ ३६ ॥ मस्तकं मस्तकेनैव जानुभ्यां जानुनी तथा । ललाटेन ललाटं च स्फालयामासुरोजसा ॥ ३७ ॥ एवं युद्धे प्रवृत्ते वै मृताः केचित्तु मूर्च्छिताः । भग्नाः केऽपि क्षता अन्ये नानाशस्त्रप्रहारतः ॥३८॥ शोणितौघवहा घोरा नदी जाता दुरत्यया । रक्तेन सर्वतस्तत्र रणवो मज्जितास्ततः ॥ ३९ ॥ तेन प्रकाशितास्तत्र दिशः स्वपरबोधिकाः । ततोऽभूत्तुमुलं युद्धं यथायोग्यं प्रजापते ॥ ४० ॥ रथिनो रथिभिः सार्धं गजिनो गजिभिस्तथा । अश्वारूढा हयारूढैः पदाताश्च पदातिभिः ॥४१॥ श्रेष्ठा युयुधिरे श्रेष्ठैर्महाबलसमन्वितैः । प्रबाध्य जघ्निरे केचिद्वीराः समरशालिनः ॥ ४२ ॥ परस्परमभिंदंस्ते शस्त्रास्त्रैर्मर्मभेदिभिः । सर्वे शुशुभिरे चैव पुष्पिताः किंशुका इव ॥ ४३ ॥ कदाचिज्जयिनो देवाः कदाचिद्दानवास्तथा । न रात्रौ विश्रमं चक्रुः क्रोधयुक्ताः परस्परम् ॥ ४४ ॥ एवं पंचदिनं युद्धमभवत्तत्र दारुणम् । न जयं प्राप्नुयुर्देवा दैत्याश्चाऽपि प्रजापते ॥ ४५ ॥

॥ ओमिति श्रीमदान्दे पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते देवासुरयुद्धप्रसंगो नाम चतुस्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । एवं परस्परं घोरं युद्धं कृत्वा महाबलाः । न जयं प्राप्नुवंति स्म कर्म चैव यथासुरम् ॥ १ ॥ तं दृष्ट्वा परमाश्चर्यं प्रह्लादः कुपितोऽभवत् । धनुः सज्जं महाघोरं कृत्वा बाणान् समाददे ॥ २ ॥ मंत्रयन्ननलास्त्रेण चिक्षेप स शरान् बहून् । तेभ्यो जातो महानग्निः प्रलयानलसंनिभः ॥ ३ ॥ ददाह देवसेनां स प्रह्लादोऽसुरसत्तमः । भयभीताः सुराः सर्वे जज्वलुश्च समंततः ॥ ४ ॥ हाहाकारं प्रकुर्वंतो दग्धास्ते जातवेदसा । मर्यादां रणभूमिं च तथा त्यक्त्वा पलायिताः ॥ ५ ॥ महाग्निः सर्वतस्तान् वै सुरान् वाहनसंयुतान् । प्रबलो दाहयामास प्रह्लादेन प्रचोदितः ॥ ६ ॥ तेन दैत्यगणाः सर्वे हर्षयुक्ता बभूविरे । प्रह्लादं पूजयंतस्ते साधु साधु कृतं त्वया ॥ ७ ॥ सर्वान् पलायमानान् स सुरान् दृष्ट्वा पुरंदरः । मेघास्त्रं योजयामास धनुषि क्रोधसंयुतः ॥ ८ ॥ एतस्मिन्नंतरे तत्र प्रह्लादः समुपागतः । खड्गेन सहसेंद्रस्य धनुश्चिच्छेद लाघवात् ॥ ९ ॥ तत इंद्रः प्रकोपेन वज्रं तत्याज तं प्रति । वज्रेण निहतो भूमौ प्रह्लादः स पपात ह ॥ १० ॥ पतितं तं तथा दृष्ट्वा महिषासुर आगतः । गदया देवराजं तं जघान खलु मस्तके ॥ ११ ॥ गदया निहतः सोऽपि पपात रणमूर्धनि । मघवा मूर्च्छितोऽत्यंतं मुखाद्रक्तं समुद्गमन् ॥ १२ ॥ ततोऽग्निः परमक्रुद्धो जज्वाल ज्वालयासुरम् । महिषो जलरूपोऽभूत् प्लावयामास तं क्षणात् ॥ १३ ॥ निस्तेजाश्चितया युक्ताः शक्तिं चिक्षेप पावकः । तां खड्गेन महादैत्यः पातयामास भूतले ॥ १४ ॥ ततो महिषरूपेण शृंगाभ्यां दहनं पुनः । चकार मूर्च्छितं क्रुद्धः पपात महसां निधिः ॥ १५ ॥ ततो ययौ यमस्तं वै दंडघातेन सोऽहनत् । जक्रे संमूर्च्छितं दैत्यं महिषं भयदायकम् ॥ १६ ॥ एतस्मिन्नंतरे तत्र प्रतापी च विरोचनः । खड्गेन तं जघानाशु यमं सर्वभयंकरम् ॥ १७ ॥ पपात खड्गाघातेन यमो यमवतां प्रभुः । वरुणस्तं बबंधापि पाशेन च विरोचनम् ॥ १८ ॥ ततस्तं मोचयामास पाशं छित्वा महाबलः । अंधकः खड्गाघातेन गदया वरुणं तथा ॥ १९ ॥ मूर्च्छितं च चकाराऽभूदुत्थितः स विरोचनः । ततो वायुः कुबेरश्च तावुभौ क्रोधमूर्च्छितौ ॥ २० ॥ वायुना खड्गघातेन मूर्च्छितस्त्वमितौजसा । अंधकासुरनामाऽसौ पपात धरणीतले ॥ २१ ॥ शंबरेण हतो वायुर्मुसलेन महाबलः । स पपात तदा भूमौ देवः सर्वधरोऽपि सन् ॥ २२ ॥ विरोचनेन बाणौघैस्ताडितो धनरक्षकः । मर्मभेदिभिरत्युग्रैः पपाताऽसौ महाबलः ॥ २३ ॥ एतस्मिन्नंतरे तत्र विष्णुः स्वयमुपागतः । गदया तं जघानैव विरोचनमथो रिपुम् ॥ २४ ॥ भिन्नोरसं च दैत्येशं मृततुल्यं चकार ह । अधंकं चक्रघातेन पातयामास केशवः ॥ २५ ॥

शंबरं बाणजालैः संपातयामास भूतले । कुपितो माधवस्तत्र चक्रं तत्याज दारुणम् ॥ २६ ॥ चक्रेण क्षुरधारेण हता दैत्याः सहस्रशः । गदया मूर्च्छिताः केचित् मुरुया ये तत्र संस्थिताः ॥ २७ ॥ एतस्मिन् समरे वीरः प्रह्लादः संबभूव ह । सावधानो महाभागस्तं ययौ क्रोधदीपितः ॥ २८ ॥ बाणवृष्टिं चकाराऽसौ महोग्रां देवनाशिनीम् । तया नाच्छिन्नभिन्नांगान् देवांश्चक्रे धरातले ॥ २९ ॥ गदया देवदेवेशं केशवं युयुधे भृशम् । खड्गेन मूर्च्छितं चक्रे गरुडं दैत्यनायकः ॥ ३० ॥ ततश्च कुपितो विष्णुस्तं हंतुं चक्रमाददे । बहुधा भ्रामयामास तत्याज ह्यस्त्रमुत्तमम् ॥ ३१ ॥ तन्मस्तकानि दैत्यानां चक्रं चिच्छेद सर्वतः । बाहूदरभुजांश्चैव चकार शकलीकृतान् ॥ ३२ ॥ सहसाऽसुरराजं च प्रह्लादं हंतुमाययौ । चक्रं तेजोमयं दिव्यं समीपे ज्वलनप्रभम् ॥ ३३ ॥ प्रह्लादस्त्वरयास्त्रं च महाधनुषि संदधे । नारायणात्मकं चैव हृदि स्मृत्वा जनार्दनम् ॥ ३४ ॥ मुमोच तत महास्त्रं वै तेजोरूपममोघकम् । अनिवार्यं जगद्भस्मकारकं कुपितः परः ॥ ३५ ॥ नारायणास्त्रवेगेन चक्रं प्रतिहतं ततः । देवान् सर्वान् ददाहापि महास्त्रं सर्वतः परम् ॥ ३६ ॥ हृदये सहसागत्य पतितं केशवस्य तत् । मूर्च्छितं मृततुल्यं तं चकार च जनार्दनम् ॥ ३७ ॥ ततो मदयुता दैत्या जगर्जुर्हर्षसंयुताः । प्रशशंसुर्महाभागं प्रह्लादं तेजसान्वितम् ॥ ३८ ॥ नारायणास्त्रसंदग्धान् देवर्षीन् वीक्ष्य शंकरः । क्षुभितो देवरक्षार्थं पिनाकं स्वकरे दधौ ॥ ३९ ॥ महास्त्रं तत पाशुपतं संदधे क्रोधसंयुतः । बलेन मोचयामास त्वरावान् शंकरोऽभवत् ॥ ४० ॥ महास्त्रं वै पाशुपतं तथा नारायणात्मकम् । उभे अस्त्रे संयुगे ते युयुधाते विहायसि ॥ ४१ ॥ देवा मुनिगणास्तत्र हर्षयुक्ता बभूविरे । प्रशशंसुर्महादेवं देवदेवं च शंकरम् ॥ ४२ ॥ ततः पशुपतिः क्रुद्धस्त्रिशूलं संदधे मुने । तत्याज दैत्यसेनायां कुर्वाणं प्रलयं परम् ॥ ४३ ॥ त्रिशूलं च करोति स्म मृतान् दैत्यान् सहस्रशः । प्रह्लादहृदयकस्मात् पपात यमसन्निभम् ॥ ४४ ॥ तेनाऽसौ पतितो भूमौ वाताहत इव द्रुमः । दैत्यसैन्ये महानासीत्तदा कोलाहलः परः ॥ ४५ ॥ ततस्त्रिशूलवेगेन शितेन सहसाऽसुराः । मूर्च्छिताश्च कृताः केचित् केचिद्धै मारिता मुने ॥ ४६ ॥ सर्वेऽसुरगणास्तत्र पतिता रणमूर्धनि । ततो मत्सरपुत्रौ द्वौ शंकरं जग्मतुः प्रभो ॥ ४७ ॥ सुंदरप्रियनामा च विषयप्रिय एव यः । ऊचतुः शंकरं तत्र क्रोधयुक्तौ महासुरौ ॥ ४८ ॥

॥ इति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते शिवविजयो नाम पंचत्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । वद ब्रह्मन्विशेषेण मम हर्षकरीं कथाम् । विस्तरेण महाभाग वक्रतुंडप्रभावजाम् ॥ १ ॥ मुद्गल उवाच । न शक्यतेऽग्निपुत्रेण विस्तरेण पिनाकिना । शेषेण विधिना वक्तुं संक्षपेण ब्रवीम्यतः ॥ २ ॥ दक्ष उवाच । किमुक्तं दैत्यपुत्राभ्यां शंकरेण श्रुतं वद । श्रुत्वा तत् किं कृतं तेन महादेवेन मानद ॥ ३ ॥ दैत्याभ्यां किं कृतं तत्र तद्वद त्वं विशेषतः । श्रुत्वा त्वद्वदनांभोजात् कथां तृप्याम्यहं न च ॥ ४ ॥ सूत उवाच । एवमादरमाज्ञाय दक्षस्य प्रयतात्मनः । मुद्गलस्त-मुवाचाथ हर्षयुक्तः स शौनक ॥ ५ ॥ मुद्गल उवाच । दैत्यपुत्रौ महावीर्यौ शंकरं क्रोधसंयुतौ । यदूचतुश्च तत्सर्वं शृणु दक्ष प्रजापते ॥ ६ ॥ मत्सरपुत्रावूचतुः । तिष्ठ तिष्ठ महादेव पश्य पौरुषमावयोः । ज्ञातं त्वदीयं सामर्थ्यं न च गंतुं त्वमर्हसि ॥ ७ ॥ अस्मदीया महासेना हता सर्वा सदाशिव । दैत्येंद्राः पातिताः सर्वे त्वया शंकर तेजसा ॥ ८ ॥ पौरुषं दर्शितं पूर्णं सर्वदेवातिगं महत् । अधुना त्वां हनिष्यावो वक्रतुंडस्य पश्यतः ॥ ९ ॥ त्वां हत्वा वक्रतुंडं च हनिष्यावो न संशयः । पश्चात् सर्वान् सुरेंद्रांश्च ततो मुनिगणान् सुरान् ॥ १० ॥ एवमुक्त्वा महादेवं धनुः सज्जं प्रचक्रतुः । तावुवाच महादेवः स्मयमान इदं वचः ॥ ११ ॥ शिव उवाच । भवद्भ्यां गदितं क्रूरं तत्सर्वं तथ्यमेव च । अधुनाऽयं समुत्पन्नो वक्रतुंडो महाबलः ॥ १२ ॥ भूभारहरणार्थं वै भवतां नाशनाय च । अधुना स गतः कालो विपरीतेन कर्मणा ॥ १३ ॥ वक्रतुंडप्रसादेन हनिष्यामि समत्सरम् । असुरं बलमत्यर्थं पापरूपं न संशयः ॥ १४ ॥ इत्युक्त्वा बाणवृष्टिं स चक्रे वै शंकरः प्रभुः । महोग्रां कालरूपां वै प्रलयस्य प्रकाशिनीम् ॥ १५ ॥ तां च चिच्छिदतुर्दैत्यौ स्वशरैरतिवेगितैः । तौ मंडपं क्षणेनैव चक्रतुः शरसंभवम् ॥ १६ ॥ तद्बाणैरपि ते देवाश्छिन्ना भिन्नाः कृता मुने । शंकरो विस्मितो भूत्वा शूलमुग्रं मुमोच ह ॥ १७ ॥ आगतं कालरूपं च शूलं दृष्ट्वा महासुरौ । महास्त्रं तौ पाशुपतं मोचयामासतुस्तदा ॥ १८ ॥ अनिवार्यं महोग्रं वै सर्वभस्मकरं परम् । जज्वाल तेजसा सर्वं ब्रह्मांडं व्याकुलं ततः ॥ १९ ॥ त्रिशूलं निष्फलं तेन महास्त्रेण कृतं क्षणात् । शिवस्य हृदये गत्वा पपात भयदायकम् ॥ २० ॥ मूर्च्छितः शंकरस्तेन पतितो धरणीतले । हाहाकारश्च सर्वत्र देवसैन्ये ततोऽभवत् ॥ २१ ॥ पतितं शंकरं दृष्ट्वा वक्रतुंडो महाबलः । स्वां सेनां प्रेरयामास दैत्यमर्दनलालसः ॥ २२ ॥ गणेशदूतमुख्यास्तेष्वष्टौ तत्राययुः परे । स्वां स्वां सेनां समादाय महाकाया महाबलाः ॥ २३ ॥ प्रमोदश्चैष आमोदस्तथा ब्रह्मप्रियो मुने । योगप्रियश्च स्वानंदभोक्ता ज्ञानमयश्च हि ॥ २४ ॥ सर्वगः सर्वविच्चैव क्रोधयुक्ताः समाययुः । तैः प्रेक्षिताः सुराः सर्वे गतमूर्च्छास्तदाऽभवन् ॥ २५ ॥

श्रमहीनाः क्षतादिभ्यो हीना जाताः प्रभावतः । तेजसा द्विगुणाश्चैव हृष्टपुष्टा यथा मुने ॥ २६ ॥ एतस्मिन्नंतरे तत्र कविना जीवितास्तथा । दैत्याः समुत्थिताः सर्वे नीरुजश्च महाबलाः ॥ २७ ॥ प्रह्लादप्रमुखा वीराश्चक्रुर्नादं समंततः । ब्रह्मांडमखिलं तेन सनादमभवत् परम् ॥ २८ ॥ ततो देवगणाः सर्वे शंखनादं प्रचक्रिरे । तेन दैत्यगणा भीता बधिरा इव ते स्थिताः ॥ २९ ॥ शंखानां चैव भेरीणां दुंदुभीनां स्वरैः परैः । वीराणां क्ष्वेडितैश्चैव हेषितैर्बृंहितस्वनैः ॥ ३० ॥ रथनेमिस्वनैः सर्वं व्याप्तमासीन्नभो मुने । परस्परं संपदं च वीक्ष्य वीक्ष्य च विस्मिताः ॥ ३१ ॥ एतस्मिन्नेव काले ते प्रमोदाद्या गणा ययुः । कुपिताः शस्त्रसंवृष्टिं चक्रिरे दैत्यमोहिनीम् ॥ ३२ ॥ तेषां शस्त्राणि सर्वाणि ह्यमोघानि महामुने । चिच्छिदुर्दैत्यराजानां मस्तकानि भुजादिकान् ॥ ३३ ॥ ब्रह्मप्रियो महाबाहुः शुक्रं धृत्वा प्रपश्यताम् । असुराणां गतो दूरं गुहायां चाक्षिपत् मुनिम् ॥ ३४ ॥ गतं शुक्रं तदा दृष्ट्वा दैत्याः सर्वे भयातुराः । हाहाकारं प्रचक्रुस्ते किं भविष्यति विह्वलाः ॥ ३५ ॥ रक्षिता गुरुरस्मभ्यं पश्यतां नो महासुराः । नीतश्च मरणं तस्माच्छ्रेष्ठं किं न मृता वयम् ॥ ३६ ॥ अधुना क्व गमिष्यामस्तस्माद्युद्ध्यामहे वयम् । मरिष्यामोऽथ वा मोचयिष्यामस्तं स्वतेजसा ॥ ३७ ॥ परस्परं चेति दैत्या उक्त्वा मरणनिश्चयाः । उदायुधाश्च सर्वे ते युयुधुर्देवसैनिकैः ॥ ३८ ॥ व्यंगा देवाः कृतास्तैस्ते पतिता रणमूर्धनि । हाहाकारश्च सर्वत्र देवसैन्ये प्रवर्तितः ॥ ३९ ॥ ततो ब्रह्मप्रियाद्या ये कुपिताः शस्त्रधारिणः । परशुप्रमुखैः शस्त्रैस्त्रिशूलांकुशपाशकैः ॥ ४० ॥ शस्त्रैर्दैत्यान्निजघ्नुस्तान् कालरुद्रा इव प्रजाः । तैरस्त्रैर्दैत्यसेनायाः कदनं कृतमंजसा ॥ ४१ ॥ बहवश्च मृता दैत्या मूर्च्छिताश्चापरेऽवनौ । पेतुस्ते सर्वशो वीरा प्रह्लादप्रमुखा मुने ॥ ४२ ॥ ततो दैत्यकुमारौ तावागतौ रणमूर्धनि । ऊचतुस्तान् गणांस्तत्र प्रमोदाद्यान महासुरौ ॥ ४३ ॥ दैत्यपुत्रावूचतुः । प्रमोदामोदकाद्याश्च भवद्भिर्बलमंजसा । हतं सर्वं च दैत्यानां दैत्यश्रेष्ठाः प्रमूर्च्छिताः ॥ ४४ ॥ अधुना मरणं प्राप्तं समीपे वः प्रपश्यताम । शस्त्रैस्तीक्ष्णैर्हनिष्यावो वक्रतुंडयुतान् खलान ॥ ४५ ॥ एवमुक्त्वा स्वबाणांस्तौ ववर्षतुरथासुरौ । ततस्तयोर्बलं वीक्ष्य द्वौ वीरौ समुपस्थितौ ॥ ४६ ॥ सर्वगः सर्वविच्चैव सबलौ धृतकार्मुकौ । बाणवृष्टिं तु संवार्य बाणांश्चिक्षिपतुः परान ॥ ४७ ॥ अमोघाः सर्वबाणास्ते जग्मुः कालयमोपमाः । दैत्यान सर्वान प्रचक्रुस्ते छिन्नभिन्नान्सकान मुने ॥ ४८ ॥ मृता मुमूर्षवः केचित्पतिता धरणीतले । अकस्माद्रक्तसंभूता नदी तत्र प्रवर्तिता ॥ ४९ ॥ तयोर्बलं निरीक्ष्यैव कंपितौ दैत्यपुंगवौ । अग्न्यस्त्रं धनुषि श्रेष्ठं दधतुः क्रोधसंयुतौ ॥ ५० ॥ यावत् मुमुचतुस्तावत् परश

यमसन्निभौ। आगतौ च शिरश्छेदं दैत्ययोश्चक्रतुः क्षणात् ॥ ५१ ॥ मत्सरस्य सुतौ वीक्ष्य मृतौ सर्वे भयातुराः। मत्सरं शरणं जग्मुरूचुर्वृत्तांतमंजसा ॥ ५२ ॥ दैत्या ऊचुः। शृणु दैत्येश वृत्तांतं रणभूमिसमुद्भवम्। महाभयंकरं घोरं कथितुं शक्यते न च ॥ ५३ ॥ प्रह्लादप्रमुखाः सर्वे घातिता रणमूर्धनि। मृततुल्या मृता वा किमस्माभिर्ज्ञायते न च ॥ ५४ ॥ तव पुत्रौ महावीर्यौ मृतौ संग्राममंडले। कृत्वा युद्धं महाघोरं परशुभ्यां महामते ॥ ५५ ॥ अकस्माद्वक्रतुंडस्य गणौ द्वौ समुपस्थितौ। ताभ्यां चैव हतौ वीरौ स्वल्पकालेन दैत्यप ॥ ५६ ॥ वक्रतुंडसमश्चैव न भूतो न भविष्यति। इति स्वांते च संज्ञाय देवं तं शरणं व्रज ॥ ५७ ॥ नोचेद्दैत्यगणाः सर्वे नाशं यास्यंति निश्चितम्। मा गर्वं कुरु दैत्येश दैत्यान् रक्ष महामते ॥ ५८ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते सुंदरप्रियविषयप्रियवधो नाम षट्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः। मुद्गल उवाच। दैत्यानां वचनं श्रुत्वा स दैत्यो मत्सरासुरः। मूर्च्छितः सहसा भूमौ पपात भयविह्वलः ॥१॥ अनिश्वसन् दैत्यपस्तु तैराशु विधृतो नृपः। सावधानं प्रचक्रुस्तं प्रयत्नैः परमैस्ततः ॥ २ ॥ द्विमुहूर्तेन संबुद्धो मत्सरः प्रललाप ह। किं जातं भावि वा किं वा दैवेन विफलं कृतम् ॥ ३ ॥ तपसा त्वमरत्वं च पृथिवीराज्यमंजसा। मया प्राप्तं स्वसामर्थ्यादतुलं तद् वृथा कृतम् ॥४॥ अहो हि बलवद् दैवं प्रयत्नो निष्फलो मतः। अचिंत्या मेऽभयप्राप्तिः पश्चात् सूर्योदयो यथा ॥ ५ ॥ मृता दैत्या असंख्याश्च मदर्थं नात्र संशयः। मृतौ पुत्रौ महाकालौ कालस्य कथमद्य तौ ॥ ६ ॥ अधुना शोकसंतप्तो मरिष्यामि न संशयः। मृतौ पुत्रौ महाकालौ किं कार्यं जीवितेन मे ॥ ७ ॥ ब्रह्मांडाधिपतेः पुत्रौ कथं तौ निधनं गतौ। कथं मिथ्या हि जातं मे वरदानं महत्तरम् ॥ ८ ॥ अहो पुत्रौ महावीर्यौ कथं मरणमापतुः। याभ्यां स्वभुज-वीर्येण जिता विष्णुमुखाः सुराः ॥९॥ अहो पुत्रौ च मां त्यक्त्वा घोरे दुःखार्णवे परे। क्व गतौ वदतं वाक्यमभूतं निष्ठुरौ कथम् ॥ १० ॥ सखींश्च पितरं वृद्धं त्यक्त्वा मां सुंदरप्रिय। विषयप्रिय मद्बालौ कथं मृत्युमुपस्थितौ ॥ ११ ॥ इति नानाविधं शोकं चक्रे दैत्येंद्रपालकः। तं ते सभ्यवराः सर्वे सांत्वयामासुरादरात् ॥ १२ ॥ वृद्धा ऊचुः। न रोदनं प्रकर्तव्यं त्वया दैत्येंद्रनायक। रणे मृतौ महावीर्यौ कीर्तिं कृत्वा महत्तराम् ॥ १३ ॥ देहस्य मरणं नित्यं जन्म चैव तथा प्रभो। किं चित्रं

तच्च संजातं येन शोचसि दैत्यप ॥ १४ ॥ आत्मनो मरणं नैव जन्मशास्त्रेषु कथ्यते। मायामोहं परित्यज्य स्वस्थो भव महामते ॥ १५ ॥ जंतोरूर्ध्वक्रिया सर्वा कर्तव्या स्वजनैरपि। अतस्त्वं दैत्यराजेंद्र सार्थकं त्वेतयोः कुरु ॥ १६ ॥ अथवा तौ परित्यज्य वक्रतुंडं जहि प्रभो। अथवा शरणं याहि येनैव कुशलं भवेत् ॥ १७ ॥ वीरा रुदंति कुत्रापि नैव जानीहि दैत्यप। सपत्नान् हर्षसंयुक्तान् मा कुरुष्वाधुना परान् ॥ १८ ॥ एवं प्रबोधितो दैत्यो मत्सरः क्रोधसंयुतः। आदाय सकलं सैन्यं ययौ संग्राममंडलम् ॥ १९ ॥ मत्सरासुरमायांतं दृष्ट्वा शंभ्वादयः सुराः। भयभीताश्च तं प्रोचुर्वक्रतुंडं प्रणम्य ते ॥ २० ॥ स्वामिन समागतो दैत्यो मत्सरः स प्रतापवान्। यस्याग्रे सशक्रा देवास्तृणरूपा नरादयः ॥ २१ ॥ यस्याग्रे वशवर्तिन्यः श्रियः सर्वार्थदायिकाः। ब्रह्मांडं कंपते यस्य भयात्सोऽयं समागतः ॥ २२ ॥ यस्य राज्ये महाभागा जना दुःखविवर्जिताः। सर्वर्तुफलदा वृक्षा मेघाः कालप्रवर्षिणः ॥ २३ ॥ यस्याज्ञा वशगश्चासौ तपत्येव दिवाकरः। न शीतं प्रबलं तत्र मत्सरे राज्यभोगिनि ॥ २४ ॥ न रोगाः प्रचरंतीह भयभीताः समंततः। न च चोरादिसंत्रस्तं जगद्राज्यं प्रशासति ॥ २५ ॥ यस्य पूजा च सर्वत्र जगति क्रियते जनैः। यज्ञादि सर्वमखिलं भुक्तं येन महात्मना ॥ २६ ॥ कालो बिभेति यं दृष्ट्वा तदाज्ञा पालकोऽभवत्। कर्मखंडनमप्यत्र कृतं येन सुरारिणा ॥ २७ ॥ न स्वाहा न स्वधा यत्र न वषट्कार एव च। न वेदाध्ययनाचारो मत्सरे राज्यकर्तरि ॥ २८ ॥ न स्नानादिक्रिया यत्र न स्वधर्मः स्वभावजः। न वर्णाश्रमयोर्धर्मो मत्सरे राज्यकर्तरि ॥ २९ ॥ देवाः श्वापदतुल्या वै भ्रमंति वनगोचराः। अन्नवस्त्रादिसंहीनाः कृता दैत्येंद्रकेण भोः ॥ ३० ॥ मुनयस्तपसा हीनाः शापसामर्थ्यहीनकाः। कृता मत्सरदैत्येन सोऽयं स्वामिन समागतः ॥ ३१ ॥ देवांगनाश्च नरकन्या नागकन्या महात्मना। भुक्ता नानाविधा भोगाः सोऽयं मत्सर आगतः ॥ ३२ ॥ नरकन्याः पशोः कन्या मुनिकन्याः समाहृताः। बलेन न समं यस्य ब्रह्मांडे सोऽयमागतः ॥ ३३ ॥ यस्याष्टावरणैर्मृत्युर्न भवेच्च कदाचन। सोऽयं समागतो दैत्यः पश्य पश्य गणाधिप ॥ ३४ ॥ इत्येवं ब्रुवतो देवान् वक्रतुंडो महाबलः। मा भयं कुरुत प्राज्ञा हनिष्यामीति सोऽब्रवीत् ॥ ३५ ॥ सिंहारूढो महाबाहुरेकदंतविराजितः। पाशांकुशधरो भूत्वा ययौ संग्राममंडलम् ॥ ३६ ॥ प्रमोदामोदकाद्यैश्च संवृतं युद्धलालसम्। तं दृष्ट्वा क्रोधसंयुक्तो मत्सरः प्राह भर्त्सयन् ॥ ३७ ॥ मत्सरासुर उवाच। किमर्थमागतस्त्वं मे वक्रतुंड रणेऽग्रतः। अद्यैव त्वां हनिष्यामि मा मुखं दर्शयस्व रे ॥ ३८ ॥ मूढोऽसि येन संग्रामं कर्तुमागत एव च। न मे मृत्युर्भवेदष्टावरणैर्देहधारिभिः

॥ ३९ ॥ शंभुविष्णुमुखैर्देवैः प्रेरितस्त्वं न बुध्यसे । मोहभावेन संयातो मत्सरेण युयुत्सुना ॥ ४० ॥ हन्मि त्वामेकबाणेन ससैन्यं नात्र संशयः । पदाघातेन मे भूमिर्विशीर्णा जायते खल ॥ ४१ ॥ तलप्रहारसंयुक्ताः पर्वताश्चूर्णतां गताः । तस्याऽग्रे कथमायातः कालेन प्रेरितोऽथवा ॥ ४२॥ शब्दगर्जनमात्रेण कंपते सचराचरम् । तस्याग्रे त्वं सुसंग्रामं किं करिष्यसि तद्वद ॥ ४३ ॥ ब्रह्मांडं सकलं युद्धे जितं येन प्रभावतः । तदा त्वं कुत्र गुप्तः सन् स्थितोऽसि भयभावितः ॥ ४४ ॥ समीचीनमिदं मूढाऽधुना खल कृतं त्वया । दृष्टः समीपगो जातो हतो मम भविष्यसि ॥ ४५ ॥ शरणं याहि मे दुष्ट जीवितुं यदि चेच्छसि । मदाज्ञावशगो भूत्वा वने तिष्ठ यथासुखम् ॥४६ ॥ मूढभावेन संयातं त्वां न हन्मि च निर्बलम् । प्रेरकान् मुनिदेवांस्ते तान् हनिष्यामि निश्चितम् ॥ ४७ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते मत्सरासुरसमागमो नाम सप्तत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः । मुद्गल उवाच । एवं ब्रुवंतमत्यंतं मत्सरं क्रोधसंयुतम् । वक्रतुंडः प्रसन्नात्मा स्मयन्निव जगाद तम् ॥ १ ॥ वक्रतुंड उवाच । मा गर्वं कुरु दैत्येश नाहं देवो न मानुषः । नासुरो नैव नागश्च न गंधर्वो न पर्वतः ॥ २ ॥ न नानायोनिजो जंतुर्नाष्टावरणजस्तथा । ब्रह्मरूपोऽहमानंदानंदकारक एव च ॥ ३ ॥ त्वां हंतुं मुनिदेवानां स्थापनार्थमिहागतः । हनिष्यामि त्वसंदेहाद् दैत्यनायक दुर्मते ॥ ४॥ शिथिलं वरपुण्यं ते सांप्रतं पापसंचयात् । नानापापफलार्थस्य दाता तेऽहं समागतः ॥ ५ ॥ अकर्तुं कर्तुमीशं मामन्यथाकर्तुमादरात् । जानीहि मत्सर त्वं वै किं करिष्यसि तद्वद ॥ ६ ॥ जीवितुं चेच्छसि प्राज्ञ तदा मां शरणं व्रज । स्वस्थाने धर्मविद्वेषं त्यक्त्वा त्वं तु सुखी भव ॥ ७ ॥ देवादीनां च विद्वेषं त्यक्त्वा तिष्ठसि दैत्य चेत् । तदा त्वां न हनिष्यामि जानीहि त्वं मतं मम ॥ ८ ॥ मुद्गल उवाच । वक्रतुंडवचः श्रुत्वा मत्सरो विस्मितोऽभवत् । उवाच तं प्रसन्नात्मा भक्तिभावेन यंत्रितः ॥ ९ ॥ मत्सर उवाच । वक्रतुंड नमस्तुभ्यं वद मे सकलं प्रभो । संशयं छिंधि तं पूर्वं हृदिस्थं गणनायक ॥ १० ॥ यदि त्वं सगुणो नासि निर्गुणोऽपि न वर्तसे । ब्रह्मरूपोऽसि सर्वेश तदाकारधरः कथम् ॥ ११ ॥ अन्यच्च त्वं महाभाग ब्रह्मभावेन संस्थितः । सुरासुरसमं ब्रह्म कथमेकं समाश्रितः ॥ १२॥ असुराणां निहंता त्वं सुराणां पालकोऽधुना । एतं मे संशयं ब्रह्मन् छेत्तुमर्हसि विघ्नप ॥ १३ ॥ मत्सरस्य वचः श्रुत्वा वक्रतुंडः प्रतापवान् । उवाच तं

महावीरं भावं दृष्ट्वा हृदि स्थितम् ॥ १४ ॥ वक्रतुंड उवाच । शृणु मत्सर यत्पृष्टं त्वया बुद्धिविशारद । तत्सर्वं कथयिष्यामि संशयच्छेदनाय ते ॥ १५ ॥ अखिलं ब्रह्मरूपेण मया सृष्टं चराचरम् । लीलार्थं बंधहीनेन स्वस्वधर्मयुतं परम् ॥ १६ ॥ पुरुषप्रकृतिभ्यां तत् पाल्यते ह्रियते मया । तयोर्हृदि स्थितेनैव चिंतामणिस्वरूपिणा ॥ १७ ॥ सर्वेषां चित्तवृत्तश्च चालकोऽहं न संशयः । मदाज्ञावशगं सर्वं वर्तते दैत्यपुंगव ॥ १८ ॥ यदा स्वधर्ममत्यंतं त्यक्त्वा देवगणेश्वराः । दैत्यानां निधनार्थं च यतंते मूलनाशकाः ॥ १९ ॥ तदा दैत्यहृदिस्थोऽहं तपसि प्रेरकोस्म्यतः । दैत्याः कुर्वंति च तपो देवानां प्रजिघांसया ॥ २० ॥ तपसा वरलाभेन देवान् घ्नंति महाबलाः । ततस्ते सततं देवाः सत्ताहीना भवंति वै ॥ २१ ॥ ततोऽहं देवसंघानां विपरीतो न संशयः । भवामि चासुराणां वै सिद्धिदाता महासुर ॥ २२ ॥ यदि दैत्या महादुष्टास्त्यक्त्वा घ्नंति स्वधर्मकम् । देवान् मूलविहीनांश्च कर्तुमिच्छंति दानव ॥ २३ ॥ तदाऽहं देवरूपेण तेषां हृदि समास्थितः । छिद्रं प्रकाशयाम्यादौ हनने दैत्यरक्षसाम् ॥ २४ ॥ ततस्तेनैव देवेंद्रा मार्गेण सुरविद्विषः । घ्नंति मत्सर ते सर्वं कथितं मे चरित्रकम् ॥ २५ ॥ यदि स्वहृदये देवा निश्चयं कुर्वते परम् । दैत्यानां तपसां विघ्नं कर्तव्यमिति सांप्रतम् ॥ २६ ॥ तदाऽहं वरदाता च भवाम्यसुरनायक । दैत्येभ्यो नात्र संदेहो देवगर्वप्रहारकः ॥ २७ ॥ यदि दैत्या महाभागा देवैर्जाता दुरामदाः । तदाऽहं दैत्यनाशाय भवामि तनुधारकः ॥ २८ ॥ यदा दैत्याश्च देवाश्च स्वस्वधर्मपरायणाः । तदाऽहं ब्रह्मभावेन स्थितस्तेषां हृदि ह्यहो ॥ २९ ॥ त्वया प्रपीडिता देवास्त्यक्त्वा धर्मं स्वभावजम् । अतस्त्वां हंतुमायातो दैत्यराज महामते ॥ ३० ॥ इत्युक्त्वा निजरूपं तद्दर्शयामास विप्रपः । बिंदुमात्रे ब्रह्मणि स्वे संस्थितं सुंदरं मुने ॥ ३१ ॥ वक्रतुंडप्रसादेन तस्य दर्शनजेन च । फलेन दैत्यराजोऽपि दिव्यं चक्षुरवाप्तवान् ॥ ३२ ॥ तेनैव चक्षुषा तेन दैत्येन परमाद्भुतम् । दृष्टं रूपं गणेशस्य ब्रह्माकारं प्रजापते ॥ ३३ ॥ न न्यूनं नाधिकं तत्र न समं चात्मना न च । चतुष्पादमयं ब्रह्म पादहीनं स्वभावतः ॥ ३४ ॥ न देहो न च देह्यत्र सगुणो निर्गुणो न च । न मायामायिको भाति वक्रतुंडो गजाननः ॥ ३५ ॥ देहं सगुणरूपं च निर्गुणं मस्तकं मुने । गजवक्त्रमयं तेन दृष्टं भिन्नं प्रभावतः ॥ ३६ ॥ तयोर्योगकरः साक्षाद् वक्रतुंडः प्रतापवान् । संयुक्तोऽवयवाद्यैश्च ज्ञातो दैत्याधिपेन सः ॥ ३७ ॥ ततस्तं प्रणनामाथ भक्तियुक्तेन चेतसा । तुष्टाव परया भक्त्या बद्धांजलिपुटोऽसुरः ॥ ३८ ॥ मत्सरासुर उवाच । नमामि वक्रतुंडं च चतुष्पादं चतुःपरम् । चतुर्देहविहीनं च बिंदुमात्रे व्यवस्थितम् ॥ ३९ ॥ साकारं

च निराकारं मायारूपधरं प्रभुम्। नमामि मायिनं तं च मायाहीनस्वरूपकम् ॥ ४० ॥ जगन्मयं च तद्धीनं सर्वकामप्रपूरकम्। ब्रह्मभूयप्रदं चैव नमामि गणनायकम् ॥ ४१ ॥ सिंहारूढं चतुर्बाहुं विघ्ननाशं नमामि च । सिद्धिबुद्धिपतिं चैव सिद्धिबुद्धिप्रदायकम् ॥ ४२ ॥ अनंतलीलया युक्तं लीलाहीनं नमामि तम्। अव्यक्तं व्यक्तरूपं वै नमामि स्वहृदि स्थितम् ॥ ४३ ॥ वेदांतवेद्यं सज्योतिर्ज्योतिषामपि भासकम्। नमामि सच्चिदानंददेहरूपं गजाननम् ॥ ४४ ॥ योगिनां हृदि संस्थं च योगिभ्यो योगदायकम्। भावाभावमयं देवं नमामि भववर्जितम् ॥ ४५ ॥ सर्वत्र पक्षहीनं तं सर्वपक्षधरं प्रभुम्। नमामि वक्रतुंडाख्यं ब्रह्मब्रह्माधिपं विभुम् ॥ ४६ ॥ अहो भाग्यमहो भाग्यं येन दृष्टो गजाननः। सर्वाकारनिराकारहीनोऽयं वक्रतुंडकः ॥ ४७ ॥ शरणं ते प्रपन्नोऽस्मि पाहि मां भक्तवत्सल । प्रवणं त्वत्पदे नित्यं संसारोत्तारणैषिणम् ॥ ४८ ॥ एवं स्तुत्वा वक्रतुंडं पादयोर्निपपात ह । पुनः पुनः प्रणम्याऽसौ बद्धांजलिपुटः स्थितः ॥ ४९ ॥ स दृष्ट्वा तादृशं दैत्यं भक्तियुक्तं गजाननः। जगाद तं महाभागं भक्तेशो भावतोषितः ॥ ५० ॥ वक्रतुंड उवाच। मत्सर त्वद्विनाशाय कुपितोऽहं न संशयः। शरणागतनाशं च नेच्छामि वृणु वाञ्छितम् ॥ ५१ ॥ इदं त्वया कृतं स्तोत्रं मत्प्रीतिवर्धनं महत् । महैश्वर्यायुरारोग्यदायकं धनधान्यदम् ॥ ५२ ॥ पुत्रपौत्रकलत्रादिनानासंपत्करं परम्। धर्मार्थकाममोक्षाणां दायकं प्रभविष्यति ॥ ५३ ॥ मुद्गल उवाच। वक्रतुंडवचः श्रुत्वा मत्सरो भक्तिसंयुतः । जगाद वचनं तत्र वक्रतुंडं कृतांजलिः ॥ ५४ ॥ मत्सर उवाच। प्रसन्नो यदि सर्वेश मह्यं देयो वरो यदि । सुदृढां च तदा भक्तिं त्वदीयां देहि विघ्नप ॥ ५५ ॥ अन्यं त्वं मे वरं देहि त्वद्भक्तास्ते च मे प्रियाः । स्थानं देहि तथा वृत्तिं योगक्षेमकरीं प्रभो ॥ ५६ ॥ मत्सरस्य वचः श्रुत्वा वक्रतुंडस्तमब्रवीत् । अचला यदि मे भक्तिरद्य ते संभविष्यति ॥ ५७ ॥ स्वस्वधर्मरतान् जंतूंस्तान् रक्षस्व च मत्सर। मदीयान् प्रवरान् भक्तांस्तान् पालय च यत्नतः ॥ ५८ ॥ मदीयमूर्तिपूजा च यत्रादौ स्मरणं भवेत् । सर्वारंभेषु तत्र त्वं मा विघ्नं कुरु दैत्यप ॥ ५९ ॥ अन्यत्र सर्वभावेषु कर्मज्ञानादिकर्तृषु। आसुरेणैव वर्तस्व फलं ग्राह्यं त्वयाऽसुर ॥ ६० ॥ तेषां हृदि समाविश्य कुरु राज्यं महामते । मद्भक्त्यादिषु भावेषु दासवत्त्वं सदा भव ॥ ६१ ॥ एवमुक्तो महादैत्यस्तथेति तमुवाच ह। प्रणिपत्य गणेशानं हर्षयुक्तेन चेतसा ॥ ६२ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते वक्रतुंडविजयो नामाष्टत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । मत्सरं शांतिमापन्नं दृष्ट्वा देवर्षयस्तदा । प्रहृष्टमनसो जातास्तुष्टुवुस्तं गजाननम् ॥ १ ॥ देवर्षय ऊचुः । सदा ब्रह्मभूतं विकारादिहीनं विकारादिभूतं महेशादिवंद्यम् । अपारस्वरूपं स्वसंवेद्यमेकं नमामः सदा वक्रतुंडं भजामः ॥ २ ॥ अजं निर्विकल्पं कलाकालहीनं हृदिस्थं सदा साक्षिरूपं परेशम् । जनज्ञानकारं प्रकाशैर्विहीनं नमामः सदा वक्रतुंडं भजामः ॥ ३ ॥ अनंतस्वरूपं सदानंदकंदं प्रकाशस्वरूपं सदा सर्वगं तम् । अनादिं गुणादिं गुणाधारभूतं नमामः सदा वक्रतुंडं भजामः ॥४॥ धरावायुतेजोमयं तोयभावं सदाकाशरूपं महाभूतसंस्थम् । अहंकारधारं तमोमात्रसंस्थं नमामः सदा वक्रतुंडं भजामः ॥ ५ ॥ रविप्राणविष्णुप्रचेतोयमेशविधात्रश्विवैश्वानरेंद्रप्रकाशम् । दिशां बोधकं सर्वदेवाधिरूपं नमामः सदा वक्रतुंडं भजामः॥६॥ उपस्थत्वगुक्तीक्षणस्थप्रकाशं करांघ्रिस्वरूपं कृतघ्राणजिह्वम् । गुदस्थं श्रुतिस्थं महाखप्रकाशं नमामः सदा वक्रतुंडं भजामः ॥ ७ ॥ रजोरूपसृष्टिप्रकाशे विधिं तं सदा पालने केशवं सत्त्वसंस्थम् । तमोरूपधारं हरं संहरं तं नमामः सदा वक्रतुंडं भजामः ॥ ८ ॥ दिशाधीशरूपं सदाशास्वरूपं ग्रहादिप्रकाशं ध्रुवादिं खगस्थम् । अनंतोडुरूपं तदाकारहीनं नमामः सदा वक्रतुंडं भजामः ॥ ९ ॥ महत्तत्त्वरूपं प्रधानस्वरूपमहंकारधारं त्रयीबोधकारम् । अनाद्यंतमायं तदाधारपुच्छं नमामः सदा वक्रतुंडं भजामः ॥ १० ॥ सदा कर्मधारं फलैः स्वर्गदं तमकर्मप्रकाशेन मुक्तिप्रदं तम् । विकर्मादिना यातनाधारभूतं नमामः सदा वक्रतुंडं भजामः ॥ ११ ॥ अलोभस्वरूपं सदा लोभधारं जनज्ञानकारं जनाधीशपालम् । नृणां सिद्धिदं मानवं मानवस्थं नमामः सदा वक्रतुंडं भजामः ॥ १२ ॥ लतावृक्षरूपं सदा पक्षिरूपं धनादिप्रकाशं सदा धान्यरूपम् । प्रसूपुत्रपौत्रादिनानास्वरूपं नमामः सदा वक्रतुंडं भजामः ॥ १३ ॥ खगेशास्वरूपं वृषादिप्रसंस्थं मृगेंद्रादियोधं मृगेंद्रस्वरूपम् । धराधारहेमाद्रिमेरुस्वरूपं नमामः सदा वक्रतुंडं भजामः ॥ १४ ॥ सुवर्णादिधातुस्थसद्रंगसंस्थं समुद्रादिमेयस्वरूपं जलस्थम् । जले जंतुमत्स्यादिनानाविभेदं नमामः सदा वक्रतुंडं भजामः ॥ १५ ॥ सदा शेषनागादिनागस्वरूपं सदा नागभूषं च लीलाकरं तैः । सुरारिस्वरूपं च दैत्यादिभूतं नमामः सदा वक्रतुंडं भजामः ॥ १६ ॥ वरं पाशधारं सदा भक्तपोषं महापौरुषं मायिनं सिंहसंस्थम् । चतुर्बाहुधारं सदा विघ्ननाशं नमामः सदा वक्रतुंडं भजामः ॥ १७ ॥ गणेशं गणेशादिवंद्यं सुरेशं परं सर्वपूज्यं सुबोधादिगम्यम् । महावाक्यवेदांतवेद्यं परेशं नमामः सदा वक्रतुंडं भजामः ॥ १८ ॥ अनंतावतारैः सदा पालयंतं स्वधर्मादिसंस्थं जनं कारयंतम् । सुरैर्दैत्यपैर्वन्द्यमेकं

समं त्वां नमामः सदा वक्रतुंडं भजामः ॥ १९ ॥ त्वया नाशितोऽयं महादैत्यभूपः सुशांतिर्धरोऽयं कृतस्तेन विश्वम्। अखंडप्रहर्षेण युक्तं च तं वै नमामः सदा वक्रतुंडं भजामः ॥ २० ॥ न विंदंति यं वेदवेदज्ञमर्त्या न विंदंति यं शास्त्रशास्त्रज्ञभूपाः । न विंदंति यं योगयोगीशकाद्या नमामः सदा वक्रतुंडं भजामः ॥ २१ ॥ न वेदा विदुर्यं च देवेंद्रमुख्या न योगैर्मुनींद्रा वयं किं स्तुमश्च । तथाऽपि स्वबुध्या स्तुतं वक्रतुंडं नमामः सदा वक्रतुंडं भजामः ॥ २२ ॥ मुद्गल उवाच । एवं स्तुत्वा वक्रतुंडं स्थिता देवर्षयः प्रभो । बद्धांजलिपुटाः सर्वे तूष्णींभावेन मानद ॥ २३ ॥ देवानां च मुनीनां स स्तुतिं श्रुत्वा गजाननः । उवाच तान् प्रसन्नात्मा हर्षयन् वचनं महत् ॥ २४ ॥ वक्रतुंड उवाच । शृणुध्वं मुनयः सर्वे देवा मे वचनं महत् । भवत्कृतमिदं स्तोत्रं मत्प्रीतेर्वर्धनं भवेत् ॥ २५ ॥ अनेन स्तौति यो नित्यं मां तस्य परिपूरये । भोगान्नानाविधांश्चैव पुत्रपौत्रादिसंपदः ॥ २६ ॥ यं यमिच्छति तं तं च दास्येऽहं नात्र संशयः । भुक्तिमुक्तिप्रदं चैतद्ब्रह्मभूयकरं भवेत् ॥ २७ ॥ नानासिद्धिप्रदं चैव हृदि बुद्धिप्रकाशकम् । सुरेंद्रैर्वंद्यतां याति यो मां स्तौति त्वनेन सः ॥ २८ ॥ सहस्रावर्तनात् मर्त्यः कारागृहगतं नरम् । मोचयेन्नात्र संदेहो मत्प्रियः सर्वदा भवेत् ॥ २९ ॥ अपराधशतैर्युक्तो यो वै भवति मानवः । तस्यापराधसहनं करोमि स्तोत्रपाठतः ॥ ३० ॥ एकविंशतिवारं य एकविंशद्दिनानि वै । पठिष्यति सदा तस्मै चिंतितं प्रददाम्यहम् ॥ ३१ ॥ एकविंशतिकाः श्लोका भवद्भिर्मत्प्रियात्मकैः । कृतास्तैर्मां स देवास्तु स्तुता वै मुनयोऽखिलाः ॥ ३२ ॥ तेन विघ्नविहीनाश्च स्वधर्मरुचयस्तथा । भविष्यथ महाभागा भुक्तिमुक्तिप्रदास्तथा ॥ ३३ ॥ वरं ब्रूत महाभागा येषां यन्मनसि स्थितम् । तद्दास्यामि न संदेहः स्तोत्रसंतोषितो ह्यहम् ॥ ३४ ॥ मुद्गल उवाच । एवमुक्ताः सुराः सर्वे मुनयस्तं प्रणम्य च । प्रहृष्टमानसा ऊचुर्वक्रतुंडं महाबलम् ॥ ३५ ॥ देवर्षय ऊचुः । यदि प्रसन्नतां यातो वक्रतुंड ददासि चेत् । त्वदीयामचलां भक्तिं देहि नाथ दयानिधे ॥ ३६ ॥ यदि प्राप्ता त्वदीया च भक्तिर्जंतोस्तदा प्रभो । किं दुर्लभं भवेत्तस्य हस्तगाः सर्वसिद्धयः ॥ ३७ ॥ अतो भक्तिं महाभाग देहि नो विघ्ननायक । तया तृप्ता भविष्यामस्त्वत्पादप्रवणा वयम् ॥ ३८ ॥ तेषां वचनमाकर्ण्य देवदेवो गजाननः । जगाद भावगंभीरं ज्ञाता विज्ञजनप्रियः ॥ ३९ ॥ वक्रतुंड उवाच । मदीया भक्तिरचला भविष्यति न संशयः । भवतां भावयुक्तानां भो भो देवर्षयः खलु ॥ ४० ॥ अंतर्दधे स उक्त्वैवं वक्रतुंडो गणेश्वरः । पश्यतां मुनिदेवानां स्वानंदस्थो बभूव ह ॥ ४१ ॥ ततो देवर्षयः सर्वे खिन्नाः स्वस्वपदं ययुः ।

ध्यायंतश्च तमेवैते वक्रतुंडं सुसिद्धिदम् ॥ ४२ ॥ मत्सरोऽपि ततः सर्वैर्दैत्यैः परिवृतो ययौ । स्वं पदं पालयन् शीघ्रं सुशांतो ह्यभवत् सदा ॥ ४३ ॥ तं त्यक्त्वा दैत्यसंघास्ते ययुः स्वं स्वं गृहं मुने । एवं मत्सरमाहात्म्यं वक्रतुंडेन कारितम् ॥ ४४ ॥ स एव वक्रतुंडस्तु सृजत्यवति च प्रभुः । हरते भावहीनः सन् नाद्यमध्यांतगः स्वयम् ॥ ४५ ॥ एवं नानावतारेण स्वस्वधर्मरतान् सुरान् । असुरान् मानवादींश्च कुरुते वक्रतुंडकः ॥ ४६ ॥ अवतारा अनंताश्च वक्रतुंडस्य भो विभो । चरित्रमखिलं तेषां कथितुं शक्यते न वै ॥ ४७ ॥ ब्रह्मणा षण्मुखेनाऽपि विष्णुना शंकरेण च । शेषेण मुनिभिश्चैव वेदैः काहं च तत्र वै ॥ ४८ ॥ दिवोदासशमार्थाय स एवं वक्रतुंडकः । शिवपुत्रत्वमापन्नो ढुंढिराजेति नामतः ॥ ४९ ॥ वामनस्य वरं दातुं स एव गणनायकः । प्रकटोऽभूत महातेजास्तस्याग्रे भक्तपालकः ॥ ५० ॥ एवं नानावतारैश्च भक्तरक्षणलालसः । करोति भक्तसंरक्षां जानीहि त्वं प्रजापते ॥ ५१ ॥ ब्रह्मणा सृष्टिकार्यार्थं व्याकुलेन स न स्मृतः । वक्रतुंडस्ततो दैत्यो मत्सरः प्रविवेश तम ॥ ५२ ॥ तेनासुरस्वभावेन पीडितो विधिरद्भुतम् । विघ्नयुक्तोऽभवत्तत्र सृष्टिं कर्तुं न स क्षमः ॥ ५३ ॥ पुराततं वचः स्मृत्वा पुनस्तं शरणं ययौ । विधिर्विघ्नविहीनः स ससर्ज सकलं जगत् ॥ ५४ ॥

॥ इति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते वक्रतुण्डाख्यानं नामैकोनचत्वारिंशोऽध्यायः ॥



श्रीगणेशाय नमः ॥ दक्ष उवाच । धन्योऽस्म्यनुगृहीतोऽस्मि यत्त्वया श्रावितं महत् । चरित्रं वक्रतुंडस्य ब्रह्मभूयकरं हत ॥ १ ॥ श्रुत्वा श्रुत्वा न मे तृप्तिर्जायतेऽमृततो यथा । इच्छामि तत्पुनः श्रोतुं पूजितो विधिना कथम् ॥ २ ॥ विस्तरेण मे ब्रूहि कथां पापापनोदिनीम । श्रोतुः प्रष्टुश्च वक्तुश्च त्रयाणां सर्वसिद्धिदाम ॥ ३ ॥ सूत उवाच । दक्षस्य वचनं श्रुत्वा हृष्टस्तमुवाच ह । उत्फुल्लनयनो हर्षाद्ब्राह्मणेंद्रः स शौनक ॥ ४ ॥ मुद्गल उवाच । शृणु दक्ष महाभाग धन्योऽसि न च संशयः । येन ते गणराजस्य कथायां प्रीतिरद्भुता ॥ ५ ॥ अल्पपुण्यवतो ढुंढिकथाया अवधारणे । श्रवणे च तथा प्रीतिर्जायते न कदाचन ॥ ६ ॥ अतस्तेहं प्रवक्ष्यामि त्वदादरसुतोषितः । संक्षेपेण कथां दिव्यां गणेशस्य महात्मनः ॥ ७ ॥ कल्पादौ गणेशेन सृष्टाः पंच सुराधिपाः । तेषां तपःप्रभावेण प्रसन्नो वरदोऽभवत् ॥ ८ ॥ वरस्यैव प्रभावेण समर्थास्ते

बभूविरे । स्वस्वकार्ये प्रवृत्ताश्च सावधानेन चेतसा ॥ ९ ॥ सृष्टिप्रकरणे ब्रह्मा प्रवृत्तो जगतोऽभवत् । न सस्मार गणेशानं विस्मृत्यादौ तदर्चनम् ॥ १० ॥ तेन भ्रांतोऽभवत् सद्यो मानसे गर्वमादधे । त्रिलोके नैव मत्तुल्यः स्रष्टाऽहं नात्र संशयः ॥ ११ ॥ सृजामि सकलं विश्वं तदा विष्णुश्च पाति वै । रुद्रः संहरते तच्च शक्तिर्मोहं करोति च ॥ १२ ॥ सूर्यः कर्मप्रकाशं च करोति जगति प्रभुः । न सृष्टं चेन् मया विश्वं देवत्वं तु निरर्थकम् ॥ १३ ॥ ममाज्ञादौ गणेशेन कृता सृष्टौ विशेषतः । मदीयां पात्रतां दृष्ट्वा तस्मान्नान्योऽस्ति मत्समः ॥ १४ ॥ इति गर्वेण मनसि मोहितोऽभूत् पितामहः । ततो विघ्नगणास्तत्र प्रबभूवुरनेकशः ॥ १५ ॥ सृष्टिं विरचयंतं तं ब्रह्माणं प्राप्य दारुणः । नानारूपा महावीर्यास्ताडयामासुरोजसा ॥ १६ ॥ त्रिनेत्राः पंचनेत्राश्च पृष्ठनेत्रा महाबलाः । दशतुंडा सहस्रं च मुखानि दधतः परे ॥ १७ ॥ एवं नानास्वरूपास्ते विधिं धृत्वा प्ररेमिरे । बालक्रीडनकं कृत्वा दुःखयुक्तं महाबलाः ॥ १८ ॥ एवं स परवान् ब्रह्मा गर्वं सर्वं प्रमुच्य वै । जगाम शरणं देवं गणेशं विघ्ननायकम् ॥ १९ ॥ गतगर्वो हृदि स्मृत्वा तुष्टाव गणनायकम् । तेन विघ्नगणाः सर्वैऽतर्धानं तत्र चक्रिरे ॥ २० ॥ मुक्तो विघ्नैस्तदा ब्रह्मा तताप परमं तपः । षडक्षरेण मंत्रेण वक्रतुंडमतोषयत् ॥ २१ ॥ वायुभक्षोऽभवद्ब्रह्मा पादांगुष्ठाग्रसंस्थितः । चकार तेजसा वृत्तिं गणेशे निश्चलां ततः ॥ २२ ॥ एवं दिव्यसहस्रं स तपस्तेपे सुदारुणम् । ततो भूतानि सर्वाणि व्याकुलाणि तदाऽभवन् ॥ २३ ॥ ततस्तस्योग्रतपसा प्रसन्नो वक्रतुंडकः । आययौ भक्तराजं तं भक्तिभावेन तोषितः ॥ २४ ॥ तेजोरूपी महाकायो वक्रतुंडश्चतुर्भुजः । सिंहारूढस्त्रिनेत्रश्च पाशांकुशधरो विभुः ॥ २५ ॥ वरदाभयहस्तश्च पृथुवक्षा महोदरः । सिद्धिबुद्धियुतश्चिंतामणिना च विराजितः ॥ २६ ॥ नानालंकारसंयुक्तः शेषनाभिर्गजाननः । सिंदूरारुणदेहश्च नानावस्त्रधरः प्रभुः ॥ २७ ॥ तं दृष्ट्वा भयभीतोऽसौ विधाता स्तौति तं परम् । गणेशं हृदि संचिंत्य नानास्तोत्रैर्विधानतः ॥ २८ ॥ वक्रतुंडः स्तुवंतं तमुवाच घननिस्वनः । वरं वृणु विधातस्त्वं दास्यामि तु न संशयः ॥ २९ ॥ इति तस्य वचः श्रुत्वा ब्रह्मा तं प्रणनाम च । उवाच सौम्यरूपेण वरं देहि गजानन ॥ ३० ॥ ब्रह्मणो गिरमाकर्ण्य सौम्यतेजा गजाननः । उवाच तं महाभागं भक्तिभावेन तोषितः ॥ ३१ ॥ वक्रतुंड उवाच । स्वानंदनगरे संस्थं सदैतादृशरूपकम् । मृत्युलोके स्थितस्त्वं च कथं द्रक्ष्यसि मानद ॥ ३२ ॥ तपसा भक्तिभावेन तोषितोऽहं त्वया विधे । तेन सौम्यस्वरूपेण त्वदग्रे संस्थितोऽभवम् ॥ ३३ ॥ त्वं तु मत्तो वरान् ब्रूहि

दास्येऽहं वाञ्छितान् परान् । मयि प्रसन्नतां याते दुर्लभं न भविष्यति ॥ ३४ ॥ गणेशवचनं श्रुत्वा ब्रह्मा तं प्रणनाम च । बद्धांजलिपुटो भूत्वा स्तोतुं तमुपचक्रमे ॥ ३५ ॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते ब्रह्मणस्तपश्चरणं नाम चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ब्रह्मोवाच । नमस्ते वक्रतुंडाय गणेशाय महात्मने । अनंतानंतपाराय विघ्नेशाय नमो नमः ॥ १ ॥ नमो भक्तिप्रियायैव भक्तसंरक्षकाय ते । अभक्तकामनाशाय सर्वदात्रे नमो नमः ॥ २ ॥ निर्गुणाय निरूपाय निर्मलाय गुणात्मने । अनंताननधाराय सिंहवाहाय ते नमः ॥ ३ ॥ अनादिरूपकायैव नमः सर्वप्रियंकर । वेदांतवेद्यदेहाय गजवक्त्राय ते नमः ॥ ४ ॥ अनंतोदरसंस्थाय नानाभोगकराय ते । मायाधाराय मायाया मोहकाय नमो नमः ॥ ५ ॥ अमेयशक्तये तुभ्यमनाधाराय दंष्ट्रिणे । चतुर्बाहुयुतायैव स्वानंदपतये नमः ॥ ६ ॥ सिद्धिबुद्धिप्रदायैव सिद्धिबुद्धिधराय च । ब्रह्मभूताय देवाय विघ्नहर्त्रे नमोऽस्तु ते ॥ ७ ॥ वक्रतुंड प्रसन्नस्त्वं मह्यं देहि तदानघ । त्वदीयामचलां भक्तिं यया बंधो न विद्यते ॥ ८ ॥ त्वदाज्ञया प्रवृत्तोऽहं तत्र सामर्थ्यमद्भुतम् । सृष्टौ देहि गणाधीश विघ्नहीनं च मे सदा ॥ ९ ॥ अहं स्रष्टा च सर्वेषां त्वया प्रोक्तो गजानन । अतस्त्वं पुत्रभावेन गृहे मे तिष्ठ मायया ॥ १० ॥ त्वं साक्षाद्ब्रह्मभूतश्चेद्यदि पुत्रो भविष्यसि । तदाहं बंधनान्मुक्तो भविष्यामि च राजमात् ॥ ११ ॥ तव माता पिता स्वामिन् बंधयुक्तौ कृतौ यदि । तदा वेदादिकं सर्वं मिथ्याभूतं भविष्यति ॥ १२ ॥ नामग्रहणमात्रेण ब्रह्मभूयप्रदो भवान् । किं पुनः पुत्रभावेन त्वं चेत् स्थास्यसि मे गृहे ॥ १३ ॥ अन्यच्च लालनं कुर्यां सेवनं पूजनं तथा । निरंतरं प्रपश्येयं भवेयमतुलस्ततः ॥ १४ ॥ ब्रह्मणो वचनं तस्य श्रुत्वा गणपतिः स्वयम् । जगाद तं महाभागं हर्षयन् सर्वभाववित् ॥ १५ ॥ वक्रतुंड उवाच । त्वया यत् प्रार्थितं ब्रह्मन् तदस्तु सकलं किल । सृष्टिकर्तृत्वसामर्थ्यमद्भुतं ते भविष्यति ॥ १६ ॥ निर्विघ्नं सर्वकार्येषु मत्स्मृत्या प्रभविष्यति । यं यमिच्छसि तं तं त्वं कामं प्राप्स्यसि सर्वदा ॥ १७ ॥ तव पुत्रो भविष्यामि तारको माययांशतः । वाञ्छितं पूरयिष्यामि भक्तिभावेन तोषितः ॥ १८ ॥ त्वया कृतमिदं स्तोत्रं सर्वदं प्रभविष्यति । मम प्रीतिकरं ब्रह्मन्

ब्रह्मभूयप्रदं तथा ॥ १९ ॥ इत्युक्त्वांतर्दधे दक्ष वक्रतुंडः प्रतापवान् । ब्रह्माऽपि विमना भूत्वा तत्र वै संस्थितोऽभवत् ॥ २० ॥ वक्रतुंडप्रसादेन निर्ममे सकलं जगत् । चराचरमयं सर्वं यथायोग्यं चकार ह ॥ २१ ॥ सृष्ट्वा त्रिभुवनं सर्वं कृतकृत्य इवाऽभवत् । स्थितः स्वसुखनिष्ठः सन् वक्रतुंडं स संस्मरन् ॥ २२ ॥ एकदा वायुवेगेन कंपितः स प्रजापतिः । तस्मात् पुरुषरूपेण दंभश्च प्रकटोऽभवत् ॥ २३ ॥ तत्पुरः पुरुषश्रेष्ठश्चतुर्बाहुधरः खलः । गदाचक्रत्रिशूलास्त्रधनुर्बाणधरो बभौ ॥ २४ ॥ रूपेण तेजसा पूर्णो वीर्येण ह्यतुलः परः । महाकायो महाबाहुः स्थितः पर्वतसन्निभः ॥ २५ ॥ तं दृष्ट्वा विस्मितो ब्रह्मा पप्रच्छ च नरं ततः । कस्य त्वं कुत आयातः किं कार्यं तेऽत्र वर्तते ॥ २६ ॥ वद मे पृच्छते सर्वं महाबलपराक्रम । धन्योऽसि रूपलावण्ययुक्तः परमशोभनः ॥ २७ ॥ ब्रह्मणो वच आकर्ण्य मेघगंभीरया गिरा । उवाच तं विधातारं स्मयमान इदं वचः ॥ २८ ॥ पुरुष उवाच । विधेऽहं त्वां प्रजानामि प्रभावान् मे च मानद । तवांगकंपसंभूतं मां जानीहि प्रजापते ॥ २९ ॥ देहि मे नाम योग्यं त्वं पुत्रोऽहं ते च सुव्रत । स्थानं देहि तथा वृत्तिं योगक्षेमकरीं पराम् ॥ ३० ॥ वचस्तस्य समाकर्ण्य तमूचे पद्मसंभवः । हास्यं कृत्वा महाबाहुः प्रीणयन् वाक्यमादरात् ॥ ३१ ॥ ब्रह्मोवाच । किं मां जानासि पुत्र त्वं दंभेन प्रब्रवीषि रे । अतस्त्वं दंभनामा वै भविष्यसि महाखलः ॥ ३२ ॥ यत्र तत्र गतिस्ते वै भविष्यति महासुर । भोगान्नानाविधान् भुंक्ष्व यथारुचि यथासुखम् ॥ ३३ ॥ एवमुक्तो महाबाहुस्तं जगाम प्रणम्य सः । प्रदक्षिणीकृत्य विधिं क्षितिमंडलमादरात् ॥ ३४ ॥ तत्रागत्य विचारं स कृतवान् मानसे खलः । ब्रह्मणाऽसत्कृतोऽहं वै तस्य गर्वं हराम्यहम् ॥ ३५ ॥ विचार्य सहसा दंभो जगाम शरणं कविम् । तेनोपदिष्टमंत्रेण ब्रह्माणं समतोषयत् ॥ ३६ ॥ एकपादेन तिष्ठन् सन्निराहारपरायणः । तताप तप उग्रं वै वर्षाणामयुतं गतम् ॥ ३७ ॥ तस्यैव तपसा सर्वं व्याकुलं सचराचरम् । न स्थातुमशकत् स्थाने भयभीतं बभूव ह ॥ ३८ ॥ तत् दृष्ट्वा परमाश्चर्यं ब्रह्मा देवगणैः सह । आययौ तं वरं दातुं तपसा तोषितः प्रभुः ॥ ३९ ॥ काष्ठवत्तं स्थितं वीक्ष्य विस्मितः कमलासनः । जगाद तं महाभागं हर्षयन्निव भाषया ॥ ४० ॥ ब्रह्मोवाच । वरं वृणु महाभाग यं यं मनसि संस्थितम् । ईप्सितं पूरयिष्यामि नात्र कार्या विचारणा ॥ ४१ ॥ ब्रह्मणो वचनं श्रुत्वा दंभः परमहर्षितः । तं प्रणम्य प्रतुष्टाव बद्धांजलिपुटो बली ॥ ४२ ॥ दंभ उवाच । नमस्ते सृष्टिकर्त्रे वै सृष्टिपात्रे प्रजापते । सृष्टिहर्त्रे त्रिरूपाय ब्रह्मविष्णुशिवात्मने ॥ ४३ ॥ त्वया ततमिदं सर्वं त्वदाधारं महाप्रभो ।

त्वयि सुप्ते जगन्नष्टं भविष्यति न संशयः ॥ ४४ ॥ चराचमयो भूत्वा क्रीडसि त्वं पितामह । एकानेकप्रभेदेन त्वं स्थितोऽसि जगत्प्रभो ॥ ४५ ॥ अणुभ्योऽणुतरस्त्वं च महद्भ्यश्च महान् किल । कस्त्वां स्तोतुं समर्थः स्याद् ब्रह्माकारेण संस्थितम् ॥ ४६ ॥ महद्भाग्यं विभो मेऽद्य येन ते दर्शनं परम् । प्राप्तं सकलपापघ्नमग्रे शुभकरं तथा ॥ ४७ ॥ यदि प्रसन्नतां यातो यदि देयो वरो महान् । तदा मे वांछितं सर्वं पूरयस्व प्रजापते ॥ ४८ ॥ राज्यं त्रैलोक्यस्य तथा मह्यं देहि पितामह । पंचभूतात्मकेभ्यश्च मृत्युर्न च कदा भवेत् ॥ ४९ ॥ संग्रामे मत्समः कश्चिन्नान्यः स्यान् मां कुरु प्रभो । अखंडैश्वर्यसंयुक्तमारोग्यादिसमन्वितम् ॥ ५० ॥ इति तस्य वचः श्रुत्वा ब्रह्मा तं प्रत्युवाच ह । तपसा तोषितस्तस्मै दातुमुत्सुकतां गतः ॥ ५१ ॥ ब्रह्मोवाच । त्वया यत्प्रार्थितं दंभ तत्सर्वं प्रभविष्यति । अन्यद्यच्चिंतितं तत्ते सिद्धरूपं भविष्यति ॥ ५२ ॥ इत्युक्त्वांतर्दधे ब्रह्मा दंभः संहर्षितोऽभवत् । स्वगृहं प्रजगामासौ महाबलपराक्रमः ॥ ५३ ॥ नगरं शोभनं नाम कारयामास दर्पितः । पृथिव्यां सर्वशोभाढ्यं वासं तत्र चकार ह ॥ ५४ ॥ ततो दैत्यगणाः सर्वे शुक्रेन प्रेरिता मुने । आययुस्तत्र दंभस्य नगरे हर्षिता भृशम् ॥ ५५ ॥ शुक्रः समागतस्तत्र मुनिभिर्ब्रह्मवादिभिः । दैत्यराज्यं स दंभायाऽभवद्दातुं स उद्यतः ॥ ५६ ॥ शुभे लग्ने मुहूर्ते च सोऽभिषेकमकारयत् । ब्राह्मणैर्दैत्यराजानां राजा दंभो बभूव ह ॥ ५७ ॥ महोत्सवं हर्षितास्ते चक्रुः सर्वे समागताः । हृष्टपुष्टजनाकीर्णं नगरं शुशुभे भृशम् ॥ ५८ ॥ सर्वे स्वस्वगृहं जग्मुस्ततो हर्षसमन्विताः । मुख्याश्च संस्थितास्तत्र दैत्याः परमदारुणाः ॥ ५९ ॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते दंभासुरराज्याभिषेको नाम एकचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शुक्र उवाच । नगरे दंभदैत्यस्य महोत्सवयुता बभुः । जनाः सर्वे महाभागाः कंचित्कालं प्रजापते ॥ १ ॥ एकदा दैत्यपाः सर्वे ययुस्तत्र महाबलम् । मुहुंडश्च तथा हुंडो रुक्मकेतुर्महाबलः ॥ २ ॥ मद्यपश्च सकोपश्च तथा क्रोधासुरो महान । कामासुरो बलाढ्यश्च रासभासुर एव च ॥ ३ ॥ इत्याद्या बहवश्चान्ये दंभं शोभासमन्वितम् । प्रणम्योचुर्महात्मान उत्सुका देवनाशने ॥ ४ ॥ दैत्येशा ऊचुः । किं स्थितोऽसि महाराज वयं दासाः समागताः । त्रिभुवनं प्रजेष्यामो

देवमर्दनलालसाः ॥ ५ ॥ तवाज्ञावशगाः सर्वे दैत्यदानवराक्षसाः । ब्रह्मांडे न भवेत्तुल्यस्तव दंभ बलेन वा ॥ ६ ॥ यशसा तेजसा चैव न समस्त सुराधिप । आज्ञापय महाबाहो जेष्यामः सकलं जगत् ॥ ७ ॥ दैत्येशानां वचः श्रुत्वा दंभदैत्यः प्रहर्षितः । उवाच तान् महाभागान् भावयुक्तेन चेतसा ॥ ८ ॥ दंभासुर उवाच । सम्यगुक्तं महाभागा ममापि हृदये स्थितम् । भवद्भिः सहितोऽहं वै जेष्यामि सचराचरम् ॥ ९ ॥ एवमुक्त्वा स दैत्येशः शुक्रं तत्रानयन्मुने । मतं तस्य समादाय निर्जगाम ततः पुरात् ॥ १० ॥ अपारसेनया सार्धं चतुरंगसुयुक्तया । सर्वे पृथिव्यां राजानो जिता दैत्यैर्महाबलैः ॥ ११ ॥ पातालेषु च सर्वान् वै नागान् जित्वा दिवं ययुः । तत्रेंद्रो देवदेवेंद्रैर्युयुधे सोऽसुरैः सह ॥ १२ ॥ तेन दैत्यगणाः सर्वे भयभीताः समंततः । वज्रपातैर्महाघोरैश्चूर्णिता ज्वालितास्तथा ॥ १३ ॥ असुरा रणभूमिं च त्यक्त्वा सर्वे पलायिताः । ततो दंभासुरस्तत्र युयुधे बलगर्वितः ॥ १४ ॥ चक्रपातेन देवेंद्रं मूर्च्छितं च चकार ह । देवान् बाणार्दितान् सर्वान् कारयामास दैत्यपः ॥ १५ ॥ लब्ध्वा संज्ञां सुरेंद्रो वै पलायत जिजीविषुः । ततो देवगणास्तं चान्वगुः सर्वे भयातुराः ॥ १६ ॥ दैत्य ऐरावतारूढो देवेंद्रस्यासने स्थितः । अमराणां पुरीं गत्वा हर्षितो हर्षयन् स्वकान् ॥ १७ ॥ इंद्रो देवगणैः सर्वैर्ब्रह्माणं शरणं ययौ । ब्रह्मणा सह विष्णुं च तेन सार्द्धं शिवं ययौ ॥ १८ ॥ शिवः क्रोधसमायुक्त आययौ रणमूर्धनि । जुहाव दैत्यराजं तं संग्रामाय महाबलम् ॥ १९ ॥ ततो दैत्येशसंयुक्तो दंभदैत्यः समाययौ । क्रोधसंरक्तचक्षुस्तं सन्नद्धो बलसंयुतः ॥ २० ॥ ततः समभवद्युद्धं दारुणं रोमहर्षणम् । दैत्यानां चैव देवानां परस्परविनाशनम् ॥ २१ ॥ चत्वारिंशद्दिनान्यत्र तुमुलं नीतिसंयुतम् । शोणितौघा महानद्यो जाताः प्रेतसमाकुलाः ॥ २२ ॥ ततो दंभः स्वयं क्रुद्धो बाणैर्देवानमर्दयत् । चकार देवराजांस्तान् मूर्च्छितान् धरणिं गतान् ॥ २३ ॥ ततः शंभुस्त्रिशूलेन तं जघान महाबलम् । पपात मूर्च्छया दैत्यः क्षणादुत्थितवान् पुनः ॥ २४ ॥ तत्याज बलवांश्चक्रं पातयामास शंकरम् । मूर्च्छितं प्रहरार्द्धं च दंभदैत्यः प्रतापवान् ॥ २५ ॥ दृष्ट्वाऽद्भुतं महावीर्यं दैत्यराजस्य शंकरः । पलायत ससंज्ञः सन् वने वै देवसंयुतः ॥ २६ ॥ देवेंद्रान् गच्छतो दृष्ट्वा जहसुर्दैत्यनायकाः । आनंदेन समायुक्ता विविशुस्त्वमरावतीम् ॥ २७ ॥ ततः स सत्यलोके च वैकुंठे दैत्यनायकान् । कैलासे चामरावत्यां स्थापयामास यत्नतः ॥ २८ ॥ नानादेवपुरे रम्ये स्थापयामास दानवान् । आययौ शोभनायां स स्वपुर्यां बलसंयुतः ॥ २९ ॥ चकार राज्यमुन्मत्तस्त्रैलोकस्य महाबलः । ततः कर्म-

विनाशार्थमाज्ञापयत दैत्यपान् ॥ ३० ॥ तदाज्ञया ययुः सर्वे दैत्याः परमदारुणाः । ब्राह्मणादीन् बबंधुस्ते ताडयामासुरोजसा ॥ ३१ ॥ यज्ञवाटान् बभंजुस्ते यज्ञवृक्षादिकान् खलाः । तीर्थानि लोपयामासुर्देवतायतनानि च ॥ ३२ ॥ एवं नानाविधैर्यत्नैः कर्मलोपं प्रचक्रिरे । केचिद्भ्रष्टा द्विजास्तत्र मृताः केचित्तदाऽभवन् ॥ ३३ ॥ केचिद्वनं ययुस्तत्र सिंहव्याघ्रादिसंकुलम् । संध्यादिभिर्विहीनास्ते द्विजास्तत्राऽभवन् किल ॥ ३४ ॥ न स्वाहा न स्वधा तत्र न वषट्कार एव च । न वर्णाश्रमधर्मश्च दंभे राज्यं प्रकुर्वति ॥ ३५ ॥ वर्णसंकररूपा वै प्रजा जाता महीतले । तदा देवगणाः सर्वे भयभीता बभूविरे ॥ ३६ ॥ कर्मभोगकरा देवा नष्टे कर्मणि शौनक । मृतप्राया मृताः सर्व इव ब्रह्माणमब्रुवन् ॥ ३७ ॥ देवा ऊचुः । शरणं त्वदृते देव कं याम कमलासन । त्वं धाता त्वं विधाता च सर्वेषां प्राणधारकः ॥ ३८ ॥ त्वं गतिः सर्वदेवानां त्वमेव ब्रह्मभावितः । अतोऽस्मान् रक्ष देवेश दंभासुरभयात् परात् ॥ ३९ ॥ कर्महीनं कृतं तेन त्रैलोक्यं सचराचरम् । देवाः कर्मान्नभोक्तारो महाबुद्धे कृतास्त्वया ॥ ४० ॥ कर्माभावेन जगति मरिष्यामो न संशयः । अतस्त्वं सर्वदेवांश्च रक्षस्व प्रपितामह ॥ ४१ ॥ त्वयैव चाभयं दत्तं पालिताश्च त्वया वयम् । अधुना क्षुधयाऽऽविष्टा मरिष्यामस्त्वदग्रतः ॥ ४२ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते दंभासुरविजयो नाम द्विचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । देवेंद्राणां वचः क्रूरं श्रुत्वा चिंतातुरोऽभवत् । चतुर्मुखो विचारं स चकाराऽत्र तु शोभनम् ॥ १ ॥ नावाप देवरक्षार्थं बुद्धिं बुद्धिविशारदः । ततश्चिंतां दुरंतां वै जगाम कमलासनः ॥ २ ॥ जगाद देवमुख्यांस्तु भयेन कमलासनः । अहं यूयं च सर्वेपि प्रार्थयामो गजाननम् ॥ ३ ॥ स वै सर्वविचारज्ञः करिष्यति शुभं महत् । अतस्तत् ध्यानकौशल्यात् ध्यायेम च विनायकम् ॥ ४ ॥ एकाक्षरविधानेन वक्रतुंडं यजामहे । शरणं सर्वदेवानां भविष्यति न संशयः ॥ ५ ॥ मुद्गल उवाच । ब्रह्मणो गिरमाकर्ण्य देवा मुनिगणैः सह । पूजयामासुरव्यग्रा वक्रतुंडं विधानतः ॥ ६ ॥ ब्रह्माऽपि ध्यानसंयुक्तस्तोषयामास विघ्नपम् । पुरा दृष्टं तथा चित्ते सिद्धिबुद्धियुतं मुने ॥ ७ ॥ गतेषु शतवर्षेषु ब्रह्मा-ऽपश्यच्च तं हृदि । साकारं गुणसंयुक्तं वदंतं मंजुला गिरः ॥ ८ ॥ दृष्ट्वा विस्मितचित्तोऽसौ यावत्पृच्छति तं प्रभुम् ।

तावत् सोपि बहिर्यानः सिद्धिबुद्धिसमन्वितः ॥ ९ ॥ ब्रह्माणं बोधयामास वक्रतुंडो महाबलः । सुप्रसन्नतरो जातस्तपसा ध्यानशालिना ॥ १० ॥ वक्रतुंड उवाच । पश्य मां पुत्रभावेन पितामह गणाधिपम् । तव ध्यानात् समुत्पन्नं ध्यानजं प्रवदंत्यतः ॥ ११ ॥ तपसा पूर्वकाले मां त्वया पुत्रत्वमादरात् । याचितं सफलं तच्च कृतं तव मयाऽधुना ॥ १२ ॥ वचनं वक्रतुंडस्य श्रुत्वा ब्रह्मा मुदा युतः । बहिर्वीक्ष्य गणेशानं सिद्धिबुद्धिविराजितम् ॥ १३ ॥ प्रणनाम स साष्टांगं वक्रतुंडं गजाननम् । सिद्धिं बुद्धिं विधानेन पूजयामास यत्नतः ॥ १४ ॥ तद् दृष्ट्वा परमाश्चर्यं देवाः सर्वे समागताः । ऋषयस्तं महाभागाः प्रणेमुर्भक्तिभावतः ॥ १५ ॥ सुतं मानसिकं दृष्ट्वा सिद्धिं बुद्धिं तथात्मजे । ताभ्यां सह विनीतास्ते तुष्टुवुर्बद्धपाणयः ॥ १६ ॥ ब्रह्माऽपि पूजनं कृत्वा स्तोतुं सर्वैः समन्वितः । उद्यतोऽभूत् महातेजा वक्रतुंडं सभार्यकम् ॥ १७ ॥ सदेवर्षिर्ब्रह्मोवाच । नमस्ते ब्रह्मभूताय वक्रतुंडाय साक्षिणे । सिद्धिबुद्धियुतायैव गणेशाय नमो नमः ॥ १८ ॥ विघ्नेशाय नमस्तुभ्यं निर्गुणाय गुणात्मने । अनादये च सर्वज्ञ पालकाय नमोऽस्तु ते ॥ १९ ॥ नमस्ते सर्वरूपाय सर्वाध्यक्षाय धीमते । आदिमध्यांतहीनाय साक्षाद्देवाय ते नमः ॥ २० ॥ अमेयशक्तये तुभ्यं मायिभ्यो मोहदाय च । अमायिने च मायाया आधाराय नमो नमः ॥ २१ ॥ सत्याय सत्यरूपाय सत्यपालक रक्षिणे । ज्ञानाय ज्ञानदात्रे च ज्ञानगम्याय ते नमः ॥ २२ ॥ लंबोदराय देवाय गणानां पतये नमः । गणेशाय गुणाधार हेरंबाय नमो नमः ॥ २३ ॥ त्वां स्तोतुं न समर्थाश्च वेदाः शास्त्रसमन्विताः । योगींद्रा देवमुख्याश्च तत्र कोऽहं गजानन ॥ २४ ॥ यथाबुद्धि प्रमोदेन संस्तुतोऽसि गणेश्वर । तेन मे सफलं सर्वं जातं लंबोदराधुना ॥ २५ ॥ ब्रह्मांडानामनंतानां कारकस्त्वं न संशयः । कथं मे पुत्रतां यातः सिद्धिबुद्धिसमन्वितः ॥ २६ ॥ सिद्धिबुद्धियुतं ब्रह्म हृदि ध्यातं विशेषतः । तदेव बहिरायातं तारितुं मां न संशयः ॥ २७ ॥ इत्युक्त्वा ब्राह्मणैः सार्धं जातकर्मादिकां क्रियाम् । चकार च स्वयं ब्रह्मा परमानंदसंयुतः ॥ २८ ॥ एकादशदिने तस्य सिद्धिबुद्धिपतिस्त्विति । नाम संस्थापयामास द्विजैः सह पितामहः ॥ २९ ॥ बालक्रीडनभावेन क्रीडति स्म विनायकः । सावित्री स्तनपानं सा कारयामास भावतः ॥ ३० ॥ दिने दिनेऽथ बालोऽसौ ववृधे शुक्लचंद्रवत् । आनंदं जनयन् मातुः पितुश्च चरितैः स्वकैः ॥ ३१ ॥ सिद्धिबुद्धियुतो दक्ष वर्षद्वयवयाः स्थितः । एकदा तं विधातारं पप्रच्छ विनयान्वितः ॥ ३२ ॥ सिद्धिबुद्धिपतिरुवाच । तात किं वनवासं त्वं करोषि मुनिभिः सह । देवैः परमदुःखार्तो मम किं भाससे प्रभो ॥ ३३ ॥ तस्य तद्वचनं श्रुत्वा ब्रह्मा हर्षसमन्वितः । जगाद गणपं

सर्वं वृत्तांतं दैत्यसंभवम् ॥ ३४ ॥ तच्छ्रुत्वा कोपदीप्तोऽसौ वक्रतुंडस्तमब्रवीत्। हर्षयन् देवविप्रादीन् मेघगंभीरनिस्वनः ॥ ३५ ॥ वक्रतुंड उवाच। दंभासुरं महावीर्यं हनिष्यामि न संशयः। देवेभ्यो ब्राह्मणेभ्यश्च स्वपदानि ददाम्यहम् ॥ ३६ ॥ एवमुक्त्वा समारूढः सिंहं शस्त्रधरः प्रभुः। सिद्धिबुद्धियुतस्तत्र जगामासुरवेश्मनि ॥ ३७ ॥ नगरप्रांतभागे स संस्थितो जगदीश्वरः। तं देवमुनयः सर्वे ययुर्हर्षसमन्विताः ॥ ३८ ॥ दूतमिंद्रं गणेशश्च प्रेषयामास सत्वरः। स्वधर्मे तिष्ठ दैत्येंद्र नो चेद्धन्मि न संशयः ॥ ३९ ॥ इंद्रो गत्वा महादैत्यं सामपूर्वमिदं वचः। उवाच सर्वभावज्ञो भावपूर्वं सुरद्विषम् ॥ ४० ॥ इंद्र उवाच। ब्रह्मणः पुत्रतां यातं पूर्णं ब्रह्म सनातनम्। सिद्धिबुद्धिपतिं विद्धि मानसं ध्यानयोगतः ॥ ४१ ॥ स एव मुनिभिर्देवैरागतः पुरसन्निधौ। मां दूतं प्रेषयामास सामार्थं तव सन्निधौ ॥४२॥ स्वधर्मे त्वं समातिष्ठ देवाः संतु हविर्भुजः। वर्णाश्रमयुता लोकास्तिष्ठंतु विगतज्वराः ॥ ४३ ॥ इंद्रस्य वचनं श्रुत्वा कुपितोऽनितरां मुने। दंभासुर उवाचाऽथ तमिंद्रं प्रदहन्निव ॥ ४४ ॥ दंभासुर उवाच। किं करोमि समायातो दूतरूपेण मे गृहे। नो चेत्त्वां बंधयित्वा तु कारागारे क्षिपाम्यहम् ॥ ४५ ॥ इंद्र गच्छ महाभाग वद तं गणनायकम्। पंचमे दिवसे त्वां च योधयामि न संशयः ॥ ४६ ॥ तत इंद्रः समायातः सिद्धिबुद्धिपतिं प्रति। कथयामास वृत्तांतं विस्तरेण यथायथम् ॥ ४७ ॥ श्रुत्वा गणपतिः प्रीतस्तमुवाच महामतिम्। समीचीनं त्वया तत्र कृतं देवपते यथा ॥ ४८ ॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते दंभासुरदूतसंवादो नाम त्रिचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शुक्र उवाच। देवेंद्रे प्रस्थिते तत्र गणेशस्यैव सन्निधौ। दंभासुरः कविं विप्रमाह्वयामास संनिधौ ॥ १ ॥ समागतं महाबुद्धिं शुक्रं मुनिवरं प्रभो। प्रणनाम समाष्टांगं बद्धांजलिपुटः स्थितः ॥ २ ॥ तं काव्यः स्थापयामास कांचनोत्तर आसने। पप्रच्छ मामाह्वयसे किमर्थमिति दानवम् ॥ ३ ॥ शुक्रस्य वचनं श्रुत्वा भयहर्षसमन्वितः। उवाच तं महाभागं भक्तियुक्तेन चेतसा ॥ ४ ॥ दंभासुर उवाच। स्वामिन् योद्धुं समायातः सिद्धिबुद्धिपतिः प्रभुः। ब्रह्मणो मानसः पुत्रस्तपसा तेन निर्मितः ॥ ५ ॥ परिपृच्छामि तत्र त्वां सर्वज्ञं मुनिसत्तमम्। येन तं सर्वभावेन जानामि खलु

तत्त्वतः ॥ ६ ॥ का सिद्धिः का तथा बुद्धिस्तयोः कोऽसौ पतिः प्रभो । किं सामर्थ्यधरो भाति वद सर्वं च मेऽग्रतः ॥ ७ ॥
दंभस्य वचनं श्रुत्वा शुक्रस्तं पुनरब्रवीत् । येन तत्त्वे प्रविज्ञाते गणेशे जायते मतिः ॥ ८ ॥ शुक्र उवाच । श्रृणु दैत्येंद्र
तस्याऽपि महिमानं महाद्भुतम् । येन त्वं गाणपत्ये च तत्त्वे प्रनिपुणो भवेः ॥ ९ ॥ सिद्धिर्मोहकरी माया सर्वत्रैव प्रदृश्यते ।
सिध्यर्थं सर्वलोकाश्च यत्नवंतो भवंत्यतः ॥ १० ॥ इहलोके स्वभोगार्थी सिद्धिमिच्छति दानव । परलोकस्य सिध्यर्थं
जनस्तत्प्रसमाकुलः ॥ ११ ॥ ब्रह्मभूयपदप्राप्तिमिच्छेद्वै सिद्धिरूपिकाम् । इह ब्रह्मपरप्राप्तिस्त्रिविधा मोहसंज्ञिता ॥ १२ ॥
माया गणपतेः प्रोक्ता भ्रांतिरूपा महामते । वामभागस्थया देव्या क्रीडतेऽसौ गजाननः ॥१३॥ भ्रामयन् ब्रह्मविष्णवादीन्
योगिनो मानवादिकान् । ब्रह्मभूतस्वरूपत्वात् स्वाधीनः सततं मतः ॥१४॥ द्वितीया बुद्धिरूपा च माया तस्य महात्मनः ।
तां शृणुष्व महादैत्य येन त्वं सर्वविद्भवेः॥ १५॥ यत्किंचिद् दृश्यते सर्वं मनोवाणीमयं जगत् । मनोवाणीविहीनं यत् सर्वं
बुद्धिमयं बभौ ॥ १६ ॥ क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकम् । चित्तं पंचविधं प्रोक्तं बुद्धिरूपं तदेव च ॥ १७ ॥
पंचानां बहवो भेदा वक्तुं तान् नैव शक्यते । एवमेकाप्यनेकाऽसौ बुद्धिः सर्वत्र दृश्यते ॥ १८ ॥ मोहधारकरूपां ता
सुभ्रांतां बुद्धिमादरात् । ज्ञानरूपां हृदिस्थां तु ब्रह्माकारां प्रविद्धि हि ॥१९॥ बुद्धियुक्तनरेणैव परत्रेह प्रलभ्यते । बुध्या ब्रह्ममयो
योगो युज्यते ज्ञानिभिः परः ॥ २० ॥ एतादृशी महाभागा दक्षिणांगधराऽसुर । तस्य योगेश्वरस्याऽपि गणेशस्य
महात्मनः ॥ २१ ॥ क्रीडार्थं रचिते माये स्वस्यांगात्तेन दैत्यप । ब्रह्मरूपं च तं विद्धि योगेन लभते नरः ॥ २२ ॥
स्वानंदाख्यं परं ब्रह्म तदेव नगरं मतम् । तत्र नित्यं वसति यः सिद्धिबुद्धिसमन्वितः ॥ २३ ॥ ब्रह्मणाराधितं ब्रह्म
पुत्रभावार्थमादरात् । तदेव गणराजोऽयमागतो ब्रह्मणः सुतः ॥ २४ ॥ मातुः पितुश्च बंधं च पुत्रौ हरति यत्त्विति । तदर्थं
पुत्रभावेन ब्रह्मणा प्रार्थितो विभुः ॥ २५ ॥ धर्मसंरक्षणार्थाय त्वां हनिष्यति निश्चितम् । अतस्त्वं शरणं गच्छ प्रभुमिच्छसि
जीवितुम् ॥२६॥ मुद्गल उवाच । काव्यस्य मुनिमुख्यस्य वचनं ब्रह्मदायकम् । वेदांतसारसंभूतं श्रुत्वा दंभ उवाच ह ॥२७॥ दंभ उवाच ।
स्वामिन् श्रुतं मया वाक्यं त्वदीयं योगसंयुतम् । परं तु संशयं छिंधि हृदिस्थं कथयामि ते ॥२८॥ एतादृशं परं ब्रह्म गाणेशं
चेन् महामुने । धर्माधर्मावतस्तस्मात् संभूतौ नात्र संशयः ॥२९॥ योगरूपेण सर्वत्र गणेशस्तिष्ठति प्रभो । धर्मस्य रक्षणं सोऽपि
किं करोति विकारतः ॥ ३० ॥ अधर्मस्य तथा नाशं किमर्थं प्रकरोति सः । एतं संशयजातं मे छेत्तुमर्हसि सांप्रतम् ॥ ३१ ॥

काव्य उवाच । शृणु दंभ गणेशस्य चेष्टितं सर्वदं परम् । येन ते संशयः सर्वो नाशं यास्यति तत्क्षणात् ॥३२॥ इदं सृष्टं गणेशेन नानाभेदमयं जगत् । तत्र स्वस्वपदे चैव स्थापिता जंतवोऽभवन् ॥ ३३ ॥ अधर्मस्य च धर्मस्य व्यवस्था तेन सा कृता । तत्र लोभेन वै धर्ममधर्मो जयते यदा ॥ ३४ ॥ सुराणां वै तदा तेजः क्षीणं भवति सर्वतः । असुराणां महत्तेजो वर्धते च दिने दिने ॥ ३५ ॥ यदाऽयं गणराजस्तु देवानां पक्षवर्धनः । असुराणां विनाशाय स्वयं भवति चोद्यतः ॥ ३६ ॥ हत्वा देवगणैः सर्वैरसुराणां बलं महत् । स्वस्थाने स्थापयत्येव धर्मं सर्वप्रयत्नतः ॥ ३७ ॥ धर्मेण सकलं दैत्य ह्यधर्मस्य बलं हतम् । तदा दैत्यादिकानां तु मूलच्छेदो भविष्यति ॥ ३८ ॥ देवानामुदितं तेजो भवेद्यदि महाद्भुतम् । दैत्याय वरदस्तर्हि भवेच्चानेकरूपवान् ॥ ३९ ॥ असुरैर्वरसंयुक्तैर्धर्मे क्षीणे समंततः । अधर्मस्य स संस्थां वै यथापूर्वमकल्पयत् ॥ ४० ॥ एवं लोभसमायुक्ताः सुरा दैत्या भवंति चेत् । तदा तेषां विनाशाय गणेशो यततेऽसुर ॥ ४१ ॥ नास्ति तस्य विचारेण स्वः परः क्वचिदेव च । क्रीडार्थं स्वात्मभावेषु स्थापयत्येव वै जनान् ॥ ४२ ॥ मुद्गल उवाच । शुक्रस्य वचनं रम्यं श्रुत्वा दंभः प्रतापवान् । गणेशं मनसा ध्यायन् संस्थितो नगरे स्वके ॥ ४३ ॥ एकांतेऽसौ महातेजा विचारं प्रचकार ह । अयं गणेशनामा वै पूर्णं ब्रह्म सनातनम् ॥ ४४ ॥ तमेव शरणं गच्छन् यशस्वी स भविष्यति । सर्वेषु समरूपेण स्थितोऽयं नात्र संशयः ॥ ४५ ॥ त्यक्त्वा सिद्धिपतिं सिद्धिमिच्छेद्यो दुर्मतिः परम् । असिद्धिर्भविता तस्य सुहृद्भिर्नात्र संशयः ॥ ४६ ॥ बुद्धेः पतिं गणेशं यस्त्यक्त्वा कुशलमिच्छति । तस्याऽकुशलमेवं च भविता दुष्टभावनः ॥ ४७ ॥ सिद्धिबुद्धिविहीनं तु ना किंचिद् दृश्यते मया । अतस्तं शरणं यामि सुरासुरसमं विभुम् ॥ ४८ ॥ इति निश्चितसंकल्पो दंभः सुष्वाप निर्भयः । गणेशं हृदि विन्यस्य भक्तिभावेन भावितम् ॥ ४९ ॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते दंभासुरविचारो नाम चतुश्चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । शृणु दक्ष महाप्राज्ञ महद् दंभस्य कौशलम् । त्यक्त्वाऽऽसुरस्वभावं स संस्थितो विगतज्वरः ॥ १ ॥ प्रातरुत्थाय दैत्यान् स सर्वानाकारयत् स्वयम् । उवाच तान् महातेजा वचनं शुक्रसन्निधौ ॥ २ ॥ दंभासुर उवाच । शृणुध्वमसुराः सर्वे गुरुणाऽहं प्रबोधितः । शरणं वक्रतुंडं च यामि तत्र न संशयः ॥ ३ ॥ सुराणामधिपो नाऽयं

नायं दैत्याधिपः कदा । ब्रह्माकारेण सर्वत्र सिद्धिबुद्धिपतिः स्थितः ॥ ४ ॥ तस्य तद्वचनं श्रुत्वा कुपिता दानवास्तदा । ययुः स्वं स्वं गृहं सर्वे त्यक्त्वा दंभासुरं खलाः ॥ ५ ॥ दंभासुरः प्रसन्नात्मा काव्येन सहितः स्वयम् । शरणं गणनाथं च ययौ हर्षसमन्वितः ॥ ६ ॥ नगराद्बहिरागत्य ययौ देवस्य सन्निधिम् । दंडवत्पतितः पृथ्व्यां कृतांजलिरुपस्थितः ॥ ७ ॥ तुष्टाव तं गणाध्यक्षं तद्दर्शनमहोत्सवः । यथान्यायं पूजयित्वा निबद्धकरसंपुटः ॥ ८ ॥ दंभासुर उवाच । नमस्ते ब्रह्मरूपाय ब्रह्माकारशरीरिणे । ब्रह्मणे ब्रह्मदात्रे च गणेशाय नमो नमः ॥९॥ नमस्ते त्रिदशेशाय दैत्यदानवपाय च । सर्वत्र योगरूपाय भावहीनाय ते नमः ॥ १० ॥ सिद्धिबुद्धिपते तुभ्यं नमः सिंहध्वजाय च । गणानां पतये तुभ्यं हेरंबाय नमो नमः ॥ ११ ॥ एकदंताय देवाय ह्यनंतविभवाय ते । विघ्नेशाय महाविघ्ननाशनाय नमो नमः ॥ १२ ॥ अपारगुणधाराय दैत्यदानवमर्दिने । मनोवाणीमयायैव सर्वरूपाय ते नमः ॥ १३ ॥ मनोवाणीविहीनाय योगिभ्यो योगदायिने । योगाय योगनाथाय विश्वपाय नमो नमः ॥ १४ ॥ मायाधाराय मायायाश्चालकाय नमो नमः । मायाहीनाय सर्वत्र समभावधराय ते ॥ १५ ॥ अव्यक्ताय नमस्तुभ्यं व्यक्तिमूलधराय च । निर्मोहाय समोहाय लंबोदर नमो नमः ॥ १६ ॥ यं स्तोतुं न समर्थाश्च वेदाः सांगा महर्षयः । योगींद्रा ब्रह्मविष्णवाद्यास्तं किं स्तौमि परात् परम् ॥ १७ ॥ इत्युक्त्वा पतितः पृथ्व्यां दंभो भक्तिसमन्वितः । तमुत्थाप्य गणाधीश ऊचिवान् भक्तिभावितः ॥ १८ ॥ गणेश उवाच । त्वया दंभ कृतं स्तोत्रं मम संतोषवर्धनम् । यः पठेत् पाठयेत्तद्वा स सर्वं सुखमाप्नुयात् ॥ १९ ॥ पुत्रपौत्रकलत्रादि धनधान्यप्रदं भवेत् । आधिव्याधिहरं चैव सर्वोपद्रवनाशनम् ॥ २० ॥ एककालं द्विकालं वा त्रिकालं सततं तथा । यः पठेत् स नरोऽत्यंतं मम प्रीतिकरो भवेत् ॥ २१ ॥ त्वां हंतुं क्रोधसंयुक्त आगतोऽहं न संशयः । अधुना शरणं यातस्ततो हन्मि न निश्चितम् ॥ २२ ॥ वरं वरय मत्तस्त्वं यत्त्वचित्ते स्थितं परम् । स्तोत्रेण भक्तिभावेन संतुष्टोऽहं ददामि ते ॥ २३ ॥ गणेशवचनं श्रुत्वा दंभो हर्षसमन्वितः । उवाच गणपं तत्र भक्तिनम्रात्मकंधरः ॥ २४ ॥ दंभासुर उवाच । यदि देवेश तुष्टोऽसि यदि देयो वरो हि मे । अचलां देहि ते भक्तिं तदा नाथ नमोऽस्तु ते ॥ २५ ॥ आज्ञां त्वं ज्ञापय विभो वृत्यर्थं मे च सांप्रतम् । स्थानं देहि गणाध्यक्ष तत्र स्थास्यामि निश्चलः ॥ २६ ॥ दंभस्य वचनं श्रुत्वा गणेशस्तमुवाच ह । सुप्रसन्नतया दक्ष भक्तं गंभीरनिस्वनः ॥ २७ ॥ सिद्धिबुद्धिपतिरुवाच । भविता मयि भक्तिस्ते दृढा ह्यव्यभिचारिणी । तिष्ठ स्थाने स्वके त्वं वै दंभ

हर्षसमन्वितः ॥ २८ ॥ न त्वं न्यूनोऽसि मे क्वापि देवा नैवाधिका मताः । स्वस्वधर्मे स्थिताः सर्वे मम प्रीतिविवर्धनाः ॥ २९ ॥ स्वधर्मत्यागदोषेण क्रुद्धोऽहं नाशयामि तान् । अतस्त्वं निर्भयो भूत्वा चिरं तिष्ठ महासुर ॥ ३० ॥ यत्र मे स्मरणं नास्ति कार्यादौ दैत्यसत्तम । तत्र त्वं दंभभावेन कार्यनाशं सदा कुरु ॥ ३१ ॥ कर्मादौ पूजनं यत्र मम नास्ति यदासुर । तदा तद्भ्रंशभावेन निष्फलं कुरु सर्वदा ॥ ३२ ॥ मम भक्तिसमायुक्ता ये नराः सततं प्रियाः । तान् पालय प्रयत्नेन दंभ हीन- स्वभावतः ॥ ३३ ॥ यत्र मे स्मरणं नास्ति पूजनं च महामते । आदौ तत्र च ते भागः कर्मरूपो मया कृतः ॥ ३४ ॥ एवमुक्त्वा स तं दंभं गणेशोऽन्तर्दधे स्वयम् । देवाश्च मुनयः सर्वे जयेत्युक्त्वा ययुस्ततः ॥ ३५ ॥ स्वस्वस्थानेषु दीप्तास्ते स्थिता भयविवर्जिताः । पातालविवरे दैत्याः स्थिता निर्व्याकुलाः प्रभो ॥ ३६ ॥ एवं दंभासुरं शांतं स चकार गजाननः । ब्रह्मपुत्रत्वमापन्नस्तदप्युक्तं मया परम् ॥ ३७ ॥ य एतच्छृणुयान्नित्यं श्रावयेद्वा समाहितः । स दंभभयनिर्मुक्तो याति ब्रह्म सनातनम् ॥ ३८ ॥ यं यं चिंतयते कामं तं तं प्राप्नोति मानवः । सर्वसंपत्समायुक्तस्तिष्ठेद्वै विघ्नवर्जितः ॥ ३९ ॥ अधुना वामनस्यापि कथयामि समासतः । चरित्रं गणनाथस्य भक्त्या युक्तं महाद्भुतम् ॥ ४० ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते दंभासुरशांतिकथनं नाम पंचचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । श्रुत्वा कथां गणेशस्य हर्षश्चेतसि वर्धते । अतः कथय सर्वज्ञ चरित्रं वामनस्य यत् ॥ १ ॥ मुद्गल उवाच । कश्यपो मुनिशार्दूलः प्रजापतिसमोऽभवत् । अदितिस्तस्य पत्न्यासीत् ज्येष्ठा परमधार्मिका ॥ २ ॥ तस्यां च कश्यपाद्देवा इंद्राद्या जज्ञिरे प्रभो । तेषां विरुद्धभावेन स्थिता दैत्या मुनेः सुताः ॥ ३ ॥ बलेन वरगर्वेण देवान् हंतुं समुद्यताः । अभवन् विष्णुना ते वै नानारूपेण नाशिताः ॥ ४ ॥ न प्रापुः स्वर्गराज्यं ते सर्वमान्यं यदा तदा । काव्यं सकलनीतिज्ञं शरणं प्रययुः पुनः ॥ ५ ॥ तेषां सर्वं स वृत्तांतं विदित्वा मुनिपुंगवः । दैत्यानुवाच सर्वज्ञः काव्यो वेदविदां वरः ॥ ६ ॥ काव्य उवाच । बलिदानवमुख्या वै शृणुध्वं मे वचो हितम् । यज्ञे देवाः समुत्पन्ना यज्ञाधारास्ततः सुराः ॥ ७ ॥ अतोऽश्वमेधयज्ञैश्च यजध्वं शतसंख्यकैः । बलिरिंद्रो महाबाहुर्भविता नात्र संशयः ॥ ८ ॥ द्वेषभावं च देवानां सदा

संछाद्य यत्नतः । तेन स्वर्गभुजो दैत्या यूयं सर्वत्र पूजिताः ॥ ९ ॥ भविष्यथ महाभागास्तस्मात् कुरुत मद्वचः । सर्वे हृष्टाश्च तं तत्र साधु साध्वब्रुवन् स्थिताः ॥ १० ॥ ततस्ते बलिराजं च मुख्यं कृत्वा महाबलाः । त्वरिता अश्वमेधेषु दीक्षितं चक्रुरादरात् ॥ ११ ॥ बलिर्विरोचनाज्जातो विष्णुभक्तिपरायणः । अधर्मे न रुचिस्तस्य जायते हि कदाचन ॥ १२ ॥ आदौ त्यक्त्वा गणेशानं विष्णुं स्मृत्वा महासुरः । आद्यं तं यज्ञमारेभे विष्णुभक्ततया खलः ॥ १३ ॥ तस्य चेष्टितमाज्ञाय विघ्नः परमहर्षितः । उवाच सदसि ह्यादौ पूजितो न गणाधिपः ॥ १४ ॥ भुक्तिमुक्तिप्रदाता यः सर्वसिद्धिकरो विभुः । सिद्धिमिच्छंति तं त्यक्त्वा तेऽसिद्धाः प्रभवंति हि ॥ १५ ॥ विष्णोर्बलेन दैत्यस्य भवेत् सिद्धिश्च कीदृशी । भक्षयिष्यामि तत्सर्वं कर्म तेन मखे कृतम् ॥ १६ ॥ इत्युक्त्वा स स्वयं विघ्न आययौ क्रोधसंयुतः । प्रविश्य देवराजस्य हृदये संस्थितोऽभवत् ॥ १७ ॥ यज्ञाः संकल्पितास्तस्य विप्रैस्तु शतसंख्यकाः । आद्ये यज्ञे समारब्धे इंद्रश्चितातुरोऽभवत् ॥ १८ ॥ शतयज्ञप्रभावेण बलिरिंद्रो भविष्यति । ततः स शरणं विष्णुं जगाम सुरनायकः ॥ १९ ॥ नत्वा स्तुत्वा महातेजाः प्रार्थयामास सादरम् । विष्णुं देववरं तत्र बलियज्ञविनाशने ॥ २० ॥ एतस्मिन्नंतरे तत्र विघ्नः कालस्वरूपधृक् । बलवान् विष्णुमाविश्य संस्थितो हृदयेऽभवत् ॥ २१ ॥ बलेः प्रचेष्टितं पूर्णं कथितं वज्रपाणिना । तज्ज्ञात्वा सकलं विष्णुरिंद्रं प्रोवाच सत्वरम् ॥ २२ ॥ विष्णुरुवाच । अदित्या कश्यपेनापि तपस्तप्तं सुदारुणम् । शतवर्षं मदर्थं च तस्मिन् काले सुराधिप ॥ २३ ॥ तयोरहं प्रसन्नात्मा वरदश्च पुराऽभवम् । ताभ्यां त्वं पुत्रतां याहि याचितं सर्वभावतः ॥ २४ ॥ ओमित्युक्तं मया तत्र तं वरं सफलं प्रभो । अधुनाऽहं करिष्यामि बलेर्यज्ञस्य नाशने ॥ २५ ॥ विस्मृता विष्णुनाऽत्यंतं बलेर्भक्तिर्महाद्भुता । स बलेर्निग्रहार्थं च स्वयमेवोद्यतोऽभवत् ॥ २६ ॥ स विष्णुः कश्यपाज्जातो ह्यदित्यां वामनः प्रभुः । बलेर्बलं निरीक्ष्यैव न शशाक प्रचालितुम् ॥ २७ ॥ मनसि क्षुभितो विष्णुः कश्यपं पितरं तदा । पप्रच्छ बलिनाशाय वदोपायं महामुने ॥ २८ ॥ षडक्षरं महामंत्रं वक्रतुंडस्य तं ददौ । ततोऽसौ च विदर्भेषु गत्वा तपसि संस्थितः ॥ २९ ॥ दशवर्षं महोग्रं स तपस्तेपे सुदारुणम् । निराहारतया दक्ष गणेशं हृदि चिंतयन् ॥ ३० ॥ उग्रेण तपसा तस्य प्रत्यक्षः सिंहवाहनः । षडक्षरप्रभावेण तं ययौ भक्तवत्सलः ॥ ३१ ॥ चतुर्बाहुधरः पूर्णः सिद्धिबुद्धिसमन्वितः । एकदंतो गजाकारमुखः पाशांकुशादिधृक् ॥ ३२ ॥ सिंदूरारुणदेहश्च शूर्पकर्णो महोदरः । कोटिसूर्यसमानेन तेजसा सुविराजितः ॥ ३३ ॥ तं दृष्ट्वा सहसोत्थाय

वामनः प्रणनाम सः । बद्धांजलिपुटो भूत्वा स्तोतुं समुपचक्रमे ॥ ३४ ॥ वामन उवाच । नमो विघ्नपते तुभ्यं भक्तविघ्नविनाशिने । अभक्तविघ्नदात्रे च गणेशाय नमो नमः ॥ ३५ ॥ वक्रतुंडाय सर्वेश पालकाय नमो नमः । नानारूपधरायैव सर्वांतर्यामिणे नमः ॥ ३६ ॥ सर्वं चराचरं स्वामिंस्त्वदाज्ञा वशवर्ति च । विभूतिभिर्महाराज कुरुषे सर्वमंजसा ॥ ३७ ॥ ब्रह्मा प्रजापतीनां त्वं यज्ञानां विष्णुरेव च । ईश्वराणां स्वयं शंभुर्देवानां त्वं पुरंदरः ॥ ३८ ॥ प्रकाशानां रविस्त्वं च चंद्रोऽन्नेषु गणाधिप । यमो यमवतां त्वं वै वरुणो यादसां प्रभो ॥ ३९ ॥ वायुर्बलवतां त्वं च निधीनां धनपः स्वयम् । अग्निर्वै दाहकानां त्वं रक्षसां निर्ऋतिः स्वयम् ॥ ४० ॥ नागानां शेषरूपोऽसि योगिनां शुक्र एव च । कुमाराणां त्वं च सनत्कुमारोऽसि न संशयः ॥ ४१ ॥ गुहः सेनापतीनां त्वं मृगाणां सिंहवेषभृत् । एवं नानास्वरूपैस्त्वं जगद्रक्षणतत्परः ॥ ४२ ॥ त्वां स्तोतुं कः समर्थः स्याद्योगरूपं सनातनम् । वेदाः शेषश्च वेधा च शक्ता न स्तवनेऽभवन् ॥ ४३ ॥ तत्र मंदमतिः क्वाहं पारं गंतुं तव स्तुतेः । तथापि च यथाबुद्धि संस्तुतोऽसि च विघ्नप ॥ ४४ ॥ तव दर्शनमात्रेण कृतकृत्योऽस्मि सांप्रतम् । धन्यं जन्म मदीयं वै येन दृष्टो गजाननः ॥ ४५ ॥ धन्यौ माता पिता मेऽद्य स्थलं धन्यं तपोऽपि च । षडक्षरश्च मंत्रोऽयं धन्यो येन त्वमागतः ॥ ४६ ॥ एवमुक्त्वा ननर्तासौ भक्तिभावपरिप्लुतः । रोमांचितशरीरोऽभूदानंदाश्रु सृजन्मुहुः ॥ ४७ ॥ देहभावं परित्यज्य वामनो हर्षसंयुतः । तदेकनिष्ठतां प्राप्तो महाभागः प्रजापते ॥ ४८ ॥ तं तादृशं गणाधीशो दृष्ट्वा प्रेमपरिप्लुतम् । जगाद परमात्माऽसौ वामनं भक्तवत्सलः ॥ ४९ ॥ गणेश उवाच । शृणु वामन मे वाक्यं वरं वृणु हृदीप्सितम् । तव भक्त्या तपोयुक्त्या स्तुत्या वै तुष्टिमागतः ॥ ५० ॥ दास्यामि सकलं तुभ्यं यद्यपि स्यात् सुदुष्करम् । धन्योऽसि बालभावेऽपि भक्तिस्ते मे पदांबुजे ॥ ५१ ॥ त्वया कृतमिदं स्तोत्रं सर्वदं प्रभविष्यति । यः पठेच्छ्रावयेद्वापि तस्य सिद्धिर्भविष्यति ॥ ५२ ॥ यं यं चिंतयते कामं तं तं दास्यामि दुर्लभम् । अंते मोक्षं महाविष्णो स्वानंदं प्रददाम्यहम् ॥ ५३ ॥ इति तस्य वचः श्रुत्वा वक्रतुंडस्य शोभनम् । वामनः प्रणतो भूत्वा तं जगाद गजाननम् ॥ ५४ ॥ प्रसन्नो यदि देवेश देहि भक्तिं दृढां च ते । बलिं दैत्यरिपुं दुष्टं मत्साध्यं कुरु दैत्यपम् ॥ ५५ ॥ यदाहं त्वां स्मरिष्यामि तदात्मानं प्रदर्शय । यथा न मां भवेद्विघ्नो वरं देहि गजानन ॥ ५६ ॥ तथेति तमथोक्त्वाऽसौ गणेशोंऽतर्दधे

स्वयम् । वामनस्तत्र देवेशं स्थापयामास हर्षतः ॥ ५७ ॥ अदोषाख्यं महाक्षेत्रं विदर्भे स्थानमुत्तमम् । वक्रतुंडस्य संभूतं नराणां सर्वसिद्धिदम् ॥ ५८ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुण्डचरिते वामनवरप्रदानं नाम षट्चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । वरं लब्ध्वा स संपूज्य वक्रतुंडं च वामनः । कश्यपं प्रणतो भूत्वा ययौ यज्ञं बलेरपि ॥ १ ॥ तं दृष्ट्वा सूर्यसंकाशं वेदाध्ययनसंयुतम् । ह्रस्वाकृतिं मुनिश्रेष्ठं विस्मिता मुनयोऽभवन् ॥ २ ॥ बलिरुत्थाय तं नत्वा पूजयामास भक्तितः । पप्रच्छ किं ददे तुभ्यं मां तद् ब्रूहि महामुने ॥ ३ ॥ ततः शुक्रेण सर्वं तज्ज्ञातं तस्य प्रयोजनम् । गणेशपूजनं चादौ न कृतं दुष्टबुद्धिना ॥ ४ ॥ तेन विघ्नस्वरूपं च विष्णुरूपेण संस्थितम् । अधुना यादृशं भावि तथा भवतु तादृशम् ॥ ५ ॥ बलेर्वचनमाकर्ण्य वामनः प्राह तं ततः । देहि त्रिपदरूपां मे भूमिं दैत्यपते किल ॥ ६ ॥ ददौ बलिर्महा-भक्त्या तां भूमिं सादरो यथा । तथा वामनदेवोऽपि गणेशं मनसाऽस्मरत् ॥ ७ ॥ विराड्रूपं ततो धृत्वा पादं चिक्षेप देवपः । एकेन सकलं स्वर्गं पादेनावृत्य सत्वरः ॥ ८ ॥ द्वितीयेन स भूमिं वै सर्वामावृत्य वामनः । उवाच दैत्यपं देहि तृतीयस्य स्थलं प्रभो ॥ ९ ॥ बलिर्विस्मयमापन्नो भ्रांतः शोकाकुलो भवत् । किंचिन्नोवाच तं तत्र किं ददामीति विह्वलः ॥ १० ॥ ततो विष्णुः प्रकोपेन तं बबंध महासुरम् । विप्रस्य त्वमृणी जातो नरकं गच्छ दैत्यप ॥ ११ ॥ विष्णोर्वचनमाकर्ण्य बलिर्वै दुःखितोऽभवत् । नरकं विष्णुभक्ताय दत्ते वै विष्णुरद्भुतम् ॥ १२ ॥ अहो मोहो महान्मे-ऽभूद्येन वेदविवर्जितम् । कृतं कर्म विना पूज्यं गणेशं विघ्ननायकम् ॥ १३ ॥ तस्येदं हि फलं प्राप्तं विष्णुभक्तस्य विष्णुतः । अतस्तं शरणं यामि स रक्षिष्यति मां प्रभुः ॥ १४ ॥ एवं विचार्य तस्यैव मनसि ध्यानमादधे । ढुंढिं तुष्टाव दैत्येशः सर्वभावसमन्वितः ॥ १५ ॥ बलिरुवाच । नमस्ते विघ्नराजाय भक्तानां विघ्नहारिणे । अभक्तानां विशेषेण विघ्नकर्त्रे नमो नमः ॥ १६ ॥ सर्वाकाराय देवाय गम्यागम्यस्वरूपिणे । स्वानंदपतये तुभ्यं हेरंबाय नमो नमः ॥ १७ ॥ नमो ब्रह्मपते तुभ्यं गणाध्यक्षाय ते नमः । सिद्धिबुद्धिपते तुभ्यं नमो विश्वंभराय ते ॥ १८ ॥ अपाराय नमस्तुभ्यं

नानामायाश्रयाय च। मायामोहहरायैव गणेशाय नमो नमः ॥ १९ ॥ सर्वांतर्यामिणे तुभ्यं चिंतामणिसुरूपिणे । सततं ब्रह्मभूताय नमस्ते जगदादये ॥ २० ॥ अंते मध्ये च सर्वत्र संस्थिताय नमो नमः । आदिमध्यांतहीनाय सिंहवाहाय ते नमः ॥ २१ ॥ अपराधानसंख्यातान् मदीयान् जगदीश्वर। क्षंत्वा पाहि गणाधीश पतंतं नरके च माम् ॥ २२ ॥ त्वन्मायामोहयोगेन मोहितोऽहं न संशयः । तेन मत्सरभावेन त्वां त्यक्त्वा विष्णुमाश्रितः ॥ २३ ॥ सकलं विघ्नसंयुक्तं जगदेतच्चराचरम्। शिवविष्णवादिभिः सार्धं तव मायाविमोहितम् ॥ २४ ॥ यदि त्वां शरणं ढुंढे शिवविष्णवादयः प्रभो। गच्छंति मोहहीना वै निर्विघ्नास्ते भवंति च ॥ २५ ॥ अन्यथा भ्रष्टरूपास्ते पदहीना भवंति च। अतस्त्वं सर्वदेवानां धारको नात्र संशयः ॥ २६ ॥ सत्तारूपा महाविघ्नास्तेषां स्वामी भवान् मतः । सर्वेषां स्थापकाश्चैव तथोत्थापनकारकाः ॥ २७ ॥ अधुना त्वत्प्रसादेन मया बुद्धं गजानन । अतस्त्वां शरणं यातो दीनोऽनाथश्च सांप्रतम् ॥ २८ ॥ रक्ष रक्ष गणाध्यक्ष नरकान्मां दयानिधे। त्वत्स्मृत्या चैव भवति जनः सर्वार्थसिद्धिभाक् ॥ २९ ॥ एवं नानाविधैः स्तोत्रैस्तुष्टाव दनुजेश्वरः। तदैवाकाशजां वाणीं शुश्राव परमाद्भुताम् ॥ ३० ॥ मा भयं कुरु दैत्येंद्र रक्षामि शरणागतम्। नरकात्ते भयं नास्ति मत्स्मृतेः करणात् कदा ॥ ३१ ॥ त्वया कृतमिदं स्तोत्रं नरकस्य हरं भवेत् । यः पठेच्छ्रावयेद्वापि नरकात्तस्य नोभयम् ॥ ३२ ॥ धर्मार्थकाममोक्षाणां साधनं प्रभविष्यति। मद्भक्तिवर्धनं चैव बले भवति निश्चितम् ॥ ३३ ॥ श्रुत्वाऽऽकाशभवां वाणीं बलिर्हृष्टो बभूव ह। तमेव गणपं चित्ते ध्यायंस्तत्रैव संस्थितः ॥ ३४ ॥ एतस्मिन्नंतरे विप्रो विष्णुं तत्याज वै यतः। ततो बुद्धिप्रकाशश्च विष्णोर्जातस्तु तत्क्षणात् ॥ ३५ ॥ वामनो मनसा तत्र ध्यायति स्म प्रजापते। मम भक्तो बलिः पूर्णस्तस्य प्राप्तं महद्भयम ॥ ३६ ॥ विप्रस्य ऋणमुग्रं यत्तेनायं नारकी भवेत् । अहो मयातिमूर्खेण मम भक्तः प्रपीडितः ॥ ३७ ॥ वेदबाह्यं कृतं कर्म बलिना मत्स्मरन सर्वं। न पूजितो गणाध्यक्षः फलहीनोऽभवत्ततः ॥ ३८ ॥ अधुना भक्तरक्षार्थं किं करोमि विचारतः। गणेशं शरणं यामि ततः सौख्यं भविष्यति ॥ ३९ ॥ एवं विचार्य देवेशो गणेशं हृदि सोऽस्मरत्। स्मृतिमात्रेण तस्याग्रे प्रकटोऽभूद्गजाननः ॥ ४० ॥ तं दृष्ट्वा प्रणनामादौ पूजयामास भक्तितः। सर्वे देवगणास्तत्र मुनयस्तमपूजयन् ॥ ४१ ॥ एतस्मिन्नंतरे तत्र बलिः प्रोवाच वामनम्। गणेशदर्शनेनैव प्राप्तबुद्धिर्महायशाः ॥ ४२ ॥ बलिरुवाच। ब्रह्मन् देहि तृतीयं ते पादं शिरसि चाशु मे। देहोऽयं दानरूपेण मया दत्तो न संशयः ॥ ४३ ॥ तच्छ्रुत्वा हर्षितो विष्णुस्तथेति स चकार ह।

ब्राह्मणस्यर्णनिर्मुक्तं भक्तं कृत्वा च संस्थितः ॥ ४४॥ ततस्तं मुनिभिर्देवैः सहितोऽसौ जनार्दनः। तुष्टाव प्रांजलिं बध्वा गणेशं सर्वसिद्धिदम्॥४५॥ वामन उवाच। नमस्ते गणनाथाय सर्वेषां पतये नमः। नानागणविभक्ताय जगत्कर्त्रे नमोऽस्तु ते॥४६॥ विघ्नानां पतये तुभ्यं नमश्चंद्रार्धधारिणे। त्रिनेत्राय नमस्तुभ्यं भक्तसंरक्षकाय च ॥ ४७॥ अमेयमायया देव तवेदं रचितं जगत्। तव मायाविमोहेन मोहितान् रक्ष विघ्नप॥ ४८॥ तव मायाप्रभावं च को जानाति गजानन। वयं योगिगणाश्चान्ये न तं वेत्तुं क्षमाः कदा॥ ४९॥ अतोऽपराधं जातं मे क्षंतुमर्हसि मानद। तव भक्ता वयं नाथ देवदेव नमोऽस्तु ते॥५०॥ बलिस्त्वयं मदीयश्च भक्तः परमभाविकः। मच्छ्रेष्ठत्वेन देवेश जातोऽसौ मत्सरान्वितः॥ ५१॥ तेन वेदविरुद्धं च कृतं कर्म महाद्भुतम्। त्वां विना यज्ञमारेभे फलहीनोऽभवत्क्रतुः॥ ५२॥ अधुना मुनिभिर्देवैः सहितोऽहं गजानन। प्रार्थयामि तदर्थं त्वां सफलं कुरु दानवम्॥ ५३॥ त्वं विनायकनामाऽसि त्वया यत्कृतमादरात्। तदेव मान्यतां याति वेदादिषु न संशयः॥ ५४॥ वयं नायकसंयुक्ता वेदबाह्यं यदा प्रभो। कुर्मश्चेद्वै पदभ्रष्टाः क्रियंते च त्वया तदा॥ ५५॥ यज्ञस्य फलसंयुक्तमतो भक्तं कुरु प्रभो। इत्युक्त्वा पादयोस्तस्य पपात गणपस्य सः ॥ ५६॥ तमुत्थाप्य गणाधीशो जगाद वचनं हरिम्। किं करोमि पुरा चैवं वरदोऽहं बभूव ते ॥५७॥ त्वदीयहस्ततो दैत्यं नरके पातयाम्यहम्। इति क्रोधसमाविष्टोऽधुना स्मरति मां खलः॥ ५८॥ कायेन मनसा वाचा दैत्यो मां शरणं गतः। त्वं च प्रार्थयसे विष्णो वाञ्छितं च करोमि ते॥ ५९॥ अधुना मां पुरस्कृत्य एतं यज्ञं समापय। तेनाऽयं सकलानां च यज्ञानां फलमश्नुते॥ ६०॥ अपराधस्य माहात्म्यं किंचित्पश्यतु केशव। इंद्रे निवृत्तेस्मिन्नेष इंद्रः पश्चाद् भविष्यति॥ ६१॥ पाताले स्थापयस्वैनं नात्र कार्या विचारणा। अधुना फलहीनत्वं जनार्दन कृतं मया॥ ६२॥ गणेशवचनं श्रुत्वा सर्वे हर्षसमन्विताः। साधु साधु महाराज गजानन कृतं त्वया ॥ ६३॥ इत्युक्तस्तं पुरस्कृत्य यज्ञं चक्रे बलिस्ततः । अंतिमं भावयुक्तः सन् कृतकृत्यो-ऽभवद्यथा॥ ६४॥ गणेशोंऽतर्दधे तत्र देवाः स्वं स्वं पदं ययुः। एवं वामनमाहात्म्यं कथितं ते प्रजापते॥ ६५॥ यः शृणोति नरो भक्या वाञ्छितं लभते ध्रुवम्। श्रावयेच्छृणुयाद्वा यस्तस्य सर्वं न दुर्लभम्॥ ६६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते वामनचरितं नाम सप्तचत्वारिंशोऽध्यायः॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । त्वया प्रकथितं सूत वक्रतुंडस्य धीमता । मत्सरासुरनाशाख्यं चरित्रं सर्वसिद्धिदम् ॥१॥ स स्थितः कुत्र तत् क्षेत्रस्थानं ब्रूहि महात्मनः । आदौ तस्यावतारस्य तिथिमुत्सववर्धिनीम् ॥ २ ॥ सूत उवाच । प्राचीदिगंत-संस्थाने स्थापितोऽसौ महर्षिभिः । देवैश्च गणसंयुक्तैर्महोत्सवपरायणैः ॥ ३ ॥ भाद्रशुक्लचतुर्थ्यां वै प्रकटोऽभूत्स देवराट् । वक्रतुंडः प्रसन्नात्मा सा तिथिः परमा मता ॥ ४ ॥ मध्याह्नसमये तस्य पूजनं सुखदायकम् । अपारसिद्धिदं प्रोक्तमाद्यंते स्वल्पसिद्धिदम् ॥५॥ द्वीपे द्वीपे च खंडेषु स्वस्वपूर्वदिगंतरे । प्रतिमा वक्रतुंडस्य स्थापिता मुनिभिः पुरा ॥६॥ तत्र क्षेत्रं समाख्यातं दशयोजनमात्रकम् । चतुरस्रं महापुण्यं भुक्तिमुक्तिप्रदं परम् ॥७॥ मध्ये स संस्थितो देवो वक्रतुंडो गणेश्वरः । वामांगे सिद्धिराद्या सा बुद्धिर्वै दक्षिणांगके ॥८॥ संमुखे सिंहरूपं च वाहनं तस्य शोभनम् । अष्टदिक्षु स्थितास्तस्य सिद्धयोऽष्टौ च शौनक ॥९॥ गणा अष्टौ तथा ज्ञेयाश्चतुर्दिक्षु क्रमेण ते । शिवो विष्णू रविः शक्तिर्भक्तियुक्ताः स्थिता इमे ॥१०॥ ब्रह्माद्या देवताः सर्वास्तत्पश्चात् पूर्वतः स्थिताः । गंगाद्याः सरितः सर्वा दक्षिणे संस्थिताः प्रभो ॥११॥ क्षेत्राणि काशिकादीनि पश्चिमे संस्थितानि च । वसिष्ठाद्या मुनिश्रेष्ठाः संस्थितास्तत्र चोत्तरे ॥१२॥ शेषाद्या नागभूपाश्च गंधर्वाः पर्वतास्तथा । सिद्धा अप्सरसश्चैव विद्याधाः किंनरा गणाः ॥१३॥ नानाजातिषु ये श्रेष्ठा अभवंस्तत्र संस्थिताः । न वक्तुं शक्यते स्वामिन् मया वर्षशतैरपि ॥१४॥ सेवार्थं वक्रतुंडस्य लालसाधारिणः प्रभोः । हृष्टाः प्रमुदितास्तत्र परस्परहिते रताः ॥१५॥ वक्रतुंड-चरित्राणि कथयंति परस्परम् । हृष्टरोमाण एवं ते भवंतो भावतः पुनः ॥१६॥ समुद्रे स्नानकर्तारस्तत्र तीर्थानि चक्रिरे । स्वस्वनाम्नांकितान्येव स्वल्पदेहधरा मुने ॥१७॥ गणेशतीर्थं तत्रैव वक्रतुंडस्य हर्षदम् । कृतकृत्या भवंत्यत्र स्नानमात्रेण जंतवः ॥१८॥ यात्रामात्रेण तत्रैव जन ईप्सितमाप्नुयात् । क्षेत्रे मरणतो जंतुर्ब्रह्मभूतश्च जायते ॥१९॥ दूरे स्थित्वा नरो यस्तु स्मरणं प्रकरोति चेत् । तस्यापि शुक्लगत्या सा मुक्तिर्भवति शाश्वती ॥२०॥ वक्रतुंडस्य ये भक्ता यत्र कुत्र स्थिता मुने । ब्रह्मभूता न संदेहः पावना दर्शनान्नृणाम ॥२१॥ संक्षेपेण मया तस्य स्थानं ते कथितं मुने । विस्तरेण न शेषोऽपि ब्रह्मविष्णुमहेश्वराः ॥२२॥ वेदाः सस्मृतयः सर्वे स्कंदो योगिन एव च । अयुतायुतवर्षैस्ते कथितुं न क्षमाः कदा ॥२३॥ मुद्गलेन यथा प्रोक्तं दक्षाग्रे तन्मया तथा । कथितं भावयुक्तेन किमन्यच्छ्रोतुमिच्छसि ॥२४॥ शौनक उवाच । सूत सूत महाभाग धन्यं क्षेत्रसमुद्भवम् । माहात्म्यं श्रुतमस्माभिर्ब्रह्मसायुज्यदायकम् ॥२५॥ अधुना ब्रूहि धर्मज्ञ यद्दक्षेण च

संश्रुतम् । मुद्गलात्तेन कथितमग्रे यत् कीदृशं च तत् ॥२६॥ सूत उवाच । क्षेत्रस्य चरितं श्रुत्वा दक्षो हर्षसमन्वितः । उवाच मुद्गलं विप्रं भक्तिनम्रात्मकंधरः ॥२७॥ दक्ष उवाच । ढुंढिराजावतारस्य चरितं वद विस्तरात् । वक्रतुंडः स्वयं साक्षात् कथं शंकरदेहजः ॥२८॥ मुद्गल उवाच । शृणु दक्ष महाभाग कथयामि पुरातनम् । इतिहासं गणेशस्य गुणयुक्तं महाद्भुतम् ॥ २९ ॥ याज्ञवल्क्यमुनींद्रेण कथितं कौशिकाय यत् । तदहं संप्रवक्ष्यामि ब्राह्मणत्वप्रकाशकम् ॥३०॥ भार्गवो मुनिमुख्यो य ऋचीकस्तपसि स्थितः । बहुकाले व्यतिक्रांते तपसा जीर्णतां ययौ ॥३१॥ वृद्धत्वं परिपूर्णं च प्राप्तं तस्य महात्मनः । वनेषु मृगयूथानि स पश्यन् विस्मितोऽभवत् ॥३२॥ मृगीसंसक्तचित्तश्च मृगः स्वाधीनतां गतः । पुत्रपौत्रादिसंयुक्तो बभ्राम वनगोचरः ॥३३॥ एकैकाश्रितचित्तास्ते क्रीडां चक्रुः परस्परम् । दृष्ट्वा भृगुवरस्तत्र सकामः संबभूव ह ॥३४॥ उवाच स्वयमेवेदं धन्यं गार्हस्थ्यमेव च । इत्थं विचार्य विप्रस्तु ययौ गाधिं नराधिपम् ॥३५॥ स दृष्ट्वा सहसोत्थाय मुनिं गाधिरपूजयत् । भुक्त्वाऽयाचत तत्कन्यां भार्यार्थं नृपसत्तमम् ॥३६॥ राजा वृद्धं समालोक्य तं जगाद महामुनिम् । श्यामकर्णयुताश्वानां सहस्रं देहि मे मुने ॥३७॥ शुल्कं ग्राह्यं मया चैवं निश्चयः प्राकृतो मुने । अतस्त्वां प्रार्थये विप्र पश्चात्कन्यां ददामि ते ॥३८॥ श्रुत्वा मुनिर्गतः सद्यो वरुणस्य गृहं प्रति । गृहीत्वाऽश्वसहस्रं च तस्मात्तं प्रययौ ददौ ॥३९॥ राजा कन्यां ददौ तस्मै भार्गवाय महात्मने । विधिवद्भयभीतः स तां प्रगृह्य ययौ वनम् ॥४०॥ राजपत्नी सुतां प्राह त्वदीयं भाग्यमीदृशम् । अस्माभिः किं प्रकर्तव्यं वनवासं सुते कुरु ॥४१॥ विलप्य द्रव्यवस्त्रादीन् दत्वा पुत्रीकरे तदा । स्वगेहं सा जगामापि वने प्रस्थाप्य तां मुने ॥४२॥ राजपुत्री महाभागा ऋचीकं प्राप्य संस्थिता । सेवामनलसत्वेन कृत्वा तद्भक्तितत्परा ॥४३॥ तां दृष्ट्वा शीलसंयुक्तां प्रसन्नो मुनिसत्तमः । तदर्थं तपसा स्वेन निर्ममे नगरं वने ॥४४॥ चातुर्वर्ण्यसमायुक्तं हेमरत्नविभूषितम् । दासीदासादिसंयुक्तं नानाविभवदं परम् ॥४५॥ स्वयं तपःप्रभावेण यौवनं रूपमादधे । रेमे तया यथान्यायं देवेंद्रेण समः प्रभो ॥४६॥ निःस्पृहो भोगरागेषु दृष्ट्वा स्त्रीसुखमल्पकम् । मानसे धारयामास व्यर्थं पत्नीभवं सुखम् ॥४७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते ऋचीकगृहस्थाश्रमवर्णनं नाम चत्वारिंशोऽध्यायः ॥



।। श्रीगणेशाय नमः ।। मुद्गल उवाच । एकदा राजपत्नी सा वनं शोकसमाकुला । आययौ दर्शनार्थं तां पुत्रीं वस्त्रधनान्विता ।।१।। ऋचीकस्याश्रमं तत्र न ददर्श रथे स्थिता । नगरं हेमशोभाढ्यं दृष्ट्वा सा विस्मिताऽभवत् ।।२।। कस्येदं नगरं दिव्यं देवैर्वा निर्मितं भवेत् । क्व गतो मुनिशार्दूलो जामाता मे स भार्गवः ।।३।। एवं शोकसमायुक्ता विचारमकरोद् हृदि । ददर्श पुरुषं कंचित्तं पप्रच्छ भयातुरा ।।४।। कस्येदं नगरं ब्रूहि स जगाद च तां मुने । ऋचीकस्य पुरं देवि वयं तस्य प्रमार्जकाः ।।५।। पुनस्तं विस्मिता राज्ञी जगाद वद सांप्रतम् । ऋषिपत्नीं च मे पुत्रीमागतां जननीं पुरे ।।६।। तथेति पुरुषो गत्वा कथयामास तां ततः । सा स्वमातरमागम्य निनाय स्वगृहं पुरे ।।७।। जामातरं श्रिया युक्तं दृष्ट्वा विस्मितमानसा । उवाच स्वसुतां राज्ञी पुत्रार्थं भावसंयुता ।।८।। मम पुत्रार्थमेवं च तव पुत्रार्थमादरात् । याचस्व स्वामिनं पुत्रि समर्थं मुनिपुंगवम् ।।९।। ऋषिपत्नी पतिं तत्र याचयामास तत्तथा । द्वौ चरू ह्यग्निकुंडे स चकार सुतलिप्सया ।।१०।। द्विविधं स पुरोडाशं ब्रह्मक्षत्रप्रकाशकम् । अतुलं तेज आवाह्य ददौ पत्नीकरे मुनिः ।।११।। जगाद तां मुनिश्रेष्ठो भक्षितव्यस्त्वया ह्ययम् । तव मात्रा तथाऽन्यो वै भक्षितव्यः शुचिस्मिते ।।१२।। तदा पुत्रसमायुक्ते युवां किल भविष्यथः । एवमुक्त्वा मुनिस्तीर्थे माध्याह्नार्थं ययौ किल ।।१३।। पुत्र्या मात्रे स वृत्तांतः कथितः साऽब्रवीत् सुताम् । त्वदीयो भक्षितव्यो मे मदीयं त्वं प्रभुंक्ष्व वै ।।१४।। तथा पुत्र्या कृतं सर्वं गता माता स्वमालयम् । राज्ञी गर्भवती जाता ब्राह्मणी च प्रजापते ।।१५।। एकदा मुनिना दृष्टा स्म्युग्रतेजोधरा वभौ । उवाच भार्गवः पत्नीं किं कृतः क्षात्र आदरः ।।१६।। सोवाच भयभीता तं व्यतिक्रममसु चरोः । तामुवाच मुनिस्तत्र विस्मितो मानसेऽभवत् ।।१७।। तव भ्राता तपस्वी च भविष्यति न संशयः । तव पुत्रो धनुर्धारी दारुणः प्रभविष्यति ।।१८।। सोवाच स्वामिनं भीता द्विज पुत्रं तु मे प्रभो । देहि नोचेज्जीवघातं करिष्यामि न संशयः ।।१९।। ततो मुनिः स्वयं प्राह पुत्रपुत्रो भवेत्तथा । गर्भं विज्ञाप्य विष्णुं वै तपसा स तथाऽकरोत् ।।२०।। ततस्तस्याऽभवत्पुत्रो जमदग्निर्महातपाः । तस्य पुत्रत्वमापेदे रामः शस्त्रभृतांवरः ।।२१।। नवमे गाधिपत्नी सा मासे पुत्रं तपोनिधिम । विश्वामित्रं महाभागं सुषुवे प्रेमविह्वला ।।२२।। स तु यौवनमापन्नं संस्थाप्य वनमादरात् । गाधिर्ययौ स्वराज्ये च तपसे कृतनिश्चयः ।।२३।। तद्राज्यमकरोत सर्वं विश्वामित्रः प्रतापवान । एकदा मृगयार्थं वै वनेषु प्रजगाम ह ।।२४।। मृगयित्वामृगान राजा क्षुधितस्तृषितोऽभवत् । भ्रमन् समाययौ सोऽपि वसिष्ठाश्रममुत्तमम् ।।२५।। प्रविश्य तत्र तं राजा ननाम भक्तिसंयुतः ।

ससैन्यो भोजितस्तेन कामधेनुबलेन सः ॥२६॥ भुक्त्वा तं प्रार्थयामास नंदिनीं देहि मे मुने । विश्वामित्रस्ततस्तस्मै न ददौ तां महामुनिः ॥२७॥ ततो राजा बलान्नेतुं दूतानाज्ञापयत् खलः । धेन्वा ते नाशिताः सर्वे ततः स्वयमुपाययौ ॥२८॥ कशाघातैश्च तां धेनुं ताडयामासुराग्रहात् । केचित्ततो महत्सैन्यं निर्ममे तत्र धेनुका ॥२९॥ ततो युद्धमभूद्घोरं सैन्ययोरुभयोर्महत् । नष्टं सैन्यं च संपूर्णं विश्वामित्रस्य तत्क्षणात् ॥३०॥ सोऽपि भग्नो गृहं गत्वा राज्यं न्यस्य ययौ वनम् । प्रधानेषु तपस्तेपे शंकरस्य महात्मनः ॥३१॥ शतवर्षेषु पूर्णेषु प्रसन्नश्च ददौ शिवः । अस्त्रविद्यां सुसंपूर्णां तां प्राप्य स्वगृहं ययौ ॥३२॥ पुनर्वसिष्ठमागम्य शस्त्रास्त्रैर्बलसंयुतः । विश्वामित्रो ममादासावग्न्यस्त्रेण तदाश्रमम् ॥३३॥ वसिष्ठस्तं ततस्तत्र योधयामास शौनक । ब्रह्मदंडधरः श्रीमान् सर्वास्त्राणि व्यमर्दयत् ॥३४॥ ब्रह्मदंडेन तस्याऽपि कृतस्तेन पराजयः । विश्वामित्रः पलायिष्ट भयभीतः समंततः ॥३५॥ ततः सुसांत्वितो विप्रो वसिष्ठो ब्राह्मणैस्तदा । स्वाश्रमं प्रविवेशाथ विश्वामित्रो गृहं ययौ ॥३६॥ अहो ब्राह्मं बलं दीप्तं क्षात्रं तुच्छं विशेषतः । ब्रह्मदंडेन सर्वाणि ममास्त्राणि हतानि च ॥३७॥ एवं स निश्चयं कृत्वा राज्यं त्यक्त्वा ययौ वनम् । ब्राह्मणत्वप्रसिद्ध्यर्थं तताप परमं तपः ॥३८॥ गायत्रीमंत्रजाप्येन पुरश्चरणमार्गतः । निराहारेण राजर्षिस्तापयामास विष्टपम् ॥३९॥ एवं दशसहस्राणि वर्षाणि जपतो ययुः । ततो जगाद तं ब्रह्मा वरं ब्रूहि महामते ॥४०॥ स वव्रे ब्राह्मणत्वं मे देहि देव नमोऽस्तु ते । तदा ब्रह्मा पुनः प्राह तपस्वेति च गाधिजम् ॥४१॥ दशवारं विधौ तत्र समागत्य च तं मुनिम् । अन्यं वरं ददाने स न जग्राह स बुद्धिमान् ॥४२॥ तपःप्रभावतस्तस्य व्याप्तमासीद्दिगंतरम् । देवाद्या अभवन्सर्वे तदाज्ञावशवर्तिनः ॥४३॥ स्वप्रतापेन राजर्षिर्ब्राह्मणान् प्राह गाधिजः । अहं ब्रह्मर्षिमुख्यो वै जातस्तु तपसो बलात् ॥४४॥ भयभीताश्च ते सर्वे तथेत्यूचुः प्रणम्य तम् । वसिष्ठो मुनिवर्यः स तं राजर्षिं जगाद ह ॥४५॥ विश्वामित्रः संक्षुभितो वसिष्ठहननाय च । नानायत्नांश्चकारापि न ममार महामुनिः ॥४६॥ ततोऽतिदुःखितो भूत्वा संस्थितः स्वाश्रमे मुनिः । विश्वामित्रो महाभागस्तपस्तेजोविराजितः ॥४७॥ तमाययौ महातेजा याज्ञवल्क्यः प्रतापवान् । ब्रह्मणोंऽगसमुत्पन्नः साक्षाद्योगीश्वरो महान् ॥४८॥ तं ननाम यथान्यायं पूजयामास भक्तितः । विश्वामित्रो महातेजा उवाच प्रकृतांजलिः ॥४९॥ अद्य मे सफलं जन्म तपःस्वाध्याय एव च । येन ते दर्शनं

जातं ब्रह्मभूतस्य मानद ॥५०॥ किमर्थमागतो ब्रह्मंस्तद्वदस्व महामुने । तवाज्ञां कर्तुमिच्छामि दासोऽहं शाधि मां प्रभो ॥५१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते याज्ञवल्क्यविश्वामित्रसमागमोनामैकोनपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । विश्वामित्रस्य भावेन संतुष्टो मुनिपुंगवः । तमुवाच महायोगी याज्ञवल्क्यो महामुनिः ॥१॥ याज्ञवल्क्य उवाच । दुःखितं त्वां विदित्वाहमागतो मुनिपुंगव । न कार्यमपरं किंचिज्जानीहि त्वं महामते ॥२॥ वद किं कारणं ब्रह्मन् दुःखस्य तव तापस । पश्चात्तन्नाशयिष्यामि युक्त्या ज्ञानोपदेशतः ॥३॥ विश्वामित्र उवाच । तपस्तप्तं मया घोरं ब्रह्मा मे न ददौ वरम् । वसिष्ठो मां च राजर्षिं जगाद जनसन्निधौ ॥४॥ केनोपायेन योगींद्र ब्राह्मणोऽहं भवामि च । सर्वमान्यो महाभागस्तं करिष्यामि यत्नतः ॥५॥ ततस्तं मुनिशार्दूलो याज्ञवल्क्य उवाच ह । न चिंतां कुरु राजर्षे ब्रह्मर्षिस्त्वं भविष्यसि ॥६॥ अभिमानं महाघोरं त्यज त्वं मे सुवाक्यतः । मत्सरं त्यज दुष्टं च ततः क्षेमं भविष्यति ॥७॥ कथां शृणु महारम्यां काशीविश्वेशसंश्रिताम् । येन त्वं निर्मलो भूत्वा ब्राह्मणोऽपि भविष्यसि ॥८॥ काशीविश्वेश्वरेणैव न त्यक्ता प्रलयेऽपि च । न वियोगः क्षणं तस्याः काश्याः शंभोः कदाचन ॥९॥ तेनाहंकारसंयुक्तौ जातौ काशीमहेश्वरौ । विघ्नः समभवत्तत्र दारुणः प्रवियोगकृत् ॥१०॥ मुद्गल उवाच । याज्ञवल्क्यवचः श्रुत्वा हर्षितः कौशिको मुनिः । उवाच तं महाभागं प्रेमयुक्तेन चेतसा ॥११॥ विश्वामित्र उवाच । कीदृशं विघ्नरूपं चाविमुक्तस्य शिवस्य यत् । समुत्पन्नं महाभाग तद्वद त्वं विशेषतः ॥१२॥ याज्ञवल्क्य उवाच । षष्टिवर्षाणि पर्जन्यो न ववर्ष महीतले । तेन नष्टं जगत्सर्वं भूमिस्थं सचराचरम् ॥१३॥ प्रजाक्षयं ततो दृष्ट्वा ब्रह्मा लोकपितामहः । आययौ राजशार्दूलं दिवोदासं तपःस्थितम् ॥१४॥ राज्यं त्यक्त्वा स राजर्षिस्तताप परमं तपः । मोक्षार्थं भक्तिभावेन सूर्यवंशसमुद्भवः ॥१५॥ तपसा योगभावेन बभौ सूर्य इवापरः । तं ब्रह्मा स्वयमेवेदं वचनं प्रजगाद ह ॥१६॥ ब्रह्मोवाच । दिवोदास महाभाग शृणु मे वचनं हितम् । काशीराज्यं गृहाण त्वं मया दत्तं महामते ॥१७॥ ब्रह्माणं स उवाचाथ न राज्यं परिपालये । मोक्षार्थी वासनाहीनो मोक्षं देहि प्रजापते ॥१८॥ तं पुनः प्रत्युवाचेदं ब्रह्मा लोकहिताय च । कुरु राज्यं महाभाग मया दत्तं महामते ॥१९॥ त्वयि राज्ये स्थिते वृष्टिर्भविष्यति

महाद्भुता । अन्यथा लोकनाशः स्यात्तस्मात् कुरु वचो महत् ॥२०॥ लोकसंरक्षणार्थाय दयायुक्तो महामतिः । राज्यं जग्राह काश्याश्च देववर्जितमुत्तमम् ॥२१॥ देवानामखिलं राज्यं सदा स्वर्गेषु वर्तते । मनुष्याणां पृथिव्यां वै पाताले नागरक्षसाम् ॥२२॥ अतो देवतया शंभुं पूजयिष्यामि मानद । सर्वैः स्वधर्मे स्थातव्यं मयि राज्यं प्रशासति ॥२३॥ तथेति तमुवाचाथ ब्रह्मा लोकपितामहः । काशीराज्यं ददौ तस्मै दिवोदासाय धीमते ॥२४॥ ततो ब्रह्मा ययौ काश्यां शंकरं प्रणिपत्य सः । उवाच तं विशेषज्ञो मंदरं गच्छ शंकर ॥२५॥ मरीचिना तपस्तेपे तस्मै देहि वरं शिव । नो चेन्मरिष्यति स वै तस्माद्गच्छ जगद्गुरो ॥२६॥ ब्रह्मणो गिरमाकर्ण्य तेन सार्धं ययौ शिवः । देवर्षिगणसंयुक्तो वरार्थं ब्राह्मणस्य च ॥२७॥ तं दृष्ट्वेति वरं ब्रूहि शिवो वचनमब्रवीत् । स उवाच शिवं तत्र मुक्तिं देहि सदाशिव ॥२८॥ इत्युक्त्वा तपसो दुःखाज्जहौ प्राणान् महामुनिः । प्राप्तः शिवस्य सारूप्यं कैलासं स गतो मुनिः ॥ २९ ॥ एतस्मिन्नंतरे शंभुं ब्रह्मोवाच कृतांजलिः । वस त्वं मंदरे शंभो त्यज काशीं महापुरीम् ॥ ३० ॥ अनावृष्टिभवं दुःखं तन्निवृत्त्यर्थमादरात् । राज्यं दत्तं मया देव दिवोदासाय शंकर ॥३१॥ तेनापि कथितं देवराज्यं पृथ्व्यां न चेद्भवेत् । तदा राज्यं करिष्यामि नान्यथाऽहं कदाचन ॥ ३२ ॥ मया लोकस्य रक्षार्थं दत्तं राज्यं च तस्य हि । क्षमस्व चापराधं मे महादेव नमोऽस्तु ते ॥३३॥ तथेति शिव ऊचे तं निःश्वस्य परमं प्रभुः । पार्वत्या गणसंयुक्त उवास स च मंदरे ॥३४॥ अविमुक्तं महाक्षेत्रं दैवेन त्याजितं मम । अधुना मुक्तता केन कर्मणा भविता मम ॥३५॥ न ब्रह्मणो वचो मिथ्या भविष्यति कदाचन । अधुना किं करिष्यामि काशीविरहदुःखितः ॥३६॥ अहं विश्वेश्वरश्चाऽस्मि मदधीनं न किंचन । विश्वनाथेति नामेदं व्यर्थरूपं न संशयः ॥३७॥ अखिलप्राणितुल्योऽहं कृतो येन महात्मना । शरणं विघ्नराजं तं गच्छामि न च संशयः ॥३८॥ ममापि विघ्नरूपं यत् समुत्पन्नं महाद्भुतम् । अहंकार-विहीनोऽहं कृतस्तेन महात्मना ॥३९॥ इत्येवं निश्चयं कृत्वा शिवस्तत्राचले तपः । ततापगणपं ध्यात्वा काशीप्राप्त्यर्थमादरात् ॥४०॥ काशी च दुःखसंयुक्ता श्रुत्वा शंभोर्विनिर्गतिम् । तपस्तताप विघ्नेशं ध्यात्वा निश्चलचेतसा ॥४१॥ अहंकारविनिर्मुक्ता काशी दुःखितमानसा । शिवप्राप्त्यर्थमतुलं तताप परमं तपः ॥४२॥ दिवोदासस्तु तद्राज्यमकरोद्धर्मतः स्वयम् । ततो वृष्टिः समुत्पन्ना सर्वेषां सुखदायिका ॥४३॥ सकलं वृष्टियोगेन जगत्स्थावरजंगमम् । मोदयुक्तं तदा जातं तस्मिन् राज्यं प्रशासति ॥४४॥ स्वस्वधर्मरताः सर्वे वर्णाश्रमविभागशः । पापलेशो न तत्रासीत्तस्मिन् राज्यं प्रशासति ॥४५॥

हृष्टपुष्टजनाः सर्वे वृक्षाः पुष्पफलान्विताः । घटदुग्धास्तदा गावस्तस्मिन् राज्यं प्रशासति ॥४६॥ स्वाहास्वधायुता देवाः पितरश्च मुदा युताः । यज्ञादयो बभूवुश्च तस्मिन् राज्यं प्रशासति ॥४७॥ एवं नानाविधैर्भोगैर्युताः सर्वे महामुने । दिवोदासः स्वयं राजा नित्ययात्रां चकार ह ॥४८॥ आदौ ढुंढिं पुपूजाऽसौ पश्चाद्विश्वेश्वरं मुने । जगदंबां च काशीं वै मणिकार्णिं ततः परम् ॥४९॥ भागीरथीं माधवं च जैगीषव्यगुहां ततः । कालभैरवमेवं च दंडपाणिं महाबलम् ॥५०॥ जनैः स मतिमान् राजा कारयामास सर्वदा । धर्महीनं जनं हंतुं दंडपाणिरिव स्थितः ॥५१॥ अशीतिवर्षसाहस्रं गतं तत्र महामुने । न किंचित्स्वल्पपापस्य प्रवेशोऽपि बभूव ह ॥५२॥ ततो देवा विचारं ते चक्रुः स्वर्गेषु विस्मिताः । पृथिव्यां देवराज्यं तु विनष्टं तेन कारितम् ॥५३॥ अतो वयं किमर्थं च स्थास्यामः पृथिवीतले । स्पर्धते नः स राजर्षिश्छलयामस्ततो वयम् ॥५४॥ तत इंद्रोऽग्निमाहूय जगाद क्रोधसंयुतः । दिवोदासस्य राज्ये ते स्थानं मास्तु बहिस्त्विति ॥५५॥ इंद्रस्य वचनं श्रुत्वा वह्निरंतर्दधे तदा । पृथिव्यां वह्निहीनास्ते जनाः सर्वे तमन्वयुः ॥५६॥ तान् दृष्ट्वा स दिवोदासो वह्निरूपेण संस्थितः । पृथिव्यां यत्र कुत्रापि तपोबलसमन्वितः ॥५७॥ एवं नानाविधैर्भावैर्देवाः सर्वे क्रमेण च । गतास्तत्र स्वयं राजा तेषां रूपधरो बभौ ॥५८॥ वाय्वादिरूपमास्थाय स राजा देवकृत्यवित् । पृथिव्यां ये जनाः सर्वे न तं जानंति कौशिक ॥५९॥ एवं बहौ गते काले देवाः सर्वे विसिस्मिरे । देवकृत्यं कृतं सर्वं राज्ञाप्याश्चर्यमुत्तमम् ॥६०॥ ततो देवगणाः सर्वे ब्रह्माणं शरणं ययुः । दिवोदासस्य मोहार्थं पृथ्वी त्यक्ता च निर्जरैः ॥६१॥ स तपोबलयुक्तस्तु देवानां कृत्यमादरात् । स्वयं देवस्वरूपैस्तैश्चकार परमाद्भुतम् ॥६२॥ वयं विहारहीनाश्च किं कुर्मो वद भो विभो । तेषां वचनमाकर्ण्य ब्रह्मा प्रोवाच तांस्तदा ॥६३॥ भवद्भिस्तत्र गंतव्यं प्रार्थनीयो नराधिपः । स दास्यति स्वकं स्थानं देवानां नात्र संशयः ॥६४॥ ततो देवा दिवोदासमाययुश्चेंद्रमुख्यकाः । तान् दृष्ट्वा सहसोत्थाय ननाम विनयान्वितः ॥६५॥ तमुत्थाप्य ततो देवास्तुष्टुवुस्तं नराधिपम् । सोऽपि देवान् प्रतुष्टाव स्वपदानि ददौ ततः ॥६६॥ स्वयं नरस्वरूपेण चैकदेहेन संस्थितः । अग्न्यादयो निजस्थाने देवाः सर्वे सुसंस्थिताः ॥६७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते दिवोदासमहिमवर्णनं नाम पंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ याज्ञवल्क्य उवाच । ततः शंभुः परां चिंतामापेदे मनसा मुने । देवा हतोद्यमा जातास्तपसा तस्य धीमतः ॥ १ ॥ स्वधर्मपर एवायं तपसा च समन्वितः । नोचालितुं भवेच्छक्यः किं भविष्यति वै ततः ॥ २ ॥ मया काशी कदा लभ्या दग्धोऽहं विरहाग्निना । मरिष्यामि न संदेहो विललाप महेश्वरः ॥ ३ ॥ अस्थिचर्मावशेषोऽपि शुशोच बहुधा शिवः । तं देवा मुनयः सर्वे सांत्वयामासुरादरात् ॥ ४ ॥ देवर्षय ऊचुः । मा कुरुष्व वृथा चिंतां त्वं समर्थो महेश्वर । तव प्रसादयोगेन गच्छामः काशिकां वयम् ॥ ५ ॥ नानासिद्धिभिरालोभ्य लोकांस्तत्र समंततः । तत्पापभागिनं भूपं दिवोदासं च कुर्महे ॥ ६ ॥ ततस्त्वया विशेषेण काशी ग्राह्या सदाशिव । एवमुक्त्वा ययुस्तत्र देवाः सर्वे प्रहर्षिताः ॥ ७ ॥ तत्राभवन् गताः काश्यां नानारूपधराः सुराः । जनान् संमोहयामासुः सिद्धिं कृत्वा विशेषतः ॥ ८ ॥ धर्मशीला जनाः सर्वे तेषां वाक्यं न चक्रिरे । एकवर्ष प्रयत्नं ते कृत्वा शांतिं प्रलेभिरे ॥ ९ ॥ ततः सदाशिवस्तत्र प्रेरयामास भैरवान् । तेपि यत्नैश्च विविधैर्न समर्था बभूविरे ॥ १० ॥ एवं क्रमेण आदित्या वसवश्चर्षयः पराः । योगिन्यश्च गणाः सर्वे हतोद्योगास्तथाऽभवन् ॥ ११ ॥ ततो ब्रह्माणमाबोध्य प्रेषयामास शंकरः । दशाश्वमेधाश्च कृतास्तेन शांतिं जगाम सः ॥ १२ ॥ ततस्तु शंकरस्तत्र ध्याननिष्ठो बभूव ह । चरणे विघ्नराजस्य सर्वाशापूरके परे ॥ १३ ॥ सविघ्नं मां गणाध्यक्ष निर्विघ्नं कुरु सर्वदा । दासोऽहं तेऽविमुक्तस्य संरक्ष विरहात्प्रभो ॥ १४ ॥ एवं निश्चितचित्तस्तु वर्षमेकं गजाननम् । ध्यानेन तोषयामास शंकरः कार्यसिद्धये ॥ १५ ॥ दृष्ट्वाऽहंकारनिर्मुक्तमत्यंतं शंकरं प्रभुः । दर्शयामास रूपं स्वं योगिध्येयमनुत्तमम् ॥ १६ ॥ सिंहारूढं चतुर्बाहुं पाशांकुशधरं प्रभुम् । वरदाभयहस्तं च सिद्धिबुद्धिसमन्वितम् ॥ १७ ॥ रक्तवर्णं सुशोभाढ्यं गजवक्त्रं महोदरम् । विविधैः शेषनाभिं तं भूषणैः सुविराजितम् ॥ १८ ॥ चिंतामणिधरं पूर्णं तेजोराशिं महाप्रभम् । दृष्ट्वा देवं मुदा युक्तः शंकरः प्रणनाम ह ॥ १९ ॥ ततस्तं पूजयामास तुष्टाव स यथामति । देवदेवं गणाध्यक्षं वक्रतुंडं विधानतः ॥ २० ॥ शिव उवाच । नमस्ते वक्रतुंडाय सर्वसिद्धिप्रदाय च । निराकाराय देवाय साकाराय नमो नमः ॥ २१ ॥ नमः सर्वप्रबोधाय नमः सर्वप्रियंकर । गणानां पतये तुभ्यं गणेशाय नमो नमः ॥ २२ ॥ ब्रह्मणे सृष्टिकर्त्रे ते पालकाय च विष्णवे । संहर्त्रे ते हरायैव गुणेशाय नमो नमः ॥ २३ ॥ ब्रह्माकाराय वै तुभ्यं ब्रह्मभूताय ते नमः । नमः प्रपंचरूपाय प्रपंचानां प्रचालक ॥ २४ ॥ अनंतगुणधाराय ह्यनंतविभवाय ते । अनंतोदररूपाय हेरंबाय नमो

नमः ॥२५॥ कारणानां परायैव कारणाय नमो नमः । अकारणाय वै तुभ्यं सिंहवाहाय ते नमः ॥ २६ ॥ अहं जीवसमानश्च संजातो नात्र संशयः । अविमुक्तं विमुक्तं मे जातं देव दयानिधे ॥२७॥ अतस्त्वां शरणं यातो निर्विघ्नं कुरु मां प्रभो । देहि काशीं गणाध्यक्ष अविमुक्ततया च मे ॥२८॥ त्वया पुरा वरो दत्तः स्मरणेन त्वदग्रतः । स्थास्यामि पुत्रभावेन तं पालय गजानन ॥२९॥ इत्युक्त्वा पादयोस्तस्य प्रणनाम महेश्वरः । तमुत्थाप्य गणाध्यक्ष उवाच प्रहसन्निव ॥३०॥ वक्रतुंड उवाच । त्वया कृतमिदं स्तोत्रं सर्वसिद्धिकरं भवेत् । पठते शृण्वते चैव भुक्तिमुक्तिप्रदं शिव ॥३१॥ अन्यद्यत्प्रार्थितं सर्वं करिष्यामि सदाशिव । अविमुक्तं प्रदास्यामि सार्थकं ते च सांप्रतम् ॥३२॥ इत्युक्त्वा निर्ममे देहाद्ब्राह्मणं सर्वसुंदरम् । सर्वज्ञं च गुणेशस्य तेजोयुक्तं प्रभाविणम् ॥३३॥ आज्ञापयच्च तं देवो गच्छ त्वं शिवसिद्धये । काश्यां तु बुद्धिसंमोहं जनानां कुरु सत्वरम् ॥३४॥ मोहयित्वा दिवोदासं काशीराज्यं शिवाय च । ममाज्ञया देह्यद्य त्वं सर्वपूज्यो भविष्यसि ॥३५॥ ढुंढिं ज्योतिर्विदं त्वां तु वदिष्यंति जना द्विजाः । त्वदीयवंशगाः सर्वे भविष्यंति न संशयः ॥३६॥ इति श्रुत्वा द्विजो ढुंढिं प्रणनाम मुदा युतः । ययौ प्रदक्षिणीकृत्य काशीं स गणपं स्मरन् ॥३७॥ ततो विष्णुं समाहूय तं जगाद गजाननः । बौद्धरूपेण विष्णो त्वं काशीं गच्छ मदाज्ञया ॥३८॥ द्विजेन ढुंढिना सर्वं मोहितं नगरं भवेत् । कुरु त्वमधुना भ्रष्टं मम वाक्याज्जनार्दन ॥३९॥ प्रणम्य तं तदा विष्णुर्गणेशं बौद्धरूपधृक् । ययौ काशीं महाभागो वक्रतुंडं हृदि स्मरन् ॥४०॥ तौ यथा गणराजेन कथितं चक्रतुस्तथा । मोहयुक्तं पुनर्भ्रष्टं नगरं सर्वमंजसा ॥४१॥ अन्यच्छृणु चरित्रं त्वं विश्वामित्र तपोधन । काशीध्यानस्थुना तत्र संस्थिना गणपस्य तु ॥४२॥ सहस्रं तत्र वर्षाणां गतमेकं महामुने । तस्यास्तपःप्रभावेण संतुष्टोऽभूद्गजाननः ॥४३॥ वरं दातुं समायातः काश्यै मुनिश्वरः प्रभुः । सिंहारूढः प्रसन्नात्मा नानाभूषणभूषितः ॥४४॥ तं दृष्ट्वा सहसोत्थाय काशी परमपावनी । पादयोः प्रणनामाथ कंपिता विह्वला भृशम् ॥४५॥ पुनरुत्थाय तं देवं पूजयामास भक्तितः । तुष्टाव सुस्थिरा भूत्वा निबद्धकरसंपुटा ॥४६॥ काश्युवाच । नमस्ते गणनाथाय नमस्तेऽनंतरूपिणे । नमस्ते सर्वदात्रे वै मायाधाराय ते नमः ॥४७॥ गजवक्त्रधरायैव शूर्पकर्णाय ते नमः । सर्वभूषाय वै तुभ्यं वक्रतुंड नमोऽस्तु ते ॥४८॥ निराकाराय नित्याय निर्गुणाय गुणात्मने । वेदवेद्याय सततं ब्रह्मणे ते नमो नमः ॥४९॥ ब्रह्मणां ब्रह्मदात्रे च सिंहारूढाय ते नमः । सिद्धिबुद्धिपते तुभ्यं नमः सर्वाभयंकर ॥५०॥ अनाथाय च नाथाय सर्वेषां पालकाय च । भक्तेभ्यः

सर्वदात्रे ते विघ्नहर्त्रे नमोऽस्तु ते ॥५१॥ विघ्नकर्त्रे ह्यभक्तानां भुक्तिमुक्तिप्रदाय च । योगिनां हृदि संस्थाय योगगम्याय ते नमः ॥५२॥ मनोवाणीविहीनाय शांतिरूपाय ते नमः । शांतिभ्यः शांतिदात्रे च गणेशाय नमो नमः ॥५३॥ किं स्तौमि त्वां गणाध्यक्ष यत्र वेदाः सशास्त्रकाः । शांतिं प्राप्ता महाभागा अतस्त्वां प्रणमामि वै ॥५४॥ रक्ष रक्ष च दासीं ते विरहेण प्रपीडिताम् । अविमुक्ता शिवेनैवं नाम व्यर्थं बभूव मे ॥५५॥ शिवहीना कृता देव दैवं तु परमाद्भुतम् । अतस्ते शरणं प्राप्ता शंकरं दर्शयस्व माम् ॥५६॥ इत्युक्त्वा पतिता तस्य पादयुग्मे महामुने । तामुत्थाप्य गणाधीशो जगौ मधुरया गिरा ॥५७॥ गणेश उवाच । मा शोकं कुरु कल्याणि शंकरं दर्शयामि ते । अविमुक्तमिदं नाम सार्थकं प्रभविष्यति ॥५८॥ त्वया कृतमिदं स्तोत्रं वियोगहरणं भवेत् । यः पठिष्यति भक्त्या च श्रोष्यते तस्य सुंदरि ॥५९॥ यं यमिच्छति भावेन तं तं दास्यामि सर्वगः । ब्रह्मभूयकरं स्तोत्रं भविष्यति न संशयः ॥६०॥ इत्युक्त्वा गणनाथश्च तत्रैवांतरधीयत । तमेव सापि ध्यायंती स्थिता कालप्रतीक्षिका ॥६१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते काशीशिववरप्रदानं नामैकपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ याज्ञवल्क्य उवाच । एतस्मिन्नंतरे तत्र ययौ ज्योतिर्विदुत्तमः । ढुंढिनामा द्विजो यस्तु पुरा प्रोक्तो मयाऽनघ ॥ १ ॥ सर्वं तन्नगरं तेन मोहितं तत्क्षणान् मुने । पश्चात्समागतो बुद्धो विष्णुर्भ्रष्टं तथाऽकरोत् ॥ २ ॥ ढुंढिना स दिवोदासो बोधितः स च त्यक्तवान् । राज्यं बौद्धेन संतस्थौ प्रतीक्षन् शिवदर्शनम् ॥ ३ ॥ ताभ्यामाकारितः शंभुः प्रययौ गणपं पुरः । कृत्वा संपूज्य तं काश्यामादौ चक्रे हि वासिनम् ॥ ४ ॥ स्वयं देवगणैः पश्चादृषिभिश्च विवेश ह । ननाम चरणे काशी विघ्नपस्य शिवस्य च ॥ ५ ॥ यथास्थानं स्थिताः सर्वे देवा ऋषिगणाः सुखम् । दिवोदासाय मोक्षं स शंकरः प्रददौ ततः ॥ ६ ॥ ततः कदाचिद्देवेशो जगाद गिरिशं वचः । तुभ्यं दत्ता मया काशी कृतं सर्वं यथायथम् ॥ ७ ॥ अधुनाऽहं महादेव यास्ये स्वं धाम शोभनम् । यदा मे स्मरणं कुर्यास्तदा द्रक्ष्यसि मां शिव ॥ ८ ॥ इत्युक्त्वा ढुंढिविप्रेण सहितोऽसौ गजाननः । अंतर्धानं ययौ तत्र देवानां पश्यतां मुने ॥ ९ ॥ ततः स्वयं विश्वनाथस्तस्य मूर्तिं विधाय सः ।

स्थापयामास यत्नेन देवैश्च ब्राह्मणैः सह ॥ १० ॥ विधिवत्पूजयामास चोपचारैर्मनोरमैः । सर्वैः कृत्वा नमस्कारं प्रादक्षिण्यं चकार सः ॥ ११ ॥ सर्वान् जगाद विश्वेशो हितं शृणुत मे वचः । आदौ ढुंढिं समभ्यर्च्य ये मां तोषयंति तत्त्वतः ॥ १२ ॥ तेभ्यो भुक्तिं तथा मुक्तिं दास्यामि त्वन्यथा न च । काशीवासफलस्यापि दाताऽयं वक्रतुंडकः ॥ १३ ॥ वेदादीनां रहस्यं यदन्विष्टं तु मया बहु । तन्मूलोऽयं हृदि प्राप्तः साक्षाद्ब्रह्मपतिः प्रभुः ॥ १४ ॥ अतोऽयं ढुंढिराजेति नाम्ना ख्यातो मया कृतः । धर्मार्थकाममोक्षाणां दाता क्षेत्रे न संशयः ॥ १५ ॥ एवमुक्त्वा महादेवो नित्यं पूजापरायणः । ढुंढिराजस्य सेवायां सावधानो बभूव ह ॥ १६ ॥ तथा त्वमपि देवेशं विघ्नराजं भज प्रभो । त्यक्त्वाहंकारभावं तु ब्राह्मणः प्रभविष्यसि ॥ १७ ॥ मुद्गल उवाच । याज्ञवल्क्यवचः श्रुत्वा विश्वामित्रो महातपाः । जगाद तं महाभागं विनयेन समन्वितः ॥ १८ ॥ विश्वामित्र उवाच । याज्ञवल्क्य महाभाग त्वयाऽहं बोधितः खलु । अधुना वद मे ज्ञानं सर्वज्ञोऽसि महामुने ॥ १९ ॥ अहंकारो मया त्याज्यः केन मार्गेण तद्वद । कीदृशो मे शरीरेऽसौ वद तिष्ठति सांप्रतम् ॥ २० ॥ गणेशानमहं केन भजेयं विधिना वद । स्वरूपं च कथं तस्य योगींद्रोऽसि यतः स्वयम् ॥ २१ ॥ याज्ञवल्क्य उवाच । शृणु त्वं कौशिक ब्रह्मन्नहंकारं वदामि ते । तपसा ब्राह्मणत्वं वै प्राप्स्यामि न हि संशयः ॥ २२ ॥ एतमेव विजानीह्यहंकारं तु महामते । तस्य त्यागे विधिं वक्ष्ये तं शृणुष्व यथायथम् ॥ २३ ॥ प्राप्तये ब्राह्मणत्वस्य तपेयं तप उत्तमम् । यदा दास्यति देवोऽसौ तदा ब्राह्मणता भवेत् ॥ २४ ॥ यदा न दत्ता देवेन राजर्षित्वं तदा खलु । अस्तु मे सततं तच्च कोऽहं मे कीदृशं तपः ॥ २५ ॥ अहं सदा पराधीनो देहधारी न संशयः । करोमि यत्नमत्यंतं दैवं चेत्प्रभविष्यति ॥ २६ ॥ अनेन विधिना विप्र तपस्व त्वं महामुने । तदा प्रभविता सर्वं गताहंकारभावतः ॥ २७ ॥ अन्यत्त्वं शृणु मे वाक्यं मत्सरं त्यज कौशिक । शरणं गणराजं तं याहि तेन सुखं भवेत् ॥ २८ ॥ न मत्समं तपः कस्य स्पर्धसे तेन वै द्विजान् । मत्सरेण समाविष्टः कुतस्त्वं ब्राह्मणो भवः ॥ २९ ॥ त्वया मत्सरभावेन वसिष्ठस्य महात्मनः । पुत्राणां च शतं पूर्णं नाशितं रक्षसा यथा ॥ ३० ॥ अपरा सृष्टिरारब्धा त्रिशंकार्थं पुरा त्वया । वसिष्ठहनने यत्नं नानारूपं करोषि वै ॥ ३१ ॥ तं मत्सरं त्यज त्वं वै विधिं च शृणु तत्त्वतः । नीचोऽहं सर्वविप्रेभ्यस्तपस्विभ्यो न संशयः ॥ ३२ ॥ मया किंवा तपः कार्यमेभ्यश्चाधिकमादरात् । एषां तपःप्रभावोऽपि मनसा गम्यते न च ॥ ३३ ॥ एवं ज्ञात्वा तपस्व त्वं ब्राह्मणः प्रभविष्यसि । अन्यथा युगसाहस्रं तपस्तप्त्वा

मरिष्यासि ॥३४॥ सर्वेभ्यो नमनं विप्र हृदि भावसमन्वितम् । कर्तव्यं च त्वया नित्यं राजर्षिवन्महामते ॥३५॥ एवमुक्त्वा महायोगी वक्रतुंडप्रभावजाम् । कथां संश्रावयामास पूर्वजातां महायशाः ॥३६॥ कथां श्रुत्वा महाभागो विश्वामित्रः सुविस्मितः । उवाच तं नमस्कृत्य याज्ञवल्क्यं तपोधनम् ॥३७॥ विश्वामित्र उवाच । वक्रतुंडस्य योगींद्र चरित्रं संश्रुतं मया । अधुना वद मे ब्रह्मन् तस्यानुभवरूपकम् ॥३८॥ याज्ञवल्क्य उवाच । श्रृणु यत्नेन माहात्म्यं पुरावृत्तं कथानकम् । कथयामि च ते प्रीत्या मदीयं ज्ञानदायकम् ॥३९॥ एकदाऽहं गतो ब्रह्मन् वैकुंठं स्वर्गमुत्तमम् । तत्र नारायणं नत्वाऽपृच्छं तं जगदीश्वरम् ॥४०॥ किं सारं सर्वभूतेषु कस्याधारेण संस्थितम् । मह्यं वद महाभाग साक्षात्त्वं जगदीश्वरः ॥४१॥ इदं सर्वं त्वदाधारं भासते हृदि सर्वदा । तथापि प्रष्टुमिच्छामि श्रवणार्थं यथायथम् ॥४२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते याज्ञवल्क्य - नारायणसंप्रश्नवर्णनं नाम द्विपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नारायण उवाच । गणेशाधारमेतत्त्वं जानीहि ब्राह्मणोत्तम । हृदि बुद्धिप्रदातृत्वाद्बहिः सिद्धिप्रदानतः ॥१॥ अतोऽस्माभिः सदा देव आदौ पूज्यो महामुने । आदौ स एव मध्येऽपि तिष्ठत्यंते न संशयः ॥२॥ गुणरूपा वयं सर्वे ब्रह्माकारो गणेश्वरः । सिद्धिबुद्धिपतिः सो हि सर्वपूज्यश्च भो मुने ॥३॥ स्वानंदो यस्य लोको भूद्भावाभावविवर्जितः । अगम्यो मुनिदेवानां द्वंद्वहीनः परात्परः ॥४॥ एवं गणपतिं ज्ञात्वा मुच्यते सर्वबंधनात् । तदाधारमिदं सर्वं जगद्ब्रह्म महामते ॥५॥ सर्वैरप्येकदा तत्त्वैर्मत्सरेण समन्वितैः । वादः कृतो महाभाग अहं श्रेष्ठ इति ध्रुवम् ॥६॥ मदाधारमिदं सर्वं पालयामि सृजाम्यहम् । हरामि मायया तस्मात् स्वेच्छारूपोऽहमेव च ॥७॥ एवं परस्परं सर्वे तत्त्वात्मानो महाबलाः । विवादं चक्रिरे तत्र सामर्थ्येन विमोहिताः ॥८॥ ततस्तत्र गुणाधीशो ब्राह्मणस्य च वेषभृत् । आययौ वादशांत्यर्थं ज्ञानदानार्थमादरात् ॥९॥ तं दृष्ट्वा विस्मिता देवाः कोऽयमत्र समागतः । आत्माकारा वयं सर्वे तत्रास्य च गतिः कथम् ॥१०॥ ततस्तं सर्वतत्त्वानि पप्रच्छुः को भवानिति । कथं मार्गस्त्वया प्राप्तो ब्रह्माकारेषु वर्त्मसु ॥११॥ ततस्तान् स द्विजो हृष्टो जगौ वै योगमायया । मया मार्गः कृतो ह्यत्र ब्राह्मणेन सुयोगिना ॥१२॥ किमर्थं वै यूयमपि विवादं कुरुथ स्वयम् । तन्मे वदत तत्त्वानि करिष्यामि

हितं महत् ॥१३॥ ततो हृष्टानि तत्त्वानि तमूचुः श्रेष्ठभावतः । कस्तिष्ठति वद प्राज्ञ तत्त्वेष्वस्मत्सु वै प्रभो ॥१४॥ तेषां वचनमाकर्ण्य तानुवाच द्विजोत्तमः । तत्त्वाधारमिदं सर्वं विद्यते नात्र संशयः ॥१५॥ विश्वं त्यक्त्वा यूयमपि पश्यतो मम तिष्ठत । विश्वं विदीर्यते सर्वं येन त्यक्तं स वै प्रभुः ॥१६॥ इति श्रुत्वा वचः सर्वैस्तथेति प्रतिपाद्य तम् । क्रमेण त्यक्तुमारेभे आत्माकारा महाबलाः ॥१७॥ ब्रह्माकारा च या पृथ्वी विश्वं त्यक्त्वा स्थिताऽभवत् तथेदमखिलं विश्वं न विनष्टं तु भावतः ॥१८॥ ततो जलेन तत्त्यक्तं तथा वै तादृशं स्थितम् । ततस्तु तेजसा त्यक्तं न विनष्टं तथापि च ॥१९॥ ततो वायुश्च तत्त्यक्त्वा स्थितो दूरं महामुने । तथापि सकलं विश्वं पूर्ववत् संस्थितं बभौ ॥२०॥ आकाशेन च संत्यक्तं तथा वै तादृशं बभौ । तन्मात्राभिस्ततस्त्यक्तं तथा वै पूर्ववद्बभौ ॥२१॥ तन्मात्राभिः सहैतानि भूतानि च महामुने । पंचापि दूरतः स्थित्वा शुशुचुर्विप्रमाणि च ॥२२॥ ततो ज्ञानेंद्रियैस्त्यक्तं पंचभिस्तत्तथा बभौ । ततः कर्ममयैस्त्यक्तं तथापि तादृशं बभौ ॥२३॥ तत इंद्रात्मकं ब्रह्म त्यक्त्वा दूरं स्थितं मुने । तथापि विश्वमेवेदं पूर्ववत्संस्थितं किल ॥२४॥ एवं देवगणाः सर्वे इंद्रियाणां प्रकाशकाः । आत्माकाराः स्थिताः दूरं त्यक्त्वा विश्वं महामुने ॥२५॥ तथापि सकलं विश्वं बभौ तेऽपि सुविह्वलाः । निस्तेजसोऽभवंस्तत्र स्थितास्तत्त्वसमन्विताः ॥२६॥ ततोऽन्नब्रह्मणा त्यक्तं विश्वं तदपि संबभौ । प्राणात्मकेन संत्यक्तं तथा वै तादृशं बभौ ॥२७॥ ततो मनोमयेनैव ब्रह्मणा त्यक्तमादरात् । तथापि संबभौ विश्वं पूरितं केनचिन्मुने ॥२८॥ ततो विज्ञानरूपेण त्यक्तं तदपि तद्बभौ । तत आनंदरूपेण त्यक्तं विश्वं बभौ तदा ॥२९॥ ततो नादात्मकेनैव ब्रह्मणा त्यक्तमादरात् । ततो बिंदुमयेनैव त्यक्तं विश्वं बभौ मुने ॥३०॥ सोऽहंब्रह्मात्मकेनापि त्यक्तं विश्वं बभौ मुने । ततो बोधात्मना त्यक्तं तथा विश्वं च संबभौ ॥३१॥ ततो विदेहरूपेण त्यक्तं तदपि संबभौ । ततोऽप्यसत्स्वरूपेण त्यक्तं तदपि संबभौ ॥३२॥ ततोऽपि सत्स्वरूपेण त्यक्तं विश्वं बभौ मुने । ततः समस्ववेद्येन त्यक्तं विश्वं समाबभौ ॥३३॥ ततो नेतिस्ववेद्येन त्यक्तं वै विश्वमाबभौ । ततः स्वानंदरूपेण त्यक्तं विश्वं लयं ययौ ॥३४॥ ततस्ते विस्मिताः सर्वे स्वानंदं तुष्टुवुर्मुने । प्रहृष्टमनसो भूत्वा प्रार्थयामासुरादरात ॥३५॥ सकलं यत्त्वदाधारमस्माकं त्वं विशेषतः । नायकः सर्वतत्त्वानामतो भव विनायकः ॥३६॥ विनायक नमस्तुभ्यं पुनर्विश्वं सृज प्रभो । यथा पूर्वं स्थितं स्वामिंस्तथा कुरु जगत्पते ॥३७॥ एवं तैः प्रार्थितो देवो विशेषेण विनायकः । निर्ममे सकलं विश्वं यथापूर्वं मुनीश्वर ॥३८॥ ततस्ते ब्रह्मरूपत्वात्तद्विश्वं विविशुः पुनः । यथा

स्वस्थानमात्मानमाश्रित्य मुमुदुस्ततः ॥३९॥ जगदीश्वरनामानः सर्वेशास्ते प्रकीर्तिताः । अनेन विधिना ब्रह्मन् ज्ञातव्यं तद्विशेषतः ॥४०॥ स विनायक इत्युक्तो द्विविधो याज्ञवल्क्यक । संयोगेन निजानंदो निरानंदो ह्ययोगतः ॥४१॥ द्विविधे नाशभूते च योगरूपोऽयमुच्यते । विनायको महातेजा ब्रह्मणां नायकः स्मृतः ॥४२॥ तं विदित्वा ततः शांतिं वयं प्राप्ता महामुने । अतः शांत्यर्थमत्यंतं तमाराधय भो द्विज ॥४३॥ माया भ्रांतिकरी जंतोर्वक्रा संकथिता मुने । तुंडेन हंति तां भक्त्या तेनाऽयं वक्रतुंडकः ॥४४॥ वक्रतुंडं च सर्वेशं शरणं याहि भो मुने । तदा योगींद्रसेव्यस्त्वं भविष्यसि न संशयः ॥४५॥ मनोवाणीमयं सर्वं गकाराक्षरमेव च । मनोवाणीविहीनं च णकारं विद्धि मानद ॥४६॥ तयोः स्वामी गणेशोऽयं योगरूपः प्रकीर्तितः । तं प्राप्य ब्रह्मभूताश्च भवंति खलु जंतवः ॥४७॥ इदं वेदांतसंभूतं रहस्यं कथितं मुने । गोपनीयं प्रयत्नेन तेन सिद्धिमवाप्स्यसि ॥४८॥ इत्युक्त्वा विररामाथ तदा नारायणः स्वयम् । गणेशाय नमस्तुभ्यमित्युवाच पुनः पुनः ॥४९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खंडे वक्रतुंडचरिते नारायण - याज्ञवल्क्यसंवादो नाम त्रिपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ याज्ञवल्क्य उवाच । ततोऽहं परमप्रीतस्तं प्रणम्य जनार्दनम् । गतस्तपोवनं तात योगाभ्यासं समारभै ॥१॥ क्रमेण पंचधा वृत्तिं जित्वा चित्तस्य साधनैः । गणपं शांतियोगेन प्राप्तोऽहं तदनुग्रहात् ॥२॥ अतस्त्वं शरणं याहि वक्रतुंडं विशेषतः । तेन ब्राह्मणसंबंधो भविष्यसि न संशयः ॥३॥ गायत्रीजपसंभूतं श्रेयो देहि महामुने । गजाननाय तेन त्वं विघ्नहीनो भविष्यसि ॥४॥ विश्वस्मिन् मित्रभावं त्वं प्रकुरुष्व सदातनम् । विश्वामित्रश्च ते नाम तदा सार्थत्वमेष्यति ॥५॥ मुद्गल उवाच । इत्युक्त्वा याज्ञवल्क्यः स ययौ तेन प्रपूजितः । गणेशाय नमश्चेति नाममंत्रं सदा जपन् ॥६॥ तदा प्रभृति गायत्रीं विश्वामित्रः स धर्मवित् । त्यक्त्वाऽहंकारमत्यंतं मत्सरं च तथाऽजपत् ॥७॥ गणेशार्पणभावेन गायत्रीं च जजाप ह । तपस्तताप विप्रोऽसौ ध्यात्वा हृदि गजाननम् ॥८॥ गायत्री वेदमातेयं पिता प्रणव उच्यते । स एव गणनाथोऽयमोंकाराकृतिमस्तकः ॥९॥ सगुणो गणराजोऽयमोंकार इति

कथ्यते । तस्मै समर्प्य योगी स गायत्रीं योगमाप्नुवान् ॥१०॥ ततः स्वल्पेन कालेन ब्रह्मा लोकपितामहः । विश्वामित्रं ययौ दक्ष ब्राह्मणत्वं ददौ परम् ॥११॥ वसिष्ठमुनिना तत्र ब्राह्मणैः सह पूजितः । विश्वामित्रो महातेजा ब्राह्मणोऽयं प्रकीर्तितः ॥१२॥ सप्तर्षीणां महातेजा मध्ये प्रोक्तो महर्षिभिः । तथा गणेशभक्तेषु मुख्योऽभूत्स प्रतापवान् ॥१३॥ नित्यं पूजाप्रकारेण पूजयामास तं मुनिः । तुष्टाव सुस्थिरो भूत्वा यथामति गजाननम् ॥१४॥ विश्वामित्र उवाच । नमस्ते गणनाथाय विघ्नेशाय नमो नमः । निर्गुणाय गुणानां च पते वै ते नमो नमः ॥१५॥ नमः सर्वविदां श्रेष्ठ नमः सर्वप्रियंकर । गजाकाराय देवाय गणेशाय नमो नमः ॥१६॥ गजवक्त्र नमस्तुभ्यं ब्रह्मणां च पते नमः । अनादये च सततमादिपूज्याय ते नमः ॥१७॥ सर्वसिद्धिप्रदात्रे ते नानामायाधराय च । मायिभ्यो मोहदात्रे वै तद्धीनाय नमो नमः ॥१८॥ बुद्धेः पते नमस्तुभ्यं बुद्धिपंचकधारिणे । मनोवाणीमयायैव तद्धीनाय नमो नमः ॥१९॥ सिंहारूढाय देवाय देवानां च पते नमः । देवदेवेशसेव्यायानादिसिद्धाय ते नमः ॥२०॥ नमश्चतुर्भुजायैव मूषकध्वजधारिणे । नमो मूषकवाहाय हेरंबाय नमो नमः ॥२१॥ लंबोदर नमस्तुभ्यं शूर्पकर्णाय ते नमः । योगिनां कुलदेवाय योगिनां च पते नमः ॥२२॥ एवं तस्मिन् संस्तुवति प्रादुर्भूतो गजाननः । अनंतादित्यसंकाशः सिंहारूढो महोदरः ॥२३॥ तं दृष्ट्वा निपपातोर्व्यां साश्रुनेत्रो महामुनिः । पुलकांकितसर्वांगो भक्तिभावेन संप्लुतः ॥२४॥ तं दृष्ट्वा गणराजस्तु जगाद मुनिसत्तमम् । त्वया कृतमिदं स्तोत्रं मम प्रीतिकरं भवेत् ॥२५॥ यः पठेच्छृणुयाद्योऽपि स मे मान्यो भविष्यति । भुक्तिं मुक्तिं च दास्यामीप्सितं तस्मै न संशयः ॥ २६ ॥ त्वं तु मत्तो वरान् ब्रूहि सर्वान् दास्यामि दुर्लभान् । भक्तिभावेन संतुष्टस्तव योगीश्वराधुना ॥ २७ ॥ मुद्गल उवाच । गणेशवचनं श्रुत्वा सावधानोऽभवन्मुनिः । तं प्रणम्य महाभक्त्या जगौ वै हर्षसंयुतः ॥ २८ ॥ विश्वामित्र उवाच । धन्यो वंशो मदीयोऽद्य धन्यं जन्म तपो यशः । धन्यौ मे जनकौ देव त्वदंघ्रियुगदर्शनात् ॥ २९ ॥ किं वाञ्छामि गणाधीश सर्वं मायात्मकं प्रभो । अतो भक्तिं त्वदीयां मे देहि नाथ नमोऽस्तु ते ॥ ३० ॥ गाणपत्येषु मे देहि संवासं च गजानन । अमुमेव वरं ब्रह्मन्मायामोहविनाशनम् ॥ ३१ ॥ एवमस्त्विति तं प्रोच्य सोऽन्तर्धानं ययौ प्रभुः । विश्वामित्रस्तदारभ्य गाणपत्यो बभूव ह ॥ ३२ ॥ एवं नानावतारश्च वक्रतुंडस्य धीमतः । भक्तानां सिद्धिदातारो दानवानां विनाशकाः ॥ ३३ ॥ चरित्रमखिलं तेषां वक्तुं नैव प्रशक्यते । अतः संक्षेपतो विद्धि कथितं सुकथानकम् ॥ ३४ ॥ एतद्वै वक्रतुंडस्य चरितं पापनाशनम् । भुक्तिमुक्तिप्रदं पूर्णं



खण्ड १ चित्र ३ — नववारं नव खण्डा ब्राह्मणरूपेण ढुंढिना दत्ताः।

कथितं ते प्रजापते ॥ ३५ ॥ यः शृणोति नरो भक्त्या संश्रावयति यः पुमान् । पठेद्यः कृतकृत्यः स भविता नात्र संशयः ॥ ३६ ॥ पुत्रपौत्रप्रदं चैव धनधान्यकरं परम् । विद्यायुष्यप्रदं दक्ष चरितं कथितं परम् ॥ ३७ ॥ सहस्रमाघमासान् यः प्रयागे स्नाति मानवः । वक्रतुंडचरित्रस्य श्रवणेन च तत्फलम् ॥ ३८ ॥ आजन्ममरणांतं यः काशीवासं करोति च । यथाविधि यथाशास्त्रं श्रवणादस्य तत्फलम् ॥३९॥ इष्टापूर्तादिकं यस्तु लक्षवारं करोति च । संपूर्णभावयुक्ताच्च श्रवणादस्य तत्फलम् ॥ ४० ॥ यज्ञानां चैव सांगानां फलं प्राप्नोति मानवः । अस्य श्रवणमात्रेण संपूर्णं तत्प्रजापते ॥ ४१ ॥ बहुनाऽत्र किमुक्तेन ब्रह्मभूयपदप्रदम् । श्रवणेन न संदेहो जानीहि त्वं महामते ॥४२॥ सूत उवाच । एवमुक्त्वा महायोगी मुद्गलो विरराम ह । तदेतदखिलं तेऽद्य मयाऽपि कथितं मुने ॥४३॥ वक्रतुंडस्य माहात्म्यं संक्षेपेण च शौनक । कथितं ते मया विप्र भावं ज्ञात्वा विशेषतः ॥४४॥ श्रोतुमिच्छा पुनः किं ते वर्तते मुनिसत्तम । तवाऽहं सुप्रसादेन संतुष्टाऽस्मि न संशयः ॥ ४५ ॥ वक्रतुंडस्य माहात्म्यं गुह्यं वेदरहस्यकम् । गोपनीयं विशेषेण तेन सिद्धिं लभेन्नरः ॥४६॥ न श्रावयेत् दुर्जनेभ्यो गणेशद्विषते तथा । पापकर्मभ्य एवेदं विषयिभ्यः कदाचन ॥४७॥ यदि तेषां पुरश्चेदं श्रावितं च महामुने । तदा कोपः प्रभविता वक्रतुंडस्य निश्चितम् ॥४८॥ स चानादरमात्रेण दशपूर्वान् दशापरान् । नरकं च श्रावयतः प्रापयत्येष पूरुषान् ॥४९॥ अतः साधुजनेभ्यश्च गाणपत्येभ्य एव च । प्रयत्नेन श्रावयेद्यः स्वानां कोटिं समुद्धरेत् ॥५०॥ अतो यः पृच्छको वक्ता स्वस्वकोटिकुलोद्भवम् । पुरुषाणां समूहं स उद्धरेन्नात्र संशयः ॥५१॥ कलिकल्मषदाहघ्नं वक्रतुंडचरित्रकम् । कृतादिषु किमाश्चर्यं दहेत्पापगणानिति ॥५२॥ अहो कलौ विकुंठं च सर्वदेवचरित्रकम् । गाणपत्यं विशेषेण गतिदं च सदा भवेत् ॥५३॥ इदं मुने चरित्रं ते वक्रतुंडस्य भावतः । कथितं तेन विप्रर्षे कृतकृत्योऽस्मि सांप्रतम् ॥५४॥ धन्योऽहं भवतां संगाद्येन संस्मरणं कृतम् । गणेशस्य परेशस्य सफलो मे भवोऽभवत् ॥५५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे प्रथमे खण्डे वक्रतुंडचरिते वक्रतुंडचरित्रसमाप्तिर्नाम चतुःपंचाशत्तमोऽध्यायः ॥

॥ श्रीगजाननार्पणमस्तु ॥



॥ इति श्रीमुद्गलपुराणे प्रथमः खंडः समाप्तः ॥



खण्ड २ चित्र ५ — श्रीसिद्धिबुद्धिलक्षलाभसहितः एकदन्तः।

एकदन्तावतारे ब्रह्मा मुनिं मुद्गलमुपदिशति। जडभरतः शृणोति च।

॥ श्रीगणेशाय नमः ॥ शौनकाद्या ऊचुः । सूत त्वया महाभाग कृतकृत्या वयं कृताः । अतुलं वक्रतुंडस्य चरित्रं श्रावितं महत् ॥ १ ॥ धन्योऽसि त्वं महाबुद्धे सर्वज्ञोऽसि विशेषतः । परिपृच्छामहेऽतस्त्वां तद्वदस्व यथार्थतः ॥ २ ॥ श्रुत्वा श्रुत्वा न नस्तृप्तिर्जायतेऽमृतपानवत् । अतस्त्वमेकदंतस्य चरित्रं वद सांप्रतम् ॥ ३ ॥ कस्मिन् ब्रह्मणि संस्थोऽयमेकदंतो गजाननः । कति तस्यावताराश्च किं कर्म वद निश्चितम् ॥ ४ ॥ इति संप्रार्थितः सूतस्तानुवाच महामुनीन् । प्रश्रयावनतो भूत्वा भक्त्या तेषां प्रणोदितः ॥ ५ ॥ सूत उवाच । एवमेव च दक्षेण परिपृष्टो महामुनिः । मुद्गलस्तमथोवाच तच्छृणुध्वं मुनीश्वराः ॥ ६ ॥ दक्ष उवाच । पुरातनं महत्पुण्यमस्ति मे मुनिसत्तम । तेन ते दर्शनं जातं सर्वज्ञस्य न संशयः ॥ ७ ॥ वक्रतुंडचरित्रं च श्रुतं तव मुखांबुजात् । तेन विश्रांतता प्राप्ता हृदये मे विशेषतः ॥ ८ ॥ यज्ञविध्वंसशोकोऽपि गतो मत्तोऽधुना प्रभो । हर्षयुक्तः कृतो भक्त्या ढुंढेस्तु मुनिसत्तम ॥ ९ ॥ एकदंतचरित्रं मे कथयस्व विशेषतः । किंकर्मा कथमुत्पन्न एकदंतो गजाननः ॥ १० ॥ किं वाहनसमायुक्तः कीदृशं ब्रह्म तस्य वै । इत्यादि सर्वमाख्यानं वद मां करुणानिधे ॥ ११ ॥ सूत उवाच । एवं पृष्टो महातेजास्तमुवाच प्रजापतिम् । भक्तिं ज्ञात्वा विशेषेण गणेशे सर्वसिद्धिदे ॥१२॥ मुद्गल उवाच । शृणु दक्ष त्वया पृष्टं सर्वपापप्रणाशनम् । एकदंतस्य माहात्म्यं भुक्तिमुक्तिफलप्रदम् ॥ १३ ॥ धन्योऽसि त्वं महाभाग येन ते श्रवणे रतिः । गजाननस्य देवस्य चरित्रे सर्वभावतः ॥१४॥ अत्र ते वर्णयिष्येऽहमितिहासं पुरातनम् । गृत्समदस्य संवादं प्रह्लादस्य महात्मनः ॥१५॥ श्रुत्वा मुद्गलवाक्यं तद् दक्षो हृष्टमना मुने । उवाच तं महर्षिं स प्रश्रयावनतः स्वयम् ॥१६॥ दक्ष उवाच । ब्रह्मणः सृष्टिमारभ्य सृष्टिमार्गं वद प्रभो । यथा त्रिभुवनं सृष्टं ब्रह्मणा विश्वयोनिना ॥१७॥ तत्र प्रह्लादमाहात्म्यं स्वयमेवागमिष्यति । गृत्समदस्य संवादं यथावद्वर्णय प्रभो ॥१८॥ सूत उवाच । दक्षस्य वचनं श्रुत्वा मुद्गलस्तमुवाच ह । सृष्टिमार्गं पुरावृत्तं शापमोहितमादरात् ॥१९॥ मुद्गल उवाच । शृणु दक्ष महाबुद्धे ब्रह्मा लोकपितामहः । ससर्ज विविधं विश्वं तथा ते कथयाम्यहम् ॥२०॥ गणेशवरदानेन ब्रह्मा स्रष्टुं मनो दधे । योगमायां समास्थाय विवेशाऽसौ जनार्दनम् ॥२१॥ निलीय तस्मिन्नब्दांते नाभिपद्माद्विनिःसृतः । वरदानेन विष्णोश्च पुत्रत्वमगमद्विधिः ॥२२॥ तत्र पद्मे समासीनो ध्यायन् हेरंबमंतरे । ततस्तस्य विधेर्देहाज्जलं वै निःसृतं बहु ॥२३॥ पश्यतस्तस्य सर्वत्र जलं व्याप्तं दिशो दश । तस्मिन् जले निमग्नोऽभूद् बभ्राम भ्रांतमानसः ॥२४॥ सस्मार गणनाथं तं विभो

पाहि भयानकात् । मज्जंतं मां जलात् ढुंढे वक्रतुंड नमोऽस्तु ते ॥२५॥ स्मृतिमात्रेण तत्रासौ ददर्श वटमुत्तमम् । तत्र पत्रे गणेशानं सुप्तं दृष्ट्वा प्रहर्षितः ॥२६॥ त्रिनेत्रं च चतुर्बाहुं शुंडादंडविराजितम् । महोदरं शेषनाभिं भालचंद्रं किरीटिनम् ॥ २७ ॥ सर्वावयवसंपूर्णं नानाभूषणभूषितम् । वस्त्रैः संछादितं बालमंगुष्ठपरिमाणकम् ॥ २८ ॥ एतादृशं गणेशानं दृष्ट्वा विस्मितमानसः । महाजले वटो योऽयमवशिष्टः कथं जले ॥ २९ ॥ वटस्य सन्निधाने स ययौ ब्रह्मा प्रजापते । सिषेच गणनाथश्च जलं ब्रह्मणि शुंडया ॥ ३० ॥ तेन हृष्टः स्वयं ब्रह्मा तुष्टाव स गजाननम् । बद्धांजलिपुटो भूत्वा भक्तिनम्रात्मकंधरः ॥ ३१ ॥ ब्रह्मोवाच । नमस्ते गणनाथाय प्रलयांबुविहारिणे । वटपत्रशयायैव हेरंबाय नमो नमः ॥ ३२ ॥ चतुर्भुजधरायैव नाभिशेषाय ते नमः । गजवक्त्राय सर्वेश लंबोदर नमोस्तु ते ॥ ३३ ॥ एकदंताय वै तुभ्यं नानाशोभासमन्विन । अंगुष्ठपर्वमात्रं च स्वरूपं दधते नमः ॥ ३४ ॥ सिद्धिबुद्धियुतायैव भक्तसंरक्षकाय च । अनंतविभवायैव गणेशाय नमो नमः ॥ ३५ ॥ निर्गुणाय गुणाधार सगुणाय नमो नमः । एकानेकादिभेदैश्च लीलाकार नमोऽस्तु ते ॥ ३६ ॥ अनादिबालरूपाय सृष्टिस्थित्यंतकारिणे । मायाविन महामोहदात्रे तुभ्यं नमो नमः ॥ ३७ ॥ निवारय महाविघ्नं सृष्टिकर्तुर्गजानन । जलं प्राप्तं महाघोरं तत्राऽहं मज्जितो बलात् ॥ ३८ ॥ शरणं त्वां प्रपन्नोऽस्मि रक्ष मां भक्तवत्सल । तव देवेश दासोऽहं कृपां कुरु दयानिधे ॥ ३९ ॥ ब्रह्मा स्तुत्वा पुनश्चित्रं तस्य तुंडे ददर्श ह । विश्वं चराचरं पूर्णं संस्थितं सेश्वरं किल ॥ ४० ॥ ततो नानासमीरेण नीतो ब्रह्मा महोदरे । तत्र विश्वं ददर्शाऽसौ नानाश्चर्यमयं पुनः ॥ ४१ ॥ एवं नानांडसंयुक्तमुदरं वीक्ष्य च प्रभोः । रोमद्वारेण ब्रह्माऽसौ बहिर्यातो यथा पुरा ॥ ४२ ॥ ददर्श तं गणेशानं बालरूपं सुविस्मितः । तमुवाच ततो देवो ब्रह्माणं भक्तमुत्तमम् ॥ ४३ ॥ श्रीगणेश उवाच । त्वया कृतमिदं स्तोत्रं मम प्रीतिकरं भवेत् । सर्वार्थसाधकं चैव भुक्तिमुक्तिफलप्रदम् ॥ ४४ ॥ यः पठेच्छृणुयाद्वाऽपि स मे मान्यो भविष्यति । यं यं चिंतयेत भावं तं तं दास्यामि निश्चितम् ॥ ४५ ॥ नाभेः कमलतो विष्णोर्निःसृतो वरदाननः । तत्राऽऽदौ मे स्मृतिं पूजां विस्मृतस्त्वं पितामह ॥ ४६ ॥ तेन त्वं विघ्नसंयुक्तः पुनर्जातो न संशयः । अधुना मे स्मृतिं कृत्वा दृष्ट्वा मां विघ्नवर्जितः ॥ ४७ ॥ अतः परं विधे किंचित्त्वया कार्यं महामते । मत्स्मृतिं नमनं कृत्वा कुरु त्वं सिद्धिमेष्यसि ॥ ४८ ॥ यथा दृष्टं मदीयेऽस्य जगत्स्थावरजंगमम् । उदरे तादृशं विश्वं सृज त्वं मेऽधुनाज्ञया ॥४९॥ इत्युक्त्वांतर्दधे सद्यो गणेशो बालरूपधृक् ।

ब्रह्मा पद्मे समासीनो यथापूर्वं बभूव ह ॥५०॥ ततो गणेशमंत्रं च जजाप कमलासनः । पूजयित्वा यथान्यायं ध्यानसंस्थो बभूव ह ॥५१॥ तस्य हृद्देशमध्येऽसौ प्रकटोऽभूद्गजाननः । तं ननाम स्वयं ब्रह्मा पूजां चक्रे स मानसीम् ॥५२॥ दक्षिणावसरे तत्र सिद्धिर्बुद्धिरुभे परे । आगते हृदि मध्ये च ते ददौ विघ्नहारिणे ॥५३॥ यथाशास्त्रविधानेन तस्य पूजां प्रगृह्य सः । अंतर्धानं ययौ सद्यो गणेशः सर्वनायकः ॥५४॥ अंतर्हिते गणेशाने हृदिस्थे ब्रह्मरूपिणि । तं प्रणम्य स्वयं ब्रह्मा सृष्टिं कर्तुं मनो दधे ॥५५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते ब्रह्मसृष्टिप्रारंभो नाम प्रथमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । गणेशं मनसा ध्यात्वा सृष्टिं कर्तुं मनो दधे । आदौ तस्य विधेर्देहादविद्या सा विनिःसृता ॥ १ ॥ सा पंचधा ततो भिन्ना स्वयं जाता प्रजापते । तां दृष्ट्वा विस्मितो ब्रह्मा मनसा दुःखितोऽभवत् ॥ २ ॥ अविद्याभ्रांतिरूपाऽत्र ह्यनंतविभवात्मिका । रक्ता कृष्णा तथा श्वेता नानाश्चर्यमयी बभौ ॥ ३ ॥ त्रिविधानां प्रसूतिश्च जगत्रयविमोहिनी । तया विमोहितं विश्वं भ्रांतियुक्तं बभूव ह ॥ ४ ॥ तमो मोहो महामोहः शृणु दक्ष महाद्भुतम् । तामिस्रश्चांधतामिस्रः पंचधा जगति स्थिता ॥ ५ ॥ तमोऽज्ञानस्वरूपं यत्तेन संछादितं जगत् । देहस्वार्थसमायुक्तं बभूव भ्रांतमानसम् ॥ ६ ॥ मोहः स कामनायुक्तं कर्म नाना विनिर्ममे । तेन विश्वं शरीरस्य कुरुते कर्मभोगदम् ॥ ७ ॥ महामोहेन संसृष्टं विकर्म विविधं प्रभो । तेन देहस्य भोगार्थं पापानि कुरुते नरः ॥ ८ ॥ तामिस्रेण फलं सृष्टं रोगदारिद्र्य-कादिकम् । तेनाऽऽधिव्याधिसंयुक्तमभूद्विश्वं प्रपीडितम् ॥ ९ ॥ अंधतामिस्रतो दक्ष नरको यातनात्मकः । तेन स्वकर्म-दोषेण यातनां बुभुजे जगत् ॥ १० ॥ एषाऽविद्यागणेशानं स्मृत्वा स्वार्थपराऽभवत् । ततो ब्रह्मा विनिंद्यैनां पुनः स्रष्टुं मनो दधे ॥ ११ ॥ ततस्तस्य शरीरात्तु चतुःपुत्राः प्रजज्ञिरे । सनकश्च महायोगी तथान्यश्च सनंदनः ॥ १२ ॥ सनातनोऽपि च सनत्कुमारश्च चतुर्थकः । तेषां मातृस्वरूपेण विद्या ज्ञानात्मिका बभौ ॥ १३ ॥ बोधरूपां निराकारां साक्षादात्ममयीं पराम् । तां दृष्ट्वा हर्षयुक्तोऽभूद्ब्रह्मा सर्वपितामहः ॥ १४ ॥ सहजस्य धरस्तत्र सनकः संबभौ सुतः । समयोगधरो दक्ष

प्रतापी च स नंदनः ॥ १५ ॥ ज्ञानयोगमयो योगी सनातन इति स्मृतः । कर्मयोगस्वरूपः सनत्कुमारः स आबभौ ॥ १६ ॥ तान् दृष्ट्वा हर्षसंयुक्त उवाच जगदीश्वरः । स्मृत्वाऽसृजत संसृष्टिं गणेशं तैः कृतं तथा ॥ १७ ॥ नानाविधं योगमार्गं ससृजुस्ते महौजसः । तं दृष्ट्वा नाभ्यनंदत्स ब्रह्मा प्रोवाच तान् पुनः ॥ १८ ॥ अलं योगमयीं सृष्टिं मा कुरुध्वं महौजसः । तथेति ते महाभागा ऊचुस्तं संस्थिता बभुः ॥ १९ ॥ ब्रह्मा ज्ञानमयीं सृष्टिं ततो दृष्ट्वा चुकोप ह । कोपात्तस्य ललाटाद्वै शंभुः पुत्रो बभूव ह ॥ २० ॥ तुष्टाव तेजसा दीप्तं पंचवक्त्रधरं प्रभुम् । त्रिनेत्रं दशबाहुं तं चंद्ररेखाविभूषितम् ॥ २१ ॥ अर्धनारीनरं प्राज्ञं त्रिशूलादिसुचिह्नितम् । जटाधरं महाकायं व्याघ्रेभाजिनधारकम् ॥ २२ ॥ सहसा जातमात्रेण रुदितं शंकरेण च । तं ब्रह्मा सांत्वयामास किं रोदिषि वृषध्वज ॥ २३ ॥ ब्रह्माणमवदद्बालः स्थानं देहि पितः प्रभो । मह्यं नामानि सर्वेश कार्यं कथय विस्तरात् ॥ २४ ॥ तं प्रत्युवाच धाता स रोदनाद्रुद्रसंज्ञितः । शिवः सर्वसुखाधारस्त्वं जातोऽसि महेश्वर ॥ २५ ॥ वरदानप्रभावेणाधुना सर्वेश्वरः प्रभो । साक्षाच्छंकरवेषेण पुत्रतां मे समागतः ॥ २६ ॥ पृथ्वी जलं तथा तेजो वायुराकाशमेव च । चंद्राः सूर्यो दीक्षितोऽष्टौ तव स्थानानि शंकर ॥ २७ ॥ अष्टमूर्तिधरः शर्वः सर्वेभ्यः फलदायकः । तव नामानि देवेश एकादश भवंतु वै ॥ २८ ॥ कुरु सृष्टिं महादेव ध्यात्वा देवं गजाननम् । तथेति सृष्टिमारेभे ध्यात्वा गणपतिं शिवः ॥ २९ ॥ रुद्रान्नानाविधान् शंभुः ससर्ज बहुतेजसः । अनंतान्विविधाकारानमृतात्मप्रधारकान् ॥ ३० ॥ तान् दृष्ट्वा ब्रह्मदेवोऽपि मा कुरुष्व जगत्पते । जन्ममृत्युयुतान् शंभो सृजस्व विविधांस्तथा ॥ ३१ ॥ ततः शिवो विधातारमुवाच न सृजाम्यहम् । जन्ममृत्युयुतान् देवेत्युक्त्वा तूष्णीं बभूव ह ॥३२॥ तेन स्थाणुरिति प्रोक्तं नाम तस्य महात्मनः । ऊर्ध्वरेताः स्वयं शंभुः स्थितो गणपतिं भजन् ॥३३॥ ततो ब्रह्मा मुखेभ्यो वै वेदान् शास्त्रसमन्वितान् । पुराणानि ससर्जाऽसौ तानुवाच कृतांजलीन् ॥३४॥ सृजध्वं विविधां सृष्टिं तथेति गणपं तदा । तपसा तोषयामासुः ससृजुस्तद्वरैः प्रजाः ॥३५॥ कर्माणि विविधानीह ससृजुः परमादरात् । तानि दृष्ट्वा विधाताऽसौ हर्षयुक्तो बभूव ह ॥३६॥ ततो यज्ञं समारेभे ब्रह्मा विष्णुमचिंतयत् । पुत्रार्थं तं महाभागं सोऽपि तत्पुत्रतां गतः ॥३७॥ यज्ञाच्चतुर्भुजो देवो यज्ञरूपो जनार्दनः । समुद्भूतः स्वयं विष्णुस्तमुवाच कृतांजलिः ॥३८॥ आज्ञां देहि पितर्मां त्वं ततस्तं विधिरब्रवीत् । सृष्टिं कुरु गणेशं त्वं तथा स्मृत्वा चकार सः ॥३९॥ यज्ञान् कर्मसमुद्भूतान् ससर्ज विविधान् हरिः । नानाफलप्रदान् पूर्णान् कल्पवृक्षानिव प्रभुः ॥४०॥ तान् दृष्ट्वा

हर्षितो ब्रह्मा ततः स ससृजे पुनः। तस्य देहात्समुत्पन्नाः पुत्रा दश महौजसः ॥४१॥ मरीचिर्भृगुरत्रिश्च पुलस्त्यः पुलहः क्रतुः। दक्ष त्वमंगिराश्चैव वसिष्ठो नारदः प्रभो ॥४२॥ तानुवाच स्वयं ब्रह्मा सृजध्वं विविधाः प्रजाः। ओमित्युक्त्वा ययुः सर्वे तपसे वनमुत्तमम् ॥४३॥ ततो नारद आद्यंतमुवाच पितरं मुनिः। नाहं सृजामि देवेश भजामि गणनायकम् ॥४४॥ मायामयं सर्वमिदं मिथ्याभूतं भ्रमात्मकम्। श्राम्येज्ज्ञाता तदर्थं यो मूर्खवन्नात्र संशयः ॥४५॥ ततस्तं पुनरप्याह सृज त्वं विविधाः प्रजाः। अंत्ये वयसि देवेशं गणेशं भज पुत्रक ॥४६॥ स ऊचे त्वं बोधयसि किमर्थं मां प्रजापते। मिथ्याभूतार्थमादौ कः सृजति भ्रांतिसंयुतः ॥४७॥ ततस्तं शप्तवान् ब्रह्मा पत त्वं शूद्रयोनितः। गंधर्वश्च तथा भावी नानास्त्रीभोगकारकः ॥४८॥ ततस्तं नारदस्तातं शशाप क्रोधसंयुतः। अपूज्यो भविताऽसि त्वं वृथा शपसि मां यतः ॥४९॥ ततो नारद एवाऽसौ गत्वा तपसि संस्थितः। गणेशं तोषयामास मंत्रेणैकाक्षरेण च ॥५०॥ दिव्यवर्षशते पूर्णे तं ययौ गणपः स्वयम्। वरं वृणु महाभाग दास्यामि मनसीप्सितम् ॥५१॥ ततस्तं स्तुतवान् देवं गणेशं सर्वसिद्धिदम्। अवृणोच्च वरं चेति शापं मे विनिवर्तय ॥५२॥ ततस्तं गणराजः स ऊचिवान् भक्तवत्सलः। पितृशापं कथं मिथ्या करोमि वद सांप्रतम् ॥५३॥ मया वरस्तथा दत्तो ब्रह्मणे तेन सत्यवाक्। अतः शृणु महाभाग वचनं मे सदा हितम् ॥५४॥ गंधर्वो भवितासि त्वं तत्र ज्ञानं वदामि ते। सदा स्त्रीभिः समायुक्तं त्वां माया न प्रबाधते ॥५५॥ पुनस्त्वं शूद्रयोनौ च भविष्यसि न संशयः। तत्र संन्यासिभिः संगो भविष्यति यदाऽनघ ॥५६॥ तेभ्यो ज्ञानं समासाद्य गमिष्यसि वनेषु च। तत्र वैष्णवमार्गेषु त्वं संसक्तो भविष्यसि ॥५७॥ तद्देहपतनात् भावी पुनस्त्वं ब्रह्मणः सुतः। नारदो नाऽत्र संदेहस्तत्र शंभुं भजिष्यसि ॥५८॥ नारायणमुखात्तत्र मां ज्ञात्वा मत्प्रियो मुने। भविष्यसि च योगेंद्रो गाणपत्यो न संशयः ॥५९॥ इत्युक्त्वा गणनाथस्तं तत्रैवांतरधीयत। नारदस्तं नमस्कृत्य शापं भुक्त्वा दिवं गतः ॥६०॥ पुनः स नारदो जातः शिवभक्तिपरायणः। नारायणेन संज्ञप्तो गाणपत्यो बभूव ह ॥६१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते नारदशापनिवर्तनं नाम द्वितीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । कथं नारायणेनाऽसौ बोधितो मुनिसत्तमः । तन्मे कथय योगींद्र न तृप्यामि कथामृतात् ॥१॥ मुद्गल उवाच । एकदा नारदो दक्ष पर्यटञ्छंकरं गतः । तत्र संपूजयंतं तं गणेशं स ददर्श ह ॥ २ ॥ मूर्तिं चिंतामणेः साक्षात् स्थापितां रत्ननिर्मिताम् । शुंडादंडमुखीं चैव शंकरस्तामपूजयत् ॥३॥ तं दृष्ट्वा नियमे संस्थं विस्मितो नारदो मुनिः । प्रययौ तं नमस्कृत्य विकुंठे विष्णुमादरात् ॥ ४ ॥ तं प्रणम्य महातेजा नारदो विनयान्वितः । उवाच भक्तिसंयुक्तो नारायण नमोऽस्तु ते ॥ ५ ॥ त्वं साक्षाज्जगतामीशो नुद मे संशयं प्रभो । कैलासमगमं द्रष्टुमहं शंकरमुत्सुकः ॥ ६ ॥ तत्र सोऽपि गणेशस्य मूर्तिं कृत्वा जनार्दन । अपूजयन्महाभक्त्या रोमांचितशरीरवान् ॥ ७ ॥ अश्रुप्रवाहसंयुक्तं प्रेम्णा चैव परिप्लुतम् । ध्यानस्थं शंकरं दृष्ट्वा मौनवानभवं प्रभो ॥ ८ ॥ तं प्रणम्य महाविष्णो त्वदंतिकमुपागतः । त्वं चापि गणराजस्य वदसे नाममंत्रकम् ॥ ९ ॥ शंकरान्न परं किंचिदव्यक्तं ब्रह्म कथ्यते । शिवो विकारहीनश्च सर्वसिद्धिप्रदो मतः ॥ १० ॥ त्वं तदीया महाशक्तिः प्रभो नारायणाह्वया । सदानंदस्वरूपश्च सर्वात्मा चैव कथ्यते ॥ ११ ॥ कोऽसौ गणेश्वरो नाम त्वं कथं स्मरसि प्रभो । विश्वनाथः कथं शंभुस्तं पूजयति नित्यशः ॥ १२ ॥ एनं मे संशयं देव च्छेत्तुमर्हसि केशव । सर्वज्ञस्त्वं रमानाथ शाधि मां शिष्यमागतम् ॥१३॥ मुद्गल उवाच । नारदस्य वचः श्रुत्वा प्रहृष्टः केशवोऽब्रवीत् । तं गणेशस्य संभक्तेः पात्रं दृष्ट्वा यथार्थतः ॥ १४ ॥ नारायण उवाच । शृणु नारद मे वाक्यं संशयं कुरु मा मुने । योगशांतिस्वरूपोऽयं गणेशो नात्र संशयः ॥ १५ ॥ सिद्धिबुद्धिपतिः साक्षात् स्वानंदाख्ये पुरे स्थितः । तस्य भक्तिप्रभावेण वयं वै सर्वसिद्धिदाः ॥ १६ ॥ विनायकः स एको वै वयं नायकसंयुताः । भजामो भक्तियुक्तास्तं योगशांत्यर्थमादरात् ॥१७॥ एकदाऽहं गतस्तत्र कैलासे शंकरालये । गणेशं पूजयंतं तं शिवं दृष्ट्वा सुविस्मितः ॥१८॥ तस्य नित्यविधिं पूर्णं जातं दृष्ट्वा तमब्रवम् । त्वं साक्षान्निर्विकारश्च मोहहीनः सदाशिव ॥१९॥ अव्यक्तं ब्रह्म यत्प्रोक्तं ब्रह्माधिपतिसंज्ञितम् । त्वमेव वेदवादेषु कथं वदसि विप्रपम् ॥२०॥ कोऽसौ गणेश्वरो नाम तद्वदस्व मम प्रभो । सर्वज्ञस्त्वं सदा शंभुः शिष्यं ते तारयस्व माम् ॥२१॥ शिव उवाच । शृणु विष्णो रहस्यं मे शांतिदं योगसेवया । योगपूर्णं गणेशाख्यं ब्रह्मभूयपदप्रदम् ॥२२॥ पंचधा चित्तवृत्तिर्या सा बुद्धिः कथ्यते बुधैः । पंचभेदतया सर्वं भुनक्ति प्रकृतिः परा ॥२३॥ तत्र मोहप्रदा सिद्धिर्नानाभ्रांतिप्रकाशिका । सिध्यर्थं पंचधा चित्तं यत्नयुक्तं बभूव ह ॥२४॥ धर्मार्थकाममोक्षाणां

सिद्धिः सर्वत्र कथ्यते । ब्रह्मभूयकरी साक्षाज्ज्ञानीहि पुरुषोत्तम ॥२५॥ ब्रह्मणि ब्रह्मभूतो यस्तस्य किं भ्रान्तिरुच्यते । धर्मार्थकाममोक्षाणां ब्रह्मभूतस्य वा विभो ॥२६॥ तस्य पंचविधं चित्तं नास्ति जानीहि निश्चितम् । तदा योगी समाख्यातो गणेशाभेदतां गतः ॥२७॥ संप्रज्ञातसमाधिस्थो गकारः कथ्यते बुधैः । असंप्रज्ञातरूपो वै णकारो वेदवादिभिः ॥२८॥ तयोः स्वामी गणेशोऽयं शांतियोगमयः सदा । नेतिरूपोऽहमव्यक्तस्त्वं समात्मक उच्यसे ॥२९॥ यत्र कुत्र प्रहृष्टा वै वयं सर्वे भवात्मकाः । भवप्रत्यययोगस्थो गणेशः पंचधाऽभवत् ॥३०॥ स तु मायामयः प्रोक्तो वेदेषु खलु केशव । मायाहीनो गणेशान उपायप्रत्ययात्मकः ॥३१॥ साक्षाद्गणेशरूपे च मायायुक्तवियुक्तता । नास्ति तस्मात्स वै शांत्या लभ्यते नान्यथा क्वचित् ॥३२॥ गणेशोऽहं सदा ब्रह्म ब्रह्मणां पतिरंजसा । योगोऽयं गाणपत्याख्यः कथितस्ते मया प्रभो ॥३३॥ अनेन विधिना ज्ञानं गाणेशाख्यं भविष्यति । त्यक्त्वा पंचविधं चित्तं भव चिंतामणिः प्रभो ॥३४॥ एवमुक्त्वा महादेवो विरराम च नारद । मया ते कथितं ज्ञानं गाणेशाख्यं महामुने ॥३५॥ अस्माकं पददाता स ब्रह्मभूयप्रदस्तथा । गणेशः कुलदेवश्च तस्मात्तं प्रभजामहे ॥३६॥ मुद्गल उवाच । तं विष्णुं प्रणिपत्याऽथ नारदः प्रययौ मुनिः । तपोवनं समासाद्य योगाभ्यासरतोऽभवत् ॥३७॥ गणेशं मनसा ध्यायन्नजपन् मंत्रमुत्तमम् । दशवर्षैः प्रसन्नोऽभूद्गणेशस्तं ययौ मुनिम् ॥३८॥ तं दृष्ट्वा विस्मितोऽत्यंतं नारदः प्रणनाम च । कृतांजलिपुटो भूत्वा तुष्टाव गणपं मुनिः ॥३९॥ नारद उवाच । नमामि गणनाथं तं सर्वविघ्नविनाशिनम् । वेदांतागोचरं तज्ज्ञैर्गम्यं ब्रह्मैव संस्थितम् ॥४०॥ मनोवाणीविहीनं नो मनोवाणीमयं न च । ब्रह्मेशानं कथं स्तौमि सिद्धिबुद्धिपतिं परम् ॥४१॥ त्वद्दर्शनेन हेरंब कृतकृत्योऽहमंजसा । इत्युक्त्वा पूजयामास भक्तिभावसमन्वितः ॥४२॥ पूजयित्वा गणेशानं पुनस्तुष्टाव नारदः । रोमांचितशरीरोऽसौ भावयुक्तो महामुनिः ॥४३॥ नमो नमो गणेशाय विघ्नराजाय ते नमः । भक्तानां विघ्नहंत्रे चाभक्तानां विघ्नकारिणे ॥४४॥ अमेयमायया चैव संयुक्ताय नमो नमः । योगरूपाय वै तुभ्यं योगिभ्यो मोहदाय ते ॥४५॥ विनायकाय सर्वेश नमश्चिंतामणे नमः । अनंतमहिमाधार नमस्ते चंद्रमौलये ॥४६॥ एकदंताय देवाय मायिभ्यो मोहदाय ते । नमो नमः परेशाय परात्परतमाय ते ॥४७॥ निर्गुणाय नमस्तुभ्यं गुणाकाराय साक्षिणे । महाखुवाहनायैव मूषकध्वजधारिणे ॥४८॥ अनादये नमस्तुभ्यं ज्येष्ठराजाय ढुंढये । हर्त्रे कर्त्रे सदा पात्रे नानाभेदमयाय च ॥४९॥ त्वद्दर्शनसुधापानाद्धतं मे भ्रांतिजं

महत्। मरणं भिन्नभावाख्यं गणेशोऽहं कृतस्त्वया ॥५०॥ न भिन्नं परिपश्यामि त्वद्दते गणनायक । शांतिदं योगमासाद्य प्रसादात्ते न संशयः ॥५१॥ भक्तिं देहि गणाधीश परां त्वत्पादपद्मयोः । कुरु मां गाणपत्यं त्वं प्रेमयुक्तं च ते पदि ॥५२॥ इत्युक्त्वा विरराामाथ तं पुनर्गणपोऽवदत् । मदीया भक्तिरत्यंतं भविष्यति सदाऽचला ॥५३॥ न योगाच्चलनं क्वापि भविष्यति महामुने । सदा योगींद्रपूज्यस्त्वं सर्वमान्यो भविष्यसि ॥५४॥ त्वया कृतमिदं स्तोत्रं शांतियोगप्रदं भवेत् । पठते शृण्वते चैव भुक्तिमुक्तिप्रदायकम् ॥५५॥ इत्युक्त्वा तस्य हृदये ययौ लीनो गजाननः । सदा हृदि गणेशानं पश्यति स्म मुनिः स्वयम् ॥५६॥ इत्याख्यानं नारदीयं कथितं ते प्रजापते । शृणुयाद्यः पठेद्वा यः सोऽपि सद्गतिमाप्नुयात् ॥५७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीय खंडे एकदंतचरिते नारदभक्तिवर्णनं नाम तृतीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ततो ब्रह्मा ससर्जाऽसौ मुखतो ब्राह्मणान् स्वयम् । बाहुभ्यः क्षत्रियान् सर्वानूरुभ्यो वैश्यकांस्तथा ॥ १ ॥ पद्भ्यः शूद्रान् महादेवः ससर्ज गुणप्रेरितः । संन्यासं शिरसस्तद्वद्वानप्रस्थाश्रमं हृदः ॥ २ ॥ नाभ्याश्च ब्रह्मचर्यं स जंघाभ्यां गृहिनां तथा । वर्णाश्रमान् स वै दृष्ट्वा हर्षितोऽभूत् पितामहः ॥ ३ ॥ ततो धर्मं स्वयं ब्रह्मा ससर्जोरःप्रदेशतः । पृष्ठतोऽधर्मरूपं च सुरदैत्यप्रवर्तकौ ॥ ४ ॥ ततो देवांश्च गंधर्वानप्सरोयक्षकादिकान् । असुरान् यातुधानांश्च ससर्ज निजदेहतः ॥ ५ ॥ सर्पान् पक्षिगणांश्चैव पशुमानवकादिकान् । क्रियायुक्तान् ससर्जाऽसौ स्वदेहं प्रददौ ततः ॥ ६ ॥ ते सर्वे ब्रह्मणो देहात्समुत्पन्ना महौजसः । व्यवहारयुता दक्ष बवृधुर्न तथापि ते ॥ ७ ॥ तेषां स्वर्गप्रमाणं च शृणु मुख्यं प्रजापते । संक्षेपेण प्रवक्ष्यामि प्राकृतं वै कृतं परम् ॥ ८ ॥ प्रथमो महतः सर्गो ब्रह्मणः स तु कथ्यते । तन्मात्राणां द्वितीयस्तु भूतसर्गः प्रकीर्तितः ॥ ९ ॥ वैकारिकस्तृतीयस्तु सर्ग ऐंद्रियकः स्मृतः । इत्येते प्राकृताः सर्गाः संभूता बुद्धिपूर्वकाः ॥ १० ॥ मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः । तिर्यक्स्रोतस्तु यः प्रोक्तस्तिर्यक्योनिः स पंचमः ॥ ११ ॥ तथोर्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः । ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स तु मानवः ॥ १२ ॥ अष्टमो भौतिकः सर्गो भूतादीनां प्रकीर्तितः । नवमश्चैव कौमारो ज्ञानव्यो विबुधैस्तथा ॥ १३ ॥ विकृताः

षट् समाख्याता प्राकृताश्च त्रयो मताः । नवसर्गाः प्रविज्ञेयाः प्राकृता वैकृता इमे ॥ १४ ॥ प्राकृता ये त्रयः सर्गा बुद्धिपूर्वाः प्रकीर्तिताः । बुद्धिपूर्वं प्रवर्तंते तत्त्वाद्यैः सर्वजंतवः ॥ १५ ॥ एवं सृष्ट्वा स्वयं ब्रह्मा प्रजा नानाविधाः प्रभो । ववृधुर्न प्रजास्तस्य तेन संदुःखितोऽभवत् ॥ १६ ॥ ततस्तस्य शरीराद्वै दांपत्यं निःसृतं परम्। वामांगात्प्रकृती रम्या शतरूपा च सा स्मृता ॥१७॥ दक्षिणांगात्तु संभूतः पुरुषः स मनुः स्मृतः । स्वायंभुवो महाभाग आद्यः क्षत्रियधर्मवित् ॥१८॥ बद्धांजलिपुटौ चोभौ वचो बह्माणमूचतुः । आज्ञां कुरु महाभाग किं कुर्याव प्रजापते ॥१९॥ ततो ब्रह्मा स्वयं जातौ तौ जगाद प्रहर्षितः । अतुलां सृजतं सृष्टिं मैथुनीं तपसो बलात् ॥२०॥ ततस्तौ तं प्रणम्यादौ जग्मतुर्वनमुत्तमम् । प्रतेपाते तपो घोरं विचिंत्य गणपं हृदि ॥२१॥ ततो विधातृच्छायायाः कर्दमो मुनिसत्तमः । समुत्पन्नश्च तं दृष्ट्वा ब्रह्मोवाच सृज प्रजाः ॥२२॥ स मुनिर्वनमागत्य तताप परमं तपः । विष्णुं ध्यात्वा प्रजाकामः शुक्लरूपं यथाविधि ॥२३॥ एतस्मिन्नंतरे जातौ विष्णुकर्णमलोद्भवौ । मधुकैटभनामानौ दैत्यौ परमदारुणौ ॥२४॥ ताभ्यां स्वभुजवीर्येण जितं त्रिभुवनं तदा । देवाः सर्वे भयोद्विग्नाः पलायंत दिशासु च ॥२५॥ ब्रह्माणं भक्षितुं यातौ तेन निद्रा स्तुता तदा । निद्रया विष्णुरव्यक्तो मुक्तः समुत्थितो बभौ ॥२६॥ तेन युद्धं महाघोरं कृतं ताभ्यां भयानकम् । मल्लयुद्धेन तौ जेतुं न शशाक जनार्दनः ॥२७॥ पंचवर्षसहस्राणि युयुधे हरिरव्ययः । ततो हरिं ममृदतुर्महादैत्यौ बलान्वितौ ॥२८॥ ततो विष्णुः स्वमात्मानमतंर्धाय पलायत । शरणं शंकरं चैव ययौ भावसमन्वितः ॥२९॥ प्रणिपत्य महेशानं जगाद भयसंकुलः । वृत्तांतं युद्धसंभूतं जयोपायं वदस्व मे ॥३०॥ तेन संकथितं तस्मै गणेशो विस्मृतस्त्वया । तमाराधय यत्नेन ततः सिद्धिमवाप्स्यसि ॥३१॥ षडक्षरं महामंत्रं गणेशाय ददौ शिवः । स ययौ तपसे देशे दंडकारण्यसंज्ञके ॥३२॥ तत्र पद्मासनं कृत्वा ध्यात्वा देवं गजाननम् । षडक्षरविधानेन तताप परमं तपः ॥३३॥ सहस्रवर्षपर्यंतं तपस्तप्तं सुदारुणम् । तदा तं वरदानाय विष्णुं गणपतिर्ययौ ॥३४॥ तं दृष्ट्वा प्रणनामाथ पूजयामास भक्तितः । महाविष्णुः प्रसन्नात्मा प्रणनाम गजाननम् ॥३५॥ बद्धांजलिपुटो भूत्वा तं तुष्टाव गणेश्वरम् । नानाभावसमायुक्तं वरदं भक्तवत्सलम् ॥३६॥ श्रीमहाविष्णुरुवाच। नमो गणपते तुभ्यं विघ्नराजाय ते नमः । नमः कृपानिधे ढुंढे भक्तसंरक्षकाय ते ॥३७॥ सिद्धिबुद्धिपते तुभ्यं नमस्ते विघ्नहारिणे । अभक्तेभ्यः सदा विघ्नदात्रे हेरंबरूपिणे ॥३८॥ निर्गुणाय गुणानां वै चालकाय नमो नमः । नमः प्रपंचरूपाय

प्रपंचरहिताय ते ॥३९॥ ब्रह्मभ्यो ब्रह्मदात्रे च ब्रह्मणे ब्रह्मरूपिणे। नरकुंजररूपाय नानामायामयाय ते ॥४०॥ कारणानां च देवेश कारणाय नमो नमः। ज्येष्ठराजाय वै तुभ्यं कारणै रहिताय च ॥४१॥ योगिनां हृदि संस्थाय योगिभ्यो योगदायिने। योगरूपधरायैव गणेशाय नमो नमः ॥४२॥ मायाश्रयाय मायाया आधाराय नमो नमः। मायिभ्यो मायया त्वं वै मोहदाता नमो नमः ॥४३॥ त्वां स्तोतुं कः समर्थः स्याद्योगाकारेण वर्तसे। यत्र वेदा विकुंठाश्च शास्त्रैः सर्वैः सहांगकैः॥४४॥ मनोवाणीविहीनस्त्वं न हि देव कृपाकर। मनोवाणीमयो नैव कथं त्वां स्तौमि विघ्नपम् ॥४५॥ तथापि बुद्धिदाता त्वं त्वत्प्रसादेन संस्तुतः। धन्योऽहं देवदेवेश तव दर्शनतोऽधुना ॥४६॥ साक्षाद् दृष्ट्वा गणेशं त्वां तेनाहं ब्रह्मरूपकः। जातो नास्त्यत्र संदेहो योगींद्रो योगदायकः ॥४७॥ इत्युक्त्वा तं प्रणम्याऽसौ त्वनृत्यद् भक्तिभावितः। रोमांचितशरीरश्च हर्षाश्रुभिरपिप्लुतः ॥ ४८॥ तमुवाच गणाधीशो वरं वृणु जनार्दन। तपसा भक्तिभावेन तुष्टो दास्यामि वाञ्छितम् ॥ ४९ ॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धि-प्रदायकम्। भविष्यति नृणां विष्णो पठतां शृण्वतां सदा ॥ ५० ॥ धर्मार्थकाममोक्षाणां साधकं प्रभविष्यति। ईप्सितार्थप्रदं सद्यः प्रसादान्मे च केशव ॥ ५१ ॥ मुद्गल उवाच। गणेशवचनं श्रुत्वा विष्णुर्हर्षसमन्वितः। जगाद तं प्रणम्यादौ वाञ्छितं संवृणे त्विति ॥ ५२ ॥ विष्णुरुवाच। यदि प्रसन्नतां यातस्तदा भक्तिं सुदुर्लभाम्। तव पादयुगे देहि दृढामव्यभि-चारिणीम् ॥ ५३ ॥ अन्यद्देहि गणाधीश ज्ञानं मे ह्यतुलं तथा। कीर्तिं सर्वत्र मे देहि सामर्थ्यं विविधं तथा ॥ ५४ ॥ मधुकैटभनाशार्थमुपायं वद सांप्रतम्। अन्यदैत्याभिहनने सामर्थ्यं देहि विघ्नप ॥ ५५ ॥ तस्य तद्वचनं श्रुत्वा तथेति गणपोऽब्रवीत्। युद्धाय गच्छ देवेश दैत्यौ जेष्यसि तौ बलात् ॥ ५६ ॥ तयोर्मरणमत्यंतं सुगुप्तं ब्रह्मणा कृतम्। समये वरदानस्य तपसा तोषितेन च ॥ ५७ ॥ स्वमुखेन यदा मृत्युं दैत्यौ तौ कथयिष्यतः। तदा तेन प्रकारेण जहि दैत्यौ महाबलौ ॥ ५८ ॥ अहं मायां समाश्रित्य तयोस्तव हृदि प्रभुः। वासं कृत्वा तवाधीनौ करिष्यामि न संशयः ॥ ५९ ॥ मदीयस्मरणं चित्ते करिष्यति यदा भवान्। जयोपायं तदा विष्णो ज्ञास्यसे दैत्यनाशकम् ॥ ६० ॥ एवमुक्त्वांतर्दधेऽसौ गणेशो ब्रह्मनायकः। विष्णुस्तत्र महामूर्तिं स्थापयामास सुद्विजैः ॥ ६१ ॥ पूजयामास तां मूर्तिमुपचारैः सुपुष्कलैः। सिद्धिक्षेत्रं सुविख्यातं तदादिः प्रबभूव ह ॥ ६२ ॥ अनुष्ठानं कृतं तत्र नानासिद्धिकरं परम्। क्षेत्रं बभूव विख्यातं गाणेशं सिद्धसेवितम् ॥ ६३ ॥

तत्र विष्णुः सदा वासं चक्रे वै भक्तिसंयुतः । सदारः परिवारेणापूजयन्नित्यमादरात् ॥ ६४ ॥ तं प्रणम्य गणाधीशं ययौ युद्धाय सत्वरः । गणेशं मनसा ध्यात्वा तौ चिच्छेद महाबलौ ॥ ६५ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते मधुकैटभवधो नाम चतुर्थोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । नवब्रह्मसुताः प्रोक्तास्तेपुस्ते परमं तपः । दिव्यवर्षसहस्रं च गणेशं ह्यचिंतयन् ॥१॥ एकाक्षरविधानेन पूजयंतश्च नित्यशः । वायुमात्राशिनः सर्वे तोषयामासुरादरात् ॥२॥ ततस्तेषां प्रसन्नोऽभूद्गणेशो भक्तवत्सलः । आययौ तान् वरं दातुं मूषकोपरि संस्थितः ॥३॥ अनंतसूर्यसंकाशं दृष्ट्वा तं हर्षसंयुताः । सौम्यरूपं प्रणेमुस्ते निबद्धकरसंपुटाः ॥४॥ तुष्टुवुः परमात्मानं गणेशं दक्षमुख्यकाः । तद्दर्शनजबोधेन भक्तिनम्रात्मकंधराः ॥५॥ प्रजापतय ऊचुः । नमस्ते विघ्ननाथाय नमस्ते सर्वसाक्षिणे । सर्वात्मने स्वसंवेद्यरूपिणे ते नमो नमः ॥६॥ योगाय जगतां पात्रे ब्रह्मदात्रे नमो नमः । योगिनां गम्यरूपाय शांतियोगप्रदाय ते ॥७॥ स्रष्ट्रे पात्रे च संहर्त्रे नानारूपधराय ते । अव्यक्ताय व्यक्तकाय व्यक्ताव्यक्ताय ते नमः ॥८॥ ब्रह्मणे विष्णवे चैव शंकराय च भानवे । शक्तये चेंद्ररूपाय यमाय च नमो नमः ॥९॥ अग्नये नैर्ऋतायैव वारुणाय च वायवे । कुबेराय च रुद्राय शेषाय च नमो नमः ॥१०॥ ग्रहनक्षत्ररूपाय सिद्धसाध्यमयाय च । पशवे नररूपाय वृक्षाकाराय ते नमः ॥११॥ पर्वताय समुद्राय नदीनदसुरूपिणे । दैत्याय दैत्यनाथाय राक्षसाय नमो नमः ॥१२॥ अन्नाय फलरूपाय रसरूपाय ते नमः । पंचभूतमयायैव सर्वाकाराय ते नमः ॥१३॥ चिद्रूपाय च बोधाय विदेहाय नमो नमः । असत्याय च सत्याय समरूपाय साधवे ॥१४॥ स्वानंदाय ह्ययोगाय योगाय गणधारिणे । गणेशाय नमस्तुभ्यं सर्वशांतिप्रदाय च ॥१५॥ चिंतामणिं त्वां कः स्तोतुं समर्थः स्यात्प्रकाशकम् । चित्तस्य चित्तवृत्तीनामतस्त्वां प्रणमामहे ॥१६॥ मुद्गल उवाच । एवं स्तुत्वा गणेशं तं प्रणतास्ते प्रजापते । तानुवाच गणाधीशो वृणुध्वं विविधान् वरान् ॥१७॥ भवद्भिर्यत् कृतं स्तोत्रं मम मान्यं भविष्यति । यः पठिष्यति भावेन श्रोष्यते सर्वसिद्धिदम् ॥१८॥ पुत्रपौत्रकलत्रादिप्रदं तेभ्यो भविष्यति । वंध्यदोषहरं धान्यधनदं पशुदं परम् ॥१९॥ भुक्तिमुक्तिप्रदं स्तोत्रं ब्रह्मभूयकरं

भवेत् । मनईप्सितदं पुण्यं नराणां नात्र संशयः ॥२०॥ गणेशवचनं श्रुत्वा त एवं हर्षसंयुताः । तं प्रणम्य महाभक्त्या ऊचुः प्रांजलयोऽभवन् ॥२१॥ त ऊचुः । यदि प्रसन्नतां यातस्तदा देहि गजानन । त्वदीयामचलां भक्तिं यया मोहो विनश्यति ॥२२॥ सामर्थ्यमतुलं सृष्टेर्देहि नो विघ्ननायक । यद्यदिच्छामहे ढुंढे तत्तत् सिध्यतु सर्वदा ॥२३॥ ओमित्युक्त्वा गणाधीशोंतर्धानं प्रचकार वै । तेऽपि तं मनसा ध्यात्वा ययुः स्वस्वपदं ततः ॥२४॥ ततो ब्रह्मा पुनर्दक्षमगादीत् पुत्रमुत्तमम् । शक्तेस्तपस्त्वया कार्यं सा ते पुत्री भविष्यति ॥२५॥ ततो दक्षेण तपसाराधिता शक्तिरादरात् । शतवर्षै प्रसन्ना सा ययौ तस्यांतिकं स्वयम् ॥ २६ ॥ ततस्तां प्रणनामाथ तुष्टाव प्रकृतांजलिः । दक्ष उवाच । नमस्ते शक्तिरूपायै मायामोहस्वरूपिणि ॥ २७ ॥ जगद्धात्र्यै नमस्तुभ्यं जगन्मातर्नमो नमः । सर्वेषां प्राणदात्र्यै ते सर्वरूपिणि ते नमः ॥ २८ ॥ अनाद्यै चादिभूतायै पार्वत्यै ते नमो नमः । गायत्रिका श्रीसावित्रीरूपायै ते नमो नमः ॥ २९ ॥ प्रकृत्यै पुरुषाख्यायै नामरूपप्रकाशिनि । निर्गुणायै गुणानां वै धारिकायै नमो नमः ॥३०॥ प्रसीद भव मे पुत्री दाक्षायणि नमो नमः । ततस्तं पार्वती प्राह भक्तं दक्षप्रजापतिम् ॥ ३१ ॥ शक्तिरुवाच । भविष्यामि सुता तेऽहं नानारूपधरा सुत । जगच्च पूरयिष्यामि जनयित्वा सुताः सुतान् ॥ ३२ ॥ त्वया कृतं मदीयं यत्स्तोत्रं ख्यातिं गमिष्यति । सर्वकामप्रदं पूर्णं पठने शृण्वने भवेत् ॥ ३३ ॥ अंतर्धानं ययौ देवी पश्यतस्ते प्रजापते । त्वया गणेशनाम्नश्च स्मरणं त्यक्तमद्य वै ॥ ३४ ॥ मंत्रस्तस्य परित्यक्तः स्वेन दुर्बुद्धिधारिणा । त्वया निरस्कृता पुत्री सती भस्मत्वमागता ॥ ३५ ॥ त्वमपि शोकसंयुक्तः कृतो विघ्नेश्वरेण वै । पूर्वसंस्कारयोगेन स्मृतिस्तव समागता ॥ ३६ ॥ अधुना भावयुक्तस्त्वं शृणु मे तत्कथामृतम् । राज्यलक्ष्मीश्च संप्राप्ता यं च तस्य प्रमाददा ॥ ३७ ॥ तया युक्तः पुमान् सद्यो मदांधो जायते किल । अतः संतश्च नेच्छंति लक्ष्मीं ज्ञानविनाशिनीम् ॥ ३८ ॥ मनुः स्वायंभुवः ख्यातः सपत्नीको ययौ वनम् । अष्टाक्षरविधानेन तोषयामास विघ्नपम् ॥ ३९ ॥ तताप स तपो घोरं दिव्यवर्षसहस्रकम् । प्रसन्नोऽभूत्तदा तस्मै वरं दातुं समाययौ ॥ ४० ॥ तं दृष्ट्वा प्रणनामादौ मनुः स्वायंभुवः प्रभो । पूजयन् परया भक्त्या ततस्तुष्टाव विघ्नपम् ॥ ४१ ॥ स्वायंभुव उवाच । नमस्ते गजवक्राय हेरंबाय नमो नमः । ओंकाराकृतिरूपाय सगुणाय नमो नमः ॥ ४२ ॥ नैर्गुण्ये गजरूपाय सदा ब्रह्मसुखात्मने । गणेशाय सदा भक्तपोषकाय नमो नमः ॥ ४३ ॥ नरकुंजररूपाय योगाभेदाय ते नमः । चतुर्बाहुधरायैव पुरुषार्थप्रसिद्धये ॥ ४४ ॥

नानाभोगधरायैवानंतलीलास्वरूपिणे । विघ्नराजाय देवाय भक्तविघ्नविदारिणे ॥ ४५ ॥ सत्यासत्यमयायैवाव्यक्तभेदात्मने नमः । स्वानंदपतये तुभ्यं सदा स्वानंददायिने ॥ ४६ ॥ नमस्ते मूषकारूढसर्वांतरसुभोगिने । नानामृतसमुद्रे च क्रीडाकर नमोऽस्तु ते ॥ ४७ ॥ सिद्धिबुद्धिपते तुभ्यं द्वेधामायाप्रसारिणे । भक्तेभ्यो योगदात्रे च योगाकाराय ते नमः ॥ ४८ ॥ वेदोपनिषदां लभ्यमहावाक्यमयाय ते । ब्रह्मभूताय वै तुभ्यं नमस्ते ब्रह्मराशये ॥ ४९ ॥ किं स्तौमि त्वां गणाधीश यत्र वेदाश्च विस्मिताः । योगिनः शेषमुख्या वै शंकराद्या महेश्वराः ॥ ५० ॥ तथापि तव जातेन दर्शनेन गजानन । स्फूर्तिः प्राप्ता तया नाथ संस्तुतोऽसि मया प्रभो ॥५१॥ अहो भाग्यमहो भाग्यं येन दृष्टो गजाननः । वेदांतागोचरो गम्यो धन्योऽहं जगतीतले ॥५२॥ धन्यो मे जनको देव तपो ज्ञानं कुलं प्रभो । विद्या व्रतादिकं सर्वं धन्यं ते पाददर्शनात् ॥५३॥ इति स्तुत्वा गणाधीशं भक्त्या परमया युतः । सरोमांचोऽभवत्तत्र प्रणनाम पुनः पुनः ॥५४॥ तमुत्थाप्य गणाधीशोऽगादीत्तं भक्तमुत्तमम् । वरं वृणु महाभाग यस्ते मनसि वर्तते ॥५५॥ कृतं त्वया मदीयं यत् स्तवनं तोषकारकम् । पठते शृण्वते चापि सर्वदं प्रभविष्यति ॥५६॥ पुत्रपौत्रादिविभवप्रदं शोकविनाशनम् । धनधान्यसमृद्ध्यादिप्रदं भावि न संशयः ॥५७॥ धर्मार्थकाममोक्षाणां साधनं ब्रह्मदायकम् । दृढभक्तिकरं मे च भविष्यति न संशयः ॥५८॥ इति ब्रुवंतं विघ्नेशमुवाच मनुसत्तमः । स्वायंभुवः प्रसन्नात्मा कृतांजलिरुदारधीः ॥५९॥ मनुरुवाच । यदि प्रसन्नतां यातस्तदा देहि गजानन । भक्तिं दृढां त्वदीयां मे यया मोहो न विद्यते ॥६०॥ सृष्टेः करणसामर्थ्यं धर्मपालनमुत्तमम् । प्रजारक्षकतां देहि देव देवेश मे चिरम् ॥६१॥ यद्यदिच्छामि विघ्नेश तत्तत् सिध्यतु सर्वदा । तव भक्तेषु वासो मे सदा भवतु मानद ॥६२॥ तथेति तमुवाचादावंतर्धानं चकार ह । गणेशानो निजे लोकेऽगमद्वै भक्तवत्सलः ॥६३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते स्वायंभुववरप्रदानं नाम पंचमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ततः स्वायंभुवो यातो ब्रह्माणं प्रणनाम सः । शतरूपा तथा तं वै जग्मतुस्तौ तदाज्ञया ॥१॥ राज्यं चकार धर्मेण मनुः शस्त्रधरः प्रभुः । धर्मयुक्तो महातेजा गाणपत्यप्रियोऽभवत् ॥२॥ द्वौ पुत्रौ शतरूपायाः कन्यास्तिस्रः प्रजापते । मैथुनेनैव मार्गेण समुत्पाद्य बभौ मनुः ॥३॥ प्रियव्रतोत्तानपादौ पुत्रौ तस्य च धीमतः । आकूतिर्देवहूतिश्च प्रसूतिश्च सुलोचनाः ॥४॥ कन्यास्तिस्रः समाख्याता मनोस्तस्य महात्मनः । प्रसूतिं स ददौ तुभ्यमाकूतिं रुचये तथा ॥५॥ देवहूतिं मनुस्तत्र कर्दमाय ददौ स्वयम् । एवमादि महाराजश्चकार विधिनोदितः ॥६॥ कर्दमस्तपसा विष्णुं तोषयामास यत्नतः । शतवर्षैः प्रसन्नोऽभूद्ययौ दातुं वरं द्विजम् ॥७॥ तं ययाचे स पुत्रस्त्वं भव मे जगदीश्वर । वरं दत्त्वा स्वयं विष्णुर्ययौ वैकुंठमंजसा ॥८॥ ततः स देवहूत्यां वै विष्णुः कपिलरूपधृक् । तस्य पुत्रत्वमापन्नो वरदान-प्रभावतः ॥९॥ आकूत्यां मिथुनं जज्ञे रुचेर्वै मानसं परम् । यज्ञश्च दक्षिणा देवी याभ्यां संवर्धितं जगत् ॥१०॥ यज्ञो विष्णुर्महाभागो दक्षिणायां सुतान् शुभान् । द्वादशाजनयच्चैव यामा देवाश्च ते स्मृताः ॥११॥ ततो यज्ञस्तपोयुक्तः सस्त्रीकश्चाभवत् प्रभुः । गणपं योगमार्गेण तोषयामास सर्वदा ॥१२॥ कृत्वा मणिमयीं मूर्तिं गणेशस्य चतुर्भुजाम् । नित्यं मुनिगणैर्युक्तोऽपूजयत् भक्तिभावितः ॥१३॥ ततो गणपतिः प्रीतो ददौ योगं महाद्भुतम् । तेन योगींद्रमुख्योऽसौ गाणपत्यो बभूव ह ॥१४॥ हेरंबेति सदा मंत्रं यज्ञो हर्षाज्जजाप ह । शिष्येभ्यः प्रददौ योगं गाणपत्यं मुदान्वितः ॥१५॥ प्रसूत्यां जनयामास कन्या दक्षः प्रजापतिः । चतुर्विंशति संख्याता शक्त्यंशाः सर्वमातरः ॥१६॥ श्रद्धा लक्ष्मीर्धृतिस्तुष्टिः पुष्टिर्मेधा क्रिया तथा । बुद्धिर्लज्जा वपुः शांतिः सिद्धिः कीर्तिस्त्रयोदश ॥१७॥ ददौ धर्माय पत्न्यर्थं दक्षो हृष्टमना मुने । ब्रह्मणा नोदितश्चैव तासां सूतिं वदामि ते ॥१८॥ श्रद्धापुत्रः स्मृतः कामोऽर्थश्च लक्ष्मीसुतोऽभवत् । धृत्यास्तु नियमः पुत्रस्तुष्ट्याः संतोषसंज्ञितः ॥१९॥ पुष्ट्यां लाभः सुतो जज्ञे मेधापुत्रः शमः स्मृतः । क्रियायाश्च स्मृतौ पुत्रौ दंडः समय एव च ॥२०॥ बुद्ध्या बोधोऽभवत्पुत्रश्चाप्रमादः प्रकीर्तितः । लज्जाया विनयश्चैव वपुषो व्यवसायकः ॥२१॥ शांतिपुत्रस्तथा क्षेमः सिद्धेः सिद्धः सुतोऽभवत् । यशःकीर्तिसुतः प्रोक्त इत्येते धर्मसूनवः ॥२२॥ कामस्याऽभूत् सुतो हर्ष आनंदश्चापरः स्मृतः । इत्येष सुखरूपस्तु सर्गो धर्मस्य कीर्तितः ॥२३॥ प्रसंगात्तं वदिष्यामि सर्गोऽधर्मस्य दुःखदः । ब्रह्मणः पृष्ठतस्तद्वन्मिथुनं संबभूव ह ॥२४॥ अधर्मश्च तथा हिंसा तयोः पुत्रोऽनृतः स्मृतः । निकृतिश्च सुता प्रोक्ता तयोर्जज्ञे भयं तथा ॥२५॥ नरकश्च

तथा माया वेदना च सुते स्मृते । भयाज्जज्ञे च मायायां मृत्युः सर्वापहारकः ॥२६॥ नरकाद्वेनायां च दुःखं संसारकारकम् । मृत्योर्व्याधिर्जरा शोकस्तृष्णा क्रोधश्च जज्ञिरे ॥ २७॥ दुःखोदर्काः स्मृताः सर्वे ह्यधर्मप्रभवा मुने । नैतेषां प्रसवश्चास्ति सर्वे ते तूर्ध्वरेतसः ॥२८॥ एकादश सुताः शिष्टास्तासां वंशं निबोधय । सतीं ददौ स रुद्राय ख्यातिं च भृगवे तथा ॥२९॥ मरीचये च संभूतिं स्मृतिमंगिरसे ददौ । पुलस्त्याय तथा प्रीतिं क्षमां च पुलहाय वै ॥३०॥ संततिं क्रतवे चासावनसूयां तथाऽत्रये । ददावूर्जां वसिष्ठाय मुने स्वाहां च वह्नये ॥३१॥ पितृभ्यश्च स्वधां देवीं ददौ दक्षः प्रहर्षितः । नियोगाद्ब्रह्मणः साक्षात्तासां वंशं वदामि ते ॥३२॥ सत्यां च शंकराज्जज्ञे कार्तिकेयो महाबलः । देवसेनापतित्वेऽसावभिषिक्तश्च वेधसा ॥३३॥ ख्यात्यां भृगोः समुत्पन्ना लक्ष्मीनारायणप्रिया । देवौ धातृविधातारौ मेरोर्जामातरौ स्मृतौ ॥३४॥ अयतिर्नियतिश्चैव कन्ये मेरोश्च ते मुने । तयोर्धातृविधातृभ्यां जातौ श्रेष्ठौ सुतावुभौ ॥३५॥ मृकंडोऽन्यस्तथा प्राणो मार्कंडेयो मृकंडजः । तथा वेदशिराः प्रोक्तः प्राणस्य द्युतिमान् सुतः ॥३६॥ मरीचिरपि संभूत्यां पूर्णमासमसूयत । कन्याचतुष्टयं चैव सर्वलक्षणमंडितम् ॥३७॥ कृषिर्वृष्टिस्तथा कृष्टिश्चतुर्थ्यपचितिर्मुने । विरजाः पर्वतश्चैव पूर्णमासस्य तौ सुतौ ॥३८॥ क्षमा च सुषुवे पुत्रान् पुलहाच्च प्रजापतेः । कर्मश्रेष्ठं वरीयांसं सहिष्णुं मुनिपुंगवम् ॥३९॥ तथा वनकवीनासं तपस्तेजस्विनं सुतम् । अत्रेर्वंशं प्रवक्ष्यामि शृणु शौनक चादरात् ॥४०॥ अत्रिः संजनयामासानसूयायां सुताञ्छुभान् । सोमं दुर्वाससं चैव दत्तं योगधरं तथा ॥४१॥ त्रयो देवा इमे प्रोक्ता अत्रेः पुत्रा महात्मनः । ब्रह्मा भवश्च विष्णुश्च कलांशेन प्रजाधराः ॥४२॥ स्मृत्यामंगिरसो जज्ञे सिनीवाली सुलोचना । कुहूराका तथा पुत्र्यनुमतिश्च पतिव्रता ॥४३॥ प्रीत्यां पुलस्त्ययोगीशादयोनिरभवत्सुतः । पूर्वजन्मनि विप्रेशोऽगस्त्योऽयं परिकीर्तितः ॥४४॥ देवबाहुस्तथा कन्या सर्वांगैः शोभिनी स्मृता । संतत्यां षष्टिसाहस्रीं पुत्राणामसृजत् क्रतुः ॥४५॥ त ऊर्ध्वरेतसः सर्वे वालखिल्या इति स्मृताः । सप्त पुत्रान् स ऊर्जायां वसिष्ठोऽजनयत्प्रभुः ॥४६॥ कन्यां कमलपत्राक्षीं चित्रकेतुः सुरोचकः । विरजा मित्रसंज्ञश्च उल्बणो वसुभृत्परः ॥४७॥ द्युमान् शक्त्यादयश्चान्ये सप्तपुत्रा महौजसः । योऽसौ रुद्रात्मको वह्निः स्वाहायां त्रीन् सुतांस्तथा ॥४८॥ जनयामास तेजस्वी तेऽग्नयः परिकीर्तिताः । पावकः पवमानश्च शुचिस्तेऽजनयन् सुतान् ॥४९॥ प्रत्येकं वै पंचदशैकोनपंचाशदग्नयः । सर्वे तेजस्विनः प्रोक्ताः सर्वे यज्ञेषु भागिनः ॥५०॥ निर्मथ्यः पवमानस्तु ससुतः परिकीर्तितः । वैद्युतः पावकः प्रोक्तः ससुतः शास्त्रसंमतः ॥५१॥ सूर्ये तपति

योऽग्निश्च स पुत्रस्तु शुचिः स्मृतः। सर्वत्रगः स रुद्रात्मा ब्रह्मपुत्रोऽग्निरुच्यते ॥५२॥ अमूर्तयोऽग्निष्वात्ता हि सांगा बर्हिषदः स्मृताः। पितरश्च स्वधा तेभ्योऽसूत द्वे तनये तथा ॥५३॥ मेना च धरणी नाम्नी ते उभे ब्रह्मवित्तमे। असूत मेना मैनाकं क्रौंचं हिमवतो मुने ॥५४॥ गंगां लोकपवित्रां च पार्वतीं परमेश्वरीम् । ते उभे शंकरं देवं लेभाते पतिमुत्तमम् ॥५५॥ तपसा गिरिराजेन मेनयाराधिता सती । वरदानप्रभावेण पार्वती तनयाऽभवत् ॥५६॥ धरणी मेरुशैलस्य पत्नी कन्ये प्रजापते । सुषुवे चायतिं चैव नियतिं कथिते पुरा ॥५७॥ एषा दक्षस्य कन्यासु संततिः कथिता मया । पठते शृण्वते चैव सर्वकामफलप्रदा ॥५८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते दक्षकन्यावंशवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। दक्षकन्याप्रसूतेभ्यः पितरः परमादृताः। गणेशाराधनं तेभ्यो ददुः प्रत्येकमादरात् ॥ १ ॥ नानामंत्रान्यथान्यायं साधयित्वा च ते वने। गत्वाऽजपंश्च हेरंबं ध्यात्वा तपसि संस्थितः ॥२॥ ततो वर्षसहस्रेण परितुष्टो गजाननः। वरं दातुं ययौ तत्र भक्तिभावेन तोषितः ॥ ३ ॥ तं दृष्ट्वा तुष्टुवुः सर्वे बद्धांजलिपुटाः प्रभुम्। भक्तिभाव-समायुक्ता गणेशं सर्वसिद्धिदम् ॥ ४ ॥ ऋषिपुत्रा ऊचुः। नमस्ते वक्रतुण्डाय भक्तरक्षकरूपिणे। ब्रह्माकाराय देवाय ब्रह्मभूताय ते नमः ॥ ५ ॥ मनोवागनिरूपाय मनोवाग्गम्यमूर्तये । योगाकाराय योगाय योगिने ते नमो नमः ॥ ६ ॥ निराकाराय विघ्नेश भक्तविघ्ननिवारक। शांतिरूपाय सर्वत्र शांतिदाय नमो नमः ॥ ७ ॥ सृष्टिरक्षणसंहारकारिणे ते नमो नमः। सर्वपूज्याय सर्वाय नमः सर्वादिमूर्तये ॥ ८ ॥ मायाविकारहीनाय मायिने मोहदायिने। मायाधाराय मायायाश्चालकाय नमो नमः ॥ ९ ॥ अनंतविभयायैवानंतोदारपराक्रम । अनंताननहस्ताय सर्वसाक्षिन्नमोऽस्तु ते ॥ १० ॥ वेदांतागम्यरूपस्त्वं दृष्टो वै भाग्यगौरवात्। स्तुतिं कर्तुं समर्था न वयं तव गजानन ॥ ११ ॥ धन्यो नो जनको देव वयं धन्यतमा विभो। विद्या व्रतं तपो मंत्रोऽस्माकं गणपदर्शनात् ॥ १२ ॥ वरदश्चेदेकदंत भक्तिं देहि दृढां त्वयि। यया मायामयो मोहो नश्येद्वै वरद प्रभो ॥ १३ ॥ स्वस्वकार्येषु सामर्थ्यं देहि देव गजानन। यद्यदिच्छामहे तत्तत् सफलं भवतु प्रभो ॥ १४ ॥ एवमुक्त्वा

पूजयंत उपचारैरनेकशः। प्रणेमुर्भक्तियुक्तास्तं सरोमांचा बभूविरे ॥ १५ ॥ ततस्तानब्रवीद्देवो भवतां यच्चिकीर्षितम्। तदेव सफलं सर्वं भविष्यति न संशयः॥१६॥ भक्तिर्मदीयपादेषु भविष्यति सुखप्रदा। सामर्थ्यं स्वस्वकार्येषु दृढा ख्यातिर्भविष्यति ॥१७॥ भवत्कृतमिदं स्तोत्रं सर्वसिद्धिकरं भवेत्। यः शृणोति नरो भक्त्या पठेद्वै तस्य सिद्धिदम् ॥१८॥ एकविंशतिवारं च पठेत्तावद्दिनानि यः। स सद्यः फलमाप्नोति चित्तेप्सितमसंशयम् ॥१९॥ एवमुक्त्वा गणाधीशस्तत्रैवांतरधीयत। ते च स्वस्वगृहे सर्वे ययुर्हर्षसमन्विताः ॥२०॥ स्त्रियश्च पुरुषाः सर्वे दक्षकन्या समुद्भवाः। सुखिनः स्वस्वकार्येषु बभूवुर्ज्ञानसंयुताः ॥२१॥ शौनक उवाच। अत्रिपुत्रा महाभागा ब्रह्मविष्णुशिवात्मकाः। तच्चरित्रं विस्तरतः श्रोतुमिच्छामि तद्वद ॥२२॥ सूत उवाच। ब्रह्मणोंऽशसमुद्भूतश्चंद्रस्तपसि संस्थितः। गणेशात्स वरं लब्ध्वाऽमृतरूपो बभूव ह ॥२३॥ कलाभिः सर्वदेवानां पोषकः स तथा नृणाम्। किरणैरन्नभावस्य वृद्धिकृत् सर्वदाऽभवत् ॥२४॥ दत्तो विष्णुकलांशेन संभूतो योगधारकः। क्रमेण योगमार्गेण नानाब्रह्मसु संस्थितः ॥२५॥ जडोन्मत्तपिशाचादिबालानंदादिका मुने। अवस्थाः साधयामास नानाभूमिप्रकाशिकाः ॥२६॥ तं दृष्ट्वा योगिनं सर्वे सेवायामभवन् पराः। द्विजाद्याः सर्ववर्णाश्चाश्रमस्था भक्तिभावतः ॥२७॥ क्षणं विश्राममत्यंतं न लेभे मुनिसत्तमः। दत्तो विह्वलतां यातः किंकरोमीत्यचिंतयत् ॥२८॥ ततस्तेन जले विप्र ममज्जे योगधारणात्। प्रतीक्षयंतस्तत्तीरे स्थिताः सर्वेऽभवन् जनाः ॥२९॥ ततो दत्तेन सिध्या च मोक्षलक्ष्मीः प्रकाशिता। गृहीत्वा वामभागे तां निःसृतो जलामध्यतः ॥३०॥ दक्षिणे मद्यकुंभं स हस्ते धृत्वा पपौ स्वयम्। स्त्रिया सह विलासेन भोगयुक्तो बभूव ह ॥३१॥ त्यक्तस्तैरत्रिजो योगी भ्रष्टोऽयमिति भावतः। सुखेन योगमास्थाय संस्थितोऽत्रिसमुद्भवः ॥३२॥ गते कियति काले च देवासुरसमुद्भवम्। युद्धं दारुणरूपं वै जातं तत्र समीपतः ॥३३॥ दैत्यैर्देवास्ततो भग्नाः पलायंत दिशो दश। तत्राऽऽययुः सुसंभीता रक्ष रक्षेति चाब्रुवन् ॥३४॥ ततो सुरा ययुः सर्वे नग्नशस्त्रधरा बलात्। तान् दृष्ट्वाऽमरसंघास्ते पलायनपरा बत ॥३५॥ दैत्या दृष्ट्वा महालक्ष्मीं मोक्षरूपां सुरूपिणीम्। तां गृहीत्वा ययुः सर्वे धृत्वा मोहेन मस्तके ॥३६॥ मोक्षलक्ष्मीश्च तैस्तत्र यदि पादेषु संधृता। तदा तेषां जयप्राप्तिर्जातासीन्नात्र संशयः ॥३७॥ अतो निस्तेजसा स्पृष्टा दैत्या देवैः प्रपीडिताः। पलायंत भयात् सर्वे पातालं विविशुः पुनः ॥३८॥ मोक्षलक्ष्मीस्ततस्तेषां पश्यतां मुनिसत्तम। अंतर्धानं ययौ देवी ब्रह्मणि ब्रह्मभाविता ॥३९॥ शौनक उवाच। सूत कूटं त्वया प्रोक्तं न बुद्धं तन्मयाधुना।

मोक्षलक्ष्मीः शिरः स्पृष्टा दैत्यानां दुःखदा कथम् ॥४०॥ सूत उवाच । सम्यक्पृष्टं त्वया ब्रह्मन् कथयामि यथा श्रुतम् । व्यासात् सर्वज्ञमुख्याच्च शृणु शौनक यत्नतः ॥४१॥ रजस्तमोयुता दैत्या भोगलक्ष्मीपरायणाः । परद्रव्यहराः सर्वे परस्त्रीगामिनस्तथा ॥४२॥ परापकारकर्तारो जंतुभ्यो दुःखदाः स्मृताः । सदा मद्यादिभिर्युक्ताः पापाचारा विशेषतः ॥४३॥ साधूनां मुनिमुख्यानां देवानां योगिनां तथा । वेदशास्त्रपुराणानां निंदका भयदायकाः ॥४४॥ इत्यादिबहुभिर्दोषैः संयुक्तास्ते महासुराः । सदा भोगप्रिया ज्ञेया मुक्तौ नार्हा अतः कदा ॥४५॥ देहं सर्वक्रियाणां ते कर्तारं प्राप्य दैत्यपाः । सर्वथा मुक्तिमुत्सृज्य भोगेच्छायां मनो दधुः ॥४६॥ अतस्तैश्चरणाघातैर्हता मुक्तिर्विशेषतः । भोगलक्ष्मीः शिरोभिस्तैर्वंदिता तत्र यत्नतः ॥४७॥ देवर्षयः सदा यत्नैर्मुक्तिमिच्छंति सर्वदा । अतस्ते मस्तके देवीं धारयामासुरंजसा ॥४८॥ असुरैर्योगिसंगेन धृता मुक्तिर्यदा मुने । शिरस्यपि शुभा सा न कारणं कथयामि ते ॥४९॥ दुराचारादिसंयुक्ता भोगबुद्धिपरायणाः । तेभ्यः कुतः सा शुभदा कुपिता तान्निहंति वै ॥५०॥ गृहीता विषयासक्तैर्नेच्छिता पश्य शौनक । चरणाघातकैर्देवी ताडिता च तदा भवेत् ॥५१॥ अतो भोगेप्सुभिर्विप्र वंद्या भोगप्रदायिनी । यदि मुक्तिर्दुराचारैर्धृता तान्नाशयिष्यति ॥५२॥ इति ते कथितं सर्वं कारणं मुनिसत्तम । तथा मोक्षेप्सुभिर्भोगलक्ष्मीश्चरणताडिता ॥५३॥ यत्र भोगः प्रियो नित्यं तत्र मुक्तिर्न विद्यते । यत्र मुक्तिः प्रिया नित्यं तत्र भोगः कुतो भवेत् ॥५४॥ वासानायुक्तरूपा च भोगलक्ष्मीर्न संशयः । निर्वासनमयी मोक्षलक्ष्मीर्जानीहि शौनक ॥५५॥

॥ ओमिति श्रीमदांत्य पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते भोगमोक्षवर्णनं नाम सप्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । एवं दत्तसयोगेन योगभूमिं समाचरन् । नानाचेष्टायुतो दक्ष अवधूतः प्रकाशते ॥१॥ गोवद्रक्षणसंयुक्तः पशुवत्पक्षिवत्कदा । मूत्रादिदेहचेष्टां स चकार मुनिसत्तमः ॥२॥ सहजावस्थया युक्तो बभूवांतेऽत्रिसंभवः । तत्रांतर्यामिनां ज्ञात्वा खेदयुक्तो बभूव ह ॥३॥ व्यक्ताव्यक्तसमत्यादिनानाब्रह्मसुसंस्थितः । योगेन न स शांतोऽभूद्ययौ स्वपिनरं ततः ॥४॥ प्रणम्य भगवानत्रिं दत्तो योगिसमावृतम् । साक्षाद्ब्रह्ममयं पूर्णं प्रांजलिः पुरतोऽभवत् ॥५॥

अत्रिणा मानितः सोऽपि निषसादासने स्वयम् । उवाच ब्रह्मपुत्रं तमत्रिं विनयसंयुतः ॥६॥ दत्त उवाच । स्वामिन्नानाविधं ब्रह्म मया योगेन साधितम् । तत्रोपाधिः समादृष्ट उपाधिरहितोऽभवम् ॥७॥ उपाधिं निरुपाधिं च त्यक्त्वा साम्येऽहमास्थितः । तत्त्यक्त्वा तूर्यभूतोऽहं सहजे संस्थितोऽभवम् ॥८॥ तत्र दृष्ट्वा महायोगिन् स्वाधीनत्वं सदा प्रभो । तेन शांतिविहीनोऽहं किं करोमि वदस्व भोः ॥९॥ सहजान्न परं ब्रह्म लभ्यते योगसेवया । अतो मां शांतियोगं त्वं कथयस्व महामुने ॥१०॥ दत्तस्य वचनं श्रुत्वा ब्रह्मपुत्रो महातपाः । अत्रिस्तूवाच तं पुत्रं शांतिमिच्छंतमादरात् ॥११॥ शृणु पुत्र प्रवक्ष्यामि शांतियोगं सनातनम् । ब्रह्मणा कथितं मे तं येन शांतोऽहमंजसा ॥१२॥ अस्माकं कुलदेव त्वं प्राप्तो गणपतिः प्रभुः । स वै शिवादिदेवानां कुलदेवः प्रकीर्तितः ॥१३॥ शांतियोगस्वरूपं त्वं तं जानीहि महामते । भजस्व सुप्रयत्नेन तदा शांतिमवाप्स्यसि ॥१४॥ गणेशात्सर्वमुत्पन्नं तेन संस्थापितं सुत । तस्याराधनमात्रेण कृतकृत्याः शिवादयः ॥१५॥ नामरूपात्मकं सर्वं जगद्ब्रह्म प्रकथ्यते । तदेव शक्तिरूपाख्यं ब्रह्मासद्रूपकं परम् ॥१६॥ तत्रामृतमयं सौरमात्माकारेण संस्थितम् । सद्रूपं तद्विजानीहि ब्रह्म वेदे प्रकीर्तितम् ॥ १७ ॥ तयोरभेदतो ब्रह्म समं सर्वत्र संस्थितम् । सदसन्मयमेवं च विष्णुं जानीहि वेदतः ॥१८॥ तेभ्यो विलक्षणं तुर्यं नेति रूपं प्रकीर्तितम् । निर्मोहशिवसंज्ञं च स्वाधीनं ब्रह्म तद् बुधैः ॥१९॥ चतुर्णां ब्रह्मणां योगे स्वानंदः कथ्यते बुधैः । स तु मायामयः साक्षाद्गणेशो वेदवादिभिः ॥२०॥ अंतर्बाह्या क्रिया सर्वा ब्रह्माकारा प्रदृश्यते । कर्मयोगः स विज्ञेयः संयोगः कर्मणां सुत ॥२१॥ ज्ञानात्मचक्षुषा ज्ञानं यद्यद्भवति योगिनाम् । तेषामभेदको योगो ज्ञानयोगः प्रकीर्तितः ॥२२॥ ज्ञानानां कर्मणां चैवाभेदयोगः समात्मकः । आनंदात्मकरूपो यं द्वैधनाशे स आप्यते ॥२३॥ स्वेच्छया कर्मयोगश्च धृतो येन महात्मना । स्वेच्छया ज्ञानयोगश्च स्वेच्छया-नंदयोगकः ॥२४॥ स्वेच्छया स त्रिभिर्हीनः सहजाख्यः प्रकथ्यते । सदा स्वाधीनरूपश्च स्वेच्छया क्रीडति स्वयम् ॥२५॥ ब्रह्मभूतात्मको योगः स्वानंदाख्यः प्रकीर्तितः । तत्र स्वाधीनता त्रेधा पराधीनकता कुतः ॥२६॥ ब्रह्मणि ब्रह्मभूतस्य स्वतः परत एव च । उत्थानं नास्ति संयोगात् स्वस्वरूपिणि योगतः ॥२७॥ स्वानंदे सुतसंयोगो जगतां ब्रह्मणां भवेत् । सर्वाभेदेन योगोऽयं तस्मान्मायासमन्वितः ॥२८॥ अयोगात्मकयोगश्च सदा संयोगवर्जितः । जगतां ब्रह्मणां तत्र प्रवेशोऽतो न विद्यते ॥२९॥ सदा निर्मायिको योगः स्वसंवेद्यविवर्जितः । स्वकीया भेदहीनत्वान्निवृत्तिर्योगिभिर्धृता ॥ ३० ॥ ब्रह्म ब्रह्मणि संस्थं

यन्नागतं न गतं पुनः । स्वानंदनाशतो लभ्यं ब्रह्मभूयमयोगकम् ॥ ३१ ॥ ब्रह्मस्वानंदवासी स गणेशः कथ्यते बुधैः । न स्वानंदात्मकः प्रोक्तो वेदे वै वेदवादिभिः ॥३२॥ क्रीडात्मकगणेशानः स्वानंदः परिकीर्तितः । संयोगात्मकरूपेण स्वस्वरूपिणि तिष्ठति ॥३३॥ क्रीडाहीनो गणेशानो योगरूपः प्रकीर्तितः । निरानंदात्मकत्वेन सदा ब्रह्मणि संस्थितः ॥३४॥ संयोगायोगयोश्चैव तयोर्नाशे गणेश्वरः । शांतियोगात्मकः प्रोक्तो योगिभिर्योगसेवया ॥३५॥ पूर्णयोगात्मकस्तत्र गणेशः परिकीर्तितः । मायायुक्तविहीनत्वं भ्रांतिमात्रं प्रकीर्तितम् ॥३६॥ पंचचित्तस्वरूपां त्वं बुद्धिं जानीहि पुत्रक । तत्र मोहकरी सिद्धिर्भ्रांतिदा मोहरूपिणी ॥३७॥ धर्मार्थकाममोक्षाणां सिद्धिर्भिन्ना प्रदृश्यते । ब्रह्मभूतमयी सिद्धिः कथिता योगिभिस्तथा ॥३८॥ पंचधा चित्तवृत्तिर्या तत्र यद्बिंबितं सुत । तदेव गणराजस्य रूपं बिंबात्मकं परम् ॥३९॥ धर्मार्थकाममोक्षेषु ब्रह्मभूतेषु यत्स्मृतम् । ऐश्वर्यं मोहदं जंतुर्यत्र भ्रमति लालसी ॥ ४० ॥ पंचैश्वर्येषु यद्बिंबं तदेव गणपस्य च । जीवं जानीहि पुत्र त्वं शांतियोगस्य सेवया ॥ ४१ ॥ पंचचित्तप्रणाशे व पंचैश्वर्ये लयं गते । अधुना गणराजस्त्वं भविताऽसि न संशयः ॥ ४२ ॥ त्यजावधूतमार्गं त्वं भव मुख्योऽवधूतकः । अवधूय महच्चित्तं महदैश्वर्यमादरात् ॥ ४३ ॥ अतः शांतिं भजस्व त्वं दत्तयोगेन सत्वरम् । ददामि ते महामंत्रं गणेशस्य विधानतः ॥ ४४ ॥ तत एकाक्षरं मंत्रं ददौ पुत्राय भावतः । अत्रिर्योगविदां श्रेष्ठस्तं प्रणम्य ययावजः ॥ ४५ ॥ साक्षाद्विष्णुस्वरूपश्च दत्तो योगविदां वरः । गंगाया दक्षिणे तीरे पूजयामास विघ्नपम् ॥४६॥ त्यक्त्वा भूमिस्वरूपं स शांतिमास्थाय योगवित् । अभजत्तं सुभावेन गणपं हृदि चिंतयन् ॥ ४७ ॥ महायोगी स्वयं दत्तो वर्षेणैकेन शौनक । शांतिं प्राप्तो विशेषेण गाणपत्यो बभूव ह ॥ ४८ ॥ तं द्रष्टुं गणपस्तत्र ययौ भक्तं निजेच्छया । भक्तवात्सल्यतो देव आश्रमे सुखशांतिदे ॥ ४९ ॥ तं दृष्ट्वा सहसोत्थाय प्रणनाम कृतांजलिः । तुष्टाव सुस्थिरो भूत्वा विघ्नेशं कुलदैवतम् ॥ ५० ॥ श्रीदत्त उवाच । नमो गणपते तुभ्यं नमो योगस्वरूपिणे । योगिभ्यो योगदात्रे च शांतियोगात्मने नमः ॥ ५१ ॥ सिद्धिबुद्धिपते तुभ्यं पंचचित्तप्रधारक । नानाविहारशीलाय गणेशाय नमो नमः ॥ ५२ ॥ सिद्धिदात्रे नमस्तुभ्यं नानैश्वर्यप्रदायिने । मोहहंत्रे मोहकर्त्रे हेरंबाय नमो नमः ॥ ५३ ॥ स्वानंदवासिने तुभ्यं संयोगाभेदधारिणे । नानामायाविहाराय विघ्नेशाय नमो नमः ॥ ५४ ॥ सांख्याय ब्रह्मनिष्ठाय बोधहीनाय धीमते । परादुत्थानरूपाय विदेहाय नमो नमः ॥ ५५ ॥ बोधाय सर्वरूपाय देहदेहिमयाय च । स्वत उत्थानरूपाय प्रकृतिप्रलयाय ते ॥ ५६ ॥ साहंकाराय

देवाय जगदीशाय ते नमः। महते बिंदुरूपाय जगद्रूपाय ते नमः ॥ ५७ ॥ नादात्मकगुणेशाय नानावेषप्रधारिणे। ब्रह्मणे सृष्टिकर्त्रे ते पितामह नमोऽस्तु ते ॥ ५८ ॥ हरये पालकायैव नानादेहधराय ते। संहर्त्रे शंकरायैव कर्माकाराय भानवे ॥ ५९ ॥ शक्तये च क्रियामूर्ते देवमानवरूपिणे। नागासुरमयायैव ढुंढिराजाय ते नमः ॥ ६० ॥ स्थावराय नमस्तुभ्यं जंगमाय नमो नमः। जगद्रूपाय देवाय ब्रह्मणे ते नमो नमः ॥ ६१ ॥ किं स्तौमि त्वां गणाधीश योगाकारेण संस्थितम्। वेदादयः समर्था न त्वामतः प्रणमाम्यहम् ॥ ६२ ॥ धन्यो देहो मदीयोद्य पितरौ कुलमेव च। विद्यायोगस्तपश्चैव त्वदंघ्रियुगदर्शनात् ॥ ६३ ॥ इत्युक्त्वा भक्तिभावेन संप्लुतोऽसौ महामुनिः। ननर्त हृष्टरोमासावानन्दाश्रु सृजन्मुहुः ॥ ६४ ॥ ततस्तं स्वकरे धृत्वा गणनाथः स सस्वजे। उवाच योगिनं पूर्णं वचनं परमाद्भुतम् ॥ ६५ ॥ श्रीगणेश उवाच। धन्योऽसि दत्त योगींद्रो जातोऽसि मदनुग्रहात्। त्वं पूर्णां लभसे शांतिमचलां मयि सर्वदा ॥६६॥ न भेदस्ते कदाचित्ते भविष्यति महामुने। त्वत्प्रीतिसंप्रवृद्ध्यर्थमत्र स्थास्यामि निश्चलः ॥ ६७ ॥ गाणेशज्ञानमाहात्म्यं त्वयात्रेश्च मुखाच्छ्रुतम्। साक्षात्कारकरं तस्माद् विज्ञानक्षेत्रकं त्विदम् ॥ ६८ ॥ विज्ञानगणपो दत्तनाम्नाख्यातो भवाम्यहम्। दर्शनाच्छांतिसंदाता भविष्याम्यत्र मानद ॥६९॥ अत्र वासं प्रकुर्वंति मदर्थं भक्तिसंयुताः। शांतियोगं सदा तेभ्यो दास्यामि तव सन्निधौ ॥७०॥ पुराऽत्र तु शिवेनैव ज्ञानं साक्षात्कृतं परम्। विज्ञानेश्वरनामेति स मया शंकरः कृतः ॥७१॥ तस्यात्र सन्निधौ स्थित्वा त्वया ज्ञानं प्रसाधितम्। अतः शंकरमित्रत्वं प्राप्तोऽसि मदनुग्रहात् ॥७२॥ त्वया कृतमिदं स्तोत्रं योगशांतिप्रदं भवेत्। पठतां शृण्वतां नृणां ब्रह्मभूयकरं तथा ॥७३॥ धर्मार्थकाममोक्षाणां दायकं प्रभविष्यति। सर्वसिद्धिप्रदं चैव सर्वेभ्यो ज्ञानदायकम् ॥७४॥ इत्युक्त्वांतर्दधे तत्र गणेशो भक्तवत्सलः। दत्तः खिन्नश्च तं ध्यात्वा तस्थौ तत्र प्रजापते ॥७५॥ ततस्तत्कृपया तेन स्वात्मा तत्र समर्पितः। योगाभेदमयत्वेन जात आत्मनिवेदकः ॥ ७६ ॥ दत्तो भक्तो गणेशश्च स्वामी तस्येति नाशितम्। स्वामिन्यसौ सेवकोपि तदाकारेण संस्थितः ॥७७॥ इयं भक्तिर्गणेशस्यात्मनिवेदनरूपिणी। दत्तेन साधिता मुख्या शांतियोगप्रयत्नतः ॥७८॥ एतस्मिन्नंतरे तत्र प्रकटोऽभूत् स्वयं शिवः। विज्ञानेश्वरनामाऽसौ दत्तं तं परिषस्वजे ॥७९॥ अहो दत्त महाभाग मम मित्रत्वमागतः। अत्रैवैनं गणेशानमध्यायं योगसेवया ॥८०॥ ततो दत्तं पुरस्कृत्य शंकरो ब्राह्मणैः सह। गणेशं स्थापयामास गंगाया दक्षिणे तटे ॥८१॥ विज्ञानगणराजेति नाम चक्रे

महर्षिभिः। क्षेत्रं तदादेर्विख्यातं बभूव गणपस्य तत् ॥८२॥ विज्ञाननामकं पुण्यं शांतियोगफलप्रदम्। सर्वसिद्धिकरं क्षेत्रं यात्राकारि जनस्य च ॥८३॥ ज्येष्ठशुक्लचतुर्थ्यां तैः स्थापितो गणनायकः। अतस्तत्र महोत्साहस्तद्दिने कुर्वते नराः॥८४॥ योगिभिर्देवगंधर्वैः सिद्धैर्नागैश्च मानुषैः। नानाजनैस्तथा दक्षसेवितं क्षेत्रमुत्तमम् ॥८५॥ एतद्दत्तस्य माहात्म्यं यः शृणोति नरोत्तमः। पठेद्वा भविता तस्य सर्वसिद्धिर्न संशयः ॥८६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते दत्तचरितं नामाऽष्टमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच। दुर्वासाः शंकरस्यांशस्तताप परमं तपः। नेति ब्रह्मणि संजातो ब्रह्मभूतो महामुनिः ॥ १ ॥ तमतिक्रोधसंयुक्तमशांतं शांतिलालसम्। संवीक्ष्य दत्तवज्ज्ञानं ददावत्रिर्महामुनिः ॥ २ ॥ मयूरेशक्षेत्रके स गणेशध्यानमास्थितः। स्वभक्त्या गणराजेन शांतियोगयुतः कृतः ॥ ३ ॥ तदारभ्य महायोगी दुर्वासाः शांतिधारकः। क्रोधहीनस्वभावः स संजातो ब्रह्मवित्तमः ॥ ४ ॥ एतदत्रिसुतानां ते चरितं कथितं मया। यथा दक्षाय भो विप्र मुद्गलेन प्रकाशितम् ॥ ५ ॥ अधुना कथयिष्यामि स्वायंभुवजसंततेः। चरितं सर्वपापघ्नं कथितं मुद्गलेन यत् ॥ ६ ॥ शौनक उवाच। कथं मुद्गलविप्रेण कथितं तस्य धीमतः। चरित्रं वद सर्वं मे यथा दक्षेण संश्रुतम् ॥ ७ ॥ सूत उवाच। शापमोहितदक्षस्तु श्रुत्वात्रेयसमुद्भवम्। चरितं योगरूपं स मुद्गलं पुनरब्रवीत् ॥८॥ दक्ष उवाच। धन्योऽत्रिर्यस्य पुत्रा वै गाणपत्या महौजसः। योगिनो योगदातारः श्रुतं तेषां चरित्रकम् ॥ ९ ॥ अधुना वद मे ब्रह्मन् सृष्टिमार्गं पुरातनम्। स्वायंभुवमनोः पुत्रौ चक्रतुः किं महौजसौ ॥१०॥ सूत उवाच। दक्षस्य वचनं श्रुत्वा हर्षयुक्तेन चेतसा। जगाद तं महायोगी मुद्गलः परमार्थवित् ॥ ११ ॥ मुद्गल उवाच। स्वायंभुवमनोः पुत्रौ संजातौ पूर्णधार्मिकौ। प्रियव्रतोत्तानपादौ नाम्ना ख्यातौ प्रजापती ॥१२॥ जगाम साधनरतो वनं ज्येष्ठः प्रियव्रतः। देहादि नश्वरं मत्वाऽभूत्स खिन्नो मनुस्ततः ॥१३॥ जगाम नारदस्तत्र सहसा तं मनुर्जगौ। पुत्रं प्रियव्रतं विप्र बोधयस्व विधानतः ॥१४॥ तथेति नारदस्तत्र ययौ तस्य महाश्रमम्। तं दृष्ट्वोत्थाय राजर्षिः प्रणनाम कृतांजलिः ॥१५॥ स्वकीयाज्ञावशं पुत्रं मानसे वीक्ष्य संस्थितम्। तं जगाद महातेजा नारदो राजसत्तमम् ॥१६॥

नारद उवाच । शृणु पुत्र महाभाग प्रियव्रत महामते । देहादि नश्वरं सर्वं त्वया ज्ञातं महाद्भुतम् ॥१७॥ तथापि नरदेहोऽयमृणत्रयसमन्वितः । नरदेहकृतं कर्म तन्मूलं सकलं जगत् ॥१८॥ सर्वेषामन्नरूपोऽयं नरदेहो न संशयः । तस्य पोषणमत्यंतं कर्तव्यं देहधारिणा ॥ १९ ॥ स्वधर्मपालनेनैव वर्णाश्रमविधानतः । देहिना कृतपुण्येनान्नेन विश्वं प्रपोषितम् ॥ २० ॥ यज्ञादिभिर्ऋणं दैवं श्राद्धाद्यैश्चैव पैतृकम् । पुत्रोत्पादनमार्गेण मानुष्यं नाशमेष्यति ॥ २१ ॥ अधुना ऋणयुक्तस्त्वं वनं कस्मात्समागतः । कुरु राज्यं महाभाग स्वधर्मनिरतो मुदा ॥२२॥ पुत्रेषु राज्यमात्मीयं स्थापयित्वा च शाश्वतम् । पश्चात्त्वं वनमाविश्य योगाभ्यासरतो भव ॥२३॥ मुद्गल उवाच । नारदस्य वचः श्रुत्वा हर्षितो राजसत्तमः । उवाच तं मनोः पुत्रः प्रांजलिः श्रद्धयान्वितः ॥२४॥ प्रियव्रत उवाच । स्वामिन्विज्ञप्तुमिच्छामि वद मे त्वं महामते । केनोपायेन योगींद्र ब्रह्मभूतो भवेन्नरः ॥२५॥ नारद उवाच । शृणु पुत्र प्रवक्ष्यामि ब्रह्मभूयपदप्रदम् । मार्गं संसाध्य शांतिं च लभते मानवः स्वयम् ॥२६॥ गणेशं योगरूपं तं ज्ञात्वैव ब्रह्मनायकम् । ब्रह्मभूतो भवेज्जंतुः साधनेन महामते ॥२७॥ गणशब्दः समूहस्य वाचकः परिकीर्तितः । समूहा योगरूपाश्च बाह्यांतरविभेदतः ॥ २८ ॥ अन्नानां सकलानां च समूहेन्नमयं सुत । कथितं ब्रह्म वेदेषु एवं नानागणाः स्मृताः ॥२९॥ तेषां पतिं गणेशानं तं ज्ञात्वा योगिनः पुरा । शांतिं प्राप्ता विशेषेण शांतियोगमयं परम् ॥३०॥ अस्माकं कुलदेवत्वं संप्राप्तोऽसौ गजाननः । तमाराधय यत्नेन ततः क्षेमं भविष्यति ॥३१॥ गणेशो गणराजं संपूज्य वै भक्तिभावतः । बभूव ब्रह्मभूतश्च भक्त्यास्माकं पितामहः ॥३२॥ तस्य पुत्राः समाख्याता ब्रह्मविष्णुमहेश्वराः । सूर्यः शक्तिश्च पंचैते तं समाराध्य भोगिनः ॥३३॥ ततस्ते शांतिमत्यंतं प्राप्ता विश्वेश्वराः सुत । ब्रह्मणश्च वयं पुत्रा भजामस्तं गणाधिपम् ॥३४॥ ततो योगींद्रमुख्याश्च वयं जाताः प्रियव्रत । सर्वज्ञानसमायुक्ता बंधहीना विशेषतः ॥३५॥ तथा त्वमपि राजेंद्र गणेशं भज भावतः । तवातः सुलभं सर्वं भविष्यति सदानघ ॥३६॥ तत एकाक्षरं मंत्रं ददौ तस्मै महामुनिः । गणेशाराधनं सर्वं बोधयामास यत्नतः ॥३७॥ एतस्मिन्नंतरे तत्र ब्रह्मणा सह संगतः । स्वायंभुवो मनुः सुज्ञस्तौ दृष्ट्वा प्रणतौ सुतौ ॥३८॥ ब्रह्मणा बोधितोऽत्यंतं पुनः पौत्रः प्रियव्रतः । मनुना सहराजर्षिर्ययौ स्वनगरे तदा ॥३९॥ पुत्रौ स्वायंभुवो राज्ये समास्थाप्य वनं ययौ । योगेनाराधयामास गणेशं भक्तिसंयुतः ॥४०॥ क्रमेण पंचभूमीनां चित्तस्य परतो गतः । त्यक्त्वा चित्तं महायोगी ब्रह्मभूतो बभूव ह ॥४१॥ शांतियोगं समाश्रित्य ब्रह्मलोकं जगाम ह । तत्रैव

संस्थितोऽभूत्स गणेशभजने रतः ॥४२॥ प्रियव्रतः स्वयं राजा पालयामास मेदिनीम् । धर्मेण नीतिदानेन त्यागेन यश आर्जयत् ॥४३॥ स्वस्वधर्मरताः सर्वे जना वर्णाश्रमान्विताः । मुदिताः सत्यशीलाश्च स्थिते राज्ये प्रिय व्रते ॥४४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते प्रियव्रतराज्यप्राप्तिवर्णनं नाम नवमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । प्रियव्रतस्य पुत्राश्च दशोत्पन्ना महौजसः । तेजस्विनो धर्मशीला विख्याता बलवत्तराः ॥१॥ आग्नीध्र इध्मजिह्वश्च यज्ञबाहुस्तथा महान् । वीरो हिरण्यरेताश्च सवनो घृतपृष्ठकः ॥२॥ मेधातिथिर्वीतिहोत्रः कविः पितृसमा बभुः । कविः सवनवीरौ च न राज्ये दधिरे मतिम् ॥३॥ सप्तद्वीपेश्वरास्तेन सप्त पुत्राः कृताः परे । जंबुद्वीपेश्वरं पुत्रं आग्नीध्रमकरोन्नृपः ॥४॥ प्लक्षद्वीपेश्वरस्तेनेध्मजिह्वश्च कृतः सुतः । शालमले वै यज्ञबाहुं राजा तमभिषिक्तवान् ॥५॥ हिरण्यरेतसं चक्रे कुशद्वीपेश्वरं सुतम् । क्रौंचद्वीपेश्वरं चैव घृतपृष्ठं चकार ह ॥ ६ ॥ मेधातिथिं पतिं चक्रे शाकद्वीपस्य शाश्वतम् । पुष्करेशं स राजा तु वीतिहोत्रं चकार ह ॥ ७ ॥ ततः प्रियव्रतो राजा वनं प्राप्तः प्रतापवान् । नारदाद्योगमास्थाय गाणपत्यो बभूव ह ॥ ८ ॥ अंते गणेशरूपश्च संजातो योगसेवया । प्रियव्रतसमो राजा न भूतो न भविष्यति ॥ ९ ॥ पुष्करे वीतिहोत्रस्य द्वौ पुत्रौ संबभूवतुः । रमणो धातकिर्नाम महावीर्यौ सुधर्मिणौ ॥ १० ॥ रमणस्य स्मृतं वर्षं तन्नाम्ना च महात्मनः । धातकेश्चापि खंडोऽयं बुधैर्धातकिरुच्यते ॥ ११ ॥ एकोद्रिर्मानसाख्यश्च तन्मध्ये वलयाकृतिः । योजनानां सहस्राणि दशोत्सेधः समान्ततः ॥ १२ ॥ दशसाहस्रवर्षाणि जीवनं तत्र विद्यते । तत्र ब्रह्मा स्वयं साक्षाद् द्वीपे तिष्ठति पुष्करे ॥ १३ ॥ तं सुरा मानवाद्याश्च पूजयंति निरंतरम् । स्वादूदकेन वै दक्ष वृतो द्वीपः समंततः ॥ १४ ॥ योजनानां चतुःषष्टिलक्षं सिंधुश्च सोऽद्भुतः । तत्रांते पर्वतो रम्यो लोकालोकाह्वयः स्मृतः ॥१५॥ एकत्र लोकसंवास एकतो लोकवर्जितः । लोकालोकाचलादत्र प्रकाशश्चंद्रसूर्ययोः ॥ १६ ॥ तस्मात्परत्र भो दक्ष अंधकारः समंततः । लोकालोकाचलस्तेन कथितो मुनिभिः पुरा ॥१७॥ पुष्करे बहवो नद्यो मानसाचलसंभवाः । स्वादूदकाः पुण्यरूपा निर्मलाः सर्वभावनः ॥ १८ ॥ तासां जलस्य पानेन रोगा नश्यंति दुःखदाः ।

क्लमस्वेदादिकं सर्वं विद्यते न कदाचन ॥१९॥ शाकद्वीपेश्वरस्याथ सप्तपुत्रास्तथाऽभवन् । पवमानस्ततः पूर्वौ पुरोजवमनोजवौ ॥२०॥ धूम्रानीकश्चित्ररेफो बहुरूपो जगद्धरः । सप्तखण्डाश्च तद्द्वीपे पर्वताः सप्त मुख्यकाः ॥२१॥ पुरोजवस्य तन्नाम्ना वर्षं प्रथममुच्यते । मनोजवस्य तन्नाम्ना खंडमन्यत्प्रकथ्यते ॥ २२ ॥ पवमानस्य खंडं वै पावमानात्मकं तथा । धौम्रानीकं चतुर्थं वै पंचमं चैत्ररेफकम् ॥२३॥ बहुरूपस्य तन्नाम्ना वैश्वधारं च सप्तमम् । पालयामासुरव्यग्राः स्वं स्वं खंडं प्रजापते ॥२४॥ दशसाहस्रवर्षाणि तत्र वै जीवनं स्मृतम् । नराणां दोषहीनानां सदा यौवनशालिनाम् ॥२५॥ दधिमंडोदकाख्येन संवृतो द्वीप उत्तमः । तावन्मानेन युक्तेन योजनानां प्रजापते ॥२६॥ विस्तारो योजनानां च द्वात्रिंशल्लक्षसंमितः । द्वीपस्य च नरास्तत्र यजंते वायुमीश्वरम् ॥२७॥ क्रौंचद्वीपस्य विस्तारो लक्षषोडशकं मुने । योजनानां समाख्यातः खण्डास्तत्र च सप्त वै ॥२८॥ पर्वताः सप्त तत्रैव नद्यः सप्त प्रकीर्तिताः । अन्याः क्षुद्रस्वरूपाश्च नद्यः सर्वत्र संस्थिताः ॥२९॥ घृतपृष्ठसुतास्तत्र सप्त खंडेश्वराः स्मृताः । स्वस्वनाम्ना समाख्याताः खंडास्तेषां प्रजापते ॥३०॥ आमोमधुरुहः सप्त घृतपृष्ठः सुधात्मकः । भ्राजिष्ठो लोहितो वर्णवनस्पतिरिति स्मृताः ॥३१॥ एकादशसहस्रं तु वर्षाणां जीवनं नृणाम् । यजंत्यापोमयं तत्र सदा नारायणं जनाः ॥३२॥ क्षीरोदेन समंताच्च संवृतो द्वीप आदरात् । तावद्विस्तारभूतश्च श्वेतद्वीपोऽपि स स्मृतः ॥३३॥ हिरण्यरेतसः सप्त कुशद्वीपपतेः सुताः । वसुश्च वसुदानश्च दृढरुचिस्तृतीयकः ॥३४॥ सत्यव्रतो नाभिगुप्तो विविक्तो नाम देवकः । स्वस्वनाम्ना च तेषां वै खंडाः सप्त प्रजापते ॥३५॥ तत्रैव पर्वताः सप्त मर्यादागिरयः स्मृताः । नद्यः सप्त महावेगाः सुजला दुःखहारकाः ॥३६॥ दशसाहस्रवर्षाणि जीवनं तत्र विद्यते । योजनानां कुशद्वीपश्चाष्टलक्षप्रमाणकः ॥३७॥ घृतोदेनावृतः सम्यक् तावदायामरूपिणा । सर्वतस्तत्र देवेशं हव्यवाहं यजंति ते ॥३८॥ शाल्मलद्वीपनाथस्य यज्ञबाहोः सुताः स्मृताः । सुरोचनः सौमनस्यो रमणो देववर्षकः ॥३९॥ आप्यायनः पारिभद्रो विज्ञातः सप्तमः स्मृतः । तत्तन्नाम्ना च विख्याताः खंडास्तेषां प्रजापते ॥४०॥ नद्यः सप्त महावेगाः पर्वताः सप्त तत्र वै । योजनानां चतुर्लक्षं विस्तारस्तस्य सर्वतः ॥४१॥ सुरोदेनावृतः सोऽपि तावदायामरूपिणा । नराणां जीवनं तत्राष्टसहस्रसमाः किल ॥४२॥ प्लक्षद्वीपेश्वरस्याथेध्मजिह्वस्य सुतास्तथा । शिवो यवयसश्चैव क्षांतक्षेमसुभद्रकाः ॥४३॥ अमृतोऽभयसंज्ञश्च सप्तैते परिकीर्तिताः । स्वस्वनामांकिताः खंडास्तेषां तत्र

प्रकीर्तिताः ॥४४॥ गिरयः सप्त तत्रैव नद्यः सप्त महाजलाः । नराणां जीवनं तत्र पंचवर्षसहस्रकम् ॥४५॥ द्विलक्षयोजनान्येव विस्तारस्तस्य सर्वतः । इक्षूणां च रसोदेन तावता परिसंवृतः ॥४६॥ लक्षद्वीपे यजंते वै सूर्यं धर्मपरायणाः । वृष्टिसंस्राविणं देवं तेजोरूपेण संस्थितम् ॥४७॥ प्लक्षद्वीपादिषु ज्ञेयं शाकद्वीपांतिमेषु वै । वर्णाश्रमविभागेन स्वधर्मे संस्थिता जनाः ॥४८॥ पुष्करे सर्वधर्मज्ञा एकमार्गं समाश्रिताः । एकवर्णाश्रमास्तत्र समशीलाः प्रजापते ॥ ४९ ॥ न तेषु युगमानं च युगधर्मः स्वभावतः । सदा समानः कालश्च स्वधर्मस्तादृशः स्मृतः ॥५०॥ न लोभो न च मात्सर्यं परस्परहिते रताः । नरास्ते पुण्यशीला वै स्वदाररततोषिणः ॥५१॥ कर्मणां फलभोक्तारो तेषु द्वीपेषु शौनक । बभूवुर्भाविकाः सर्वे देववत् क्रीडने रताः ॥५२॥ स्वस्वद्वीपस्थितं देवमभजंस्ते ततः सुखम् । संप्रापुस्ते जनाः सर्वे सालोक्यादिचतुष्टयम् ॥५३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरित्रे द्वीपवर्णनं नाम दशमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । जंबुद्वीपेऽश्वरस्याथ नवपुत्रा बभूविरे । नाभिः किंपुरुषश्चैव तथा हरिरिलावृतः ॥ १ ॥ हिरण्मयः कुरू रम्यो भद्राश्वः केतुमालकः । स्वस्वनामांकितान् खंडान् पिता तेभ्यो ददौ स्वयम् ॥२॥ एवं दत्त्वा च सप्तैते प्रियव्रतसुतास्ततः । ययुर्वनं तपस्तप्त्वा गाणपत्या बभूविरे ॥ ३ ॥ ययुर्गाणेश्वरं धाम ते त्वंते ब्रह्मवादिनः । पुनरावृत्तिशून्यं यद्योगाभेदं प्रभावतः ॥ ४ ॥ जंबुद्वीपस्य विस्तार एकलक्षं समंततः । योजनानां तथा दक्ष लवणोदेन संवृतः ॥ ५ ॥ तत्र मध्ये महाशैलो मेरुर्हेममयः शुभः । नानाधातुविचित्रांगो नानौषधिसमन्वितः ॥ ६ ॥ नदीभिः सुजलाभिश्च युतोऽसौ कनकाचलः । गुहाभिश्च तथा दक्ष नानाजंतुसमन्वितः ॥ ७ ॥ लक्षयोजन उत्सेधस्तस्य प्रोक्तो महात्मनः । षष्टिसाहस्रमेतस्य योजनानां प्रमाणकम् ॥ ८ ॥ बहिस्थितस्तथा द्वात्रिंशत्सहस्रमधःस्थितः । अष्टसाहस्रकं चैव योजनानां समंततः ॥ ९ ॥ अध ऊर्ध्वविभेदेन स्थितोऽसौ कनकाचलः । पद्माकारस्वरूपेण भूमिमध्ये स्थितो बभौ ॥ १० ॥ पद्मपत्रसमानेन ह्याकारेण व्यवस्थिताः । पर्वताः परितस्तस्य नानाधातुमया बभुः ॥ ११ ॥ तेषु सर्वत्र देवानां गुह्यकानां च पक्षिणाम् । योगिनां रक्षसां चैव सिद्धानां च महात्मनाम् ॥ १२ ॥ नागेंद्राणां मुनींद्राणां गंधर्वाणां प्रजापते । पिशाचानां च भूतानां

निवासा अद्भुता बभुः ॥ १३ ॥ उद्यानानि विचित्राणि देवक्रीडनकानि च। जराशोकहराण्येव जलानि खलु सर्वतः ॥ १४ ॥ कैलासाद्यष्ट शैलेन्द्रा दिक्षु तस्य व्यवस्थिताः । तेषु रुद्रादिदेवेंद्रा वसंति दिगधीश्वराः ॥ १५ ॥ मध्ये स्थानं महारण्यं ब्रह्मणः परमेष्ठिनः । इत्येवं सर्वदेवानां सुखदः स गिरिर्बभौ ॥ १६ ॥ तस्य दक्षिणभागे च द्वीपखंडास्त्रयोऽभवन् । उत्तरे च तथा खंडास्त्रयस्तस्य प्रकीर्तिताः ॥ १७ ॥ पूर्वपश्चिमभागे द्वौ वर्षौ तस्य हि संमतौ । मध्ये समंततो वर्ष एकस्तस्य प्रजापते ॥ १८ ॥ एवं खंडाः समाख्याता नव द्वीपे च मध्यमे । हिमाचलादयस्तेषु मर्यादागिरयः स्मृताः ॥ १९ ॥ द्विसहस्रं समुत्सेधो योजनानां प्रजापते । अष्टौ चैव प्रविस्तारा महाशैला समंततः ॥ २० ॥ सहस्रं योजनानां च खंडे खंडे च विस्तरः । प्रत्येकं भिन्नभावेन तेषु लोका वसंति च ॥ २१ ॥ वर्षेषु पर्वताश्चैव नद्यो नानाविधाः स्मृताः । तत्र सर्वे जना दक्ष वसंति सुखभोगिनः ॥ २२ ॥ अजनाभविहीनाश्च खंडा अष्टौ प्रकीर्तिताः । तेषु स्वाभाविकी सिद्धिः स्थिरभावेन संस्थिता ॥ २३ ॥ सदा यौवनयुक्ताश्च नरा नार्यः सुरूपिणः । देववत्सुखभोक्तारो बभुः साधुगुणान्विताः ॥ २४ ॥ परस्परेषु संसक्ताः समकालप्रभोगिनः । वर्णाश्रमरताः सर्वे धर्मयुक्ता दयान्विताः ॥ २५ ॥ न तत्र युगधर्मश्च सदा सामान्यधर्मिणाम् । शीतोष्णादिभवं दुःखं नास्ति खंडेषु मानद ॥ २६ ॥ एकादशशतान्येव सहस्रं तेषु कुत्रचित् । शतानि द्वादशाप्येव त्रयोदशशतानि च ॥ २७ ॥ शतानि कुत्रचित्पंच दशाप्येव प्रजापते । शतानि पंचवर्षाणि जीवंति किल मानवाः ॥ २८ ॥ नाभेः खंडोऽजनाभश्च हिमाचलसमीपगः । कर्मात्मकः समाख्यातः सर्वमान्यो बभूव ह ॥ २९ ॥ तत्र कर्माणि कृत्वा तु नरा यांति समंततः । द्वीपेषु खंडेषु तथा तथा पातालभूमिषु ॥ ३० ॥ स्वर्गेषु भोगप्राप्त्यर्थं कर्मणां फलमेव च। तेषु भुक्त्वा पुनर्ह्यत्र यांति कर्मार्थमंजसा ॥ ३१ ॥ अथवा पापकर्माणि कृत्वात्रैव व्रजंति ते । नरकेषु नरा नार्यः पुनरत्र प्रयांति च ॥ ३२ ॥ अत्र योगेन योगींद्रो भवेद्वै नात्र संशयः । गाणपत्यस्वरूपं च तद्भक्त्या लभते नरः ॥ ३३ ॥ अतः श्रेष्ठतमः प्रोक्तो वर्षोऽयं च हिमालयः । सर्वदातृत्वमापन्नो मान्यस्तेषां प्रजापते ॥ ३४ ॥ भोगेषु स्वल्परूपोऽयं सर्वेभ्यः कथितो बुधैः । शीतोष्णादिसमायुक्तो नानारोगसमन्वितः ॥ ३५ ॥ तत्र वर्णाश्च चत्वारस्तेषां वै व्यभिचारतः । वर्णा नानाविधाः प्रोक्ता भिन्नधर्मात्मकाः प्रभो ॥ ३६ ॥ अस्मिन् युगभवं मानं युगधर्माः समंततः । नराः प्रकृतिभिन्नाश्च स्वार्थादिकसमन्विताः ॥ ३७ ॥ बहवोऽग्रे बभुः शैला विंध्यसह्याद्रिकादयः । तेभ्यः प्रसूता नद्यश्च बह्व्यः

सर्वत्र संस्थिताः ॥ ३८ ॥ पुण्यदाः स्नानमात्रेण मिष्टतोया महामते । नराः कर्मकरास्तत्र त्रिविधाचारसंयुताः ॥ ३९ ॥ तीर्थानि सर्वदेवानां स्थानानि त्वग्रजन्मनाम् । तत्सेवकानामधिककर्मोत्थफलदानि वै ॥ ४० ॥ एवमाद्यगुणैर्युक्तो जना भो वर्ष एव च । कर्मणां भरणात्सुज्ञैर्भारतोऽयं प्रकीर्तितः ॥ ४१ ॥ एतद्भूमंडलं कृत्स्नं कथितं ते समासतः । श्रवणात्पठनाच्चापि पापापहरणं भवेत् ॥ ४२ ॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरित्रे भूगोलवर्णनं नामैकादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । प्रसंगात्सर्वलोकानां वच्मि वै संस्थितिं पराम् । स्वर्गाणामपि संक्षेपान्मुख्यानां कथयामि ते ॥१॥ भूर्लोकोऽथ भुवर्लोकः स्वर्लोकश्च महो जनः । तपोलोकस्तथासत्यो लोकास्त्वंडोद्भवाः स्मृताः ॥२॥ अर्यमा चन्द्रमा यावत्किरणैरवभासते । तावान् भूर्लोक आख्यातः पुराणेषु प्रजापते ॥३॥ पद्भ्यां नरैर्भवेद्गम्यः स एवं शास्त्रसंमतः । भूर्लोकः कथितो दक्ष सप्तद्वीपात्मकः खलु ॥४॥ प्रमाणमखिलं यावद्भूर्लोकस्य समंततः । तावच्चैव भुवर्लोके परिमाणं च कथ्यते ॥ ५ ॥ भूर्लोकात्सूर्यपर्यंतं भुवर्लोकः प्रकीर्तितः । तस्माच्च ध्रुवपर्यंतं स्वर्लोकः कथितो बुधैः ॥६॥ तत्र वायोः समाख्याता नेमयोऽष्टविधाः प्रभो । आवहः प्रवहश्चैव तथैवान्नवहः परः ॥ ७ ॥ संवहो विवहश्चाथ तदूर्ध्वं च परावहः । तथा परिवहश्चोर्ध्वं वहस्तस्मात्परः स्मृतः ॥ ८ ॥ भूमेर्योजनलक्षे तु भानोर्वै मंडलं स्थितम् । लक्षे दिवाकरात्प्रोक्तं चंद्रमंडलमास्थितम् ॥ ९ ॥ नक्षत्रमंडलं कृत्स्नं तस्माल्लक्षे प्रकाशते । द्वे लक्षयोजने तस्मात् ग्रहाणां मंडलं स्मृतम् ॥१०॥ तस्माल्लक्षे ऋषीणां यन्मंडलं च प्रकाशते । ऋषीणां मंडलादूर्ध्वं लक्षमात्रे स्थितो ध्रुवः ॥११॥ मेढीभूतः समस्तस्य ज्योतिश्चक्रस्य वै ध्रुवः । वायुरश्मिधरः सोऽपि चालयन् ज्योतिषां गणम् ॥ १२ ॥ दशयोजनसाहस्रं मंडलं भास्करस्य च । तथा द्वादशसाहस्रं मंडलं शशिनः स्मृतम् ॥ १३ ॥ सूर्याधस्तात् स्थितो राहुर्दशसाहस्रयोजनः । त्रयोदशसहस्रं च मंडलं तस्य कथ्यते ॥१४॥ तमोमयं तमःस्थानं गत्या पर्वणि धावति । छायया सूर्यचन्द्रौ वा आच्छादयति सत्वरम् ॥१५॥ तदेव ग्रहणं दक्ष कथ्यते शास्त्रवादिभिः । अखिलं तमसा व्याप्तं मंडलं रविसोमयोः ॥१६॥

चंद्रस्य षोडशो भागो मंडलं भार्गवस्य च । भार्गवात्पादहीनं यत् द्विज तच्च बृहस्पतेः ॥ १७ ॥ बृहस्पतेः पादहीनं मंडलं भौमसौरयोः । विस्ताराच्च तयोः पादहीनं सौम्यस्य मंडलम् ॥१८॥ तारानक्षत्ररूपाणि हीनानि तु परस्परात् । शतानि पंचचत्वारि त्रीणि द्वे योजनानि वै ॥ १९ ॥ सर्वेभ्योऽपि निकृष्टानि ताराणां मंडलानि तु । योजनाध्यर्धमात्राणि तेभ्यो न्यूनं न विद्यते ॥२०॥ उपरिष्टात् त्रयस्तेषां ग्रहा ये दूरसर्पिणः । सौरांगिराश्च भौमश्च विज्ञेया मंदगामिनः ॥२१॥ तेभ्योधस्ताच्च चत्वारः पुनरन्ये महाग्रहाः । सूर्यः सोमो बुधश्चैव भार्गवश्चैव शीघ्रगाः ॥२२॥ अयने द्वे समास्थाय भानुश्चरति सर्वदा । प्रभुः सर्वग्रहाणां स सर्वाधस्तात्प्रसर्पति ॥२३॥ विस्तीर्णं मंडलं कृत्वा चरत्यूर्ध्वं ततः शशी । नक्षत्रमंडलं कृत्स्नं सोमादूर्ध्वं प्रसर्पति ॥२४॥ नक्षत्रेभ्यः कविश्चोर्ध्वं तस्मादूर्ध्वं बुधः स्मृतः । भौमः सोमसुतादूर्ध्वं तस्मादूर्ध्वं बृहस्पतिः ॥२५॥ शनैश्चरस्ततो ह्यूर्ध्वं तस्मात् सप्तर्षिमंडलम् । ऋषीणां चैव सप्तानां ध्रुवश्चोर्ध्वं व्यवस्थितः ॥२६॥ नवयोजनसाहस्रो भास्करस्य रथः स्मृतः । ईषादंडस्तथैवास्य द्विगुणो वै प्रजापते ॥ २७ ॥ लक्षप्रमाणमक्षश्च ध्रुवाधारेण संस्थितः । द्वितीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले ॥२८॥ चक्रं राशिमयं तस्य द्वादशारं प्रकीर्तितम् । गायत्रीमुख्यकास्तस्य सप्त छंदोमया हयाः ॥२९॥ दक्षिणायनमासाद्य क्षिप्रं क्षिप्रं प्रसर्पति । यदोत्तरगतो भानुरक्षिप्रं चैव सर्पति ॥३०॥ मानसोपरि माहेंद्री प्राच्यां दिशि महापुरी । दक्षिणे धर्मराजस्य वरुणस्य च पश्चिमे ॥३१॥ उत्तरे तु कुबेरस्य तन्नामानि निबोध मे । अमरावती संयमनी सुखा चैव विभा क्रमात् ॥ ३२ ॥ ज्योतिषां चक्रमादाय देवदेवः प्रजापतिः । उदये च महेन्द्रस्य नगर्यां स प्रकाशते ॥३३॥ यमपुर्यां च मध्याह्ने सायाह्ने वरुणस्य तु । निशामध्ये च कौबेर्यामेवं चरति भास्करः ॥ ३४ ॥ उदयास्तमयेनायं सर्वकालसमानगः । अशेषासु दिशास्वेष सर्वासु विदिशासु च ॥ ३५ ॥ कुलालचक्रवल्लोके भ्रमत्येवं दिनेश्वरः । स्वस्वबोधसमानं च भिन्नं कालं प्रकाशयन् ॥३६॥ करोत्यहस्तथा रात्रिं किरणैः स्थापयन् प्रजाः । दिवाकरकरैरेतत् पूरितं भुवनत्रयम् ॥ ३७ ॥ जलं स्थलं नभः प्रोक्तं लोकानां स्थानमुत्तमम् । आदित्यमूलमेतच्च त्रिविधं नात्र संशयः ॥ ३८ ॥ भवत्यस्माज्जगत्कृत्स्नं सदेवासुरमानुषम् । मध्यभागे तदाधारमंते तत्र प्रतिष्ठितम् ॥ ३९ ॥ ब्रह्मविष्णुमहेशेंद्रचंद्रताराग्निनागजम् । वीरुद्धिप्रोदकानां यत्तेजस्तद्रविसंभवम् ॥ ४० ॥ द्युतिर्द्युतिमतां

कृत्स्ना यत्तेजः सार्वलौकिकम् । विभज्य स्वयमेवेशः क्रीडति स्म दिवाकरः ॥४१॥ सर्वात्मा सर्वलोकेशो गणेशांशः प्रभाकरः । मूलं त्रिभुवनस्यापि कर्मरूपी च दैवतम् ॥४२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते सूर्यमंडलवर्णनं नाम द्वादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । रवेः कलांशसंभूता द्वादशान्ये च भानवः । द्वादशस्वेव मासेषु ते तपंति रथस्थिताः ॥१॥ सरथोऽधिष्ठितो देवैरादित्यैर्मुनिभिः तथा । गंधर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥२॥ धातार्यमाऽथ मित्रश्च वरुणः शक्रसंज्ञितः । विवस्वानथ पूषा च पर्जन्यश्चांशुरेव च ॥३॥ भगस्त्वष्टाऽथ विष्णुश्च द्वादशैते च भानवः । तपंति रथसंस्था वै वसंतादिक्रमेण च ॥ ४ ॥ पुलस्त्यः पुलहोऽथात्रिर्वसिष्ठश्चांगिरा भृगुः । भरद्वाजो गौतमश्च कश्यपः क्रतुरेव च ॥५॥ जमदग्निः कौशिकोऽथ मुनयो ब्रह्मवादिनः । स्तुवंति पुरतो देवं छंदोभिर्विविधैस्तस्था ॥ ६ ॥ रथकृच्च रथौजा वै रथचित्रः स्वबाहुकः । रथस्वनोऽथ वरुणः सुषेणः सेनजित्तथा ॥ ७ ॥ तार्क्ष्यश्चारिष्टनेमिर्वै रथजित्सत्यजित्तथा । ग्रामण्यो देवदेवस्य कुर्वतेऽभीषुसंग्रहम् ॥ ८ ॥ अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा । सर्पो व्याघ्रस्तथा व्याधो वातो विद्युद्दिवाकरः ॥ ९ ॥ ब्रह्मोपेतश्च भो दक्ष यज्ञोपेतस्तथापरः । राक्षसप्रवरा एते प्रयांति पुरतः क्रमात् ॥ १० ॥ वासुकिः कंकनीरश्च तक्षको नागमुख्यकः । एलापत्रः शंखपालस्तथैरावतसंज्ञितः ॥ ११ ॥ धनंजयो महापद्मस्तथा कर्कोटकोऽपरः । कंबलाश्वतरौ चैव वहंत्येनं प्रभाकरम् ॥ १२ ॥ नागा द्वादशमासेषु प्रजाधीश यथाक्रमम् । तुंबरुर्नारदो हाहा हूहूर्विश्वावसुस्तथा ॥१३॥ उग्रसेनो वसुरुचिरवीवसुरथापरः । चित्रसेनस्तथोर्णायुर्धृत-राष्ट्रः प्रजापते ॥ १४ ॥ सूर्यवर्चा द्वादशैते गंधर्वा गायनाः पुरः । घनस्तनी च रंभा वै तथान्या पुंजिकस्थली ॥ १५ ॥ मेनका सहजन्या च प्रम्लोचाऽथ प्रजापते । अनुम्लोचा घृताची च विश्वाची चोर्वशी परा ॥ १६ ॥ अन्या च पूर्वचित्तिर्या भास्करं च तिलोत्तमा । तांडवैस्तोषयंत्येनं वसंतादिषु वै क्रमात् ॥ १७ ॥ एवं देवा वसंत्यर्के द्वौ द्वौ मासौ क्रमेण तु । सूर्यमाप्याययंत्येनं तेजसा तेजसां निधिम् ॥१८॥ ग्रथितैः स्ववचोभिस्तं स्तुवंति मुनयो रविम् ।

गंधर्वाप्सरसश्चैनं गेयैर्नृत्यैरुपासते ॥ १९ ॥ ग्रामणीर्यक्षभूतानि कुर्वतेऽभीषुसंग्रहम् । सर्पा वहंति देवेशं यातुधानाः प्रयांति तम् ॥२०॥ वालखिल्या नयंत्यस्तं परिवार्योदयाद्रविम् । एते तपंति वर्षंति भांति वांति सृजंति च ॥२१॥ भूतानामशुभं कर्म व्यपोहंत्यनुकीर्तिताः । एते सहैव सूर्येण भ्रमंति दिवि सर्वदा ॥ २२ ॥ विमानेऽधिष्ठिता नित्यं कामगे वातरंहसि । वर्षंतश्च तपंतश्च ह्लादयंतः सदा प्रजाः ॥ २३ ॥ गोपायंतीह भूतानि सर्वाण्येते युगक्षये । एतेषां रूपमास्थाय सूर्यस्तपति नित्यशः ॥ २४ ॥ अहोरात्रव्यवस्थानां कारणं स प्रजापतिः । पितृदेवमनुष्यादि-नित्यमाप्याययेद्रविः ॥२५॥ एवमेष गणेशांशो देवदेवो दिवाकरः । करोति नियतं कालं कालात्मा भगवान् स्वयम् ॥ २६ ॥ अन्ये चाष्टग्रहाः प्रोक्ता ध्रुवे बद्धा भ्रमंति ते । दिवाकरकरैः पुष्टा तं रविं वातरश्मिभिः ॥ २७ ॥ रथस्त्रिचक्रः सोमस्य कुंदाभास्तस्य वाजिनः । वामदक्षिणतो युक्ता दश ते वै क्षपाकराः ॥ २८ ॥ वीथ्याश्रयेण नक्षत्रं चरत्येव रविर्यथा । ह्रासवृद्धिसमायुक्तो ध्रुवाधारेण सर्वदा ॥२९॥ स सोमः शुक्लपक्षे तु भास्करे परतः स्थिते । आपूर्यते कलामात्रः सततं वर्धते ततः ॥३०॥ कृष्णे पीतं सुरैः सोममाप्याययति नित्यदा । एकेन रश्मिना दक्ष सुषुम्नाख्येन भास्करः ॥ ३१ ॥ एवं सूर्यस्य वीर्येण सोमस्याप्यायिता तनुः । दृश्यते पौर्णमासीस्था संपूर्णा दिवसैः क्रमात् ॥३२॥ संपूर्णमर्धमासेन तं सोमममृतात्मकम् । पिबंति देवताः सर्वाः क्रमेणामृतभोजिनः ॥३३॥ ततः पंचदशे भागे किंचिच्छेषे कलात्मके । पितरश्चापराह्णे तं जघन्यं पर्युपासते ॥३४॥ पिबंति द्विलवं कालं शिष्टा तस्य कला तु या । स्वधामृतमयी पुण्या सा चंद्रस्यामृतात्मिका ॥३५॥ निःसृतं तदमायां तु गभस्तिभ्यः स्वधामृतम् । मासतृप्तिकरं तेषां पितरः संति निर्वृताः ॥३६॥ न सोमस्य विनाशः स्यात्सुधादेवस्य पानतः । एवं सूर्यनिमित्तोऽस्य क्षयो वृद्धिश्च सर्वदा ॥३७॥ सोमपुत्रस्य सिंहैश्च चतुर्भिर्वायुवेगिभिः । स्यंदनस्तैः समायुक्त-स्तेनासौ याति सर्वतः ॥३८॥ भार्गवस्य तथाष्टाश्वः स्यंदनो हेमनिर्मितः । अष्टाभिरपि मेषैश्च रथो भौमस्य शोभनः ॥३९॥ बृहस्पतेश्च रक्ताश्वैरष्टभिर्हेमनिर्मितः । रथोऽष्टनीलगृध्रैश्च मंदस्यायसनिर्मितः ॥ ४० ॥ स्वर्भानोः कृष्णसिंहैश्च युक्तः केतोः कपोतकैः । एते नवग्रहाणां वै समाख्याता महारथाः ॥४१॥ सर्वे ध्रुवे समाबद्धा वातरश्मिभिरादरात् । ग्रहर्क्षताराधिष्ण्यानि ध्रुवे बद्धानि सर्वदा ॥४२॥ भ्रमति भ्रामयत्येतान् सर्वांशानिलरश्मिभिः । अतो ध्रुवाधारमिदं ज्योतिश्चक्रं प्रजापते ॥ ४३ ॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते नवग्रहरथादिवर्णनं नाम त्रयोदशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ध्रुवादूर्ध्वं महर्लोकः कोटियोजनदूरगः । कल्पाधिकारिणस्तत्र वसंति सुखभोगिनः ॥१॥ जनलोको महर्लोकात् कोटियोजनदूरगः । सनकाद्याः स्थितास्तत्र त्रसरेणुविमानगाः ॥२॥ जनलोकात्तपोलोकः कोटियोजनदूरगः । वैराजास्तत्र वै देवाः स्थिता भयविवर्जिताः ॥३॥ सत्यलोकस्तपोलोकात्कोटियोजनदूरगः । अपुनर्भवरूपा च ब्रह्मणो वसतिः परा ॥४॥ तत्र लोकगुरुर्ब्रह्मा विश्वात्मा विश्वभावनः । आस्ते स योगिभिर्नित्यं पीत्वा योगामृतं परम् ॥५॥ वसंति यतयस्तत्र नैष्ठिका ब्रह्मचारिणः । व्रतिनस्तापसाः सिद्धा याजकाः परमेष्ठिनः ॥६॥ द्वारं तद्योगिनामेकं गच्छतां गणपं परम् । न तद्वर्णयितुं शक्यं ज्वालामालासमाकुलम् ॥७॥ तस्मादूर्ध्वं निरालंबं विश्वरूपाविवर्जितम् । सत्यलोकांतमेतद्वै वैराटं रूपमुत्तमम् ॥८॥ पंचकोटियुतं पूर्णं तस्माद्दशगुणा मही । ब्रह्माकारा च विज्ञेया पंचाशत्कोटिविस्तरा ॥९॥ विधेर्लोकात्कोटियुग्मे योजनानां प्रजापते । शक्तिलोको निराधारो ज्योतिर्मयविराजितः ॥१०॥ तेजःपुंजमये दक्ष महामायासमाश्रिते । निष्कामाः शक्तिभक्ता ये तत्र गच्छंति योगिनः ॥११॥ दशसाहस्रविस्तारे समंताज्जनसंकुले । योजनानां महाभाग शक्तयस्तत्र संस्थिताः ॥१२॥ स्वतेजसा विनिर्माय पुरुषान् समरूपिणः । तैः समं क्रीडने सक्ताः स्त्रीभावेन जगन्मया ॥१३॥ तस्मात्कोटिचतुष्के च सूर्यलोकः पुरातनः । योजनानां महातेजः पुंजरूपो विराजते ॥१४॥ निराधारे सदा नित्ये निष्कामास्तत्र यांति वै । शुक्लगत्या महाभागाः साक्षाद्भानुनिवासिनः ॥१५॥ अन्ये सूर्यस्य ये भक्ता निष्कामभजने रताः । तत्र गच्छंति ते दक्ष भानुतेजःसमप्रभाः ॥१६॥ तस्यापि विस्तरस्तावान् शक्तिलोकसमेन वै । तत्र क्रीडति यो भानुः पुरुषाकारसंस्थितः ॥१७॥ स्ववामांगाच्च निर्माय मायां कर्ममयीं प्रभुः । संज्ञां तया सदा रेमे पुरुषो ब्रह्मसंज्ञितः ॥१८॥ तस्माद्योजनकोटिष्वष्टासु विष्णुः समास्थितः । सदाविकुंठवासीय आनंदमयमूर्तिमान् ॥१९॥ विस्तारस्तस्य लोकस्य विकुंठस्य प्रमाणतः । अयुतं योजनानां च समंताच्च विराजते ॥२०॥ निराधारे सदा नित्ये ज्योतीरूपमये परे । तत्र गच्छंति निष्कामा वैष्णवा भक्तितत्पराः ॥२१॥ सदानंदसमायुक्तास्तत्र नित्यसुखे रताः । जनास्तिष्ठंति नार्यश्च स्वेच्छागतिविहारिणः ॥२२॥ वामभागात्स निर्माय भोगलक्ष्मीं प्रजापते । दक्षिणांगात् मुक्तिलक्ष्मीं ताभ्यां क्रीडति सर्वदा ॥२३॥ सदानंदमयः साक्षात् विष्णुः परमधर्मवित् । द्विविधं मायया कृत्वा खेलति स्वेच्छया प्रभुः ॥२४॥ तस्मात्षोडशसंख्यासु योजनानां च कोटिषु । दूरे शंकरलोकश्च कैलासः परमाद्भुतः ॥२५॥

निराधारे सदा लोके मोहहीने सुखप्रदे । निष्कामाः शिवभक्ताश्च तत्र गच्छंति मानवाः ॥२६॥ ज्योतिर्मयस्वरूपे च सदा कल्याणदायके । लोके तत्र स्वयं शंभुर्वसति स्वेच्छया मुने ॥२७॥ अयुतं योजनानां च तस्य विस्तार एव च । तत्र योगेन योगज्ञः शंकरः क्रीडति प्रभुः ॥२८॥ वामांगं प्रकृत्याकारं दक्षिणांगं प्रजापते । पुरुषाकारमेतस्य शंकरस्य महात्मनः ॥२९॥ संयोगे च तयोर्दक्ष आनंदः परिकीर्नितः । नारायणमयी शक्तिरर्धनारीनरः शिवः ॥३०॥ सा शक्तिस्तस्य देवस्य त्रिधा रूपधरा बभौ । कृता भिन्ना शिवेनापि जगदानंददायिनी ॥३१॥ तया व्यक्तो महादेवो मोहहीनः स्वभावतः । क्रीडत्यनारतं दक्ष मायाधारः स्वलोकगः ॥३२॥ तस्याः परं पृथिव्यास्तु ब्रह्म स्वानंदसंज्ञितम् । तत्पदान्न परं किंचिद्वेदादौ सुप्रतिष्ठितम् ॥३३॥ स्वसंवेद्यं हि यद्ब्रह्म चतुर्धा तद्बभौ स्वयम् । चतुर्णां तत्र संयोगस्तन्मयः कथितो बुधैः ॥३४॥ अव्यक्तं शिवसंज्ञं च ब्रह्म निर्मोहरूपकम् । तस्मात् समं तथा ब्रह्म वैष्णवं परिकीर्तितम् ॥३५॥ तस्मादात्मस्वरूपं यत् सूर्याकारं च तत्स्मृतम् । तस्मादसन्मयं ब्रह्म शक्तिरूपेण संस्थितम् ॥३६॥ तेषामभेदसंप्राप्तिः स्वानंदः परिकीर्तितः । एवं तत्त्वेषु सर्वेषु स्वस्वस्वानंद उच्यते ॥३७॥ ब्रह्म नानाविधं प्रोक्तमाकाशादिविभेदतः । तत्र क्रमार्थं स्वानंदः स्वमहिम्नि स्थितोऽभवत् ॥३८॥ अंते पूर्णत्वमापन्नः साक्षाद्गणपतेः स्मृतः । स्वानंदः सर्वसंयोगे समाधिः पूर्व उच्यते ॥३९॥ स्थाने स्थाने निजानंदे गणेशः संस्थितः स्वयम् । कलांशेन विहारार्थं सर्वेषां सर्वसिद्धये ॥४०॥ एवमूर्ध्वस्थलोका ये कथितास्ते प्रजापते । अतिसंक्षेपभावेन श्रवणात् सर्वकामदाः ॥४१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते ऊर्ध्वस्थलोकवर्णनं नाम चतुर्दशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । अतलं वितलं चैव सुतलं च तलातलम् । महातलं रसातलं पातालं सप्तमं स्मृतम् ॥१॥ अतलं श्यामवर्णं तदधोभूमेः सुसंस्थितम् । अयुते योजनानां वै विस्तारो लक्षयोजनः ॥२॥ मयपुत्रेण संयुक्तं तथा नमुचिपूर्वकैः । तथान्यैर्विविधैर्नागैरतलं शोभितं प्रभो ॥३॥ वितलं श्वेतवर्णं तदधस्तस्मात्तथा स्मृतम् । अयुते योजनानां तद्विवरं चैव संस्थितम् ॥४॥ तत्र नागासुराश्चैव वसंति सुखभोगिनः । कंबलः शंकुकर्णश्च

हयग्रीवश्च जृंभकः ॥५॥ सुतलं पीतवर्णं तदधस्तद्वत्प्रतिष्ठितम् । तत्रैव वैनतेयादिपक्षिणो दैत्यपो बलिः ॥६॥ कालनेम्यादयश्चान्ये नानादैत्याः स्थिताः सुखम् । नागाश्च भयहीनास्ते संवसंति विहारिणः ॥७॥ तलातलं तथा ज्ञेयं शार्करं तत्र वासिनः । मयासुरादयश्चैव बाणांधकमुखाः परे ॥ ८ ॥ वसंति सुखभावेनान्ये नागा विगतज्वराः। कालकेया महादेहा निवातकवचास्तथा ॥९॥ महातलं कृष्णवर्णं तत्र तक्षकपन्नगः । अन्ये च बहवो नागा वसंति सुखभोगिनः ॥१०॥ हिरण्यपुरधिष्ण्याश्च दैत्या अन्ये सहस्रशः । देवानां भयमुत्सृज्य निवसंति प्रजापते ॥११॥ रसातलं शैलमयमधस्तद्वत् स्थितं महत् । वासुकिप्रमुखैर्नागैर्दैत्यैर्नानाविधैस्तथा ॥१२॥ विवरे सर्वशोभाढ्ये नानासौख्यप्रदे परे । तत्र तेजस्विनस्तीक्ष्णविषोग्राः प्रवसंति वै ॥१३॥ पातालं नीलवर्णं तदधस्तस्मात्प्रतिष्ठितम् । तत्र स्थानं च शेषेण कार्यार्थे च कृतं किल ॥१४॥ तत्र दैत्याः सुरा नागास्तं सदा पर्युपासते । भक्तियुक्ता विवेकेन नागराजं महौकसम् ॥१५॥ पातालविवरेष्वत्र गृहा नानाविधाः कृताः । वनानि च तथा ग्रामा नगराणि प्रजापते ॥१६॥ विचित्रभोगयुक्ताश्च वृक्षा नानाविधाः खगाः । मंदिराणि प्रभावंति सोत्पलानि सरांसि च ॥१७॥ तत्र स्वर्गसमं दक्ष भोगं कुर्वंति जंतवः । हृष्टपुष्टजनाः सर्वे नियुताब्दोपजीविनः ॥१८॥ अपारायुः समायुक्ता महातेजस एव ते । देवादीनां सुदुर्धर्षा वसंति च्छंदचारिणः ॥१९॥ तस्मादधः सहस्राणि योजनानि प्रजापते । त्रिंशत्तत्र स्वयं शेषः सदा तिष्ठति नागपः ॥२०॥ गणेशभक्तिसंयुक्तो गणेशांशसमुद्भवः । विष्णोः कलावतारश्च कालरुद्रस्तथा स्मृतः ॥२१॥ सहस्रानन एकोऽसौ महाभागो महाबलः । यस्य विषभवा ज्वाला दहेत्तु सकलं जगत् ॥२२॥ मृत्युवर्जित एकोऽसौ तेनानंतः प्रकीर्तितः । ब्रह्मणो दिवसांते वै लयं कृत्वा स्वयं स्थितः ॥२३॥ अभजन्नागराजास्तं वासुकिप्रमुखाः सदा । असुराश्चैव प्रह्लादमुख्याः सेवापरायणाः ॥ २४ ॥ उपासते विलीनास्तं तथान्या नागयोषितः । नानाकामप्रसिद्ध्यर्थमनंतं भक्तितत्पराः ॥ २५ ॥ तस्मादधः कच्छपस्य विष्णोश्चैवावनारिणः । स्थानं सहस्र एकस्मिन् योजनानां स्थितं प्रभो ॥२६॥ तत्र तं वरुणाद्याश्च सेवंते भावनत्पराः । साक्षात् कूर्मस्वरूपस्थं नारायणमनामयम् ॥ २७ ॥ योजनानां ततोऽधस्तात् सहस्रे संस्थितः स्वयम् । वराहरूपधारी च विष्णुः परपुरंजयः ॥ २८ ॥ तं धरित्रीमुखाः सर्वे सेवंते भक्तितत्पराः । महादेवं करालास्यं स्वभक्तेभ्योऽभयप्रदम् ॥२९॥ शेषाधारमिदं सर्वं कूर्माधारः स वै स्मृतः । कूर्मो वराहरूपस्याधारेण समवस्थितः ॥३०॥

वराहश्च निराधारो गणेशं हृदि संस्मरन् । स्थितस्तेन प्रभावेण सर्वाधारः स वै स्मृतः ॥३१॥ तस्मादधो रौरवाद्या नरकाश्च समाश्रिताः । यातनाकारिणः सर्वे पापिनां शुद्धिकारकाः ॥ ३२ ॥ रौरवैश्चैव तामिस्रो महारौरवसंज्ञितः । अंधतामिस्रसंज्ञश्च तथा सूचीमुखोऽपरः ॥ ३३ ॥ लोहदंडस्तप्तवालुकस्तथा खड्गपत्रकः । लालास्यः कृमिभक्ष्यश्च इत्याद्या बहवः स्मृताः ॥३४॥ नरकेषु प्रपच्यंते पापकारिण एव ये । एतावान् ब्रह्मगोलस्ते संक्षेपेण निरूपितः ॥३५॥ विस्तरान्नैव शक्यश्च गदितुं वै प्रजापते । शापमोहस्य वेगेन तव भ्रांतिः समागता ॥३६॥ गणेशाराधनेनाद्य भ्रांतिनाशो भविष्यति । तदा त्वं तत्त्वतः सर्वं ज्ञास्यस्यत्र न संशयः ॥३७॥ एवं सर्वेषु सामान्यं ब्रह्मांडेषु बभौ जगत् । अष्टावरणयुक्तेषु गुणेशाधारकेषु वै ॥३८॥ इदं गणपते रूपं ब्रह्मांडात्मकमास्थितम् । कथितं ते समासेन सर्वसिद्धिप्रदं मया ॥ ३९ ॥ यः श्रृणोति नरो भक्त्या पठेद्वै तस्य सर्वदम् । भुक्तिमुक्तिकरं भावि पापकंचुकनाशनम् ॥ ४० ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते सप्तपातालवर्णनं नाम पंचदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । प्रियव्रतात्मजश्चैवाग्नीध्रस्तस्याभवत्सुतः । नाभिस्तस्य च यज्ञाद्वै समुत्पन्नः सुतः परः ॥१॥ यज्ञरूपः स्वयं विष्णुः कलारूपेण देहभृत् । पुत्रभावसमायुक्तः स्थितस्तस्य च सद्मनि ॥ २ ॥ तस्य पुत्रशतं जज्ञे भरताग्रं प्रजापते । एकाशीतिश्च पुत्रा वै ब्राह्मणास्तपसाऽभवन् ॥ ३ ॥ नवयोगिन एवान्येऽभवन् सर्वत्र संमताः । गाणपत्या महाभागाः सर्वदेहविवर्जिताः ॥ ४ ॥ कविर्हरिश्चांतरिक्षः प्रबुद्धः पिप्पलायनः । आविर्होत्रोऽथ द्रुमिलश्चमसः करभाजनः ॥५॥ सदा योगधरा मुख्या ऊर्ध्वरेतस एव च । सर्वगाः सर्वसंमान्या भ्रमंति भुवनेषु च ॥६॥ नव तत्र च राजानो जंबुद्वीपे प्रजापते । खंडेषु तेषु मुख्यो वै भरतो ज्येष्ठपुत्रकः ॥७॥ सभ्रातॄणां नवानां वै सम्राट् भावेन संस्थितः । एवं विभज्य राज्यं स्वमृषभश्च वनं ययौ ॥८॥ तत्र नाना तपः कृत्वा क्रमेण स बभूव च । अवधूतो महाभागो योगमभ्यस्य योगवित् ॥९॥ नानायोगविभेदेन नानाभूमिं विशोधयन् । जडोन्मत्तपिशाचादिं ततः सहजसंस्थितः ॥१०॥ सहजं शांकरं ब्रह्म मोहहीनं चतुर्थकम् । स्वाधीनं नेति रूपं यदव्यक्तं तेन संश्रितम् ॥११॥ तेनासौ शांभवो जातः

शिवमार्गप्रकाशकः । यत्रतत्राचरद्योगी जनानां बोधयन् शिवम् ॥ १२ ॥ ततो योगेन तत्रैव स्वाधीनब्रह्मदूषणम् । दृष्ट्वा शांतिं परित्यज्य विस्मितः प्रबभूव सः ॥१३॥ न ब्रह्मणि पराधीनस्वाधीनत्वं कदाचन । शिवः स्वाधीनरूपोऽयं न योगींद्रस्ततो भवेत् ॥१४॥ एवं विचार्य विक्षेपाच्छंकरालयमाययौ । तं प्रणम्य स्थितो योगी शिवसंमानितो भृशम् ॥१५॥ तत्र स्थिता महाभागा योगिनः शिवशिष्यकाः । गाणपत्याः स तान् दृष्ट्वा विस्मितो मानसेऽभवत् ॥ १६ ॥ ततोऽवसरमासाद्य शिवं नत्वा कृतांजलिः । जगाद तं स योगींद्रो भक्तियुक्तेन चेतसा ॥ १७ ॥ ऋषभ उवाच । नमस्ते शंकरायैव नमस्ते योगरूपिणे । नमस्ते जगदाधार ब्रह्माधिपतये नमः ॥१८ ॥ शांतियोगं वद स्वामिन् पूर्णशांतिप्रदायकम् । दासोऽहं तेऽधुना शिष्यो मह्यं देव दयानिधे ॥१९॥ सहजान्न परं ब्रह्म मया ज्ञातं विवेकतः । तत्र स्वाधीनता दृष्टा तया शांतिर्गता च मे ॥ २० ॥ मुद्गल उवाच । ऋषभस्य वचः श्रुत्वा शंकरो हर्षनिर्भरः । जगाद तं महाभक्तं पूर्णपाशुपतं वचः ॥ २१ ॥ शिव उवाच । त्वया पृष्टं महायोगिंस्तारकं योगिनां मतम् । कथयामि महाप्रीत्या शृणुष्वैकाग्रमानसः ॥ २२ ॥ शांतियोगात्मकः साक्षाद्वेदेषु कथितः पुरा । गणेशो योगरूपाख्यो योगिभिः सेवितः सदा ॥ २३ ॥ तस्मात् सर्वं समुद्भूतं तदाधारेण संस्थितम् । अंते चेदं तदाकारं योगेन भवति प्रभो ॥ २४ ॥ सामवेदे प्रकथितं शृणु वेदरहस्यकम् । येन त्वं शांतिसंयुक्तो भविष्यसि न संशयः ॥ २५ ॥ मनोवाणीमयं सर्वं दृश्यादृश्यस्वरूपकम् । गकारात्मकमेतत्तु तत्र ब्रह्म गकारकः ॥ २६ ॥ मनोवाणीविहीनं च सयोगायोगसंस्थितम् । णकारात्मकमेतत्तु णकारस्तत्र संस्थितः ॥ २७ ॥ विविधानि गकाराच्च प्रसूतानि महामते । ब्रह्माणि तानि कथ्यंते तत्त्वरूपाणि योगिभिः ॥ २८ ॥ ब्रह्माणि तु णकाराच्च संप्रसूतानि योगिभिः । निरोधात्मकरूपाणि कथितानि समंततः ॥ २९ ॥ गकारश्च णकारश्चाह्वये गणपतेः स्थितौ । ततो जानीहि भो योगिन् ब्रह्माकारौ श्रुतेर्मुखात् ॥ ३० ॥ तयोः स्वामी गणेशानो योगरूपेण संस्थितः । तं भजस्व विधानेन शांतिमार्गेण पुत्रक ॥ ३१ ॥ मनोवाणीमयं सर्वं गणेशाकारभावितम् । मनोवाणीविहीनं च तदाकारं प्रभावय ॥३२॥ मनोवाणीमयं सर्वं मायारूपं प्रकथ्यते । मनोवाणीविहीनं यत्तदेव तादृशं मतम् ॥३३॥ चित्तस्य पंच भूमीनां प्रकाशकृदयं स्मृतः । तेन चिंतामणिर्नाम जातोऽसौ गणनायकः ॥ ३४ ॥ तं भजस्व महायोगिन् योगाकारेण संस्थितः । भूमीनां त्यागमार्गेण शांतिं चित्तस्य चाप्स्यसि ॥ ३५ ॥ गणेशस्तु गणेशोऽयं संयोगायोगवर्जितः । मायया भ्रांतिरुत्पन्ना तां त्यक्त्वा सुखमाप्स्यसि ॥ ३६ ॥ इत्युक्त्वा विररामाथ

शिवः शिवकरः सताम् । ऋषभोऽपि प्रसन्नात्मा तं प्रणम्य ययौ वनम् ॥ ३७ ॥ कथितं शंकरेणैवमभ्यस्यन् योगमुत्तमम् । क्रमेण पूर्वयोगी स जातो शांतिस्वरूपधृक् ॥ ३८ ॥ तथापि गणपं दक्ष न मुमोच क्षणं मुनिः । तेन तस्य समीपेऽसौ गणेशानः समाययौ ॥ ३९ ॥ आगतं गणपं दृष्ट्वा भक्तिभावेन यंत्रितम् । प्रणनाम स साष्टांगं हर्षगद्गदभाषणः ॥ ४० ॥ सरोमांचशरीरश्च साश्रुनेत्रो महायशाः । तुष्टाव तं गणाधीशं प्रांजलिर्हृष्टमानसः ॥४१॥ ऋषभ उवाच । नमस्ते ब्रह्मरूपाय गणेश करुणानिधे । भेदाभेदादिहीनाय गणानां पतये नमः ॥ ४२ ॥ निराकाराय नित्याय जगदाकारमूर्तये । अनंताय परेशाय परात्परतराय ते ॥४३॥ आदिमध्यांतहीनाय गुणाकाराय ते नमः । गुणेशाय जगत्स्रष्ट्रे पालकाय हराय च ॥ ४४ ॥ नमो नानावताराय भक्तपालनहेतवे । सुरासुरमयायैव सुरासुरसुपूजित ॥ ४५ ॥ योगाय योगदात्रे च योगाकाराय ते नमः । योगानां पतये तुभ्यं ब्रह्मणां पतये नमः ॥ ४६ ॥ सर्वादये गणाध्यक्ष सर्वपूज्याय ढुंढये । सर्वांते ह्यवशिष्टाय विघ्नेशाय नमो नमः ॥ ४७ ॥ हेरंबाय निजानंदवासिने सिद्धसेवित । सिद्धिबुद्धिपते तुभ्यं नाना खेलकराय ते ॥ ४८ ॥ धर्मार्थकाममोक्षाणां दायकाय नमो नमः । ब्रह्मीभूतकरायैव ब्रह्मभूतमयाय च ॥ ४९ ॥ किं स्तौमि त्वां गणाधीश योगशांतिमयं प्रभो । यं स्तोतुं न समर्थाश्च वेदाद्याः शिवमुख्यकाः ॥ ५० ॥ तथापि च यथाबुद्धिज्ञानं त्वं संस्तुतो मया । भक्तिं देहि त्वदीयां मे दृढामव्यभिचारिणीम् ॥ ५१ ॥ मुद्गल उवाच । इत्युक्त्वा निपपातोर्व्यां पदं धृत्वा महायशाः । गणेशस्य च तेनापि समुत्थापित आदरात् ॥ ५२ ॥ जगाद गणनाथः स ऋषभं भक्तमुत्तमम् । शिवशिष्यं शिवप्रज्ञं साक्षाद्विष्णुं सनातनम् ॥ ५३ ॥ गणेश उवाच । मदीया भक्तिरत्यंतं भविष्यत्यचलानघ । स्तोत्रं त्वया कृतं मे तु शांतिदं प्रभविष्यति ॥ ५४ ॥ यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठतः । श्रवणान्नात्र संदेहो भावपूर्णं मतं मम ॥ ५५ ॥ इत्युक्त्वांतर्दधे देवो गणेशो गणवल्लभः । ऋषभश्च सदा शांतो योगी गाणेशतां गतः ॥ ५६ ॥ इदं चरित्रं मुख्यं वै यः शृणोति नरोत्तमः । ऋषभस्य महापुण्यं पठेद्वा तस्य सर्वदम् ॥ ५७ ॥ भविष्यति न संदेहो ब्रह्मभूयप्रदायकम् । शांतिदं शांतचित्तेभ्यः कथितं भक्तिसंयुतम् ॥ ५८ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकंदतचरिते ऋषभचरित्रवर्णनं नाम षोडशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ऋषभेण कृता चर्या नानायोगप्रकाशिनी । आदौ तां भूमिपो दृष्ट्वा जगृहेऽर्हद्गृहे स्थितः ॥ १ ॥ दुर्बुद्धिः स तु तं भ्रष्टः कर्ममार्गं विमुच्य वै । पशुवद्धर्महीनांश्च कारयामास मानवान् ॥ २ ॥ जैनमार्गः समुत्पन्नस्तदादिश्च प्रजापते । भरतेन स संच्छन्नो कर्ममार्गानुसारिणा ॥ ३ ॥ स एव कलिकाले वै भविष्यति गृहे गृहे । नरास्तं संग्रहीष्यंति कलिदोषेण संयुताः ॥ ४ ॥ ऋषभेण गृहं त्यक्त्वा धृतः संन्यासिना महान् । गृहस्थैः संधृतो मार्गो नरकप्रद उच्यते ॥ ५ ॥ ऋषभस्याग्रजः पुत्रो भरतो धर्मतत्परः । राज्यं चकार धर्मेण रंजयन् सकलाः प्रजाः ॥ ६ ॥ पुत्रे राज्यं समर्प्याऽसौ वनं यातो महायशाः । तत्र देहं क्रमेणैव तपसा शोषयन् स्थितः ॥ ७ ॥ शालिग्रामाश्रमे तिष्ठन्विष्णुध्यानपरायणः । तताप तप उग्रं स राजा परमधर्मवित् ॥ ८ ॥ एकदा स नदीतीरे संस्थितस्तर्पयन् पितॄन् । अकस्मात्सिंहसंनादो बभूव भयदायकः ॥ ९ ॥ तं श्रुत्वा हरिणी तत्रांतर्वत्नी सहसा स्वनम् । उत्पपात नदीं तां वै भयेन च पलायत ॥ १० ॥ उत्पतंत्या नदीतोये गर्भस्तस्याः पपात ह । साऽपि दूरे ययौ दक्ष मृता दुःखेन तत्क्षणात् ॥ ११ ॥ भरतेन मृगो बालो जलस्थः संधृतोऽभवत् । करुणायुतचित्तेन पालितश्च स यत्नतः ॥ १२ ॥ ततो मृगशिशौ तस्य प्रीतिर्जाता महात्मनः । लालयामास भावेन खेलयामास भूमिपः ॥ १३ ॥ क्रमेण प्रगतं सर्वं कर्म तस्य तपोमयम् । मृगे चासक्तचित्तस्य संगदोषमपश्यतः ॥१४॥ एकस्मिन् दिवसे सोऽपि मृगो मृगसमन्वितः । ययौ वनांतरे कुत्र न ज्ञातः साधुनाऽमुना ॥ १५ ॥ भरतस्तं मृगं तत्र न ददर्श यदा प्रभो । तदा दुःखसमायुक्तो बभ्राम स वने वने ॥ १६ ॥ न ददर्श मृगं कुत्र विललाप महीपतिः । नित्यं शोकसमायुक्तः कालेन स ममार च ॥ १७ ॥ मरणे स मृगस्तेन संहृष्टः स्वसमीपगः । बभूव मृगयोनौ स संगदोषप्रभावतः ॥ १८ ॥ तत्र पूर्वतपोभिश्च पूर्वजातिस्मरोऽभवत् । ज्ञानयुक्तः स्वयं संगात्स भीतो विचचार ह ॥ १९ ॥ मृगसंगं परित्यज्य ययौ पूर्वाश्रमे ततः । तत्राहिंसासमायुक्तो द्वंद्वभाव-पराङ्मुखः ॥२०॥ शुष्कं तृणादिकं भक्षन् सोऽस्मरद्विष्णुमव्ययम् । तीर्थस्नानं तदा कुर्वन् साधुदर्शनलालसः ॥२१॥ एकदा वनमध्ये स मृगो बभ्राम लीलया । अपश्यत्पूर्वपुण्येन पुलहाश्रममुत्तमम् ॥ २२ ॥ मुनीश्वरास्तत्र केचिदवसंस्तत्परायणाः । महाभागास्तपोयुक्ता गणेशभजने रताः ॥ २३ ॥ तत्राऽसौ मृगजातिस्थो भरतो मुनिसंनिधौ । वासं चकार संहृष्टः साधुसंगपरायणः ॥ २४ ॥ एकदा ब्रह्मदेवोऽथ जगाम पुलहाश्रमम् । तं दृष्ट्वा पुलहाद्यास्ते प्रणेमुस्तं पितामहम् ॥ २५ ॥

तं संपूज्य महाभक्त्या पुलहः सर्वसंयुतः । तोषयित्वा स्वयं देवं पादसंवाहने स्थितः ॥ २६ ॥ परिपप्रच्छ तं स्तुत्वा पुलहो भावसंयुतः । आदिदेवं महाभागं गाणपत्यं स्वभावतः ॥ २७ ॥ पुलह उवाच । तात दुःखयुताः सर्वे जंतवः केन भोगिनः । मोक्षिणो ब्रह्मभूताश्च जायंते तद्वदस्व मे ॥२८॥ मुद्गल उवाच । पुलहस्य वचः श्रुत्वा प्रभुर्धाता तमब्रवीत् । पुत्रं विनयसंयुक्तं कृतप्रांजलिमास्थितम् ॥२९॥ ब्रह्मोवाच । शृणु पुत्र प्रवक्ष्यामि यत्पृष्टं मे त्वया परम् । तत्सर्वं सर्वपापघ्नं शांतिमार्गप्रकाशकम् ॥३०॥ विघ्नराजमनादृत्य नरा दुःखसमन्विताः । जायंते सर्वलोकेषु विघ्नयुक्ता भयातुराः ॥३१॥ यद् यद् दुःखकरं तत्तद्विघ्नरूपं न संशयः । नरकादि महाघोरं विकर्मफलदं मतम् ॥३२॥ कर्मयुक्तं च सर्वं तत्स्वर्गभोगप्रदं मतम् । तदेव दुःखरूपं त्वं पुत्र जानीहि निश्चितम् ॥३३॥ स्वर्गेषु द्वंद्वभावश्च विद्यते नात्र संशयः । स्त्रीपुंयुक्तं तथा विघ्नं मोहदं पश्य तत् स्थितम् ॥३४॥ दैत्यादिभ्यो भयैर्युक्ता देवास्तत्र वसंति ते । भयहीनाश्च तान् हत्वा लये मृत्युभयप्रदम् ॥ ३५ ॥ उत्पत्तिनाशसंयुक्तं ब्रह्मांडं सकलं मतम् । त्रिगुणादि व्यथायुक्तं विघ्नेन ग्रसितं स्मृतम् ॥३६॥ अकर्मणा नरो मोक्षं लभते नात्र संशयः । स एव विघ्नसंयुक्तो मोक्षश्च शृणु तं सुत ॥३७॥ देही देहैश्चतुर्भिश्च मोहितो बंधनं गतः । स एव साधनं कृत्वा बंधहीनः प्रजायते ॥३८॥ मोहेन युक्तो हीनोऽयं देही सर्वत्र संमतः । तदेव विघ्नरूपं च तत्र प्राप्तं महामते ॥३९॥ देहदेहिमये योगे ब्रह्म तत्कल्पनात्मकम् । विकल्पेन द्विधाभूतं स्वत उत्थानसंज्ञकम् ॥४०॥ निर्विकल्पेन योगेन स्वमहिम्नि स्थितं भवेत् । तदेव विघ्नसंयुक्तं विकल्पयुतहीनतः ॥४१॥ सांख्यं ब्रह्मात्मनिष्ठं यत्तत्र बाधो न विद्यते । अस्वात्मनिष्ठमन्यच्चेत्तदा स्वात्ममयं भवेत् ॥४२॥ स्वात्मनिष्ठं धृतं येन तस्मादस्वात्मनिष्ठकम् । समुत्पन्नं महाभाग न कृतं त्वपि पुत्रक ॥४३॥ तदेव विघ्नरूपं चाप्यपरोत्थानभावतः । सांख्यं ब्रह्म न संदेहो बीजमुत्थानधारकम् ॥४४॥ सबीजं तद्विनिर्बीजं तदेव भवति स्वयम् । अतो योगिभिरत्यंतं मानितं न कदाचन ॥४५॥ स्वानंदं ब्रह्म यत्प्रोक्तं समाधे रूपधारकम् । तत्र स्वकीयसंयोगस्तदाकारेण जायते ॥४६॥ सर्वाभेदस्वरूपेण संयोगात्मक उच्यते । स्वसंवेद्यात्परं नास्ति संयोगाभेददायकम् ॥४७॥ तदेव योगिभिस्तस्मात्कथितं विघ्नसंयुतम् । तस्माज्जातमिदं तत्र योगेनाभेदतां गतम् ॥४८॥ अन्वयात्मकदोषेण विघ्नरूपं प्रकाशितम् । अतो न मान्यतां प्राप्तं शांतिमार्गेषु सर्वदा ॥४९॥ ततो योगस्वरूपं यत्सदा भिन्नं प्रकीर्तितम् । न तस्य कस्यचिद्योगस्तत्र कुत्रापि नो भवेत् ॥५०॥ ब्रह्मभिन्नमयोगाख्यमतो विघ्नसमाकुलम् । व्यतिरेकात्मको दोषो

ह्यशांतिकर उच्यते ॥५१॥ संयोगित्वमयोगत्वं त्यक्त्वा शांतिमवाप्स्यसि । तत्र विघ्नविहीनत्वं प्राप्तं पुत्र न संशयः ॥५२॥ चित्तभूमिस्वरूपं यत् पंचधा त्यज विप्रप । योगाभेदस्वरूपस्त्वं भविष्यसि न संशयः ॥५३॥ पंचधा चित्तरूपा वै बुद्धिर्माया प्रकीर्तिता । पंचधैश्वर्यमोहेषु मोहदा सिद्धिरुच्यते ॥५४॥ तत्र बिंबं गणेशस्य पतितं योगरूपतः । द्वैधं मायायुतं प्रोक्तं बिंबभावं त्यज प्रभो ॥५५॥ आदौ पुरा मया पुत्र कथितं कुलदैवतम् । गणेशरूपमस्माकं त्वयाराधितमादरात् ॥५६॥ तेन त्वं पात्रभूतश्च योगशांतेर्महामुने । अधुना कथितं पुत्र पूर्णशांतिस्वरूपकम् ॥ ५७ ॥ शांतियोगेन नित्यं त्वं तं भजस्व विधानतः । भविताऽसि गणेशानस्तदा वै नात्र संशयः ॥५८॥ एवमुक्त्वा स्वयं ब्रह्मांऽतर्दधे स प्रजापते । पुलहस्तत्र योगं त्वसाधयत्तपसि स्थितः ॥५९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते पुलहोपदेशवर्णनं नाम सप्तदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । क्रमेण योगशांतिं च प्राप्तोऽसौ पुलहः स्वयम् । नित्यं गणेशमूर्तिं प्रापूजयत् भक्तिसंयुतः ॥ १ ॥ ध्याननिष्ठः सदा योगी तमेवाचिंतयत् प्रभुम् । ततः कियति काले तं गणेशानो ययौ मुनिम् ॥ २ ॥ न बुबोध स तं विप्रो ध्याननिष्ठतया यदा । तदा हृदि स्थितो ढुंढिर्गणेशेन प्रलोपितः ॥ ३ ॥ अंतर्हितं हृदिस्थं तं गणेशं न ददर्श ह । तदा भ्रांत इवापश्यद्ददर्श गणपं बहिः ॥४॥ उत्थाय सहसा विप्रस्तं ननाम कृतांजलिः । विधिवत् पूजयामास विनायकमनामयम् ॥ ५ ॥ पूजयित्वा नमस्कृत्य तं तुष्टाव कृतांजलिः । सरोमांचशरीरः सन् हर्षगद्गदया गिरा ॥ ६ ॥ पुलह उवाच । नमस्ते विघ्नराजाय भक्तानां विघ्नहारिणे । विघ्नदात्रे ह्यभक्तानां गणेशाय नमो नमः ॥ ७ ॥ ब्रह्मणे ब्रह्मरूपाय निराकाराय ते नमः । साक्षिणे सर्वसंस्थायानादिसिद्धाय ते नमः ॥ ८ ॥ अनामयाय देवायाऽप्रतर्क्याय महौजसे । वक्रतुंडाय वै तुभ्यं हेरंबाय नमो नमः ॥ ९ ॥ स्वानंदवासिने तुभ्यं भक्तसंरक्षकाय च । योगानां पतये चैव योगदायिन्नमो नमः ॥ १० ॥ शांताय शांतरूपाय शांतीनां पतये नमः । भक्तेभ्यः शांतिदात्रे च योगशांताय ते नमः ॥ ११ ॥ नानावताररूपाय जगदाधारमूर्तये । सुरासुराणामीशाय सर्वगाय नमो नमः ॥ १२ ॥ सर्ववंद्याय वै तुभ्यं सर्वादौ

संस्थिताय च । सर्वांत एकरूपाय मध्ये नानास्वरूपिणे ॥ १३ ॥ आदिमध्यांतहीनाय सृष्टिस्थित्यंतकारिणे । अनंतोदरसंस्थाय लंबोदर नमोऽस्तु ते ॥ १४ ॥ गजवक्राय वै तुभ्यं गजाकाराय ते नमः । गजकर्णाय पूर्णाय गजानन नमोऽस्तु ते ॥ १५ ॥ मूषकध्वजरूपाय मूषकारूढरूपिणे । पाशांकुशधरायैव स्तुताय च विभूतिभिः ॥ १६ ॥ चतुर्भुजधरायैव चतुर्वर्गमयाय च । ब्रह्मभूतस्वरूपाय देहधारिन्नमो नमः ॥१७॥ यं वेदवादिनः स्तोतुं वेदाः सांगाश्च योगिनः । शिवविष्णुमुखा देवा न समर्था भवंति वै ॥ १८ ॥ तं कथं स्तौमि देवेशं योगरूपमयं प्रभुम् । अतो वै प्रणमामि त्वां प्रसन्नो भव सर्वदा ॥ १९ ॥ वरं मे देहि योगात्मन् तेन तुष्टो भवाम्यहम् । तव भक्तिं दृढां ढुंढे व्यभिचारविवर्जिताम् ॥ २० ॥ एवमुक्त्वा मुनिस्तत्र ननर्त प्रेमविह्वलः । तं भक्तिरससंयुक्तमुवाच गणनायकः ॥ २१ ॥ गणेश उवाच । मदीया सुदृढा भक्तिर्व्यभिचारविवर्जिता । भविष्यति महायोगिन् तव चानंददायिका ॥ २२ ॥ यदा मे स्मरणं त्वं वै करिष्यसि महामते । तदा मां द्रक्ष्यसि ब्रह्मन् संस्थितं तव सन्निधौ ॥ २३ ॥ भवत्कृतं मदीयं यत्स्तोत्रं भक्तिप्रदं भवेत् । भुक्तिमुक्तिप्रदं प्रोक्तं शांतियोगप्रदायकम् ॥२४॥ यः पठिष्यति वै मर्त्यः शृणुयात्सर्वसौख्यभाक् । भविष्यति न संदेहो यथा त्वं स तथा भवेत् ॥२५॥ मुद्गल उवाच । एवमुक्त्वा गणाधीशस्तत्रैवांतर्दधे प्रभुः । पुलहस्तत्र संतस्थावभजत्तं गणाधिपम् ॥२६॥ मृगरूपधरस्तत्र भरतः पृथिवीपतिः । संस्थितस्तत्र शुश्राव पूर्णं ज्ञानं विधानतः ॥२७॥ ब्रह्मणा कथितं यच्च पुलहाय सुधीमते । तदेव तेन भूपेन धृतं स्वहृदि सर्वदा ॥२८॥ मनसि ध्यानसंयुक्तो बभूव मृगदेहजः । गणेशस्य सदा हृष्टस्तत्र वासं चकार सः ॥२९॥ ततस्तेन च संगीतं तच्छृणुष्व प्रजापते । अहो विघ्नो महाघोरो मया प्राप्तः सुदुर्जयः ॥३०॥ राज्यं त्यक्त्वा वने नित्यं संस्थितोऽहं हरिं स्मरन् । तत्रापि मृगसंगेन संजातो मृगरूपधृक् ॥३१॥ विष्णुमुख्यामरेशाना विघ्नयुक्ता न संशयः । तत्र कोऽहं मनुष्यो वै जयन् वै विघ्नमुल्बणम् ॥३२॥ विघ्नराजप्रसादेन विघ्नं निघ्नंति दुर्जयम् । शिवविष्णवादयः सर्वे जंतवश्च तथा परे ॥३३॥ धन्या भक्तिर्मत्कृता या वैष्णवी परमाद्भुता । यया संस्कारसंयुक्तं संप्राप्तं ज्ञानमुत्तमम् ॥३४॥ गाणपत्यो महायोगी दृष्टो वै पुलहो मया । अहो भाग्यमहो भाग्यं मदीयं परमं मतम् ॥३५॥ येनाहं गाणपत्यानां संगे तिष्ठामि नित्यशः । विघ्नहीनः स्वभावेन भजामि गणनायकम् ॥३६॥ एवं गणेशभक्त्या वै संयुतो मृगसत्तमः । कालेन गणपं ध्यात्वा देहत्यागं चकार ह ॥३७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते भरतमृगदेहत्यागो नामाष्टादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । आंगिरसकुले विप्रो बभूव मुनिसत्तमः । ततः पुत्रोऽभवत्तस्य भरतो नृपसत्तमः ॥१॥ तत्रापि संगभीतोऽसौ ज्ञानयुक्तो महामुनिः । गणेशं मनसा ध्यायन् संस्थितो मुनिसन्निधौ ॥ २ ॥ तत्र वेदादिषु प्रोक्तं गणेशस्य महात्मनः । स्तवनं संश्रुतं ज्ञानं तेन पूर्वं दृढं कृतम् ॥३॥ जडवत्संगसंभीतो बभूव ब्राह्मणोत्तमः । चातुर्यं सकलं तेन गोपितं सर्वसंनिधौ ॥४॥ विवाहादिभयात् सर्वं जडत्वं संप्रकाशितम् । मूर्खवच्चेष्टया तत्र बालभावेन तिष्ठता ॥५॥ तस्योपवीतदानं स चकारांगिरसो मुनिः । पश्चात् संध्यादिकं कर्म शौचाचारमशिक्षयत् ॥ ६ ॥ पित्रा कथितमत्यंतं न जग्राह महामतिः । अन्यथा स चकारापि ताडितो यदि योगिपः ॥७॥ हस्तं धृत्वा पिता तस्य कारयामास वैदिकम् । सर्वमाचमनाद्यं च तथा तेन कृतं किल ॥८॥ पुनः पित्रा च संपृष्टं न सस्मार तदा स्वयम् । जडवत्सर्वं आचारस्त्यक्तस्तेन महात्मना ॥९॥ ततस्तस्य कृतं नाम सर्वैर्लोकैः प्रजापते । जड इत्येव सततं कथ्यते यत्र तत्र तैः ॥१०॥ तत्रादरापमानादि तिरस्कारादिकं महत् । संबभूव च तेनापि जडवत्त्यक्तमेव च ॥११॥ लोकाः सर्वेऽवदंस्तत्र ज्ञानमस्य न निश्चितम् । निंदास्तुत्यादिकं सर्वं महामूर्खेण सह्यते ॥१२॥ जडत्वादिकदोषेण विवाहादिकमस्य च । न कृतं जनकेनैव तेनानंदमवाप सः ॥१३॥ ततः कालेन निधनं गतस्तस्य पिता मुनिः । माता सती गुणयुता सहगा संबभूव ह ॥१४॥ मातुः सपत्नीजाताश्च भ्रातरो नव चाऽभवन् । तेषामधीनतां यातो द्विजोऽसौ शांतियोगधृक् ॥१५॥ भ्रातृपत्न्यो मदोत्सिक्ताश्चक्रुः स्नेहं न चाल्पकम् । उच्छिष्टं कुत्सितं चान्नं ज्वलितं तद्ददुस्तुषम् ॥१६॥ वस्त्राद्यैर्भ्रातरः सर्वे भाषणैः सत्कृतं न तम् । चक्रुः स्नेहं परित्यज्य कुलपांसुं वदंति ते ॥१७॥ तथाप्यमृतवत्सर्वं कुत्सितं क्लिन्नदग्धकम् । अन्नं बभक्ष योगीशश्चीरवस्त्रैः समावृतः ॥१८॥ तदपि भ्रातृजायास्ता अन्नं तस्मै च नो ददुः । द्वित्रिवासरमध्ये स एकभुक् चाऽभवन्मुनिः ॥१९॥ क्षुधया पीडितो योगी गाणपत्यः प्रजापते । भ्रमन्नन्नार्थमत्यंतं गेहे गेहे विचक्षणः ॥२०॥ तत्र लोकैः स्वकार्यार्थं गृहीतो यत्र तत्र सः । चकार सकलं कार्यं तेषामन्नार्थमादरात् ॥२१॥ ततस्ते हर्षिताः सर्वे वस्त्रान्नादिकमादरात् । ददुः सोऽपि प्रसन्नात्मा कर्मकारोऽभवत् स्वयम् ॥२२॥ ततस्तैर्भ्रातृभिर्दृष्टं तमानीय स्वके गृहे । स्वकर्मकारिणं चक्रुर्भ्रातरो हर्षसंयुताः ॥२३॥ तदपि भ्रातृजायास्ता कुत्सितान्नं ददुस्तुषम् । सुधासमं बभक्षान्नं सोऽपि भावं प्रदर्शयन् ॥२४॥ कदाचित्पक्वशालीनं क्षेत्रेषु स्थापितो मुनिः । भ्रातृभी रक्षणार्थं स रात्रौ वै दिवसे प्रभो ॥२५॥ तत्राऽयं संस्थितो विद्वांस्तत्तथैव चकार च ।

अन्नार्थं देहभावज्ञः सुखदुःखादिके समः ॥२६॥ तत्र चित्रमभूद्यत्तु तत् शृणुष्व प्रजापते । चौराणां स्वामिना देवी भद्रकालीति संस्तुता ॥२७॥ लभेयदि मम द्रव्यं विपुलं च जगन्मयि । तदा पुरुषरूपं ते दास्यामि पशुमुत्तमम् ॥२८॥ द्रव्यं तस्य तथा प्राप्तं तेन संप्रेषिताः स्वकाः । चौरा रात्रौ श्रमैर्युक्तास्तत्राजग्मुर्यदृच्छया ॥ २९ ॥ तं गृहीत्वा बलात्सर्वे जग्मुः स्थानं स्वकं खलाः । योगिना देहप्रारब्धं तदा ज्ञातं च तादृशम् ॥३०॥ तत्र चौराधिपेनैव सत्कृतः पूजनादिभिः । भोजनं स चकारापि स्वादु विप्रेंद्रसत्तमः ॥३१॥ तं पुरस्कृत्य वादित्रैर्निनदद्भिर्ययौ खलः । देवीसंनिधिमानंदात् पूजितं परमादरात् ॥३२॥ पूजयित्वा महाकाली ततस्तं मुनिपुंगवम् । पुरस्कृत्यासिना हंतुं नग्नं खड्गं चकार सः ॥३३॥ मरणं देहभावस्य दृष्ट्वाऽसौ योगिसत्तमः । न किंचित् क्षुब्धवांस्तत्र सस्मार गणपं हृदि ॥३४॥ अद्यैव पतितो देहोऽथवाऽस्तु चिरजीविकः । तत्र किं कारणं मे वै गजानन नमोऽस्तु ते ॥३५॥ एतस्मिन्नंतरे तत्र देवी कोपसमन्विता । गाणपत्या महाकाली निःसृता मूर्तिमध्यतः ॥३६॥ खड्गं चौराधिपस्याऽपि हस्ताज्जग्राह लीलया । तेन तस्य शिरश्छित्वा पपौ रुधिरमुत्तमम् ॥ ३७ ॥ अन्ये समागताश्चौरास्तेऽपि खड्गेन नाशिताः । चिक्रीड स्वगणैर्देवी गणेशस्तवतत्परा ॥ ३८ ॥ तां प्रणम्य ययौ दक्ष बभ्राम परितस्तु सः । स्वेच्छाचारी महायोगी भिक्षाशी गणपं स्मरन् ॥ ३९ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते चौरवधो नामैकोनविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । सिंधुदेशाधिपो राजा रहूगण इति स्मृतः । पूर्वसंस्कारयोगेन ह्यंतर्निष्ठो बभूव ह ॥१॥ राजा शांत्यर्थमत्यंतं यत्नवान् प्राप तां न सः । ययौ गंगासमीपस्थं कपिलाश्रममादरात् ॥२॥ गौतम्या दक्षिणे कूले श्रुतवान् द्विजपुंगवात् । निर्जगाम पुराद्राजा शिबिकायां समास्थितः ॥३॥ गच्छन्मार्गे त्वरायुक्तः श्रांतवाहो महीपतिः । धृत्वाऽन्यान्योजयामासुर्वाहार्थं स्वजनास्तदा ॥४॥ तत्र दैवप्रसंगेन समालब्धं महामुनिम् । आंगिरसवरं तं ते चक्रुर्वाहकमंजसा ॥५॥ ज्ञात्वा देहं महायोगी प्रारब्धाधीनमादरात् । वाहको नृपतेर्दक्ष बभूव विगतज्वरः ॥६॥ अहिंसापरमो योगी मार्गे जंतुमवेक्ष्य सः । स्वपादक्षेपणं तत्र चकार प्राणिवर्जिते ॥७॥ तेन सर्वे बभूवुश्च वाहका मंदगामिनः । दोलायिता च

शिबिका तया राजा सुदुःखितः ॥८॥ ततः क्रोधसमाविष्टो रहूगण उवाच तान्। सम्यक् च शिबिकां वाहा वहध्वं सुप्रयत्नतः ॥९॥ ततो भीताश्च ते सर्वे तमूचुरधुना नृप। आनीतः सुदुरात्मायं यथा चलति मद्यपः ॥१०॥ ततो राजा महात्मानमुवाच शठ किं त्वया। उन्मत्तवद्गतिर्दुष्टा क्रियते मम सन्निधौ ॥११॥ ततो भाविबलेनासावांगिरस उवाच ह। ज्ञात्वा तं योगमिच्छंतं पात्रभूतमनादरात् ॥१२॥ जडभरत उवाच। मायामयमिदं सर्वं भ्रांतिरूपमसत्यकम्। तत्र राजजनानां वै जनः कुत्र प्रदृश्यते ॥१३॥ वयं द्वंद्वं प्रेषयित्वा समभावेन संस्थिताः। शिक्षाकर्ता न भविताऽस्माकं राजा महाबलः ॥१४॥ तेन किं योगमार्गं वै त्यक्त्वा तिष्ठेम सांप्रतम्। तदधीना भवामः किमज्ञानेन वदत्ययम् ॥१५॥ इत्युक्त्वा मौनमास्थाय शिबिकां पूर्ववद्वहन्। आंगिरसो महायोगी चचाल गणपं भजन् ॥१६॥ राजा श्रुतं महावाक्यं योगग्रंथितमुत्तमम्। भयभीतश्च तेनासावुत्पपात महीतले ॥१७॥ दृष्ट्वा तं मलिनं विप्रं यज्ञोपवीतसंयुतम्। बिभ्राणं चीरवसनं ब्रह्मतेजः सनातनम् ॥१८॥ प्रणनाम स साष्टांगं कृतांजलिपुरः स्थितः। जगाद भयभीतो वै रहूगणः स धर्मवित् ॥१९॥ रहूगण उवाच। क्षमापराधमतुलं मम ब्रह्मन् दयानिधे। अज्ञानेन कृतं कर्म किं विप्रोऽसि वदस्व माम् ॥२०॥ अवधूता महात्मानश्चरंति यत्र कुत्र वै। तथा त्वमपि मे भासि यज्ञोपवीतधारक ॥२१॥ कपिलः किं नारदश्चांगिरा पुलहकः क्रतुः। दत्तो वा याज्ञवल्क्यश्च वद मां करुणानिधे ॥२२॥ अहं बिभेमि विप्रेंद्र ब्राह्मणानामधर्षणात्। न ब्राह्मणसमं किंचिद्दैवतं सचराचरे ॥२३॥ साक्षात् परमेश्वरस्याऽपि ननवो ब्राह्मणा मताः। कर्माधाराश्च ज्ञानानामाधारा ब्रह्मधारकाः ॥२४॥ ब्राह्मणस्य मुखेनैव यद्भुक्तं तत्समागतम्। देवस्थानेषु देवानामुदरे नात्र संशयः ॥२५॥ ब्राह्मणेभ्यश्च यद्दत्तं तदक्षयपदप्रदम्। उद्धाराय जनानां वै ब्राह्मणाः संमताः किल ॥२६॥ मंत्राधीना देवगणा मंत्रा विप्राधीना मताः। देवानां जीवनं सर्वं द्विजाधीनं च तेन वै ॥२७॥ मंत्रहीनं च यत्कर्म निष्फलं जायते किल। कर्माधीनं जगत् सर्वमतो ब्राह्मणमूलकम् ॥२८॥ कर्मनिष्ठास्तपोनिष्ठा ज्ञाननिष्ठा द्विजोत्तमाः। योगिनश्च भवंतीह तारका जगति स्थिताः ॥२९॥ सर्वेषां गुरवो विप्रा ज्ञानदास्तेन संमताः। साक्षाद् ब्रह्मस्वरूपा वै ब्राह्मणा नात्र संशयः ॥३०॥ तेषां हेलनमात्रेण पतंति शिवमुख्यकाः। सेवनेन च तेषां वै सर्वं स लभते जनः ॥३१॥ ब्राह्मणानां च शापेन विष्णुमुख्या सुरेश्वराः। पतिता ह्यवतारेषु पुनः संस्थापिता द्विजैः ॥३२॥ अतो बिभेमि विप्रेश वद कस्त्वं महामते। विष्णुशिवादिदेवेभ्यस्तथाऽहं न बिभेमि वै ॥३३॥ एवमुक्त्वा पुनः पादौ गृह्य तं

प्रणनाम सः । पादपद्मे शिरः स्थाप्य रुरोद भयविह्वलः ॥३४॥ ततोऽसौ करुणाविष्टो जडभरतस्तमब्रवीत् । उत्थाप्य नृपशार्दूलं प्रश्रयाऽवनतं वचः ॥३५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते जडभरतरहूगणमिलनो नाम विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ जडभरत उवाच । आह मांगिरसो नाम जडभरतः प्रकथ्यते । स्वायंभुवश्च भरतोऽधुना जडश्च तेन वै ॥१॥ मा चिंतां कुरु राजर्षे ह्यज्ञानेन त्वया कृतम् । हेलनं मम देहस्य पापदं न भविष्यति ॥२॥ गच्छ राजन्यथेच्छ त्वं मत्तो वै न भयं तव । गमिष्यामि स्वतंत्रोऽहं प्रारब्धेन नियंत्रितः ॥३॥ मुद्गल उवाच । तस्य योगींद्रमुख्यस्य श्रुत्वा वचनमुत्तमम् । रहूगण उवाचाथ तं प्रणम्य महायशाः ॥४॥ रहूगण उवाच । धन्यं कुलं मदीयं वै पितरौ ज्ञानमाश्रमः । तपो विद्या यशो दानं तवांघ्रियुगदर्शनात् ॥५॥ अहं सिंधुमहीपालो रहूगण इति स्मृतः । राज्यादिविषयं त्यक्त्वा निःसृतो मुनिसत्तम ॥६॥ शांत्यर्थं कपिलं यामि गौतमीतीरवासिनम् । त्वं साक्षाद् ब्रह्मरूपश्च दैवेन दर्शनं गतः ॥७॥ मां शिष्यं तारय मुने योगबोधेन सत्तम । साक्षात् शांतिं वद विभो यया शांतो भवाम्यहम् ॥८॥ तस्य तद्वचनं श्रुत्वा कृपया परया युतः । जगाद तं नृपेंद्रं स आंगिरसो महाद्युतिः ॥९॥ शृणु राजन् त्वया पृष्टं वेदगुह्यं च दुर्गमम् । कथयामि तथापि त्वां योगशांतिकरं परम् ॥१०॥ देहश्चतुर्विधः प्रोक्तस्तत्र देही चतुर्विधः । भ्रांत्या भिन्नत्वमाश्रित्यैकोऽपि भाति तदात्मकः ॥११॥ देहानां ब्रह्म यत्प्रोक्तं बिंदुमात्रं च दृश्यते । देहीनां ब्रह्मरूपं वै सोऽहं मात्रात्मकं किल ॥१२॥ तयोः संयोग एवाऽसौ बोधात्मक उदाहृतः । स्वतोत्थानमिदं ब्रह्म विकल्पाद्विविधं मतम् ॥१३॥ बोधनाशे महीपाल उत्थानं जायते न च । सांख्यरूपं हि तद्ब्रह्म केवलं स्वसुखे रतम् ॥१४॥ यत्र परसुखं नास्ति तत्र वै स्वसुखं कथम् । ततः परत उत्थानयुक्तं ब्रह्म प्रकीर्तितम् ॥१५॥ तत्रोत्थानस्य बीजं यत्स्थितं भिन्नात्मकं परम् । स्वसौख्यनिष्ठरूपं हि बोधहीनप्रभावतः ॥ १६ ॥ स्वतः परत उत्थानहीनं स्वानंदवाचकम् । संयोगाभेदरूपं वै जानीहि नृपसत्तम ॥१७॥ स्वानंदं पंचभेदं च स्वयं सर्वत्र संस्थितम् । सत्यासत्यसमं चेति नेतिरूपं चतुर्थकम् ॥१८॥ स्वतः परत उत्थानमेतन्नाम प्रकीर्तितम् । तयोरनुभवो यः स्यात्तस्य रूपं

तदेव च ॥१९॥ ताभ्यां नानाविधं ब्रह्मान्नादि वेदे प्रकीर्तितम् । जगन्नानाविधं तद्ब्रह्मानीहि नृपसत्तम ॥२०॥ नामरूपमयं सर्वमसत्यं परिकीर्तितम् । शाक्तं ब्रह्म समाख्यातं वेदे वै वेदवादिभिः ॥२१॥ नामरूपात्मकं यत्तत्सदा खंडमयं स्मृतम् । अमृतं सौरमात्मा तद्ब्रह्म सर्वप्रकाशकम् ॥ २२ ॥ तयोरभेदकर्ताऽसौ विष्णुरानंदसंज्ञितः । द्वयोः समं च तद्ब्रह्म भावाभावमयं परम् ॥ २३ ॥ त्रिभिर्हीनं तुरीयं यन्नेति कर्ता शिवः स्मृतः । अव्यक्तं मोहहीनं यत् स्वाधीनं ब्रह्म तन्मतम् ॥२४॥ चतुर्णां चैव संयोगो यत्राभेदमयः स्मृतः । स एव स्वस्वरूपाख्यो मायायुक्तो विनायकः ॥ २५ ॥ संयोगनाशकारी चायोगः सर्वत्र समंतः । निर्मायिको गणेशः स कथितो योगिभिर्नृप ॥२६॥ अयोगे योगिनां राजन्निवृत्तिरुपजायते । स्वकीयभेदहीनत्वात्तद्ब्रह्मायोगसंज्ञकम् ॥२७॥ अत एव स्वनाशाख्यनिवृत्या तच्च लभ्यते । मायया सर्वसंयोगे तद्धीनं ब्रह्म तत् स्मृतम् ॥२८॥ अयोगश्चैव संयोगो योगे तौ न प्रपश्यति । तदेव गणनाथो हि योगशांतिमयः स्मृतः ॥२९॥ मायायुक्तश्च मायावी मायाहीनश्च केवलः । तदेव भ्रांतिमात्रं यत्त्यक्तव्यं योगिभिः सदा ॥३०॥ चित्तं पंचविधं प्रोक्तं तदैश्वर्यं महामते । मोहदं द्विविधं त्यक्त्वा शांतिरूपो भविष्यसि ॥३१॥ एवमुक्त्वा महायोगी विरराम प्रजापते । सोऽपि तं प्रणनामाथ राज्यं त्यक्त्वा वनं ययौ ॥३२॥ एवं रहूगणो राजा साधयित्वा विधानतः । शांतिं प्राप्तो महातेजा गाणपत्यो बभूव ह ॥३३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते रहूगणसिद्धिप्राप्तिवर्णनं नामैकविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । तत आंगिरसो योगी विचचार महीतले । मयूरेशस्य स क्षेत्रं आययौ दैवयोगतः ॥१॥ तत्र पूर्वावतारं च गणेशस्य महात्मनः । दृष्ट्वा ज्ञात्वा स्थितस्तं स ध्यायन्नेकत्र मूढवत् ॥२॥ वर्षमात्रे गते तस्य दर्शनार्थं ययौ स्वयम् । गणेशो मूषकारूढः सिद्धिबुद्धिसमन्वितः ॥३॥ तं दृष्ट्वा प्रणनामादौ तुष्टाव प्रांजलिः प्रभुम् । रोमांची साश्रुनेत्रः स भक्तिभावनिमज्जितः ॥४॥ जडभरत उवाच । नमः शांतिस्वरूपाय शांतिदाय कृपालवे । विघ्नेशाय नमस्तुभ्यं हेरंबाय नमो नमः ॥५॥ सिद्धेः पते च नद्दात्रे भक्तानां भयभंजन । भक्तिप्रियाय वै तुभ्यं भक्तभक्ताय ते नमः ॥६॥

बुद्धेः पते धियो दात्रे सर्वविद्याकलात्मने। ज्ञानरूपप्रकाशाय गणेशाय नमो नमः ॥७॥ मूषकारूढ वै तुभ्यं चतुर्बाहुधराय च। स्वानंदवासिने देव वक्रतुंडाय ते नमः ॥८॥ नानाविहारयुक्तायानंतरूपाय ते नमः । अमेयाय सदायोगशांतिस्थाय नमो नमः ॥९॥ धन्योऽहं कृतकृत्योऽहं येन दृष्टो गजाननः। वेदादौ गोचरोऽयं न कृपया सहसाऽऽगतः ॥१०॥ मया किं ते कृतं देव दर्शनार्थं किमागतः। भक्त्या समं न किंचित्ते प्रियं ज्ञातं मयाधुना ॥११॥ भक्त्या त्वां हृदि संध्यायन् संस्थितो जडवत्प्रभो । त्वमेव मोहितो भक्त्या मम संन्निधिगः कृतः ॥१२॥ अहो भक्तिसमं किंचिन्नैव दृष्टं न च श्रुतम्। यया त्वं शांतियोगस्थो मोहितः सहसाऽऽगतः ॥१३॥ त्वदीयांशसमुत्पन्नं सकलं ब्रह्मनायक । किं ददामि गणेशान येन तुष्टो भविष्यसि ॥१४॥ अतस्त्वां नमनं कुर्वे देहोऽयं ते निवेदितः । वरं देहि महाबाहो येन तृप्तो भवाम्यहम् ॥१५॥ भक्तिं दृढां त्वच्चरणे व्यभिचारविवर्जिताम्। देहि नाथ दयासिंधो नान्यद् याचे कदाचन ॥१६॥ एवमुक्त्वा गणाध्यक्षं ननाम स पुनः पुनः । प्रेम्णा ननर्त योगींद्रस्तमुवाच गणाधिपः ॥१७॥ गणेश उवाच। भविता सुदृढा भक्तिर्मम ते मुनिसत्तम। व्यभिचारविहीना ते न चांगिरस संशयः ॥१८॥ त्वया कृतमिदं स्तोत्रं मदीयं योगशांतिदम्। भविष्यति महाभाग मम प्रीतिकरं परम् ॥१९॥ यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठकः। शृणुयात्तस्य तद्वच्च भविष्यति न संशयः ॥२०॥ एवमुक्त्वांतर्दधेऽसौ गणनाथः प्रजापते। स मुनिर्भक्तिसंयुक्तोऽभवत्तत्रैव संस्थितः ॥२१॥ अंते गणेशरूपोऽसौ जातो योगींद्रसत्तमः। गुहा तत्र प्रसिद्धा वै वर्ततेऽद्य महामुनेः ॥२२॥ गणेशोत्तरभागे च संमुखे क्रोशदूरकम् । स्थानमांगिरसस्याऽपि भरतस्य जडात्मनः ॥२३॥ कुर्वंति दर्शनं तस्य तत्र ये मानवादयः । तेषां मुक्तिर्भवेद्दक्ष शाश्वती नात्र संशयः ॥२४॥ चरितं भरतस्येदं कथितं परमाद्भुतम् । शृणुयाद्यो नरो भक्त्या पठेद्वा भुक्तिमुक्तिदम् ॥२५॥ एवमाद्याश्च राजानः प्रियव्रतकुलेऽभवन्। उत्पन्नाः सर्वधर्मज्ञा नानादेवपरायणाः ॥२६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते जडभरतचरितं नाम द्वाविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । स्वायंभुवमनोः पुत्र उत्तानपादसंज्ञितः । स राज्यं मध्यदेशस्य चक्रे वै धर्मसंयुतः ॥१॥ तस्य भार्ये प्रविख्याते सुनीतिः सुरुचिस्तथा । सुनीत्यां च ध्रुवो जज्ञे सुरुच्यामुत्तमस्ततः । ॥२॥ सुरुच्या स्ववशं नीतो तया राजा विमोहितः । सुनीतिं मन्यते न स्म मनसाऽपि प्रजापते ॥३॥ एकदा ध्रुवपुत्रश्चाययौ राज्ञः समीपकम् । आरोढुमिच्छन्नुत्संगे संस्थितस्तस्य सन्निधौ ॥४॥ तत्रावमानितस्तेन सुरुच्या दुष्टभावतः । ततो ध्रुवो वनं दक्ष जगाम क्रोधसंयुतः ॥५॥ मार्गे वै गच्छतस्तस्य नारदो दृष्टिमागतः । तं ननाम महाबुद्धिर्बालोऽयं धर्मधारकः ॥६॥ वृत्तांतमखिलं ज्ञात्वा नारदेन महात्मना । उपदिष्टो महामंत्रो विष्णोश्च द्वादशाक्षरः ॥७॥ नारदं स प्रणम्याऽऽदौ मथुरायां ययौ ततः । तपश्चकार तत्राऽसौ ध्यायन्विष्णुं सनातनम् ॥ ८ ॥ सहस्रवर्षमत्यंतं तताप परमं तपः । प्रसन्नो भगवांस्तत्र तं ययौ भक्तिभावतः ॥९॥ ददौ राज्यमखंडं वै पृथिव्याः परमाद्भुतम् । अंते स्वर्गस्य राज्यं च पदं विष्णोर्ध्रुवात्मकम् ॥१०॥ ततः स्वगृहमागत्य ननाम पितरौ ध्रुवः । तं राजा मानयामास बहुलं तेजसा युतम् ॥११॥ कालेन तं ध्रुवं राजा चकार स नराधिपः । वनं ययौ महातेजास्तताप परमं तपः ॥१२॥ तत्रागत्य च गाणेशो नारदस्तमुवाच सः । भेदाभेदादिहीनं त्वं गणेशं भज पार्थिव ॥१३॥ शिवविष्णवादयो देवा योगिनः सनकादयः । वसिष्ठाद्या ऋषिगणा भजंते तं न संशयः ॥१४॥ न गणेशं विना शांतिर्लभ्यते नात्र संशयः । स्वायंभुवादिभूपालैः सेवितो गणनायकः ॥ १५ ॥ एवमुक्त्वा गणेशस्य ददौ मंत्रं षडक्षरम् । राजा मंत्रप्रभावेण गाणपत्यो बभूव ह ॥१६॥ मरणे गणनाथं वै सस्मार स नृपोत्तमः । सायुज्यं गणनाथस्य प्राप्तं तस्य महात्मनः ॥१७॥ ध्रुवो राज्यं चकाराथ धर्मयुक्तो महीपतिः । जगाम सहसा तत्र नारदः करुणानिधिः ॥१८॥ तं दृष्ट्वा प्रणनामाऽसौ पूजयामास भक्तितः । स्वगुरुं पूर्णभावेन कृतांजलिपुटः स्थितः ॥१९॥ तमुवाच महायोगी नारदो दिव्यदर्शनः । स्वशिष्यं भक्तिसंयुक्तं दयया च दयानिधिः ॥२०॥ नारद उवाच । शृणु ध्रुव वचो रम्यं विकुंठादागतोऽधुना । विष्णुना प्रेषितोऽहं वै तव हेतोर्महामते ॥२१॥ मयूरेशस्य यत्क्षेत्रं भुवि ब्रह्ममयं परम् । तत्र गत्वा महायात्रां कुरु त्वं विधिवत्सुत ॥२२॥ तेनाक्षयपदं ते वै भविष्यति मदीयकम् । अन्यथा विघ्नसंयुक्तः पतिष्यसि न संशयः ॥२३॥ अन्यच्च कथितं तेन विष्णुना करुणावता । एकाक्षरं गणेशस्य महामंत्रं जपेति वै ॥२४॥ तेन मंत्रप्रभावेण लये ब्रह्मदिनात्यये । लयं ध्रुवपदं गच्छेत्तदा त्वं शांतिमेष्यसि ॥२५॥ ब्रह्मणि ब्रह्मभूतश्च भविष्यसि न संशयः । अन्यथा

योगशांतिं त्वं न प्राप्स्यसि कदाचन ॥२६॥ ततस्तं नारदो योगी ददौ मंत्रं विधानतः । एकाक्षरं गणेशस्य राजा सिद्धो बभूव सः ॥२७॥ मयूरेशस्य वै क्षेत्रे ध्रुवः सद्यः समागतः । चकार विधिवद्यात्रां द्वाराणां चिह्नसंयुताम् ॥२८॥ गणेशं स्थापयामास ब्राह्मणैर्मंत्रकोविदैः । अर्धक्रोशे गणेशात् नापूर्वद्वारसमीपगम् ॥ २९ ॥ देवालयं चकाराऽसौ महामौल्यं सुविस्तृतम् । सुवर्णशिखरं रम्यं पूजितं वै सुभक्तितः ॥ ३०॥ नाम तस्याऽकरोद्राजा तदा ध्रुवविनायकः । वर्षमासं निवासं च ध्रुवस्तत्र चकार ह ॥३१॥ पश्चात् स्वनगरे गत्वा राज्यं चक्रे महाबलः । जगाम स्वर्गमंते स ध्रुवाख्यं ज्योतिषां धरम् ॥३२॥ तस्मिन् गणपतिं ध्यायन् संस्थितोऽसौ महायशाः । ध्रुवस्थानस्य नाशेंऽते गतः स्वानंदमंजसा ॥३३॥ ध्रुवं विनायकं दृष्ट्वा भुक्तिं मुक्तिं सुनिश्चलाम् । लभते मानवस्तत्र श्रुत्वा ध्रौव्यमिदं तथा ॥३४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते ध्रुवचरित्रं नाम त्रयोविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ध्रुवस्यान्वयसंभूतोंऽगस्तेजस्वी महीपतिः । धर्मात्मा सर्वमान्यश्च पितृवत् पालकोऽभवत् ॥१॥ मृत्युकन्याऽभवद्भार्या राज्ञस्तस्य महात्मनः । तस्यां तस्मात् समुत्पन्नः पुत्रो वेनः सुदारुणः ॥२॥ तं पिता शिक्षयन् श्रांतो न साधुरभवत् सुतः । राज्यं त्यक्त्वा वनं राजा दुःखयुक्तो जगाम ह ॥३॥ ततो राजविहीने च देशे चोराः प्रबभ्रमुः । तैर्लुंठितं जनानां स्म सर्वस्वं यत्र तत्र हि ॥ ४ ॥ प्रजाः सर्वा भयोद्विग्ना ब्राह्मणान् शरणं ययुः । ब्राह्मणै राज्य आसिक्तः स वेनः पैतृके ततः ॥५॥ स राज्यं प्राप्य दुर्धर्षश्चोरान् हत्वा समंततः । राज्यं चकार देशेषु कंपयन् वसुधातलम् ॥६॥ नयमार्गं परित्यज्य यथेच्छाचारकोऽभवत् । तेन वर्णाश्रमाचारसंयुता दुःखिताः कृताः ॥ ७ ॥ पुनस्ते तापसांस्तान्वै शरणं जग्मुरादरात् । तापसैर्वारितो वेनस्तानुवाच द्विजोत्तमान् ॥ ८ ॥ वेन उवाच । अहं पूज्यश्च सर्वेषां पालको नात्र संशयः । मां भजध्वं मुनींद्रा वै योगक्षेमकरं सदा ॥ ९ ॥ तस्य तद्वचनं श्रुत्वा कुपिता ब्राह्मणास्ततः । शापेन मारयामासुस्तं नृपं नयवर्जितम् ॥ १० ॥ तस्यांगं वाममेवादौ ममंथुर्नृपहेतवे । तस्मात् क्रूरः समुत्पन्नस्यस्य पापमयो नरः ॥ ११ ॥ ह्रस्वकायः श्यामवर्णः श्मश्रुलः पिंगलोचनः । तं दृष्ट्वा ब्राह्मणाः प्रोचुर्निषीदेति प्रजापते ॥ १२ ॥ ततो निषादनामाऽसौ जातस्तस्मै

वनांतरे । स्थानं ददुर्द्विजश्रेष्ठा निषादास्तत् समुद्भवाः ॥ १३॥ पुनश्च दक्षिणांगं ते ममंथुर्द्विजसत्तमाः । वेनस्य दंपती तस्मात् समुद्भूतौ महौजसौ ॥१४॥ विष्णोः कलायुतौ साक्षाद्ब्राह्मणान्नेमतुः पुरा । ब्राह्मणैर्नृपवर्यः स संसिक्तो राज्यकर्मणि ॥१५॥ पृथुनामा महीपालो विख्यातोऽभूच्च मंडले । स्वधर्मनिरतः साक्षात् क्षात्रधर्मप्रवर्तकः ॥ १६ ॥ तेन संवर्धिता लोका वर्णाश्रमयुता विधे । पुरे मुमुदिरे देशे यत्र तत्र सुसत्कृताः ॥ १७॥ गते कियति काले वै लोका अन्नविवर्जिताः । क्षुधया पीडिताः सर्वे तं नृपं शरणं ययुः ॥ १८॥ वेनस्याधर्मभावेन भूम्या सर्वं समाहृतम् । पुनर्दातुमशक्ता वै धर्मरूपे नराधिपे ॥ १९ ॥ लोकानां दुःखमाकर्ण्य कुपितोऽसौ नराधिपः । विचार्य धनुरादाय शरं श्रेष्ठं युयोज च ॥ २० ॥ भूमिं हंतुं मनश्चक्रे ह्याकर्णाकर्षितं धनुः । यावद्बाणं स चिक्षेप तावद्भीता वसुंधरा ॥ २१ ॥ गोरूपेण भयोद्विग्ना यत्र तत्र पलायत । आत्तबाणो नृपः पश्चाद्ययौ यम इवापरः ॥ २२ ॥ शरणं नाऽपतद्भूमिस्तमेव शरणं ययौ । उवाच प्रांजलिर्भूत्वा नृपं कंपसमन्विता ॥ २३ ॥ स्त्रियं मां गां कथं हंसि भूमिपाल वसुंधराम् । शरणागतरूपां ते रक्ष क्षत्रकुलोद्भव ॥ २४ ॥ भूमेर्वचनमाकर्ण्य तां जगाद नृपोत्तमः । शृणु त्वां मारयिष्यामि मच्छासनपराङ्मुखीम् ॥ २५ ॥ जीवितुं चेच्छसि प्राज्ञे तदान्नं विविधं धरे । कुरु प्रकटरूपं त्वं सर्वकालं न संशयः ॥ २६ ॥ ततस्तं विनयं कृत्वा सा जगाद वसुंधरा । मया ग्रस्ता समग्रा या ओषध्यश्च नृपात्मज ॥ २७ ॥ भक्षितास्ताः पुनर्दातुं कथं शक्ता भवामि भोः । अतस्त्वं मां समामादौ कुरु पार्थिवसत्तम ॥ २८ ॥ गोरूपाहं स्थिता भूप वत्सं कृत्वा स्वभावजम् । सकला दुग्धरूपेणौषधीस्ते प्रददाम्यहम् ॥ २९ ॥ दोहकः कल्पतां शीघ्रं तदा सर्वं शुभं भवेत् । अन्यथा मां महीपाल हनिष्यसि वृथा कथम् ॥ ३० ॥ तस्या वचनमाकर्ण्य धनुष्कोट्या नृपोत्तमः । पर्वतांश्चूर्णयामास समां भूमिं चकार ह ॥ ३१ ॥ पुरग्रामादिकानां तु रचना रचिता ततः । तेनैव पृथुना दक्ष यथायोग्यं धरातले ॥ ३२॥ नदादिर्नगराद्यानां रचना संप्रवर्तिता । पुत्रीत्वे स धरां चक्रे पृथ्वी नाम्नी ततोऽभवत् ॥ ३३ ॥ मनुं वत्सं ततः कृत्वा दोहकश्चाऽभवत्स्वयम् । षड्रसान्नमयं दुग्धं दुदोह नृपसत्तमः ॥ ३४ ॥ ततः सर्वे त्रिलोकस्था दुदुहुस्तां वसुंधराम् । स्वस्वान्नमयदुग्धं ते जगृहुः परमादृताः ॥३५॥ ब्रह्माणं वेदरूपं सुवत्सं कृत्वा बृहस्पतिः । दोहको दुग्धमादाय संस्थितो विगतज्वरः ॥ ३६ ॥ रुद्रं वत्सं ततः कृत्वा दोहकः पिशितात्मकम् । कालाग्निरुद्रसंज्ञश्च दुदोह हरजीवनम् ॥ ३७॥ विष्णुं वत्सं समादाय यजमानश्च दोहकः । यज्ञाधारमयं दुग्धं दुदोह खलु कर्मजम् ॥ ३८ ॥

सूर्यं वत्सं चकारापि दोहको ध्रुव आदरात् । ज्योतिषां जीवनं दुग्धं दुदोह सकलं ततः ॥ ३९ ॥ शेषं वत्सं च संगृह्य दुदोहाऽपि च वासुकिः । सर्पाणामन्नरूपं वै दुग्धं दुग्धप्रियस्ततः ॥ ४० ॥ शिवं वत्सं प्रकल्प्यैव दोहको नंदिकेश्वरः । विद्यात्मकं महद् दुग्धं दुदोह गतमत्सरः ॥ ४१ ॥ एवं सर्वे च दुदुहुर्भूमिं गां पृथुभाविताम् । चराचरमया जीवा ईश्वराश्च प्रजापते ॥ ४२ ॥ पृथुस्तां पूजयामास धरणीं धरणीप्रियः । पुत्रीत्वे पालिता हर्षात्सा स्थिता मुदिता तथा ॥ ४३ ॥ एवं दुग्ध्वा धरित्रीं स पृथुः पृथुपराक्रमः । राज्यं चकार नीतिज्ञः पृथिव्यामेकराट् स्वयम् ॥४४॥ ततो यज्ञांश्चकाराऽसौ शतसंख्यान् महाबलः । अश्वमेधाभिधान् राजा भूरिदक्षिणसंयुतान् ॥ ४५ ॥ तस्य यज्ञे स्वयं ब्रह्मा विष्णुः शंकर एव च । इंद्राद्या आययुः सर्वे गंधर्वाद्या महामते ॥ ४६ ॥ ऋषयः कश्यपाद्याश्च शेषाद्या नागमुख्यकाः । जना नानाविधा जग्मुः सस्त्रीकाश्च विशेषतः ॥४७॥ अंत्ये यज्ञे समारब्धे शक्रश्चिंतातुरो भृशम् । जटाचीरधरो भूत्वा तस्याश्वं सहसाऽऽहरत् ॥४८॥ तस्य पुत्रेण संदृष्टस्तपस्वीति च मोचितः । हयं त्यक्त्वा भयोद्विग्नोंतर्धानं तु चकार सः ॥ ४९ ॥ पुनरस्थिधरो भूत्वा भस्मना लेपकारकः । जहाराश्वं तथा राजपुत्रेण न स ताडितः ॥ ५० ॥ एवं षड्वारमश्वं स संजहार पुरंदरः । ततस्तं हंतुमुद्युक्तः पृथुः पृथुपराक्रमः ॥ ५१ ॥ तं ब्रह्मा सांत्वयामास महेंद्रं न जघान ह । एकोनशतयज्ञान् स चक्रे वै तेजसा युतः ॥ ५२ ॥ ब्रह्मणा नोदितः साक्षादिंद्रस्तं प्रणनाम ह । पृथुर्वैरं समुत्सृज्य देवेंद्रं तं प्रसस्वजे ॥ ५३ ॥ सकलाः पूजितास्तेन देवाद्याः स्वस्थलं ययुः । सोऽपि राज्यं स्वधर्मस्थश्चक्रे वै पालयन् प्रजाः ॥ ५४ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते पृथुयशोवर्णनं नाम चतुर्विंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । जनानां धर्ममार्गं सो शिक्षयन्नृपसत्तमः । विष्णुरूपः स्वयं साक्षाद्विष्णुतुल्यपराक्रमः ॥ १ ॥ संस्थितः स्वपुरे राजा लोकान् संरंजयन् प्रभो । तत्राऽऽजग्मुश्च योगींद्राः सनकाद्या विधेः सुताः ॥२॥ चत्वारः सूर्यसंकाशाः सदा बालवयोन्विताः । पूर्वेषां पूर्वजा मान्या गतभ्रांतय एव ते ॥ ३ ॥ तान् दृष्ट्वा सहसोत्थाय संभ्रमेण नरोत्तमः । ननाम दंडवद्भूमौ शिरः संस्थाप्य पादयोः ॥४॥ उत्थाय तान् महाभक्त्या पाद्यार्घ्यैर्विष्टरादिभिः । अपूजयत्स विधिवत् हर्षितोऽत्यंत-

भावतः ॥५॥ पादसंवाहनं तेषां चकार स्वयमादरात् । उवाच मधुरं वाक्यं पृथुर्वाक्यविशारदः ॥ ६ ॥ पृथुरुवाच । धन्येयं धरणी त्वद्य धन्यं नगरमुत्तमम् । मंदिरं सत्कृतं सर्वं भवतामागमेन मे ॥७॥ धन्यो वंशो कुलं धन्यं पितरौ ज्ञानमाश्रमः । तपो विद्यादिकं मे च भवतां पाददर्शनात् ॥८॥ सनाथोऽहं कृतोऽनाथो भवद्भिर्नात्र संशयः । अनुग्रहः कृतोऽत्यंतं विशेषेण दयालुभिः ॥९॥ पूर्वजन्मार्जितं मे किं फलितं पुण्यमुत्तमम् । अन्यथा दर्शनं न स्याद्भवतां ब्रह्मरूपिणाम् ॥ १० ॥ निःस्पृहा योगनिष्ठा ये सर्वज्ञाः स्वपरायणम् । दृष्ट्वा कुर्वंति कार्यार्थमाज्ञां तस्य हिताय च ॥ ११ ॥ अत आज्ञां महाभागा मम कुर्वंतु सांप्रतम् । तयाऽहं कृतकृत्यश्च भवामि न च संशयः ॥१२॥ मुद्गल उवाच । पृथोर्वचनमाकर्ण्य सनकाद्यास्तमब्रुवन् । तृप्ता भावेन तस्याथ योगींद्रा योगभाविताः ॥१३॥ सनकाद्या ऊचुः । धन्योसि नृपवर्य त्वं पृथो पृथुपराक्रम । विनयं तेऽद्य दृष्ट्वा वै संतुष्टा वयमादरात् ॥१४॥ न कार्यलिप्सया युक्ता वयं नम्रा महामते । दर्शनार्थं च ते याताः साधो स्वर्गे श्रुतं यशः ॥ १५ ॥ आज्ञां देहि गमिष्यामि ब्रह्मलोकं सनातनम् । कीर्तिः श्रुता तथा दृष्ट्वा तृप्ता हर्षसमन्विताः ॥१६॥ तेषां तद्वचनं श्रुत्वा पृथुस्तान् विनयान्वितः । जगाद भक्तिसंयुक्तो योगींद्रान्नृपसत्तमः ॥ १७ ॥ पृथुरुवाच । भुक्तं राज्यं महाभागा नानाभोगसमन्वितम् । अधुना शांतिसिध्यर्थं योगं ब्रूत तपोधनाः ॥१८॥ पृथोर्वचनमत्यंतं श्रुतं योगिभिरादरात् । पात्रं दृष्ट्वा महाभागा ऊचुस्तं ब्रह्म शाश्वतम् ॥१९॥ सनकाद्या ऊचुः । धन्योऽसि नृपशार्दूल बुद्धिस्ते परमाद्भुता । निर्वेदं राज्यभोगेभ्यः संप्राप्ता पृथुलश्रवः ॥ २० ॥ योगशांतिमयं पूर्णं गाणेशं विद्धि भूमिप । तं भजस्व महाभक्त्या तया शांतिं गमिष्यसि ॥२१॥ एकदा स्म वयं सर्वे संगताः शंकरालयम् । वटमूले समासीनमद्राक्ष्म ध्यानसंस्थितम् ॥२२॥ तं प्रणम्य स्थिताः सर्वे वयं विनयसंयुताः । स्तोत्रैस्तं बोधयंतश्च ततः शर्वो बुबोध वै ॥ २३ ॥ त्यक्त्वा ध्यानं गणेशाय नम इत्यवदत्ततः । श्रुत्वा भ्रांता वयं तं स्म पृच्छामः संशयान्विताः ॥२४॥ कोऽसौ गणाधिपः स्वामिन् कथं नमसि तं प्रभो । शिवः सहजरूपस्त्वं स्वाधीनः सततं मतः ॥ २५ ॥ अस्माकं वचनं श्रुत्वा शिवो हर्षसमन्वितः । जगाद ज्ञानमाद्यं यद्गाणपत्यं सुशांतिदम् ॥ २६ ॥ शिव उवाच । ब्रह्म यत्कथ्यते वेदैः कथं तत्र प्रवर्तते । स्वाधीनं सहजं विप्राः पराधीनं त्रिधा भवेत् ॥ २७ ॥ कर्मयोगादिभेदेन वेदे वै वेदवादिभिः । नानाविधं वर्णितं यद्ब्रह्म तन्माययान्वितम् ॥ २८ ॥ कर्मणां सकलानां संयोगो ब्रह्मणि जायते । तेन कर्मात्मकं ब्रह्म तद्वद् ज्ञानात्मकं मतम् ॥ २९ ॥ समूहवाची शब्दश्च गण इत्यभिधीयते । बाह्यांतरादिभेदानां

संयोगे तु समूहकः ॥३०॥ अन्नप्राणादिका शब्दा ब्रह्मणो वाचका मताः । ते सर्वे गणरूपाश्च तेषां स्वामी गणेश्वरः ॥ ३१ ॥ संयोगायोगकाद्या ये नाना योगा मता बुधैः । योगानां योगरूपोऽयं गणेशो नात्र संशयः ॥ ३२ ॥ गणो योगात्मकः प्रोक्तस्तस्मात्तस्य गणा वयम् । योगरूपा विशेषेण नमामो भक्तिसंयुताः ॥३३॥ माया विघ्नात्मिका प्रोक्ता भ्रांतिदा बिंबभावतः । तां जयंति जना ईशा विघ्नराजस्य सेवया ॥३४॥ ब्रह्मभूतास्ते भवंति योगींद्रा गाणपाः स्मृताः । अहं गणेशरूपो वै भिन्नं मायामयं मतम् ॥३५॥ चित्तं पंचविधं प्रोक्तं सा बुद्धिर्विविधात्मिका । तत्रैश्वर्यं च यत्प्रोक्तं सिद्धिः सा परमाद्भुता ॥३६॥ तत्र यद्बिंबभावेन गणेशः प्रतितिष्ठति । मायाभ्यां मोहितोऽत्यंतं सर्वत्राऽसौ विराजते ॥३७॥ बिंबिभावं परित्यज्य गणेशस्यैव सेवया । पंचधा चित्तमुत्सृज्य स्वयं चिंतामणिर्भवेत् ॥३८॥ गणेशोऽहं यदा विप्रास्तदा कुत्र प्रवर्तते । संयोगश्च तथा योगः शांतियोगं लभे ततः ॥३९॥ न भिन्नोऽहं कदा तस्माद्गणेशान्नात्र संशयः । योगींद्रः शांतियोगेन ब्रह्मभूतो भविष्यति ॥४०॥ एतदेव मदीयं यत् गुह्यं ध्यानं प्रकीर्तितम् । अतो गणेशदासोऽहं तं नमामि सदा द्विजाः ॥४१॥ एवमुक्त्वा महायोगी विरराम स शंकरः । उच्छिन्नसंशया जाताः सनकाद्या वयं नृप ॥४२॥ विचरामो महीमेतां स्वर्गेषु विवरेषु च । योगमार्गेण योगीशा गाणपत्याः स्वभावतः ॥४३॥ गणेशदर्शने जातलालसा वयमादरात् । तस्मिन् काले गणाधीशः कश्यपस्यात्मजोऽभवत् ॥४४॥ काशीराजो महाभक्तो गाणपत्यपरायणः । तस्य गेहे गतो देवः स्वस्य वै कार्यसाधनात् ॥४५॥ दर्शनार्थं वयं तत्र गताः काश्यां महामते । प्रपश्यामो गणेशं स्म ब्रह्मचारिस्वरूपिणम् ॥४६॥ तं प्रणम्य वयं राजन् स्थिता भक्त्या समन्विताः । बालरूपधरं देवं स्म स्तुमो बालयूथगम् ॥४७॥ सनकादय ऊचुः । नमो विनायकायैव कश्यपप्रियसूनवे । अदितेर्जठरोत्पन्नब्रह्मचारिन्नमोऽस्तु ते ॥४८॥ गणेशाय सदा मायाधार चैतद्विवर्जित । भक्त्यधीनाय वै तुभ्यं हेरंबाय नमो नमः ॥४९॥ त्वं ब्रह्म शाश्वतं देव ब्रह्मणां पतिरोजसा । योगायोगादिभेदेन क्रीडसे नात्र संशयः ॥५०॥ आदिमध्यांतरूपस्त्वं प्रकृतिः पुरुषस्तथा । नादानादौ च सूक्ष्मस्त्वं स्थूलरूपो भवान् प्रभो ॥५१॥ सुरासुरमयः साक्षान्नरनागस्वरूपधृक् । जलस्थलादिभेदेन शोभसे त्वं गजानन ॥५२॥ सर्वेभ्यो वर्जितस्त्वं वै मायाहीन-स्वरूपधृक् । मायामायिकरूपं त्वां को जानाति गतिं पराम् ॥५३॥ कथं स्तुमो गणाधीशं योगाकारमयं सदा । वेदा न शंभुमुख्याश्च शक्ताः स्तोतुं कदाचन ॥५४॥ वयं धन्या वयं धन्या येन प्रत्यक्षतां गतः । अस्माकं योगिनां ढुंढे

कुलदेवस्त्वमंजसा ॥५५॥ इत्युक्त्वा मौनमास्थाय नमामो दंडवत् स्म तम् । उवाच नो गणाधीशो भक्तिभावनियंत्रितः ॥५६॥ विनायक उवाच । भवद्भिर्यत्कृतं स्तोत्रं मदीयं योगशांतिदम् । भविष्यति महाभागाः पठते शृण्वते सदा ॥ ५७ ॥ यं यमिच्छति तं तं वै दास्यामि स्तोत्रभावितः । भवंतो गाणपत्याश्च भविष्यथ यथा शिवः ॥ ५८ ॥ एवमुक्त्वा स्वयं बालश्चिक्रीड प्राकृतो यथा । बालकैः सह योगात्मा काश्यपः पूर्ववन्नृप ॥ ५९ ॥ वयं काशीपते राजन् दर्शनार्थं गतास्ततः । तेनाऽपि मानिताः सम्यक् भुक्त्वा याताः पदे पुनः ॥६०॥ एतत्ते कथितं सर्वं योगशांतिमयं महत् । ज्ञानपूर्णं गणेशाख्यं तं भजस्व नराधिप ॥ ६१ ॥ मुद्गल उवाच । एवमुक्त्वा विधेर्लोके ययुस्ते सनकादयः । पृथुः पुत्रेषु राज्यं स्वं विभज्य च वनं ययौ ॥ ६२ ॥ तत्र योगक्रमेणैव गाणपत्यो बभूव ह । पत्न्या सह विनीतात्मा गणेशेऽन्ते लयं ययौ ॥ ६३ ॥ एतत् पृथुलकीर्तेश्च चरितं कथितं पृथोः । शृणुयाद्यः पठेद्वापि सर्वदं तस्य तद् भवेत् ॥६४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते पृथुचरित्रं नाम पंचविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । तदन्वये च संभूतो बर्हिषो नाम पार्थिवः । धर्मात्मा शस्त्रधारी स प्रजानां पालने रतः ॥१॥ स यज्ञान्विविधान् चक्रे कर्ममार्गपरायणः । प्राचीनाग्रकुशैः सर्वान् छादयामास मेदिनीम् ॥२॥ मृगयार्थं वनं यातः समुद्रतनयां तदा । उपयेमे स भूपालस्तस्यां पुत्रा दशाऽभवन् ॥३॥ सर्वे समानवर्णास्ते समाचाराः प्रजापते । समानमानसास्तेन नाम्नाऽऽख्याताः प्रचेतसः ॥४॥ प्रजार्थं ते समुद्रस्य समीपे तपसि स्थिताः । सरो नारायणाख्यं च तत्र विष्णुमपूजयन् ॥५॥ प्राचीनबर्हिराजर्षिं स्वगृहे कर्मकारकम् । स्थितं ज्ञात्वा समायातो नारदः करुणानिधिः ॥ ६ ॥ तं राजाऽपूजयत् भक्त्या कृतांजलिपुटः स्थितः । तमुवाच मुनिश्रेष्ठो राजानं ज्ञानदायकः ॥ ७ ॥ नारद उवाच । किं राजन् कर्मणा ते वै भविष्यति वद प्रभो । बंधदं कर्म वेदेषु प्रोक्तं नत्रात्र संशयः ॥ ८ ॥ यज्ञैर्नानाविधैः सर्वं कृतं कर्म त्वया महत् । घोरं हिंसात्मकं नित्यं नानापशुवधाश्रयम् ॥९॥ प्रहताः पशवः सर्वे त्वां प्रतीक्षंत ओजसा । वधार्थं तव चात्यंतं क्रोधयुक्ता न संशयः ॥१०॥ अधुना वृद्धरूपस्त्वं त्यक्त्वा कर्म महीपते । कर्मांकुराग्निरूपं वै ज्ञानमार्गं समाश्रय ॥११॥

मुद्गल उवाच । नारदस्य वचः श्रुत्वा विस्मितः स नृपोऽब्रवीत् । तं पुनस्तस्य भावज्ञो विनयेन समन्वितः ॥१२॥ प्राचीनबर्हिरुवाच । अहं कर्मपरं भावं जानामि मुनिसत्तम । कर्मणा लभते जंतुर्जानामि न च संशयः ॥१३॥ वद ज्ञानं विभो किं तत् कर्म मूलनिकृंतनम् । दयया च दयासिंधो मां तारय भवार्णवात् ॥ १४ ॥ तस्य तद्वचनं श्रुत्वा ज्ञात्वा कर्मपरायणम् । कर्मणा शुद्धरूपं तमुवाच मुनिसत्तमः ॥१५॥ नारद उवाच । ज्ञानं योगमयं विद्धि योगोऽभेदात्मकः स्मृतः । ब्रह्मणि ब्रह्मभूतश्च योगी योगेन जायते ॥१६॥ देहेऽस्मिन् पश्य राजेंद्र बिंबं गणपतेः स्मृतम् । मोहयुक्तं तदाकारं जीवरूपं हृदि स्थितम् ॥१७॥ पंचधा चित्तवृत्तिश्च वर्तते नृपसत्तम । क्षिप्ता मूढा च विक्षिप्तैकाग्राऽपि च निरोधिका ॥१८॥ यत्र क्षिप्तं नरेणैव चित्तं तज्ज्ञायते हृदा । तदेव क्षिप्तरूपं त्वं चित्तं जानीहि पार्थिव ॥१९॥ क्षिप्तं चित्तं नरेणैतन् मूढवत्तन्न बुध्यति । अन्यथा च भवेज्ज्ञानं मूढरूपं च तत्स्मृतम् ॥२०॥ मुमुक्षूणां भवेच्चित्तं विक्षिप्तं ब्रह्मलालसम् । न संसारसुखे मग्नं तन्न ब्रह्मणि संगतम् ॥२१॥ एकाग्रं सर्वभावेषु ह्यात्माकारेण संस्थितम् । अंतर्ज्ञानेन तद्रूपं पश्येद्वै योगसेवया ॥२२॥ निरोधं देहदेहिभ्यो हीनं निर्वृतिदायकम् । संयोगायोगरूपांतं लभते योगसेवया ॥२३॥ पंचधा कथितं भूप चित्तं सा बुद्धिरुत्तमा । जानीहि हृदये स्थित्वा गणपेन च खेलति ॥२४॥ पंचधा चित्तवृत्तिर्या तत्र मोहः प्रकीर्तितः । स्वस्वस्थानकरूपस्थैश्वर्यरूपो महीपते ॥२५॥ ऐश्वर्यभ्रांतिरूपा सा सिद्धिः सर्वत्र वर्तते । धर्मार्थकाममोक्षाणां ब्रह्मणः पंचधा स्मृता ॥२६॥ भ्रामयंतीह भूतानि गणपेन च खेलति । मया सा कथिता माया नृप नास्त्यत्र संशयः ॥२७॥ ज्ञानरूपा स्वयं बुद्धिरैश्वर्यात् सिद्धिरुच्यते । तयोर्बिंबं गणेशस्य भ्रमाढ्यं जीवसंज्ञितम् ॥२८॥ मायामयं सदा जातं माया सौख्ये प्रलालसम् । बंधयुक्तं महीपाल हृदि पश्य प्रकाशकम् ॥२९॥ पंचधा चित्तवृत्तिश्च तेन सर्वा प्रकाशिता । चिंतामणिरिति ख्यातिं गणेशस्य वदंत्यतः ॥३०॥ देहश्चतुर्विधः प्रोक्तः स्थूलः सूक्ष्मः समात्मकः । नादरूपश्चतुर्थो वै बिंदुस्तेषां परा गतिः ॥३१॥ देहेषु देहभोगस्थो देही भ्रांत्या चतुर्विधः । एकोऽपि ब्रह्म तेषां वै सोऽहं विद्धि नराधिप ॥३२॥ तद्योगे स्वत उत्थानं ब्रह्म वेदे प्रतिष्ठितम् । सत्यं परत उत्थानरूपं सौख्यमयं परम् ॥३३॥ तयोर्योगे स्वसंवेद्यं ब्रह्म पंचविधं स्मृतम् । सत्यासत्यसमाकारनेतिभेदात्मकं परम् ॥३४॥ संयोगो ब्रह्मणां यत्र योगाभेदेन शाश्वतः । समाधिसुखदः प्रोक्तः स्वानंद इति कथ्यते ॥३५॥ अयोगमेतद्रहितं ब्रह्मनिर्वृतिदायकम् । संयोगायोगयोर्नाशे योगः

शांतिप्रदायकः ॥३६॥ गणेशोऽयं महाराज समूहानां पतिः स्मृतः । समूहा ब्रह्मरूपाश्च ज्ञातव्या ज्ञानचक्षुषा ॥३७॥ तं भजस्व महीपाल हृदिस्थं गणनायकम् । बुद्धिप्रकाशकं पूर्णं बुद्धीशं शांतिदायकम् ॥३८॥ एवमुक्त्वा महायोगी नारदो विरराम ह । सोऽपि श्रुत्वा प्रणम्यादावुवाच मुनिपुंगवम् ॥३९॥ प्राचीनबर्हिरुवाच । भो भो योगिन् दयासिंधो तारितोऽहं त्वयाधुना । मत्समीपस्थिता विप्रा न जानंति त्विदं परम् ॥४०॥ नारदोंऽतर्दधे सद्यः प्रययौ गणपं स्मरन् । वीणागानरतो योगी स्वेच्छाचारी सदासुखी ॥४१॥ प्राचीनबर्हिराजर्षिस्त्यक्त्वाऽमात्येषु सत्वरम् । राज्यं वनं ययौ सोऽपि गणेशध्यानतत्परः ॥४२॥ नारदेन यथा तस्य कथितं ज्ञानमुत्तमम् । यथायोगं क्रमेणापि योगी गाणेशकोऽभवत् ॥४३॥ अंते लयं ययौ राजा गणेशे ब्रह्मरूपिणि । ब्रह्मभूतो नृपश्रेष्ठः कथितोऽसौ प्रजापते ॥४४॥ प्राचीनबर्हिराजर्षेश्चरितं यः शृणोति च । पठेद्वा तस्य पापं हि नाशयेत् सर्वदं भवेत् ॥४५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते प्राचीनबर्हिषश्चरितं नाम षड्विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । प्राचीनबर्हिषः पुत्रास्तेपुस्ते तप उत्तमम् । सहस्रवर्षपर्यंतं ततस्तुष्टो जनार्दनः ॥१॥ आययौ तान् वरं दातुं गरुडस्थश्चतुर्भुजः । तं दृष्ट्वा ते प्रणेमुश्चापूजयंस्तुष्टुवुर्मुदा ॥ २ ॥ प्रचेतस ऊचुः । नमस्ते केशवायैव नमस्ते भूत-भावन । निराकाराय कृष्णाय विष्णवे प्रभविष्णवे ॥३॥ आदिमध्यांतहीनाय वासुदेवाय ते नमः । सर्वाज्ञानविनाशाय ज्ञानदात्रे कृपालवे ॥४॥ लक्ष्मीपते नमस्तुभ्यं भक्तसंरक्षकाय च । भक्तिप्रियाय देवाय शेषशायिन्नमोऽस्तु ते ॥५॥ भक्तिमुक्तिप्रदायैव विकुंठपतये नमः । नारायणाय शांताय सत्त्वयुक्ताय ते नमः ॥६॥ वयं सपितरो धन्या यैः प्रदृष्टो जनार्दनः । वरं देहि विशेषेण सृष्टिसामर्थ्यदायकम् ॥७॥ एवं स्तुतः प्रसन्नात्मा तानुवाच स्वयं हरिः । सामर्थ्यमतुलं सृष्टौ भविष्यति च वः सुखम् ॥८॥ तपसा सिद्धरूपाश्च भवंतो नात्र संशयः । यद्यदिच्छथ तत्तद्वः सफलं प्रभविष्यति ॥ ९ ॥ भवत्कृतमिदं स्तोत्रं भुक्तिमुक्तिप्रदं भवेत् । पठतां शृण्वतां चैव मत्प्रसादकरं परम् ॥१०॥ एवमुक्त्वांतर्दधेऽसौ विष्णुः परपुरंजयः । तेऽपि त्यक्त्वाऽऽश्रमं सद्यो जग्मुः स्वगृहमुत्तमम् ॥११॥ गच्छतां पथि तेषां वै मार्गे वृक्षा अनेकशः । अराजके समुत्पन्ना

मार्गरोधनकारकाः ॥१२॥ तान् दृष्ट्वा क्रोधयुक्तास्ते ससृजुर्वह्निमुल्बणम् । तेन दग्धा वने वृक्षाः सकला यत्र तत्र च ॥१३॥ तेषु स्वल्पस्थितेष्वेव चंद्रस्तत्र समागतः । प्रगृह्य वृक्षजां कन्यां ददौ तेभ्यो यथाविधि ॥ १४ ॥ ऋषिवीर्यात्समुत्पन्नाऽप्सरः सुद्रुमपालिता । प्रगृह्य तां शांतिमाप्ता अग्निं चक्रुः सुशांतिदम् ॥ १५ ॥ स्वराज्यं प्राप्य ते सर्वे पालयामासुरादरात् । प्रजाः पुत्रानिवाध्यक्षा यंत्रितास्ते प्रचेतसः ॥१६॥ मारिषायां प्रचेतोभ्यो दक्ष त्वं त्वभवस्तदा । रुद्रशापेन सर्वज्ञस्तथा वै तेजसा युतः ॥१७॥ गणेशवरदानेन ब्रह्मपुत्र त्वमंजसा । न गमिष्यति ते दक्ष प्रजापालो भविष्यसि ॥१८॥ त्वां च राज्ये समास्थाप्य वनं चायुः प्रचेतसः । तेपुस्तत्र तपो घोरं योगशांत्यर्थमादरात् ॥१९॥ तत्राऽपि नारदो योगी गणेशे गानतत्परः । आययौ परमप्रीतः प्रचेतसां हितं चरन् ॥२०॥ तं दृष्ट्वा हर्षिताः सर्वे महौजस्काः प्रचेतसः । नेमुः संपूज्य तं भक्त्या स्थिताः प्रांजलयोऽभवन् ॥२१॥ तानुवाच मुनिश्रेष्ठः किमिच्छा वः प्रचेतसः । ब्रूत तां पूरयिष्यामि भवतां भावतोषितः ॥२२॥ नारदस्य वचः श्रुत्वा प्रोचुस्तं ते प्रचेतसः । वद त्वं शांतिदं योगं कृपया करुणानिधे ॥२३॥ श्रुत्वा स वचनं तेषां हर्षेण महताऽऽवृतः । उवाच सकलं योगं योगशांतिपदप्रदम् ॥२४॥ नारद उवाच । शांतियोगात्मकं भूपा गणेशं कथयंति वै । योगज्ञा ब्रह्मभूताश्च तं भजध्वं प्रचेतसः ॥२५॥ अहं गणेशाभिन्नश्च योगोऽयं शांतिदायकः । कथितो विष्णुना पूर्वं मह्यं शांतिप्रदः परः ॥२६॥ तेन शांतिं समास्थाय चरामि गणपं स्मरन् । गतभ्रांतिश्च सर्वत्र हर्षयुक्तेन चेतसा ॥२७॥ चित्तस्य पंचभूमीनां भ्रांतिं त्यक्त्वा नरः सदा । योगरूपो न संदेहो भवेद्वै शांतिरूपगः ॥२८॥ सर्वं मायामयं प्रोक्तं भ्रांतिदं बुद्धिलालितम् । त्यक्त्वा तद् योगिनः शांता भवेतैव प्रचेतसः ॥२९॥ एवमुक्त्वा महायोगी नारदः स्वेच्छया ययौ । हेरंबेति स्मरन् स्वर्गे कैलासे हर्षसंयुतः ॥३०॥ तेऽपि प्रचेतसः सर्वे कथितं योगमादरात् । क्रमेण साधयित्वा तं गाणपा अभवन् पराः ॥३१॥ अंते गणेशदेहे ते तदाकाराः प्रजापते । जाता ब्रह्ममयाः शांता महौजस्काः प्रचेतसः ॥३२॥ प्रचेतसां चरित्रं यः पठेद्वै यः श्रृणोति वा । तस्य भुक्तिश्च मुक्तिर्वै भविष्यति सुखप्रदा ॥३३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते प्रचेतसां चरितं नाम सप्तविंशतितमोऽध्यायः ॥



|| श्रीगणेशाय नमः || मुद्गल उवाच । दक्षः प्राचेतसो राजा तताप तप उत्तमम् । शतवर्षैर्गणाध्यक्षः प्रसन्नो वरदोऽभवत् ||१|| गणेशवरदानेन स सिद्धः ससृजे प्रजाः । देवा यक्षा मनुष्याश्च पिशाचाद्याः सहस्रशः || २ || नानाविधाः प्रजाः सृष्ट्वाऽवर्धंत नयदा तदा । धरण्यां मैथुनीं सृष्टिं ससृजे स प्रजापतिः ||३|| दशाभवन् सहस्राणां पुत्रास्तस्मान् महौजसः । तानुवाच स्वयं दक्षः सृजध्वं तपसा युताः ||४|| तथेति तं प्रणम्यादौ गतास्तपस आदरात् । तेषां मार्गे ब्रह्मपुत्रो नारदः सहसाऽऽगतः ||५|| उवाच विधिवत्तान् स योगमार्गं सनातनम् । तेन युक्ताश्च ते सर्वे न चक्रुः सृष्टिमुत्तमाम् ||६|| कर्ममार्गं परित्यज्य गाणपत्याश्च तेऽभवन् । गताः स्वेच्छाचराः सर्वे भ्रमहीना जितेंद्रियाः ||७|| ज्ञात्वा नष्टान् स्वपुत्रान् स पुनर्दक्षः ससर्ज ह । असिक्न्यां चैव पुत्राणां सहस्रं तेजसा युतम् ||८|| स तानुवाच प्रीतात्मा तपसा सृष्टिमुत्तमाम् । कुरुध्वं ते प्रणम्याऽऽदौ तं वनं ययुरादरात् ||९|| पुनस्तान्नारदस्तद्वद्ददौ ज्ञानं सुनिर्मलम् । तेऽपि योगयुताः सर्वे ययुः स्वेच्छाविहारिणः ||१०|| ज्ञात्वा वृत्तांतमुग्रं वै दक्षः क्रोधसमन्वितः । शशाप नारदं ब्रह्मपुत्रं परमभाविकम् ||११|| त्वया पुत्रा मदीयाश्च नाशिनाः कर्ममार्गतः । वर्णाश्रमक्रमेणैव युक्ता भ्रष्टाः कृताः खलु ||१२|| नारद त्वमतो दुष्ट प्रजाहीनो भविष्यसि । द्विमुहूर्तात् परं कालं न स्थातुं शक्यते त्वया ||१३|| यत्र कुत्र महीदेशे स्वर्गे पातालके पदे । भ्रमिष्यसि महादुष्ट मच्छापान्नात्र संशयः ||१४|| एवं शप्त्वा स्वयं दक्षो ययौ ब्रह्माणमादरात् । तं प्रणम्य जगन्नाथमुवाच विनयान्वितः ||१५|| सृष्टिं करोमि देवेश केन मार्गेण तद्वद । नारदो दुष्टभावेन मोघां सृष्टिं स मेऽकरोत् ||१६|| तमुवाच ततो ब्रह्मा सृज कन्याः सुलोचनाः । तथेति स ययौ स्थानं स्वकीयं स्रष्टुमारभत् ||१७|| षष्टिं दक्षोऽसृजत्कन्या वीरिण्यां तेजसान्विताः । चारुरूपा महाभागा मातरः सर्वदेहिनाम् ||१८|| ददौ स दश धर्माय कश्यपाय त्रयोदश । सप्तविंशतिमब्जाय चतस्रोऽरिष्टनेमये || १९ || द्वे ददौ बहुपुत्राय द्वे कृशाश्वाय भावनः । द्वे चाप्यंगिरसे तद्वद्वक्ष्ये तासां च विस्तरम् ||२०|| मरुत्वनी वसुर्यामी लंबा भानुररुंधती । संकल्पा च मुहूर्ता वै साध्या विश्वा च भामिनी ||२१|| धर्मपत्न्यो दशैताश्च तासां पुत्रान्निबोध च । विश्वेदेवाश्च विश्वायाः साध्यासाध्यानजीजनत् ||२२|| मरुत्वत्यां मरुत्वंतो वसोस्तु वसवः स्मृताः । भानोश्च भानवः सर्वे मुहूर्तायां मुहूर्तकाः ||२३|| लंबाया नादघोषौ च यामीजो नागवीथिकः । पृथिव्यां विषमं सर्वमरुंधत्यामजायन || २४ || संकल्पायास्तु संकल्पा धर्मपुत्रा इमे स्मृताः ।

तेषां पुत्रैश्च पुत्रीभिरखिलं वर्धितं जगत् ॥२५॥ आपो ध्रुवोऽथ सोमश्च धन्यश्चैवानलोऽनिलः । प्रत्यूषोऽथ प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥२६॥ अदितिश्च दितिः कद्रुररिष्टा सुरसा दनुः । सुरभिर्विनता चैव ताम्रा क्रोधवशा त्विरा ॥२७॥ मुनिः खशा च धर्मज्ञा तासां पुत्रान्निबोध वै । विवस्वानथ धाता च भगस्त्वष्टा तथांशकः ॥२८॥ वरुणाद्याश्च ये देवा ते सर्वे चादितेः सुताः । दितेश्च सकला दैत्याः पुत्राः शास्त्रेषु संमताः ॥२९॥ तथैव च दनोः पुत्रास्ताराद्या दानवाः स्मृताः । तारोऽथ विप्रचित्तिश्च शंबरः कपिलस्तथा ॥३०॥ स्वर्भानुः संकरश्चैव वृषपर्वा च वीर्यवान् । प्राधान्येनासुराः श्रेष्ठा दानवाः कथिता मया ॥३१॥ सुरसायाः सहस्रं च सर्पाणामभवत्तथा । अरिष्टा जनयामास गंधर्वाणां सहस्रकम् ॥३२॥ शेषाद्याश्च महानागाः कद्रोः पुत्राः प्रजापते । ताम्रा च जनयामास कन्याषट्कं सुलोचनम् ॥३३॥ शुकी श्येनी च भासी च सुग्रीवा ग्रंथिका शुचिः । तासां पुत्रादिभिः सर्वं पक्षिवृंदं बभूव ह ॥३४॥ सुरभिर्जनयामास महिषीर्गाः प्रजापते । इरा वृक्षलता वल्ली तृणजातीश्च सर्वशः ॥३५॥ मुनेः पुत्रास्तथा प्रोक्ता यक्षाः पुण्यजनास्तथा । रक्षोगणं क्रोधवशा जनयामास दारुणम् ॥३६॥ विनतायाश्च पुत्रौ द्वावरुणो गरुडोऽपरः । खशायाः खेचराः पुत्राः प्रेताद्याश्च प्रजापते ॥३७॥ एते कश्यपदायादा जंगमस्थावरात्मकाः । वैवस्वतेंतरे ह्यस्मिन् प्रख्याताः कथिता मया ॥३८॥ अरिष्टनेमिपुत्राश्च वेधसो रूपधारकाः । बहुपुत्रस्य पत्न्योस्तु चतस्रो विद्युतः स्मृताः ॥३९॥ तथा चांगिरसः पत्न्योर्ऋषयो वृषसत्कृताः । कृशाश्वस्य च देवर्षिदेवः प्रहरणः सुतः ॥४०॥ एते युगसहस्रांते जायंते पुनरेव च । मन्वंतरेषु सर्वेषु तुल्यकार्यैः स्वनामभिः ॥४१॥ पुत्रान् ब्रह्मर्षिरुत्पाद्य कश्यपस्तोषवर्जितः । ततापं तप उग्रं वै पुत्रार्थे परमार्थवित् ॥४२॥ तस्यैवं तपतः पुत्रौ प्रादुर्भूतौ महौजसौ । वत्सरश्चासितो नाम्ना तावुभौ ब्रह्मवादिनौ ॥४३॥ वत्सरान्नैध्रुवो जज्ञे रैभ्यश्च सुमहायशाः । रैभ्याच्च जज्ञिरे रुद्राः पुत्रा द्युतिमतां वराः ॥४४॥ च्यवनस्य सुता भार्या नैध्रुवस्य महात्मनः । सुमेधा जनयामास पुत्रान् वै कुंडपायिनः ॥४५॥ असिताच्चैकपर्णायां ब्रह्मिष्ठः समपद्यत । नाम्ना वै देवलः पुत्रो योगाचार्यश्च स स्मृतः ॥४६॥ शांडिल्यः परमो योगी सर्वतत्त्वार्थविच्छुचिः । इत्याद्या बहवः पुत्राः कश्यपस्य मयोदिताः ॥४७॥ एते च स्मरणाज्जंतोः कामपूरा भवंति च । पठनान्नात्र संदेहो मूलरूपाः प्रकीर्तिताः ॥४८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते कश्यपसृष्टिवर्णनं नाम अष्टाविंशतितमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। तृणबिंदोः सुता श्रेष्ठा नाम्नेलविलका स्मृता । पुलस्त्याय स राजर्षिर्ददौ विनयसंयुतः ॥१॥ तस्यां जज्ञे पुलस्त्याद्वै विश्रवा मुनिसत्तमः। तस्य पत्न्यश्चतस्रस्तु सुरूपा वामलोचनाः ॥२॥ पुष्पोत्कटा तथा राका कैकसी देववर्णिनी । ज्येष्ठं वैश्रवणं तस्मात् सुषुवे देववर्णिनी ॥३॥ कैकस्यजनयत्पुत्रं रावणं लोकरावणम् । कुंभकर्णं शूर्पणखां पुत्रीं तं च बिभीषणम् ॥४॥ रावणः कुंभकर्णश्च प्रतापी च बिभीषणः । तपस्तेपुः सुविपुलं सहस्र-दशकाब्दकम् ॥५॥ प्रसन्नश्च ततो ब्रह्मा वरदस्तान् समाययौ । रावणो वरयामास राज्यं निहतकंटकम् ॥६॥ भूर्भुवः-स्वस्त्रयाणां स लोकानां बलगर्वितः । सर्वेभ्यश्चामृतिं तद्वद्विस्मृतौ कपिमानुषौ ॥७॥ कुंभकर्णोऽभवद्वाण्या मोहितो वरमुत्तमम् । षण्मासनिद्रया युक्तं वव्रे तं वरदं प्रभुम् ॥८॥ बिभीषणस्तु धर्मात्मा स्वधर्मरुचिदं वरम् । वरयामास धातारं विष्णुभक्तिं सुभावतः ॥९॥ ब्रह्मा दत्वा वरांस्तेभ्यो ययौ स्थानं निजं ततः । ते रक्षःप्रवरा जातास्त्रिषु लोकेषु विश्रुताः ॥१०॥ जित्वा त्रिभुवनं दक्ष रावणः षष्टिलक्षकम् । वर्षाणां मानुषाणां स राज्यं चक्रे सहानुजः ॥११॥ रामेण स हतो दुष्टः कुंभकर्णश्च रावणः । बिभीषणं ततो राज्ये स्थापयामास राघवः ॥ १२ ॥ तपस्तप्त्वा वैश्रवणो गणेशस्य महात्मनः । एकाक्षरविधानेन तोषयामास विघ्नपम् ॥१३॥ दशवर्षसहस्रैस्तु प्रसन्नोऽभूद्गजाननः । भक्तिं स्वचरणे तस्मै ददौ शंकरमित्रताम् ॥१४॥ उत्तराशापतिं चक्रे धनपालाभिधं तथा । ततो देवेषु विख्यातः कुबेरः प्रबभूव ह ॥१५॥ पुष्पोत्कटा विश्रवसोऽजनयच्च महोदरम् । महापार्श्वं प्रहस्तं च खरं कुंभीनसीं सुताम् ॥१६॥ राका संजनयामास त्रिशिरस्कं च दूषणम् । विद्युज्जिह्वं महाकालं विश्रवस्तः प्रजापते ॥१७॥ इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा दश । विख्याताः पुरुषश्रेष्ठा राक्षसानां महाबलाः ॥१८॥ पुलहस्य मृगाः सर्वे पुत्रा व्यालाश्च दंष्ट्रिणः । पिशाचा बहवो भूताः शूकरा हस्तिनस्तथा ॥१९॥ अनपत्यः क्रतुश्चात्र स्मृतो वैवस्वतांतरे । मरीचेः कश्यपः पुत्रः स जातो वै प्रजापतिः ॥२०॥ भृगोः पुत्रस्तु मेधावी दैत्याचार्यो महायशाः । स्वाध्यायनिरतः काव्यो बभूव च प्रजापते ॥२१॥ शैवमार्गरतो भूत्वा सदा शंकरपूजकः । कैलासं प्राप शांत्यर्थं बोधितोऽभूत् हरेण च ॥२२॥ शांतियोगस्य सिद्ध्यर्थं गणेशमभजत् कविः । क्रमेण शांतिमापन्नो गाणपत्यो बभूव सः ॥२३॥ अत्रेः पुत्रोऽभवत् सोमोऽमृतरूपमयो महान्। अरुंधत्यां वसिष्ठाद्वै शक्तिः पुत्रो बभूव ह ॥२४॥ तस्मात् पराशरः साक्षात्तपोनिधिरजायत । शंकरस्य सदा भक्तिं

चकार परमादरात् ॥२५॥ वसिष्ठं योगशास्त्रज्ञं पितामहमनिंदितम् । स्वकर्मकुशलं शांतमपृच्छच्छांतिहेतवे ॥२६॥ पराशर उवाच । शिवोऽयं मोहहीनश्च नेति कर्ताव्ययः स्मृतः । कथं ब्रह्मणि निर्मोहे भवेन् मोहो भ्रमपदः ॥२७॥ मुद्गल उवाच । पराशरवचः श्रुत्वा वसिष्ठस्तमुवाच ह । हर्षयुक्तः स्वपौत्राय शांतियोगं सनातनम् ॥२८॥ वसिष्ठ उवाच । शृणु पुत्र प्रवक्ष्यामि ब्रह्मणा कथितं च मे । योगं शांतिकरं तुभ्यं कथयामि विशेषतः ॥२९॥ अहं शांत्यर्थमत्यंतं भ्रमितो ना लभे च ताम् । गतो लोके प्रविख्याते ब्रह्मणः परमेष्ठिनः ॥३०॥ तत्र संपूजयंतं वै ब्रह्माणं दृष्टवानहम् । गणेशमूर्तिं वै पुत्र संस्थितोऽहं प्रणम्य ताम् ॥३१॥ पूजाविधिं समाप्याऽसौ सभायां समुपागतः । तत्राऽहं विनतो भूत्वा ह्यवदं तं महाद्युतिम् ॥३२॥ त्वत्तः सर्वाणि भूतानि जायंते नात्र संशयः । त्वयि नाथ प्रलीयंते परं त्वत्तो न विद्यते ॥३३॥ त्वयाऽसौ पूजितः कस्मात् कः श्रेष्ठो वद सांप्रतम् । बहुवर्षमहं भ्रांतो नाऽलभे शांतिमुत्तमाम् ॥३४॥ मदीयवचनं श्रुत्वा ब्रह्मा हर्षसमन्वितः । जगाद मां यथायोग्यं पात्रं दृष्ट्वा पितामहः ॥३५॥ ब्रह्मोवाच । शृणु पुत्र महाभाग गणेशो योगशांतिदः । अस्माकं कुलदेवश्च सर्वेषां सोऽपि निश्चितम् ॥३६॥ तस्माद्वयं समुत्पन्नास्तेन संस्थापिताः पदे । सर्वसिद्धिप्रदातारं तं भजामि निरंतरम् ॥३७॥ अंते तत्रैव लीनाश्च वयं पुत्र न संशयः । तस्मादादौ गणेशानः पूज्यो माता पिता स्मृतः ॥३८॥ ज्येष्ठराजपदं पश्य वेदेषु कथितं सुत । तस्माज्ज्येष्ठो न वेदेष्वादिः सर्वेभ्यो गणेश्वरः ॥३९॥ य आदिः स भवेदंते कथितं शास्त्रसंमतम् । अतस्तत्र वयं लीना भविष्यामो न संशयः ॥४०॥ मध्ये नानाविधः सोऽपि कलांशेन गजाननः । प्रक्रीडति कलांशाश्च वयं तस्य स्मृताः सुत ॥४१॥ शांतिमिच्छसि चेत्पुत्र तां वदामि समासतः । पंचधा चित्तवृत्तिं त्वं त्यक्त्वा शांतो भविष्यसि ॥४२॥ क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकम् । चिंतामणिः समाख्यातस्तेन चित्तं प्रकाशितम् ॥४३॥ अहं गणेशरूपश्चेत् संयोगायोगता च मे । नास्ति ह्यतो भिन्नभावस्तेन भ्रांतिर्गता भवेत् ॥४४॥ जगत् सुब्रह्म सुप्रोक्तमैश्वर्यमतुलं बुधैः । जानीहि सिद्धिरूपं त्वं भ्रांतिदायकमंजसा ॥४५॥ जगद्ब्रह्ममयाकारा बुद्धिः शास्त्रेषु कथ्यते । पंचधा सा समाख्याता चित्तरूपा न संशयः ॥४६॥ तयोः प्रकाशकं बिंबं गणेशस्य महात्मनः । मोहितं पश्य मायाभ्यां तदाकारं हृदि स्थितम् ॥४७॥ बिंबभावं त्यज त्वं वै तदा शांतिं गमिष्यसि । चित्तमैश्वर्यमोहश्च बिंबं नैव प्रदृश्यते ॥४८॥ एवमुक्त्वा स्वयं मां स विरराम पितामहः । अहं प्रणम्य तं देवं

प्रादक्षिण्येन निर्गतः ॥४९॥ गत्वा वनांतरं पुत्र अतपं तप उत्तमम् । एकाक्षरेण मंत्रेण ध्यात्वा जपपरायणः ॥५०॥ क्रमेण योगभूमीनां भ्रांतिं त्यक्त्वा महामुने । चिंतामणिः स्वयं साक्षादभवं शांतियोगधृक् ॥५१॥ तथाऽपि गणराजस्य मंत्रध्यानं महात्मनः । दर्शनार्थं तपश्चोग्रमकार्षं च हितावहम् ॥५२॥ पूर्णे वर्षशते वै मां ययौ देवो गजाननः । प्रत्यक्षं मूषकारूढो योगशांतिस्वरूपधृक् ॥५३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते वसिष्ठतपोवर्णनं नाम एकोनत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । आगतं गणराजं स दृष्ट्वा हर्षसमन्वितः । ननाम दंडवद्भूमौ तं तुष्टाव यथामति ॥१॥ वसिष्ठ उवाच । अद्येयं धरणी धन्या पितरौ तप आश्रमः । विद्याव्रतादि मे धन्यं दर्शनात्ते पदस्य च ॥२॥ त्वं कर्ता कारणं चैव कारणानां न संशयः । गम्यागम्यमयः प्रोक्तो वेदे वै वेदवादिभिः ॥३॥ सर्वरूपश्च सर्वैस्त्वं हीनः सर्वप्रकाशकः । योगाभेदमयस्त्वं त्वां कथं स्तौमि गणाधिप ॥४॥ तथाऽपि भक्तिपाशेन यंत्रितस्त्वं गजानन । अनुग्रहार्थमायातो नामरूपधरः प्रभो ॥५॥ त्वद्दर्शनजबोधेन स्तौमि त्वां ब्रह्मनायकम् । वेदादिभिः सहाद्यैश्च संस्तुतं योगिभिः परम् ॥६॥ नमस्ते गणनाथाय नमस्ते सर्वसाक्षिणे । सर्वाकाराय वै तुभ्यं स्वसंवेद्याय ते नमः ॥७॥ सिद्धिबुद्धिपते तुभ्यं सिद्धिबुद्धिप्रदाय च । अमेयशक्तये देव देव तुभ्यं नमो नमः ॥८॥ असंप्रज्ञाततुंडाय संप्रज्ञातशरीरिणे । तयोर्योगे च योगात्मदेहाय तु नमो नमः ॥९॥ शांतियोगप्रकाशाय शांतियोगमयाय ते । योगिभ्यो योगदात्रे च योगेशाय नमो नमः ॥१०॥ वक्रतुंडाय वै तुभ्यमेकदंतधराय च । ब्रह्माकारात्मकानां ते चिह्नानां धारिणे नमः ॥११॥ स्तुवतस्तस्य हर्षेण कंठरोधः समाभवत् । ननर्त हृष्टरोमा वै देहभानविवर्जितः ॥१२॥ निमग्नं तं भक्तिरसे वीक्ष्य देवो गजाननः । तमुवाच महाभक्तं भावज्ञो भावपूरकः ॥१३॥ गणेश उवाच । त्वया कृतमिदं वै यत् स्तोत्रं भक्तिरसप्रदम् । धर्मार्थकाममोक्षाणां दायकं प्रभविष्यति ॥१४॥ मदीया भक्तिरचला तवानघ भविष्यति । स्मृतमात्रश्च ते गेहं यास्यामि मुनिसत्तम ॥१५॥ एवमुक्त्वा गणाधीशोंऽतर्दधे मम पश्यतः । सोहं तं हृदये पश्यन् स्थितः शांतिसमन्वितः ॥१६॥ गाणपत्यस्वभावेन मूर्तिपूजापरायणः । वसिष्ठोऽहं

महाभागो योगिवंद्यो बभूव ह ॥१७॥ वसिष्ठ उवाच । एतत्ते कथितं वत्स शांतियोगप्रदं शुभम् । ज्ञानं तेनैव मार्गेण गणेशं भज भक्तितः ॥१८॥ एवमुक्तः प्रणम्यादौ मुनिं पौत्रः पराशरः । वने गत्वा चकाराऽसौ तपः परमदारुणम् ॥१९॥ पितामहेन यज्ज्ञानं कथितं योगदं महत् । तादृशं साधितं तेन योगभूमिक्रमेण च ॥२०॥ त्यक्त्वा भूमिं स्वयं योगी गाणपत्यो बभूव ह । तस्य पुत्रत्वमापन्नो व्यासो विष्णुः स्वयं प्रभुः ॥२१॥ तथापि मुनिना तेन पत्न्या वत्सलया सह । तपस्तप्तं महाघोरं गणेशस्य महात्मनः ॥२२॥ संकल्पं पुत्रकामार्थं चकार स महामुनिः । गणराजः स्वयं मे वै भविता पुत्र उत्तमः ॥२३॥ दशवर्षसहस्रैस्तं प्रसन्नो गणनायकः । वरं दातुं समायातो भक्तिभावेन तोषितः ॥२४॥ तं दृष्ट्वा सहसोत्थाय प्रणम्य प्रकृतांजलिः । तुष्टाव सुस्थिरो भूत्वा पत्न्या साकमुदारधीः ॥२५॥ पराशर उवाच । नमस्ते गजवक्त्राय नराकाराय ते नमः । नरकुंजररूपाय गणेशाय नमो नमः ॥२६॥ निर्गुणाय गुणाधाररूपिणे परमात्मने । परात्पराय देवायानादिसिद्धाय ते नमः ॥२७॥ अनंताननधारायानंतपाण्यंघ्रिरूपिणे । अनंतविभवायैव गकाराय च ते नमः ॥२८॥ सर्वहीनाय देवाय मायाभ्यां वर्जिताय ते । सदा ब्रह्ममयायैव णकाराय नमो नमः ॥२९॥ तयोश्च स्वामिने तुभ्यं गणेशाय नमो नमः । स्वानंदवासिने पूर्णभुक्तिमुक्तिप्रदाय ते ॥३०॥ किं स्तौमि देवदेवेश वेदवेदांतकादिभिः । संपादितं परं ब्रह्म त्वामतः प्रणमाम्यहम् ॥३१॥ यदि तुष्टोऽसि देवेश तदा पुत्रो भव प्रभो । आवयोर्गणनाथ त्वं तदा मे स्यात् स्थिरं मनः ॥३२॥ अस्माकं कुलदेवश्च त्वमेव गणनायक । ब्रह्मभावेन नित्यं त्वां भजामस्तत्र विघ्नप ॥३३॥ पुत्रभावेन देवेश भजेयं संसृतौ गतः । संसारः सफलस्तेन ब्रह्मरूपो भवेच्च मे ॥३४॥ श्रुत्वैवं वचनं तस्य पराशरमुनेरिदम् । तमुवाच गणाधीशो भक्तं योगधरं परम् ॥३५॥ गणेश उवाच । त्वया यत्प्रार्थितं विप्र तत्सर्वं सफलं भवेत् । तव पुत्रो भविष्यामि गजासुरवधाय च ॥३६॥ त्वया स्तोत्रं कृतं यच्च तत्सर्वेच्छितदं भवेत् । भुक्तिमुक्तिकरं तेषां पठतां शृण्वतां नृणाम् ॥३७॥ एवमुक्त्वांतर्दधेऽसौ गणेशो ब्रह्मनायकः । पराशरः प्रसन्नात्मा सपत्नीको बभूव ह ॥३८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते पराशरवरप्रदानं नाम त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच। कोऽसौ गजासुरो नाम्ना दैत्यः परमदारुणः। वद तस्य चरित्रं मे वधपर्यंतमुत्तमम् ॥ १ ॥ यदर्थे गणराजोऽयं मुनिपुत्रोऽभवत्प्रभो। तन्न मुद्गल सामान्यं धन्यं जन्मासुरस्य च ॥२॥ सूत उवाच। दक्षस्य वचनं रम्यं श्रुत्वा योगींद्रसत्तमः। जगाद सकलं तस्य चेष्टितं दैत्यपस्य वै ॥ ३ ॥ मुद्गल उवाच। शृणु दक्ष पुरावृत्तमितिहासं वदामि तम्। पापप्रशमनं पूर्णं भुक्तिमुक्तिफलप्रदम् ॥ ४ ॥ महिषासुरनाशं च चकार जगदंबिका। तस्य पुत्रो महातेजा गजासुर इति स्मृतः ॥५॥ पितुर्वधेन संतप्तो देवानां वधकांक्षया। शुक्रोपदिष्टमंत्रेण शंकराराधने रतः ॥६॥ तताप स तपो घोरं निराहारसमन्वितः। पंचाक्षरविधानेन तोषयामास शंकरम् ॥७॥ दशवर्षसहस्रैस्तु प्रसन्नोऽभूच्छिवः स्वयम्। आययौ तं वरं दातुं गजासुरतपोवने ॥८॥ काष्ठवत्संस्थितं दैत्यं दृष्ट्वा विस्मयमागतः। जगाद तं स्वभक्तं वै शंकरः करुणानिधिः ॥९॥ शिव उवाच। वरं वरय मत्तस्त्वं गजासुर महामते। तपसा परितुष्टोऽहं तव दास्यामि दुर्लभम् ॥१०॥ शंकरस्य वचः श्रुत्वा हर्षयुक्तो महासुरः। उपचारैः षोडशभिः प्रणम्यापूजयच्छिवम् ॥११॥ अथर्वशिरसा शंभुं तुष्टावासुरनायकः। वरं वव्रे महाक्रूरं तच्छृणुष्व प्रजापते ॥१२॥ गजासुर उवाच। यदि तुष्टोऽसि देवेश वरं देहि महेश्वर। ब्रह्मांडवासिनः सर्वे तेभ्यो मृत्युर्न मे भवेत् ॥१३॥ राज्यं ब्रह्मांडगोलस्य देहि सामर्थ्यमुत्तमम्। सर्वातिगं महेशान नान्यं याचे परं वरम् ॥१४॥ तथेति तमुवाचाथ शिवोंऽतर्धानगोऽभवत्। हर्षयुक्तो महादैत्यस्ततो गेहं समाययौ ॥१५॥ मात्रा संमानितः सोऽपि सुहृद्भिश्च गजासुरः। दैत्याः समाययुः सर्वे गृहे तस्य महात्मनः ॥१६॥ स्वयं गत्वा गुरुं शुक्रमानयामास दैत्यपः। ततो मुनिगणैः सार्धमभिषेकं चकार सः ॥१७॥ दैत्यानां दानवां च राजाभूत् स गजासुरः। तैर्युक्तः पृथिवीं जित्वा ययौ स्वर्गं महाबलः ॥१८॥ देवाः पलायिताः सर्वे ज्ञात्वा क्रूरं गजासुरम्। शंकरं ते समाश्रित्य स्थिताः सर्वे भयातुराः ॥१९॥ दैत्यैः समावृतः सोऽपि कैलासमगमत्ततः। शंकरः क्रोधसंयुक्तस्तं ययौ देवसंवृतः ॥ २० ॥ युद्धाय शंकरं तेनागतं ज्ञात्वा महासुरः। स्वयं सैन्यं पुरस्कृत्याययौ रणविधित्सया ॥२१॥ देवानां दानवानां च युद्धं परमदारुणम्। संजातं च ततो दैत्याः पलायनपरा ययुः ॥२२॥ तं दृष्ट्वा क्रोधसंयुक्तो गजदैत्यः प्रतापवान्। बाणवृष्टिं महोग्रां स ससर्ज सुरनाशिनीम् ॥२३॥ बाणैर्निपतिता-स्तस्य देवाः सर्वे धरातले। छिन्नांगा मरणप्रायाः प्रलयं मेनिरे तदा ॥२४॥ इंद्रादयश्च दिक्पालाः पतिता बाणपीडिताः। गदया विष्णुमहनत् सोऽपि भूतलमाश्रितः ॥२५॥ ततः क्रोधसमायुक्तः शंकरः शूलमाददे। तेनाहनन् महादैत्यं प्रलयाग्नि-

समेन सः ॥२६॥ त्रिशूलेन हतः सोऽपि न चचाल सुराधिपः । वरदानप्रभावेण शस्त्राणि व्यर्थतां ययुः ॥२७॥ सहसागत्य दैत्येशो धृत्वा पादं प्रहस्य वै । भ्रामयित्वा महेशानं चिक्षेप रणमूर्धनि ॥ २८ ॥ ततो देवगणाः सर्वे पलायनपरायणाः । ययुर्दश दिशो रक्षो दैत्यसंत्रासतापिताः ॥२९॥ दैत्योऽपि शिवलोकं तं दैत्यैः सह समाययौ । स्थापयामास देवानां पदेषु श्रेष्ठदानवान् ॥३०॥ विकुंठादिपदेष्वेते स्थितास्तेन सुमानिताः । स्वर्गभोगकराः सर्वे कृता दैत्याः सुरारिणा ॥ ३१ ॥ कैलासे संहरं दैत्यं स्थापयामास वीर्यवान् । स्वयं समागतो दक्ष पृथिव्यां दैत्यपैर्वृतः ॥३२॥ महिषाख्यपुरे दुष्टः संस्थितो दैत्यपैः सह। चकार सोऽतुलं राज्यं त्रैलोक्यस्य महाबलः ॥३३॥ गते बहुतरे काले देवाः सर्वे भयातुराः । पर्वतांतरसंगुप्ताः संस्थिता अभवन् द्विजैः ॥ ३४ ॥ विचारमखिलाश्चक्रुर्गजासुरवधाय ते । तत्र विष्णुर्जगादेदं वचनं सर्वतोषदम् ॥३५॥ विष्णुरुवाच । ब्रह्मांडवासिनो ये वै तेभ्यो मृत्युर्न विद्यते । दैत्यस्य वरदानेन तेन सर्वे पराजिताः ॥३६॥ स्वानंदलोकगः साक्षाद्गणेशो देवनायकः । ब्रह्मांड-वर्जितो ब्रह्म तस्मात्तस्य मृतिर्भवेत् ॥ ३७ ॥ अतस्तं देवदेवेशं तपसा पुष्कलेन वै । सर्वे आराधयामैव देवाः सर्षिगणाः परम् ॥३८॥ स हत्वा तं महादैत्यं प्रदास्यति पदानि वः । हितं यदि सुराः कार्यं वचनं मे सुखप्रदम् ॥३९॥ विष्णोर्वचनमाकर्ण्य देवा मुनिगणास्तथा । साधुसाध्विति तत्रोचुर्बभुस्तपसि संस्थिताः ॥४०॥ केचिन् मंत्रजपं चक्रुः केचिन्नामजपं तथा । केचिन् मानसपूजायां निरताश्च बभूविरे ॥४१॥ केचिद् ध्यानं गणेशस्य चक्रुः केचित् स्तुतिं विभोः । निराहारं तथा केचिद्वायुपत्रादि-भक्षकाः॥४२॥केचिद्धोमं च पंचाग्निं धूम्रपानं तथाऽपरे। इत्यादि तपसा देवं तोषयामासुरादरात्॥४३॥शतवर्षे तु तेषां वै प्रादुर्भूतो गजाननः । पुरतस्तानुवाचेदं वचनं भक्तवत्सलः ॥४४॥ गणेश उवाच । देवाश्च मुनयः सर्वे वरं ब्रूत हृदीप्सितम् । दुर्लभं त्वपि तद्दास्ये तपसा तोषितो भृशम् ॥४५॥ गणेशवचनं श्रुत्वा दृष्ट्वा देवं पुरःस्थितम् । प्रणेमुर्मुनयो देवा दंडवत् पृथिवीतले ॥४६॥ परयाऽपूजयन् भक्त्या ब्रह्मेशं ब्रह्मभाविताः । तुष्टुवुः संप्रहृष्टाश्च सरोमांचाः प्रजापते ॥४७॥ देवर्षय ऊचुः । नमो नमो गणेशाय गणपालकमूर्तये। गणरूपेण सर्वत्र संस्थिताय नमो नमः ॥४८॥ मूषकारूढकायैवानादिरूपाय ते नमः। आकारादि-विहीनायाकाररूपाय ते नमः ॥४९॥ हेरंबाय नमस्तुभ्यं भक्तसंरक्षकाय च । भक्तवत्सलभावाय विघ्नेशाय नमो नमः ॥५०॥ नमस्तुभ्यं सिद्धिपते सिद्धिदात्रे च ढुंढये । बुद्धिदात्रे धियः पात्रे सर्वांतश्चारिणे नमः ॥ ५१ ॥ स्वानंदपतये तुभ्यं स्वसंवेद्याय ते नमः। योगरूपाय शांताय योगानां पतये नमः ॥५२॥ आदिमध्यांतहीनाय कर्त्रे हर्त्रे नमो नमः ।

पालकाय त्रिभिर्हीनगुणेशाय नमो नमः ॥५३॥ वक्रतुंडाय देवाय लंबोदरधराय च। सर्वेषां हृदि संस्थाय विनायक नमोऽस्तु ते ॥५४॥ यं स्तोतुं न समर्थाश्च वेदाः सांगाः कदाचन । वयं तत्र च के देव वेदैर्ज्ञानधरा यतः ॥५५॥ एवं स्तुत्वा गणेशानं पेतुस्ते तस्य पादयोः । धृत्वा मनसि तद्रूपं भक्तिभावेन यंत्रिताः ॥५६॥ पुनरुत्थाय ते सर्वे तमूचुर्भयविह्वलाः। कृतांऽजलिपुटा देवं गणेशं सर्वनायकम् ॥५७॥ यदि तुष्टोऽसि देवेश जहि दैत्यं गजासुरम् । पदभ्रष्टा वयं तेन कृताः कर्म-विवर्जिताः ॥५८॥ भक्तिं ते देहि विघ्नेश सर्वदुःखविनाशिनीम् । एष एव वरोस्माभिर्वाञ्छितो द्विरदानन ॥५९॥ देवर्षीणां वचः श्रुत्वा भक्तवत्सलभावतः । उवाच तान् गणाध्यक्षो हर्षयन् वचनं शुभम् ॥६०॥ गजासुरवधं देवा मुनयश्च सुदुष्करम् । तथापि भवतां वाक्यात् करिष्येऽहं न संशयः ॥६१॥ मदीया भक्तिरचला भविष्यति सुदुर्लभा । पराशरस्य पुत्रोऽहं भविष्यामि वधाय वै ॥६२॥ भवत्कृतमिदं स्तोत्रं मम प्रीतिविवर्धनम् । भुक्तिमुक्तिप्रदं पूर्णं भविष्यति न संशयः ॥६३॥ पठतां शृण्वतां विप्रा देवाः सर्वार्थसिद्धिदम् । दुःस्वप्नं सततं तेषां भविष्यति सुबुद्धिदम् ॥६४॥ इत्युक्त्वांतर्दधे देवो गणेशः सर्वसिद्धिदः । वत्सलोदरगो भूत्वा पराशरसुतोऽभवत् ॥६५॥ जातकर्मादिकं सर्वं चकार मुनिसत्तमः । ब्राह्मणैर्हर्षितो भूत्वा पत्न्या स्वयमुदारधीः ॥६६॥ स बालो ववृधे तत्र हर्षयन् मातरं निजाम् । पितरं चेष्टितैः स्वीयैर्बालक्रीडनकैस्तथा ॥६७॥ पंचमे व्रतबंधं च चकार मुनिसत्तमः । वेदानध्यापयामास सांगांस्तान् गणपाय च ॥६८॥ विवाहमकरोत्तस्य सिद्धिर्बुद्धिश्च शाश्वते। मरीचेश्च सुते जाते दत्ते तेन विधानतः ॥६९॥ इति ते कथितं सर्वं पराशरसुतस्य च। चरितं गणनाथस्य दैत्यस्य शृणु चेष्टितम् ॥७०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते पराशरसुतोत्पत्तिकथनं नामैकत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । एकदा तं सभायां वै संस्थितं दैत्यनायकम् । आययौ सहसा तत्र नारदो कौतुकी मुनिः ॥१॥ दैत्येन मानितो दक्ष तमुवाच महामुनिः । शृणु दैत्याधिप प्राज्ञ हितं ते वचनं महत् ॥२॥ अरण्ये मुनिभिर्देवैर्गणेशो भक्तिभावितः । आराधितो वधार्थं ते पराशरसुतोऽभवत् ॥३॥ इत्युक्त्वा प्रययौ तस्मान्नारदो दिव्यदर्शनः । दैत्यो रोषसमाविष्टो देवर्षीणां वधे रतः ॥४॥ आययौ यत्र देवाश्च मुनयः संस्थिताः खलः । दैत्यैः समावृतः

सर्वैर्महाबलपराक्रमैः ॥५॥ धृत्वा स सकलान् देवान् खलः सर्षिगणांस्तदा । तान् हंतुं शस्त्रमादत्ते तावत्तैर्विघ्नपः स्मृतः ॥६॥ स्मृतमात्रो गणाध्यक्षो बुद्धिभेदं चकार ह । दैत्यस्य तेन दैत्येन मानसे धारितं महत् ॥७॥ ममाधीना इमे विप्रा देवाश्चैव न संशयः । एषां दंडः प्रकर्तव्यो येन सत्वं गमिष्यति ॥८॥ पश्चात्कियति कालेऽहं हनिष्यामि बलात्किल । एवं निश्चितसंकल्पस्तानुवाच गजासुरः ॥९॥ गजासुर उवाच । देवा मुनिगणाः सर्वे वचः शृण्वंतु मे हितम् । कर्तव्यं जीवितुं तच्च यदीच्छथ च सत्वरैः ॥१०॥ कर्णौ संपीड्य पाणिभ्यामुत्तमांगं धरातले । नित्यमास्फालयध्वं वै मम पादस्य संनिधौ ॥११॥ तदा मुंचामि देवेशान्नान्यथा मुनिसत्तमान् । शिरच्छेदं च सर्वेषां करिष्यामि न संशयः ॥१२॥ भवद्भिः प्रार्थितो देवो गणेशो देववल्लभः । पराशरसुतो जातः कुरुध्वं तेन संयुताः ॥१३॥ एवं तस्य वचः श्रुत्वोवाच तं विष्णुरादरात् । गणेशं मनसा स्मृत्वा सामयुक्तं वचः शुभम् ॥ १४ ॥ त्वया यः कथितो दंडो वयं तं करवामहै । सर्वान् देवमुनीन् मुंच गमिष्यामो गजाननम् ॥१५॥ आनयित्वा च देवेशं तेन सार्धं प्रयत्नतः । त्वत्पादकमले नित्यं करिष्यामो यथातथम् ॥१६॥ गणेशमायया भ्रांतो दैत्यराजः प्रतापवान् । सकलान् मोचयामास देवानृषिसमन्वितान् ॥१७॥ दिवसे पंचमे प्राप्ते नागता मे प्रसन्निधौ । तदा सर्वान् हनिष्यामि गणेशेन समन्वितान् ॥१८॥ तथेत्युक्त्वा गताः सर्वे पराशरगृहं प्रति । गजाननं तत्र दृष्ट्वा प्रणेमुर्दंडवत् क्षितौ ॥१९॥ पराशरो विस्मितोऽसौ पूजयामास तान् स्वयम् । सहसा सकलान् प्राप्तान् मुनीन् देवान् विशेषतः ॥२०॥ पराशरेण संयुक्ताः सर्वे तेऽकथयंस्तदा । स्तुत्वा च विविधैः स्तोत्रैर्गजासुरविचेष्टितम् ॥२१॥ कर्णौ संपीड्य देवेश शिरःस्फालनमंजसा । कथं कुर्मोऽसुरस्याग्रे चरणावनताः प्रभो ॥२२॥ नीचस्य नमनादेव मरणं हि वरं स्मृतम् । तस्मात्त्वं जहि देवान् वा मुनीन् दैत्यान् गजानन ॥२३॥ मुद्गल उवाच । देवादीनां वचः श्रुत्वा स्मित्वा तानब्रवीत् प्रभुः । भक्तवत्सलभावेन यंत्रितः स प्रजापते ॥२४॥ गणेश उवाच । चिंता नैव प्रकर्तव्या हनिष्याम्यसुरं क्षणात् । कुरुध्वं मे वचो रम्यं सर्वेषां सुखदं भवेत् ॥२५॥ दैत्येंद्रेण प्रकथितो दंड एव स मे प्रियः । मम पादस्य सामीप्ये कुरुध्वं सर्वभावतः ॥२६॥ तदा दैत्यं महाघोरं हनिष्यामि प्रपश्यताम् । भवतां नात्र संदेहः क्षणार्धेन च सत्तमाः ॥२७॥ गणेशस्य वचो रम्यं श्रुत्वा देवर्षिसत्तमाः । परस्परं मुखालोकमकुर्वन् स्मितपूर्वकम् ॥२८॥ तत्र शंभुरुवाचेदं वचनं हितकारकम् । अस्माकं कुलदेवोऽयं तस्मात् कुर्वंतु सत्तमाः ॥२९॥ इत्युक्त्वा शंकरस्तत्र पाणिभिः

श्रवसि स्वयम् । पीडयित्वा शिरोभिस्तच्चरणे ध्वनिमाचरत् ॥३०॥ मृदुर्मधुररूपः स शब्दश्च शिरसाऽभवत् । श्रुत्वा गजाननो हृष्टो बभूव परमं तदा ॥३१॥ ततो विष्णवादिभिर्देवैर्भृग्वादिप्रमुखैस्तथा । मुनिभिश्च कृतं दक्ष ततोऽत्यंतं मुमोद सः ॥३२॥ भूत्वा तु मूषकारूढो चतुरायुधभूषितः । गजासुरवधार्थाय ययौ गणपतिः स्वयम् ॥३३॥ महिषाख्ये पुरे गत्वा सिंहनादं चकार सः । तेन भ्रांताश्चासुरास्ते गजदैत्यस्तथा स्वयम् ॥३४॥ एतस्मिन्नंतरे तत्र गुल्मस्था असुरा ययुः । छिन्नभिन्नीकृतांगा वै शशंसुर्देवचेष्टितम् ॥३५॥ असुरा ऊचुः । गणेशेन समायुक्ता देवा मुनिगणाः प्रभो । आययुर्योद्धुमत्यंतं मदयुक्ता गजासुर ॥३६॥ तेषां वचनमाकर्ण्य गजदैत्यः प्रतापवान् । सर्वानाज्ञापयामास दैत्यान् सज्जीभवंत्विति ॥३७॥ स्वयं सुसज्जितो भूत्वा रथारूढश्च निर्ययौ । अनु तं दैत्यसैन्येशा दैत्यास्ते निर्ययुः पुरात् ॥३८॥ अपारसेनया युक्तं तं ददर्श गजासुरम् । गजाननः प्रसन्नात्मा कालस्य भयदायकः ॥३९॥ ततो गजासुरः कोपाद्दैत्यानाज्ञापयत्तदा । संहरध्वं सुरान् सर्वान् मुनीन् यक्षादिसंयुतान् ॥४०॥ दैत्येंद्रेण समाज्ञप्ता असुरा जयशालिनः । अस्त्रैः शस्त्रैश्च ते देवान् पीडयामासुरोजसा ॥४१॥ देवाः क्रोधसमाविष्टा मरणे कृतनिश्चयाः । दैत्यान् प्रहरणैर्जघ्नुः शस्त्रैर्नानाविधैस्तदा ॥४२॥ दैत्यानां चैव देवानां युद्धं परमदारुणम् । बभूव तुमुलं तत्र परस्परविनाशनम् ॥४३॥ असृङ्नदी प्रवृत्ता च महौघा वीरमोहिनी । भग्ना दैत्यगणास्तत्र प्रहारपरिपीडिताः ॥४४॥ त्यक्त्वा दैत्यगणा लज्जां पलायंत दिशो दश । तत् दृष्ट्वा दैत्यराजस्तु विस्मितोऽभूत् प्रजापते ॥४५॥ ततो दैत्याधिपाः क्रूराः प्रधानप्रमुखा रणम् । आययुर्देवसेनां ते निर्जघ्नुश्च महाबलाः ॥४६॥ तत इंद्रादिभिस्ते वै रणं कृत्वा सुदारुणम् । निहता मूर्च्छिताः केचिद्रणे भूमौ निपातिताः ॥४७॥ हा हा दैत्यगणाः कृत्वा पलायंत दिशो दश । तत् दृष्ट्वा दैत्यराजः स विस्मयं परमं ययौ ॥४८॥ विपरीतं मया दृष्टं वह्निः शीतो यथाऽभवत् । तथा देवैर्मदीयेयं सेना सर्वा पराजिता ॥४९॥ एवं मनसि संतप्तः क्रोधारुणविलोचनः । रथारूढः स्वयं योद्धुमाययौ स गजासुरः ॥५०॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकंदतचरिते गजासुरसैन्यवधो नाम द्वात्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । समागतं महादैत्यं दृष्ट्वा देवा भयातुराः । गजाननं निजं नाथं ययुर्वृत्तांतमीरितुम् ॥ १ ॥ स वृत्तांतं देवमुखात् श्रुत्वा क्रोधसमन्वितः । परशुं पाशमुग्रं च गदां धृत्वा ययौ तदा ॥ २ ॥ मूषकारूढमाद्यं तं पुरुषं दैत्यनायकः । दृष्ट्वा गजाननं दीप्तमुवाच बलगर्वितः ॥ ३ ॥ गजासुर उवाच । किमर्थं रणभूमौ त्वमागतो ब्राह्मणाधम । तपः कार्यं त्वया नित्यं कथं क्षात्रं समाश्रितः ॥४॥ ब्रह्मादयो जिता येन तेन सार्धं त्वया द्विज । युद्धं कर्तव्यमत्यंतं वृथा मरणमाप्स्यसि ॥५॥ गच्छ स्वमाश्रमं विप्र न हन्मि त्वां समागतम् । बालभावात् कृतं कर्म सहेहं नात्र संशयः ॥६॥ इत्युक्तवंतमालोक्य शंभुः क्रोधसमन्वितः । उवाच तं महादैत्यं वचस्तद्धितकाम्यया ॥७॥ शिव उवाच । मूर्खोऽसि दैत्यराज त्वं नायं ब्राह्मणसत्तमः । गणेशोऽयं सदा सेव्यो योगिभिः परमादृतैः ॥ ८ ॥ पराशरस्य पुत्रोऽभूत्तपसाराधितः स्वयम् । वरदानप्रभावेण त्वां हनिष्यति निश्चितम् ॥ ९ ॥ त्यक्त्वा वैरं गणेशं च शरणं दैत्यनायक । एहि नोचेच्च सर्वस्वं हित्वा मृत्युमवाप्स्यसि ॥१०॥ वस पातालभूमौ त्वं न गणेशो हनिष्यति । एवं श्रुत्वा वचः शंभुं जघान गदयाऽसुरः ॥११॥ मूर्च्छया पतितो भूमौ शंकरस्तत्र संगरे । शस्त्रास्त्रैस्तेन दैत्येन मूर्च्छिताश्च कृताः सुराः ॥१२॥ विष्णवाद्याश्च रणे तत्र पतिताः पीडिता भृशम् । दैत्याधिपं ततो दृष्ट्वा गणेशोऽस्त्रमुपाददे ॥ १३ ॥ परशुं मंत्रयामास संहारास्त्रविधानतः । तत्याज दैत्यसेनायां महास्त्रं यमसंनिभम् ॥ १४ ॥ हताः परशुना दैत्या यत्र तत्र स्थिता मृधे । पश्यतो दैत्यराजस्य प्रधानाश्च मृताः सुताः ॥ १५ ॥ संहारास्त्रनिवृत्त्यर्थं नानायत्नमथाकरोत् । सर्वं तन्निष्फलं जातं गजदैत्यस्य संयुगे ॥ १६ ॥ एक एव महादैत्यो वरदानप्रभावतः । स संहारादुर्वरितो हतः परशुना न च ॥ १७ ॥ ततो दैत्यो ययौ क्रोधात्समीपे विघ्नपस्य च । शस्त्राणि सहसा त्यक्त्वा मल्लयुद्धोद्यतोऽभवत् ॥ १८ ॥ तादृशं तं गणेशानो दृष्ट्वा क्रोधसमन्वितः । दर्शयामास दैत्याय रूपं स्वानंदगं परम् ॥ १९ ॥ अनंतादित्यसंकाशं गजवक्त्रविराजितम् । ज्योतिषां ज्योतिरापूर्णं योगरूपं सुशांतिदम् ॥२०॥ तं धर्तुं दैत्यराजः स्म यतते निकटस्थितम् । आकाशवन्न तद्रूपं हस्तगं चाऽभवत् प्रभोः ॥२१॥ आश्चर्यं हृदये मत्वा दैत्येशो विह्वलो भृशम् । अहो मया धृतो ढुंढिर्हस्तगो मे न हस्तगः ॥ २२ ॥ किमिदं कौतुकं पूर्णं गणेशोऽयं सनातनः । ब्रह्माकारो न संदेहो हनिष्यति स मां ध्रुवम् ॥२३॥ धन्यं जन्म मदीयं वै पितरावाश्रमादिकम् । गणेशहस्तशस्त्रेण मरिष्यामि न संशयः ॥ २४ ॥ शुकाद्या योगिनो यं वै प्राप्ता योगैः सुदुश्चरैः । आयासेन विना सोऽयं

मया प्राप्तो गजाननः ॥२५॥ तं प्रणम्य महाभक्त्या दैत्येशो वरकांक्षया । जगाद गणनाथं वै भावभावितमादरात् ॥२६॥ ब्रह्म ब्रह्मेश जहि मां दासं ते गणनायक । वरं प्रयच्छ मे त्वेनं नमामि त्वां पुनः पुनः ॥ २७ ॥ न संसारसुखे चित्तं मदीयं ते प्रदर्शनात् । त्वया हतो भविष्यामि ब्रह्मभूतो न संशयः ॥२८॥ प्रार्थयंतं महादैत्यमंकुशेन जघान तम् । गणेशः सोऽपि सायुज्यं तस्य प्राप्तः प्रजापते ॥ २९ ॥ शंकराद्याः सुरास्तत्र मुनयो मोहसंयुताः । न विदुश्चेष्टितं तस्य बभुभ्रांता इव स्थिताः ॥ ३० ॥ हतं दैत्यं समालोक्य हर्षितास्ते तदाऽभवन् । गणेशोऽपि स्वकं रूपं लीनं कृत्वा स्थितः पुरः ॥३१॥ पूर्वाकारं च तं दृष्ट्वा तुष्टुवुस्ते सुरर्षयः । संपूज्य भक्तिभावेन नेमुश्च ननृतुः पुरः ॥३२॥ देवर्षय ऊचुः । नमस्ते गजवक्त्राय गजाननसुरूपिणे । पराशरसुतायैव वत्सलासूनवे नमः ॥ ३३ ॥ व्यासभ्रात्रे शुकस्यैव पितृव्याय नमो नमः । अनादिगणनाथाय स्वानंदावासिने नमः ॥३४॥ रजसा सृष्टिकर्त्रे ते सत्त्वतः पालकाय वै । तमसा सर्वसंहर्त्रे गणेशाय नमो नमः ॥३५॥ प्रकृतेः पुरुषस्यापि रूपिणे परमात्मने । बोधाकाराय वै तुभ्यं केवलाय नमो नमः ॥३६॥ स्वसंवेद्याय देवाय योगाय गणपाय च । शांतिरूपाय तुभ्यं वै नमस्ते ब्रह्मनायक ॥ ३७ ॥ विनायकाय वीराय गजदैत्यस्य शत्रवे । मुनिमानसनिष्ठाय मुनीनां पालकाय च ॥ ३८ ॥ देवरक्षाकरायैव विघ्नेशाय नमो नमः । वक्रतुंडाय धीराय चैकदंताय ते नमः ॥ ३९ ॥ त्वयाऽयं निहतो दैत्यो गजनामा महाबलः । ब्रह्मांडे मृत्युसंहीनो महाश्चर्यं कृतं विभो ॥४०॥ हते दैत्येऽधुना कृत्स्नं जगत् संतोषमेष्यति । स्वाहास्वधायुतं पूर्णं स्वधर्मस्थं भविष्यति ॥४१॥ एवमुक्त्वा गणाधीशं सर्वे देवर्षयस्ततः । प्रणम्य तूष्णींभावं ते संप्राप्ता विगतज्वराः ॥ ४२ ॥ कर्णौ संपीड्य गणपचरणे शिरसो ध्वनिः । मधुरः प्रकृतस्तैस्तु तेन तुष्टो गजाननः ॥४३॥ तानुवाच मदीया ये भक्ताः परमभाविताः । तैश्च नित्यं प्रकर्तव्यं भवद्भिर्नमनं यथा ॥ ४४ ॥ तेभ्योऽहं परमप्रीतो दास्यामि मनसीप्सितम् । एतादृशं प्रियं मे च नमनं नात्र संशयः ॥४५॥ एवमुक्त्वा स तान् सर्वान् सिद्धिबुद्ध्यादिसंयुतः । अंतर्दधे ततो देवा मुनयः स्वस्थलं ययुः ॥४६॥ पिना पराशरस्तस्य माता वै वत्सला प्रभोः । शोकसागरमग्नौ तौ श्रुत्वा वार्तां निपेततुः ॥ ४७ ॥ ततः कारुणिको देवस्तयोश्चित्तप्रकाशकः । योगशांतिमयं ज्ञानं बोधयामास शाश्वतम् ॥ ४८ ॥ मूर्तिं मदीयां वै कृत्वा संस्थाप्य ब्राह्मणैः सह । तस्याः पूजा प्रकर्तव्या भवद्भ्यां नित्यमादरात् ॥४९॥ देहव्यापारिता तत्र कर्तव्या हृदि शांतिदम् ।

योगरूपधरं दृष्ट्वा कालमाक्रमतं सदा ॥५०॥ एवमुक्त्वा हृदिस्थोऽसौ गणेशोंऽतर्दधे ततः । कृतवंतौ महाभागौ तथा दक्षसुयोगिनौ ॥५१॥ अचला स्थापिता मूर्तिः सिद्धिदा साऽभवत्परा । दर्शनान् मोक्षदा दक्ष सकामानां प्रकामदा ॥५२॥ एतत्ते कथितं सर्वं गजासुरवधाश्रितम् । चरितं गणनाथस्य सर्वपापहरं शुभम् ॥ ५३ ॥ यः शृणोति नरो भक्त्या पठेद्वा तु प्रजापते । तस्मै भुक्तिप्रदं पूर्णं मुक्तिदं प्रभविष्यति ॥५४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते गजासुरवधाख्यानं नाम त्रयस्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । पराशरस्य पुत्रोऽभूत् व्यासः साक्षाज्जनार्दनः । वेदादिभागसिद्ध्यर्थं देवैः संप्रार्थितः पुरा ॥१॥ स एव ज्ञानगर्वेण न सस्मार गजाननम् । नमनं न प्रकर्तव्यं मया विष्णुस्वरूपिणा ॥२॥ ततस्तस्य गतं ज्ञानं सकलं वेदशास्त्रजम् । प्रययौ दुःखितस्तेन ब्रह्माणं शरणं पुरा ॥३॥ ब्रह्मणा बोधितो व्यासः पुराणं श्रुतवान् प्रभोः । गाणेशमादिभूतं तत्तेन स ज्ञानवानऽभूत् ॥४॥ तपस्तप्त्वा सुविपुलं गाणपत्यो बभूव ह । शांतियोगधरः साक्षाद्व्यासो नारायणः स्वयम् ॥५॥ ततो व्यासेन वेदानां शाखा भिन्नाः कृताः पराः । सौलभ्यार्थं नराणां वै कर्मादिज्ञानसिद्धये ॥६॥ आदौ वेदं यजुःसंज्ञं तं चतुर्धा विभज्य सः । चातुर्होत्रं चकारैव कर्म सर्वं प्रजापते ॥७॥ यजुषाध्वर्यवं चक्रे ऋग्भिर्होतृत्वमंजसा । उद्गातृत्वं चकाराऽसौ सामभिः सर्वसंमतः ॥८॥ ब्राह्ममेवाकरोद्विप्रोऽथर्वभिः सुसमाहितः । एवं चतुर्विधं कर्म कृत्वा मान्यो बभूव ह ॥९॥ मंत्रैर्युक्ता पुरा तेन संहिता विविधा कृता । यज्ञार्थं ब्राह्मणं प्रोक्तं योगार्थं यदरण्यकम् ॥१०॥ पैलं शिष्यं महाबुद्धिमृग्वेदे भेदधारकम् । वैशंपायनमेवं स यजुषां भेदधारकम् ॥११॥ जैमिनिं सामवेदस्य पारगं प्रचकार ह । अथर्वधारकं विप्रं सुमंतुं मुनिसत्तमः ॥१२॥ तेन चाष्टौ कृता भेदा ऋग्वेदस्य महात्मना । षडशीतिः कृता भेदा यजुर्वेदस्य वै तथा ॥१३॥ एकं सहस्रं शाखानां सामवेदस्य वै कृतम् । अथर्वणस्तथा भेदा कृता नव विवेकिना ॥१४॥ पुराणमेकरूपं वै शिष्याय प्रददौ मुनिः । रोमहर्षणसंज्ञाय सूताय नतरूपिणे ॥१५॥ पुराणस्य कृता भेदा अष्टादश महात्मना । पुराणोपपुराणाख्या द्विविधा संहिता स्मृता ॥१६॥ ब्राह्मं च वैष्णवं पाद्मं शैवं

भागवतं तथा । भविष्यं ब्रह्मवैवर्तं मार्कंडेयं च वामनम् ॥१७॥ आग्नेयं वायवं मात्स्यं वाराहं कौर्ममेव च । लैंगं गारुडकं स्कांदं ब्रह्मांडं च प्रजापते ॥१८॥ अष्टादश पुराणानि कथितानि विशेषतः । तथैवोपपुराणानि कथयामि प्रजापते ॥१९॥ गाणेशं नारदीयं च नारसिंहं च कापिलम् । नांदिकेयं च वारुण्यं दौर्वाससमथांबिकम् ॥२०॥ कालिकेयं च मारीचमौशनसं च भार्गवम् । सानत्कुमारकं चैव कौमारं च प्रजापते ॥२१॥ माहेश्वरं च सौरं वै पाराशर्यं च मौद्गलम् । अष्टादश पुराणानि कथितानि समासतः ॥२२॥ धर्माधर्मव्यवस्थार्थं चक्रे भारतमुत्तमम् । एतत्सर्वं स जग्राह व्यासात् सूतो महामतिः ॥२३॥ एतानि गाणपत्यानि ज्ञातव्यानि विचक्षणैः । अन्यानि सेतिहासानि गणेशस्तुतिमंति वै ॥२४॥ श्रुत्वा सुवचनं तस्य मोहिता मुनयः पुनः । ऊचुः सूतं महाप्रज्ञं संशयच्छेदनाय ते ॥२५॥ शौनकाद्या ऊचुः । कथं सूत शिवादीनां पुराणानि महामते । प्रोक्तानि गाणपत्यानि वद संशयमुक्तये ॥२६॥ तेषां वचनमाकर्ण्य सूतः सर्वार्थकोविदः । जगाद तान् महाबुद्धिः संशयच्छेदनं वचः ॥२७॥ सूत उवाच । गणेशस्य स्वरूपं यत् पंचधा व्यासभाषितम् । ज्ञातव्यं मुनिशार्दूलास्तेषां भेदं वदाम्यहम् ॥२८॥ आद्यं ब्राह्मं पुराणं यद्गाणपत्यं प्रकीर्तितम् । निर्गुणो गणपस्तत्र वर्णितो ब्रह्मवाचकः ॥२९॥ हृदयेषु जनानां वै बुद्धीनां यत् प्रकाशकृत् । तदेव तस्य रूपं तद्ध्यायंति त्यागिनः प्रभोः ॥३०॥ आकारादि विहीनं तत् साक्षिभूतं सदा परम् । मनोवाणीविहीनं च ज्ञातव्यं न्यासिभिर्मुने ॥३१॥ तं ध्यायंति महाभागा योगिनश्च चतुर्विधाः । संन्यासिनो हृदिस्थं ते गणेशं बुद्धिचालकम् ॥३२॥ अन्यदंत्यं पुराणं यद्ब्रह्मांडं गणपस्य तत् । तत्रोंकारमयाकारः सगुणो वर्णितः प्रभुः ॥३३॥ जगद्विहारकारी स पंचधा प्रबभूव ह । प्रणवः प्रणवाकारो गजानन उदाहृतः ॥३४॥ अकारोकारकौ चैव मकारो नाद आबभौ । बिंदुः पंच विभज्यात्मा नानाखेलं करोति सः ॥३५॥ जगदाकाररूपेण स्थितं विघ्नेशमादरात् । ध्यायंति जगदात्मानं प्रणवाकृतिलक्षणम् ॥३६॥ स्मरंति तं द्विजा नित्यं वेदादौ कर्मसिद्धये । ब्रह्मांडाकारविघ्नेशः सगुणः परिकीर्तितः ॥३७॥ तथैवोपपुराणेषु गाणेशं चाद्यमंजसा । पुराणं तद्गणेशस्य भिन्नमूर्तिधरस्य च ॥३८॥ सगुणं जगदाकारं निर्गुणं बुद्धिचालकम् । तयोर्ज्ञानप्रसिद्ध्यर्थं मूर्तिमंतं स्तुवंति ते ॥३९॥ गजवक्त्रादिचिह्नैश्च चिह्नितं गणनायकम् । मंत्रादिना भजंते तं भावयुक्ता महर्षयः ॥४०॥ तस्योपासनमात्रेण सगुणं निर्गुणं तथा । सुलभं प्राप्यते ब्रह्म योगिभिस्तापसोत्तमैः ॥४१॥ अंत्यं मौद्गलमेतच्च पुराणोपनिषत्परम् । तत्र विघ्नेशमाहात्म्यं योगाकारं

प्रकीर्तितम् ॥४२॥ सगुणं निर्गुणं ब्रह्म मूर्तिरूपधरं मुने। त्रयाणां योगरूपं वै मुद्गलेन प्रकाशितम् ॥४३॥ योगिनः शुकमुख्यास्तं प्रभजंति यथातथम्। योगेनाभेदसंज्ञेन वर्णाश्रमविवर्जिताः ॥४४॥ तस्मादादौ गणेशस्य पूजनं सर्वसंमतम्। अंते सोऽपि न संदेहो वेदांतेषु विशेषतः ॥४५॥ य आदिः प्रलयांते स तिष्ठेद्वै सर्वसंमतम्। तस्मादाद्यंतभागेषु पुराणेषु गणेश्वरः ॥४६॥ पंचमं मध्यरूपं च गणेशस्य महात्मनः। कलांशेन प्रसंख्यातं नामरूपधरं मुने ॥४७॥ शिवविष्णवादिभेदैश्च स खेलति गजाननः। तेषां मध्ये पुराणानि व्यासेन कथितानि वै ॥४८॥ तस्मात् सर्वपुराणेषु गणेशस्यैव वर्णनम्। कथितं नात्र संदेहो व्यासेनामितबुद्धिना ॥४९॥ इदं पंचविधं रूपं गणेशस्य महात्मनः। यो जानाति नरः सोऽपि मोहहीनो भविष्यति ॥५०॥ चतुर्विधं गणेशस्य पूजनं कथितं सदा। सर्वारंभेषु सिद्धीनां दायकं भक्तिकारिणे ॥५१॥ मूर्तिपूजनमेकं च द्वितीयं प्रणवात्मकम्। तृतीयं बुद्धिदं चैव शांतिरूपं चतुर्थकम् ॥५२॥ अत आदौ जनाः केचिद् ग्रंथेषु ब्रह्मरूपकम्। स्मरंति वा पूजयंति सर्वसिद्धिप्रदायकम् ॥५३॥ केचिद् बुद्धिप्रदं देवं हृदिस्थं संस्मरंति वा । पूजयंति द्विजेंद्राद्याः सर्वदा गणनायकम् ॥५४॥ केचिदोंकाररूपं तं पूजयंति स्मरंति वा । सर्वादौ सर्वसिद्धीनां दायकं विघ्ननायकम् ॥५५॥ केचिन् मूर्तिधरं देवं पूजयंति स्मरंति वा। सर्वादौ गणनाथं च ज्ञातव्यं शास्त्रसंमतम् ॥५६॥ अत आदौ तथा मध्ये सर्वांऽते स गजाननः। शोभते योगरूपेण शांतिदो भक्तवत्सलः ॥५७॥ ब्रह्मणा बोधितो व्यासो गाणपत्यः प्रतापवान्। गणेशप्राप्तिकामार्थं नानाभेदं चकार सः ॥५८॥ वासनाच्छेदनार्थं च जनानां योगसिद्धये। शिवादीनां पुराणानि क्रमार्थं वर्णितानि वै ॥५९॥ एतद्व्यासस्य माहात्म्यं कथितं सकलं तव। यः शृणोति नरो भक्त्या पठेद्वै तस्य सर्वदम् ॥६०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते व्यासमाहात्म्यं नाम चतुस्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। व्यासस्याऽपि सुतो जज्ञे शुकः साक्षाच्छिवः स्वयम्। तपसाराधितस्तेन योगिनां स शिरोमणिः ॥१॥ शुको गर्भाद्विनिःसृत्य संगभीत्याऽपलायत। संगेन ज्ञानभंगो वै जायते विषयात्मनाम् ॥२॥ तं गच्छंतं समालोक्य व्यासो वै धावितोऽभवत्। बोधयन् हेतुभिर्वाक्यैर्नानाक्रममयैः सुतम् ॥३॥ तिष्ठ तिष्ठ महायोगिन् शृणु मे परमं वचः। प्रथमं ब्रह्मचर्यं च ततो गार्हस्थ्यमंजसा ॥४॥ ततो वनाश्रमः प्रोक्तस्ततः सन्यास आदरात्। क्रमेण सेविता

एते तदा योगः सुसिध्यति ॥५॥ अन्यथा सहसा कृत्वा योगभ्रष्टो नरो भवेत् । अथवा भ्रष्टभावेन नारकी धर्मनाशतः ॥६॥ अतो मनोजयार्थं त्वं क्रममार्गं समाचर । अंते योगींद्रसंसेव्यो भविष्यसि न संशयः ॥७॥ सहसा मा चर त्वं वै त्यागं परमदुस्तरम् । मनश्चंचलभावेन पतिष्यसि न संशयः ॥८॥ इत्याद्यैर्विविधैर्वाक्यैः सुतो व्यासेन बोधितः । संगस्यैव भयाद्योगी न बुबोध शुको मुने ॥९॥ व्यासोऽपि भावि च ज्ञात्वा ययौ स्वस्याश्रमं स्वयम् । गणेशं मनसा ध्यात्वा संस्थितश्चिंतयान्वितः ॥१०॥ एतस्मिन्नंतरे तत्र ब्रह्मा स्वयमुपागतः । तं प्रणम्य शुकस्याऽपि वृत्तांतमवदन्मुनिः ॥११॥ ततस्तं प्रत्युवाचाथ ब्रह्मा चिंतां तु मा कुरु । शुको न भविता शंभुर्भ्रष्टो वै नात्र संशयः ॥१२॥ एवमाश्वास्य तं व्यासं तस्य पूजां प्रगृह्य सः । ययौ स्वभवनं ब्रह्मा व्यासो वै हर्षितोऽभवत् ॥१३॥ शुकः स नर्मदातीरे संस्थितो योगसेवया । सर्वत्र ब्रह्मभावेनाचिंतयद्ब्रह्म शाश्वतम् ॥१४॥ संप्रज्ञातोऽष्टधा तेन साधितो वेदमार्गतः । असंप्रज्ञातयोगेषु संस्थितो योगिसत्तमः ॥१५॥ शुकेश्वरस्तत्र साक्षाच्छंकरस्तिष्ठति प्रभुः । शिवेन हृदि संस्थेन बोधितो बादरायणिः ॥१६॥ गुरुणा तेन हीनोऽयं शुको योगं समभ्यसत् । योगभूमिक्रमेणैवासाधयद्योगमुत्तमम् ॥१७॥ स्वत उत्थानकं ब्रह्म साधयित्वा विधानतः । प्राप्तं परत उत्थानं तेन सांख्यं महात्मना ॥१८॥ तत्र ब्रह्मणि संसक्तो योगाभेदेन केवले । बभ्राम पृथिवीं सर्वां विदेहोऽसौ महामुनिः ॥१९॥ ब्रह्म सांख्यं निराधारं दृष्ट्वा संशयवानभूत् । तदर्थं जनकं सोऽपि ययौ हर्षसमन्वितम् ॥२०॥ जनकेन तथा सांख्यं विदेहं कथितं परम् । ततः संशयहीनश्च जातो वैयासकिः प्रभुः ॥२१॥ सांख्ये बोधस्य नाशः स्यात्तत् दृष्ट्वा विस्मितो मुनिः । विचारमकरोच्चित्ते योगभावेन भावितः ॥२२॥ बोधेनोत्थानकं जंतोर्जायते नात्र संशयः । बोधहीनेन योगेनोत्थानं नास्य भवेत् कदा ॥२३॥ ब्रह्म योगमयं प्रोक्तं तत्रोत्थानविहीनता । उत्थानं विद्यते नैव ब्रह्माकारं प्रवर्तते ॥२४॥ सांख्यं ब्रह्म विदेहत्वान्मतं चोपाधिवर्जितम् । न मुख्यं शांतिदं प्रोक्तं योगींद्रैर्योगचिंतकैः ॥२५॥ व्यासेन वेदशाखाश्च कृता भिन्ना महात्मना । पुराणानि विभिन्नानि कृतानि समवेदिना ॥२६॥ अहं तं शरणं यामि तातं शांत्यर्थ-मादरात् । स एव सर्ववित् साक्षाच्छांतिदाता भविष्यति ॥२७॥ विचार्य मतिमानेवं शुको हर्षसमन्वितः । आगत्य निकटे तस्य तं ननाम कृतांजलिः ॥२८॥ तत्र व्यासोऽपि योगिभ्यः प्रावदद्योगमुत्तमम् । तं श्रुत्वा हर्षितो भूत्वा शुको वच उवाच तम् ॥२९॥ स्वामिञ्छृणु मदीयं वै प्रश्नं योगप्रसिद्धये । शांतियोगस्य दाता कः कीदृशो योग उत्तमः ॥३०॥

वद मां करुणासिंधो योगिभ्यो योगदायक । योगींद्रस्त्वं न संदेहो भ्रांत्याऽहं भ्रमितोऽभवम् ॥३१॥ शुकस्य वचनं श्रुत्वा तं व्यासः प्रत्युवाच ह । शृणुष्व त्वं महाभाग योगं शांतिप्रदायकम् ॥३२॥ गणेशः शांतिरूपश्च योगशांतिप्रदायकः । तं भजस्व महायोगिन् तेन शांतो भविष्यसि ॥३३॥ ब्रह्मणा बोधितोऽहं तं भजामि गणनायकम् । तेन सर्वज्ञतां यातो योगींद्रैः सेवितोऽभवम् ॥३४॥ गणो धातुः समूहे च कथितो नात्र संशयः । बाह्यांतरादिसंयोगे समूहो भवति प्रभो ॥३५॥ ब्रह्मरूपाः समूहाश्च तेषां स्वामी गणेश्वरः । संयोगायोगयोगेन प्राप्यते योगिभिः परः ॥३६॥ एवमुक्त्वा गणेशस्य वेदपादस्तवं ददौ । रचितं विष्णुना पूर्वं शांतियोगप्रदायकम् ॥३७॥ येन विष्णुः सुशांतोऽभूदिहलोके सुखात्मकः । जातः पालकभावेन भगवन्नामधारकः ॥३८॥ प्रगृह्य साधयामास शुकस्तं परमाद्भुतम् । गाणपत्यो बभूवाथ योगिवंद्यो महाद्युतिः ॥३९॥ नित्यं गणेशमाहात्म्यं वेदपादस्तवं शुकः । जपति स्नेहभावेन दिवानक्तमखंडितम् ॥४०॥ एतच्छुकस्य माहात्म्यं कथितं ते प्रजापते । पठते शृण्वते सर्वसुखदं प्रभवेत् परम् ॥४१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते शुकोपाख्यानं नाम पंचात्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । त्रयः पुत्रा अंगिरसो बभूवुर्ब्रह्मवादिनः । गाणपत्या महाभागाः सर्वज्ञाः सुखदायिनः ॥१॥ उतथ्यः प्रथमः प्रोक्तो द्वितीयस्तु बृहस्पतिः । संवर्तश्च तृतीयोऽभूद्योगशास्त्रपरायणः ॥ २ ॥ शिक्षितोंगिरसा पुत्र उतथ्यः स्वल्पकालतः । ब्रह्मभूतोऽभवत्सद्यो गाणपत्यो विशेषवित् ॥३॥ बृहस्पतिः क्रमेणैव योगभूमिविशारदः । भूमीनां साधने सक्तोऽभवच्छैवः स्वभावतः ॥४॥ तत्र स्वाधीनतां दृष्ट्वा शांत्यर्थं शंकरं ययौ । शिवेन गणराजस्य मंत्रो दत्तः षडक्षरः ॥५॥ शांतियोगस्य रूपं यत् कथितं तत् प्रविस्तरात् । शिवं नत्वा वनं सोऽपि ययौ दक्षबृहस्पतिः ॥६॥ स नित्यं गणपं ध्यात्वा-ऽपूजयत्तं विधानतः । दर्शनार्थं गणेशस्य लालसाभून्महामतेः ॥७॥ योगमार्गेण योगी स जातः शांतिधरः स्वयम् । गाणपत्यत्वमापन्नः शिवतुल्यो बृहस्पतिः ॥८॥ तुष्टस्तदा गणेशानो ययौ तस्याश्रमं प्रभुः । स्तुतः संपूजितस्तेन तुतोष गणनायकः ॥९॥ अखंडभक्तिभावं स ददौ तस्मै महात्मने । अंतर्धाय स्वमात्मानं गणेशः स्वालयं ययौ ॥ १० ॥ प्रकथ्यते

महायोगी तदारभ्य बृहस्पतिः । ब्रह्मिष्ठानामयं श्रेष्ठो विभूतिपदमागतः ॥११॥ संवर्तः प्रथमं योगी द्वेषितो वै विशेषतः । यत्र तत्र विभागार्थं गुरुणा भ्रातृभावतः ॥१२॥ स संसारं परित्यज्य नग्न उन्मत्तवत् स्वयम् । सहजं ब्रह्म काशीस्थो ध्यायद्वै शांकरं सदा ॥१३॥ ततः कदाचिद्राजेंद्रो मरुत्तो यज्ञकाम्यया । उपाध्यायं ययौ राजा स्वर्गस्थं तं बृहस्पतिः ॥१४॥ तद्वृत्तांतं समादाय देवेंद्रः प्राब्रवीद् गुरुम् । मत्स्पर्धिनं मरुत्तं मा यजस्व त्वं बृहस्पते ॥१५॥ देवानां वा मनुष्याणामेकपक्षधरो भव । तस्यैव वचसा राजा त्यक्तः स गुरुणा महान् ॥१६॥ मरुत्तं क्षुभितं ज्ञात्वा तं ययौ नारदो मुनिः । काश्यां संवर्तकं राजन्नानीय कुरु सद्‌गुरुम् ॥१७॥ जडोन्मत्तस्वभावेन स तिष्ठति मुनीश्वरः । प्रातःकाले प्रणामार्थं शंकरस्य च गच्छति ॥१८॥ शवं तत्र समागृह्य तिष्ठ त्वं द्वारि भूमिपम् । विमुखश्चात्महीनं तं दृष्ट्वा गच्छति विप्रपः ॥१९॥ एवमुक्त्वा गतो योगी नारदः सोऽपि हर्षितः । तथा चकार धर्मज्ञः काश्यां गत्वा नराधिपः ॥ २० ॥ दृष्ट्वा नग्नं ननामाऽसौ स्वगुरुं तत्र भूमिपः । छलितश्चेष्टया दक्ष न मुमोच तथाऽपि तम् ॥२१॥ संवर्तस्तस्य वृत्तांतं श्रुत्वा स्वयमुपागतः । यज्ञार्थं तस्य राजर्षेरुपाध्यायो बभूव ह । जीवेन तस्य वृत्तांतो ज्ञातस्तेनापि भूमिपः ॥ २२ ॥ छलितोऽहं भविष्यामि गुरुस्ते त्यज मेऽनुजम् ॥ २३ ॥ मरुत्तेन त्वदीयं वै न गृहीतं वचस्तदा । गुरुणा प्रेरितो देव इंद्रो वज्रं समाक्षिपत् ॥ २४ ॥ संवर्तेन च तद्वज्रं कृतं मोघं समाधिना । शरणं तद्भयादिंद्रो ययौ देवगणैः स तम् ॥२५॥ ततो देवगणैस्तेन मुनिभिः संस्कृतो मखः । समाप्य यज्ञमेतस्य संवर्तः स्वस्थलं ययौ ॥२६॥ समाधितत्परत्वेन ज्ञातं तेनापि शांभवम् । स्वाधीनं तद्भवेन्मुख्यं ब्रह्मशांतिप्रदं कदा ॥२७॥ ययावंगिरसं प्रष्टुं तेन योगः प्रकाशितः । शांतियोगमयः साक्षाद्गणेशः परमाद्भुतः ॥२८॥ संवर्तेन तथा दक्ष साधितो योग उत्तमः । शांतिरूपधरो योगी संवर्तः प्रबभूव ह ॥२९॥ आगत्य संस्थितः सोऽपि क्षेत्रे स्वानंदरूपिणि । मयूरेशं सदा तत्र सिषेवे भक्तितत्परः ॥३०॥ तेषां पुत्रा महाभागा जाताः सर्वज्ञसंमताः । क्रमेणांते च ते सर्वे गाणपत्या बभूविरे ॥३१॥ प्रोक्ता दीर्घतमस्काद्यास्तेषां पुत्रादिभिस्तथा । गणेशो मनसा भक्त्याऽखंडभावेन संधृतः ॥३२॥ गौतमस्तत्र मुख्यश्च शांतिमार्गपरायणः । विख्यातो मुनिवर्गेषु स बभूव प्रजापते ॥३३॥ कदाचित् पृथिवीमध्ये ह्यनावृष्टिः सुदारुणा । बभूव द्वादशाब्दान् या तया संपीडितं जगत् ॥३४॥ पीडां दृष्ट्वा जनानां स दयायुक्तो बभूव ह । गौतमं शंकरं देवं वृष्टिहेतोर्नुनोद सः ॥३५॥ ततस्तं शंकरः साक्षादवोचद् भक्तमुत्तमम् ।

अनावृष्टिः कृता मुख्या कालेन ब्रह्मरूपिणा ॥३६॥ चालितुं न समर्थस्तं कोऽपि ब्रह्मांडमंडले। अतोभिमानमुत्सृज्य तिष्ठ त्वं मुनिसत्तम ॥३७॥ शिवस्य वचनं श्रुत्वा दुःखितस्तमुवाच ह। गौतमो मुनिवर्यश्च विस्मितोऽभूत् स मानसे ॥३८॥ गौतम उवाच। किमिदं नाथ वदसि त्वमीशः सर्वसंमतः। कुरु मे वाञ्छितं नोचेद्देहत्यागं करोम्यहम् ॥३९॥ गौतमस्याभिमानं तं दृष्ट्वा शंभुः सुविस्मितः। भावं ज्ञात्वा स्वयं प्राह गौतमं मुनिसत्तमम् ॥४०॥ शृणु गौतम माहात्म्यं देहं त्यजसि वै वृथा। विनायकं भजस्व त्वं तेन सर्वं भविष्यति ॥४१॥ नायकेन विहीनोऽयं सर्वेषां स विशेषतः। नायकस्तेन नामाऽभूद्विनायक इति स्फुटम् ॥४२॥ वयं तदाज्ञया सर्वे वर्तेमहि न संशयः। गमनं वेदमार्गेणास्माकं सर्वत्र संमतम् ॥ ४३ ॥ उत्पथे गमनं नश्चेत्तदा विघ्नं करोति सः। अतस्त्वं विघ्नराजं च शरणं गच्छ गौतम ॥४४॥ एवमुक्त्वा महादेवो ददौ तस्मै षडक्षरम्। मंत्रराजं गणेशस्य विधानं तस्य चोत्तमम् ॥४५॥ गौतमस्तं प्रणम्यादौ तपसे वनमाययौ। समाधिना महोग्रेण तोषयामास विघ्नपम् ॥४६॥ एवं वर्षेण तं ढुंढिर्ययौ दातुं वरं प्रभुः। तं दृष्ट्वा हर्षितोऽत्यंतं ननाम मुनिसत्तमः ॥४७॥ अथर्वशिरसा तेन संस्तुतो गणनायकः। प्रसन्नस्तमुवाचैवं वचनं ब्रूहि वाञ्छितम् ॥४८॥ स वव्रे यदि तुष्टोऽसि भक्तिं देहि दृढां त्वयि। गाणपत्यं च संपूर्णं मां कुरुष्व गजानन ॥४९॥ अनावृष्टिभवं दुःखं जहि देव विनायक। एतमेव वरं याचे वाञ्छितं नात्र संशयः ॥५०॥ तमुवाच गणाध्यक्षस्त्वयोक्तं मुनिसत्तम। तवाश्रमेऽधुना सर्वं भविष्यति न संशयः ॥५१॥ सायंकाले च बीजेभ्यः क्षिप्तेभ्यो भूमिमंडले। सस्यानां वै समुत्पत्तिः प्रातःकाले भविष्यति ॥५२॥ तैर्धान्यैर्नित्यमेव त्वं पोषयस्व महामुनीन्। समागतान् तथाभूतान् समये मुनिसत्तम ॥५३॥ नित्यं प्रमुदिताः सर्वे भविष्यंति तवाश्रमे। समागता नराः सर्वेऽनावृष्टेर्दुःखवर्जिताः ॥५४॥ मदीया भक्तिरचला भविष्यति तथा परा। योगशांतिधरः पूर्णो भावी त्वं मत्प्रसादतः ॥५५॥ एवमुक्त्वा गणेशानो गतः स्वानंदके पुरे। गौतमो गाणपत्यश्च तद्दिनात् संबभूव ह ॥५६॥ स मुनिः स्वाश्रमे गत्वा चकार गणपोदितम्। अनावृष्टिभवं दुःखं जनानां स निराकरोत् ॥५७॥ तत्रागतान् स्वयं विप्राज्ञानादिग्भ्यः प्रजापते। तान् सर्वान् पोषयामास धान्यैर्नित्यसमुद्भवैः ॥५८॥ क्रमेण द्वादशाब्दास्ते गता वै दुस्तरा मुने। तत्र सर्वत्र संजाता वृष्टिर्वै दुःखहारिणी ॥५९॥ ततो मुनिगणैः सर्वैर्विपरीतं विचारितम्। गौतमेन वयं सर्वे पोषिता नात्र संशयः ॥ ६० ॥ सर्वेषु गौतमो धन्यस्तदुत्कर्षो भविष्यति।

अत उत्कर्षनाशार्थं कर्तव्यं किं द्विजोत्तमाः ॥६१॥ ततस्तैर्मायया गौश्च कृत्वा गौतमसंनिधौ । प्रेषिता सा हुतद्रव्यं भक्षयामास वै मुनेः ॥६२॥ गौतमेन स्वहस्तेन ताडिता मृदुभावतः । स्पृष्टमात्रा ममाराऽसौ पतिता गौर्धरातले ॥६३॥ ततो हा हा कृतं सर्वैर्ब्राह्मणैश्छद्मदर्शिभिः । गौतमस्याश्रमे सर्वैरापृच्छ्य गमनं कृतम् ॥६४॥ गौतमेन तपः कृत्वा प्रार्थिता स्वर्गवाहिनी । त्र्यंबकस्य शिरःसंस्था प्रादुर्भूता च तत्क्षणात् ॥ ६५ ॥ तत्र स्नानेन सद्यो वै पवित्रो गौतमोऽभवत् । गोवधादिमहापापं गच्छति स्नानमात्रतः ॥६६॥ ततः कदाचिद्द्विप्रेशो गौतमो ध्यानमाश्रितः । विचारमकरोच्चित्ते ज्ञात्वा तेषां विचेष्टितम् ॥६७॥ छलनार्थं द्विजैः सर्वैर्निर्मिता गौश्च मायया । ततः कोपपरीतांगः शशाप ब्राह्मणान् मुनिः ॥६८॥ वेदबाह्या भविष्यंति कृतघ्ना ये महर्षयः । मदीयच्छलनेनैव पातकेन न संशयः ॥६९॥ ततस्ते शापयोगेन भ्रांता जाता महर्षयः । ज्ञात्वाऽकस्माद् द्विजाः शापं संभीता अभवंस्ततः ॥७०॥ शंकरं शरणं सर्वे ययुर्देवं महर्षयः । शंकरः स्मरणं चक्रे विष्णोश्चैव सुविस्मितः ॥७१॥ समागतं महाविष्णुं पप्रच्छ द्विजसौख्यदम् । मार्गं ततो हरिः शंभुमुवाच वचनं हितम् ॥७२॥ विष्णुरुवाच । वेदबाह्यद्विजानां यत्कर्म सर्वं निरर्थकम् । न गतिः कुत्र देहांते तेषां शंभो न संशयः ॥७३॥ अनस्तेषां हितार्थाय ग्रंथाः कार्याः सदाशिव । मोहदाश्च जनानां ते भजतां नरकप्रदाः ॥७४॥ ततः शिवेन वामं च तंत्रं तत्र प्रकाशितम् । विष्णुना बौद्धशास्त्रं वै रचितं मोहदायकम् ॥७५॥ ऋषिभिश्च तथान्यानि शास्त्राणि रचितानि वै । कापालादीनि भो दक्ष मोहदानि विशेषतः ॥७६॥ फलानि तत्र दत्तानि भजतां शंभुनामुना । विष्णुना ब्राह्मणानां च कृतघ्नानां हिताय वै ॥७७॥ नरा ये तानि सेवंते नारकाः संभवंति ते । इहामुत्र विहीनाश्च शास्त्राधारप्रवर्तिनः ॥७८॥ जनानां भजतां सर्वे पापांशास्ते महर्षयः । स्वल्पकालेन नष्टाः स्युः कलौ जन्मधरास्ततः ॥७९॥ तत्र ते पापकर्माणो भविष्यंति विशेषतः । तेषु मार्गेषु संसक्ताः प्रपतिष्यंति रौरवे ॥८०॥ पुनः शुद्धा भविष्यंति नराः कृतयुगे प्रभो । तत्रैव योगमार्गेण गमिष्यंत्यपुनर्भवम् ॥८१॥ एवं तेषां हितार्थाय शिवाद्यै रचितानि वै । शास्त्राणि चतुरैस्तानि न सेव्यानि कदाचन ॥८२॥ वेदाधारयुतं शास्त्रं तदेव सुखदं परम् । तेन हीनं च यच्छास्त्रं मोहकं नरकप्रदम् ॥८३॥ न सेव्यं मानवैः सर्वैः कलिदोषविवर्जितैः । युक्तं गौतमशापेन महाभयकरं मतम् ॥८४॥ कलौ पापा विभूमानो

भविष्यंति महर्षयः । नरस्तैः कथितं शास्त्रं नवामादिकमाचरेत् ॥८५॥ इदं गौतममाहात्म्यं यः शृणोति नरो भवेत् । पठेद्वा मलहीनः सन्निहामुत्र सुखी परम् ॥ ८६ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते गौतमचरितं नाम षट्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । दितेः पुत्रौ महावीर्यौ कश्यपात् संबभूवतुः । संध्यायामृतुदानेन दैत्यौ परमदारुणौ ॥१॥ ताभ्यां तप्तं तपो घोरं दिव्यवर्षसहस्रकम् । तयोस्तपःप्रभावेण ब्रह्मा तु वरदोऽभवत् ॥२॥ मरणं सर्वभूतेभ्यो न भवेदीप्सितं वरम् । ताभ्यां दत्त्वा स्वयं ब्रह्मा स्वस्थानमगमत् पुनः ॥३॥ सायंकाले च शुष्कार्द्रं विस्मरंतौ महासुरौ । तदेव मरणस्थानं तयोर्जातं प्रजापते ॥४॥ वरप्रभावतस्ताभ्यां सर्वं त्रिभुवनं जितम् । हिरण्यकशिपुर्ज्येष्ठश्चक्रे वै राज्यमुत्तमम् ॥५॥ कर्ममार्गं द्विषन् सर्वं देवब्राह्मणदुःखदः । राज्यं चक्रे सुदुष्टात्मा परस्त्रीमद्यलालसः ॥६॥ उपोषणेन संयुक्ता देवा इंद्रपुरोगमाः । ब्रह्माणं ते पुरस्कृत्य शरण्यं विष्णुमाययुः ॥७॥ ततश्च विष्णुना तत्र धृतं रूपं भयप्रदम् । नारसिंहं महोग्रं वै सर्वेभ्यो भयदायकम् ॥८॥ आययौ दैत्यराजस्य नगरे क्रोधसंयुतः । शब्दैः स भुवनं घोरैर्नादयामास तत्क्षणात् ॥९॥ भीता दैत्यगणाः सर्वे शशंसुस्तस्य चेष्टितम् । राज्ञे श्रुत्वा वचस्तेषां हिरण्यकशिपुः स्वयम् ॥१०॥ दैत्यैः समावृतो योद्धुं ययौ तेन महाबलः । क्रूरः समागतः सोऽपि नृसिंहाकृतिधारकः ॥११॥ मेरुमंदरसंकाशं वपुर्यस्य विराजितम् । तेजसा वह्निसंकाशो योद्धुकामो सुरैः प्रभो ॥१२॥ प्रह्लादप्रमुखैः पुत्रैः संवृतो दैत्यसत्तमः । नृसिंहं योधयामास शस्त्रास्त्रैर्मर्मभेदिभिः ॥१३॥ नृसिंहेन हता दैत्या बहवो रणमंडले । शोणितौघवहा नद्यः संप्रवृत्ता दिशो दश ॥१४॥ खड्गादिभिर्महास्त्रैश्च नखैर्युक्तः स देवराट् । नृसिंहो युयुधे तत्र प्रलयाग्निसमो बभौ ॥१५॥ तं दृष्ट्वा पूर्वसंस्कारात् प्रह्लादस्य महात्मनः । वैष्णवं ज्ञानमत्यंतं प्रादुर्भूतं विशेषतः ॥१६॥ एतस्मिन्नंतरे तत्र गदया ताडितः प्रभुः । नृसिंहो दैत्यराजेन पतितो मूर्च्छया भृशम् ॥१७॥ द्विमुहूर्तात् सुसंभूतः स्वस्थदेहो महाबलः । अशक्तं मानयामासात्मानं तेन पलायत ॥१८॥ हिरण्यकशिपुः सर्वैर्विजयी स्वगृहं ययौ । चकार विष्णुभक्तिं वै प्रह्लादो भावसंयुतः ॥१९॥ पितरं बोधयामास विष्णुमानंदरूपिणम् । शरणं याहि

सर्वत्र समं दैत्यपतेऽधुना ॥ २० ॥ पुत्रस्य वचनं श्रुत्वा क्रोधाविष्टो महासुरः । मुष्टिना ताडयामास शत्रुं मे किं समाश्रितः ॥२१॥ तदाऽपि दृढभावेन न चचाल स वैष्णवः । प्रह्लादश्चाधिकां भक्तिं चकार प्रेमसंयुतः ॥२२॥ ततो जले स्थले ह्यग्नौ हिरण्यकशिपुः स्वयम् । विषैः सोऽपीडयत्पुत्रं निष्फलो विष्णुना कृतः ॥२३॥ शस्त्रैरस्त्रादिभिः पुत्रमारणाय समुद्यतः । प्रह्लादो न ममाराऽसौ रक्षितो विष्णुना सदा ॥२४॥ एवं पितुः सुतस्याऽपि द्वंद्वे प्राप्ते प्रजापते । काले क्रांते तु किंचिद्वै नृसिंहचरितं शृणु ॥२५॥ वैकुंठे सुखमासीनं नारायणमनामयम् । ययौ तत्र नृसिंहस्तं प्रणनाम भयातुरः ॥२६॥ वृत्तांतं नृहरेस्तस्य श्रुत्वा सोऽपि सुविस्मितः । कारणं चिंतयामास विचारेण जनार्दनः ॥२७॥ गणेशं वै विस्मृतवान् ततो दैत्यो न निर्जितः । अष्टाक्षरं गणेशस्य मंत्रं तस्मै ददौ स्वयम् ॥२८॥ वने सोऽपि समासीनस्तताप परमं तपः । निराहारेण संयुक्तोऽध्यायत्तं गणपं हृदि ॥२९॥ एकवर्षे गते तत्र ययौ विघ्नपतिः स्वयम् । वरेण च्छंदयामास नृसिंहं भक्तमुत्तमम् ॥३०॥ प्रणम्यापूज्य विघ्नेशं परमेशं कृतांजलिः । सूक्तैर्गाणेशसंज्ञैस्तं तुष्टाव नृहरिः स्वयम् ॥३१॥ ययाचे देवदेवेशं भक्तिं ते देहि विघ्नप । जयं दैत्यरणे स्वामिंस्तथेति गणपोऽब्रवीत् ॥३२॥ अंतर्धानं गतः सद्यो गणेशो भक्तपालकः । नृसिंहो हर्षसंयुक्तो दैत्यं हंतुं ययौ ततः ॥३३॥ एतस्मिन्नंतरे दक्ष हिरण्यकशिपुः स्वयम् । प्रह्लादं हंतुमारेभे स्वयं खड्गधरोऽभवत् ॥३४॥ प्रह्लादेन स्मृतो विष्णुः प्रकटोऽभूत्तदंतरे । नृसिंहः कालरूपश्च तलेनाऽताडयत् खलम् ॥३५॥ मूर्च्छितो दैत्यराजस्तु लेभे संज्ञां महाबलः । गदां धृत्वा नृसिंहं तं युयुधे सैनिकैः सह ॥३६॥ नृसिंहांगात् समुद्भूता नृसिंहा बहवस्ततः । सैन्यं तन्नाशयामासुर्हिरण्यकशिपोः परम् ॥३७॥ ततः क्रोधपरीतांगः सायंकाले दितेः सुतम् । धृत्वा नखैर्महादैत्यं दारयामास केशवः ॥३८॥ न शुष्कार्द्रमयैः स्वस्य नखैस्तेन विदारितः । ममार दैत्यराजोऽपि देवास्तं तुष्टुवुर्हरिम् ॥३९॥ स्तुतः संपूजितो विष्णुर्नृसिंहो गणपं स्मरन् । अंतर्धानं ययौ सद्यो देवास्ते स्वपदं ययुः ॥४०॥ इदं नरहरेः प्रोक्तं माहात्म्यं यः शृणोति वा । पठति प्रभवेत्तस्य सर्वदं नाऽत्र संशयः ॥४१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते नृसिंहमाहात्म्यं नाम सप्तत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । हिरण्यकशिपौ नष्टे हिरण्याक्षे च दैत्यपाः । राजानं कारयामासुः सोऽपि चक्रे तथाऽखिलम् ॥१॥ भ्रातुर्वधेन संतप्तो देवान् जित्वा महाबलः । तेषां मूलविनाशार्थं मतिं चक्रे च दैत्यपः ॥२॥ तत्र तेन विचारेण संप्राप्तं ज्ञानमुत्तमम् । कर्मनाशे च देवानां मरणं प्रभविष्यति ॥ ३ ॥ कर्मरूपमयं तेषाममृतं नात्र संशयः । अन्ने नष्टे कथं देवाः स्थास्यंति तनुधारकाः ॥४॥ कर्ममूलमयीं भूमिं प्रगृह्य प्रययौ खलः । पाताले दैत्यराजस्तु खेलयन् स्वेच्छया स्वयम् ॥५॥ देवाश्च मुनयो जग्मुस्ततः सर्वे प्रजापतिम् । नष्टे चराचरे भूम्यां शशंसुर्दैत्यचेष्टितम् ॥ ६ ॥ ब्रह्मणा नोदिताः सर्वे वैकुंठं जग्मुरादरात् । तुष्टुवुस्तं रमानाथं शशंसुश्चेष्टितं महत् ॥७॥ ततः सोऽपि दयायुक्तः सौकरं रूपमास्थितः । कैलासे गणपं चेष्ट्वा ययौ पातालमोजसा ॥८॥ तत्र दंष्ट्राग्रसंयुक्तां पृथ्वीं कृत्वा बहिः प्रभुः । निर्ययौ तं हिरण्याक्षो योद्धुकामः समाययौ ॥९॥ ततो युद्धं महाघोरं तयोर्जातं प्रजापते । शुष्कार्द्रदंष्ट्रया दुष्टं संध्याकाले जघान सः ॥१०॥ ममार सहसा दैत्यो वराहो धरणीसुतः । निर्गत्य स्थापयामास पृथ्वीं पूर्ववदच्युतः ॥ ११ ॥ संस्थाप्य पृथ्वीं वाराहो मयूरेशं समाययौ । अक्षरब्रह्मरूपश्च सर्वेभ्यो ज्ञानदायकः ॥ १२ ॥ स्त्रीस्वरूपेण पृथिवी पत्नीभावेन तं ययौ । कर्ममूलमयी प्रोक्ताऽक्षराधारा सुखप्रदा ॥१३॥ तत्रानुष्ठानमत्यंतं चक्रतुर्भक्तितत्परौ । दृढवाससुसिद्ध्यर्थं क्षेत्रे स्वानंदरूपिणि ॥ १४ ॥ प्रसन्नो भगवांस्तत्र गणेशो देवनायकः । वरदस्तौ ययौ प्रीत्योवाच संवृणुतं वरम् ॥१५॥ ततस्ताभ्यां प्रणम्यादौ पूजितो गणनायकः । नामाष्टकेन साम्ना वै संस्तुतो भक्तिभावितः ॥१६॥ वरं तौ वृणुतां क्षेत्रे स्वानंदे देहि विघ्नप । वासं भक्तिसुसिद्ध्यर्थं ब्रह्मभूतसुखप्रदे ॥१७॥ तयोर्वचनमाकर्ण्य गणेशः कृपया युतः । भक्तिं ज्ञात्वा महोग्रां वै सूर्यं प्रोवाच हर्षितः ॥ १८ ॥ गणेश उवाच । शुक्लगत्यात्मकं द्वारं त्वदीयं मुक्तिदं परम् । तत्र पृथ्वी वराहौ च तवांगे कुरु मानद ॥१९॥ तथेति कृतवान् सूर्यः संस्थितौ द्वारि तावुभौ । उत्तरांगं गणेशस्याश्रित्य पूजां प्रचक्रतुः ॥२०॥ इदं वराहरूपस्य माहात्म्यं कथितं मया । श्रवणात् पठनात् सर्वमुक्तिदं प्रभवेन्नृणाम् ॥ २१ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराण द्वितीये खण्डे एकदंतचरिते वाराहमाहात्म्यं नामाष्टत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ततो दैत्यपदे राजा प्रह्लादो वैष्णवोऽभवत् । स तु वैरं समुत्सृज्य देवैः संमानितो बभौ ॥१॥ गते कियति काले च गृहे तस्य महात्मनः । विधाता दैत्यराजस्याययौ प्रीत्या प्रजापते ॥२॥ स तु दुष्टैर्महादैत्यैः क्रमेण भ्रंशितोऽसुरः । संसर्गदोषयुक्तोभून्न तं मेने पितामहम् ॥ ३ ॥ क्रोधेन विधिना तत्र शप्तोऽसौ वैष्णवाधमः । ज्ञानं प्रह्लाद नष्टं च त्वदीयं प्रभविष्यति ॥ ४ ॥ प्रह्लादमेवं शप्त्वा स ययौ स्थानं निजं विधिः । प्रह्लादश्च तथा दैत्यैर्देवानां हनने रतः ॥५॥ न मेने मनसा विष्णुं शंभुं वामरनायकम् । जित्वा देवान् समस्तान् स राज्यं चक्रेऽसुराधिपः ॥६॥ प्रह्लादः स ततो देवैर्मित्रभावेन धारितः । सहनं कृतमत्यंतं तद्दौरात्म्यस्य चादरात् ॥७॥ देवैर्विष्णुसहायैश्च कालेन विजिता बलात् । दैत्याः प्रह्लादमत्यंतं संरक्ष्य सुरनायकैः ॥ ८ ॥ स्वराज्ये संस्थितं दैत्यं प्रह्लादं च महामुनिः । भ्रमन् समाययौ द्रष्टुं शक्तो गृत्समदो महान् ॥९॥ तं दृष्ट्वा दैत्यराजः स प्रणनाम महायशाः । स्वासने तं समावेश्य पूजयामास भक्तितः ॥१०॥ भक्तो मुनिवरं दैत्यः पादसंवाहने स्थितः । उवाच मधुरं वाक्यं प्रह्लादो हर्षसंयुतः ॥११॥ प्रल्हाद उवाच । धन्यं मेऽद्य कुलं ज्ञानं विद्या दानादिकं च यत् । तवांघ्रियुगुलं दृष्ट्वा पवित्रो नात्र संशयः ॥१२॥ मुने योगींद्रमुख्यस्त्वं तव दर्शनमुत्तमम् । न भवेत् पापकाराणां भुक्तिमुक्तिक्रमप्रदम् ॥ १३ ॥ अहं शप्तश्च योगींद्र विधिना तेन मोहितः । असुरैः संवृतोऽत्यंतं दुष्टकर्मरतोऽभवम् ॥१४॥ स्त्रीमद्यादिरतो नित्यं ज्ञानहीनो निरंतरम् । देवानां द्वेषबुद्ध्या वै छेदने प्रयतोऽभवम् ॥१५॥ अधुना पादपद्मस्य दर्शनेन महामुने । ज्ञानस्य स्फूर्तिरल्पा मे संजाता नात्र संशयः ॥ १६ ॥ पूर्वपुण्यबलेनैव जातं ते दर्शनं महत् । आसुरी प्रकृतिर्मेऽद्य गता तेन महामुने ॥१७॥ वद ज्ञानं महायोगिंस्तारयस्व भवार्णवात् । मां वै शरणार्थिनं विप्र शिष्यं ते च जगद्गुरो ॥१८॥ मुद्गल उवाच । एवं संप्रार्थितो दक्ष मुनिर्गृत्समदो महान् । कृपया परयाऽऽविष्टस्तमुवाच विशेषतः ॥१९॥ गृत्समद उवाच । श्रृणु प्रह्लाद वक्ष्यामि ज्ञानं शांतिसुखप्रदम् । गणनाथं भजस्व त्वं विघ्नहीनो भविष्यसि ॥२०॥ मदासुरश्च दैत्येशो हृदये ते प्रतापवान् । आसुरेण स्वभावेन संस्थितो ज्ञानखंडकः ॥२१॥ अतस्तमेकदंतस्य भजनेन जहि प्रभो । तदा ज्ञानं दृढं ते वै हृदये संस्थितं भवेत् ॥२२॥ इति तस्य वचः श्रुत्वा प्रह्लादस्तं पुनर्जगौ । कोऽसौ मदासुरः पापी हृदये तिष्ठति प्रभो ॥२३॥ एकदंतस्य भजनं कीदृशं वद सांप्रतम् । मदासुरस्य हंताऽसौ कथं जातो गजाननः ॥२४॥ एतत्सर्वं सुविस्तार्य वद मह्यं प्रयाचते । शिष्याय सकलं विप्र

येन ज्ञानं दृढं भवेत् ॥२५॥ मुद्गल उवाच । प्रह्लादस्य वचः श्रुत्वा मुनिर्गृत्समदोऽब्रवीत् । मदासुरस्य माहात्म्यमेकदंताश्रितं प्रभो ॥२६॥ गृत्समद उवाच । शृणु प्रह्लाद यत् पृष्टं तत्सर्वं कथयामि ते । चरित्रमेकदंतस्य सर्वसिद्धिप्रदायकम् ॥२७॥ एकदा राक्षसः कश्चिद्ययौ भृग्वाश्रमं महान् । महाखलश्छिद्रदर्शी समिदर्थं गते मुनौ ॥२८॥ स तत्रैकाकिनीं वीक्ष्य भृगुपत्नीं वचोऽब्रवीत् । सुलोमा किं भृगोः पत्नी त्वं हि मां वद सांप्रतम् ॥२९॥ मह्यं कन्यां महीपालो दातुं स ह्युद्यतोऽभवत् । एतस्मिन्नंतरे कन्या याचिता भृगुणाऽभवत् ॥३०॥ मां त्यक्त्वा भृगवे कन्या दत्ता तेन महीभृता । तस्माद्भृगोर्हरिष्यामि भार्यां चाऽहं न संशयः ॥३१॥ तस्य तद्वचनं क्रूरं श्रुत्वा तूष्णीं बभूव ह । सुलोमा सा भृगोः पत्नी ततः सोऽप्यग्निमब्रवीत् ॥३२॥ राक्षस उवाच । अग्ने वद महाभाग त्वं साक्षी सर्वसंमतः । इयं पत्नी भृगोः किं वान्यस्य सत्यं महाद्युते ॥३३॥ राक्षसस्य वचः श्रुत्वा न किंचित्तं वचोऽब्रवीत् । उत्तरं शापभीतोऽसौ हव्यवाहः प्रतापवान् ॥ ३४ ॥ पुनस्तेन च संपृष्टोऽग्निर्नोवाच सुदुर्मतिम् । पुनः पृष्टस्तथाग्निस्तमुवाच भयसंकुलः ॥३५॥ अजानता नरः पृष्टः संशये प्रसमुद्यते । कथयेत्तं न पापीयान् भवेद्वै सोऽपि निश्चितम् ॥३६॥ अतोऽहं कथयिष्यामि सत्यं तुभ्यं न संशयः । आदौ राज्ञा च संदातुं कथिता राक्षसाय सा ॥३७॥ अतस्त्वं राक्षसो भागी मतः शास्त्रे न संशयः । तवाग्रे कथितं चेन्मे पापं न स्यात् कदाचन ॥३८॥ अतः कन्यां प्रदातुं वै नराय दृढनिश्चयः । न कर्तव्योऽसुरेश त्वं विचारय महामते ॥३९॥ यदि दातुं कृता कन्या कस्मैचिन्निश्चिता भवेत् । तस्मै सा वै प्रदातव्याऽन्यथा दोषी भवेन्नरः ॥४०॥ आशाभंगमयं पापं संप्राप्तं तस्य दैत्यप । न कन्या दूष्यते तत्रान्यस्मै दत्ता नराय चेत् ॥४१॥ ततस्तं राक्षसं क्रूरमूचे वै हव्यवाहनः । पत्नी भृगोरियं साधो मा गृह्णीष्व परस्त्रियम् ॥४२॥ अग्नेर्वचनमाकर्ण्य गृहीत्वा राक्षसो ययौ । अंतर्वत्नीं रुदंतीं च मूर्च्छितां स विहायसा ॥४३॥ तस्यामुदरवासी च भृगोस्तेजोधरो मुनिः । कुपितो राक्षसं हंतुं च्युतो वै जठरात् स्वयम् ॥४४॥ तस्य क्रोधानलेनैव भस्मसादभवत्क्षणात् । राक्षसः सोऽपि संगृह्य पुत्रं स्वगृहमाययौ ॥४५॥ दुःखिता रुदती देवी सुलोमा भयविह्वला । वनाद् भृगुः समायातस्तस्मिन् काले प्रतापवान् ॥४६॥ रुदंत्या कथितस्तस्मै वृत्तांतो मुनिभार्यया । तं श्रुत्वा कुपितो योगी साक्षाद्रुद्र इवाऽपरः ॥ ४७ ॥ उवाच कोपरक्ताक्षोऽग्ने त्वं शप्तो मयाऽधुना । सर्वभक्षो भवाऽज्ञानी दुष्टकर्मपरायण ॥४८॥ एवं शप्त्वा महादेवं भृगुरग्निं स्वयं मुनिः । सुलोमां सांत्वयामास पुत्रं स्वं प्रशशंस ह ॥४९॥ उदरात्तु च्युतः क्रोधाच्च्यवनो

नाम सत्तमः । तेनाऽयं भविता पुत्रो मदीयो मातृपालकः ॥ ५० ॥ सुखेन स्वाश्रमे योगी भृगुः परमतत्त्ववित् । पत्न्या पुत्रेण संयुक्तः स्थितो गणपतिं स्मरन् ॥ ५१ ॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते च्यवनोत्पत्तिकथनं नामैकोनचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । शापितो भृगुणाग्निश्च ययौ स्थानं निजं ततः । अंतर्धाय स्वमात्मानं स्थितः परमदुःखितः ॥१॥ अग्निं विना च सर्वत्र हाहाकारो महानभूत् । मुनयः सहिता देवैर्ब्रह्माणं शरणं ययुः ॥२॥ मुनय ऊचुः । शप्तोऽग्निर्भृगुणा स्वामिन्नंतर्धाय ययौ स्वयम् । कर्महीना वयं नाथ वह्निहीना भवामहे ॥३॥ शरणं त्वां प्रपन्नाः स्मो रक्ष रक्ष पितामह । नोचेच्चराचरं सर्वं नश्यत्यत्र न संशयः ॥४॥ श्रुत्वा स वचनं तेषां तैः सहाऽग्निं ययौ विधिः । सांत्वयामास तं वाक्यैर्वेदानां परमाद्भुतैः ॥५॥ ब्रह्मोवाच । अग्ने शृणु महाभाग वेदेषु कथितं महत् । सर्वभक्षः शुचिष्मान् वै तव नाम विनिश्चितम् ॥६॥ भृगोर्नैवापराधोऽस्ति भावि जातं न संशयः । मा कुरुष्व वृथा चिंतां भव सौम्यो महामते ॥७॥ अतस्त्वं सर्वभक्षोऽपि पवित्रः परमो मतः । भक्षदोषविहीनस्त्वं भविताऽसि न संशयः ॥८॥ वचः श्रुत्वा चुकोपाऽग्निः प्रलयं कर्तुमुद्यतः । ज्वालाः सांवर्तिकाः क्रोधाच्चिक्षेप स चराचरे ॥९॥ ज्वालाभिर्दह्यमानास्ते ब्रह्माद्याः प्रययुस्ततः । गणेशं मनसा ध्यात्वा स्थिताऽभयसमन्विताः ॥१०॥ एतस्मिन्नंतरे तत्रैकदंतो ब्राह्मणोऽभवत् । आययावग्निसान्निध्ये तमुवाच हितं वचः ॥११॥ ब्राह्मण उवाच । अग्ने किं क्षुभितोऽत्यंतं हरसि त्वं कथं जगत् । अकाले क्रोधसंयुक्तो न स्मृतस्ते विनायकः ॥१२॥ स्वातंत्र्यं पश्य यत्रास्ति मा गर्वं कुरु देवप । विनायकं परित्यज्य स्वातंत्र्यं न भवेद्यतः ॥१३॥ एवमुक्तोऽपि तं विप्रं ददाह स्वीयतेजसा । प्रहस्य स मुनींद्रोऽसावुवाच गणनायकः ॥१४॥ शलाकां चेन् महावह्ने दहसि त्वं स्वसत्तया । मया दत्तां स्वसामर्थ्यात्तदैवं सचराचरम् ॥१५॥ एवमुक्त्वा शलाकां स तत्र चिक्षेप भूसुरः । न तां शक्तो दाहयितुं जातो वह्निः स्वसत्तया ॥१६॥ ततस्तं प्रणनामाथ गतगर्वो हुताशनः । को विनायकनामा वै सर्वेषां नायकः स्मृतः ॥ १७ ॥ वद मे करुणासिंधो तं भजामि विशेषतः । त्वं कोऽसि विप्ररूपेण प्रमोहयसि मां प्रभो ॥१८॥ शांतमग्निमुवाचाऽथ विप्ररूपी

गजाननः। बोधयन् हेतुगर्भाभिर्वाग्भिः सर्वार्थकोविदः ॥१९॥ विप्र उवाच। स्वानंदवासिनं विद्धि विनायकमनामयम्। सर्वेषां नायकं पूर्णं नायकैर्वर्जितं परम् ॥२०॥ शांतियोगेन शांतिज्ञास्तं भजंते द्विजोत्तमाः। तं योगं तेऽभिधास्यामि शृणुष्वैकमनाः प्रभो ॥२१॥ एकानेकादिभेदैश्च संयुक्तः प्रणवः स्मृतः। संप्रज्ञातसमाधिं तं विद्धि वह्ने महाद्युते ॥२२॥ संयोगायोगभेदैश्च संयुक्तं ब्रह्म यत् स्मृतम् । असंप्रज्ञातरूपस्थं विद्धि तद्योगसेवया ॥ २३ ॥ संप्रज्ञातासंप्रज्ञातयोगे वै शांतिदायकः। शांतियोगः समाख्यातो गाणेशो हव्यवाहन ॥२४॥ गणाः समूहरूपाश्च तेषां स्वामी गजाननः। तं भजस्व महातेजो वह्ने भक्तिसमन्वितः ॥२५॥ एवमुक्त्वा ददौ तस्मै मंत्रमेकाक्षरं परम् । विधियुक्तं स दैत्येंद्र गाणेशं सर्वसिद्धिदम् ॥२६॥ दर्शयामास रूपं स्वं त्यक्त्वा ब्राह्मणरूपकम्। गजाननादि चिह्नैश्च चिह्नितं भक्तपालकम् ॥२७॥ तं दृष्ट्वा निपपातोर्व्यां वह्निर्हर्षसमन्वितः। तावदंतर्हितं रूपं ततः खिन्नोऽभवच्छुचिः ॥२८॥ स्वर्गं त्यक्त्वा वनं वह्निर्ययौ योगविधित्सया । समाधिना तपस्तेपे गणेशप्राप्तिहेतवे ॥२९॥ दिव्यवर्षशतेनैव तं ययौ भक्तवत्सलः। गजाननः प्रसन्नात्मा परमात्मा परात्परः ॥३०॥ दृष्ट्वाग्निं तपसा युक्तं स्वभक्तं प्रत्युवाच ह । वरं वृणु महाभाग तुष्टोऽहं तपसा च ते ॥३१॥ गृत्समद उवाच। गणेशवचनं रम्यं श्रुत्वा हर्षसमन्वितः । ननाम दंडवद्भूमौ भावयुक्तेन चेतसा ॥३२॥ पूजयित्वा यथान्यायं तुष्टाव स कृतांऽजलिः। हव्यवाहः प्रसन्नात्मा गणेशं योगशांतिदम् ॥३३॥ अग्निरुवाच। नमस्ते विघ्ननाशाय भक्तानां हितकारक। नमस्ते विघ्नकर्त्रे वै ह्यभक्तानां विनायक ॥३४॥ नमो मूषकवाहाय गजवक्त्राय धीमते । आदिमध्यांतहीनायादिमध्यांतस्वरूपिणे ॥३५॥ चतुर्भुजधरायैव चतुर्वर्गप्रदायिने । एकदंताय वै तुभ्यं हेरंबाय नमो नमः ॥३६॥ लंबोदराय देवाय गजकर्णाय ढुंढये। योगशांतिस्वरूपाय योगशांतिप्रदायिने ॥३७॥ योगिभ्यो योगदात्रे च योगिनां पतये नमः। चराचरमयायैव प्रणवाकृतिधारिणे ॥३८॥ सिद्धिबुद्धिमयायैव सिद्धिबुद्धिप्रदायक। सिद्धिबुद्धिपते तुभ्यं नमो भक्तप्रियाय च ॥३९॥ अनंतानन देवेश प्रसीद करुणानिधे। दासोऽहं ते गणाध्यक्ष मां पालय विशेषतः ॥४०॥ धन्योऽहं सर्वदेवेषु दृष्ट्वा पादं विनायक। कृतकृत्यो महायोगी ब्रह्मभूतो न संशयः ॥४१॥ यदि प्रसन्नभावेन वरदोऽसि गजानन। तदा मां शापहीनं त्वं कुरु देवेंद्रसत्तम ॥४२॥ तव भक्तिं दृढां देहि यया मोहो विनश्यति। तव भक्तैः सहावासो ममास्तु गणनायक ॥४३॥ यदा संकटसंयुक्तस्तदा स्मरणतस्तव। निःसंकटोऽहमत्यंतं भवामि त्वत्प्रसादतः ॥४४॥ एवमुक्त्वा गणाधीशं प्रणतो भक्तिसंयुतः। तमुवाच

गणाध्यक्षो भक्तवत्सलभावतः ॥४५॥ गणेश उवाच । त्वया कृतमिदं स्तोत्रं मम प्रीतिविवर्धनम् । भविष्यति नृणां चैव शृण्वतां पठतां सदा ॥४६॥ यं यं चिंतयसे कामं तं तं दास्यामि शाश्वतम् । भक्तिभावेन संतुष्टो भृशं स्तोत्रेण संस्थितः ॥४७॥ मदीया भक्तिरचला भविष्यति सदाऽनघ । संकटं स्मरणेनैव मदीयेन विनश्यति ॥४८॥ भृगुर्मम विशेषेण भक्तोऽसौ शांतियोगधृक् । तस्यापि वचनं मिथ्या न करोमि कदाचन ॥४९॥ यद्यपि त्वं सर्वभक्षः पवित्रो भविता सदा । पूर्ववत् सर्वमान्यं त्वां करिष्यंति द्विजादयः ॥५०॥ सर्वभक्षे च ते दुःखं हरामि शृणु मे वचः । प्राप्तं शुभाशुभं तत्रामृतभुक्त्वं भविष्यसि ॥५१॥ सर्वभक्षणरूपा ये विकारा न भवंति ते । अमृताशी मया तत्र त्वं कृतोऽसि न संशयः ॥५२॥ एवमुक्त्वा गणाधीशोंऽतर्धानमगमत् स्वयम् । वह्निर्हर्षसमायुक्तः स्वगृहं प्रत्यपद्यत ॥५३॥ तदह्वाद्दहनो दैत्य सर्वभक्षो बभूव ह । शुचिश्चामृतभुग् देवो योगशांतिधरः स्वयम् ॥५४॥ गाणपत्यस्वभावेनाभजत्तं गणनायकम् । गणेशभक्तसंगेषु निरतः सोऽसुरेश्वर ॥५५॥ एतदग्नेश्च माहात्म्यं यः शृणोति नरोत्तमः । पठेद्वा भविता तस्य कामोप्यत्यंतदुर्लभः ॥५६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते अग्निमाहात्म्यं नाम चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । भृगोः पुत्रश्च योगीशं भृगुं नत्वा ययौ वनम् । तताप तप उग्रं वै प्रयागे स जले स्थितः ॥१॥ दशवर्षसहस्राणि गतानि तपतो मुनेः । तस्यैव तेजसा सर्वं व्याप्तं ब्रह्मांडमंडलम् ॥२॥ एकदा धीवरैस्तत्र जले जालैर्महामते । गृहीता मत्स्यकाद्याश्च दैवात् सोऽपि समागतः ॥३॥ दृष्ट्वा मुनिवरं सर्वे भयभीता ययुर्नृपम् । धीवरा नहुषं सर्वमूचुर्वृत्तांतमादरात् ॥४॥ भयभीतो नृपस्तत्र प्रधानैर्ब्राह्मणैर्वृतः । मुनिं ययौ महाभागं प्रणम्य स पुरःस्थितः ॥५॥ मत्स्या जलवियोगेन व्याकुला मरणोन्मुखाः । तान् स्वर्गे स्थापयामास सांसर्गिकसुभावतः ॥६॥ कृतांजलिपुटं दृष्ट्वा नहुषं मुनिसत्तमः । उवाच मोचय प्राज्ञ धृतं धीवरतोऽधुना ॥७॥ मदीयदेहमौल्येन धीवरांस्त्वं प्रसादय । श्रुत्वा तस्य वचः सर्वमूचे वै धीवरान्नृपः ॥८॥ शतं सौवर्णमुद्राणां गृहीत्वा मुच्यतां मुनिः । भवद्भिश्च

महाभागैस्ततस्तं मुनिरब्रवीत् ॥९॥ शतं सौवर्णमुद्राणां मौल्यं किं मे त्वया कृतम् । ततो राजा धनं लक्षं मौल्यं च कृतवान् मुनेः ॥१०॥ न योग्यं मुनिना तत्र कथितं स ततो नृपः । ग्राममेकं मुनेर्मौल्यं चकार भयसंयुतः ॥११॥ मुनिना तन्न योग्यं वै कृतं तत्र नृपः पुनः । नगरं देशसंयुक्तं मौल्यं स कृतवान् मुनेः ॥१२॥ तथाऽपि मुनिना मान्यं न कृतं तत्ततो नृपः । राज्यमर्धं ततौ मौल्यं धीवरान् दातुमुद्यतः ॥१३॥ मुनिना कथितं तत्र मम योग्यं न मूल्यकम् । ततो राज्यं स संपूर्णं मौल्यं तस्य चकार ह ॥१४॥ ततोऽपि मुनिना दैत्य न मान्यं तत्कृतं ततः । भयभीतो नृपोऽमात्यैः कर्तव्यं नाभ्यपद्यत ॥१५॥ अधुना कोपसंयुक्तश्च्यवनः शापयिष्यति । मां तत्र नैव संदेहो मद्दैवेन प्रचोदितः ॥१६॥ ततस्तं व्याकुलं दृष्ट्वा च्यवनो मुनिरब्रवीत् । ब्राह्मणैः सह राजेंद्र देहि मौल्यं विचार्य च ॥१७॥ ततस्तत्राययौ योगी गाणपत्यो महायशाः । भरद्वाजः स तं दृष्ट्वा नहुषः प्रणनाम ह ॥१८॥ भरद्वाजेन वृत्तांतो ज्ञातः सर्वो ह्यशेषतः । उवाच नृपशार्दूलं चिंतां मा कुरु भूमिप ॥१९॥ ब्राह्मणानां गवां राजन् कुलमेकं द्विधा कृतम् । कर्मसंसिद्धये धात्रा पूज्यं च द्विविधं समम् ॥२०॥ हविष्यं गोभिरत्यंतं धृतं वै यज्ञसिद्धये । मंत्राश्च ब्राह्मणैस्तत्र धृतास्तद्वन्न संशयः ॥२१॥ गां दत्वा धीवरेभ्यस्त्वं बंधहीनं मुनिं कुरु । एवमुक्त्वा भरद्वाजो ययौ स्वेच्छाचरो मुनिः ॥२२॥ तथा नहुषभूपेन कृतं दृष्ट्वा प्रहर्षितः । च्यवनो मुनिशार्दूल आशिषं विविधां ददौ ॥२३॥ तं नृपं मानयित्वा स ययौ वनमनुत्तमम् । सुच्छायं सुफलं रम्यं सुजलं मुनिसत्तमः ॥२४॥ तत्र स्थित्वा तपस्तेपे महोग्रं तेजसा युतः । निराहारेण संयुक्तो वर्षाणां च सहस्रकम् ॥२५॥ एतस्मिन्नंतरे तत्र शर्यातिश्च नृपो ययौ । मृगयाभिरतो दैवात् मुदा युक्तस्तदाऽऽश्रमे ॥२६॥ तत्र तस्य शरीरे च वल्मीकस्तृणसंयुतः । जातस्तदपि घोरं वै तताप स तपो महत् ॥२७॥ नरान् सर्वान्निवार्यैव संस्थितस्तत्र भूमिपः । मा कुरुध्वं प्रवेशं सच्च्यवनाश्रममंडले ॥ २८ ॥ एतस्मिन्नंतरे तत्र सुकन्या ससखी ययौ । वनं क्रीडार्थमुग्रेण तपसा संयुतं मुनेः ॥ २९ ॥ भ्रमंत्या चालिभिस्तत्र दृष्टो वल्मीक उत्तमः । तत्र ज्योतिर्मये नेत्रे दृष्ट्वा सा विस्मिताऽभवत् ॥३०॥ अज्ञानेन तथा मुग्धभावाद्वै कंटकेन च । कन्यया चक्षुषी भिन्ने ज्योतीरूपे महामुनेः ॥३१॥ ताभ्यां रक्तं प्रसुस्राव दृष्ट्वा सा भयसंकुला । स्वनिवासं ययौ शीघ्रं सखीभिरसुरेश्वर ॥३२॥ ततः पुरीषमूत्रे वै सैन्यानां बंधमागते । भूपस्य तेन शर्यातिर्भयभीतो बभूव ह ॥३३॥ पप्रच्छ सर्वलोकान् स मुनेराश्रममंडले । छिद्रं केन कृतं घोरं

येन संकुपितो मुनिः ॥३४॥ ततः सा राजकन्या तं पितरं प्राह लज्जिता । क्षुभिता भयभीता वै सुकन्या रचितांजलिः ॥३५॥ वने क्रीडनभावेन वल्मीके कंटकेन च । विद्धे मया महाराज ज्योतिषी नात्र संशयः ॥३६॥ ततो राजा वनं गत्वा वल्मीके संस्थितं मुनिम् । स्तुत्वा प्रसादयामास विनयेन समन्वितः ॥३७॥ ततस्तं राजशार्दूलमुवाच भृगुनंदनः । अज्ञानेन कृतं कर्म तव पुत्र्या नृपालक ॥३८॥ अतो मदीयसेवार्थं कन्यां देहि महामते । तदा सुखयुतं सर्वं भविष्यति न संशयः ॥३९॥ ततो राजा स्वयं भीतो ददौ कन्यां सुलोचनम् । तस्मै ससैन्यमादाय स्वपुरं प्रययौ मुदा ॥४०॥ सुकन्या राजपुत्री सा पतिं प्राप्य महामुनिम् । च्यवनं सेवने सक्ता त्यक्त्वा देहश्रमं बभौ ॥४१॥ ततः कदाचित्तत्रैवाऽश्विनौ तौ भिषजां वरौ । आगतौ मुनिशार्दूलं प्रणम्य च पुरः स्थितौ ॥४२॥ मुनिः प्रोवाच तौ तत्र मां च यौवनशालिनम् । कुरुतं भिषजां श्रेष्ठौ सनेत्रं परमाद्भुतम् ॥ ४३ ॥ ततस्तं मुनिशार्दूलमूचतुश्चाश्विनौ वचः । देवैः साकं यज्ञभुजौ कुर्वावां तपसो बलात् ॥४४॥ तथेति मुनिना प्रोक्तं सभार्यं मुनिसत्तमम् । गृहीत्वा चाश्विनौ कुंडं ययतू रूपदं परम् ॥४५॥ तत्र स्नानं त्रयः कृत्वा पुनस्ते निःसृता बहिः । रूपलावण्यसंयुक्ताः कामदेवोपमा बभुः ॥४६॥ एकरूपधरान् दृष्ट्वा सुकन्या विस्मिताऽभवत् । नमोश्विभ्यां च मे भर्ता दातव्यो देवसत्तमौ ॥४७॥ तस्याः सतीस्वभावेन संतुष्टौ ददतुर्मुनिम् । च्यवनं तौ गतौ स्थानं मुनिश्च स्वस्थलं ययौ ॥४८॥ कदाचिन्नृपवर्यं तं शर्यातिं स्वाश्रमागतम् । सुकन्या तं पुरो दृष्ट्वा पितरं सस्वजे सती ॥४९॥ दृष्ट्वा मुनिवरं राजा यौवनस्थं महाद्युतिम् । पप्रच्छ तनयां वृत्तं तया सर्वं प्रकाशितम् ॥५०॥ ततस्तं प्रणनामाथ नृपस्तेनाऽपि मानितः । यज्ञार्थं सहितं पुत्र्या गृहीत्वा च्यवनं ययौ ॥५१॥ शर्यातिर्यज्ञसंभारांश्चक्रे वै हर्षितो भृशम् । आरेभे मुनिभिर्यज्ञं सर्वसंपद्विराजितः ॥५२॥ तत्र देवा मुदा सर्वे ययुरप्सरसां गणाः । मुनयश्च महाभागा नानादिग्भ्यः समाययुः ॥५३॥ वर्णाः सर्वे तथा तत्र मानवानां समाययुः । द्रष्टुं प्रह्लादयज्ञं तमानंदेन समन्विताः ॥ ५४ ॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते च्यवनतपोवर्णनं नामैकचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । च्यवनेन तथा यज्ञेऽश्विनौ तौ भागसंयुतौ। कृत्वा चावहितौ तत्र तत इंद्रोऽब्रवीद्वचः ॥१॥ इंद्र उवाच। अश्विनौ भिषजौ प्रोक्तौ मुने तस्मान्न योग्यता । यज्ञभागे तयोः स्वामिन् माह्वयति वदाम्यहम् ॥२॥ अभवन् मुनिमुख्यो सौ त्यक्त्वेंद्रवचनं ततः । समुद्युक्तश्च तौ तत्राह्वयितुं त्वसुरेश्वर ॥३॥ तत इंद्रोऽब्रवीद्विप्रं च्यवनं क्रोधसंयुतः । वज्रेणैव हनिष्यामि यद्यायातौ मुनेऽश्विनौ ॥४॥ च्यवनेन सहायेनाश्विनौ तत्रागतौ मखे । अश्विनौ तौ तदा दृष्ट्वा वज्रं दध्रे पुरंदरः ॥५॥ च्यवनेन सवज्रस्तु तस्य प्रस्तंभितो भुजः । तपसा स्वप्रभावेण मदं संससृजे मुनिः ॥६॥ ग्रसितुं स यथाविंद्रं च्यवनेन प्रचोदितः । विस्मिता मुनयो देवा दृष्ट्वा वीर्यं महामुनेः ॥७॥ विकरालमुखं वीरं लेलिहानं नभस्तलम् । अंजनाद्रिसमं श्यामं ददृशुस्तं मदं मखे ॥८॥ भयभीतास्ततो देवसेना मुनिगणा जनाः । अन्ये प्रदुद्रुवुस्तत्र त्यक्त्वा यज्ञं दिशो दश ॥९॥ मदस्तु ग्रसितुं तत्रेंद्रसांनिध्यं समाययौ । तं दृष्ट्वा भयभीतः स च्यवनं शरणं ययौ ॥१०॥ इंद्र उवाच । अश्विनौ भागसंयुक्तौ मया मान्यौ कृतौ मुने । मदान् मां रक्ष विप्रेश ग्रसिष्यति न संशयः ॥११॥ ततस्तेनाभयं दत्तमिंद्राय शरणार्थिने । मदं च तपसा स्वेन वारयामास भार्गवः ॥१२॥ समाप्य च्यवनो यज्ञं ययौ पितृगृहे मुनिः । प्रणनाम सभार्यस्तं भृगुं योगविदांवरम् ॥१३॥ तेन संमानितः पुत्रस्तपःसिद्धश्च संनिधौ । च्यवनश्च कियत्कालमवसत् सेवनोत्सुकः ॥१४॥ कदाचिच्च्यवनं विप्रं भृगुः परमतत्त्ववित् । उवाच ज्ञानसिद्ध्यर्थं स्वसुतं कृपया युतः ॥१५॥ भृगुरुवाच । शृणु पुत्र प्रवक्ष्यामि किं कृतं दुःखदं त्वया । मदः स्वतपसा सृष्टो देवेंद्रस्य भयावहः ॥१६॥ तपोबलमदेनैवं कुरुषे कर्म तापस । मदयुक्तोसि पुत्र त्वं त्यज तं योगसेवया ॥१७॥ शृणु वृत्तांतमादौ त्वं मदीयं कथयामि ते । मया तन्मदयुक्तेन तपोवीर्येण यत्कृतम् ॥१८॥ सततं तपसा युक्तो प्रतपामि तपो महत् । मध्ये मुनीनां सर्वेषां श्रेष्ठोऽहं तपसाऽभवम् ॥१९॥ एकदा मुनयः सर्वे मिलिता गौतमीतटे । सिंहस्थे च गुरौ पुत्र तत्र वादो भवन्महान् ॥२०॥ पितामहं परं श्रेष्ठं जानामि सगुणं सुत । ब्रह्मरूपं महात्मानं सर्वस्रष्टारमंजसा ॥२१॥ सगुणं केचिदूचुश्च भिन्नदेहधरं शिवम् । केचिद्विष्णुं तथा ब्रह्मन् केचिद्ब्रह्माणमंजसा ॥२२॥ तत्र सर्वैरहं पुत्र प्रेषितः कार्यसिद्धये । परीक्षार्थं तपःसिद्धस्त्रिष्वेवं निश्चयार्थिभिः ॥२३॥ अहं पितामहं श्रेष्ठं जानाम्यत्र न संशयः । तं ययौ पितरं सिद्धं परीक्षार्थं महामुने ॥२४॥ तमप्रणम्य विश्वेशं समासीनो महासने । मां दृष्ट्वा दुर्विनीतं स कुपितश्च पितामहः ॥२५॥ उवाच मां सुरश्रेष्ठः

किं मदेन समन्वितः । समागतोऽसि दुर्बुद्धे गच्छ त्वं स्वगृहेऽधुना ॥२६॥ ततोऽवदं सुता चाऽऽदौ पत्नीभावेन संधृता । त्वया तत् किं मया तात दुर्बुद्धित्वं कृतं वद ॥२७॥ तातस्तु क्षुभितोऽत्यंतं स च मां शप्तुमुद्यतः । तातं तं दंडवद्भूमौ नतोऽहं भक्तिसंयुतः ॥२८॥ अवदं तं महाभागं मां क्षमस्व महागसम् । परीक्षार्थं महाविप्रैः प्रेषितोऽहं पितामह ॥२९॥ क्षमस्वेदं कृतं कर्म त्वं श्रेष्ठः सर्वभावतः । स्तुत्वा तं विविधैर्वाक्यैस्ततः कैलासमागमम् ॥३०॥ दृष्ट्वा मां तापसं पुत्र भ्रातरं सहसा शिवः । आलिंगितुं समायातो निजभक्तसुखप्रदः ॥३१॥ अवदन् महदत्यंतं दुर्वचस्तं परीक्षितुम् । मा मां स्पृश पिशाचेश वर्णाश्रमविवर्जित ॥३२॥ नरमस्तकमात्रादिचिह्नयुक्तोऽशुचिः सदा । नाम्ना शिवोऽशिवस्त्वं वै ज्ञातं ते चेष्टितं मया ॥३३॥ इति मद्गिरमाकर्ण्य क्रोधयुक्तः सदाशिवः । तृतीयं नेत्रमुद्धाट्य ज्वालितुं चोद्यतोऽभवत् ॥३४॥ ततस्तं स्तुतवान् पुत्र प्रणतो दंडवत् क्षितौ । परीक्षार्थमिदं कर्म कृतं त्वं क्षंतुमर्हसि ॥३५॥ ब्राह्मणं मां विदित्वा स क्रोधं संहृत्य शंकरः । संस्थितस्तत्र कैलासे वैकुंठे गतवानहम् ॥३६॥ लक्ष्म्या सह समासीनं विष्णुं दृष्ट्वा प्रहर्षितः । सोऽपि लक्ष्म्या नतः सद्यः पादयोर्मम पुत्रक ॥३७॥ मया निर्भर्त्सितोऽत्यंतं पादं मा स्पृश दुर्मते । स्त्रीवेषधारी जातोऽसि त्वं तेन मलिनो मतः ॥३८॥ मदीया स्त्री त्वया दुष्ट वर्धिता गर्हितं कृतम् । इत्याद्यैर्विविधैर्वाक्यैर्मयाऽसौ निंदितो भृशम् ॥३९॥ ततो विष्णुः स्वयं पुत्र कृतांजलिपुटः स्थितः । मया क्रोधेन पादेन हृदि संताडितस्तदा ॥४०॥ तथाऽपि न चुकोपाऽसौ पादं धृत्वा मदीयकम् । ताडनश्रमयुक्तं संवाहितं तं चकार ह ॥४१॥ तदैव हृदये तेन ब्राह्मणप्रियकाम्यया । पुत्र लाञ्छनमेवेदं भृगुपादांकितं धृतम् ॥४२॥ अहं च निश्चयं कृत्वा गतो ब्राह्मणसंसदि । कथितः सर्ववृत्तांतः श्रेष्ठो नारायणः स्मृतः ॥४३॥ क्षमा यत्र भवेद्विप्रास्तत्र सर्वं प्रतिष्ठितम् । क्रमेण प्राप्यते ब्रह्म क्षमायुक्तेन चेतसा ॥४४॥ ततोऽहं वैष्णवो जातो यदा विष्णुपरायणः । कदाचिद्दक्षयज्ञे वै विष्णुर्मुख्यो बभूव ह ॥४५॥ शंभुं त्यक्त्वा हरिं मुख्यं दृष्ट्वाऽहं यज्ञकर्मणि । मुख्यत्वमास्थितः पुत्र यज्ञकर्मप्रवर्तकः ॥४६॥ पार्वती तत्र दग्धातः शंभुः कोपसमन्वितः । मृतां सतीं स विज्ञायाययौ गणसमावृतः ॥४७॥ विष्णुं निर्जित्य दक्षं तं हत्वा यज्ञः प्रणाशितः । मदीयं चिबुकं तत्र वीरभद्रेण पातितम् ॥४८॥ ब्रह्मणा सांत्वितः शंभुर्दक्षं संजीव्य तं मखम् । चकार स्वयमेवेशः संपूर्णं भागसंयुतः ॥४९॥ आजं च चिबुकं मे च कृतं तेन महात्मना । नंदिना शापितस्तत्र वारुणिर्ह्यभवं किल ॥५०॥ ततोऽहं मानसे पुत्र विस्मितः शंकरं स्मरन् । कालरूपी स्वयं शंभुः कालाधीनमिदं जगत् ॥५१॥ ईश्वरोऽयं शिवः प्रोक्तः

परं तस्मान्न विद्यते। विचार्य शंकरं चित्ते धृत्वाऽहं भजने रतः ॥५२॥ शैवो जातोऽहमत्यंतं भस्मांगालेपने रतः। नानापाशुपतैर्मार्गैरभजं शंकरं सदा ॥५३॥ एकदा यज्ञमारेभे क्षेत्रे नाम्ना महाबले। शैवे देवगणैर्ब्रह्मा मुनिभिश्च समन्वितः ॥५४॥ तत्रास्मृतिर्गणेशस्य जाता तेषां महामखे। उषःकाले ततो ज्येष्ठां त्यक्त्वा यज्ञं वितेनिरे ॥५५॥ गायत्रीं मुख्यभावां वै प्राप्तां वीक्ष्य महासती। सावित्री कोपसंयुक्ता शशाप सकलामरान् ॥५६॥ जलरूपा भवंतो वै भविष्यंति न संशयः। ज्येष्ठां संत्यज्य यज्ञोऽयमारब्धस्तेन भोः सुराः ॥५७॥ जलरूपास्ततो देवाः शंभुमुख्या बभूविरे। देवस्त्रीभिर्गणेशस्य तपः कृत्वा विमोचिताः ॥५८॥ पुनश्च देवरूपास्ते जातास्तस्य प्रसादतः। गणेशस्य न संदेहोंऽशरूपेण जले स्थितः ॥५९॥ तदा मया च विज्ञातो गणेशो विघ्ननायकः। सर्वसत्ताधरः पुत्र स्वभावाच्च निरंकुशः ॥६०॥ नामतो गणपस्तत्र स्वयमेव मखो महान्। ध्वंसितोऽनेन देवाश्च जलरूपाः कृताः सुत ॥६१॥ पुनश्च भक्तिभावेन संतुष्टो यज्ञमाययौ। देवरूपांश्चकाराऽसौ देवानेवाऽकरोन् मखम् ॥६२॥ सर्वत्र संस्थितोऽयं वै तेनेदृक् च चकार ह। इति मत्वा गणेशस्य भजने तत्परोऽभवम् ॥६३॥ ततः कदाचिद्व्यासस्य संगतिर्मे महामते। जाता भाग्यवशेनैव मया पृष्टो महामुनिः ॥६४॥ व्यास त्वं वेदशाखानां मुने कर्ता न संशयः। पुराणानां विभागस्य भारतस्य महामते ॥६५॥ वेदेषु च पुराणेषु किं सारं सर्वसंमतम्। वद मां त्वं दयासिंधो येन शांतिं लभेन्नरः ॥६६॥ अवदत् स महाभागो गाणेशं पदमुत्तमम्। पुराणं गणनाथस्य श्रावयामास मां सुत ॥६७॥ ततोऽहं योगमार्गेण साधयित्वा गणेश्वरम्। मदादिं सर्वमुत्सृज्य शांतिं प्राप्तो न संशयः ॥६८॥ मदेनाऽहं परिभ्रष्टः परीक्षां कर्तुमुद्यतः। सर्वज्ञोऽहं परीक्षायां समर्थः शृणु पुत्रक ॥६९॥ अतस्त्वं भज विघ्नेशं मम पुत्र कृताज्ञया। शांतिं प्राप्स्यसि सर्वत्र गाणपत्यो भविष्यसि ॥७०॥ सर्वत्र व्यापकत्वेन मदोयं संस्थितोऽभवत्। त्वया सृष्टोऽधुना पापी पीडयिष्यति निश्चितम् ॥७१॥ तपसा मदयुक्तेन किं कृतं पुत्र दुःखदम्। अधुना गणपं भक्त्या भज योगस्य सेवया ॥७२॥ इत्युक्त्वा विरराामाऽथ भृगुः सर्वार्थकोविदः। शांतिं योगप्रदः साक्षाद्गाणपत्यो महायशाः ॥७३॥ इदं भृगोश्चरित्रं यः शृणुयाद्वा पठेन्नरः। स लभेदीप्सितं सर्वं प्रह्लादाऽत्र न संशयः ॥७४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकंदतचरिते भृगुचरितं नाम द्विचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच। भृगोर्वचनमाकर्ण्य लज्जितश्च्यवनोऽभवत् । तं प्रणम्य महाभक्त्या प्रपच्छ स कृतांजलिः ॥१॥ च्यवन उवाच। क्षमस्व मेऽपराधं च यत्कृतं सर्जनं मया। मदस्य भागहीनौ तावश्विनौ भागसंयुतौ ॥२॥ अधुना गणनाथस्य ज्ञानं मे वद शांतिदम्। मदादिकं समुत्सृज्य येन शांतो भवाम्यहम् ॥३॥ गृत्समद उवाच। तदीयं वाक्यमाकर्ण्य भृगुस्तं प्राह सिद्धिदम्। योगं पूर्णं गणेशाख्यं तं शृणुष्व वदाम्यहम् ॥ ४ ॥ भृगुरुवाच। गणेशो ब्रह्मरूपोऽयं पूर्णशांतिमयः स्मृतः। भेदाभेदादियोगेन गणेशः प्राप्यते नरैः ॥५॥ मायामयमिदं सर्वं भेदाभेदमयं सुत। त्यक्त्वा गणेश्वरत्वेन न चित्तं संभवेत् कदा ॥६॥ तदा चित्तस्य वृत्तीनां पंचानां नाश एव च। जायते नाऽत्र संदेहो योगशांतिमयो भवेत् ॥७॥ अतस्त्वं गणराजं तं भज योगस्य सेवया। मयोक्तेन विधानेन शांतियुक्तो भविष्यसि ॥८॥ इत्युक्त्वा विरराामाऽथ भृगुः शांतिसमन्वितः। तं प्रणम्य ययौ सोऽपि च्यवनः परामाहतः ॥९॥ वने गत्वा तपस्तप्तं तेन योगप्रदायकम् । क्रमेण चित्तभूमीनां शोधनं च कृतं बलात् ॥१०॥ शमश्चैव दमस्तेन सेवितौ भूमिनाशनात्। सर्वं सुसुलभं प्राप्तं ततो ब्रह्मविचारतः ॥११॥ शांतियोगं समासाद्य तदाकारेण संस्थितः। गणेशमभजन्नित्यं गाणपत्यस्वभावतः ॥१२॥ तं गणेशो ययौ दैत्य मूषकोपरि संस्थितः। गजाननश्चतुर्बाहुः प्रतापी च महोदरः ॥१३॥ तं दृष्ट्वा दंडवद्भूमौ पतितश्च्यवनो मुनिः। पूजयित्वा विधानेन ततः स्तोतुं प्रचक्रमे ॥१४॥ हेरंबस्योपनिषदा संस्तुतो गणनायकः। ततः प्रसन्नतां यातः प्रददौ वरमुत्तमम् ॥ १५ ॥ गणेश उवाच। यद्यदिच्छसि विप्रेन्द्र तत्तत्ते सफलं भवेत्। योगशांतिस्थभावेन सदा तिष्ठसि मानद ॥१६॥ भक्तिर्मदीयपादे वै दृढा तव भविष्यति। स्मृतोऽहं पुरतो विप्र तुभ्यं दास्यामि दर्शनम् ॥१७॥ एवमुक्त्वा गणाधीशोंतर्धानमगमत् प्रभुः। तेनाऽपि स्थापिता मूर्तिर्गणेशस्य चतुर्भुजा ॥१८॥ च्यवनाश्रमवासी स तदद्दात् गणपोऽभवत्। दर्शनात् स्मरणात् सद्यो भुक्तिमुक्तिश्च जायते ॥१९॥ एतत्ते कथितं पुण्यं च्यवनस्य महात्मनः। आख्यानं सर्वदोषघ्नं नानासिद्धिफलप्रदम् ॥२०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते च्यवनमाहात्म्यं नाम त्रिचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः॥ प्रल्हाद उवाच। श्रुतं च्यवनमाहात्म्यं विश्रांतं मे च मानसम्। मदस्य चरितं ब्रूहि किं चकार महामुने ॥१॥ मुद्गल उवाच। एवं पृष्टो गृत्समदो महायोगी प्रतापवान्। गाणपत्यवरिष्ठश्चोवाच तच्छृणु सादरम् ॥२॥ गृत्समद उवाच। शृणु प्रह्लाद माहात्म्यं मदस्य क्रमसंयुतम्। च्यवनेन स संसृष्टो मदः पातालमाययौ ॥३॥ विचार्य बलवान् दैत्यैर्ययौ शुक्रं महामुनिम्। तं प्रणम्य स्थितो दूरं बद्धांजलिपुटो मदः ॥४॥ विनयेन समायुक्तं मदं दृष्ट्वा स भार्गवः। काव्यस्तं मानयामास कुतः कोऽसि वदस्व माम् ॥५॥ ततः स हर्षितो भूत्वा जगाद मुनिसत्तमम्। च्यवनाच्च समुत्पन्नं भार्गवं विद्धि मां मुने ॥६॥ तव भ्रातृसुतोऽहं वै शरणं त्वामुपागतः। शिष्यं मां कुरु योगीश येनाऽहं मानितो भुवि ॥७॥ ब्रह्मांडस्य महद्राज्यं कर्तुमिच्छामि भार्गव। मदोऽहं मदरूपेण जेष्यामि त्वत्प्रसादतः ॥८॥ इति तस्य वचः श्रुत्वा नातिहृष्टेन चेतसा। मदं तं शिष्यभावेन जग्राह मुनिसत्तमः ॥९॥ शक्तिमंत्रं ददौ तस्मै कविः सर्वार्थकोविदः। एकाक्षरविधानेन सहितं भार्गवाग्रणीः ॥१०॥ स ययौ तं नमस्कृत्य वनं तपसि संस्थितः। निराहारयुतो दैत्यः शक्तिध्यानपरायणः ॥११॥ तस्य देहे समुत्पन्नो वल्मीको बहुकालतः। लतातरुसमायुक्तस्तथाऽपि तपसि स्थितः ॥१२॥ अस्थिमात्रावशिष्टोऽभूदजपन् मनुमादरात्। ध्यानं सांगं चकाराऽसौ स्थिरचित्तेन तापसः ॥१३॥ दिव्यवर्षसहस्राणि पंच वै तपतः किल। गतानि दैत्यराजेंद्रातुरं सर्वं तदाऽभवत् ॥१४॥ ततः शक्तिर्ययौ तस्याऽश्रमे भक्तिप्रभाविता। सिंहारूढा महाभागा शक्तिभिः संवृता परा ॥१५॥ पुरुषाकृतिसंस्था तु तदधीनाश्चरंति ताः। पुरतो भक्तिसंयुक्ताः प्रकृतीनां महाबलाः ॥१६॥ बोधयामास सा शक्तिरादिमाया मदं ततः। स्वभक्तं तापसं नैव स बुबोध मदासुरः ॥१७॥ ततस्तया जलेनैव मार्जितांगो महामदः। सावधानोऽभवत्तत्र दृष्ट्वा शक्तिं समुत्थितः ॥१८॥ तां प्रणम्य महाभक्त्याऽपूजयन् भक्तिसंयुतः। कृत्वा करपुटं देवीं तुष्टाव च यथामति ॥१९॥ मद उवाच। नमामि त्वां महामाये सर्वशक्तिसमन्विताम्। त्वदाधारमिदं सर्वं शक्तियुक्तं प्रवर्तते ॥२०॥ अनादिमप्रमेयां त्वां न जानंति महर्षयः। वेदांतवेद्यरूपां वै नमामि परमेश्वरीम् ॥२१॥ नानाभेदकरीं देवीं नानाभेदविवर्जिताम्। भेदाभेदमयीं त्वाऽहं नमामि सकलेश्वरीम् ॥२२॥ पार्वतीं दक्षपुत्रीं च हिमाचलसुतां तथा। समुद्रतनयां लक्ष्मीं सावित्रीं त्वां नमाम्यहम् ॥२३॥ त्वां स्वाहां त्वां स्वधां चैव वषट्कारात्मिकां शिवाम्। बुद्धिरूपां देवमयीं ज्ञानरूपां नमाम्यहम् ॥२४॥ सिद्धिदां सर्वकार्येषु सिद्धिरूपां तपस्विनीम्। योगिनीं योगदात्रीं वै योगेशीं

त्वां नमाम्यहम् ॥२५॥ त्वां स्तोतुं न समर्था ये मुनयो वेदवादिनः । देवाः स्कंदश्च शेषश्च तत्राऽहं स्तौमि किं पराम् ॥२६॥ धन्यौ मे पितरौ ज्ञानं तपो विद्यादिकं च यत् । यत्त्वांघ्रियुगं दृष्टं सर्वदुःखविमोचनम् ॥२७॥ इत्युक्त्वा संस्थितस्तूष्णीं भावेन स मदासुरः । तमुवाच महाशक्तिर्भक्तिभावेन यंत्रिता ॥२८॥ शक्तिरुवाच । त्वया कृतमिदं स्तोत्रं मम प्रीतिविवर्धनम् । भविष्यति महाभाग सर्वकामफलप्रदम् ॥२९॥ धर्मार्थकाममोक्षाणां साधनं प्रभविष्यति । पठतां शृण्वतां सर्वं सुखदं च महासुर ॥३०॥ वरान् वरय दास्यामि त्वया स्तोत्रेण तोषिता । तपसोग्रेण दैत्येंद्र दुर्लभान् मनसि स्थितान् ॥३१॥ गृत्समद उवाच । देव्या वचनमाकर्ण्य हर्षितः स मदासुरः । तां प्रणम्य जगादाऽथ वरान् परसुदुर्लभान् ॥३२॥ मदासुर उवाच । यदि देवि प्रसन्ना त्वं यदि देया वराः पराः । तर्हि मे मरणं कुत्र न भवेत्त्वं तथा कुरु ॥३३॥ देहि मे सकलं राज्यं त्रैलोक्यस्य जगन्मयि । यद्यदिच्छामि तत्तद्वै प्रसिद्ध्यतु सदाशिवे ॥३४॥ त्वं च प्रकृतिरूपा वै त्वत्तः सर्वं समुद्भवम् । पंचधा तन्ममाधीनं जननि त्वं सदा कुरु ॥३५॥ ततस्तं जगदंबा सोवाच विस्मितमानसा । यदुत्पन्नं महादैत्य तस्मात्ते मरणं न हि ॥३६॥ पंचधा यद्विभक्तं तत्तवाधीनं भविष्यति । यद्यदिच्छसि तत्तद्वै सफलं सर्वदा भवेत् ॥३७॥ आरोग्यमचलं राज्यं ब्रह्मांडस्य भविष्यति । न समस्ते च दैत्येंद्र युद्धे कश्चिद्भवेदपि ॥३८॥ इत्युक्त्वांतर्दधे देवी जगन्माताऽसुरेश्वर । मदश्च हर्षितोऽत्यंतं स्वगृहं प्रत्यपद्यत ॥३९॥ प्रमादासुरकन्यां वै सालसां रूपशालिनीम् । उपयेमे विधानेन दैत्यैः संमानितो भृशम् ॥४०॥ विलासदं ततस्तेन नगरं वासितं बभौ । तत्राययुश्च वासार्थं दिग्भ्यो दैत्या महासुराः ॥४१॥ अमात्यास्तस्य चत्वारः संजाता लोकविश्रुताः । बाणस्त्रिपुरनामा वै तारकः शंखसंज्ञकः ॥४२॥ दैत्यैस्तत्र समानीतः कविः परमयोगवित् । ब्राह्मणैः सह तं राज्ये सिषेच स मदासुरम् ॥४३॥ दैत्यानां राक्षसानां चासुराणां पतिरादरात् । जातो मदासुरस्तत्र हर्षिता दैत्यपा बभुः ॥४४॥ पुत्रास्त्रयः समुत्पन्नाः सालसायां मदासुरात् । विलासी लोलुपश्चैव धनप्रिय इति स्मृताः ॥४५॥ एवं राज्यं चकाराऽसौ दैत्यानामसुरेश्वरः । गर्वेण तेन वा को वै न दध्रे बलसंयुतः ॥४६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते मदासुरस्य राज्याभिषेको नाम चतुश्चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । ततः कदाचिद्दैत्येंद्रैर्बोधितोऽभून् मदासुरः । विजयाय समुद्युक्तस्त्रैलोक्यस्य मदान्वितः ॥१॥ स शुक्रमुपसंगम्य तं प्रणम्य विशेषतः । संगृह्य मुनिमुख्यं वै विजयायाऽकरोन् मतिम् ॥२॥ नानादिग्भ्यः समायाता असुरा दैत्यपास्ततः । संनद्धास्त्वरमाणाश्च राक्षसाः प्रययुर्मदम् ॥३॥ चतुरंगबलैर्युक्तः संख्यातीतैर्मदासुरः । निर्ययौ दिग्जयार्थं स संस्तुतो बंदिभिर्नृपः ॥४॥ दैत्याः केऽपि महाघोरा निःसृतास्तत्पुरो बभुः । मेरुमंदरसंकाशा यमाय भयदायकाः ॥५॥ नानाशस्त्रास्त्रसंयुक्ताः कवचादिसमावृताः । नानावाहनगास्ते वै कंपयंतो वसुंधराम् ॥६॥ केचित्पाषाण-हस्ताश्च केचिद् वृक्षधरास्तथा । पर्वतस्य धराः केचिन् महाबलपराक्रमाः ॥७॥ नानाभयंकराकारा बभुः सैन्ये समंततः । तदा संशयिताः सर्वे ब्रह्मांडे लोकसंकुले ॥८॥ पृथिवीजयने सक्ता दैत्याः परमदारुणाः । आदौ तत्रासुरेशानमदासुर-सुचोदिताः ॥९॥ केचित् कृत्वा मृता युद्धं केचित्तान् शरणं ययुः । राजानो भयसंयुक्ताः केचिच्च्यवनमाश्रिताः ॥१०॥ प्रलयं मेनिरे लोका भूमिस्थाः सर्वशस्तदा । दैत्या भूमंडलं जित्वाऽभवंस्ते हर्षसंयुताः ॥११॥ सप्तद्वीपवतीं पृथ्वीं जित्वा दैत्या महासुराः । देवानां जयने बुद्धिं चक्रुः परमदारुणाः ॥१२॥ वायुवेगसमाः सर्वे गताः स्वर्गं क्षणार्धतः । वनानि ते बभंजुश्च देवोद्यानानि दैत्यप ॥१३॥ देवैः संज्ञापितस्तत्र सुरेंद्रः क्रोधसंयुतः । युद्धाय शस्त्रसंयुक्तैर्देवैर्वै तत्परोऽभवत् ॥१४॥ बृहस्पतिं समागम्य प्रणनाम सुरेश्वरः । सुरेश्वरो द्विजेंद्रेण मानितो भक्तिसंयुतः ॥१५॥ तत इंद्रं जगादाऽसौ महाकांतिर्बृहस्पतिः । शृणु देवेंद्र वाक्यं मे कालकर्मयुतं महत् ॥१६॥ शक्तेः स वरदानेन दुर्जयः स मदासुरः । अतः सर्वं परित्यज्य पलायध्वं सुरेश्वराः ॥१७॥ एवमुक्ते च जीवेन पलायंत च देवताः । बृहस्पतिसमायुक्तास्त्यक्त्वा स्वर्गादिकं भयात् ॥१८॥ ततो मदासुरो ज्ञात्वा सर्वं देवविचेष्टितम् । दैत्यैर्युक्तः सुसंहृष्ट आययावमरावतीम् ॥१९॥ तत्रेंद्रासनगो भूत्वा रराज स मदासुरः । सेव्यमानोऽप्सरोभिश्च गंधर्वैर्गानतत्परैः ॥२०॥ विविधैर्दिव्यभोगैः स सेव्यमानोऽमरैस्तथा । बलदर्पसमायुक्तो दैत्यैर्नानाविधैर्बभौ ॥२१॥ देवानां स पदेष्वेव स्थापयामास दैत्यपान् । तारकाद्या महावीर्याः संस्थिता बुभुजुः सुखम् ॥२२॥ ततस्तैः स विचार्यैव ययौ ब्रह्मपदं महत् । विधाता स्थानमुत्सृज्य कैलासं तद्भयाद्ययौ ॥२३॥ सत्यलोके सुराः सर्वे बभ्रमुर्यत्र तत्र वै । नानाभोगयुता दुष्टा रेजिरे मदसंयुताः ॥२४॥ विमानैर्वाह्यमानास्ते मनोवेगैः सुखप्रदैः । कामगैश्च महादैत्या मेनिरे कृतकृत्यताम् ॥२५॥ मदासुरस्तत्र राजा ब्रह्मासनसमाश्रितः । मुदं लेभेऽसुरेशानैः संवृतः कालभीतिदैः ॥२६॥

ततस्तैः संवृतो दैत्यो ययौ वैकुंठमादरात् । ज्ञात्वाऽऽगतं महाक्रूरं पलायत रमापतिः ॥२७॥ सोऽपि कैलासमगमद्विष्णुः स्वैः पार्षदैर्वृतः । मदासुरो महादुष्टो वैकुंठे संस्थितोऽभवत् ॥२८॥ नारायणासने संस्थो दैत्यराजैर्महाबलैः । संवृतः शुशुभेऽतीव नानाभोगसमन्वितः ॥२९॥ सुखं चानुपमं तत्र वैकुंठे विष्णुना कृतम् । तदेव बुभुजे सोऽपि दैत्यैर्दुष्टैः समन्वितः ॥३०॥ विमानानि विचित्राणि देवोद्यानानि सर्वशः । कल्पवृक्षयुतान्येते दैत्यपाः समभुंजत ॥३१॥ ततस्तैः सहितो वीरः प्रतापी स मदासुरः । कैलासं शंकरस्थानं ययौ रणविधित्सया ॥३२॥ शिवोऽपि स्वगणैर्युक्तो देवैर्विष्णवादिभिर्वृतः । शक्तिलोकं जगामाऽथ भयसंकुलितो मदात् ॥३३॥ दैत्येश्वरो महादैत्यैः कैलासे संस्थितोऽभवत् । अतुलं सुखमत्यंतं बुभुजे तैः समन्वितः ॥३४॥ शिवेन रचितं पुण्यं कैलासे कल्पितप्रदम् । नानाश्चर्ययुतं हृष्टो दैत्यस्तद्बुभुजे बलात् ॥३५॥ मोहितो भोगभावेन धन्यं चैव मदासुरः । मेने स्वं सर्वदनुजैस्त्रिपुरप्रमुखैः खलैः ॥३६॥ देवाः सर्वे ययुः शक्तेर्लोकं तद्भयसंकुलाः । शक्तिस्तान् गणसंयुक्तान् समाश्वास्य स्थिताऽभवत् ॥३७॥ शिवादीनादिमाया सा जगाद वदतां वरा । जगतश्च जगन्माता सृष्टिस्थित्यंतकारिणी ॥३८॥ आदिशक्तिरुवाच । मा भयं देवदेवेशाः कुरुध्वं मम सन्निधौ । तिष्ठताऽत्र न दैत्योऽयं कदापि त्वागमिष्यति ॥३९॥ मदीयवरदानेन गर्वयुक्तो बभूव ह । मदासुरो महाभागो वचो मम करिष्यति ॥४०॥ आगमिष्यति दैत्यश्चेत्तदा मां पूजयिष्यति । मदीयमवमानं वै न करिष्यति देवपः ॥४१॥ कदाचित्तेन गर्वेण ममलोकनिवासिनः । पीडिताश्चेत् क्षणं सद्यो हनिष्यामि न संशयः ॥४२॥ एवमाश्वासिता देवाः शक्त्या ते तत्र संस्थिताः । भयं त्यक्त्वा च दैत्येभ्यो दुःखयुक्ता महासुर ॥४३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते मदासुरस्वर्गविजयो नाम पंचचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । कैलासे दैत्यपैर्युक्तः संस्थितोऽभून् मदासुरः । कियत्कालं प्रभुंजानो भोगान् परमदुर्लभान् ॥१॥ गते कियति काले च त्रिपुराद्यास्तमब्रुवन् । देवानां छेदने दुष्टाः संसक्ता मदसंयुताः ॥२॥ त्रिपुराद्या ऊचुः । शृणु राजन् महाभाग मदासुर हितं वचः । देवाः शंभुमुखाः सर्वे शक्तिलोकं गता बभुः ॥३॥ तत्र शक्त्या विशेषेण मानिताः सुरसत्तमाः । भयहीनाः सुखे सक्ता बुभुजुर्विविधं सुखम् ॥४॥ अस्माकं शत्रवः सर्वे देवा दैत्य मताः सदा । दैत्यानां कदने सक्ताः समर्थाश्चेन्न संशयः ॥५॥ हिरण्याक्षादयः सर्वे सूदिता देवपैः पुरा । छिद्रदर्शनसंयुक्तैरस्माकं तैर्विशेषतः ॥६॥ सर्वत्र ख्यातिमत्यंतं जानंति सकला जनाः । देवानां वैरिभावं च परस्परवधे रतम् ॥७॥ अस्माकं शक्तिरत्यंतं वैरिभावे प्रवर्तिता । मान्या तदपि दैत्येंद्र देवानां सा हिते रता ॥८॥ अतः शक्तिपुरे स्वामिन् गमिष्यामो न संशयः । हनिष्यामोऽमरान् सर्वान् वैरिभावं समाश्रितान् ॥९॥ दैत्यानां वचनं श्रुत्वा प्रतापी स मदासुरः । उवाच तान् महादैत्यो विनयेन समन्वितः ॥१०॥ मदासुर उवाच । शृणुध्वं त्रिपुराद्या मे वचनं हितकारकम् । शक्तिप्रसादसंभूतमैश्वर्यं सकलं च मे ॥११॥ इष्टा देवी मदीया सा तां भजामि विशेषतः । अतस्तस्या हितं मान्यं कर्तव्यं सकलैः सदा ॥१२॥ तां च देवा ययुः सर्वे शरणं नात्र संशयः । मदीयदासभावेन यंत्रिता शक्तिरादरात् ॥१३॥ देवानां पक्षपातेन सह तैर्नागताऽभवत् । अस्माकं तु वधार्थाय महामाया च दानवाः ॥१४॥ अतः प्रभजने तस्या आसक्ता ये भवंति वै । ते संमान्या मया नित्यं मा वैरं कुरुताऽसुराः ॥१५॥ मदासुरवचः श्रुत्वा दैत्यपास्तं पुनर्जगुः । क्रोधयुक्ता मदोत्सिक्ता देवानां तु वधे रताः ॥१६॥ दैत्येशा ऊचुः । मदासुर शृणु स्वामिन् पुरावृत्तं कथानकम् । हिरण्यकशिपुः प्रोक्तो ब्रह्मलब्धवरो महान् ॥१७॥ अभवन् बहवश्चान्ये दैत्येशा देवशत्रवः । देवपक्षाश्रयं सर्वे त्यक्त्वा स्वं धर्ममाश्रिताः ॥१८॥ कश्यपस्य सुतौ चैव तावुभौ देवसंश्रयम् । त्यक्त्वा तु देवसंहारे दैत्येशौ तत्परौ पुरा ॥१९॥ अतस्त्वयाऽपि कर्तव्यं देवानां मूलनाशनम् । असुराश्च सुराः प्रोक्ता वेदेऽपि च विरोधिनः ॥२०॥ शक्तिलोकं गमिष्यामो भक्तियुक्ता वयं प्रभो । देवास्तान्निर्दलिष्यामः खलु शक्तेः प्रसंनिधौ ॥२१॥ यदि शक्तिर्महामायाऽस्माकं पक्षं समाश्रिता । तदा तां पूजयिष्यामः कुलदैवतमादरात् ॥२२॥ अन्यथा योधयिष्यामो वयं शक्त्या न संशयः । शत्रुपक्षाश्रितां ज्ञात्वा नाऽत्र दोषः प्रवर्तते ॥२३॥ दैत्येशानां वचः श्रुत्वा दुर्मतिः स मदासुरः । तथेति सत्यमत्यंतं मानयामास दैत्यपः ॥२४॥ तदैव दैत्यसंयुक्तो ययौ लोकं मदासुरः । शक्तेश्च सन्निधौ दूतं प्रेषयामास

दुर्मतिः ॥२५॥ तारकं प्रजगादाऽसौ गच्छ देवीं महाबल। सामयुक्तं वदाऽऽशु त्वं महामायां महासुर ॥२६॥ तं प्रणम्य ययौ वेगाच्छक्तेः सन्निधिमादरात्। तारको मानितस्तैस्तु देवैः परमदारुणः ॥२७॥ नत्वा शक्तिं महामायां कृतांजलिपुटोऽसुरः। तारकस्तामुवाचाऽथ सामयुक्तं वचः खलः ॥२८॥ तारकासुर उवाच। शृणु शक्ते महामाये आगतः स मदासुरः। दर्शनार्थं च ते मातस्तेनाऽहं प्रेषितोऽधुना ॥२९॥ तेनोदितं च शक्ते त्वं वचनं शृणु मानदे। भक्तेन भक्तिसंयुक्तं भावज्ञे जगदंबिके ॥३०॥ अस्माकं कुलदेवी तु त्वमेवात्र न संशयः। असुरा हि वयं सर्वे त्वदीयाः सेवका मताः ॥३१॥ यत्राऽसुरा विराजंति सुरास्तत्र हतप्रभाः। भवंति नात्र संदेहः स्वभावाच्छत्रवो मताः ॥३२॥ अतो देवान् समुत्सृज्य तिष्ठ त्वं पूजिताऽसुरैः। अस्माकं शत्रवो देवास्त्वदीयाः शत्रवो मताः ॥३३॥ प्रणमंतो वयं यावत्तावद्देवनिकृंतनम्। करिष्यामो न संदेहस्तस्मान् मातस्त्यजाऽऽशु तान् ॥३४॥ एकं पक्षं समाश्रित्य तिष्ठ त्वं जगदंबिके। असुराणां सुराणां वा पूजिता सततं परे ॥३५॥ इत्येवं कथितं देवि मदस्य वचनं मया। कुरु त्वं भक्तराजस्य पालनं परमादरात् ॥३६॥ गृत्समद उवाच। मदस्य वचनं क्रूरं तारकेण प्रकाशितम्। तच्छ्रुत्वा कुपिता देवी तं जगाद महासुरम् ॥३७॥ शक्तिरुवाच। मदीयं जगदंबेति नाम वेदे प्रकाशितम्। केन मार्गेण दैत्येश पक्षमेकं समाश्रये ॥३८॥ यथा देवास्तथा दैत्या मान्या मे नात्र संशयः। देवैर्दैत्यैश्च कर्तव्यः स्वस्वधर्मो महासुर ॥३९॥ पाताले राज्यमानंदाद्दैत्यैः कर्तव्यमंजसा। स्वर्गेषु सर्वदा देवैः कर्तव्यं स्वस्वभावजम् ॥४०॥ विपरीते हनिष्यामि क्रुद्धाऽहं नात्र संशयः। अतो दैत्यैः प्रगंतव्यं पाताले वै मदाज्ञया ॥४१॥ शक्तेर्वचनमाकर्ण्य क्रुद्धः सोऽपि महासुरः। उवाच तां महाशक्तिं भयं त्यक्त्वा प्रभावतः ॥४२॥ तारक उवाच। मा गर्वं कुरु शक्ते त्वं शत्रुपक्षसमाश्रिते। तपसा वयमुत्कृष्टा जाताः स्वस्य न संशयः ॥४३॥ कर्मणा त्वं प्रसृजसि जगंति जगदंबिके। कर्माधीनमिदं सर्वं तत्र त्वं किं करिष्यसि ॥४४॥ कर्मणा दैत्यराजश्च प्रतापी स मदासुरः। ब्रह्मांडाधिपतिर्भूत्वा देवान् सर्वान् हनिष्यति ॥४५॥ युद्धाय सज्ज त्वं देवि देवैःसह जगन्मयि। असुरैश्च महाभागैर्गच्छामि मदसंनिधौ ॥४६॥ एवमुक्त्वा महाशक्तिं तारकः क्रोधसंयुतः। जगाम शक्तिलोकाद्वै मददैत्यस्य संनिधौ ॥४७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते तारकासुरसामवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । आगतं तारकं दृष्ट्वा हर्षितः स मदासुरः । दैत्यैः सह महासाधो प्रह्लन्नश्चाभवत् खलः ॥१॥ मदासुरं प्रणम्याऽसौ कथयामास तारकः । वृत्तांतं देवपक्षे च संश्रितं कुलदैवतम् ॥२॥ तच्छ्रुत्वा मद्यपो दैत्यः प्रतापी स मदासुरः । क्रोधयुक्तोऽभवत्तत्र देवान् हंतुं समुद्यतः ॥३॥ सन्नद्धैर्दैत्यपैः सर्वैः सन्नद्धश्च मदासुरः । शक्तिलोकं जगामाऽथ महाकाल इवाऽऽबभौ ॥४॥ पुरःप्रांते स्थितान् शक्तेर्गणान् परमविश्रुतान् । ताञ्जघ्नुश्च महादैत्याः शस्त्रैः परमदारुणैः ॥५॥ छिन्नांगास्ते पलायंत गताः स्वनगरेऽभवन् । वृत्तांतं कथयामासुर्दैत्यानामागमात्मकम् ॥६॥ श्रुत्वा तत्र महाशक्तिर्देवैः सर्वैर्महाबलैः । शंकरादिभिरन्वीता ययौ संग्राममंडलम् ॥७॥ सिंहारूढा चतुर्बाहुः खड्गचर्मधरा बभौ । धनुर्बाणधरा क्रोधान्नानाशक्तिसमन्विता ॥८॥ वामांगाच्छ्रीः समुत्पन्ना सावित्री दक्षिणांगतः । हृदयात् पुरतः संज्ञा तासां सैन्यं पृथग्बभौ ॥९॥ विष्णुशंकरमुख्याश्च सन्नद्धा वाहने स्थिताः । स्वस्वसैन्येन संयुक्ता बभुः कालसमाः पुरः ॥१०॥ इत्यादिशक्तिभिः शक्तैर्देवैर्वै संयुतं महत् । सैन्यं दैत्येंद्रमुख्यैस्तैर्दृष्टं परमदारुणम् ॥११॥ ततो दैत्यैश्च शस्त्रौघैस्ताडितं सहसा बलात् । शक्तिसैन्यं महाघोरं क्रोधयुक्तं बभूव ह ॥१२॥ शक्त्या संप्रेषिता देवा युयुधू रणमंडले । कालिकाद्या महायुद्धे शक्तयः कुपिता भृशम् ॥१३॥ अकस्मान्मिलिते सैन्ये परस्परजयैषिणी । दैत्यानां चैव देवानां मरणे कृतनिश्चये ॥१४॥ सैन्यानां रजसा तत्र हृतं ज्ञानं समंततः । न प्रकाशो रवेरासीत् स्वपरज्ञानकारकः ॥१५॥ हेषितैः क्ष्वेडितैस्तत्र बृंहितै रथनेमिभिः । वादित्राणां महाशब्दैर्नादयुक्ता दिशोऽभवन् ॥१६॥ शंखनादैः सिंहनादैर्नानानादैश्च दैत्यप । बधिरा इव योधास्ते संजाता रणमूर्धनि ॥१७॥ शस्त्रैरस्त्रैरनेकैश्च परिजघ्नुः समंततः । द्रुमैः पर्वतखंडैश्च स्वान् परान् युद्धदुर्मदाः ॥१८॥ मृताः केचित् क्षताः केचित् केचिच्छस्त्रधरा बभुः । निजघ्नुः परवीरांस्ते स्वबलेन महाबलाः ॥१९॥ भग्ने शस्त्रे समग्रे ते मल्लयुद्धपरायणाः । युयुधुः क्रोधसंयुक्ताः शस्त्रहीनास्तथाऽपरे ॥२०॥ कबंधा युयुधुस्तत्र शस्त्रहस्ता महाबलाः । स्वान् परानपि जघ्नुस्ते स्वपरज्ञानवर्जिताः ॥२१॥ बाणैर्बाणान् समाक्षुब्धा विजघ्नुश्च परस्परम् । खड्गैः खड्गांस्तथा चान्ये गदाभिश्च गदा भृशम् ॥२२॥ तोमरैश्च महावीराः पर्शुभिस्तु तथाऽपरे । भिंदिपालैश्च पाशैश्च परिजघ्नुः परस्परम् ॥२३॥ रथारूढा गजारूढैर्गजारूढाः पदातिभिः । अश्वारूढैस्तथाऽन्येऽपि युयुधुर्जातसंभ्रमाः ॥२४॥ तुमलं दैत्यदेवानां युद्धं तत्र प्रवर्तितम् । उभयोर्नाशकं घोरं वक्तुं नैव प्रशक्यते ॥२५॥ प्रवाहबहुलै रक्तै रजः संप्लावितं महत् । प्रकाशस्तत्र संजातः

स्वपरज्ञानकारकः ॥२६॥ प्रबोध्य केचिद्दैत्यांस्तान् सुरा जघ्नुर्महाबलाः । असुराश्च सुरांस्तद्वन् महाक्रोधसमन्विताः ॥२७॥ शक्तयः कुपितास्तत्र दैत्यांश्चैव प्रजह्रिरे । शस्त्रास्त्रैर्विविधैः सर्वाः पिपिषुश्चासुरेश्वरान् ॥२८॥ दैत्याः प्रकुपिता अन्ये शस्त्रास्त्रैर्देवमंडलम् । छिन्नं भिन्नमिमे चक्रुः क्रोधयुक्ता महाबलाः ॥२९॥ मेरुशीताचलप्रख्या दैत्या देवाः स्थिता बभुः । चेलुर्न च पदं तत्र परस्परवधे रताः ॥३०॥ अभवन् शोणितौघानां महानद्यः समंततः । देवदैत्यशरीरेभ्यः प्रसूताश्च सहस्रशः ॥३१॥ मेदोमांसमहापंकाः प्रपेतुर्धरणीतले । देवाश्च शतशो दैत्या गतप्राणा रणेऽसुर ॥३२॥ मांसं कर्दमरूपेण यत्र तत्र स्थितं रणे । मृतानां न च संख्याऽऽसीन् मार्गरोधनकारिणाम् ॥३३॥ असृक्प्रवाहजस्तत्र पूरः संददृशे जनैः । जलौघ इव दैत्येंद्र महामोहप्रवर्धनः ॥३४॥ मृतैर्गजैस्तथा भग्नै रथैर्वाजिभिरेव च । नानापशुगणैरुष्ट्रैः पक्षिभिर्दुर्गमं कृतम् ॥३५॥ मुमूर्षवस्तत्र पेतुर्मृताः केचिच्च खंडिताः । तदपि क्रोधसंयुक्ताः प्रयत्नं चक्रुराहताः ॥३६॥ एवं दश दिनान्येव दिवारात्रं महारणम् । बभूव समये तस्मिन् देवदैत्यसमुद्भवम् ॥३७॥ पलायनपरा देवास्ततो जाता महारणे । दशदिक्षु भयोद्विग्नाः पलायंताऽसुरेश्वर ॥३८॥ तद् दृष्ट्वा परमाश्चर्यं वज्रभृद्देवपैर्वृतः । संग्राममकरोद्धोरं दैत्यनाशकरं परम् ॥३९॥ वज्रपातेनासुरान् स चूर्णयामास वेगतः । देवेंद्रो विविधैरन्यैर्यमाद्या आयुधैस्तथा ॥४०॥ मृता दैत्यगणाः केचित् भृशं केचिच्च मूर्च्छिताः । मुमूर्षवः परे तत्र कृता वै वज्रिणाऽभवन् ॥४१॥ शक्त्यादिशस्त्रपातेन वह्निचंद्रयमादयः । असुरान् मारयामासुः क्रोधयुक्ताः सुरेश्वराः ॥४२॥ ततो भग्नं बलं सर्वं दैत्यानां भयसंकुलम् । दुद्राव दिक्षु सर्वासु त्रातारं नाभ्यपद्यत ॥४३॥ ततः संहर्षिता देवास्तथा देवगणाः परे । जयशक्ते महामायेऽवदंस्ते जय सर्वदा ॥४४॥ ततः क्रोधसमायुक्तस्तारको दैत्यपैर्वृतः । आययौ क्रोधदीप्ताक्षो योद्धुं शक्रेण वीर्यवान् ॥४५॥ आगत्य रणभूमिं स तमुवाच पुरंदरम् । गर्वयुक्तं महोग्रं च मोहितो मदसंयुतः ॥४६॥ तारक उवाच । किं त्वं युध्यसि देवेंद्र दैत्यपैः परमाहतैः । मया युक्तैकबाणेन न समोऽसि सुराधिप ॥४७॥ बलेन यदि संयुक्तस्तदा किममरावतीम् । त्यक्तवान् वद मे वाक्यं वृथा मृत्युमवाप्स्यसि ॥४८॥ इति तस्य वचः श्रुत्वा सुरेंद्रस्तमुवाच ह । क्रोधसंरक्तचक्षुर्भिर्भक्षयन्निव दानवान् ॥४९॥ इंद्र उवाच । तारक त्वं वल्गसि किं पश्य मे पौरुषं महत् । आसुरं प्रहरिष्यामि सैन्यं ते पश्यतो महत् ॥५०॥ पश्चात्त्वां च क्रमेणाऽहं मर्दं सबलवाहनम् । हत्वाऽभिवाद्य शक्तिं च

गमिष्याम्यमरावतीम् ॥५१॥ आदौ शक्तिविहीनोऽहं किं करोमि पराक्रमम् । अधुना शक्तिसंयुक्तः कदनं ते करोम्यहम् ॥५२॥ किं बहूक्तेन दैत्येंद्र दर्शय स्वपराक्रमम् । नोचेद्गच्छस्व पाताले मिथ्या वल्गसि किं वचः ॥५३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते इंद्रतारकसमागमो नाम सप्तचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । एवं गदित्वा देवेंद्रो दैत्येंद्रं क्रोधसंयुतम् । तारकं शरवर्षेण ववर्ष रणमंडले ॥१॥ एकस्मान् मंत्रिताद्बाणादनंतैर्निःसृतैः शरैः । बभूवुर्दैत्यसंघाताः पीडितास्तैः समंततः ॥२॥ ततो दैत्यः स दैत्येशाः प्रधानप्रमुखाः स्थिताः । शरवर्षाणि सर्वत्र चक्रुः परमदारुणाः ॥३॥ तैर्बाणैर्देवसैन्यानां हता वीरा अनेकशः । छिन्नांगाः पतितास्तत्र रुधिरौघप्रवर्षिणः ॥४॥ यत्र तत्र पलायंत देवा भयसमाकुलाः । त्रातारं नाभ्यपद्यंत प्रलयेषु यथा प्रजाः ॥५॥ तेषां तत्कर्म दृष्ट्वा ते ववृषुः सुरपा शरान् । अग्निधर्मादयस्तत्र कालमृत्यूपमान् दृढान् ॥६॥ तैराहतं बलं पूर्णं दैत्यानां यत्र तत्र ते । मृता मुमूर्षवः सर्वे बभूवू राक्षसा मृधे ॥७॥ ततोऽतिकुपितो दैत्यस्तारकोऽतिभयानकः । निष्कास्य सुदृढं बाणं मोचयामास दारुणम् ॥८॥ आकर्णं धनुराकृष्य दीप्तो बाणो सुरेश्वर । इंद्रस्य सहसागत्य हृदि संपतितोऽभवत् ॥९॥ तेन संपीडितो देवो मूर्च्छितो देवनायकः । मुहूर्तात् सावधानोऽभूद्वज्रं हस्ते समाददे ॥१०॥ वज्रेण ताडितोऽत्यंतं तारको दैत्यपुंगवः । पतितः स धरापृष्ठे गतप्राण इवाऽभवत् ॥११॥ एवं वरुणवन्ह्याद्यैर्वायुधर्मकुबेरकैः । हता दैत्या अनेके च पतिता मूर्च्छिता मृताः ॥१२॥ हाहाकारश्च सर्वत्र दैत्यसैन्ये प्रवर्तितः । पलायंत च दिक्प्रांते त्रासिता देवनायकैः ॥१३॥ ततः शुक्रेण ते सर्वे तारकाद्या महासुराः । विद्यया सावधानाश्च कृता युद्धाय सज्जिताः ॥१४॥ अग्निमंत्रसमायुक्तं बाणं धनुषि संदधे । तारकः क्रोधसंयुक्तो दाहकं स मुमोच ह ॥१५॥ पतितो देवसैन्ये च बाणस्तस्मान् महाबलः । निःसृतः पुरुषस्तत्र भक्षयामास वै सुरान् ॥१६॥ मेरुमंदरसंकाशो विचचार महाबलः । देवसैन्येषु दैत्येंद्र प्रलयाग्निसमोऽदहन् ॥१७॥ अग्निज्वालाश्च सर्वत्र समुद्भूता भयानकाः । अदहद्देवसंघांस्तान् वाहनैः सहितान् मृधे ॥१८॥ हाहाकाररवा देवाः पलायनमकुर्वत ।

तत्रापि पुरुषोऽत्यंतं भक्षयामास चामरान् ॥१९॥ ततः क्रोधसमायुक्तो महेंद्रो वारुणं महत् । अस्त्रं धनुषि संगृह्य मृधे तत्याज दारुणम् ॥२०॥ तस्माच्च जलधाराऽभूत् समंतान्निःसृता बहु । ववर्षुरतुलां वृष्टिं मेघाः सर्वत्र गर्जितैः ॥२१॥ जलौघेन महावह्निः प्रशांतः सहसा कृतः । अस्त्रेण पुरुषः सोऽपि पतितो रणमूर्धनि ॥२२॥ ततो देवगणाः सर्वे सावधाना बभूविरे । दैत्या वृष्ट्या च वातेन पीडिता बलसंयुताः ॥२३॥ विद्युज्ज्वालाभिरत्यंतं दग्धाः केचिन् महासुराः । जलौघेन तथा केचिद्वाहिताश्च सवाहनाः ॥२४॥ दैत्यानां प्रबलं सैन्यं पीडितं वारुणेन च । हाहाकाररवा दैत्या ययुर्मृत्युं भयानकम् ॥२५॥ ततः स तारको दैत्यः क्रोधसंरक्तलोचनः । वाय्वस्त्रं तन्निवृत्त्यर्थं संदधेऽतिभयानकम् ॥२६॥ मुमोच धनुराकृष्य देवसैन्ये महासुरः । तेन वारुणमस्त्रं च ग्रस्तं वै शांतिमागमत् ॥२७॥ वायुना प्रबलेनैव घूर्णिता देववाहिनी । शुष्कपत्रसमा तत्र बभ्राम समरांगणे ॥२८॥ ततः समागतो दैत्यस्तारकोऽतिभयानकः । खड्गेन देवराजं तं जघानामर्षतो दृढम् ॥२९॥ खड्गाघातेन देवेंद्रं पतितं मूर्च्छया भृशम् । संगृह्य दैत्यराजस्तु तारकः स्वबलं ययौ ॥३०॥ मदासुरस्य सांनिध्ये स्थापयामास देवपम् । मदेन मूर्च्छितो देवो बद्धः पाशैः समंततः ॥३१॥ ततो हाहाकृतं सर्वैः पलायत दिशो दश । सैन्यं देवगणानां वै विनाथं भयसंकुलम् ॥३२॥ यमं च सहसाऽऽगत्य गदया हृदि विव्यथे । तारकः स महामूर्च्छां जगाम प्रेतनायकः ॥३३॥ संगृह्य स्वबले नीत्वा हर्षितोऽभून् महासुरः । एवमग्निमुखाः सर्वे धृतास्ते दैत्यनायकैः ॥३४॥ अनाथं देवसैन्यं तत् पलायत भयाकुलम् । मृतं भग्नं च शस्त्रैः संहतं दैत्यैर्महाबलैः ॥३५॥ एवं निर्जित्य दैत्येंद्रा जहृषुर्नादसंयुताः । देवाः सर्वे भयोद्विग्नाः शरणं शंकरं ययुः ॥३६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते इंद्रपराजयो नामाष्टचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । विष्णुना सहितो देवैस्ततः सर्वैः सुसंवृतः । गणैः सुदारुणैस्तत्र ययौ शंभू रणस्थलम् ॥१॥ समागतं शिवं ज्ञात्वा तारकः क्रोधसंयुतः । उवाच तं महादेवं गर्वयुक्तेन चेतसा ॥२॥ तारक उवाच । किमागतोऽसि संग्रामे मदेन त्वं सदाशिव । सिंहेन शशको युद्धं किं करिष्यति मां वद ॥३॥ मदासुरस्य दासोऽहं त्वां हनिष्यामि निश्चितम् । संहारकारिणं सद्यो महासंहारकारकः ॥४॥ वचः श्रुत्वा त्रिशूलेन तारकः शंभुना हतः । स मृतस्तत्क्षणाद्दैत्यः पतितो भग्नवृक्षवत् ॥५॥ ततश्चक्रेण देवेशः केशवो दैत्यनायकान् । मारयामास संक्रुद्धः सकलान्यत्र तत्र च ॥६॥ ततोऽतिभयसंयुक्ताः पलायंत दिशो दैश । दत्याः प्राणपरीप्सार्थं हाहाकारकरा भृशम् ॥७॥ देवैस्तत्र धृता दैत्या मृतास्तारकमुख्यकाः । शुक्रस्य तु भयाच्छ्रेष्ठास्त्यक्तास्ते विवरे स्थिताः ॥८॥ देवेशानां च दैत्येशा दृष्ट्वाऽतीवपराक्रमम् । बाणस्त्रिपुरशंखौ च ससैन्या आययुर्मृधे ॥९॥ कोलाहलं प्रकुर्वाणाः शंखशब्दैः समंततः । ववृषुः शस्त्रधाराभिर्वर्षाकाले यथा घनाः ॥१०॥ ततः परस्परं युद्धं नियतं संबभूव ह । देवानां चैव दैत्यानां विनाशकरमद्भुतम् ॥११॥ बाणः सूर्यं ययौ क्रुद्धः शंखो विष्णुं महाबलः । रुद्रं च त्रिपुरो वेगात् परसैन्यनिबर्हणः ॥१२॥ अन्ये च शतशस्तत्र दैत्या देवान् समाययुः । गदितुं न भवेच्छक्यं बहुत्वाद्युद्धमद्भुतम् ॥१३॥ क्रोधयुक्ता निजघ्नुस्ते दानवा देवमुख्यकान् । शस्त्रास्त्रैर्विविधैः क्रुद्धा वृक्षैर्वै पर्वतैर्मृधे ॥१४॥ दैत्यानां बलमुत्कृष्टं ज्ञात्वा देवा महाबलाः । यत्नयुक्ताश्च संग्रामे युयुधुः शस्त्रपाणयः ॥१५॥ एवं त्रिदिवसं युद्धं संजातं दारुणं महत् । देवसेना ततो भग्ना भयभीता समंततः ॥१६॥ जघान शंकरोऽत्यंतं क्रोधयुक्तो महाबलम् । गदया त्रिपुरं तत्र ततः परमदुर्जयम् ॥१७॥ जघान गदया शंभुं सोऽपि तं च पराक्रमी । गदायुद्धं महत्तत्र बभूवाऽतिभयानकम् ॥१८॥ ततस्त्रिशूलघातेन हतो दैत्यः पपात ह । त्रिपुरो मूर्च्छयात्यंतं पीडितः शंकरेण सः ॥१९॥ ज्वालया रविणा तत्र बाणो भूमौ निपातितः । चक्रेण विष्णुना दुष्टः शंखः संमर्दितोऽभवत् ॥२०॥ धृत्वा तान् दैत्यमुख्यांश्च चिक्षिपुर्विवरेऽमराः । पाशैर्बद्ध्वा ततो दुष्टान् पुनरुत्पातशंकया ॥२१॥ ततो दैत्या हताः सर्वे देवैर्देवगणैर्मृधे । मृता मुमूर्षवः केचिच्छरणं ते ययुः सुरान् ॥२२॥ विजयं प्राप्य देवेंद्रा हर्षिताः संबभूविरे । जगर्जुर्जयशब्देन प्राट्टहासं प्रचक्रिरे ॥२३॥ ततो मदासुरः क्रुद्धो ज्ञात्वा वृत्तांतमद्भुतम् । संरक्तनयनो दुष्टो ययौ रणविधित्सया ॥२४॥ शुक्रेण सहितः सोऽपि महावीरैः समावृतः । रथारूढः स्वपुत्रैश्च संग्रामे संदधे मनः ॥२५॥ ततस्तं दैत्यमुख्यं वै तनयाश्च समाययुः । संग्रामार्थं

महावीर्यास्त्रयो देवैः शिवादिभिः ॥२६॥ धनप्रियश्च संग्रामे सूर्यं विव्याध सायकैः । उवाच गर्वसहितो रविं त्रैलोक्यभाविनम् ॥२७॥ धनप्रिय उवाच । शृणु दुष्टार्यमंस्त्वं मे वचनं हितकारकम् । गच्छ शीघ्रं महाबाहो नोचेन् मृत्युमुपेष्यसि ॥२८॥ त्वया दैत्या हताः पूर्वं भुंक्ष्व तेषां फलं महत् । न मुंचामि महादुष्ट जीवंतं त्वां च काश्यप ॥२९॥ ततः सूर्येण खड्गेन हतो दैत्यो महाबलः । पपात मूर्च्छयाऽऽविष्टः पुनः संज्ञां च सोऽलभत् ॥३०॥ आगत्य काश्यपं दैत्यपुत्रो वेगसमन्वितः । खड्गेन तीक्ष्णधारेण जघान दृढमंजसा ॥३१॥ दृढाघातेन सूर्यः स पतितो मूर्च्छया भृशम् । तं धृत्वा विजयी दैत्यपुत्रश्च स्वस्थलं ययौ ॥३२॥ प्रणम्य पितरं पुत्रो ननंद ह धनप्रियः । पाशैर्बद्ध्वा दृढं सूर्यं चिक्षेप विवरेऽसुरः ॥३३॥ विलासी विष्णुमागत्य क्रोधेन महताऽऽवृतः । बाणजालैः समाच्छाद्योवाच तं दारुणं वचः ॥३४॥ त्वया विष्णो मदीया वै सेना संनाशिता बलात् । गृहीता दैत्यवर्याश्च नाऽहं तत्र स्थितोऽभवम् ॥३५॥ अधुना शस्त्रघातेन हतस्त्वं गच्छसि प्रभो । मृत्योर्भुवनमुग्रं यन्न त्वां मुंचामि कर्हिचित् ॥३६॥ ततः क्रोधसमाविष्टो विष्णुश्चक्रेण दैत्यपम् । विलासिनं जघानाऽथ चक्रे संमूर्च्छितं खलम् ॥३७॥ क्षणेन सावधानोऽभूदागत्य गदया विभुम् । हृदि विव्याध दुष्टोऽसौ पपात गरुडाद्धरिः ॥३८॥ तं धृत्वा दैत्यपुत्रः स ययौ स्वस्थानमुत्तमम् । पितरं प्रणनामाऽथ पित्रा संमानितोऽभवत् ॥३९॥ बद्ध्वा पाशैर्महाविष्णुं चिक्षेप विवरे मदः । दैत्या हर्षसमायुक्ता जगर्जुश्च भयानकम् ॥४०॥ लोलुपश्च समागम्य शंकरं वृषभध्वजम् । उवाच कोपरक्ताक्षः शृणु त्वं नीललोहित ॥४१॥ मदीयमतुलं सैन्यं त्वया युधि निपातितम् । अधुना त्वां हनिष्यामि फलदाता भवाम्यहम् ॥४२॥ ब्रुवंतं तं ततो मूर्खं त्रिशूलेन जघान ह । शंकरः क्रोधसंयुक्तः सोऽपतन् मूर्च्छया भृशम् ॥४३॥ शुक्रेण सहसाऽऽगत्य सावधानः कृतोऽसुरः । लोलुपो निर्ममे मायां सर्वदेवविमोहिनीम् ॥४४॥ अकस्माज्जलधिस्तत्र व्याप्तः सर्वभयावहः । अग्निश्च सर्वतः सर्वान् दाहयामास भैरवः ॥४५॥ नानाशस्त्रधरा अन्ये नग्नास्ते शूलपाणयः । नग्नास्त्रियश्च शस्त्रौघैर्मारयामासुरंजसा ॥४६॥ शंकरो विस्मितो भूत्वा पश्चाद्भयसमन्वितः । मोहितो मायया तत्र लोलुपेनासुरेश्वर ॥४७॥ एतस्मिन्नंतरे तत्र समुद्रे सर्वतः स्थिते । ममज्ज तत्र देवेशः शिवः प्रह्लाद मोहतः ॥४८॥ कर्मणा च तपोरूपेणेदं सर्वं कृतं मृधे । मज्जंतं शंकरं धृत्वा लोलुपः स्वस्थलं ययौ ॥४९॥ पित्राऽसौ मानितोऽत्यंतं पाशैर्बद्ध्वा

सदाशिवम् । चिक्षेप विवरे दैत्यो लोलुपः सर्वलोलुपः ॥५०॥ ततो हाहारवं कृत्वा देवा देवागणा मृधे । शरणं जगदंबां ते ययुः संत्रासतापिताः ॥५१॥ दैत्येंद्रा हर्षिताः सर्वे जगर्जुर्घनवद्भृशम् । कुर्वंतो वाद्यशब्दान् वै जयशब्दकरा भृशम् ॥५२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते शिवादिदेवपराजयो नामैकोनपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । शिवविष्णवादिदेवेषु गृहीतेषु महाबलैः । दैत्यपुत्रैः सुराणां च सैन्ये त्रासः प्रवर्तितः ॥१॥ देवा देवगणाः केऽपि क्षता भग्नास्तथाऽपरे । मृता मुमूर्षवस्तत्र गृहीता दैत्यपैर्मृधे ॥२॥ केचित्तान् शरणं जग्मुर्दैत्यान् केचित् पलायिताः । शशंसुः सर्ववृत्तांतं शक्तये भयविह्वलाः ॥३॥ वृत्तांतमतुलं श्रुत्वा दैत्यानां कर्मसंभवम् । क्रोधयुक्ता महामाया ययौ संग्राममंडलम् ॥४॥ आगतां जगदंबां तां स्वयं ज्ञात्वा मदासुरः । पुत्रैः प्रधानमुख्यैश्च नानावीरैर्वृतो ययौ ॥५॥ समागतं महादैत्यं ज्ञात्वा क्रोधसमन्विता । जगदंबा रणे तत्र धनुः सज्जमथाऽकरोत् ॥६॥ धनुषः शब्दमुग्रं ते श्रुत्वा दैत्या भयातुराः । मूर्च्छिताः केऽपि भीताश्च दुद्रुवुः केऽपि दैत्यपाः ॥७॥ ततः शंखनिनादं वै चकार स मदासुरः । महता तस्य नादेन व्याप्तं सर्वं जगत्त्रयम् ॥८॥ ततः शंखनिनादैश्च देवीनां पूरितं नभः । दैत्येंद्राणां च सर्वत्र महान् कोलाहलो ह्यभूत् ॥९॥ सिंहनादैर्जगर्जुस्ते वीरा वै शक्तयस्तथा । विनेदुर्बहुवाद्यानि सुरा हर्षं समाययुः ॥१०॥ एतस्मिन्नंतरे तत्र कालिका क्रोधसंयुता । शक्तिभिः संवृता क्रूरा दैत्यसैन्यं ममर्द ह ॥११॥ त्रिशूलेन तथा पाशैः शस्त्रैर्नानाविधैर्मृधे । शक्तिभिश्छेदिता दैत्याः पलायंत दिशो दश ॥१२॥ ततः क्रोधसमायुक्ता दैत्यपुत्राः समाययुः । ववृषुर्बाणजालानि कालरूपाणि संयुगे ॥१३॥ तेषां बाणैर्हतास्तत्र देवानां शक्तयो गणाः । हाहाकाररवाः सर्वे पलायंत भयाकुलाः ॥१४॥ ततः काली समाक्रुद्धा रूपं कृत्वा भयानकम् । जघान दैत्यसेनां तां समंतात् प्रलयप्रभा ॥१५॥ गृहीत्वा दैत्यपुत्रान् वै बद्ध्वा पाशैर्महामदान् । चिक्षिपुर्विवरे संज्ञालक्ष्मीसावित्र्य आहवे ॥१६॥ ततः क्रोधसमायुक्तो मददैत्यः प्रतापवान् । धनुः सज्जमथो कृत्वा मुमोच शरमुल्बणम् ॥१७॥ संहारास्त्रान् महाघोरात्तस्माज्जातो महाबलः । पुरुषः पर्वताकारः शक्तीनां बुभुजे बलम् ॥१८॥ अस्त्रस्य तत्र दैत्येंद्र ज्वालया पीडिता रणे ।

शक्तयश्च मृता दग्धा दुद्रुवुर्यत्र तत्र ताः ॥१९॥ निःसहाया भयोद्विग्नाः कालीमुख्याः प्रदुद्रुवुः । महामायासमीपे ताः संस्थिताः संजगुः कथाः ॥२०॥ ततः क्रोधसमाविष्टां स्वयं शक्तिं समागताम् । सिंहारूढां स तां दृष्ट्वा दैत्येंद्रः प्रणनाम च ॥२१॥ उवाच शक्तिं गर्वेण पूरितोऽसौ महासुरः । देवांस्त्यक्त्वा जगन्मातरस्माकं पक्षमाश्रय ॥२२॥ नोचेत्त्वां कर्मणां देवीं हनिष्यामि न संशयः । सदेवां सपरीवारां पश्य मे पौरुषं महत् ॥२३॥ ततः क्रोधसमायुक्ता शूलं चिक्षेप वै रणे । वधाय दैत्यराजस्य महामाया प्रभावतः ॥२४॥ त्रिशूलेनाऽऽहतो दुष्टः प्रह्लाद न चचाल ह । मदासुरो जगर्जासावतिक्रोध-युतोऽभवत् ॥२५॥ शस्त्राणि सहसा त्यक्त्वा मल्लयुद्धाय दैत्यपः । ययौ शक्तिर्महद्रूपं कृत्वा प्रययुधे ततः ॥२६॥ न शक्यते वर्णयितुं युद्धं घोरं तयोर्महत् । बाहुभिर्हस्तपादैश्च प्रवृत्तं दारुणं परम् ॥२७॥ परस्परं जयंतौ तौ जल्पंतौ साधु साध्विति । दिवसानि गतान्येव त्रीणि तत्रासुरेश्वर ॥२८॥ वरदानबलेनैव तेन क्षीणबला कृता । शक्तिस्त्वशक्तिरूपा च जाता कर्मप्रभावतः ॥२९॥ ममर्द देहपातेन महाशक्तिं महासुरः । मूर्च्छितां तां समादाय ययौ हर्षसमन्वितः ॥३०॥ अन्याश्च शक्तयस्तेन धृताः काश्चित्पलायिताः । हाहाकारश्च सर्वत्राऽभवच्छक्तिबले महान् ॥३१॥ दैत्येंद्रो वारयामास शक्तीनां कदने रतान् । उवाच कुलदेव्यश्च शक्तयो नो न संशयः ॥३२॥ ततो मदासुरेणैव मोचिताः स्वसुतास्त्रयः । प्रधानादि महादैत्या धृता देवै रणे पुरा ॥३३॥ शक्तिलोकं समासाद्य गर्वितः स मदासुरः । भोगांश्च विविधांस्तत्र बुभुजे ज्ञातिभिः सह ॥३४॥ न ममर्ष निजात्मानं मोहितो दैत्यनायकः । स्त्रीमांसमदिरासक्तः प्रबभूवासुरेश्वर ॥३५॥ ततः शक्तिं समानीयोवाच गर्वसमन्वितः । देवैः सह महाशक्ते गच्छ यत्र च ते रुचिः ॥३६॥ उवाच मोहितो वाक्यं शिवादीन् समदासुरः । गच्छंतु यत्र कुत्राऽपि ममाज्ञा वशगाः सुराः ॥३७॥ शक्तिं प्रणम्य दैत्येंद्र ऊचिवान् भक्तिसंयुतः । अस्माकं पक्षमाश्रित्य वस त्वं पूजिता मया ॥३८॥ ततस्तं शक्तिराहत्योवाच म्लानमुखश्रिया । देवैः सह गमिष्यामि यत्र कुत्र महासुर ॥३९॥ ततस्तां दैत्यराजस्तु मुक्तवान् गर्वमोहितः । अनादृत्य महामायां साऽऽगता देवसंयुता ॥४०॥ वनेषु गिरिदर्यां च संस्थिता भयसंकुला । देवैः सह जगन्माता निःसृता दारुणाद्भयात् ॥४१॥ दैत्योऽपि दैत्यपैस्तत्र संवृतो बुभुजे सुखम् । शक्तिलोकभवं वीरः कर्मणा निर्मितं परम् ॥४२॥ ततो बाणादयस्तेनाऽभवंश्च स्थापिताः सुताः । देवानां च पदे मुख्याः शक्तिलोके तथा कृताः ॥४३॥ पृथिव्यां नगरे दुष्ट आययौ स विलासदे । तत्र स्थित्वा त्रिलोकस्य राज्यं चक्रे मदासुरः ॥४४॥

ततः पातालविवरे प्रेषयामास दैत्यपः। त्रिपुरं शेषनागेंद्रजयनाय महाबलम् ॥४५॥ शेषो ज्ञात्वा च वृत्तांतं साम चक्रे पुरैव च। दैत्येन वार्षिकं भागं ददौ जग्राह शासनम् ॥४६॥ एवं मदासुरो दुष्टो जित्वा ब्रह्मांडमंडलम्। राज्यं चकार सर्वेषां भुवनानां प्रतापवान् ॥४७॥ अनुत्तमान् विचित्रांश्च देवादीनां सुदुर्लभान्। भोगान् सर्वान् स आहृत्य बुभुजे ज्ञातिभिः सह ॥४८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते मदासुरविजयो नाम पंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच। शृणु प्रह्लाद दैत्यस्य चेष्टितं परमाद्भुतम्। मदासुरस्य सर्वं यन् मदमोहकरं महत् ॥१॥ ततः कियति काले स गते दुष्टैर्महासुरः। बभौ परिवृतो दैत्यैर्महाबलपराक्रमैः ॥२॥ तत्र तं त्रिपुरो दुष्ट उक्तवान् दत्यपैः सह। कृतांजलिपुटो भूत्वा वचनं साहसं खलः ॥३॥ त्रिपुर उवाच। शृणु प्रभो महाराज दैत्यानां हितकारकम्। वचनं सुखदं साध्यमखंडानंददायकम् ॥४॥ जित्वा त्रिभुवनं पूर्वं दैत्याः संतोषमाययुः। हिरण्यकशिपुस्तत्राद्यो महान् परमद्युतिः ॥५॥ मृत्युभीतिविहीनोऽयमानंदेन समावृतः। अखिलं बुभुजे राज्यं त्रिलोकस्य न संशयः ॥६॥ वने गिरिगुहासंस्था देवाश्छद्मप्रदर्शिनः। शत्रवस्तत्र कालेन ससृजुर्नरसिंहकम् ॥७॥ नृसिंहेन हतो नूनं हिरण्यकशिपुः प्रभुः। एवं क्रमेण श्रेष्ठा ये ते हता दैत्यपाः क्रमात् ॥८॥ अधुना त्वं तथा जातो ब्रह्मांडाधिपतिः स्वयम्। देवान् मुक्त्वा महाराज किं स्थितोऽसि विचारय ॥९॥ अस्माकं शत्रवो नित्यं देवा वेदे प्रतिष्ठिताः। कथं मित्राणि ते राजन् भविष्यंति वद प्रभो ॥१०॥ अतस्तेषां विनाशाय यतस्व नृपसत्तम। नोचेत्त्वां कालयोगेन हनिष्यंति न संशयः ॥११॥ शस्त्रास्त्रैः पीडिता देवा न मरिष्यंति कर्हिचित्। अमराः कथिता वेदे घोररूपा न संशयः ॥१२॥ तेषां मरणमत्युग्रं वेदे पश्य प्रतिष्ठितम्। कर्मनाशाद् भवेत् पूर्णं कर्मान्ना देवता यतः ॥१३॥ तस्मात् कर्मकरा विप्रास्ताडनीया न संशयः। आसुरं कर्म कुर्वंतो मंतव्यास्ते त्वयाऽनिशम् ॥१४॥ अन्ये वर्णाश्रमस्था ये ब्राह्मणाः कर्मकारकाः। नष्टेषु विप्रजातेषु सर्वे नष्टा भवंति ते ॥१५॥ अत आज्ञापय प्राज्ञ असुरान् कर्मखंडने। सर्वत्रासुरभावेन कर्म सर्वं प्रवर्तताम् ॥१६॥ एवमुक्त्वा महादैत्यं तूष्णीं भावेन संस्थितम्।

सदसि त्रिपुरं वीक्ष्य तमुवाच मदासुरः ॥१७॥ मदासुर उवाच । समीचीनं त्वया प्रोक्तमसि त्रिपुर बुद्धिमान् । यादृशं कथितं वाक्यं तादृशं कुरु दैत्यपैः ॥१८॥ ततो दैत्यगणैर्युक्तस्त्रिपुरो निर्गतोऽसुरः । पृथिव्यां यत्र तत्राऽपि कर्मखंडनकोऽभवत् ॥१९॥ धृता मुनिगणास्तेन ताडिता वधिता बहु । केचित्तदाज्ञया युक्ताः संस्थिताः कर्मदूषकाः ॥२०॥ केचिन् मुनिगणा दुष्टं शरणं तं ययुस्ततः । तस्याज्ञावर्तिनो भूत्वा संस्थिता ब्राह्मणाधमाः ॥२१॥ केचिच्च दुद्रुवुस्तस्य वनेषु ब्राह्मणा भयात् । तत्र स्थिताः स्वधर्मस्थं कर्म चक्रुर्गतज्वराः ॥२२॥ सिंहादिभयमुत्सृज्य मरणे कृतनिश्चयाः । सिंहादीनां समीपस्था अवसन् कर्मसिद्धये ॥२३॥ एवं द्विजाः स्थितास्तत्र न ज्ञाता दैत्यपेन ते । कर्मभ्रष्टाः स्वभावेन ब्राह्मणा बहवोऽभवन् ॥२४॥ तीर्थानि यज्ञवृक्षाश्च देवतायतनानि ते । बभंजुर्दैत्यचाराश्च यत्र तत्रासुरेश्वर ॥२५॥ आसुरं कर्म सर्वत्र स्थापितं त्रिपुरेण च । वर्णेषु ब्राह्मणाद्येषु दुष्टसंकरकारकम् ॥२६॥ ततो हाहाऽकरोत् सर्वं जगत्तेन दुरात्मना । स्वधर्मवर्जितं दुःखाज्जातं दुष्टप्रपीडितम् ॥२७॥ न स्वाहा न वषट्कारो न स्वधादिकमुत्तमम् । तेन देवगणाः सर्वे दैत्यस्य वधकांक्षिणः ॥२८॥ उपोषणैश्च संयुक्ता जाताः कालेन देवपाः । सगणाः परिवारेण निस्तेजस्का बभूविरे ॥२९॥ ततो देवगणाः सर्वे दैत्यस्य वधकांक्षिणः । मिलितास्तत्र चोपायं लेभिरे न वधस्य च ॥३०॥ सनत्कुमारश्च महायोगी तत्रादराद्ययौ । सहसा भाग्ययोगेन सर्वेषां हितकारकः ॥३१॥ तं दृष्ट्वा देवपाः सर्वे समुत्तस्थुः प्रणम्य तम् । पूजयामासुरत्यंतमुपचारैर्मनोहरैः ॥३२॥ कंदमूलादिकं तत्र निवेद्य च सुभक्तितः । पप्रच्छुस्तं मदस्यैते मरणोपायमंजसा ॥३३॥ देवा ऊचुः । धन्यं जन्म तपो विद्या ज्ञानं देहाश्च पूर्वजाः । तवांघ्रिदर्शनाद्योगिन् कृतकृत्या वयं ततः ॥३४॥ मदासुरेण बलिना जिताः सर्वे महामुने । अतस्तस्य वधार्थं नो वदोपायं महामते ॥३५॥ साधवो देवता विप्राः पीडितास्तेन योगिप । अतः साध्वादिरक्षार्थं वद सर्वज्ञ ते नमः ॥३६॥ समशीलो भवान् साक्षान् मूर्तं ब्रह्मेव संस्थितः । तथापि दोषसंयुक्तमेकं हंता भव प्रभो ॥३७॥ अतिदुष्टमनादृत्य जगत्सर्वं सुखी कुरु । न हत्वा त्वं स्वयं साक्षान् मार्गदर्शी भवस्व नः ॥३८॥ साधवः समशीलाश्च मार्गं संदर्शयंति ते । दीनानां धर्मनिष्ठानामनाथानां महामुने ॥३९॥ सत्कर्मनिरतान् जंतून् सदा कुर्वंति साधवः । विकर्मणश्च संहारस्तत्र संजायते यथा ॥४०॥ न हिंसा सा महायोगिन् विकर्महितकारिका । भवज्ज्ञानेन चाज्ञानं नाशयंति सुसाधवः ॥४१॥ अतस्त्वं वद नाशार्थमुपायं करवामहै । धर्मसंस्थापनार्थं तं धर्माम्नाश्च वयं यतः ॥४२॥

॥ ओमिति श्रीमदांत्य पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते सनत्कुमारदेवसमागमो नामैकपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । एवं दीनस्वभावेन प्रार्थितो मुनिसत्तमः । सनत्कुमार आनंददायकं तानुवाच ह ॥१॥ सनत्कुमार उवाच । शृणुतेशादयो देवा मदासुरविनाशने । उपायं कथयिष्यामि तत् कुरुध्वं सुरेश्वराः ॥२॥ गणेशं पूजयध्वं वै यूयं सर्वे समाहृताः । सबाह्यांतरसंस्थं तं हनिष्यति मदासुरम् ॥३॥ सनत्कुमारवाक्यं तच्छ्रुत्वा देवर्षिसत्तमाः । ऊचुस्तं प्रणिपत्यादौ भक्तिनम्रात्मकंधराः ॥४॥ देवर्षय ऊचुः । केनोपायेन देवेशं गणेशं मुनिसत्तम । पूजयाम विशेषेण तं वद त्वं यथातथम् ॥५॥ एवं पृष्टो महायोगी देवैश्च मुनिभिः सह । उवाचाराधनं तेभ्यो गाणपत्यो महायशाः ॥६॥ एकाक्षरेण तं देवं हृदिस्थं गणनायकम् । विधिना पूजयध्वं च तुष्टस्तेन भविष्यति ॥७॥ ध्यानं तस्य प्रवक्ष्यामि शृणुध्वं सुरसत्तमाः । यूयं तं तादृशं ध्यात्वा तोषयध्वं निधानतः ॥८॥ एकदंतं चतुर्बाहुं गजवक्त्रं महोदरम् । सिद्धिबुद्धिसमायुक्तं मूषकारूढमेव च ॥९॥ नाभिशेषं सपाशं वै परशुं कमलं शुभम् । अभयं दधतं चैव प्रसन्नवदनांबुजम् ॥१०॥ भक्तेभ्यो वरदं नित्यमभक्तानां निषूदनम् । एतादृशं हृदि ध्यात्वा सेवध्वं चैकदंतकम् ॥११॥ सर्वेषां हृदि संस्थोऽयं बुद्धिप्रेरकभावतः । स्वयं बुद्धिपतिः साक्षादात्मा वै सर्वदेहिनाम् ॥१२॥ एकशब्दो मता माया देहरूपा विलासिनी । सत्तात्मको दंतशब्दः प्रोक्तस्तत्र न संशयः ॥१३॥ मायाया धारकोऽयं वै सत्तामात्रेण संस्थितः । एकदंतो गणेशानः कथ्यते वेदवादिभिः ॥१४॥ सर्वसत्ताधरं पूर्णमेकदंतं गजाननम् । सेवध्वं भक्तिभावेन भविष्यति सदा सुखम् ॥१५॥ सनत्कुमार उक्त्वैवं ययौ योगी स आदरात् । जयहेरंबमंत्रं वै समुच्चार्य मुखेन सः ॥१६॥ ततो देवगणाः सर्वे मुनयस्तपसि स्थिताः । एकाक्षरविधानेन तोषयामासुरादरात् ॥१७॥ पत्रभक्षा निराहारा वायुभक्षा जलाशिनः । कंदमूलफलाहाराः केचित् केचिद्धभूविरे ॥१८॥ संस्थिता ध्याननिष्ठा वै जपहोमपरायणाः । नानातपःप्रभावेणाऽतोषयन् गणनायकम् ॥१९॥ गते वर्षशते चैव संतुष्टश्चैकदंतकः । आययौ तान् वरं दातुं ध्यातस्तैर्यादृशस्तथा ॥२०॥ जगाद स तपोयुक्तान् मुनीन् देवान् गजाननः । वरं वृणुत तुष्टोऽहं दास्यामि ब्राह्मणाऽमराः ॥२१॥ तस्य तद्वचनं श्रुत्वा हृष्टा देवर्षयोऽभवन् । उन्मील्य लोचने देवमपश्यन् सविधस्थितम् ॥२२॥ दृष्ट्वा मूषकसंस्थं तं प्रणेमुस्ते गजाननम् । मुनयो देवदेवेंद्रा भक्तियुक्ता अपूजयन् ॥२३॥ पूजयित्वा यथान्यायं प्रणम्य करसंपुटैः । तुष्टुवुश्चैकदंतं तं भक्तिनम्रात्मकंधराः ॥२४॥ देवर्षय ऊचुः । नमस्ते गजवक्त्राय गणेशाय नमो नमः । अनंतानंदभोक्त्रे वै ब्रह्मणे ब्रह्मरूपिणे ॥२५॥

आदिमध्यांतहीनाय चराचरमयाय ते । अनंतोदरसंस्थाय नाभिशेषाय ते नमः ॥२६॥ कर्त्रे पात्रे च संहर्त्रे त्रिगुणानामधीश्वर । सर्वसत्ताधरायैव निर्गुणाय नमो नमः ॥२७॥ सिद्धिबुद्धिपते तुभ्यं सिद्धिबुद्धिप्रदाय च । ब्रह्मभूताय देवेश सगुणाय नमो नमः ॥२८॥ परशुं दधते तुभ्यं कमलेन प्रशोभिने । पाशाभयधरायैव महोदर नमो नमः ॥२९॥ मूषकारूढदेवाय मूषकध्वजिने नमः । आदिपूज्याय सर्वाय सर्वपूज्याय ते नमः ॥३०॥ गुणसंयुक्तकायाय निर्गुणात्मकमस्तक । तयोरभेदरूपेण चैकदंताय ते नमः ॥३१॥ वेदांतागोचरायैव वेदांतालभ्यकाय ते । योगाधीशाय वै तुभ्यं ब्रह्माधीशाय ते नमः ॥३२॥ अपारगुणधारायानंतमायाप्रचालक । नानावतारभेदाय शांतिदाय नमो नमः ॥३३॥ वयं धन्या वयं धन्या यैर्दृष्टो गणनायकः । ब्रह्मभूयमयः साक्षात् प्रत्यक्षं पुरतः स्थितः ॥३४॥ एवं स्तुत्वा प्रहर्षेण ननृतुर्भक्तिसंयुताः । साश्रुनेत्रान् सरोमांचान् दृष्ट्वा तान् ढुंढिरब्रवीत् ॥३५॥ एकदंत उवाच । वरं वृणुत देवेशा मुनयश्च यथेप्सितम् । दास्यामि तं न संदेहो भवेद्यद्यपि दुर्लभः ॥३६॥ भवत्कृतं मदीयं यत् स्तोत्रं सर्वार्थदं भवेत् । पठते शृण्वते देवा नानासिद्धिप्रदं द्विजाः ॥३७॥ शत्रुनाशकरं चैवांते स्वानंदप्रदायकम् । पुत्रपौत्रादिकं सर्वं लभते पाठतो नरः ॥३८॥ गृत्समद उवाच । एवं तस्य वचः श्रुत्वा हर्षयुक्ताः सुरर्षयः । प्रणम्य चैकदंतं तमूचुस्ते भक्तिभावतः ॥३९॥ सुरर्षय ऊचुः । यदि तुष्टोऽसि सर्वेश एकदंत महाप्रभो । यदि देयो वरो नश्चेज्जहि दुष्टं महासुरम् ॥४०॥ स्थानभ्रष्टाः सुरेशानाः कर्मभ्रष्टा मुनीश्वराः । कृतास्तेन जगन्नाथ तस्मात्तं जहि विघ्नप ॥४१॥ त्वदीयां भक्तिमत्यंतमचलां देहि मानद । यया मायाभयं घोरं भविष्यति कदापि न ॥४२॥ एवमुक्तो गणाधीशस्तथेति स उवाच तान् । अंतर्धानं ययौ सद्य एकदंतः प्रतापवान् ॥४३॥ महर्षिभिस्ततो देवैः स्थापना गणपस्य च । कृता तत्र महाभागैरभूत् क्षेत्रं च वैघ्नपम् ॥४४॥ आग्नेय्यां दिशि विख्यातं स्वस्वखंडेषु विद्यते । एकदंतस्य तत् क्षेत्रं सर्वसिद्धिप्रदायकम् ॥४५॥ तत्रैव देवदेवेंद्रा मुनयः संस्थिता बभुः । सेवार्थं पूर्णभावेन स्वाधिकारे कलांशतः ॥४६॥ तस्य संदर्शनाज्जंतुर्लभेदीप्सितमुत्तमम् । तत्रैव मरणे ब्रह्म प्रह्लादात्र न संशयः ॥४७॥ महिमा गदितुं पूर्णो वर्षकोटिशतैरपि । न शक्यते मया तस्मादुक्तं सारं च सारतः ॥४८॥ तत्र सिद्धिं विशेषेण प्राप्य देवर्षयोऽमलाः । भवंति कृतकृत्यास्ते ह्यन्ये नानाजनास्तथा ॥४९॥ धन्यं जन्म नराणां वै दृष्टो यैरेकदंतकः । जन्ममृत्युभयघ्नश्च स्वेप्सितार्थप्रदः प्रभुः ॥५०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंड एकदंतचरिते एकदंतप्रसन्नभावो नाम द्विपंचाशत्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । एवं दत्वा वरं देवान् मुनीन् सर्वान् गजाननः । अंतर्धाय स्वमात्मानमेकदंतो ययौ पुरम् ॥ १ ॥ ततः कदाचिद्दैत्येंद्रं प्रययौ नारदो मुनिः । मदासुरं महाक्रूरं तेनायं मानितोऽभवत् ॥ २ ॥ उवाच तं महादैत्यं नारदः प्रहसन् मुनिः । शृणु दैत्यपते वाक्यं मदीयं सर्वसौख्यदम् ॥ ३ ॥ वनेषु देवविप्रैश्च तपस्तप्तं सुदारुणम् । गणेशस्य मुदे भूप शतवर्षाणि भूरि वै ॥ ४ ॥ ततस्तेषां प्रसन्नोऽभूद्गणेशो ब्रह्मनायकः । वरदो ह्यभवत्तत्र भक्त्या संतोषितः स्वयम् ॥ ५ ॥ तैस्ते वधार्थमत्यंतं याचितः स तथाऽवदत् । त्वां हनिष्यति वेगेन तस्माद्यत्नपरो भव ॥ ६ ॥ नारदस्य वचः श्रुत्वा क्रोधयुक्तो बभूव ह । मदासुरो मुनिं तत्र विसृज्याऽभूत् सुदुःखितः ॥ ७ ॥ ब्रह्मांडवासिनो ये वै तेभ्यो मृत्युर्न मे भवेत् । अयं क एकदंतश्च तं हन्मि क्रोधसंयुतः ॥ ८ ॥ मया विमोचिता देवा दयया तैः कृतं महत् । शत्रुभावयुतं कार्यं तस्मात्तान् हन्मि निश्चितम् ॥ ९ ॥ दैत्येंद्रैः कथितं सर्वं सत्यं जातं न संशयः । देवेंद्राः शत्रवः सर्वे सुराणां वेदवाक्यतः ॥ १० ॥ एवं विचार्य दैत्येशः समाहूय महासुरान् । सन्नद्धो देवनाशार्थं ससैन्यो निःसृतो बहिः ॥ ११ ॥ ततोऽकस्मान् महादेव एकदंतः प्रतापवान् । बभूव प्रकटस्तेषां समीपे भयदायकः ॥ १२ ॥ मूषकारूढमुग्रं तं नरनागस्वरूपिणम् । शस्त्रपाणिं चतुर्बाहुं दृष्ट्वा दैत्याः सुविस्मिताः ॥ १३ ॥ ततः कोलाहलं तत्र चक्रुः सर्वे समंततः । कोऽयं समागतो दैत्या महत् पश्यत कौतुकम् ॥ १४ ॥ दैत्याः सर्वे च तं दृष्ट्वा भयभीता बभूविरे । स्थित्वा तत्रैव दैत्येशा दूतं ते संजगुर्वचः ॥ १५ ॥ गच्छ दूत समीपं त्वं पुरुषस्य त्वरान्वितः । वृत्तांतमखिलं ज्ञात्वाऽऽयाहि त्वं सामसंयुतः ॥ १६ ॥ ततस्तमेकदंतं स ययौ दूतः प्रणम्य च । उवाच प्रांजलि-र्भूत्वा गणेशं देवनायकम् ॥ १७ ॥ दूत उवाच । स्वामिन् मदासुरस्याऽहं दूतस्तेन प्रचोदितः । स तु ब्रह्मांडराजो वै त्वां दृष्ट्वा विस्मितोऽभवत् ॥ १८ ॥ भवान् कश्च कुतो यातः किं कार्यं नाम ते प्रभो । कस्य वा वद सर्वज्ञ संशयस्यापनुत्तये ॥ १९ ॥ इति पृष्टः स दूतेन एकदंतस्तमादरात् । जगाद हास्यसंयुक्तो दैत्यदूतं विचक्षणम् ॥ २० ॥ एकदंत उवाच । अहं स्वानंदवासी च स्वानंदादागतोऽधुना । मदासुरं निहंतुं वै देवानां सुखवृद्धये ॥ २१ ॥ एकदंत इति ख्यातः सदा ब्रह्मसुखात्मकः । दूतवर्य वदाशु त्वं मोहितं तं मदासुरम् ॥ २२ ॥ इच्छसि त्वं जीवितुं चेत्तदा मां शरणं व्रज । देवानां द्वेषमुत्सृज्य वस त्वं नगरे स्वके ॥ २३ ॥ देवा हविर्भुजः संतु दैत्याः पातालभोगिनः । विश्वं सुखस्थं भवतु स्वस्वधर्मपरायणम् ॥ २४ ॥ एतदर्थमहं यातो वद सर्वं सुविस्तरम् । मदासुरं महाक्रूरं नोचेद्धन्मि क्षणेन तम् ॥ २५ ॥ एकदंतवचः श्रुत्वा दैत्यदूतः प्रणम्य तम् ।

ययौ मदासुरं तत्र वृत्तांतं चाऽब्रवीत् पुरः ॥ २६ ॥ दूतस्य वचनं श्रुत्वा मूर्च्छितो दैत्यपुंगवः। दैतेयैः सावधानश्च कृतः सोऽपि शुशोच ह ॥ २७ ॥ उवाच दैत्यपान् सर्वान्नारदेन समीरितम्। वाक्यं तदभवत् सत्यं मम शत्रुरयं मतः ॥ २८ ॥ नानाशस्त्रैस्तथास्त्रैस्तं हनिष्यामि न संशयः। कथं कालस्य मे मृत्युर्भविष्यति महासुराः ॥ २९ ॥ एवमुक्त्वा ययौ पापी मदः सर्वसमन्वितः। एकदंतं समुद्दिश्य शस्त्रमुग्रं मुमोच ह ॥ ३० ॥ अनिवार्यममोघं च शस्त्रं दृष्ट्वा गजाननः। परशुं तोलयित्वा स मुमोच यमसंनिभम् ॥ ३१ ॥ परशुं दैत्यपा दृष्ट्वा तेजसा संवृतं परम्। भयभीताः समंतात्ते पलायंत दिशो दश ॥ ३२ ॥ परशुर्दैत्यराजास्त्रं सच्छित्वा स्वेन तेजसा। ततो दैत्यांश्च सर्वत्र चिच्छेद यमसंनिभः ॥ ३३ ॥ हताः परशुना दैत्याः सर्वे प्रह्लाद तत्क्षणात्। त्रिपुरादय एवं ते दृष्ट्वा वै दुद्रुवुर्भयात् ॥ ३४ ॥ ततो मदासुरः क्रुद्धो जग्राहास्त्रमनुत्तमम्। संहाराख्यममोघं वै युयोज धनुषि स्वयम् ॥ ३५ ॥ तावत् परशुना विद्धो हृदये दैत्यपुंगवः । पपात स धरापृष्ठे वाताहत इव द्रुमः ॥ ३६ ॥ ततस्तत्र महास्त्रं तत् परशूपस्थितं त्वभूत्। प्रहरार्धेन दैत्येशः सावधानो बभूव ह ॥ ३७ ॥ अपश्यत् स महास्त्रं तत् परशुं यमसन्निभम्। समीपे दैत्यराजस्तु विस्मितो हृदयेऽभवत् ॥ ३८ ॥ अयं परशुराजः किं तेजःपुंजमयो मया। दृश्यते न च संस्पृष्टो ह्यत आश्चर्यकं त्विदम् ॥ ३९ ॥ ततो हस्तेन दैत्येन गृहीतः परशुर्महान्। तथाऽपि हस्तमध्येऽसौ खवच्छून्यस्तदाऽभवत् ॥ ४० ॥ मदः स हृदि विज्ञाय शस्त्रं ब्रह्ममयं परम्। ज्ञात्वाऽवयवसंहीनं विचारमकरोत्तदा ॥ ४१ ॥ अहो क एकदंतोऽयं ब्रह्माकारो न संशयः। न ब्रह्मांडमयाकारो भवेत्तद्वर्जितो न च ॥ ४२ ॥ अतोऽनेन रणे पूर्णं न भविष्यति किंचन। मारयिष्यति मां नूनं नात्र कार्या विचारणा ॥ ४३ ॥ एवमुक्त्वा हृदि क्षुब्धो दैत्येशश्च मदासुरः। दैवयोगेन सस्मार वेदवाक्यं सुखप्रदम् ॥ ४४ ॥ एकदंतार्थजं ज्ञानं विचार्यैव च विप्रपम्। बुबोध हृदि दैत्येंद्रो ब्रह्मरूपः प्रधारकम् ॥ ४५ ॥ मायात्मकश्चैकशब्दस्तत्र सर्वं समुद्भवत्। भ्रांतिदं मोहदं पूर्णं नानाखेलमयं जगत् ॥ ४६ ॥ दन्त-सत्तात्मकस्तत्र मायाचालकसंज्ञकः। बिंबेन मोहयुक्तः स स्वयं स्वानंदगोऽभवत् ॥ ४७ ॥ माया भ्रांतिमयी प्रोक्ता सत्ता चालक उच्यते। तयोर्योगे गणेशोऽयमेकदंतः प्रकथ्यते ॥ ४८ ॥ महद्भाग्यं मदीयं तद्येनाऽयं दृष्टिगोचरम्। आयासेन

विना प्राप्तस्तं यामि शरणं ततः ॥ ४९ ॥ भक्त्या संयोगिनो नित्यं भजंते शुकमुख्यकाः। ब्रह्मभूता महाभागास्तं यामि शरणं ततः ॥ ५० ॥ एवं भक्त्या मदो दैत्यः परियुक्तो महामते । त्यक्त्वाऽभिमानजं दोषं तमेव शरणं ययौ ॥ ५१ ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते मदासुरपराजयो नाम त्रिपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । मदासुरः प्रणम्याऽऽदौ परशुं यमसन्निभम् । तुष्टाव विविधैर्वाक्यैः शस्त्रं ब्रह्ममयं भयात् ॥१॥ मदासुर उवाच । नमस्ते शस्त्रराजाय नमस्ते परशो महन् । तेजःपुंजमयायैव कालकालाय ते नमः ॥२॥ एकदंतस्य यद्वीर्यं स्वधर्मस्थापनात्मकम् । त्वमेव नात्र संदेहो रक्ष मां शरणागतम् ॥३॥ कालरूपस्त्वमेवेह महाप्रलयसूचकः । कः समर्थश्च ते वेगसहने देहधारकः ॥४॥ अतस्त्वां प्रणमाम्येव ज्योतीरूपं महाद्भुतम् । रक्ष मां भयभीतं वै शरणागत-वत्सल ॥५॥ एवं स्तुवंतमत्यंतं परशुः शांतिमादधे । ययौ त्यक्त्वा पुनर्हस्ते एकदंतस्य दैत्यप ॥६॥ ततो मदासुरः शीघ्रं ययौ तं शरणं भयात् । एकदंतं प्रणम्याऽऽदौ पूजयामास सादरम् ॥७॥ पूजयित्वा यथान्यायं गणेशं धरणीतले । दंडवत्तं प्रणम्यैव भक्त्या तुष्टाव संयुतः ॥८॥ मदासुर उवाच । नमस्त एकदंताय मायामायिकरूपिणे । सदा ब्रह्ममयायैव गणेशाय नमो नमः ॥९॥ मूषकारूढरूपाय मूषकध्वजिने नमः । सर्वत्र संस्थितायैव बंधहीनाय ते नमः ॥१०॥ चतुर्बाहुधरायैव लंबोदर सुरूपिणे । नाभिशेषाय वै तुभ्यं हेरंबाय नमो नमः ॥११॥ चिंतामणिधरायैव चित्तस्थाय गजानन । नानाभूषण-युक्ताय गणाधिपतये नमः ॥१२॥ अनंतविभवायैवानंतमायाप्रचालक । भक्तानंदप्रदात्रे ते विघ्नेशाय नमो नमः ॥१३॥ योगिनां योगदात्रे ते योगानां पतये नमः । योगाकारस्वरूपाय ह्येकदंतप्रधारिणे ॥१४॥ मायाकारं शरीरं त एकशब्दः प्रकथ्यते । दंतः सत्तामयस्तत्र मस्तकस्ते नमो नमः ॥१५॥ मायासत्ताविहीनस्त्वं तयोर्योगधरस्तथा । कस्त्वां स्तोतुं समर्थः स्यादतस्ते वै नमो नमः ॥१६॥ शरणागतपालाय शरणागतवत्सल । पुनः पुनः सिद्धिबुद्धिपते तुभ्यं नमो नमः ॥१७॥ रक्ष मामेकदंतस्त्वं शरणागतमंजसा । भक्तं भावेन संप्राप्तं संसारात्तारयस्व च ॥१८॥ एवमुक्त्वा प्रणम्यापि मदः कृत्वा प्रदक्षिणाम् । कृतांजलिपुटो भूत्वा संस्थितो देवसन्निधौ ॥१९॥ तमुवाच गणाधीशः प्रहृष्टेनांतरात्मना । विकाररहितं दृष्ट्वा

हृदयं भक्तिसंयुतम् ॥२०॥ एकदंत उवाच । त्वां हंतुं क्रोधसंयुक्तो जातोऽहं नात्र संशयः । अधुना शरणं प्रेप्सुं न हन्मि शरणागतम् ॥२१॥ मदाज्ञावशगो भूत्वा तिष्ठ स्थाने स्वके सदा । देवानां वैरमुत्सृज्य मद्भक्तिनिरतो भव ॥२२॥ वरं वरय मत्तस्त्वं त्वया दास्यामि चिंतितम् । विनयेन च संतुष्टः स्तोत्रेणाऽहं विशेषतः ॥२३॥ त्वया कृतमिदं स्तोत्रं यः पठिष्यति दैत्यप । शृणुयाद्वा प्रयत्नेन भवेत्तस्येप्सितप्रदम् ॥२४॥ न तत्र मदसंभूतं भयं भवति कर्हिचित् । अंते स्वानंददं तस्मै स्तोत्रं मद्भक्तिदं भवेत् ॥२५॥ एवं तस्य वचः श्रुत्वैकदंतस्य मदासुरः । आसुरं भावमुत्सृज्य शांतरूपस्तमब्रवीत् ॥२६॥ मदासुर उवाच । यदि प्रसन्नभावेन वरदोऽसि गजानन । एकदंतपदे भक्तिं देहि नाथ दृढां सदा ॥२७॥ अन्यं वरं गणेशान देहि वृत्तिं च शाश्वतीम् । भक्षयित्वा सदा देव भजेयं ते पदांबुजम् ॥२८॥ मदस्य वचनं श्रुत्वा ह्येकदंतस्तमब्रवीत् । मदीया भक्तिरुग्रा ते भविष्यति मदासुर ॥२९॥ यत्र मे स्मरणं चादौ पूजनं वा मदासुर । तत्र कर्म सुशांत्या त्वं युक्तो भव सुरक्षयन् ॥३०॥ विपरीते सदा दैत्य आसुरेण स्वभावतः । प्रवर्तय फलं तेषां कर्मणां भक्षयस्व च ॥३१॥ एवमुक्तो महादैत्यस्तं तथेति प्रणम्य च । नगरं स्वं जगामासावेकदंतपरायणः ॥३२॥ दैत्यास्त्रिपुरकाद्या ये त्यक्त्वा तं ते ययुस्ततः । पातालानि भयोद्विग्ना देवाः स्वस्थानमाश्रिताः ॥३३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते मदासुरशांतिप्राप्तिवर्णनं नाम चतुःपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । मदासुरं सुशांतं वै दृष्ट्वा विष्णुमुखाः सुराः । भृग्वादयश्च योगींद्रा एकदंतं समाययुः ॥१॥ प्रणम्य तं प्रपूज्याऽऽदौ पुनस्ते नेमुरादरात् । तुष्टुवुर्हर्षसंयुक्ता एकदंतं गजाननम् ॥२॥ देवर्षय ऊचुः । सदात्मरूपं सकलादिभूतममायिनं सोऽहमचिंत्यबोधम् । अथादिमध्यांतविहीनमेकं तमेकदंतं शरणं व्रजामः ॥३॥ अनंतचिद्रूपमयं गणेशमभेदभेदादिविहीनमाद्यम् । हृदि प्रकाशस्य धरं स्वधीस्थं तमेकदंतं शरणं व्रजामः ॥४॥ समाधिसंस्थं हृदि योगिनां तु प्रकाशरूपेण विभांतमेवम् । सदा निरालंबसमाधिगम्यं तमेकदंतं शरणं व्रजामः ॥५॥ स्वबिंबभावेन विलासयुक्तां प्रकृत्य मायां विविधस्वरूपाम् । सुवीर्यकं तत्र ददाति यो वै तमेकदंतं शरणं व्रजामः ॥६॥ यदीय वीर्येण समर्थभूतं

स्वमायया संरचितं च विश्वम्। तुरीयकं ह्यात्मकवित्तिसंज्ञं तमेकदंतं शरणं व्रजामः ॥७॥ त्वदीयसत्ताधरमेकदंतं गुणेश्वरं यं गुणबोधितारम्। भजंत आद्यं तमजं त्रिसंस्थास्तमेकदंतं शरणं व्रजामः ॥८॥ ततस्त्वया प्रेरितनादकेन सुषुप्तिसंज्ञं रचितं जगद्वै। समानरूपं च तथैकभूतं तमेकदंतं शरणं व्रजामः ॥९॥ तदेव विश्वं कृपया प्रभूतं द्विभावमादौ तमसा विभातम्। अनेकरूपं च तथैकभूतं तमेकदंतं शरणं व्रजामः ॥१०॥ ततस्त्वया प्रेरितकेन सृष्टं सुसूक्ष्मभावं जगदेकसंस्थम्। सुसात्त्विकं स्वप्नमनंतमाद्यं तमेकदंतं शरणं व्रजामः ॥११॥ तत् स्वप्नमेवं तपसा गणेश सुसिद्धिरूपं द्विविधं बभूव। सदैकरूपं कृपया च ते यत्तमेकदंतं शरणं व्रजामः ॥१२॥ त्वदाज्ञया तेन सदा हृदिस्थ तथा सुसृष्टं जगदंशरूपम्। विभिन्नजाग्रन्मयमप्रमेयं तमेकदंतं शरणं व्रजामः ॥१३॥ तदेव जाग्रद्रजसा विभातं विलोकितं त्वत्कृपया स्मृतेश्च। बभूव भिन्नं च सदैकरूपं तमेकदंतं शरणं व्रजामः ॥१४॥ तदैव सृष्ट्वा प्रकृतिस्वभावात्तदंतरे त्वं च विभासि नित्यम्। धियः प्रदाता गणनाथ एकस्तमेकदंतं शरणं व्रजामः ॥१५॥ सर्वे ग्रहा भानि यदाज्ञया च प्रकाशरूपाणि विभांति खे वै। भ्रमंति नित्यं स्वविहारकार्यात्तमेकदंतं शरणं व्रजामः ॥१६॥ त्वदाज्ञया सृष्टिकरो विधाता त्वदाज्ञया पालक एव विष्णुः। त्वदाज्ञया संहारको हरो वै तमेकदंतं शरणं व्रजामः ॥१७॥ यदाज्ञया भूस्तु जले प्रसंस्था यदाज्ञयाऽऽपः प्रवहंति नद्यः। स्वतीरसंस्थश्च कृतः समुद्रस्तमेकदंतं शरणं व्रजामः ॥१८॥ यदाज्ञया देवगणा दिविस्था यच्छंति वै कर्मफलानि नित्यम्। यदाज्ञया शैलगणाः स्थिरा वै तमेकदंतं शरणं व्रजामः ॥१९॥ यदाज्ञया शेष इलाधरो वै यदाज्ञया मोहद एव कामः। यदाज्ञया कालधरोऽर्यमा च तमेकदंतं शरणं व्रजामः ॥२०॥ यदाज्ञया वाति विभाति वायुर्यदाज्ञयाऽग्निर्जठरादिसंस्थः। यदाज्ञयेदं सचराचरं च तमेकदंतं शरणं व्रजामः ॥२१॥ तदंतरिक्षं स्थितमेकदंतं त्वदाज्ञया सर्वमिदं विभाति। अनंतरूपं हृदि बोधकं त्वां तमेकदंतं शरणं व्रजामः ॥२२॥ सुयोगिनो योगबलेन साध्यं प्रकुर्वते कः स्तवने समर्थः। अतः प्रणामेन सुसिद्धिदोऽस्तु तमेकदंतं शरणं व्रजामः ॥२३॥ गृत्समद उवाच। एवं स्तुत्वा गणेशानं देवाः समुनयः प्रभुम्। तूष्णींभावं प्रपद्यैव ननृतुर्हर्षसंयुताः ॥२४॥ स तानुवाच प्रीतात्मा देवर्षीणां स्तवेन वै। एकदंतो महाभागान् देवर्षीन् भक्तवत्सलः ॥२५॥ एकदंत उवाच। स्तोत्रेणाऽहं प्रसन्नोऽस्मि सुराः सर्षिगणाः खलु। वृणुध्वं वरदोऽहं वो दास्यामि मनसीप्सितम् ॥२६॥ भवत्कृतं मदीयं यत् स्तोत्रं प्रीतिप्रदं च तत्। भविष्यति न संदेहः सर्वसिद्धिप्रदायकम् ॥२७॥ यद्यदिच्छति तत्तद्वै प्राप्नोति

स्तोत्रपाठकः। पुत्रपौत्रादिकं सर्वं कलत्रं धनधान्यकम् ॥२८॥ गजाश्वादिकमत्यंतं राज्यभोगादिकं ध्रुवम्। भुक्तिं मुक्तिं च योगं वै लभते शांतिदायकम् ॥२९॥ मारणोच्चाटनादीनि राज्यबंधादिकं च यत्। पठतां शृण्वतां नृणां भवेत्तद्बंधहीनता ॥३०॥ एकविंशतिवारं यः श्लोकानेवैकविंशतिम्। पठेद्वै हृदि मां स्मृत्वा दिनानि त्वेकविंशतिम् ॥३१॥ न तस्य दुर्लभं किंचित् त्रिषु लोकेषु वै भवेत्। असाध्यं साधयेन् मर्त्यः सर्वत्र विजयी भवेत् ॥३२॥ नित्यं यः पठति स्तोत्रं ब्रह्मीभूतः स वै नरः। तस्य दर्शनतः सर्वे देवाः पूता भवंति च ॥३३॥ एवं तस्य वचः श्रुत्वा प्रहृष्टा अमरर्षयः। ऊचुः सर्वे करपुटैर्भक्त्या युक्ता गजाननम् ॥३४॥ देवर्षय ऊचुः। धन्या वयं गणेशान एकदंतधर प्रभो। त्वदीयदर्शनादेव भाषणान्नात्र संशयः ॥३५॥ वरं देहि त्वदीया नो भक्तिश्च सुदृढा भवेत्। मायाहीनास्तथा देव कृतकृत्या भवामहे ॥३६॥ यदा संकटयुक्ता वै वयं स्याम गजानन। तदा नो रक्ष देवेश वरमेवं वृणीमहे ॥३७॥ तेषां वचनमाकर्ण्य तानुवाच तथास्त्विति। एकदंतोऽन्तर्दधेऽसौ स्वस्वानंदगतोऽभवत् ॥३८॥ देवा मुनिगणाः सर्वे ययुः स्वस्वपदेषु च। स्वस्वधर्मयुता नित्यमभजन्नेकदंतकम् ॥३९॥ एवं मदासुरस्तेन शांतिरूपधरः कृतः। प्रह्लाद चैकदंतेन कथितं ते चरित्रकम् ॥४०॥ दुष्टसंगतियोगेन त्वं मदोत्सिक्तभावतः। अनादृत्य विधातारं भ्रष्टो ज्ञानान्न संशयः ॥४१॥ एकदंतं गणेशं त्वं भजाऽतो दैत्यनायक। तेन शांतो महाभाग भविष्यसि न संशयः ॥४२॥ स एव एकदंतस्तु भक्तानां कार्यसिद्धये। करोति स्वावतारांश्च नानारूपांस्तु दैत्यप ॥४३॥ परमौ दारुणौ दैत्यौ देवांतकनरांतकौ। संभूतौ तौ हतौ तेन भूत्वा कश्यपवेश्मनि ॥४४॥ तथैव दुर्मतिर्नाम दैत्योऽभूद्धर्मलोपकः। शांतये तस्य विघ्नेशः शिवपुत्रो बभूव ह ॥४५॥ गणासुरेण दुष्टेन धर्मलोपः कृतो यदा। तदा कपिलपुत्रोऽभूत् स एव त्वेकदंतकः ॥४६॥ एवं नानावतारैः पालयते सकलं जगत्। एकदंतः कलांशेन धर्मरक्षणतत्परः ॥४७॥ तेषां कथा न शक्या वै गदितुं केनचित् परा। गुणांतं न ययुर्यस्य ब्रह्माद्या मुनयः सुराः ॥४८॥ अतस्त्वमेकदंतं तं भज भावेन दैत्यप। तेन सर्वं च ते ज्ञानं भविष्यति सुशांतिदम् ॥४९॥ एवं मदासुरस्याऽपि कृतं खंडनमंजसा। एकदंतेन संक्षेपाच्चरितं कथितं मया ॥५०॥ पठेद्यः शृणुयात्तस्मै भक्तिं मुक्तिं ददाति सः। एकदंतः प्रसन्नात्मा सदा भवति सौख्यदः ॥५१॥ नासुरेण स्वभावेन मदस्तं पीडयिष्यति। शांतिरूपेण नित्यं स संरक्षेद्दैत्यनायकः ॥५२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते मदासुरचरितसमाप्तिर्नाम पंचपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । प्रह्लादेन श्रुतं पूर्णं मदासुरचरित्रकम् । पुनः किं च कृतं योगिंस्तद्वद त्वं महामते ॥१॥ श्रुत्वा कथामृतं पूर्णं हर्षश्चेतसि मुद्गल । जायते नाऽत्र संदेहो न तृप्तोऽहं भवाम्यतः ॥२॥ सूत उवाच। दक्षस्य वचनं श्रुत्वा मुद्गलो हर्षितोऽभवत् । उवाच तं महाभागं तत्त्वं शृणु च शौनक ॥३॥ मुद्गल उवाच। धन्योऽसि दक्ष सारज्ञ गणेशस्य कथामृतम् । श्रुत्वा हृष्यसि ते पुण्यं कथयामि कथानकम् ॥४॥ मदासुरस्य संशांतिं श्रुत्वा पप्रच्छ दैत्यपः । प्रह्लादस्तं गृत्समदं विनयावनतः कथाम् ॥५॥ प्रल्हाद उवाच। महद्भाग्यं मुने मे यद्येन संश्रावितं त्वया । एकदंतस्य माहात्म्यं परमानंददायकम् ॥६॥ तथापि न सुतृप्तोऽहं श्रुत्वा ज्ञानप्रदायकम् । चरितं च पुनस्त्वं मे गणेशस्य कथां वद ॥७॥ कश्यपस्य गृहे देवः कथं पुत्रत्वमागतः । कथं दैत्यौ हतौ योगिन् विस्तरेण वदस्व माम् ॥८॥ कथं स शिवपुत्रोऽभूत् कथं दुर्मतिकं प्रभुः । अहनत्तं वदस्व त्वं सर्वज्ञोऽसि कृपानिधे ॥९॥ कथं गणासुरं दैत्यं कापिलो हतवान् पुरा । एतत् सर्वं वद स्वामिन्नेकदंतचरित्रकम् ॥१०॥ भवादृशा महाभागा नौकारूपेण संस्थिताः । संसाराब्धौ नराणां वै मज्जतां तरणाय तु ॥११॥ मुद्गल उवाच। एवं पृष्टो महायोगी तमुवाच सुहर्षितः । गुणैर्युक्तं गृत्समदः प्रह्लादं भावधारकम् ॥१२॥ गृत्समद उवाच । शृणु प्रह्लाद यत् पृष्टं तत्सर्वं कथयामि ते। सुखदं च समासेन एकदंतचरित्रकम् ॥१३॥ पुरा कृतयुगे दैत्य गौडदेशे बभूव ह । नगरे गौडसंज्ञे च रौद्रकेतुस्तपोधनः ॥१४॥ तस्य पत्नी महाभागा शारदा रूपशालिनी । गर्भयुक्ता कदाचित् सा बभूवे हर्षिताऽभवत् ॥१५॥ समये सुषुवे पुत्रौ यमलौ लोकभीतिदौ। नाम्ना चक्रे द्विजातिः स देवांतकनरांतकौ ॥१६॥ कदाचिन्नारदेनाऽपि गत्वा तत्र शिवस्य च। पंचाक्षरेणोपदिष्टौ चेरतुः परमं तपः ॥१७॥ दिव्यवर्षसहस्रैस्तु संतुष्टः स सदाशिवः । अभयं गुणरूपेभ्यो प्रददौ दैत्ययोः परम् ॥१८॥ वरगर्वेण दैत्येंद्रौ जित्वा सर्वं चराचरम् । ततस्तु कर्मनाशं तौ चक्रतुः पृथिवीतले ॥१९॥ न स्वाहा न स्वधा कुत्र न वषट्कार एव च । अभवन्नमराः सर्वे क्षुधितास्तृषितास्ततः ॥२०॥ तैः सर्वैः प्रार्थितो देव एकदंतः प्रतापवान् । तपसोग्रेण संतुष्टो बभूव प्रददौ वरम् ॥२१॥ कश्यपस्य च पुत्रोऽहं भविष्यामि प्रसिद्धये । दैत्येंद्रयोर्वधस्यैवमुक्त्वा गणपतिर्ययौ ॥२२॥ अथ देवजनित्री सा कदाचित् कश्यपं मुनिम् । जगाद हास्यसंयुक्ता ह्यदितिः कृतसंपुटा ॥२३॥ इंद्रो विष्णुश्च सूर्यश्च देवाः पुत्राश्च मेऽभवन् । स्वामिन् ब्रह्म कथं पुत्रः संभविष्यति मे परम् ॥२४॥ तदा मे निश्चलं चेतो भवेच्चैव न संशयः । तस्य सेवां कर्तुमीहे तत्रोपायं वद प्रभो ॥२५॥

तस्यास्तद्वचनं श्रुत्वा गणेशस्य मनुं ददौ । अष्टाक्षरं तया तेनाराधितो ह्येकदंतकः ॥२६॥ सहस्रवर्षपूर्तौ तां वरदः स समाययौ । तया पुत्रो भव स्वामिन् याचितः स तथाऽकरोत् ॥२७॥ अदित्यां कश्यपाच्चैव संभूतः पुत्रतां गतः । मायामास्थाय विघ्नेशश्चिक्रीड प्राकृतो यथा ॥२८॥ एकदा राक्षसी घोरा विरजास्तं जगाल ह । विदार्य जठरं तस्या बहिर्यातो ममार सा ॥२९॥ उद्धतौ धुंधुरत्युग्रौ शुकरूपौ समागतौ । धृत्वा तौ स्फालितौ शैले मृतौ दैत्यौ तथाऽकरोत् ॥३०॥ कदाचित् सहिता तेन स्नानार्थमदितिर्ययौ । तत्र तं मकराकारो गंधर्वश्च पदेऽग्रहीत् ॥३१॥ तेनोड्डीनं कृतं पश्चाद्बहिः स च ममार ह । शापमुक्तोऽभवच्चित्रं तं प्रणम्य ययौ दिवम् ॥३२॥ उपवीतप्रदाने वै राक्षसा विप्रलिंगिनः । पंच तं हंतुमायाता हतास्तेन क्षणेन ते ॥३३॥ कर्मणि प्रसमाप्ते तं ब्रह्मविष्णवादयः सुराः । मुनयश्च वसिष्ठाद्या नेमुर्भक्तिसमन्विताः ॥३४॥ इंद्रस्तत्र मदेनैव संसिक्तो न ननाम तम् । कश्यपेन समाज्ञप्तस्तथाऽपि ज्येष्ठभावतः ॥३५॥ परीक्षार्थं महेंद्रेण बालं हंतुं प्रभंजनः । प्रेरितः सोऽपि भग्नोऽभूत्ततोऽग्निं स समादिशत् ॥३६॥ इंद्रेणाऽऽज्ञापितो वह्निस्तं दग्धुं सहसाऽऽगतः । गिलितस्तेन बालेन महेंद्रो विस्मितोऽभवत् ॥३७॥ विनायकेन देवेंद्रः श्वासेन जठरे स्वके । नीतस्तत्र सविस्तारं ददर्श सकलं जगत् ॥३८॥ एवं नानांडकं दृष्ट्वा हतगर्वोऽभवत् स्वयम् । न ददर्श बहिर्यातुं मार्गं वर्षशतेन वै ॥३९॥ ततस्तं प्रार्थयामास विनायकमनामयम् । तेनाऽपि श्वासमार्गेण बहिर्निष्कासितो हरिः ॥४०॥ ततस्तेन महेंद्रेण दृष्टं कौतुकमुत्तमम् । कालोद्भवं महच्चित्रं तच्छृणुष्व महासुर ॥४१॥ विनायकस्य वर्षाणि जठरे स शतं स्वयम् । संस्थितश्च बहिस्तत्र क्षण एकस्तथाऽभवत् ॥४२॥ ततस्तं प्रणनामाऽऽदौ स्तुत्वा च विविधैः स्तवैः । चकार साधुभावेन स भक्तिं नित्यमादरात् ॥४३॥ ततः कदाचित् काशीपो मुनिगेहं समाययौ । पुत्रस्योद्वाहसिद्ध्यर्थं कश्यपं तममंत्रयत् ॥४४॥ मुनिर्यज्ञेन रुद्धो वै पुत्रं तस्मै ददौ लघुम् । उपाध्यायत्वसिद्ध्यर्थं विधानज्ञो विनायकम् ॥४५॥ काशिराजो गणेशं संगृह्य मार्गे जगाम ह । तत्र धूम्राक्षदैत्येशं सूर्यास्त्रेण जघान सः ॥४६॥ तस्य पुत्रौ महावीर्यौ जघनश्च मनुः स्मृतौ । भक्षणार्थं समायातौ विनायकमनामयम् ॥४७॥ विनायकेन निःश्वासेन नीतौ गगने गतौ । भ्रमंतौ पतितौ तत्र नरांतकसुमंदिरे ॥४८॥ नरांतकस्ततस्ताभ्यां ज्ञात्वा वृत्तांतमुल्बणम् । शतानि पंच रक्षांसि प्रेषयामास दैत्यपः ॥४९॥ तेन दृष्टा महावीरा राक्षसा गणपेन च । हुंकारेण महोग्रेण मम्रुः सर्वे भयातुराः ॥५०॥ ततः स काशिराजेन सहितश्च विनायकः । काशीं प्राप्तस्तदा लोकैरविशत्

पूजितः परम् ॥५१॥ आदौ मुद्गलविप्रेणोपदिष्टः स महामनाः । काशिराजश्च गणपमभजन्नित्यमादरात् ॥५२॥ काशीस्थाश्च जनाः सर्वे गणेशध्यानतत्पराः । मुद्गलान् महिमानं चाऽभवन् ज्ञात्वा विचक्षणाः ॥५३॥ कश्यपस्य स्वयं पुत्रो भविष्यति वधाय च । दैत्यानां सोऽपि काश्यां वै विवाहायाऽऽगमिष्यति ॥५४॥ तस्य दर्शनमात्रेण भविष्यंति सुयोगिनः । सर्वे काशीस्थभूतानि नरा नार्यो न संशयः ॥५५॥ एवं मुद्गलविप्रेण बोधिताः सकला जनाः । ते सर्वेऽपूजयंस्तं च ज्ञात्वा देवं विनायकम् ॥५६॥ स्त्रियः सर्वाः समायाता दर्शनार्थं महापथे । अनादृत्य पितॄन् भ्रातॄन् भर्तॄन् भक्तिपरायणाः ॥५७॥ महोत्सवोऽभवत्तत्र प्रवेशाख्यो महासुर । तत्रैका रोधिता नारी देहं तत्याज सोत्तमम् ॥५८॥ तालुस्फोटेन सा याता सर्वादौ तं विनायकम् । पश्यंत्यस्याऽभवद्देहे लीना भक्तिसमन्विता ॥५९॥ यत्र तत्र जनैर्देवः पूजितश्च महापथे । चचार तत्र दैत्यौ द्वौ बालरूपौ प्रचेरतुः ॥६०॥ विनायकेन हस्ताभ्यां चूर्णितौ दशयोजने । पतितौ विस्मिता लोका मेनिरे गणपं च तम् ॥६१॥ ततो द्वौ चक्रवातस्य रूपेणैव समागतौ । शिखां धृत्वा तयोस्तेन मम्रतुः स्फालितौ दृढौ ॥६२॥ ततः पाषाणरूपेण दैत्यो मार्गे व्यवस्थितः । मुष्टिना बालकेनैव हतो मृत्युमवाप सः ॥६३॥ काशिराजस्ततस्तं स नीत्वा च स्वगृहे स्वयम् । पूजयामास विधिवत् स्थापयामास भावतः ॥६४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते विनायककाशीप्रवेशो नाम षट्पंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । द्वितीये दिवसे तत्र धर्मदत्तो महामुनिः । स्वगृहे तं मुनेः पुत्रमानयामास यत्नतः ॥१॥ मार्गे दैत्यौ हतौ तेन खरवेषधरावुभौ । कामक्रोधासुरौ पश्चाद्गजवेषधरौ हतौ ॥२॥ ततो मुनिः सुभावेनापूजयत्तं विनायकम् । कन्ये स्वे प्रददौ तस्मै सिद्धिबुद्धी सुलक्षणे ॥३॥ ततस्तत्राऽऽययौ जृंभा राक्षसी घोररूपिणी । रूपं धृत्वा मनुष्यस्य सुप्रसन्नाननांबुजा ॥४॥ विषयुक्तेन तैलेन सा ममर्द विनायकम् । विज्ञाता देवदेवेन हता मृत्युमवाप च ॥५॥ चतुर्थे दिवसे तत्र संप्राप्ता दैत्यपुंगवाः । ज्वालामुखोऽथ व्याघ्रास्यो दारुणश्च महाबलः ॥६॥ तान् हत्वा योगभावेन काश्यपो लीलयाऽरमत् । बालमध्ये यथाऽन्यो वै प्राकृतो माययाऽसुर ॥७॥ ब्रह्मविष्णुमुखास्तत्र द्रष्टुमाश्चर्यमुत्कटम् । बालक्रीडन-

संभूतं संस्थिताश्च व्यलोकयत् ॥८॥ तत्र तं पंचमे देवं दिवसे मुनिनंदनम् । प्रणम्य काशिराजः स भोजनार्थममंत्रयत् ॥९॥ चतुर्थ्यां शुक्लपक्षस्य प्रातःकाले महामुनिः । भ्रुशुंडी चापूजयत्तं मानस्या पूजया प्रभुम् ॥१०॥ पूजां दृष्ट्वा स्वयं राजा प्रातस्तत्र सुविस्मितः । उवाच तं कृता केन पूजेयं वद मे प्रभो ॥११॥ ततस्तं कथयामास भ्रुशुंडी मेऽतिवल्लभः । महाभक्तः करोतीमां पूजां पश्य नराधिप ॥१२॥ एकनिष्ठतया विप्रो भजते मां विशेषतः । मद्भिनान्यन्न जानाति देवतीर्थादिकं कदा ॥१३॥ श्रुत्वा तस्य वचो रम्यं जगाद नृपसत्तमः । विनायकं प्रणम्यैव तं प्रदर्शय योगिनम् ॥१४॥ काशिराजवचः श्रुत्वा प्रेषयामास तं ततः । जवनाश्वसमारूढो राजा तस्याश्रमं ययौ ॥१५॥ दृष्ट्वा तं शुंडया युक्तं स नत्वा विस्मितो नृपः । प्रार्थयामास योगीशं काश्यां नेतुं सुभक्तितः ॥१६॥ काशिराज उवाच । विनायकाज्ञया स्वामिन्नागतस्तेऽहमाश्रमे । त्वामाह्वयति देवोऽसौ मद्गृहे संस्थितः स्वयम् ॥१७॥ चतुर्थ्यामद्य योगींद्र मानस्या पूजया त्वया । पूजितस्तां महापूजां दर्शयामास मां विभुः ॥१८॥ कश्यपस्य गृहे सोऽपि विनायक इति स्मृतः । तपसाऽऽराधितस्तेन पुत्रोऽभूद्गणनायकः ॥१९॥ अहं तस्य तथा दासो यजमानो महामते । विवाहार्थं तु पुत्रस्याऽऽनीतोऽसौ मद्गृहे मया ॥२०॥ विनायकेन कथितमानयस्व महामुनिम् । याचे ह्यतोऽहं योगींद्राऽऽगच्छ काशीं महापुरीम् ॥२१॥ तस्य तद्वचनं श्रुत्वा विस्मितो मुनिसत्तमः । उवाच तं स गाणेशः काशिराजं महामतिम् ॥२२॥ भ्रुशुण्ड्युवाच । शृणु राजन् महाभाग वेदांतागोचरो विभुः । यदि भक्त्या समायातस्त्वद्गृहे कश्यपात्मजः ॥२३॥ तथापि शुंडया हीनं नमामि न कदाचन । कलांशादिसमायुक्तं जानीहि नृपसत्तम ॥२४॥ कलात्मकास्तस्य सर्वे देवा विष्णुशिवादयः । ते सर्वे मां नमंत्येव शुंडाभक्तियुतं परम् ॥२५॥ गजाननं परित्यज्याऽहं नमामि न कंचन । अतस्त्वं गच्छ काश्यां वै तं नयामि विनायकम् ॥२६॥ तस्य तद्वचनं श्रुत्वा ह्येकभक्तिसमन्वितम् । उवाच तं प्रणम्यैव काशिराजः प्रतापवान् ॥२७॥ काशिराज उवाच । मुने शृणु वचो मेऽद्य नाऽहं शक्तो भवामि च । काश्यां गंतुं महाभागाऽपराह्णे श्रांतवाहनः ॥२८॥ ततो मुनिर्नृपं प्राह लोचनामीलनं कुरु । तथाभूतं नृपश्रेष्ठं प्रेषयामास तां पुरीम् ॥२९॥ पुनरुन्मील्य नेत्रे स्वेऽपश्यद्गेहं महानृपः । स्वां पुरीं विस्मितो भूत्वा प्रणनाम विनायकम् ॥३०॥ वृत्तं संश्रुत्य भूपेशात् पुनस्तं गणनायकः । मायया स मुनेस्तस्याश्रमस्थमकरोत्ततः ॥३१॥ पुनः समागतं वीक्ष्य नृपं प्राह महामुनिः । किमर्थमागतो राजन्नद्यैव वद मे गृहे ॥३२॥ ततस्तं राजशार्दूलो जगाद कथितं च यत् । विनायकेन भोः स्वामिंस्त्वामाह्वयति

विघ्नपः ॥३३॥ तेनाऽहं प्रेषितो नूनं शुंडादंडधरेण च। चल शीघ्रं मया सार्धं द्रष्टुं पूर्णं गजाननम् ॥३४॥ श्रुत्वा तस्य वचो रम्यं भक्त्याऽत्यंतं लुलोठ च। रोमांचितशरीरोऽसौ साश्रुनेत्रो महामुनिः ॥३५॥ तं दृष्ट्वा विस्मितोऽत्यंतं काशिराजो महामनाः। अहो भक्तिरियं साक्षाद् दृश्यते देहधारिणी ॥३६॥ देहभावं समासाद्य यात्रार्थं तेन भूभुजा। भ्रुशुंडी चलितश्चैव स्वाश्रमात् प्रजगाम सः ॥३७॥ देहश्रमेण यात्रा वै कर्तव्या गणपस्य च। विचार्यैवं ययौ पद्भ्यामविमुक्तं महामुनिः ॥३८॥ ज्ञात्वा तस्य हृदिस्थं सा निश्चयं धरणी मुनिम्। प्रापयामास काश्यां तं क्षणेन नृपसंयुतम् ॥३९॥ नृपेण नगरी दृष्टा तमुवाच ततः परम्। स्वामिन् समागता काशी प्रभावात्तपसश्च ते ॥४०॥ ततस्तं स्वगृहे नीत्वाऽपूजयन् नृपसत्तमः। विनायकः समायातं भक्तं पश्यति साश्रुकः ॥४१॥ तस्य भावं विदित्वाऽसौ शुंडां धृत्वा विनायकः। मूषकोपरि संस्थाय प्रजगाम महामुनिम् ॥४२॥ चतुर्भुजधरं विप्रो महोदरविराजितम्। शेषनाभिं त्वेकदंतं दृष्ट्वा तं प्रणनाम च ॥४३॥ अपूजयत् भ्रुशुंडी तं भक्तिभावसमन्वितः। पुनः प्रणम्य तुष्टाव नानास्तोत्रैः प्रसन्नधीः ॥४४॥ उवाच विस्खलद्वाक्यो भक्ते रसपरिप्लुतः। गजाननं निजं नाथं कृतकृत्यो महासुर ॥४५॥ भ्रुशुंड्युवाच। तव दर्शनमात्रेण कृतकृत्यो गजानन। महता भाग्ययोगेन दृष्टं ते चरणं विभो ॥४६॥ अधुना मे वरं देहि तेन तुष्टो भवाम्यहम्। तव विस्मरणं नाथ न भवेन् मे तथा कुरु ॥४७॥ अनेनैव स्वरूपेण मत्स्थाने संस्थितो भव। आशापूरकनाम्ना त्वं ख्यातो भव गजानन ॥४८॥ तत्रैवानन्यभक्त्या त्वां भजामि रसयुक्तया। मुद्गलेन समं मां त्वं पूर्णं भक्तं कुरु प्रभो ॥४९॥ अथवा मुद्गलाच्चैवाधिकं मां कुरु विघ्नप। गुरोरतिक्रमाच्छिष्यः पुत्रो वा तस्य नाल्पकः ॥५०॥ एवं प्रार्थयमानं तं तथेति गणनायकः। जगाद स पुनर्बालो भूत्वाऽखेलत्तु सादरम् ॥५१॥ तं प्रणम्य ययौ स्थानं स्वकीयं मुनिसत्तमः। भ्रुशुंडी च ततः काशिराजः संविस्मितोऽभवत् ॥५२॥ हृदि राजा विचार्यासावेकनिष्ठो बभूव ह। गणेशभजने दृष्ट्वा भ्रुशुंडीचरितं महत् ॥५३॥ अहो मुनिवरो धन्यो नानारूपात्मिकां पराम्। मायां त्यक्त्वा स योगेन भजते गणनायकम् ॥५४॥ सर्वेषां ब्रह्मणां योगो गणेशो भवति प्रभो। अतस्तमेकभावेन भजतेऽसौ महामुनिः ॥५५॥ एकनिष्ठा समा भक्तिर्न भूता न भविष्यति। कोट्यंशेन समा नान्या तत् भजेत् योगिसत्तमः ॥५६॥ सर्वत्र गणराजोऽयं वसत्यत्र न संशयः। कलांशेन ततोऽन्येषां भजने च फलं लभेत् ॥५७॥ गणेशभजनं ह्येकं चेत् पूर्णं भजनं भवेत्। सर्वेषां च गणेशस्य भ्रुशुंडी तत् समाश्रितः ॥५८॥ अहो भ्रुशुंडिना तुल्यो दृश्यते

न कदाचन । प्रत्यक्षो गणराजोऽयं शुंडावान्नात्र संशयः ॥५९॥ काश्यां मुक्तिस्वरूपायामागतोऽसौ महामुनिः । मणिकर्णीं च विश्वेशं सस्मार मनसाऽपि न ॥६०॥ गणेशार्थं समायातस्तं प्रणम्य महामुनिः । स्वाश्रमं पुनरेवासौ जगाम सुखदायकम् ॥६१॥ एवं विस्मयभावेन काशिराजस्तथाऽभजत् । गणेशं साधुभावज्ञः सोऽपि तत्समतां ययौ ॥६२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते भ्रुशुंडीभक्तिवर्णनं नाम सप्तपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ प्रल्हाद उवाच । शृणु गृत्समद त्वं मे वचनं दीनपालक । कोऽसौ भ्रुशुंडिनामा वै मुनिर्मे ब्रूहि सांप्रतम् ॥१॥ तपसा केन तस्याऽपि भ्रूशुंडा निःसृता प्रभो । कीदृशी मानसी पूजा कृता मां वद विस्तरात् ॥२॥ आश्चर्यं परमं प्राप्तः श्रुत्वा मुनिवरस्य च । महिमानं महाभाग धन्यो भूमंडलेऽभवत् ॥३॥ गणेशभजने सक्ता नरास्ते ब्रह्मरूपिणः । तेषां कथा प्रवक्तारं श्रोतारं प्रपुनाति च ॥४॥ मुद्गल उवाच । एवं पृष्टो गृत्समदो महायोगी तमब्रवीत् । प्रह्लादं भक्तिपात्रं वै दृष्ट्वा हर्षसमन्वितः ॥५॥ गृत्समद उवाच । शृणु प्रह्लाद भावेन कथां लोकैकपावनीम् । भ्रुशुंडिसंश्रितां पुण्यां ब्रह्मभूतपदप्रदाम् ॥६॥ नंदुरे त्ववसद् ग्रामे नाम्ना कैवर्तकः पुरा । नाम्ना पापी सुविख्यातो महापापपरायणः ॥७॥ धृत्वा ग्रामेषु शस्त्रादीन् वनेषु विचचार ह । जीवहिंसां सदा तत्र चकार कामवर्जितः ॥८॥ मार्गस्थांश्च जनान् वीक्ष्याऽमारयद्धनलिप्सया । संगृह्य मिलितं ग्रामे जगाम प्रत्यहं खलः ॥९॥ द्रव्यवस्त्रादिहीनांस्तान् दृष्ट्वा मारयताप्यहो । जीवं दृष्ट्वा क्रूरकर्मा न मुमोच वधप्रियः ॥१०॥ धनं तेषां गृहीत्वाऽसौ धनवान् प्रबभूव ह । द्रव्यसंचयभावेन न तुतोष कदाचन ॥११॥ न संख्यां कर्तुमत्यंतं तस्य पापस्य वै भवेत् । ब्रह्मा समर्थः शेषश्च पापानां भागिनौ भयात् ॥१२॥ स्त्रीगोबालद्विजादीनां हत्याऽपारा कृता पुरा । तेन तस्य च भारेण पीडिता भूरभूत्ततः ॥१३॥ एकदा वनमध्येऽसौ कंचित्पुरुषमुत्तमम् । दृष्ट्वा वधार्थमानंदादधावच्छस्त्रसंयुतः ॥१४॥ तमागतं समालोक्य दुष्टं दूरे पलाय्य सः । गव्यूतिमात्रमासाद्य ग्रामं तत्र जगाम ह ॥१५॥ नाम्ना प्रह्लाद मार्गे स पतितोऽधावनाऽऽकुलः । जातश्च दुःखितोऽत्यंतं विरराम वधात्तदा ॥१६॥ मंदगत्या चचालाऽसौ मार्गे कुंडं ददर्श ह । तत्र श्रमापनोदार्थं स्नानं चक्रे महाखलः ॥१७॥ तदेव गणराजस्य तीर्थं पुण्यप्रदं

महत्। तस्य प्रभावयोगेन पापं संशिथिलं त्वभूत् ॥१८॥ स पापशिथिलो नामा विचारमकरोद् हृदि। अहो मया च पापानि कृतानि कति नाऽविदम् ॥१९॥ मृतोऽहं नरके घोरे पतिष्यामि न संशयः। कल्पान् दुःखमनेकांश्च सहिष्यामि कथं परम् ॥२०॥ मुद्गल उवाच। एवं ब्रुवंतमानंददायकं मुनिसत्तमम्। प्रह्लादो वै गृत्समदं पप्रच्छ विनयान्वितः ॥२१॥ प्रल्हाद उवाच। कीदृशं कुंडरूपं च केन वा चरितं तपः। तत्र येन गणेशस्य स्थानं कुंडात्मकं ह्यभूत् ॥२२॥ ततो गृत्समदः प्राह प्रह्लादं सर्वमंजसा। आह्लादेन समायुक्तो गाणपत्यो महायशाः ॥२३॥ गृत्समद उवाच। अत्र ते कथयिष्यामि चेतिहासं पुरातनम्। सूर्यस्य यमराजस्य संवादं पापनाशनम् ॥२४॥ सूर्याय प्रददौ कन्यां विश्वकर्मा महाद्भुताम्। संज्ञां कर्ममयीं देवीं मायारूपां महाद्युतिः ॥२५॥ तपसा शतवर्षैस्तां प्रसन्नां स चकार ह। ययाचे विश्वकर्मा तां पुत्री मे भव मानदे ॥२६॥ साऽऽदिमाया वरात्तस्य पुत्री जाता सुरेश्वर। तां गृहीत्वा गृहं देव सविता प्रजगाम ह ॥२७॥ तया रेमे महातेजाश्चिरकालं विभावसुः। तस्यां पुत्रौ च पुत्रीं वै जनयामास वीर्यतः ॥२८॥ वैवस्वतो मनुर्ज्येष्ठो यमश्च यमुना नदी। सर्वे स्वधर्मशीलास्ते महाभागा बभूविरे ॥२९॥ तीक्ष्णेन तेजसा तप्ता संज्ञा सूर्यस्य नित्यदा। निर्ममे मायया छायां स्वस्याकृतिधरां ततः ॥३०॥ तस्यै सर्वं निवेद्यैव पुत्रीं पुत्रौ गृहादिकम्। उवाच रविणा पृष्टा मा वद त्वं स्वचेष्टितम् ॥३१॥ तां छाया प्रत्युवाचेदं यदि मां धर्षयिष्यति। सविता चेन् महाभागे वदिष्यामि न संशयः ॥३२॥ गच्छ देवि यथा चित्ते निश्चयस्तादृशं कुरु। अहं सर्वं त्वदीयं यत् कार्यं संसाधयामि तत् ॥३३॥ ततः संज्ञा ययौ गेहं पितुस्तेन तिरस्कृता। भर्तारं त्यज मैवं त्वं स्वगृहं गच्छ मा कुरु ॥३४॥ ततः सा वनवासाय जगामाश्वस्वरूपिणी। भूत्वा तताप सा ध्यात्वा तपो गणपतिं प्रभुम् ॥३५॥ मालामंत्रेण विघ्नेशं तोषयामास सा सती। पूर्णे वर्षशते तत्राजगाम गणनायकः ॥३६॥ तया संपूजितो देवः स्तुतश्चैव विशेषतः। वरं ददौ महाराज मनसीप्सितमादरात् ॥३७॥ देव्यर्यमा सौम्यतेजा भविष्यति न संशयः। त्वं मायाबंधहीना वै मद्भक्तिनिरता भव ॥३८॥ यद्यदिच्छसि तत्तत्ते सफलं प्रभविष्यति। कोपहीनः स्वयं भानुस्त्वामत्रागत्य नेष्यति ॥३९॥ एवमुक्त्वा गणाधीशोंतर्धानं प्रचकार ह। सा तत्र गणपं देवं ध्यायंती संस्थिताऽभवत् ॥४०॥ छायायां सविता तद्वत् पुत्रौ पुत्रीं महायशाः। अथ संजनयामास धर्मयुक्तान् महौजसः ॥४१॥ सावर्णिश्च मनुर्ज्येष्ठः संभूतश्च शनैश्चरः। तापी नाम्नी नदी कन्या त्रयस्ते प्रथिता भुवि ॥४२॥ छाया स्वपुत्रवात्सल्यात्

संज्ञा पुत्रांश्च भेदतः । सततं न्यूनभावेनाऽवर्तयत् साधुसत्तम ॥४३॥ मनुश्च सेहे तं मातुरपराधं विचक्षणः । धर्मराजः स तां तत्र निषिषेध मुहुर्मुहुः ॥४४॥ सा स्वभावं स्वकीयं तं न तत्याज कदाचन । कुपितो धर्मराजस्तां पदा हन्तुं प्रचक्रमे ॥४५॥ तं चाविनयसंयुक्तं शशाप जननी सुतम् । पादस्ते क्लेद्यतां प्राप्य पतिष्यति धरातले ॥४६॥ धर्मः क्रोधं समागृह्य सवितारं जगाम ह । भयभीतश्च शापेन वृत्तांतं तं जगाद सः ॥४७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते यमशापवर्णनं नामाष्टपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । यमस्य वचनं श्रुत्वा सविता विस्मितोऽभवत् । धर्मशीलस्य संक्रोधो मातरि प्रबभूव ह ॥१॥ माता स्वदेहजं पुत्रं भेदबुद्ध्या शशाप ह । अतः कारणकं किंचिद्विपरीतं भवेदिह ॥२॥ ततो ज्ञानेन बुद्ध्वा स यमं भानुरुवाच ह । मातुः शापं कदा मिथ्या मया कर्तुं न शक्यते ॥३॥ अतो विनायकं देवं भज त्वं भक्तिभावतः । स चेत् प्रसन्नतां यातस्तदा सुखमवाप्स्यसि ॥४॥ एवमुक्त्वार्यमा पुत्रं मंत्रं पंचाक्षरं ददौ । विधियुक्तं गणेशस्य स ययौ वनमादरात् ॥५॥ सविताऽसौ जगामेदं छायां वचनमब्रवीत् । संज्ञा कुत्र गता देवि वद नोचेच्छपाम्यहम् ॥६॥ सा भीता सत्यमेवेदं वचनं तं जगाद ह । पितुर्गेहं गता संज्ञाऽस्थाप्य मां त्वद्गृहे प्रभो ॥७॥ सत्यभाषणयोगेन तुष्टस्तां न शशाप सः । जगाम विश्वकर्माणं क्रोधयुक्तो दिवाकरः ॥८॥ तं प्रणम्य स पप्रच्छ वृत्तांतं रक्तलोचनः । संज्ञाया विश्वकर्मा तं सांत्वयामास युक्तिभिः ॥९॥ विश्वकर्मोवाच । मया ते गृहमेवं सा प्रेषिता नागता यदा । मायया गुप्तरूपेण कुत्र वै संस्थिता भवेत् ॥१०॥ त्वदीयतेजसा तप्ता गता शुष्कशरीरका । अतस्त्वं तेजसा सौम्यो भव तस्यां रमस्व च ॥११॥ ततः सोऽपि जगादेदं वचनं तं विभावसुः । त्वं विश्वकर्मतां प्राप्तोऽतो मां सौम्यं कुरु प्रभो ॥१२॥ ततस्तेन स्वयंत्रे संस्थाप्य तेजो हृतं महत् । तीक्ष्णं तेन सुसौम्यश्च सूर्यस्तां प्रजगाम ह ॥१३॥ अश्विनी रूपभावेन स्थितां वीक्ष्य वनेषु सः । अश्वो भूत्वा प्रयत्नेन धर्तुं तामुद्यतोऽभवत् ॥१४॥ साऽपरं पुरुषं ज्ञात्वा गणेशं मनसाऽस्मरत् । ततः सूर्येण वीर्यं स्वं नसि निक्षिप्तमादरात् ॥१५॥ ततस्तया रवेर्वीर्यं स्वश्वासेन बहिर्बलात् । निष्कासितं परस्यैव ज्ञात्वा सुविमनास्त्वभूत् ॥१६॥

एवं दृढाग्रहं दृष्ट्वा सविता तोषवानभूत् । स्वरूपं दर्शयामास तां प्रगृह्य गृहं ययौ ॥१७॥ संज्ञया सवितुर्वीर्यं त्यक्तं तस्मात् समुद्भवौ । अश्विनौ भिषजां श्रेष्ठौ सर्वमान्यौ बभूवतुः ॥१८॥ गणेशभक्तिभावेन संज्ञा सुखयुताऽभवत् । तमेव सततं देवी भजतेऽनन्यमानसा ॥१९॥ यमोऽपि च तपस्तेपे दारुणं भावसंयुतः । निराहारतया देवं ध्यात्वा जपपरोऽभवत् ॥२०॥ संवत्सरसहस्रेण गणेशो वरदोऽभवत् । तं दृष्ट्वा सहसोत्थायाऽऽपूज्य तुष्टाव भानुजः ॥२१॥ यम उवाच । नमो गणपते तुभ्यं नानामायाविलासिने । मायाधारकवेषेण स्थिताय तु नमो नमः ॥२२॥ मायामोहविहीनाय साक्षिणे जगदादये । ब्रह्मादये ब्रह्मविदे ब्रह्मणे वै नमो नमः ॥२३॥ अनंताय नमस्तुभ्यं हेरंबाय च ढुंढये । विघ्नेशाय त्रिनेत्राय लंबोदर नमोऽस्तु ते ॥२४॥ गजाननाय देवाय देवानां पतये नमः । देवानां गर्वहंत्रे च रक्षसां मर्दिने नमः ॥२५॥ भक्तिप्रियाय भक्तेभ्यो नानासौख्यप्रदाय ते । अनंताननधारायानंतहस्ताय ते नमः ॥२६॥ अनंतशिरसे तुभ्यं ब्रह्मभूताय वेधसे । शिवाय शिववंद्याय शिवदाय नमो नमः ॥२७॥ अखंडविभवायैव मूषकध्वजिने नमः । मूषकश्रेष्ठवाहस्थायैकदंताय ते नमः ॥२८॥ आदिमध्यांतरूपाय सर्वाकाराय ते नमः । पाशांकुशधरायैव सर्वभोक्त्रे नमो नमः ॥२९॥ त्वां स्तोतुं कः समर्थः स्याद्योगाकारस्वरूपिणम् । अतोऽहं प्रणमामीह तेन तुष्टो भव प्रभो ॥३०॥ धन्योऽहं सर्वभावैश्च येन दृष्टो गणेश्वरः । अधुना रक्ष मां भक्तं शरणागतवत्सल ॥३१॥ एवं स्तुवंतमत्यंतमुवाच गणनायकः । यमं परमभक्तं च सूर्यपुत्रं यशस्विनम् ॥३२॥ गणेश उवाच । वरं वृणु महाभाग यम त्वं मनसीप्सितम् । दास्यामि ते महाभक्त्या तोषितोऽहं न संशयः ॥३३॥ ततस्तं भानुजस्तत्रोवाच देहि गजानन । भक्तिं त्वदीयपादे वै सुदृढां मे महोदर ॥३४॥ अन्यं वरं च मे देहि मातृशापहरं परम् । यद्यदिच्छामि देवेश तत्तत् सिध्यतु विघ्नप ॥३५॥ एवं तस्य वचः श्रुत्वा तथेति गणपोऽब्रवीत् । मदीया ते महाभक्तिर्भविष्यति न संशयः ॥३६॥ मातृशापस्य योगेन किंचिद् दुःखमवाप्स्यसि । क्लेद्यपादाच्च मांसं ते कीटाः संगृह्य सत्वरम् ॥३७॥ पतिष्यंति पृथिव्यां ते त्वं सुपादो भविष्यसि । यद्यदिच्छसि तत्तत्ते सुलभं प्रभविष्यति ॥३८॥ दक्षिणस्यां दिशि प्राज्ञ दिक्पालस्त्वं भविष्यसि । धर्मराज इति ख्यातो नाम्ना सर्वत्र पूजितः ॥३९॥ स्वधर्मपालकेषु त्वं श्रेष्ठो धर्मकरो मतः । जीवानां कर्मयोगेन फलदश्च भविष्यसि ॥४०॥ त्वदीयाऽऽज्ञा त्रिलोकेषु वर्ततां धर्मभावतः । त्वया स्तोत्रमिदं पुण्यं कृतं तच्च सुसिद्धिदम् ॥४१॥ पठते शृण्वते पूर्णं भविष्यति न संशयः । यमस्य यातनां घोरां स्तोत्रेण प्रस्तुतो

यम ॥४२॥ हरामि नात्र संदेहोऽन्ते स्वानंदं ददाम्यहम् । त्वया यत्र कृतं स्नानं नित्यं मद्भक्तिभाविना ॥४३॥ गणेशतीर्थसंज्ञं तद्भविष्यति न संशयः । अत्रैव स्नानमात्रेण सर्वपापक्षयो भवेत् ॥४४॥ सुबुद्धिप्रदमेतच्च तत्क्षणात् प्रभविष्यति । एवमुक्त्वांतर्दधेऽसौ यमस्तत्र स्थितोऽभवत् ॥४५॥ संस्थाप्य मूर्तिमचलां हेरंबस्य महाद्विजैः । कुंडं चकार भावेन गणेशपदलाञ्छितम् ॥४६॥ हेरंबगणपो नाम्ना तत्र ख्यातो बभूव ह । यमः शापविहीनश्च बभूव स दिशोधिपः ॥४७॥ सदा गणपतिं चित्तेऽध्यायद्वै रविनंदनः । समः सर्वत्र संजातः सर्वमान्यो महायशाः ॥४८॥ एतत्ते कथितं दिव्यं चरित्रं कुंडसंभवम् । यमेन रचितं पुण्यं सर्वसिद्धकरं महत् ॥४९॥ एतद्यमस्य माहात्म्यं यः शृणोति नरोत्तमः । पठेद्वा शुभदं तस्मै सर्वदं प्रभविष्यति ॥५०॥ अधुना शृणु दैत्येंद्र प्रकृतं यत् कथानकम् । भ्रूशुंडिनश्च पापघ्नं वाञ्छितार्थप्रदं परम् ॥५१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते कुंडसंभवचरित्रं नामैकोनषष्टितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । कैवर्तकस्ततो नामा महादुष्टो ददर्श ह । मुद्गलं मुनिशार्दूलं स्थितं तत्र महावने ॥१॥ दृष्ट्वा मुनिवरं हृष्टः पापचेता बभूव सः । खड्गमुद्यम्य तं हंतुं ययौ नामा हठाग्रहः ॥२॥ यावत् समीपगो भूत्वा हंतुं तमुपचक्रमे । तावत्तस्य करात् खड्गः पपात धरणीतले ॥३॥ शस्त्राण्यन्यानि सर्वाणि दृढबद्धानि सर्वतः । पेतुर्धरातले तानि तेनाऽसौ विस्मितोऽभवत् ॥४॥ अपश्यन्मुद्गलं दुष्टो वदन्नेवं किमद्भुतम् । तेन निर्मलचित्तोऽसौ प्रबभूवाऽतिदारुणः ॥५॥ तं प्रणम्य महादुष्ट उवाच प्रांजलिर्मुनिम् । योगिदर्शनमात्रेण यथा साधुस्तथा वचः ॥६॥ नामोवाच । आजन्मनोऽद्यपर्यंतं बुद्धिर्मे पापनिश्चया । तया कृतानि पापानि तेषां संख्या न विद्यते ॥७॥ अधुना कुंडजेनैव किंचित् स्नानेन चांजसा । जाता निर्मलभावा सा पापाद्वै संबिभेति च ॥८॥ तवदर्शनमात्रेण संतोषे संस्थिता मुने । मुक्तिमिच्छति मे बुद्धिर्महापापिन आदरात् ॥९॥ शस्त्राणि गलितान्येव न ग्रहीष्यामि तानि वै । उपदेशं वद प्राज्ञ संसारोत्तारणात्मकम् ॥१०॥ तस्य तद्वचनं श्रुत्वा मुद्गलस्तमुवाच ह । गच्छ त्वं स्वगृहं तात स्वशस्त्राणि प्रगृह्य च ॥११॥ ततस्तं मुनिशार्दूलं जगादाऽसौ महाखलः । कैवर्तकः प्रणम्याऽऽदौ रुदन्नश्रुजलाविलः ॥१२॥ नामोवाच । शिष्यं मां कुरु योगींद्र नोचेद् देहं त्यजाम्यहम् ।

सन्निधौ ते महाभाग नेच्छामि विषये सुखम् ॥१३॥ इति तस्य वचः श्रुत्वा शरणागतवत्सलः । गणेशाय नमो मंत्रं योगी तस्मै ददौ स्वयम् ॥१४॥ स्वयष्टिं तत्र योगींद्रः समारोप्य जगाद तम् । शुष्कामत्रैव तिष्ठ त्वं जपन्मंत्रं महाखल ॥१५॥ यावद्यष्टिश्च नामान् मे सांकुरा प्रभविष्यति । तावत्त्वं जप तं मंत्रं तदा शुद्धो भविष्यसि ॥१६॥ न फलं न जलं मूलं पर्णमन्नादिकं कदा । भक्षस्व वायुमात्रं त्वं तदा शुद्धो भविष्यसि ॥१७॥ एवमुक्त्वा महादुष्टं मुद्गलो गाणपाग्रणीः । अंतर्धानं चकारैव सोऽपि तादृशमाचरत् ॥१८॥ गते वर्षसहस्रे तु वल्मीकोऽल्पस्तदंगके । समुत्पन्नस्तृणौघाद्यैः संवृतः सर्वतो बभौ ॥१९॥ तथापि नाममंत्रं स नामाऽजापीच्च भावतः । नाममंत्रप्रभावेण सांकुरा यष्टिराबभौ ॥२०॥ पापं सर्वं लयं प्राप्तं तस्य मंत्रप्रभावतः । पुण्यराशिः समुत्पन्नोऽपाररूपो महासुर ॥२१॥ अतिपुण्येन भक्त्या च शुंडा तस्य विनिःसृता । भ्रूमध्यात्तेन संजातो गजानन इवाऽपरः ॥२२॥ ततस्तत्र समायातो मुद्गलश्च महायशाः । शिष्यं कैवर्तकं दैवात् सोऽस्मरत् साधुसत्तमः ॥२३॥ ततो यष्टिं ददर्शाऽसौ सांकुरा विस्मितोऽभवत् । अहो दुष्टमतिर्नामा तपसे संस्थितोऽभवत् ॥२४॥ चंचलं भावमुत्सृज्य देहशोषणतत्परः । कुत्राऽस्ति स मया शिष्यो दृश्यते न महातपाः ॥२५॥ ततो वल्मीकरूपं स चाऽपश्यत्तत्र मुद्गलः । कैवर्तकस्य तस्यैव नेत्रे दृष्टे ततः किल ॥२६॥ ततो यष्ट्या स वल्मीकमुत्खाय च जलेन तम् । सिषेच तेन नामाऽपि सावधानो बभूव ह ॥२७॥ गुरुं दृष्ट्वा समुत्तस्थौ तं प्रणम्य पुरःस्थितः । ततः संमान्य योगीशो धृत्वाऽऽलिंग्य जगाद तम् ॥२८॥ वल्मीकात्त्वं समुत्पन्नः पुत्रो मे नात्र संशयः । भव ब्राह्मणमुख्यश्च भ्रूशुंडी संज्ञयाऽधुना ॥२९॥ सिद्धोऽसि नाममंत्रेण सर्ववंद्यो भविष्यसि । तव दर्शनमात्रेण नरा मुक्तिमवाप्नुयुः ॥३०॥ लक्षकल्पमयं कालं जीवं स्थास्यसि भो मुने । कल्पे कल्पे च शिष्यास्ते भविष्यंति शिवादयः ॥३१॥ एवमुक्त्वा गणेशस्य ददौ तस्मै महामनुम् । एकाक्षरं विधानेन ततोऽतर्धानमाययौ ॥३२॥ सोऽपि तत्र पुनस्तेन तताप तप उत्तमम् । वर्षमात्रेण तस्याऽग्रे प्रत्यक्षोऽभूद्गजाननः ॥३३॥ उवाच तं महाभक्तं किं वाञ्छसि वदस्व मे । ततस्तं स्तोतुमारेभे स्तोत्रैः स्वानुभवात्मकैः ॥३४॥ भ्रूशुंडयुवाच । नमो नमस्ते गणनाथ ढुंढे सदा सुशांतिप्रद शांतिमूर्ते । अपारयोगेन च योगिनस्त्वां भजंति भावेन नमो नमस्ते ॥३५॥ प्रजापतीनां त्वमथो विधाता सुपालकानां गणनाथ विष्णुः । हरोऽसि संहारकरेषु देव कलांशमात्रेण नमो नमस्ते ॥३६॥ क्रियात्मकानां जगदंबिका त्वं प्रकाशकानां रविरेव ढुंढे । यत्नप्रदानां च गुणेश नामा कलांश-

मात्रेण नमो नमस्ते ॥३७॥ शरीरभाजां त्वमथासि बिंदुः शरीरिणां सोऽहमथो विभासि। सुबोधरूपः स्वत उत्थकानां कलांशमात्रेण नमो नमस्ते ॥३८॥ विदेहकानामसि सांख्यरूपः समाधिदानां च निजात्मकस्त्वम्। निवृत्तियोगे त्वमयोगधारी कलांशमात्रेण नमो नमस्ते ॥३९॥ गणास्त एते गणनाथ नाम्ना त्वमेव वेदादिषु योगकीर्ते। सदा सुशांतिप्रद संस्थितोऽसि भक्तेश भक्तिप्रिय ते नमो वै ॥४०॥ गकारसिद्धिस्त्वपि मोहदात्री णकारबुद्धिस्त्वथ मोहधात्री। तयोर्विलासी पतिरेव नाम्ना गणेश्वरस्त्वं च नमो नमस्ते ॥४१॥ गकाररूपेण भवान् स गौणो णकाररूपेण च निर्गुणोऽसि। तयोरभेदे गणनाथनामा योगेश भक्तेश नमो नमस्ते ॥४२॥ किं वदामि गणाधीश महिमानं महाद्भुतम्। यत्र वेदादयो भ्रांता इव जाताः प्रवर्णने ॥४३॥ पतितानामहं श्रेष्ठः पतितोत्तम एव च। तव नामप्रभावेण जातोऽहं ब्राह्मणोत्तमः ॥४४॥ किंचित् संस्कारयोगेन विश्वामित्रादयः प्रभो। जाता वै ब्राह्मणत्वस्य ब्राह्मणा निर्मलाः पुरा ॥४५॥ अहं संस्कारहीनश्च जात्या कैवर्तकोद्भवः। तत्राऽपि पापसक्तात्मा त्वया च ब्राह्मणः कृतः ॥४६॥ एवमुक्त्वा नतं विप्रं प्रांजलिं पुरतः स्थितम्। भक्तिभावेन संतुष्टस्तमुवाच गजाननः ॥४७॥ गणेश उवाच। वरान् वरय दास्यामि यांस्त्वं विप्र प्रवाञ्छसि। त्वत्समो नैव तेजस्वी भक्तो मे प्रभविष्यति ॥४८॥ तस्य तद्वचनं श्रुत्वा साश्रुनेत्रो महामुनिः। भ्रूशुंडी गद्गदोक्त्या च तं जगाद गजाननम् ॥४९॥ यदि प्रसन्नभावेन वरदोऽसि गजानन। त्वदीयां भक्तिमुग्रां मे देहि संपूर्णभावतः ॥५०॥ तथेति तमुवाचाऽथ गणेशो भक्तवत्सलः। क्षेत्रं त्वदीयमत्रैव भविष्यति मदाज्ञया ॥५१॥ अमलाश्रमकं नाम्ना जनानां सेविनां सदा। अज्ञानजं मलं हत्वा ज्ञानं दास्यति निर्मलम् ॥५२॥ एवमुक्त्वांऽतर्दधे च गणेशो देवनायकः। भ्रूशुंडी भक्तिभावेन भेजे वै तं निरंतरम् ॥५३॥ नान्यत् स मनसा क्वापि क्षेत्रं देवादिकं मुनिः। तीर्थं जज्ञौ स योगींद्रो गणेशानान्न संशयः ॥५४॥ ततस्तत्र महाक्षेत्रे ब्राह्मणाद्या ययुर्मुदा। तत्रैव गणनाथं ते भेजिरे भक्तिभावतः ॥५५॥ शिष्यास्तस्य महाभागा जाता ब्रह्मर्षयोऽमलाः। क्षेत्रसंन्यासभावेन तेऽसेवंत महामुनिम् ॥५६॥ भ्रूशुंडिनस्तत्र तीर्थं गणेशस्य च सुंदरम्। भुक्तिमुक्तिप्रदं प्रोक्तं स्नानमात्रेण जंतवे ॥५७॥ तस्यैवं दर्शनार्थं च मुनयः कश्यपादयः। शुकादियोगिनः सर्वे गत्वा तेऽपूजयन् मुदा ॥५८॥ कृतार्थं मन्यमानाश्च स्वस्थलं ते ययुः पुनः। प्रशंसंतो मुनिं सर्वे साक्षाच्छुंडाधरं प्रभुम् ॥५९॥ इंद्रादयस्तमेवं च दर्शनार्थं समागताः। कृतकृत्याः स्वभावेन स्वालयं ते ययुः पुनः ॥६०॥ ब्रह्मविष्णुमहेशाद्या

ईश्वरास्ते महामुनेः । नित्यदर्शनसंसक्ता बभूवुर्हृष्टमानसाः ॥६१॥ एवं प्रभावयुक्तः स भ्रूशुंडी कथितो मया । चांडालो ब्राह्मणो जातो गणेशस्मरणेन वै ॥६२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते भ्रूशुंडिब्राह्मणत्ववर्णनं नाम षष्टितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । नित्यं स मानसीं पूजामकरोत् ब्राह्मणोत्तमः । बाह्यां चैव महाभागो गणेशस्य यथाविधि ॥१॥ मानसी या त्वया पृष्टा तां शृणुष्व महामते । यथा स्वल्पेन कालेन गाणपत्यो नरो भवेत् ॥२॥ चतुर्धा मानसी पूजा ज्ञातव्या चासुरोत्तम । साधारा द्विविधा प्रोक्ता निराधारा तथा द्विधा ॥३॥ हृदि मूर्तिं गणेस्य ध्यात्वा तत्रोपचारकैः । मानसैः पूजयेद्देवं साधारा सा मता बुधैः ॥४॥ अन्या ह्येकाग्रचित्तेन सर्वत्रैकात्मभावना । तया यत्तस्य भोगादि कृतं तत् पूजनं भवेत् ॥५॥ तत्रैकात्मस्वरूपश्चाधारः प्राप्तो जनेन वै । तेन साधाररूपा सा प्रोक्ता पूजा मनीषिभिः ॥६॥ निरोधचित्तवृत्त्या यज्ञनैः सर्वात्मवर्जितम् । मनोवाणीमयं सर्वमुपचारेण चार्पितम् ॥७॥ तदेव पूजनं तेन कृतं प्रह्लाद निश्चितम् । निराधारा मता पूजा गणेशस्य महात्मनः ॥८॥ चित्तस्य पंच भूमीनां लयं कृत्वा समा स्थितिः । तत्र शांतिस्वरूपं यद्योगाकारेण दृश्यते ॥९॥ योगे विधिनिषेधादि सर्वं तेनोपचारकैः । समर्पितं गणेशाय तदेवं पूजनं भवेत् ॥१०॥ शांतियोगे निराधारा पूजा प्रोक्ता च योगिभिः । एवं मानसजं दैत्य चतुर्धा पूजनं भवेत् ॥११॥ एवं भ्रूशुंडिना तेन कृता पूजा विशेषतः । भक्तिभावेन काश्यां सा प्राप्ताऽभूद्गणपाय च ॥१२॥ इदं भ्रूशुंडिनश्चित्रं चरित्रं च नरोत्तमः । यः शृणोति श्रावयति स वै स्वानंदगो भवेत् ॥१३॥ यं यमिच्छति तं तं वै लभते नाऽत्र संशयः । महापुण्यतमं श्रेष्ठं कथितं ते कथानकम् ॥१४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते भ्रूशुंडिचरितं नामैकषष्टितमोऽध्यायः ॥



॥ श्रीगणेशाय नम ॥ गृत्समद उवाच । ततो विनायकस्तत्र काश्यां बालगणैः सह । चिक्रीड प्राकृतो भूत्वा भक्तानंद-विवर्धनः ॥१॥ ततो गणकरूपेण दैत्यो हेमासुरो ययौ । तं मायया गणेशानो मारयामास दैत्यप ॥२॥ ततः कूपासुरस्तत्र कंदरेण सहागतः । परस्परविभेदेन तौ हतौ गणपेन च ॥३॥ ततोऽभोसुरनामा यः प्रतापी च तथांऽधकः । तुंगासुरस्त्रयः प्राप्ता ब्रह्मलब्धवराः खलाः ॥४॥ खगरूपगणेशेन हता मुक्तिं प्रलेभिरे । विनायकस्य हस्तस्य स्पर्शनादिप्रभावतः ॥५॥ तेषां माता समायाता भ्रमरी नाम राक्षसी । रूपं कृत्वा ह्यदित्याश्च सा हता तेन दैत्यप ॥६॥ परीक्ष्य विस्मितास्तत्र मानवा भोजनार्थिनः । निमंत्र्य तं ययुः सर्वे काशिराजसमन्विताः ॥७॥ एकस्मिन् दिवसे तत्र गेहे गेहे महोत्सवः । भोजनार्थं काश्यपस्य सामग्रीं चक्रिरे जनाः ॥८॥ तत्र शुक्लो महाभक्तः काशीप्रांतनिवासकः । शुक्लवृत्त्याऽचरद्भिक्षां प्रभोः शुश्राव चेष्टितम् ॥९॥ शुक्लो दारिद्र्यसंयुक्तः संतोषी भजने रतः । विद्रुमा तस्य पत्नी सा पतिभक्तियुताऽभवत् ॥१०॥ सर्वस्वदानभावेन चक्रतुस्तौ महोत्सवम् । भोजनार्थं काश्यपस्य मार्जितं स्वांगणं तया ॥११॥ दर्भान् बद्ध्वा महायष्ट्यां ध्वजं चक्रे महामुनिः । सर्वधान्यस्य पिष्टेन चक्रे वै भास्करीं सती ॥१२॥ तंदुलान्नं जलैर्युक्तं चक्रे परमहर्षिता । प्रयत्नेनाल्पतैलं च शुक्ल आनयदादरात् ॥१३॥ गृहे पलानि शुक्लस्य त्रीणि संचयमानतः । तंदुलानां हि पिष्टस्याऽभवन् पंच पलानि च ॥१४॥ काश्यपस्य च भक्ष्यार्थं पाकं चक्रे च भावतः । शुष्कामलकखंडं सोऽस्थापयन् मुखशुद्धये ॥१५॥ नैवेद्यं वैश्वदेवं च कृत्वा ध्यानपरोऽभवत् । विनायकस्य शुक्लोऽपि महाभक्तिपरायणः ॥१६॥ एतस्मिन्नंतरे तत्र सनकश्च सनंदनः । दर्शनार्थं समायातौ काश्यपस्य महात्मनः ॥१७॥ राज्ञा संमानितौ विप्रौ दृष्ट्वा बालसमन्वितम् । विनायकं तथा तौ निर्भर्त्स्य गंगां प्रजग्मतुः ॥१८॥ विनायको ययौ बालैः शुक्लस्याऽऽदौ गृहं प्रति । कुत्सितान्नं बभक्षैव ददौ संपत्तिमुत्तमाम् ॥१९॥ ततो विनायको देवोऽनंतरूपधरः स्वयम् । स काशिराजतां प्राप्य गेहे गेहे बभक्ष सः ॥२०॥ एतस्मिन् समये तौ तं सनकश्च सनंदनः । भिक्षार्थं वै ददृशतुः पर्यटंतौ च काश्यपम् ॥२१॥ गृहे गृहे च दृष्ट्वा तं भ्रष्टाचारयुतं मुनी । त्यक्त्वा काशीं क्षुधायुक्तौ जग्मतुर्बहिरेव तौ ॥२२॥ ततो विनायकेनैव सर्वं रूपं प्रदर्शितम् । पुनस्तौ शरणं भ्रांतावेव तं जग्मतुर्हृदा ॥२३॥ ततो गाणेशकं ज्ञानं दत्तं तेन महात्मना । गाणपत्यस्वभावेन चेरतुस्तौ गतौ ततः ॥२४॥ काशिराजेन तत्सर्वं न ज्ञातं चेष्टितं महत् । भ्रांतो राजा स तं नेतुं ययौ शुक्लगृहं मुदा ॥२५॥ शिबिकायां गणेशं संस्थापयित्वा ययौ नृपः । स्वगृहं

तत्र दैत्यौ द्वौ विद्युद्रूपौ प्रपेततुः ॥२६॥ विनायकेन तौ त्यक्तौ शिखां संधृत्य दैत्यपौ । प्रजग्मतुः स्ववृत्तांतं कथयित्वा नरांतकम् ॥२७॥ राजाऽपि स्वगृहं प्राप ततो दैत्यः समाययौ । श्रुत्वा वृत्तांतमत्यंतं ताभ्यां सर्वं नरांतकः ॥२८॥ गुल्मस्था नगरद्वारि काशिराजं ययुर्जनाः । अवदन् दैत्यवृत्तांतं नरांतक उपागतः ॥२९॥ सन्नद्धः सर्वसैन्येन काशिराजः स तं ययौ । युयुधे तेन दैत्येन धृतो राजा क्षणेन वै ॥३०॥ ततो विनायकः क्रुद्धः सिद्धिमाज्ञापयत् प्रभुः । तया सृष्टं महासैन्यं कालरूपं च तद्बभौ ॥३१॥ तत्रैको नायकः क्रूरः प्रणम्य गणनायकम् । ययौ तस्य महासेनां भक्षयन् पश्यतः क्षणात् ॥३२॥ धृत्वा नरांतकं सोऽपि जगाम च विनायकम् । विनायकेन सैन्येशो मुखे लीनः कृतः स्वके ॥३३॥ तस्योदरे गणेशेन रक्षितः काशिपालकः । तेन सार्धं गणेशस्य देहे लीनोऽभवन्नृपः ॥३४॥ तं नृपं जठरे देवो दर्शयित्वा जगत् पुनः । रोममार्गेण पुत्राभ्यां बहिश्चक्रे स विघ्नपः ॥३५॥ प्रधानाभ्यां च पुत्राभ्यां निःसृतं नृपसत्तमम् । विस्मितं मायया तं स मोहितं प्रचकार ह ॥३६॥ तत् दृष्ट्वा दैत्यराजः स विस्मितो तर्कयत् स्वयम् । अयं ब्रह्ममयो देवः कश्यपात्मज एव च ॥३७॥ अस्य हस्तेन मे मृत्युर्भविता चेत् सुमंगलम् । ब्रह्मभूयकरं तस्माद्युद्धयेयं हर्षसंयुतः ॥३८॥ नरांतकेन कृत्वा च युद्धं तेन महत्ततः । मोहयित्वा तं जघान विराड्रूपेण विघ्नपः ॥३९॥ ममार दैत्यराजस्तु मस्तकस्तस्य वै गृहे । पतितस्तं विलोक्यैव शुशोच जननी पिता ॥४०॥ शिरो धृत्वा गतौ स्वर्गे दृष्ट्वा देवांतको हि तत् । सोऽपि क्रोधसमायुक्तो ययौ काश्यां स दैत्यपः ॥४१॥ कृत्वा युद्धं महाघोरं तेन सार्धं विनायकः । गजाननस्वरूपं च दर्शयामास शत्रवे ॥४२॥ दृष्ट्वा दैत्येन दंतस्तु भग्नो वामोऽस्य तत्क्षणात् । दैत्येंद्रं तेन दंतेन मारयामास विघ्नपः ॥४३॥ ततो हर्षयुतैर्देवः स्तुतो देवर्षिभिः प्रभुः । प्रविवेश नृपेणाऽसौ काशीं भक्तपरायणः ॥४४॥ राजपुत्रस्य देवेशो विवाहं च चकार ह । राज्ञा संपूजितो ढुंढिः स्वाश्रमं गंतुमुत्सकः ॥४५॥ ततो लोका महा भक्तास्त्यक्त्वा गेहादिकं ययुः । तेभ्यो ज्ञानं ददौ देवः शांतिं प्राप्ता गृहान् ययुः ॥४६॥ राज्ञा रथेन शीघ्रं वै स्वाश्रमं स जगाम ह । काशिराजं च काश्यामप्रेषयद्गणनायकः ॥४७॥ लोकैर्नृपो ढुंढिराजं स्थापयामास वै पुरे । नित्यं तं पूजयामास सर्वैर्भक्तिसमन्वितः ॥४८॥ अदितिं कश्यपं देवस्तौ प्रोवाच विनायकः । भूभारहरणार्थं च जातोऽहं युवयोः सुतः ॥४९॥ तच्च सर्वं कृतं कर्माधुना यामि निजं पुरम् । एवमुक्त्वा ददौ ताभ्यां ज्ञानं सोऽतर्हितो-ऽभवत् ॥५०॥ ततस्ताभ्यां गणेशस्य मूर्तिः संस्थापिता प्रभोः । विनायकेति नाम्ना सा विख्याता प्रबभूव ह ॥५१॥

प्रह्लाद काशिराजोऽपि मुद्गलस्योपदेशतः । सदेहः स ययौ राजा स्वानंदे गणनायकम् ॥५२॥ एतत्ते कथितं सर्वं विनायक-चरित्रकम् । संक्षेपेण महाभाग एकदंतावतारजम् ॥५३॥ शृणुयाद्यः पठेद्वाऽपि स लभेदीप्सितं फलम् । अंते स्वानंदवासेन ब्रह्मभूतो भविष्यति ॥५४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते विनायकचरितं नाम द्विषष्टितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । शृणु पुष्टिपतेः ख्यातं सर्वपापहरं परम् । भुक्तिमुक्तिप्रदं चैव गणेशस्य महात्मनः ॥१॥ शकुनेश्च महामानी पुत्रोऽभूद् दुर्मतिः पुरा । दैत्यराजस्य तेजस्वी महापर्वतसन्निभः ॥२॥ तताप तप उग्रं स शक्तिं ध्यात्वा महासुरः । नवार्णेन सुमंत्रेण शुक्रशिष्यः प्रतापवान् ॥३॥ सहस्रवर्षे प्रगते शक्तिः सा वरदाऽभवत् । आययौ भक्तमुख्यं साऽबोधयत्तं वरं वृणु ॥४॥ तेनाऽपि पूजिता देवी माहात्म्येन च संयुता । शक्तेस्तेन प्रसन्ना सा तस्मै सर्वाऽभयं ददौ ॥५॥ त्रैलोक्यराजमुग्रं च संग्रामे जयमादरात् । आरोग्यं च स्वलोके सा प्रययौ सिंहवाहिनी ॥६॥ तत्र तेन क्रमेणैव जितं सर्वं चराचरम् । विष्णुमुख्याः सुराः सर्वे वने वासं प्रचक्रिरे ॥७॥ शक्तिं शिवेन संयुक्तां पीडयित्वा महाखलः । पत्नीं कर्तुं समुद्युक्तो देवीं दैत्याधिपोऽभवत् ॥८॥ शक्तिर्लोकं परित्यज्य शिवेन सहिता ययौ । अंतर्धाय स्वमात्मानं वने वासं चकार ह ॥९॥ गते कियति काले तौ नारदस्तत्र चागतः । जगाद विघ्नराजस्य ताभ्यां चोपासनां शुभाम् ॥१०॥ पुत्रभावेन देवेशो भविष्यति गणेश्वरः । आराधितो न संदेहो दुर्मतिं स हनिष्यति ॥११॥ एवमुक्त्वा गते चैव नारदे शक्तिशंकरौ । तेपाते तप उग्रं तौ षोडशाक्षरमाननः ॥१२॥ मंत्रं षोडशवर्णाख्यं जेपतुर्गणपस्य च । एवं वर्षशते पूर्णे गणेशो वरदोऽभवत् ॥१३॥ आगतं गणपं दृष्ट्वा नेमतुश्चरणांबुजे । गणाधीशं तुष्टुवतः शिवशक्ती कृतांजली ॥१४॥ शक्तिशिवावूचतुः । नमस्ते गणनाथाय गणानां पतये नमः । भक्तिप्रियाय देवेश भक्तेभ्यः सुखदायक ॥१५॥ स्वानंदवासिने तुभ्यं सिद्धिबुद्धिवराय च । नाभिशेषाय देवाय ढुंढिराजाय ते नमः ॥१६॥ वरदाभयहस्ताय नमः परशुधारिणे । अनामयाय सर्वाय सर्वपूज्याय ते नमः ॥१७॥ सगुणाय नमस्तुभ्यं ब्रह्मणे निर्गुणाय च । ब्रह्मभ्यो

ब्रह्मदात्रे च गजानन नमोऽस्तु ते ॥१८॥ ज्येष्ठाय चादिपूज्याय ज्येष्ठराजाय ते नमः । मात्रे पित्रे च सर्वेषां हेरंबाय नमो नमः ॥१९॥ अनादये च विघ्नेश विघ्नकर्त्रे नमो नमः । विघ्नहर्त्रे स्वभक्तानां लंबोदर नमोऽस्तु ते ॥२०॥ त्वदीय-भक्तियोगेन योगीशाः शांतिमागताः । किं स्तुवो योगरूपं त्वां प्रणमावश्च विघ्नप ॥२१॥ तेन तुष्टो भव स्वामिन्नित्युक्त्वा तं प्रणेमतुः । तावुत्थाप्य गणाधीश उवाचाऽसौ महेश्वरौ ॥२२॥ गणेश उवाच । भवत्कृतमिदं स्तोत्रं मम भक्तिविवर्धनम् । पठते शृण्वते चैव भविष्यति सुखप्रदम् ॥२३॥ भुक्तिमुक्तिप्रदं चैव पुत्रपौत्रादिकं तथा । धनधान्यादिकं सर्वं लभते तेन निश्चितम् ॥२४॥ वरं च वदतं देवौ प्रसन्नोऽहं ददामि तम् । भवतोर्भक्तिभावेन विभुः स्तोत्रेण तोषितः ॥२५॥ शक्तिशिवावूचतुः । यदि प्रसन्नभावेन वरदोऽसि गजानन । तदा नौ पुत्रतां याहि कृतकृत्यौ तया विभो ॥२६॥ भक्तिं देहि दृढां देव त्वदीये पादपंकजे । दुर्मतिं जहि विघ्नेश त्रैलोक्यं च सुखीकुरु ॥२७॥ गृत्समद उवाच । तयोर्वचनमाकर्ण्योमि-त्युक्त्वांऽतर्दधे विभुः । शिवौ संतोषयुक्तौ च तत्र संचेरतुर्भयात् ॥२८॥ एकदा पार्वती शंभुर्वैशाखस्नानमादरात् । चक्रतुर्गणनाथस्य प्रीतये हिमपर्वते ॥२९॥ भागीरथीजले नित्यं स्नात्वाऽपूजयतां च वै । दूर्वादिभिर्मृन्मयं तौ गणनाथं सुभक्तितः ॥३०॥ वैशाखपूर्णिमायां तावुषःकाले तु भक्तितः । स्नात्वा मूर्तिं शिवौ कृत्वा ध्यानं चक्रतुरादरात् ॥३१॥ ध्यात्वा ह्यावाहयतां गणाधीशं तमंजसा । मूर्तौ सा ह्यचला मूर्तिः सचैतन्या बभूव ह ॥३२॥ चतुर्भुजधरस्तत्र गणराजो बभौ स्वयम् । उवाच पितरौ देवः पुत्रोऽहं वां न संशयः ॥३३॥ वरदानप्रभावेण वैशाखस्नानजेन च । तपसा पुत्ररूपं मां रक्षतं पितरौ सदा ॥३४॥ ततः प्रणम्य तं देवः शंकरः शक्तिसंयुतः । तुष्टावाथर्ववेदोक्तोपनिषद्भिर्महायशाः ॥३५॥ ततो गणपतिः प्रीत्या मोहयामास मायया । शिवं सशक्तिकं तत्र पुत्रभावप्रकाशनात् ॥३६॥ ततस्तस्य स संस्कारान् कारयामास वै द्विजैः । शिवश्च जातकर्मादीन् हर्षयुक्तेन चेतसा ॥३७॥ ततो लक्ष्मीसुता पुष्टिस्तपसा च बभूव ह । तां ददौ स गणेशाय विष्णुः परमहर्षितः ॥३८॥ एकदा तत्र संयातो ग्रहोत्तमशनैश्चरः । दर्शनार्थं गणेशस्य सस्त्रीकस्य महामतिः ॥३९॥ प्रणनाम स सस्त्रीकं गणेशं दैत्यनायक । जगाद भक्तिसंयुक्तो वचनं सर्वसन्निधौ ॥४०॥ धन्यं मे जन्म विद्या च तपो विद्यादिकं महत् । येन ते दर्शनं प्राप्तं सस्त्रीकस्य गजानन ॥४१॥ त्वं साक्षाद्योगरूपश्च पुष्टिः पोषणकारिणी । विश्वंभरा

महाशक्तिस्तस्माद्वां वै नमो नमः ॥४२॥ एतस्मिन्नंतरे तत्र शक्तिः स्वयमुपागता । प्रणतं रविपुत्रं तमुवाच प्रेमनिर्भरा ॥४३॥ पश्य पश्य ग्रहश्रेष्ठ सम्यक् सर्वत्र भावतः । ततस्तां स शनिर्देवीमवोचद् दुःखितो भृशम् ॥४४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते शनिसमागमो नाम त्रिषष्टितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ प्रल्हाद उवाच । किमर्थं दुःखितो देवः शनिस्तत्र बभूव ह । तन्मे त्वं सकलं ब्रूहि रविपुत्रस्य चेष्टितम् ॥१॥ गृत्समद उवाच । श्रृणु तत्रैव संजातं वृत्तांतं साधुसत्तम । तेन ते सर्वसंदेहो नाशं यास्यति निश्चितम् ॥२॥ शनिरुवाच । श्रृणु शक्ते महामाये एकदाऽहं गृहे स्थितः । सूर्यपूजनसंशीलो ध्याननिष्ठोऽभवं पुरा ॥३॥ निशि तत्र समायाता पत्नी मे वेषधारिणी । भूषणैर्भूषिता सर्वैर्मां जगाद सुविह्वला ॥४॥ ऋतुदानमिदानीं त्वं मह्यं देह्येव भानुज । पश्य मां सर्वशृंगारयुक्तां भर्तर्नमोऽस्तु ते ॥५॥ अहं ध्यानसमायुक्तो नाऽपश्यं च हि तां प्रियाम् । द्विमुहूर्ते गते सा मां शशाप क्रोधसंयुता ॥६॥ यदि मां पश्यसि न च भर्तस्त्वं विफलं ऋतुम् । करोषि तेन दृष्टं यत्त्वया नष्टं भविष्यति ॥७॥ एवमुक्त्वा गता सा वै नदहादहमंजसा । न पश्यामि कदा कुत्र जगदंब यथायथम् ॥८॥ तस्य तद्वचनं श्रुत्वा जगदंबा तमब्रवीत् । पश्य त्वं ग्रह वै ढुंढिं तेन सर्वं शुभं भवेत् ॥९॥ एवमुक्तः शनिस्तत्र गणेशानमलोकयत् । सर्वांगैः शोभमानं वै सस्त्रीकं साधुसत्तम ॥१०॥ ततस्तस्य गणेशस्य मस्तकं सहसा गतम् । अंतर्धानं च तद् दृष्ट्वा हाहाकारो बभूव ह ॥११॥ मुहूर्ते प्रगते तत्र पुनस्ते देवविप्रपाः । अपश्यन् शिरसा युक्तं सर्वावयवसुंदरम् ॥१२॥ ततो हर्षयुताः सर्वे तुष्टुवुस्तं गजाननम् । शनिः प्रणतभावेन तुष्टाव गणनायकम् ॥१३॥ शनिरुवाच । नमस्ते गणनाथाय पुष्टिकांताय ते नमः । विश्वंभराय सर्वादिपूज्याय तु नमो नमः ॥१४॥ सर्वेषां मातृरूपेण स्थितेयं पुष्टिकारिका । पिता त्वं पुष्टिदाता च सत्तारूपेण संस्थितः ॥१५॥ क्षमस्वेतं चापराधं मदीयं गणनायक । पुत्रोऽहं ते महाभाग प्रार्थये द्विरदानन ॥१६॥ किं स्तौमि त्वां च हेरंब योगरूपं सनातनम् । वेदाद्यैर्योगिभिः स्तोतुं शक्यते न नमाम्यहम् ॥१७॥ तथापि बुद्धिप्रामाण्यात् स्तुवंति त्वां महेश्वराः । अतोऽहं त्वां महाराज स्तौमि भक्तिसमन्वितः ॥१८॥ नमस्ते बुद्धिकांताय सिद्धिनाथ नमोऽस्तु ते । ब्रह्मणां पतये तुभ्यं हेरंबाय नमो नमः ॥१९॥

सगुणत्वे सरूपाय नैर्गुण्ये गजरूपिणे। तयोर्योगे च योगाय शांतिरूपाय ते नमः ॥२०॥ पुन्नामनरकात्राता पुत्रस्तेन प्रकीर्तितः। शिवपुत्राय वै तुभ्यं गणेशाय नमो नमः ॥२१॥ सिद्धिर्माया च वामांगे मायिके दक्षिणे च धीः। तयोरभेद-योगे त्वमेकदंताय ते नमः ॥२२॥ एवमुक्त्वा प्रहर्षेण सरोमांचो बभूव ह। प्रणनाम स साष्टांगं भक्तिभावेन संप्लुतः ॥२३॥ तमुत्थाप्य गणाधीशो जगाद स शनैश्चरम्। वरं वरय दास्यामि यस्ते चित्ते प्रवर्तते ॥२४॥ त्वया कृतमिदं स्तोत्रं मम प्रीतिकरं भवेत्। यः पठिष्यति यो मर्त्यः शृणुयात् सर्वदं भवेत् ॥२५॥ ततस्तं गणनाथं स उवाच रविनंदनः। भक्तिं देहि त्वदीयां मे शापान् मोचय मां प्रभो ॥२६॥ ततस्तं गणराजश्च स जगादासुरेश्वर। भक्तिर्मदीया भविता दृढा सौरे न संशयः ॥२७॥ क्रूरदृष्ट्या च यं कंचित् पश्यसि त्वं शनैश्चर। स एव नाशमायातु निःशापो भव सर्वदा ॥२८॥ ततो विष्णुं जगामाऽसौ तं प्रणम्य च भानुजः। उवाच देहि मे नाथ गणेशोपासनां शुभाम् ॥२९॥ ततस्तेन समाख्यातं कवचादिक-मुत्तमम्। गीतासारं ददौ तस्मा एकाक्षरमनुं प्रभोः ॥३०॥ ततस्तं प्रययौ गेहे प्रणम्य स शनैश्चरः। योगं च साधयामास गाणपत्यो बभूव ह ॥३१॥ ततः कियति काले च गते शंकरमब्रवीत्। गणेशो भावयुक्तं यद्वचनं भक्तवत्सलः ॥३२॥ किं तात देवदेवेशैर्मुनिभिश्च सदाशिव। वनवासं करोषि त्वं वद कारणमत्र माम् ॥३३॥ जगाद शंकरो हृष्टस्ततस्तं भक्ति-भावितः। जगत् सर्वं दुर्मतिनाऽसुरेशेन पराजितम् ॥३४॥ ब्रह्मांडाधिपतिः सोऽपि प्रजातो वरदानतः। अस्माकं सकलैश्वर्यं हृत्वा श्रेष्ठोऽभवत् स्वयम् ॥३५॥ गृत्समद उवाच। शिवस्य वचनं श्रुत्वा क्रोधयुक्तो बभूव ह। गजाननो जगादेदं वचनं हितकारकम् ॥३६॥ गणेश उवाच। मयि ते पुत्रतां याते दुर्लभं किं च ते भवेत्। हनिष्यामि महादैत्यं पश्य मे पौरुषं शिव ॥३७॥ एवमुक्त्वा महादेवं सन्नद्धः स गजाननः। मूषकारूढको भूत्वा त्वगमद्दैत्यनायकम् ॥३८॥ तमनु प्रययुर्देवा मुनयो भक्तितत्पराः। नगरप्रांतभागे च स गत्वा संस्थितोऽभवत् ॥३९॥ दूतं संप्रेषयामास विष्णुं देववरं ततः। स गत्वा दुर्मतिं दुष्टमबोधीद्युक्तिभिश्च तम् ॥४०॥ विष्णुरुवाच। स्वानंदवासकारी यो गणेशो ब्रह्मनायकः। शिवेन तपसा सोऽपि याचितः पुत्रकाम्यया ॥४१॥ स एव पुत्रतां प्राप्तः पुष्टीशो यः समागतः। त्वां बोधितुं च मां सोऽपि प्रेषयामास दुर्मते ॥४२॥ देवानां द्वेषमुत्सृज्य वस पातालमंडले। स्वस्वधर्मरता लोका भवंतु विगतज्वराः ॥४३॥ एवमुक्तो महादैत्यस्तमुवाच जनार्दनम्। दूत्येन त्वं समायातो नो चेद्धन्मि प्रभावतः ॥४४॥ कः स्वानंदपतिः सोऽपि देवपक्षधरो-

ऽभवत् । तं हनिष्यामि वेगेन द्रक्ष्यसि त्वं गजाननम् ॥४५॥ ततो विष्णुः समायातो गणेशं तस्य दुर्मतेः । वृत्तांतमवदत्तीव्रं श्रुत्वा चुक्रोध विघ्नपः ॥४६॥ बभूव मूषकारूढो तं हंतुं शस्त्रधारकः । देवाः सर्वे च सन्नद्धा बभूवुरसुरेश्वर ॥४७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते विष्णुदौत्यवर्णनं नाम चतुःषष्टितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । ततः स दैत्यराजोऽपि स्वसेनासंवृतो ययौ । रथारूढो महातेजाः शस्त्रास्त्रैः संयुतो बभौ ॥१॥ दुर्मतिर्गणपं दृष्ट्वा चुकोपाऽतितरां खलः । आज्ञापयत् स्वसेनां वै देवानां कदनाय च ॥२॥ ततो दैत्याश्च देवास्ते युयुधुश्चातिदारुणम् । असंबद्धं महाक्रोधा जग्मुः सप्त च वासराः ॥३॥ देवसेना ततो भग्ना पलायत दिशो दश । भयभीता ततः क्रोधाद्युयुधे शंकरो भृशम् ॥४॥ ततो दुर्मतिना तत्र कृतं युद्धं महाद्भुतम् । मूर्च्छिताः पतिताः केचिद्देवेशाः खंडिताः शरैः ॥५॥ शंभुं विष्णुं च देवेंद्रं सर्वानन्यान् सुमूर्च्छितान् । तान् दृष्ट्वा गणराजस्तु क्रोधयुक्तो बभूव ह ॥६॥ मूषकारूढ एवाऽसौ संग्रामाय समाययौ । तं दृष्ट्वा दुर्मतिः प्राह क्रोधारुणविलोचनः ॥७॥ दुर्मतिरुवाच । किमर्थं मूर्खभावेन युद्धाय समुपागतः । बाणेनैकेन हन्मि त्वां पश्य मे पौरुषं खल ॥८॥ ब्रह्मांडं निर्जितं येन तेन युद्धं करिष्यसि । अज्ञानेनावृतो नूनं गच्छ त्वां नैव हन्म्यहम् ॥९॥ एवं वदंतमुग्रं तं दैत्येशं दुर्मतिं प्रभुः । जगाद हास्यसंयुक्तः पतिः पुष्टेः प्रतापवान् ॥१०॥ पुष्टिपतिरुवाच । मा गर्वं कुरु दैत्येश दुर्मते शृणु मे वचः । त्वां हनिष्यामि नूनं च पश्य मे पौरुषं महत् ॥११॥ इत्युक्तवंतमप्येनं दुर्मतिः सहसा ययौ । दंतं धृत्वा गणेशस्याकर्षयत् क्रोधसंयुतः ॥१२॥ महाबलेन दैत्येन वामदंतः प्रपातितः । भंक्त्वा स धरणी पृष्ठे तं दंतं गणपोऽग्रहीत् ॥१३॥ दंतेन शिरसि प्रोतो दुर्मतिः स ममार ह । ततः पुष्टिपतिर्देवान् सावधानांश्चकार ह ॥१४॥ ततो दैत्यगणाः सर्वे पलायंत दिशो दश । पातालं जग्मुरत्यंतं भयभीताः समंततः ॥१५॥ ततो देवेश्वरास्तत्र मुनयो हर्षसंयुताः । अपूजयंस्तथा पुष्टिपतिं ते तुष्टुवुः पुनः ॥१६॥ देवर्षय ऊचुः । जय देव गणाधीश जय विघ्नहराव्यय । जय पुष्टिपते ढुंढे जय सर्वेश सत्तम ॥१७॥ जयानंत गुणाधार जय सिद्धिप्रद प्रभो । जय योगेन योगात्मन् जय शांतिप्रदायक ॥१८॥ जय ब्रह्मेश सर्वज्ञ जय सर्वप्रियंकर । जय स्वानंदपस्थायिन् जय वेदविदांवर ॥१९॥

जय वेदांतवादज्ञ जय वेदांतकारण । जय बुद्धिधर प्राज्ञ जय सर्वामरप्रिय ॥२०॥ जय मायामये खेलिन् जयाव्यक्त गजानन । जय लंबोदरः साक्षिन् जय दुर्मतिनाशन ॥२१॥ जयैकदंतहस्तस्त्वं जयैकरदधारक । जय योगिहृदिस्थ त्वं जय ब्राह्मणपूजित ॥२२॥ जय कर्म तपोरूप जय ज्ञानप्रदायक । जयामेय महाभाग जय पूर्णमनोरथ ॥२३॥ जयानंद गणेशान जय पाशांकुशप्रिय । जय पर्शुधर त्वं वै जय पावनकारक ॥२४॥ जय भक्ताभयाध्यक्ष जय भक्तमहाप्रिय । जय भक्तेश विघ्नेश जय नाथ महोदर ॥२५॥ नमो नमस्ते गणनायकाय नमो नमस्ते सकलात्मकाय । नमो नमस्ते भव-मोचनाय नमो नमस्तेऽतिसुखप्रदाय ॥२६॥ इति स्तुत्वा गणाधीशं प्रणेमुस्तं महामते । उत्थाय ननृतुः सर्वे हर्षयुक्ताः सुरर्षयः ॥२७॥ तेषां महोत्सवं दृष्ट्वा तान् जगाद महाप्रभुः । प्रसन्नात्मा पुष्टिपतिर्भक्तान् भक्तप्रियंकरः ॥२८॥ पुष्टिपतिरुवाच । भवत्कृतमिदं स्तोत्रं यः पठिष्यति नित्यशः । श्रोष्यते सकलं तस्य जयरूपं भविष्यति ॥२९॥ पठनाच्छ्रवणादस्य सर्वं जयति मानवः । अंते मदीयसायुज्यं प्राप्नोत्यत्र न संशयः ॥३०॥ एवमुक्त्वांतर्दधेऽसौ पतिः पुष्टेर्गणेश्वरः । देवाश्च मुनयः सर्वे विस्मिता अभवंस्तदा ॥३१॥ स्वे स्वे पदे च ते जग्मुर्यथा सुखरताः पुरा । तथा पुनः स्वलोकस्था मोदंते स्म च तत्पराः ॥३२॥ स्वाचारं मुनयश्चक्रुर्वर्णाश्रमरता जनाः । बभूवुरभजंस्तं ते स्वधर्मेण गजाननम् ॥३३॥ शिवश्च शक्तिसंयुक्तस्तमेव हृदये स्थितम् । अभजत् भावयुक्तश्च गाणपत्यः प्रतापवान् ॥३४॥ मूर्तिं चक्रुर्गणेशस्य स्थापयामासुरादरात् । वैशाखपूर्णिमायां चाभवत्तत्र महोत्सवः ॥३५॥ तत्र सिद्धिरनुप्राप्ता शिवेन ननु मानद । चक्रुः सिद्धाश्रमं नाम्ना क्षेत्रं देवर्षयः परम् ॥३६॥ तत्रैव सिद्धिमापन्ना देवा ब्रह्मर्षयः पुरा । सनकाद्या महात्मानो गाणेशास्तेऽभवंस्ततः ॥३७॥ अत्र ते वर्णयिष्येऽहमितिहासं पुरातनम् । अगस्त्यस्य च संवादयुक्तं च ब्रह्मणः पुरा ॥३८॥ एकदा वनगो भूत्वाऽगस्त्यस्तपसि संस्थितः । लोपामुद्रा च सेवायां रता पत्नी तथाऽभवत् ॥३९॥ राजपुत्री महाभागा पातिव्रत्यपरायणा । सुकुमाराऽभवत्तत्र कर्षिता सेवनोत्सुका ॥४०॥ घर्मेण सकलं व्याप्तं वपुस्तस्या रजोयुतम् । शिरो जटायुतं वीक्ष्य तुतोष मुनिसत्तमः ॥४१॥ तामुवाच वरं ब्रूहि दास्येऽहं भावयंत्रितः । सोवाच राजभोगेन युक्तं देहि मुने ऋतुम् ॥४२॥ ततः स राजभोगार्थं द्रव्येप्सुश्च समागतः । राजानं याचनार्थाय सार्वभौमं ययाच वै ॥४३॥ दिलीपस्तमुवाचाथ कियन्मानं धनं वद । दास्यामि भाव-संयुक्तस्तुभ्यं तत्तापसोत्तम ॥४४॥ राज्ञो वचनमाकर्ण्योवाच तं मुनिसत्तमः । व्ययादुर्वरितं यन् मे धनं देहि सुपुष्कलम् ॥४५॥

ततो दिलीपो राजा तं जगाद व्ययमानकम् । द्रव्यं मेऽस्ति महाभाग तस्मात् संख्यां वदस्व भो ॥४६॥ जगाद मुनिशार्दूलः ततस्तं विस्मयान्वितः । न ग्रहीष्यामि ते द्रव्यं दरिद्रस्य न संशयः ॥४७॥ मया द्रव्यं त्वदीयं वै गृहीतं चेन्नराधिप । तदा सर्वे जना राजन् भवंति च निपीडिताः ॥४८॥ अतस्त्वं राजभिर्युक्तश्चल शीघ्रं नराधिप । मया सार्धं महद् द्रव्यं यत्र वै संचितं भवेत् ॥४९॥ ततो राजा च वृत्तांतं कथयामास तं मुनिम् । वातापिर्दैत्यपोऽगस्त्यद्रव्ययुक्तो भवत्यपि ॥५०॥ देवैरवध्यतां प्राप्य हंति विप्रांश्च नित्यशः । पशुं कृत्वाऽनुजं दुष्ट इल्वलं श्राद्धकर्मणि ॥५१॥ देवानां निधनार्थाय कर्ममूल-निकृंतनः । अखिलं ब्राह्मणाधारं कर्म तेन हिनस्ति तत् ॥५२॥ इल्वलश्चाऽपि योगींद्र वरयुक्तप्रभावतः । गत्वोदरे कामरूपो वाताप्याहून एव सः ॥५३॥ तदा तेषां नखेनैव स्फोटयित्वा महोदरम् । निर्गत्य पूर्ववद्देहसंयुक्तो भवतीत्यहो ॥५४॥ अतस्त्वं गच्छ योगींद्र तं हत्वा द्रव्यसंचयम् । गृहाणास्माभिरत्यंतं वातापिं भ्रातृसंयुतम् ॥५५॥ दिलीपस्य वचः श्रुत्वा हर्षयुक्तो महामुनिः । राजभिर्ब्राह्मणैर्युक्तस्तत्र गंतुं मनो दधे ॥५६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते पुष्टिपत्युपाख्याने अगस्त्यस्य द्रव्यप्रयत्नो नाम पंचषष्टितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । अगस्त्यो राजभिर्युक्तो ब्राह्मणैश्च समन्वितः । वातापेः सुस्थलं रम्यं ययौ क्रोधसमन्वितः ॥१॥ तमागतं स विज्ञाय वातापिर्हर्षितो ययौ । प्रणम्य प्रत्युवाचेदं वचनं विनयान्वितः ॥२॥ वातापिरुवाच । स्वामिंस्ते स्वागतं मेऽद्य भाग्यं सुफलितं महत् । ब्राह्मणै राजभिः सार्धं प्रपश्यामीऽह तापसम् ॥३॥ श्राद्धं मे भगवन्नद्य पितुरत्र समागतम् । निमंत्रयाम्यहं सर्वैस्त्वां महाभाग वै सह ॥४॥ जगाद तं तथेत्येव दैत्यः संहर्षितोऽभवत् । इल्वलं पशुभावस्थं कृत्वा संछिद्य दैत्यपः ॥५॥ पपाच विधिवन्मांसं ब्राह्मणार्थं विधानवित् । ततोऽगस्त्यं समायातं भोजनार्थं सहानुगम् ॥६॥ विधिवत् पूजयित्वा तं स्थापयामास चासने । तेनांगुष्ठेन भूमिः सा पीडिता मुनिना कृतः ॥७॥ गर्तस्तत्र च सर्वान्नं पूरितं दैत्यदेहजम् । तज्ज्ञात्वा विस्मितो दैत्यो न किंचित्तमुवाच ह ॥८॥ अन्यान् सर्वान् सुभोज्येन भोजयामास चांधसा । अगस्त्यः सकलं भुक्त्वा चान्नमिल्वलजं महत् ॥९॥ मंत्रेण वैदिकेनाऽसौ

मंत्रयामास चोदरम् । तस्य मंत्रप्रभावेण दैत्यः संजीर्णतां गतः ॥१०॥ अपानवायुरत्युग्रो निःसृतो धूलिमुद्वहन् । तेन नादेन सर्वे ते विस्मिताः प्रबभूविरे ॥११॥ ततो मुनिः समुत्तस्थौ मुखप्रक्षालनाय च । क्षालयित्वा स हस्तादि संस्थितः स महाधने ॥१२॥ ततो वातापिना भ्रातैहीत्याहूतोऽभवत्तदा । उवाच मुनिशार्दूलस्ततस्तं दैत्यपुंगवम् ॥१३॥ स मृतो मे च मंत्रेण संजीर्णो जठरेऽधुना । अधुना त्वां हनिष्यामि दुष्ट ब्राह्मणहिंसकम् ॥१४॥ पलायत स तच्छ्रुत्वा वातापिर्भय-संकुलः । ततः सराजका विप्राः स्थापिता मुनिनाऽमुना ॥१५॥ तत्रैव स्वयमेनं तमगमत् दैत्यनायकम् । अगस्त्यः पृष्ठगं दृष्ट्वा समुद्रं शरणं ययौ ॥१६॥ वातापिस्तेन दैत्येंद्रः स्थापितः स्वजलेऽभवत् । ततस्तं जलाधिं विप्र उवाच क्रोधसंयुतः ॥१७॥ देहि दैत्यं समुद्र त्वं नोचेच्छापं ददाम्यहम् । ततोऽगस्त्यं समुद्रश्च जगाद भयसंकुलः ॥१८॥ स्वभावो मे महाभाग अतो नाऽहं ददामि तम् । दैत्या देवभयाद्विप्र शरणं मामुपागताः ॥१९॥ अन्ये पर्वतभूपाश्च न दत्तास्ते मया मुने । अतस्त्वां प्रार्थयामीह कृपां कुरु दयानिधे ॥२०॥ त्यक्त्वा दैत्यं मुनिश्रेष्ठं गच्छ त्वं प्रणमाम्यहम् । क्षुभितोऽभूत्ततोऽगस्त्यो गर्विष्ठोऽयं महोदधिः ॥२१॥ मदमस्य हरिष्यामि तादृशं न ददर्श ह । ततो मुनिर्विधातारं शरणं वै जगाम ह ॥२२॥ प्रणम्य लोकनाथं तं पप्रच्छ च जगद्गुरुम् ॥२३॥ अगस्त्य उवाच । स्वामिन् समुद्रसंमग्नो वातापिर्द्विजहिंसकः । तदर्थं जलधिं नाथ शोषयामि मदान्वितम् ॥२४॥ तत्रोपायं वद ब्रह्मन् तं करिष्यामि यत्नतः । त्वं सर्वज्ञश्च सर्वेषां पितामह विशेषतः ॥२५॥ एवं तस्य वचः श्रुत्वा तं जगाद महामुनिम् । अगस्त्यं लोकनाथस्तु हर्षयुक्तेन चेतसा ॥२६॥ ब्रह्मोवाच । शृणु पुत्र महाभाग गर्विष्ठोऽयं महोदधिः । अधर्मचारिणो दैत्या रक्षितास्तेन निश्चितम् ॥२७॥ वातापिरधुनाऽरक्ष्यः सत्कृतस्तेन पुत्रक । अतस्तच्छोषणार्थाय गणपं शरणं व्रज ॥२८॥ तस्य तद्वचनं श्रुत्वा जगाद स पितामहम् । कथं त्यक्त्वा विधे देवान् गणेशानं प्रशंससि ॥२९॥ ततस्तं मुनिमुख्यं स ब्रह्मोवाच प्रजापतिः । शृणु पुत्र महाभाग कथां पापप्रणाशिनीम् ॥३०॥ विघ्नकर्ता च तद्धर्ता गणेशोऽयं न संशयः । तेन विघ्नेश्वरो नाम्ना वर्तते सर्वमंडले ॥३१॥ विघ्नाः सत्तात्मकाः प्रोक्तास्तेषां स्वामी गणेश्वरः । सर्वसत्ताधरः पूर्णस्तस्मात्तं कथयाम्यहम् ॥३२॥ अन्यच्च शृणु पुत्र त्वं विनायक इति श्रुतिः । नायकैः सेव्यते सर्वैः स्वस्वकार्यार्थमादरात् ॥३३॥ नायकैर्वर्जितः साक्षात्तेन स्वाधीनतां गतः । संसृष्टं सकलं विश्वं कलांशेन महामुने ॥३४॥ स्वस्वाधिकारसंयुक्ता कलांशजविभूतयः । समुद्रस्तासु तं पुत्र चालितुं

न क्षमा वयम् ॥३५॥ अत्र ते वर्णयिष्येऽहमितिहासं पुरातनम् । श्रवणात् संशयस्ते च नाशमेष्यति निश्चितम् ॥३६॥ गोलोके राधया युक्तः कृष्णो गोलोकवासिभिः । उवास तत्र देवेशः सर्ववंद्यः प्रतापवान् ॥३७॥ सर्वेषां मदहंता स जातः स्वस्यैव तेजसा । अस्माकं पालको भूत्वा विघ्नहीनः स्वभावतः ॥३८॥ तथा राधाऽपि देवीनां मदस्य हरणं बलात् । कृत्वा वंद्या स्वयं भूत्वोवास विघ्नविवर्जिता ॥३९॥ त्रिपुरादिभिरुग्रैश्च परस्परविरोधतः । विघ्नयुक्ताः शिवाद्यास्ते शरणं त्वगमन् परम् ॥४०॥ अन्याशरणकृष्णस्य हृदि गर्वः समागतः । सततं मदयुक्तः स बभूव परमाद्भुतः ॥४१॥ अहं ब्रह्मेति यत् प्रोक्तं तदेवाऽहं न संशयः । मदाधारमिदं सर्वं तस्मान्नान्योऽस्ति मत्परः ॥४२॥ मदनुग्रहमात्रेण देवाः शंभुपुरोगमाः । शक्ताः स्वव्यवहारेषु तस्मान्नान्योऽस्ति मत्परः ॥४३॥ एवं मनसि गर्वेण मदेन च समाकुलः । मदयुक्ता तथा राधा बभूव मुनिसत्तम ॥४४॥ ततो विघ्नकरो विघ्नं चकार परमाद्भुतम् । स्वभक्तिभावदानार्थं शांतियोगार्थमादरात् ॥४५॥ विरराामैकदा युक्तो राधया वनमंडले । रतिक्रीडासमायुक्तो बभूवे कामसंयुतः ॥४६॥ तत्रैका नायिका तस्य प्रीतिदा विरजाऽभवत् । तया संस्मरणं सद्यः कृतं कृष्णस्य तत्क्षणे ॥४७॥ अधः स्थितां परित्यज्य राधां कृष्णो ययौ मुने । विरजां स तया सार्धं क्रीडासक्तो बभूव ह ॥४८॥ ततः संकुपिता राधा रतिभंगेन मानद । जगाद याः समीपस्था गोपिका वचनं तदा ॥४९॥ कुत्र दृष्टो महामानी कृष्णः स्त्रीलंपटाग्रणीः । तं मां वदत वै देव्यस्त्यजामि मनसा पतिम् ॥५०॥ ततस्तां गोपिका काचिदुवाच विनयान्विता । विरजाया मया राधे दृष्ट आश्रमसन्निधौ ॥५१॥ ततः सा क्रोधनाम्राक्षी रथोपरि ययौ स्थिता । विरजाश्रमसांनिध्यं गोपीभिः संवृता मुने ॥५२॥ तामागतां समाज्ञाय कृष्णश्चांतर्दधे भयात् । विरजा जलरूपा सा जाता भयसमन्विता ॥५३॥ तया न दृष्टः सस्त्रीको देवेशस्तत्र राधया । पुनः स्वमंदिरे गत्वाऽतिष्ठच्च क्रोधसंयुता ॥५४॥ ततः स प्रकटः कृष्णो बभूव ह चकार ताम् । स्त्रीरूपां जलभावस्थां चिक्रीड भृशहर्षितः ॥५५॥ संतोषेण समायुक्तां कृत्वा स विरजां ययौ । राधां द्वारसमीपे चागतं वीक्ष्य जगाद सा ॥५६॥ राधोवाच । किमर्थं लंपटोऽत्यंतमागतोऽसि ममांतिकम् । गच्छ तां विरजां देव कदा न त्वां स्पृशाम्यहम् ॥५७॥ मदीयसत्तया लोको रचितोऽयं मया पुरा । त्यक्त्वा लोकं मदीयं वै गच्छ त्वं यत्र ते रुचिः ॥५८॥ इत्यादिविविधैर्वाक्यैः पतिं निर्भत्स्य राधिका । शशाप क्रोधसंयुक्ता मृत्युलोके पतेति तम् ॥५९॥ ततः शप्तं च तं ज्ञात्वा श्रीदामा गोपनायकः ।

न्यभर्त्सयत् स तां क्रुद्धः कृष्णमित्रं प्रतापवान् ॥६०॥ तमतिक्रोधसंयुक्ता राधिका ह्यसुरो भव । शशाप सा मुनिश्रेष्ठ सोऽपि क्रोधयुतोऽभवत् ॥६१॥ राधां शशाप मर्त्येषु भव नारी त्वमंजसा। शतवर्षाणि कृष्णस्य वियोगेन समन्विता ॥६२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते कृष्णराधाशापवर्णनं नाम षट्षष्टितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ब्रह्मोवाच । एवं परस्परं शप्त्वा खेदयुक्ता बभूविरे । गतगर्वाश्च सर्वे ते विचारं चक्रुरादरात् ॥१॥ अहं गोलोकराजोऽहं सर्वाधीशो न संशयः । इयं प्रकृतिरूपा मे कृतौ केनापराधिनौ ॥२॥ कृष्णोऽहं सर्वदेवेश अपि मां विघ्न उत्थितः । अतो वै विघ्नराजः स गणेशः कुरुतेऽखिलम् ॥३॥ हिताहितं न संदेहस्तदाधारमिदं जगत् । सस्त्रीकः शरणं यामि ब्रह्माकारमतश्च तम् ॥४॥ एवं विचार्य देवेशः सस्त्रीको मित्रसंयुतः । पपात भगवान् कृष्णो मृत्युलोके महामुने ॥५॥ मथुरायां च देवक्यां वसुदेवात् समुद्भवः । कृष्णो यादववंशे वै तेषां स सुखदोऽभवत् ॥६॥ वृषभानुसुता जाता राधा सा गोकुले मुने । शंखचूडो बभूवाऽथ श्रीदामाऽसुरसत्तमः ॥७॥ ततश्च गोकुलं कृष्णः कंसस्यैव भयाद्ययौ । तत्र राधासमायुक्तो बभूव स जनार्दनः ॥८॥ ततो विघ्नेशमत्यंतं भेजतुस्तौ स्वभावतः । षोडशाक्षरमंत्रेण परे तपसि संस्थितौ ॥९॥ पुरश्चरणमेकं तौ चक्रतुः परमादरात् । बभूवतुस्ततो ध्यानसमायुक्तौ निरंतरम् ॥१०॥ तपस्त्यक्त्वा तस्य हृदि ध्यानयुक्तौ विशेषतः । तपसोऽधिकमुग्रं वै ध्यानं शास्त्रेषु संमतम् ॥११॥ संवत्सरान् स तत्रैव कृष्णश्चैकादश स्थितः । ततश्च मथुरायां स जगामाक्रूरसंयुतः ॥१२॥ शतवर्षं वियोगेन राधाकृष्णौ बभूवतुः । युक्तौ परमदुःखार्तौ ध्यायंतौ गणनायकम् ॥१३॥ ततस्तयोश्च संप्राप्तो योगः शांतिप्रदायकः । तेन संतोषमापन्नौ गाणपत्यौ बभूवतुः ॥१४॥ गते वर्षशते विप्र जग्मतुस्तौ सहानुगौ । वैशाखपूर्णिमायां वै मुने बदरिकाश्रमम् ॥१५॥ तत्र शंभुमुखा देवाः सस्त्रीकाश्च समागताः । यात्रार्थं गणनाथस्य मुनयश्च ययुर्मुदा ॥१६॥ शेषादयो महानागा राजानश्च विशेषतः । त्रिलोकस्था जनाः सर्वे जग्मुस्तत्र महामुने ॥१७॥ योगिनः कपिलाद्याश्च तत्राऽहं संगतो मुने । सर्वैर्महोत्सवस्तत्र वार्षिकः क्रियते सदा ॥१८॥ ततस्तं पूजयित्वा ते सर्वे चोपोषणान्विताः । स्थिताश्चक्रुः प्रतिपदि पारणं ते महामुने ॥१९॥ तत्र राधा च कृष्णश्च

मिलितौ गणपं निशि । ध्यायंतौ भावसंयुक्तौ जेपतुर्मंत्रमुत्तमम् ॥२०॥ ततस्तयोर्गणेशानो दर्शयामास चोत्तमम् । रूपं चतुर्भुजं साक्षाद्गजवक्रादिचिह्नितम् ॥२१॥ तं दृष्ट्वा सहसोत्थाय नेमतुश्चरणांबुजे । सरोमांचौ तुष्टुवतुः साश्रुनेत्रौ गणेश्वरम् ॥२२॥ राधाकृष्णावूचतुः । नमस्तुभ्यं पुष्टिपते नमः शंकरसूनवे । ब्रह्मभूताय देवाय सर्वसिद्धिप्रदाय ते ॥२३॥ स्वानंदवासिने तुभ्यं ब्रह्मपुत्राय ते नमः । सिद्धिबुद्धिपते ते वै गणेशाय नमो नमः ॥२४॥ हेरंबाय नमस्तुभ्यं नमो योगमयाय च । सर्वादये च सर्वेश सर्वज्ञाय नमो नमः ॥२५॥ निर्गुणाय नमस्तुभ्यं सगुणाय नमो नमः । गजाननाय वै तुभ्यमभेदाय तयोर्नमः ॥२६॥ शांतिरूपाय शांताय शांतिदाय महोदर । मूषकश्रेष्ठयानाय गाणपत्यप्रियाय ते ॥२७॥ अनंतानंतरूपाय भक्तसंरक्षकाय च । भक्तिप्रियाय देवाय भक्त्यधीनाय ते नमः ॥२८॥ चतुर्बाहुधरायैव नागयज्ञोपवीतिने । शूर्पकर्णाय शूराय परशोर्धर ते नमः ॥२९॥ विष्णुपुत्राय सर्वेषां पित्रे मात्रे नमो नमः । विनायकाय विप्राणां पुत्राय च नमो नमः ॥३०॥ सर्वेषां गर्वहंत्रे च सर्वेभ्यः सुखदाय ते । लंबोदराय विघ्नेश ब्रह्मनायक ते नमः ॥३१॥ किं स्तुवस्त्वां गणाधीश यत्र वेदादयः प्रभो । शंभुः शुकादयश्चैव बभूवुः कुंठिताः परम् ॥३२॥ आवां गर्वयुतौ जातौ ब्रह्माकारौ वृथा प्रभो । तव तत्र च विघ्नेन कृतं गर्वस्य खंडनम् ॥३३॥ साधूनां विघ्नदाता त्वं शांतियोगार्थमंजसा । असाधूनां विनाशाय ह्यतस्त्वां प्रणमावहे ॥३४॥ विघ्नयुक्ततया ढुंढे आवाभ्यां योगसेवया । साक्षात्कारकृतस्त्वं वै समीचीनमिदं कृतम् ॥३५॥ हृदि चिंतामणिं त्वां च पश्यावः सततं प्रभो । अतः स शुभदो विघ्नः संजातो नौ गजानन ॥३६॥ अधुना देहि विघ्नेश भक्तिं ते चरणांबुजे । दृढां यया च गर्वेण न भवावः समायुतौ ॥३७॥ इत्युक्त्वा तं ननृततुः प्रणम्यैव मुदान्वितौ । धन्यौ धन्यौ प्रब्रुवंतौ दर्शनाद्गणपस्य तौ ॥३८॥ ब्रह्मोवाच । जगाद गणनाथस्तौ ततो वै भक्तिभावितः । दृष्ट्वा ब्रह्मरसाह्लादयुतौ राधाजनार्दनौ ॥३९॥ पुष्टिपतिरुवाच । भो राधे कृष्ण मे वाक्यं शृणुतं जगदीश्वरौ । मदीयां भक्तिमत्यंतं संशयो न करिष्यथः ॥४०॥ संकटे स्मरणेनैव प्रकटः संभवाम्यहम् । यं यमिच्छथ आनंदं सफलः स भविष्यति ॥४१॥ भवत्कृतमिदं स्तोत्रं पठतां शृण्वतां नृणाम् । सर्वसिद्धिप्रदं पूर्णं भविष्यति सुरेश्वरौ ॥४२॥ मत्प्रीतिवर्धनं नित्यं वाञ्छितार्थकरं भवेत् । अंते स्वानंददं कृष्ण भविष्यति न संशयः ॥४३॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः । तौ तं हृदि विशेषेण पश्यंतौ तस्थतुर्निशि ॥४४॥ ततः पुनश्च गोलोके गतौ राधाहरी स्वके । बभूवतुरखंडैश्वर्यसंयुक्तौ

महामुने ॥४५॥ अतस्त्वं मदहीनश्च शरणं गणपं व्रज । अगस्त्य तेन ते वाञ्छां पूरयिष्यति स प्रभुः ॥४६॥ ब्रह्मांडं वर्तते तस्याऽऽधारेण मुनिसत्तम । सर्वत्र गणनाथोऽयं क्रीडति स्वेच्छया स्वयम् ॥४७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते राधाकृष्णगोलोकप्राप्तिवर्णनं नाम सप्तषष्टितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । श्रुत्वा कथां महारम्यामगस्त्यस्तमुवाच ह । प्रणयावनतो भूत्वा ब्रह्माणं सर्ववेदिनम् ॥१॥ अगस्त्य उवाच । भगवन् सर्वतत्त्वज्ञ कथितं सर्वमंजसा । त्वया तेनाहमत्यंतं सुतुष्टो ब्रह्मवित्तम ॥२॥ एतादृशो गणेशोऽयं तस्य ज्ञानं कथं भवेत् । तद्वदस्व दयासिंधो भवेयं दुःखवर्जितः ॥३॥ ततस्तं प्रत्युवाचेदं वचनं स पितामहः । ज्ञानयुक्तं गणेशस्य भक्तिदं परमाद्भुतम् ॥४॥ ब्रह्मोवाच । शृणु पुत्र प्रवक्ष्यामि ज्ञानं योगात्मकं महत् । यस्य त्वं गाणपत्यो वै भविष्यसि सुसेवनात् ॥५॥ देहदेहिमयं ब्रह्म स्वत उत्थानवाचकम् । जानीहि सर्वभावेन बोधरूपं विशेषतः ॥६॥ सांख्यं यद्वदति ब्रह्म परतोत्थानवाचकम् । बोधहीनस्वभावेन लभते स्वसुखस्थितम् ॥७॥ तयोरभेदयोगे वै स्वसंवेद्यमतः परम् । जानीहि सर्वसंयोगकारकं योगसेवया ॥८॥ पंच भेदा मतास्तस्य ताञ्छृणुष्व महामते । जानीहि भेदरूपं यदसत्यं शक्तिवाचकम् ॥९॥ सत्यं भानुमयं प्रोक्तमात्माकारेण तत्र तु । जानीहि संस्थितं पुत्र सदा भेदादिवर्जितम् ॥१०॥ तयोः संयोगकर्ता स विष्णुरानंदवाचकः । समात्मकं मतं ब्रह्म जानीहि सुखदं परम् ॥११॥ त्रयाणां नेति कर्ता च शंकरः परिकीर्तितः । अव्यक्तं ब्रह्म जानीहि तत् प्रोक्तं मोहवर्जितम् ॥१२॥ त्रिविधं मोहयुक्तं वै तुरीयं मोहवर्जितम् । तेषां संयोगभावेन स्वानंदः परिलभ्यते ॥१३॥ स्वसंवेद्यात् परं ब्रह्म नास्ति संयोगधारकम् । सर्वत्राऽयं निजानंदः स्वानंदे सकलो भवेत् ॥१४॥ अयोगवाचकं ब्रह्म निजानंदात् परं मतम् । संयोगहीनभावेन लभ्यते नात्र संशयः ॥१५॥ संयोगायोगयोर्योगे तयोर्नाशे महामुने । स एव योग आख्यातः शांतिरूपेण लभ्यते ॥१६॥ स एव गणनाथोऽयं जानीहि ब्रह्मनायकः । गकारश्चैव संयोगो णकारो योग उच्यते ॥१७॥ तयोः स्वामी स वेदेषु विचारय महामते । तमाराधय यत्नेन ततः सौख्यमवाप्स्यसि ॥१८॥ अधुना त्वं सुसंकष्टयुक्तस्तत्र कुरुष्व भो । चतुर्थी कृष्णपक्षस्य ध्यात्वा हृदि गजाननम् ॥१९॥

समुद्रगर्वं त्वं तेन हरिष्यसि महाद्भुतम् । तपोवनं तात गच्छ व्यवसायं करोम्यहम् ॥२०॥ गृत्समद उवाच । ब्रह्माणं स नमस्कृत्य ययौ स्वकतपोवनम् । षडक्षरेण विघ्नेशं तोषयन् मुनिसत्तमः ॥२१॥ सदा ध्यानरतो भूत्वा तताप तप उत्तमम् । संकष्टहरणीं प्राप्तां चतुर्थीं स चकार ह ॥२२॥ त्रिमासे प्रगते तुष्टो गणेशो व्रतसेवया । ध्यानेन तस्य प्रह्लाद तपसा भक्तिभावनः ॥२३॥ पंचम्यां कृष्णपक्षस्य बभूवाकाशवाक् परा । अगस्त्यस्तत्र शुश्राव तां वाणीं सुखदायिनीम् ॥२४॥ गच्छ त्वं पिब विघ्नेशं स्मृत्वा तं जलधिं मुने । वातापिं जहि तत्रस्थं तपस्तेजःसमन्वितः ॥२५॥ ततः स हर्षितो भूत्वा गत्वा जलधिसंनिधौ । गणेशं मनसा ध्यात्वा पपौ तं क्रोधसंयुतः ॥२६॥ शोषयित्वा जलं सर्वं संस्थितो मुनिसत्तमः । तेजसा ज्वालयामास वातापिं विप्रघातिनम् ॥२७॥ ततो देवगणाः सर्वे तुष्टुवुस्तं महामुनिम् । दैत्यांस्तत्र स्थितान् सर्वान् जघ्नुर्देवा उदायुधैः ॥२८॥ पुनर्गंगां समानीयोदधिमापूर्य तज्जलैः । भगीरथेन देवास्ते संस्थिता विगतज्वराः ॥२९॥ ततोऽगस्त्यः समागम्य वातापिनगरं प्रभुः । राजभिः पुष्कलं द्रव्यं गृहीत्वा स्वस्थलं ययौ ॥३०॥ लोपामुद्रां महातेजास्तोषयामास यत्नतः । पश्चात्तपसि संस्थोऽसावजपन् मंत्रमुत्तमम् ॥३१॥ जित्वा पंचविधं चित्तं योगींद्रो योगसेवया । ततो महायशाः शांतिमापेदे गणनायके ॥३२॥ पुनर्भक्त्या गणेशानं मयूरे तं समागतः । क्षेत्रे तत्रापूजयत् स नित्यं हर्षसमन्वितः ॥३३॥ एवं पुष्टिपतेश्चैव महिमा ते निरूपितः । संक्षेपेण मया दैत्य श्रृणु चिंतामणेः कथाम् ॥३४॥ इदं पुष्टिपतेश्चित्रं चरितं यः श्रृणोति वा । पठेच्च सकलं तस्य हस्तगं प्रभवेत् ध्रुवम् ॥३५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते पुष्टिपतिचरितं नामाष्टषष्टितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । स्वायंभुवो ददौ कन्यां कर्दमाय प्रहर्षितः । देवहूतिं च तस्यां स कपिलः संबभूव ह ॥१॥ साक्षाद्विष्णुः स्वयं देवस्तपसा कर्दमेन सः । आराधितश्च पुत्रोऽभूत्तत्त्वज्ञानप्रकाशकः ॥२॥ तं महोत्सवयुक्तश्चापूजयत् स महामुनिः । ब्रह्मादयः समायाता दर्शनार्थं गृहे मुनेः ॥३॥ उपवीतयुतं कृत्वा कर्दमो हर्षनिर्भरः । वेदान् सांगान् स्वपुत्राय ह्यध्यापयत यत्नतः ॥४॥ स च श्रवणमात्रेण जग्राह गुरुणोदितम् । स्वल्पकालेन संपूर्णविद्यायुक्तो बभूव ह ॥५॥

ननाम कर्दमः पुत्रमेकदा भक्तिसंयुतः । सस्त्रीकश्च महाभागं पप्रच्छ विनयान्वितः ॥६॥ कर्दम उवाच । त्वं साक्षाद्विष्णुरूपो मां शुक्रः सर्वार्थकोविदः । वद ज्ञानं महाबाहो तारयस्व भवार्णवात् ॥७॥ एवं पृष्टो महात्माऽसौ कपिलस्तमुवाच ह । सर्वसारमयं ज्ञानं गाणेशं तारकः प्रभुः ॥८॥ कपिल उवाच । शृणु तात मया दृष्टमेव तत् शांतिदायकम् । कथयामि महाज्ञानं शांतियोगप्रदं प्रभो ॥९॥ सर्वं मायामयं विद्धि पंचकं पंचकं यतः । त्रिविधं भ्रांतिरूपं यन्नानाभेदमयं भवेत् ॥१०॥ भ्रांतिधारकरूपं यत्तच्चतुर्थं प्रकथ्यते । तेषामभेदसंयोगे ब्रह्मयोगमयं मतम् ॥११॥ पृथ्वी जलं तथा तेजस्त्रिविधं भ्रांतिदायकम् । वायुर्भ्रांतिधरस्तत्र तुरीयात्मा प्रकथ्यते ॥१२॥ तेषामभेदसंयोग आकाशं ब्रह्म कथ्यते । भूतानां ज्ञानदं कस्माद्भूतं नैव प्रकीर्तितम् ॥१३॥ तथैव पंचकं सर्वं जानीहि मुनिसत्तम । मायामायिकसंयुक्तं ब्रह्म स्वानंदसंज्ञितम् ॥१४॥ कर्मेंद्रियाणि पंचैव पंचज्ञानेंद्रियाणि च । पंचतन्मातृकाः प्रोक्ता एवं जानीहि मानद ॥१५॥ पंच देवा निजे देहे कर्मेंद्रियविकाशकाः । तथा ज्ञानेंद्रियाणां च प्रकथ्यंते प्रकाशकाः ॥१६॥ स्थूलं सूक्ष्मं समं चैवात्मप्रतीतिप्रदायकम् । बिंदुः पंचममत्रस्थं देहपंचकमुच्यते ॥१७॥ स्वर्गो मृत्युश्च पातालं ब्रह्मांडं च तुरीयकम् । गुणेशः पंचमः पूर्णोऽडपंचकमुदाहृतम् ॥१८॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महामुने । योगिभिर्वर्णहीनाश्च वर्णपंचकमुच्यते ॥१९॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा । आश्रमैर्हीनरूपश्चाश्रमपंचकमुच्यते ॥२०॥ अंडजः स्वेदजो विप्रेरुद्भिज्जो जारजः स्मृतः । मानसश्चैव विप्रेंद्र योनिपंचकमुच्यते ॥२१॥ रक्तः श्वेतस्तथा श्यामो नीलः पीतश्च पंचमः । एवं कथयितुं रंगपंचकं न प्रशक्यते ॥२२॥ देहेषु देहरूपं यदभिमानेन पंचधा । देहिपंचकमेतच्च ज्ञातव्यं मुनिसत्तम ॥२३॥ शक्तिः सूर्यस्तथा ब्रह्मा विष्णू रुद्रो महामते । गुणपंचकमित्युक्तं भिन्नभावधरं पितः ॥२४॥ शक्तिः सूर्यश्च विष्णुश्च शिवश्चाऽत्र तुरीयकः । गणेशः पंचमो विप्रैः पंचायतनमुच्यते ॥२५॥ प्रकृतिः पुरुषश्चैव स्वतं उत्थानसंज्ञितम् । परतोत्थानरूपं च संयोगः पंचमः स्मृतः ॥२६॥ असद्देहेषु सद्भिश्चैरानंदश्चोभयात्मकः । अव्यक्तश्च निजानंदो नैजं पंचकमुच्यते ॥२७॥ देहो देही च बोधाख्यं सांख्यमत्र चतुर्थकम् । पंचमं च स्वसंवेद्यं भवपंचकमुच्यते ॥२८॥ प्रकृत्यालयसंज्ञश्च विदेहो भवप्रत्ययः । उपायप्रत्ययो योगो योगपंचकमुच्यते ॥२९॥ एवं सर्वं च जानीहि पंचकं पंचकं परम् । मयाऽशक्यं कथयितुं तस्मान् मुख्यं प्रकीर्तितम् ॥३०॥ तत्र योगे महाशांतिर्लभ्यते योगसेवया । योगाच्च न परं ब्रह्म वेदेषु परिकीर्तितम् ॥३१॥ सर्वब्रह्मसुयोगस्य योगस्तेन महामुने ।

न योगे कस्यचिद्भावो ब्रह्मणश्च प्रजापते ॥३२॥ गृत्समद उवाच । एवं पुत्रं वदंतं स प्रणिपत्य महामुनिः । उवाच कर्दमो यज्ञं योगेप्सुः परमाहतः ॥३३॥ कर्दम उवाच । केनोपायेन भो वत्स योगशांतिः प्रलभ्यते । तदर्थं पूजनीयं किं तद्वदस्व जनार्दन ॥३४॥ कपिल उवाच । गणेशभजनं मुख्यं शांतियोगप्रदं मतम् । योगाकारस्वरूपं तं ब्रह्मेशं भज मानद ॥३५॥ सर्वादिः सर्वपूज्योऽयं सर्वाधारो महामुने । य आदिः प्रलयांते स तिष्ठति श्रुतिसंमतम् ॥३६॥ ज्येष्ठराजं गणेशानं वेदेषु प्रवदंति तम् । गणाः समूहरूपाश्च तेषां स्वामी प्रकथ्यते ॥३७॥ नानाजगत्स्वरूपं वै देहरूपं कृतं मुने । महात्मना तेन कृतं नानाब्रह्ममयं शिरः ॥३८॥ यस्माज्जातमिदं यत्रांते गच्छति महामते । तद्वेदे गजशब्दाख्यं शिरस्तेन गजाननः ॥३९॥ त्रिविधं भेदयुक्तं यदखंडं वै तुरीयकम् । तयोर्योगे गणेशोऽयं देहमस्तकयोगतः ॥४०॥ चित्तं पंचविधं प्रोक्तं तत्र मोहश्च पंचधा मोहरूपा महासिद्धिर्बुद्धिर्वै मोहधारिका ॥४१॥ तयोः स्वामी गणाधीशश्चित्ते नित्यं प्रतिष्ठितः । चिंतामणिर्महाभागो लभ्यते योगसेवया ॥४२॥ पंचधा चित्तमुत्सज्य तदैश्वर्यं तथैव च । योगशांतिमयः सद्यः प्राप्यते ब्रह्मणस्पतिः ॥४३॥ तस्मात्त्वं भज मंत्रेणैकाक्षरेण महामुने । तेन तुष्टो गणेशानो योगं दास्यति शांतिदम् ॥४४॥ एवमुक्त्वा महायोगी कपिलस्तत्त्व धारकः । विरराम महासाधो विष्णुः प्रह्लाद सोऽव्ययः ॥४५॥ ततः प्रणम्य तं पुत्रं कपिलं कर्दमो मुनिः । ययौ तपोवनं सद्यस्तताप परमं तपः ॥४६॥ एकाक्षरविधानेन परितुष्टो गजाननः । योगं शांतिमयं तस्मै प्रददौ भक्तवत्सलः ॥४७॥ कर्दमः शांतभावेन गणेशमभजत् परम् । विचचार महायोगी धरणीं लोकधारकः ॥४८॥ देवहूतिश्च तत्रैव योगं चासाधयत् परम् । गणेशं हृदि भावेन धृत्वा कपिलसन्निधौ ॥४९॥ क्रमेण शांतिमापन्ना चित्तं त्यक्त्वा महासती । चिंतामणौ तदाकारा बभूव भ्रमवर्जिता ॥५०॥ तां दृष्ट्वा सिद्धिमापन्नां कपिलः स ययौ ततः । गंगाया दक्षिणे तीरेऽभजत गणनायकम् ॥५१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते देवहूतिकर्दमशांतिप्राप्तिवर्णनं नामैकोनसप्ततितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । एकदा कपिलस्यैवाश्रमं देवपतिर्ययौ । सर्वामरसमायुक्तस्तं ननाम कृतांजलिः ॥१॥ अपराह्णे च संप्राप्तमिंद्रं दृष्ट्वा महामुनिः । न्यमंत्रयत् क्षुधायुक्तं सर्वैर्योगीश्वरो मुदा ॥२॥ सिद्धियुक्तं गणेशानं ध्यात्वा ह्यमृतमुत्तमम् । देवार्थं कल्पयित्वा स भोजयामास तेन तान् ॥३॥ पृथिव्यमृतभोगेन संतुष्टः सुरनायकः । मुनये वायुनाऽऽनाय्य प्रददौ मणिमुत्तमम् ॥४॥ गणेशभूषणं चिंतामणिर्मुख्यं प्रकथ्यते । योगी धृत्वा तमात्मानं मन्यते स कृतार्थकम् ॥५॥ कपिलस्तत्र मनसि विचारमकरोत् परम् । गणेशोऽहं न भिन्नश्च योगमार्गपरायणः ॥६॥ अतो गणेशदेवेन प्रेरितोऽयं मणिर्महान् । कंठे च तं बबंधाऽसौ यथा गणपतिस्तथा ॥७॥ तं दृष्ट्वा हर्षिता देवा सेन्द्राः स्वस्वस्थलं ययुः । कपिलः स्वाश्रमे तत्र संस्थितो मणिसंयुतः ॥८॥ प्रल्हाद उवाच । स्वानंदवासकारी च गणेशो ब्रह्मनायकः । तस्येन्द्रेण मणिर्योगिन् कथं लब्धो वदस्व माम् ॥९॥ गृत्समद उवाच । शृणु प्रह्लाद माहात्म्यं चिंतामणिसमुद्भवम् । कथयामि च ते प्रीत्या सर्वपापप्रणाशनम् ॥१०॥ एकदा विष्णुना पूर्वं तपस्तप्तं सुदारुणम् । तेन शांतिरनुप्राप्ता षडक्षरविधानतः ॥११॥ तस्मै भक्तिपरीक्षार्थं ददौ चिंतामणिं प्रभुः । गणेशो भक्तिदानार्थं चिंतितार्थप्रदायिनम् ॥१२॥ विष्णुना पूजने क्षिप्तो मणिश्चिंतामणिः प्रभो । अहं भक्तो गणेशस्य न योग्यो धारणे मणिः ॥१३॥ भूषणं गणनाथस्य पूजनीयं विशेषतः । न धार्यं देवदासैस्तत् पूजा कार्या च नित्यदा ॥१४॥ शांतियोगेन विघ्नेशो मया हृदि हृतः स्वके । न भिन्नस्तदपि स्वामी स दासोऽहं स्वभावतः ॥१५॥ ततो बहुगते काल इन्द्रस्तपसि संस्थितः । एकाक्षरविधानेनाऽतोषयद्गणनायकम् ॥१६॥ बभूव युक्तो ध्यानेन सततं देवनायकः । योगयुक्तः क्रमेणैव गाणपत्यो बभूव सः ॥१७॥ शांतिं प्राप्य स्वयं देवो गणेशाभेदतां गतः । आययौ स्वगृहं पश्चाद् देवराज्यं चकार ह ॥१८॥ एतस्मिन्नंतरे दैत्यगृहे शुश्राव केशवः । अशरीरां महावाणीं शृणु तत् कथयामि ते ॥१९॥ चिंतामणिं महाविष्णो देहीन्द्राय महामते । शांतियोगधरायाद्य मद्भक्ताय ददाम्यहम् ॥२०॥ श्रुत्वाऽऽकाशभवां वाणीं ययौ विष्णुर्ददौ परम् । महेंद्रायामरावत्यां मणिं तं चिंतितार्थदम् ॥२१॥ मघवा दासभावेन संस्थाप्याऽपूजयन् मणिम् । न योगमदतां प्राप्तो महेंद्रश्च प्रतापवान् ॥२२॥ तं मणिं कपिलं दृष्ट्वा शांतियोगधरं प्रभुम् । ददौ तस्मै महेंद्रः स भावयुक्तेन चेतसा ॥२३॥ अयं सिद्धेश्वरः साक्षाद्योग्यः संधारणे मणेः । वयं गृहस्थसंशीला न योग्या इत्यधारयत् ॥२४॥ एवं क्रमेण जानीहि चिंतामणिसमागमम् । कपिलः स्वगले नित्यं

बबंध गणराजवत् ॥२५॥ गते कियति काले वै कपिलस्याश्रमं ययौ । मृगयाभिरतो दैत्यो गणासुर इति स्मृतः ॥२६॥ सेनां बहिः समास्थाप्य एकाकी मुनिमाययौ । कपिलं प्रणनामैव कृतांजलिपुटः स्थितः ॥२७॥ विनीतं तं विलोक्यैव कपिलस्तमुवाच ह । कोऽसि कस्मादिहाऽऽयातो वद सर्वं नरोत्तम ॥२८॥ गणासुर उवाच । गणासुर इति ख्यातो नाम्नाऽहं मुनिसत्तम । मृगयाभिरतो ह्यत्र दैवेनैवोपसादितः ॥२९॥ तवाश्रमे क्षुधायुक्तः श्रांतवाहन एव च । ससैन्यः सहसाऽऽगत्य संतृप्तः सुखदायके ॥३०॥ जलं फलान्यहं पीत्वा भक्षयित्वा ससैनिकः । दर्शनार्थं समायातः सेना मे सरसि स्थिता ॥३१॥ त्वद्दर्शनेन निष्पापो जातोऽहं मुनिसत्तम । आज्ञां देहि गमिष्यामि ससैन्यो नगरं स्वकम् ॥३२॥ तस्य तद्वचनं श्रुत्वा संतुष्टः कपिलोऽवदत् । ससैन्यो भुंक्ष्व किंचित्त्वं मद्दत्तं नृपसत्तम ॥३३॥ ममाश्रमे च दैत्येंद्र क्षुधितस्त्वं समागतः । अतस्त्वां प्रार्थये भूप अतिथिं सुसमागतम् ॥३४॥ तथेति संस्थितस्तत्र गणदैत्यः प्रतापवान् । उक्त्वा विनयसंयुक्तः कपिलेन सुसत्कृतः ॥३५॥ ततः कपिलशिष्येण सेनाऽऽनीता गणस्य वै । सेनया सह दैत्येशं पूजयामास तं मुनिः ॥३६॥ चिंतामणिं स संपूज्य प्रार्थयामास भोजनम् । यथारुचि च सर्वेषां तथा देयं महामणे ॥३७॥ ततो मणिप्रसादेन षड्रसैः संयुतं परम् । स्थितं पात्रेषु सर्वत्र प्रेषितं त्वन्नमादरात् ॥३८॥ ततस्तैर्भुक्तमत्यंतं स्वादयुक्तं विशेषतः । ससैन्यो गणदैत्योऽभूद्विस्मितो चेतसा भृशम् ॥३९॥ मुनिं प्रणम्य दैत्येश आर्थयत्तं महामणिम् । न ददौ तं मुनिश्रेष्ठो गाणेशं भूषणं मणिम् ॥४०॥ ततो मुनिं तिरस्कृत्य हस्तात्तस्य प्रगृह्य तम् । मणिं स प्रययौ स्थानं हर्षनिर्भरमानसः ॥४१॥ मुनिः क्षुब्धो महाभाग तस्य नाशाय दुर्मतेः । विचारमकरोच्चित्ते मणिग्रहणलालसः ॥४२॥ सुसाधुवदहो दैत्योऽविनीतः सुसमागतः । चकार कर्म प्रह्लाद पश्य तत् जातिवत् परम् ॥४३॥ अतो दुष्टोऽविनीतश्च न विश्वास्यः कदाचन । दुष्टसंगनियोगेन ज्ञानभ्रंशः प्रजायते ॥४४॥

॥ ओमिति श्रीमदांत्य पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते चिंतामणिहरणं नाम सप्ततितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ प्रल्हाद उवाच । कोऽसौ गणासुरो दैत्यो येन चासत्कृतो मुनिः । समर्थः कपिलः साक्षात् प्रलयाग्नि-समद्युतिः ॥१॥ यस्य क्रोधयुता दृष्टिः सगरान् प्रददाह सा । तं तिरस्कृत्य जीवन् स कथं स्वनगरे गतः ॥२॥ गृत्समद उवाच । शृणु प्रह्लाद यत्नेन गणासुरविचेष्टितम् । सर्वं वदामि पापघ्नं गणेशचरिताश्रितम् ॥३॥ अभिजिन्नाम राजर्षिरपुत्रः संबभूव ह । पुत्रार्थं स वनं राजा ययौ त्यक्त्वा स्वराज्यकम् ॥४॥ भ्रमन् ददर्श योगीशं वैशंपायनमंजसा । तं प्रणम्य सपत्नीकः पप्रच्छ विनयान्वितः ॥५॥ पुत्रप्राप्तेरुपायं मे वद सर्वज्ञ ते नमः । मुनिना मंत्रराजस्तु दत्तस्तस्मै प्रजापते ॥६॥ चातुर्मास्यप्रयोगं तं विधियुक्तं नृपस्य सः । उपदिश्य ततस्तीर्थं प्रभासं संस्थितोऽभवत् ॥७॥ अभिजित्तं प्रणम्यैव सस्त्रीकः प्रययौ महत् । तीर्थं तत्र यथायोग्यमनुष्ठानपरोऽभवत् ॥८॥ तत्र ब्रह्मा तपस्तेपे सरस्वत्या समन्वितः । स्नानार्थं सुतया युक्तः कदाचित् स जगाम ह ॥९॥ तत्रैकवस्त्रसंयुक्तां विधिर्दृष्ट्वा सरस्वतीम् । यौवनस्थां कुचाभ्यां तां रूपिणीं विस्मितोऽभवत् ॥१०॥ अकस्माज्जलमध्येऽसौ कामबाणार्दितोऽभवत् । पुत्रीभावं समागृह्य चंचलं चित्तमाददे ॥११॥ कामेनात्यंतमुग्रेण पीडितस्य जगद्गुरोः । वीर्यं तस्यास्खलत्तत्र जलमध्ये सुरेश्वर ॥१२॥ ततः सुमनसा युक्तः सत्यलोकं ययौ विधिः । प्रयोगोऽभिजितः सोऽथ समाप्तस्तद्दिनेऽभवत् ॥१३॥ सस्त्रीकः स्नानसिद्ध्यर्थं ययौ तीर्थं नृपस्तदा । तृषिता तस्य पत्नी सा जलपानरताऽभवत् ॥१४॥ दैवयोगेन तद्वीर्यं ब्रह्मणो वारिणा सह । तस्या उदरगं जातममोघ-मसुरोत्तम ॥१५॥ राजा समाप्य तत् सर्वं मंत्रानुष्ठानमादरात् । ययौ स्वनगरं पूर्णं चक्रे वै राज्यमुत्तमम् ॥१६॥ कालेन सुषुवे राज्ञी पुत्रं सा चारुहासिनी । तेजोयुक्तं महावीर्यं लक्षणैरुपशोभितम् ॥१७॥ जातकर्मादिकं राजा चकार विधिवद् द्विजैः । दत्त्वोपवीतदानं स वेदाभ्यासे मतिं ददौ ॥१८॥ स्वल्पकालेन पुत्रोऽसौ गणो नाम्ना महाबलः । वेदशास्त्रनिधि-र्जातस्ततोऽयात् स वनं स्वयम् ॥१९॥ मार्गे च सहसाऽऽगत्य शुक्रः पंचाक्षरीं ददौ । तस्मै दीक्षां शिवस्याऽसौ तथा चक्रे स भावतः ॥२०॥ शिवं ध्यात्वा तपस्तेपे महोग्रं वायुभक्षकः । दशवर्षसहस्रैस्तं ययौ भक्त्या सदाशिवः ॥२१॥ आगतं शंकरं दृष्ट्वाऽपूजयद् भक्तिभावतः । तुष्टाव विविधैस्तोत्रैर्वरदं तं जगाद सः ॥२२॥ आरोग्यादिसमायुक्तं त्रिगुणान्न भयं च मे । त्रैलोक्यराज्यमुग्रं वै देहि मे त्वं सदाशिव ॥२३॥ ओमित्युक्त्वा महादेवः स्वस्थानं प्रजगाम ह । गणश्च स्वगृहं दैत्य ययौ परमहर्षितः ॥२४॥ सर्वानानंदयामास सुहृदः पितरौ स्वकौ । ततो विजिग्ये पृथिवीं सेनया स्वेन तेजसा ॥२५॥

ततो पित्राऽभिषिक्तोऽभूत् स्वराज्ये वनगेन सः । सपत्नीकेन भूपालो गणः स्थाने बभूव ह ॥२६॥ ततो दैत्यैः समायातैर्नानादिग्भ्यो नृपो गणः । तैर्युक्तः सकलां पृथ्वीं विजिग्ये द्वीपसंयुताम् ॥२७॥ पातालं स ततो नागैर्जिगाय बलसंयुतः । युद्धं कृत्वा महाघोरं ततः स्वर्गं ययौ गणः ॥२८॥ स्वर्गं जित्वा सहेंद्रैः स ततो ब्रह्माणमंजसा । विष्णुं शिवं क्रमेणैवाजयत्तेजःसमन्वितः ॥२९॥ ततस्तान् करदान् कृत्वा स्थापयामास देवपान् । स्वस्वस्थानेषु तत्रैकं दैत्यं न्यस्य धरां ययौ ॥३०॥ एवं त्रैलोक्यराज्यं स जित्वा सर्वांश्चकार ह । ततश्चिंतामणिं दुष्टो जहार कपिलस्य सः ॥३१॥ कपिलो गणनाथस्य भक्तः परमभाविकः । ततप स तपो घोरं गणेशस्य महात्मनः ॥३२॥ वर्षेणैकेन देवेशो ययौ मूषकवाहनः । सिद्धिबुद्धिसमायुक्तो बोधयत्तं महामुनिम् ॥३३॥ कपिलस्तं गणाध्यक्षमागतं पूजयन् प्रभुम् । तुष्टाव साश्रुनेत्रश्च प्रेमगद्गदया गिरा ॥३४॥ कपिल उवाच । नमस्ते विघ्नराजाय नमस्ते विघ्नहारिणे । अभक्तानां विशेषेण विघ्नकर्त्रे नमो नमः ॥३५॥ आकाशाय च भूतानां मनसे चामरेषु ते । बुद्ध्यै चेंद्रियवर्गेषु त्रिविधाय नमो नमः ॥३६॥ देहानां बिंदुरूपाय सोऽहंरूपाय देहिनाम् । तयोरभेदभावेषु बोधाय तु नमो नमः ॥३७॥ सांख्याय वै विदेहानां सयोगानां निजात्मने । चतुर्णां पंचमायैव सर्वत्र तु नमो नमः ॥३८॥ नामरूपात्मकानां वै शक्तिरूपाय ते नमः । आत्मनां रवये तुभ्यं हेरंबाय नमो नमः ॥३९॥ आनंदानां महाविष्णुरूपिणे नेतिधारिणाम् । शंकराय च सर्वेषां संयोगे गणपाय ते ॥४०॥ कर्मणां कर्मयोगाय ज्ञानयोगाय जानताम् । समेषु समरूपाय लंबोदर नमोऽस्तु ते ॥४१॥ स्वाधीनानां गणाध्यक्ष सहजाय नमो नमः । तेषामभेदभावेषु स्वानंदाय च ते नमः ॥४२॥ निर्मायिकस्वरूपाणामयोगाय नमो नमः । योगानां योगरूपाय गणेशाय नमो नमः ॥४३॥ शांतियोगप्रदात्रे ते शांतियोगमयाय च । किं स्तौमि तत्र देवेश अतस्त्वां प्रणमाम्यहम् ॥४४॥ जगाद गणनाथो वै ततस्तं भक्तमुत्तमम् । हर्षेण महता युक्तो हर्षयन् मुनिसत्तमम् ॥४५॥ गणेश उवाच । त्वया कृतं मदीयं यत् स्तोत्रं योगप्रदं भवेत् । धर्मार्थकाममोक्षणां दायकं च न संशयः ॥४६॥ वरं वरय दास्यामि मत्तस्त्वं भक्तियंत्रितः । त्वत्समो न भवेत्तात तत्त्वज्ञानप्रकाशकः ॥४७॥ तस्य तद्वचनं श्रुत्वा कपिलस्तमुवाच ह । त्वदीयामचलां भक्तिं देहि विघ्नेश मे पराम् ॥४८॥ त्वदीयभूषणं दैत्यो गणो हृत्वा जगाम ह । मत्तश्चिंतामणिं नाथ जहि तं मणिमानय ॥४९॥ स्मरामि चेद्यदाऽहं त्वां तदात्मानं प्रदर्शय । एनमेव वरं पूर्णं देहि नाथ नमोऽस्तु ते ॥५०॥ गृत्समद उवाच । तस्य तद्वचनं श्रुत्वा हर्षयुक्तो गजाननः । उवाच

तं महाभागं प्रेमयुक्तं विशेषतः ॥५१॥ गणेश उवाच। त्वया यत् प्रार्थितं विष्णो तत् सर्वं प्रभविष्यति। तव पुत्रो भविष्यामि गणासुरवधाय च ॥५२॥ एवमुक्त्वांतर्दधेऽसौ ढुंढिराजः प्रतापवान्। मुनिस्तं हृदि संचिंत्य स्वाश्रमस्थो बभूव ह ॥५३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते कपिलवरप्रदानं नामैकसप्ततितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच। ततः स्वल्पे गते काले मुनिर्होमपरायणः। हुत्वाऽग्निं ध्याननिष्ठोऽभूद्गणेशस्य महात्मनः ॥१॥ ततोऽग्निकुंडमध्याद्वै गणेशो निःसृतः पुरः। चतुर्बाहुधरो रक्तः स बभौ परमश्रिया ॥२॥ सिद्धिबुद्धि-समायुक्तं सिंहगं परशोर्धरम्। एकदंतं विशालाक्षं शुंडादंडविराजितम् ॥३॥ नाभिशेषं क्वणत्पादं ददर्श कपिलः परम्। उत्थाय तं ननामाऽसौ भक्तियुक्तेन चेतसा ॥४॥ पूजयित्वा प्रतुष्टावाथर्वशीर्षभवेन वै। स्तोत्रेण तेन संतुष्टस्तमुवाच गजाननः ॥५॥ गणेश उवाच। तव पुत्रो मुनेऽहं वै जातो गणवधाय च। हनिष्यामि महादैत्यं ग्रहीष्यामि महामणिम् ॥६॥ ततस्तं मुनिशार्दूलः प्रणम्य प्रत्युवाच ह। धन्यं मे जन्म देवेश पितरौ तप आश्रमः ॥७॥ विद्या व्रतादिकं सर्वं तव पादस्य दर्शनात्। पुत्रभावेन संप्राप्तस्तारणान् मां न संशयः ॥८॥ ततस्तस्य महाभक्तिं चक्रे वै नित्यमादरात्। तेन भक्तिरहस्यं यत्तज्ज्ञात्वा दुःखितोऽभवत् ॥९॥ ततः स्वात्मानमत्युग्रं निंदयामास मानसे। अहो मानवरूपोऽहं शांतियोगेन संगतः ॥१०॥ मया ज्ञानमदेनैव गले चिंतामणिर्धृतः। गणेशवन्न संदेहस्तद्भक्त्या हीनचेतसा ॥११॥ देवस्य समता नैव कर्तव्या भजनार्थिना। ब्रह्मणस्पतिनामा स गणेशश्चैकराट् बभौ ॥१२॥ तस्य देहे मदर्थं वै सत्ता पूर्णा प्रवर्तते। योगिदेहेन सा सत्ता तस्मात्तं भजते महान् ॥१३॥ चिंतामणिर्मया प्राप्तः पूजायां स्थापितो न सः। गले धृतो मया मोहाद्गत-श्चिंतामणिर्ध्रुवम् ॥१४॥ देवस्य भक्तिमाहात्म्यात् प्राप्तं भक्तेन भूषणम्। वस्त्रं वाहनकार्यं च पूजनीयं न संशयः ॥१५॥ गंधपुष्पादिकं तस्योच्छिष्टं धार्यं विशेषतः। नैवेद्यं भक्षणीयं वै सदा भक्त्याऽऽदरेण च ॥१६॥ न देवसमता कार्या दासैर्वै नित्यमादरात्। भययुक्तेन संसेवा कार्या भक्तेन धीमता ॥१७॥ मदीयसंगतश्चिंतामणिश्चाहो सुदुःखितः। गतो दैत्यकरे साक्षादसुरस्तं प्रपीडयेत् ॥१८॥ अतो गणेशमत्यंतं प्रार्थयामि वधाय च। गणस्य तद्वधाच्चिंतामणिः सद्यः

सुलभ्यते ॥१९॥ विचार्येति स योगींद्र एकदंतं जगाद च । स्वामिन् हत्वा गणं शीघ्रं मणिमानय विघ्नप ॥२०॥ कपिलस्य वचः श्रुत्वा हृष्टस्तं त्वेकदंतकः । जगाद ते प्रियं तात करिष्यामि न संशयः ॥२१॥ एकदंतेन तद्रात्रौ स्वप्नो दत्तो गणस्य च । स्वप्नेन भ्रांतरूपोऽभूद्विचारमकरोत् स्वयम् ॥२२॥ सिंहारूढश्चतुर्बाहुः कुंजराननधारकः । परश्वधधरः क्रूरः कोऽयं स्वप्ने प्रदर्शितः ॥२३॥ कपिलेन समादिष्टो मस्तकं मे च सोऽच्छिनत् । मणिं समागृह्य ददौ कपिलाय महात्मने ॥२४॥ अयं स्वप्नो मया दुष्टो दृष्टः किं वा भविष्यति । अतः कपिलनाशार्थं यामि सैन्यसमन्वितः ॥२५॥ ततो धृत्वा च शस्त्रादीन् नानावीरसमन्वितः । रात्रौ कपिलमुग्रोऽसौ ययौ हंतुं तदाश्रमम् ॥२६॥ प्रभाते दैत्यराजः स संप्राप्तः कपिलाश्रमम् । शिष्यैर्दृष्टो महादुष्टः कपिलं ते ययुस्ततः ॥२७॥ स्वामिन् समागतो दैत्यो गणनामा ससैनिकः । ऊचुः शिष्याः प्रणम्यैनं कपिलं भयसंयुताः ॥२८॥ ततो गणपतिं नत्वा वधार्थं तस्य वै मुनिः । प्रार्थयामास शीघ्रं स गणस्य विनयान्वितः ॥२९॥ ततः क्रुद्धो गणेशानः सिंहारूढो ययौ गणम् । गणेन पुरुषो दृष्टः स्वप्नगः स च निश्चितम् ॥३०॥ ततो गणेन योधाश्च दैत्येशाः प्रेरिता रणे । उदायुधा महोग्रास्त आययुर्देवसंनिधिम् ॥३१॥ तान् दृष्ट्वा कुपिता देवी सिद्धिर्वामांगसंस्थिता । गणेशं मनसि ध्यात्वा पुत्रं सा निर्ममेऽतुलम् ॥३२॥ तेन सर्वं हतं सैन्यं प्रेरितेन गणस्य वै । सिद्ध्या पलायत ततः सैन्यं तस्य दिशो दश ॥३३॥ विजयी पुरुषः सोऽपि गणेशं प्रणनाम ह । सस्त्रीकं तेन नाम्ना स कृतो लक्ष इति प्रभुः ॥३४॥ जगति ब्रह्मणि त्वं वै तिष्ठ सर्वत्र पुत्रक । नरेण यादृशं लक्षं क्रियते भुंक्ष्व तादृशम् ॥३५॥ हृदि लक्षप्रतापी त्वं सर्वेभ्यो नाऽत्र संशयः । सिद्धिपुत्र महाभाग मद्भक्तान् रक्ष यत्नतः ॥३६॥ बुद्धिपुत्रः स्वयं लाभः फलदाता भविष्यति । अनुसारेण लक्षस्य तव भ्राता महाबलः ॥३७॥ भुक्तौ मुक्तौ तथा पापे हृदि ब्रह्मणि जंतवः । लक्षं कुर्वंति ये तेषां लाभश्चैतादृशो भवेत् ॥३८॥ एवमुक्त्वा स्वपुत्रं तं लक्षमेकरदस्ततः । युद्धाय स ययौ तत्र यत्र दैत्याधिपोऽभवत् ॥३९॥ तमागतं स विज्ञाय प्रतापी स गणासुरः । हंतुं शस्त्रममोघं यदाददे धनुषि स्वयम् ॥४०॥ तावच्च गणराजेन पर्शुना तूग्रवेगिना । दैत्यराजगणस्यैव शिरश्छिन्नं पपात सः ॥४१॥ हाहाकृत्वाऽसुराः सर्वे पातालं विविशुस्ततः । देवा हर्षयुताः सर्वे मुनयस्ते ययुर्विभुम् ॥४२॥ कपिलं सांत्वयामासागृह्य दत्वा मणिं पुनः । कपिलायैकदंतस्तु कपिलः प्रणनाम तम् ॥४३॥ जगाद भक्तिसंयुक्तः कपिलो गणनायकम् । स्वामिंस्त्वदीयमेतद्वै भूषणं तद् गृहाण भोः ॥४४॥ अस्माभिः पूजनीयं



तच्चायोग्यं धारणे प्रभो । अतस्त्वमेव विघ्नेश स्वगले धारयस्व तत् ॥४५॥ चित्ते निवासिना स्वामिंस्त्वया ज्ञातमतः प्रभो । मदीयं चिंतितं सर्वं तादृशं सफलं कृतम् ॥४६॥ अतस्ते भविता चिंता मणिर्नाम न संशयः । एवमुक्त्वा स्वयं तस्यारोपयत्तं मणिं गले ॥४७॥ ततः स मणिमादाय स्वानंदं चैकदंतकः । अंतर्धानं चकाराऽपि देवेशा विस्मिता ययुः ॥४८॥ कपिलेन सदा ध्यानबलेन हृदये विभुः । चिंतामणिः सुभावेन पूजितस्तत्त्वबोधिना ॥४९॥ एवं गणासुरं हत्वा भक्तिं दत्वा सुरेश्वर । कपिलायैकदंतस्तु चक्रे वै साधुरक्षणम् ॥५०॥ इदमेकरदस्यैव चरितं सर्वदं परम् । शृणुयात् सर्वपापघ्नं पठेद्वा तस्य संभवेत् ॥५१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते गणासुरवधो नाम द्विसप्ततितमोऽध्यायः ।



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । एवं नानावतारा य एकदंतस्य धीमतः । तेषां चरित्रविस्तारं मया वक्तुं न शक्यते ॥१॥ यत्र वेदादयो दैत्य न समर्था भवंति वै । तत्र कोऽहं महासाधो स्वल्पबुद्धिप्रधारकः ॥२॥ गणेश एकदंतोऽयं सोऽहं ब्रह्मणि संस्थितः । देहिनां ज्ञानदाने च स्वस्वव्यापारके प्रभुः ॥३॥ एकदंतः स सर्वेशः पूर्णयोगस्य धारकः । तत्रार्थांतरभावेन ज्ञातव्यो विबुधैः परः ॥४॥ एकवाच्या महामाया तत्र सत्ताप्रधारकः । दंतश्च मायिकः प्रोक्तस्तयोर्योगे हि स स्मृतः ॥५॥ तं भजस्व महाभाग प्रह्लाद विधिपूर्वकम् । नष्टशापश्च भावी त्वमेकदंतप्रसादतः ॥६॥ मुद्गल उवाच । पुनर्गृत्समदं प्राह प्रह्लादो विनयान्वितः । गणेशज्ञानभोगार्थं वैष्णवानां शिरोमणिः ॥७॥ प्रल्हाद उवाच । विष्णुभक्तोऽहमत्यंतं मुने जन्मादितः खलु । अतः केन प्रकारेण भजामि गणनायकम् ॥८॥ सर्वज्ञस्त्वं विशेषेण पृच्छामि त्वामतः प्रभो । वद सर्वं गणेशस्य योगसाधनमुत्तमम् ॥९॥ गृत्समद उवाच । गणेशस्यावताराश्च चत्वारः परिकीर्तिताः । गौणांस्तांस्ते वदामीह संशयच्छेदनाय वै ॥१०॥ स्वानंदनगरे देवो गणेशानः प्रतिष्ठते । स्वयं ससर्ज लीलार्थं जगद्ब्रह्मा सुरेश्वर ॥११॥ तेषु नानाविधां क्रीडां करोति गणनायकः । जगत्सु ब्रह्म जानीहि स त्वं तं योगसेवया ॥१२॥ स ब्रह्मणि चतुर्धा वै जातः क्रीडार्थमादरात् । पंचमो निजलोकस्थस्तेषां संयोगधारकः ॥१३॥ चतुरो मोहयित्वा वै मायया स गणेश्वरः । तिष्ठति

स्वस्वरूपेण तेषां हृदि गजाननः ॥१४॥ नामरूपात्मकेष्वेव ब्रह्म यत् परितिष्ठति । जानीहि वेदेषु तदसद्रूपं शक्तिवाचकम् ॥१५॥ तेष्वात्माऽमृतरूपश्च भानुः सद्रूपवाचकः । तयोरभेदभावेष्वानंदो विष्णुः स उच्यते ॥१६॥ त्रिष्वव्यक्तस्वरूपं यन्नेति कर्ता विशेषतः । निर्मोहः शिव एवाऽसौ तुर्यो वेदे प्रकथ्यते ॥१७॥ चतुर्णां चैव संयोगे स्वानंदः परिकीर्तितः । तद्ब्रह्म गणनाथोऽयं नानाखेलकरोऽभवत् ॥१८॥ एवं तस्यावताराश्च चत्वारः परिकीर्तिताः । चतुर्भावप्रसिद्ध्यर्थं गौणरूपास्ततोऽभवन् ॥१९॥ आनंदात्मकलांशेन विष्णुं गणपरूपिणम् । जानीहि तं गणेशानान्न भिन्नं दानवोत्तम ॥२०॥ चतुर्णां भजनेनैव मनः शुद्धिमवाप्नुयात् । ततो गाणेशयोगे सोऽधिकारी भवति स्वयम् ॥२१॥ यथाऽऽश्रमविभागेन नरः क्रमपरायणः । एकं त्यक्त्वा स गृह्णाति द्वितीयं भक्तिसंयुतः ॥२२॥ अंते योगी स शांतिस्थ आश्रमै रहितो भवेत् । तद्वत् क्रमेण गाणेशा भवेयुर्वैष्णवादिकाः ॥२३॥ अधुना शृणु देवस्य साधनं योगदं परम् । साधयित्वा स्वयं योगी भविष्यति न संशयः ॥२४॥ स्वानंदः स विहारेण संयुक्तश्च विशेषतः । सर्वसंयोगकारित्वाद्गणेशो मायया युतः ॥२५॥ विहारेण विहीनश्चायोगो निर्मायिकः स्मृतः । संयोगाभेदहीनत्वाद्ब्रह्मा गणनायकः ॥२६॥ संयोगायोगयोर्योगः पूर्णयोगः प्रकीर्तितः । प्रह्लाद गणनाथस्तु पूर्णो ब्रह्ममयः परः ॥२७॥ योगेन तं गणाधीशं प्राप्नुवंतीह योगिनः । तं विद्धि पूर्णभावेन संयोगायोगवर्जितम् ॥२८॥ तस्य माया द्विधा प्रोक्ता सिद्धिर्बुद्धिश्च दैत्यप । बुद्धिः सा पंचधा जाता चित्तरूपा स्वभावतः ॥२९॥ क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकम् । पंचधा चित्तवृत्तिश्च सा माया गणपस्य वै ॥३०॥ क्षिप्तं मूढं च चित्तं यत् कर्मण्यपि विकर्मणि । संस्थितं तेन विश्वं वै चलति स्वस्वभावतः ॥३१॥ अकर्मणि च विक्षिप्तं चित्तं जानीहि मानद । तेन मोक्षमवाप्नोति शुक्लगत्या न संशयः ॥३२॥ एकाग्रमष्टधा चित्तं तदेवैकात्मनि स्थितम् । संप्रज्ञातसमाधिस्थं साधु जानीहि सत्तम ॥३३॥ निरोधसंज्ञितं चित्तं निवृत्ते रूपधारकम् । असंप्रज्ञातयोगस्थं जानीयाद्योगसेवया ॥३४॥ पंचधा चित्तवृत्तिश्च बुद्धिरूपा प्रकीर्तिता । माया सा गणनाथस्य त्यक्तव्या योगसेवया ॥३५॥ सिद्धिर्नानाविधा प्रोक्ता भ्रांतिदा तत्र संमता । सिद्ध्यर्थं तत्र लोकाश्च भ्रमयुक्ता भवंत्यतः ॥३६॥ धर्मार्थकाममोक्षाणां सिद्धिर्भिन्ना प्रकीर्तिता । ब्रह्मभूतकरी सिद्धिस्त्यक्तव्या पंचधा सदा ॥३७॥ मोहदा सिद्धिरत्यंतं मोहधारकतां गता । बुद्धिश्चैव स सर्वत्र ताभ्यां खेलति विघ्नपः ॥३८॥ बुद्ध्या यद् बुध्यते तत्र पश्चान् मोहः प्रवर्तते । अतो गणेशभक्त्या स मायाभ्यां

वर्जितो भवेत् ॥३९॥ पंचधा चित्तवृत्तिं च पंचधा सिद्धिमादरात् । त्यक्त्वा गाणेशयोगेन गणेशं भज भावतः ॥४०॥ ततः स गणराजस्य मंत्रं तस्मै ददौ स्वयम् । गणानां त्वेति वेदोक्तं स विधिं मुनिसत्तमः ॥४१॥ तेन संपूजितो योगी प्रह्लादेन महात्मना । ययौ गृत्समदो दक्ष स्वगलोकं विहायसा ॥४२॥ प्रह्लादश्च तथा साधुः साधयित्वा विशेषतः । योगी योगींद्रवंद्यः स शांतिसंधारकोऽभवत् ॥४३॥ विरोचनाय राज्यं स ददौ पुत्राय दैत्यपः । गणेशभजने योगी संसक्तः सर्वदाऽभवत् ॥४४॥ सगुणं विष्णुरूपं च निर्गुणं ब्रह्मवाचकम् । गणेशेन धृतं सर्वं कलांशेन न संशयः ॥४५॥ एवं ज्ञात्वा महायोगी प्रह्लादोऽभेदमाश्रितः । हृदि चिंतामणिं ज्ञात्वाऽभजच्चानन्यभावतः ॥४६॥ स्वल्पकालेन दैत्येंद्रः शांतियोगपरायणः । शांतिं प्राप्तो गणेशे चैकभावः सोऽभवत्परः ॥४७॥ शापश्चैव गणेशेन प्रह्लादस्य निराकृतः । न पुनर्दुष्टसंगेनाऽभवद् भ्रांतः स मानद ॥४८॥ एवं मदं परित्यज्यैकदंतस्य समाश्रयात् । असुरोऽपि महायोगी प्रह्लादः संबभूव ह ॥४९॥ एतत् प्रह्लादमाहात्म्यं यः शृणोति नरोत्तमः । पठेत्तु तस्य वै दक्ष भवेदीप्सितदायकम् ॥५०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खंडे एकदंतचरिते गृत्समदप्रल्हादसंवादसमाप्तिवर्णनं नाम त्रिसप्ततितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । एकदंतस्य यत् क्षेत्रं संक्षेपेण मया श्रुतम् । यात्रादि विस्तरेणैव कथयस्व महामुने ॥१॥ मुद्गल उवाच । अग्निकोणे दिशां प्रांते स्वस्वखंडेषु मानद । एकदंतस्य च क्षेत्रं ज्ञातव्यं जलधेस्तटे ॥२॥ दश योजनविस्तारं समंतात्तत्र मध्यगः । एकदंतो गणेशानः पूज्यते सिद्धसाधकैः ॥३॥ तद्वामांगे स्वयं सिद्धिर्दक्षिणांगे प्रजापते । बुद्धिश्च मूषकस्तस्य समीपे संस्थितः प्रभोः ॥४॥ सिद्धयोऽष्टौ पुरस्तस्य संस्थिता भक्तिकारिकाः । वामे देवादयः सर्वे भक्त्या तिष्ठंति संयुताः ॥५॥ दक्षिणांगे च वेदादि शास्त्राणि प्रस्तुवंति तम् । पृष्ठे काश्यादि क्षेत्राणि तीर्थानि च भजंति तम् ॥६॥ श्रेष्ठस्वरूपकाः संस्थाः सर्वे त्रिभुवनेषु ये । ते क्षेत्रवासिनो भूत्वा भजंते त्वेकदंतकम् ॥७॥ समुद्रे स्नानकर्तारः स्वस्वनाम्नांकितेषु वै । तीर्थेषु सूक्ष्मरूपेषु सूक्ष्मरूपधराः सदा ॥८॥ तत्रैकदंततीर्थं वै सर्वलोकेषु विश्रुतम् । दर्शनात् सर्वपापघ्नं भुक्तिमुक्तिप्रदं भवेत् ॥९॥ भाद्रशुक्लचतुर्थ्यां महोत्सवस्तत्र वर्तते । यात्रार्थं सर्वलोकश्च त्रिलोकस्था



व्रजंति तम् ॥१०॥ ब्रह्मभूयकरं क्षेत्रं गाणेशं शास्त्रसंमतम् । मरणे तत्र संप्राप्ते स्वानंदे वसतिर्भवेत् ॥११॥ संक्षेपेण मया प्रोक्तं यत्क्षेत्रस्य यशोऽमलम् । अयुतायुतवर्षैश्च विस्तारे कः क्षमो भवेत् ॥१२॥ एतच्चरित्रमाद्यं वै कथितं ते महामते । एकदंतस्य माहात्म्यं संक्षेपेण तथा मया ॥१३॥ विस्तरेण न शेषोऽपि ब्रह्मा विष्णुर्महेश्वरः । शुको नैव समर्थश्च भवेत् कथयितुं कदा ॥१४॥ य एतदेकदंतस्य चरित्रं सर्वसिद्धिदम् । शृणुयाच्छ्रावयेद्वापि पठेत् स लभतेऽखिलम् ॥१५॥ पुत्रपौत्रादिकं सर्वं धनधान्यसमन्वितम् । कलत्रं सुखदं जंतुर्लभते नात्र संशयः ॥१६॥ अनेन भावसंयुक्त एकदंतं प्रजापते । नित्यं स्तुयात् स एवैकदंतरूपो धरातले ॥१७॥ तस्य दर्शनमात्रेण कृतकृत्या भवंति च । देवादयो न संदेहो ब्रह्माकारस्वरूपिणः ॥१८॥ श्रवणेनैव खंडस्य कृतकृत्यो नरो भवेत् । नारी वा पशुरूपो वा निश्चितं मुनिभिः पुरा ॥१९॥ सर्वतीर्थेषु यः स्नायात् सर्वदानं करोति यः । तपांसि यस्तपेन्नित्यं यात्राः सर्वाः करोति यः ॥२०॥ इष्टापूर्तादिकं सर्वं कुरुते भक्तिसंयुतः । तेभ्यः संश्रवणात् पुण्यं लभेदस्य शताधिकम् ॥२१॥ धर्मार्थकाममोक्षान् वै लभते श्रवणेन च । खंडस्यास्य न संदेहो ब्रह्मभूतो भवेन्नरः ॥२२॥ यद्यदिच्छति तत्तद्वै सफलं प्रभवेत् सदा । श्रवणेनैकदंतस्य चरित्रस्य नरो महान् ॥२३॥ संपूर्णो महिमा दक्ष न वक्तुं शक्यते मया । ब्रह्मादिभिश्च तस्मात्ते कथितं सारमंजसा ॥२४॥ सूत उवाच । एवमुक्त्वा महायोगी मुद्गलो विरराम ह । दक्षस्तं हर्षितोऽत्यंतं प्रणनाम कृतांजलिः ॥२५॥ महोदरस्य माहात्म्यश्रवणे लालसी स्वयम् । दक्षस्तं पुनरप्याह तदग्रे वर्णयाम्यहम् ॥२६॥ एतच्छौनक मुख्यं ते चरित्रं कथितं मया । यथा दक्षेण सर्वं वै मुद्गलात् संश्रुतं तथा ॥२७॥ सर्वसिद्धिकरं प्रोक्तमेकदंतचरित्रकम् । श्रुतं भावेन भो विप्र किं भूयः श्रोतुमिच्छसि ॥२८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे द्वितीये खण्डे एकदंतचरिते चरितमाहात्म्यं नाम चतुःसप्ततितमोऽध्यायः ॥

## ॥ इति द्वितीयः खंडः समाप्तः ॥





खण्ड ३ चित्र ६ — श्रीसिद्धिबुद्धिलक्षलाभसहितः श्रीमहोदरः।

श्रीमहोदरावतारे महर्षिर्मुद्गलः दक्षं प्रजापतिं श्रीमहोदरस्य चरितं कथयति।

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । सूत सर्वार्थतत्त्वज्ञ तारितोऽहं त्वया द्विज । गणेशचरितं पुण्यं श्रावितं परमाद्भुतम् ॥१॥ एकदंतस्य माहात्म्यं श्रुतं त्वत्तो द्विजोत्तम । यथा नरः सुधापानात् न तृप्तोऽहं तथाऽभवम् ॥२॥ महोदरस्य माहात्म्यमधुना वद विस्तरात् । कीदृशोऽयं गणेशस्तु कति तस्यावतारकाः ॥३॥ कुरुक्षेत्रं महत्तस्य कस्माद्भूमौ समागतः । इत्यादि सर्वमत्यंतं माहात्म्यं वद तस्य मे ॥४॥ सूत उवाच । शृणु शौनक विप्रेंद्र धन्योऽस्यत्र न संशयः । विवर्धयसि ढुंढेस्त्वं रहस्यं परमाद्भुतम् ॥५॥ अतोऽहं हर्षितः सर्वं कथयिष्यामि विस्तरात् । महोदरस्य माहात्म्यं यथा व्यासाच्छ्रुतं मया ॥६॥ दक्षेणाऽपि तथा पृष्टं यथा त्वं मां प्रपृच्छसि । मुद्गलेन यथा प्रोक्तं तथैव त्वां ब्रवीम्यहम् ॥७॥ दक्ष उवाच । त्वया मुद्गल योगींद्र तारितोऽहं विशेषतः । मंगलायतनां पूर्णां कथां वदसि मानद ॥८॥ अधुना वद मे ब्रह्मन् महोदरचरित्रकम् । विस्तरेण महाभाग भवबंधविमोचनम् ॥९॥ मुद्गल उवाच । धन्योऽसि दक्ष येन त्वं गणेशामृतसत्कथाम् । भावयुक्तश्च पिबसि संक्षेपेण ब्रवीमि ते ॥१०॥ महोदरस्य माहात्म्यं विस्तरेणैव वर्णितुम् । भुवनेष्वर्हति च कः सर्वसिद्धिप्रदायकम् ॥११॥ एवमेव पुरा पृष्टो वालखिल्यैर्महात्मभिः । सूर्यस्तानब्रवीद्यच्च तदेव शृणु यत्नतः ॥१२॥ दक्ष उवाच । कथं स वालखिल्यैश्च पृष्टो भानुर्महायशाः । तत्सर्वं विस्तरेणैव वक्तुमर्हसि मुद्गल ॥१३॥ मुद्गल उवाच । रथस्थं भास्करं नित्यं महर्षय उपासते । वालखिल्या महाभागा भक्तियुक्तेन चेतसा ॥१४॥ तत्र सूर्यं गणेशस्य कीर्तने निरतं मुदा । दृष्ट्वा पप्रच्छुरादित्यं विस्मिता वालखिल्यकाः ॥१५॥ भानो त्वं ब्रह्मरूपश्च वेदेषु प्रतिपादितः । एक एवाद्वितीयाख्योऽमृतात्मा नात्र संशयः ॥१६॥ त्वदीयभजनेनैव सिद्धाः परमयोगिनः । विष्णुमुख्याः सुरेशाना भवंति विविधा जनाः ॥१७॥ कर्मणां मूलरूपेण सगुणस्त्वं विभासि वै । ज्ञानरूपेण सर्वत्र निर्गुणोऽसि दिवाकर ॥१८॥ त्वत्तः परतरं नास्ति वेदादिषु विशेषतः । तदपि त्वं विशेषेण भजसे गणनायकम् ॥१९॥ कोऽसौ गणेशनामा वै तं कथं भजसे वद । मोहयुक्ता वयं जातास्तव दृष्ट्वा चिकीर्षितम् ॥२०॥ अतो नस्तेजसां नाथ वद तत्त्वं यथातथम् । कस्माद्भ्रामयसे सर्वान् गणेशस्तवनेन वै ॥२१॥ मुद्गल उवाच । इति पृष्टो महातेजाः सूर्य आत्मा शरीरिणाम् । जगाद सकलं तेभ्यस्तच्छृणु त्वं प्रजापते ॥२२॥ सूर्य उवाच । वालखिल्या महाभागाः शृणुध्वं सर्वसंमताः । चरितं गणनाथस्य भविष्यथ च योगिनः ॥२३॥ अहमात्मा च वेदेषु कथितो नात्र संशयः । तत्र ज्ञानं वो वदामि भ्रमनाशकरं महत् ॥२४॥ असत्यं ब्रह्म यत् प्रोक्तं तत्राहं जीवधारकः । एक एवाद्वितीयश्च सत्यरूपो महर्षयः ॥२५॥

वेदादिभावभिन्नेष्वात्माकारेण व्यवस्थितः। सत्यासत्ये इति द्वंद्वं ज्ञातव्यं विबुधोत्तमैः ॥२६॥ तयोरभेदभावे यत् समरूपं परात्परम्। आनंद उभयानंदाद्ब्रह्म यद्विष्णुरुच्यते ॥२७॥ समानंदात्तुरीयं यद्ब्रह्माव्यक्तस्वरूपकम्। सर्वेषां नेति कर्ताऽसौ शंकरश्च प्रकथ्यते ॥२८॥ चतुर्णां योगकर्ताऽसौ स्वानंदः परिकीर्तितः। सर्वसंयोगरूपं तद्ब्रह्म वेदेषु कथ्यते ॥२९॥ स्वपदान्न परो योगः संयोगात्मक उच्यते। स एव गणनाथश्च मायायुक्तः प्रकथ्यते ॥३०॥ मायया सर्वभावेषु संयोगाभेदतः स्वयम्। तिष्ठति ब्रह्म विप्रेशास्तेन तन्मायया युतम् ॥३१॥ अयोगश्च परः प्रोक्तः संयोगान्नात्र संशयः। निर्मायिकमिदं ब्रह्म वेदे चैव हि कथ्यते ॥३२॥ तत्र केषां न संयोगस्तस्य केष्वपि नो भवेत्। अयोगस्तेन नामाऽभूदभिन्नोऽपि महर्षयः ॥३३॥ संयोगायोगयोर्योगे गणेशो योगवाचकः। शांतिदो ब्रह्मभावेषु ब्रह्मणस्पतिरुच्यते ॥३४॥ सर्वेषां ब्रह्मणां विप्राः पतिस्तेन प्रकीर्तितः। गणेशस्तं सदा भक्तियुक्तोऽहं प्रभजामि हि ॥३५॥ गणः समूहरूपश्च धातुरुक्तो मनीषिभिः। बाह्यांतरादियोगे वै समूहो जायते द्विजाः ॥३६॥ तेनाऽयं गणराजोऽभूद्ब्रह्मरूपा गणा मताः। तेषां स्वामी न संदेहस्तं भजेऽहं विशेषतः ॥३७॥ आत्माकारं च यद्ब्रह्म तदेवैकगणात्मकम्। सोऽहं स्वामिनमत्यंतं भजे भक्तिपरिप्लुतः ॥३८॥ मुद्गल उवाच। सूर्यस्य वचनं श्रुत्वा वालखिल्या महर्षयः। ऊचुस्तं विस्मिताः सर्वे प्रबद्धकरसंपुटाः ॥३९॥ वालखिल्या ऊचुः। रवे गणेशमाहात्म्यं विस्तराद्वद योगदम्। येन तत्त्वार्थविज्ञाने भवामस्तस्य कौशलाः ॥४०॥ रविरुवाच। शृणुध्वं मुनयः सर्वे कथां सकलसिद्धिदाम्। ब्रह्मणा कथिता मे या सर्वपापप्रणाशिनी ॥४१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते रविवालखिल्यप्रश्नवर्णनं नाम प्रथमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ वालखिल्या ऊचुः। वद सूर्य विशेषेण ब्रह्मणा कथितं महत्। गणेशस्य चरित्रं ते श्रवणे लालसा प्रभो ॥१॥ सूर्य उवाच। पुराऽहमात्मरूपे च संस्थितः सर्वलोकगः। गणेशध्यानसन्निष्ठो योगींद्राणां गुरुः स्वयम् ॥२॥ ब्रह्मणा सृष्टमत्यंतं त्रैलोक्यं सचराचरम्। कश्यपस्तत्र मुख्यो वै प्रजापतिसमोऽभवत् ॥३॥ तेन मे वै तपस्तप्तं वर्षाणामयुतं द्विजाः। आकृष्णेनेति मंत्रेण ध्याननिष्ठो बभूव ह ॥४॥ ततस्तं वरदाताऽहं गतस्तस्याश्रमे पुरा। स मां दृष्ट्वा

नमस्कृत्याऽपूजयद्भक्तिसंयुतः ॥५॥ ततस्तुष्टाव मां विप्रः प्रबद्धकरसंपुटः । वरदं सर्वभावेन भक्तिनम्रात्मकंधरः ॥६॥ कश्यप उवाच । नमस्ते जगदाधार आत्मने परमात्मने । सूर्याय त्रिविधायैव त्रिकालज्ञाय ते नमः ॥७॥ भेदाभेदविहीनाय नानाभेदधराय ते । अनाकाराय देवाय शाश्वताय नमो नमः ॥८॥ अमेयशक्तये तुभ्यं कर्माधाराय भानवे । सर्वकर्ममयायैव त्रिरूपाय नमो नमः ॥९॥ अमृताय सदा ब्रह्मनिष्ठाय त्वंतरात्मने । अर्यम्णे रवये चैव हरिदश्वाय ते नमः ॥१०॥ आदिमध्यांतहीनाय तदाधाराय ते नमः । अनंतविभवायैव तेजोराशे नमो नमः ॥११॥ दीननाथाय सर्वाय दिनानां पतये नमः । नमो हंत्रे स्वभक्तानां पालकाय नमो नमः ॥१२॥ भक्तिमुक्तिप्रदायैव नानाखेलकराय च । नमो नमः परेशाय पुरुषाय दिवस्पते ॥१३॥ एकस्मै चाद्वितीयाय मायाधाराय मायिने । संज्ञापते नमस्तुभ्यं रक्ष मां शरणागतम् ॥१४॥ आत्माकारं च सर्वत्र किं स्तौमि त्वां दिवाकरम् । समर्था नाभवन् वेदा अतस्त्वां प्रणमामहे ॥१५॥ देहि मे परमेशान भक्तिं ते चरणांबुजे । अन्यं वरं ययाचेऽहं त्वं मे पुत्रो भव प्रभो ॥१६॥ सूर्य उवाच । एवं वदंतमानंदयुक्तं मुनिवरं द्विजाः । अवदं तं प्रसन्नोऽहं भावयुक्तं तपस्विनम् ॥१७॥ तव पुत्रो भविष्यामि द्वादशादित्यरूपवान् । मदीया भक्तिरुग्रा ते भविष्यति महामुने ॥१८॥ यद्यदिच्छसि विप्रेंद्र तत्तत्ते सफलं भवेत् । भवामि स्मरणेनाऽहं प्रत्यक्षस्ते पुरो मुने ॥१९॥ त्वया कृतमिदं स्तोत्रं मदीयं सर्वदं भवेत् । भुक्तिं मुक्तिं प्रदास्यामि मुने स्तोत्रेण तोषितः ॥२०॥ एवमुक्त्वा वालखिल्याः सौरलोके गतोऽभवम् । अंतर्धाय स्वमात्मानं सोऽपि संमुदितोऽभवत् ॥२१॥ अदित्यापि तथा तप्तं तपो मे परमाद्भुतम् । तयाऽपीदं च विप्रेंद्रा याचितं तन्मया कृतम् ॥२२॥ अहं पुत्रस्य भावेन कश्यपाज्जठरे गतः । अदित्याश्च सुकाले सा सुषुवे मां महर्षयः ॥२३॥ जातकर्मादिकं सर्वं चकार मुनिसत्तमः । काले मौंज्यादिकं कर्म वेदाध्ययनमादिशत् ॥२४॥ तथा तताप पुत्र्यर्थं विश्वकर्मा तपो द्विजाः । संज्ञाऽग्रे भविता पुत्री कर्मरूपा सुसिद्धिदा ॥२५॥ तया तस्मै वरो दत्तः साऽपि पुत्री बभूव ह । मह्यं ततस्तेन भावेन दत्ता विश्वकर्मणा ॥२६॥ अहं च ब्रह्मणा तत्राभिषिक्तो ज्योतिषां तथा । ग्रहाणां कर्मणां राज्ये ततोऽहं मुदितोऽभवम् ॥२७॥ सदाधारमिदं सर्वं त्रैलोक्यं सचराचरम् । वृष्ट्यादिना तथा काले तत्करोमि स्म तर्पितम् ॥२८॥ कर्मणां फलदाताऽहं कर्माधारः प्रकीर्तितः । वेदे सर्वजनानामंतरात्मा जगदात्मनाम् ॥२९॥ ततो बहौ गते कालेऽभवं मनसि गर्वितः । निराधारोऽहमेको वै मदाधारमिदं बभौ ॥३०॥ कश्यपस्य सुतोऽहं वै जातस्तत्र मया द्विजाः ।

गणेशाराधनं किंचिन्न कृतं कर्मधारिणा ॥३१॥ एवं क्रमेण तत्राऽपि बहुः कालो गतोऽभवत् । ततोऽकस्माच्च मे विघ्नः समुत्पन्नः सुदारुणः ॥३२॥ माली सुमालिको दैत्यौ तेपतुस्तप उत्तमम् । दिव्यवर्षसहस्राणि शिवः संतोषितोऽभवत् ॥३३॥ वरं ददौ स ताभ्यां यद्याचितं तादृशं परम् । सूर्यतेजःसमं दिव्यं विमानं प्रापतुस्तदा ॥३४॥ ताभ्यां विमाननिष्ठाभ्यां जितं सर्वं चराचरम् । राज्यं तौ चक्रतुर्दैत्यौ त्रिलोकस्य महर्षयः ॥३५॥ ततो बहौ गते काले धर्षयंतौ च मां द्विजाः । विमाने संस्थितौ दैत्यौ जग्मतुर्दिवि भानुवत् ॥३६॥ विमानतेजसा सर्वं व्याप्तं त्र्यैलोक्यमंडलम् । रात्रिलोपं च सर्वत्र चक्रतुः परमाद्भुतौ ॥३७॥ अहमस्तंगतो दैत्यौ विमाने तत्र संस्थितौ । उदये समनुप्राप्तौ ततश्च दिवसोऽभवत् ॥३८॥ एवं मां तौ निरर्थं वै चक्रतुर्दैत्यपुंगवौ । अर्कतेजःसमानेन विमानेन महौजसौ ॥३९॥ अहं संक्षुभितोऽत्यंतं जातस्तदपि भो द्विजाः । असहे वरदानस्य बलं ज्ञात्वा विशेषतः ॥४०॥ एवं सप्त गतास्तत्र दिवसास्तदपि द्विजाः । न समे संस्थितौ दैत्यौ लोकाः सर्वे सुविस्मताः ॥४१॥ कर्मलोपश्च सर्वत्र भ्रमाज्जातो महर्षयः । तेजसा दग्धरूपा वै पृथ्वी जाता तथा जनाः ॥४२॥ ततोऽहं क्षुभितोऽत्यंतं गर्वयुक्तः स्वतेजसा । ज्वालयामि विमानं स्म दैत्यौ भूमौ मुमूर्च्छतुः ॥४३॥ दग्धौ तेजःसमूहेन मदीयेन ततः शिवः । आययौ सहसा क्रुद्धः स्मृतस्ताभ्यां विशेषतः ॥४४॥ त्रिशूलेन मदीयं वै शिरश्छिन्नं शिवेन च । पतितोऽहं ततः काश्यां लुलितः स मृतोऽभवम् ॥४५॥ ततः सर्वं जगत् क्षुब्धं सूर्यहीनतया द्विजाः । तद् दृष्ट्वा परमाश्चर्यं ययुस्तत्र महर्षयः ॥४६॥ देवाः सर्वे भयोद्विग्ना विष्णुब्रह्मादयो ययुः । शंकरं सांत्वयामासुर्नानायत्नैः सुरर्षयः ॥४७॥ ततः शिवं समूचुस्ते किं कृतं वृषभध्वज । सूर्यं हत्वा सदात्मानं जगद्धारयसे कथम् ॥४८॥ त्वं कालरूपभावेन तमोयुक्तः सदाशिव । अकाले विश्वसंहारे वर्तसे किं महेश्वर ॥४९॥ तेषां वचनमाकर्ण्य शंकरः शोकसंयुतः । जगाद तान् महादेवान् दैवेनेदं सुकारितम् ॥५०॥ निमित्तमात्रं भावेन मां कृत्वा च सुरर्षयः । विघ्नराजेन विघ्नोऽयं दारुणः संप्रकाशितः ॥५१॥ मह्यं पुरा गणेशानो वरदाता बभूव ह । स्मृतमात्रस्तवाग्रेऽहं साक्षाद्वै संभवामि च ॥५२॥ अतोऽहं शरणं तं च गमिष्याम्यधुना विभुम् । जीवयिष्यामि भानुं तं तेजसा गणपस्य च ॥५३॥ इत्युक्त्वा तं हृदि ध्यात्वा मनसाऽपूजयच्च सः । अयाचत विशेषेण जीवनाय रवेरपि ॥५४॥ जगज्जीवनदाताऽयं सूर्यः स्वामिन् मया

हतः । तं जीवय गणेशान नोचेद्देहं त्यजाम्यहम् ॥५५॥ इति प्रार्थयमानं तं ज्ञात्वा शंभुं गजाननः । आत्मनात्मरूपः स जीवयामास तं रविम् ॥५६॥ उत्थितं कश्यपस्यैवं पुत्रं दृष्ट्वा सुरर्षयः । हर्षितास्तं जयेति स्म गजानन जगुर्मुदा ॥५७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते सूर्यसंजीवनदानं नाम द्वितीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूर्य उवाच । ततो लोलार्कनामाऽहं काश्यां जातो महर्षयः । विस्मितो मानसेऽत्यंतं किमाधारमिदं भवेत् ॥१॥ अहमात्मा च सर्वेषामात्मनो मरणं कथम् । मृते मयि जगत् सर्वं केन जीवयुतं कृतम् ॥२॥ अहं च जीवितः केन नाहमात्मा शरीरिणाम् । मोहयुक्ततया व्यर्थं गर्विष्ठः संभवामि वै ॥३॥ अतोऽहं काननं यास्ये त्यक्त्वा सर्वं विशेषतः । यदाधारं भवेद्विश्वं तं भजिष्यामि नित्यदा ॥४॥ निःसृतोऽहं गृहं त्यक्त्वा तत्र मां विधिरब्रवीत् । सांत्वयित्वा स वेदानां वाक्यैः परमतत्त्ववित् ॥५॥ शृणु सूर्य रहस्यं यत् सर्वेभ्यः शांतिदायकम् । भवितासि ततः शांतः किमर्थं श्राम्यते मुधा ॥६॥ त्वमात्मा सर्वभूतानामात्माधारमिदं स्मृतम् । आत्मनो मरणं नास्ति ब्रह्मवेदे वदंति भोः ॥७॥ ब्रह्मणां पतिरूपेण संस्थितो गणनायकः । तस्मान्नानाविधानीह ब्रह्माणि प्रोद्भवंति वै ॥८॥ कश्यपात्मज सर्वत्र योगेन च स तिष्ठति । तस्मिन् स्थिते कथं विश्वं तन्नश्यति वदस्व माम् ॥९॥ त्वं कश्यपस्य पुत्रत्वं प्राप्तश्च वरदानतः । तत्राज्ञानावृतत्वेन पूजितो न गणाधिपः ॥१०॥ तेन विघ्नः समुत्पन्नो विपरीतमयः परः । आत्मनो मरणं पश्य तव प्राप्तं भजस्व तम् ॥११॥ तेन सर्वं शुभं पूर्णं भविष्यति रवे पुनः । योगशांतिधरस्त्वं वै गाणपत्यो भविष्यसि ॥१२॥ अर्यमोवाच । इति श्रुत्वा विधेर्वाक्यं विस्मितोऽहं वदामि तत् । ज्ञानार्थं गणराजस्य शृणुध्वं मे विचेष्टितम् ॥१३॥ अहो ब्रह्मंस्त्वया स्वामिन् बोधितोऽहं विशेषतः । संशयं तत्र जातं मे छेदयस्व पितामह ॥१४॥ योगशांतिधरः पूर्णो गणेशः परिकीर्तितः । करोति स कथं विघ्नं विकारीव वदस्व मे ॥१५॥ ब्रह्मोवाच । शृणु सूर्य महाप्राज्ञ वचः संशयनाशकम् । गणेशभक्तस्त्वं येन भविताऽसि महाप्रभो ॥१६॥ योगशांतिमयः पूर्णो गणेशश्चैव निश्चितम् । तेन नानाविधं विश्वं रचितं ब्रह्म मानद ॥१७॥ तत्र मायामयो मोहः सर्वत्र भ्रांतिदायकः । तेन भ्रांतिसमायुक्ते जगद्ब्रह्म बभूवतुः ॥१८॥ तयोर्मोहविनाशार्थं योगमार्गं गजाननः ।

चकार सर्वशांतेभ्यः शांतिदं योगसेवया ॥१९॥ तत्र तस्य कलांशा ये ब्रह्माकाराः शिवादयः। ब्रह्मभावेन गर्वेणाऽभवन् स्वब्रह्मणि स्थिताः ॥२०॥ तेभ्यः शांतिप्रदानार्थं विघ्नदाता गजाननः। भवते तेन ते सर्वे गर्वहीना भवंति वै ॥२१॥ गर्वहीनस्वभावेन योगमिच्छंति शाश्वतम्। मूलभूतं च सर्वेषां जगतां ब्रह्मणां रवे ॥२२॥ साधयित्वा महायोगं शांतिरूपा भवंति ते। तत्र विघ्नहरो ढुंढिस्तेषां भवति सर्वदा ॥२३॥ ततो विघ्नेश्वरं देवं भजंते शांतिधारकाः। योगशांतिमयं पूर्णं भक्तिभावसमन्विताः ॥२४॥ एतदर्थं गणेशानः कुरुते विघ्नमुत्तमम्। देवर्षीणां च साधूनां दुष्टानां नैव तादृशम् ॥२५॥ ब्रह्मणो गिरमाकर्ण्य प्रसन्नः सविता पुनः। विधिं जगाद योगार्थं सर्वज्ञं भक्तिसंयुतः ॥२६॥ सूर्य उवाच। वद ब्रह्मन् गणेशस्य प्राप्त्यर्थं योगमुत्तमम्। साधयित्वा गणेशोऽहं भविष्यामि विधे यतः ॥२७॥ ब्रह्मोवाच। सम्यक् पृष्टं त्वया वत्स त्वं जानासि विशेषतः। अपि तत् कश्यपाज्ज्ञातः सर्वं तेन सुविस्मृतम् ॥२८॥ अधुना शृणु सर्वं त्वं गाणेशं ज्ञानमुत्तमम्। साधयित्वा गणेशानः कालेन प्रभविष्यसि ॥२९॥ मायाशक्तिरसद्रूपा भेदाकारा महामते। जानीहि तत्र सर्वात्मा त्वं च सद्रूप उच्यसे ॥३०॥ तयोः स्रष्टा सदानंदो विष्णुः साम्यप्रधारकः। त्रिभिर्हीनः शिवो व्यक्तस्त्रिभिर्जानीहि संयुतः ॥३१॥ चतुर्णां चैव संयोगे स्वानंदः परिकीर्तितः। स्वानंदात्र परब्रह्म संयोगात्मकमुच्यते ॥३२॥ स एव गणराजस्तु मायाखेलक उच्यते। संयोगाभेदभावेन जगति ब्रह्मणि स्थितः ॥३३॥ अयोगे मायया हीनो गणेशो ब्रह्मवाचकः। सर्वसंयोगहीनश्चा-समाधिसुखदायकः ॥३४॥ संयोगायोगयोर्योगे गणेशः शांतिवाचकः। योगशांतिप्रदः सोऽपि शांतीनां शांतिरुच्यते ॥३५॥ मनोवाणीमयं सर्वं गकाराक्षरवाचकम्। मनोवाणीविहीनं यत् तत् जानीहि णकारजम् ॥३६॥ तयोः स्वामी गणेशानो ब्रह्मणां ब्रह्म उच्यते। सामवेदे रवे पश्य तं भजस्व विधानतः ॥३७॥ द्विविधा तस्य माया वै सिद्धिर्बुद्धिश्च कथ्यते। ताभ्यां युक्तः खेलति स नानार्थे गणनायकः ॥३८॥ चित्तं पंचविधं पुत्र बुद्धिरूपं न संशयः। उच्यते सिद्धिरैश्वर्यं भोग-भेदाय पंचसु ॥३९॥ तयोर्बिंबिस्वरूपं यज्जहि तद् योगसेवया। शांतियोगधरः पुत्र भविष्यसि न संशयः ॥४०॥ एवमुक्त्वा गणेशस्य ददौ मंत्रं षडक्षरम्। तस्मै सूर्याय पूर्णं स विधियुक्तं पितामहः ॥४१॥ विधिं प्रणम्य च वनं ययौ भानुः सुशोभनम्। ततापं तप उग्रं स निराहारपरायणः ॥४२॥ जजाप हृदि संध्याय गणेशं मंत्रमुत्तमम्। एवं वर्षसहस्रेण प्रसन्नोऽभूद्गजाननः ॥४३॥ तं ययौ भक्तिभावेन सुप्रीतः सूर्यमादरात्। स्वगणैः सेवितः साक्षाद्बोधयामास विघ्नपः ॥४४॥

गणेश उवाच । भो सूर्य वृणु मत्तस्त्वं वरान्नानाविधान् परान् । तान् दास्यामि महाभाग तपसा तोषितस्त्वया ॥४५॥ श्रुत्वा गणेशवाणीं स सविता बोधसंयुतः । दृष्ट्वा गणपतिं भक्त्या समुत्तस्थौ श्रमान्वितः ॥४६॥ तं प्रणम्यापूजयत् स यथाविधि गजाननम् । तुष्टाव सुमना भानुः पुरो बद्धांजलिः स्थितः ॥४७॥ भानुरुवाच । नमस्ते विघ्ननाथाय विघ्नकर्त्रे दुरात्मनाम् । भक्तानां विघ्नहर्त्रे ते गणेशाय नमो नमः ॥४८॥ चतुर्बाहुधरायैव मूषकवाहनाय ते । नागयज्ञोपवीताय नाभिशेषाय ते नमः ॥४९॥ महोदराय देवाय सिद्धिबुद्धियुताय ते । शूर्पकर्णाय सर्वाय चैकदंताय वै नमः ॥५०॥ गजवक्रधरायैव भालचंद्राय ते नमः । चिंतामणिधरायैव हृदये ते नमो नमः ॥५१॥ रक्तांबराय रक्ताय नानाभूषणशालिने । अमेयाय नमस्तुभ्यं नानालीलाकराय च ॥५२॥ अनाधाराय सर्वेषामाधाराय च ते नमः । स्वानंदवासिने तुभ्यमिक्षुसागर-खेलिने ॥५३॥ हेरंबाय नमस्तुभ्यं लंबोदर नमो नमः । जगतां ब्रह्मणां पात्रे ब्रह्माधीशाय ते नमः ॥५४॥ निराकाराय सर्वेश पालकाय नमो नमः । साकाराय च भो ढुंढे ताभ्यां योगाय ते नमः ॥५५॥ योगशांतिप्रदात्रे ते योगशांतिमयाय च । योगिभ्यो योगदात्रे ते योगेशाय नमो नमः ॥५६॥ एवं स्तुवति सूर्ये च भक्तिरससमन्विते । अकस्माद्बाष्पकंठः स सरोमांचो बभूव ह ॥५७॥ पुलकांकितदेहं तं दृष्ट्वा खिन्नमिव स्थितम् । जगाद गणनाथो वै सूर्यं भक्तिरसप्लुतम् ॥५८॥ गणेश उवाच । त्वया कृतमिदं स्तोत्रं मदीयं सर्वदं भवेत् । भुक्तिमुक्तिप्रदं भानो मम प्रीतिविवर्धनम् ॥५९॥ यद्यदिच्छसि तत्तद्वै सफलं प्रभविष्यति । पठतां शृण्वतां चैव सदानंदप्रवर्धनम् ॥६०॥ त्वं तु मत्तो वरान् ब्रूहि तान् दास्यामि न संशयः । तपसा भावितोऽत्यंतं भृशं स्तोत्रेण तोषितः ॥६१॥ एवमुक्तो गणेशेन भानुर्भक्तिपरायणः । उवाच तं गणाधीशं हर्षनिर्भर-मानसः ॥६२॥ सूर्य उवाच । तुष्टोऽसि गणनाथ त्वं यदि दास्यसि मे वरम् । तदा भक्तिं दृढां ते वै देहि नाथ नमोऽस्तु ते ॥६३॥ अन्यं यदा स्मरामि त्वां तदा दर्शय रूपकम् । यद्यदिच्छामि तत्तन् मे सफलं भवतु प्रभो ॥६४॥ ओमित्युक्त्वा गणेशानस्तत्रैवांतरधीयत । सूर्यः खिन्न इवातिष्ठत्तत्रैवं वालखिल्यकाः ॥६५॥ ततस्तेन गणेशस्य स्थापिता मूर्तिरादरात् । ब्राह्मणैः सह भानुस्तां पूजयामास भक्तितः ॥६६॥ ततः स्वगृहमागत्य मूर्तिं कृत्वाऽहमादरात् । पूजयामि सदा देवं गणेशानं भजामि तम् ॥६७॥ एतत् सर्वं मदीयं वश्चेष्टितं कथितं द्विजाः । वालखिल्या महाभागाः किं भूयः श्रोतुमिच्छथ ॥६८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते सूर्यवरप्रदानं नाम तृतीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । श्रुत्वा सूर्यचरित्रं ते गणेशभक्तिसंयुतम् । हृष्टास्तं वालखिल्या वै पप्रच्छुः पुनरादरात् ॥१॥ वालखिल्या ऊचुः । भानो त्वया महच्चित्रं कथितं चेष्टितं प्रभो । तव वाक्यामृतेनैव संतृप्ता भृशमुत्तमम् ॥२॥ अधुना ब्रूहि देवेश मोहपाशनिकृंतनम् । गणेशचरितं येन मोहहीना भवंति च ॥३॥ अहो मोहस्य माहात्म्यं येन संछादितो महान् । गणेशस्तेन संभ्रांता न विदुस्तं गजाननम् ॥४॥ मुद्गल उवाच । एवं पृष्टो महातेजा भानुस्तैः स महर्षिभिः । उवाच तान् प्रहृष्टात्मा गाणपत्यो महायशाः ॥५॥ भानुरुवाच । अत्र वः कथयिष्यामि इतिहासं पुराभवम् । मोहासुरचरित्रं यद्गणेशज्ञानसंयुतम् ॥६॥ कदाचित्तारको नाम दैत्योऽभूद्दारुणः खलः । ब्रह्मणो वरदानेन त्रैलोक्याधिपतिः स्वयम् ॥७॥ सर्वदेवगणास्तेन मुनयश्च प्रपीडिताः । वनेषु भयसंत्रस्ता अवसन् दुःखभागिनः ॥८॥ ततो बहुगते काले देवाः सर्षिगणाः पुरा । शिवस्य ध्यानसंयुक्ताः शरणं पार्वतीं ययुः ॥९॥ शिववीर्यभवो देवः सेनाधीशो हनिष्यति । तारकं नात्र संदेहो ज्ञात्वा तां तुष्टुवुः पराम् ॥१०॥ महादेवो वने गत्वा तपसे संस्थितोऽभवत् । तत्र देवगणैर्युक्ता पार्वती तं ययौ द्विजाः ॥११॥ दृष्ट्वा ध्यानस्थितं शंभुं मोहार्थं तस्य सा सती । भिल्लीवेषं चकारैव ययौ तं शंकराश्रमम् ॥१२॥ इतस्ततश्च बभ्राम भिल्लीरूपा गुणाधिका । पुष्पाणां ग्रहणे सक्ता महामोहप्रवर्धिनी ॥१३॥ एतस्मिन्नंतरे तत्र त्यक्त्वा ध्यानं शिवः स्थितः । तेन दृष्टा महाभागा रूपयौवनशालिनी ॥१४॥ तां दृष्ट्वा सहसा शंभुर्मोहितो मायया भृशम् । आदिमायां ययौ तत्र कामविह्वलमानसः ॥१५॥ हावभावयुतां भिल्लीं दृष्ट्वा परममोहितः । तां धर्तुं स मनश्चक्रे तज्ज्ञात्वा साऽपलायत ॥१६॥ पृष्ठलग्नः स्वयं साक्षाच्छंकरो विह्वलो भृशम् । ततः सा यत्र तत्राऽस्य समीपे विचचार ह ॥१७॥ एवं मुहूर्तमात्रं वै नग्नः शंभुर्महर्षयः । बभ्राम तां प्रधर्तुं तु साऽस्य नो हस्तगाऽभवत् ॥१८॥ ततो वीर्यं पपातास्य शिवस्य परमाद्भुतम् । भिल्ली सांतर्दधे विप्राः शिवः शांतो बभूव ह ॥१९॥ तस्माच्छिवस्य वीर्याद्वै संभूतः पुरुषो महान् । मोहरूपो महोग्रः स चतुर्बाहुधरो बभौ ॥२०॥ वनेऽभूत् संस्थितस्तत्रैकाकी तेजस्विनां वरः । चारुरूपो महामानी सर्वावयवसंयुतः ॥२१॥ स तु कंदफलादीनि भक्षयामास यत्नतः । इतस्ततश्च बभ्राम गतो नानावनेषु वै ॥२२॥ शिवस्तत्र समासीनो बभूव भृशदुःखितः । ध्यानेन सकलं ज्ञात्वा देवीकृतविचेष्टितम् ॥२३॥ ततो क्रोधसमायुक्तः कामं सद्यो ददाह सः । स्वस्थानं प्रययौ शंभुः पार्वतीं तां ददर्श ह ॥२४॥ देवकार्यार्थमत्यंतं पार्वत्या प्रार्थितः प्रभुः । कामं सस्मार शंभुस्तं पुरोऽनंगं ददर्श सः ॥२५॥

प्रणिपत्य महेशानं स्तुत्वा रुद्रं महायशाः । अवदद्देहसंयुक्तं मां कुरुष्व महेश्वर ॥२६॥ कामस्य वचनं श्रुत्वा ददौ तस्मै सदाशिवः । एकाक्षरं गणेशस्य मंत्रं तं विधिसंयुतम् ॥२७॥ जगाद शंकरः काममनेनाराधय प्रभुम् । गणेशं तेन तेऽभीष्टं भविष्यति न संशयः ॥२८॥ नाशिकं स समागत्य सस्त्रीकश्च तताप ह । तपो गणपतिं ध्यायन् जपन् मंत्रपरायणः ॥२९॥ गतेषु वर्षसाहस्रेषु ययौ गणनायकः । तं कामं बोधयामास वरं वृणु हृदीप्सितम् ॥३०॥ दृष्ट्वा कामो गणेशानमुत्थाय प्रणतोऽभवत् । तुष्टाव तं गणेशानं भक्तिनम्रात्मकंधरः ॥३१॥ काम उवाच । गणेशाय नमस्तुभ्यं पाशांकुशविधारिणे । दंताभयधरायैव मूषकध्वज ते नमः ॥३२॥ गजवक्त्राय देवाय शूर्पकर्णाय वै नमः । महोदराय पूर्णाय पूर्णानंदाय ते नमः ॥३३॥ सर्वाकाराय सर्वाय स्थूलसूक्ष्मादिभेदिने । गुणेशाय गुणानां ते चालकाय नमो नमः ॥३४॥ देहदेहिमयायैव प्रकृतेर्लयरूपिणे । विदेहाय स्वसंवेद्यपतये ते नमो नमः ॥३५॥ रजसा सृष्टिकर्त्रे ते सत्वतः पालकाय च । तमसा सर्वसंहर्त्रे कर्माकाराय ते नमः ॥३६॥ जगद्रूपाय वै तुभ्यं स्थावराय चराय च । अनाकाराय हेरंबाय ब्रह्मपतये नमः ॥३७॥ वेदाद्यगम्यरूपाय योगेभ्यो योगदायक । किं स्तौमि त्वां गणाधीश अल्पज्ञोऽहं नमोस्तु ते ॥३८॥ अधुना मे वरं देहि गजानन दृढां पराम् । भक्तिं ते मे सुदेहं वै मां कुरुष्व महोदर ॥३९॥ एवमुक्त्वा नतोऽभूत् सस्त्रीकः कामः स तं द्विजाः । ततस्तं प्रत्युवाचाथ गणेशो भक्तवत्सलः ॥४०॥ गणेश उवाच । मदीया भक्तिरुग्रा वै भविष्यति रतेः पते । शिवदग्धश्च ते देहस्तथा कर्तुं न शक्यते ॥४१॥ मदीयवरदानेन शिवः सर्वार्थवानभूत् । अतस्त्वां भिन्नदेहं वै हितायाऽहं करोमि ते ॥४२॥ यौवनं स्त्री च पुष्पाणि सुवासानि महामते । गानं मधुरसश्चैव मृदुलांडजशब्दकः ॥४३॥ उद्यानानि वसंतश्च सुवासाश्चंदनादयः । संगो विषयसक्तानां नराणां गुह्यदर्शनम् ॥४४॥ वायुर्मृदुः सुवासश्च वस्त्राण्यपि नवानि वै । भूषणादिकमेवं ते देहा नाना कृता मया ॥४५॥ तैर्युतः शंकरादींश्च जेष्यसि त्वं पुरा यथा । मनोभूः स्मृतिभूरेवं त्वन्नामानि भवंतु वै ॥४६॥ त्वया कृतमिदं स्तोत्रं मदीयं सर्वदं भवेत् । दग्धमूले प्ररोहाणां कारकं प्रभविष्यति ॥४७॥ एवं गणेशवाक्यं स श्रुत्वा कामस्तमब्रवीत् । हितं सर्वं त्वया मे यत् कृतं नाथ विशेषतः ॥४८॥ तथापि पूर्ववद्देहं देहि ढुंढे नमोऽस्तु ते । दग्धोऽहं शंकरेणैवानंगं रक्षस्व विघ्नप ॥४९॥ मुद्गल उवाच । कामस्य वचनं श्रुत्वा भक्तिभावेन यंत्रितः । गणेशस्तमथोवाच तपसा तोषितं भृशम् ॥५०॥ गणेश उवाच । त्वया त्वघटितं प्रोक्तं तथापि त्वत्सुभक्तितः । संतुष्टोऽहं

प्रियं सर्वं करिष्यामि मनोभव ॥५१॥ यादवेषु स्वयं विष्णुः कृष्णो नाम्ना भविष्यति । लक्ष्मीर्वेषेण रुक्मिण्यास्तयोः पुत्रो भविष्यसि ॥५२॥ प्रद्युम्न इति विख्यातः सर्वमान्यः सुदेहभृत् । इयं ते वल्लभा तत्र भार्या देवी भविष्यति ॥५३॥ इत्युक्त्वा तं गणेशानः स्वानंदस्थो बभूव ह । जगाम कामः सस्त्रीको पुनः क्षेत्रे मयूरके ॥५४॥ तत्र यात्राविधानेन पूजयामास विघ्नपम् । वासार्थं गणनाथस्य तपस्तत्र चकार सः ॥५५॥ वर्षेणैकेन संतुष्टस्तं ययौ विघ्ननायकः । पूजितश्च स्तुतस्तेन प्रसन्नो वरदोऽभवत् ॥५६॥ जगाद कामस्तं देवं गणपं भक्तिसंयुतः । ज्ञात्वा नश्वररूपं यद्देहादिकमनुत्तमम् ॥५७॥ काम उवाच । भूस्वानंदमिदं क्षेत्रं तत्र वासं करोम्यहम् । स्थानं देहि गणाधीश तव सेवार्थमेव मे ॥५८॥ अत्रैव मरणेऽनाथ ब्रह्मभूतत्वमादरात् । ददासि त्वं गणेशान अतो मां पालय प्रभो ॥५९॥ ततस्तं गणनाथः सः तथेति प्रत्युवाच ह । शक्तिं पश्चिमद्वारस्थां तदोवाच च विघ्नपः ॥६०॥ त्वदीये वामभागे वै दक्षिणांगे जगन्मयि । रतिं कामं कुरुष्व त्वं क्षेत्रेऽस्मिन् वासकारणात् ॥६१॥ तथेति तत्र सस्त्रीकः कृतः कामः स मायया । उवास क्षेत्रे सेवार्थं मयूरे गणपस्य सः ॥६२॥ तदादि सर्वमान्योऽयं कामो जातो महर्षयः । त्रैलोक्यविजयी सर्वं मोहयामास निर्भयः ॥६३॥ एतत् कामस्य यश्चित्रं चरित्रं संशृणोति वै । पठेद्वा तस्य नैवं स्यात् काममोहः कदाचन ॥६४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते कामचरितं नाम चतुर्थोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ततः कामसमायुक्तः शंकरोऽभूत्तया सह । पार्वत्या पुत्रकामार्थं रेमे हर्षसमन्वितः ॥१॥ ततस्तस्य महेशस्य क्रीडतः प्रगतानि वै । वर्षाणि हि सहस्राणां षष्टिर्देवर्षिसत्तमाः ॥२॥ महामायायुतः शंभुर्न बुबोध दिवानिशम् । ततस्तस्य महेशस्य रतिभंगार्थमागताः ॥३॥ देवास्तैः प्रेषितो वह्निर्द्विजरूपधरो ययौ । भिक्षां देहि जगादासौ तच्छ्रुत्वा तौ समुत्थितौ ॥४॥ पपात भूतले वीर्यं शिवस्यैवोत्थितस्य च । तदेव पार्वती विप्रा ददौ वै भिक्षुकाय च ॥५॥ शिववीर्यं ततस्तेन प्राशितं दहनेन वै । अभवद्दाहसंयुक्तो गंगायामक्षिपत् स तत् ॥६॥ कार्तिक-स्नानकार्यार्थं कृत्तिकाभिर्महाद्भुतम् । षड्भिः समागताभिस्तत् पीतमाचमनेन वै ॥७॥ स्नात्वा स्वस्वगृहे ताश्च गताः

सद्यः समुज्ज्वलाः । पतिभिः परवीर्येण युक्ताः संत्याजिता ययुः ॥८॥ शरस्तंबे महद्वीर्यं त्यक्त्वा स्नात्वा पुनर्गृहम् । ययुस्तत्र समुत्पन्नः षण्मुखो बालको बभौ ॥९॥ स दृष्टो गच्छता तत्र नारदेन शिशुः पुरः । ज्ञात्वा ध्यानेन कैलासे गतोऽभून् मुनिसत्तमः ॥१०॥ तत्र शक्त्यै स वृत्तांतं कथयित्वा महामुनिः । यदृच्छाविचरन् यातः पार्वती बालमाययौ ॥११॥ चकार बालमागृह्य स्तनपानं यशस्विनी । वह्निगंगाकृत्तिकाद्या मातरस्तस्य तं ययुः ॥१२॥ शिवेन मातरः सर्वाः सत्कृताः स्वगृहं ययुः । ब्रह्मेशाद्यैस्ततो देवैर्मुनिभिः सोऽभिषेकितः ॥१३॥ देवसेनापतित्वे स प्रययौ सेनया सह । प्रार्थितस्तारकस्यैव नाशाय बलवान् स्वयम् ॥१४॥ स्कंदस्य तारकस्यैव युद्धं परमदारुणम् । संजातं च ततः स्कंदो भृशं शक्त्या जघान तम् ॥१५॥ संमूर्च्छितो महादैत्यः पुनः संज्ञायुतोऽभवत् । ताडयामास तं स्कंदं गदया क्रोधसंयुतः ॥१६॥ पतितं वीक्ष्य ते देवाः पलायनमकुर्वत । गृहीत्वा कार्तिकेयं तं दैत्यः स्वस्थानमाययौ ॥१७॥ तत ओषधिभिर्देवैः सावधानः कृतोऽभवत् । स्कंदः परमदुःखार्तः शंकरं शरणं ययौ ॥१८॥ जयोपायं वद ब्रह्मन् शिवशांतिप्रदं तथा । सर्वार्थसाधकं पूर्णं तं भजामि विशेषतः ॥१९॥ ततश्च शंभुना तस्मै गणेशस्य षडक्षरः । मंत्रो दत्तो विशाखाय ज्ञानं संकथितं परम् ॥२०॥ शंभुरुवाच । शृणु स्कंद महायोगं येन शांतो भविष्यसि । चित्ते चिंतामणिं ज्ञात्वा शांता जाता वयं पुरा ॥२१॥ यद्यच्चित्तेन वै पुत्र लभ्यते तत्प्रणश्वरम् । भवेज्जानीहि चित्तं ब्रह्माकारं योगसेवया ॥२२॥ अंतर्बाह्यादिभेदा ये ते सर्वे चित्तसंभवाः । ओंकारोऽर्थसमायुक्तश्चित्तरूपो न संशयः ॥२३॥ स्वकोत्थानं बभौ ब्रह्म परोत्थानकमेव च । चित्तरूपं विजानीहि बुद्ध्या मोहप्रदं कृतम् ॥२४॥ स्वानंदश्च निवृत्तिश्च चित्तरूपे न संशयः । बहुनाऽत्र किमुक्तेन चित्तं सर्वात्मकं बभौ ॥२५॥ ब्रह्माकारं च जानीहि जगदाकारकं तथा । चित्तं पंचविधं पुत्र जहि तद् योगसेवया ॥२६॥ चित्ते यद्बिंबितं ब्रह्म भवति भ्रमसंयुतम् । बिंबभावं परित्यज्य भव चिंतामणिः सुत ॥२७॥ चित्तं त्यक्त्वा महाभाग त्वन्न भिन्नो भविष्यसि । एतदेव परं ज्ञानं शांतिरूपं वदंति च ॥२८॥ रविरुवाच । शिवस्य वचनं श्रुत्वा तं प्रणम्य ययौ वनम् । कार्तिकेयः स विघ्नेशं ध्यायंश्च विधिपूर्वकम् ॥२९॥ षडक्षरविधानेन पूजति स्म निरंतरम् । मंत्रं जजाप वै स्कंदस्तताप तप उत्तमम् ॥३०॥ वायुभक्षः सदा भूत्वा जपध्यानपरायणः । दंडकारण्यदेशे स गजाननमतोषयत् ॥३१॥ ततो वर्षसहस्रेण शांतियोगमवाप ह । कार्तिकेयः स विघ्नेशमभजत्तदपि द्विजाः ॥३२॥ ततस्तुष्टो गणेशानो ययौ तं भक्तमुत्तमम् । तं दृष्ट्वा प्रणनामाथ पूजयन् भक्तिसंयुतः ॥३३॥

ततस्तुष्टाव विघ्नेशं कार्तिकेयो महाद्युतिः । कृत्वा करपुटं विप्राः स्वानुभावपरायणः ॥३४॥ स्कंद उवाच । नमस्ते योगरूपाय संप्रज्ञातशरीरिणे । असंप्रज्ञातमूर्ध्ने ते तयोर्योगमयाय च ॥३५॥ वामांगे भ्रांतिरूपा ते सिद्धिः सर्वप्रदा प्रभो । भ्रांतिधारकरूपा वै बुद्धिस्ते दक्षिणांगके ॥३६॥ माया सिद्धिस्तथा देवो मायिको बुद्धिसंज्ञितः । तयोर्योगे गणेशान त्वं स्थितोऽसि नमोस्तु ते ॥३७॥ जगद्रूपो गकारश्च णकारो ब्रह्मवाचकः । तयोर्योगे गणेशाननामा तुभ्यं नमो नमः ॥३८॥ चतुर्विधं जगत् सर्वं ब्रह्म तंत्रं सदात्मकम् । हस्ताश्चत्वार एवं ते चतुर्भुज नमो नमः ॥३९॥ स्वसंवेद्यं च यद्ब्रह्म तत्र खेलकरो भवान् । तेन स्वानंदवासी त्वं स्वानंदपतये नमः ॥४०॥ द्वंद्वं चरसि भक्तानां हृदि तेषां व्यवस्थितः । चौरवत्तेन तेऽभूद्वै मूषको वाहनं प्रभो ॥४१॥ जगति ब्रह्मणि स्थित्वा भोगान् भुंक्षे सुयोगगः । जगद्भिर्ब्रह्मभिस्ते तच्चेष्टितं ज्ञायते न च ॥४२॥ चौरवद्भोगकर्ता त्वं तेन ते वाहनं परम् । मूषको मूषकारूढ हेरंबाय नमो नमः ॥४३॥ किं स्तौमि त्वां गणाधीश योगशांतिधरं परम् । वेदादयो ययुः शांतिमतो देवं नमाम्यहम् ॥४४॥ इति स्तोत्रं समाकर्ण्य गणेशस्तमुवाच ह । वरं वृणु महाभाग चेद्धि दास्यामि दुर्लभम् ॥४५॥ त्वया कृतमिदं स्तोत्रं योगशांतिप्रदं भवेत् । मयि भक्तिकरं स्कंद सर्वसिद्धिप्रदं तथा ॥४६॥ यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रयंत्रितः । पठते शृण्वते नित्यं कार्तिकेय विशेषतः ॥४७॥ एवं गणेशवाक्यं वै श्रुत्वा हर्षसमन्वितः । जगाद गणपं वाक्यं कार्तिकेयः स योगवित् ॥४८॥ स्कंद उवाच । किं वृणोमि गणेशान सर्वं भ्रांतिमयं विभो । अतस्त्वदीयभक्तिं मे सुदृढां देहि विघ्नप ॥४९॥ जगाद गणराजः स ततस्तं भक्तवत्सलः । मदीया भक्तिरुग्रा ते भविष्यति सदाऽनघ ॥५०॥ तारकाद्यान् महादैत्यान् त्वमेव च हनिष्यसि । यद्यदिच्छसि तत्तत्ते सफलं प्रभविष्यति ॥५१॥ एवमुक्त्वांतर्दधेऽसौ गणेशो भक्तमुत्तमम् । कार्तिकेयोऽभवत्तत्र संस्थितो गणपं स्मरन् ॥५२॥ ब्राह्मणैः स्थापयामास मूर्तिं गणपतेः पराम् । लक्षं विनायकं नाम्ना स चकार द्विजेरितः ॥५३॥ तस्य दर्शनमात्रेण वांछितं लभते नरः । तत्रैव मरणे प्राप्ते ब्रह्मभूतः स जायते ॥५४॥ ततो जगाम स्वगृहं कार्तिकेयः प्रतापवान् । देवैः सह जघानाऽसौ तारकासुरमुल्बणम् ॥५५॥ हत्वा तारकदैत्यं स गणेशक्षेत्रगोऽभवत् । तत्र विघ्नेशमत्यंतं भजते नित्यमादरात् ॥५६॥ इति स्कंदस्य माहात्म्यं कथितं सर्वदं परम् । पठते शृण्वते वाऽपि ब्रह्मभूयकरं भवेत् ॥५७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते स्कंदमाहात्म्यं नाम पंचमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ वालखिल्या ऊचुः । श्रुतं सर्वं महाभाग भानो ब्रह्मप्रदायकम् । तथापि न वयं तृप्ता भवामोऽमृतपानवत् ॥१॥ अधुना ब्रूहि माहात्म्यं मोहस्य जगदीश्वर । शिववीर्यात् समुत्पन्नः किं चकार रवे वद ॥२॥ मुद्गल उवाच । मुनीनां वचनं श्रुत्वा तान् जगाद महामतिः । सूर्यः सर्वांतरात्मा च मोहस्य चरितं विधे ॥३॥ सूर्य उवाच । शिववीर्यात् समुत्पन्नो मोहः परमशोभनः । जगाम शरणं तत्र काव्यं वेदविदांवरम् ॥४॥ तं प्रणम्य जगदासौ वृत्तांतं सर्वमंजसा । स्वस्योत्पत्तिस्वरूपं यद्विनीतात्मा विशेषतः ॥५॥ कथयित्वा पुनः प्राह स्वामिन् मां शाधि शिष्यकम् । त्वदधीनं विनाथं वै कार्यं वद महामुने ॥६॥ इति तस्य वचः श्रुत्वा शुक्रो दयासमन्वितः । उपवीतादिकं सर्वं कारयामास दैत्यपैः ॥७॥ जृंभाय पुत्रभावेन ददौ तं मोहमुल्बणम् । तत्र वेदादिकं तेनाधीतं सर्वं महर्षयः ॥८॥ प्रमादासुरनामा वै तस्मै पुत्रीं ददौ स्वकाम् । रूपलावण्यसंयुक्तां नाम्ना च मदिरां द्विजाः ॥९॥ मोहो नत्वा स्वतातं संगृह्य शुक्रान् महामनुम् । सूर्यस्य सवने गत्वा तताप परमं तपः ॥१०॥ ऊर्ध्वदृष्टिं बबंधाऽसौ सूर्यं ध्यायन् स मंडले । मंत्रं जजाप भावेन निराहारपरायणः ॥११॥ दिव्यवर्षसहस्रेण प्रसन्नोऽभूद्दिवाकरः । तं ययौ वरदानार्थं स्वभक्तं भक्तिभावितः ॥१२॥ अस्थित्वचासमायुक्तं मोहं दृष्ट्वार्यमा प्रभुः । विस्मितोऽभून् महद्धैर्यं दैत्यस्य परमाद्भुतम् ॥१३॥ बोधयामास तं शीघ्रं रविर्देववरः स्वयम् । वरं ब्रूहि महामोह प्रसन्नोऽहं ददामि ते ॥१४॥ श्रुत्वा मदीयवाक्यं स प्रबुद्धो सुरनायकः । पुरतो मां स्थितं वीक्ष्य प्रणनाम कृतांजलिः ॥१५॥ उत्थाय पूजयामास परैर्नानोपचारकैः । कृतांजलिः पुनर्नत्वा स तुष्टाव महर्षयः ॥१६॥ मोहासुर उवाच । नमः सूर्याय तपतां श्रेष्ठ ते सर्वरूपिणे । भानवे भास्करायैव रवये ते नमो नमः ॥१७॥ कर्मणां फलदात्रे ते कर्ममूलधराय च । कर्माकाराय देवाय स्वात्मने ते नमो नमः ॥१८॥ नानाभेदधरायैव नानाभेदविवर्जित । सदामृतस्वरूपाय परमात्मन्नमोऽस्तु ते ॥१९॥ अनंतापाररूपाय जगज्जीवनमूर्तये । सत्याय सत्यपात्रे ते दिवाकर नमोऽस्तु ते ॥२०॥ त्रयीबोधाय ते त्रय्यै त्रयीकर्मप्रवर्तक । सर्वाहंकारमूलाय सदाहंकारनाशिने ॥२१॥ ज्ञानदात्रे प्रकाशाय प्रकाशानां विशेषतः । अनादये महेशाय परेशाय नमो नमः ॥२२॥ वृष्टिबीजाय सर्वेषां कालकर्मप्रवर्तक । मायाधाराय मायायाश्चालकाय नमो नमः ॥२३॥ किं स्तौमि त्वां दिवानाथ आत्माकारधरं प्रभो । तथापि ज्ञानप्रामाण्यात् संस्तुतोऽसि नमाम्यहम् ॥२४॥ यदि तुष्टोसि देवेश वरं दातुं समागतः । तदा मे मरणं स्वामिन्न भवेन्मां तथा कुरु ॥२५॥ नामरूपधरं सर्वं तस्मान्

मृत्युर्न मे भवेत् । राज्यं त्रैलोक्यसंस्थं यद्देहि तज्जगदीश्वर ॥२६॥ आरोग्यादिसमायुक्तां देहसत्तां महाप्रभो । सर्वातिगां च मे देहि संग्रामे विजयं तथा ॥२७॥ यद्यदिच्छामि देवेश तत्तन्मे सुलभं भवेत् । त्वदीयपादपद्मे ते भक्तिं देहि महाप्रभो ॥२८॥ एवमुक्त्वा महादेवं भास्करं प्रणनाम सः । उत्थाय तस्य सामीप्ये संस्थितो विनयान्वितः ॥२९॥ ततः स सविता तत्र विस्मितस्तमुवाच ह । त्वया यत् प्रार्थितं दैत्य तत् सर्वं लभसे महत् ॥३०॥ त्वया कृतमिदं स्तोत्रं मम प्रीति-विवर्धनम् । सर्वकामप्रदं चैव भविष्यति सुशृण्वते ॥३१॥ इत्युक्त्वांतर्दधे देवः सविता स्वस्थलं ययौ । दैत्योऽपि हर्षितो भूत्वा स्वगृहं प्रजगाम ह ॥३२॥ मातरं पितरं तत्र प्रणनाम महासुरः । सुहृदो मानयामास यथा संबंधपूर्वकम् ॥३३॥ ततः शुक्रं जगामाऽसौ तं प्रणम्य महासुरः । मोहः संकथयामास वृत्तांतं तस्य सन्निधौ ॥३४॥ उपचारैः प्रपूज्याऽसौ प्रणम्य स्वगृहं पुनः । आययौ हर्षसंयुक्तो नगरं निर्ममे ततः ॥३५॥ विषयावासकं नाम मुनिस्तस्य चकार वै । शुक्रः परमतेजस्वी तत्र वासं चकार सः ॥३६॥ असुरादय एवं वै वृत्तांतं यत्र तत्र ते । श्रुत्वा समागतास्तस्य नगरे चक्रिरे स्थितिम् ॥३७॥ चातुर्वर्ण्यसमायुक्तं नगरं शुशुभे द्विजाः । सर्वातिगं चानुपमं पृथिव्यां पूर्णभोगदम् ॥३८॥ ततो दैत्यगणाः सर्वे श्रेष्ठास्तत्र समागताः । शुक्रेण प्रेरितास्तं ते प्रणेमुर्भावसंयुताः ॥३९॥ प्रचंडश्चैव चंडश्च महाकालश्च वीर्यवान् । कालांतकादयश्चान्ये बहवो दैत्यनायकाः ॥४०॥ मिलिता दैत्यसंयुक्तास्तदाज्ञावशवर्तिनः । भूत्वा ते नगरे तस्य समीपे संस्थिता बभुः ॥४१॥ ततो द्विजैः स्वयं काव्यस्तं चकार महर्षयः । दैत्याधिपं स सिषेच तदर्थं राज्यसंपदि ॥४२॥ ततस्ते मुदिताः सर्वे दैत्याः स्वस्वस्थलं ययुः । मुख्यास्तत्र स्थिता विप्राः सेवार्थं लालसायुताः ॥४३॥ एवं मोहासुरः श्रेष्ठोऽसुराणां नायकोऽभवत् । तमाश्रित्य महादैत्या हर्षिता अचरन् धराम् ॥४४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते मोहासुरराज्याभिषेको नाम षष्ठोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ रविरुवाच । मदिरायां सुताः पंच तस्माद्दैत्यान् महाबलाः । तेजस्विनश्च पित्रा ते बभूवुः समशीलकाः ॥१॥ उग्रः क्रूरश्च मेधावी शोचनो हरणस्तथा । पंचैते शास्त्रसंपन्ना रेजुस्तन्नगरे द्विजाः ॥२॥ ततः किंचिद्गते काले राजा मोहासुरो द्विजाः । आह्वयामास दैत्येशान् सकलान् स्वनरैर्महान् ॥३॥ समागतानुवाचाऽथ वचनं हितकारकम् । दैत्येशान्नीतिसंयुक्तं सुखदं प्रीतिवर्धनम् ॥४॥ मोहासुर उवाच । भो भो दैत्याधिपाः सर्वे प्रचंडाद्या वचो हितम् । शृणुध्वं सकलं विश्वं जयेयमधुना किल ॥५॥ यदि स्वमानसे दैत्या हितं भवति चेत्तदा । सर्वेषां भवतां कार्यं कुर्वेऽहं नात्र संशयः ॥६॥ शुक्रेण पालिता यूयं तथाऽहमसुरेश्वराः । अजेयाः प्रभविष्यामो रवेश्च वरदानतः ॥७॥ ततस्ते तं नमस्कृत्य संजगुर्हर्षसंयुताः । महात्मानं महाभागं तपस्तेजःसमन्वितम् ॥८॥ दैत्येशा ऊचुः । सम्यग्विचारिताः स्वामिंस्तृप्ता वाक्यामृतेन ते । जेष्यामः सकलान् लोकांस्त्वदाज्ञावशगा वयम् ॥९॥ न ते पराक्रमे तुल्यो विश्वस्मिन् विद्यते प्रभो । अतो विष्णुमुखान् देवान् जेष्यामोऽन्यांश्च सांप्रतम् ॥१०॥ रविरुवाच । इति मोहासुरस्तेषां वचः श्रुत्वा प्रतापवान् । आज्ञापयच्च दैत्येशान् मुदा भवत दंशिताः ॥११॥ ते सर्वे युद्धमार्गज्ञा ययुस्तस्य प्रसन्निधौ । नानाशस्त्रधरा भूत्वा यममत्तुमिवोद्यताः ॥१२॥ तान् दृष्ट्वा हर्षितो दैत्यो वीर्यवांश्च महासुरः । रथसंस्थः स्वयं दैत्यैर्निर्जगाम स दंशितः ॥१३॥ चतुरंगचमूमध्ये रराज रथसंस्थितः । कालरुद्र इवाध्यक्षः सर्वेभ्यो भयदायकः ॥१४॥ स्वयं शुक्रेण संयुक्तः पृथिवी-जयनोद्यतः । असुरैः सहितः पूर्वं बभ्राम वसुधातले ॥१५॥ अपारा तस्य सेना सा छादयामास वै धराम् । चलनोत्थरजस्केन च्छादितो भास्करोऽभवत् ॥१६॥ कालरूपैर्महादैत्यैः प्रयोद्धुं भूमिमंडले । कः समर्थो भवेद्विप्रा जितं तैः स्वेन तेजसा ॥१७॥ सप्तद्वीपवतीं पृथ्वीं जित्वा तेऽसुरसत्तमाः । ययुः सर्वे जयार्थाय देवान् विष्णुपुरोगमान् ॥१८॥ देवाः सर्वे समाश्रुत्य ससैन्यं चागतं द्विजाः । मोहासुरं भयोद्विग्ना इंद्रं ते शरणं ययुः ॥१९॥ इंद्रेण सहिताः सर्वे ब्रह्माणं प्रययुस्ततः । तेन सार्धं च कैलासे शंकरं शरणं ययुः ॥२०॥ शंकरेण युता देवा वैकुंठे केशवं ययुः । केशवेन युताः सर्वे भास्करं प्रययुस्ततः ॥२१॥ भास्करस्तानुवाचाऽथ भययुक्तान् सुरेश्वरान् । निःश्वस्य भयसंयुक्तो वचनं हितकारकम् ॥२२॥ भास्कर उवाच । मदीय-वरदानेन समर्थो दैत्यपुंगवः । मोहासुरश्च देवेंद्रास्तं जेतुं कः क्षमो भवेत् ॥२३॥ कर्मणां फलमुग्रं यच्च्यवते केनचिन्न तत् । अतो वयं वनेष्वद्य वसामो भयसंयुताः ॥२४॥ त्यक्त्वा राज्यादिकं सर्वं देहं रक्षामहे वयम् । पुण्यांते तस्य मृत्युर्वै भविष्यति

न संशयः ॥२५॥ अन्यथा दैत्यभूपेंद्रो मोहदैत्यः प्रतापवान्। हनिष्यति स देवेंद्रं तस्मात् कुर्वंतु मे वचः ॥२६॥ एवं मदीयं वाक्यं वै श्रुत्वा प्राह बृहस्पतिः। सर्वनीतिविशेषज्ञो देवाचार्यो महायशाः ॥२७॥ बृहस्पतिरुवाच। शृणुध्वं देवराजानो वचनं हितकारकम्। भानुना भाषितं वाक्यं तन्नो भवति वै हितम् ॥२८॥ ततः सर्वेऽब्रुवन् देवाः साधु साधु त्वयेरितम्। भानुना च गुरोर्वाक्यं करिष्यामो वयं तथा ॥२९॥ एवं निश्चित्य देवेंद्रा देवैः सर्वे ययुर्वनम्। गुहासु पर्वतोद्देशे संस्थिता भयसंयुताः ॥३०॥ मोहासुरोऽसुरैः सर्वैर्देवानां नगरेषु च। आययौ तत्र देवेंद्रान् स नापश्यत् सुहर्षितः ॥३१॥ तेषु दैत्यान् समास्थाप्य स्वयमैंद्रपदे स्थितः। दैत्यैः संसेव्यमानश्च बुभुजे भोगमुत्तमम् ॥३२॥ गंधर्वाप्सरसस्तस्य सेवां चक्रुर्भयाकुलाः। स्वर्लोकवासिनो नाना तथैव च महर्षयः ॥३३॥ ततोऽगाद्दैत्यपैः सर्वैः सत्यलोकं महाबलः। मोहासुरो द्विजास्तत्र न ददर्श पितामहम् ॥३४॥ शून्यं नगरमेवं तत् दृष्ट्वा हर्षसमन्वितः। ययौ वैकुंठमुग्रोऽसावदर्शत्तत्र तादृशम् ॥३५॥ ततः कैलासमागत्य शंकरेण विवर्जितम्। पुरं वीक्ष्य ययौ सोऽपि सौरलोकं महासुरः ॥३६॥ तत्रादित्यविहीनं च शक्तिलोकं तथा ययौ। दृष्ट्वा शक्तिविहीनं तं मुमुदे दैत्यनायकम् ॥३७॥ ततो दैत्येंद्रमुख्योऽसौ स्वसुतान् बलगर्वितान्। स्थापयामास देवानां नगरेषु विशेषतः ॥३८॥ कैलासेऽधिपतिं चक्रे ह्युग्रं पुत्रं महासुरः। विकुंठाधिपतिं तद्वत् क्रूरं दैत्यसमन्वितम् ॥३९॥ सौरलोकाधिपं मेधाविनं चक्रे च गर्वितम्। शक्तिलोके तथा सोऽपि शोचनं युद्धलालसम् ॥४०॥ सत्यलोकेऽधिपं चक्रे हरणं सर्वहारकम्। प्रचंडमुख्यकान् चक्र इंद्रलोकादिकाधिपान् ॥४१॥ कालांतकश्च पातालदेशेषु प्रेषितस्ततः। मोहासुरेण नागेंद्रं ययौ शेषं स सैनिकः ॥४२॥ कालांतकं दैत्यराजमागतं च हि नागराट्। विनयेन ययौ तं स साम चक्रे सुरेण वै ॥४३॥ एवं जिगाय ब्रह्मांडं स उग्रो दैत्यनायकः। मोहासुरो महावीर्यो मुमुदे दैत्यपैर्द्विजाः ॥४४॥ ततः स्वनगरे दैत्यो ययौ सर्वैः समन्वितः। विषयावासके तत्र पुरे स शुशुभे ततः ॥४५॥ तत्रस्थः प्रशशासाऽसौ ब्रह्मांडं लोकसंकुलम्। राज्यं चकार दैत्येंद्रो दैत्येंद्रैश्च समन्वितः॥४६॥ भोगान् स बुभुजे नाना ह्यतुलान् विषयप्रियः। दैत्यैः सह प्रगर्वेण कृतकृत्यममन्यत ॥४७॥

॥ ओमिति श्रीमदांत्य पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते मोहासुरविजयवर्णनं नाम सप्तमोऽध्यायः।



॥ श्रीगणेशाय नमः ॥ रविरुवाच । ततोऽतिगर्वितो मोहासुरो दैत्यः प्रतापवान् । देवानां जीवघातार्थं प्रयत्नं स चकार ह ॥१॥ तदर्थं प्रेषयामास दैत्यान् परमदारुणान् । कर्ममार्गस्य ते सर्वे चक्रुः खंडनमादरात् ॥२॥ स्वल्पकालेन भो विप्राः कर्महीनं महीतलम् । कृतं दैत्यैश्च सर्वत्र त्रासिताः कर्मकारकाः ॥३॥ वर्णाश्रमविहीनं तैः कृतं सर्वत्र भूतलम् । धर्ममूलं तथा नष्टं बभूव क्रमतः किल ॥४॥ न स्वाहा न स्वधा कुत्र प्रबभूव महर्षयः । मोहासुरस्य मूर्तिं ते स्थापयामासुरादरात् ॥५॥ दैत्यपास्तत्र लोकैर्वा पूजां सर्वत्र संमताम् । कारयामासुरुग्रैश्च दंडैः संताड्य मानवान् ॥६॥ ततो मुनिगणाः सर्वे भ्रष्टा जाता विशेषतः । मृताः केचित्तथाऽरण्ये गताः परमदारुणे ॥७॥ तत्र ते भयसंयुक्ताः क्रियां चक्रुर्महर्षयः । एवं धर्मस्य विच्छेदः कृतस्तेन सुरारिणा ॥८॥ ततो देवगणाः सर्वे भययुक्ता विशेषतः । उपोषणसमायुक्ता विचारं चक्रिरे द्विजाः ॥९॥ मिलिता मुनिभिः सार्धं मोहासुरविनाशने । न प्रापुर्देवविप्रेंद्रा उपायं सुखदं परम् ॥१०॥ ततस्तानर्यमा प्राह शृणुध्वं सुरसत्तमाः । मुनयश्च महाभागा वचो मे हितकारकम् ॥११॥ नामरूपधरं सर्वं तस्मान् मृत्युर्न वै भवेत् । मोहासुरस्य देवेंद्रास्तत्रोपायं वदाम्यहम् ॥१२॥ गणेश्वरस्य हस्तेन दैत्योऽयं प्रमरिष्यति । स्वयं योगमयः प्रोक्तस्तस्मात्तं प्रभजामहे ॥१३॥ स एव निजलोकस्थो निजबोधेन दैत्यपम् । हनिष्यति न संदेहः स्तूयतां स सुरेश्वराः ॥१४॥ सूर्यस्य वचनं श्रुत्वा देवा हर्षसमन्विताः । विष्णवाद्याश्च पुनस्तं ते जगुर्वचनमुत्तमम् ॥१५॥ देवा ऊचुः । सम्यगुक्तं त्वया भानो बुद्ध्या त्वमधिको मतः । सर्वेभ्यो जीवदाता भो जातोऽस्यत्र न संशयः ॥१६॥ ततो देवाश्च विप्राश्च तपसा गणनायकम् । आराधयन् प्रयत्नेन विघ्नवारणकारणम् ॥१७॥ एकाक्षरविधानेनापूजयंस्तं निरंतरम् । अजपन् मंत्रमाद्यं तु ध्यायंतो गणपं हृदि ॥१८॥ नानातपःसमायुक्ता उपोषणपरायणाः । ऋषयो देवदेवेशा विघ्नेश्वरमतोषयन् ॥१९॥ वर्षाणां शतकेष्वेवं गतेषु गणनायकः । आययौ तान् वरं दातुं भृशं भावेन तोषितः ॥२०॥ सौम्यतेजोयुतश्चैवाखुगः पूर्णो गजाननः । चतुर्बाहुर्दयापूर्णो महोदरविराजितः ॥२१॥ एकदंतो विशालाक्षः शूर्पकर्णधरः प्रभुः । सिद्धिबुद्धिसमायुक्तो नाभिशेषविराजितः ॥२२॥ चिंतामणिं गले बद्ध्वा नागयज्ञोपवीतवान् । एवं समाययौ देवो देवर्षीणां पुरो विभुः ॥२३॥ तं दृष्ट्वा देवविप्रास्ते हर्षिता भक्तिसंयुताः । प्रणेमुः पूजयामासुर्यथाशास्त्रविधानतः ॥२४॥ ततस्तं तुष्टुवुः सर्वे कृतांजलय आदरात् । तद्दर्शनमहोत्साहा यथामतय भो द्विजाः ॥२५॥ देवर्षय ऊचुः । नमस्ते गणनाथाय महोदरस्वरूपिणे । अनाथाय च नाथाय सर्वेषां ते नमो नमः ॥२६॥

अनादिसिद्धिनाथाय बुद्धिनाथाय ढुंढये । हेरंबाय स्वभक्तेभ्यः सर्वदाय नमो नमः ॥२७॥ चतुर्बाहुधरायैव शूर्पकर्णाय ते नमः । लंबोदराय विघ्नेश विघ्नवारण ते नमः ॥२८॥ गजाननाय देवायाऽखुवाहाय महात्मने । शेषनाभिस्थितायैवैकदंताय नमो नमः ॥२९॥ महागणपते तुभ्यं सर्वकारणकारण । भक्तवाञ्छाविघातानां हराय तु नमो नमः ॥३०॥ मायाश्रयाय मायायाधारकाय महाभुज । अभक्तकामदहनरूपाय च नमो नमः ॥३१॥ योगानां पतये तुभ्यं योगदात्रेऽव्ययाय ते । स्वानंदवासिने चैव योगाकाराय ते नमः ॥३२॥ सर्वेषां जठरेषु त्वं स्थित्वा भोगान् करोषि वै । भोक्ता त्वदुदरे वै न कोऽपि तेन महोदरः ॥३३॥ देहदेहिसमायोगे बोधब्रह्मणि संस्थितम् । को जानाति च तं देवं सोऽपि दर्शनतां गतः ॥३४॥ भक्तवत्सलभावेन प्रकटस्त्वं समागतः । वयं तेन कृतार्थाश्च देवदेवेश निश्चितम् ॥३५॥ वयं धन्या यतो दृष्टः सर्वोदरविलासकृत् । महोदरः प्रसन्नात्मा साक्षाद्ब्रह्मपतिः प्रभुः ॥३६॥ किं स्तौमि त्वां गणाधीश वेदादीनां तथोदरे । संस्थितं प्रणमामस्त्वं योगगम्यं सनातनम् ॥३७॥ रविरुवाच । एवं स्तुतिं समाकर्ण्य प्रणयेन सुतोषितः । जगाद तान् गणेशानो भक्तिभावनियंत्रितः ॥३८॥ महोदर उवाच । वृणुध्वं सर्वदेवेशा मुनयश्च यथेप्सितम् । दास्यामि सकलं तद्वो भक्त्या स्तोत्रेण तोषितः ॥३९॥ भवत्कृतमिदं स्तोत्रं भवेन् मत्प्रीतिवर्धनम् । पठतां शृण्वतां देवाः सर्वसिद्धिप्रदायकम् ॥४०॥ इति तस्य वचः श्रुत्वा देवा मुनिगणैः सह । हर्षयुक्ताः प्रणम्यैनं जगुस्ते तं गणेश्वरम् ॥४१॥ देवर्षय ऊचुः । यदि प्रसन्नतां यातो देवदेवेश विघ्नप । तदा ते पादपद्मे नो भक्तिं देहि विशेषतः ॥४२॥ मोहासुरेण दुष्टेन स्थानभ्रष्टाः कृता वयम् । मुनयः कर्महीनाश्च जहि तं गर्वसंयुतम् ॥४३॥ ब्रह्मांडं विजितं तेन तत्र लोकाः सुदुःखिताः । कृतास्तान् सुखदाता वै भव स्वामिन्नमोऽस्तु ते ॥४४॥ तेषां वचनमाकर्ण्य तानुवाच तथेति ह । महोदरः प्रसन्नात्मा भक्तवत्सलभावतः ॥४५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते देवर्षिवरप्रदानं नामाष्टमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ रविरुवाच । ततो महोदरः क्रोधसमायुक्तः प्रतापवान् । परश्वादि स्वायुधानि दधानो प्रबभौ द्विजाः ॥१॥ मूषकोपरि संस्थाय देवर्षिगणसंयुतः । मोहासुरं निहंतुं स ययौ तन्नगरे प्रभुः ॥२॥ एतस्मिन्नंतरे तत्र समासीनो महासुरः । मोहो दैत्याधिपैः सर्वैर्वेष्टितः प्रबभौ द्विजाः ॥३॥ अकस्मान्नारदो दैत्यं ययौ गानपरायणः । तं दृष्ट्वा प्रणनामाऽथ मोहः सर्वसमन्वितः ॥४॥ समासीनं महादैत्यः पप्रच्छ विनयान्वितः । वद चित्रं मुने किंचित् भ्रमसि त्वं च सर्वगः ॥५॥ दैत्यस्य वचनं श्रुत्वा नारदस्तमुवाच ह । हर्षयुक्तः कथां पुण्यां दैत्यस्य विषरूपिणीम् ॥६॥ नारद उवाच । मोहासुर महाभाग शृणु मे वचनं हितम् । चित्रं वदामि यद् दृष्टं भावपूर्वेण चेतसा ॥७॥ देवैः संप्रार्थितो देवो मुनिभिर्वनसंस्थितैः । महोदर-वधार्थाय तव दैत्यपतेऽधुना ॥८॥ स देवो मूषकारूढो वधार्थं ते समागतः । दशयोजनदूरस्थो बभूवासुर चाधुना ॥९॥ इत्युक्त्वा नारदस्तं स मौनभावपरायणः। बभूव दैत्यराजस्तु भयोद्विग्नस्तदाऽभवत् ॥१०॥ नियम्य दुःखमुग्रं स उवाच नारदं पुनः। मोहासुरो भयोद्विग्नो हृदयेन विदूयता ॥११॥ महासुर उवाच । शृणु नारद मे वाक्यं न मृत्युर्मे प्रवर्तते । नामरूपात्मकेभ्यश्च किं करिष्यति देवपः ॥१२॥ महोदरात्मको नाम रूपधारी समागतः । स देवं तं हनिष्यामि नात्र कार्या विचारणा ॥१३॥ तस्य दैत्याधिपस्यैतद्वचनं नारदो मुनिः । श्रुत्वोवाच महायोगी मोहासुरं विचारतः ॥१४॥ शृणु मोहासुर त्वं मे वचनं हितकारकम् । महोदरो नरो नैव न देवो न च राक्षसः ॥१५॥ नामरूपविहीनं यद्ब्रह्म वेदेषु कथ्यते । नामरूपमयं पूर्णं स एवायं समागतः ॥१६॥ हनिष्यति यदा क्रुद्धस्त्वां तस्माच्छरणं व्रज । महोदरं महाभागं तेन त्वं सुखमेष्यसि ॥१७॥ ततस्तं दैत्यराजः स जगाद भयसंकुलः । वद नारद योगज्ञ भ्रमनाशाय मे वचः ॥१८॥ नामरूपविहीनोऽयं कथ्यसे च महोदरः । समागतः कथं देही नामरूपसमन्वितः ॥१९॥ नामरूपमयं ब्रह्म नामरूपविवर्जितम् । सर्वत्रयोगभावेन तिष्ठत्यत्र न संशयः ॥२०॥ स्वपरभ्रांतिजो मोहो न कदा तत्र वर्तते । देवदैत्यादिभेदेषु समभावयुतं सदा ॥२१॥ अयं महोदरश्चैव देवपक्षविवर्धनः । दैत्यानां प्रवधार्थाय किमर्थं कुरुते मतिम् ॥२२॥ विपरीतमिदं विप्र वचनं ते च सांप्रतम् । भासते पश्य योगींद्र नुद मे संशयं प्रभो ॥२३॥ महोदरस्य मामन्यत् ब्रह्मर्षे वद चेष्टितम् । किंरूपः किंस्वभावश्च कस्यांशः किंपराक्रमः ॥२४॥ कुत्र वासकरः सोऽपि कीदृशं ब्रह्म तस्य यत् । एतत् सर्वं सुविस्तार्य ज्ञानं मे करुणानिधे ॥२५॥ भानुरुवाच । एवं पृष्टो महायोगी गाणपत्यः प्रतापवान् । मोहासुरं यथापूर्वं तं जगाद महासुरम् ॥२६॥

नारद उवाच । मोहासुर महाभाग मतिस्ते योगिसंमता । योगरूपं त्वया पृष्टं तेनाऽहं तोषितो भृशम् ॥२७॥ अतस्त्वां सकलं दैत्य कथयामि विशेषतः । शृणुष्वैकमना ढुंढेश्चेष्टितं योगदं परम् ॥२८॥ नामरूपमयं विद्धि जगत्सर्वं चतुर्विधम् । नामरूपविहीनं यद्देहिरूपं जगद्धितम् ॥२९॥ तयोर्योगे च दैत्येंद्र बोधः सर्वत्र संमतः । ब्रह्म यद्वेदवादेषु कथ्यते विद्धि चेतसा ॥३०॥ तदेव नामरूपादियुक्तं भवति सर्वदा । तदेव नामरूपादि हीनं भवति सर्वदा ॥३१॥ तद्ब्रह्म पूर्णभावेन संस्थितं योगवाचकम् । दैत्यपुंगव जानीहि तदेवाऽसौ महोदरः ॥३२॥ देहदेहिकृतो भोगः स्वस्वस्वानंददः परः । सर्वत्रगः स उदरे भुक्तभोगश्च कथ्यते ॥३३॥ उदरेन कृतो भोगो यदि बाह्यपरायणैः । तदा ते मरणैर्युक्ता भवंति स्वल्पकालतः ॥३४॥ भिन्नभोगश्च विश्वस्मिन्नात्मनि स्वस्वानंदमयो भोगो भुज्यते सर्वभावतः । सर्वैर्ब्रह्मभिरत्यंतं जगद्भिश्चैव निश्चितम् ॥३५॥ देहेषु जठरं भिन्नं जठरं मतमात्मनि । एकभावात्मकं ह्यमृतात्मकः । एकभावमयो भोगो भोगयुक्तानुभौ मतौ ॥३६॥ देहेषु जठरं भिन्नं जठरं मतमात्मनि । एकभावात्मकं दैत्य जानीहि योगसेवया ॥३७॥ यदि भोगविहीनौ तौ विश्वात्मानौ महामते । विशेषतो यत्नवंतौ किमर्थं वै बभूवतुः ॥३८॥ नामरूपधरं विश्वं जातं भोगार्थमेव च । नामरूपविहीनं यद्देही जातस्तदर्थतः ॥३९॥ नास्ति भोगस्य चेच्छा चेत् किमर्थं द्विविधं भवेत् । अतो जानीहि दैत्येंद्र भोगयुक्तौ विशेषतः ॥४०॥ विश्वात्मनोश्च संस्थोऽयं जठरे गणनायकः । महोदराख्या संजाता तेन तस्य महात्मनः ॥४१॥ द्विविधस्य च दैत्येंद्र जठरं स्वल्पवाचकम् । स्वस्वभोगपरत्वाद्वै विचारय महामते ॥४२॥ सकलानां विशेषेणोदरेषु स सदा स्थितः । महोदरश्च तेनाऽयं कथितो वेदवादिभिः ॥४३॥ विश्वं देहमयं तस्य मस्तकं चात्मवाचकम् । तयोर्योगे गणेशोऽयं कथ्यते स गजाननः ॥४४॥ जायते सकलं यस्मादंते गच्छति यत्र च । दैत्यनायक जानीहि गजरूपं तदेव वै ॥४५॥ विश्वात्मानौ च संसृष्टौ ताभ्यां ज्ञानार्थमेव सः । तपसाऽऽराधितो देवो देहधारी बभूव ह ॥४६॥ न तस्य प्राकृतो देहः सर्ववत्पश्य दैत्यप । भुक्तिमुक्त्यर्थमेवं स स्वेच्छया देहभोगवत् ॥४७॥ स्वसंवेद्येन योगेन लभ्यते गणनायकः । तदेव नगरं तस्मात्तस्य जानीहि सर्वगम् ॥४८॥ सिद्धिर्भ्रांतिप्रदा माया ततो भ्रमति वै जनः । बुद्धिर्भ्रांतिधरा प्रोक्ता चित्तरूपा विशेषतः ॥४९॥ चित्तं पंचविधं प्रोक्तं तदैश्वर्यं भ्रमात्मकम् । त्यक्त्वा शांतिमवाप्नोति योगीशो योगसेवया ॥५०॥ तस्मात्सिद्धेश्च बुद्धेश्च स्वामी प्रोक्तो महोदरः । तं भजस्व महादैत्य नोचेत्त्वां स हनिष्यति ॥५१॥ सुरासुरमयं तेन सृष्टं विश्वं विशेषतः । स्वस्वधर्मसमायुक्तं तेन खेलति विघ्नपः ॥५२॥ देवा दैत्यविनाशार्थं

यतंते स्म यदा प्रभो । तदा दैत्याय भवति सिद्धीशः सिद्धिदायकः ॥५३॥ देहधारी स्वयं भूत्वा वरदो भवति प्रभुः । असुरेभ्यो न संदेहस्तं जानीहि महोदरम् ॥५४॥ दैत्या देवविनाशार्थं यतंते सर्वभावतः । तदा देहधरश्चाऽयं हंति दैत्यान्न संशयः ॥५५॥ देवाः संख्यायुता वेदे वर्तंते दैत्यनायक । वृद्धिक्षयविहीनत्वाद् हंति तान्न विशेषतः ॥५६॥ दैत्या अपाररूपाश्च वृद्धिक्षययुता मताः । तस्मात्तान् हंति वेगेन गणेशो ब्रह्मनायकः ॥५७॥ स्वस्वधर्मरता एते यदा खलु सुरासुराः । तदा तिष्ठत्ययं योगरूपश्च जठरे विभुः ॥५८॥ सर्वं ते कथितं दैत्य ब्रह्मभूतोऽयमुच्यते । तस्यांशैः सर्वमुत्पन्नं जगद्ब्रह्म च कथ्यते ॥५९॥ तस्मात्त्वं शरणं गच्छ यदि जीवितुमिच्छसि । भोगार्थं दैत्यराज त्वं मोक्षार्थं लालसा यदि ॥६०॥ एवमुक्त्वांतर्दधेऽसौ नारदः करुणानिधिः । गणेशगानसंयुक्तो वीणावादे प्रलालसः ॥६१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते मोहासुरज्ञानप्रदानं नाम नवमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ रविरुवाच । गते मुनौ महाभागा मोहो जातः सुहर्षितः । विचारमकरोच्चित्ते नारदोक्तविचारवित् ॥१॥ एकांते संस्थितो दैत्यो गणेशध्यानतत्परः । महोदरस्य माहात्म्यं ज्ञात्वा मनसि हर्षितः ॥२॥ स शुक्रमुपसंगम्याकथयत् प्रकथानकम् । नारदोक्तं च काव्येन तेनैव बोधितो द्विजाः ॥३॥ ततः स्वगृहमागत्य गणेशे मोहितोऽभवत् । मोहासुरश्च मोहेन वर्जितः प्रबभौ स्वयम् ॥४॥ एतस्मिन्नंतरे तत्र विष्णुः स्वयमुपाययौ । प्रेषितो गणराजेन सामार्थं दैत्यसन्निधौ ॥५॥ केशवं मानयामास मोहासुरः प्रतापवान् । अपूजयन् महादैत्यो निवेश्य शुभ आसने ॥६॥ पप्रच्छ तं महाविष्णुं किमर्थं त्वमिहागतः । वद विष्णो महाभाग कारणं ते करोम्यहम् ॥७॥ विष्णुरुवाच । महोदरः समायातो धर्मरक्षणतत्परः । देवैश्च मुनिभिः सार्धं तेनाऽहं प्रेषितोऽसुर ॥८॥ सामार्थं ते महाभागाऽसि धन्यो दैत्यनायक । मित्रभावं त्वया सार्धं स इच्छति महोदरः ॥९॥ देहदेहिमयं ब्रह्म तदेव गणनायकः । महोदरः समाख्यातो मुनिभिस्तत्त्वदर्शिभिः ॥१०॥ सर्वेषामुदरे स्थित्वा भोगान् सर्वान् भुनक्ति सः । महोदरश्च तेनाऽसौ वयं स्वल्पोदराः स्मृताः ॥११॥ नगरस्य पुरो राजन् दशयोजनदूरगः । संस्थितो देवविप्राद्यैः संस्तुतः प्रबभौ विभुः ॥१२॥ स उवाच तदेवाऽहं कथयामि शृणुष्व तत् । वचनं सर्वभावज्ञ

सर्वेभ्यः सुखदायकम् ॥१३॥ विरुद्धं त्यज दैत्येंद्र तिष्ठ स्थाने स्वके सुखम् । देवा हविर्भुजः संतु ब्राह्मणाः कर्मकारकाः ॥१४॥ तिष्ठंतु लोका वर्णाश्रमयुता दुःखवर्जिताः । एतत् कुरु महादैत्य नोचेद्युद्ध्यस्व दैत्यपैः ॥१५॥ एतत्ते कथितं वाक्यं गणेशेन विशेषतः । तत् कुरुष्व महाभाग भव मित्रं महात्मनः ॥१६॥ रविरुवाच । श्रुत्वा विष्णुवचो रम्यं तमुवाच महाबलः । मोहासुरः प्रसन्नात्मा सर्वेषां मोहकारकम् ॥१७॥ मोहासुर उवाच । सम्यग् ब्रवीषि विष्णो त्वं मदीयहितकारकम् । करिष्यामि तथा देवं मानयिष्ये महोदरम् ॥१८॥ एवमुक्त्वा स दैत्येंद्रानाह्वयामास सत्वरम् । समागतानुवाचाथ विष्णुना कथितं वचः ॥१९॥ मोहासुरस्य वाक्यं तच्छ्रुत्वा ते दैत्यसत्तमाः । क्रोधयुक्ताश्च पातालं विविशुर्भयसंकुलाः ॥२०॥ शुक्रेण सहितो मोहासुरो दैत्यः प्रतापवान् । विष्णुना च तथा विप्रा गणेशं शरणं ययौ ॥२१॥ समागत्य स दैत्येंद्रो ननाम स महोदरम् । भक्तिभावसमायुक्तः पूजयामास यत्नतः ॥२२॥ पूजयित्वा यथान्यायं पुनस्तं प्रणनाम सः । कृत्वा करपुटं मोहस्तुष्टाव च महोदरम् ॥२३॥ मोहासुर उवाच । नमस्ते ब्रह्मरूपाय महोदर सुरूपिणे । सर्वेषां भोगभोक्त्रे वै देहदेहिमयाय ते ॥२४॥ मूषकारूढदेवाय त्रिनेत्राय नमो नमः । चतुर्भुजाय देवानां पतये ते नमो नमः ॥२५॥ अनादये च सर्वेषामादिरूपाय ते नमः । विनायकाय हेरंब दीनपालाय वै नमः ॥२६॥ गणेशाय निजानंदपतये ब्रह्मनायक । सिद्धिबुद्धिप्रदात्रे वै ब्रह्मभूताय वै नमः ॥२७॥ ब्रह्मभ्यो ब्रह्मदात्रे वै योगशांतिमयाय च । योगिनां पतये तुभ्यं योगिभ्यो योगदायक ॥२८॥ सिद्धिबुद्धिपते नाथ एकदंताय ते नमः । शूर्पकर्णाय शूराय वीराय च नमो नमः ॥२९॥ सर्वेषां मोहकर्त्रे वै भक्तेभ्यः सुखदायिने । अभक्तानां विशेषेण विघ्नकर्त्रे नमो नमः ॥३०॥ मायाविने च मायाया आधाराय नमो नमः । मायिभ्यो मायया चैव भ्रांतिदाय नमो नमः ॥३१॥ किं स्तौमि त्वां गणाध्यक्ष यत्र वेदाः सहांगकाः । शांतिं प्राप्तास्तथापि त्वं संस्तुतोऽसि दयापरः ॥३२॥ धन्यौ मे पितरौ ज्ञानं तपः स्वाध्याय एव च । धन्यं वपुश्च देवेश येन दृष्टं पदांबुजम् ॥३३॥ इत्युक्त्वा प्रणनामाथ तमुवाच महोदरः । भक्तं भावयुतं दृष्ट्वा वचः परमशोभनम् ॥३४॥ महोदर उवाच । मोहासुर वृणुष्व त्वं वरं यं मनसीप्सितम् । दास्यामि भक्तिमोहेन मोहितोऽहं त्वयाऽधुना ॥३५॥ त्वां हंतुं क्रोधसंयुक्त आगतोऽहं न संशयः । शरणागतमेवं त्वां हन्मि नो भक्तिसंयुतम् ॥३६॥ मदीयं स्तोत्रमेतद्वै सर्वदं यत्त्वया कृतम् । भविष्यति जनायैव पठते शृण्वतेऽसुर ॥३७॥ मोहनाशकरं चैव भुक्तिमुक्तिप्रदं भवेत् । धनधान्यादिदं सर्वं पुत्रपौत्रसुखप्रदम् ॥३८॥

रविरुवाच । एवं गणेशवाक्यं स श्रुत्वा हर्षसमन्वितः । मोहासुर उवाचाऽथ निबद्धकरसंपुटः ॥३९॥ मोहासुर उवाच । महोदर नमस्तुभ्यं यदि दास्यसि मे वरम् । तदा ते पादपद्मे वै भक्तिं देहि दृढां प्रभो ॥४०॥ त्वदीयभक्तमित्रत्वं स्थानं भक्ष्यादिकं तथा । देहि मे देवदेवेश तत्र स्थास्यामि निश्चलः ॥४१॥ मोहासुरस्य तद्वाक्यं श्रुत्वा तं प्रत्युवाच ह । महोदरः प्रसन्नात्मा भक्तिभावेन तोषितः ॥४२॥ महोदर उवाच । मदीया भक्तिरुग्रा ते भविष्यति महामते । मदीयभक्त-मित्रत्वं प्राप्स्यसि त्वं न संशयः ॥४३॥ कर्मज्ञानादिभावेषु मदीयं पूजनं न हि । स्मरणं तत्र दैत्य त्वं भोगभोक्ता भविष्यसि ॥४४॥ स्वस्थाने तिष्ठ दैत्येंद्र स्वधर्मस्थितमादरात् । नरं मोहविहीनं च तं कुरुष्व भजस्व माम् ॥४५॥ तथेति गणपं मोहासुरो नत्वा प्रतापवान् । स्वस्थाने संस्थितो गत्वा शांतियुक्तो बभूव ह ॥४६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते मोहासुरशांतिवर्णनं नाम दशमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ रविरुवाच । गते मोहासुरे तत्र शांतरूपे सुरेश्वराः । सुरैश्च मुनिभिः सार्धं महोदरमपूजयन् ॥१॥ पूजयित्वा गणेशानं प्रणता भक्तिसंयुताः । तुष्टुवुस्ते विशेषेण हर्षयुक्ताः सुरर्षयः ॥२॥ सुरर्षय ऊचुः । अमेयमायामित-विक्रमाय निरंजनायाऽथ गणेश्वराय । अमायिने मायिकमोहनाय नमो नमस्तेऽस्तु महोदराय ॥३॥ मनोवचोहीन-तया स्थिताय मनोवचोयुक्तगजाननाय । अयोगसंयोगमयाय ढुंढे नमो नमस्तेऽस्तु महोदराय ॥४॥ विदेहरूपाय च बोधकाय तथाहि सोऽहंपदभोगकाय । सदा सुबिंद्वात्मकदेहगाय नमो नमस्तेऽस्तु महोदराय ॥५॥ गुणेशरूपाय सुषुप्तिकाय तथा सुसूक्ष्माय च जागृते ते । हरीश ब्रह्मादिषु संस्थिताय नमो नमस्तेऽस्तु महोदराय ॥६॥ शुभाशुभाकारधराय भूम्ने शुभाशुभादौ च सुपूजिताय । शुभाशुभे कर्मणि सिद्धिदाय नमो नमस्तेऽस्तु महोदराय ॥७॥ कर्त्रे सुपात्रे हरणाय कालप्रकाशरूपाय च भानवे ते । क्रियास्वरूपाय च शक्तिदाय नमो नमस्तेऽस्तु महोदराय ॥८॥ यमाय चंद्राय च वायवे वै कुबेररूपाय पुरंदराय । शिवाय वन्ह्यात्मकनैर्ऋताय नमो नमस्तेऽस्तु महोदराय ॥९॥ अनंतरूपाय जलेशकाय प्रजापते रूपधराय पाशिन् । दिगीशपालाय दिशामयाय नमो नमस्तेऽस्तु महोदराय ॥१०॥ सुरासुराणां च समाय नित्यं सुरासुराकारधराय

धात्रे । पिशाचगंधर्वमयाय यक्ष नमो नमस्तेऽस्तु महोदराय ॥११॥ धरास्वरूपाय जलप्रकाश जलस्वरूपाय च तेजसे ते । वाताय चाकाशमयाय धाम्ने नमो नमस्तेऽस्तु महोदराय ॥१२॥ अनादिमध्यांतविहारकाय सदादिमध्यांतमयाय चित्रम् । तत्त्वप्रकाशाय च तत्त्वमूर्ते नमो नमस्तेऽस्तु महोदराय ॥१३॥ नराय वर्णाश्रमसंस्थिताय द्विजस्वरूपाय नराधिपाय । वैश्याय शूद्राय तथांऽतिमाय नमो नमस्तेऽस्तु महोदराय ॥१४॥ गुरोरधीनाय गृहस्थरूपवनस्थितायाऽथ परिव्रजाय । वर्णाश्रमैर्हीनमयाय योगिन् नमो नमस्तेऽस्तु महोदराय ॥१५॥ वृक्षादिवीरुत्तृणसंस्थिताय धराधराकारमयाय देव । पशुस्वरूपाय च पक्षिणे ते नमो नमस्तेऽस्तु महोदराय ॥१६॥ रसस्वरूपाय रसाधिपाय तथाऽन्नरूपाय च जीवनाय । चराचराकारमयाय नाग नमो नमस्तेऽस्तु महोदराय ॥१७॥ वरांकुशाद्यैश्च सुचिह्नितायोंदुरुध्वजायाऽऽखुसुवाहनाय । त्रिनेत्रधाराय च शूर्पकर्ण नमो नमस्तेऽस्तु महोदराय ॥१८॥ स्वानंदलोकाधिप देवदेव सुसिद्धिबुद्धिप्रभवे परात्मन् । सदैकदंताय चतुर्भुजाय नमो नमस्तेऽस्तु महोदराय ॥१९॥ महोदरायादिसुपूजिताय सुवस्त्रसंभूषणभूषिताय । प्रमोदमोदादिगणैः स्तुताय नमो नमस्तेऽस्तु महोदराय ॥२०॥ सदामृताभेदमयेक्षुनीरसमुद्रलीलाकरकंजपाणे । गणेश हेरंब च भक्तपोष नमो नमस्तेऽस्तु महोदराय ॥२१॥ प्रविश्य विश्वोदरमेव भोगविहारिणे विश्वमयाय पूर्ण । विकारहीनाय सुबोधदाय नमो नमस्तेऽस्तु महोदराय ॥२२॥ अल्पोदरा देवमुखाश्च सर्वे स्वस्वप्रभोगे कुशलाश्च तेन । तेषु त्वमेवं सुखभोगकारिन् नमो नमस्तेऽस्तु महोदराय ॥२३॥ भानुरुवाच । एवं संस्तुवतां तेषां सुरर्षीणां महर्षयः । समुत्पन्नो भक्तिरसस्तेन ते ननृतुः पुरः ॥२४॥ साश्रुनेत्रान् स रोमांचान् रुद्धकंठान् विशेषतः । तानुवाच स्वयं देवो भक्तान् वै भक्तवत्सलः ॥२५॥ गणेश उवाच । वरान् वृणुत देवेशा देवा मुनिगणास्तथा । भक्त्या स्तोत्रेण तुष्टोऽहं दास्यामि मनसीप्सितान् ॥२६॥ गणेशवचनं श्रुत्वा हर्षयुक्ताः सुरर्षयः । तं प्रणम्य महात्मानं द्विजा ऊचुर्महोदरम् ॥२७॥ देवर्षय ऊचुः । यदि तुष्टोऽसि देवेश तदा ते भक्तिमुत्तमाम् । देहि नो गणनाथ त्वं तया तृप्ताः स्म सांप्रतम् ॥२८॥ त्वया शांतिधरो दुष्टः कृतो मोहासुरः प्रभो । तेन सर्वं जगत् पूर्णं वरैश्चापि प्रपालितम् ॥२९॥ अधुना तापसंहीनाः कृता गणपते वयम् । त्वं नाथोऽसि जगन्नाथ अनाथानां करोषि तत् ॥३०॥ एवमुक्त्वा गणेशानं प्रणेमुस्ते सुरर्षयः । तथेति तानुवाचैव गणेशोऽंतर्दधे द्विजाः ॥३१॥ देवाश्च मुनयः सर्वे स्वस्वस्थानं ययुस्ततः । स्वस्वधर्मरता लोका बभूवुर्विगतज्वराः ॥३२॥ एवं मोहासुरं विप्राः शांतिरूपधरं प्रभुः । चकार

गणनाथो वै मोहहीनं जगत्तथा ॥३३॥ महोदरस्य तस्यैवावतारा विविधाः स्मृताः । चरित्रमखिलं तेषां गदितुं न प्रशक्यते ॥३४॥ रामः सीतावियोगार्तः शरणं तं महोदरम् । ययौ तेन स शांतोऽभूत् ससीतो भजने रतः ॥३५॥ दक्षिणस्यां दिशि प्रांते स्थापितोऽसौ महोदरः । देवर्षिभिश्च भो विप्राः स्थानं तद्भुवि पप्रथे ॥३६॥ इदं महोदरस्यैव चरितं मोहनाशनम् । मोहशांतिप्रदं पूर्णं कथितं वो मया द्विजाः ॥३७॥ यः पठेच्छृणुयाद्यश्च तस्मै शांतिप्रदायकम् । भुक्तिमुक्तिप्रदं चैव भविष्यति न संशयः ॥३८॥ मोहेन मोहिता विप्रा मां वदंति परात्परम् । स्वल्पयोगधरास्ते ये ज्ञातव्याश्च न संशयः ॥३९॥ एतद्वः कथितं सर्वं मदीयं सुचरित्रकम् । गणेशभक्तिसंयुक्तं तस्मात्तं प्रभजाम्यहम् ॥४०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते महोदरांऽतर्धानं नामैकादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । सूर्येण कथितं चित्रं महोदरकथानकम् । श्रुत्वा विस्मयसंयुक्ता बभूवुर्वालखिल्यकाः ॥१॥ मानसे धारयामासुर्गणेशोऽयं सुशांतिदः । योगरूपो न संदेहो भानुना बोधिता वयम् ॥२॥ हर्षयुक्ताः पुनस्तं ते वालखिल्याः प्रजापते । महोदरस्य पप्रच्छुश्चेष्टितं तस्य शांतिदम् ॥३॥ वालखिल्या ऊचुः । धन्योऽसि च रवे त्वं वै योगशांति-प्रकाशकः । वयं बोधेन संयुक्ता संशयो न त्वया कृतः ॥४॥ धन्यं जन्म गणेशस्य कथां तस्य महाप्रभोः । श्रुत्वा मनसि संतुष्टा भवामस्त्वदनुग्रहात् ॥५॥ सर्वज्ञोऽसि महाभाग साक्षाद्गणपतिः स्वयम् । आत्माकारेण सूर्यस्त्वं तन्न चित्रं किमप्युत ॥६॥ अधुना ब्रूहि देवेश रामो गणपतिं कथम् । अभजद्भक्तिसंयुक्तः शांतिरूपो बभूव ह ॥७॥ धन्यास्ते पुरुषा लोके गणेशस्य कथां रवे । पृच्छंति प्रपठंत्यन्ये शृण्वते योगशांतिदाम् ॥८॥ मुद्गल उवाच । इति पृष्टो महातेजा वालखिल्यैः प्रजापते । रविस्तान् हर्षितो भूत्वा भो जगाद शृणुष्व तत् ॥९॥ रविरुवाच । अत्राऽहं कथयिष्यामि चेतिहासं पुरातनम् । नारायणस्य संवादं मार्कंडेयस्य सिद्धिदम् ॥१०॥ मृकंडाच्च समुत्पन्नो मार्कंडेयो महामुनिः । कृतोपवीतको भूत्वा तताप परमं तपः ॥११॥ ब्रह्मचर्यसमायुक्तो वेदशास्त्रज्ञसत्तमः । नित्यं जजाप गायत्रीं मोक्षेप्सुः स विशेषतः ॥१२॥ अयुते प्रगते विप्रा वर्षाणां च तदाऽऽश्रमे । आययौ शंकरस्तत्र पार्वत्या गणसंवृतः ॥१३॥ ध्याने विष्णुं समाधृत्वा संस्थितो

न बुबोध तम् । समागतं महेशानं शिवश्चित्रं तदाऽकरोत् ॥१४॥ योगमायाबलेनाऽसौ हृदि तस्य गतः शिवः। लोपयामास विष्णुं तं हृदि संस्थं मुनेः किल ॥१५॥ हृदये शंकरं दृष्ट्वा विस्मितोऽसौ महामुनिः। त्यक्त्वा ध्यानं बहिर्वीक्ष्य शंकरं प्रणनाम सः ॥१६॥ अथर्वशिरसा शंभुं स्तुत्वा हर्षसमन्वितः । पुनः पुनर्महेशानं प्रणम्य पुरतः स्थितः ॥१७॥ तमुवाच महादेवो वरं वृणु हृदीप्सितम् । दास्यामि तपसा तुष्टो गायत्र्याश्च जपेन ते ॥१८॥ गायत्री वेदमाता वै पिता ओंकार उच्यते । ओंकाराच्च वयं जाता जानीहि तापसोत्तम ॥१९॥ अतो जपेन गायत्र्याः संतुष्टोऽहं न संशयः। स्तुत्या गंभीरया विप्र दास्यामि हृदि वाञ्छितम् ॥२०॥ शिवस्य वचनं श्रुत्वा तं जगाद महामुनिः। भक्तिं देहि त्वदीयां मे मुक्तिं संसारसागरात् ॥२१॥ ततस्तं प्रत्युवाचेदं वाक्यं वाक्यविशारदः। शिवः संतोषदः पूर्णः स्वभक्तेभ्यो विशेषतः ॥२२॥ शिव उवाच। मदीया भक्तिरुग्रा ते भविष्यति महामुने । मुक्तिश्च शाश्वती पूर्णा पुराणाचार्यता तथा ॥२३॥ आयुश्च सप्तकल्पाख्यं भविष्यति महामुने । यद्यदिच्छसि तत्तत्ते सफलं नात्र संशयः ॥२४॥ एवमुक्त्वांतर्दधे सशक्तिकोऽसौ शिवः स्वयम् । मार्कंडेयश्च संखिन्नः संस्थितोऽभून् महर्षयः ॥२५॥ प्रकीर्तिता मंत्रशक्तिर्गायत्री रूपधारिणी। देवता शंभुरूपा च कल्पिताऽभून् महात्मना ॥२६॥ शैवमार्गेण शंभुं सोऽभजच्चानन्यचेतसा । कालात्मकं महेशानं मोहहीनं विशेषवित् ॥२७॥ तत्र तेन समाख्यातं पुराणं सर्वसिद्धिदम् । मार्कंडेयं शिवस्यैव शक्तेर्माहात्म्यसंयुतम् ॥२८॥ ततो बहुगते काले नरनारायणावुभौ । आश्रमे तस्य देवर्षेर्जग्मतुः परमेश्वरौ ॥२९॥ वालखिल्या ऊचुः। वद भानो महाभाग चरित्रं च तयोः शुभम्। परमेश्वरसंज्ञौ तौ भवतः कथमादरात् ॥३०॥ भानुरुवाच। मम पुत्रश्च धर्मात्मा धर्मः सर्वसमानगः। तेन विष्णोस्तपस्तप्तं कीर्त्या सह महर्षयः ॥३१॥ गते वर्षशते पूर्णे विष्णुश्च वरदोऽभवत् । ताभ्यां पुत्रस्त्वमेवं नौ भव सोऽपि तथाऽकरोत् ॥३२॥ नरनारायणावेवं तयोः पुत्रौ बभूवतुः । नरो जीवमयः प्रोक्तो परो नारायणः शिवः ॥३३॥ तयोर्योगे च यद्ब्रह्म वैष्णवं कथ्यते बुधैः । अतस्तौ प्रसमाख्यातौ मया वः परमेश्वरौ ॥३४॥ धर्मस्याज्ञां गृहीत्वा वै निमिषारण्यगौ द्विजाः । भवतः स्म ततो देवौ तेपाते परमं तपः ॥३५॥ समाययौ तत्र साक्षात् स्वयं विष्णुर्यदृच्छया। तं दृष्ट्वा संनतौ तुष्टुवतुर्देवौ च केशवम् ॥३६॥ नानास्तोत्रैः प्रसाद्यैनं नेमतुर्भक्तितत्परौ । तावुवाच महाविष्णुरिच्छथः किं महामुनी ॥३७॥ ततस्तौ केशवं चैवोचतुः परमधार्मिकौ। वद योगं महाभाग सर्वशांतिकरं परम् ॥३८॥ एवमुक्तो

महायोगी तावुवाच प्रहर्षितः । योगं शांतिप्रदं पूर्णं गाणपत्यप्रियः सदा ॥३९॥ विष्णुरुवाच । चित्तं पंचविधं प्रोक्तं तदैश्वर्यं च यत् स्मृतम् । मायारूपं तदेवाशु त्यक्त्वा योगं समाप्स्यथः ॥४०॥ यद्यच्चित्तेन संप्राप्तं तत्तद्योगेन मानदौ । योगरूपं प्रकर्तव्यं तदाकारसमाधिना ॥४१॥ यद्यच्चित्तेन न ज्ञातं तत्तन्निर्वृत्तिवाचकम् । तदेव योगरूपं वै कर्तव्यं योगसेवया ॥४२॥ चित्ते चिंतामणिर्नित्यं तिष्ठेद्वै चित्तचालकः । भजतं तं महाभागौ तेन शांतिमवाप्स्यथः ॥४३॥ मायामोहयुतं चित्तं नानाभावेषु लालसम् । मायाहीनं सदा चित्तं शांतिरूपं भविष्यति ॥४४॥ चित्तमिच्छति धर्मं वै तथार्थं काममादरात् । मोक्षं च ब्रह्मभूतत्वं भ्रमयुक्तं न संशयः ॥४५॥ अहं चिंतामणिः साक्षान्न मे भिन्नं प्रविद्यते । तदिच्छेयं भ्रामयति किमर्थं मां भ्रमात्मिका ॥४६॥ अनेन योगमार्गेण चित्तं त्यक्त्वा महामुनी । शांतियोगस्वरूपौ वै संशयो न भविष्यथः ॥४७॥ एवमुक्त्वांऽतर्दधेऽसौ विष्णुर्वैकुंठगोऽभवत् । नरनारायणौ तत्र योगयुक्तौ बभूवतुः ॥४८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते नरनारायणविष्णुसंवादो नाम द्वादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ वालखिल्या ऊचुः । वद भानो महायोगिन्नरनारायणावृषी । किं चक्रतुस्ततः सर्वं ब्रह्मभूतौ विशेषतः ॥१॥ रविरुवाच । स्वाश्रमे तौ स्थितौ देवौ नरनारायणावृषी । विष्णुना कथितो योगः साधयामासतुः परम् ॥२॥ क्रमेण शांतिमापन्नौ गाणपत्यौ बभूवतुः । गणपस्य महामंत्रं शिवात् संगृह्य जेपतुः ॥३॥ चतुरक्षरकं मंत्रं हेरंबस्य विशेषतः । मूर्तिं रत्नमयीं कृत्वा पूजयेतां महामुनी ॥४॥ हेरंबस्य हृदि ध्यानं चक्रतुः परमादृतौ । शांतिं प्राप्तौ ततो विप्रा न मुंचंतौ गजाननम् ॥५॥ एवं वर्षशते पूर्णे तयोराश्रमगोऽभवत् । हेरंबः सिंहगो भूत्वा नागयज्ञोपवीतवान् ॥६॥ चतुर्बाहुधरश्चैव त्रिनेत्रो भूषणैर्वरैः । भूषितः सिद्धिबुद्धिभ्यां युतो लंबोदरः प्रभुः ॥७॥ नानापुष्पमयीं मालां त्रिशूलं मुद्गरं तथा । अंकुशं च करैर्विप्रा दधानस्तेजसा युतः ॥८॥ एतादृशं च हेरंबं दृष्ट्वा तौ मुनिसत्तमौ । प्रणेमतुर्दंडवत्तु पादयोस्तस्य योगिनौ ॥९॥ हेरंबं तत उत्थायापूजयेतां यथाविधि । पुनस्तुष्टुवतुस्तत्र तौ प्रणम्य गजाननम् ॥१०॥ नरनारायणावूचतुः । नमस्ते गणनाथाय भक्तसंरक्षकाय ते । भक्तेभ्यो भक्तिदात्रे वै हेरंबाय नमो नमः ॥११॥ अनाथानां विशेषेण नाथाय गजवक्त्रिणे ।

चतुर्बाहुधरायैव लंबोदर नमोऽस्तु ते ॥१२॥ ढुंढये सर्वसाराय नानाभेदप्रचारिणे । भेदहीनाय देवाय नमश्चिंतामणे नमः ॥१३॥ सिद्धिबुद्धिपते तुभ्यं सिद्धिबुद्धिस्वरूपिणे । योगाय योगनाथाय शूर्पकर्णाय ते नमः ॥१४॥ सगुणाय नमस्तुभ्यं निर्गुणाय परात्मने । सर्वपूज्याय सर्वाय देवदेवाय ते नमः ॥१५॥ ब्रह्मणां ब्रह्मणे तुभ्यं सदा शांतिप्रदायक । सुखशांति-धरायैव नाभिशेषाय ते नमः ॥१६॥ पूर्णाय पूर्णनाथाय पूर्णानंदाय ते नमः । योगमायाप्रचालाय खेलकाय नमो नमः ॥१७॥ अनादये नमस्तुभ्यमादिमध्यांतमूर्तये । स्रष्ट्रे पात्रे च संहर्त्रे सिंहवाहाय ते नमः ॥१८॥ गताभिमानिनां नाथस्त्वमेवात्र न संशयः । तेन हेरंबनामाऽसि विनायक नमोऽस्तु ते ॥१९॥ किं स्तुवस्त्वां गणाधीश योगाभेदमयं परम् । अतस्त्वां प्रणमावो वै तेन तुष्टो भव प्रभो ॥२०॥ एवमुक्त्वा नतौ तत्र नरनारायणावृषी । तावुत्थाप्य गणेशान उवाच घननिस्वनः ॥२१॥ हेरंब उवाच । वरं चित्तेप्सितं दास्यामि ब्रूतं भक्तियंत्रितः । महाभागावादिमुनी योगमार्गप्रकाशकौ ॥२२॥ भवत्कृतमिदं स्तोत्रं मम प्रीतिकरं भवेत् । पठते शृण्वते चैव भुक्तिमुक्तिप्रदं तथा ॥२३॥ यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः । मम भक्तिप्रदं चैव भविष्यति सुसिद्धिदम् ॥२४॥ भानुरुवाच । हेरंबवचनं श्रुत्वा हर्षितौ मुनिपुंगवौ । कृतांजलिपुटौ चोभावूचतुस्तं गजाननम् ॥२५॥ यदि प्रसन्नभावेन वरं दास्यसि विघ्नप । तदा ते भक्तिमुग्रां नौ देहि चाव्यभिचारिणीम् ॥२६॥ तथेति गणनाथस्तौ जगाद भक्तिभावितः । अंतर्धानं चकाराऽसौ स्वानंदस्थो बभूव ह ॥२७॥ ततस्तौ नित्यमत्यंतं गणेशभजने रतौ । हेरंबेति सदा मंत्रं वाण्या प्रोचतुरादरात् ॥२८॥ ततो बहुगते काले मार्कंडेयाश्रमे द्विजाः । जग्मतुर्ज्ञानदानार्थं करुणायुक्तमानसौ ॥२९॥ नरनारायणौ दृष्ट्वा मार्कंडेयो महामुनिः । प्रणनाम स साष्टांगं पूजयन् भक्तिसंयुतः ॥३०॥ पूजयित्वा स्वयं तत्र पादसंवाहने स्थितः । उवाच तौ विनीतात्मा मार्कंडेयो महामुनिः ॥३१॥ मार्कंडेय उवाच । धन्यं मे जन्म विद्या च तपो ज्ञानादिकं तथा । धन्यौ मे जनकौ चैव युवयोः पाददर्शनात् ॥३२॥ एवं नानाविधैर्वाक्यैः संस्तुतौ मुनिपुंगवौ । ऊचतुस्तं विनीतं तौ भक्तिभावेन तोषितौ ॥३३॥ नरनारायणावूचतुः । मार्कंडेय वृणुष्व त्वं वरं स्वमनसीप्सितम् । तवातिथ्यकृतेनैव संतुष्टौ नात्र संशयः ॥३४॥ तयोर्वचनमाकर्ण्य मार्कंडेयः प्रतापवान् । प्रणम्य तावुवाचाऽथ भक्तिनम्रात्मकंधरः ॥३५॥ मार्कंडेय उवाच । ज्ञानं शांतिप्रदं पूर्णं वदतं मुनिसत्तमौ । तेन तृप्तो भविष्यामि शांतियोगपरायणः ॥३६॥ दर्शयेथां महामायां तां ज्ञात्वा संत्यजाम्यहम् ।

भक्तिरेव गुरोः पादे दीयतां मे वरस्त्वयम् ॥३७॥ रविरुवाच । तथेति तं महात्मानावूचतुर्ज्ञानमुत्तमम् । शांतियोगप्रदं पूर्णं गाणेशं मुनिपुंगवौ ॥३८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते नरनारायणमार्कंडेयसमागमो नाम त्रयोदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नरनारायणावूचतुः । ज्ञानं शांतिप्रदं पूर्णं शृणु त्वं मुनिसत्तम । तपसा ब्रह्मचर्येण सिद्धोऽस्यत्र न संशयः ॥१॥ शिवेन रामचंद्राय कथितं योगदायकम् । तेन शांतिसमायुक्तो बभूवे लक्ष्मणाग्रजः ॥२॥ राज्यसंगसमायुक्तस्तेनाभूत्तच्च विस्मृतम् । पुनर्वसिष्ठवाक्येन तज्ज्ञानं समपद्यत ॥३॥ मार्कंडेय उवाच । कोऽसौ रामो महाभागः कस्मिन् वंशे समुद्भवः । कस्य पुत्रश्च तत्सर्वं वदतं मां महामुनी ॥४॥ रविरुवाच । एवं पृष्टौ महात्मानौ मार्कंडेयेन धीमता । ऊचतुः परमप्रीतौ चेष्टितं राघवस्य च ॥५॥ नरनारायणावूचतुः । मरीचिर्ब्रह्मणः पुत्रस्तस्माज्जातश्च कश्यपः । अदित्यां कश्यपाज्जज्ञे सूर्य आत्मा शरीरिणाम् ॥६॥ सूर्याच्च मनुनामा यो वैवस्वत इति श्रुतः । तस्य मन्वंतरं प्रोक्तं सप्तमं भूमिमंडले ॥७॥ ब्रह्मणो दिवसः प्रोक्तो मुनिभिः कालवादिभिः । चतुर्युगसहस्राख्यस्तावती रात्रिरुच्यते ॥८॥ एकस्मिन् दिवसे विप्र मनवश्च चतुर्दश । भवंति स्वस्वकालेन प्रेरिताः क्षत्रकर्मणि ॥९॥ एकसप्ततिरेवैवाधिका किंचिन् महामुने । मन्वंतरं चतुर्णां च युगानां वै प्रकथ्यते ॥१०॥ स्वायंभुवादयश्चैव मनवः कथिता बुधैः । तेषु षट्कं तथा भिन्नं भवति स्वाधिकारतः ॥११॥ मनुर्देवाश्च विप्रा वै सप्त चैव पुरंदरः । मनुपुत्राश्च विष्णोर्यत्रावतारः प्रकीर्तितः ॥१२॥ विभागतश्च मनुना सर्वधर्मः प्रकाश्यते । भूमिपालनकं कार्यं वर्णाश्रमविधानतः ॥१३॥ ऋषिभिस्तत्त्वमार्गेण कर्मज्ञानादिकं मुने । सुबोधेन नराणां तत् प्रकाश्यं सर्वमादरात् ॥१४॥ यजमानस्य यज्ञादि कर्म सर्वं तथा मुने । कारणीयं प्रकर्तव्यं स्वस्वमन्वंतरेषु तैः ॥१५॥ वृष्ट्यादिना त्रिभुवनं महेंद्रेण विशेषतः । कर्मानुसारभोगेन पालनीयं यथातथम् ॥१६॥ देवैः स्वयज्ञभागस्थं भोगं भुक्त्वा स्वलोकदम् । कर्मकर्त्रे तथा स्वर्गे फलं दातव्यमादरात् ॥१७॥ इंद्रस्य दैत्यजं घोरं भयं प्राप्तं यदा मुने । तदा विष्णुः कलांशेन तं रक्षति बिडौजसम् ॥१८॥ मनोः पुत्रैश्च पौत्रैश्च तेषां संततिभिः सदा । प्रजापालनकं

कार्यं क्षात्रधर्मपरायणैः ॥१९॥ एवं षट्कं समाख्यातं मन्वंतरमयं मुने । मन्वंतरे समाप्ते वै द्वितीयस्य समुद्भवः ॥२०॥ ज्ञाननिष्ठं तदा षट्कं भवेद्वै नित्यमादरात् । तपसा देहमुत्सृज्य स्वस्वधाम्नि गतं भवेत् ॥२१॥ लयस्तत्र समाख्यातो मन्वंतरलयात्मकः । तत्र सर्वे लयं प्राप्ता जनाः स्थावरजंगमाः ॥२२॥ द्वितीये मनुमुख्ये समुद्यते वै महामुने । भृग्वादयः स्वमात्मानं ससृजुर्योगसेवया ॥२३॥ पुनः सृष्टिं प्रचक्रुस्ते चराचरमयीं मुने । एवं सर्वांतरे प्रोक्तं ज्ञातव्यं विबुधैः सदा ॥२४॥ ब्रह्मणो दिवसान्ते यो लयो नैमित्तिकाह्वयः । भवति तत्र त्रैलोक्यं नाशमेति न संशयः ॥२५॥ एवं दिनक्रमेणैव शतवर्षमयं मुने । ब्रह्मणः पूर्णमायुष्यं भविष्यति न संशयः ॥२६॥ तदा स्वयं लयेनैव मरिष्यति पितामहः । एवं क्रमेण त्रैगुण्यं नाशरूपं वदंति च ॥२७॥ जन्ममृत्युमयी पूर्णा नानाद्वंद्वप्रकाशिनी । माया ते कथिता विप्र द्वंद्वभावेषु भ्रांतिदा ॥२८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते मायावर्णनं नाम चतुर्दशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मार्कंडेय उवाच । भवद्भ्यां कथितं चित्रं मायारूपं विशेषतः । श्रुत्वाऽहं तृप्तिसंयुक्तो भवामि भृशहर्षितः ॥१॥ मायारूपं मया नाथौ न ज्ञातं पूर्णभावतः । अतो मां विस्तरेणैव वदतं योगिनां वरौ ॥२॥ वर्णाश्रमविभागं वै स्वस्वाचारसमन्वितम् । युगमानं तथा विप्रो युगधर्मान् विशेषतः ॥३॥ पितृदेवासुराणां वै कर्ममार्गं सुतृप्तिदम् । सूर्यचंद्रप्रसूतानां राज्ञां सर्वं चरित्रकम् ॥४॥ एतानि प्रश्नपीठानि वदतं चर्षिसत्तमौ । तत्र द्वंद्वादिकस्यैव ज्ञानं मे प्रभविष्यति ॥५॥ भानुरुवाच । एवं पृष्टौ महाभागौ नरनारायणावृषी । ऊचतुस्तं दयायुक्तौ मार्कंडेयं तु तापसम् ॥६॥ नरनारायणावूचतुः । सम्यक् पृष्टं महाभाग वदिष्यावोऽखिलं च ते । येन मायाचरित्राणां ज्ञानं भवति निश्चलम् ॥७॥ निमेषमात्रः कालो यो लघ्वक्षरसमन्वितः । दशपंचनिमेषैश्च काष्ठाकालः प्रकीर्तितः ॥८॥ त्रिंशत्काष्ठाभिरेवं यः कलाकालः प्रजायते । त्रिंशत्कलाभिरेकं वै मुहूर्तं परिकीर्तितम् ॥९॥ त्रिंशन्मुहूर्तमानेन दिवानक्तमयो मतः । तैस्त्रिंशद्भिस्तथा कालो मासाख्यो विप्र जायते ॥१०॥ मासपक्षद्वयाकारः शुक्लकृष्णविभागतः । मासैर्द्वादशभिः संवत्सरः पूर्णश्च जायते ॥११॥ द्वाभ्यामाभ्यामृतुः प्रोक्तः स षड्ऋतुभिरुच्यते । संवत्सरप्रमाणाख्यः कथितः कालवेदिभिः ॥१२॥ निमेषादिभिरेवं स

कालः संवत्सरांतगः। नानाभावसमायुक्तः कालधर्मं प्रकाशते ॥१३॥ संवत्सरात्मकः कालः पंचधा परिकीर्तितः। आद्यः संवत्सरः प्रोक्तो द्वितीयः परिवत्सरः ॥१४॥ इडावत्सर एवाऽसौ चतुर्थश्चानुवत्सरः। वत्सरश्चैव पंचैते शृणु तेषां गतिं मुने ॥१५॥ अंगप्रत्यंगसंयोगः कालेनैव प्रजायते। अग्निर्जठरसंस्थश्च कुरुते सर्वमंजसा ॥१६॥ देहोत्पत्तिः स्थितिश्चैव नाशस्तस्य प्रकीर्तितः। कालेन जायते सर्वं सोऽग्निः संवत्सरः स्मृतः ॥१७॥ पंचानां मुख्यरूपोऽयं कालकर्मप्रवर्तकः। देहसंस्थो महायोगी बुधैः कालः प्रकथ्यते ॥१८॥ परिवत्सरनामाऽयं सूर्यः कालमयो मुने। अयनादिस्वभावेन स्मृतः कालस्य चालकः ॥१९॥ वर्षाशीतोष्णकालेषु ऋतुमासक्रमादिषु। कालधर्मं स चरति प्रकाशयति नित्यशः ॥२०॥ इडावत्सरनामाऽयं चंद्रः प्रोक्तो मनीषिभिः। तारानक्षत्रकादीनां चालकश्च प्रजायते ॥२१॥ पितॄणां ज्ञानकारी च कालस्यात्र न संशयः। कालक्रमेण सोमोऽयं दधात्यमृतमंशुभिः ॥२२॥ ओषधीनामंशुभिर्वै काले भावं प्रकाशते। काले देवजनानाममृतपानं ददाति सः ॥२३॥ अनुवत्सरनामाऽसौ वायुः सर्वत्र पठ्यते। प्राणापानादिभिर्भावैश्चालकः कामकारकः ॥२४॥ आवहप्रवहाद्यैः स नेमिभिर्ज्योतिषां गणम्। संचालयति कालेन कालज्ञः कालरूपधृक् ॥२५॥ वत्सरो रुद्ररूपोऽयं तथा कालः प्रकाशते। महालये समुत्पन्ने लयमोषधयो गताः ॥२६॥ तत्र कालप्रमाणेन त्र्यंबकः पुनरेव च। स ओषधीनां प्रस्रष्टा जायते कालसंस्थितः ॥२७॥ गायत्री जगती त्रिष्टुबंबिका नामतः स्मृताः। ताभिरेकत्वभूताभिस्त्रिविधाभिः स्ववीर्यतः ॥२८॥ पुनश्चौषधयः सृष्टास्तत्र रुद्रेण कालतः। तेनाऽयं कालभावेन जगद्भावयति प्रभुः ॥२९॥ एवं पंचविधं कालं यो जानाति स्वभावतः। न तस्य कालभावस्य दुःखं भवति कर्हिचित् ॥३०॥ अधुना शृणु विप्रर्षे कालमानं विशेषतः। अयनं द्विविधं प्रोक्तं षण्मासात्मकमुच्यते ॥३१॥ तदेव देवतानां वै दिनमेकं प्रकथ्यते। उत्तरायणरूपश्च दिवसः परिकीर्तितः ॥३२॥ दक्षिणायनरूपा वै रात्रिस्तेषां प्रकीर्तिता। एवं त्रिंशद्भिराख्यातो मासश्चैव महामुने ॥३३॥ मासैर्द्वादशभिश्चैव वर्षस्तेषां प्रकीर्तितः। एवं सर्वत्र विप्राग्र्य ज्ञातव्यं कालजं वपुः ॥३४॥ शुक्लपक्षमयी रात्रिः कृष्णपक्षोऽहरेव च। पितॄणां सुखदः कालो मासेन दिवसो भवेत् ॥३५॥ मासौ च द्विविधौ प्रोक्तौ सौरचांद्रौ विधानतः। संक्रमेण रवेर्मासो जायते रविजः स्मृतः ॥३६॥ पूर्णिमायां स संपूर्णश्चंद्रो लोकैः प्रदृश्यते। तदाधारेण मासो वै ज्ञातव्यश्चंद्रमानतः ॥३७॥ अथवा क्षीणचंद्रायाममायां ज्ञायते बुधैः। मासश्चांद्रमसो विप्र द्विविधः परिकीर्तितः ॥३८॥ तत्रैव कारणं ब्रूवः शृणु तत्त्वार्थसिद्धये।

अधिमासस्तथा लोकैः क्षयमासो मलात्मकः ॥३९॥ अमायां चंद्रचिह्नेन ज्ञायते नान्यथा क्वचित् । स्नानार्थं मासमाहात्म्यं पूर्णिमायां विशेषतः ॥४०॥ चंद्रचिह्नेन विप्रर्षे ज्ञातव्यं विबुधैः सदा । अन्यच्च पितृणां कालश्चंद्रमासेन जायते ॥४१॥ देवानां पितृणां स्वर्गे सुधापानं प्रकीर्तितम् । पूर्णं सोमकलाभूतं चांद्रमासे न जायते ॥४२॥ देवानां दिवसे कालः सूर्यचिह्नेन जायते । शुक्लकृष्णगतिश्चैव कारणं परिकीर्तितम् ॥४३॥ त्रीणि वर्षसहस्राणि मानुषेण प्रमाणतः । त्रिंशताधिकरूपाणि मतः सप्तर्षिवत्सरः ॥४४॥ नव वर्षसहस्राणि मानुषेण प्रमाणतः । अन्यानि नवतिश्चैव ध्रौव्यः संवत्सरः स्मृतः ॥४५॥ एवं कालप्रमाणं यत् कथितं ते द्विजोत्तम । मृत्युयुक्तं सदा भ्रांतं ज्ञातव्यं द्वंद्वसंयुतम् ॥४६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते कालगतिवर्णनं नाम पंचदशोऽध्यायः ।



॥ श्रीगणेशाय नमः ॥ नरनारायणावूचतुः । दिव्यवर्षसहस्राणि द्वादशाऽथ महामुने । चतुर्युगमयः कालो ज्ञातव्यो विबुधैः सदा ॥१॥ चत्वारि च सहस्राणि वर्षाणि कृतनामकम् । युगं प्रकीर्तितं तत्राष्टशतैः संधिरुच्यते ॥२॥ त्रीणि वर्षसहस्राणि युगं त्रेता प्रकीर्तितम् । संध्यांशो द्विगुणैस्तत्र ज्ञातव्यो विबुधैः शतैः ॥३॥ सहस्रे द्वे च वर्षाणि द्वापरः परिकीर्तितः । संध्यांशो द्विगुणैस्तस्माच्छतैस्तु परिकीर्तितः ॥४॥ एकवर्षसहस्रं वै कलिः परमदारुणः । तस्याऽपि संधिर्द्विगुणो ज्ञातव्यो विबुधैस्तथा ॥५॥ शतानि संधिरूपाणि ज्ञातव्यानि विशेषतः । सर्वत्र युगमानेष्वाद्यं तयोर्भोगदानि वै ॥६॥ एवं द्वादशसाहस्रदेववर्षाणि तानि वै । चतुर्युगानां मानं च कथितं कालवेदिभिः ॥७॥ आद्यं कृतयुगं प्रोक्तं ततस्त्रेता प्रकीर्तिता । ततो द्वापरनामाऽपि कलिस्तस्मात् प्रकीर्तितः ॥८॥ ध्यानं कृतयुगे मुख्यं त्रेतायामध्वरस्तपः । द्वापरे पूजनाचारः कलौ स्तवनमुच्यते ॥९॥ ब्राह्मः कृतयुगे धर्मश्चतुष्पादः सनातनः । त्रेतायां त्रिपदः प्रोक्तो धर्मो धर्मविदां वरैः ॥१०॥ द्वापरे द्विपदो धर्मः सर्वशास्त्रेषु संमतः । कलावेकपदः प्रोक्तः सोप्यंऽते नाशमेष्यति ॥११॥ कृते ज्ञानं सदा पूज्यं त्रेतायां रविरुच्यते । द्वापरे दैवतं विष्णुं कलौ शंभुं वदंति च ॥१२॥ चतुर्युगानां मानेषु गणेशो मुख्यभावतः । पूज्यते मानवैः सर्वैः स्वस्वसिद्ध्यर्थमादरात् ॥१३॥ कृते विनायकः प्रोक्तः कश्यपात्मज एव सः । सिंहारूढश्च दिग्बाहुस्तेजोरूपी प्रकथ्यते ॥१४॥

त्रेतायां पूज्यते देवो मयूरेशश्च षड्भुजः । मयूरवाहनः पुत्रः शशिवर्णः शिवस्य वै ॥१५॥ द्वापरे मूषकारूढः पूज्यते च चतुर्भुजः । गजाननो वरेण्यस्य रक्तवर्णः सुतः स्मृतः ॥१६॥ कलावश्वस्थितश्चैव धूम्रवर्णो द्विबाहुभृत् । तारकः सर्वभावज्ञो गणेशः पूज्यते जनैः ॥१७॥ ब्रह्माकारमयश्चैव तेन भेदो न विद्यते । चतुर्युगेषु धर्मेषु सिद्धिदाता विशेषतः ॥१८॥ कृते नराणामायुष्यं लक्षवर्षाणि संमतम् । त्रेतायां दशसाहस्रं द्वापरे तु सहस्रकम् ॥१९॥ कलौ तु शतवर्षाण्यंते तन्न्यूनं भविष्यति । वर्षाणि पंचदश वै क्रमेण परमं मतम् ॥२०॥ कृते स्वधर्मसंनिष्ठा जनाः सर्वे हिते रताः । परस्परं भावयंतो भेदहीना विशेषतः ॥२१॥ न मात्सर्यादि संयुक्ताः कलहादिविवर्जिताः । बाल्याद् धर्मधरा विप्र सदानंदयुतास्तथा ॥२२॥ विषयात्मसुखं तुच्छं मन्यंते सततं नराः । सुखे संति सदा ज्ञानयुक्ता ध्यानपरायणाः ॥२३॥ वर्णाश्रमविभागस्थाः स्वस्वाचारसमन्विताः । ब्रह्मणि श्रद्धया युक्ता योगाभ्यासपरायणाः ॥२४॥ ऋतुगामिन एवं ते नानाधर्मकराः सदा । अंतर्बाह्यैकभावाश्च भवंति सुखभोगिनः ॥२५॥ त्रेतायां पादहीनेन नरा धर्मेण संयुताः । तत्रांतर्बाह्यभावेषु भिन्नभावधरा मताः ॥२६॥ तथा स्वार्थं परार्थं ते न समाना विशेषतः । विषयेच्छायुता विप्र किंचित् किंचित् क्रमेण वै ॥२७॥ तत्र संध्यांशमार्गं त्वं शृणुष्वैतं महामुने । अष्टौ शतानि वर्षाणि कृते संध्यांश उच्यते ॥२८॥ चतुःशतानि तत्रैव कृतांते वर्षकाणि च । शतानि त्रीणि त्रेताया अर्धांशेन युतानि च ॥२९॥ शतसप्तकवर्षाणि संध्यांशः परिकीर्तितः । दिने दिने क्रमेणैव कृतधर्मो विनश्यति ॥३०॥ त्रेताधर्मोऽधिकत्वेन तत्र तिष्ठति निश्चितम् । शतसप्तकवर्षेषु गतेषु मुनिसत्तम ॥३१॥ केवलं प्रभवे त्रेतायुगं सर्वस्वभावतः । ज्ञातव्यमेवं सर्वत्र संध्यांशेषु युगक्रमैः ॥३२॥ द्वापरे द्विपदो धर्मस्तत्र स्वार्थपरायणाः । कलहादिसमायुक्ता भवंति किल मानवाः ॥३३॥ बाह्यभावेषु साधूनां धर्माणां सेवका मताः । लज्जायुक्ततया विप्र अंतरे विषयप्रियाः ॥३४॥ परेषां लज्जया धर्मं चरंति द्वापरे नराः । विषयेच्छायुताः सर्वे स्वगृहे धर्मलोपकाः ॥३५॥ एतादृशास्ते भवंति द्वापरे मलसंयुताः । नराः सर्वत्र भावेषु जानीहि मुनिसत्तम ॥३६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते युगधर्मवर्णनं नाम षोडशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नरनारायणावूचतुः । सात्त्विकं च युगं प्रोक्तं कृतं त्रेता च राजसी । द्वापरस्तमसा युक्तः स्वयं राजस उच्यते ॥१॥ कलिस्तमोमयः पूर्णस्तत्र सर्वं विनश्यति । पापरूपधरः साक्षाद्विप्रधर्मः कुतो भवेत् ॥२॥ कलौ प्रमारको रोगः सततं क्षुद्भयं मुने । अनावृष्टिभवं दुःखं देशानां च विपर्ययः ॥३॥ अधार्मिका अनाचारा महाकोपाऽल्पचेतसः । वदिष्यंत्यनृतं लुब्धाः कलौ जाताः सुदुःप्रजाः ॥४॥ अरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः । विप्राणां कर्मदोषैश्च प्रजानां जायते भयम् ॥५॥ नाधीयते कलौ वेदान्न यजंति द्विजातयः । पठंति न्यायतो वेदान् शूद्राग्रे चाल्पबुद्धयः ॥६॥ शूद्राणां मंत्रयोगैश्च संबंधो ब्राह्मणैः सह । भविष्यति कलौ विप्र शयनासनभोजनैः ॥७॥ शूद्रा भवंति राजानो ब्राह्मणान् बाधयंति ते । ब्रह्महत्यां पशोर्हत्यां कुर्वंते वै नरेश्वराः ॥८॥ स्नानं होमं जपं दानं देवतानां तथाऽर्चनम् । अन्यानि चैव कर्माणि न कुर्वंति द्विजातयः ॥९॥ विनिंदंति गणेशानं ब्राह्मणान् दैवतान्यपि । वेदान् शास्त्राणि सर्वाणि पुराणानि कलौ युगे ॥१०॥ कुर्वंत्यवेदकर्माणि ह्यनाधाराणि भो मुने । स्वधर्मेषु रुचिर्नैव द्विजादीनां प्रजायते ॥११॥ कुशीलचर्यापाखंडो वृथाऽनृतभयं भवेत् । याचकाः सर्ववर्णाश्च भविष्यंति कलौ युगे ॥१२॥ अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः । प्रमदाः केशशूलाश्च भविष्यंति कलौ युगे ॥१३॥ शुक्लदंता अक्षजिता मुंडाः काषायवाससः । शूद्रा धर्मं चरिष्यंति ब्राह्मणानां कलौ युगे ॥१४॥ अन्नचौरा भविष्यंति तथा वेलाभिमर्षिणः । चौरा चौरस्य हर्तारो हर्तुर्हर्तार एव च ॥१५॥ दुःखप्रचुरताऽल्पायुः शिश्नोदरपरायणाः । द्यूतमद्यादिसंसक्ताः परस्त्रीलंपटा मुने ॥१६॥ कापालिकास्तथा चान्ये यतयो गृहमेधिनः । वेदविक्रयिणो विप्रास्तीर्थविक्रयिणस्तथा ॥१७॥ आसनस्था द्विजान् दृष्ट्वा न चलंत्यल्पबुद्धयः । ताडयंति द्विजान् शूद्रा राजानो राजजीविनः ॥१८॥ उच्चासनसमासीना ब्राह्मणानां च पूजकाः । भविष्यंति कलौ शूद्रा वेदाध्ययनतत्पराः ॥१९॥ सेवावसरमालोक्य द्वारि तिष्ठंति वै द्विजाः । उपायनादि संगृह्य शूद्राणां राजजीविनाम् ॥२०॥ बुद्धिशालिन एवं वै शूद्रा धर्मान् वदंति वै । वेदवादविचारज्ञा ब्राह्मणान् शिक्षयंति ते ॥२१॥ तपो यज्ञफलानां वै वेदानां च सुकर्मणाम् । विक्रेतारो भविष्यंति ब्राह्मणाश्च कलौ युगे ॥२२॥ पतिं त्यक्त्वा स्त्रियश्चैव परे पुंसि निरंतरम् । संसक्ताश्च भविष्यंति पतिद्रोहपरायणाः ॥२३॥ यतयश्च भविष्यंति शतशोऽथ सहस्रशः । मद्यस्त्रीसंगसंसक्ताश्चरंति च कलौ युगे ॥२४॥ वाममार्गाः पाशुपताः सांख्या वै पंचवाहकाः । भविष्यंति कलौ तस्मिन् ब्राह्मणाः क्षत्रियास्तथा ॥२५॥

ज्ञानमार्गेषु नष्टेषु लोके निष्क्रियतां गते । कीटमूषकसर्पाश्च धर्षयिष्यंति मानवान् ॥२६॥ करिष्यंत्यवतारांश्च ब्राह्मणानां कुलेषु ते । दधीचिशापनिर्दग्धा पुरा दक्षाध्वरे द्विज ॥२७॥ शापयुक्ता गौतमस्य भविष्यंति विशेषतः । वामादिमार्गसंसक्ता जनान् भ्रष्टांश्च कुर्वते ॥२८॥ अन्यजातिषु सर्वत्र भविष्यंति तथा नराः । दक्षाध्वरे सर्ववर्णाः शापितास्ते दुराग्रहाः ॥२९॥ मोहयिष्यंति च जनान् दर्शयित्वा फलानि वै । तमसाऽऽविष्टहृदया बिडालव्रतिकाऽधमाः ॥३०॥ बौद्धमायाधरस्तत्र विष्णुः पाखंडपोषकः । सहायस्तान् सदा देवो दधीचेः शापकारणात् ॥३१॥ कर्ममार्गस्य सञ्छेत्ता भ्रष्टाचारयुतान्नरान् । करिष्यति स्वयं विष्णुर्युगधर्मप्रवर्तकः ॥३२॥ अतज्ज्ञास्तं भविष्यंति शरणागतवत्सलम् । बौद्धमायाश्रितं सर्वे भ्रष्टाचारयुता नराः ॥३३॥ कलौ दशसहस्रे वै वर्षाणां च यदा भवेत् । विष्णुस्त्यक्त्वा तदा पृथ्वीमालयं स्वं गमिष्यति ॥३४॥ वर्षपंचसहस्राणि स्थिरा भागीरथी नदी । ग्रामदेवास्तदर्धेन गताः स्वर्गं महामुने ॥३५॥ स्वधर्मविधिसंयुक्तं कर्म यत् क्रियते नरैः । तदेव देवभोग्यं वै भवति द्विज सर्वदा ॥३६॥ विपरीतं कृतं कर्म त्वासुरं तत् प्रजायते । कलावासुरभावेन गता देवा निजालयम् ॥३७॥ आसुरेण स्वभावेन तीर्थायतनकादिषु । समागतं नरं दृष्ट्वा गच्छंति तीर्थदेवताः ॥३८॥ तेषु तीर्थेषु देवानां मूर्त्यादिषु तदाऽसुराः । प्रविश्य कर्मभोक्तारो भविष्यंति कलौ युगे ॥३९॥ तीर्थानि गुप्तभावेन देवतायतनानि वै । संस्थितानि कलौ तस्मिन्नुपवासयुतानि च ॥४०॥ दैवेन संयुतं दृष्ट्वा स्वभावेन महासुराः । गच्छंति मानवं तीर्थदेवाः स्वस्थानगाः पुनः ॥४१॥ तत्र वै कर्मकर्तारो नरा आसुरभावतः । भविष्यंति सदा विप्र भ्रष्टा वै दोषसंयुताः ॥४२॥ क्रियारूपा महाशक्तिः संस्थिता जगतीतले । क्रियाफलप्रदाता वै गणेशः संस्थितो भवेत् ॥४३॥ असुराणां सुराणां च सिद्धिदाता गजाननः । महिमानं स्वकीयं स कलौ संगोप्य संस्थितः ॥४४॥ धर्मपादाश्च चत्वारस्तपः शौचं दया तथा । सत्यं तत्र क्रमेणैव सर्वे नश्यंति धर्मजाः ॥४५॥ त्रेतायां च दया नष्टा नष्टं च द्वापरे तपः । आचारश्च कलौ प्राप्ते नष्टरूपो भविष्यति ॥४६॥ सत्यरूपमयः पादः कलौ तिष्ठति मानद । तेन सर्वे जना भूमौ व्यवहारं प्रकुर्वते ॥४७॥ द्वापरस्य तु संध्यांशे गते पृथुबलः कलिः । बहुलानृतभावेनादरात् सत्यं छिनत्ति च ॥४८॥ ततः क्रमेण सत्यस्य विनाशश्च भविष्यति । तदा कोलाहलो विप्र देवानां सदने भवेत् ॥४९॥ कलौ दुःखयुता लोका अन्नादिकविवर्जिताः । ग्रामादि सकलं त्यक्त्वा वसंति वनगोचराः ॥५०॥ परस्परं क्षुधाविष्टा भक्षयंति विचेतसः । सत्यहीना धरित्री वै भविष्यति

महामते ॥५१॥ षोडशाब्दं परं चायुः पंचवर्षसमन्विता । अंतर्वत्नी भवेन्नारी कलौ तस्मिन् विशेषतः ॥५२॥ एवमासुर-भावेन जितं सर्वं महामुने। देवता मुनयः सर्वे गणेशानं स्तुवंति ते ॥५३॥ तदा ढुंढिः सुराणां स हितायाऽवतरिष्यति । धूम्रवर्णो ह्यधर्मं तं हत्वा धर्मं करिष्यति ॥५४॥ धर्मं प्रवर्तयित्वा स अंतर्धानं गमिष्यति । तदा पुनः कृतं प्राप्तं संध्यांशेन युगक्रमैः ॥५५॥ एवं युगप्रमाणं च युगधर्मः प्रकीर्तितः । मायामयमिदं सर्वं त्वं जानीहि भ्रमात्मकम् ॥५६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते कलियुगवर्णनं नाम सप्तदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नरनारायणावूचतुः । वर्णाश्रमाश्च चत्वारस्ताञ्छृणुष्व महामुने । ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वर्णाः प्रकीर्तिताः ॥१॥ ब्रह्मचर्यं च गार्हस्थ्यं वानप्रस्थ्यं तथैव च । प्रोक्ता वेदेषु संन्यास आश्रमा वेदवादिभिः ॥२॥ ब्राह्मणानां क्रमेणैते मताश्चत्वार आश्रमाः । क्षत्रियाणां च वैश्यानां संन्यासो न प्रविद्यते ॥३॥ गार्हस्थ्यमेव शूद्राणामाश्रमः परिकीर्तितः । अंत्यजानां तदेवापि ज्ञातव्यं विबुधैः सदा ॥४॥ ब्राह्मणश्च समुत्पन्नो बालभावपरायणः । पंचमे सप्तमे चैवाऽष्टमे मौंजीं समाचरेत् ॥५॥ कृतोपवीतको विप्रः प्रगच्छेद्गुरुसन्निधौ । तत्र वेदादिकं सर्वमभ्यसेद् विनयान्वितः ॥६॥ तत्रैव ब्रह्मचर्यांतं ब्राह्मणः प्रसमाचरेत् । सायं प्रातश्चरेद्भिक्षां गायत्रीमभ्यसेत्ततः ॥७॥ प्रातःकाले ब्रह्मरूपां मध्याह्ने रुद्ररूपिणीम् । गायत्रीं विष्णुरूपां तां ध्यायेत् सायाह्न आदरात् ॥८॥ भूर्भुवःस्वस्त्रिभिश्चैवाचामेन्नियमसंयुतः । स्वाहांता-भिर्महातेजाः स्पृशेन्न्यासेषु चेंद्रियम् ॥९॥ तर्जन्याद्यंगुलीभिश्च तिसृभिः संस्पृशेन् मुखम् । तर्जन्यंगुष्ठयोगेन नासिकां संस्पृशेद् बुधः ॥१०॥ अंगुष्ठानामिकाभ्यां वै तथा चक्षूंषि संस्पृशेत् । कनिष्ठया च कर्णौ वै संस्पृशेन्नात्र संशयः ॥११॥ अंगुष्ठाभ्यां स्पृशेन्नाभिमुरः करतलेन च । सर्वांगुलीभिर्मूर्धमध्यमंगुष्ठाग्रेण वै शिखाम् ॥१२॥ सर्वांगुलीभिर्बाहुं स्वं स्पृशे-न्न्यासादिकर्मसु । एवमाचमनं प्रोक्तं स्वस्वशाखोक्तनामभिः ॥१३॥ मंत्रैर्वैदिकसंभूतैः संध्या कार्या विशेषतः । न्यासांश्च कारयेत्तत्र प्रणवस्य महामुने ॥१४॥ व्याहृतीनां च गायत्र्याः षडंगेष्वक्षरोद्भवान् । गायत्रीशिरसो न्यासांस्तत आचमनं चरेत् ॥१५॥ सूर्यश्चेति च मंत्रेण प्रातःकाले विशेषतः । आपः पुनंतु मध्याह्ने सायाह्नेऽग्निश्च मंत्रतः ॥१६॥ ततो मार्जनकं

कुर्यान्नवविंशतिसंख्यया । ततोऽर्घ्यदानकं कुर्यादुपस्थानं ततश्चरेत् ॥१७॥ गायत्र्याः शापमोक्षं वै ततो ध्यानं जपं चरेत् । ब्रह्मचारी शतान्येव पंचकालेषु वै पृथक् ॥१८॥ गायत्र्याश्च जपं कुर्याद्वाग्यतो मानसैक्यतः । अष्टोत्तरशतं काले गृहस्थो जपमाचरेत् ॥१९॥ वानप्रस्थश्च काले वै सहस्रं जपमाचरेत् । एवं संध्या त्रिकालेषु ब्राह्मणैः क्रियते सदा ॥२०॥ त्रिपदां चैव गायत्रीं जपेदोंकारसंयुताम् । तत्र क्रमं प्रवक्ष्यामि शृणु तं मुनिसत्तम ॥२१॥ आदौ प्रणवमुच्चार्य पश्चाद्व्याहृतिरुच्यते । भूर्भुवः स्वरिति प्रोक्ता ततः प्रणव उच्यते ॥२२॥ ततः सा त्रिपदा विप्र गायत्री च ततः पुनः । ओंकारो विधिना नित्यं जपः संक्रियते द्विजैः ॥२३॥ संन्यासिभिश्च विप्रेंद्र चतुष्पादा विशेषतः । जप्तव्या सैव गायत्री स्वस्वाश्रमविभागतः ॥२४॥ ब्रह्मचारी स्वगोत्रादिगृहस्थेषु महामुने । भिक्षां चरेद्विधानेन गुरवे तां निवेदयेत् ॥२५॥ भवत् पूर्वं व्रती विप्रो भवन् मध्यं तु क्षत्रियः । भवदंतं तथा वैश्यः सदा भिक्षार्थमुच्चरेत् ॥२६॥ गृहीता गुरुणा भिक्षा संपूर्णा यदि मानद । तदोपवाससंयुक्तो वसेद्वै ब्रह्मचर्यवान् ॥२७॥ स्वल्पा वा परिपूर्णा वा दत्ता भिक्षा महात्मना । गुरुणा तावतीं भुक्त्वा संतिष्ठेत्तस्य सन्निधौ ॥२८॥ पालाशदंडसंयुक्तः सायं प्रातः स वह्निषु । जुहुयात् समिधं चैव नखलोमधरो भवेत् ॥२९॥ गुरुदेवपरं तस्य दैवतं सर्वभावतः । गुरुस्त्रीपुत्रसेवां स गुरुवत्तां समाचरेत् ॥३०॥ एकांते गुरुपत्नीभिर्न वसेच्च कदाचन । न स्त्रीभिः सह संभाषां स कुर्यात् कार्यहीनकः ॥३१॥ स्त्रीगानादिकभावान् वै शृणुयान्न सुयंत्रितः । न शुक्रं संत्यजेतापि ब्रह्मचारी विशेषतः ॥३२॥ स्वप्ने शुक्रं गतं चेद्वै तदा स्नानं समाचरेत् । अष्टोत्तरशतं तत्र गायत्री जप उच्यते ॥३३॥ गुरुणाऽध्यापितश्चैव कुर्यादध्ययनं मुने । न स्वयं संवदेत् प्राज्ञो गुरुं विद्यापरायणः ॥३४॥ एवं नानाविधैः प्रोक्तैर्लक्षणैः संयुतो भवेत् । ब्रह्मचारी महाभागो वेदाध्ययनतत्परः ॥३५॥ वर्षाणि द्वादशैवाऽयं षोडशाऽप्यथ वा द्विजः । अथ वेच्छाप्रमाणेन ब्रह्मचर्यं समाचरेत् ॥३६॥ वेदादिकं समभ्यस्य कृत्वा कंठगमादरात् । पश्चाद्गुरुं समभ्यर्च्य दद्यात्तस्मै स दक्षिणाम् ॥३७॥ मनोविषयसंयुक्तं यदा तत्र गृही भवेत् । नोचेत् संन्यासकं कुर्यादथवा वनगो भवेत् ॥३८॥ अथवा ब्रह्मचर्यस्थः सदा तिष्ठेद् द्विजोत्तमः । यादृशी चित्तशुद्धिर्वै तादृशं सर्वमाचरेत् ॥३९॥ कृतमध्ययनं येन तदधीनं महामुने । ज्ञानं योगादिकं कर्म तस्मात्तच्च समाचरेत् ॥४०॥ ब्रह्मचर्यमिदं प्रोक्तं संक्षेपेण महामुने । श्रवणात् पुण्यदं पूर्णं लोकोपकृतये भवेत् ॥४१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते ब्रह्मचर्याश्रमवर्णनं नामाष्टादशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ नरनारायणावूचतुः । ततः क्षौरं द्विजः कृत्वा पितृमातृपरायणः । स्वगृहे वासमातिष्ठेत् द्विजदेव-परायणः ॥१॥ ऊनेन वयसा युक्तां कुलशीलादिसंयुताम् । सर्वावयवसंपूर्णां वधूं स वरयेत्ततः ॥२॥ ऋतुगामी भवेच्चैव संतानार्थं कलत्रवान् । देवविप्रातिथिप्रेप्सुः संतिष्ठेत् स गृहाश्रमी ॥३॥ यजनं याजनं चैव दानमध्ययनं तथा । प्रतिग्रहोऽध्यापनं च षट् कर्माणि समाचरेत् ॥४॥ स्नानं संध्यां जपं होममातिथ्यं देवतार्चनम् । स्वाध्यायं वैश्वदेवं वै गृही नित्यं समाचरेत् ॥५॥ चतुर्थीव्रतमाद्यं च कर्तव्यं त्वाश्रमस्थितैः । तथाऽन्यानि व्रतादीनि कर्तव्यानि विशेषतः ॥६॥ चतुर्थी व्रतहीनस्य नाधिकारो व्रतेषु वै । सदा शौची भवेन्नूनं चतुःपदविवर्जितः ॥७॥ शुक्ले चतुर्थिकायां वै योऽन्नं भुंक्ते महामुने । मांसाहारी मतो नूनं तथा भवति नारकी ॥८॥ अग्निहोत्रं चरेन्नित्यं तथा श्राद्धादिकं मुने । सदा दयापरो भूत्वा संतिष्ठेद् गृहसंस्थितः ॥९॥ अभक्षभक्षणं क्वापि न कुर्यात् स गृहाश्रमी । शौचाचारसमायुक्तो भवेन्नियमसंयुतः ॥१०॥ तर्पणं पितृदेवानां मुनीनां च समाचरेत् । पंचयज्ञादिकं सर्वं नित्यं शास्त्रे प्रकीर्तितम् ॥११॥ स्वस्वसत्ताप्रमाणेन कर्तव्यं गृहमेधिना । तत्र धर्ममनुप्रोक्तं तं शृणुष्व महामुने ॥१२॥ अर्धेन पुत्रदारादींश्चतुर्थांशेन सौहृदम् । चतुर्थांशेन देवादीन् तोषयेच्च गृहाश्रमी ॥१३॥ एवं नानाविधं धर्मं गृहस्थश्च समाचरेत् । तृतीयभाग आयुष्ययुक्तः सोऽपि वनी भवेत् ॥१४॥ संस्थाप्य दारान् पुत्रादिसमीपे वा सह स्त्रिया । वनं गच्छेत् स धर्मार्थं तपस्वी कर्मसिद्धये ॥१५॥ पुत्रा जाताश्च नोत्पन्ना अपि तद् वनगो भवेत् । तपस्तत्र प्रकुर्यात् स फलकंदादि भक्षयन् ॥१६॥ वन्येन चाग्निहोत्राद्यतिथीनां पूजनादिकम् । समाचरेद्वनस्थश्च नानातपसि संस्थितः ॥१७॥ समीपे संस्थिता पत्नी मैथुनं न समाचरेत् । मनसाऽपि महाभाग वानप्रस्थः कदाचन ॥१८॥ वायुभक्षादिकं कुर्याद्वायुसाधनमेव सः । प्राणायामैश्च विप्रेश आचरेद्वनसंस्थितः ॥१९॥ पंचाग्निसाधनं ग्रीष्मे हेमंते जलवासनम् । वर्षास्वाकाशवासी स वानप्रस्थो भवेत्तथा ॥२०॥ संकटे च वनस्थः स ग्रामे नैव वसेत् कदा । प्रवेशोऽपि न कर्तव्यो ग्रामे तेन महात्मना ॥२१॥ एवं नानाविधान् धर्मान् वानप्रस्थग आचरेत् । चतुर्थांशं यदा तस्यायुष्यं विद्येत भो मुने ॥२२॥ चतुर्थांशायुषि स्थाता संन्यासं स समाचरेत् । तदा स्त्रियाऽपि तस्यैवाशां त्यक्त्वा ज्ञापितो भवेत् ॥२३॥ आज्ञा तस्मै प्रदातव्या स्त्रिया चैव विशेषतः । स्वयं तपसि देहं स्त्री शोषयेन् मरणावधि ॥२४॥ अग्निहोत्रं स्वदेहेऽसावात्मन्येकस्वभावतः । कृत्वा च निःस्पृहो भूत्वा विचरेत् पृथिवीमिमाम् ॥२५॥ अहं ब्रह्मेति भावेन

योगभूमिक्रमेण च । योगी भवति संन्यासी चित्तभूमिविवर्जितः ॥२६॥ कर्मादिन्याससंयुक्तो विचरेद्यत्र तत्र वै । ग्रामैकरात्रवासी स भवेन्न्यासपरायणः ॥२७॥ द्वंद्वभावविहीनः स भिक्षां नित्यं समाचरेत् । करपात्री भवेद्वाऽपि संन्यासी च सदा मुने ॥२८॥ करपात्री स संन्यासी ग्रासे ग्रासे महामुने । अश्वमेधादिकं पुण्यं प्राप्नोत्यत्र न संशयः ॥२९॥ चातुर्मास्ये वसेच्चैव तीर्थक्षेत्रादिभूमिषु । जितेंद्रियो जितप्राणो निःसंगः सर्वकर्मसु ॥३०॥ अहिंसा परमो धर्मः संन्यासानां विशेषतः । तृणादिकं च विप्रेश च्छेदयेन्न कदा न च ॥३१॥ त्रिदंडी यस्तु संन्यासी कुटीचक उदाहृतः । विधिं तत्र प्रवक्ष्यामि शृणु त्वं मुनिसत्तम ॥३२॥ स्वधर्माचरणं नित्यं देहदंडः स उच्यते । मौनं वाचामयं दंडो द्वितीयश्च प्रकीर्तितः ॥३३॥ सर्वत्र रसहीनं च मानसं वर्तते यथा । कर्तव्यं तत्तथा तेन मनोदंडः प्रकीर्तितः ॥३४॥ कुटीं देहमयीं योगी चालयेत् बिंबभावतः । ब्रह्माणि ब्रह्मभूतश्च स कुटीचक उच्यते ॥३५॥ ततो बहूदको योगी द्विदंडी स भवेन् मुने । देहदंड-विहीनत्वात् स्वेच्छाचारी विशेषतः ॥३६॥ एकगर्तस्थमुदकं सर्वैः संगृह्यते यथा । गर्ते दोषो नराणां वै विद्यते न कदाचन ॥३७॥ तथात्मा देहसंस्थश्च चतुर्देही विकारतः । भिन्नः सदा न तद्दोषैर्लिप्यते क्वापि निश्चितम् ॥३८॥ सोऽहं ब्रह्मणि संस्थश्च भेदहीनो महामुनिः । बहूदकः स निःसंगो देहादिभ्यः प्रकीर्तितः ॥३९॥ ततो हंसाश्रमः प्रोक्तो मानसे दंडधारकः । देहवाणीदंडहीनः स्वेच्छाचारी मतो मुने ॥४०॥ देहदेहिसमायोगे ब्रह्म बोधात्मकं मतम् । तत्र संस्थः स्वयं योगी द्विविधे तन्मयो भवेत् ॥४१॥ द्वंद्वं जलमयं प्रोक्तं देहदेहिस्वरूपकम् । तत्र दुग्धं भवेद्ब्रह्म हंसस्तद् ग्राहको भवेत् ॥४२॥ ततः परमहंसश्च ज्ञानदंडपरायणः । देहवाणीमनोभूतैर्दंडैर्हीनः प्रकीर्तितः ॥४३॥ देहदेहिमयं ब्रह्म भ्रांतियुक्तं विशेषतः । तच्च प्रोक्तं सविषयं हंसकर्म परायणम् ॥४४॥ सदा साक्षिस्वरूपं यत्परं ब्रह्म महामुने । तत्र संस्थो महायोगी त्रिविधेषु विभागतः ॥४५॥ नाहं देहो न देहस्थो देहदेहिमयो न वै । सदा साक्षिस्वरूपस्थो ज्ञानानंदमयो भवेत् ॥४६॥ यद्यज्ज्ञानं भवेत्तस्य तत्तत् सर्वं विकारजम् । तत्त्यक्त्वा द्वंद्वहीनश्च स्वेच्छाचारी भवेत् स्वयम् ॥४७॥ चतुर्विधोऽयं संन्यासस्तत्राश्रम-समाश्रितः । अहं ब्रह्मेति योगेन ब्रह्मभूतो भवेन्नरः ॥४८॥ मनसा रसयुक्तेन विषयादिषु भो मुने । संन्यासश्च कृतो येन नारकः स भविष्यति ॥४९॥ कपर्दिका यदा तेनैका गृहीता महामुने । तदा सहस्रवर्षाणि कुंभीपाके पतेत् ध्रुवम् ॥५०॥ स्त्रीसंभोगसुखेच्छा चेत्तस्य वै मानसे क्षणम् । संभवेच्चेत्तदा विप्र गोसहस्रवधी भवेत् ॥५१॥ कृते मनः सदाऽऽधीनं नराणां

धर्मयोगतः । ध्यानं मुख्यं कृतं तत्र तेन सर्वं प्रलभ्यते ॥५२॥ त्रेतायां चंचलं चित्तं धर्मस्य पादहीनतः । तपस्तत्र कृतं मुख्यं तेन सर्वं लभेन्नरः ॥५३॥ द्वापरे देहकष्टं यन्न भवेत्तेन तत्र च । मुख्यः स्वधर्माचारश्च तेन सर्वं लभेन्नरः ॥५४॥ कलावासुरभावेन नष्टो धर्मः क्रमेण वै । तत्र स्मरणमात्रेण नाम्नः सर्वं लभेन्नरः ॥५५॥ नामस्मरणमार्गे वर्णाश्रमो न च विद्यते । संन्यासादिः सदाचारो भवेत्तेनासुरं हतम् ॥५६॥ कलावासुरबाहुल्यान्न संन्यासस्य योग्यता । चंचलं देहचित्तादि तेन नष्टो भविष्यति ॥५७॥ वर्णाश्रमविहीनश्च यो वै भवति निश्चितम् । तस्य दंडो न विद्येतादंडी वेदे स कथ्यते ॥५८॥ ज्ञानदंडपरित्यागात् स्वयं योगी भवेन्नरः । निषेधविधिहीनश्च स्वेच्छाधर्मपरो भवेत् ॥५९॥ कर्तव्यं यदि तेनाऽपि वेदेषु विधृतं भवेत् । तदा विधिसमायुक्तो जंतुर्भवति निश्चितम् ॥६०॥ किंचिन्न तेन कर्तव्यं यदा वेदे प्रकीर्तिम् । तदा निषेधसंयुक्तो नरो भवति मानद ॥६१॥ अतो विधिनिषेधाभ्यां हीनो योगी प्रकीर्तितः । तेनाचरित आचारः स एवं तस्य योगदः ॥६२॥ अतो योगी महाभाग दंडहीनः प्रकीर्तितः । वर्णाश्रमविहीनः स ब्रह्मभूतः प्रजायते ॥६३॥ स विनायकनामा वै नायकैर्वर्जितः स्वयम् । योगी तेन समाख्यातः सर्वेषां नायको भवेत् ॥६४॥ ब्रह्मणि ब्रह्मभूतश्चेज्जातो योगस्य सेवया । यदि वर्णाश्रमे संस्थो भवति स्वेच्छया मुने ॥६५॥ लोकसंग्रहणार्थं स नित्यं धर्मं समाचरेत् । निःस्पृहो धर्मभोगार्थे मतं तदपि तादृशम् ॥६६॥ एतदाश्रममार्गश्च कथितस्ते महामुने । मायया रचितं सर्वं जानीहि भ्रमणात्मकम् ॥६७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते आश्रमधर्मवर्णनं नाम एकोनविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नरनारायणावूचतुः । वर्णाश्चत्वार एवं ते स्वस्वधर्मयुता मुने । ब्राह्मणः क्षत्रियो वैश्यः शृणु शूद्रः प्रकथ्यते ॥१॥ व्यभिचारेण तेषां वै वर्णा जाता महामुने । नानाविधा विशेषेण जानीह्यत्र न संशयः ॥२॥ तत्र ब्राह्मणधर्मं ते कथयामि समासतः । शृणु मायाविनाशार्थं मायारूपं पुरातनम् ॥३॥ चतुर्धा ब्राह्मणानां वै वृत्तिः शास्त्रैः प्रकीर्तिता । उञ्छः शिलं तथा शुक्लं मृतं चामृतकं भवेत् ॥४॥ अयाचितं च भूमेर्यत् कर्षणं वा वने स्थितिः । तेषां मार्गं प्रवक्ष्यामि शृणुष्व सुसमाहितः ॥५॥ गृहीतं कृषिकैर्धान्यं तत्र शिष्टं तदग्रहम् । कणादि तस्य योगेन देहपोषणमाचरेत् ॥६॥

अथवा वाणिजादीनां गृहेभ्यो मार्जितं भवेत्। कणादि तस्य योगेन देहपोषणमाचरेत् ॥७॥ एका वृत्तिरियं प्रोक्ता द्वितीयां शृणु सांप्रतम्। भूमेः कर्षणहीनेन वृष्ट्याऽन्नं तत्र जायते ॥८॥ तेनैव देहनिर्वाहः कर्तव्यो ब्राह्मणैः सदा। शुक्लवृत्त्याऽऽचरेद्द्वेक्ष्यं रागलोभविवर्जितः ॥९॥ तेन देहस्य निर्वाहं स कुर्यात्तन्मृतं स्मृतम्। अयाचितेन वा कार्योऽमृतमेतत् प्रकीर्तितम् ॥१०॥ कृषीवलैः स भूमेर्यत् कर्षणं वा समाचरेत्। तत्र धान्योद्भवे नैव देहपोषणकं चरेत् ॥११॥ स्वधर्मः पूर्वभागे ते कथितश्च महामुने। सेवादिवृत्तियोगेन तिष्ठेन्न ब्राह्मणः कदा ॥१२॥ क्षत्रियाणां च शस्त्रादिधारणेन महामुने। देहनिर्वाहकः प्रोक्तो न सेवाकारको भवेत् ॥१३॥ अग्निहोमं च विप्रस्य हस्तेनाऽयं समाचरेत्। संन्यासं नैव विप्रेश कुर्यात् क्षत्रियजः कदा ॥१४॥ वैश्योऽपि क्रयकारी वै विक्रयं च तथाऽऽचरेत्। कृषिभिः कर्षणं भूमेर्गवां पालनमादरात् ॥१५॥ संन्यासधर्महीनश्च सदा तिष्ठेत् स मानद। क्षत्रियाणां विशां विप्र यजनं दानमेव च ॥१६॥ समाख्यातं त्वध्ययनं न प्रोक्तं याजनादिकम्। अग्निकर्म तथा देवार्चनं ब्राह्मणहस्ततः ॥१७॥ कारयेद्वैश्यधर्मज्ञः स्वधर्मपालनाय वै। तर्पणं ब्राह्मणास्येन मंत्रेण तु समाचरेत् ॥१८॥ एष वैश्यस्य मार्गो वै कथितस्ते द्विजोत्तम। शूद्रस्य तु त्रिवर्णानां सदा सेवा प्रकीर्तिता ॥१९॥ दासवन्नात्र संदेह आश्रमो गृहिसंज्ञितः। दानं दद्याद् द्विजायैव पुराणश्रवणं तथा ॥२०॥ कुर्याद्वेदाक्षरस्यायं न कुर्याच्छ्रवणं कदा। पुराणादिषु देवानामवताराः प्रकीर्तिताः ॥२१॥ तेषां मूर्तिप्रतिष्ठा वै कृता देवर्षिभिः पुरा। तासां स्पर्शादिकं चैव न कर्तव्यं कदाचन ॥२२॥ नरादिभिश्च सर्वत्र स्वेच्छया स्थापिता भवेत्। तस्याः स्पर्शश्च कर्तव्यः शूद्रैर्नित्यं महामुने ॥२३॥ नाममंत्रेण पूजा वै कर्तव्या स्मरणं तथा। मृत्तिकार्चां समभ्यर्चेन्नाममंत्रेण वा मुने ॥२४॥ आवाहनादि प्रारभ्य विसर्गांतं समाचरेत्। पुराणसंभवैर्मंत्रैः श्राद्धतर्पणकादिकम् ॥२५॥ ब्राह्मणानां मुखैश्चैव शूद्रैः कर्तव्यमादरात्। न पुराणादिसंभूताः श्लोकास्ते शूद्रजातिभिः ॥२६॥ पठितव्या महाभाग श्रवणं संमतं सदा। अंत्यजातिभवाः शूद्रास्तैर्नामस्मरणं सदा ॥२७॥ कर्तव्यं देवमूर्तीनां स्पर्शो नैव कदाचन। पुराणसंभवैर्मंत्रैर्न कर्तव्यं महामुने ॥२८॥ कर्म किंचिच्च तैः सर्वैः स्वस्वधर्मपरायणैः। पितॄणां देवतानां चोद्देशं कृत्वा धनादिकम् ॥२९॥ धान्यं तैः संप्रदातव्यमेष मार्गः पुरातनः। स्वस्वधर्मरता एते स्वर्गगामिन एव च ॥३०॥ भवंति नात्र संदेहो महाभोगाः सुखे रताः। प्राजापत्यं ब्राह्मणानां क्षत्रियाणां तथैंद्रकम् ॥३१॥ वायवं वैश्यजातीनां गांधर्वं शूद्रजन्मिनाम्। स्वस्वकर्मरतानां वै पदं प्रोक्तं मनीषिभिः ॥३२॥

तत्र ते भोगभोक्तारो भवंत्यत्र न संशयः । एवं मायामयं स्वल्पं वर्णधर्मप्रकाशनम् । शृणोति यः पठेत्तस्य मायामोहो न विद्यते ॥३३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते वर्णधर्मप्रकाशो नाम विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नरनारायणावूचतुः । स्त्रीणां धर्मं प्रवक्ष्यावस्तं शृणुष्व महामते । जातमात्रा च सा देवैर्भुज्यते त्रिभिरादरात् ॥१॥ चंद्रो गंधर्वको वह्निर्द्वे द्वे वर्षे महामने । कन्यां भुनक्ति धर्मेण षट् वर्षाणि विभागतः ॥२॥ तन्मध्ये न प्रदातव्या कन्या कस्मै सुहृज्जनैः । दत्ता चेद्देवताक्षोभो भवेद्वै धर्मनाशनात् ॥३॥ सप्ताष्टनवदिग्वर्षवयोयुक्ता सुहृज्जनैः । कन्या नराय दातव्या साधवे कुलजाय वै ॥४॥ दशवर्षाधिका कन्या रजोयुक्ता च संमता । न दत्ता यदि तन्मध्ये महापापप्रवर्धिनी ॥५॥ पदे पदे ब्रह्महत्यां लभंते जनकादयः । अतः कन्या प्रदातव्या विधिना स्वर्गदा भवेत् ॥६॥ कन्यादानसमं पुण्यं विद्यते न कदाचन । यया वंशः प्रवर्धेत सर्वेभ्यः सुखदायकः ॥७॥ रजोदर्शनयुक्ता चेज्जाता स्त्री सा तदा भवेत् । वशगा स्वपतेस्तस्या एव तद्दैवतं मतम् ॥८॥ दासीवत्तं पतिं सा वै संभजेद्भक्तिसंयुता । वने पतिर्यदा यातस्तदा तमनुगा भवेत् ॥९॥ यदि पुत्रादयो बालास्तदा तेषां प्रसन्निधौ । पोषणार्थं भवेच्चैव संस्थिता वनगे पतौ ॥१०॥ यदि संन्यासधारी चेत् पतिर्भवति भो मुने । तदा स्त्रिया प्रदातव्या तस्मा आज्ञा महामुने ॥११॥ यदा गृहस्थितो भर्ता मृतश्चेत् सहगा भवेत् । वनस्थितस्तदा तद्वत् कर्तव्यं सुस्त्रिया किल ॥१२॥ मृते भर्तरि पत्नी सा गर्भयुक्ता रजस्वला । तदा पत्या न संगच्छेद्विधवाधर्मगा भवेत् ॥१३॥ चतुर्थे दिवसे शुद्धा भवेत् सा पतिकर्मणि । पंचमे दिवसे विप्रादिपूजायां शुचिर्भवेत् ॥१४॥ विधवा स्त्री सदा विप्र एकभुक्तपरायणा । व्रतादिना स्वदेहं वै शोषयेन्नित्यमादरात् ॥१५॥ एवमादिः सतीनां वै धर्मो मुख्यः प्रकीर्तितः । श्रवणात् पुण्यदस्तासां भवत्येव महामुने ॥१६॥ सर्वेषां पितृदेवानां कर्म कर्तव्यमादरात् । मनुजैस्तत्र पितॄणां कर्म संक्षेपतः शृणु ॥१७॥ अथ श्राद्धममावास्यां प्राप्य कार्यं द्विजोत्तमैः । पिंडान्वाहार्यकं भक्त्या भुक्तिमुक्तिफलप्रदम् ॥१८॥ पिंडान्वाहार्यकं श्राद्धं संक्रमेषु प्रशस्यते । अपराह्णे द्विजातीनां प्रशस्तेनामिषेण वै ॥१९॥



पूर्णिमाद्या अमांता यास्तिथयः कृष्णपक्षके । चतुर्दशीं वर्जयित्वा प्रशस्ताः श्राद्धकर्मणि ॥२०॥ शस्त्रादिविषयोगैर्ये मृतास्तेषां महामुने । चतुर्दश्यां समाख्यातं श्राद्धं नान्यत्र शस्यते ॥२१॥ कृष्णपक्षेऽष्टकास्तिस्रः पौषमासादिषु त्रिषु । चतस्रोऽप्यष्टकाः पुण्याः श्राद्धकर्मणि सर्वदा ॥२२॥ त्रयोदशी समायुक्ता युगादितिथयः स्मृताः । मन्वादितिथयः श्राद्धे प्रशस्ताः पुण्यदा मताः ॥२३॥ नैमित्तिकमिदं प्रोक्तं व्यतीपाते च वैधृतौ । बांधवानां मृतानां च दशपिंडादिकं मुने ॥२४॥ काम्यानि चैव श्राद्धानि शस्यंते ग्रहणादिषु । अयने विषुवे चैव तीर्थे क्षेत्रे त्वनित्यकम् ॥२५॥ अक्षय्यं वारतिथिषु स्वस्वजन्मदिनेष्वपि । नक्षत्रेषु च सर्वेषु कार्यं श्राद्धं विशेषतः ॥२६॥ अथवेह सुखप्राप्त्यै पितृलोकसुखाय च । श्राद्धं कामप्रदं प्रोक्तं सर्वदा नित्यवन् मुने ॥२७॥ गयायामक्षयं श्राद्धं प्रयागेऽमरकंटके । मयूरेशपुरे चैव काश्यादिषु विशेषतः ॥२८॥ गायंति पितरो गाथां नर्तयंति मनीषिणः । एष्टव्या बहवः पुत्राः शीलवंतो गुणान्विताः ॥२९॥ तेषां तु समवेतानां यद्येकोऽपि गयां व्रजेत् । गयां प्राप्यानुसर्गेण यदि श्राद्धं समाचरेत् ॥३०॥ तारिताः पितरस्तेन स याति परमां गतिम् । वाराहे पर्वते चैव गयायां च विशेषतः ॥३१॥ मयूरे च तथा काश्यामष्टवैनायकस्थले । गंगाद्वारे प्रभासे च बिल्वके नीलपर्वते ॥३२॥ कुरुक्षेत्रे सेतुबंधे भृगुतुंगे महालये । केदारे फल्गुतीर्थे वै नैमिषारण्यकादिषु ॥३३॥ इत्यादिबहुरूपेषु यदि श्राद्धं समाचरेत् । तदा भुक्तिप्रदं प्रोक्तमपवर्गप्रदं भवेत् ॥३४॥ चतुर्थी शुक्लकृष्णैवैकादशी रविवासरः । प्रदोषश्च तथा विप्र अष्टमी सर्वसिद्धिदा ॥३५॥ नित्यं देवार्चनं प्रोक्तं व्रतादिषु विशेषतः । एवं नानाव्रतादीनां कर्तव्यं सेवनं नरैः ॥३६॥ अग्निहोत्रादिमार्गैश्च देवानां सेवनं मतम् । तीर्थादिदानसंभावैरिष्टापूर्तादिसंमतम् ॥३७॥ एवं दैवं तथा पित्र्यं विविधं कर्म कथ्यते । तदेव ब्रह्मणि प्राज्ञैरर्पितं योगदं भवेत् ॥३८॥ इदं मायामयं प्रोक्तं कर्म वर्णाश्रमात्मकम् । मायामोहनिवृत्त्यर्थं रचितं विश्वयोनिना ॥३९॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते देवपितृकर्मवर्णनं नामैकविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नरनारायणावूचतुः । चतुर्दश मनूनां वै षट्कं यत्ते प्रकीर्तितम् । तैस्तपश्च कृतं घोरं गणेशस्य महात्मनः ॥१॥ नानामंत्रजपेनैव नानाध्यानपरायणैः । निराहारप्रभावेण तोषितस्तैर्गजाननः ॥२॥ पूर्णवर्षसहस्रेण ययौ विघ्नपतिः प्रभुः । उवाच वृणुत प्राज्ञा वरांस्तान् प्रददाम्यहम् ॥३॥ ततस्तैः पूजितो देवः स्तुतश्च विविधैः स्तवैः । बहुत्वान्नैव शक्यं तद्वर्णनं मुनिसत्तम ॥४॥ सर्वेषामीप्सितं दत्त्वा ययौ स्वानंदके पुरे । ते सर्वे स्वस्वकर्मज्ञाश्चक्रुः स्वस्वक्रियां मुने ॥५॥ मन्वंतरेष्वतीतेषु तैः पुनश्च गणेश्वरः । आराधितो विशेषेण योगशांत्यर्थमादरात् ॥६॥ क्रमेण ब्रह्मभूतास्ते ययुस्तं गणपं पुनः । एकभावेन योगज्ञा योगाकारं महामुने ॥७॥ पुत्राश्च बहवस्तेषां वर्णनं नैव शक्यते । पौत्रादिक्रमभावेन पालिता तैर्वसुंधरा ॥८॥ वैवस्वतेंतरे प्राप्तेऽधुना तत्र ब्रवीमि ते । शृणु संक्षेपतो विप्र मनुजानां चरित्रकम् ॥९॥ मनोस्तु दश पुत्रा वै जाताः पितृसमा मुने । सुद्युम्नः प्रथमस्तेषां ज्येष्ठा कन्या बभूव ह ॥१०॥ इक्ष्वाकुर्नृगशर्यातिदिष्टा धृष्णः करूषकः । नरिष्यंतपृषध्रौ च नभगः परिकीर्तिताः ॥११॥ नवैते सूर्यवंशे वै शक्रतुल्यपराक्रमाः । ज्येष्ठे चंद्रस्य वंशो वै स्त्रीभावात् संबभूव ह ॥१२॥ सुद्युम्नः स कदाचिद्वै मृगयार्थं वने ययौ । वनेषु सैन्यसंयुक्तो बभ्रामामितविक्रमः ॥१३॥ दैवयोगेन राजाऽयं ययौ गौरीवनं मुने । तत्र प्रवेशमात्रेण स्त्रीरूपः स बभूव ह ॥१४॥ शिवेन शैलपुत्र्यर्थं शापितं तद्वनं सदा । मृकंडदेहज शृणुष्वोग्रं वै तत्र कारणम् ॥१५॥ गौरीवने भवान्या स नग्नः शंभुश्च सा तथा । नग्ना रेमे शिवेनैव तया शंभुश्च मानद ॥१६॥ एकदा मुनयः श्रेष्ठा वसिष्ठाद्याः समाययुः । दर्शनार्थं महेशस्य तत्र ते विविशुः सुखम् ॥१७॥ तान् दृष्ट्वा लज्जिता देवी शिवश्चैव महामुने । ततस्ते विमुखा जग्मुर्मुनयो लज्जिता भृशम् ॥१८॥ ततः शिवेन शापो वै दत्तस्तत्र वने मुने । प्रवेशेऽत्र पुमान् सद्यो भवतु स्त्रीस्वरूपधृक् ॥१९॥ सुद्युम्नस्तत्र संजातो नारीरूपो विशेषतः । शुशुभे यौवनश्रिया स्तनभारभरान्वितः ॥२०॥ ततस्तत्र बुधो देवश्चंद्रपुत्रः समाययौ । तेन दृष्टा सुरूपा सा नारी मोहकरी मुने ॥२१॥ साऽपि तं चकमे तत्र देवरूपं महाप्रभम् । तेन भुक्त्वा ययौ स्थानं स्वकीयं लज्जिताऽभवत् ॥२२॥ तस्यां पुरूरवा जज्ञे चंद्रवंशधरः प्रभुः । श्राद्धकर्मणि विख्यातो बभूव पितृभक्तितः ॥२३॥ तदर्थं च वसिष्ठेन गणेशस्य महामनुः । दत्तो विनायकायेति नमोंतः स्त्रीस्वरूपिणे ॥२४॥ राजपुत्री वनं गत्वा तताप तप उत्तमम् । शतवर्षैर्गणाध्यक्षस्तां ययौ भक्तिभावतः ॥२५॥ तया संपूजितो ढुंढिः स्तुतस्तस्यै वरं ददौ । तया पुरुषभावाय याचितश्च वरः शुभः ॥२६॥ तथेति तं पुनः

सद्यः कृत्वा नरसुरूपिणम् । गणेशः स ययौ स्थानं स्वकीयं भक्तवत्सलः ॥२७॥ सुद्युम्नस्य ततस्तस्य पुत्रा जातास्त्रयो मुने । उत्कलश्च गयश्चैव विनीतश्च महाबलः ॥२८॥ पुत्रान् स राज्ये संस्थाप्य महातेजा ययौ वनम् । गणेशं योगमार्गेण तोषयामास नित्यदा ॥२९॥ शांतियोगधरः सोऽपि बभूव वनसंस्थितः । अंते सायुज्यतां प्राप्तो गणेशस्य महाबलः ॥३०॥ सुद्युम्ने स्त्रीत्वमापन्ने इलानामधरे मुने । इक्ष्वाकुं राज्यधर्मे तं स्थापयामास वै मनुः ॥३१॥ वनं ययौ महाभागो मनुर्वैवस्वतो मुने । सूर्यात् प्राप्य महामंत्रं जजाप च षडक्षरम् ॥३२॥ सूर्येण योगमार्गश्च कथितस्तेन विघ्नपम् । अभजद्योग-शांत्यर्थं सोऽपि शांतो बभूव ह ॥३३॥ नित्यं गणपतिं स्वर्गेऽभजच्चानन्यचेतसा । महायोगी मनुर्देवं न मुमोच कदाचन ॥३४॥ इक्ष्वाकुः पुत्रकामार्थं वसिष्ठस्योपदेशतः । अष्टाक्षरेण मंत्रेणाऽतोषयद् गणनायकम् ॥३५॥ शतवर्षैः प्रसन्नोऽभूद्ददौ तं वरमुत्तमम् । स्तुतः संपूजितस्तेन ययौ स्थानं गणेश्वरः ॥३६॥ गणेशवरदानेन विकुक्षिस्तस्य चात्मजः । बभूव सर्वमान्यः स तेजस्वी दृढविक्रमः ॥३७॥ संस्थाप्य स्वाधिकारे वै राज्ये राजा ययौ वनम् । पुनस्तेन सुमंत्रेण तोषयामास विघ्नपम् ॥३८॥ क्रमेण शांतिमापन्न इक्ष्वाकुर्ब्रह्मणो मुने । ब्रह्मभूतः स्वभावस्थः स्वानंदे गणपं ययौ ॥३९॥ विकुक्षेरभवन् पुत्रा दश पंच महामुने । तेषां ज्येष्ठः ककुत्स्थश्च शृणु तस्य विचेष्टितम् ॥४०॥ दैत्यैः संताडिता देवाः शरणं तं नृपात्मजम् । ययुः सोऽपि महातेजा दैत्यान् योद्धुं समाययौ ॥४१॥ तत्रेंद्रं वृषभं तस्य कृत्वा ककुदि संस्थितः । जघान दैत्यपान् सर्वान् विजयी चाऽभवन्नृपः ॥४२॥ ककुत्स्थस्तेन देवेंद्रैर्नाम्ना संकीर्तितो नृपः । स गणेश्वरभक्तो वै ययौ विघ्नेश्वरं परम् ॥४३॥ ततोऽनेनाः पृथुस्तस्माद्विश्वरंधिश्च तत्सुतः । तस्माच्चंद्रो महाबाहुस्तस्माच्च युवनाश्वकः ॥४४॥ तस्माच्छाबस्तनामाऽभूद् बृहदश्वश्च तत्सुतः । ततः कुवलयाश्वश्च पुत्रोऽभूदेव धुंधुहा ॥४५॥ धुंधुं हत्वा महादैत्यं धुंधुमारो बभूव ह । धुंधुमारस्य पुत्रा वै त्रयः प्रोक्ता महामुने ॥४६॥ दृढाश्वः कपिलाश्वश्च भद्राश्वश्च महाबलः । दृढाश्वस्य च हर्यश्वो महाबलपराक्रमः ॥४७॥ हर्यश्वस्य निकुंभोऽभून्निकुंभाद्बर्हणाश्वकः । कृशाश्वश्च रणाश्वश्च द्वौ पुत्रौ तस्य संमतौ ॥४८॥ कृशाश्वस्य च पुत्रोऽभूद्युवनाश्व इति स्मृतः । स युद्धे देवतुल्यो वै बभूव परमद्युतिः ॥४९॥ तेन पुत्रार्थमानंदान् मुनिभिश्च महात्मना । वरुणस्य कृतो यज्ञ-स्तत्र तैर्मंत्रितं जलम् ॥५०॥ रात्रौ राजा पपौ विप्र तृषितो दैवयोगतः । ब्राह्मणैश्च तदा पृष्टं केन पीतं जलं महत् ॥५१॥ राज्ञा पीतं विदित्वा ते विस्मिता ब्राह्मणास्ततः । ऊचुस्तं राजशार्दूलं किं कृतं च त्वया प्रभो ॥५२॥ तवोदरे तथा गर्भो

भविष्यति न संशयः। एवमुक्त्वा च ते यज्ञं पूर्णं कृत्वा ययुः स्थलम् ॥५३॥ उदरे युवनाश्वस्य गर्भः संववृधे मुने। संपूर्णे तत्र देवेंद्रो गर्भे तस्य महात्मनः ॥५४॥ विदार्य जठरं सद्यः पूर्ववत्तं चकार ह। कं धास्यति कुमारोऽयं तत्रेंद्रस्तानुवाच ह ॥५५॥ मां धास्यति ततस्तेन मांधाता कथितो द्विजैः। इंद्रेण वर्धितः सोऽपि रराज परमद्युतिः ॥५६॥ स तु सर्वान् वशे कृत्वा सार्वभौमो बभूव ह। अव्याहतगतिर्लोके देवतुल्यो विशेषतः ॥५७॥ गुणा वर्णयितुं शक्या मांधातुर्न महात्मनः। स एव गणराजं तमभजन्नित्यमादरात् ॥५८॥ वसिष्ठाद्योगमाश्रित्य योगिवंद्यो बभूव ह। पुरुकुत्सः सुतस्तस्य संस्थाप्य स वनं ययौ ॥५९॥ गणेशभक्तिं वै तत्र चकारांऽते लयं ययौ। स्वानंदे गणपे विप्र ब्रह्मभूतः स्वभावतः ॥६०॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते मांधातुश्चरित्रकथनं नाम द्वाविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुनिरुवाच। मनोर्वंशे महाभागोंऽबरीषश्च बभूव यः। एकादशीव्रती नित्यं वदतं तस्य चेष्टितम् ॥१॥ नरनारायणावूचतुः। मनोर्वंशेंऽत्यपुत्रोऽभूदंबरीषः प्रतापवान्। नित्यं विष्णुं स्वभावेनाऽभजच्चानन्यमानसः ॥२॥ एकादशीव्रतेनैव तोषयामास माधवम्। ततो बहुगते काले द्वादश्यां तं ययौ मुनिः ॥३॥ दुर्वासाः क्रोधशाली चातिथिः पारणकेऽभवत्। तं प्रणम्य स राजर्षिरुवाच प्रकृतांजलिः ॥४॥ भगवन् स्वल्पकालस्था द्वादशी मे च पारणे। व्रतसाधनकार्यार्थं प्रार्थयामि महामुने ॥५॥ स्वल्पकालेन संध्यादि कृत्वाऽऽगंतव्यमादरात्। तथेति नृपतिं विप्र उक्त्वा तीर्थं जगाम ह ॥६॥ तत्र शीघ्रतया तेन कृतं संध्यादिकं मुने। तथापि कालयोगेन द्वादशी प्रगता ततः ॥७॥ मुहूर्तमात्रकालस्योत्क्रमणं तेन वै कृतम्। नृपेण पलमात्रा सा द्वादशी साधिताऽभवत् ॥८॥ विष्णुतीर्थं ततस्तेन भक्षितं व्रतसिद्धये। पश्चादतिथिराजस्य प्रतीक्षामकरोन्नृपः ॥९॥ ततः शीघ्रतया तत्र दुर्वासाः प्रययौ मुने। राज्ञा तस्मै स्ववृत्तांतः कथितो विस्तरेण ह ॥१०॥ श्रुत्वा स कुपितोऽत्यंतं दुर्वासास्तं शशाप ह। निमंत्र्य मां त्वया राजन् प्रकृतं पारणं कथम् ॥११॥ अतस्त्वं फलहीनो वै भविष्यसि न संशयः। एवमुक्त्वा जगामाऽसौ दुर्वासाः स्वेच्छया चरन् ॥१२॥ ततः सोऽपि नृपोऽत्यंतं दुःखितः संस्थितोऽभवत्। उपोषणसमायुक्तः स्वगृहे तं प्रतीक्षयन् ॥१३॥ अतिथिं त्वागतं त्यक्त्वा कथं कुर्वे हि भोजनम्।

निमंत्र्य तं विशेषेण जपध्यानपरायणः ॥१४॥ गते संवत्सरे तत्राऽऽजगाम मुनिनारदः । प्रपूज्य सर्ववृत्तांतं कथयामास तं नृपः ॥१५॥ ततस्तं नारदः प्राह शृणु राजन् महामते । जलभक्षणमात्रेण पारणं च त्वया कृतम् ॥१६॥ तेनोपोषणयुक्तेन त्वया धर्मः प्रपालितः । द्वादशी व्रतगा पूर्णा साधिता व्रतसिद्धये ॥१७॥ अपराधविहीनस्य तवाऽयं विघ्न उत्थितः । दुर्वासाः कोपसंयुक्तो जगाम क्षुधितो गृहात् ॥१८॥ अतस्त्वं विघ्नराजं तं भज यत्नेन मानद । तेन विघ्नविहीनश्च भविष्यसि न संशयः ॥१९॥ विष्णुना प्रेषितोऽहं वै त्वदर्थं नृपसत्तम । सर्वेषामादिरूपोऽयमंते सोऽपि गणेश्वरः ॥२०॥ शिवविष्णवादयस्तस्य गणाः प्रोक्ता न संशयः । तेन संस्थापिताः सर्वे नानाकार्येषु भूमिप ॥२१॥ चित्तं बुद्धिस्वरूपं यत्तत्र चिंतामणिः स्थितः । तं गच्छ शरणं वत्स पतिं बुद्धेर्विशेषतः ॥२२॥ त्यक्त्वा सिद्धिपतिं देवं सिद्धिमिच्छति दुर्मतिः । तस्यासिद्धिर्भवेन्नित्यं सर्वत्राऽत्र न संशयः ॥२३॥ एवमुक्त्वा मुनिस्तस्मै ददौ मंत्रं षडक्षरम् । महाविष्णुर्जपति यं ततः सोंऽतर्हितोऽभवत् ॥२४॥ अंबरीषस्तदारभ्य विघ्नेशं शरणं गतः । जजाप मंत्रराजं तं पूजयित्वा विनायकम् ॥२५॥ विष्णोर्गणेशस्य चैवाभेदस्तेन समाश्रितः । गणेशस्य चतुर्धा सा मूर्तिः सर्वत्र दृश्यते ॥२६॥ ततो दुर्वाससो विप्र मनश्चंचलतां गतम् । दयया स्वयमेवासावंबरीषं जगाम ह ॥२७॥ समागतं मुनींद्रं तं दृष्ट्वा विस्मितमानसः । प्रणम्यादावंबरीषोऽपूजयद् भक्तिसंयुतः ॥२८॥ ततस्तं नृपशार्दूलं जगाद मुनिसत्तमः । दुर्वासा विनयेनैव युक्तं परमहर्षितः ॥२९॥ दुर्वासा उवाच । क्षमस्वैनं मेऽपराधं साहसं नृपसत्तम । अपराधविहीनं त्वामशपं क्रोधसंयुतः ॥३०॥ त्वं तु साधुस्वभावेन संस्थितः स्वगृहे नृप । उपोषणसमायुक्तस्तेन सर्वं जितं त्वया ॥३१॥ मां त्यक्त्वा जलपानेन पारणं यत्त्वया कृतम् । सैव निष्फलरूपैकादशी तव भविष्यति ॥३२॥ अन्याः फलयुताः सर्वास्ते भवंतु नृपोत्तम । एवमुक्त्वा स तेनैव बुभुजे मुनिसत्तमः ॥३३॥ तमनुगृह्य दुर्वासा ययौ स्वस्याश्रमं शुभम् । अंबरीषस्ततो देवं गणेशमभजत् सदा ॥३४॥ तस्मात्पुत्राः समुत्पन्नास्तत्र ज्येष्ठं प्रतापवान् । राज्ये नृपोत्तमस्तं स स्थापयित्वा वनं ययौ ॥३५॥ भक्त्या गणपतिं तत्राऽभजच्चानन्यचेतसा । कालेनांऽते गणेशानं ययौ योगेन तत्त्वतः ॥३६॥ अंबरीषस्य पठति चित्रं यच्च शृणोति यः । चरित्रं तस्य भक्तिश्च मुक्तिर्भवति शाश्वती ॥३७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते अंबरीषचरितं नाम त्रयोविंशतितमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ नरनारायणावूचतुः । पुरुकुत्सस्य दायादावभूतां तु महाबलौ । अंबरीषो महाभागो मुचुकुंदस्तथाऽपरः ॥१॥ अंबरीषः स्वराज्यं वै कृत्वा गणपतिं ययौ । तपस्तप्त्वा सुविपुलं पुत्रे राज्यं निधाय च ॥२॥ चकार मुचुकुंदः स राजर्षिराज्यमुत्तमम् । धर्मयुक्तो महातेजाः शक्रतुल्यपराक्रमः ॥३॥ कदाचिद्देवदैत्यानां युद्धं जातं महाद्भुतम् । तत्र देवा जिताः सर्वे दैत्यैः परमदारुणैः ॥४॥ मुचुकुंदं ततो देवाः शरणं जग्मुरादरात् । ततस्तेन महादैत्या हताः शस्त्रबलेन वै ॥५॥ तत्र युद्धप्रसंगेन कालो विप्र गतो बहुः । युगातिक्रमणं तेन प्राप्तं तस्य महात्मनः ॥६॥ युगभेदं निरीक्ष्याऽसौ देवान् सर्वानुवाच ह । ज्ञानं दातव्यमाद्यं मे भवद्भिरधुना परम् ॥७॥ ततस्ते दैवताः सर्वे जगुः परमभाविताः । अधुना पर्वतद्रोण्यां निद्रायुक्तो भव प्रभो ॥८॥ नृप त्वां यो नरस्तत्र कश्चिदुत्थापयिष्यति । स एव मरणं सद्यः प्राप्नोतु त्वत्समीपगः ॥९॥ तत्र ते वासुदेवस्य दर्शनं प्रभविष्यति । स एव ज्ञानसंदाता महायोगी नृपोत्तम ॥१०॥ ययावुवाचैव वनं तान् तथेति महाबलः । स गंधमादनद्रोण्यां सुष्वाप च नृपोत्तमः ॥११॥ ततो बहुगते काले वसुदेवसुतोऽभवत् । विष्णुः साक्षान् महायोगी तपसाऽऽराधितो मुने ॥१२॥ कंसं हत्वा महावीरं मथुरायां स्थितोऽभवत् । कंसस्य श्वशुरोऽत्यंतं क्रोधयुक्तो बभूव ह ॥१३॥ जरासंधो ययौ तत्र युद्धार्थं सैन्यसंयुतः । राजभिः शाल्वकाद्यैश्च संवृतो वीरसत्तमैः ॥१४॥ त्रयोविंशतिरेतस्याऽक्षौहिण्यश्च बलं बभौ । तन्ममर्द महातेजाः कृष्णः संकर्षणान्वितः ॥१५॥ पलायत ततो राजा गतः स्थानं पुनर्ययौ । तावत् सन्यैन संयुक्तो भवदेवं पराजितः ॥१६॥ एवं महाबलः सप्त दश वारं समागतः । जरासंधस्ततो राजा न यशः प्राप दुःखितः ॥१७॥ तदा तेनाऽपि विप्रेंद्र यवनाधिपतिः खलः । सहायार्थं धृतः पक्षे स कालयवनाभिधः ॥१८॥ स वै यवनराजश्च यादवानां विनाशकृत् । गर्गशापात् समुद्भूत आययौ मथुरां मुने ॥१९॥ तमागतं परिज्ञाय मायया निर्ममे स्वयम् । द्वारकां जलधौ कृष्णस्तत्र चिक्षेप यादवान् ॥२०॥ ततो यवनराजस्य समीपे स समागतः । दर्शयित्वा तथाऽऽत्मानं वासुदेवः पलायत ॥२१॥ नारदेन च कृष्णस्य चिह्नानि कथितानि वै । यवनेंद्राय तैः कृष्णं ज्ञात्वा संधावितोऽभवत् ॥२२॥ अभर्त्सयन् महात्मानं कृष्णकालसमः स्वयम् । यवनः किं यदोर्वंशे लाञ्छनप्रद धावसि ॥२३॥ ततः कृष्णो गतस्तत्र यत्र सुष्वाप वै नृपः । मुचुकुंदः स तं त्यक्त्वा गुहांतरगतोऽभवत् ॥२४॥ यवनेंद्रेण सुप्तोऽसौ दृष्टस्तं स्वपदाऽहनत् । किं सुप्तोऽसि च निर्लज्ज कुरु युद्धं मया सह ॥२५॥ बोधितो यवनेनैवं मुचुकुंदः प्रतापवान् । तस्य नेत्रोद्भवो वह्निर्यवनं स

ददाह च ॥२६॥ एवं तं कालयवनं हतं दृष्ट्वा जनार्दनः । आययौ नृपनाथं तं हर्षनिर्भरमानसः ॥२७॥ तमागतं समादृष्ट्वा मुचुकुंदो ननाम च । उवाच भक्तिसंयुक्तः कृष्णं योगीश्वरं मुने ॥२८॥ मुचुकुंद उवाच । देवैः संकथितं कृष्ण ममैतद-भवत् प्रभो । अधुना ज्ञानमार्गं वै कथयस्व कृपानिधे ॥२९॥ मुचुकुंदस्य वाक्यं स श्रुत्वा हर्षसमन्वितः । जगाद तं महाभागं कृष्णः परमयोगवित् ॥३०॥ श्रीकृष्ण उवाच । अहं गणेश्वरः पूर्णो न भिन्नश्च महामते । एतदेव परं ज्ञानं संज्ञातव्यं त्वया नृप ॥३१॥ त्यक्त्वा पंचविधं चित्तं तदैश्वर्यं च मोहदम् । योगेन ब्रह्मणि प्रोक्तं गणेशस्त्वं भविष्यसि ॥३२॥ चित्तरूपा महाबुद्धिर्मोहरूपा च भूमिप । सिद्धिर्गणपतेर्माये तत्र बिंबं स्थितं च यत् ॥३३॥ तदेव गणनाथोऽयं पश्य तं योगसेवया । चित्ते चिंतामणिं भूप त्यक्त्वा बिंबभवं भ्रमम् ॥३४॥ गकारात्मकरूपां वै सिद्धिं जानीहि मानद । णकाररूपिकां बुद्धिं तयोः स्वामी गणेश्वरः ॥३५॥ तं भजस्व महाभाग तेन शांतिमवाप्स्यसि । ज्ञानं गुह्यतमं प्रोक्तं मया ते नृपसत्तम ॥४६॥ एवमुक्त्वा महायोगी कृष्णस्तेन प्रपूजितः । आगत्य मथुरायां स जघान यवनान् प्रभुः ॥३७॥ जरासंधं समागत्य धावितो रामसंयुतः । वंचयित्वा ययौ तं स द्वारकायां महामुने ॥३८॥ मुचुकुंदश्च राजर्षिः साधयामास यत्नतः । कृष्णेन कथितं योगं तेन शांतिं जगाम ह ॥३९॥ ततो भ्रमन् स राजेंद्रः पृथिव्यां यत्र तत्र च । गणेशमभजत् भक्त्या तं प्राणांतं महायशाः ॥४०॥ मुचुकुंदस्य यो मर्त्यश्चरितं शृणुयात् परम् । पठेत्तस्मै तु सर्वं स प्रदद्याद्गणपः प्रभुः ॥४१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते मुचुकुन्दचरितं नाम चतुर्विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नरनारायणावूचतुः । अंबरीषस्य पुत्रोऽभूद्यौवनाश्वो परः स्मृतः । हरितो यौवनाश्वस्य हारितस्तु सुतोऽभवत ॥१॥ पुरुकुत्सस्य पुत्रोऽभूत्त्रसदस्युस्ततोऽभवत् । अनरण्यस्तस्य पुत्रो हर्यश्वः साधुसंमतः ॥२॥ अरुणस्तत्सुतः सूर्यवरात् प्रोक्तः समुद्भवः । तस्य पुत्रोऽभवत् सत्यव्रतो विद्वान् महाशयाः ॥३॥ स एवाऽभूत्त्रिशंक्वाख्यो देहभृत् स्वर्गलोकगः । तस्य पुत्रो हरिश्चंद्रः सर्वधर्मपरायणः ॥४॥ विश्वामित्राच्च विघ्नेशं ज्ञात्वा गाणेशकोऽभवत् । स्वानंदे गणनाथं सोऽते जगाम महायशाः ॥५॥ रोहितस्तस्य पुत्रोऽभूद्धरितो वै ततोऽभवत् । चंपस्तस्मात् सुदेवोऽतो विजयो भरुकस्ततः ॥६॥ ततो वृकस्ततो बाहुः सगरस्तस्य चात्मजः । सगरस्याऽपि भार्ये द्वे प्रभा भानुमती तथा ॥७॥ ताभ्यामाराधितो योगी भृगुः परमपावनः ।

पुत्रार्थं स ददौ ताभ्यां वरं पुत्रप्रदं परम् ॥८॥ षष्टिसाहस्रपुत्रा वै वृताश्च प्रभया ततः । एकं वंशधरं भानुमती वव्रे महामुने ॥९॥ भृगोः प्रसादयोगेन भानुमत्यां समुद्भवः । असमंजसनामा वै पुत्रो वंशधरो मुने ॥१०॥ स तु योगयुतः सर्वान् शिशून् धृत्वा महायशाः । चिक्षेप शरयूमध्ये बालो बालविनाशकृत् ॥११॥ वनं ययौ ततः पित्रा स संत्यक्तो महामुने । जीवयित्वा शिशून् सर्वान् योगी मायाबलेन वै ॥१२॥ तस्य पुत्रः समुत्पन्नोऽशुमान् धर्मपरायणः । प्रभायां षष्टिसाहस्रं पुत्राणां प्रबभूव ह ॥१३॥ सगरेण ततो यज्ञा अश्वमेधाः कृता बलात् । शतसंख्याः प्रमाणेन तत्रेंद्रः क्षुभितोऽभवत् ॥१४॥ अंत्ये यज्ञे समारब्धे मायया च सुराधिपः । अश्वं संगृह्य पाताले स्थापयामास सन्निधौ ॥१५॥ कपिलस्य ततस्तत्र पुत्राश्च सगरस्य ये । कुपितास्ते सहस्राणां षष्टिः परमदुर्जयाः ॥१६॥ अश्वपादं प्रपश्यद्भिर्भूमिमध्ये विचक्षणैः । ततस्तैः खनिता भूमिः सर्वत्र बलसंयुतैः ॥१७॥ तैऽस्तु संवर्धितो विप्र समुद्रो लवणात्मकः । तेन सागर-नामाऽभूत्तदारभ्य स्वकर्मणा ॥१८॥ तमश्वराजं ददृशुश्चरंतं कपिलांतिके । तं चौरं सागरा ज्ञात्वा हंतुं शस्त्राणि संदधुः ॥१९॥ कपिलक्रोधवह्नौ ते भस्मीभूता बभूविरे । सगरा हर्षितस्तेन स प्रतापी पुरंदरः ॥२०॥ नारदात् सगरो ज्ञात्वांऽशुमंतं पौत्रकं ततः । प्रेषयामास तं विप्रं ननाम स महाद्युतिः ॥२१॥ स्तुतः संपूजितस्तेन कपिलः प्रददौ हयम् । संगृह्य स ययौ विप्र सगरं स्वपितामहम् ॥२२॥ ततश्चकार तं यज्ञं संपूर्णं त्वश्वमेधकम् । ययौ राज्ये-ऽभिषिच्याऽसौ वनं पौत्रं महायशाः ॥२३॥ गुरोः प्राप्य महामंत्रं गाणेशं योगशांतिदम् । साधयित्वा स वै योगी बभूव परमद्युतिः ॥२४॥ अनन्यमनसा देवं गणेशमभजन्नृपः । अंते स गणपं विप्र ययौ ब्रह्मपरायणः ॥२५॥ अंशुमान् कपिलाच्चैव ज्ञानं प्राप्य महायशाः । गणेशमभजन्नित्यं गाणपत्यस्वभावतः ॥२६॥ तस्य पुत्रो दिलीपश्च दिलीपात्तु भगीरथः । दिलीपोऽन्यस्य राज्ये तं ययौ विघ्नेशमुत्तमम् ॥२७॥ ततो भगीरथो राजा दिलीपस्थापितः स वै । पालयामास संपूर्णं राज्यं सद्धर्मभावतः ॥२८॥ एकदा नारदस्तत्र जगाम नृपतिं मुने । पूजितस्तेन होवाच नृपं वचनमुत्तमम् ॥२९॥ नारद उवाच । भगीरथ महाभाग श्रृणु मे वचनं हितम् । तव ब्राह्मणसंक्रोधाद्दग्धाश्च प्रपितामहाः ॥३०॥ विप्रक्रोधेन दग्धा ये गतिस्तेषां न विद्यते । अतस्त्वं च महाराज कुरु तेषां हितं परम् ॥३१॥ स्वर्णदीं त्वं समानीय प्लावयस्व च तान् जलैः । स्वर्गवासिन एवं ते प्रभविष्यंति पूर्वजाः ॥३२॥ एवमुक्त्वा महायोगी नारदो गणपं स्मरन् ।

ययौ स्वर्गं ततो विप्र राजा संदुःखितोऽभवत् ॥३३॥ प्रधानेषु स्वकीयं तद्राज्यं त्यक्त्वा वनं ययौ । तपसाऽऽराधयामास स्वर्णदीं च भगीरथः ॥३४॥ पूर्णे वर्षशते चैव तं ययौ स्वर्गवाहिनी । वरेण च्छंदयामास राजानं भक्तिसंयुतम् ॥३५॥ पूजयामास तां देवीं स्तुत्वा च विविधैः स्तवैः । प्रतापवान् जगादाऽसौ भूमिपः स भगीरथः ॥३६॥ भगीरथ उवाच । यदि तुष्टा महाभागे तदा मे प्रपितामहान् । प्लावयस्व महीसंस्था सा तथेति तमब्रवीत् ॥३७॥ मदीयमुग्रवेगं संधारणार्थं महामते । पात्रं पश्य महाभागाऽऽगमिष्यामि महीतलम् ॥३८॥ तथेति स महीपालः पूजयामास शंकरम् । वर्षेणैकेन तं शंभुः प्रसन्नो वरदोऽभवत् ॥३९॥ स्वर्णदीं धारयस्व त्वं यदि तुष्टोऽसि शंकर । तथेति शिव ऊचे तं सस्मार स महानदीम् ॥४०॥ आगतां तां तदा प्राह पत देवि महीतले । धारयिष्यति ते वेगं शंकरः करुणानिधिः ॥४१॥ स्वर्गंगा गर्वयुक्ता च तथेति शिवमस्तके । पपात सैव धाराभिः सहस्रेण समंततः ॥४२॥ शिवमस्तकमाप्लाव्य गमिष्यामि रसातलम् । इति संधार्य मनसि महावेगयुता ययौ ॥४३॥ तस्या गर्वं परिज्ञाय शंकरेण स्वमायया । जटायां गोपिता देवी तत्र बभ्राम वै नदी ॥४४॥ नांतं जगाम शंभोः सा जटायास्तं नमाम वै । ततः शिवेन राजार्थे मोचिता धरणीं ययौ ॥४५॥ तत्र जन्हुं महीपालं ददर्श स्वर्गवाहिनी । तं तपंतं तपो घोरं जगाद चल तापस ॥४६॥ नोचेत्त्वां प्लावयिष्यामि स जगाद न तां यदा । तदा सा क्रोधसंयुक्ता प्लावितुं तं समाययौ ॥४७॥ तामागतां समाज्ञाय क्रोधयुक्तो महीपतिः । तपोबलेन तां पीत्वा संतस्थौ तपसि प्रभुः ॥४८॥ ततो भगीरथस्तं प्रणनामाऽथ महायशाः । प्रार्थितः स मुमोचाऽपि स्वोरुं भित्वा ततो नदीम् ॥४९॥ तस्य पुत्रीत्वमापन्ना जाह्नवी तेन कथ्यते । पुनः सा वेगसंयुक्ता प्लावयामास सागरान् ॥५०॥ विमानवरमारूढास्ते भगीरथसन्निधौ । ते गताः स्वर्गलोके च जलस्पर्शेन तत्क्षणात् ॥५१॥ राज्ञा भगीरथेनैवं पूजिता स्वर्गवाहिनी । पुत्रीभावेन संक्लृप्ताऽभवत् भागीरथी ततः ॥५२॥ एवं भगीरथोऽसौ प्रभावयुक्तः प्रतापवान् । भगीरथसुतोऽप्यासीच्छ्रुतो नाम महीपतिः ॥५३॥ संस्थाप्य स्वपदे राज्ये स ययौ वनमुत्तमम् । वसिष्ठात् स विदित्वा च योगं गाणेशकं मुने ॥५४॥ साधयित्वा स वै राजा गाणपत्यो बभूव ह । अंते जगाम गाणेशसायुज्यं योगसेवया ॥५५॥ इदं भगीरथाऽऽख्यानं यः शृणोति नरोत्तमः । पठेद्वा तस्य भो विप्र भुक्तिमुक्तिप्रदं भवेत् ॥५६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते सगरभगीरथचरितं नाम पंचविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नरानरायणावूचतुः । श्रुतस्य चैव नाभाख्यः पुत्रस्तस्य बभूव ह । सिंधुद्वीपस्ततो जज्ञे ज्ञानी पुत्रो महायशाः ॥१॥ अयुतायुः सुतस्तस्य ततो य ऋतुपर्णकः । स वै नलसखस्तस्मादश्वविद्यापरायणः ॥२॥ सर्वकामस्ततो जज्ञे तस्माज्जातः सुदासकः । सौदासस्तस्य पुत्रोऽभूत् ख्यातः कल्माषपादकः ॥३॥ कल्माषपादक्षेत्रे वै वसिष्ठो मुनिसत्तमः । अश्मकं जनयामास चेक्ष्वाकुकुलवर्धकम् ॥४॥ अश्मकस्य च पुत्रोऽभून्मूलको नाम पार्थिवः । स हि राम-भयाद्राजा वनं प्राप्य सुदुःखितः ॥५॥ तत्र नारीस्वरूपः सन्नारीभिः परिरक्षितः । नारीकवचनामाऽभूत् कर्मणा तेन भो मुने ॥६॥ तस्माच्छतरथश्चैलविलो जज्ञे च तत्सुतः । ततो विश्वसहस्तस्मात् खट्वांगो ढुंढिमाप्तवान् ॥७॥ दीर्घबाहुस्तत-स्तस्माद्रघुस्तस्मादजोऽभवत् । पुत्रो दशरथस्तस्य कश्यपांशः स वै स्मृतः ॥८॥ तस्य भार्यात्रयं चासीद्रूपेणाप्रतिमं मुने । कौसल्या चैव कैकेयी सुमित्रा धर्मसंयुता ॥९॥ यौवने प्रगते प्राप न राजा पुत्रमुत्तमम् । नानायत्नं चकाराऽसौ व्रत-तीर्थादिकं मुने ॥१०॥ ततो वसिष्ठं विप्रेशं सस्त्रीकः शरणं ययौ । प्रधानेषु विनिक्षिप्य राज्यं निहतकंटकम् ॥११॥ वसिष्ठेन गणेशस्य मंत्रो दत्तो दशाक्षरः । तस्मै राज्ञे तथा चैवोवाच पत्नीसमन्वितम् ॥१२॥ सूर्यस्य कुलदेवत्वं संप्राप्तः स गजाननः । तस्य वंशे त्वमुत्पन्नः कथं विस्मृतवांश्च तम् ॥१३॥ तस्य विस्मृतिमात्रेण न सिद्धिं पुरुषो लभेत् । परत्रेह च विघ्नेन पीडितोऽतिमहाद्भुतम् ॥१४॥ अतस्त्वमपि राजेंद्र गणपं भज भावतः । न त्याज्योऽयं मंत्रराजस्त्यागे हानिर्भविष्यति ॥१५॥ तथेति तं वसिष्ठं स उक्त्वा नत्वा ययौ वनम् । ततापं वै दशरथस्तप उग्रं महायशाः ॥१६॥ वायुमात्राशनो भूत्वा-ऽपूजयद् गणनायकम् । पत्न्या सह विनीतात्माऽजपत्तं मंत्रमुत्तमम् ॥१७॥ ततो वर्षशते पूर्णे प्रसन्नोऽभूद्गजाननः । आययौ तं वरान् दातुं मूषकारूढ एव सः ॥१८॥ तं दृष्ट्वोत्थाय सस्त्रीको ननाम सहसा प्रभुम् । पूजयामास तं देवं स्तुत्वा स्तोत्रै-र्ननाम च ॥१९॥ ततस्तं गणराजो वै जगाद स नृपोत्तमम् । वरं ब्रूहि महाबाहो दास्ये ते मनसेप्सितम् ॥२०॥ ततस्तद्वचनं श्रुत्वोवाच संविनयान्वितः । प्रसन्नात्मा दशरथो गणेशं सर्वसिद्धिदम् ॥२१॥ दशरथ उवाच । यदि प्रसन्नो देवेश तदा देहि गजानन । भक्तिं ते चरणे नाथ ययाऽज्ञानं न विद्यते ॥२२॥ अन्यद्देहि गणाधीश पुत्रं पृथुलकीर्तिदम् । बलेनाप्रतिमं चैव तव भक्तिपरायणम् ॥२३॥ मया यत्र तपस्तप्तं तत्र त्वं सुस्थिरो भव । पूरयन् भक्तिभावेन जनानां मनसीप्सितम् ॥२४॥ तथेति वै दशरथं जगाद गणनायकः । अंतर्धाय स्वमात्मानं ययौ स्वानंदमादरात् ॥२५॥ ततो वसिष्ठहस्तेन

स्थापिता मूर्तिरादरात् । गणेशस्य च तत्राऽऽसीत् क्षेत्रं सकलसिद्धिदम् ॥२६॥ पूजयित्वा दशरथः सस्त्रीकश्च स विप्र तम् । आययौ नगरेऽयोध्यायां सर्वान् संप्रहर्षयन् ॥२७॥ ततो रावणनाशार्थं विष्णुमाज्ञापयत् प्रभुः । गणेशः स तु पुत्रोऽभून् मुने दशरथस्य भोः ॥२८॥ चतुर्धात्मानमाभज्य विबभौ हरिरव्ययः । कौसल्यायां समुत्पन्नो रामः शस्त्रभृतां वरः ॥२९॥ कैकेय्यां भरतो जज्ञे सुमित्रायां च लक्ष्मणः । शत्रुघ्नश्चैव विप्रेंद्र सर्वे विष्णुसमा बभुः ॥३०॥ ततो दशरथो राजा कामभोगपरायणः । संजातस्तं न सस्मार विस्मृत्या गणनायकम् ॥३१॥ ततो रामस्य मौंज्यादि कर्म तेन कृतं मुने । विश्वामित्रेण यज्ञस्य रक्षार्थं याचितोऽभवत् ॥३२॥ स लक्ष्मणेन रामेण यज्ञस्तस्य प्रपालितः । हतः सुबाहुको नाम राक्षसो दारुणो मुने ॥३३॥ प्रसन्नोऽभून् महायोगी विश्वामित्रः प्रतापवान् । अस्त्रविद्यां ददौ तस्मै रामाय सकलां मुने ॥३४॥ ततो जनकयज्ञं वै जगाम मुनिकौशिकः । रामलक्ष्मणसंयुक्तः पूजितो जनकेन सः ॥३५॥ माहेश्वरं धनुस्तत्र सज्यं रामेण वै कृतम् । आकर्षणेन महता भग्नं मध्ये महामुने ॥३६॥ ततो जनकभूपेन दत्ता सीता महात्मने । रामाय प्रीतियुक्तेन लक्ष्मणाय तथोर्मिला ॥३७॥ भ्रातृकन्ये ततो राज्ञा दत्ते तत्र महामुने । भरताय तथा शत्रुघ्नाय भावेन मानद ॥३८॥ ततो दशरथो राजा कैकेय्या प्रार्थितो भृशम् । रामस्य वनवासार्थं राज्यार्थं भरतस्य च ॥३९॥ वरदानप्रभावेन तथेति स चकार ह । वर्षाणि वनवासं स चतुर्दश च राघवः ॥४०॥ सलक्ष्मणश्च सस्त्रीकश्चकार पितृगौरवात् । स तत्र नासिके रामो वासं चक्रे प्रहर्षितः ॥४१॥ तत्रातिथिस्वरूपेण रावणश्च समाययौ । एकाकिनीं च सीतां संगृह्य लंकां ययौ खलः ॥४२॥ सलक्ष्मणस्ततो रामो न ददर्श विदेहजाम् । पपात मूर्च्छितो भूत्वा विललाप भृशातुरः ॥४३॥ ततो जगाम रामश्च सीतामन्वेषयन् वने । कर्णाटे तत्र शैवं स क्षेत्रं मुख्यं ददर्श ह ॥४४॥ तत्र शंभुं स रामो वै लक्ष्मणेन समन्वितः । आराधयन् महाभक्त्या मासं वै शैवरूपधृक् ॥४५॥ संतुष्टस्तत्र रामाय वरं प्रादात् सदाशिवः । सीताप्राप्तिस्वरूपं तमुपदेशं चकार सः ॥४६॥ शिव उवाच । शृणु राम महाभाग त्वं वै विष्णुः सनातनः । भृगोः शापेन जातोऽसि मानुषे देहधारकः ॥४७॥ सीतावियोगजं दुःखं वनवासं तथाऽऽश्रितः । अतस्त्वं गणराजं वै भज त्वं भक्तिसंयुतः ॥४८॥ तेन ज्ञानं च ते राम भविष्यति पुरातनम् । सीताप्राप्तिर्महाबाहो भविता नात्र संशयः ॥४९॥ शिवस्य वचनं श्रुत्वा तं पप्रच्छ महायशाः । रामः परमशोकार्तो विनयेन समन्वितः ॥५०॥ राम उवाच । वद शंभो महेशान गणेशस्य

स्वरूपकम् । कीदृशोऽयं विशेषेण सर्वाधीशश्च कथ्यते ॥५१॥ रामस्य वचनं श्रुत्वा शंकरस्तमुवाच ह । योगं गाणेशकं पूर्णं बोधयन् मुनिसत्तम ॥५२॥ शिव उवाच । शृणु राम गणेशस्य ज्ञानं ते कथयाम्यहम् । तेन त्वं सर्वभावज्ञः शांतिं प्रलभसे प्रभो ॥५३॥ पंचधा हृदि संस्था या बुद्धिः सैव न संशयः । चित्तरूपा महाभागा प्रकृतिस्तस्य भो विभो ॥५४॥ नानाभ्रमकरी माया सिद्धिः सर्वत्र दृश्यते । भ्रमंति सर्वलोका वै सिद्ध्यर्थं मोहितास्तया ॥५५॥ सा तस्य प्रकृतिः प्रोक्ता वामभागे प्रसंस्थिता । बभूव दक्षिणांगे वै बुद्धिर्मायेति कथ्यते ॥५६॥ तयोः स्वामी गणेशः स योगशांतिमयो मतः । तं ज्ञात्वा च वयं राम शांतिं प्राप्ता भजामहे ॥५७॥ बुद्ध्या यद् बुध्यते राम तदेवं तस्य रूपकम् । योगादिसाधने नैव लभ्यते तच्च सिद्धिजम् ॥५८॥ माये च द्विविधे त्यक्त्वा भजस्व गणनायकम् । तेन त्वं योगमार्गज्ञो गणेशश्च भविष्यसि ॥५९॥ विघ्नराजः स वेदेषु प्रोक्तो वै वेदवादिभिः । तमनादृत्य विघ्नेशं विघ्नहीनः कथं भवेत् ॥६०॥ विघ्नाधीनं महाभाग सकलं वेदवर्णितम् । अतो विघ्नेन संयुक्तं हीनं प्रभवति प्रभो ॥६१॥ विघ्नाः सत्तात्मकाः प्रोक्तास्तेषां स्वामी गणेश्वरः । तं भजस्व विधानेन विघ्नहीनो भविष्यसि ॥६२॥ हेरंबं भज भावेन भक्तिमार्गं वदामि ते । तेन त्वं लभसे देवं गणेशं नात्र संशयः ॥६३॥ स्वकीयसत्तया हीनो भवेद्वै यदि मानवः । हीनस्तदा समाख्यातः पराधीनस्वभावतः ॥६४॥ दीनानां रक्षका ये वै ईश्वराः परमेश्वराः । ते दीनपालकाः प्रोक्ता विचारय महामते ॥६५॥ दीनार्थवाचको राम हेर्वेदेषु विनिश्चितम् । नाथो रंबस्तयोर्योगे हेरंबश्च प्रकथ्यते ॥६६॥ दीनाः सत्ताविहीनाश्च सत्तायुक्ताश्च पालकाः । तेषां स्वामी स हेरंबस्तं भजस्व विधानतः ॥६७॥ अभिमानं च द्विविधं त्यज त्वं राघव प्रभो । दीनात्मकं तथा पूर्णपालनात्मकमुत्तमम् ॥६८॥ दीना येन कृता जीवाः पालकाः परमेश्वराः । तदधीनं जगद्ब्रह्म मत्वा तं शरणं व्रज ॥६९॥ एवमुक्त्वा महादेवो राघवं च सलक्ष्मणम् । अंतर्धानं जगामाऽपि राघवस्तत्र संस्थितः ॥७०॥ विद्याधीशपुरे रामस्तताप तप उत्तमम् । शिवोपदिष्टमंत्रेण तोषयामास विघ्नपम् ॥७१॥ हेरंबं तं सदा रामो लक्ष्मणश्च विशेषतः । पुपूज भक्तिसंयुक्तो निराहारसमन्वितः ॥७२॥ ध्यानेन तस्य देवस्य स्वल्पकालेन च प्रभुः । रामः शांतियुतो विप्र समभूद् योगसेवया ॥७३॥ निश्चयं तस्य रामस्य दृष्ट्वा भक्तं तमाययौ । षण्मासैश्च वरं दातुं गणेशः करुणानिधिः ॥७४॥ सलक्ष्मणं च रामं स बोधयामास विघ्नपः । ततो ध्यानं परित्यज्य गणपं नेमतुः परम् ॥७५॥ ततस्तं पूजयामास रामो देववरो मुने । तुष्टाव स गणाधीशं

भक्तिनम्रात्मकंधरः ॥७६॥ राम उवाच । हेरंबाय नमस्तुभ्यं दीनकर्त्रे कृपालवे । दीनानाथस्वरूपाणां कर्त्रे ते वै नमो नमः ॥७७॥ ईश्वराणां च दीनानामभेदाय च ते नमः । विघ्नेशाय गणानां वै पतये ते नमो नमः ॥७८॥ अनादये च सर्वेषामादिरूपाय ते नमः। अंतमध्यप्रतिष्ठाय लंबोदर नमो नमः॥७९॥ चिंतामणे च चित्तानां चालकाय नमो नमः। भेदाभेदादिहीनाय तदाकाराय ते नमः ॥८०॥ सर्वपूज्याय सर्वादिपूज्याय परमात्मने । अनंताय परेशाय ढुंढिराजाय ते नमः ॥८१॥ पूर्णाय पूर्णनाथाय स्वानंदस्थाय ते नमः । सिद्धिबुद्धिप्रदात्रे च सिद्धिबुद्धिवराय च ॥८२॥ समर्थानां च ते भक्तिहीनानां दैन्यकारिणे। दीनानां भक्तियुक्तानां नमः सामर्थ्यकारिणे ॥८३॥ दीनत्वं च समर्थत्वं त्वदधीनं न संशयः। अतो मां रक्ष योगेश योगेशाय नमो नमः ॥८४॥ किं स्तौमि त्वां गणाधीश शांतियोगस्वरूपिणम् । न समर्थाश्च वेदा यं योगींद्रास्तत्र कोऽप्यहम् ॥८५॥ रामस्य तस्य स्तुवत एवं संभक्तिभावितः। रोमोद्गमः प्रादुरासीत् कंठरोधस्तथैव च ॥८६॥ ततो भक्तिरसे मग्नं रामं वीक्ष्य गजाननः । जगाद तं वरं ब्रूहि मनसीप्सितमादरात् ॥८७॥ त्वया कृतमिदं स्तोत्रं भवेन् मत्प्रीतिवर्धनम् । शांतियोगप्रदं चैव भक्तिलक्षणवर्धनम् ॥८८॥ यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः। श्रवणेन न संदेहः प्रियो मे स भविष्यति ॥८९॥ हेरंबस्य वचः श्रुत्वा तमुवाच जनार्दनः । रामः परमभावेन भक्त्या च प्रकृतांजलिः ॥९०॥ राम उवाच । यदि प्रसन्नभावेन वरदोऽसि गजानन । तदा त्वदीयपादाब्जे भक्तिर्भवतु शाश्वती ॥९१॥ योगशांतिः स्मृतिर्नित्यं यथा शंकरभाषितम् । तथा योगींद्रवंद्यं मां कुरुष्व गणप प्रभो ॥९२॥ रावणेन हृता सीता तद्वधार्थं समुद्यतः । अहं तत्र च हेरंब जयं देहि विशेषतः ॥९३॥ मदीयस्य च नाम्नो वै महिमानं महाद्भुतम् । कुरु सर्वत्र मान्यं मां कीर्तियुक्तं गजानन ॥९४॥ एवं तस्य वचः श्रुत्वा हेरंबो राममब्रवीत् । यथा संप्रार्थितं विष्णो तथाऽस्तु तव नित्यदा ॥९५॥ मदीयस्मरणेनैव सर्वं ते सुलभं भवेत् । तव नामप्रभावेण तरिष्यंति तु जंतवः ॥९६॥ एवमुक्त्वा गणेशानोऽतर्धानं प्रचकार ह । रामो लक्ष्मणसंयुक्तोऽभवत्तत्रैव संस्थितः ॥९७॥ ततोऽगस्त्यं समानीय रामो विप्रेंद्रसत्तमैः । मूर्तिं संस्थापयामास हेरंबस्य विधानतः ॥९८॥ तदादिगणनाथस्तु हेरंबः संस्थितोऽभवत् । विद्याधीशपुरे विप्र भक्तेभ्यः सर्वसिद्धिदः ॥९९॥ तं पूजयित्वा रामः स शोकहीनतया मुने । जगाम लक्ष्मणेनैव युक्तो रक्षोवधाय च ॥१००॥ सुग्रीवं मित्रभावेन वानरैः सहितं मुने । कृत्वा च वालिनं हत्वा ययौ लंकां महाबलः ॥१॥ हनूमदंगदाद्यैश्च सुग्रीवाद्यैश्च संवृतः । अन्यैर्जांबवदाद्यैश्च

वानरैर्देवरूपिभिः ॥२॥ सलक्ष्मणश्च रामोऽयं युयुधे राक्षसैस्ततः। हत्वा राक्षससंघान् स कुंभकर्णं जघान च ॥३॥ लक्ष्मणश्चेंद्रजेतारं मारयामास वेगतः। ततोऽतिकोपसंयुक्तो रावणो युयुधे भृशम् ॥४॥ तेन सर्वे कपींद्राश्च हताः संमूर्च्छिताः कृताः। लक्ष्मणो मूर्च्छितस्तत्र भृशं रामश्च पीडितः ॥५॥ शस्त्रास्त्राणि च रामस्य कुंठितानि विशेषतः। ततोऽतिविह्वलो रामः सस्मार गणनायकम् ॥६॥ स्मृतिमात्रेण रामस्य हृदि चिंतामणिः स्वयम्। ददौ स्फूर्तिं तथा रामो जघान रावणं मुने ॥७॥ स्वयं बुद्धिपतिः साक्षाद्रामार्थं बुद्धिदोऽभवत्। बुद्ध्यधीनं विशेषेण जगद्ब्रह्म महामुने ॥८॥ ततो हत्वा महावीरं रावणं रविवंशजः। रामश्चकार लंकायां राजानं च बिभीषणम् ॥९॥ ययौ सीतां विमानेन संगृह्य नगरे स्वके। चकार राज्यमुग्रं वै सदा धर्मेण धर्मवित् ॥११०॥ सीतयाऽऽसक्तचित्तः स व्यस्मरत् ज्ञानमुत्तमम्। गाणेशं च ततस्तस्य वियोगः सीतयाऽभवत् ॥११॥ अश्वमेधादिकं कृत्वा संस्थितो राज्यकर्मणि। ततो वसिष्ठयोगेन पुनर्ज्ञानमवाप ह ॥१२॥ ततः शांतिसमायुक्तो गणेशं मनसा सदा। पुपूज भक्तिसंयुक्तो बहिर्मूर्तिधरं मुने ॥१३॥ अंते जगाम रामः स विकुंठं विष्णुरव्ययः। तत्र तं गणनाथं सोऽभजतानन्यचेतसा ॥१४॥ इदं रामचरित्रं यः शृणुते भक्तिसंयुतः। पठेद्वा भुक्तिदं तस्य मुक्तिदं प्रभविष्यति ॥१५॥ अयं महोदरस्यैवावतारस्ते महामुने। हेरंबाख्यस्तथा प्रोक्तः श्रवणात् सर्वसिद्धिदः ॥११६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते रामचंद्रचरितं नाम षड्विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नरनारायणवूचतुः । इत्यादि राजमाहात्म्यं वक्तुं नैव प्रशक्यते। सर्वं मायामयं विद्धि मार्कंडेय विशेषतः ॥१॥ ब्रह्मणा सृष्टमापूर्णं विष्णुना पालितं तथा। हरेण संहृतं सर्वं ब्रह्मांडं मायया कृतम् ॥२॥ अनंतानि च सर्वत्र ब्रह्मांडानि स्थितानि वै। महाकारणरूपेण संधृता विद्धि मानद ॥३॥ मायात्मकानि सर्वाणि ज्ञातव्यानि विशेषतः। भ्रमनाशेन योगेन ज्ञायंते नात्र संशयः ॥४॥ मनोवाणीमयं सर्वं भ्रमरूपं प्रकथ्यते। मनोवाणीविहीनं वै तदेवं तादृशं मतम् ॥५॥ धर्मार्थकाममोक्षाश्च ब्रह्मभूतत्वमेव च। भ्रमेण मायया विप्र भासते योगिनां हृदि ॥६॥ रामस्य चरितं पूर्णं कथितं ते समासतः। किं श्रोतुमिच्छसि प्राज्ञ गमिष्यावो निजाश्रमम् ॥७॥ भ्रातुरुवाच । तयोर्वचनमाकर्ण्य

मार्कंडेयश्च तौ पुनः । जगाद प्रणतो भूत्वा योगार्थं पूर्णभावतः ॥८॥ मार्कंडेय उवाच । नरनारायणौ देवौ भवद्भ्यां पावितोऽस्म्यहम् । कथां श्रुत्वा न मे तृप्तिर्जायतेऽमृतपानवत् ॥९॥ अतो गणेशयोगं मे वदतं येन चाप्यहम् । रामवच्छांतिमाश्रित्य ब्रह्मभूतो भवामि च ॥१०॥ नरनारायणावूचतुः । गणेशयोगमार्गं ते वदिष्यावः सुयुक्तितः । न शक्तिस्तं वर्णयितुं मनसाऽपि मुनीश्वर॥११॥ चित्तं पंचविधं विप्र तत्र चिंतामणिः स्थितः। पंचवृत्तिनिरोधेन लभ्यते नात्र संशयः ॥१२॥ भ्रांतिदा सर्वभावेषु सिद्धिः सर्वत्र संस्थिता । भ्रांतिधारकरूपा वै बुद्धिः सा कथ्यते बुधैः ॥१३॥ तयोर्बिंबं च यत् प्रोक्तं तदेव गणनायकः । मोहयुक्तः स्वभावेन खेलते मुनिसत्तम ॥१४॥ बिंबिभावं परित्यज्य भव त्वं गणनायकः । अहं गणेशरूपश्च योगोऽयं शांतिदायकः ॥१५॥ चित्तं पंचविधं त्यक्त्वा तदैश्वर्यं भ्रमात्मकम् । अधुना गणनाथो वै त्वं योगेन भविष्यसि ॥१६॥ मनोवाणीमयं सर्वं गकाराक्षरवाचकम् । मनोवाणी विहीनं च णकारः कथ्यते बुधैः ॥१७॥ तयोः स्वामी गणेशानो वेदे पश्य महामुने । तं भजस्व ततः शांतिं गच्छसि त्वं न संशयः ॥१८॥ एवमुक्त्वा वालखिल्या नरनारायणावृषी । विरेमतुरथैवं तं जानीत गणनायकम् ॥१९॥ तौ प्रणम्य पुनः प्राह मार्कंडेयः प्रतापवान् । धन्योऽहं भवतोश्चैव दर्शनेन महामुनी ॥२०॥ मायां मोहकरीं नाथौ द्रष्टुमिच्छामि शाश्वतीम् । दर्शयेतं महामायां भगवंतौ नमाम्यहम् ॥२१॥ भानुरुवाच । तथेति तं वालखिल्या ऊचतुर्मुनिसत्तमौ । पश्यसि त्वं महामायां मार्कंडेय न संशयः ॥२२॥ आज्ञां प्रगृह्य तेनैव पूजितौ योगिनां वरौ । ययतुः स्वाश्रमं योगाद्गाणपत्यौ महर्षयः ॥२३॥ ततः कदाचिद्विप्रेंद्रो मार्कंडेयः स्व आश्रमे । संस्थितो योगिनौ ध्यात्वा मायादर्शनलालसः ॥२४॥ ततोऽकस्मात् प्रशुश्राव महानादं समुद्भवम् । भयभ्रांतोऽभवत् सोऽपि ततो मेघा जगर्जिरे ॥२५॥ हस्तिहस्तोपमाभिस्ते धाराभिर्ववृषुस्ततः । मेघैस्तत्र जगत् सर्वं मज्जितं पश्यतो मुनेः ॥२६॥ ततः समुद्रजेनैव जलेन प्लावितं महत् । सर्वं चराचरं तत्र बभ्राम मुनिसत्तमः ॥२७॥ मत्स्यादिभिश्च विप्रेंद्रः किंचित् क्षतयुतः कृतः । सस्मार गणनाथं स मार्कंडेयोऽतिविह्वलः ॥२८॥ ततो ददर्श तत्रैव वटपत्रस्थितं शिशुम् । अंगुष्ठपर्वमात्रं स विष्णुं सर्वार्थदं परम् ॥२९॥ तं प्रणम्य प्रतुष्टाव मार्कंडेयो महर्षयः । अथर्वशिरसा देवं संतुष्टं स चकार ह ॥३०॥ उवाच तं स विप्रेंद्रं किमिच्छसि महामुने । वद तेऽहं प्रदास्यामि वरदो नात्र संशयः ॥३१॥ तं प्रणम्य तथोऽवाच मार्कंडेयः प्रसन्नधीः । मायां दर्शय मे विष्णो तां ज्ञात्वा संत्यजाम्यहम् ॥३२॥ ततस्तं विष्णुरूपः स बालको भक्तियंत्रितः । जगाद हास्य-



संयुक्तो भक्तरक्षणतत्परः ॥३३॥ बालविष्णुरुवाच । पश्य मायां महर्षे त्वं ज्ञानदृष्ट्या महामुने । ज्ञानचक्षुर्मया दत्तं तुभ्यं
भक्तिप्रभावतः ॥३४॥ मार्कंडेयस्ततो विप्रा ज्ञानचक्षुःसमन्वितः । मायामपश्यदानंदान्नानाभावप्रकाशिनीम् ॥३५॥
व्याप्यव्यापकरूपेण द्विजाः सर्वत्र संस्थिताः । नानागुणविभेदेन मोहयंति नरान् सदा ॥३६॥ कुत्र ब्रह्मांडनाशश्च कुत्र
ब्रह्मांडपालनम् । कुत्रोत्पत्तिश्च विप्रेंद्रा दृश्यते तेन योगिना ॥३७॥ कुत्र शून्यमयं कुत्र पूर्णरूपं तथा पुनः । ध्यानसंस्थं
परं ब्रह्म ददर्श मुनिसत्तमः ॥३८॥ कुत्र योगार्थमत्यंतं नराः परमभाविकाः । लिप्यंते कुत्र भोगार्थं मोक्षार्थं कुत्रचिद्
द्विजाः ॥३९॥ पुनः पुनश्च सृज्यंते म्रियंते च पुनः पुनः । ईश्वरानेश्वराः कुत्र प्रभवंतीश्वरा नराः ॥४०॥ अमृतं विषरूपं
च विषं चामृतदायकम् । ददर्श तत्र विप्रर्षिः सूर्यं शीतत्वमास्थितम् ॥४१॥ स्थले जलं जले चैव स्थलं नानाविकारजम् । मुक्तं
नरं तथा बद्धं ददर्श मुनिसत्तमः ॥४२॥ न प्रलेभे गतिं तत्रेश्वरो भ्रांत्या ह्यनीश्वरः । जगच्च जगदात्मा वै ततोऽसौ
विस्मितोऽभवत् ॥४३॥ एवं नानाविधं भावं ददर्श मुनिसत्तमः । न शक्यते मया वक्तुं वर्षकोटिशतैरपि ॥४४॥ ततस्तं
परितुष्टाव बालविष्णुं महामुनिः । नानास्तोत्रैः सुतुष्टं स प्रार्थयामास भावतः ॥४५॥ निवर्तय हरे मायां कुरु मां
पूर्ववद्यथा । इति प्रार्थयमानं स चक्रे स्वे चाश्रमे स्थितम् ॥४६॥ ततस्तत्र द्विजेंद्रेण न दृष्टमिव तद्बभौ । यथा स्वप्नगतं
जंतुर्न ददर्श समुत्थितः ॥४७॥ न जलं नैव सामुद्रं भयं दुःखं न केशवः । बालरूपधरश्चैव न माया तेन विस्मितः ॥४८॥
बालखिल्यास्ततो विप्रस्त्यक्त्वा मायां भ्रमात्मिकाम् । गणेशभजने सक्तोऽजपद्वै मंत्रमुत्तमम् ॥४९॥ नरनारायणाभ्यां
यः कथितो योग उत्तमः । हेरंबमंत्रभावेन साधयामास तं पुनः ॥५०॥ रामेण साधितः पूर्वं तथा तेनाऽपि साधितः । योगः
शांतिप्रदः पूर्णो गाणपत्यस्वभावतः ॥५१॥ योगशांतिपरो भूत्वाऽभजत्तं गणनायकम् । अनन्यचेतसा सोऽपि मार्कंडेयः
सुयोगवित् ॥५२॥ अंते गणेशदेहे स सायुज्यं प्राप भक्तितः । एवं नानाविधा विप्रा गाणेशाः संभवंति वै ॥५३॥
एतन् मृकंडपुत्रस्य चरितं यः शृणोति वा । पठेत्तु तस्य वै मायाबंधो न प्रभविष्यति ॥५४॥ महोदरो भवेद्देवो हेरंबाख्यः
प्रकीर्तितः । विद्याधीशपुरे भक्तिसिद्धिदस्तत्र तिष्ठति ॥५५॥ अतोऽहं गणनाथं तं प्रभजे वालखिल्यकाः । योगभावेन
संसाध्यं कृत्वा भक्तिसमन्वितः ॥५६॥ मुद्गल उवाच । एवं भानोर्वचः श्रुत्वा प्रणेमुर्वालखिल्यकाः । रविं सर्वत्र चात्मानं
तुष्टुवुर्विविधैः स्तवैः ॥५७॥ ऊचुः प्रांजलयस्ते तं भानुं सर्वप्रियं पुनः । कृतकृत्याः कृता भानो वयं देव न संशयः ॥५८॥

किं प्रदद्मो महात्मंस्त्वां देहोऽयं ते समर्पितः । तेन तुष्टो भव स्वामिन् गुरुरस्माकमादरात् ॥५९॥ ततः सर्वे पुपूजुस्तं वालखिल्यास्तपोधनाः । प्रणम्य प्रययुस्ते वै तपसे वनमुत्तमम् ॥६०॥ साधयित्वा यथायोगं श्रुतमत्र प्रजापते । योगिनः सर्ववंद्यास्ते संबभूवुर्विशेषतः ॥६१॥ हेरंबं भजमानाश्च नित्यं ध्यानपरायणाः । अनन्यबुद्धयः सर्वे योगशांतिं प्रलेभिरे ॥६२॥ हेरंबाख्यावतारश्च महोदरकलात्मकः । कथितस्ते प्रजापाल नानाख्यानसमन्वितः ॥६३॥ एतादृशाऽवताराश्च बहवस्तस्य मानद । महोदरस्य तेषां यच्चरित्रं परमाद्भुतम् ॥६४॥ नैव शक्यं कथयितुं तत् केनाऽपि न संशयः । अतः संक्षेपतः प्रोक्तं मया दक्ष प्रजापते ॥६५॥ सूर्यस्य वालखिल्यानां संवादः परमाद्भुतः । ब्रह्मभूयप्रदः प्रोक्तो धर्मकामार्थमोक्षदः ॥६६॥ प्रभवेत् स विशेषेण सर्वसंपत्प्रदायकः । मोहनाशकरः पूर्णः श्रोतुमिच्छसि किं पुनः ॥६७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते सूर्यवालखिल्यसंवादसमाप्तिवर्णनं नाम सप्तविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । सूत त्वया महाख्यानं कथितं सर्वसिद्धिदम् । श्रुत्वा तृप्तिं न यामीहाऽमृतं पीत्वा यथा नरः ॥१॥ पुनस्त्वं वद मे ब्रह्मन् भवेद्दक्षेण संश्रुतम् । मुद्गलान् मुनिमुख्याच्च सर्वेषां संमतं परम् ॥२॥ सूत उवाच । सूर्यस्य वालखिल्यानां संवादं ब्रह्मदायकम् । श्रुत्वा पप्रच्छ तं दक्षो मुद्गलं विनयान्वितः ॥३॥ दक्ष उवाच । श्रुतं हेरंबमाहात्म्यं ब्रह्मभूतपदप्रदम् । पुनस्त्वं वद विप्रर्षे महोदरचरित्रकम् ॥४॥ श्रुत्वा श्रुत्वा न मे तृप्तिर्जायते योगिसत्तम । कथां ब्रह्ममयीं पूर्णां सुधारससमां पराम् ॥५॥ सूत उवाच । दक्षस्य वचनं श्रुत्वा हृष्टरोमा महायशाः । जगाद तं प्रजापालं यत्तच्छृणु हि शौनक ॥६॥ मुद्गल उवाच । युधिष्ठिरेण देवेशो मानप्रद महोदरः । आराधितो विशेषेण योगी सोऽभूच्च पांडवः ॥७॥ दक्ष उवाच । युधिष्ठिरस्य विप्रर्षे चरित्रं वद सांप्रतम् । प्रारभ्य चंद्रवंशाच्च तदंतं पुण्यदं भवेत् ॥८॥ मुद्गल उवाच । अत्रिनेत्रात् समुत्पन्नश्चंद्रोऽमृतमयः पुरा । तेनातितपसा देवः सेवितो गणनायकः ॥९॥ गणेशवरदानेन ताराणामधिपोऽभवत् । ओषधीनां च विप्राणां योगयुक्तः प्रतापवान् ॥१०॥ ततः स राजा मोहेन मोहितोऽतितरां विभो । गणेशभजनं त्यक्त्वा भोगयुक्तो बभूव ह ॥११॥ ततो विघ्नेन वै चंद्रः पीडितो मोहसंयुतः । मोहेन गर्हितं कर्म यच्चकार शृणुष्व तत् ॥१२॥

बृहस्पतेश्च या नारी तारा यौवनशालिनी । रूपेणाप्रतिमा तां स जगृहे तीर्थसंश्रिताम् ॥१३॥ मा मेति ब्रुवतीं तारां हाहाकारं प्रकुर्वतीम् । गुरुपत्नीं महामूर्खश्चुचुंब हठसंयुतः ॥१४॥ वनेषु पर्वतद्रोण्यां नानाभावेषु सोऽत्रिजः । रेमे तया प्रजापाल कामबाणप्रपीडितः ॥१५॥ ततो बहौ गते काले गर्भस्तस्यां व्यवर्धत । न मुमोच तदाऽप्येतां मोहयुक्तश्च चंद्रमाः ॥१६॥ बृहस्पतिश्च तं ज्ञात्वा वृत्तांतं क्षुभितो भृशम् । नानायत्नेन चंद्रं स ययाचे न ददौ शठः ॥१७॥ ततश्च गुरुणा दक्ष शिवस्तेन प्रसादितः । शंभुरंगिरसः शिष्यः स वै क्रोधयुतोऽभवत् ॥१८॥ देवैरिंद्रादिभिः सर्वैः शंकरः क्रोधसंयुतः । हंतुं चंद्रं ययौ तत्र क्रोधारुणविलोचनः ॥१९॥ भयभीतः शशी तत्र शुक्रं स शरणं ययौ । तेनाप्यांगिरस्यैव वैरी संपादितोऽभवत् ॥२०॥ शुक्रेणाकारिता दैत्याः प्रह्लादप्रमुखा ययुः । संग्रामाय शिवेनैव ससुरेण महाबलाः ॥२१॥ ततस्तेषामभूद्युद्धं तुमुलं रोमहर्षणम् । दैत्यानां चैव देवानां परस्परविनाशनम् ॥२२॥ मासमात्रं महोग्रं तन्न शांतिमलभन् क्वदा । दिवारात्रं देवगणा दैत्यानां च गणा विभो ॥२३॥ ततो बृहस्पतिर्दुःखात् सस्मार गणनायकम् । निंदयामास चात्मानं तथा चंद्रं प्रजापते ॥२४॥ अहो भ्रातृविरोधेन मम ज्ञानं गतं महत् । गतो गणेशस्तेनाऽहं विघ्नयुक्तोऽधुनाऽभवम् ॥२५॥ मदर्थं देवदैत्यानामधुना नाश आगतः । किं भविष्यति देवेश गजानन नमोऽस्तु ते ॥२६॥ निर्विघ्नं कुरु मां ढुंढेऽधुना देव दयानिधे । देवानां चैव दैत्यानां मूलच्छेदो भविष्यति ॥२७॥ तथा चंद्रः स तं देवं सस्मार हृदि भावतः । ततो विघ्नहरश्चैव तयोर्दक्ष बभूव ह ॥२८॥ तत्राऽऽजगाम देवेशो ब्रह्मा सर्वपितामहः । देवानां दानवानां वै ज्ञात्वा नाशं दयान्वितः ॥२९॥ शंकराद्यांश्च देवान् स प्रह्लादाद्यांश्च दानवान् । वारयामास सर्वज्ञो विधाता सर्वभावनः ॥३०॥ ब्रह्मणो वचनं श्रुत्वा संस्थिता देवदानवाः । प्रणम्य तं विधातारं बद्धांजलिपुटाः पुरः ॥३१॥ चंद्रं ततस्तिरस्कृत्य ददौ तारां पितामहः । गुरवे तत्र संवादः पुत्रार्थं च तयोरभूत् ॥३२॥ ताराया उदरे गर्भो वा चंद्रस्य बृहस्पतेः । न ज्ञायते देवगणैस्ततस्तां विधिरब्रवीत् ॥३३॥ त्यज गर्भं महाभागे कस्यांऽशोऽयं वद स्नुषे । तथा तया च संत्यक्तो गर्भः संपतितोऽभवत् ॥३४॥ महातेजोमयं पुत्रं वीक्ष्य देवा विसिस्मिरे । लज्जयाऽधोमुखी तारा कथयामास नैव तम् ॥३५॥ ततो गर्भः स्वयं तत्रोवाच ब्रह्माणमादरात् । चंद्रस्याऽहं न संदेहस्तं ताराऽपि तथाऽब्रवीत् ॥३६॥ तस्य नाम कृतं देवैर्बुधस्तेन सुकर्मणा । चंद्राय तं ददौ धाता सर्वे स्वस्वालयं ययुः ॥३७॥ एवं पुरा तारकार्थे संग्रामस्तारकामयः । बभूव परमुग्रश्च दैत्यदेवविनाशकृत् ॥३८॥

बुधस्य चरितं पूर्णं कथितं ते प्रजापते । पुरूरवास्तस्य पुत्रो बभूवाऽपि महायशाः ॥३९॥ इलायां गर्भसंदानात्तस्य जन्म मया पुरा । कथितं सोऽपि राजर्षिः पितृतृप्तिकरोऽभवत् ॥४०॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते बुधोत्पत्तिवर्णनं नामाष्टाविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । पुरूरवाश्चकाराऽसौ राज्यं भूमंडलस्य च । धर्मयुक्तः सुनीत्या तान् पालयामास मानवान् ॥१॥ मुनिशापसमायुक्तोर्वशी नृपतिमाययौ । कुरुक्षेत्रे चरंतं स चकमे तां महीपतिः ॥२॥ सोवाच पुत्रतुल्यौ मे उरणौ रक्षसि प्रभो । रतिं विना स्वदेहं त्वं नग्नं मा दर्शयस्व माम् ॥३॥ तदा तव गृहे राजन् वसामि घृतभोजना । तथेति स तु भूपस्तां संगृह्य गृहमाययौ ॥४॥ तस्यां पुत्रा बभूवुश्च षडिंद्रसमतेजसः । आयुर्मायुरमायुश्च विश्वायुश्च तथा प्रभो ॥५॥ शतायुः स्थायुरेते च नामभिः परिकीर्तिताः । चंद्रवंशकराः सर्वे बभूवुर्जयशालिनः ॥६॥ तत इंद्रेण गंधर्वाः प्रेषिता राजवेश्मनि । उर्वशीनयनार्थं वै विश्वावसुपुरोगमाः ॥७॥ तैर्मायाप्रकृती तत्र रात्रौ तस्याः समाहृतौ । उरणौ च तथा ताभ्यां शब्दैः प्ररुदितं भृशम् ॥८॥ तयो रुदनमाकर्ण्य राजानं रभसाज्जगौ । उर्वशी वीर्यहीनं त्वां न जानामि नरेश्वरम् ॥९॥ मम पुत्रौ हृतौ केन चौरेण किमु पश्यसि । तस्या वचनमाकर्ण्य क्रोधरूपो बभूव सः ॥१०॥ नग्नः खड्गधरः सद्यो निर्ययौ भाविगौरवात् । विद्युत्पातस्तथा तत्र समभूद्देवनिर्मितः ॥११॥ तेजसा विद्युतस्तत्र राजा नग्नो बभौ गृहे । तथा तमुर्वशी दृष्ट्वांऽतर्धानं सा चकार वै ॥१२॥ मेषौ प्रगृह्य गंधर्वा गताः स्वर्गं विहायसा । उर्वशीसहिताः शक्रं प्रणेमुर्हर्षसंयुताः ॥१३॥ राजा स्वगृहमध्ये तां न ददर्श यशस्विनीम् । तदा पपात भूपृष्ठे हाहाकृत्वा मुमूर्च्छ सः ॥१४॥ तथाविधो महाराजो विललाप पुरूरवाः । बभ्राम वसुधां सर्वामुर्वशीदर्शनोत्सुकः ॥१५॥ ततो बहौ गते काले वर्षमात्रे दयायुताम् । कुरुक्षेत्रे पुनस्तां स दृष्टवान् हर्षितोऽभवत् ॥१६॥ मां त्यक्त्वा क्व गताऽसि त्वं प्रिये ते भक्तिसंयुतम् । अधुना मां गृहाण त्वं त्यज मा चाप्सरोवरे ॥१७॥ ततस्तेन समायुक्ता रात्रिमेकामुवास सा । उवाच तं तु राजानं शोकयुक्तं वचो हितम् ॥१८॥ अहं देवाप्सरो रम्या गंधर्वाऽधीनतां गता । अतस्त्वं पितृयज्ञेन यज त्वं नित्यमादरात् ॥१९॥ ततः स्वर्गे

च ते वासो भविष्यति महामते । त्वदधीना भविष्यामि नित्यं राजन्न संशयः ॥२०॥ ततः शोकाकुलो राजा रुरोदातीव दारुणम् । सा तथा विह्वलं दृष्ट्वोवाच देवांगना च तम् ॥२१॥ वर्षे वर्षे च भो राजन्नेकरात्रिं वसाम्यहम् । त्वया सार्द्धं महाभाग ततः सांऽतर्हिताऽभवत् ॥२२॥ राज्ञाऽपि तादृशं तत्र कृतं नित्यं प्रजापते । तेन पितृगणास्तुष्टा वरं राज्ञे ददौ परम् ॥२३॥ उर्वशी त्वदधीना सा भविष्यति महामते । तव नामांकिता देवाः श्राद्धेऽस्माकं भवंतु च ॥२४॥ अक्षयः पितृलोकस्ते भविष्यति न संशयः । एवमुक्त्वांऽतर्दधुस्ते पितरो भक्तवत्सलाः ॥२५॥ ततः स्वल्पेन कालेन भूमिपो निधनं गतः । स्वर्गं पुण्यबलेनैव जगाम स पुरूरवाः ॥२६॥ तत्रोर्वशी समायुक्तो बुभुजे विषयप्रियः । भोगान् स्वर्गोद्भवान् नित्यं तामवाप्य पुरूरवाः ॥२७॥ ततो बहौ गते काले पितृलोके गतेन सः । नारदेन महीपालो बोधितो दयया विधे ॥२८॥ नारद उवाच । किं राजंस्त्वं महाभाग विषयेषु विशेषतः । सक्तः पश्य स्वमात्मानं पतिष्यसि न संशयः ॥२९॥ देहोऽयं बंधनागारं तत्र त्वं निगडेन च । बद्धस्तस्माच योगेन बंधहीनो भव प्रभो ॥३०॥ पुनः पुनश्च भोगाः किं भोक्तव्यास्तादृशा-स्त्वया । न तृप्तिमधिगच्छंति जना अज्ञानसंयुताः ॥३१॥ ब्रह्मामृतं पिब त्वं च सदा स्वानंददायकम् । तत्त्यक्त्वाऽल्पसुखे सक्तः पतिष्यसि पुनर्ह्यधः ॥३२॥ चतुरशीति लक्षासु नरो भ्रमति योनिषु । तत्र स्त्रीपुत्रकार्यं स लभते नाऽत्र संशयः ॥३३॥ मनुष्ययोनिगो भूत्वा नरः सर्वार्थवान् भवेत् । तत्र ज्ञानं विशेषेण भवत्यत्र न संशयः ॥३४॥ कर्मार्हो नरदेहोऽयं तत्र योगो न साधितः । पतिष्यति पुनः सोऽपि नानायोनिषु मानद ॥३५॥ द्वंद्वभावमयं दुःखं यत्र तत्र च विंदति । न शाश्वतस्वरूपं स ब्रह्म भुंक्ते नरः कदा ॥३६॥ त्वमपि ज्ञानयुक्तः सन् किं करोषि महामते । तारयस्व स्वमात्मानं योगेन नरसत्तम ॥३७॥ नारदस्य वचः श्रुत्वा तं जगाद नराधिपः । सत्यमुक्तं त्वया योगिन् मया तच्चैव संधृतम् ॥३८॥ अहं विषयदोषेण पीडितोऽतितरां प्रभो । निर्विंदं मे मनः प्राप्तं ज्ञानं ब्रूहि महामुने ॥३९॥ नारद उवाच । गणेशं भज भावेन ततः क्षेमं भविष्यति । एकाक्षरविधानेन सर्वेभ्यश्च परात्परम् ॥४०॥ हृदि बुद्धिप्रदातारं बहिः सिद्धिप्रदं परम् । योगाकारं च सर्वत्र संस्थितं ब्रह्मनायकम् ॥४१॥ चित्तं त्यक्त्वा महाराज भव चिंतामणिः स्वयम् । एवमुक्त्वा च तस्मै स ददावेकाक्षरं मनुम् ॥४२॥ ततस्तेनाभ्यनुज्ञातो नारदः प्रजगाम ह । सोऽपि तामुर्वशीं त्यक्त्वा ध्यानसंस्थो बभूव ह ॥४३॥ कालेन स्वल्पभावेन गाणपत्यो बभूव ह । ततः स निंदयामास स्वात्मानं भृशदुःखितः ॥४४॥

अहो मयाऽतिमूर्खेण कृतं कर्म विशेषतः । भोगदं मोहितेनैव स्त्रीकामेन न संशयः ॥४५॥ अस्थिमांसमयो देहस्तत्र दुर्गंधसंयुतः। छिद्रं मूत्रगृहं नीचं तत्र सक्तो भवाम्यहम् ॥४६॥ सर्वार्थदं मनुष्याणां देहं प्राप्य मया सदा। नरकाधिप्रदं कर्म कृतं वै नात्र संशयः ॥४७॥ नरदेहमवाप्यैव मद्विना को भवेच्छठः । स्त्रीसंसक्तो विशेषेण त्यक्त्वा गणपतिं नरः ॥४८॥ एवं खेदसमायुक्तो बभूव नृपसत्तमः। अभजत्तं स्वभावेन गणेशं सर्वसिद्धिदम् ॥४९॥ अंते जगाम योगेन गणेशं स पुरूरवाः। महिमा कथितस्तस्य पापनाशकरो यतः ॥५०॥ पुरूरवस आख्यानं यः शृणोति नरोत्तमः। पापक्षयकरं तस्य भवतीदं प्रजापते ॥५१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते पुरूरवसश्चरितकथनं नामैकोनत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। आयुषस्तनया दक्ष पंचाऽऽसन् दृढविक्रमाः। स्वर्भानुतनयायां वै प्रभायां तेजसा युताः ॥१॥ नहुषः प्रथमस्तेषां शक्रतुल्यपराक्रमः। चकार शतयज्ञांश्च राज्ञः सर्वान् विजित्य यः ॥२॥ तत्रेंद्रः क्षुभितोऽत्यंतं निराकर्तुं शशाक न। राजानं सर्वशास्त्रज्ञं ततः शांतो बभूव ह ॥३॥ गौतमेन महेंद्रोऽथ शापितस्त्रीप्रधर्षणात्। भ्रष्ट-राज्योऽभवद्देवस्ततो देवा भयातुराः ॥४॥ दैत्यानां वेगमुग्रं ते सहने न क्षमास्ततः। बृहस्पतिं समागम्य पप्रच्छुः क्षेम-कारकम् ॥५॥ तेनाज्ञप्तास्ततो देवा मुनयश्च प्रजापते। नहुषं स्वर्गराजं तं चक्रुस्तेजस्विनां वरम् ॥६॥ देवेंद्रो नहुषो भूत्वा शशास स्वर्गमंडलम्। इंद्रासने समासीनः पालयामास तान् सुरान् ॥७॥ तस्मै वरं ददौ देवा मुनयस्ते प्रजापते। क्रोधेन यस्त्वया दृश्यः सत्ताहीनो भवेत् सदा ॥८॥ ततोऽतितेजसा युक्तो बभूव स नराधिपः। देवादिभिः सदा दक्ष सेवितो नहुषः किल ॥९॥ ततोऽतिगर्वितो राजाऽभवत् स्त्रीसंगलालसः। शचीं देवैश्च निर्लज्ज आह्वयामास दुर्मतिः ॥१०॥ देवानुवाच सा देवी नाहं यामि नराधिपम्। इंद्रस्य देवमुख्यस्य पत्न्यहं पुरुषं परम् ॥११॥ एवमुक्त्वा ततो देवान् ययौ गेहं बृहस्पतेः। ननाम तं महाभागा स्नुषां रक्षेति साऽब्रवीत् ॥१२॥ तस्या वृत्तांतमुग्रं स श्रुत्वा देवगुरुः स्वयम्। निकटे तां समास्थाप्य इंद्रार्थं ह्युद्यतोऽभवत् ॥१३॥ गौतमं सहसाऽऽगत्य तमुवाच महामुनिम्। शापहीनं महेंद्रं त्वं कुरुष्व

वचनाच्च मे ॥१४॥ तमुवाच महायोगी गौतमः किं करोम्यहम् । उपायं वद मे तात तं करिष्ये जवादहम् ॥१५॥ गौतमाय ततस्तेन कथितं सुखदं परम् । विनायकस्य मंत्रं त्वं देहींद्राय महामुने ॥१६॥ गौतमेन तदा दत्तः स्वमंत्रो गणपस्य च । इंद्राय स ततस्तेनाऽभवच्छक्रश्च नीरुजः ॥१७॥ जजाप मंत्रराजं तं शक्रो गणपतेस्ततः । ध्यात्वा तं देवदेवेशं ततापं तप उत्तमम् ॥१८॥ विदर्भे निर्जने देवो वने वाय्वशनः स्वयम् । नासाग्रन्यस्तदृष्टिः स पूजयामास विघ्नपम् ॥१९॥ गते वर्षसहस्त्रे वै तं ययौ भक्तवत्सलः । गणेशानो वरं दातुं तपसा तोषितो भृशम् ॥२०॥ सिंहारूढो महाबाहुश्चतुर्भुजविराजितः । सिद्धिबुद्धियुतश्चैव नाभिशेषधरः प्रभुः ॥२१॥ इंद्रं स बोधयामास वरं ब्रूहि हृदीप्सितम् । मघवंस्ते प्रसन्नोऽहं दास्यामि तपसाऽधुना ॥२२॥ ततस्तं प्रणनामाऽथ इंद्रो भक्तिसमन्वितः । तुष्टाव सुस्थिरो भूत्वा यथामति गजाननम् ॥२३॥ इंद्र उवाच । नमस्तेऽस्तु गणाध्यक्ष भक्तेभ्यः सिद्धिदायक । विनायकाय देवाय हेरंबाय नमो नमः ॥२४॥ अनादये च सर्वेषामादिभूताय ते नमः । आदिपूज्याय विघ्नेश सर्वपूज्याय वै नमः ॥२५॥ आदिमध्यांतहीनाय ह्यादिमध्यमयाय च । अंत्यरूपाय देवेश विघ्नहर्त्रे नमो नमः ॥२६॥ पाशांकुशधरायैव सिंहवाहाय ते नमः । अमेयाय नमस्तुभ्यं नानामायाधराय च ॥२७॥ विघ्नकर्त्रे ह्यभक्तानां सदा स्वानंदवासिने । सिद्धिबुद्धिपते तुभ्यं नाभिशेषाय ते नमः ॥२८॥ ब्रह्मणे ब्रह्मरूपाय ब्रह्मदात्रे कृपालवे । धर्मार्थकाममोक्षाणां दात्रे ते वै नमो नमः ॥२९॥ पूर्णाय पूर्णभावज्ञ पूर्णानंदप्रदाय वै । कर्त्रे हर्त्रे च पात्रे ते गणेशाय नमो नमः ॥३०॥ सूक्ष्मेषु सूक्ष्मरूपाय स्थूलेषु स्थूलभोगिने । स्थूलसूक्ष्मादिहीनाय लंबोदर नमोऽस्तु ते ॥३१॥ किं स्तौमि त्वां सदा शांतिरूपं तस्मान्नमो नमः । तेन तुष्टो भव स्वामिन् दयाकाराय ते नमः ॥३२॥ मुद्गल उवाच । एवं स्तुतिं समाकर्ण्य मघवंतमुवाच ह । गणेशो भक्तिभावेन संतुष्टो भक्तमुत्तमम् ॥३३॥ गणेश उवाच । इंद्र त्वया कृतं स्तोत्रं भुक्तिमुक्तिप्रदं भवेत् । यः पठेच्छृणुयाच्चेद्यस्तस्मै सर्वार्थदं तथा ॥३४॥ नित्यं त्वमपि देवेंद्र पठ स्तोत्रं प्रयत्नतः । तेन विघ्नविहीनस्तु भविष्यसि महामते ॥३५॥ वरान् ब्रूहि महाभाग ये ते चित्ते भवंति वै । तान् दास्यामि न संदेहो भक्त्या स्तोत्रेण तोषितः ॥३६॥ ततस्तं मघवा देवं प्रणम्याभिदधे वचः । निर्विघ्नं कुरु मां देव स्वपदस्थं तथा प्रभो ॥३७॥ भक्तिं त्वदीयपादे मे देहि नाथ नमोऽस्तु ते । इदं क्षेत्रं सुविख्यातं गाणपत्यं तथा कुरु ॥३८॥ तीर्थं च सर्वदं स्वामिन् कुरु ते पादलाञ्छितम् । स्वानंददायकं स्नानमात्रेणात्र न संशयः ॥३९॥ पुरे कदंबनाम्न्येव गाणेशं चिंतितार्थदम् ।

लोके भवतु विख्यातं प्रसादात्ते च विघ्नप ॥४०॥ तथेति तमुवाचाऽथ गणेशोंऽतर्दधे ततः । इंद्रेण गणनाथस्य मूर्तिः संस्थापिता द्विजैः ॥४१॥ तं पूजयित्वा देवेंद्रः संस्थितस्तत्र मानद । नित्यं ध्यानपरो भूत्वाऽभजत्तं गणनायकम् ॥४२॥ अधुना शृणु भो दक्ष नहुषस्य प्रचेष्टितम् । गणेशेन तदा राजा विघ्नयुक्तः कृतः खलः ॥४३॥ बृहस्पतिमुवाचाऽथ मृत इंद्रो न संशयः । न दृश्यते जनैः कुत्र शचीं मे देहि भो गुरो ॥४४॥ ततस्तं वाक्पतिर्देवोऽवदत् क्रोधसमन्वितः । द्विजवाहनगो भूत्वा शचीं याहि नराधिप ॥४५॥ नानावाहेषु सा देवी देवेंद्रेण प्रलालिता । अपूर्वं वाहनं चैवेच्छति तस्मात्तथा करु ॥४६॥ तथेति मदयुक्तः स चकार नहुषस्ततः । विमानवाहान् संगृह्य दुरात्मा ब्राह्मणान् बलात् ॥४७॥ ततो दुःखं द्विजानां स ज्ञात्वाऽत्रेयः समाययौ । दुर्वासास्तं प्रगृह्यैव वाहकं स चकार ह ॥४८॥ ततोऽतिवेगभावार्थं सर्पध्वं ब्राह्मणान्नृपः । उवाच शिबिकायां स संस्थितो मोहसंयुतः ॥४९॥ दुर्वासाः कुपितोऽत्यंतं ददौ शापं सुदारुणम् । सर्पो भव महादुष्ट पत भूमौ नृपाधम ॥५०॥ ततस्तं प्रणनामाऽथ गतगर्वो महीपतिः । उच्छापं वद मे ब्रह्मन् दयया त्वं दयानिधे ॥५१॥ धिङ् मां ब्राह्मणभावेषु विपरीतं प्रवर्तिनम् । मोहेन मोहितं पूर्णं तारयस्व महामुने ॥५२॥ ततस्तापसमायुक्तं नहुषं मुनिसत्तमः । दुर्वासाः प्रत्युवाचेदं वचनं दयया युतः ॥५३॥ दुर्वासा उवाच । तव वंशे महाराज धर्मः साक्षाद्भविष्यति । युधिष्ठिरस्तदा तस्य दर्शनं ते भविष्यति ॥५४॥ तेन संकथितं ज्ञानं ज्ञात्वा शापविवर्जितः । भविष्यसि न संदेहोऽधुना गच्छ महीतलम् ॥५५॥ द्विजाः पूज्याः सदा राजन्नृपैर्नान्ये कदाचन । त्वयाऽवमानिता विप्रा वाहकास्ते कृता बलात् ॥५६॥ तेनाऽतिधर्मलोपो वै जातस्ते नात्र संशयः । पुनर्धर्मं निरीक्ष्य त्वं धर्मयुक्तो भविष्यसि ॥५७॥ एवमुक्त्वा स दुर्वासा गतः स्वेच्छापरायणः । नहुषः सर्परूपोऽभूत् पपात धरणीतले ॥५८॥ तत इंद्रं समानीय सामरश्च बृहस्पतिः । इंद्रासने समास्थाप्य मुदितः स बभूव ह ॥५९॥ नहुषो वनमध्ये स चचार गणपं स्मरन् । अहो विघ्नयुतं सर्वं जगत् स्थावरजंगमम् ॥६०॥ अहं विघ्नेन संयुक्तः कृतो विघ्नेशरूपिणा । अतस्तं शरणं यामि तेन सर्वं शुभं भवेत् ॥६१॥ ततः क्रमेण तेनाऽपि जितं चित्तं प्रजापते । सर्पदेहगतेनैव गाणपत्यस्वभावतः ॥६२॥ ततो बहौ गते काले वनमायाद् युधिष्ठिरः । द्रौपद्याः भ्रातृभिः सार्द्धं द्यूतदोषेण निश्चितम् ॥६३॥ ततो भीमो वने तत्र चचार फलकाम्यया । नहुषेण समाहृष्टो बद्धो ज्ञात्वा स पांडवः ॥६४॥ स्वदेहेनावृतं भीमं कृत्वा नागस्वरूपधृक् । पातयामास भूमौ तं बलेन बलवान्नृपः ॥६५॥ भीमेन तत्र

नादश्च कृतो मेघसमो महान् । तं श्रुत्वा धर्मराजः स ययौ भीमं महाबलम् ॥६६॥ सर्पेण वेष्टितं भीमं दृष्ट्वा दुःखसम-
न्वितम् । युधिष्ठिरं स तं तत्रोवाच नागो महाबलः ॥६७॥ नाग उवाच । अहं नहुषनामा ते नृपः पुत्र न संशयः । दर्शनार्थं
मया चाऽयं भीमः संजगृहेऽधुना ॥६८॥ अहं पृच्छामि राजंस्त्वां तद्वदस्व यथातथम् । तदा भीमं प्रमोक्ष्यामि सर्वज्ञस्त्वं
मतो यतः ॥६९॥ नहुषस्य वचः श्रुत्वा हर्षितः स युधिष्ठिरः । तमुवाच महाभागं स्ववंशवरभूषणम् ॥७०॥ युधिष्ठिर उवाच ।
वद नाग महाभाग मान्योऽसि त्वं महामते । संशयं छेदयिष्यामि प्रसादात्तव मानद ॥७१॥ नहुष उवाच । किं सत्यं किं
तथा राजन्नृतं धर्ममुत्तमम् । पापं बंधं च मोक्षं किं योगं ध्यानं वदस्व च ॥७२॥ किं कर्म किमकर्म त्वं किं विकर्म स्मृतं
भवेत् । किं ज्ञानं किं तपोमूलं दैवतं किं वदस्व मे ॥७३॥ किं सारं किमसारं च किं मान्यं च तथा नृप । अवमान्यं च सर्वेशं
किं वदस्व युधिष्ठिर ॥७४॥ एतान् वै वद मे वत्स तदा भीमं महामते । मोचयिष्यामि वेगेन गमिष्यामि यथेच्छया ॥७५॥
युधिष्ठिर उवाच। सत्यं ब्रह्म च विज्ञेयं जगद्वै ह्यनृतात्मकम् । धर्मः स्वधर्मरूपश्च जानीया राजसत्तम ॥७६॥ स्वधर्महीनं रूपं यत्
पापं सर्वैः प्रकीर्तितम् । अहं ममात्मको बंधो मोक्षस्ताभ्यां विवर्जितः ॥७७॥ योगश्चित्तस्य रोधो वै ध्यानं निर्विषयं
मनः । कर्म सत्कर्मरूपं वै ज्ञातव्यं विबुधैः सदा ॥७८॥ ब्रह्मार्पणात्मकं सर्वमकर्म कथितं किल । विकर्म पापाचरणं
सर्वशास्त्रैः प्रकाशितम् ॥७९॥ ज्ञानं ब्रह्माहमित्युक्तं तपो द्वंद्वसमात्मकम् । दैवतं सर्वपूज्यं वै गाणेशं विद्धि मानद ॥८०॥
देवस्य भजनं सारं नवधा सततं नृप। असारं विषयाणां वै भजनं नवधा स्मृतम् ॥८१॥ मान्यं संकथितं वेदैः
पुराणैः स्मृतिभिर्भवेत्। वेदाधारविहीनं यदवमान्यं मनीषिभिः ॥८२॥ सर्वेशं हृदि संस्थं वै विद्धि बुद्धिप्रचालकम्
सर्वं ते कथितं स्वामिन् मोचयस्वाऽनिलात्मजम् ॥८३॥ एतस्मिन्नंतरे तत्र विमानं सहसाऽऽगतम् । दिव्यभोगसमायुक्तं
तद्ददर्श युधिष्ठिरः ॥८४॥ मुमोच नहुषो भीमं तं तदा बंधनात् प्रभो । देहं त्यक्त्वा विमानस्थो ययौ स्वर्गं नराधिपः ॥८५॥
तत्रेंद्रस्य समीपे सोऽभवदर्धासनस्थितः । गणेशमभजन्नित्यं स नृपोऽनन्यचेतसा ॥८६॥ स्वर्गांते स गतो भूपः
शुक्लगत्या गजाननम् । विघ्नहीनः स्वभावेन पुण्यश्लोको बभूव ह ॥८७॥ नहुषस्य चरित्रं ते कथितं पापनाशनम् । शृणुयाद्वा
पठेद्वाऽपि तस्मै कामप्रदं भवत् ॥८८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते नहुषचरितं नाम त्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । नहुषस्याभवन् पुत्राः पंच देवसमा धिया । यभ्यातिश्च ययातिश्च तथा संयातिरायतिः ॥१॥ पंचमश्चाश्वको नाम ययातिर्भूमिपोऽभवत् । माहात्म्यं तस्य मुख्यं ते कथयामि प्रजापते ॥२॥ देवयानीमुशनसः स तां भार्यामवाप ह । वृषपर्वसुतां चैव शर्मिष्ठां राजसत्तमः ॥३॥ यदुं च तुर्वसं चैव देवयानी व्यजीजनत् । द्रुह्यं तद्वदनुं पूरुं शर्मिष्ठां वार्षपर्वणी ॥४॥ सोऽभ्यषिंचदतिक्रम्य ज्येष्ठान् पुत्रान् महामतिः । पूरुं कनिष्ठमेवं च पितुर्वाक्यपरायणम् ॥५॥ दक्ष उवाच । किमर्थं तेन भूपेन विपरीतं कृतं प्रभो । तत् सर्वं वद योगींद्र सादरेण शृणोम्यहम् ॥६॥ मुद्गल उवाच । वृषपर्वा प्रजानाथ दैत्यानामधिपः स्मृतः । तस्य पुत्री महाभागा शर्मिष्ठा मानिताऽभवत् ॥७॥ तत्र शुक्रस्य पुत्री या देवयानी प्रकीर्तिता । साऽपि पित्रा स्ववात्सल्यात् स्थापिता लालिता भृशम् ॥८॥ सखीभिरेकदा बाला संवृता राजकन्यका । शर्मिष्ठा वाटिकायां सा हर्षयुक्ता जगाम ह ॥९॥ देवयानी तथा तत्र क्रीडार्थं सा समागता । तत्र नानाविधां क्रीडां चक्रिरे कन्यकाः प्रभो ॥१०॥ ततस्ताः श्रमसंयुक्ता जग्मुः स्नानार्थमादरात् । तीरे क्षिप्त्वा स्ववस्त्राणि चिक्रीडुर्जलमध्यगाः ॥११॥ ततः सखीभिर्युक्ता सा शर्मिष्ठा निःसृता पुरः । संभ्रमेण तया वस्त्रं देवयान्या धृतं किल ॥१२॥ निःसृता देवयानी वै दृष्ट्वा कर्म जुगुप्सितम् । राजपुत्रीमुवाचाऽथ भर्त्सयंती प्रजापते ॥१३॥ ब्राह्मणस्य महादुष्टे पुत्र्यहं किं धृतानि वै । वस्त्राणि मे यथा पाकस्पर्शने च शुनी खले ॥१४॥ द्वारपा लोमतः शास्त्रे ब्राह्मणानां विशेषतः । राजन्यस्तस्य पुत्री त्वं न योग्याऽसि कदाचन ॥१५॥ एवं नानाविधैर्वाक्यैर्देवयानी च तां प्रभो । भर्त्सयामास सोवाच कुपिता तां पुनर्वचः ॥१६॥ शर्मिष्ठोवाच । किमात्मानं च दुष्टे त्वं कथ्यसे मम सन्निधौ । राजप्रसादसंसर्गाद्ब्राह्मणा मानिता बभुः ॥१७॥ अस्मदीयप्रसादेन वस्त्रान्नादिकमादरात् । भुक्त्वा मां स्पर्शसे दुष्टे बलिभुग्वायसी यथा ॥१८॥ एवं नानाविधैर्वाक्यैस्तां निर्भर्त्स्य प्रजापते । सखीभिर्देवयानीं सा कूपे चिक्षेप चासुरी ॥१९॥ ततः सा स्वगृहे क्रुद्धा प्रययौ दुःखिता भृशम् । देवयानी तथा कूपे संस्थिता जलवर्जिते ॥२०॥ दैवयोगेन तत्राऽसौ ययातिः स जगाम ह । एकाकी मृगयासक्तः कूपस्थां तां ददर्श ह ॥२१॥ ततोऽतिकरुणायुक्तो हस्तं दत्वा स्वदक्षिणम् । देवयानीं दधाराऽसौ तया हस्तो धृतस्तथा ॥२२॥ बहिर्निष्कास्य राजा सोऽभवद्गंतुं समुद्यतः । ततस्तं देवयानी सोवाच हर्षसमन्विता ॥२३॥ देवयान्युवाच । पाणेस्त्वया मे ग्रहणं कृतं सौम्य महामते । कोऽसि त्वं वद मां सर्वं वृत्तांतं ते यथायथम् ॥२४॥ तामुवाच महीपालः शृणु त्वं वरवर्णिनि ।

ययातिं विद्धि मां देवि नाहुषं क्षत्रवंशजम् ॥२५॥ मृगयाऽऽसक्तभावेन प्राप्तं ते दर्शनं महत् । गच्छ त्वं स्वगृहे बाले गमिष्यामि स्वमालयम् ॥२६॥ तमुवाच प्रजानाथं देवयानी प्रहर्षिता । काव्यपुत्रीं च मां विद्धि भव त्वं मे पतिः प्रभो ॥२७॥ हस्तस्य ग्रहणं ते वै विशेषेण कृतं मया । त्वदृते न वृणोम्यन्यमतस्त्वं मे पतिर्भव ॥२८॥ तस्यास्तद्वचनं श्रुत्वा ययातिस्तामुवाच ह । काव्यकन्यां कथं देवि वृणोमि क्षत्रवंशजः ॥२९॥ ततः सोवाच तं देवयानी शृणु वचो महत् । ब्राह्मणो मे न भर्ता च भविता कचशापतः ॥३०॥ अतस्त्वं भयहीनः सन् वृणु मां राजसत्तम । काव्यं संबोधयित्वाऽहं पत्नी ते प्रभवामि च ॥३१॥ तथेति नृपवर्योऽसौ तां जगाद तथा ययौ । नगरं स महाभागः सा च तत्र स्थिताऽभवत् ॥३२॥ तत्राऽऽगतं नरं कंचित्तमुवाच वद प्रभुम् । काव्यमत्र स्थिता पुत्री देवयानी महामते ॥३३॥ ततस्तेन मुनींद्रोऽसौ बोधितः शृणु मे वचः । वने ते देवयानी सा पुत्री वत्सल संस्थिता ॥३४॥ शुक्रस्तां प्रययौ शीघ्रं तमुवाच सुविह्वला । रुदती देवयानी सा वृत्तांतं सर्वमंजसा ॥३५॥ तं श्रुत्वा कुपितः काव्यस्त्यक्त्वा दैत्यं स निर्ययौ । वनवासार्थमानंदादूहयन् वृत्तिमुल्बणाम् ॥३६॥ ततो दैत्याधिपः श्रुत्वा वृत्तांतं विह्वलो भृशम् । तं ययौ धावमानः स प्रणनाम महामुनिम् ॥३७॥ उवाच भक्तिसंयुक्तं वचनं दैत्यनायकः । त्वदाधारमिदं राज्यं देहोऽयं मे तथा मुने ॥३८॥ मुनिसत्तम मां त्यक्त्वा कुत्र गंतुं त्वमिच्छसि । राज्यादिकं परित्यज्य याम्यहं ते प्रसन्निधौ ॥३९॥ तस्य तद्वचनं श्रुत्वा काव्यः पुत्रीमुवाच ह । चल त्वं राजकन्याया अपराधं क्षमस्व च ॥४०॥ देवयानी मुनिं तत्रोवाच क्रोधसमन्विता । नाऽहं यामि पितः पुर्यां देहत्यागं करोमि वै ॥४१॥ ततः पुत्रीं स्वयं काव्य ऊचे तां शोकसंकुलः । किमिच्छसि वद त्वं म उपायं तं करोम्यहम् ॥४२॥ ततस्तं देवयानी सोवाच क्रोधसमन्विता । सखीभिः सहिता दासी शर्मिष्ठा मे भवेद्यदि ॥४३॥ यत्र दास्यसि मां तात तत्रेयं सहगा भवेत् । तदाहं नगरे यामि हृष्टा दैत्याधिपस्य च ॥४४॥ उवाच काव्यो दैत्येशं तं पुत्रीवत्सलस्ततः । तथेति दैत्यराजः स गृहे काव्यं समानयत् ॥४५॥ काव्येन नाहुषायैव दत्ता पुत्री विधानतः । तत्र दासी स्वभावेन शर्मिष्ठा प्रययौ विधे ॥४६॥ कदाचित्तत्र शर्मिष्ठाऽभवदृतुयुता स्वयम् । राजानं वाटिकामध्ये उवाच विनयान्विता ॥४७॥ सख्या मे देवयान्या त्वं महीपाल वृतो यदा । पतिस्तदा मया नाथ त्वमेव मनसा वृतः ॥४८॥ ऋतुयुक्तां स्त्रियं स्वामिन् भज त्वं भक्तिसंयुताम् । तथेति नाहुषेणैव वृता सा गुप्तभावतः ॥४९॥ देवयान्या चरित्रं न तस्या ज्ञातं प्रजापते ।

गर्भयुक्तां विदित्वा तां सा पप्रच्छ मुनेः सुता ॥५०॥ कस्य वीर्यं त्वया देवि धृतं मे वद चाधुना । लाञ्छनं दैत्यराजस्य प्राप्तं किं दैवयोगतः ॥५१॥ शर्मिष्ठा तां जगादाऽथ न कृतं लाञ्छनं मया । ब्राह्मणस्य महद्वीर्यं गृहीतं गुप्ततः सखि ॥५२॥ तस्यां पुत्राः समुत्पन्नास्त्रयो देवसमा बभुः । राज्ञा संमानिता नित्यं वाटिकायां विशेषतः ॥५३॥ कदाचिद्देवयानी सा वाटिकायां जगाम ह । तत्र पुत्रा ययातिं तं पितरं प्राहुरादरात् ॥५४॥ तच्छ्रुत्वा क्षुभिताऽत्यंतं देवयानी गृहं ययौ । पितुस्तां सांत्वयामास ययातिर्विनयान्वितः ॥५५॥ न शशाक स राजर्षिस्तां स्वगेहे भयाकुलः । आनेतुं सा तथा काव्यं जगाद रुदती भृशम् ॥५६॥ शुक्रेण शापितो राजा जरायुक्तो बभूव सः । गत्वा चोशनसं तत्रोवाच शोकसमाकुलः ॥५७॥ नाऽहं श्वशुर तृप्तोऽस्मि कामभोगेभ्य एव च । जराघ्नं मे वदोपायं तं करिष्यामि यत्नतः ॥५८॥ देवयानीं विनाऽन्यां स्त्रीं न स्पृशामि कदाचन । ततस्तमुशनाः प्रीत उवाच वचनं हितम् ॥५९॥ तव पुत्रा महाभाग यौवनास्था भवंति ये । जरां तत्र विनिक्षिप्य गृहाण नृप यौवनम् ॥६०॥ त्वदाज्ञया जरां पुत्रो ग्रहीष्यति कुरुष्व तम् । राजानं मुख्यभावं त्वं न दोषस्तत्र ते भवेत् ॥६१॥ तथेति देवयानीं संगृह्य स्वनगरं ययौ । ज्येष्ठान् पुत्रान् ययाचे स राजर्षिर्यौवनं ततः ॥६२॥ न जरां जगृहुस्तस्य सर्वे ते मूर्खभावतः । ततः पूरुं स राजर्षिर्ययाचे स ददौ किल ॥६३॥ शुक्रस्य वरदानेन दोषः पूरोर्न तस्य वै । भुक्त्वा भोगाननेकान् स ययातिस्तोषितोऽभवत् ॥६४॥ यज्ञान् कृत्वा महाभागः सांगान् सर्वान् विशेषतः । तीर्थादीनि जगामाऽसौ नानारूपाणि भावतः ॥६५॥ सर्वं कोशगतं द्रव्यं भूषणादिकमादरात् । ददौ स ब्राह्मणेभ्यश्च दानशीलोऽभवत्तथा ॥६६॥ मृत्पात्रैर्गृहकार्येषु चरंतं गालवो मुनिः । तमाययौ ययाचे वै राजानं खेदसंयुतः ॥६७॥ गुरोश्च दक्षिणार्थं मे देह्यश्वान् श्यामकर्णकान् । सहस्रसंख्यायुक्तांस्त्वं श्रेष्ठः सकलभूभुजाम् ॥६८॥ माधवीं स्वां ददौ तस्मै ततः कन्यां महीपतिः । तया तस्य मुनेः कार्यं कृतं सर्वं प्रजापते ॥६९॥ ततः स राजशार्दूलो जरां संगृह्य यौवनम् । पूरवेऽदात् पुनः सद्यस्तं चकार नराधिपम् ॥७०॥ दिशि दक्षिणपूर्वस्यां तुर्वसुं पुत्रमादिशत् । दक्षिणापश्चिमायां स यदुं ज्येष्ठं न्ययोजयत् ॥७१॥ प्रतीच्यामुत्तरायां स द्रुह्युं चानुमयोऽजयत् । तैरियं पृथिवी सर्वा धर्मतः परिपालिता ॥७२॥ सर्वत्र सार्वभौमेन पूरुस्तत्र रराज च । धर्मयुक्तो विनीतात्मा सत्यसंधः प्रतापवान् ॥७३॥ ततो वनं ययौ राजा तताप तप उत्तमम् । अंते जगाम स्वर्गं स नानाभोगप्रदं परम् ॥७४॥ तत्र सर्वानतिक्रम्य बुभुजे भोगमुत्तमम् । न मत्समश्च स्वर्गेषु पुण्यभोगकरः

परः ॥७५॥ इति गर्वेण संयुक्तमिंद्रस्तं प्रजगाद सः । त्वया राजन् महत्पुण्यं कीदृशं प्रकृतं वद ॥७६॥ उवाच नरशार्दूलः ततस्तं मोहसंयुतः । न संख्या विद्यते देव मम पुण्यस्य देवप ॥७७॥ स्वर्गेषु ये स्थिता देवाः पुण्यकर्मकरा इमे । न मे कलां च पुण्यस्य लभंते देवनायक ॥७८॥ तस्य तद्वचनं श्रुत्वा तमिंद्रः प्रत्युवाच ह । न जानासि महाराज एषां पुण्यप्रभावकम् ॥७९॥ सर्वानिमांस्तिरस्कृत्य त्वं प्रमोहसमन्वितः । स्वप्रशंसां तथाऽपारं पुण्यं वदसि चाऽद्य माम् ॥८०॥ तेन ते पुण्यमुग्रं तत् सर्वं नष्टं नराधिप । प्रपत त्वं महीपृष्ठे पुनः पुण्यं समाचर ॥८१॥ ततः पपात भूपृष्ठे ययातिर्दुःख-संयुतः । तं पतंतं च दौहित्रा ददृशुः शिबिमुख्यकाः ॥८२॥ मातामहं च विज्ञाय ददुः पुण्यं पुनः स्वकम् । तेन स्वर्गस्थितो राजा मुमुदे देववत् स्वयम् ॥८३॥ ततस्तं नारदो योगी जगाद करुणायुतः । त्वया विघ्नो महाराज प्राप्तः पुण्यविनाशकृत् ॥८४॥ विघ्नेशं भज राजंस्त्वमंते स्वानंदगस्ततः । भविष्यसि न संदेहो नोचेद्भूमौ पतिष्यसि ॥८५॥ ततस्तेन गणेशस्य मंत्रो दत्तो दशाक्षरः । तं जजाप ययातिश्च गणेशध्यानतत्परः ॥८६॥ पुण्यक्षये स राजेंद्रः शुक्लगत्या प्रजापते । गणेशं प्रययौ भक्त्या गाणपत्यो महायशाः ॥८७॥ ययातेश्चरितं पुण्यं संक्षेपेण निरूपितम् । शृण्वते कामदं पूर्णं भविष्यति न संशयः ॥८८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते ययातिचरितं नामैकत्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । यदोरप्यभवन् पुत्राश्चत्वारो देवसन्निभाः । सहस्त्रजित्तथा ज्येष्ठस्तस्य पुत्रो बभूव ह ॥१॥ शतजिन्नाम विख्यातस्तस्य पुत्रास्त्रयोऽभवन् । हिहयश्च हयश्चैव वपुर्हय उदाहृतः ॥२॥ हिहयस्याऽभवत् पुत्रो धर्म इत्यभिविश्रुतः । तस्य नेत्रस्तस्य कुंतिः सोहंजिस्तत्सुतः स्मृतः ॥३॥ सो हंजेरभवत् पुत्रो महिष्मान्नाम पार्थिवः । माहिष्मती च नगरी वासिता येन भूभुजा ॥४॥ तस्य पुत्रो भद्रसेनो दुर्मदस्तत्सुतः स्मृतः । धनकश्चाऽपरो धीमान् मुख्योऽभूत्तत्र पार्थिवः ॥५॥ धनकादभवन् पुत्राश्चत्वारो लोकविश्रुताः । कृतवीर्यः कृताग्निश्च कृतवर्मा ततः स्मृतः ॥६॥ कृतौजाश्च तथा दक्ष तत्र ज्येष्ठः प्रतापवान् । बभूव दानशीलश्च कृतवीर्यो महीपतिः ॥७॥ तेन वै पृथिवीमध्ये चतुर्थी कृष्णगाऽपरा ।

प्रकाशिता प्रजापाल स्वर्गात् सर्वशुभप्रदा ॥८॥ दक्ष उवाच । कथं तेन नृपालेन चतुर्थी भूमिमंडले । समानीता महायोगिन् वद तस्य चरित्रकम् ॥९॥ श्रुत्वा कथामृतं स्वामिन् हर्षश्चेतसि वर्धते । अतो विस्तरभावेन कथयस्व कथानकम् ॥१०॥ मुद्गल उवाच । माहिष्मत्यां महापुर्यां भीमनामाऽभवत् पुरा । अंत्यजो द्रव्यलुब्धश्च पापकर्मपरायणः ॥११॥ स तु मार्गे जनान् वीक्ष्याऽमारयत्तान् दिने दिने । मांसविक्रयकारी च पशून् हत्वा निरंतरम् ॥१२॥ एकदा माघमासस्य चतुर्थी कृष्णपक्षगा । समागता च तत्राऽसौ विचचार वनांतरे ॥१३॥ महापर्वतदेशे स जनानां प्रवधाय च । दैवयोगेन तस्याऽपि मिलितं नैव किंचन ॥१४॥ अयं बभ्रामान्नजलविहीनो लोभसंयुतः । मिलितं तत्र नो किंचित्तथाभूतश्चचार ह ॥१५॥ ततोऽस्तमगमत् सूर्यस्तं दृष्ट्वा स्वगृहे मतिम् । गमनाय तथा चक्रे मार्गसंस्थो बभूव ह ॥१६॥ मार्गे दुष्टो द्विजास्तत्र दृष्ट्वा द्वादशसंख्यकान् । तान् हत्वा स तदीयं वै गृहीत्वा स्वगृहं ययौ ॥१७॥ चंद्रोदये ततः प्राप्ते बुभुजे भोजनाकुलः । पुत्रं गणेशनामानमाह्वयामास तेन सः ॥१८॥ पुनश्चकार तद्वत् स कदाचित् पापमुल्बणम् । कृष्णपक्षे चतुर्थ्यां च स ममारोदये विधोः ॥१९॥ गणेशदूतास्तं तत्र समानेतुं समाययुः । कैलासे गणपस्थाने निन्युस्तं ते विमानगम् ॥२०॥ स्वर्गमार्गेषु देवैश्च ब्रह्मविष्णवादिभिस्तुतः । विमानगैः स्तूयमानः प्रविवेश शिवास्पदम् ॥२१॥ तत्र भुक्त्वा प्रभोगान् स पपात पृथिवीतले । माहिष्मत्यां सुतो जज्ञे धनकस्य महाबलः ॥२२॥ कृतवीर्य इति ख्यातो नानाधर्मपरायणः । देवविप्रातिथिप्रेप्सुर्बभूवे यज्ञकारकः ॥२३॥ अपुत्रः स्माऽभवद्राजा कृतवीर्यः प्रतापवान् । पुत्रार्थं यतते स्मातिनानाधर्मपरायणः ॥२४॥ न लेभे संततिं राजा ततोऽसौ दुःखसंयुतः । प्रधानेषु समाक्षिप्य राज्यं निहतकंटकम् ॥२५॥ सपत्नीको वनं राजा ययौ तपसि संस्थितः । पूर्वसंस्कारयोगेन गणेशे प्रीतिमानभूत् ॥२६॥ नानातपश्चकाराऽसौ संततिं न तथाऽपि च । लेभे नृपः प्रजानाथ नेत्रप्राणावशेषितः ॥२७॥ अस्थित्वचासमायुक्तं दृष्ट्वा तं नारदो मुनिः । स्वर्गस्थं धनकं तत्र वृत्तांतमवदन्नृपम् ॥२८॥ तव पुत्रो वने संस्थः पुत्रार्थं यतते नृप । नानायत्नसमायुक्तोऽस्थित्वचाप्रयुतोऽस्ति वै ॥२९॥ न लेभे संततिं राजा स्वल्पकाले मरिष्यति । पुत्रहीनस्य भो राजन् का गतिः प्रभवेद्वद ॥३०॥ इत्युक्त्वा तं मुनींद्रः स ययौ कैलासमादरात् । धनको मनसाऽत्यंतं विचारमकरोत्ततः ॥३१॥ ब्रह्माणं शरणं यामि सर्वज्ञं तेन चेप्सितम् । भविष्यति न संदेहस्ततः सोऽपि ययौ विधिम् ॥३२॥ प्रणिपत्य प्रतुष्टाव नानास्तोत्रैः प्रजापतिम् । उवाच तं महाभागं विनयेन समन्वितः ॥३३॥ धनक उवाच ।

धर्मशीलश्च मे पुत्रः पुत्रहीनो बभूव हि। पुत्रार्थं यतते ब्रह्मन्नानाव्रतपरायणः ॥३४॥ राज्यादिकं समुत्सृज्य वने तपति संस्थितः। तपस्तेनाऽवशेषोऽसावस्थिचर्मवृतो बभौ ॥३५॥ केनोपायेन पुत्रश्च भविता तं वदस्व मे। प्रापयिष्याम्यहं तत्र स्ववंशस्य विवृद्धये ॥३६॥ ततस्तं प्रत्युवाचेदं वचनं चतुराननः। पूर्वजन्मनि संभूतं द्विजहत्यायुतं व्रतम् ॥३७॥ पुनः प्रोवाच तं देवो विधिः सर्वार्थकोविदः। पुत्रप्राप्त्यर्थमेवैकमुपायं सर्वसिद्धिदम् ॥३८॥ अज्ञानेन व्रतं तेन कृतं संकष्ट-हारकम्। चतुर्थीप्रभवं तेन पापं सर्वं लयं गतम् ॥३९॥ महापापानि नश्यंति संकष्टीव्रतसाधनात्। संकष्टीव्रतसंबंधिदिवसे यत् कृतं भवेत् ॥४०॥ तदेवाक्षयभावेन तिष्ठत्यत्र न संशयः। चतुर्थ्यां भूप कृष्णायां पुण्यमेव समाचरेत् ॥४१॥ तव पुत्रेण राजेंद्र द्वादश ब्राह्मणा हताः। चतुर्थ्यां पूर्वजन्मस्थेन पापं तत्स्थितं महत् ॥४२॥ नानातपःप्रभावेण व्रततीर्थादिकेन च। यज्ञादिभिश्च तत्पापं लयं नैव गमिष्यति ॥४३॥ संकष्ट्यां यत्कृतं पापं वज्रलेपं च तत्स्मृतम्। तत्र कश्चिदुपायो न तथाऽपि श्रृणु मे वचः ॥४४॥ येन संकष्टिका पुण्या चतुर्थी साधिता नृप। तस्य जन्मादिकं नैव भविष्यति कदा पुनः ॥४५॥ चतुर्विधं प्रजानीहि सर्वं मायामयं जगत्। संकष्टं चैव जीवानां तेन युक्ता भ्रमंति ते ॥४६॥ चतुर्थी गणनाथस्य संकष्टी साधिता यदा। चतुर्विधं तस्य कष्टं न भवेद्वै कदाचन ॥४७॥ ब्रह्मणि ब्रह्मभूतोऽसौ स्वानंदे वर्तते नरः। व्रतस्यैव प्रभावेणेहलोके सुखमाप्नुयात् ॥४८॥ चतुर्थ्यां पापकारा ये तेषां मुक्तिर्न विद्यते। पापयुक्ततया राजन् स्वर्गस्थास्ते भवंति च ॥४९॥ पुनर्जन्मधरा भूमौ तत्र पापफलं स्वकम्। भुंजंति च पुनः सर्वे गाणपत्या भवंति ते ॥५०॥ अतो गणेशदूतैः स कैलासे स्थापितोऽन्त्यजः। पापभोगार्थमेवं च तव पुत्रोऽधुनाऽभवत् ॥५१॥ चतुर्थ्यां यत्कृतं पापं चतुर्थी हंति तत् सदा। तदर्थं ते सुतो राजंश्चतुर्थीमाचरिष्यति ॥५२॥ तदा पापविहीनोऽयं भविता नात्र संशयः। पुत्रयुक्तश्च ते पुत्रो भविष्यति महामते ॥५३॥ अपराधयुतं कर्म कृतं नाशार्थमादरात्। तस्य पुण्यं प्रकर्तव्यं दुरितं तेन नश्यति ॥५४॥ चतुर्थी महिमाऽनंतो भूतं यदपि तद्दिने। पापं क्रोधसमायुक्ता महाकृच्छ्रेण हंति सा ॥५५॥ अतस्तत्पापनाशार्थं संकष्टीर्द्वादशाऽऽचरेत्। तदा द्वादशविप्रांतभवं पापं गमिष्यति ॥५६॥ ततस्तं करुणायुक्तः स विधिं व्रतमादरात्। कथयामास वै ब्रह्मा ययौ राजा प्रणम्य तम् ॥५७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते धनकस्य व्रतोपदेशो नाम द्वात्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । व्रतं लब्ध्वा पुस्तकं संलिख्य संगृह्य मायया । धनकः कृतवीर्यस्य स्वप्ने सद्यो जगाम ह ॥१॥ धनकं पितरं दृष्ट्वा कृतवीर्यो ननाम तम् । पुत्रं राजा समादायोत्संगे स्वस्य जगाद तम् ॥२॥ धनक उवाच । पुत्र नानाविधा यत्ना विशेषेण कृतास्त्वया । पुत्रार्थमधुनैकं त्वं व्रतं कुरु ममाज्ञया ॥३॥ तेन पुण्येन पुत्रस्ते भविता नात्र संशयः । ब्रह्मणा कथितं मे यत् पुस्तकं तद् गृहाण ह ॥४॥ इत्युक्त्वा पुत्रहस्ते तद्दत्वा पुस्तकमादरात् । अंतर्धानं ययौ राजा जजागार नृपात्मजः ॥५॥ पुस्तकं हस्तगं दृष्ट्वा विस्मितोऽभूत् प्रहर्षितः । पितरं दुःखितो भूत्वा सस्मार स रुरोद वै ॥६॥ सपत्नीकस्ततो राजा कृतवीर्यो जगाम ह । स्वपुरं मानितस्तत्र प्रधानादिभिरादरात् ॥७॥ ततः स ब्राह्मणान् राजा समाकार्य ननाम तान् । पुस्तकं दर्शयामास तस्यार्थं ब्राह्मणा जगुः ॥८॥ अहो राजन् महाभाग पुस्तके व्रतमुत्तमम् । लिखितं सर्वसंकष्टहारकं सर्वदं परम् ॥९॥ कृष्णपक्षे चतुर्थ्यां वै चंद्रोदयसमागमे । पूजनीयो विशेषेण गणेशः सिद्धिदायकः ॥१०॥ पूजयित्वा गणाधीशं ततोऽर्घ्यं तिथये नृप । गणेशाय च चंद्राय दातव्यं व्रतकारिणा ॥११॥ सूर्योदयात् समारभ्य गणेशस्मरणं नृप । कर्तव्यं वर्जयेत्तत्र जलपानादिकं तथा ॥१२॥ चंद्रायाऽर्घ्यं तथा दत्वा सप्तवारं नृपोत्तम । ब्राह्मणांस्तत आपूज्य सपत्नीकान्नमेत् स तान् ॥१३॥ भोजयेत् परमान्नेन मोदकादिभिरादरात् । पायसेनाऽपि सितया युतेन मधुरेण च ॥१४॥ ततः स्वयं सुहृद्भिश्च भोजनं वै समाचरेत् । दानं दद्यात् स विप्रेभ्यो योषिद्भ्यः कंचुकादिकम् ॥१५॥ ततो जागरणं कार्यं गणेशस्तवनेन च । प्रभाते विमले स्नात्वा पूर्ववत् पूजयेद्विभुम् ॥१६॥ गणेशं च ततो विप्रान् भोजयेत् पूर्ववन्नृप । दक्षिणां विपुलां तेभ्यो दापयेत्तान्नमेत्ततः ॥१७॥ मासे मासे प्रकुर्यास्त्वं व्रतं गाणेश्वरं त्विदम् । सर्वसंकटहीनः सन्नंते स्वानंदगो भवेः ॥१८॥ अपारमहिमायुक्तं व्रतं प्राप्तं त्वया नृप । त्वदीयसंगयोगेन जनेभ्यः सिद्धिदं भवेत् ॥१९॥ न श्रुतं नैव दृष्टं च व्रतं केनाऽपि भूमिप । लोकानामुपकाराय भविष्यति विशेषतः ॥२०॥ चतुर्विधं जगत्सर्वं संकष्टकरमुच्यते । तस्माद्धनाशार्थं व्रतं चेदं भविष्यति ॥२१॥ इह भुक्त्वाऽखिलान् भोगान् दुर्लभान् देवभोग्यकान् । अंते मुक्तिमवाप्नोति व्रतस्यास्य प्रभावतः ॥२२॥ एवमुक्त्वा द्विजाः सर्वे गताः स्वस्वाश्रमे तदा । कृतवीर्यस्तथा राजा चकार व्रतमुत्तमम् ॥२३॥ सूत उवाच । मुद्गलस्य वचः श्रुत्वा हृष्टरोमा प्रजापतिः । जगाद तं पुनर्वाक्यं संशयच्छेदनाय सः ॥२४॥ दक्ष उवाच । कृतवीर्यात् समारभ्य व्रतं भूम्यां समागतम् । महामुने भीमनाम्नांऽत्यजेनैव कृतं कथम् ॥२५॥ चतुर्थीव्रतपुण्येन स एव

कृतवीर्यकः । बभूव वर्णितं विप्र त्वया संशयदायकम् ॥२६॥ अतः संशयनाशार्थं वद मुद्गल मे वचः । सर्वज्ञस्त्वं न संदेहः साक्षाद्योगीश्वरो महान् ॥२७॥ मुद्गल उवाच । प्रजापते शृणु ह्यत्र वचनं मे महामते । येन ते संशयो नाशं गमिष्यति न संशयः ॥२८॥ व्रतं गाणेश्वरं दक्ष चतुर्थीसंज्ञकं परम् । संकष्टहरणं प्रोक्तं तज्जानीहि पुरातनम् ॥२९॥ पृथिव्यां स्वर्गलोके तत् पाताले सर्वसंमतम् । चतुर्थी च समुत्पन्ना तदारभ्य प्रतिष्ठितम् ॥३०॥ जनास्तन्नैव जानंति पृथिव्यां कुत्रचित् प्रभो । कृतवीर्याच्च सर्वत्र प्रकाशमगमद्भुतम् ॥३१॥ एत्तते सर्वमाख्यातं शृणु तस्य कथानकम् । कृतवीर्यस्य भूपस्य पुण्यदं शृण्वते भवेत् ॥३२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते कृतवीर्यव्रतप्राप्तिवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । वर्षमात्रव्रतेनैव गतं पापं लयं महत् । द्वादशब्रह्महत्याख्यं ततो राजा बभौ विधे ॥१॥ व्रतपुण्यप्रभावेण ससत्त्वाऽभून्नृपांगना । सुषुवे शुभवेलायां पुत्रं तेजस्विनां वरम् ॥२॥ हस्तपादविहीनं तं दृष्ट्वा माता रुरोद ह । कृतवीर्यस्तथा सर्वैः प्रधानैः बोधितोऽभवत् ॥३॥ त्यक्त्वा शोकं स्वयं राजा जातकर्म चकार वै । महोत्सवयुतैः सर्वैर्नगरे संस्थितोऽभवत् ॥४॥ रात्रौ स्वप्ने ददर्शाऽसौ दत्तात्रेयं च योगिनम् । तेन यत् कथितं स्वप्ने तच्छृणुष्व प्रजापते ॥५॥ गते द्वादशवर्षे तु त्वत्पुत्रस्य नृपोत्तम । आगमिष्यामि ते गेहं सांगं पुत्रं करोम्यहम् ॥६॥ मा चिंतां कुरु राजेंद्र गणनाथप्रसादजः । पुत्रोऽयं ते सुतेजस्वी देवमान्यो भविष्यति ॥७॥ ततः सोऽतर्दधे योगी दत्तात्रेयस्तथा नृपः । प्रबुद्धो हर्षयुक्तः स बभूव गणपं स्मरन् ॥८॥ ततस्तेन पृथिव्यां तु घोषः सर्वत्र कारितः । चतुर्थ्यां कृष्णपक्षस्य व्रतं कार्यं जनैः सदा ॥९॥ येन व्रतमिदं नैव कृतं चेत्तं निहन्म्यहम् । चांडालादिद्विजांतास्ते व्रतं चक्रुर्विशेषतः ॥१०॥ अष्टवर्षसमायुक्ता नरा नार्यः स्म मानद । अकुर्वन् विधिवत् सर्वे व्रतं गाणेश्वरं महत् ॥११॥ तस्य राज्ये नरः कोऽपि दुःखयुक्तो बभूव न । न वंध्यादि भयं तद्वद्रोगादिकभयं नहि ॥१२॥ ततो द्वादशवर्षेषु गतेषु स जगाम ह । दत्तो योगींद्रसेव्यश्च तं ननाम नराधिपः ॥१३॥ पूजितो भोजितस्तेन वचो दत्तस्तमब्रवीत् । पुत्रं दर्शय ते राजन्नद्भुतं द्रष्टुमागतः ॥१४॥

ततः स हर्षितो राजा ददौ पुत्रं च तत्करे । अंके संगृह्य योगींद्रो राजानं प्रत्युवाच ह ॥१५॥ राजन् व्रतं त्वया तत्रांगहीनत्वमजानता । कृतं तु तेन ते पुत्रोंऽगहीनः प्रबभूव ह ॥१६॥ व्रतस्य जागरे राजन् जृंभितं च पुनः पुनः । त्वया नाचमनं तत्र कृतं तेनायमीदृशः ॥१७॥ व्रतस्याऽयं प्रभावेण विष्णुः साक्षान्नराकृतिः । पुत्रोऽभवत्तदंशेन विख्यातः प्रभविष्यति ॥१८॥ तत एकाक्षरं मंत्रं ददौ तस्मै महामुनिः । विधियुक्तं गणेशस्य कार्तवीर्याय धीमते ॥१९॥ अनुष्ठानं समादिश्य द्वादशाब्दमयं प्रभुः । अंतर्धानं चकाराऽसौ राजा संहर्षितोऽभवत् ॥२०॥ प्रवालक्षेत्रसान्निध्ये वने व्याघ्रादिसंयुते । राजा बभूव संस्थाप्य जनैः पुत्रं च दुःखितः ॥२१॥ ततश्च कार्तवीर्येण तपस्तप्तं सुदारुणम् । वायुमात्राशनेनैव ध्यात्वा हृदि गजाननम् ॥२२॥ मंत्रं जजाप भो दक्ष हस्तपादविवर्जितः । देहभावमतिक्रम्य संस्थितः काष्ठवद्भुवौ ॥२३॥ तपःप्रभावतस्तस्य वने निर्वैरभावतः । प्राणिनः संचरंति स्म गजसिंहादयः सदा ॥२४॥ एवं द्वादशवर्षाणि गतानि तपसो यदा । तदा तत्राऽऽययौ ढुंढिर्भक्तं परमभाविकम् ॥२५॥ तडागमध्यभागात्तं निःसृतं गणपं नृपः । दृष्ट्वा ननाम विघ्नेशं पूजयन् भक्तिसंयुतः ॥२६॥ हर्षेण महता युक्तस्तं तुष्टाव गजाननम् । सरोमांचो महावीरः कार्तवीर्यो महायशाः ॥२७॥

कार्तवीर्य उवाच । नमस्ते गणनाथाय विघ्नेशाय नमो नमः । विनायकाय देवेश सर्वेषां पतये नमः ॥२८॥ निर्गुणाय परेशाय परात्परतराय वै । अनादये च सर्वादिपूज्याय तु नमो नमः ॥२९॥ सर्वपूज्याय हेरंब दीनपालाय ते नमः । ब्रह्मणे ब्रह्मणां चैव ब्रह्मदात्रे नमो नमः ॥३०॥ निराकाराय साकाररूपाय परमात्मने । योगाय योगदात्रे ते शांतिरूपाय वै नमः ॥३१॥ सदा ज्ञानघनायैव कर्ममार्गप्रवर्तिने । आनंदाय सदानंदकंदरूपाय ते नमः ॥३२॥ रजसा सृष्टिकर्त्रे ते सत्त्वतः पालकाय च । तामसेन प्रसंहर्त्रे गुणेशाय नमो नमः ॥३३॥ नानामायाधरायैव नानामायाविवर्जित । मायिभ्यो मोहदात्रे वै मायामायिक ते नमः ॥३४॥ स्वानंदपतये तुभ्यं सिद्धिबुद्धिवराय च । सिद्धिबुद्धिप्रदात्रे च लंबोदर नमोऽस्तु ते ॥३५॥ किं स्तौमि गणनाथ त्वां यत्र वेदा विसिस्मिरे । शिवविष्णवादयश्चैव योगिनो योगरूपिणम् ॥३६॥ जगाद गणनाथस्तु ततस्तं भक्तमुत्तमम् । वरं वृणु महाभाग कार्तवीर्य हृदीप्सितम् ॥३७॥ त्वया कृतं मदीयं यत् स्तोत्रं सर्वप्रदं भवेत् । अंगहीनस्य सर्वस्य स्वंगदं प्रभविष्यति ॥३८॥ कृत्वा भावेन मत्पूजां नरः स्तोत्रमिदं पठेत् । तस्य सांगं सदा सर्वं करोमि स्तोत्रपाठतः ॥३९॥ इह भुक्त्वाऽखिलान् भोगान् पुत्रपौत्रादिसंयुतः । अंते स्वानंदगो भूत्वा ब्रह्मभूतो

भविष्यति ॥४०॥ ततस्तं कार्तवीर्यश्च जगाद गणनायकम् । हर्षयुक्तो महाभक्तो भक्तेशं भक्तवत्सलम् ॥४१॥ कार्तवीर्य उवाच । किं वृणोमि गणाधीश सर्वं मायामयं विभो । तव दर्शनमात्रेण मया ज्ञातं न संशयः ॥४२॥ सुहृदां तदपि स्वामिन् संतोषार्थं वृणोम्यहम् । शरीरे चारुतां देहि भक्तिं त्वच्चरणे प्रभो ॥४३॥ यद्यदिच्छामि तत्तच्च सुलभं मे गजानन । भवतु त्वत्प्रसादेन राज्यं पूर्णं प्रदेहि च ॥४४॥ अस्मिन् क्षेत्रे स्थिरो भूत्वा भक्तान् पालय विघ्नप । धर्मार्थकाममोक्षादि ब्रह्मभूयप्रदं कुरु ॥४५॥ प्रवालमयरूपेण मया दृष्टो गजाननः । प्रवालक्षेत्रमित्युक्तं नाम्ना भवतु नित्यदा ॥४६॥ सदा विजयसंयुक्तं सहस्रभुजसंयुतम् । मां कुरुष्व दयासिंधो विष्णुतुल्यपराक्रमम् ॥४७॥ मदीयसेवनं देव देववच्च सदा भवेत् । मंत्रादिकं च मे नाथ भवतु त्वप्रसादतः ॥४८॥ मदीयस्मरणेनैव गतं प्राप्तं कुरु प्रभो । न मत्समस्त्रिलोकेषु सेंद्रादिषु भवेत्किल ॥४९॥ ततस्तं गणनाथः स तथेति प्रत्युवाच ह । सर्वं ते भविता राजन् मत्प्रसादान्न संशयः ॥५०॥ मदीयस्मरणेनैव मंत्रादीनां प्रसेवया । निर्विघ्नं ते च राजेंद्र भविष्यति निरंतरम् ॥५१॥ एवमुक्त्वा गणेशस्तमंतर्धानं जगाम ह । ततस्तस्य प्रजानाथ देहः सांगो बभूव ह ॥५२॥ सहस्रभुजसंयुक्तो बभूव पदसंयुतः । महाबलो महावीर्यस्तेजसा संयुतोऽभवत् ॥५३॥ तत्र देवादयो जग्मुर्दर्शनार्थं नृपस्य च । साक्षाद् विष्णुः कलांशेन कार्तवीर्यो बभौ तदा ॥५४॥ ततस्तेन द्विजैः सार्धं स्थापिता मूर्तिरादरात् । गणेश्वरस्य तां राजाऽपूजयत् भक्तिसंयुतः ॥५५॥ पूजार्थं ब्राह्मणांस्तत्र स्थापयामास भूमिपः । ततो देवान् द्विजांस्तत्राऽपूजयत् स यथाविधि ॥५६॥ ननाम भक्तियुक्तस्तांस्तेऽपि तस्मै वरान् ददुः । हर्षिताश्च पुनः स्वर्गं जग्मुर्देवाः सवासवाः ॥५७॥ कार्तवीर्यो रथस्थः स ययौ स्वनगरं ततः । दूतैर्ज्ञात्वा च वृत्तांतं तं ययुः सर्वनागराः ॥५८॥ प्रधानाश्च प्रणम्यैनं सुहृद्भिरभिनंदितम् । अलंकृते पुरे सर्वे वेशयामासुरादरात् ॥५९॥ ननाम मातरं सोऽपि पितरं हर्षसंयुतः । ताभ्यामाशीर्भिरत्यंतं मुदितश्च कृतो बभौ ॥६०॥ ततः कियति काले संस्थाप्य पुत्रं यशस्विनम् । स्वराज्ये कृतवीर्यश्च सस्त्रीकः प्रययौ वनम् ॥६१॥ राजा गणपतिं तत्राऽभजत् सोऽनन्यचेतसा । स्वल्पकालेन सस्त्रीकः सोऽपि तं गणपं ययौ ॥६२॥ तस्य राज्ये जनाः सर्वे संकष्टीव्रतकारकाः । क्रमेण गणनाथं ते ययुर्दक्ष प्रजापते ॥६३॥ इदं च कृतवीर्यस्य चरितं यः शृणोति चेत् । पठेद्वा तस्य संकष्टं भवेन्न च चतुर्विधम् ॥६४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते कृतवीर्यचरितं नाम चतुस्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । चकार कार्तवीर्योऽयं स ततो राज्यमुत्तमम् । धर्मेण राज्यनीत्या स्वां पालयामास हि प्रजाम् ॥१॥ ततस्तेन च भूपेन जिताः सर्वे महीभृतः । सप्तद्वीपवतीं पृथ्वीं बुभुजे बलसंयुतः ॥२॥ देवैः संस्थापितं नाम सहस्राजुर्न आदरात् । न समस्तेन कश्चिद्वै बभूव क्षात्रमंडले ॥३॥ स्वर्गे देवादयश्चैव त्रासयुक्ता बभूविरे । यदा क्रुद्धः स्वयं राजा तदा स्वर्गं ग्रहीष्यति ॥४॥ न संख्या वर्तते तस्य सैन्यानां च प्रजापते । यशसा तेजसा पूर्णं पूरितं तेन वै जगत् ॥५॥ सस्त्रीको नर्मदामध्ये चिक्रीड नृप एकदा । सहस्रबाहुभिर्धृत्वा जलौघं तत्र लीलया ॥६॥ यत्र वै नर्मदातीरे रावणः स महानुगः । पुपूज शांकरं लिंगं जलौघस्तत्र चागतः ॥७॥ पूजाविधिं स शीघ्रं समाप्य वै राक्षसाधिपः । पप्रच्छ केन दूतेशा जलौघः संप्रवर्तितः ॥८॥ गत्वा पश्यत मामत्र क्षोभयुक्तं स चाऽकरोत् । तं हनिष्यामि संक्रुद्धो नित्यभंगेन दुःखितः ॥९॥ ततस्ते त्वरया जग्मुर्दृष्ट्वा तं कार्तवीर्यकम् । समाचख्युर्महादैत्यं रावणं विस्मिता विभो ॥१०॥ श्रुत्वा वृत्तांतमेवं स रावणस्तं ययौ नृपम् । प्रधानैः षड्भिरत्यंतं क्रोधयुक्तः प्रतापवान् ॥११॥ सहसा रावणं दृष्ट्वा गदां धृत्वा महाबलः । आर्द्रवस्त्रेण संयुक्तो युयुधेर्जुन एककः ॥१२॥ गदायुद्धं महाघोरं तयोस्तत्र बभूव ह । ततः स गदया राजाऽपीडयद्रावणं परम् ॥१३॥ कवचादिकमेतस्य राक्षसस्य नराधिपः । भेदयामास वै दक्ष रावणस्तत आपतत् ॥१४॥ संगृह्य स्वगृहं भूपो ययौ तत्र बबंध तम् । निकटे स्थापयामास सभायां खेलकारकम् ॥१५॥ दशमस्तकयुक्तं तं दृष्ट्वा चिक्रीड भूमिपः । ततस्तं मुनिवर्यश्च पुलस्त्यः सहसाऽऽययौ ॥१६॥ तं प्रणम्य महाभागं गाणपत्यं विशेषतः । पुपूज भक्तिसंयुक्तो भोजयामास यत्नतः ॥१७॥ पुनः प्रणम्य तं विप्रं कृतांजलिपुटः पुरः । संस्थितस्तमुवाचाऽथ मुनिः सर्वार्थकोविदः ॥१८॥ रावणं मुंच राजेंद्र मत्पौत्रं वरसंयुतम् । मित्रभावेन तिष्ठ त्वं रावणस्य महामते ॥१९॥ तथेति तं जगादासावमुंचद्रावणं नृपः । पुलस्त्यः प्रययौ स्थानमाशिष्या चाभिनंद्य तम् ॥२०॥ इत्यादितेजसा युक्तः साक्षाद्विष्णुमयो नृपः । नैव शक्यो वर्णयितुं धर्मशीलो बभूव ह ॥२१॥ दिग्जये येन राज्ञा वै समुद्रः पादघाततः । ताडितः स विशीर्णोऽभूद्भयभीतः प्रजापते ॥२२॥ यज्ञान् स विपुलांश्चक्रे भूरिदक्षिणसंयुतान् । स्वाहा स्वधा वषट्कारैर्मुमुदुर्देवतादयः ॥२३॥ येन द्विजेन यत्तत्र प्रार्थितं तद्ददौ नृपः । स्वस्वधर्मरतान् लोकान् कारयामास यत्नतः ॥२४॥ सदा गणेशभक्तिं स चकार नृपसत्तमः । गाणपत्यप्रियश्चासीत्तीर्थदेवातिथिप्रियः ॥२५॥ आगतः स मयूरेशं यात्रां तत्र चकार ह ।



वर्षमात्रोषितो राजा यात्रार्थं लोलुपः स्वयम् ॥२६॥ गणेशं स्थापयामास ब्राह्मणैर्मंत्रकोविदैः। प्रवालगणनाथेति नाम कृत्वा पुपूज ह ॥२७॥ एवं नानाविधैर्भावैर्गणेशमभजत् सदा। त्रिलोककीर्तिसंगीतो बभूव कृतवीर्यजः ॥२८॥ चतुर्थीव्रतजेनैव तेजसा संयुतो बभौ। अंगहीनकभावेन मोहयुक्तो बभूव ह ॥२९॥ देवादीनामभून् मान्यः श्रिया परमया युतः। भोगयुक्तः स्वभावेन विसस्मार गजाननम् ॥३०॥ त्यक्त्वा मंत्रं गणेशस्य ब्रह्मज्ञानमदेन सः। अहं गणेशरूपः सन् कं भजाम्यवदत् खलः ॥३१॥ ततो बभूवातिविघ्नसंयुक्तः सोऽर्जुनः प्रभो। तच्छृणुष्व महाभाग कथयामि प्रचेष्टितम् ॥३२॥ सैन्येन संयुतो राजा मृगयार्थं वनं ययौ। नीलवेषधरो भूत्वा सैनिकास्तादृशा बभुः ॥३३॥ जघान विविधांस्तत्र मृगांस्तान् नगरे स्वके। प्रेषयामास दूतैः स विभ्रमन् यत्र तत्र वै ॥३४॥ ततोऽकस्मान् महाराजो ददर्शाश्रममुत्तमम्। मुनेः प्रपच्छ राजाऽसौ सचिवान् कस्य चाश्रमः ॥३५॥ त ऊचुर्जमदग्नेर्वै मुनेराश्रम आगतः। ततः सोऽपि मुनिं दक्ष ययौ हर्षसमन्वितः ॥३६॥ प्रणम्य सचिवैर्मुख्यैः संवृतः स कृतांजलिः। उवाच मुनिशार्दूलं जमदग्निं महायशाः ॥३७॥ धन्यं मेऽद्य महायोगिन् जन्म ज्ञानादिकं तथा। कुलं च पितरो सर्वं त्वदंघ्रियुगदर्शनात् ॥३८॥ ततस्तं मुनिमुख्योऽसावासनादिकमादरात्। दत्त्वा शिष्यैश्च संपूज्य पप्रच्छ कुशलादिकम् ॥३९॥ प्रयोजनं तथा विप्रः संपृच्छन् राजसत्तमम्। मानयामास तं भूपं विष्णोरंशसमुद्भवम् ॥४०॥ ततो राजा मुनिं दक्ष जगाद प्रीतिसंयुतः। तवाशीर्वचनेनैव कुशलं मे प्रवर्तते ॥४१॥ मृगयाऽऽसक्तचित्तोऽहमागतो मुनिसत्तम। पूर्वपुण्यबलेनैव प्राप्तं ते दर्शनं महत् ॥४२॥ सर्वैः सह महाभाग पवित्रोऽहं न संशयः। दर्शनेनैव संतुष्ट आज्ञां देह्यधुना प्रभो ॥४३॥ गमिष्यामिससैन्योऽहं नगरे स्वे महामते। न ते समश्च योगेन तपसा भासते मम ॥४४॥ जगाद मुनिमुख्योऽसौ ततस्तं हर्षसंयुतः। विष्णोरंशः स्वयं त्वं मेऽधुना संप्राप्त आश्रमे ॥४५॥ अनायासेन भो राजन्नतस्त्वां प्रार्थये विभो। भुंक्ष्व किंचिन्मया दत्तमपराह्णे समागतः ॥४६॥ ततो राजा जगादेदं वचनं तं प्रणम्य च। स्वामिन् वनेषु मे सैन्यं क्षुधितं भ्रमणे रतम् ॥४७॥ संत्यज्य कथमेकोऽहं भुनज्मि मुनिसत्तम। सर्वेषां भोजने शक्तिर्वर्तते नैव ते मुने ॥४८॥ वदामि तेन योगींद्र आज्ञां देहि च मे प्रभो। गमिष्यामि त्वरायुक्तो नगरे सैन्यसंयुतः ॥४९॥ ततस्तं राजशार्दूलमुवाच मुनिसत्तमः। न चिंतां कुरु राजेंद्र ससैन्यं भोजयाम्यहम् ॥५०॥

तपसा मे महाराज वश्यं ब्रह्मांडमंडलम् । अतस्त्वं गच्छ नद्यां वै स्नानाथ सवसंयुतः ॥५१॥ तथेति तं प्रणम्याऽसावगमत् सैन्यसंयुतः । स्नानार्थं विस्मितो भूत्वा सहस्त्रार्जुन आदरात् ॥५२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते सहस्रार्जुननिमंत्रणं नाम पंचत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । गते राजनि भो दक्ष जमदग्निर्महामुनिः । रेणुकां च समाहूय वृत्तांतमवदत् स्वयम् ॥१॥ ततस्ताभ्यां स्मृता देवी कामधेनुः प्रजापते । समागतां प्रसंपूज्य प्रार्थयंतावुभौ समम् ॥२॥ कार्तवीर्यः ससैन्यश्च भोजनाय निमंत्रितः । तदर्थं कुरु कल्याणि यत्नं प्रत्वरिता सखि ॥३॥ तयोर्वचनमाकर्ण्य कामधेन्वा महापुरम् । रचितं स्वप्रभावेण परिखावलयांकितम् ॥४॥ चतुर्विधान्नसंयुक्तां निर्ममे पाकशालिकाम् । क्षणेन तां समालोक्य हर्षितश्चाऽभवन् मुनिः ॥५॥ शिष्यै राजानमाहूय ससैन्यं तं प्रजापते । भोजयामास विप्रोऽसावन्नैर्नानाविधैः परैः ॥६॥ अमृतकल्परूपं ते बुभुजुर्हर्षसंयुताः । तृप्तास्ते फलकंदादीन् भक्षयामासुराहताः ॥७॥ तांबूलानि ततः सर्वे बभक्षुः प्रेमसंयुताः । ततो वस्त्रादिभिस्ते च सत्कृता मुनिना बभुः ॥८॥ राजाऽथ विस्मितो भूत्वा प्रणनाम महामुनिम् । आज्ञां गृहीत्वा सैन्येन ययौ स्वनगरं प्रति ॥९॥ गच्छंतं तं प्रधानं च ऊचे विनयसंयुतः । धेनुं प्रार्थय राजंस्त्वं ब्राह्मणस्तां प्रदास्यति ॥१०॥ इयं धेनुर्महाराज रत्नभूता न संशयः । तां विना राज्यमुग्रं ते निष्फलं भासतेऽधुना ॥११॥ तस्य तद्वचनं श्रुत्वा राजा मोहेन संयुतः । विघ्नेन पीडितोऽत्यंतमुवाच सचिवं वचः ॥१२॥ गच्छ त्वं प्रार्थ्य विप्रं तं धेनुमानय यत्नतः । तथेति सैन्यमादाय मुनिं दुष्टः समाययौ ॥१३॥ प्रधानं मुनिमुख्यं तं प्रणम्याभिदधे वचः । मुने धेनुमिमां देहि राज्ञे ह्यतिथिरूपिणे ॥१४॥ ततस्तं कोपसंयुक्त उवाच मुनिसत्तमः । न दास्यामि महामूर्ख धेनुं देवस्वरूपिणीम् ॥१५॥ ततः सोऽपि महावीरैर्धृत्वा धेनुं बलात् खलः । निर्जगाम मुनेस्तस्याऽऽश्रमात् कोपसमन्वितः ॥१६॥ ततो धेनुः समाक्रुद्धा ससृजे बलमुत्कटम् । तेन सैन्यं हतं तस्य प्रधानसहितं प्रभो ॥१७॥ ज्ञात्वा वृत्तांतमुग्रं तं क्षुभितः कृतवीर्यजः । युद्धार्थं गर्वसंयुक्तो ययौ तस्याश्रमं विधे ॥१८॥

ततस्तस्य महत् सैन्यं हतं धेन्वा बलेन वै । राजा खेदसमायुक्तो पपाल गतमत्सरः ॥१९॥ कामधेनुर्गता स्वर्गं पुना राजा समाययौ । हृदि विव्याध बाणेन मुनिः सोऽपि ममार ह ॥२०॥ ततस्तं भर्त्सयामास रेणुका भूमिपाधमम् । एकविंशति-बाणैस्तां नृपो विव्याध सर्वतः ॥२१॥ ततः सा क्षुभिताऽत्यंतं तमुवाच नृपाधमम् ॥ स्वल्पकालेन राजंस्त्वं मरिष्यसि न संशयः ॥२२॥ सहस्रबाहुच्छेदस्ते भविष्यति सुदुर्मते । ततः सोऽपि भयोद्विग्नो जगाम नगरे स्वके ॥२३॥ गते भूपे मुनेः पत्नी रुरोद करुणस्वरा । सस्मार तनयं रामं बदर्याश्रमगं प्रभुम् ॥२४॥ स्मृतिमात्रेण रामः स ययौ मातुस्तदांतिकम् । दृष्ट्वा मृतं महाविप्रं पितरं प्ररुरोद ह ॥२५॥ मातरं बाणनिचयैश्चितां वीक्ष्य विशेषतः । प्रभुर्निष्कासयामास शरान् मातुः शरीरगान् ॥२६॥ ततस्तं रेणुकादेवी सांत्वयामास युक्तितः । मा शोकं कुरु पुत्र त्वं स्थास्यामि निकटे प्रभो ॥२७॥ दत्तात्रेयं समानीय कुरु कर्म यथाविधि । आवयोः प्रभविष्यावो देहयुक्तौ पुनः प्रभो ॥२८॥ नान्यो वक्ता न संदेहः स्तस्माद्यत्नपरो भव । जहि दुष्टं च भूपं त्वं हस्तानां छेदनं कुरु ॥२९॥ ततस्ते जनकं तत्र तस्य देहोद्भवेन च । रक्तेन तर्पयस्व त्वं तृप्तः सोऽपि भविष्यति ॥३०॥ ममांगे एकविंशच्च बाणास्तेन समर्पिताः । एकविंशतिवारं त्वं कुरु निःक्षत्रियां धराम् ॥३१॥ एवमुक्त्वा गता देवी स्वर्गे देहं विसृज्य सा । रामस्तथा चकाराऽसौ दत्तेन सहितस्ततः ॥३२॥ पंचमे दिवसे रामः कर्म कृत्वा समास्थितः । दत्तात्रेयश्च स्वस्थाने ययौ भिक्षार्थमादरात् ॥३३॥ षष्ठे दिने समायातः व्याघ्रस्तत्र महाबलः । तं दृष्ट्वा भयसंयुक्तो रामः सस्मार मातरम् ॥३४॥ स्मृतिमात्रेण साऽऽयाता शिरोमात्रा प्रजापते । तां दृष्ट्वा विस्मितो रामस्तमुवाच हि रेणुका ॥३५॥ किमर्थं पुत्रकाऽऽहूता तव स्नेहात् समागता । ततोऽतर्धानमकरोद्व्याघ्रः परम-दुर्जयः ॥३६॥ एतस्मिन्नंतरे तत्र दत्तात्रेयः समाययौ । दृष्ट्वा तां राममामंत्र्योवाच योगविदां वरः ॥३७॥ समागता त्वया तात किमर्थं रेणुका स्मृता । न्यूनदेहा विशेषेण कुरु कर्म यथातथम् ॥३८॥ वृत्तांतं कथयामास रामस्तं मुनिसत्तमम् । चकार कर्म सांगं तद्दत्तेन सहितः प्रभुः ॥३९॥ सपिंडीकरणं रामश्चकार द्वादशेऽहनि । पाथेयश्राद्धमेवं स त्रयोदशदिने तथा ॥४०॥ ततः स जमदग्निस्तं दिव्यदेहः समागतः । राममालिंग्य संहृष्टो बभूव मुनिसत्तमः ॥४१॥ जमदग्निं ततो दत्तो रेणुकां हर्षसंयुतः । उवाच भावगंभीरो बोधयन् बोधदायकः ॥४२॥ गणेशं मंत्रराजेन भजतं भावपूर्वकम् । तेन विघ्नविहीनौ च शांतिरूपौ भविष्यथः ॥४३॥ क्षत्रहस्तेन मरणं युवाभ्यां प्राप्तमेव च । विघ्नराजमविज्ञाय जातौ

दुःखेन संयुतौ ॥४४॥ एवमुक्त्वा गणेशस्य ददौ मंत्रं महामुनिः । ताभ्यामेकाक्षरं विप्रौ तपोयुक्तौ बभूवतुः ॥४५॥ दत्तश्च स्वाश्रमे तद्बद्ययौ हर्षसमन्वितः । पित्रोः सेवार्थमानंदाद्रामस्तत्र स्थितोऽभवत् ॥४६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते रेणुकाजमदग्निसंजीवनकरणं नाम षट्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । गतं वर्षसहस्रे स तपतोराययौ प्रभुः । विघ्नेश्वरो भार्गवयोर्वरदस्तावुवाच ह ॥१॥ रेणुके जमदग्ने त्वं वृणु मे वरमुत्तमम् । एकाक्षरविधानेन तपसा तोषितोऽभवम् ॥२॥ तस्य तद्वचनं श्रुत्वा हर्षयुक्तौ बभूवतुः । ऊचतुर्गणराजं तौ भक्तिभावसमन्वितौ ॥३॥ धन्यो वंशो गणेशान दर्शनेन तथाऽऽवयोः । तपः स्वाध्याय एवं त आवयोर्नात्र संशयः ॥४॥ एवमुक्त्वा प्रणम्यैनं पूजयंतौ गणेश्वरम् । सरोमांचौ तुष्टुवतुः प्रहर्षेण प्रजापते ॥५॥ रेणुकाजमदग्नी ऊचतुः । नमस्ते विघ्नपालाय भक्तानां विघ्नहारिणे । विघ्नकर्त्रे ह्यभक्तानां ब्रह्मभूताय ते नमः ॥६॥ अनादये त्वनाधार वक्रतुंडस्वरूपिणे । गणेशान अनंतानां गणानां पतये नमः ॥७॥ नानाशक्तियुतायैव नानाभेदकराय ते । नानाभेदविहीनाय हेरंबाय नमो नमः ॥८॥अमेयमायया चैव खेलकाय च ढुंढये । सिद्धिबुद्धिसहायाय सिद्धिबुद्धिवराय च ॥९॥ स्वानंदपतये तुभ्यं भक्तेभ्यो योगदायिने । योगाकाराय योगाय शांतिदाय नमो नमः ॥१०॥ अखंडानंदरूपाय भुक्तिमुक्तिप्रदाय च । लंबोदराय देवाय चैकदंताय ते नमः ॥११॥ महोदराय विघ्नानां पतये सुखदायिने । मूषकध्वजिने तुभ्यं नमो मूषकवाहन ॥१२॥ चतुर्भुजाय सर्वेषामादिपूज्याय भोगिने । ज्येष्ठराजाय सर्वेषां पितृमातृस्वरूपिणे ॥१३॥ यं स्तोतुं न समर्थाश्च वेदा देवाः शिवादयः । योगिनस्तं कथं चावां ह्यतस्त्वां प्रणमावहे ॥१४॥ एवं स्तुत्वा गणेशानं प्रणतौ भक्तिसंस्तुतौ । तावुत्थाप्य गणाधीश ऊचिवान् हर्षसंयुतः ॥१५॥ वरं च वृणुतं पुत्रौ दास्यामि मनसीप्सितम् । यमिच्छथो महाभागौ भक्तिभावनियंत्रितः ॥१६॥ गणेशवचनं श्रुत्वा दंपती तमथोचतुः । प्रणम्य च पुनः पादौ स्पृष्ट्वा तौ हर्षसंयुतौ ॥१७॥ तावूचतुः । यदि प्रसन्नभावेन वरदोऽसि गजानन । तदा ते पादपद्मे नौ भक्तिं देहि सुखप्रदाम् ॥१८॥ योगशांतिं च विघ्नेश देहि योगेश नौ परा । गाणपत्यप्रियां चैव सदा ह्यानंददायिकाम् ॥१९॥ ओमित्युक्त्वा गणाध्यक्षः

पुनः प्रोवाच तौ तदा । दृष्ट्वा भक्तिं तयोर्भावं भक्तेभ्यः सुखदायकः ॥२०॥ भवत्कृतमिदं मे यत् स्तोत्रं योगप्रदं भवेत् । यो यदिच्छति तत्तस्मै दास्यामि स्तोत्रपाठतः ॥२१॥ जमदग्ने सदा शांतो भव मे भक्तिकारकः । रेणुके देहयुक्ता त्वं भज मां योगभाविता ॥२२॥ लोकास्त्वां मस्तकाकारां पश्यंत्यत्र न संशयः । ज्ञानदृष्ट्या तथा सांगां पश्येयुर्दैवतादयः ॥२३॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः । रेणुका जमदग्निश्च स्वाश्रमस्थौ बभूवतुः ॥२४॥ ततः कदाचिद्रामस्तौ प्रणिपत्य कृतांजलिः । उवाच पितरौ वाक्यं साक्षाद्विष्णुः प्रतापवान् ॥२५॥ श्रीराम उवाच । अर्जुनं संहनिष्यामि तथा निःक्षत्रियां धराम् । करिष्यामि न संदेहः पितरौ भवदाज्ञया ॥२६॥ ततस्तं जमदग्निश्चोवाच हर्षसमन्वितः । मा कुरुष्व वृथा हिंसां राम गर्वं परित्यज ॥२७॥ ततस्तं भार्गवं राम उवाच विनयान्वितः । मातुरग्रे प्रतिज्ञा च मुनीश्वर कृता मया ॥२८॥ तां सत्यां प्रकरिष्यामि मातृभक्तिपरायणः । देहत्यागं करिष्यामि तदर्थमथवा मुने ॥२९॥ तस्याऽऽग्रहं समालोक्य न्यगदत् पुत्रमादरात् । शंकरं गच्छ भो राम स तेऽभीष्टं करिष्यति ॥३०॥ तौ प्रणम्य जगामाऽसौ कैलासे शंकरं प्रभुः । प्रणिपत्य महेशानं स्तुत्वा तं चाब्रवीद्वचः ॥३१॥ कार्तवीर्यं हनिष्यामि कुर्वे निःक्षत्रियां धराम् । एकविंशतिवारं च तत्रोपायं वद प्रभो ॥३२॥ तत एकाक्षरं मंत्रं गणेशस्य ददौ शिवः । रामाय तं प्रणम्याशु वनं प्रायात् महाबलः ॥३३॥ पूर्वजन्मनि देवस्य गणेशस्य कृतं तपः । वामनेन च तत् स्मृत्वा तस्मिन् तपसि संस्थितः ॥३४॥ वायुभक्षस्ततो मंत्रं जजाप ध्यानसंयुतः । समाधिना महोग्रेण तोषयामास विघ्नपम् ॥३५॥ गते वर्षशते पूर्णे आययौ तं गजाननः । भक्तं भक्त्या समायुक्तं महोग्रतपसा युतम् ॥३६॥ उवाच तं महाभागं भार्गवं विष्णुमव्ययम् । वरं वृणु महाभाग भक्त्या दास्यामि भावितः ॥३७॥ श्रुत्वा तस्य वचो रम्यमुत्थाय गणपं द्विजः । ननाम दंडवद्भूमौ तं पुपूज विशेषतः ॥३८॥ पूजयित्वा पुनर्नत्वा तुष्टाव प्रकृतांजलिः । रामो भक्तिरसेनैव संप्लुतः साश्रुलोचनः ॥३९॥ राम उवाच । नमस्ते गणनाथाय भक्तानंदविवर्धन । भक्तिप्रियाय देवाय हेरंबाय नमो नमः ॥४०॥ वेदांतवेद्यरूपाय मनोवाणीमयाय च । मनोवाणीविहीनाय योगाकाराय ते नमः ॥४१॥ गजवक्त्राय वै तुभ्यं निर्गुणात्मप्रधारिणे । सगुणाय च कंठाधो नराकाराय ते नमः ॥४२॥ अनादये च पूज्याय सर्वेषां सर्वदायिने । आदिपूज्याय विघ्नेश नानाविघ्नप्रचालक ॥४३॥ विघ्नहंत्रे सुभक्तानां विघ्नकर्त्रे दुरात्मनाम् । सदा स्वानंदनाथाय ढुंढिराजाय ते नमः ॥४४॥ वक्रतुंडाय ते नाथ नमो लंबोदराय वै ।

सततं शांतिरूपाय शांतिदाय नमो नमः ॥४५॥ महोदराय सिद्धेश्च बुद्धेश्च पतये नमः । नानैश्वर्यप्रदात्रे ते भ्रमदाय नमो नमः ॥४६॥ नानाज्ञानप्रभेदैश्च मोहकर्त्रे नमो नमः । सुभक्तानां सदा नाथ भ्रममोहादिहारिणे ॥४७॥ नानादैत्यनिहंत्रे च देवानां मदहारिणे । सुरासुरमयायैव ब्रह्मेशाय नमो नमः ॥४८॥ सर्वत्र योगरूपेण संयोगायोगहीनतः । संस्थितं तं कथं स्तौमि त्वां विघ्नेश वद प्रभो ॥४९॥ यं समर्था गणाध्यक्ष योगिनः शेषकादयः । शिवादयश्च वेदा वै स्तौतुं न प्रभवंति ते ॥५०॥ तं किं स्तौमि गणाधीशमतस्त्वां प्रणतोऽभवम् । तेन तुष्टश्च मां नाथ पालयस्व त्वदाश्रितम् ॥५१॥ एवं संस्तुवतस्तस्य भक्तिभावेन मानद । भक्त्या रोमोद्गमः प्राप्तः कंठरोधो बभूव ह ॥५२॥ ननर्त परमानंदयुक्तोऽसौ भार्गवाग्रणीः । जय विघ्नेश हेरंब गणेशेति वदंस्तदा ॥५३॥ तं तथा भक्तिसंमग्नं वीक्ष्य देवो गजाननः । उवाच साश्रुनेत्रश्च सरोमांचः प्रजापते ॥५४॥ राम राम महाभाग शृणु मे परमं वचः । धन्योऽसि सर्वभावेन भक्तो मे मग्नतां गतः ॥५५॥ त्वया कृतमिदं स्तोत्रं भवेत् भक्तिरसप्रदम् । पठिष्यति च यश्चैतच्छृणुयात् सततं परम् ॥५६॥ तस्याऽहं सकलां बाधां नाशयिष्यामि नित्यदा । इह भुक्त्वाऽखिलान् भोगानंते स्वानंदगो भवेत् ॥५७॥ यद्यच्चिंतयति प्राज्ञ तत्तद्दास्यामि केशव । मम मान्यः सदा सोऽपि भविता नात्र संशयः ॥५८॥ परशुं मे गृहाण त्वं तेन मत्तौल्यगो भवेः । जेष्यसि त्वं महावीरमर्जुनं राजभिर्वृतम् ॥५९॥ निःक्षत्रियां तथा पृथ्वीं करिष्यसि न संशयः । एकविंशतिवारं त्वं सदा जयसमन्वितः ॥६०॥ नाम ते सर्वविख्यातं भविष्यति शुभप्रदम् । उक्तं परशुरामेति स्मरणेन सुखप्रदम् ॥६१॥ यज्ञान् कृत्वा महाभाग यशः संस्थाप्य भूतले । शांतियोगस्थभावेन मां भजिष्यसि नित्यदा ॥६२॥ एवमुक्त्वाऽतर्दधेऽसौ जामदग्न्यं गणेश्वरः । रामः संस्थापयामास गणेशं ब्राह्मणैस्ततः ॥६३॥ संपूज्य स्वगृहं रामो ययौ हर्षसमन्वितः । रेणुकां जमदग्निं स ननाम परशोर्धरः ॥६४॥ तयोराज्ञां गृहीत्वा स भ्रातृभिश्च समन्वितः । जुहाव कार्तवीर्यं तं महाबलपराक्रमम् ॥६५॥ सिद्धेश्च कवचैर्युक्ता राजानः सर्व आगताः । अवध्याः सर्वभावेन देवादीनां महाबलाः ॥६६॥ गणेशवरदानेन परशोस्तेजसा प्रभुः । रामः सर्वांश्च संग्रामे मारयामास यत्नतः ॥६७॥ कार्तवीर्यं तं जघान स ततो रोषतो दृढम् । युद्धं कृत्वा महाघोरं बाहूंश्चिच्छेद लीलया ॥६८॥ ममार कार्तवीर्यश्च पर्शुना च प्रजापते । ततः स विजयी रामः क्षत्रियाणां वधे रतः ॥६९॥ निःक्षत्रियां धरां तत्र चकार क्रोधसंयुतः । पुनर्ब्राह्मणवीर्येण क्षत्रियाः प्रबभूविरे ॥७०॥ रामेण ते पुनः सर्वे हताः

क्षत्रकुलोद्भवाः। निःक्षत्रियां धरां दक्ष चकार स पुनः पुनः ॥७१॥ एकविंशतिवारं च कृत्वा निःक्षत्रियां धराम्। क्षत्रियाणां च रक्तेन तर्पयामास पूर्वजान् ॥७२॥ यज्ञं कृत्वा ददौ पृथ्वीं ब्राह्मणेभ्यो महायशाः। समुद्रेण ततस्तस्मै दत्ता पृथ्वी भयाद्विधे ॥७३॥ तत्राऽयं संस्थितो रामो भजते गणनायकम्। अनन्यभावसंयुक्तो गाणपत्योऽधुना महान् ॥७४॥ इदं ते कार्तवीर्यस्य रामस्य च महाद्भुतम्। जमदग्ने रेणुकायाश्चरितं कथितं मया ॥७५॥ यः शृणोति नरो भक्त्या पठेद्वा तस्य संभवेत्। भुक्तिमुक्तिप्रदं दक्ष चिंतितार्थप्रदं परम् ॥७६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते परशुरामचरितकथनं नाम सप्तत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। कार्तवीर्यस्य पुत्रास्तु शतं तत्र महारथाः। पंचैव बलिनः शूरा धर्मात्मानो यशस्विनः ॥१॥ जयध्वजः शूरसेनो वृषभोऽथ पुरुर्जितौ। जयध्वजस्तत्र राजा मुख्योऽभूत् स प्रजापते ॥२॥ जयध्वजस्य पुत्रोऽभूत्तालजंघः प्रतापवान्। तस्य पुत्रशतं जज्ञे तालजंघा इति स्मृताः ॥३॥ तेषां ज्येष्ठो महाबाहुर्वीतिहोत्रोऽभवन्नृपः। वृषप्रभृतयश्चान्ये यादवाः पुण्यकर्मिणः ॥४॥ वृषो वंशकरश्चासीत्तस्य पुत्रोऽभवन् मधुः। मधोः पुत्रशतं जज्ञे वृष्णिर्ज्येष्ठः स वंशकृत् ॥५॥ वीतिहोत्रसुतश्चैवानंतनामा महायशाः। दुर्जयस्तस्य पुत्रोऽभूत् सर्वशास्त्रविशारदः ॥६॥ तस्य भार्या गुणैर्युक्ता पातिव्रत्य-परायणा। वने स तु ययौ राजोर्वशीं तत्र ददर्श ह ॥७॥ तस्यां सक्तः स्वयं कामी न सस्मार स्वकां स्त्रियम्। गते बहुतिथे काले ययौ कण्वेन बोधितः ॥८॥ स्वगृहं पुनरेवाऽसौ प्रायश्चित्तं चकार वै। याजयामास तं कण्वः स विनीतो बभूव ह ॥९॥ तस्य पुत्रो बभूवाऽपि सुप्रतीक इति श्रुतः। सहस्रजित् कुलभवं सर्वं ते कथितं त्विदम् ॥१०॥ यदुपुत्रस्य वंशं वै शृणु क्रोष्टोः प्रजापते। क्रोष्टोरेको वृजिनवानिति पुत्रोऽभवच्छ्रुतः ॥११॥ तस्य पुत्रोऽभच्छ्वाहिः कुशेकुस्तत्सुतो मतः। कुशेकोश्चाऽभवत्पुत्रो नाम्ना चित्ररथो बली ॥१२॥ पुत्रश्चित्ररथस्याऽभूच्छशबिंदुस्ततोऽभवत्। दशलक्षसहस्राणि तेषु ज्येष्ठः पृथुश्रवाः ॥१३॥ उशनास्तस्य पुत्रोऽभूद्धर्म एव स कथ्यते। तस्माद्रुचकनामाऽभूत्ततः पंच सुता मताः ॥१४॥ तेषु वंशधरः प्रोक्तो ज्यामघो लोकविश्रुतः। तस्माद्विदर्भः पुत्रोऽभूद्विदर्भाच्च कुशक्रथौ ॥१५॥ लोमपादस्तृतीयस्तु

बभ्रुस्तस्याऽऽत्मजोऽभवत् । कृतिस्तस्यात्मजः प्रोक्त उशिकस्तत्सुतोऽभवत् ॥१६॥ उशिकात् पुत्रको जातश्चेदिश्चैद्यस्ततो-ऽभवत् । तस्य पुत्रो महाबाहुः प्रभावात् कौशिकः स्मृतः ॥१७॥ अभूत्तस्य सुतो धीमान् सुमंतुश्च ततोऽमलः । अमलस्य सुतः प्रोक्तो निःश्वेतश्च महाबलः ॥१८॥ तस्य दक्षाऽभवन् पुत्राः शतं चैव महाबलाः । ऋथस्याप्यऽभवत्कुंतिर्धृष्टिस्तस्याऽथ निर्वृतिः ॥१९॥ दशार्होऽस्य ततो व्योमस्तस्माज्जीमूतकस्ततः । विकृतिस्तस्य पुत्रो भीमरथोऽभून् महाबलः ॥२०॥ तस्मा-न्नवरथो नाम बभूव च महाबलः । तस्य पुत्रो दशरथः शकुनिस्तस्य चात्मजः ॥२१॥ तस्मात् करंभिः संभूतो देवरातो-ऽभवत्ततः । ईजे स चाश्वमेधेन देवक्षत्रश्च तत्सुतः ॥२२॥ मधुस्तस्य सुतो जज्ञे तस्मात् कुरुरजायत । पुत्रद्वयमभूत्तस्य सुत्रामा चानुरेव च ॥२३॥ अनोस्तु पुरुहोत्रोऽभूदायुस्तस्य सुतो मतः । आयुषः सात्त्वतो नाम तस्य सप्त सुता मताः ॥२४॥ भजमानो भजिर्दिव्यो वृष्णिर्देववृधोऽधकः । महाभोजश्च विख्याता यादवेषु प्रजापते ॥२५॥ भजमानस्य निम्लोचिः किंकणो वृष्णिरेव च । अथ देववृधो राजा पुत्रार्थे तप आचरत् ॥२६॥ बभ्रुः पुत्रोऽभवत्तस्य पुण्यश्लोको महायशाः । सर्वशास्त्रार्थतत्त्वज्ञः श्लोकौ यस्य बभूवतुः ॥२७॥ यशसा तेजसा राजा त्रिलोकेषु विराजितः । महाभोजकुले जाता भोजास्ते वै प्रकीर्तिताः ॥२८॥ वृष्णेः सुमित्रः पुत्रश्च युधाजिदपरस्तथा । अनमित्रः शिनिस्तस्मान्निम्नोऽभूदनमित्रतः ॥२९॥ सत्राजिच्च प्रसेनश्च विख्यातौ निम्नजौ सुतौ । सत्राजित् सूर्यमाराध्य मणिं लेभे स्यमंतकम् ॥३०॥ शिनेरथ समुत्पन्नः पुत्रः सर्वार्थकोविदः । सत्यकः सत्यसंपन्नः सत्यनामा महायशाः ॥३१॥ सात्यकिर्युयुधानः स जयस्तस्याऽभवत्सुतः । कुणिश्चाथ सुतो धीमांस्तस्य पुत्रो युगंधरः ॥३२॥ अनमित्रसुतो योऽन्यो वृष्णिः शास्त्रविशारदः । श्वफल्कश्च सुतो वृष्णेः परश्चित्ररथोऽभवत् ॥३३॥ श्वफल्कः काशिराजस्य सुतां भार्यामविंदत । तस्यामजनयत् पुत्रमक्रूरं साधुसंमतम् ॥३४॥ आसंगसारमेयाद्या अन्ये च द्वादशाऽऽत्मजाः । अक्रूरस्याऽभवत्पुत्रो देववानुपदेवकः ॥३५॥ अभूच्चित्ररथात् पुत्रः पृथुश्चापृथुरेव हि । अश्वग्रीवः सुबाहुश्च सुधाश्वाद्याः सुताः स्मृताः ॥३६॥ अथांधको महाबाहुर्लेभे वै चतुरः सुतान् । कुकुरं भजमानं च शुचिं कंबलबर्हिणम् ॥३७॥ कुकरस्य सुतो वह्निर्वह्नेस्तु तनयोऽभवत् । कपोतरोमा भो दक्ष पुत्रोऽभवदनुस्ततः ॥३८॥ सोऽभवत्तुंबरोर्मित्रं सुतस्तस्यांऽधकः स्मृतः । अंधकादभवत् पुत्रस्तेजोयुक्तश्च दुंदुभिः ॥३९॥ स गोवर्धनमासाद्य तताप विपुलं तपः । ब्रह्मा तस्मै ददौ चैव वरं तन्मनसीप्सितम् ॥४०॥ वंशास्ते चाक्षयो भावी

कीर्तिज्ञानादिकं यशः। सुरैः सदाधिकं मैत्र्यं कामरूपित्वमेव च ॥४१॥ अरिद्योतः सुतस्तस्य तेजोयुक्तश्च दुंदुभेः। पुनर्वसुः सुतस्तस्याहुकस्तस्य सुतः स्मृतः ॥४२॥ आहुकादुग्रसेनश्च देवकश्च प्रजापते। देवकस्य सुता वीरा जज्ञिरे देवसन्निभाः ॥४३॥ देववानुपदेवश्च सुदेवो देववर्धनः। तेषां स्वसारः सप्ताऽऽसन् वसुदेवाय ता ददौ ॥४४॥ धृतदेवा तथा चैवोपदेवा देवसाक्षिता। श्रीदेवा शांतिदेवा च सहदेवा च सुव्रता ॥४५॥ देवकी वसुदेवाय ददौ सर्वाः प्रजापते। उग्रसेनस्य पुत्रास्तु कंसमुख्या महाबलाः ॥४६॥ महायशा अभूत् पुत्रो भजमानाद्विदूरथः। तस्य शूरः शिनिस्तस्य स्वयंभोजश्च तत्सुतः ॥४७॥ हृदिकोऽतो देहबाहुस्ततः शतधनुस्ततः। कृतवर्मा ततो देवमीढोऽतः शूरकस्ततः ॥४८॥ वसुदेवादयो दक्ष दश धर्मपरायणाः। वसुदेवान् महातेजा वासुदेवो जगद्गुरुः ॥४९॥ देवकीपुत्रतां यातो देवैः संप्रार्थितो हरिः। भूमिभारावताराय साधूनां पालनाय च ॥५०॥ रोहिणी च महाभागा वसुदेवादजीजनत्। संकर्षणं ततो ज्येष्ठं शेषांशं च हलायुधम् ॥५१॥ उमा देहधरा जाता योगनिद्रा च कौशिकी। नियोगाद्वासुदेवस्य यशोदा तनयाऽभवत् ॥५२॥ ये चान्ये वसुदेवस्य वासुदेवाग्रजाः सुताः। जघान कंसः प्रागेव तान् सर्वान् सूतिमात्रतः ॥५३॥ सुषेणश्च ततो दायि भद्रसेनो महाबलः। ऋतुः संमर्दनो भद्रः कीर्तिमानिति संज्ञिताः ॥५४॥ हतेष्वेतेषु सर्वेषु रोहिणी वसुदेवतः। असूत लोकनाथं तं बलभद्रं हलायुधम् ॥५५॥ जाते रामे च देवानामादिमात्मानमच्युतम्। असूत देवकी कृष्णं श्रीवत्सांकितवक्षसम् ॥५६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते हरिवंशवर्णनं नामाष्टत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः॥ मुद्गल उवाच। रामस्य रेवती भार्या सुरूपाऽऽसीद्गुणान्विता। तस्यामुत्पादयामास द्वौ पुत्रौ निषधोल्मुकौ ॥१॥ षोडश स्त्रीसहस्राणि शतमष्टोत्तरं तथा। कृष्णस्य पत्न्यः संप्रोक्ताश्चारुरूपाः सुलोचनाः ॥२॥ तासु पुत्रा बभूवुश्च शतशोऽथ सहस्रशः। प्रत्येकं दश पुत्राश्च दुहितैका बभूविरे ॥३॥ प्रद्युम्नसांबमुख्याश्च महातेजोयुताः सुताः। महारथा महाभागा बभूवुर्ज्ञानसंयुताः ॥४॥ प्रद्युम्नस्य च पुत्रोऽभूदनिरुद्धः प्रतापवान्। तस्य पुत्रस्तु वज्रः स एवाभूद्वंशधारकः ॥५॥

मुसलात् सोऽवशिष्टोऽभूदेवं नानाविधा नृपाः। जातास्तत्र न शक्यं वै भवेत् कथयितुं मया ॥६॥ दक्ष उवाच। कथं विष्णुः स्वयं साक्षान् मानुषे देहधारकः । बभूव तत्र यन्मूलं तदेव वद मानद ॥७॥ मुद्गल उवाच। कथां शृणु महारम्यां पुरा जातां प्रजापते। यया ते संशयः सर्वो नाशमेष्यति तच्छ्रुतात् ॥८॥ पुरा देवैश्च दैत्येशा जिता विष्णुसमन्वितैः। राज्यं त्यक्त्वा ततो दैत्या वनेषु व्यचरन् भयात् ॥९॥ ततस्तान् हंतुमत्यंतं ययुर्देवा उदायुधाः। प्रह्लादप्रमुखाः सर्वे भयभीतास्ततोऽभवन् ॥१०॥ अनाथांस्तानथोचुस्ते कृत्वा करपुटं पुरः। राज्यं त्यक्त्वा वयं सर्वे वनेषु विचरामहे ॥११॥ शस्त्रादिभिर्विहीनान्नः कथं हंतुं समुद्यताः । सुराः सर्वं भवद्भिश्च गृहीतं तदपि ह्यहो ॥१२॥ अतो नो रक्षत प्राज्ञाः शरणं समुपागतान् । मा हिंस्यत महाभागा दीनांश्चैव विशेषतः॥१३॥ तथाऽपि विष्णुना तत्र प्रेरितास्तेऽपि दानवान् । देवा हंतुं प्रारभंत पलायंताऽसुरास्तदा ॥१४॥ शरणं स्वगुरुं तत्र भृगुं योगनिधिं ययुः । उदायुधास्तु पश्चात्ते जग्मुः क्रोधसमन्विताः ॥१५॥ तत्र सर्वे भृगुं दक्ष ददृशुर्न च दानवाः । समिदर्थं गतं ज्ञात्वा भृगुपत्नीं समाययुः ॥१६॥ रक्ष नो देवि भीतांस्तु देवेभ्यः शरणं गतान् । नोचेद्वयं मरिष्यामस्त्वदग्रे नात्र संशयः ॥१७॥ तेषां वचनमाकर्ण्य तानुवाच सुखप्रदा । मा भयं कुरुत ह्येवं वारयामि सुरानहम् ॥१८॥ तस्यास्तद्वचनं श्रुत्वा हर्षयुक्ताश्च दानवाः । तत्र संस्थास्ततो दक्ष निःश्वासोच्छ्वाससंयुताः ॥१९॥ एतस्मिन्नंतरे तत्राजग्मुर्विष्णुपुरोगमाः । देवा उदायुधाः सर्वे दैत्यान् हंतुं प्रचक्रमुः ॥२०॥ तानुवाच भृगोः पत्नी मा हिंस्यत सुरोत्तमाः । दैत्यान् मां शरणं प्राप्तान्राज्यहीनान् विशेषतः ॥२१॥ तामनाहत्य देवेंद्रो विष्णुना प्रेरितः स्वयम् । वज्रं धृत्वा ययौ हंतुं दैत्यान् क्रोधविलोचनः ॥२२॥ ततो भृगोश्च पत्नी सा चुकोप तपसा स्वयम् । सवज्रं देवराजं तं स्तंभितं प्रचकार ह ॥२३॥ तद् दृष्ट्वा विष्णुना तत्र चक्रेण क्षुरनेमिना । शिरश्छिन्नं भृगोः पत्न्याः सा पपात धरातले ॥२४॥ एतस्मिन्नेव काले तु भृगुस्तत्र समागतः । मृतां पत्नीं तथा दृष्ट्वा चुकोपारुणलोचनः ॥२५॥ शशाप विष्णुमावेशात् पत त्वं पृथिवीतले । ब्राह्मणीवधदोषेण देवाधम न बुद्ध्यसि ॥२६॥ भृगुणा तपसा स्वेन ज्ञानेनाऽपि प्रजापते । जीवयुक्ता कृता पत्नी रक्षिता दानवास्तथा ॥२७॥ ततोऽतिदुःखितो देवो विष्णुः शोकसमन्वितः । शरणं विघ्नराजं तं ययौ क्षेत्रे मयूरके ॥२८॥ तत्राऽतितपसा देवं वर्षमात्रं प्रजापते । निराहारेण भक्त्या स तोषयामास विघ्नपम् ॥२९॥ ततस्तं गणराजः स ययौ भक्तिनियंत्रितः । उवाच च महाविष्णुं वरं वृणु हृदीप्सितम् ॥३०॥ गणेशं प्रणनामाथोत्थायाऽसौ विष्टरश्रवाः ।

पुपूज भक्तिभावेन तं तुष्टाव गजाननम् ॥३१॥ अथर्वशिरसा तेन स्तुतस्तं प्रत्युवाच ह । वरं वरय दास्यामि मा खेदं कुरु केशव ॥३२॥ श्रीविष्णुरुवाच । यदि प्रसन्नभावेन वरदोऽसि गजानन । शापं मे भृगुसंभूतं निवर्तय महाप्रभो ॥३३॥ अत्रैव वाससंस्थानं देहि ते भजनाय मे । निर्विघ्नं सर्वदा स्वामिन् कुरु मां त्वत्पदप्रियम् ॥३४॥ ओमित्युक्त्वा स्वयं ढुंढिरूचिवान् भक्तमुत्तमम् । मा चिंतां कुरु विष्णो त्वं शृणु मे परमं वचः ॥३५॥ भृगोर्मदीयभक्तस्य तस्य वाणीं न वै मृषा । करिष्यामि कदा तस्मान् मृत्युलोके पतिष्यसि ॥३६॥ तत्रैव ते सदा ज्ञानं नष्टं नैव भविष्यति । मत्प्रसादाच्च देवेश स्वेच्छाचारी सदा सुखी ॥३७॥ देवैः संप्रार्थितस्त्वं वै दैत्यादीनां वधाय च । धर्मसंस्थापनार्थायाऽवतारं प्रधरिष्यसि ॥३८॥ तत्र ते कीर्तिरत्यंतं भविष्यति विशेषतः । यशो महत् पृथिव्यां त्वं स्थापयिष्यसि केशव ॥३९॥ तत्र त्वदीयभक्ताश्च भविष्यंति विशेषतः । तेषां चतुर्विधां वाञ्छां पूरयिष्यसि नित्यदा ॥४०॥ पुनश्च देवकार्यं च कृत्वा देव जनार्दन । विकुंठे ते सदा वासो भविष्यति न संशयः ॥४१॥ स्वेच्छया देहवांस्त्वं वै भविष्यसि न संशयः । मत्प्रसादात् हृषीकेश सर्वं ते वाञ्छितं भवेत् ॥४२॥ अन्यत्त्वया च देवेश प्रार्थितं तद् भविष्यति । वस त्वं क्षेत्रगो भूत्वा स्थानं दत्तं मयाऽक्षयम् ॥४३॥ इत्युक्त्वांऽतर्दधे दक्ष गणेशः करुणानिधिः । विष्णुना तत्र संवासः कृतो भक्त्या प्रजापते ॥४४॥ पूर्वदिग्भागदेशे वै स्थापितो गणनायकः । विष्णुर्विनायक इति नाम तस्य कृतं द्विजैः ॥४५॥ एत्तते कथितं दक्ष देहधारणकारणम् । विष्णोर्देवाधिपस्याऽपि नानायोनिसमुद्भवः ॥४६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते विष्णुदेहधारणवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः । मुद्गल उवाच । पुरोर्वंशे महाभागा राजानो धर्मशालिनः । बभूवुर्यज्ञकर्तारः स्वधर्मनिरताः किल ॥१॥ तेषां चरित्रमत्यंतं कथनाय न शक्यते । बहुत्वात् कारणं दक्ष शृणु ते कथयाम्यहम् ॥२॥ पूरोर्वंशे महाराज शंतनुः प्रबभूव ह । विख्यातो धर्मशीलश्च प्रजापालनतत्परः ॥३॥ तस्य पुत्रोऽभवच्छ्रेष्ठो भीष्मो धर्मपरायणः । गंगायां सर्वशास्त्रज्ञो ब्रह्मचर्यपरायणः ॥४॥ सत्यवत्यां च पुत्रौ द्वौ शंतनोर्वै बभूवतुः । चित्रांगदो महाबाहुर्विचित्रवीर्यकोऽपरः ॥५॥ चित्रांगदो महातेजाः पस्पर्धे क्षत्रियान् सदा । चित्रांगदेन युद्धे स गंधर्वेण हतोऽभवत् ॥६॥ विचित्रवीर्यकस्तत्र यक्ष्मणा

पीडितोऽभवत् । मृतः स रोगदोषेण दुःखिताः सुहृदोऽभवन् ॥७॥ तस्य भार्ये प्रजानाथ द्वे काशीराजपुत्रिके । अंबिकांऽबालिका नाम्न्यौ दुःखिते ते बभूवतुः ॥८॥ सत्यवत्या कृतं तत्र संतानार्थं महामुनेः । व्यासस्य स्मरणं दक्ष स्वपुत्रस्य विशेषतः ॥९॥ स आगत उवाचैनां किमर्थं दुःखिता वद । मातस्ते दुःखनाशं च करिष्यामि न संशयः ॥१०॥ तं प्रत्युवाच सा देवी वंशवृद्धिं कुरु प्रभो । विचित्रवीर्यक्षेत्रे त्वं मदाज्ञावशगो भव ॥११॥ तथेति तेन वंशस्य कृता वृद्धिः प्रजापते । कुत्सितं वेषमास्थाय रात्रौ रेमे महामुनिः ॥१२॥ अंबिकायां मुनेर्वीर्यात् धृतराष्टो बभूव ह । पांडुरंबालिकायां वै दास्यां च विदुरोऽभवत् ॥१३॥ यमोऽयं विदुरः साक्षाच्छूद्रयोनौ समुद्भवन् । मांडव्यशापभोगार्थं नीतिज्ञः स बभूव ह ॥१४॥ दक्ष उवाच । कथं मांडव्यशापश्च यमेशस्य पुराऽभवत् । धर्ममार्गरतस्याऽपि स्वपरेषु समस्य भोः ॥१५॥ मुद्गल उवाच । सम्यक् पृष्टं त्वया नाथ शृणु तस्य कथानकम् । पुरातनभवं तेऽहं कथयामि सविस्तरम् ॥१६॥ मांडव्यो मुनिवर्यः स वने तपसि संस्थितः । तत्र चोरा धनं हृत्वा पलंतश्च समाययुः ॥१७॥ राज्ञश्च वीरमुख्यास्तन्निशायां धर्तुमाययुः । चोरांश्चोरैर्धनं सर्वं स्थापितं मुनिसंन्निधौ ॥१८॥ धनं त्यक्त्वा गताश्चोरा वने वै यत्र तत्र ते । राजदूतैर्धनं दृष्टं संगृह्य कुपिता भृशम् ॥१९॥ ततो मुनिं तिरस्कृत्य मौनभावसमन्वितम् । संगृह्य ताडयंतस्त आययुर्नगरे स्वके ॥२०॥ राजानं ते समाचख्युर्धनं दत्त्वा यथातथम् । वृत्तांतं चोरसंभूतं नृपोऽपि कुपितोऽभवत् ॥२१॥ शूले प्रोतव्य एवं चेद्धवद्भिश्चोरसत्तमः । तथेति तैः कृतं तत्र हस्ते प्रोतो महामुनिः ॥२२॥ तत्र दुःखसमायुक्तो मांडव्यस्तपसि स्थितः । सस्मार स्वगुरुं विप्रं कश्यपं सृष्टिकारकम् ॥२३॥ स्मृतमात्रः स तस्याऽग्रे कश्यपः सहसाऽऽययौ । तं तथा दुःखसंयुक्तं दृष्ट्वा संदुःखितोऽभवत् ॥२४॥ उवाच तं स्वशिष्यं स भज त्वं गणनायकम् । सर्वविघ्ननिहंतारं भक्तेभ्यः शांतिदायकम् ॥२५॥ ततस्तं मुनिशार्दूलं मांडव्यः प्रजगाद वै । केन मार्गेण विघ्नेशं तं भजामि वदस्व माम् ॥२६॥ तस्य तद्वचनं श्रुत्वा कश्यपस्तमुवाच ह । गणेशस्य स्वरूपं वै भक्तेभ्यः सुखदं परम् ॥२७॥ कश्यप उवाच । पंचधा चित्तवृत्तेश्च चालकोऽयं गजाननः । चिंतामणिरिति ख्यातो वेदांते वेदवादिभिः ॥२८॥ संप्रज्ञातस्वरूपो वै देहस्तस्य महामुने । असंप्रज्ञातरूपं च शिरो गणपतेः स्मृतम् ॥२९॥ तेनाऽयं गजवक्त्रोऽभूद्गजशब्दं विचारय । भ्रमरूपां महामायां सिद्धिं विद्धि महामते ॥३०॥ भ्रमधारकरूपां त्वं बुद्धिं जानीहि सत्तम । तयोः स्वामी गणाधीशो योगाकारः प्रदृश्यते ॥३१॥ तं भजस्व

विधानेन योगशांतिमयं मुने। तेन त्वं विघ्नसंहीनो भविष्यसि न संशयः ॥३२॥ इत्युक्त्वा स गणेशस्य ददौ तस्मै महामुनिः। एकाक्षरविधानेन कवचं शास्त्रसंमतम् ॥३३॥ आज्ञां संगृह्य विप्रेशः कश्यपः स्वालयं ययौ। मांडव्यस्तत्र विघ्नेशमभजद्भावसंयुतः ॥३४॥ कवचं गणराजस्य दधार मुनिसत्तमः। कवचे संधृते दक्ष पीडाहीनो बभूव ह ॥३५॥ तत्रैव सहसा राजा कस्मै कार्यार्थमाययौ। ददर्श तं महाविप्रं प्रणनाम कृतांजलिः ॥३६॥ रुदोद भयसंयुक्तो वचस्तं मुनिरब्रवीत्। मा रुद त्वं महीपाल नैव शापं ददाम्यहम् ॥३७॥ मदीयकर्मदोषेण शूलप्रोतोऽहमेव च। अजानता त्वया राजन् कृतं तेन सहाम्यहम् ॥३८॥ ततो नृपेण विप्रार्थं लोहकारविचक्षणाः। समानीताश्च तैस्तत्र कृतो यत्नो विशेषतः ॥३९॥ शूलाग्रं हस्तगं तत्रैकभागं संगतं बभौ। निष्कासितुं न शक्तास्ते व्याकुला भयसंयुताः ॥४०॥ शस्त्रैः संछेदितं तैस्तत् शूलाग्रं हस्तगं विधे। यावन्मात्रं मुनेर्हस्ते संस्थितं तत्स्थितं बभौ ॥४१॥ राज्ञा संपूजितो विप्रः प्रययौ यमसन्निधिम्। उवाच कोपरक्ताक्षो यमं यमवतां वरम् ॥४२॥ मांडव्य उवाच। मया किं प्रकृतं कर्म पापरूपं वदस्व माम्। येनाऽहं शूलजं दुःखं प्राप्तः शीघ्रं महाशठ ॥४३॥ तस्य क्रोधयुतं वाक्यं श्रुत्वा भयसमन्वितः। प्रांजलिः प्रत्युवाचेदं वचनं कर्मसूचकम् ॥४४॥ यम उवाच। बालभावे त्वया ब्रह्मन् कीटः कंटकवेधितः। तत्कर्मणः फलं प्राप्तं तदेव मुनिसत्तम ॥४५॥ तस्य तद्वचनं श्रुत्वा क्रोधयुक्तो महामुनिः। जगाद धर्मराजं तं मांडव्यश्च प्रजापते ॥४६॥ अहो बालस्वभावेन कृतं कर्म मया किल। अज्ञानेन महामूर्ख तस्येदं किं फलं भवेत् ॥४७॥ अतो नीतिविहीनस्त्वं पतिष्यसि धरातले। शूद्रयोनौ शतं वर्षाणि भुक्त्वा पुनरेष्यसि ॥४८॥ अधुनाऽहं करोम्येतां मर्यादां शृणु भानुज। अष्टवर्षवयोयुक्तैः कृतं कर्म हि निष्फलम् ॥४९॥ मम वाक्येन भवतु गणराजप्रसादतः। तदादि बालकैः कर्म कृतं तन्निष्फलं भवेत् ॥५०॥ मांडव्यः स्वाश्रमे गत्वा तताप तप उत्तमम्। एकाक्षरविधानेन तोषयामास विघ्नपम् ॥५१॥ कवचस्य प्रसादेन शूलाग्रं तस्य हस्तगम्। बभूव मांसरूपं तु यथापूर्वं करो बभौ ॥५२॥ अणिमांडव्यको नाम्ना तदादि स बभूव ह। स्वल्पकालेन योगीशो गाणपत्यप्रियोऽभवत् ॥५३॥ नित्यं गणपतेर्विप्रो मूर्तिपूजापरोऽभवत्। सदा गणेशभावज्ञः सर्ववंद्यो महायशाः ॥५४॥ मांडव्यचरितं पुण्यं यः शृणोति नरोत्तमः। पठेद्वा तस्य विघ्नेशः प्रसन्नो जायते सदा ॥५५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते मांडव्यचरितं नाम चत्वारिंशोऽध्यायः ॥

।। श्रीगणेशाय नमः ।। मुद्गल उवाच । धृतराष्ट्रं च जन्मांधं त्यक्त्वा पांडुं प्रचक्रिरे । राजानं ब्राह्मणाः सर्वे स विजिग्ये वसुंधराम् ।।१।। छत्रादि राजचिह्नैस्तं ज्येष्ठं भक्तिपरायणः । धृतराष्ट्रं चकाराऽसौ पांडुः परपुरंजयः ।।२।। धृतराष्ट्रस्य भार्याऽभूद्गांधारी च पतिव्रता । पांडोः कुंती तथा माद्री भार्ये द्वे प्रबभूवतुः ।।३।। भार्याभ्यां संयुतो राजा वनं पांडुर्जगाम ह । क्रीडार्थं तत्र नित्यं स रेमे हर्षेण संयुतः ।।४।। मृगरूपधरं राजा मुनिं जघ्ने शरेण सः । मृगयासक्तं शशापाऽसौ राजानं मरणोन्मुखः ।।५।। भार्यासंसक्तरूपं मां हतवांश्च नृपाधम । अतस्त्वं भार्यया सक्तो मैथुनाय भविष्यसि ।।६।। तदा ते मरणं सद्यो मम वाक्याद्भविष्यति । इत्युक्त्वा देहसंत्यागं चकार द्विजसत्तमः ।।७।। श्रुत्वा शापं महाघोरं राज्यं त्यक्त्वा वने स्थितः । भार्याभ्यां सहितः पांडुः कंदमूलादि भक्षयन् ।।८।। ततः कुंत्यां समुद्भूतो धर्माद्धर्मभृतां वरः । युधिष्ठिरो महाभागो मंत्रसामर्थ्यकारणात् ।।९।। वायोश्च भीमसेनो वै बभूव बलसंयुतः । इंद्रात् कुंत्यामर्जुनः स धनुर्विद्यापरायणः ।।१०।। अश्विभ्यां नकुलस्तद्वत् सहदेवश्च वीर्यवान् । माद्र्यां धर्मरतौ दक्ष रूपलावण्यसंयुतौ ।।११।। गांधार्यां च शतं पूर्णं पुत्राणाममितौजसाम् । बभूव पुत्रिका दक्ष रूपलावण्यसंयुता ।।१२।। पांडुः शापविमोहेन माद्र्यां सक्तो ममार ह । सा वै सहगता जाता कुंती पुत्रानपालयत् ।।१३।। ब्राह्मणैः सा महाभागैरानीता हस्तिनापुरे । पुत्रैः कुंती तथा भीष्मादिभिः संमानिताऽवसत् ।।१४।। ततो बहौ गते कालेऽनुजैर्दुर्योधनः स ह । पांडवान् द्वेषसंयुक्तोऽपीडयत् स विषादिना ।।१५।। दग्धुं तेनैकदा लाक्षागृहे संस्थापिताः किल । पांडवाः सह मात्रा ते रक्षिताः कर्मणा तदा ।।१६।। इत्यादिविविधैर्भावैः द्वेषयुक्तः स दुर्मतिः । पीडयामास तान् शूरांस्ततो भीष्म उवाच ह ।।१७।। अर्धं राज्यं च संगृह्य पुराद् गच्छंतु पांडवाः । इंद्रप्रस्थं ततो जग्मुर्धृतराष्ट्रप्रचोदिताः ।।१८।। तत्र दिग्विजयं कृत्वा श्रिया युक्ताश्च तेऽभवन् । कृष्णस्तेषां महाभागः पक्षग्राही बभूव ह ।।१९।। राजसूयमखं कृत्वा शुशुभुः पांडवास्ततः । यत्र दुर्योधनो राजाऽभवन्मनसि दुःखितः ।।२०।। धृतराष्ट्रेण दुर्बुद्धिरानयामास पांडवान् । द्यूतेन तान् महाभागान् जित्वा संहर्षितोऽभवत् ।।२१।। वनेषु स्थापयामास पांडवान् साहसप्रियः । वर्षाणि द्वादशाऽथैकं वर्षं गुप्ततया तथा ।।२२।। त्यक्त्वा राज्यादिकं सर्वं पांडवा वनमाययुः । तत्राऽजगाम तान् कृष्णो बलभद्रेण संयुतः ।।२३।। पांडवान् सांत्वयामास क्रोधयुक्तो बभूव सः । दुर्योधनं हनिष्यामि महादुष्टं युधिष्ठिर ।।२४।। कुरु राज्यं मया दत्तं शत्रुहीनं विशेषतः । ब्रुवंतं तं ततः कृष्णं जगाद स युधिष्ठिरः ।।२५।। धर्मयुक्ततया राज्यं

करिष्यामि जनार्दन। अहं नाधर्मसंयुक्तं राज्यमिच्छामि पापदम् ॥२६॥ अतः कोपं महाबाहो नियच्छ मम वाक्यतः। वद त्वं धर्मसंयुक्तमुपायं राज्यलाभदम् ॥२७॥ ततः कृष्णः स्वयं तत्र कोपहीन उवाच ह। युधिष्ठिरं स द्रौपद्या भ्रातृभिस्तं समन्वितम् ॥२८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते युधिष्ठिरकृष्णसमागमो नामैकचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। शृणु दक्ष महाभाग चरितं विघ्नपस्य च। कृष्णः संकथयामास पांडवानमितद्युतिः ॥१॥ श्रीकृष्ण उवाच। युधिष्ठिर महापुण्यशील: शृणु वचो महत्। येन त्वं संकटेभ्यश्च मुक्तः सन् सुखमाप्स्यसि ॥२॥ इतिहासं पुरावृत्तं कथयामि समासतः। सर्वविघ्नहरं पुण्यं महोदरगुणैर्युतम् ॥३॥ एकदा देवदेवेशो विष्णुर्वैकुंठसंस्थितः। लक्ष्म्या सह विलासेन विष्वक्सेनादिभिर्वृतः ॥४॥ गरुडेन समीपस्थेन सदा हर्षसंयुतः। अप्सरोभिश्च गंधर्वैर्देवैः संसेवितो बभौ ॥५॥ तमुवाच महाभागं भगवंतं सनातनम्। शृण्वत्सु सर्वदेवेषु लक्ष्मीर्विनयसंयुता ॥६॥ श्रीलक्ष्मीरुवाच। स्वामिन्निच्छामि विज्ञप्तुं मम त्वं सततं गतिः। स्त्रीणां भर्तृसमं नैवास्ति किंचिद्वेदभाषितम् ॥७॥ त्वं साक्षाद्देवदेवेशः शंकराद्यैः सुसंस्तुतः। षडैश्वर्यसमायुक्तो भक्तेभ्यः सिद्धिदायकः ॥८॥ देवादीनां पदप्राप्तिस्त्वत्तो नैवात्र संशयः। सर्वेभ्यो भुक्तिदाता त्वं मुक्तिदाता तथा भवान् ॥९॥ सर्वेषां पालकस्त्वं वै तव पाता न विद्यते। तदपि ध्यानसंयुक्तो भजसे कं वदस्व मे ॥१०॥ एकांते पूजयसि कं देवं त्वं विष्टरश्रवाः। आनंदं परमं ब्रह्म तदेव त्वं श्रुतेर्मुखात् ॥११॥ विस्मापयति मां चित्ते त्वया ध्यानं कृतं प्रभो। अधुना त्वां च निर्लज्जा नाथ पृच्छामि ते नमः ॥१२॥ संशयच्छेदनार्थं मां वद विष्णो विशेषतः। दासीं ते पादपद्मस्य द्वंद्वहीनः सदा मतः ॥१३॥ सर्वत्र समरूपस्त्वं सदाऽऽनंदमयस्ततः। तस्मात्परं किमत्राऽस्ति कथं मोहयसे जनान् ॥१४॥ ध्यानेन पूजनेनैव फलं किं ते भविष्यति। तथाऽपि त्वं किमर्थं भो ध्यानयुक्तोऽसि केशव ॥१५॥ श्रीकृष्ण उवाच। इति प्रियावचः श्रुत्वा तां प्रहस्य जनार्दनः। समालिंग्य प्रजानाथ उवाच जलधेः सुताम् ॥१६॥ श्रीविष्णुरुवाच। शृणु प्रिये प्रवक्ष्यामि त्वया पृष्टं शुभप्रदम्। तारकं सर्वभूतानां सर्वेभ्यः सिद्धिदायकम् ॥१७॥ न करोमि जनानां वै ध्यानं मोहाय नित्यदा। कुलदेवं गणेशानं भजामि सर्वभावतः ॥१८॥ गुणेश्वराद्वयं देवि समुत्पन्ना महेश्वराः।

पंच देवा महाभागे तेन संस्थापिताः पदे ॥१९॥ गुणेशेन तपस्तप्त्वाऽऽराधितो गणनायकः । गणेशेन गुणेशश्च स्थापितः स्वपदे पुरा ॥२०॥ ज्ञानसत्तादिसंयुक्तो जातस्तद्वरदाननतः । सोऽपि तं भजते देवि गणेशं भक्तिसंयुतः ॥२१॥ प्रसेव्य तं महेशाना गणेशं सर्वदं वयम् । जाता ज्ञानादिसंयुक्ताः स्वस्वकार्यप्रवर्तकाः ॥२२॥ अतस्तं भावसंयुक्ता भजामो नित्यमादरात् । स वै सर्वार्थदोऽस्माकं कुलदेवः प्रकीर्तितः ॥२३॥ विष्णोर्वचनमाकर्ण्य लक्ष्मीर्विस्मितमानसा । जगाद तं महाविष्णुं विनयेन समन्विता ॥२४॥ श्रीलक्ष्मीरुवाच । कोऽसौ गणेश्वरो नाम वद तस्य विशेषतः । स्वरूपं कुलदेवस्य भजिष्यामि जनार्दन ॥२५॥ श्रीविष्णुरुवाच । सम्यक् पृष्टं त्वया देवि शृणु तस्य स्वरूपकम् । वदामि स्नेहयुक्तोऽहं यदि तं बोधयिष्यसि ॥२६॥ स्वानंदे सोऽपि वसति गणेशो ब्रह्मनायकः । स्वानंदः पंचधा जातः शृणु तस्य कथानकम् ॥२७॥ नामरूपात्मकं देवि जगति ब्रह्मणि स्थितम् । तत्र स्वानंदको योगोऽसद्रूपः परिकथ्यते ॥२८॥ असत्यमृतरूपं यत्तत् सदात्मप्रवाचकम् । सत्स्वरूपं च तद्विद्धि सत् स्वानंदः प्रकीर्तितः ॥२९॥ सत्यासत्यविहीनं यत् सत्यासत्यमयं तथा । आनंदात्मकरूपं तत् समस्वानंद उच्यते ॥३०॥ त्रिप्रबोधं त्रिभिर्हीनं मोहहीनं सदा मतम् । नेतिरूपं महाभागे स्वानंदोऽव्यक्त उच्यते ॥३१॥ चतुर्णां योगभावोऽयं समाधिर्जायते किल । स्वानंदः पंचमो ह्यत्र सर्वसंयोग उच्यते ॥३२॥ स वै मायामयः प्रोक्तो गणेशो वेदवादिभिः । चतुर्धा रचितं तेन तेषु खेलति नित्यदा ॥३३॥ मायाहीनतया ढुंढिरभूत् सोऽयोगवाचकः । न तत्र कस्य संयोगो बुधैस्तस्यापि कथ्यते ॥३४॥ मायायुक्तविहीनत्वं तदेव भ्रांतिदायकम् । ताभ्यां हीनो गणेशोऽयं योगरूपः प्रकथ्यते ॥३५॥ तत्र शांतिर्भवेद्देवि योगिनां नात्र संशयः । अतो योगस्वरूपा सा कथ्यते शांतिरुत्तमा ॥३६॥ मनोवाणीमयं सर्वं गकाराक्षरवाचकम् । मनोवाणीविहीनं वै णकाराक्षररूपकम् ॥३७॥ तयोः स्वामी गणाधीशः पश्य वेदे शुचिस्मिते । अतस्तं भक्तिसंयुक्तो भजेऽहं सर्वनायकम् ॥३८॥ भ्रमरूपां महामायां सिद्धिं जानीहि मानदे । सिद्ध्यर्थं सर्वलोकाश्च विभ्रमंतीश्वरा अतः ॥३९॥ भ्रमधारकरूपां वै बुद्धिं जानीहि निश्चितम् । सिद्ध्या बुद्ध्या च तत्रैव भ्रमोत्पत्तिः प्रजायते ॥४०॥ तयोः स्वामी सदायोगशांतिरूपोऽयमुच्यते । तस्यैव भजने देवि ब्रह्मभूता भवंत्यतः ॥४१॥ इत्युक्त्वा विररामाऽथ स्वयं नारायणः प्रभुः । श्रुत्वा समुद्रपुत्री सा विस्मिता मानसेऽभवत् ॥४२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते लक्ष्मीनारायणसंवादवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥



|| श्रीगणेशाय नमः || श्रीकृष्ण उवाच । शृणु धर्म महाभाग कथां पापापनोदिनीम् । लक्ष्मीस्तं पुनरप्याह गणेशज्ञानलालसा ||१|| श्रीमहालक्ष्मीरुवाच । भगवन् भवता प्रोक्तं महाशांतिप्रदं परम् । तथाऽपि मे सुशांत्यर्थं तत्रोपायं वदस्व मे ||२|| श्रीनारायण उवाच । षडक्षरेण मंत्रेण यदि तं साधयिष्यसि । तदा ते गणनाथः स प्रत्यक्षं प्रभविष्यति ||३|| तस्य दर्शनमात्रेण शांतिं प्राप्स्यसि निश्चितम् । तमाराधय यत्नेन तपसा योगभाविता ||४|| एवमुक्त्वा महाविष्णुर्गणेशस्य ददौ मनुम् । षडक्षरं महालक्ष्म्यै विधियुक्तं विधानतः ||५|| ततः सा तं प्रणम्यैव तपसे वनमाययौ । हिमाचलशिरःसंस्था तताप तप उत्तमम् ||६|| षडक्षरविधानेन ध्यात्वा देवं गजाननम् । जजाप मंत्रराजं तं नासाग्रनयना सती ||७|| चित्तस्य चेंद्रियाणां संस्थाप्य वृत्तिं गजानने । निराहारयुता देवी बभूव तपसि स्थिता ||८|| शतवर्षे गते पूर्णे सास्थिचर्माऽवशेषिता । तामाऽऽययौ गणाधीशो भक्त्या बद्धो धरापते ||९|| तमागतं महादेवी प्रणनाम चतुर्भुजम् । महोदरं त्रिनेत्रं च परश्वादिधरं प्रभुम् ||१०|| मूषकध्वजिनं पूर्णं मूषकोपरि संस्थितम् । सिद्धिबुद्धिसमायुक्तं नानाभूषणभूषितम् ||११|| गले चिंतामणिमणिं बिभ्रतं ज्योतिषां पतिम् । शेषनाभिं गजास्यं वै पोतवस्त्रैश्च शोभितम् ||१२|| ततस्तं पूजयामास प्रभुं नानोपचारकैः । प्रणम्योत्थाय तुष्टाव कृत्वा करपुटं सती ||१३|| श्रीमहालक्ष्मीरुवाच । नमो महोदरायैव नानालीलाधराय ते । सदा स्वानंदसंस्थाय भक्तिगम्याय वै नमः ||१४|| चतुर्बाहुधरायैव चतुर्णां चालकाय ते । मूषकारूढरूपाय मूषकध्वजिने नमः ||१५|| अनंताननदेहाय ह्यनंतविभवाय ते । अनंतहस्तपादाय सदाऽनंताय ते नमः ||१६|| चराचरमयायैव चराचरविवर्जित । योगशांतिप्रदात्रे ते सदा योगस्वरूपिणे ||१७|| अनादये गणेशायादिमध्यांतस्वरूपिणे । आदिमध्यांतहीनाय विघ्नेशाय नमो नमः ||१८|| सर्वादिपूज्यकायैव सर्वपूज्याय ते नमः । सर्वेषां कारणायैव ज्येष्ठराजाय ते नमः ||१९|| विनायकाय सर्वेषां नायकाय विशेषतः । ढुंढिराजाय हेरंब भक्तेशाय नमो नमः ||२०|| सृष्टिकर्त्रे सृष्टिहर्त्रे पालकाय नमो नमः । त्रिभिर्हीनाय देवेश गुणेशाय नमो नमः ||२१|| कर्मणां फलदात्रे च कर्मणां चालकाय ते । कर्माकर्मादिहीनाय लंबोदर नमोऽस्तु ते ||२२|| योगेशाय च योगिभ्यो योगदाय गजानन । सदा शांतिघनायैव ब्रह्मभूताय ते नमः ||२३|| किं स्तौमि गणनाथं त्वां सदा ब्रह्मपतिं प्रभो । अतस्त्वां प्रणमाम्येव तेन तुष्टो भव प्रभो ||२४|| धन्याऽहं कृतकृत्याऽहं सफलो मे भवोऽभवत् । धन्यो मे जनको नाथो यया दृष्टो गजाननः ||२५|| एवं स्तुतवती सा तं भक्तियुक्तेन चेतसा । साश्रुयुक्ता ननतैव

बाष्पकंठा युधिष्ठिर ॥२६॥ तामुवाच गणाधीशो वरं वृणु यथेप्सितम् । दास्यामि ते महालक्ष्मि भक्तिभावेन तोषितः ॥२७॥ त्वया कृतं च मे स्तोत्रं भुक्तिमुक्तिप्रदं भवेत् । पठतां शृण्वतां देवि नानाकार्यकरं तथा ॥२८॥ पुत्रपौत्रादिकं सर्वं लभते स्तोत्रपाठतः । धनधान्यादिसंभूतं सुखं विंदति मानवः ॥२९॥ गणेशवचनं श्रुत्वा महालक्ष्मीर्जगाद तम् । हर्षेण महता युक्ता प्रणम्य करसंपुटा ॥३०॥ श्रीमहालक्ष्मीरुवाच । यदि प्रसन्नभावेन वरदोऽसि महोदर । तदा ते भक्तिमुग्रां मे देहि नाथ नमोऽस्तु ते ॥३१॥ अस्माकं कुलदेवस्त्वं तत्र त्वां गणनायक । भजामि भावयुक्ताऽहं तथापि शृणु मे वचः ॥३२॥ मनश्चंचलभावेन संसारे गच्छति प्रभो। संसारः पुत्रमोहाख्यस्तदर्थं भ्रमते सदा ॥३३॥ अतस्त्वं पुत्रभावेन भव मे विघ्नवारण। तत्र त्वां पुत्रवात्सल्येन भजामि निरंतरम् ॥३४॥ देवभावेन ते मूर्तिं गजवक्त्रादिचिह्नितान् । भजामि च तथा त्वाहं संसारे पुत्ररूपिणम् ॥३५॥ योगरूपः स्वयं साक्षाद्यदि पुत्रो भविष्यसि । तेन योगस्वरूपा सा शांतिः प्राप्ता न संशयः ॥३६॥ तव माता पिता चैव बंधयुक्तौ यदि प्रभो । तदा वेदादिकं सर्वं मिथ्यारूपं भविष्यति ॥३७॥ अतो मे पुत्रतां याहि तयाऽहं गणनायक । भजामि ब्रह्मभूता न संदेहो भक्तिसंयुता ॥३८॥ मह्यमेष वरो नाथ दातव्यः करुणानिधे । नान्यं याचे महाभाग देवदेवेश ते नमः ॥३९॥ इति लक्ष्म्या वचः श्रुत्वा हर्षयन् स महोदरः । उवाच तां सुभावज्ञो भावपूर इति स्मृतः ॥४०॥ गणेश उवाच । तव पुत्रो भविष्यामि ज्ञानारेर्नाशनाय च । दैत्यस्य ते प्रसेवार्थं भक्तिग्रहणलालसः ॥४१॥ यद्यदिच्छसि तत्तत्त्वं लभसे देवि निश्चितम् । मदीयवरदानेन योगिवंद्या भविष्यसि ॥४२॥ आदौ त्वया महादेवि मदीयं भजनं कृतम् । तेन शांतियुता जाता योगस्था मोहवर्जिता ॥४३॥ ततस्त्वां तपसा विप्रो भृगुः पुत्रीं चकार ह । सा त्वं नष्टा द्विजस्यैव शापतो मोहसंयुता ॥४४॥ समुद्रेण ततो देवि तथैवाऽऽराधिता पुरा । तस्य पुत्रीत्वमापन्ना त्वं विष्णोर्दयिता सदा ॥४५॥ तेन ते विस्मृतिर्जाता मदीया नात्र संशयः । विष्णुना बोधिता मां त्वं प्राप्ता योगस्य सेवया ॥४६॥ अधुना स्मर सर्वं तत् स्मारितं ते मयाऽनघे । विष्णुनाऽप्यादिकालेऽहं पुत्रार्थं याचितोऽभवम् ॥४७॥ त्वं तथा पुत्रभावार्थं याचसे मां समुद्रजे । करोमि ते हितं देवि विष्णोश्चैव न संशयः ॥४८॥ एवमुक्त्वा गणेशस्तां ययौ स्वानंदके पुरे । अंतर्धाय स्वमात्मानं लक्ष्मीः खिन्ना ततोऽभवत् ॥४९॥ स्मृत्वा योगबलेनैव पुरातनभवां कथाम् । विस्मिता मानसे जाता सस्मार द्विरदाननम् ॥५०॥ मूर्तिं तत्र प्रतिष्ठाप्य ब्राह्मणैर्वेदपारगैः । पूजयित्वा ययौ स्थानं लक्ष्मीर्भक्तिसमन्विता ॥५१॥

प्रणम्य तं महाविष्णुं जगाद सर्वमंजसा । वृत्तांतं सोऽपि तं श्रुत्वा हर्षितस्तामुवाच ह ॥५२॥ धन्याऽसि जलधेः पुत्रि साक्षाद् दृष्टस्त्वया विभुः । पुत्रभावेन ते गेह आगमिष्यति विघ्नपः ॥५३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते महालक्ष्मीवरप्रदानवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ युधिष्ठिर उवाच । तव कृष्णमुखांभोजान्निःसृतां सर्वपावनीम् । कथां श्रुत्वा न मे तृप्तिर्जायतेऽमृतपानवत् ॥१॥ ज्ञानारिर्नाम दैत्येशः कस्य पुत्रो बभूव ह । किं कर्म तस्य यत् कृष्ण चेष्टितं वद विस्तरात् ॥२॥ यदर्थं गणराजः स देहधारी बभूव ह । न सामान्यं चरित्रं वै दैत्येशस्य जगद्गुरो ॥३॥ कथं विष्णोश्च पुत्रोऽभूद्गणेशो ब्रह्मनायकः । चरित्रं किं कृतं तेन विस्तराद्वद केशव ॥४॥ मुद्गल उवाच । युधिष्ठिरस्य भावं स ज्ञात्वा वृष्णिकुलोद्भवः । नारायणः कथां तस्मा अवदद्भवनाशिनीम् ॥५॥ श्रीकृष्ण उवाच । युधिष्ठिर कथां रम्यां शृणु पापापनोदिनीम् । ब्रह्मभूयप्रदां ढुंढेः सुचरित्राश्रितां प्रभोः ॥६॥ दुर्बुद्धिर्नाम दैत्येशो हतो विघ्नहरेण च । शिवपुत्रस्वरूपेण त्रैलोक्यविजयी पुरा ॥७॥ तस्य पुत्रोऽयमुत्पन्नः संस्थितः स्वगृहे तथा । बालभावाच्च धर्मज्ञाऽभवत् ज्ञानारिनामकः ॥८॥ प्रह्लादः स्वसुतां तस्मै ददौ हर्षसमन्वितः । रूपलावण्यसंयुक्तां सुकलां नामतः स्वयम् ॥९॥ स तु यौवनमापन्नो दुर्मतिं पितरं सदा । सस्मार दुःखसंयुक्तो गणेशेन हतं पुरा ॥१०॥ स शुक्रमुपसंगम्य विद्यां पंचाक्षरीमगात् । शैवीं तया वने गत्वाऽऽराधयामास शंकरम् ॥११॥ वायुभक्षो महादैत्यो ज्ञानारिर्यत्नमास्थितः । तताप तप उग्रं स वर्षाणामयुतं प्रभो ॥१२॥ ततस्तं प्रययौ शंभुः पार्वत्या सहितः स्वयम् । उवाच तं महाभक्तं भक्तवाञ्छाप्रपूरकः ॥१३॥ श्रीशिव उवाच । वरं वृणु महाभाग तपसा तोषितस्त्वया । दास्यामि वाञ्छितं दैत्य यद्यपि स्यात् सुदुर्लभम् ॥१४॥ शिवस्य वचनं श्रुत्वा प्रबुद्धो दैत्यपुंगवः । दृष्ट्वा शंभुं मुदा युक्तः प्रणनाम कृतांजलिः ॥१५॥ प्रणम्य पूजयामास ततस्तं दैत्यपः पुनः । तुष्टाव सुस्थिरो भूत्वा शंकरं भक्तवत्सलम् ॥१६॥ ज्ञानारिरुवाच । नमस्ते शंकरायैव पार्वतीसहिताय ते । वृषध्वजाय शैलादिवाहनाय नमो नमः ॥१७॥ अव्यक्तदेवाय च शिवाय शूलप्रधारिणे । निर्गुणाय गुणानां ते चालकाय नमो नमः ॥१८॥ सदाशिवाय मायाया आधाराय नमो नमः ।

मायामोहविहीनाय शंभवे ते नमो नमः ॥१९॥ सृष्टेः कर्त्रे च पात्रे ते संहर्त्रे त्रिस्वरूपिणे । अनाथाय च सर्वेषां नाथाय परमात्मने ॥२०॥ चराचरस्वरूपाय नमोऽचरचरात्मने । महादेवाय देवानां पतये ते नमो नमः ॥२१॥ मनोवागतिरूपाय योगिध्येयाय ते नमः । योगिनां पतये चैव महेश्वर नमोऽस्तु ते ॥२२॥ धन्यो वंशो मदीयोऽद्य येन दृष्टो महेश्वरः । तपो ज्ञानं पिता माता धन्या मे नाऽत्र संशयः ॥२३॥ प्रसन्नोऽसि महेशान तदा देहि महाप्रभो । चराचरस्य वै राज्यं तस्मान् मृत्युर्न मे भवेत् ॥२४॥ यद्यदिच्छामि देवेश तत्तत् सिद्ध्यतु सर्वदा । आरोग्यादि समायुक्तं मां कुरुष्व सदाशिव ॥२५॥ तथेति शिव ऊचे तमंतर्धानं चकार ह । स दैत्यो हर्षितोऽत्यंतं स्वगृहं प्रत्यपद्यत ॥२६॥ ज्ञानारिकृतमेतत्तु स्तोत्रं पठति यो नरः । शृणोति शंकरस्तस्मै वाञ्छितं ददते परम् ॥२७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते ज्ञानारिवरप्राप्तिवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ श्रीकृष्ण उवाच । ज्ञानारिर्वरसंयुक्तोऽभवद्दैत्यैः प्रपूजितः । शुक्रेणाऽऽगत्य विप्रैः सोऽभिषिक्तो राज्यकर्मणि ॥१॥ नमुचिः शंबरः कालासुरश्चैव प्रतापवान् । जंभो बलासुरः पंच प्रधानास्तस्य चाऽभवन् ॥२॥ नानादैत्यगणैर्युक्तः पृथिवीं सप्तसागराम् । दैत्यो विजिग्ये सद्वीपां तथा पातालमोजसा ॥३॥ ततः स्वर्गं ययौ दैत्यो दैत्यपैश्च समावृतः । इंद्रः सुरगणैः सार्धं पपाल भयसंकुलः ॥४॥ ज्ञानारिः सत्यलोकं च ययौ दैत्यसमन्वितः । तत्र ब्रह्मस्थितो देवैर्ज्ञात्वा दैत्यं पपाल सः ॥५॥ विष्णुर्वैकुंठमुत्सृज्य पपाल च युधिष्ठिर । दैत्यस्तत्र समागम्य हर्षितः संबभूव ह ॥६॥ जगाम तत आनंदात् कैलासं दैत्यनायकः । शंकरं प्रणिपत्याऽऽह कैलासं देहि मे प्रभो ॥७॥ नोचेद्युद्धेन जेष्यामि त्वामहं नात्र संशयः । शंकरः क्षुभितो भूत्वा कंपितः प्रददौ तथा ॥८॥ पपाल भयसंयुक्तः सामरः स वनं ययौ । कैलासे संस्थितो दैत्यो ननंद भृशमोहितः ॥९॥ ततः स्वर्गेषु दैत्येशान् स्थापयामास निर्भयः । ययौ स्वनगरे धर्मं दैत्यपैः संवृतो बभौ ॥१०॥ सुकलायां महादैत्यात् पुत्रोऽभूच्च युधिष्ठिर । सुमुहूर्ते महातेजा रूपेणाऽप्रतिमः परः ॥११॥ पुत्रजन्मप्रहृष्टः स ददौ दानानि भूमिप । जातकर्मादिकं कर्म चकार विधिपूर्वकम् ॥१२॥ सदा कर्मविनाशार्थं प्रेषयामास दैत्यपान् । तैः सर्वत्र

कृतो नाशः कर्मणां भूमिमंडले ॥१३॥ न स्वाहा न वषट्कारो न स्वधा कुत्रचित् प्रभो । कर्महीनतया देवा दुःखिता अभवंस्ततः ॥१४॥ उपोषणसमायुक्ता विचारं चक्रुरादरात् । ज्ञानारिनाशनार्थाय न प्रापुस्ते विचक्षणाः ॥१५॥ गते बहुतरे काले किं कुर्यामिति विह्वलाः । तत्र विष्णुरुवाचेदं वचनं हितकारकम् ॥१६॥ श्रीविष्णुरुवाच । चराचरमयं सर्वं तस्मात्तस्य भयं नहि । अतो विघ्नेश्वरं देवा भजामाऽत्र न संशयः ॥१७॥ स वै बुद्धिपतिः साक्षाद्बुद्ध्या छिद्रं प्रकाशयेत् । तेन तं निहनिष्यामः सिद्धिदाता स नो भवेत् ॥१८॥ विष्णोर्वचनमाकर्ण्य साधु साधु दिवौकसः । ऊचुस्तं ते ततो ढुंढिमभजन् भक्तिसंयुताः ॥१९॥ दशाक्षरेण मंत्रेण ध्यात्वा देवं गजाननम् । अतुष्यन्नमराः सर्वे विभो नानातपोन्विताः ॥२०॥ गते वर्षे गणाधीशः प्रसन्नः स समाययौ । रात्रौ स्वप्ने च लक्ष्म्यास्तामुवाच वचनं हितम् ॥२१॥ शृणु मातस्त्वया पूर्वं याचितः पुत्रकाम्यया । सोऽहं ते पुत्रभावेन संस्थितः पश्य भामिनि ॥२२॥ एवमुक्त्वांतर्दधेऽसौ गणेशो गणवल्लभः । लक्ष्म्युत्संगे ततो बालो भूत्वा चिक्रीड विघ्नपः ॥२३॥ जजागार महालक्ष्मीर्गणेशं मनसाऽस्मरत् । ददर्श निजशय्यायां बालं शुंडाधरं परम् ॥२४॥ विस्मिता हर्षिताऽत्यंतं नारायणमुवाच ह । वृत्तांतं सा महाभागा दर्शयामास विघ्नपम् ॥२५॥ सस्त्रीकः प्रणनामाऽथ तुष्टाव गणपं प्रभुम् । गाणपत्यैर्महासूक्तैर्हर्षयुक्तश्च माधवः ॥२६॥ धन्योऽहं सर्वभावेन त्वदंघ्रियुगदर्शनात् । पुत्रभावेन मां पालयसि नाथ न संशयः ॥२७॥ ततस्तत्रामराः सर्वे मुनयश्च समागताः । विस्मितास्तुष्टुवस्तं ते नानास्तोत्रैर्युधिष्ठिर ॥२८॥ ततस्ते जातकर्माऽपि चक्रुः परमभाविताः । एकादशदिने तस्य मुनयो नाम चक्रिरे ॥२९॥ द्वंद्वभावविहीनोऽयं साक्षादानंददायकः । समो द्वंद्वेषु सर्वेषु तद्विकारविवर्जितः ॥३०॥ अतो नामाऽस्य देवेशाः पूर्णानंद इति स्फुटम् । कुरुध्वं सर्वदाऽऽनंददायको नो भविष्यति ॥३१॥ तथेति नाम तैः सर्वैः कृतं तस्य महात्मनः । चकार व्रतबंधं च पंचमे विष्णुरव्ययः ॥३२॥ कश्यपस्य गृहे देव्यौ संभूते पुत्रिकात्मिके । विद्याऽविद्ये ततोऽदित्यां तपसाऽऽराधिते विभो ॥३३॥ तस्मै ददौ मुदा युक्तः कश्यपः संप्रहर्षितः । ननाम पूर्णानंदाय विप्रेशो भक्तिसंयुतः ॥३४॥ द्वादशाब्दवयो युक्तो बभूव गणनायकः । बालक्रीडनकेनैव मोहयामास देवपान् ॥३५॥ स्तनपानादिकं तस्य भोजनाच्छादनादिकम् । लक्ष्मीः स्वयं चकारैव हर्षयुक्तेन चेतसा ॥३६॥ विष्णुस्तं लालयामास नित्यं देवगणैर्वृतः । जामातरं कश्यपश्च तथा विप्रैर्युधिष्ठिर ॥३७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते पूर्णानंदावतारो नाम पंचचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ युधिष्ठिर उवाच । कृष्ण कृष्ण महाभाग वद दैत्यस्य चेष्टितम् । पूर्णानंदः कथं दैत्यं जघान कौतुकं
महत् ॥१॥ चराचराद्भयं तस्य नास्ति नारायण प्रभो । अत आश्चर्यभूतं वै चरित्रं मे प्रभासते ॥२॥ मुद्गल उवाच । युधिष्ठिर-
वचः श्रुत्वा कृष्णस्तं प्रत्युवाच यत् । तदेव शृणु दक्ष त्वं चेष्टितं गणपस्य च ॥३॥ श्रीकृष्ण उवाच । पुत्रो बभूव दैत्यस्य
ज्ञानारेः सर्वसंमतः । एकादशदिने तत्र ब्राह्मणा प्रययुर्गृहम् ॥४॥ सुबोध इति नाम्ना तं चक्रुर्दैत्येशसत्तमाः । द्विजेरिता
द्विजेभ्यस्ते ददुर्दानानि हर्षिताः ॥५॥ स तु ज्ञानसमायुक्तो गाणेशो दैत्यजो नृपः । बालभावेऽपि विघ्नेशं चिंतयामास
सर्वदा ॥६॥ स्तनपानादिकं बालः सस्मार न कदाचन । माता तस्मै यदा स्मृत्वा स्तनपानं ददौ पपौ ॥७॥ एवं सोऽपि
स्वमातृस्थः स्तनपानं चकार ह । सदा ध्यानसमायुक्तः सस्मार गणपं हृदि ॥८॥ ततः पंच तथा सप्त मासास्तस्य गता
विभो । वयसः स तदा चक्रे क्रीडनं शृणु तत्प्रभो ॥९॥ धूलिमध्ये स्वहस्तेन चकार गणपाकृतिम् । चिक्षेप तत्र धूलिं
पूजोपचारककारणात् ॥१०॥ त्रिकालपूजनं तत्र चकार नियमेन सः । ध्यानयुक्तेन विघ्नेशमभजच्च ततः परम् ॥११॥
एकदा भोजनार्थं च संस्थितो दैत्यनायकः । ज्ञानारिस्तं ददर्शैव क्रीडंतं बालभावतः ॥१२॥ गणेशाकारमूर्तिं वै भूमिमध्ये
चकार सः । पूजयामास तां पुत्रस्ततो धूल्युपचारकैः ॥१३॥ ततोऽतिकुपितः पत्नीमूचिवान् विस्मयान्वितः । पितुर्मम
निहंतारं भजतेऽयं तवात्मजः ॥१४॥ अधुना निश्चयाभावान्न सुतं हन्मि ते प्रिये । सावधानमना भूत्वा चेष्टाहीनं सुतं
कुरु ॥१५॥ पितृहंतारमेवायं करोति तनयो यतः । पुनर्दृष्टो मया चेत्तं हनिष्यामि सुतं प्रिये ॥१६॥ सा तथेति तमुचार्य
स्थिता विनयसंयुता । पतिव्रता महाभागा पतिवाक्यपराऽभवत् ॥१७॥ भर्तुर्गमनकाले सा संयता पुत्रमाददे ।
लालयामास तं तत्र न पश्यति यथा नृपः ॥१८॥ ततः सुबोधनामाऽसौ वर्षादूर्ध्वं वयःस्थितः । चकार भाषणं तत्र
वाचाऽस्पष्टस्वरूपया ॥१९॥ नमो हेरंब विघ्नेश गणेशाय महोदर । लंबोदराय विकटाय नमो ढुंढये नमः ॥२०॥
इत्यादिभावयुक्तश्च सस्मार गणपं सदा । अनन्यमनसा धर्मे तथा पूजापरायणः ॥२१॥ माताऽऽगृह्य ततः स्नेहवशात्पुत्रं
युधिष्ठिर । भर्त्रा गमनकाले सा दूरं चक्रे सखीजनैः ॥२२॥ यत्नमास्थाय सा देवी पुत्रं नित्यं ररक्ष ह । कदाचित् सा
स्वपतिनाऽऽज्ञप्ता पुत्रं नयस्व च ॥२३॥ निद्रितोऽयं सुतः स्वामिन्नेवं प्रोच्य महासती । कालातिक्रमणं चक्रे दुःखयुक्ता
युधिष्ठिर ॥२४॥ पंचमे व्रतबंधं च ज्ञानारिस्तस्य हर्षितः । चकार स सुतस्तत्र गणेशं मनसा स्मरन् ॥२५॥ कर्मभंगभयात्

सोऽपि पूजां चक्रे सुमानसीम् । ततः कर्मसमाप्तौ वै ननाम सकलान्नृप ॥२६॥ ततो गुरुकुले राज्ञा स्थापितोऽभूत् सुबोधकः । तत्र दैत्यसुताः सर्वे नानारूपाः स्थिता बभुः ॥२७॥ शुक्रशिष्या महाभागाः तान् सर्वान् यत्नतः सदा । विद्यां तां शिक्षयामासुरासुरीं देवमोहिनीम् ॥२८॥ तत्राऽयं राजपुत्रश्च गुरुभिर्मानितो भृशम् । अतिष्ठद्विघ्नराजं स संस्मरन् भक्तिलालसः ॥२९॥ विद्यां शिक्षयितुं राजपुत्रो गुरुभिरासुरीम् । संमानितश्च तान् सोऽपि नमस्कृत्य स्थितोऽभवत् ॥३०॥ गुरुभिः कथितं यच्च श्रुत्वा विस्मितमानसः । उवाच तान् महाबुद्धिः सुबोधो विषयात्मकान् ॥३१॥ सुबोध उवाच । ब्राह्मणा ब्रह्मनिष्ठाश्च सदा योगपरायणाः । गाणपत्या विशेषेण भजंते गणनायकम् ॥३२॥ भेदाभेदादिभिर्हीने गणेशार्थे विचक्षणाः । मोहदामासुरीं विद्यां त्यक्त्वा वंद्या भवंत्यतः ॥३३॥ भवंतो ज्ञानशीलाश्च किं मां वदथ विप्रपाः । गणेशं सर्वपूज्यं वै त्यक्त्वा मोहप्रदं परम् ॥३४॥ यदा स्वधर्मनिष्ठाश्चेद्ब्राह्मणा वचनं तदा । तेषां ग्राह्यं न संदेहो नान्यथा मोहकं कदा ॥३५॥ गुणयुक्तविहीनाश्चेद्ब्राह्मणा मानवैः सदा । वंदनीया न संदेहः पूज्या सर्वत्र संमताः ॥३६॥ अतोऽहं ब्राह्मणान् सर्वान्नमामि वचनं तथा । हितं चेत्तद् ग्रहीष्यामि नान्यथा गुरवः कदा ॥३७॥ श्रीकृष्ण उवाच । सुबोधस्य वचः श्रुत्वा विस्मितास्ते महर्षयः । ऊचुस्ते दैत्यपुत्रं वै शृणु धर्मं सुखप्रदम् ॥३८॥ दैत्याचार्या ऊचुः । सुबोध त्वं च बालोऽसि योगं वदसि सूत्तमम् । स्वधर्मादि समायुक्तं साक्षाद्योगीश्वरो यथा ॥३९॥ न त्वया वेदविद्या या शिक्षिता सा महामते । तथाऽपि कथमेतत्ते ज्ञानं प्राप्तं वदस्व भोः ॥४०॥ सुबोध उवाच । माता गर्भवती मे गता पितृगृहं एकदा । तत्राऽऽययौ महाभागः शुकः सर्वार्थकोविदः ॥४१॥ तं प्रणम्य स योगीशं प्रह्लादो हर्षसंयुतः । संपूज्य तं महात्मानं पप्रच्छ विनयान्वितः ॥४२॥ प्रल्हाद उवाच । व्यासपुत्र महायोगिन् शुक साक्षाच्छिवः स्वयम् । त्वं जातोऽसि न संदेहो योगींद्राणां गुरोर्गुरुः ॥४३॥ पूर्वपुण्यबलेनैव प्राप्तं ते दर्शनं महत् । अतस्त्वां परिपृच्छामि वद त्वं करुणानिधे ॥४४॥ सर्वमान्यं च सर्वेषां योगशांतिप्रदं भवेत् । नानामतविमोहस्य च्छेदकं वद विस्तरात् ॥४५॥ सुबोध उवाच । प्रह्लादस्य वचो रम्यं श्रुत्वा योगींद्रसत्तमः । जगाद तं महाभागं योगशांतिपरायणम् ॥४६॥ श्रीशुक उवाच । प्रह्लाद त्वं महाभागाऽसि सुज्ञो योगधारकः । अतस्त्वां हि विशेषेण वदामि हितकारकम् ॥४७॥ सर्वमान्यं तथा राजन् सर्वेभ्यः शांतिदायकम् । नानामतेषु सेव्यं यत् कथयामि सविस्तरम् ॥४८॥ एकदा नैमिषारण्ये समाजग्मुर्महर्षयः । ब्रह्मांडस्था महाभागा ब्रह्मयज्ञस्य कारणात् ॥४९॥ यत्र योगमयी

गाथा वर्तते दानवोत्तम । वेदेषु स ब्रह्मयज्ञ इत्युक्तो वेदवादिभिः ॥५०॥ मरीचिः कश्यपश्चैव कण्वोऽत्रिः पुलहः क्रतुः । विश्वामित्रो महातेजा याज्ञवल्क्यस्तथाऽऽरुणिः ॥५१॥ अष्टावक्रो वसिष्ठश्च भरद्वाजः पराशरः । व्यासः परशुरामः श्वेतकेतुर्मुद्गलो मुनिः ॥५२॥ अगस्त्यो हनुमांश्चैव राक्षसश्च विभीषणः । अश्वत्थामा गृत्समदः कृपश्चैव प्रतापवान् ॥५३॥ मार्कंडेयो मृकंडश्च बकदाल्भ्यस्तथा विभो । नारदः कपिलो रैभ्यः कर्दमश्च महायशाः ॥५४॥ एको द्वितस्त्रितश्चैव देवलो ह्यसितस्तथा । पुलस्त्यश्च भृगुश्चैव च्यवनो गौतमो मुनिः ॥५५॥ अंगिरा वै दीर्घतमा उतथ्यो गालवस्तथा । दधीचिरुशना जीवो जमदग्निर्महामुनिः ॥५६॥ वैशंपायन एवं वै शौनकः शुनकः प्रभो । वामदेवः सुमंतुश्च पैलः शाकलको मुनिः ॥५७॥ जैमिनिर्धौम्यकाद्याश्च स शिष्यास्तत्र ते ययुः । अन्ये नाना मुनिवरा हर्षयुक्ता ययुः किल ॥५८॥ दत्तात्रेयश्च दुर्वासा निदाघो भरतो जडः । सनातनः सनंदः सनत्कुमारक आययुः ॥५९॥ अहं रिभूश्च सनक इत्याद्या बहवोऽपरे । अवधूता योगिनश्च जग्मुर्यज्ञस्य दर्शनात् ॥६०॥ इंद्रो ब्रह्मा तथा विष्णुः शंकरो भानुरेव च । सस्त्रीका देवराजाश्च देवा अन्ये समाययुः ॥६१॥ शेषो वासुकिनागश्च कंबलोऽश्वतरस्तथा । तक्षकाद्या महाभागा नागास्तत्र समाययुः ॥६२॥ गंधर्वाश्चारणाश्चैव सिद्धाः साध्यगणास्तथा । आदित्या वसवो यक्षा आययुश्चाप्सरोवराः ॥६३॥ कर्मनिष्ठास्तपोनिष्ठा ज्ञाननिष्ठाश्च योगिनः । नानादेवरताः सर्वे आययुस्तत्र मानद ॥६४॥ प्रह्लाद ब्रह्मयज्ञस्य दर्शनार्थं विशेषतः । तत्रैव निश्चये सक्ताः सर्वमान्येऽभवञ्जनाः ॥६५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते ब्रह्मयज्ञवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ श्रीशुक उवाच । तत्र नानाकथां चक्रुर्नानामतविकासिनीम् । स्वस्वबुद्ध्या विशेषेण मुख्याः प्रह्लाद आदरात् ॥१॥ केचिदाहुर्विधातारं विष्णुं शक्तिं शिवं रविम् । ब्रह्मरूपं गणेशानं नानामतपरायणाः ॥२॥ केचिदन्नं च प्राणं च मनोविज्ञानकं तथा । आनंदं सोऽहमेकं वै चैतन्यं बिंदुकं परे ॥३॥ बोधमात्मानमेके च सांख्यं कर्म तथाऽपरे । सममव्यक्तरूपं ते आहुर्ब्रह्म तथाऽपरम् ॥४॥ स्वसंवेद्यं तथा केचिन्निवृत्तिं शांतिरूपकम् । योगमध्यात्मरूपं त आहुर्वेदपरायणाः ॥५॥ असत्यं सत्यमेके च पूर्णानंदं तथाऽसुर । सहजं च परं ब्रह्म वादयुक्ता बभूविरे ॥६॥

निश्चयस्तत्र दैत्येश न बभूव मतैषिणाम् । स्वस्वज्ञानसमायुक्ता वादं चक्रुरपंडिताः ॥७॥ ततो वादस्य शांत्यर्थमवोचद् विष्णुरव्ययः । सर्वान् समागतांस्तत्र सर्वज्ञः शंकरेरितः ॥८॥ श्रीविष्णुरुवाच । वेदा गुरुस्वरूपाश्च सर्वेषां नात्र संशयः । तैर्यत् संपादितं देव मुनयः सर्व आगताः ॥९॥ संपाद्यतां विशेषेण ब्रह्मणो निश्चयार्थिनः । सुखं तदेव सर्वेषां सर्वमान्यं भविष्यति ॥१०॥ वेदैः स्वानुभवं गीतं याथातथ्यं मुनीश्वराः । अतो वेदैश्च सर्वेषां ज्ञानं संजायते परम् ॥११॥ योगादिभिर्जनाः केचिन् मुनयो देवराक्षसाः । साक्षाद्रूपं च तद्ब्रह्म कुर्वते नात्र संशयः ॥१२॥ तथापि वेदसंमान्यं वचस्तेषां न विद्यते । वेदानां न समो विप्रा योगज्ञः कुत्र दृश्यते ॥१३॥ संपूर्णयोगिनो वेदा अतस्ते गुरवो मताः । महाभागाः स्मरध्वं त्वांस्तदा निःसंशयो भवेत् ॥१४॥ ततो मुनिगणाः सर्वे योगिनो देवनायकाः । साधु साधु समूचुस्तं विष्णुं बुद्धिमतां वरम् ॥१५॥ ततः शंकरमुख्यैस्तैः संस्मृताः कार्यसिद्धये । सांगाः समाययुर्वेदा ओंकारेण समन्विताः ॥१६॥ तान् दृष्ट्वा सहसोत्थाय देवाः सर्षिगणाः परे । प्रणम्य पूजयामासुः कृतांजलिपुटाः पुरः ॥१७॥ आसनेषु समासीनाः सोंकारा वेदमुख्यकाः । ऊचुस्तान् शिवमुख्यान् वै प्रहृष्टमनसोऽभवन् ॥१८॥ वेदा ऊचुः । किमर्थं स्मरणं देवा मुनयश्च कृतं जनाः । अस्माकं ब्रूत कार्यं तत् करिष्यामो न संशयः ॥१९॥ वेदानां वचनं श्रुत्वा शिवस्तानब्रवीद्वचः । विनयेन विशेषज्ञो निश्चयार्थं हितैषिणाम् ॥२०॥ शिव उवाच । ब्रह्मयज्ञः समारब्धोऽस्माभिः सर्वैर्हितेप्सुभिः । तत्र वादसमायुक्ता न तदंतं लभामहे ॥२१॥ अतो भवत्स्मृतिर्वेदाः कृताऽस्माभिर्विशेषतः । निश्चयं गुरवो यूयं वदध्वं भेदनाशकम् ॥२२॥ योगिनो न भवंतीह कदापि च भवत्समाः । भवद्वचःप्रमाणेन योगज्ञा वयमप्युत ॥२३॥ शिवस्य वचनं श्रुत्वा वेदास्तत्र जगुर्वचः । देवान् मुनीन् जनान् सर्वान् दीनपा असुरेश्वर ॥२४॥ वेदा ऊचुः । ब्रह्मयज्ञस्य पारं वै गमिष्यामः कथं वयम् । अक्षरात्मकदेहत्वात्तथापि कथयामहे ॥२५॥ न वयं ब्रह्मरूपाश्च ब्रह्मज्ञाः किंचिदप्यहो । योगमार्गबलेनैव वदिष्यामो यथातथम् ॥२६॥ प्रत्येकनिश्चयं देवाः शृणुत ब्रह्मधारणम् । येन संशयसंहीना गमिष्यथ परां गतिम् ॥२७॥ ब्रह्म नानाविधं प्रोक्तं मया योगबलेन च । प्रज्ञानादिमहावाक्यैस्तेषु योगो विशिष्यते ॥२८॥ सर्वब्रह्मसुयोगस्य स्थानं योगात्मकं भवेत् । योगे ब्रह्माणि सर्वाणि तदाकाराणि वर्णितम् ॥२९॥ न योगात् परमं ब्रह्म योगशांत्या प्रलभ्यते । ब्रह्मणस्पतिरेकोऽयं मया प्रोक्तो गणेश्वरः ॥३०॥ ब्रह्मणां सकलानां च पातृपालयितृत्वतः । तं भजध्वं सुरश्रेष्ठा मुनयो भक्तिसंयुता ॥३१॥

भवंति ब्रह्मभूताः सर्वे जनास्तेन निश्चितम् । एवमुक्त्वा बह्वृचस्तु तूष्णींभावधरोऽभवत् ॥३२॥ ततो यजुः स्वयं साक्षाद-वोचत् सर्वसंसदि । ब्रह्मप्रदं च वचनं तत्र स्वानुभवात्मकम् ॥३३॥ यजुरुवाच । नानाविधं मया ब्रह्म वर्णितं योगसेवया । महावाक्यैश्च सर्वज्ञाः क्रमार्थं नात्र संशयः ॥३४॥ तत्र योगस्वरूपाख्यमात्यं ब्रह्म विशिष्यते । सर्वब्रह्मसुयोगेन योगस्तेन प्रकथ्यते ॥३५॥ तदेव गणराजश्च भक्तैः संप्रार्थितः पुरा । योगप्राप्त्यर्थमत्यंतं तेन साकारकोऽभवत् ॥३६॥ गणः समूह-रूपाख्यः समूहा ब्रह्मरूपिणः । तेषां स्वामी न संदेहस्तं भजध्वं विधानतः ॥३७॥ अन्नानां सकलानां च सदैकानेकरूपिणाम् । समूहे ब्रह्म ज्ञातव्यमन्नात्मकमिति श्रुतिः ॥३८॥ नानाविधानि च ब्रह्माण्येवं भो दैवतर्षयः । ज्ञातव्यानि विचारेण गणरूपाणि निश्चितम् ॥३९॥ अतो गणेशभक्त्या वै सकलं सुलभं भवेत् । ब्रह्मभूयप्रदः प्रोक्तो मया योगेन योगपः ॥४०॥ इत्युक्त्वा विररामाऽथ यजुर्योगविदां वरम् । उवाचाऽथ ततः साम ब्रह्म निर्णयकारणम् ॥४१॥ साम उवाच । योगसेवनसामर्थ्यात् समर्थोऽहं च वर्णने । किंचित् शृणुत देवेशा ब्रह्मणो मुनयो वचः ॥४२॥ प्रोक्तानि नाना ब्रह्माणि महावाक्यादिभिर्मया । पात्रभेदार्थमत्यंतं ज्ञातव्यं योगसेवया ॥४३॥ तत्र शांतिप्रदं ब्रह्म योगाख्यं नात्र संशयः । भवति ब्रह्मणां योगो यत्र तेन च योगकः ॥४४॥ नास्ति योगात् परं ब्रह्म शांतिमार्गेण लभ्यते । तदेव मुनयो देवा गणेशो नात्र संशयः ॥४५॥ मनोवाणी-मयं देवा मया यद्यत् प्रकीर्तितम् । गकाराक्षरसंभूतं ज्ञातव्यं विबुधैः सदा ॥४६॥ मनोवाणीविहीनं यद्वर्ण्यते विविधं तथा । णकाराक्षरगं सर्वं निश्चितं योगसेवया ॥४७॥ तयोः स्वामी गणेशानो योगाकारः प्रकीर्तितः । तं भजध्वं विशेषेण ब्रह्मभूतपदप्रदम् ॥४८॥ नानाभावेन युक्तास्तं भजंते तद्ददाति सः । एवमुक्त्वा महायोगी विरराम स सामगः ॥४९॥ ततोऽथर्वा महायोगी जगाद सकलांस्तदा । ब्रह्मयज्ञस्य वेत्ताऽसौ प्रह्लाद शृणु तद्वचः ॥५०॥ अथर्वा उवाच । आत्माऽहमिति वाक्याद्यैर्ब्रह्म नानाविधं मया । संपादितं च योगेन तदेवोपाधिसंयुतम् ॥५१॥ योगाख्यं परमं ब्रह्म तद्योगेन प्रलभ्यते । संयोगायोगहीनोऽयं योगो ब्रह्म सुतिष्ठति ॥५२॥ शांतिस्तत्र समाख्याता योगे योगविदां वरः । स एव गणनाथस्तु सर्व-शांतिप्रदोऽभवत् ॥५३॥ एक एव गणेशानो जगतां ब्रह्मणां स्वयम् । ईशः समूहरूपाणां योगरूपस्ततः स्मृतः ॥५४॥ सर्वेषामादिरूपोऽयं योगाकारः प्रभावतः । मध्ये नानाविधः स्वांशैर्जगत् सुब्रह्म सुप्रभुः ॥५५॥ अंते स्वयं तथा तिष्ठेत्तेनादौ पूजितोऽभवत् । सर्वपूज्यश्च देवेशा मुनयो निश्चयार्थिनः ॥५६॥ य आदिः सोंऽतरूपस्तु भवते सर्वसंमते ।

मध्ये मायाविहारेण भेदाभेदयुतोऽभवत् ॥५७॥ अतस्तं योगरूपाख्यं भजध्वं योगसेवया । भविष्यथ ब्रह्मभूता ब्रह्मयज्ञस्य पारगाः ॥५८॥ एवमुक्त्वा महायोगी विरराम महामते । अथर्वा सर्वयोगज्ञस्तत्रोंकारोऽब्रवीद्वचः ॥५९॥ ओंकार उवाच । चतुर्वेदप्रचुरोऽहं मया योगस्य सेवया । ब्रह्म साक्षात् कृतं देवास्तेन योगिमतोऽभवम् ॥६०॥ मयोपदेशिता वेदाः साधयामासुरन्वहम् । योगं ब्रह्मप्रदं तेन ब्रह्मज्ञाः सर्वसंमताः ॥६१॥ योगात् परं न विद्येत ब्रह्म सर्वत्र संमतम् । जगत् सुब्रह्म सुप्रोक्तं योगेन ब्रह्म शाश्वतम् ॥६२॥ तदेव गणराजो वै निश्चितो योगिभिः सदा । संयोगायोगभावेन क्रीडते योगरूपधृक् ॥६३॥ सिद्धिर्भ्रांतिमयी माया बुद्धिर्भ्रांतिधरा मता । तयोः स्वामी गणेशानो मायाभ्यां खेलते विभुः ॥६४॥ भुक्तेः सिद्धिस्तथा मुक्तेः सिद्धिर्ब्रह्मप्रदायिनी । चित्तं पंचविधं बुद्धिस्तयोर्योगेन लभ्यते ॥६५॥ स्वसंवेद्यात्मकं ब्रह्म वेदेषु कथितं परम् । सर्वसंयोगरूपाख्यं तत्राऽयं दृश्यते स्वयम् ॥६६॥ तेन स्वानंदवासी च मायायुक्तः प्रकीर्तितः । अयोगे दर्शनं तस्य जायते न कदाचन ॥६७॥ निर्मायिकस्ततः प्रोक्तस्तयोर्योगेन लभ्यते । गकारश्चैव संयोगो णकारोऽयोग उच्यते ॥६८॥ तेन नाम्ना समाख्यातो गणेशो वेदवादिभिः । तं भजध्वं विशेषेण ब्रह्मीभूतस्य कारणात् ॥६९॥ ब्रह्मभूता द्विजा देवा भविष्यथ न संशयः । एवमुक्त्वा तदोंकारस्तूष्णीमासीन् महामते ॥७०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते ब्रह्मयज्ञे वेदनिर्णयो नाम सप्तचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ श्रीशुक उवाच । सोंकारवेदमुख्यानां वचनं हितकारकम् । श्रुत्वा जहृषिरे नागादयः सर्षिगणाः सुराः ॥१॥ त्यक्त्वा स्वस्वमतं सर्वे तान् प्रणम्य प्रपूज्य वै । ओंकारादीन् महाभागा ऊचुः प्रांजलयो वचः ॥२॥ देवादय ऊचुः । ओंकारसहिता वेदा भवद्भिः कथितं वचः । तदेव सर्वमान्यं वै ब्रह्मभूयप्रदं भवेत् ॥३॥ सर्वेषां गुरवः प्रोक्ता वेदास्तैः कथितं भवेत् । तदेव करणीयं यद् गतिदं सर्वसंमतम् ॥४॥ वेदाधारविहीनं यत्त्याज्यं सर्वैर्न संशयः । नो चेन्नरकगो भूत्वा यातनां लभते नरः ॥५॥ ब्रह्मयज्ञस्य पारं वै भवंतो देवनायकैः । मुनिभिर्जनसंघैश्च गता भवथ निश्चितम् ॥६॥ देवादयो महाभागा एवमुक्त्वा विशेषतः । प्रह्लाद तुष्टुवुर्वेदमुख्यांस्ते हर्षसंयुताः ॥७॥ पूजितास्तैरुक्तवेदाः सोंकारा दैत्यनायक ।

अंतर्दधुस्ततः सर्वे हृष्टाः स्थानं ययुः स्वकम् ॥८॥ एवं सर्वैः पुरा साधो ब्रह्मयज्ञः कृतोऽभवत् । तेन संशयहीनास्ते भजंते गणनायकम् ॥९॥ एतत्ते कथितं पूर्णयोगशांतिप्रदं परम् । सर्वमान्यं विशेषेण भज तं गणनायकम् ॥१०॥ सुबोध उवाच । एवमुक्त्वा महायोगी शुकश्चांतर्हितोऽभवत् । प्रह्लादो भक्तिसंयुक्तो भजते गणनायकम् ॥११॥ संश्रुतं मातुरुदरसंस्थेन सकलं ततः । मया धृतं विशेषेण तदेवं योगदायकम् ॥१२॥ पूर्वपुण्यबलेनैव स्मृतिर्मेऽत्र प्रसंस्थिता । जनितोऽहमतो विप्रा भजामि गणनायकम् ॥१३॥ एतत् सर्वं मया प्रोक्तं यत्पृष्टं गुरुमुख्यकाः । अतो मे मोहदां विद्यां मा वदेत दयायुताः ॥१४॥ श्रीकृष्ण उवाच । सुबोधस्य वचः श्रुत्वा ब्राह्मणा हर्षसंयुताः । ऊचुस्तं योगनिपुणं भावज्ञा भावसिद्धये ॥१५॥ विप्रा ऊचुः । सुबोध यत्त्वया प्रोक्तं तत्तथा न तदन्यथा । तथापि शृणु वत्स त्वं हितकारकमुत्तमम् ॥१६॥ पितामहो महाभाग दुर्बुद्धिस्ते महासुरः । गणेशेन हतो रोषाद्देवपक्षप्रधारिणा ॥१७॥ तं द्वेष्टि गणराजं च पिता ते पितृवत्सल । पितृद्रुहं ततस्त्वं तं त्यज विघ्नेशमादरात् ॥१८॥ नोचेत्त्वां ते पिता पुत्र हनिष्यति न संशयः । तस्मादाग्रहमत्यंतं मा कुरुष्व महामते ॥१९॥ असुराणां कुले पश्य जनिस्तव हितावहा । स्वकुलस्थस्य मार्गस्य सेवनं कुरु सर्वदा ॥२०॥ तेषां वचनमाकर्ण्य सुबोधो रक्तलोचनः । जगाद तान् द्विजांस्तत्र वचनं धर्मसंयुतम् ॥२१॥ सुबोध उवाच । सर्वत्र योगरूपेण गणेशस्तिष्ठति द्विजाः । स्वस्वधर्मनियंताऽसौ नानाक्रीडापरायणः ॥२२॥ स्वर्गे देवा नराः पृथ्व्यां पाताले तेन दैत्यपाः । स्थापिताः स्वस्वमार्गेषु स्थातव्यं तैर्हितेप्सुभिः ॥२३॥ पितामहश्च मे विप्रास्त्रिलोकी राज्यमुत्कटम् । चकार धर्महीनः स तस्मात्तेन हतो बलात् ॥२४॥ पिता मेऽपि तथा विप्रा धर्महीनतया स्थितः । तं हनिष्यति वेगेन गणेशो नात्र संशयः ॥२५॥ अतः किं गणराजेन विपरीतं कृतं द्विजाः । स्वधर्मस्य प्रियेणैव मां वदेत विशेषतः ॥२६॥ सर्वेषां हितकर्ताऽसौ विघ्नराजो न संशयः । तं भजिष्यामि यत्नेन त्यक्त्वा स्वपितरं खलम् ॥२७॥ गणेशं भजमानं मां वधिष्यति यदा खलः । तदेव मरणं श्रेष्ठं ब्रह्मभूयप्रदं भवेत् ॥२८॥ मशके कुपिते किं वै गृहं त्यक्त्वा मनीषिणः । तिष्ठंति ब्राह्मणाः सर्वे मां वदेत हि सांप्रतम् ॥२९॥ बुद्धेः पतेर्गणेशस्य सत्ता सर्वत्र वर्तते । सिद्धेः पतेर्न संदेहः किं करिष्यति मां पिता ॥३०॥ स्वधर्मः सर्वभूतानां धर्मकामार्थमुक्तये । ब्रह्मभूयार्थमत्यंतं गणेशभजनात्मकः ॥३१॥ तं तादृशं स्वधर्मं किं त्यक्त्वा विषयलंपटः । भविष्याम्यसुराधीनो ब्राह्मणाः कुलपांसवः ॥३२॥ न ब्राह्मणा भवंतोऽपि विषयेषु परायणाः । त्यक्त्वा धर्मं स्थिता अत्र दैत्याधीना

न संशयः ॥३३॥ गणेशभजने सक्ता ब्रह्मभूयपरायणाः । ब्राह्मणास्ते मताः शास्त्रे किं मां वदथ बालिशाः ॥३४॥ श्रीकृष्ण उवाच । शुक्रशिष्यान् प्रजानाथ एवमुक्त्वा महामतिः । सुबोधो गणनाथस्य भजने तत्परोऽभवत् ॥३५॥ नमो गणेशाय नमो महात्मने नमः परेशाय परात्पराय ते । अनादिमध्यांतमयाय ढुंढये नमो नमो विघ्नपते सुशांतिद ॥३६॥ एवं विवदमानं तं ज्ञात्वा काव्यस्य शिष्यकाः । भयभीता विशेषेण ज्ञानारिं ते ययुः प्रभो ॥३७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते शुक्रशिष्यसुबोधसंवादो नामाष्टचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ श्रीकृष्ण उवाच । काव्यशिष्या गतास्तत्र यत्र दैत्याधिपोऽभवत् । सभासनस्थमूचुस्तं दृष्ट्वा भयसमन्विताः ॥१॥ शुक्रशिष्या ऊचुः । ज्ञानारे शृणु वाक्यं नो दारुणं विपरीतगम् । पुत्रस्तेऽभून् मदोत्सिक्तः सर्वदाऽस्मानुपेक्षते ॥२॥ उल्लंघ्य सर्वमस्माभिः कथितं जातिदूषणम् । करोति स्वमतेनायमन्यान् संबोधयंस्तथा ॥३॥ पितृहंतारमत्यंतं सदा स्मरति भक्तितः । तिरस्कृत्य महाराज त्वामस्मान्नात्र संशयः ॥४॥ अतः कथयितुं याताः शिक्षयस्व स्वपुत्रकम् । वयं शिक्षयितुं शक्ता नाविनीतं महामते ॥५॥ श्रीकृष्ण उवाच । तेषां वचनमाकर्ण्य क्षोभितो दैत्यनायकः । प्रेषयामास दूतं स पुत्रमानेतुमंतिके ॥६॥ दूतेनागतमेवं तं पुत्रं दृष्ट्वा महासुरः । उवाच कृतवंतं तं प्रणामं क्रोधसंयुतः ॥७॥ ज्ञानारिरुवाच । किं तिरस्कृत्य रे वत्स गुरून् स्मरसि तद्वद । हितं ते हृदये किं च वर्तते कुलपांसन ॥८॥ पितुर्वचनमाकर्ण्य क्रोधयुक्तः सुबोधकः । उवाच पितरं भ्रांतं मायया गणपस्य सः ॥९॥ सुबोध उवाच । सर्वेषां कुलदेवं च सर्वेषां हितकारकम् । भुक्तिमुक्तिप्रदं तात भजामि गणनायकम् ॥१०॥ ब्रह्मविष्ण्वादिभिर्देवैः कश्यपादिमुनीश्वरैः । पूजितं कुलवृद्ध्यर्थं योगशांत्यर्थमादरात् ॥११॥ कश्यपात् वयमुत्पन्ना देवा दैत्यास्तथा नराः । जंतवो विविधाश्चैव तेषां स्वामी तथाऽभवत् ॥१२॥ भजामि गणनाथं वै अतोऽहं सर्वभावतः । तमनादृत्य दैत्येश न सिद्धिं लभते पुमान् ॥१३॥ तस्य तद्वचनं श्रुत्वा क्रोधयुक्तो महासुरः । जगाद तं धर्मराजमुखादनलमुद्वमन् ॥१४॥ ज्ञानारिरुवाच । अस्माकं शत्रवो देवा दैत्यानां नात्र संशयः । सुरासुराश्च वेदेषु प्रोक्ताः पश्य सुदुर्मते ॥१५॥ तत्राप्ययं पितुर्हंता मम तं भजसे मुधा । बालभावे मया ज्ञातं चेष्टितं ते

रिपुश्रितम् ॥१६॥ बालं मत्वा न दुष्ट त्वां हतवान् कृपया शठ । अधुना तादृशं मत्वा न मुंचामि कदाचन ॥१७॥ त्यज शस्त्रं महामूर्ख नोचेद्धन्म्यधुना किल । एवमुक्त्वा खड्गहस्तो दुद्राव स्वसुतं नृप ॥१८॥ ततस्तं दैत्यराजं स उवाच तनयो वचः । किं धर्षयसि मां तात भ्रांतिभावेन मोहितः ॥१९॥ सर्वसत्ताधरः प्रोक्तो वेदेषु गणनायकः । तस्य सत्तां परित्यज्य किं मां हंसि त्वमेव च ॥२०॥ सुरासुरमयः साक्षाद्गणेशो नात्र संशयः । उद्धतं हंति वेगेन नानारूपधरः प्रभुः ॥२१॥ ब्रुवंतं स्वसुतं दृष्ट्वा भयहीनं युधिष्ठिर । क्रोधयुक्तः स्वयं तत्र संस्थितो दैत्यनायकः ॥२२॥ दूतानाज्ञापयामास शस्त्रास्त्रैः स्वसुतस्य सः । वधार्थं ते दैत्यगणाः क्रोधयुक्ता बभूविरे ॥२३॥ नानानादयुताः सर्वे नग्नशस्त्रधरा ययुः । हंतुं तं तानथो दृष्ट्वा सुबोधो निर्भयो बभौ ॥२४॥ गणेशभजने सक्तो बभूव न चचाल ह । देहप्रारब्धभावेन भवेत्तन् मे गजानन ॥२५॥ विघ्नेश हेरंब जयाखिलेश स्वानंदवासिन् जय वक्रतुंड । नाथोऽसि सर्वत्र जगत् सुढुंढे लंबोदर ब्रह्मसुते नमो वै ॥२६॥ इत्याद्यैर्विविधैर्वाक्यैर्गणेशमभजत् सुतः । तं तथा क्रोधसंयुक्ता जघ्नुर्दैत्या महाबलाः ॥२७॥ नानाशस्त्रनिपातैस्तेऽस्त्रैः सर्वत्र युधिष्ठिर । गणेशस्तस्य देहस्थो निष्फलांस्तांश्चकार ह ॥२८॥ क्रोधानलेन सर्वान् स दाहयामास विघ्नपः । ततः पलायनं चक्रुर्दैत्याः प्राणपरीप्सया ॥२९॥ तत् दृष्ट्वा परमाश्चर्यं ज्ञानारिः क्रोधमूर्च्छितः । श्रेष्ठानाज्ञापयामास वधाय स्वसुतस्य वै ॥३०॥ चतुरंगबलैर्युक्ता दैत्येशास्तं समाययुः । अमोघास्त्रैः सुबोधं ते जघ्नुः परमदारुणाः ॥३१॥ गणेशभक्तिं तां सोऽपि चक्रे वै निर्भयो दृढाम् । जय देवेश विघ्नेश महोदर नमोऽस्तु ते ॥३२॥ तस्य देहान् महानग्निः शस्त्रघातच्छलेन सः । समुत्पन्नः प्रजज्वाल दैत्येशान् क्षणमात्रतः ॥३३॥ ते मेघास्त्राणि ससृजुस्तैर्न शांतो बभूव ह । ददाह सकलांस्तत्र प्रलयाग्निसमश्च तान् ॥३४॥ मृताः सर्वे सुराणां वै नायकास्तत्र भूमिप । ज्ञानारिः परमाश्चर्ययुक्तोऽभूत् खेदसंयुतः ॥३५॥ प्रधानैः स विचार्यैवं पुत्रं तत्याज तत्क्षणात् । शुक्रं तपसि तिष्ठंतं ज्ञात्वा क्रोधं नियम्य च ॥३६॥ मेधावी स यदा शुक्र आगमिष्यति वै गृहे । तदा तेन समायुक्ता हनिष्यामः सुबोधकम् ॥३७॥ एवं निश्चितसंकल्पाः स्थितास्ते दैत्यनायकाः । ज्ञानारिः स तथा चक्रे हृदयेन विदूयता ॥३८॥ सुबोधो गणपं तत्राऽभजत् सोऽनन्यमानसः । निर्भयो दानवान् सर्वान् तृणीकृत्य विशेषतः ॥३९॥ ततस्तेन सुबोधेन दैत्यपुत्रा युधिष्ठिर । शिक्षिताः प्रत्ययं दृष्ट्वा तथा गणपमाभजन् ॥४०॥ सत्यं गणेशमाहात्म्यं महत्तन्नात्र संशयः । संहृत्य दैत्यभूपाला मृताः कक्षवदप्यहो ॥४१॥ एवं विचार्य सर्वत्र बाला



विघ्नेशमादरात् । अभजन् सर्वभावेन तिरस्कृत्य गुरोः सुतान् ॥४२॥ यत्र तत्र गणेशस्य कीर्तनं ह्यर्चनादिकम् । अकुर्वन् दैत्यपुत्रास्ते सुबुधेन समन्विताः ॥४३॥ नमो नमो विघ्नपते गणेश सदा स्वसंवेद्यपुरे निवासिन् । अनादिमध्यांतविहीनकाय सुशांतिदात्रे जय सर्वपूज्य ॥४४॥ एवं दृष्ट्वा स सर्वत्र ज्ञानारिः क्रोधमादधे । सहने न समर्थोऽभून् मतिं चक्रे वधाय वै ॥४५॥ हनिष्यामि सुतं दुष्टं वरयुक्तप्रभावतः । न मे मृत्युर्भवेन्नूनमिति व्यवसितोऽभवत् ॥४६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते सुबोधभक्तिवर्णनं नामैकोनपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ श्रीकृष्ण उवाच । अधुना शृणु धर्मज्ञ देवादीनां वनेषु वै । यज्जातं तत् प्रवक्ष्यामि पूर्णानंदस्य चेष्टितम् ॥१॥ विष्णुमुख्यान् सुरानाह पूर्णानंदः प्रतापवान् । किमर्थं दुःखसंयुक्ता भवंतः सर्वजंतुभिः ॥२॥ ज्ञानारिणा कृतं सर्वं जगत् स्थावरजंगमम् । दुःखयुक्तं विशेषेण तं हनिष्यामि निश्चितम् ॥३॥ मयि पुत्रत्वमापन्ने दुर्लभं किं भविष्यति । तस्माद्देवगणैस्तात गच्छ वैकुंठमादरात् ॥४॥ ज्ञानारिः पुत्रनाशार्थं यतते चाधुना प्रभो । तस्य पुत्रो महाभक्तो मदीयो नात्र संशयः ॥५॥ भक्तरक्षार्थमेवाहं गमिष्याम्यधुना स्वयम् । तं हत्वा सुखमेष्यामि स्वभक्तद्वेषिणं खलम् ॥६॥ चराचरमयात्तस्य भयं नास्ति कदाचन । चराचरमयं सर्वं त्रैगुण्यं नात्र संशयः ॥७॥ अतो द्वंद्वविहीनेन तं रूपेण महासुरम् । हनिष्यामि स्वभक्तार्थं पश्य मे त्वं कुतूहलम् ॥८॥ एतस्मिन्नंतरे चैव ज्ञानारिः खड्गमादधौ । सुबोधं हंतुमत्यंतं क्रोधयुक्तो युधिष्ठिर ॥९॥ ज्ञानारिं तादृशं दृष्ट्वा सुबोधो भक्तिसंयुतः । गणेशस्य जगादाऽपि तच्छृणुष्व युधिष्ठिर ॥१०॥ सुबोध उवाच । अहंकारेण संयुक्तस्तात त्वं मायया भृशम् । न जानासि गणेशानं चित्ते संस्थितमेव ते ॥११॥ चिंतामणिः स वेदेषु कथितो वेदवादिभिः । तं गच्छ शरणं तात नोचेत्त्वं वै मरिष्यसि ॥१२॥ न ते भयेन भावेन त्यजेयं विघ्ननायकम् । किमु भ्राम्यसि मूर्ख त्वं सत्ताधारं न पश्यसि ॥१३॥ इति पुत्रं ब्रुवंतं स जघान दृढरोषतः । खड्गेन तीक्ष्णधारेण स खड्गो निष्फलोऽभवत् ॥१४॥ ततो नानास्त्रवर्षैस्तमवर्षद्दैत्यनायकः । तानि निष्फलरूपाणि बभूवुश्च युधिष्ठिर ॥१५॥ अग्न्यस्त्रादीनि शस्त्राणि निष्फलानि महासुरः । वीक्ष्य विस्मितचित्तोऽसौ मल्लयुद्धोद्यतोऽभवत् ॥१६॥ पुत्रं पादे शिलायां

स संगृह्याऽऽस्फालयद्यदा । तावत् स्वयं पपातैव मूर्च्छितस्ताडितोऽभवत् ॥१७॥ अदृश्यरूपभावेन हतो विघ्नविनाशिना । पुनः संज्ञासमायुक्तोऽपश्यत्पुत्रं सुदुर्मतिः ॥१८॥ गणेशभजने सक्तं वीक्ष्य विस्मितमानसः । विचारं हृदये सोऽपि चकार परमाद्भुतम् ॥१९॥ अहो मां को जघानैवं न पश्यामि महारिपुम् । केन मार्गेन मे पुत्रं हनिष्यामि कुलांतकम् ॥२०॥ पुत्रस्य मरणार्थाय यतेऽहं विविधं सदा । तदर्थं दैत्यनाथाश्च सुहृद्भिरभवन् मृताः ॥२१॥ अहं किं वा मरिष्यामि हनिष्यामि सुतं नु वा । अधुना किं मया कार्यमेवं व्यवसितोऽभवत् ॥२२॥ ततस्तेन वधार्थाय प्राप्तं ज्ञानं विशेषतः । पुत्ररक्षाकरं चादौ हन्मि पश्चात् सुतं खलम् ॥२३॥ मृतो रक्षाकरस्तस्य रक्षिता न भविष्यति । पुत्रस्य तेन मृत्युं मे गमिष्यति सुतोऽधुना ॥२४॥ एवं निश्चितसंकल्पो जगाद क्रोधसंयुतः । पुत्रं सुबोधनामानं मोहेनामोहितोऽसुरः ॥२५॥ सुबोध कुत्र ते रक्षिता विशेषेण वर्तते । तमानय महादुष्टं हनिष्याम्यधुना शठ ॥२६॥ ततस्तं मोहितं प्राह सुबोधः करुणायुतः । तात पश्य हृदिस्थं तं चित्तवृत्तिप्रचालकम् ॥२७॥ वैरभावं परित्यज्य तथाऽहंकारमद्य वै । शरणं गच्छ विघ्नेशं ब्रह्मभूतो भविष्यसि ॥२८॥ सर्वत्र संस्थितं पश्य स्वामिनं मे गजाननम् । तं हंतुमुद्यतस्त्वं वै मरिष्यसि न संशयः ॥२९॥ ततस्तं प्रत्युवाचेदं ज्ञानारिर्वचनं नृप । दर्शयस्व महाभाग तं भजिष्यामि निश्चितम् ॥३०॥ एवं कपटभावेन सुबोधं स जगाद ह । सुबोधस्तं गणेशानं सस्मार पितृकारणात् ॥३१॥ ततस्तं मूषकारूढो विष्णुपुत्रः समाययौ । तमन्वयुर्द्विजा देवा भयभीता युधिष्ठिर ॥३२॥ आकाशे गुप्तरूपेण मुनयो देवतागणाः । संस्थिता अभवंस्तत्र पश्यंतश्चेष्टितं प्रभोः ॥३३॥ सुबोधस्य समीपे तं संस्थितं गणनायकम् । पश्यन् क्रूरो महादुष्टो ज्ञानारिर्हर्षितोऽभवत् ॥३४॥ सुबोधस्तं प्रणम्यादौ स्तुत्वा च विविधैः स्तवैः । उवाच पितरं योगी पश्य तात गजाननम् ॥३५॥ सुबोधस्य वचः श्रुत्वा क्रोधयुक्तो महासुरः । अमोघं सर्वसंहारकारकं शस्त्रमाददे ॥३६॥ एतस्मिन्नंतरे तत्र पूर्णानंदो हृदि स्थितः । जीवभावं स दैत्यस्य कर्षयामास भूमिप ॥३७॥ ततः स पतितो भूमौ गतचैतन्यकोऽञ्जसा । हाहाकारं प्रचक्रुस्ते दैत्याः पातालमाययुः ॥३८॥ ततस्ते देवविप्राद्या नभःस्थाः सहसाऽऽगताः । प्रणम्य तुष्टुवुस्तं वै पूर्णानंदं गणेश्वरम् ॥३९॥ स्तुवतां पश्यतां भूप सुबोधं गृह्य विघ्नपः । अंतर्धानं चकाराऽपि सर्वे खिन्ना इवाऽभवन् ॥४०॥ लक्ष्मीनारायणश्चैव मूर्च्छितौ धरणीतले । पेततुर्दुःखसंयुक्तौ पूर्णानंदवियोगतः ॥४१॥ द्विमुहूर्तात् प्रबुद्धौ तौ ततो हृदि तयोः प्रभुः । प्रकटोऽभूदुवाचाऽथ मूर्तौ मां भजतं युवाम् ॥४२॥ न वियोगो भवेत्तातौ

पश्यतं बुद्धिचालकम् । एवमुक्त्वांतर्दधेऽसौ हृदिस्थो गणनायकः ॥४३॥ ततस्तौ दुःखसंयुक्तौ चक्रतुः परमाहतौ । लक्ष्मीनारायणौ मूर्तिं भक्त्या प्रभजने रतौ ॥४४॥ एवं महोदरः सर्वप्रदाता वै प्रतापवान् । हर्ता च ब्रह्मभूतोऽसौ ब्रह्मभूयप्रदो मतः ॥४५॥ शिवविष्ण्वादिभिर्देवैः सेवितो भक्तिभावतः । मुनिभिर्योगिभिर्नानाजंतुभिर्नात्र संशयः ॥४६॥ तं भजस्व महीपाल विघ्नहीनो भविष्यसि । स्वधर्मस्थो महाभाग शांतियोगमवाप्स्यसि ॥४७॥ मुद्गल उवाच । एवं नारायणं तं स ब्रुवंतं धर्मपालकः । युधिष्ठिर उवाचाऽथ प्रेमयुक्तो महामतिः ॥४८॥ युधिष्ठिर उवाच । कृष्ण कृष्ण महाप्राज्ञ कथां ब्रह्मप्रदायिनीम् । सर्वकामप्रदां पूर्णां वदस्यत्र न संशयः ॥४९॥ त्वदीयसंगयोगेन मया ज्ञातो गजाननः । वद त्वं तस्य मंत्रं मे सस्त्रीकाय सबंधवे ॥५०॥ स तस्मै देवकीपुत्रो ददौ मंत्रं षडक्षरम् । देवेशो धौम्यमुखतस्तथा सर्वेभ्य आदरात् ॥५१॥ मुद्गल उवाच । पांडवा द्रौपदीयुक्तास्तेन मंत्रेण विघ्नपम् । अभजन् भक्तिसंयुक्ताश्चतुर्थीव्रतकारकाः ॥५२॥ ततो दुःखविहीनास्ते सूर्यात् प्राप्य यथेप्सितम् । स्थालीस्थमन्नमत्यंतं पोषयामासुरग्रजान् ॥५३॥ वनस्थाः दुखहीनाश्च भ्रमंतस्ते समाययुः । व्यासेन वासुदेवेन युताः स्वानंदके पुरे ॥५४॥ मयूरेशं च तत्रैवाऽपूजयन् भक्तिसंयुताः । पांडवेशं समास्थाप्य श्राद्धं चक्रुः पितुस्ततः ॥५५॥ तत्र पिंडप्रदानेन पांडुं स्वर्गस्थमादरात् । नानासुहृद्गणैर्युक्तं समानेतुं ययुर्गणाः ॥५६॥ गाणेशेन विमानेन स्वानंदे ब्रह्मरूपिणम् । चक्रुर्दक्ष महाभाग महिम्ना क्षेत्रजेन ते ॥५७॥ गुप्तरूपेण वर्षं ते निर्विघ्ना अवसंस्ततः । पश्चात् प्राकट्यमास्थाय सस्त्रीकाः पांडवा ययुः ॥५८॥ हत्वा दुर्योधनं वीराः ससैन्यं कर्णसंयुतम् । राज्यं प्राप्याऽभजंस्ते तं गणेशं सर्वनायकम् ॥५९॥ एवं युधिष्ठिरेणैवाराधितः स महोदरः । मोहशून्यस्वभावेन योगिना शांतिधारिणा ॥६०॥ पूर्णानंदावतारो महोदरांतर्गतः स्मृतः । एवं नानावतारैश्च कुरुते क्रीडनं स्वयम् ॥६१॥ तेषां कथयितुं पुण्यं चरित्रं न प्रशक्यते । वर्षाणामयुतैर्दक्ष मया केनापि निश्चितम् ॥६२॥ इदं युधिष्ठिरस्यैव चरित्रं पापनाशनम् । शृण्वते पठते वाऽपि तस्मै सर्वार्थदं भवेत् ॥६३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खंडे महोदरचरिते युधिष्ठिरचरितं नाम पंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । महोदरस्य क्षेत्रं यद्दक्षिणस्यां दिशि स्थितम् । देवैश्च मुनिभिस्तत्र स्थापितो गणनायकः ॥१॥ दशयोजनविस्तारस्तस्य क्षेत्रस्य मानद । महोदरश्च तन्मध्ये चतुरस्रे स्थितोऽभवत् ॥२॥ स्वस्वखंडेषु सर्वत्र द्वीपेषु मुनिभिः पुरा । स्थापितो दक्षिणस्यां स दिशि ब्रह्ममयः प्रभुः ॥३॥ तत्र देवादयः सर्वे ऋषयो योगिनस्तथा । तीर्थानि क्षेत्रमुख्यानि संस्थितानि भवंति च ॥४॥ समुद्रे स्नानकर्तारः स्वस्वतीर्थेषु नित्यदा । गणेशानं भजंतस्ते परस्परहिते रताः ॥५॥ नानारूपाणि ते सर्वे महोदर कृतानि च । चेष्टितानि स्मरंतो वै हृष्टरोमाण आभवन् ॥६॥ सिद्धिबुद्धियुतं तं ते मूषकं पुरतः स्थितम् । दूर्वादिभिः पूजयंति विशेषेण प्रजापते ॥७॥ भाद्रशुक्लचतुर्थीजस्तत्र मुख्यो महोत्सवः । वर्षमध्ये वै भवति भक्ता यात्रां प्रकुर्वते ॥८॥ ततो महोदरस्यैव दर्शनेन हृदीप्सितम् । लभते मानवः सर्वं स्मरणेन तथा विभोः ॥९॥ क्षेत्रे मरणतो दक्ष ब्रह्मभूतो भवेन्नरः । अष्टौ विनायकाः प्रोक्तास्तेषां क्षेत्राणि सर्वदा ॥१०॥ ब्रह्मभूतमयान्येव तेषु सर्वे शिवादयः । संस्थिता भक्तिकार्यार्थं ज्ञातव्यं विबुधैः सदा ॥११॥ त्रैलोक्ये श्रेष्ठरूपा ये शेषादय उदाहृताः । ते सर्वे निवसंत्यत्र क्षेत्रेष्वष्टसु निश्चितम् ॥१२॥ तत्र गाणेशतीर्थं महोदरस्य च हर्षदम् । स्नानेनात्रकृतेनैव पुमान् सर्वार्थसिद्धिभाक् ॥१३॥ विष्णवादिषु तथाऽन्येषु तीर्थेषु च विशेषतः । गणेशक्षेत्रगेष्वेव स्नानमात्रेण देहिनाम् ॥१४॥ तत्तत पदप्रदानि स्युस्तेषामंते प्रजापते । ब्रह्मभूता भविष्यंति स्वानंदे वासकारिणः ॥१५॥ अन्यदेवस्य भक्ता ये क्षेत्रे गाणेशके मृताः । तस्य देवस्य लोके ते गमिष्यंति न संशयः ॥१६॥ महालये त्रयो देवा लयं गच्छंति चेत् प्रभो । तदा ते निजलोके वै गमिष्यंति सुखप्रदे ॥१७॥ क्षेत्रे मरणसंस्काराद्ब्रह्मभूता भवंति च । अतो नरेण तद्भक्त्या गाणेशं सेव्यमादरात् ॥१८॥ यत्र कुत्र स्थिता भक्ता ये भजंति महोदरम् । ते सर्वे ब्रह्मभूता वै ज्ञातव्याः पावना नृणाम् ॥१९॥ कुर्वंति ये शिवादीनां भजनं जन्मजन्मसु । तेन संस्कारयोगेन गाणेशास्ते भवंति वै ॥२०॥ गाणेशान्न परं ब्रह्म कथितं सर्वसंमतम् । अतो गणेशभक्ता ये ब्रह्मभूताश्च ते मताः ॥२१॥ इदं महोदराख्यानं कथितं ते प्रजापते । सर्वसिद्धिप्रदं पूर्णं समासेन यथामति ॥२२॥ शृणुयाद्यो नरो भक्त्या श्रावयेद्वा पठेद्यदि । अंते स ब्रह्मभूतश्च भविता नात्र संशयः ॥२३॥ अनेन न समं किंचित् त्रिषु लोकेषु विद्यते । सर्वदं मानवादीनां ब्रह्मादीनां च योगिनाम् ॥२४॥ व्रतानि विधिवन्नाना कुरुते मानवोत्तमः । अस्य श्रवणमात्रेण तत् फलं लभते प्रभो ॥२५॥ नानातीर्थेषु यः स्नायात्तर्पयेद्देवतादिकान् । यथाशास्त्रं फलं तस्य तदस्य

श्रवणाल्लभेत् ॥२६॥ क्षेत्रेषु भक्तिसंयुक्तो नरो वासं करोति यः । विधिवद्धर्मशीलज्ञस्तत् फलं श्रवणाल्लभेत् ॥२७॥ यज्ञैर्नानाविधैर्दक्ष दृष्ट्वा देवान् यथार्थतः । यत्फलं लभते मर्त्यस्तदस्य श्रवणात् फलम् ॥२८॥ इष्टापूर्तादिकं सर्वं यः करोति नरोत्तमः । अस्य श्रवणतः सद्यस्तत्फलं लभते पुमान् ॥२९॥ बहुनाऽत्र किमुक्तेन ब्रह्मभूयप्रदं भवेत् । श्रवणेन न संदेहो धर्मकामार्थमोक्षदम् ॥३०॥ पुत्रपौत्रादिकं सर्वं धनं धान्यं विशेषतः । राज्यमश्वादिकं सर्वं लभते श्रवणेन च ॥३१॥ महोदरस्य माहात्म्यं गृहे संलिखितं भवेत् । न तत्र राक्षसादिभ्यश्चोराग्न्याद्याद्भयं भवेत् ॥३२॥ ग्रहरोगादिका पीडा पूजनेन च नश्यति । पुस्तकस्यास्य भो दक्ष नात्र कार्या विचारणा ॥३३॥ इच्छंति जंतवो यद्यदस्य श्रवणकारकाः । तत्तन् महोदरः सुप्रीतो ददाति प्रतापवान्॥३४॥ वाचकं परितोष्यैव लभते तत्क्षणात् फलम् । गणेशसन्निधाने च श्रवणेन न संशयः ॥३५॥ पतिता उद्धरिष्यंति श्रवणेनास्य निश्चितम् । किं पुनर्भावसंयुक्ता ब्रह्मभूता भवंति चेत् ॥३६॥ नानेन सदृशं कुत्र वर्तते ब्रह्मगोलके । साक्षाद्योगपतिर्यत्र वर्ण्यते स महोदरः ॥३७॥ इति ते कथितं सर्वं संक्षेपेण मया प्रभो । महोदरस्य माहात्म्यं श्रोतुमिच्छसि किं पुनः ॥३८॥ सूत उवाच । एवमुक्त्वा महायोगी मुद्गलो विरराम ह । तदेतत् कथितं सर्वं मया ते नात्र संशयः ॥३९॥ सर्वमान्यं विशेषेण मतमान्यं महामते । वेदादीनां तथा सारं ज्ञातव्यं ब्राह्मणा इदम् ॥४०॥ नानाशास्त्रपुराणानि मंथयित्वा महामुनिः । व्यासः संकथयामास मह्यं ब्रह्मप्रदं प्रभुः ॥४१॥ न गणेशात् परं ब्रह्म न गणेशात् परं तपः । न गणेशात् परं कर्म ज्ञानं न गणपात्परम् ॥४२॥ त्यक्त्वा गणेशमेकं यो नरः कर्मपरायणः । ब्रह्मज्ञानादिकं सर्वं साधयेच्चेत् सुनिष्फलम् ॥४३॥ सिद्धेः पतिं परित्यज्य सिद्धिमिच्छति शाश्वतीम् । फलहीनः स्वभावेन नारकी जायते नरः ॥४४॥ बुद्धेः पतिं परित्यज्य स्थिरबुद्धिं य इच्छति । न योगं लभते सोऽपि भस्मनि प्रहुतं यथा ॥४५॥ सर्वपूज्योऽयमेकश्च सर्वादिः सर्वभावनः । तं भजध्वं विशेषेण द्विजा वेदादिसंमतम् ॥४६॥ कथितं सर्वसारं ते महोदरकथानकम् । किं श्रोतुमिच्छसि प्राज्ञ वद शौनक ते नमः ॥४७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे तृतीये खण्डे महोदरचरिते श्रवणफलवर्णनं नामैकपंचाशत्तमोऽध्यायः ॥

॥ इति तृतीयः खंडः समाप्तः ॥



# ॥ अथ श्रीमुद्गलपुराणे चतुर्थः खंडः प्रारभ्यते ॥

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । त्वया सूत महाप्राज्ञ महोदरचरित्रकम् । कथितं शांतिदं मोहनाशकं संश्रुतं मया ॥१॥ तथा तृप्तिं न याम्येव पायं पायं सुधामिव । नानेन सदृशं किंचिच्छांतिदं विद्यते द्विज ॥२॥ अतो गजाननस्यापि चरित्रं वद विस्तरात् । सर्वज्ञस्त्वं महाभाग मतोऽस्माभिर्न संशयः ॥३॥ मुद्गलस्य च दक्षस्य संवादं वद मानद । किं पृष्टं ब्रह्मपुत्रेण दक्षेणाग्रे सुबुद्धिना ॥४॥ सूत उवाच । शृणु भार्गव विप्रेंद्र महाज्ञानकरं प्रभो । गजाननस्य माहात्म्यं कथयामि यथा श्रुतम् ॥५॥ श्रुत्वा महोदराख्यानं नानाख्यानसमन्वितम् । मोहनाशकरं दक्षो हर्षितो ह्यभवन् मुने ॥६॥ मुद्गलं पुनरप्याह योगींद्रं वेदपारगम् । विनयेन समायुक्तो गणेशज्ञानलालसः ॥७॥ दक्ष उवाच । महोदरस्य माहात्म्यं श्रुतं भक्तियुतेन भोः । तेनाऽऽनंदसमायुक्तः कृतोऽहं योगिना त्वया ॥८॥ अधुना वद विप्रेश गजाननचरित्रकम् । कीदृशोऽवतरद्देवः कीदृशं ब्रह्म तत्र च ॥९॥ किमर्थं देहधारी स बभूव मुनिसत्तम । किं कर्मा किं गुणज्ञश्च वद सर्वं महामते ॥१०॥ पूर्वपुण्यप्रभावेण संगतिस्ते प्रजायते । धन्योऽहं सर्वभावेन शृणोमि च कथां शुभाम् ॥११॥ सूत उवाच । दक्षेणैवं महायोगी स पृष्टो बुद्धिशालिना । तं प्रत्युवाच भावज्ञो गाणपत्यपरायणः ॥१२॥ मुद्गल उवाच । शृणु दक्ष महाभाग धन्योऽस्यत्र न संशयः । कथां वर्धयसि प्राज्ञ गाणेशीं योगदां पराम् ॥१३॥ तव भावेन संतुष्टो वदामि सकलं प्रभो । गजाननस्य माहात्म्यं योगशांतिपदप्रदम् ॥१४॥ सांख्यं ब्रह्म विदेहाख्यं कथितं योगिभिः परम् । तदेव गजवक्त्रं वै जानीहि त्वं प्रजापते ॥१५॥ बिंदुब्रह्मात्मको देहः सोऽहं वक्त्रं प्रकीर्तितम् । तयोरभेदको बोधो बभावेव स देहवान् ॥१६॥ त्रिविधेषु स्थितो देवो तथापि तद्विवर्जितः । विदेहो गजवक्त्रश्च शोभत सांख्यधारकः ॥१७॥ बोधत्यागे महाभाग कः संख्यां कुरुते वद । ब्रह्मणां तेन सांख्यं तद्ब्रह्म वेदे प्रकाशितम् ॥१८॥ लोभासुरविनाशाय प्रकटोऽभूद्गजाननः । देवैर्विप्रैः प्रजानाथ प्रार्थितो भक्तिलालसः ॥१९॥ चतुर्थ्यां मध्यगे भानौ देहधारी समागतः । सा तिथिः परमा तस्य प्रीतिदा संबभूव वै ॥२०॥ सूत उवाच । इति श्रुत्वा वचो रम्यं दक्षो हृष्टमना मुने । जगाद मुद्गलं विप्रं चतुर्थीज्ञानसिद्धये ॥२१॥ दक्ष उवाच । का चतुर्थी तिथिः प्रोक्ता शुक्ला कृष्णा वद प्रभो । गणनाथप्रियाऽत्यंतं बभूव कथमेव सा ॥२२॥ पुनः पुनस्त्वया ब्रह्मन् कथितं तद् व्रतं शुभम् । अतो ब्रूहि चतुर्थ्यास्त्वं माहात्म्यं सकलं परम् ॥२३॥ दक्षस्य वचनं श्रुत्वा हर्षयुक्तो महामुनिः । मुद्गलस्तमथोवाच चतुर्थीसंभवां कथाम् ॥२४॥ मुद्गल उवाच । संक्षेपेण प्रवक्ष्यामि चतुर्थ्याश्च चरित्रकम् । गणनाथप्रियं पूर्णं

ज्ञास्यसि त्वं प्रजापते ॥२५॥ पुरा सृष्टिं स सृष्ट्वा वै ब्रह्मा लोकपितामहः । स्थितानां तत्र जंतूनां कालार्थं स दधे मनः ॥२६॥ नानाकार्यप्रसिद्ध्यर्थं संचिंत्य गणपं हृदि । अभवद्ध्यानमास्थाय संस्थितश्चिंतयान्वितः ॥२७॥ ततस्तस्य शरीराद्वै निःसृता प्रकृतिः परा । महामाया तिथीनां सा जननी कामरूपिणी ॥२८॥ चतुष्पदां तथा दक्ष चतुर्हस्तां सुशोभनाम् । चतुर्मुखयुतां वीक्ष्य हर्षितोऽभूत् प्रजापतिः ॥२९॥ ततः सा तं नमस्कृत्य तुष्टाव जगदीश्वरम् । नानास्तोत्रैः प्रसाद्यैनमुवाच घननिःस्वना ॥३०॥ प्रकृतिरुवाच । तवांगनिःसृतां मां त्वं विद्धि ब्रह्मांडनायक । आज्ञां कुरु पितर्मां च कुर्वेऽहं भावयंत्रिता ॥३१॥ स्थानं देहि तथा भक्ष्यं नानाभोगादिकं प्रभो । मह्यं देव दयासिंधो नमस्ते परमेश्वर ॥३२॥ तस्यास्तद्वचनं श्रुत्वा तां जगाद प्रजापतिः । सृष्टिं गणेशं संचिंत्य विचित्रां कुरु मानदे ॥३३॥ स तस्यै गणनाथस्य ददौ मंत्रं षडक्षरम् । सविधिं सा नमस्कृत्य ययौ तं वनमादरात् ॥३४॥ तताप तप उग्रं सा नासाग्रनयना सती । गणेशं हृदि संध्याय जजाप मंत्रमुत्तमम् ॥३५॥ प्रजापते गते वर्षसहस्रे तु गजाननः । आययौ तां महाभागामगदद्भक्तवत्सलः ॥३६॥ गणेश उवाच । वरान् वृणु महाभागे बहून् मनसि वाञ्छितान् । निराहारेण संतुष्टो ददामि तपसा च ते ॥३७॥ तस्य तद्वचनं श्रुत्वा हर्षिता प्रणनाम तम् । गजाननं प्रसंपूज्य तुष्टाव च कृतांजलिः ॥३८॥ प्रकृतिरुवाच । नमस्ते विघ्ननाथाय गणेशाय परात्मने । अनाथाय विशेषेण सर्वनाथाय ते नमः ॥३९॥ नमो मूषकवाहाय मूषकध्वजिने नमः । स्वानंदपतये तुभ्यं गणानां पतये नमः ॥४०॥ सिद्धिबुद्धिप्रदात्रे च सिद्धिबुद्धिविहारिणे । योगेशाय सदा शांतिप्रदात्रे योगिने नमः ॥४१॥ सर्वादये सदा सर्वपूज्याय भक्तपालक । ज्येष्ठराजाय ज्येष्ठानां पतये ते नमो नमः ॥४२॥ ब्रह्मणे ब्रह्मदात्रे वै ब्रह्मणां पतये नमः । सिद्धेश्वराय देवानां दैत्यानां पतये नमः ॥४३॥ चतुर्भुजाय हेरंब परशोधारकाय ते । अंकुशधारिणे तुभ्यं निरंकुश नमो नमः ॥४४॥ रजसा सृष्टिकर्त्रे ते पालने सात्त्विकाय ते । तामसाय महाहंत्रे गुणेशाय नमो नमः ॥४५॥ स्थावराय चरायैव चराचरमयाय ते । चराचरविहीनाय बोधाय च नमो नमः ॥४६॥ चतुर्विधस्वरूपाय चतुर्विधसुखप्रद । चतुःसुखस्वरूपाय स्वसंवेद्याय ते नमः ॥४७॥ विनायकाय सर्वेषां नायकाय नमो नमः । गजाननाय देवाय देवदेवेश ते नमः ॥४८॥ किं स्तौमि त्वां गणाध्यक्ष ब्रह्मणस्पतिरूपिणम् । यं स्तोतुं न समर्थाश्च योगिनो वेदमुख्यकाः ॥४९॥ तवदर्शनबोधेन तथापि संस्तुतो मया । तेन तुष्टो भव स्वामिन् भक्तिं देहि दृढां त्वयि ॥५०॥ इति स्तुत्वा गणेशानं दंडवत् प्रणनाम तम् । तामुत्थाप्य

गणाधीश उवाच व्रतमातरम् ॥५१॥ गणेश उवाच । वरं वृणु महाभागे यं यमिच्छसि शोभने । तं तं दास्यामि सुप्रीतो भक्त्या स्तोत्रेण तोषितः ॥५२॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदं भवेत् । यः पठेच्छृणुयाद्देवि ईप्सितं लभते नरः ॥५३॥ एककालं द्विकालं वा त्रिकालं लभते सदा । अव्रती व्रतसाफल्यं पठनान्नात्र संशयः ॥५४॥ ब्रुवंतं गणनाथं सोवाच गंभीर-निःस्वना । देवी प्रणम्य भावेन साश्रुनेत्रा प्रजापते ॥५५॥ देव्युवाच । वरदोऽसि गणाधीश तदा देहि त्वयि स्थिराम् । भक्तिं मे च तथा कार्ये सामर्थ्यं करुणानिधे ॥५६॥ सृष्टिसर्जनसामर्थ्यं देहि नाथ नमोऽस्तु ते । सदा तव प्रियत्वं मे वियोगो न च ते भवेत् ॥५७॥ ओमित्युक्त्वा गणाधीशो जगाद वदतां वरः । चतुर्विधप्रदा देवि प्रिया मम भविष्यसि ॥५८॥ तिथीनां मातृभावेन चतुर्थी संज्ञिता भव । वामभागे सदा कृष्णा शुक्ला दक्षिणभागके ॥५९॥ मम जन्मतिथिस्त्वं वै भविष्यसि न संशयः । सदा तव व्रते संस्थान् पालयामि विशेषतः ॥६०॥ मदीयव्रतजा पुण्या तिथिस्त्वं च भविष्यसि । व्रतेषु त्वत्समं नैव दायकं कुत्र वर्तते ॥६१॥ एवमुक्त्वा गणेशानोंऽतर्धानं प्रचकार ह । व्रतमाता प्रजानाथाऽभवत्तत्रैव संस्थिता ॥६२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते चतुर्थीतपोवर्णनं नाम प्रथमोऽध्यायः ॥

★

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ततो देवी गणाध्यक्षं स्मृत्वा स्रष्टुं मनो दधे । ततोऽकस्माद् द्विधा साऽभूद्वामदक्षिणभागत ॥१॥ वामभागं कृष्णवर्णं दक्षिणांगं तथा बभौ । शुक्लवर्णं महाभाग ततः सा विस्मिताऽभवत् ॥२॥ पुनर्गणपतिं ध्यात्वा स्रष्टुं तत्रोपचक्रमे । ततस्तस्या मुखांभोजात् प्रतिपन्निःसृता तिथिः ॥३॥ नासिकायां द्वितीया वै वक्षसश्च तृतीयिका अंगुलीभ्यस्तथा दक्ष पंचमी चाभवत्तिथिः ॥४॥ उत्पन्ना हृदयात् षष्ठी चक्षुषोः सप्तमी बभौ । अष्टमी बाहुदेशाच्च समुत्पन्ना महातिथिः ॥५॥ नवमी तिथिरुत्पन्ना उदराच्च प्रजापते । दशमी कर्णदेशाद्वै कंठाच्चैकादशी मता ॥६॥ द्वादशी पादयोस्तस्याः समुत्पन्ना तथा विभो । स्तनात् त्रयोदशी तस्या अहंकाराच्चतुर्दशी ॥७॥ मनसः पूर्णिमा जाता अमावास्या तथाऽभवत् । जिह्वायाः सर्वभावेन तिथयो भिन्नतां दधुः ॥८॥ कृष्णा चतुर्थी प्रोक्ता या तस्याः कृष्णाः प्रकीर्तिताः । तिथयो दशपंचाख्या ज्ञातव्या विबुधैः किल ॥९॥ शुक्लाः शुक्लचतुर्थी देहाच्चतुर्दश वै मताः । तिथयो विधिवत् सर्वा बभुः स्वस्वगुणान्विताः ॥१०॥ दिनांशाः पुरुषा जाता रात्रयः स्त्रीस्वरूपकाः । स्वस्वभावविहारज्ञा बभूवुश्च हिते रताः ॥११॥

तिथिभिः सहिता देवी चतुर्थी तपसि स्थिता । गणेशमभजन्नित्यं मंत्रध्यानपरायणा ॥१२॥ वर्षेणैकेन विघ्नेशस्तां ययौ भक्तवत्सलः । शुक्लां मध्याह्नसमये कृष्णां चंद्रोदये तथा ॥१३॥ वरं ब्रूहि गणेशानस्तामुवाच विशेषतः । प्रणम्य विघ्नपं पूजयित्वा स्तुत्वा जगाद सा ॥१४॥ चतुर्थ्युवाच । त्वदेकनिलयां देव मां कुरुष्व गजानन । नान्यं याचे वरं स्वामिन् भक्तिमिच्छामि शाश्वतीम् ॥१५॥ तस्यास्तद्वचनं श्रुत्वा तां जगाद गजाननः । प्राप्तं चतुर्थि मध्याह्ने मदीयं दर्शनं त्वया ॥१६॥ अतो मध्याह्नकालेऽन्ये मां भजंते शिवादयः । चतुर्थ्यां शुक्लपक्षस्य स्थितायां सर्वदा जनाः ॥१७॥ मदीयव्रतमुख्यत्वे भव त्वं सर्वभावतः । निराहारेण मां तत्र त्वद्युक्तं पर्युपासते ॥१८॥ चतुर्विधं प्रदास्यामि नानाभावनियंत्रितम् । संचितं नास्ति चेद्देवि तथाप्यत्र न संशयः ॥१९॥ संचितं चास्ति चेद्वापि ददासि त्वं महामते । अतस्ते नाम विख्यातं वरदेति भविष्यति ॥२०॥ त्वां पूजयंति ये नैव मद्युक्तां व्रतभावतः । तेषां व्रतानि सर्वाणि निष्फलानि भवंतु वै ॥२१॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो देवनायकः । तदादि सा तिथिः ख्याता वरदा च प्रजापते ॥२२॥ गणेशस्य प्रियाऽत्यंतमिति जन्मतिथिः स्मृता । तस्यामुपोषणं कार्यं नरैरात्महितेप्सुभिः ॥२३॥ पंचम्यां पारणं दक्ष कर्तव्यं द्विजसाक्षिकम् । चतुर्विधं फलं तैश्च संप्राप्तं नात्र संशयः ॥२४॥ यद्यदिच्छति तत्तत् स लभते व्रतकारकः । अंते स्वानंदगो भूत्वा सायुज्यं ब्रह्मणस्तथा ॥२५॥ तत्र व्रते नराः पापा अन्नं भक्षंति चेत् प्रियम् । नारकास्ते भविष्यंति हीना अन्नैः पुनर्जनौ ॥२६॥ एवं वरं चतुर्थ्यै स ददौ विघ्नविदारणः । सा तिथिः सर्वमान्या च बभूव व्रतमूलगा ॥२७॥ ततः कृष्णां चतुर्थीं स जगाद गणनायकः । वरं वृणु महाभागे दास्यामि मनसीप्सितम् ॥२८॥ श्रुत्वा सा तं प्रणम्याऽऽदौ पूजयित्वा गजाननम् । स्तुत्वा जगाद वाक्यं वै हर्षेण महता युता ॥२९॥ कृष्णचतुर्थ्युवाच । यदि प्रसन्नभावेन वरदोऽसि गजानन । तदा भक्तिं दृढां देहि त्वदीयां मे महोदर ॥३०॥ त्वत्प्रियत्वं सदा नाथ वियोगो न भवेच्च मे । सर्वमान्यां कुरुष्व त्वदेकनिष्ठस्वभावतः ॥३१॥ तस्यास्तद्वचनं श्रुत्वा तां जगाद गजाननः । सदा मम प्रियाऽत्यंतं भविष्यसि महातिथे ॥३२॥ चंद्रोदये त्वयाऽहं वै प्राप्तस्तेन चतुर्थिके । तत् काले च व्रतं मुख्यं त्वद्युक्तं भवतु प्रियम् ॥३३॥ न वियोगो भवेद्भक्ताः प्रियेऽन्नजलवर्जिताः । उपासते च तेषां त्वं संकष्टहरणं कुरु ॥३४॥ प्रहरान् पंच मद्भक्ताः प्रियेऽन्नजलवर्जिताः । उपासते च तेषां त्वं संकष्टहरणं कुरु ॥३५॥ चतुर्विधं स्वसंकष्टं जन्म मृत्युश्च कर्मजम् । व्रतिनां तत्फलं कर्म विद्यते न कदाचन ॥३६॥ इत्यादि विविधं देवि विशेषेण चतुर्विधम् ।

संकष्टदं हर त्वं वै मत्प्रसादाच्चतुर्थिके ॥३७॥ न संकष्टं कदाचिद्वै व्रतकारि नरस्य च । भवेन् मे भक्तियुक्तस्य पुनस्त्वद्युक्तसेविनः ॥३८॥ इह भुक्त्वाऽखिलान् भोगानंते स्वानंदमाप्नुयात् । संकष्टहरणी नाम भवेत्तव चतुर्थिके ॥३९॥ न करोति चतुर्थीं चेन्नरो मद्भक्तिकारकः । निष्फलं सकलं तस्य भजनं वै भविष्यति ॥४०॥ त्वां त्यक्त्वा ये नराः पापा व्रतमन्यच्च कुर्वते । व्रतादिकं निष्फलकं तेषां सर्वं भविष्यति ॥४१॥ वर्णाश्रमस्थको भूत्वा चतुर्थीं न करोति चेत् । तस्य सर्वं स्वधर्मस्थं कर्म यन्निष्फलं भवेत् ॥४२॥ यती रात्रौ निराहारयुक्तः सन् व्रतमाचरेत् । संकष्टहरणं देवि स्वानंदार्थं न संशयः ॥४३॥ अन्यैश्च द्विजसंयुक्तैर्भोजनं द्विजसाक्षिकम् । रात्रौ कर्तव्यमेतस्मिन् मां प्रपूज्य वरानने ॥४४॥ श्रावणे लड्डुकान् भक्षेत् भाद्रके दधिभोजनम् । निर्जलं त्वाश्विने प्रोक्तं दुग्धपानं च कार्तिके ॥४५॥ मार्गशीर्षे जलाहारः पौषे गोमूत्रभक्षणम् । माघे मासि तिलान् शुक्लान् फाल्गुने घृतशर्कराम् ॥४६॥ पंचगव्यं मधौ मासे वैशाखे पद्मबीजकम् । ज्येष्ठे घृतं गवां भक्ष्यमाषाढे मधुभोजनम् ॥४७॥ यतीनां सर्वदा ह्येतत् व्रतं युक्तं प्रकीर्तितम् । अन्येषां भोजने नैवानेन वा व्रतकं स्मृतम् ॥४८॥ याममात्राऽवशिष्टायां रात्रावुत्थाय सत्वरम् । प्रातःकृत्यं सुसंक्षेपात् कर्तव्यं तन्नरेण वै ॥४९॥ तथा माध्याह्निकं कर्म कर्तव्यं प्रातरेव च । चतुर्घटिकरात्रौ सूर्योदयः स प्रकीर्तितः ॥५०॥ एवं कर्मादिकं कृत्वा मां संपूज्याल्पमंत्रतः । प्रत्यक्षोदयकाले वै सूर्योपस्थानमाचरेत् ॥५१॥ चंद्रोदयस्य पर्यंतं शमीमूले जपं जपेत् । मदीयं मौनिभावेन पश्चात् स्नानं समाचरेत् ॥५२॥ सायाह्नकालजं कर्म तत्र कुर्यान्नरोत्तमः । विधिना पूज्य मां पश्चादर्घ्यदानं समाचरेत् ॥५३॥ आदौ तेऽर्घ्यप्रदानं च ततो मेऽर्घ्यनिवेदनम् । ततः सप्तार्घ्यदानं व्रती चंद्राय समाचरेत् ॥५४॥ ब्राह्मणैः पूजितैर्देवि नरः कुर्याच्च भोजनम् । मोदकापूपलड्डूकपायसादिभिरादरात् ॥५५॥ रात्रौ जागरणं कुर्यान् मदीयकथयान्वितः । पंचम्यामुपचारैः संपूजयन् मां प्रयत्नतः ॥५६॥ एवं व्रतं नरः कुर्यात् स वै सर्वार्थसिद्धिभाक् । भविष्यत्यमरैर्मान्योऽते ब्रह्मणि लयं व्रजेत् ॥५७॥ यथाऽहं देवतादीनां पूज्यः सर्वाद्यभावतः । तथा त्वं व्रतजातीनामादिपूज्या भविष्यसि ॥५८॥ शुक्लां कृष्णां चतुर्थीं ये करिष्यंत्यमरादयः । सर्वव्रतादि भावेषु तेषां सिद्धिर्भविष्यति ॥५९॥ एवमुक्त्वांतर्दधेऽसौ गणेशो ब्रह्मनायकः । चतुर्थी भक्तिसंयुक्ताऽभवत्तत्रैव संस्थिता ॥६०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते शुक्लकृष्णचतुर्थीवरदानवर्णनं नाम द्वितीयोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ततो गणपतिर्दक्ष ययौ सर्वतिथीः प्रति । उवाच वृणुत प्राज्ञा वरं यं मनसीप्सितम् ॥१॥ श्रुत्वा गणपतेर्वाक्यं प्रणम्य गणनायकम् । पूजयित्वा च तं स्तुत्वा जगदुस्तिथयः पराः ॥२॥ प्रतिपदाद्या ऊचुः । यदि विघ्नेश्वर स्वामिन् वरदोऽसि गजानन । किं कर्तव्यं दयासिंधो अस्माभिर्वद सांप्रतम् ॥३॥ स्वस्वव्यापारजं देवं सामर्थ्यं देहि चाद्भुतम् । भक्तिं त्वदीयपादाब्जे सर्वं मान्यं त्वया प्रभो ॥४॥ तासां वचनमाकर्ण्य जगाद गणनायकः । ताः शृणु त्वं प्रजानाथ सर्वेषां हितकारकम् ॥५॥ गणेश उवाच । मदीया भक्तिरत्यंतं भविष्यति न संशयः । भवतीनां महाभागास्तिथयः पुण्यभागिकाः ॥६॥ मत्कलांशसमुद्भूता देवास्तान् प्रीणयंतु वै । भवतीभिर्युता देवा नराणां प्रीतिदाऽस्तु च ॥७॥ सदा वह्निं प्रतिपदि पूजयिष्यंति ये नराः । हुतद्रव्यैश्च हुत्वा तं दुग्धाहारा व्रते रताः ॥८॥ उपोषणं करिष्यंति तैश्च देवाः सहेश्वराः । तोषितास्ते सदा तेभ्यो दास्यंति मनसीप्सितम् ॥९॥ ते मृताः संगमिष्यंत्यग्निलोके भोगकारकाः । अग्नितुल्य-प्रकाशेन विमानेन विहायसा ॥१०॥ चरिष्यंति न संदेहः प्रतिपद्व्रतकारकाः । ब्रह्मार्पणस्वभावेन गमिष्यंति मदात्मनि ॥११॥ द्वितीयायां नरो यस्तु पूजयेदश्विनौ शुभौ । पत्राहारसमायुक्तो रूपवान् जायते किल ॥१२॥ इह भुक्त्वाऽखिलान् भोगानंते तल्लोकमाप्नुयात् । द्वितीयाव्रतकारी स देवमान्यो भविष्यति ॥१३॥ ब्रह्मार्पणस्वभावेन द्वितीयाव्रतमाचरेत् । स स्वानंदे मदीये वै लीनश्चैव भविष्यति ॥१४॥ तृतीयायां महाशक्तिं पूजयेद्भक्तिसंयुतः । सर्वैः सौभाग्यदैर्द्रव्यैर्लवणाहार-वर्जितः ॥१५॥ स शक्तिलोकगो भूत्वा भोगयुक्तो भविष्यति । ब्रह्मार्पणतया सोऽपि मल्लोके चागमिष्यति ॥१६॥ पंचम्यां नागमुख्यांश्च दुग्धेन स्नापयेन्नरः । पूजयेत्तान् प्रयत्नेन निरम्लाहारकारकः ॥१७॥ स नागलोकगो भूत्वा भोगयुक्तश्चरिष्यति । निष्कामेन मदीये वै लोकेंऽते आगमिष्यति ॥१८॥ षष्ठ्यां स्कंदं फलाहारः पूजयेद्भक्तिसंयुतः । स्कंदलोके चरेत् सोऽपि महाभोगपरायणः ॥१९॥ निष्कामभावयुक्तश्चेत् स्वानंदेंऽते गमिष्यति । शुक्लगत्याः क्रमेणैव सर्वभावनियंत्रितः ॥२०॥ सप्तम्यामर्चयेत् सूर्यमुपोषणपरायणः । स सूर्यलोकमाश्रित्य प्रचरेद्भोगसंयुतः ॥२१॥ निष्काम-व्रतकारी चेन् महालयसमुत्थिते । स्वानंदे मे सदेहो वै ब्रह्मभूतो भविष्यति ॥२२॥ अष्टम्यां मातृकानां यः पूजको भावसंयुतः । बिल्वाहारसमायुक्तो मातृकालोकगो भवेत् ॥२३॥ मदर्पणस्वभावेन सदा व्रतपरायणः । अष्टम्यां सोऽपि मल्लोके गच्छेत् क्रमविनिश्चिते ॥२४॥ नवम्यामेव दुर्गायाः पूजनं यः समाचरेत् । पिष्टाशी भोगसंयुक्तोऽंते तल्लोकमवाप्नुयात्

॥२५॥ ब्रह्मार्पणतया सोऽपि निजलोके गमिष्यति । शुक्लगत्या महाभागो ब्रह्मभूतो न संशयः ॥२६॥ दशम्यां व्रतसंस्थो यो दधिभक्षणसंयुतः । दिशां दिगीशकानां वै पूजकस्तत्प्रियो भवेत् ॥२७॥ इह भुक्त्वाऽखिलात् भोगानंते तल्लोकमाप्नुयात् । निष्कामव्रतभावेन ब्रह्मभूतो भविष्यति ॥२८॥ एकादश्यां नरो भक्षेद्व्रीहिपक्वविवर्जितम् । धनपं पूजयेच्चैव भक्तियुक्तेन चेतसा ॥२९॥ स वै तस्य वसेल्लोके नानाभोगकरः सदा । ब्रह्मार्पणतया तद्व्रतं कृत्वा सुखी भवेत् ॥३०॥ विष्णुं संपूजयेद्यो वै द्वादश्यां घृतभोजनः । स विकुंठे वसेन्नित्यं नानाभोगपरायणः ॥३१॥ ब्रह्मार्पण-विधानेन व्रतं कुर्याद्यदा नरः । महालये मदीये स लोके ब्रह्ममयो भवेत् ॥३२॥ धर्मं त्रयोदशीसंस्थं पूजयेत् क्षीरभोजनः । स धर्मलोकगो भूत्वा भुंजीत विविधं सुखम् ॥३३॥ ब्रह्मार्पणतया येन साधिता चेत् त्रयोदशी । स स्वानंदे समागम्य ब्रह्मभूतो भविष्यति ॥३४॥ चतुर्दश्यां शिवं यश्च पूजयेद्भक्तिसंयुतः । उपोषणसमायुक्तो गोधूमान्नेन पारणम् ॥३५॥ करिष्यति च कैलासे वासस्तस्य भविष्यति । निष्कामश्चेत्तदंते स मल्लोके मन्मयो भवेत् ॥३६॥ पूर्णिमायां देवगणान् देवांश्चंद्रमसं तथा । पूजयेद्भक्तिभावेन चंद्रलोकं स आप्नुयात् ॥३७॥ इह भुक्त्वाऽखिलान् भोगानंते देवान् गमिष्यति । निष्कामनो मदीये स लोके ब्रह्ममयो भवेत् ॥३८॥ उपोषणसमायुक्तोऽर्घ्यदानं यः करिष्यति । चंद्राय निशिभुग् वाऽपि सर्व-देवपरायणः ॥३९॥ सर्वदेवमयी रम्या पूर्णिमा परिकीर्तिता । चांद्री चैव तथा ज्ञेया तिथिः पुण्यप्रदा मता ॥४०॥ अमायां तर्पयेद्यो वै पितॄन् पितृपरायणः । उपोषणं वा कुर्वीत स सर्वार्थमवाप्नुयात् ॥४१॥ अंते पितृमये लोके वसतिस्तस्य संभवेत् । आगमिष्यति निष्कामश्चेत् स्वानंदे स तल्लये ॥४२॥ कृष्णाः शुक्लाः सदा पूज्यास्तिथयो व्रतकारिणा । एवं भाव-युतेनैव स सर्वार्थमवाप्नुयात् ॥४३॥ मत्प्रियास्तिथयः सर्वा भविष्यथ न संशयः । मत्कलांशयुतैर्देवैः संयुक्ताः प्रभवेत वै ॥४४॥ चतुर्थीं ये न कुर्वंति तेषां सर्वं निरर्थकम् । भवदीयव्रते संस्थं भविष्यति न संशयः ॥४५॥ अतश्चतुर्थीसंयुक्ताः सदा भवत मानदाः । तिथयः कालमानेन सर्वपूज्या भविष्यथ ॥४६॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो गणवल्लभः । तथा जातं प्रजा-नाथ तिथियुक्तव्रतं सदा ॥४७॥ चतुर्थीजं च माहात्म्यं तिथीनां यद्विशेषतः । शृणुयाद्यः पठेद्वाऽपि स सर्वार्थमवाप्नुयात् ॥४८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते प्रतिपदादिव्रतवर्णनं नाम तृतीयोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । अधुना शृणु दक्ष त्वं संवादं तं पुरातनम् । दशरथस्य राजर्षेर्वसिष्ठस्य महात्मनः ॥१॥ येन त्वं तिथिमुख्यायाश्चतुर्थ्या व्रतजे परे । महिम्नि निपुणोऽत्यंतं संभवेर्ब्रह्मपुत्रक ॥२॥ महायशा दशरथो वंध्यदोषभयार्दितः । वसिष्ठं शरणं गत्वा नत्वा पप्रच्छ तं मुनिम् ॥३॥ दशरथ उवाच । पुत्रप्राप्त्यर्थमेवं भो वदोपायं महामुने । शिष्यं मां शाधि भावज्ञ तारयस्व भवार्णवात् ॥४॥ ततस्तं मुनिशार्दूल उवाच नृपमुत्तमम् । कुलदेवं गणेशं ते भजस्व व्रतसंयुतः ॥५॥ वसिष्ठस्य वचः श्रुत्वा पुनस्तं प्रणनाम ह । पप्रच्छ विनयेनैव संयुतः स नृपोत्तमः ॥६॥ कीदृशं तद्व्रतं विप्र गणेशस्य महात्मनः । कृतं केन व्रतं तत्र भवेत् सिद्धिश्च कीदृशी ॥७॥ कस्मिन् काले व्रतं कार्यं पूजनं कीदृशं मुने । वद सर्वं विशेषेण करिष्यामि त्वदाज्ञया ॥८॥ वसिष्ठ उवाच । चतुर्थी गणनाथस्य प्रियाऽत्यंतं नृपोत्तम । शुक्ला कृष्णा समाख्याता सर्वसिद्धिप्रदा भवेत् ॥९॥ चंद्रोदये यदा प्राप्ता कृष्णा सैव चतुर्थिका । सा संकष्टहरा प्रोक्ता चतुर्विधफलप्रदा ॥१०॥ चतुर्विधं जगत् सर्वं जानीहि त्वं नृपात्मज । संकष्टं तत् समाख्यातं बंधनेन विशेषतः ॥११॥ इह भुक्त्वाऽखिलान् भोगान् संकष्टीकरणान्नृप । सर्वसंकटहीनः स स्वानंदे प्रगमिष्यति ॥१२॥ यदा चन्द्रोदये भूप चतुर्थी नैव लभ्यते । प्रदोषव्यापिनी ग्राह्या सर्वसंकटमुक्तये ॥१३॥ उभये चन्द्रसंयुक्ता प्राप्ता सा व्रतधारिणी । तदा स्वेच्छाविहारेण कर्तव्या चन्द्रव्यापिनी ॥१४॥ तृतीयायां प्रदोषाच्च चंद्रस्योदयगा भवेत् । तदा सैव सदा ग्राह्या परां त्यक्त्वा विशेषतः ॥१५॥ शुक्ला सा वरदा प्रोक्ता चतुर्णां नात्र संशयः । संचिताऽसंचितानां वै व्रतकारिजनाय च ॥१६॥ धर्मार्थकाममोक्षाद्या-श्चत्वारो ये पदार्थकाः । तान् ददाति गणेशस्य प्रीतिदा सा चतुर्थिका ॥१७॥ मध्याह्नव्यापिनी ग्राह्या सदा शुक्लचतुर्थिका । उभयत्र यदा नाप्ता पूर्वविद्धा मता तिथिः ॥१८॥ उभयत्र यदा प्राप्ता भवेत् प्रहरभानुगा । तृतीया चेत्तदा साऽपि पूर्वविद्धा मता तिथिः ॥१९॥ प्रहरादूर्ध्वगा भूप तृतीया सूर्यसंयुता । तदा पूर्वा परा वाऽपि कार्या सैव चतुर्थिका ॥२०॥ चतुर्थीव्रतहीनस्य फलहीनानि भूमिप । व्रतानि सर्वकालेष्वाद्या कार्या सा ततः प्रभो ॥२१॥ एतद्व्रतं महाभाग ब्रह्मणाऽऽचरितं पुरा । व्रतस्यैव प्रभावेण निर्ममे सकलं जगत् ॥२२॥ विष्णुना शंकरेणैव कृतं व्रतमनुत्तमम् । पालने हरणे देवौ समर्थौ तौ बभूवतुः ॥२३॥ योगिभिः शुकमुख्यैश्च कश्यपादिमुनीश्वरैः । मुनिभिश्च कृतं पूर्वं स्वस्वकार्यार्थसिद्धये ॥२४॥ इह भुक्त्वाऽखिलान् भोगानंते स्वानंदगा बभुः । नानेन सदृशं विद्धि चतुर्णां साधकं नृप ॥२५॥ अन्यैर्नानाविधैरतत् कृतं

वर्णाश्रमस्थितैः । ते सर्वे ब्रह्मभूता वै ययुः स्वानंदके पुरे ॥२६॥ एतद् व्रतं महीपाल कुरु त्वं भावसंयुतः । भविताऽसि सपुत्रश्च तथा स्वानंदगो भवेः ॥२७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते दशरथव्रतोपदेशो नाम चतुर्थोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । ब्रह्मादिभिः कथं विप्र चतुर्थीगं व्रतं कृतम् । गणनाथप्रियं पूर्णं वद सर्वं प्रविस्तरात् ॥१॥ दक्ष उवाच । वद मुद्गल माहात्म्यं चतुर्थ्यास्त्वं प्रविस्तरात् । श्रुत्वा कथां महारम्यां न तृप्यामि मुनीश्वर ॥२॥ दक्षस्य भक्तिसंयुक्तं वाक्यं श्रुत्वा महामुनिः । जगाद तं विशेषज्ञो मुद्गलः शृणु शौनक ॥३॥ वचनं नृपवर्यस्य श्रुत्वा दशरथस्य च । जगाद तं मुनिश्रेष्ठो वसिष्ठः सर्ववित् प्रभुः ॥४॥ वसिष्ठ उवाच । कदाचित् प्रलये वृत्ते नष्टे स्थावरजंगमम् । पंचभूतमयं सर्वं त्र्यवस्थासंयुतं पुरा ॥५॥ शून्यवत् सर्वभावैस्तद्धीनं ब्रह्ममयं बभौ । योगनिद्रा गणेशस्य सैव वेदे प्रकथ्यते ॥६॥ पुनः स कस्मिंश्चित्काले वेदवाग्भिः प्रबोधितः । गणेशो निर्ममे सर्वं तत्त्वैस्तत्त्वप्रधारकः ॥७॥ त्रिगुणेभ्यः समुत्पन्ना देवाः पंच नृपेश्वर । ब्रह्मा विष्णुः शिवः शक्तिः सूर्यः सर्वधरा बभुः ॥८॥ तैस्तपश्चरितं घोरमेकाक्षरविधानतः । तपसा गणनाथस्तु प्रसन्नः प्रबभूव ह ॥९॥ हृदये दर्शयामास स्वात्मानं सर्वदं परम् । तेन ज्ञानयुता जाता देवाः पंच नरेश्वर ॥१०॥ तैश्च संप्रार्थितो योगी भ्रूशुंडी सर्वपारगः । तेन संप्रेषिता देवा आययुर्नगरे निजे ॥११॥ कर्मभूमौ गणेशस्य क्षेत्रं स्वानंदवाचकम् । वेदैः संदर्शितं स्थापयामासुस्तत्र विघ्नपम् ॥१२॥ यस्मिन् काले च देवेशैः स्थापिता मूर्तिरादरात् । तस्मिन् काले चतुर्थी सा भाद्री शुक्ला बभूव ह ॥१३॥ मध्याह्नसमये संस्था सा मुख्या प्रबभूव ह । तत आराधितस्तैः स गणराजो विशेषतः ॥१४॥ माघमासे सिते पक्षे चतुर्थ्यां राजसत्तम । प्रकटोऽभूत् पुरस्तेषां वरदाता गजाननः ॥१५॥ वरप्रसादेन तस्य निर्मितं सकलं जगत् । देवेशैः सा तिथिर्मुख्या बभूव वरदायिनी ॥१६॥ ब्रह्मादिभिश्च सर्वेभ्य उपदिष्टा चतुर्थिका । आदौ काले तथा तत्र ज्येष्ठी मुख्या बभूव सा ॥१७॥ ज्येष्ठशुद्धचतुर्थ्यां तद्व्रतदानं कृतं पुरा । तस्मिन् काले धृता सर्वैः सद्यः सा वरदायिनी ॥१८॥ अतो मुख्यत्वमापन्ना ज्येष्ठी माघी च भाद्रिका । चतुर्थी नृपशार्दूल शुक्लपक्षेषु सर्वदा ॥१९॥ तत्र भाद्रपदे मासे चतुर्थी या महामते । शुक्ला साऽत्यंतभावेन मुख्या जाताऽद्य भावतः ॥२०॥

चतुर्थी समभावेन न किंचिद्वर्तते व्रतम् । अतः किं वर्णनीयं वै तदौपम्यं तदेव च ॥२१॥ भाद्रे चतुर्थी या शुक्ला साधिता सा नरेण चेत् । स द्वादशचतुर्थीसंभवं पुण्यं समाप्नुयात् ॥२२॥ अंगारकयुता भूप सा नरेण कृता भवेत् । चतुर्थी षोडशभवं पुण्यं प्राप्तं न संशयः ॥२३॥ नरेण धीमता सा चेद्यदि चंद्रयुता कृता । चतुर्थी विंशतिभवं फलं प्राप्तं महामते ॥२४॥ यदि स्वातियुता भूप चंद्रवारेण चेत्कृता । प्राप्तं चतुर्विंशतिचतुर्थीजं किल पुण्यकम् ॥२५॥ माघे शुक्लचतुर्थी सा कृता चेन्नात्र संशयः । अष्टानां च चतुर्थीनां फलं प्राप्तं नरेण तत् ॥२६॥ अंगारकयुता चेद्वै साधिता सा नरेण च । द्वादशानां चतुर्थीनां पुण्यं प्राप्तं व्रतोद्भवम् ॥२७॥ ज्येष्ठे शुक्लचतुर्थीं यः करोति व्रतधारकः । चतुश्चतुर्थीजं पुण्यं लभते स नराधिप ॥२८॥ अंगारकयुता चेद् द्वादशभिः समतां व्रजेत् । नरेण सा प्रयत्नेन कर्तव्या सर्वदायिका ॥२९॥ अन्येषु श्रावणाद्येषु चतुर्थी वरदा कृता । धर्मार्थकाममोक्षाणां दात्री शास्त्रेषु संमतम् ॥३०॥ तत्र श्रावणमासे या चतुर्थी वरदा मता । द्विचतुर्थीभवं पुण्यं ददाति व्रतकारिणे ॥३१॥ चतुर्थ्या महिमाऽनंतोऽशक्यो वर्णयितुं भवेत् । चतुःपदप्रदा प्रोक्ता सा कथं वर्ण्यते मया ॥३२॥ अधुना शृणु राजेंद्र कृष्णपक्षे समागताम् । चतुर्थीं सर्वदां पुण्यां संकष्टहरिणीं शुभाम् ॥३३॥ चतुर्विधं च संकष्टं प्राप्तं सर्वैर्नराधिप । जन्ममृत्युत्र्यवस्थाख्यं चतुर्थं कर्मजं फलम् ॥३४॥ इत्यादिबहवो भेदाः कथनं नैव शक्यते । चतुर्विधं जगत् सर्वं पंचमं ब्रह्म उच्यते ॥३५॥ चतुर्विधं सुसंकष्टं व्रतमात्रेण हंति या । संकष्टहरिणी प्रोक्ता चतुर्थी कृष्णपक्षगा ॥३६॥ तस्यापि महिमानं कः क्षमो वर्णयितुं भवेत् । सर्वसिद्धिप्रदायास्तु व्रताचरणमात्रतः ॥३७॥ माघमासे कृताऽऽदौ च ब्रह्मणा विश्वयोनिना । अतः सा मुख्यतां प्राप्ताऽष्टचतुर्थीव्रतैः समा ॥३८॥ अंगारकयुता तत्र विंशत्या समतां व्रजेत् । साधिता व्रतभावेन चेन्नरेण नराधिप ॥३९॥ श्रावणे या समाख्याता चतुर्थी कृष्णपक्षगा । चतुश्चतुर्थीतुल्या सा भवत्यत्र न संशयः ॥४०॥ ब्रह्मणा चोपदिष्टा वै श्रावणे सा ततोऽधिका । आदौ देवमुनींद्रेभ्यः सर्वसंकष्टहारिणी ॥४१॥ भाद्रमासे नराधीश चतुर्थी कृष्णपक्षगा । चतुश्चतुर्थीतुल्या सा शृणु कारणमत्र वै ॥४२॥ देवानां गणनाथश्च वरदः संबभूव ह । व्रतमात्रेण तस्मात् सा मुख्या जाता न संशयः ॥४३॥ अंगारकयुता कुत्र संप्राप्ता चेत् सुसिद्धिदा । द्वादशव्रतजं पुण्यं ददाति व्रतकारिणे ॥४४॥ शुक्ला कृष्णा सदा कार्या चतुःपदसुसिद्धये । अन्यथा सिद्धिहीनानि प्रभवंति व्रतानि च ॥४५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते चतुर्थीविवेकवर्णनं नाम पंचमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । अंगारकयुता स्वामिन् कथं श्रेष्ठा बभूव सा । तन्मे ब्रूहि विशेषेण संशयोऽत्र महांश्च मे ॥१॥ वसिष्ठ उवाच । भरद्वाजात् समुत्पन्नः पृथ्व्यां भौमो महामतिः । गणानां त्वेतिमंत्रेण पूजयामास विघ्नपम् ॥२॥ तताप स तपो रम्यं ध्यात्वा देवं गजाननम् । पारिनेराच्च नगरात् पश्चिमे वनसंस्थितः ॥३॥ शतवर्षैर्गणाध्यक्षः प्रसन्नस्तं ययौ नृप । वरं ब्रूहि महाभाग भूमिपुत्रेति सोऽब्रवीत् ॥४॥ ततो भौमो गणाधीशं पूजयन् भक्तिभावतः । स्तुत्वा तं स जगादेति वरं सर्वसुखप्रदम् ॥५॥ नरदेहेन युक्तोऽहं तथापि गणनायक । इच्छामि चामृतं पातुं ग्रहं मां कुरु मानद ॥६॥ तव भक्त्येकनिलयं नाम्ना मंगलसंज्ञकम् । ऋणहर्तारमेवं मां प्रभो कुरु धनप्रदम् ॥७॥ माघकृष्णचतुर्थ्यां यद्दर्शनं ते मया कृतम् । मया युक्ता ततो देवी महापुण्यप्रदाऽस्तु सा ॥८॥ तथेति गणनाथेन कृतं सर्वं नराधिप । अतोऽगारयुता पुण्या चतुर्थी मुख्यतां गता ॥९॥ अधुना चेतिहासं ते कथयामि विशेषतः । भाद्रशुक्लचतुर्थ्यां वै न द्रष्टव्यो निशाकरः ॥१०॥ तत्र ते कारणं सर्वं कथयामि सविस्तरम् । येन दोषविहीनस्त्वं गणेशं भजसे नृप ॥११॥ एकदा देवसंयुक्तैर्मुनिभिश्चैव निश्चितम् । गणेशांशसमुद्भूताः पंच देवा न संशयः ॥१२॥ ते गणेशस्वरूपाद्वै कदा भिन्ना भवंति न । तेषां स्मरणमात्रेण संतुष्टो गणनायकः ॥१३॥ भविष्यति न संदेहस्तस्मादादौ मुनीश्वराः । शिवादीन् पूजयत च तेन सिद्धिमवाप्स्यथ ॥१४॥ एवं ज्ञानबलेनाज्ञैः कृतं देवैः सहर्षिभिः । पंचभिर्विष्णुमुख्यैस्तत्तथेति प्रतिपादितम् ॥१५॥ ततः सर्वे मुनिगणाश्चक्रुस्ते तादृशीं क्रियाम् । तया सिद्धिविहीनास्ते श्रांताः सर्वे बभूविरे ॥१६॥ समागता देवगणैः ब्रह्माणं तुष्टुवुर्नृप । वृत्तांतं कथयामासुः सोऽपि चिंतातुरोऽभवत् ॥१७॥ सस्मार शिवमुख्यांश्च ब्रह्माणं ते समाययुः । विष्णुः शिवोऽर्यमा शक्तिस्तेऽपि श्रुत्वा सुविस्मिताः ॥१८॥ एतस्मिन्नंतरे तत्र शब्दः सर्वभयंकरः । बभूव तीव्रघोषेण युक्तः प्रलयसूचकः ॥१९॥ शब्दं श्रुत्वा भयोद्विग्ना बभूवुः शंभुमुख्यकाः । ततोऽकस्मान् महाभीमः पुरुषः प्रकटोऽभवत् ॥२०॥ विकरालं च तं दृष्ट्वा मुमूर्च्छुः शंकरादयः । मुनयो देवताः केऽपि पलायंत च मूर्च्छिताः ॥२१॥ मुहूर्तमात्रकाले वै गते ब्रह्मादयः सुराः । सावधाना बभूवुस्तं ददृशुः पुरतः स्थितम् ॥२२॥ ततोऽतिभयसंयुक्तास्तुष्टुवुर्गणनायकम् । ध्यात्वा हृदि महद्रूपं गजवक्त्रादिचिह्नितम् ॥२३॥ ब्रह्माद्या ऊचुः । नमस्ते गणनाथाय विघ्नानां पतये नमः । अनाथानां सुनाथाय नमो विघ्ननिवारण ॥२४॥ भक्तेभ्यः सर्वदात्रे ते निराकाराय साक्षिणे । अमेयायाप्रतर्क्याय हेरंबाय नमो नमः ॥२५॥ गजाननाय देवाय शूर्पकर्णाय ते नमः । महोदराय सर्वेषामादिपूज्याय वै

नमः ॥२६॥ सर्वादये महादात्रे सर्वपूज्याय वै नमः । सर्वभावस्थितायैव ढुंढिराजाय ते नमः ॥२७॥ स्वानंदवासिने तुभ्यं योगशांतिमयाय च । योगिभ्यो योगदात्रे वै योगानां पतये नमः ॥२८॥ सृष्टिकर्त्रे च पात्रे ते सृष्टिहर्त्रे नमो नमः । गणेशाय गुणानां वै चालकाय नमो नमः ॥२९॥ आत्मनेऽनात्मने चैव कारणानां प्रकाशिने । ब्रह्मेशाय सदानाथ देवपालकरूपिणे ॥३०॥ निवारय महाविघ्नं सहसा समुपस्थितम् । ग्रसिष्यति न चेदंडमस्मान् वै नात्र संशयः ॥३१॥ त्वदीयपादपद्मस्य वयं दासा गजानन । मरिष्यामो यदा नाथ यशस्तव गतं तदा ॥३२॥ अधुना रक्ष देवेश न वयं द्रष्टुमुग्रकम् । क्षमा गच्छंति नः प्राणा रक्ष विघ्नेश रक्ष भोः ॥३३॥ एवं संस्तुवतां तेषां पुरः सोऽपि महापुमान् । गणेशाकाररूपेण बभूव नृपसत्तम ॥३४॥ ततस्ते तं प्रणेमुश्च पूजयामासुरादरात् । मानसीं स्वसुतां तस्मै ददुः सर्वे शिवादयः ॥३५॥ सरस्वतीं ददौ ब्रह्मा विष्णुः पुष्टिं च मानसीम् । योगिनीं शंकरश्चैव मोहिनीं जगदंबिका ॥३६॥ संजीवनीं ददौ तस्मै भानुः सर्वप्रियंकरः । एवं संपूज्य विघ्नेशं प्रणतास्ते महीपते ॥३७॥ उवाच तान् स उत्थाप्य विघ्नेशो भक्तिभावतः । विष्णुमुख्यान् महेशांश्च मेघगंभीरनिःस्वनः ॥३८॥ श्रीगणेश उवाच । शंभुमुख्याः शृणुत च देवेंद्रा मुनिमुख्यकाः । मदीयांशा भवंतोऽपि गर्वं मा कुरुत प्रियाः ॥३९॥ चराचरं मदीयांशं मद्रहितं न किंचन । तेभ्यः सिद्धिप्रदानार्थं देहधारी भवाम्यहम् ॥४०॥ यदि ज्ञानेन मां त्यक्त्वा पूजयेत् तृणरूपकम् । तेनाऽहं किं महादेवाः पूजितो वदत प्रियाः ॥४१॥ तत्रांशो वर्तते किंचिन् मदीयस्तत् समा च मे । तृप्तिर्जाता न संदेहः पूर्णस्तृप्तो भवामि न ॥४२॥ भवंतोऽपि तथा विप्रैः कलांशाः पूजिता यदि । कलांशरूपा मे तृप्तिस्तेन जाता गुणात्मिका ॥४३॥ ब्रह्मांडे पूजिते पूर्णे न तृप्तोऽहं भवामि च । अनंतानि मदीयेषु ब्रह्मांडानि स्वलोमसु ॥४४॥ गजवक्त्रादि-चिह्नेन चिह्नितोऽहं महेश्वरः । जगद्ब्रह्ममयस्तत्र तिष्ठामि योगशांतिदः ॥४५॥ तस्य पूजनमात्रेण जगद्ब्रह्म सुपूजितम् । अहं तयोश्च योगे वै पूर्णः संपूजितो मतः ॥४६॥ मां त्यक्त्वा ज्ञानमोहेन मोहिता मुनिदेवताः । भवतां पूजनं चक्रुः सर्वादौ विघ्नसंयुताः ॥४७॥ तत्रापि मदसंयुक्ता भवंतस्तादृशात्मकाः । सिद्धिहीनास्ततो जाताः पुनर्मा कुरुत त्विदम् ॥४८॥ पूर्वस्मिंश्च भवद्भिर्वै सेवितो भक्तिसंयुतैः । अतः सहामि देवेशा दत्तं वो दर्शनं मया ॥४९॥ कलांशमात्रेण यदि संतुष्टोऽहं भवामि चेत् । तदा देहधरः कस्मात् स्थास्यामि वदत प्रियाः ॥५०॥ एवमुक्त्वा गणाधीशो विरराम महीपते । तेऽपि प्रणम्य विघ्नेशं स्वदोषं प्रक्षमापयन् ॥५१॥ एतस्मिन्नंतरे तत्र चन्द्रः शंकरभालगः । जहास विवृतैर्दंतैर्गणेशं रूपगर्वितः ॥५२॥ उवाच मोहितोऽत्यंतं



प्रणम्य गणनायकम् । गजवक्त्रयुतं रूपं किं धृतं विकटं प्रभो ॥५३॥ पुनः पुनरुवाचेदं वाक्यं हास्यपरायणः । ततस्तं कुपितो देवः शशाप शशलाञ्छनम् ॥५४॥ ये त्वां विलोकयंते वै चन्द्र ते पापिनः सदा । भवंतु विघ्नसंयुक्ता मद्वाक्यान्नात्र संशयः ॥५५॥ एवमुक्त्वांतर्दधेऽसौ गणेशो ब्रह्मनायकः । भार्याभिः सहितो भूप चन्द्रश्च मलिनोऽभवत् ॥५६॥ अहंकारविहीनास्ते जाताः शंभ्वादयः सुराः । तदारभ्य महाभाग गाणपत्या विशेषतः ॥५७॥ वेदज्ञाऽहंकृतिः पूर्णा ब्रह्मणो हृदि संस्थिता । तया मद्युतो ब्रह्मा भवत्येवं पुनः पुनः ॥५८॥ सरस्वती सा दत्ता वै गणेशाय महात्मने । तया युक्तः सदा रेमे ब्रह्मणो हृदि विघ्नपः ॥५९॥ हृदि स्थिते गणेशे स कथं मोहयुतो भवेत् । सदा तं भजते भक्त्या गाणपत्यस्वभावतः ॥६०॥ सर्वपोषणता तद्वद्विष्णोर्हृदि समास्थिता । तत् सामर्थ्यविमोहेन गर्वं गच्छति केशवः ॥६१॥ तां ददौ विघ्नराजाय पुष्टिं विश्वस्य पोषिणीम् । तया युक्तो गणेशानो रेमे विष्णोः सदा हृदि ॥६२॥ सोऽपि तं भजते नित्यं गाणपत्यविचारवित् । हृदिस्थे स कथं मोहं प्राप्नोति नृप विघ्नपे ॥६३॥ योगेन मोहहीनत्वं सदा शंभोर्हृदि प्रभो । तेनाहंकारभावेन मन्यते किं न शंकरः ॥६४॥ तामेव योगिनीं देवीं हृदिस्थां प्रददौ शिवः । गणेशस्तु तया युक्तो रेमे शंभोर्हृदि स्थितः ॥६५॥ गणेशे हृदि संस्थे स मोहं नैव प्रपद्यते । सदा गाणेशको भूत्वा भजते गणनायकम् ॥६६॥ वृष्ट्या दानप्रदाने वै करोति स दिवाकरः । सर्वेषां जीवनं तेन धृतं कर्ममयं नृप ॥६७॥ तदेव हृदये तस्य वर्ततेऽहंस्वभावतः । तां संजीवनिकां सूर्यो ददौ विघ्नेश्वराय च ॥६८॥ तया युक्तो गणाधीशः सदा हृदि स खेलति । भानोस्तेन रविस्तं स भजतेऽनन्यचेतसा ॥६९॥ शक्तिर्हृदयगां देवीं मोहिनीं सर्वमोहिनीम् । ददौ विघ्नेश्वरायैव शक्तिभावसमन्विताम् ॥७०॥ तया युक्तो गणेशानस्तस्या हृदि विशेषतः । तेन खेलति सा देवी भजते गणनायकम् ॥७१॥ इत्यहंकारनिर्मुक्ता देवेंद्रास्ते बभूविरे । गाणपत्यप्रिया जाता भजंते विघ्ननायकम् ॥७२॥ चित्ते चिंतामणिः स्थित्वा प्रकृत्या खेलति प्रभुः । मिथ्याहंकारभावेन बंधनं प्रतिपद्यते ॥७३॥ कर्ता कारयिता देवो गणेशो नात्र संशयः । हृदिस्थं तं समभ्यैव स्वात्मानं सुखिनोऽभवन् ॥७४॥ मुद्गल उवाच । श्रुत्वा दशरथो राजा जगाद मुनिसत्तमम् । चंद्रस्य का गतिर्जाता तां मे वद महामुने ॥७५॥ वसिष्ठ उवाच । गणेशशापसंयुक्तश्चंद्रः स स्वगृहे गतः । एकांते दुःखसंयुक्तो विचारमकरोद्धृदि ॥७६॥ संप्रज्ञातस्वरूपश्च देहो गणपतेः स्मृतः । असंप्रज्ञातरूपं वै शिरस्तस्य महात्मनः ॥७७॥ तयोर्योगे गणेशोऽयं भक्तानुग्रहकारणात् । देहधारी स्वयं

साक्षाद्बभूवात्र न संशयः ॥७८॥ वेदेषु कथितं ते यद्रूपं परमयोगदम् । तन्न ज्ञातं मया देव मोहेनैव गजानन ॥७९॥ अपराधं दयासिंधो क्षम त्वं चित्तगं प्रभो । एवं क्षमाप्य विघ्नेशं ध्यात्वा लीनो बभूव ह ॥८०॥ गंगातीरे समागम्य तताप तप उत्तमम् । अष्टादशाक्षरेणैव तोषयामास विघ्नपम् ॥८१॥ चंद्रे लीने जगत् सर्वं दुःखयुक्तं बभूव ह । सूर्यस्य तेजसा दग्धं रसहीनं चराचरम् ॥८२॥ ततो देवगणैः सर्वैर्भयभीतैः समंततः । शंभुविष्णुमुखास्तत्र तपस्तेपुः सहेश्वराः ॥८३॥ षडक्षरविधानेन ध्यात्वा हृदि गजाननम् । भक्तियुक्ता नृपश्रेष्ठ तोषयामासुरादरात् ॥८४॥ वर्षाणां शतके तत्र गते चंद्रं गणाधिपः । आययौ वरदानार्थं तपो बद्धो नृपोत्तम ॥८५॥ वर्षेणैकेन देवेशान् ययौ विघ्नाधिपो विभुः । समकाले च देवेशाश्चंद्रस्तं तुष्टुवुर्विभुम् ॥८६॥ अथर्वशिरसा ढुंढिं तोषयामासुरादरात् । संतुष्टस्तानुवाचेदं गणेशो ब्रह्मनायकः ॥८७॥ श्रीगणेश उवाच । वरं वृणुत देवेशाः संतुष्टोऽहं ददामि तम् । यं यमिच्छथ तं तं वै सफलं वः करोम्यहम् ॥८८॥ गणेशवचनं श्रुत्वा देवास्तं प्रणिपत्य ते । कृत्वा करपुटं सर्वे जगुः परमहर्षिताः ॥८९॥ देवा ऊचुः । यदि प्रसन्नभावेन वरदोऽसि गजानन । तदा चंद्रं सुनिर्दोषं कुरु नाथ नमोऽस्तु ते ॥९०॥ स तानुवाच सर्वात्मा भक्त्या संतोषितः प्रभुः । भाद्रशुक्लचतुर्थ्यां वै न द्रष्टव्यः सुधाकरः ॥९१॥ हास्यं कृतं मदीयं वै तद् दिने तेन देवपाः । दोषयुक्तो विधुस्तस्मान्नान्यथा मे वचो भवेत् ॥९२॥ ततोऽतिहर्षिता देवास्तथेति प्रतिपाद्य ते । ययुश्चंद्रं तु संद्रष्टुं गणेशेंऽतर्हिते नृप ॥९३॥ चंद्रो गणपतिं दृष्ट्वा ननाम दंडवत् क्षितौ । पूजयामास तं देवं तुष्टाव स कृतांजलिः ॥९४॥ चंद्र उवाच । नमस्ते विघ्नपालाय गणेशाय परात्मने । ब्रह्मेशाय स्वभक्तेभ्यो ब्रह्मभूयप्रदाय ते ॥९५॥ अनामयाय सर्वादिपूज्याय तु नमो नमः । शिवात्मजाय देवाय विष्णुपुत्राय ते नमः ॥९६॥ ब्रह्मपुत्राय सूर्यस्य पुत्र ते विघ्नहारिणे । शक्तिपुत्राय शेषस्य पुत्राय च नमो नमः ॥९७॥ सर्वपुत्राय सर्वेषां मात्रे पित्रे नमो नमः । सर्वेशाय परेशाय परात्परतराय ते ॥९८॥ सिद्धिबुद्धिपते तुभ्यं सिद्धिबुद्धिप्रचालक । हेरंबाय महेशानां महेशाय नमो नमः ॥९९॥ स्रष्टे पात्रे च संहर्त्रे परमात्मस्वरूपिणे । सर्वेभ्यो वरदात्रे तेऽनादिसिद्धाय भो नमः ॥१००॥ क्षमापराधं देवेश त्वन्मायामोहधारिणः । शरणं ते प्रसन्नस्य रक्ष मां महतो भयात् ॥१॥ मां दृष्ट्वा हर्षसंपन्ना अभवन् देवतादयः । अधुना मां निरीक्ष्यैव दोषयुक्ता भयातुराः ॥२॥ अतो मां नैव पश्यंति पापिनां पापरूपिणम् । निर्दोषं कुरु विघ्नेश करुणालय ते नमः ॥३॥ सर्वदा दर्शनं ते वै ममास्तां विघ्नवारण । तेनाऽहं कृतकृत्यश्च भवेयं

योगिसंमतः ॥४॥ ततोऽतिभक्तिसंयुक्तं नृत्यंतं देवसंनिधौ । रोमांचाश्रुसमायुक्तं दृष्ट्वा ढुंढिर्जगाद तम् ॥५॥ श्रीगणेश उवाच । त्वया कृतमिदं स्तोत्रं मम प्रीतिविवर्धनम् । अपराधाननंतांश्च सहे तेऽनेन निश्चितम् ॥६॥ सर्वसिद्धिप्रदं पूर्णं भविष्यति विशेषतः । पठतां शृण्वतां चैव नानासुखकारकं भवेत् ॥७॥ यथापूर्वं स्थितश्चंद्र तादृशो भव नित्यदा । यस्मिन् दिने कृतं हास्यं तत्र दोषयुतो भवेः ॥८॥ ललाटे भूषणं मे त्वं भव सेवापरायणः । चतुर्थ्यां कृष्णपक्षस्य व्रते ते पूजनं भवेत् ॥९॥ मां पूजयित्वा तारेश अर्घ्यं यस्ते प्रदास्यति । तस्य सिद्धिर्भवेत् पूर्णा व्रतजा नान्यथा क्वचित् ॥११०॥ द्वितीयायां च सायाह्ने त्वया प्राप्तोऽहमादरात् । अतः शुक्लद्वितीयायां नमस्यो मानवैर्भव ॥११॥ द्वितीयायां प्रयत्नेन त्वां नमस्यंति मानवाः । मासगं दुःखमुत्सृज्य क्वचित् तिष्ठति नान्यथा ॥१२॥ एवमुक्त्वाऽतर्दधेऽसौ गणेशश्चंद्रपूजितः । तस्मिन् काले च देवेशा देवास्तत्र समाययुः ॥१३॥ मानयामास संपूज्य चन्द्रस्तांस्तैः समन्वितः । गणेशं ब्राह्मणैः सार्धं संस्थाप्यापूजयत् प्रभुम् ॥१४॥ गणेशभालसंस्थानं प्राप्तं चन्द्रेण यत्र वै । भालचन्द्रं गणेशानं वदंति तत्र संस्थितम् ॥१५॥ देवैः संपूजितस्तत्र ब्राह्मणैर्गणनायकः । प्रगृह्य चन्द्रं निर्दोषं ततः स्वर्गं ययुः सुराः ॥१६॥ चन्द्रः स्वांशस्वरूपेण स्वर्गे तिष्ठति भूमिप । पूर्णरूपेण विघ्नेशं सेवते नित्यमादरात् ॥१७॥ गंगातीरे निवासं स चकारात्रिसमुद्भवः । विधुश्च भालचन्द्रं तं सेवते भक्तितत्परः ॥१८॥ अथ कस्मिंश्च समये देवैः संप्रार्थितो हरिः । यादवेषु समुत्पन्नो वासुदेवो बभूव ह ॥१९॥ अज्ञानेन विधोस्तेन दर्शनं प्रकृतं नृप । भाद्रशुक्लचतुर्थ्यां तु सदोषः स बभूव ह ॥१२०॥ अंतर्ज्ञानं गतं तस्य नरतुल्यो बभूव सः । तथापि विघ्नसंयुक्तो हरिस्तच्छृणु भूमिप ॥२१॥ सत्राजिन्नाम राजर्षिर्यादवेषु बभूव वै । तेन सूर्यतपस्तप्तं दारुणं शतवत्सरम् ॥२२॥ सूर्येण स्वगले संस्थो मणिर्दत्तः स्यमंतकः । सत्राजिते स तद्रत्नं गले भक्त्या बबंध ह ॥२३॥ नित्यं सुवर्णभाराणामष्टौ स्रवति सन्मणिः । सूर्यतेजःसमानश्चाऽशोभयद्यदुनंदनम् ॥२४॥ द्वारकायां स्थितं तं स सूर्यभक्तिपरायणम् । शुचिभावेन रत्नं सोऽपूजयत्तान्निरंतरम् ॥२५॥ ततो बहुगते काले कृष्णो दोषयुतोऽभवत् । तस्य बुद्धिः समुत्पन्ना मणेः संग्रहणे नृप ॥२६॥ सभायां संस्थितः कृष्णः स सत्राजितमाह्वयत् । आगतं तमुवाचाऽसौ विनयेन समन्वितः ॥२७॥ श्रीकृष्ण उवाच । उग्रसेनश्च सर्वेषां यादवानां महामते । राजाऽस्माभिः कृतस्तं ते यादवाः पूजयंति भोः ॥२८॥ अस्माभिर्दिग्जये प्राप्तमुग्रसेनाय यादव । दत्तं श्रेष्ठं तथा त्वं तं मणिं देहि स्यमंतकम् ॥२९॥ सुवर्णं मणिसंभूतं गृहाण

त्वं तु नित्यदा। शोभार्थं कंठगं तात मणिं कुरु नृपस्य तम् ॥१३०॥ एवमुक्तः स सत्राजित्तमुवाच समन्युना। प्रसेनाय मया दत्तः स मे नैव ददाति तम् ॥३१॥ एवमुक्त्वा गृहं गत्वा स्वानुजाय ददौ मणिम् । प्रसेनाय स्ववृत्तांतं कथयामास विस्तरात् ॥३२॥ ततः कदाचित् कृष्णेन सहिता यदुनंदनाः । मृगयार्थं वने राजन् जग्मुर्हर्षसमन्विताः ॥३३॥ तत्राशुचिस्वभावेन प्रसेनस्तं मणिं परम् । बबंध स्वगले सोऽपि तैः सह प्रययौ वनम् ॥३४॥ अशुचित्वस्य दोषेण सिंहकस्तं प्रसेनकम् । साश्वं हत्वाऽऽगृह्य मणिं ययौ स्थानं स्वकं महान् ॥३५॥ ततस्तं जांबवान् हत्वा गृह्य सिंहं मणिं ययौ । स्थानं पुत्र्या मणिं हस्ते तं ददौ स महाबलः ॥३६॥ तव भर्ता सुते यो वै भविष्यति मणिं परम् । तस्मै दास्यामि भावेन त्वदीयोऽयं मणिः स्मृतः ॥३७॥ सायाह्ने यादवाः सर्वे आगताः स्वस्वमंदिरे । प्रसेनेन विहीनास्ते सत्राजित् क्रोधमादधे ॥३८॥ अहो कृष्णेन मे भ्राता संहतो नात्र संशयः । मणिलोभवशेनाऽपि पापिना पापचेतसा ॥३९॥ ततो लोकाः पुरे संस्थाः सत्यमामानयंस्तु ते । उग्रसेनादयः सर्वे कृष्णं न्यभर्त्सयन्नृप ॥१४०॥ ततः कृष्णश्च दुःखार्तः स ध्यानेनावलोकयन् । नरवन्न बुबोधाऽपि स दोषो वसुदेवजः ॥४१॥ ततोऽतिदुःखितो भूत्वा विचारं देवकीसुतः । चकारांतरजं ज्ञानं क्व गतं मम सांप्रतम् ॥४२॥ नरतुल्यः कथं जातः कारणं नात्र वेद्मि वै । देहत्यागं करिष्यामि वृथा लाञ्छनकारणात् ॥४३॥ ततः सभां समागम्याऽऽगृह्य यादवमुख्यकान् । वनं ययौ प्रसेनस्य निश्चयार्थं महाद्युतिः ॥४४॥ पादमार्गं प्रसेनस्य ते संगृह्य महावने । गतास्तत्र मृतं साश्वं प्रसेनं ददृशुर्नराः ॥४५॥ सिंहेन संहतं दृष्ट्वा मणिहीनं तु यादवाः । पुरतस्ते ययुः सर्वे सिंहमार्गप्रधारिणः ॥४६॥ ततो महावने सिंहमृक्षेण प्रहतं पुनः । ददृशुर्न मणिं तत्र लेभिरे भयसंकुलाः ॥४७॥ ऋक्षपादं तथाऽऽगृह्य ययुर्यादवमुख्यकाः । महावने बिले घोरे गतमृक्षमलोकयन् ॥४८॥ ततस्तांस्तत्र संस्थाप्य कृष्णः परपुरंजयः । बिले संप्रविवेशाऽथ लाञ्छनस्यापनोदनात् ॥४९॥ बिले योजनमात्रं स गत्वा तत्र ददर्श ह । प्रकाशयुक्तं संस्थानं शोभमानं सुविस्तरम् ॥१५०॥ दोलायां संस्थितं वीक्ष्य मणिं कृष्णो जहर्ष च । तत्र सुप्तं शिशुं दृष्ट्वा शनैरागात् स यादवः ॥५१॥ ततोऽकस्माज्जांबवतो बहिः पुत्री समाययौ । अपूर्वं पुरुषं दृष्ट्वा चुक्रोश भयसंकुला ॥५२॥ ततो जांबवता राजन् श्रुतं पुत्र्याः प्ररोदनम् । आययौ च स तं दृष्ट्वा युयुधे विष्णुना स्वयम् ॥५३॥ गतास्तयोरेकविंशतिघस्रास्तु प्रयुध्यतोः । यादवा जग्मिरे सर्वे बहिःस्था अष्टमे दिने ॥५४॥ द्वारकायां स्ववृत्तांतं कथयंति स्म विह्वलाः । दिवसाः सप्त तत्रैव

किलास्माकं गता बहिः ॥५५॥ तथापि विवरात् कृष्णो न बहिश्च समागतः । मृतो वा जीवितो वा स ज्ञायते किं न यादवः ॥५६॥ वसुदेवादयः श्रुत्वा सस्त्रीका नृप दुःखिताः । उग्रसेनादयः सर्वे रुरुदुर्दुःखकर्शिताः ॥५७॥ परेऽस्माकं विशेषेण शत्रवः संस्थिता अहो । जरासंधादयश्चान्ये किं भविष्यति यादवाः ॥५८॥ हीनाः कृष्णेन संजाता अधुना नात्र संशयः । द्विषद्भिः संहताः सर्वे मरिष्यामः सपक्षकाः ॥५९॥ ततो रामेण ते सर्वे सांत्विता बहुलोक्तिभिः । निःश्वस्य संस्थिता भूप दुःखयुक्ता भयाऽऽतुराः ॥१६०॥ सत्राजितं निनिंदुस्ते व्यर्थलाञ्छनदं तदा । सोऽपि दुःखसमायुक्तो बभूव भयसंकुलः ॥६१॥ अथ तं जांबवान् कृष्णमुवाच घननिःस्वनः । कस्त्वं वीर महातेजा योधयन्नसि मां वद ॥६२॥ ततस्तं प्रत्युवाचेदं कृष्णो वचनमुत्तमम् । यदुवंशभवं कृष्णं मां जानीहि महामते ॥६३॥ श्रुत्वा खेदसमायुक्तो जांबवांस्तं ननाम वै । रामेणोक्तं वचो रम्यं स त्वं विष्णुः समागतः ॥६४॥ अहं दासस्त्वदीयो वै क्षमस्व करुणानिधे । अज्ञाना-च्छक्तिगर्वेणापराधं युद्धजं च मे ॥६५॥ स्तुतः संपूजितस्तेन कृष्णो वृत्तांतमादरात् । अगदत्तं ततः श्रुत्वा कन्यायुक्तं मणिं ददौ ॥६६॥ गृहीत्वा सस्त्रियं कृष्णो द्वारकायां समागतः । आगतं कृष्णमालोक्य हर्षयुक्ता बभूविरे ॥६७॥ यादवैश्च ततः कृष्णः समानाय्य महामणिम् । सत्राजिते ददौ तत्र सर्वेषां पश्यतां नृप ॥६८॥ सत्राजिन् मनसाऽत्यंतं निंदयामास तां तनुम् । भयभीतः स कृष्णस्य विरोधेन महायशाः ॥६९॥ सत्यभामां ददौ तस्मै मणियुक्तां महात्मने । कृष्णाय स उवाचेदं श्वशुरो विनयान्वितः ॥१७०॥ सूर्यभक्तियुतस्त्वं वै मणिं रक्ष महामते । दौहित्रास्ते भविष्यंति ग्रहीष्यंति मणिं च ते ॥७१॥ तथेति यादवेनैव कृतं सत्राजिता नृप । एतस्मिन्नंतरे तत्र वृत्तांतो यादवैः श्रुतः ॥७२॥ लाक्षागृहेषु संदग्धाः कुंत्या युक्ताश्च पांडवाः । पुरोचनेन तज् ज्ञात्वा रुरुदुर्यादवा बहु ॥७३॥ रामेण हस्तिनापुर्यां कृष्णः सद्यो जगाम ह । धृतराष्ट्रादिभिः सोऽपि रुरोद शोकसंकुलः ॥७४॥ शतधन्वा ततोऽक्रूरः कृतवर्मा च यादवः । मिलिताः क्रोधसंयुक्ता विचारं चक्रुरादरात् ॥७५॥ सत्राजिता वयं सर्वे कन्यार्थं संवृताः पुरा । अस्मान् संत्यज्य कृष्णाय ददौ कन्यां सुरूपिणीम् ॥७६॥ कृष्णः पांडवशोकार्तोऽभवत् तत्रैव संस्थितः । स रामो निश्यतः कार्यं कर्तव्यं तत् त्रिभिः किल ॥७७॥ हत्वा सत्राजितं सुतं मणिर्ग्राह्यो न संशयः । एवं निश्चित्य रात्रौ तं शतधन्वा जगाम ह ॥७८॥ सत्राजितं स हत्वा वै मणिं जग्राह दारुणः । संस्थाप्य तैलद्रोण्यां तं कृष्णं सत्यायया ततः ॥७९॥ श्वशुरं स हतं श्रुत्वा रामेण सहसा गतम् । कृष्णं

ज्ञात्वा रोषितं शतधन्वाऽक्रूरमाययौ ॥१८०॥ अक्रूरेण समात्यक्तः कृतवर्माणमाययौ । तेनापि न धृतः पक्षः पुनः सोऽक्रूरमाययौ ॥८१॥ मणिं तत्रैव निक्षिप्य पपाल भयसंकुलः । शतयोजनगाऽश्विन्यां समारुह्य नृपात्मज ॥८२॥ पलायमानं विज्ञाय कृष्णः संकर्षणान्वितः । रथमारुह्य वेगेन तमनु प्रययौ तदा ॥८३॥ योजनानां शतं गत्वा ममार ह पुरोऽश्विनी । शतधन्वा भयैर्युक्तः पलायत पदा ततः ॥८४॥ पदातिनं च तं ज्ञात्वा कृष्णोऽधावत् सुसत्वरः । पदातिर्बलभद्रे स रथं त्यक्त्वा महाद्युतिः ॥८५॥ ततश्चक्रेण कृष्णेन हतस्तत्र पपात ह । शतधन्वा तेन तस्मिन् न दृष्टो मणिरुत्तमः ॥८६॥ ततः शोकसमायुक्तो बलभद्रमुवाच ह । शतधन्वा हतो हीनो मणिना तत्र मानद ॥८७॥ उवाच कोपयुक्तस्तं स ततो रोहिणीसुतः । मणिस्त्वया सुसंगुप्तो मिथ्या वाक् त्वं महाखल ॥८८॥ अग्रजाय प्रदातव्यस्तदर्थं मणिरादरात् । कृतं त्वया महालोभिन् कर्म साधु जुगुप्सितम् ॥८९॥ ततस्तं विनयेनैव सांत्वयामास केशवः । द्विजदेवगवां ते मे शपथो न कृतं मया ॥१९०॥ तं तिरस्कृत्य वेगेन त्यक्त्वा रामो जगाम ह । विदर्भे राजनीतिज्ञं स्वमित्रं नृपतिं तदा ॥९१॥ ततोऽतिदुःखमयाः संयुक्तः कृष्णः परमदारुणम् । रुरोद बलभद्रं स स्मृत्वा स्मृत्वा विशेषतः ॥९२॥ ज्ञानदृष्ट्या स कृष्णेन मणिर्नाप्तो महीपते । ततोऽतिदुःखितो भूत्वा रुरोद च पुनः पुनः ॥९३॥ अहो ज्ञानं मदीयं यद्गतं कुत्र विशेषतः । नरतुल्यः कृतः केन धिङ् मे जीवितकं किल ॥९४॥ रथसंस्थः समायातो द्वारकायां महायशाः । लोकवृत्तांतमुग्रं स कथयामास विस्तरात् ॥९५॥ ततो यादवमुख्यैः स भर्त्सितोऽतिविशेषतः । कृष्णः सत्राजितः कर्म चकारोत्तरकं नृप ॥९६॥ देशे देशे नृपाद्याश्च जनाः कृष्णं विशेषतः । निनिंदुः कर्म कृष्णेन किं कृतं दुष्टबुद्धिना ॥९७॥ समर्थं बलभद्रं योऽत्यजज्ज्येष्ठं सुदुर्मतिः । मणिलोभी महापापी विश्वास्यो नैव केनचित् ॥९८॥ द्वारकायां जनाः सर्वे तं कृष्णं न प्रमेनिरे । त्यक्तः सर्वैस्तथा कृष्णः शुशोच परमव्यथः ॥९९॥ अस्थित्वचासमायुक्तं सदा स्वगृहसंस्थितम् । नारदस्तं समालोच्याययौ दृष्ट्वा सुविस्मितः ॥२००॥ सर्वैः संत्याजितो दुःखी गृहे नित्यं वसाम्यहम् । तत्र ते दर्शनं स्वामिन्नभवत् भाग्ययोगतः ॥२॥ ततस्तं नारदः प्राह किमर्थं त्यज्यसे वद । एवं पृष्टः पुनः प्राह वृत्तांतं सर्वमंजसा ॥३॥ श्रुत्वा वृत्तांतमुग्रं वै ध्यानेनालोक्य नारदः । देहत्यागे समुद्योगं कुर्वंतं तमुवाच ह ॥४॥ नारद उवाच । भाद्रशुक्लचतुर्थ्यां च त्वया चन्द्रो विलोकितः । शप्तोऽसौ विघ्नराजेन तेन

तं प्रणम्य महात्मानं कृष्णः परमदुःखितः । उवाच भावभक्त्या वै कृतांजलिपुटः शनैः ॥१॥ श्रीकृष्ण उवाच ।

संदुःखितो भवान् ॥५॥ देहत्यागं महाबुद्धे मा कुरुष्व विशेषतः । गणेशं भज भावेन संकष्टीव्रतसंयुतम् ॥६॥ मिथ्याऽपवादशून्यस्त्वं भविष्यसि न चान्यथा । सज्ञानश्च समर्थेशस्तस्मात् तं शरणं व्रज ॥७॥ एवमुक्त्वा महायोगी नारदः प्रययौ ततः । गणेशगानसंयुक्तो वीणावादनलालसः ॥८॥ ततः कृष्णः प्रहर्षेण युक्तो विघ्नेशमादरात् । अभजद् ध्यानमार्गज्ञो ध्यानेनोग्रेण भूमिप ॥९॥ एकाक्षरेण मंत्रेणापूजयन्नित्यमेव तम् । व्रतं चकार स ततः संकष्टी-संज्ञमुत्तमम् ॥२१०॥ रात्रावेकांतसंस्थं तं ध्याननिष्ठं जनार्दनम् । निश्चलं गणराजः स ययौ भक्तं सुखप्रदः ॥११॥ बोधयामास तं कृष्णं गणेशो ब्रह्मनायकः । तमुत्थाय ननामाऽसौ पूजयामास चादरात् ॥१२॥ पुनः प्रणम्य तुष्टाव विघ्नेशं सामगेन सः । स्तोत्रेणाष्टकसंज्ञेन नाम्ना तं प्रननर्त ह ॥१३॥ सरोमांचं गणेशानः कृष्णं दृष्ट्वा जगाद ह । वरं वरय मत्तस्त्वं दास्यामि हृदि वाञ्छितम् ॥१४॥ गणेशवचनं श्रुत्वा तं जगाद महायशाः । कृष्णो भक्त्या समायुक्तो वचनं खेदसंयुतः ॥१५॥ श्रीकृष्ण उवाच । यदि तुष्टोऽसि विघ्नेश वरदोऽसि विशेषतः । तदा ते भक्तिमुग्रां मे देहि ह्यव्यभि-चारिणीम् ॥१६॥ भाद्रशुक्लचतुर्थ्यां ये चन्द्रं पश्यंति विघ्नप । ते शापदुःखहीना वै भवंतु कृपया च ते ॥१७॥ अहं चासन्नमरणजनवज्ज्ञानवर्जितः । प्रकृतोऽन्यस्य का वार्ता प्रार्थयामि ततः प्रभो ॥१८॥ जगाद गणनाथः स ततस्तं भक्तिमोहितः । मम भक्तिर्दृढा कृष्ण भविष्यति च तेऽनघ ॥१९॥ स्यमंतकस्य माहात्म्यं त्वदीयं लाञ्छनप्रदम् । वरदानं मदीयं च यः श्रृणोति जनार्दन ॥२२०॥ पठेत्तु भावयुक्तश्चेन् मां धृत्वा हृदये हरे । स एव दोषसंहीनो भवत्वत्र न संशयः ॥२१॥ एवमुक्त्वा गणेशानः कृष्णं भक्तिपरायणम् । अंतर्धानं चकाराऽसौ कृष्णस्तत्र समास्थितः ॥२२॥ संपूर्णं जागरं कृत्वा पंचम्यां नियतः प्रभुः । पूजयित्वा गणेशानं ददौ दानं विशेषतः ॥२३॥ गणेशकृपया तस्यांऽतर्ज्ञानं संबभूव ह । ग्रहणं च मणेस्तेन ज्ञातमक्रूरकारितम् ॥२४॥ सभायां स समागम्याक्रूरं तत्राजुहाव च । तं प्रणम्य महाभागमुवाच हास्यसंयुतः ॥२५॥ मणिश्च तात संत्यक्तो गेहे ते शतधन्वना । बलभद्रार्थमद्य त्वं मणिं दर्शय मानद ॥२६॥ ततोऽक्रूरेण चानीतो मणिस्तत्र सुसंसदि । दृष्ट्वोग्रसेनमुख्यास्ते प्रशशंसुर्जनार्दनम् ॥२७॥ अक्रूरश्च विदर्भं तं गत्वा हलधरं प्रभुम् । मणिं दत्त्वा समानीय सभायां संस्थितोऽभवत् ॥२८॥ समागतं महावीरमनमत् केशवः पुनः । सर्वे हर्षयुता जाता द्वारका-वासिनस्ततः ॥२९॥ निर्दोषं वासुदेवं ते मानयामासुरादरात् । राजानः सुहृदः सर्वे नानादेशनिवासिनः ॥२३०॥

सर्वेषां हृदि संस्थोऽयं गणेशो बुद्धिनायकः। तस्यैव कृपया राजन् भवेत् किं किं सुदुर्लभम् ॥३१॥ अतो भाद्रचतुर्थ्यां वै न द्रष्टव्यः कदाचन। चन्द्रः कदाचित् दृष्टश्चेदिदं श्रोतव्यमादरात् ॥३२॥ तेन दोषविहीनश्च जायते नात्र संशयः। अन्यथा भ्रष्टभावेन नारकी स नरो भवेत् ॥३३॥ स्यमंतकमणेश्चित्रं चरितं कथितं परम्। चन्द्रदर्शनजं दोषं हरति श्रवणेन च ॥२३४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते भाद्रशुक्लचतुर्थी चंद्रदर्शनदोषहरणचरितवर्णनं नाम षष्ठोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच। श्रुतं मया महाख्यानं त्वत्तो वेदविदांवर। चतुर्थ्योरुभयोः सारं माहात्म्येन समन्वितम् ॥१॥ तथापि वद मे ब्रह्मन् पृथक् व्रतसमुद्भवम्। चरित्रं विस्तरेणैव केन केन कृतं पुरा ॥२॥ कीदृशी चाऽभवत् सिद्धिः केन प्राप्तो गजाननः। श्रुत्वा व्रतस्य माहात्म्यं यामि नो तृप्तिमादरात् ॥३॥ मुद्गल उवाच। एवं पृष्टो महायोगी वसिष्ठः परमार्थवित्। जगाद तं प्रजानाथ शृणु तत् सुखदं परम् ॥४॥ वसिष्ठ उवाच। आदौ शंभ्वादिभिश्चैतत् कृतं व्रतमनुत्तमम्। कृष्णशुक्लचतुर्थ्यां यदुपोषणपरायणैः ॥५॥ ततः स्वायंभुवाद्यैश्च कृतं सर्वार्थसिद्धिदम्। ततो मुनिगणैः सर्वैरन्यैर्वर्णस्थजंतुभिः ॥६॥ अधुनाऽहं पृथक्त्वेन कथयामि व्रतोद्भवम्। माहात्म्यं सर्वदं पुण्यं संक्षेपेण शृणुष्व तत् ॥७॥ पुरा दौष्यंतिको नाम भरतः संबभूव ह। तेजस्वी वीरमुख्येशः शस्त्रास्त्रज्ञः प्रतापवान् ॥८॥ जित्वा भूमंडलं सर्वं सार्वभौमो बभूव ह। सप्तद्वीपवतीं पृथ्वीमपालद्धर्मसंयुतः ॥९॥ तद्देशे दैवयोगेन ह्यनावृष्टिः सुदारुणा। बभूव सर्वलोकास्ते भयभीता बभूविरे ॥१०॥ चराचरं व्यथायुक्तं दृष्ट्वा राजा महायशाः। कण्वं मुनिवरं शांतं ययौ शरणमादरात् ॥११॥ तं प्रणम्य महात्मानं पूजयामास भक्तितः। कृत्वा करपुटं तस्याऽग्रे स्थितो भरतोऽभवत् ॥१२॥ तमुवाच महायोगी गाणपत्यप्रियः सदा। कण्वो वेदार्थसंनिष्ठो भरतं राजसत्तमम् ॥१३॥ कण्व उवाच। किमर्थमागतो राजन् कुशलं ते महामते। अस्ति देशादिभावेषु तिष्ठ त्वं चासनोत्तमे ॥१४॥ कण्वस्य वचनं श्रुत्वा हर्षयुक्तो महीपतिः। मुनिदत्ते विवेशासावासने स कृतांजलिः ॥१५॥ उवाच तं महात्मानं कण्वं वेदविदां वरम्। भरतो राजनीतिज्ञो भक्तियुक्तो विशेषतः ॥१६॥ भरत उवाच। त्वत्प्रसादेन योगींद्र कुशलं मे प्रवर्तते। दैवयोगेन तदपि दुःखितोऽहं समागतः ॥१७॥

नित्यं स्वधर्मयुक्तेन मया संपालिता मही । देवव्रतातिथिप्राज्ञप्रीत्यर्थं योगिसत्तम ॥१८॥ वर्णाश्रमाचारयुता जनाः सर्वे भवंति च । तथापि पापजं दुःखं संप्राप्तं तन्न वेद्म्यहम् ॥१९॥ अनावृष्टिश्च संभूता प्रभो सर्वत्र दुःखदा । चराचरं भयोद्विग्नं बभूव रसहीनतः ॥२०॥ तदर्थं त्वां महायोगिन्नागतोऽहं विशेषतः । त्वद्दर्शनजपुण्येन सफलो मे भवोऽभवत् ॥२१॥ अधुना ब्रूहि पापस्य स्वरूपं तन्निहन्म्यहम् । येन वृष्टिर्भवेत् पूर्णा तथा कुरुष्व मानद ॥२२॥ ततस्तं नृपशार्दूल-मुवाच मुनिसत्तमः । कण्वः श्रुत्वा च वृत्तांतं दयायुक्तः स्वभावतः ॥२३॥ कण्व उवाच । शृणु राजन् महत् पापं तव राज्ये प्रवर्तितम् । तेनाऽवृष्टिभवं दुःखं प्रादुर्भूतं न संशयः ॥२४॥ चतुःपदविहीनं ते राज्यं भवति निश्चितम् । जनैः सर्वैः सुशीलैश्च पापं घोरं कृतं महत् ॥२५॥ त्वं पापशीलभावेन वर्तसे जनवत्सल । धर्मार्थकाममोक्षैश्च हीनोऽसि पुरुषाधम ॥२६॥ चतुर्थीसंभवं तात व्रतं सर्वार्थसिद्धिदम् । कार्ष्णं शौक्लं सुविख्यातं भ्रष्टं राज्येऽभवन्नृप ॥२७॥ चतुर्विधं जगत्सर्वं स्थूल-सूक्ष्मादिभेदतः । संकष्टं यत्तदेव त्वं जानीहि नृपनायक ॥२८॥ चतुर्विधं च संकष्टं हरति व्रतकारिणः । सा संकष्टचतुर्थी वै कृष्णा ते कथिता मया ॥२९॥ चतुर्विधं या ददाति सा शुक्ला वरदा मता । संचितं नास्ति चेद्राजन् व्रतकारिजनाय वै ॥३०॥ चतुर्थीजं स माहात्म्यं कथयामास विस्तरात् । कण्वस्तद्धरतायैव स्वशिष्याय विशेषतः ॥३१॥ व्रतानि वै निष्फलानि चतुर्थीहीनकानि चेत् । ज्ञात्वा प्रणम्य तं राजोवाच हर्षसमन्वितः ॥३२॥ भरत उवाच । स्वामिन् वद गणेशस्य माहात्म्यं सर्वसिद्धिदम् । एतादृशं व्रतं यस्य तं भजिष्यामि नित्यदा ॥३३॥ कण्व उवाच । शृणु राजन् गणेशस्य माहात्म्यं सर्वदं परम् । क्रतुना कथितं मे यद्ब्रह्मपुत्रेण धीमता ॥३४॥ एकदाऽहं तपोयुक्तस्तिष्ठामि स्वाश्रमे पुरा । वायुमात्राशनो भूत्वा तपामि स्म तपो महत् ॥३५॥ मदीयतपसा सर्वं व्याप्तमासीन्नराधिप । तथापि योगमास्थाय संस्थितोऽहं विशेषतः ॥३६॥ ततः प्रजापतिः साक्षादाश्रमे मे समागतः । क्रतुर्योगींद्रवंद्यो यो गाणपत्यो महायशाः ॥३७॥ तं प्रणम्य महात्मानं पूजयित्वा पुरः स्थितम् । कृतांजलिं मामुवाच स तथा भक्तवत्सलः ॥३८॥ क्रतुरुवाच । वत्स तिष्ठस्व मे दत्त आसने किं महामते । इच्छा ते वद मां तात करिष्यामि हि तं च ते ॥३९॥ तस्य तद्वचनं श्रुत्वा हर्षितोऽहं नराधिप । आसने समुपावेश्यावदत्तं विनयान्वितः ॥४०॥ कण्व उवाच । तव दर्शनमात्रेण कृतकृत्योऽस्मि सांप्रतम् । तथापि शांतिदं योगं वद पूर्णं दयानिधे ॥४१॥ क्रतुरुवाच । सम्यक् पृष्टं त्वया वत्स श्रेष्ठाच्छ्रेष्ठतमं महत् । कथयामि महाभाग ब्रह्मणः संश्रुतं

मया ॥४२॥ तपस्त्यक्त्वा पुरा तात योगमार्गपरायणः। न शांतिं प्रलभे तत्र योगभूमिं प्रसाधयन् ॥४३॥ ततोऽहं पितरं गत्वा ब्रह्माणं सर्ववेदिनम्। वंद्यं तं योगशांत्यर्थमपृच्छं विनयान्वितः ॥४४॥ स्वामिन् शांतिप्रदं ब्रह्म कीदृशं वद मे प्रभो। केन योगेन लभ्यं तत् प्रभवेत् कृपयान्वितः ॥४५॥ ब्रह्मोवाच। योगशांतिप्रदं ब्रह्म गाणेशं विद्धि पुत्रक। मनोवाणीमयं सर्वं त्यज योगस्य सेवया ॥४६॥ मनोवाणीविहीनं यदेव तत्तादृशं मतम्। गणेशोऽहं न भिन्नश्च ब्रह्मणां नायकः स्मृतः ॥४७॥ मनोवाणीमयः प्रोक्तो गकारो वेदवादतः। मनोवाणीविहीनश्च णकारः सर्वसंमतः ॥४८॥ तयोः स्वामी गणेशानो नाम्ना गणपतेर्यदा। गकारस्य णकारस्य योगो वेदप्रमाणतः ॥४९॥ समाधिना लभ्यते यच्चित्तेन च महामते। गकाराक्षरगं ज्ञानं ज्ञातव्यं वेदवादतः ॥५०॥ चित्तेन यन्न लभ्येत णकारं विद्धि मानद। ज्ञानाज्ञानमयं चित्तं त्यक्त्वा शांतिमवाप्स्यसि ॥५१॥ एतदेव परं गुह्यं शांतिदं कथितं मया। तदर्थं गणराजं त्वं भजस्व भावसंयुतः ॥५२॥ एकाक्षरं महामंत्रं गृहाण त्वं महामते। ध्यानयोगेन विघ्नेशं प्राप्स्यसि त्वं न संशयः ॥५३॥ एवमुक्त्वा महामंत्रं ददौ मह्यं विधानतः। तं प्रणम्य वने तात गतोऽहं योगकारणात् ॥५४॥ क्रमेण चित्तभूमीनां योगं त्यक्त्वा मया परम्। चित्तं चिंतामणौ पुत्र क्षिप्तं तद्रूप-भावतः ॥५५॥ ततो योगींद्रवंद्योऽहं जातस्तदपि नित्यदा। गणेशध्यानसंयुक्तोऽभवं तद्भक्तिकाम्यया ॥५६॥ ततो विघ्नपतिः साक्षाद्दर्शनं मे ददौ मया। स्तुतः संपूजितः सोऽपि ददौ स्वभक्तिमुत्तमाम् ॥५७॥ तदादिगाणपत्योऽहं जातः सर्वैश्च वंदितः। भजस्व गणराजं तमतस्त्वं योगकाम्यया ॥५८॥ कण्व उवाच। एवमुक्त्वा महायोगी मह्यं मंत्रं ददौ ततः। एकाक्षरं यथान्यायमंतर्धानं चकार ह ॥५९॥ अहं तथा गणेशानं साधयित्वा विशेषतः। शांतिं प्राप्तस्तं तथापि भजाम्य-नन्यचेतसा ॥६०॥ अतस्त्वमपि राजेंद्र भज विघ्नपतिं सदा। चतुर्थीव्रतसंयुक्तो ब्रह्मभूतो भविष्यसि ॥६१॥ तत एकाक्षरं मंत्रं ददौ तस्मै महामुनिः। कण्वं प्रणम्य राजर्षिर्ययौ स्वनगरे तदा ॥६२॥ तस्मिन् काले चतुर्थी सा शुक्ला भाद्री समागता। कृता तेन सुभक्त्या वै नगरस्थजनैः सह ॥६३॥ ततः सर्वत्र संघोषः कृतस्तेन महीभृता। शुक्लां कृष्णां चतुर्थीं ये नाऽऽचरिष्यंति नित्यदा ॥६४॥ ते दंडैः पीडनीया वै ततः सर्वेऽभवन् जनाः। व्रतकारिण एतस्मात् पुण्यात् वृष्टिर्बभूव ह ॥६५॥ हृष्टपुष्टजनाः सर्वे तया जाता नृपात्मज। रोगादिदोषहीनास्ते भजंस्तं गणनायकम् ॥६६॥ भरतः स्म महाराजोऽभजत्सो-ऽनन्य चेतसा। गणेशं भक्तिसंयुक्तो गाणपत्यप्रियोऽभवत् ॥६७॥ स पुत्रे राज्यमुग्रं तन्निक्षिप्य वनगोऽभवत्।

अंते स्वानंदगो भूत्वा ब्रह्मभूतो बभूव ह ॥६८॥ क्रमेण भूमिसंस्था येऽभवन् स्वानंदगा जनाः । चतुर्थी पुण्ययोगेन यथा योगपरायणाः ॥६९॥ स्पर्शेन भरतस्यैव जनाः कीटादिका नृप । पुण्यरूपा बभूवुस्तेऽथांते स्वानंदगामिनः ॥७०॥ एतादृशेन भूपेन पुण्यशालिजनाः कृताः । यज्ञैः सर्वा धरा येन चित्रिता पुण्यकारिणा ॥७१॥ भरतेन समो राजन् न कश्चित् प्रबभूव ह । ज्ञानेन स्वबलेनाऽपि यशसा धर्मशालिना ॥७२॥ भाद्रशुक्लचतुर्थ्यास्तु महिमा कथितो मया । चतुर्वर्गफलैर्युक्तो ब्रह्मभूयपदप्रदः ॥७३॥ भाद्रशुक्लचतुर्थ्यां तु माहात्म्यं यः शृणोति चेत् । पठेद्वा तस्य राजेंद्र सर्वदं प्रभवेद् ध्रुवम् ॥७४॥ भाद्रशुक्लचतुर्थ्यां वै शंकरस्य हृदि प्रभुः । प्रादुर्बभूव मध्याह्ने ध्यानजः स सुतोऽभवत् ॥७५॥ तदादि सा तिथिर्मुख्या बभूव जन्मधारिणी । गणेशस्य न संदेहो ब्रह्मभूयपदप्रदा ॥७६॥ सृष्ट्यादौ पंच देवेशैः स्थापिता मूर्तिरुत्तमा । मयूरे गणनाथस्य मध्याह्ने भाद्रगे तिथौ ॥७७॥ मयूरेशावतारो भाद्रपदेयो बभूव सः । मध्याह्ने शंकरगृहे चतुर्थ्यां शुक्लपक्षके ॥७८॥ तस्यां ये मृन्मयीं मूर्तिं पूजयंति नरादयः । देवाः शंकरमुख्याश्च महोत्सवपरायणाः ॥७९॥ ते सर्वे विघ्नहीनाश्च भवंति सुखभोगिनः । अंते स्वानंदगा भूप ब्रह्मभूता भवंति च ॥८०॥ मध्याह्ने पूजनं प्रोक्तं गणेशस्य विशेषतः । उपोषणसमायुक्तैश्चतुर्थ्यां व्रतकारिभिः ॥८१॥ पंचम्यां पारणं कृत्वा द्विजैः सह महामते । मूर्तिं तां मृन्मयीं पूज्यां विसृज्य निनयेज्जलम् ॥८२॥ चतुर्थ्यां मृन्मयीं मूर्तिं भाद्रे ये नार्चयंति चेत् । तेषां निष्फलरूपं वै कर्म सर्वं भविष्यति ॥८३॥ न तेषां दर्शनं कार्यं नरैरात्महितेप्सुभिः । पतितास्ते मताः शास्त्रे नारकाश्च भवंत्यतः ॥८४॥ इह विघ्नसमायुक्ता नानारोगप्रपीडिताः । दारिद्र्यादिसमायुक्ता महापापा मता नृप ॥८५॥ चतुर्थ्यां सर्ववर्णस्थैर्भाद्रे पूज्यो गजाननः । मृन्मयो विघ्नहीनास्ते भवंति सफलक्रियाः ॥८६॥ इयं भाद्रपदे मासि चतुर्थी शुक्लरूपिणी । तस्याश्चरितमाद्यं ते कथितं स्वल्पभावतः ॥८७॥ अत्र ते वर्णयिष्येऽहं इतिहासं पुरातनम् । तच्छृणुष्व महाभाग चतुर्थीव्रतजं महत् ॥८८॥ द्राविडे नगरे राजंश्चांडालः कोऽपि पापकृत् । कुष्ठरोगयुतः पूर्णः परस्त्रीलंपटोऽभवत् ॥८९॥ चतुर्थ्यां भाद्रमासे स ज्वरयुक्तो बभूव ह । ज्वरस्य पीडयाऽत्यंतं पीडितो राजसत्तम ॥९०॥ अन्नेन स जलेनाऽपि हीनोऽभूद्दैवयोगतः । पंचम्यां मरणे प्राप्ते विमानेन जगाम ह ॥९१॥ तस्यांगस्पर्शतो वायुर्यमलोके जगाम ह । तेन स्पृष्टा नरास्तत्र नरकस्थाः समंततः ॥९२॥ ते सर्वे यानगा भूत्वा गताः स्वानंदके पुरे । दृष्ट्वा गणपतिं तैः स ब्रह्मभूतो बभूव ह ॥९३॥ व्रतमज्ञानतश्चैवं फलप्रदमिदं

मतम् । यथाविधि कृतं येन तत्र चित्रं किमप्यहो ॥९४॥ चतुर्थ्यां महिमाऽयं कथयितुं न प्रशक्यते । पुरुषार्थाश्च चत्वारः प्राप्यंते व्रतमात्रतः ॥९५॥ मुद्गल उवाच । वसिष्ठवचनं श्रुत्वा दशरथस्तमब्रवीत् । शृणु दक्ष महाभाग तां कथां पावनीं प्रभो ॥९६॥ दशरथ उवाच । चांडालो गणनाथस्य पुपूज स न मृन्मयीम् । मूर्तिं दोषी कथं स्वामिन् ब्रह्मभूतो बभूव ह ॥९७॥ वसिष्ठ उवाच । सम्यक् पृष्टं त्वया राजन् शृणु संशयनाशनम् । ज्ञानं ते कथयिष्यामि भवेल्लोकोपकारदम् ॥९८॥ चांडालस्य चतुर्थ्यास्तु ज्ञानं नाऽभूद् दुरात्मनः । पूजनं च तथा तस्योल्लंघनं न ततोऽभवत् ॥९९॥ अतोऽयं दोषहीनश्च स्वानंदस्थो बभूव ह । पूजनोल्लंघनाभ्यां स वर्जितो ज्ञानभावतः ॥१००॥ एवं नानाजनाश्चेह भुक्त्वा तु विविधं सुखम् । अंते स्वानंदगा राजन् बभूवुर्व्रतमात्रतः ॥१॥ तत्रैकं कथितं प्रोक्तुं नालं वर्षायुतैरपि । पूर्णं भवति माहात्म्यं संक्षेपेण निरूपितम् ॥१०२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते भाद्रपदशुक्लचतुर्थीव्रतवर्णनं नाम सप्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ वसिष्ठ उवाच । आश्विने वरदात्री या चतुर्थी शुक्लपक्षगा । तां शृणुष्व महाभाग सव्रतां सर्वदायिनीम् ॥१॥ इतिहासं प्रवक्ष्यामि पुरातनभवं नृप । व्रतसंयुक्तमाहात्म्यं भवेत् सर्वार्थसाधकम् ॥२॥ रैवतांतरगो राजा कीर्तिमांश्च बभूव ह । मतो नाम्ना धर्मधरः पूर्णशस्त्रास्त्रपारगः ॥३॥ देवविप्रातिथिप्रेप्सुः पंचयज्ञपरायणः । नीतिज्ञः पुत्रवल्लोकान् पालयन् स्वहिते रतः ॥४॥ भार्या तस्याऽभवत् साऽपि पातिव्रत्यगुणान्विता । सर्वलक्षणसंयुक्ता विप्रदेवातिथिप्रिया ॥५॥ गजानां च हयानां वै पदातीनां महीपतेः । रथानां नैव संख्याऽस्ति धानुष्काणां विशेषतः ॥६॥ सप्तद्वीपवतीं पृथ्वीं पालयन् स नराधिपः । देवादीनां च संग्रामे ह्यजेयः परवीरहा ॥७॥ तस्य वंध्यत्वदोषेण नृप पुत्रो बभूव नो । नानायत्नपरो राजा पुत्रार्थे प्रबभूव ह ॥८॥ तीर्थयात्रादिकं सर्वं चकार विधिवन्नृपः । अनुष्ठानव्रतादीनि देवानां पूजनं तथा ॥९॥ एवं नानाविधैः पुण्यैर्न बभूव सुतस्ततः । राज्यं त्यक्त्वा वने राजा सस्त्रीकः स जगाम ह ॥१०॥ तत्र भ्रमणयुक्तः स ददर्श ह महावनम् । सिंहव्यालादिसंयुक्तं भयदं सर्वजन्मिनाम् ॥११॥ दुःखयुक्तः स राजर्षिः प्रवेशं स चकार ह । वने तत्र मुनिश्रेष्ठं सौभरिं संददर्श च ॥१२॥ तं प्रणम्य महाभागः सस्त्रीकः पुरतो मुनेः । कृतांजलिपुटो भूत्वा तस्थौ

स नृपसंमुखः ॥१३॥ ततः सौभरिणा सोऽपि सत्कृतो वचनेन च । निषसादासने तत्र मुनिना दर्शिते नृपः ॥१४॥ तमुवाच महाभागं राजानं मुनिसत्तमः । कोऽसि त्वं वन उग्रे मेऽत्र किमर्थं समागतः ॥१५॥ इति पृष्टो महीपालस्तमुवाच सुहर्षितः । कीर्तिमान् सर्वधर्मज्ञः कृत्वा करपुटं वचः ॥१६॥ कीर्तिमानुवाच । द्राविडे वसतिर्मेऽस्ति नगरे सुरसत्तमे । राज्यं करोमि तत्राऽहं सार्वभौमो महामुने ॥१७॥ अपुत्रो दैवयोगेन जातोऽहं मुनिसत्तम । पुत्रार्थं व्रततीर्थादीन् नानाधर्मान् करोमि वै ॥१८॥ राज्यं त्यक्त्वा वने योगिन्नागतः पुत्रकाम्यया । तत्र ते दर्शनं प्राप्तं सर्वसिद्धिप्रदं प्रभो ॥१९॥ तव दर्शन-मात्रेण सफलो मे भवो भवेत् । मातृपित्रादिकं सर्वं धन्यं जातं न संशयः ॥२०॥ अधुना ब्रूहि मे नाथ पुत्रप्राप्त्यर्थमादरात् । उपायं तं चरिष्यामि त्वदाज्ञावशगो मुने ॥२१॥ इह जन्मनि भो विप्र न कृतं पापमुल्बणम् । मया राज्यं कृतं भूमेर्भययुक्तेन चेतसा ॥२२॥ तथापि वंध्यजो दोषो मया प्राप्तो महामुने । पूर्वजन्मकृतं पापं ज्ञायते नैव चेतसा ॥२३॥ कथयस्व महोग्रं मे पापं सर्वविदां वर । योगींद्रोऽसि महातेजाः साक्षाद्ब्रह्मतनोर्धरः ॥२४॥ वसिष्ठ उवाच । एवं विनययुक्तेन राज्ञा पृष्टो महामुनिः । सौभरिस्तं जगादेदं वचनं गणपप्रियः ॥२५॥ सौभरिरुवाच । कृतं त्वया महत्पापं महाराज विशेषतः । पूर्वजन्मकृतं नैव पापं ते विद्यतेऽधम ॥२६॥ तव राज्ये महामूर्ख चतुर्थीव्रतमुत्तमम् । लयं प्राप्तं विशेषेण व्रतादौ फलदं मतम् ॥२७॥ चतुर्थीव्रतमाद्यं यन्मानवेन नराधम । न कृतं चेद्व्रतानीह निष्फलानि भवंति च ॥२८॥ विशेषतस्त्वया कर्म नानापुण्यादिकं कृतम् । चतुर्थीहीनभावेन निष्फलं तद्बभूव ह ॥२९॥ चतुर्विधपदार्थानां दात्री सा वरदा मता । चतुर्विधं तु संकष्टं हरंती संकटी मता ॥३०॥ भुनक्ति राजा पापं राष्ट्रकृतं शास्त्रसंमतम् । जनानां व्रतहीनानां पापभागी भवान् मतः ॥३१॥ अतः पापमयी मूर्तिस्त्वमेवात्र न संशयः । तेन वंध्यत्वमापन्नो नराधम न बुद्ध्यसे ॥३२॥ सौभरेर्वचनं श्रुत्वा कीर्तिमांस्तं जगाद ह । विनयेन समायुक्तो भयभीतश्च पार्थिवः ॥३३॥ कीर्तिमानुवाच । अज्ञानेन कृतं कर्म मया स्वामिन् सुपापिना । कीदृशं तद्व्रतं विप्र मह्यं वद विधानतः ॥३४॥ पुत्रप्राप्त्यर्थमेवं मे वदोपायं महामते । येन पापविहीनोऽहं भवामि पुत्रवान् सुखी ॥३५॥ सौभरिरुवाच । चतुर्थीव्रतमाद्यं त्वं कुरुष्व नृप नित्यदा । जनैः सर्वैस्तदा सर्वपापहीनो भविष्यसि ॥३६॥ अज्ञानेन करोषि स्म पापं ज्ञात्वाऽनुतापवान् । व्रताचरणमात्रेण निष्पापः पुण्यभाग् भवेः ॥३७॥ इत्युक्त्वा व्रतमाहात्म्यं कथयामास विस्तरात् । ततः सोऽपि महाबुद्धिः पप्रच्छ विनयान्वितः ॥३८॥ कीर्तिमानुवाच ।

कीदृशोऽयं गणाधीशो व्रतं यस्य चतुःपदम्। ब्रह्मभूयकरं प्रोक्तं भजिष्यामि विशेषतः ॥३९॥ ततस्तं मुनिशार्दूलः सौभरिः पुनरब्रवीत्। माहात्म्यं गणनाथस्य शांतियोगपदप्रदम् ॥४०॥ सौभरिरुवाच । पुराऽहं तपसा युक्तो नानाछंदपरायणः। अभवं तत्र देवा वै भयभीता बभूविरे ॥४१॥ अहो तपःप्रभावेण जित्वा सर्वं द्विजोत्तमः। किमिच्छति पदं श्रेष्ठं ज्ञायतेऽस्मा-भिरेव न ॥४२॥ प्रेषयामास सस्त्रीकं ततः कामं सुराधिपः । तपोभंगार्थमेवं मे कामस्तत्र समागतः ॥४३॥ उर्वशी-सहिताभिश्चाप्सरोभिर्मधुना तथा । आत्तबाणः स्वयं कामः पीडयामास मां शरैः ॥४४॥ अहं तपःप्रभावेण जित्वा कामं सह स्त्रिया । मोहहीनस्तपस्तत्राऽतपं सुदृढनिश्चयः ॥४५॥ ततो मे तपसोग्रेण दाहयुक्तो बभूव ह । कामः पलाय्य सर्वैस्तं मघवंतं जगाद सः ॥४६॥ ततोऽहं योगमार्गेणांऽतर्निष्ठश्चाभवन्नृप। जडोन्मत्तादिमार्गेषु संस्थितो योगकारणात् ॥४७॥ ततः शुको महायोगी गाणपत्यः समागतः। ममाश्रमे स मां दृष्ट्वा जगादेच्छसि किं मुने ॥४८॥ ततस्तं प्रणतो भूत्वा कृतांजलिः पुरः प्रभोः। स्थित्वाऽवदं सुवाक्यं तच्छृणु राजन् सुसिद्धिदम् ॥४९॥ मम श्रेष्ठेन भाग्येन त्वं प्राप्तोऽसि महायशाः। शांतिं वद महायोगिन् यया शांतो भवाम्यहम् ॥५०॥ श्रीशुक उवाच । चित्तं पंचविधं त्यक्त्वा चित्तं कृत्वा च तन्मयम्। निरोधेनैव भूमीनां शांतिं प्राप्स्यसि निश्चितम् ॥५१॥ चिंतामणिं भजस्व त्वं मंत्रेणैकाक्षरेण च। तेन चिंतामणौ विप्र संचित्तः सुभविष्यसि ॥५२॥ त्यक्त्वा जडादिकं मार्गं शमदमपरायणः। गणनाथं महाभाग भज यत्नेन नित्यदा ॥५३॥ एवमुक्त्वा शुको योगी ययौ स्वेच्छापरायणः। गणेशनाम संकीर्त्य जपंश्चैव विशेषतः ॥५४॥ अहं गणपतिं भक्त्याऽभजं संभक्तिसंयुतः। एकाक्षरविधानेनाऽऽस्थाप्य मूर्तिं पुरो नृप ॥५५॥ ततः स्वल्पेन कालेन शांतिं प्राप्तोऽहमादरात्। तथापि पूजने सक्तोऽभजं तं गणनायकम् ॥५६॥ दशवर्षे गते काले विघ्नेशो मां समागतः। मया संपूजितो राजन् स्तुतश्च विविधैः स्तवैः ॥५७॥ गाणपत्यपदं दत्त्वा गतः स्वानंदके पुरे। तदादि गाणपत्योऽहं भजामि ब्रह्मनायकम् ॥५८॥ एवमुक्त्वा स राजानं ददौ मंत्रं विधानतः। षडक्षरं स राजर्षिस्तं प्रणम्य ययौ पुरम् ॥५९॥ स आश्विन्यां द्वितीयायां शुक्लायां तु गृहे गतः। तस्मिन् मासे चतुर्थ्यां च शुक्लायां व्रतमारभत् ॥६०॥ जनैः सर्वैः समायुक्त उपोषणपरायणः। मध्याह्ने गणपं तत्र प्रपूज्य विधिवन्नृपः ॥६१॥ रात्रौ जागरणं चक्रे बालवृद्धसमन्वितः। नरैः स्त्रीभि-स्तद्व्रतं च कृतं सर्वैर्यथातथम् ॥६२॥ शुक्लां कृष्णां चतुर्थीं ये न कुर्वंति नराधमाः। ताडनीयाः प्रयत्नेन पृथिव्यां यत्र तत्र सः

॥६३॥ घोषेण घोषयामास ततः सर्वे तथाऽभवन् । व्रतं ततो वै बभूव प्रशस्तं भूमिमंडले ॥६४॥ एवं भूमंडले राज्यं कृत्वा पुत्रे निवेद्य सः । वने गत्वा गणेशानं सस्त्रीको नृप आभजन् ॥६५॥ अंते स्वानंदगो भूत्वा ब्रह्मभूतो बभूव ह । तस्य राज्ये स्थिता लोकाः सर्वे स्वानंदगा बभुः ॥६६॥ एवमन्यं दशरथ शृणुष्व त्वं व्रतोद्भवम् । इतिहासं प्रवक्ष्यामि चाश्विन्यां परमाद्भुतम् ॥६७॥ भीमो नाम महाव्याधः पापकर्मपरायणः । मार्गे जनान् निहत्वाऽगृह्य धनं स तुतोष ह ॥६८॥ एकदा वनमध्ये स ब्राह्मणं हंतुमुद्यतः । पलायत द्विजस्तत्र वने भयसमाकुलः ॥६९॥ एतस्मिन्नंतरे तत्राश्वगः शस्त्रधरः पुमान् । धावंश्च ब्राह्मणं दृष्ट्वा भीमं धृत्वा गतः पुरे ॥७०॥ ततो द्विजः सुखेनैव स्वाश्रमं प्रजगाम ह । पुरुषो भीमव्याधं तं राज्ञे दुष्टं न्यवेदयत् ॥७१॥ तत्र सोऽपि क्षुधाविष्टो व्याधः संस्थापितोऽभवत् । राज्ञाऽऽश्विन्यां चतुर्थ्यां वै शुक्लायां दैवयोगतः ॥७२॥ पंचम्यां तं जघानैव ततो व्याधं गजाननः । चतुर्थ्यां क्षुधितत्वात् स ब्रह्मभूतं चकार ह ॥७३॥ एवं नानाजना राजन् चतुर्थीव्रतयोगतः । स्वानंदस्था भवंतीह मया वक्तुं न शक्यते ॥७४॥ चतुर्थीजमिदं चित्रं चरितं कथितं मया । शुक्लाऽऽश्विन्यां समुद्भूतं श्रवणात् सर्वसिद्धिदम् ॥७५॥ शृणुयाद्यः पठेद्वाऽपि भुक्तिं मुक्तिं लभेन्नरः । पुत्रपौत्रादिसंयुक्तः सुहृद्भिर्नृपसत्तम ॥७६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते शुक्लाऽऽश्विनी चतुर्थी व्रतवर्णनं नामाष्टमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ वसिष्ठ उवाच । कार्तिके मासि शुक्ला या चतुर्थी सर्वसिद्धिदा । तां शृणुष्व महाभाग इतिहाससमन्विताम् ॥१॥ सूर्यवंशोद्भवो राजा सुधन्वा नीतिसंयुतः । शस्त्रास्त्रबलसंयुक्तो बभूव परमद्युतिः ॥२॥ धर्मशीलो वदान्यश्च सत्यवाक् साधुसंमतः । देवविप्रातिथिप्राज्ञपंचयज्ञपरायणः ॥३॥ भार्या कलावती तस्य बभूवे रूपशालिनी । पतिव्रता महोदारा धर्मशीला विशेषतः ॥४॥ जित्वा भूमंडलं सर्वं राजा तेजस्विनां वरः । पालयामास पृथ्वीं स नित्यं धर्मपरायणः ॥५॥ सामंता वशगा यस्य सैन्यं स्म गणनातिगम् । संपच्च धनदेनैव तुल्या सर्वत्र संबभौ ॥६॥ अर्धायुषा समायुक्तो बभूव नृपसत्तमः । अकस्मात् कुष्ठसंयुक्तः कीटैः संपीडितोऽभवत् ॥७॥ पूयशोणितघर्मौघैर्व्याप्तो दुर्गंधिसंयुतः ।

न चाऽलभत् सुखं किंचिच्छूलप्रोतो यथा नरः ॥८॥ औषधानि विशेषेण सिषेवे यत्नसंयुतः । नानामंत्रप्रयोगादि कारयामास मानवैः ॥९॥ अनुष्ठानं द्विजैः सोऽपि वेदमंत्रैः सुखप्रदैः । अकारयत्तथा तेभ्यो न फलं चाऽभवत् कदा ॥१०॥ ततस्तीर्थानि बभ्राम स्नानदानपरायणः । तथापि रोगसंयुक्तोऽधिकं राजा बभूव ह ॥११॥ ततो निवृत्तिमापन्नो जगाद सचिवान्नृपः । राज्यं मे परिपाल्यं वै यावदागमनं पुनः ॥१२॥ सांत्वयित्वा स सस्त्रीकः सुहृदः सर्वनागरान् । वनं ययौ नृपश्रेष्ठो बभ्राम यत्र तत्र च ॥१३॥ ततो गणपतिं राजा सस्मार दुःखसंयुतः । विघ्नहीनार्थमेवं स तत्र चित्रं बभूव ह ॥१४॥ अकस्मान् मुनिशार्दूलः पुलस्त्यस्तत्र चाययौ । तं दृष्ट्वा हर्षसंयुक्तो ननाम प्रियया सह ॥१५॥ कृत्वा करपुटं राजोवाच तं मुनिनायकम् । किं पुण्यं मे पुरा चीर्णं येन दृष्टो भवान् मुने ॥१६॥ धन्यं जन्म तथा ज्ञानं जनको जननी च मे । तपो धर्मादिकं सर्वं त्वदंघ्रियुगदर्शनात् ॥१७॥ एवं विवदमानं तं जगाद मुनिसत्तमः । किमर्थं राजनीतिज्ञ वने त्वं च समागतः ॥१८॥ एवं पृष्ट्वा स राजानं वृक्षच्छायासमाश्रितः । पुलस्त्य उपविश्याथ तमुपावेश्य संबभौ ॥१९॥ ततो राज्ञा स्वकीयो वै वृत्तांतः कथितोऽभवत् । जगाद प्रणनामैवं पुनस्तं हर्षसंयुतः ॥२०॥ सुधन्वोवाच । दयाकराश्च योगींद्राः पुराणेषु वदंति यत् । तदेव सत्यमभवत् त्वां दृष्ट्वा दयया युतम् ॥२१॥ दुःखितं मां विदित्वा त्वं संस्थितो मुनिसत्तम । साक्षात् प्रजापतिः प्रोक्तः पुलस्त्यो ब्रह्मणः सुतः ॥२२॥ सर्वज्ञस्त्वं महायोगिन् न्यायं मे वद मानद । धर्मयुक्ततया राज्यं करोमि स्म निरंतरम् ॥२३॥ पूर्वजन्मकृतं मे किं महापापं समागतम् । येनाऽहं कुष्ठसंयुक्तोऽभवं पश्य दयायुतः ॥२४॥ वसिष्ठ उवाच । सुधन्वनो वचः श्रुत्वा तमुवाच महामुनिः । अत्यंतं पीडितं दृष्ट्वा करुणायुतचेतसा ॥२५॥ पुलस्त्य उवाच । इहजन्मकृतं पापं बुद्ध्यसे न नराधम । तेन कुष्ठयुतो जातः शृणु तत्ते वदाम्यहम् ॥२६॥ तव राज्ये नृपश्रेष्ठ व्रतं गाणेश्वरं महत् । नष्टं चतुर्थीसंज्ञं यत् सर्वसिद्धिप्रदं परम् ॥२७॥ चतुर्णां पुरुषार्थानां साधनं सर्वसंमतम् । तेन प्रोक्ता चतुर्थी सा वरदा संकटा मता ॥२८॥ सर्वादौ न कृतं चेद्वै भवेत् सर्वं सुनिष्फलम् । कृतं कर्म नरेणाऽपि चतुर्वर्गविहीनकम् ॥२९॥ वर्णैः सर्वैः कृतं पापं राजानमुपतिष्ठति । तेन त्वं कुष्ठसंयुक्तोऽधुना जातो नराधम ॥३०॥ मरिष्यसि यदा राजंस्तदा ते नरके गतिः । भविष्यति न संदेहश्चतुर्वर्गविहीनता ॥३१॥ पुलस्त्यवचनं श्रुत्वा दुःखयुक्तो महीपतिः । उवाच तं महाप्राज्ञं कृतांजलिपुटोऽभवत् ॥३२॥ सुधन्वोवाच । भगवन् सर्वतत्त्वज्ञ त्वया यत् कथितं वचः । तदेव सत्यरूपं वै मया ज्ञातं न संशयः

॥३३॥ अधुना तद्व्रतं ब्रूहि कीदृशं कस्य पूजनम् । कस्मिन् काले प्रकर्तव्यं सर्वसिद्धिप्रदायकम् ॥३४॥ कुष्ठनाशार्थमेवं मे वदोपायं महाप्रभो । प्रायश्चित्तं करिष्यामि व्रतलोपप्रदोषहृत् ॥३५॥ एवं पृष्टो महायोगी पुलस्त्यो हर्षसंयुतः । तं जगाद गणेशाय नम इत्युपसंस्मरन् ॥३६॥ पुलस्त्य उवाच । अज्ञानेन कृतं दोषं प्रायश्चित्तेन हंति तम् । नरस्तस्मात्त्वमेवाशु व्रतं कुरु जनैः सह ॥३७॥ तेन कुष्ठविहीनस्त्वं सुरूपः प्रभविष्यसि । अनुतापाच्च ते राजन् पापं नष्टं न संशयः ॥३८॥ इत्युक्त्वा तं ततो योगी जगाद व्रतसंभवाम् । कथां सर्वां स संश्रुत्य हर्षयुक्तो नृपोऽभवत् ॥३९॥ उवाच तं मुनिश्रेष्ठं प्रणम्य च पुनः पुनः । धन्यं मे जन्म भो नाथ श्रुतं येन महद्व्रतम् ॥४०॥ नानेन सदृशं किंचिन् मया ज्ञातं महामते । त्वत्तो वद महाप्राज्ञ गणेशस्य स्वरूपकम् ॥४१॥ तज् ज्ञात्वा सर्वभावेन भजिष्यामि महामुने । नित्यं भक्तिसमायुक्तो देवदेवेशमादरात् ॥४२॥ एवं पृष्टः स राजानं वचनं प्रजगाद ह । पुलस्त्यः सर्वभावज्ञो गाणपत्यो महायशाः ॥४३॥ पुलस्त्य उवाच । सुधन्वञ्छृणु मे वाक्यं गणेशज्ञानकारकम् । ब्रह्मभूयमयं पूर्णं योगाकारं विशेषतः ॥४४॥ पुराऽहं योगशांत्यर्थं नानायोगपरायणः । असाधयञ्छमेनैव दमेन मनसो जयात् ॥४५॥ तथापि शांतिहीनोऽहं शरणं शंकरं गतः । तं प्रणम्य महात्मानमपृच्छं योगमुत्तमम् ॥४६॥ ततस्तेन समाख्यातं तच्छृणुष्व नराधिप । येन त्वं गाणपत्यश्च साधनेन भविष्यसि ॥४७॥ श्रीशिव उवाच । योगशांतिमयं विद्धि गणेशं भज भावतः । मनोवाणीविहीनं तं मनोवाणीमयं न च ॥४८॥ मनोवाणीमयं सर्वं संप्रज्ञातसमुद्भवम् । गकाराक्षरगं विद्धि पश्य वेदे महामते ॥४९॥ मनोवाणीविहीनं यदसंप्रज्ञातगं मतम् । णकाराक्षरसंभूतं नाम्नो गणपतेर्यदि ॥५०॥ तयोः स्वामी गणेशानः शांत्या योगेन लभ्यते । चित्तभूमिनिरोधेन तं भजस्व विनायकम् ॥५१॥ एवमुक्त्वा महादेवो विरराम विशेषवित् । तं प्रणम्य वनं गत्वाऽसाधयं तं सुयत्नतः ॥५२॥ अष्टाक्षरेण मंत्रेण ध्यात्वा गणपतिं नृप । अतोषयं विशेषेण चित्तनिग्रहभावतः ॥५३॥ ततः स्वल्पेन कालेन शांतिं प्राप्तोऽहमात्मनि । तथापि मंत्रराजं तमजपं पूजने रतः ॥५४॥ एकविंशतिवर्षेषु गतेषु स विनायकः । आययौ मे वरं दातुं भक्तानुग्रहकारकः ॥५५॥ तं दृष्ट्वा प्रणतो भूत्वाऽपूजयं तु यथाविधि । स्तौमि नामाष्टकेन स्म कौथुमेन महाप्रभुम् ॥५६॥ गाणपत्यं स मां कृत्वा ययौ स्वानंदके पुरे । तदारभ्याहमत्यंतं भजामि गणनायकम् ॥५७॥ एवमुक्त्वा महीपालं तथा दशरथ स्वयम् । मंत्रमष्टाक्षरं तस्मै ददौ विधिसमन्वितम् ॥५८॥ तेन स्तुतो महायोगी पुलस्त्योऽन्तर्दधे प्रभुः । राजा स्वनगरे गत्वा कार्तिके

हर्षितोऽभवत् ॥५९॥ जनैः सर्वैर्महाभागश्चकार व्रतमुत्तमम् । कार्तिके शुक्लपक्षस्य चतुर्थ्यां गणपं स्मरन् ॥६०॥ पंचम्यां पारणं चक्रे राजाऽसौ जनसंयुतः । ब्राह्मणेभ्यो ददौ दानं सर्वान् अन्नैस्त्वतोषयत् ॥६१॥ ततः कुष्ठविहीनश्च बभूव स जनाधिपः । सुरूपः कामदेवेन समः शोभाधरो बभौ ॥६२॥ लोका वंध्यत्वदोषेण रोगादिभिः प्रपीडिताः । ते सर्वे दुःखहीनाश्च बभूवुर्व्रतसेवनात् ॥६३॥ ततस्तेन नृपेणाऽथ सर्वत्र भूमिमंडले । प्रकाशितं प्रयत्नेन व्रतं गाणेश्वरं नृप ॥६४॥ ततः शुक्लां तथा कृष्णां चतुर्थीं चक्रिरे जनाः । तेनाऽऽनंदसमायुक्ता बुभुजुर्विविधं सुखम् ॥६५॥ ततः सुधन्वा स्थाप्य स्वं पुत्रं राज्ये महामतिः । एकांते संस्थितो भूत्वाऽभजत्तं गणपं सदा ॥६६॥ अंते स्वानंदगो भूत्वा ब्रह्मभूतो बभूव ह । तथा जनाश्च सर्वे ते स्वानंदस्था बभूविरे ॥६७॥ एवं ते कथितं राजन्नथो शृणु महामते । महिमानं व्रतस्यैव सर्वसिद्धिकरस्य ह ॥६८॥ माहिष्मत्यां च चांडालो वसन् कः पापकारकः । प्राप्य कार्तिकगां शुक्लां चतुर्थीं स वने गतः ॥६९॥ तत्र व्याघ्रेण संहृष्टः पलायन् वृक्षमारुहत् । व्याघ्रो वृक्षतले तत्र संस्थितस्तं प्रतीक्षयन् ॥७०॥ तत्र रात्रिर्गता तस्य चांडालस्य प्रजागरः । संपूर्णश्चाभवद्भूप पुनश्चित्रं बभूव ह ॥७१॥ समागतो महासर्पो वनस्थो वृक्षमारुहत् । पपात भयभीतः स तं दृष्ट्वा कंपवेगतः ॥७२॥ व्याघ्रेण संगृहीतः स पंचम्यां भक्षितोऽभवत् । स विमानं समारुह्य ययौ स्वानंदकं पुरम् ॥७३॥ अज्ञातव्रतजेनैव पुण्येन गणपं गतः । दृष्ट्वा योगपरो भूत्वा ब्रह्मभूतो बभूव सः ॥७४॥ एवं नृप अपारा वै चतुर्वर्गफलैर्युताः । ब्रह्मभूताश्च संजाताश्चतुर्थीव्रतकारकाः ॥७५॥ कार्तिके शुक्लपक्षस्य चतुर्थ्या महिमा मया । कथितो लेशतो भूप श्रोतुमिच्छसि किं पुनः ॥७६॥ शृणुयाद्यः पठेद्वाऽपि स वै सर्वार्थसिद्धिभाक् । पुत्रपौत्रादिसंयुक्तः प्रभवेद्गणपप्रियः ॥७७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते कार्तिकशुक्लचतुर्थीवर्णनं नाम नवमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । गणेशस्य कथां श्रुत्वा हर्षश्चेतसि जायते । मार्गशीर्षे च या शुक्ला तां मे वद मुने यतः ॥१॥ वसिष्ठ उवाच । अत्र ते वर्णयिष्येऽहमितिहासं पुरातनम् । मार्गशीर्षे चतुर्थ्यां यः शुक्लायामभवन्नृप ॥२॥ काशीपतिः पुरा राजा पुण्यकीर्तिर्बभूव ह । अजातशत्रुको नाम सर्वशास्त्रविशारदः ॥३॥ देवद्विजातिथिप्रेप्सुर्नाना-धर्मपरायणः । प्रजानां पालने सक्तो यथाशास्त्रेण मानदः ॥४॥ तत्रैव नारदोऽकस्मान्नृपं द्रष्टुं समागतः । तं प्रणम्य महात्मानं पूजयामास भक्तितः ॥५॥ स्वयं पादस्य संवाहं चकार नृपसत्तमः । उवाच तं प्रहर्षेण नारदं सर्वगं परम् ॥६॥ अजातशत्रुरुवाच । धन्यं मे जन्म पुत्रादि राज्यं निहतकंटकम् । धन्यौ च जनकौ ज्ञानं त्वदंघ्रियुगदर्शनात् ॥७॥ सर्वसारं वदस्व त्वं योगशांतिप्रदायकम् । येन संसारदुःखेभ्यो मुच्यते मानवः क्षणात् ॥८॥ ततस्तं नारदो योगी गाणपत्या-ग्रणीर्नृप । जगाद हर्षसंयुक्तो वाक्यं सारमयं हसन् ॥९॥ नारद उवाच । सम्यक् पृष्टं त्वया राजन् सर्वेभ्यो ब्रह्मदं परम् । शृणु ते कथयिष्यामि योगं शांतिप्रदायकम् ॥१०॥ ब्रह्म नानाविधं वेदे वर्णितं पात्रभेदतः । न मुख्यं ब्रह्मभूतत्वं तदेव भवति प्रभो ॥११॥ ब्रह्मणस्पतिनामानं गणेशं भज भावतः । चित्तवृत्तिनिरोधेन चिंतामणिर्भविष्यसि ॥१२॥ गणेशोऽहं न संदेहो मम तत्र कथं भवेत् । संयोगायोगकं राजन् तेन शांतिमवाप्स्यसि ॥१३॥ तस्य व्रतं महाभाग चतुर्थीसंज्ञकं महत् । राज्ये नष्टे च तेन त्वं नारकी प्रभविष्यसि ॥१४॥ धर्मार्थकाममोक्षाणां प्रदं पूर्णं प्रकीर्तितम् । चतुर्थीसंज्ञकं राजन् वरदं संकटं मतम् ॥१५॥ नानाकर्माणि कुर्वंति नराः सर्वार्थसिद्धये । चतुर्थीव्रतहीनाश्चेन्निष्फलाः प्रभवंति ते ॥१६॥ इत्युक्त्वा तं महायोगी नारदः करुणायुतः । माहात्म्यं कथयामास चतुर्थीसंभवं नृप ॥१७॥ ततस्तं नृपवर्यः स प्रणम्य भावसंयुतः । पप्रच्छ सर्वमार्गज्ञं गणेशोपासनं पुनः ॥१८॥ अजातशत्रुरुवाच । ब्रह्मणस्पतिमाहात्म्यं श्रुतं मया महामते । तस्योपासनमार्गं मे वद सर्वज्ञ ते नमः ॥१९॥ नारद उवाच । एकाक्षरविधानेन भज ढुंढिं विनायकम् । तेन साध्यो गणेशस्ते प्रत्यक्षश्च भविष्यति ॥२०॥ तस्मै स विधिना सर्वं गणेशोपासनं ददौ । मंत्रमेकाक्षरं सांगं ततश्चांतर्हितोऽभवत् ॥२१॥ तत्राऽऽदौ मार्गशीर्षस्था संप्राप्ता शुक्लगा नृप । चतुर्थी सा कृता तेनोपोषणेन यथाविधि ॥२२॥ जनैः सर्वैस्तथा राजन् कृता सर्वप्रदायिनी । ततस्तेन च सर्वत्र प्रशस्ता सुकृताऽभवत् ॥२३॥ शुक्लां कृष्णां चतुर्थीं ये न कुर्वंति नराधमाः । स्त्रियश्चे-त्ताडनीयास्ते महापापिन एव च ॥२४॥ ढुंढिराजं नृपाध्यक्षो नित्यं संपूज्य यत्नतः । भक्त्याऽभजत् संबभूव योगींद्रो

योगिसंमतः ॥२५॥ ततो बहुगते काले प्रत्यक्षः स गजाननः । बभूव तस्य भूपस्य वरं ब्रूहि तमब्रवीत् ॥२६॥ स्तुतः संपूजितस्तेन ढुंढिराजस्तुतोष ह । गाणपत्यं चकाराऽसौ नृपं चाजातशत्रुकम् ॥२७॥ ईप्सितं तं वरं दत्त्वा तत्रैवांतरधीयत ढुंढिराजं तमभजत् राजेंद्रोऽनन्यचेतसा ॥२८॥ अंते नागरसंयुक्तो जगाम गणपं नृपः । सर्वैर्बभूव च ब्रह्मभूतो वै योगिसंमतः ॥२९॥ एवं शुक्लचतुर्थ्यां ते मार्गशीर्षेऽभवन् महत् । माहात्म्यं कथितं राजन् संक्षेपेण न संशयः ॥३०॥ अन्यत् कथांतरं भूप शृणु सर्वभयापहम् । वेश्याया व्रतसंयोगाद्ब्रह्मभूयकरं महत् ॥३१॥ मिथिलायां कदाचित् का वेश्या नरविमोहिनी । आगता तां निरीक्ष्यैव मोहिताः सकला नराः ॥३२॥ राज्ञा संमानिताऽत्यंतं तत्र वासमरोचयत् । कदाचित्तीर्थगा सा वै संदृष्टा रक्षसा पुरः ॥३३॥ तां संगृह्य ययौ रक्षः स्ववासं हर्षसंयुतः । सा तं दृष्ट्वा भयोद्विग्ना विललाप भृशातुरा ॥३४॥ रक्षसा सांत्विता तत्र न शोकं साऽत्यजत् कदा । तस्मिन् काले चतुर्थी वै शुक्ला मार्गे समागता ॥३५॥ अतिशोकतया राजन्न बभक्ष जलादिकम् । पंचम्यां सा मृता तत्र भययुक्तेन चेतसा ॥३६॥ ततो गणेशदूतेन नीता स्वानंदके पुरे । ब्रह्मभूता च सा जाता व्रतपुण्यप्रभावतः ॥३७॥ अज्ञानेन कृतं चैतत् वरदाख्यं व्रतं महत् । ब्रह्मसायुज्यदं प्रोक्तं किं पुनर्ज्ञानभावतः ॥३८॥ मार्गशीर्षगतायाश्च शुक्लायाः कुरुते नरः । चतुर्थ्यां लभते सोऽपि सर्वार्थं संशृणोति यः ॥३९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते मार्गशीर्षशुक्लचतुर्थीवर्णनं नाम दशमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । श्रुतं यन् मार्गशुक्लस्थचतुर्थी संज्ञितं मया । व्रतं तेन महाभाग संतृप्तो गुरुसत्तम ॥१॥ अधुना पौषमासे या चतुर्थी वरदायिनी । तस्या माहात्म्यमेवं मे ब्रूहि त्वं मुनिसत्तम ॥२॥ वसिष्ठ उवाच । शृणु राजंश्च माहात्म्यं संक्षेपेण वदाम्यहम् । विस्तरेण तु को वक्तुं समर्थः प्रभवेद्भुवि ॥३॥ अवंतीनगरीमध्येऽवसत्तु ब्राह्मणोत्तमः । सुदंत इति विख्यातः सर्वशास्त्रविशारदः ॥४॥ राज्ञः पुरोहितः श्रेष्ठः सदा नीतिपरायणः । धर्मशास्त्रानुसारेण राजानमप्यबोधयत् ॥५॥ राजा बृहद्रथो नाम तदाज्ञावशगोऽभवत् । पालयामास भूमिं स नानाधर्मकरः परः ॥६॥

सुदंतस्याऽभवद्भार्या नाम्ना ख्याता विलासिनी । बभूव कर्मदोषेण वंध्या सा वै पतिव्रता ॥७॥ अपत्यं सुषुवे सा यज्जातमात्रं मृतं भवेत् । तदर्थं व्रतदानादिधर्मं चक्रे च स द्विजः ॥८॥ नाऽभवत्तस्य तदपि पुत्रः परमसौख्यदः । विप्रोऽतिदुःखितः सस्त्रीको जगाम वनं ततः ॥९॥ बभ्राम भ्रांतचित्तोऽसौ यत्र तत्र महामतिः । मरणे निश्चयं कृत्वा तपोयुक्तो बभूव ह ॥१०॥ तत्राऽऽजगाम योगींद्रो वामदेवः प्रतापवान् । यदृच्छाविचरंस्तेन दृष्टः संनमितोऽभवत् ॥११॥ पूजयित्वा महात्मानं वामदेवं कृतांजलिः । जगाद खेदसंयुक्तः सुदंतो योगिसत्तमम् ॥१२॥ सुदंत उवाच । वामदेव च मे धन्यं दुःखितस्य तपो वयः । ज्ञानादिकं विशेषेण त्वत्पादपद्मदर्शनात् ॥१३॥ वंध्योऽहं मुनिशार्दूल का गतिर्मे भविष्यति । मृतस्य स्वर्गहीनस्य वद योगींद्रसत्तम ॥१४॥ वामदेव उवाच । शृणु द्विज महाभाग त्वं सदा धर्मसंयुतः । तथापि पापचारी त्वं येन जातः शृणुष्व तत् ॥१५॥ अवंतीपुरपालस्य आदरात्त्वं पुरोहितः । राज्ञा कृतं महत्पापं यत्तदेव त्वया कृतम् ॥१६॥ चतुर्थीव्रतलोपश्च बभूवे भूमिमंडले । चतुर्वर्गफलैर्हीना जाता भूवासिनो जनाः ॥१७॥ धर्मस्याऽऽचरणं पूर्णं कृतं राज्ञा तथा त्वया । निष्फलं व्रतलोपेन तेन त्वं दुःखितोऽधुना ॥१८॥ एवं श्रुत्वा वचो रम्यं वामदेवस्य धीमतः । विस्मितस्तं सुदंतोऽसौ जगाद विनयान्वितः ॥१९॥ सुदंत उवाच । कीदृशं तद्व्रतं तात वद मे हितकारकम् । चतुर्णां पुरुषार्थानां साधकं कथमाभवत् ॥२०॥ तेन हीनो नरो यस्तु स कथं फलहीनकः । कर्मणस्तत् समाचक्ष्व दयासागर मानद ॥२१॥ वसिष्ठ उवाच । एवं पृष्टो महायोगी तज्जगाद सविस्तरम् । माहात्म्यं सकलं तस्मै स श्रुत्वा विस्मितोऽभवत् ॥२२॥ पुनः पप्रच्छ तं विप्रो हर्षयुक्तेन चेतसा । गणेशज्ञानबोधार्थं गाणपत्यं महामुनिम् ॥२३॥ सुदंत उवाच । कीदृशोऽयं गणाधीशो वद तस्य स्वरूपकम् । ज्ञात्वा तं प्रभजिष्यामि नित्यं भक्तिसमन्वितः ॥२४॥ एवं पृष्टो महायोगी वामदेवस्तमब्रवीत् । गणेशबोधदाने स कुशलः सर्वपारगः ॥२५॥ वामदेव उवाच । सुदंत शृणु विप्रर्षे गाणेशं ज्ञानमुत्तमम् । गाणपत्यो येन भक्तिभावितो भविताऽसि भोः ॥२६॥ अहं पुरा तपोनिष्ठस्त्वभवं यत्नसंयुतः । तपसा मे महाभाग व्याप्तं सर्वं चराचरम् ॥२७॥ ततो मया तपस्त्यक्तं योगार्थं ब्राह्मणोत्तम । शमे दमे परेणांतर्निष्ठेन मनसो जयात् ॥२८॥ योगभूमिक्रमेणाऽहं कालेन महता द्विज । सहजे संस्थितो भूत्वा यत्र तत्राऽचरं तु च ॥२९॥ सहजं मोहहीनं यत् स्वाधीनत्वसमायुतम् । दृष्ट्वा शांत्यर्थमत्यंतं तत् त्यक्तं च मया ततः ॥३०॥ संधृतं मनसि ब्रह्म मनोवाणीविवर्जितम् । कथं स्वाधीनता तत्र निर्मोहश्च प्रवर्तते

॥३१॥ अधुना किं मया कार्यं विचार्य शरणं गतः । शंकरं योगिवंद्यं तं शैवोऽहं प्रणतोऽभवम् ॥३२॥ शैवमार्गे रतं नित्यं दृष्ट्वा हर्षसमन्वितः । शंभुः प्रोवाच मां विप्र स्थीयतां मुनिसत्तम ॥३३॥ किमर्थमागतस्तात वामदेव महामते । वद मे सकलं वृत्तं करिष्यामि प्रियं च ते ॥३४॥ शिवस्य वचनं श्रुत्वा संस्थितोऽहं कृतांजलिः । अवदं तं महादेवं भक्तवाञ्छा-सुरद्रुमम् ॥३५॥ सहजं यत्परं ब्रह्म शैवं स्वेच्छामयं प्रभो । तस्मात् परं न विद्येत तथापि नुद संशयम् ॥३६॥ ब्रह्मणि ब्रह्मभूतस्य स्वेच्छा तत्र कुतो भवेत् । स्वाधीनता दोषयुक्तं सहजं न परं मतम् ॥३७॥ अतः शांत्यर्थमेव त्वामहं प्रष्टुं समागतः । योगशांतिप्रदं पूर्णं वद मां करुणानिधे ॥३८॥ वसिष्ठ उवाच । वामदेववचः श्रुत्वा हर्षितः शंकरोऽब्रवीत् । तं पुनः सर्वयोगज्ञो गाणपत्यस्वभाववान् ॥३९॥ श्रीशिव उवाच । योगशांतिप्रदं पूर्णं गणेशं विद्धि भो मुने । जानीहि न परं ब्रह्म सहजं योगसेवया ॥४०॥ स्वानंदाद्यत् समुत्पन्नमसत्यं सत्यरूपकम् । समं च सहजं विद्धि चतुर्धाऽसौ विभज्यते ॥४१॥ चतुर्णामत्र संयोगे स्वानंदः परिकीर्तितः । अयोगे नैव संयोगः केषांचिद्ब्रह्मणां भवेत् ॥४२॥ गकाराक्षरगं ज्ञानं विद्धि तन्निजबोधतः । णकाराक्षरगं ज्ञानं निवृत्या लभ्यते जनैः ॥४३॥ तयोः स्वामी गणेशानो योगरूपः प्रकीर्तितः । शांत्याऽसौ लभ्यते विप्र शांतिभ्यः शांतिदायकः ॥४४॥ चित्तं पंचविधं विद्धि बुद्धिरूपं न संशयः । चित्ते मोहात्मिका सिद्धिर्माये ते परिकीर्तिते ॥४५॥ तयोर्बिंबं गणेशश्च बिंबिभावं त्यज प्रभो । अधुना गणनाथस्त्वं भविष्यसि न संशयः ॥४६॥ एवमुक्त्वा महादेवस्तस्मै मंत्रं ददौ पुनः । एकाक्षरं गणेशस्य सविधिं करुणायुतः ॥४७॥ तं प्रणम्य महेशानं वने यातोऽहमादरात् । तत्रैव गणनाथं तमभजं भक्तिसंयुतः ॥४८॥ एकाक्षरविधानेन संतुष्टो गणनायकः । योगशांतिं ददौ पूर्णां भक्तवात्सल्यकारणात् ॥४९॥ ततोऽहं योगिवंद्यश्च जातः सर्वत्र संमतः । तथापि विघ्नदहनमभजं नित्यमादरात् ॥५०॥ गतेषु दशवर्षेषु गणाधीशः समाययौ । ममाश्रमं वरं दातुमुवाच घननिःस्वनः ॥५१॥ गणेश उवाच । वामदेव महाभाग वरं वृणु हृदीप्सितम् । तव दास्यामि भक्त्याऽहं संतुष्टो योगिसत्तम ॥५२॥ गणेशस्य वचः श्रुत्वा त्यक्त्वा ध्यानं समुत्थितः । प्रणम्य तं गणेशं संपूज्य स्तोतुं प्रचक्रमे ॥५३॥ वामदेव उवाच । गणेशाय नमस्तुभ्यं सदा स्वानंदवासिने । सिद्धिबुद्धिपते तुभ्यं विघ्नेशाय नमो नमः ॥५४॥ मूषकारूढ हेरंब भक्तवाञ्छाप्रपूरक । ढुंढिराजाय ते देव रक्ष मां ते नमो नमः ॥५५॥ आदिमध्यांतहीनाय लंबोदर नमोऽस्तु ते । आदिमध्यांतरूपाय शंकरप्रियसूनवे ॥५६॥ नानामायाधरायैव

मायिभ्यो मोहदायिने । मायामायिकभेदैस्त्वं क्रीडसे ते नमो नमः ॥५७॥ विष्णुपुत्राय शेषस्य पुत्राय ब्राह्मणाय ते । ब्रह्मपुत्राय सर्वेश सर्वपुत्राय ते नमः ॥५८॥ सर्वेषां चैव पित्रे ते मात्रे सर्वात्मकाय ते । महोदराय देवेंद्रपाय ज्येष्ठाय वै नमः ॥५९॥ महोग्राय महेशाय विष्णवे प्रभविष्णवे । अमृताय तु सूर्याय नानाशक्तिस्वरूपिणे ॥६०॥ पुरुषाय प्रकृतये गुणेशाय गुणात्मने । एकानेकात्मकायैव विघ्नकर्त्रे नमो नमः ॥६१॥ भक्तेभ्यः सर्वदात्रे ते ब्रह्मणां पतये नमः । योगाय योगनाथाय योगिनां पतये नमः ॥६२॥ स्तौमि किं त्वां गणेशान मनोवाणीविहीनकम् । मनोवाणीमयं नैवातस्ते देव नमोऽस्तु ते ॥६३॥ सहसैवं संस्तुवतस्तस्य भक्तिरसेन च । रोमोद्गमः प्रादुरासीत् कंठरोधो बभूव ह ॥६४॥ उवाच वामदेवं स नृत्यंतं विघ्ननायकः । वरं वृणु महाभाग यत्ते चित्ते स्थितं परम् ॥६५॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धिकरं परम् । शृणोति यः पठति चेत्तस्मै योगप्रदं तथा ॥६६॥ भक्तिदं भक्तियुक्तेभ्यः पुत्रपौत्रादिकप्रदम् । धनधान्यप्रदं प्रोक्तं मयि प्रीतिविवर्धनम् ॥६७॥ गणेशवचनं श्रुत्वा तं जगाद महामुनिः । वामदेवः प्रसन्नात्मा ब्रह्मेशं ब्रह्मभावितः ॥६८॥ भक्तिं देहि गणाधीश गाणपत्यां विशेषतः । नान्यं याचे वरं देव यदि तुष्टोऽसि विघ्नप ॥६९॥ तथेति तमुवाचैव गणेशोंऽतर्दधे स्वयम् । वामदेवः प्रसन्नात्मा गाणपत्यो बभूव ह ॥७०॥ तदादि शांतिमापन्नस्त्वहं विप्र महामते । अतस्त्वं गणराजं तं भज शांतिमवाप्स्यसि ॥७१॥ एकाक्षरं महामंत्रं सुदंताय ददौ ततः । सविधिं वामदेवः सोंऽतर्धानमकरोन् मुनिः ॥७२॥ सुदंतो विस्मितो भूत्वा ययौ स्वस्थानमुत्तमम् । राज्ञा संमानितः सोप्यभजत्तं गणनायकम् ॥७३॥ बृहद्रथाय वृत्तांतं कथयामास भो नृप । तदाज्ञया नृपः सद्यो घोषयामास तद्व्रतम् ॥७४॥ तत्रादौ पौषमासे या चतुर्थी शुक्लगाऽऽगता । तां चकार द्विजः सद्यो जनै राज्ञा पुरः स्थितैः ॥७५॥ व्रताचरणमात्रेण गर्भयुक्ता बभूव ह । मुनिपत्नी सुतं लेभे ज्ञानयुक्तं चिरायुषम् ॥७६॥ ततो भूमितले सर्वे चक्रुर्व्रतमनुत्तमम् । शौक्लं कार्ष्णं विशेषेण चतुर्थीसंज्ञितं नृप ॥७७॥ सर्वे रोगादिभिर्हीना जाताः पुत्रादिसंयुताः । धनधान्यादिभिर्युक्ता अंते स्वानंदगा बभुः ॥७८॥ सुदंतो योगिवंद्यश्च बभूव योगसेवया । राजाऽपि ज्ञानसंयुक्तो गाणपत्यो बभूव ह ॥७९॥ पौषशुक्लचतुर्थीजमेतत्ते कथितं व्रतम् । राजन् सर्वार्थदं पूर्णं पुनस्त्वं शृणु मानद ॥८०॥ वैश्यो मार्गे स्थितः सोऽपि श्रमयुक्तो धनप्रियः । तत्र चोरैः समायातैर्लुंठितं तैर्धनं महत् ॥८१॥ तेषां शस्त्राभिघातेन पपात धरणीतले । वैश्यो वने दुःखितश्च विललाप भृशातुरः ॥८२॥ दैवयोगेन सा देवी चतुर्थी

शुक्लगा गता । पौषी तस्यां जलाद्यैश्च हीनस्तत्र बभूव सः ॥८३॥ रात्रौ जागरणं तस्य संजातं पीडया तदा । पंचम्यां स मृतः पापी धनलुब्धो महामते ॥८४॥ अज्ञातव्रतजेनैव महिम्ना सोऽपि भूपते । स्वानंदे गणपं दृष्ट्वा ब्रह्मभूतो बभूव ह ॥८५॥ एवं जना व्रतेनैव मुक्ताः संसारसागरात् । इह भुक्त्वाऽखिलान् भोगान् वर्णितुं तन्न शक्यते ॥८६॥ इदं पौषचतुर्थ्यास्तु माहात्म्यं यः शृणोति चेत् । पठेद्वै तस्य भो राजन् सर्वदं प्रभविष्यति ॥८७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते पौषशुक्लचतुर्थीमाहात्म्यवर्णनं नामैकादशोऽध्यायः ॥

★

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । चतुर्थ्या महिमानं च श्रुत्वा हर्षः प्रवर्धते । न तृप्यामि महायोगिन्नमृतादधिकं मतम् ॥१॥ माघे शुक्लचतुर्थी या तस्या माहात्म्यमुत्तमम् । वद येन जनाः सर्वे भवंति सुखभोगिनः ॥२॥ वसिष्ठ उवाच । माघी शुक्ला चतुर्थी या तस्यां जातो विनायकः । कश्यपस्य गृहे साक्षादंगारकयुता नृप ॥३॥ मुद्गल उवाच । एवमुक्त्वा वसिष्ठस्तं विनायकचरित्रकम् । कथयामास भो दक्ष देवांतकवधाश्रितम् ॥४॥ श्रुत्वा सोऽपि मुदा युक्तो बभूवाजस्य नंदनः । पुनस्तं प्रेरयामास व्रतार्थं मुनिमादरात् ॥५॥ तस्यादरं स विज्ञाय वसिष्ठस्तमुवाच ह । हर्षेण महता युक्तो गाणपत्येंद्र-सत्तमः ॥६॥ वसिष्ठ उवाच । अत्र ते वर्णयिष्येऽहमितिहासं पुरातनम् । श्रुतश्चेत् सर्वदः पूर्णो भविष्यति नरोत्तम ॥७॥ कर्णाटे भानुपुर्यां च राजा परमधार्मिकः । देवविप्रातिथिप्रेप्सुर्नीत्या राज्यं चकार सः ॥८॥ शस्त्रास्त्रज्ञो विशेषेण नाम्ना सोमश्च वीर्यवान् । जित्वा भूमंडलं सर्वं चक्रे सौराज्यमुत्तमम् ॥९॥ भार्या यशोवती तस्य नाम्ना पूर्णपतिव्रता । धर्मशीला रता दाने बभूवे रूपशालिनी ॥१०॥ तस्याऽपि दीर्घकालेन कुर्वतो राज्यमुत्तमम् । अनावृष्टिभवं दुःखं प्राप्तं परमदारुणम् ॥११॥ स तु शौनकनामानं मुनिं सर्वार्थकोविदम् । ययौ दुःखनिवृत्त्यर्थं गाणपत्यं वने पुरात् ॥१२॥ महावनं समासाद्य तं ननाम महामुनिम् । साष्टांगं च पुरस्तस्य कृतांजलिपुटोऽभवत् ॥१३॥ उवाच तं मुनिश्रेष्ठं सोमो विनयसंयुतः । धन्यं मे जन्म कर्माद्यं येन दृष्टो भवान् मुने ॥१४॥ वदंतमेवं राजानमुवाच शौनको मुनिः । सर्वशास्त्रार्थतत्त्वज्ञो न्यस्तस्वपरविभ्रमः ॥१५॥ शौनक उवाच । पुरा राजन् महाभाग वद मां सकलं तव । चेष्टितं यद्वने कस्मादागतो दुर्गमे च मे ॥१६॥ एवं पृष्टो मुनींद्रेण सोमस्तं प्रत्युवाच ह । हर्षयुक्तेन चित्तेन मुनिं वेदज्ञमुत्तमम् ॥१७॥ सोम उवाच । कर्णाटे भानुपुर्यां मे वसतिर्धर्ममिच्छतः ।

अनावृष्टिभवं दुःखं प्राप्तं तत्र महामुने ॥१८॥ धर्मेण नीतियुक्तेन मया राज्यं प्रपालितम् । तथापि पापयोगेन दुःखं प्राप्तं जनैः सह ॥१९॥ तत्रोपायं वदस्व त्वं साक्षाद्योगीश्वरो भवान् । राज्यं त्यक्त्वा वने तेऽद्य शरणं चागतो नृपः ॥२०॥ श्रुत्वा तस्य वचो रम्यं तं जगाद महीपतिम् । शौनको मुनिशार्दूलो विनयेन समन्वितम् ॥२१॥ शौनक उवाच । शृणु राजन् महत् पापं तव राज्ये बभूव ह । तेन रोगयुता लोका वंध्यतादोषसंयुताः ॥२२॥ तत्रापि यन् महद् दुःखमनावृष्टिसमुद्भवम् । संप्राप्तं कारणं तत्र वदामि त्वां नृपाधम ॥२३॥ चतुर्थीसंज्ञकं राजन् व्रतं नष्टं विशेषतः । शौक्लं कार्ष्णं तदर्थं त्वं यत्नयुक्तो भवाधुना ॥२४॥ नो चेद्वर्षसहस्रैस्त्वं सुखं न लभसे कदा । अतः सर्वत्र विख्यातं तद्व्रतं कुरु मानद ॥२५॥ इत्युक्त्वा व्रतमाहात्म्यं कथयामास विस्तरात् । नृपाय सोऽपि संश्रुत्य विस्मितो मानसेऽभवत् ॥२६॥ पुनः पप्रच्छ भावेन शौनकं मुनिसत्तमम् । वद ब्रह्मन् गणेशस्य स्वरूपं शांतिदं परम् ॥२७॥ शौनक उवाच । पुराऽहं तपसा युक्तो नृपाऽतिष्ठं स्वआश्रमे । अंतर्निष्ठस्वभावेन ब्रह्मचिंतनतत्परः ॥२८॥ ततोऽकस्मान् महायोगी भृगुरस्माकमेव सः । बीजभूतः समायात आश्रमेऽनुग्रहाय मे ॥२९॥ तं दृष्ट्वा सहसोत्थाय प्रणतोऽहं महामुनिम् । आसने समुपावेश्याऽपूजयं च स्वभक्तितः ॥३०॥ कृतांजलिपुटं नम्रं पुरस्तस्य महात्मनः । संस्थितं मां ततो दृष्ट्वा सुविनीतमुवाच सः ॥३१॥ भृगुरुवाच । तात किं योगनिष्ठस्त्वं शांतिं प्राप्तो वदस्व माम् । किमिच्छसि महाभाग वद तेऽहं ददामि तत् ॥३२॥ अस्मत्कुले महाभाग भवान् साधुगुणान्वितः । तेनाऽहं तृप्तिमायातः पूरयिष्यामि वाञ्छितम् ॥३३॥ एवं ब्रुवंतमाद्यं तं मुनिमानम्य शौनकः । जगाद हर्षसंयुक्तो भृगुं योगतपोनिधिम् ॥३४॥ शौनक उवाच । योगशांतिप्रदं पूर्णं ब्रूहि योगं महामुने । तेनाऽहं तृप्तिमत्यंतं यास्यामि त्वदनुग्रहात् ॥३५॥ भृगुरुवाच । योगशांतिमयं विद्धि गणेशं ब्रह्मनायकम् । तं भजस्व विधानेन तेन शांतो भविष्यसि ॥३६॥ चित्तं पंचविधं तात तत्र चिंतामणिः स्थितः । तं ज्ञात्वा ब्रह्मभूताश्चाऽभवन् ब्रह्मादयः सुत ॥३७॥ चित्तेन ज्ञायते यद्वै तत्र मोहः प्रवर्तते । मोहं चित्तं परित्यज्य भव चिंतामणिः स्वयम् ॥३८॥ मनोवाणीमयं चित्तं मनोवाणीविवर्जितम् । चित्तं जानीहि पुत्र त्वं तत्त्यक्त्वा च सुखी भव ॥३९॥ एवमुक्त्वा गणेशस्य गणानां त्वा मनुं ददौ । शौनकाय महायोगी भृगुश्चांतर्हितोऽभवत् ॥४०॥ शौनक उवाच । भृगुणैवमहं राजन् उपदिष्टोऽभजं परम् । गणेशं योगभावेन चित्तनिग्रहणे रतः ॥४१॥ क्रमेण योगिवंद्योऽहं जातस्तस्य महात्मनः । कृपया गणराजस्य तथापि स्म भजामि तम् ॥४२॥

ततो मे वरदो जातो गणेशो भक्तवत्सलः। गाणपत्यं चकाराऽसौ तदहात् गणपोऽभवम् ॥४३॥ एवमुक्त्वा स राजेंद्रं गणानां त्वा मनुं ददौ। शौनको मुनिशार्दूलो विधियुक्तं विधानवित् ॥४४॥ शौनकं प्रणनामाऽऽज्ञां गृहीत्वा राजसत्तमः। आययौ स्वगृहे तत्र प्रधानैरभिनंदितः ॥४५॥ नागरैः सह सोमश्च माघे शुक्लचतुर्थिका। संप्राप्ता साऽऽदिकाले स चकार व्रत-मुत्तमम् ॥४६॥ ततस्तेन प्रविख्यातं कृतं भूमितले नृप। शुक्लकृष्णचतुर्थीजं व्रतं चक्रुर्जना भुवि ॥४७॥ व्रताचरणपुण्येन वृष्टिस्तत्र बभूव च। सर्वे हर्षयुता लोका गणेशभजने रताः ॥४८॥ गणेशभजनं सोमश्चकार प्रेमसंयुतः। गणेशप्रीतये तत्राऽकरोद्देवालयं तथा ॥४९॥ महामौल्यं नृपाध्यक्षः स्थापयामास विघ्नपम्। गणेशं वरदाख्यं सोऽपूजयन्नित्यमादरात् ॥५०॥ पुत्रपौत्रयुतो राजा स चक्रे राज्यमुत्तमम्। लोकाः सर्वे सुखे मग्ना रोगवंध्यत्ववर्जिताः ॥५१॥ स्वधर्मनिरता नित्य-मभजन् गणनायकम्। न गणेशसमं किंचिद्धारयामासुरादरात् ॥५२॥ सोमश्चांते गणेशानं ययौ लोकसमन्वितः। स्वानंदे तं प्रणम्याऽसौ ब्रह्मभूतो बभूव ह ॥५३॥ एतत्ते कथितं भूप तथाऽन्यच्छृणु सुंदरम्। चरित्रं व्रतसंभूतं सर्वपापप्रणाशनम् ॥५४॥ कोऽप्यंत्यजो विदर्भे वै कौंडिन्ये नगरेऽवसत्। भानुनामा महापापी दुष्टकर्मपरायणः ॥५५॥ परस्त्रीलंपटोऽत्यंतं मद्यद्यूतरतः सदा। मार्गे जनान् जघानाऽसौ द्रव्यलोभी विशेषतः ॥५६॥ जीवं दृष्ट्वा दुष्टकर्मा जघान स च भूमिप। कार्यहीनतथा पापी ब्राह्मणानां वधे रतः ॥५७॥ इत्यादिदोषबाहुल्ययुक्तः परमदारुणः। कदाचिद्दैवयोगेन वने बभ्राम सोंऽत्यजः ॥५८॥ तस्मिन् दिने समायाता माघी शौक्ली चतुर्थिका। तत्रान्नजलहीनोऽयं पर्वतांतरगोऽभवत् ॥५९॥ न प्राप्तवान् वने किंचिद् दुष्टस्तेन सुदुःखितः। क्षुधार्तस्तृष्णया युक्तस्तत्रैव निशि संस्थितः ॥६०॥ प्रभाते विमले सद्यः समुत्थाय गृहागतः। तृषितः स जलं तत्र पपावत्यंतमादरात् ॥६१॥ ततोऽकस्मात् सुदुःखेन वमित्वा तज्जलं नृप। ममार तं गृहीत्वा ते गाणेशा गणपं ययुः ॥६२॥ गणेशदर्शनेनैव निष्पापो ज्ञानसंयुतः। सायुज्यं गणनाथस्य लेभे वै तत्प्रभावतः ॥६३॥ अज्ञान-व्रतजेनैव पुण्येनांत्यजजातिजः। ब्रह्मभूतो महापापी बभूवे सूर्यवंशज ॥६४॥ एतादृशी महापुण्या चतुर्थी शुक्लगा मता। माघी तस्याश्च माहात्म्यं कथितुं न क्षमो भवेत् ॥६५॥ एवं नाना जना भूप ब्रह्मभूता बभूविरे। कथितुं न प्रशक्यं यच्चरित्रं तत्समुद्भवम् ॥६६॥ माघे शुक्लचतुर्थ्यां यो महिमानं शृणोति चेत्। पठेद्वा तस्य भो राजन् सिद्धिदं सुभविष्यति ॥६७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते माघशुक्लचतुर्थीमाहात्म्यवर्णनं नाम द्वादशोऽध्यायः ॥



।। श्रीगणेशाय नमः ।। दशरथ उवाच । अधुना ब्रूहि मे विप्र माहात्म्यं फाल्गुनोद्भवम् । पुण्यं शुक्लचतुर्थीजं न तृप्यामि कथामृतात् ।।१।। वसिष्ठ उवाच । फाल्गुने शुक्लपक्षे या चतुर्थी वरदा भवेत् । तस्या माहात्म्यमाद्यं ते संक्षेपेण ब्रवीम्यहम् ।।२।। मालवे नगरं ख्यातं सर्वशोभासमन्वितम् । भारकं सर्वधर्मज्ञैर्लोकैस्तत् संकुलं बभौ ।।३।। तत्र हेमांगदो राजा चकार राज्यमुत्तमम् । जित्वा भूमंडलं सर्वं शस्त्रास्त्रज्ञो विचक्षणः ।।४।। प्रधानै राजभिः सर्वैर्मान्योऽभूत् सर्वसंमतः । पुत्रैस्तेजोयुतैर्युक्तो द्विजदेवातिथिप्रियः ।।५।। ततोऽकस्मात् स राजर्षिः शूलयुक्तो बभूव ह । उदरे शस्त्रसंपातैरिव युक्तो रुरोद ह ।।६।। नानायत्नाः कृताः सर्वैः शूलनाशार्थमादरात् । मंत्रैश्चौषधिभिः शूलं पिपीडातितरां नृपम् ।।७।। तीर्थदेवादिकं सोऽपि ब्राह्मणैर्वेदपारगैः । असेवत ततस्तस्य शूलमुग्रं बभूव वै ।।८।। ततः शूलेन राजाऽतिपीडितो दारुणेन वै । विषादिभिर्मतिं चक्रे देहत्यागे विशेषतः ।।९।। ततोऽकस्मान् महायोगी पर्वतः सहसाऽऽगतः । तस्य गेहे तं ननाम स राजा दुःखसंयुतः ।।१०।। ब्राह्मणैः पूजयामास तं सर्वज्ञं विशेषतः । उवाच दुःखसंयुक्तः शूलपीडां नियम्य सः ।।११।। हेमांगद उवाच । धन्यं मे जन्म दानादि पिता माता कुलादिकम् । स्वधर्मपुत्रदारादि त्वदंघ्रियुगदर्शनात् ।।१२।। ततोऽतिपीडया युक्तः पपात धरणीतले । रुरोद दारुणं राजा तत् दृष्ट्वा विस्मितो द्विजः ।।१३।। पप्रच्छ सचिवान् विप्रो मुनीनां पर्वतो वरः । किमिदं दुःखमुग्रं वै राज्ञा प्राप्तं प्रकथ्यताम् ।।१४।। सचिवा ऊचुः । शूलमुग्रं बभूवास्यानिवार्यं त्वौषधादिभिः । तीर्थमंत्रप्रयोगैश्च नानायत्नैर्महामुने ।।१५।। श्रुत्वा तेषां वचः क्रूरं पर्वतो ध्यानमास्थितः । ज्ञात्वा पापं महायोगी राज्ञः सर्वानुवाच ह ।।१६।। पर्वत उवाच । शृणु राजंस्त्वदीये यद्राज्ये पापं सुदारुणम् । वर्तते त्वं ततः पूर्णशूलयुक्तोऽसि सांप्रतम् ।।१७।। चतुर्थ्यास्ते व्रतं मुख्यं राज्ये नष्टं विशेषतः । तेन दोषसमूहेन सजनस्त्वं सुदुःखितः ।।१८।। पर्वतस्य वचः श्रुत्वा राजा तं हर्षितोऽवदत् । कृत्वा करपुटं भूप विनयावनतो वचः ।।१९।। हेमांगद उवाच । कीदृशं तद्व्रतं स्वामिन् केन संचरितं पुरा । कस्यैव पूजनं तत्र वद मे सर्वमंजसा ।।२०।। पर्वत उवाच । सर्वसिद्धिकरं राजन् व्रतं गाणेश्वरं परम् । चतुर्णां पुरुषार्थानां साधनं सर्वसंमतम् ।।२१।। ततश्चतुर्थीमाहात्म्यं कथयामास विस्तरात् । तेन संहर्षितो राजा श्रुत्वा तं पुनरब्रवीत् ।।२२।। कीदृशोऽयं गणाधीशो वद तस्य स्वरूपकम् । ज्ञात्वा तं देवदेवेशं भजिष्यामि विशेषतः ।।२३।। पर्वत उवाच । पुरा वृत्तं गणेशस्य चरित्रं यन्मया श्रुतम् । तदेव कथयिष्यामि निदाघात् सर्वदं परम् ।।२४।। अहं तपसि संतिष्ठन्नानायत्नपरायणः ।

संव्याप्तं तपसा सर्वं मदीयेन महामते ॥२५॥ इंद्रः प्रक्षुभितोऽत्यंतं काममप्सरसा युतम् । प्रेषयामास विघ्नार्थं तपसो मे
मदान्वितः ॥२६॥ ततः सोऽपि भयोद्विग्नः कामो दाहसमन्वितः । तपसस्तेजसा सत्यं पलायत स सैनिकः ॥२७॥ ततोऽहं
तपसा युक्तोंऽतर्निष्ठश्चाऽभवं नृप । तपस्त्यक्त्वा महाबाहो शमदमपरायणः ॥२८॥ नानाभूमिपरो जातस्ततोऽतिभाग्य-
गौरवात् । निदाघः सहसा तत्राऽऽगतोऽवधूतमार्गवित् ॥२९॥ दृष्ट्वा तं योगिनं पूर्णं प्रणतोऽहं विशेषतः । अपूजयं विधानेन
ततस्तं स्म वदामि वै ॥३०॥ धन्यो मे जनको माता तपो धन्यं जनुस्तथा । ब्रह्मभूयप्रदस्याऽपि पादपद्मस्य दर्शनात्
॥३१॥ अधुना वद मे नाथ योगं शांतिप्रदायकम् । येनाऽहं योगिवंद्यश्च भवेयं साधनान् मुने ॥३२॥ वसिष्ठ उवाच । इति पृष्टो
महातेजा निदाघस्तमुवाच ह । पर्वतं तपसा शुद्धं प्रहृष्टेनांतरात्मना ॥३३॥ निदाघ उवाच । शृणु वृत्तं मदीयं ते कथयामि
पुरातनम् । येन योगींद्र वंद्यश्च जातोऽहं योगसेवया ॥३४॥ अहं योगार्थमत्यंतं योगभूमिपरायणः । असाधयं महायोगं
ब्रह्मभूयकरं परम् ॥३५॥ ततोंऽतेऽहं सदानंदे समः स्वानंदकेऽभवम् । संस्थितस्तत्र भो राजन् दृष्टमानंदरूपकम् ॥३६॥ ढुंढिः
सर्वत्र संव्याप्तं ढुंढि तद् योगरूपि च । तेन शांतिर्गता मेऽभूत्ततो विष्णुं गतोऽभवम् ॥३७॥ तं प्रणम्य महात्मानमवदं वद
शांतिदम् । योगं विष्णो महायोगिन् येन शांतो भवाम्यहम् ॥३८॥ विष्णुरुवाच । योगशांतिप्रदं तात गणेशं विद्धि मानद ।
तं ज्ञात्वा शांतिमापन्ना वयं सर्वे च योगिनः ॥३९॥ मनोवाणीमयं विद्धि गकारं च तयोः परम् । मनोवाणीविहीनं तं
णकारं योगिसंमतम् ॥४०॥ तयोः स्वामी गणाधीशस्तं भजस्व विधानतः । ततः शांतिं महाभाग लभसे नाऽत्र संशयः ॥४१॥
एवमुक्त्वा महाविष्णुर्विरराम स्वयं ततः । तं प्रणम्य वने गत्वा योगाभ्यासपरोऽभवम् ॥४२॥ एकाक्षरस्य मंत्रस्य
संतुष्टोऽभूद्गजाननः । गतेषु दश वर्षेषु जपेन सहसाऽऽगतः ॥४३॥ ध्यानस्थं मां समालोक्य जगाद वृणु वाञ्छितम् । ततोऽहं
तं प्रणम्यैवापूज्य स्तोतुं प्रचक्रमे ॥४४॥ स्तोत्रं यत् सामवेदोक्तं तच्छ्रुत्वा तुष्टिमागतः । योगशांतिं गणेशानो दत्त्वा मे
प्रजगाम ह ॥४५॥ तदादि गाणपत्योऽहं जातस्तं प्रभजामि वै । भजस्व गणराजं त्वमतस्तं शांतिदं परम् ॥४६॥ एवमुक्त्वा
निदाघः सं ददौ तस्मै महामनुम् । एकाक्षरं विधानेन ततः सोंऽतर्हितोऽभवत् ॥४७॥ पर्वत उवाच । भजामि गणनाथं स्म
ततोऽहं नित्यमादरात् । तेनोक्तविधिना राजन् शांतिं प्राप्तो विशेषतः ॥४८॥ अपूजयं हि गणपं ततो नित्यं तपोन्वितः ।
ततो मां दर्शयामास रूपं योगमयं प्रभुः ॥४९॥ स्तुतः संपूजितो मे स भक्तिं दत्त्वा महामते । स्वानंदे स गतो राजन्

भक्तानंदविवर्धनः ॥५०॥ एवमुक्त्वा पर्वतस्तं ददौ मंत्रं दशाक्षरम् । गणेशस्य महाराज ततश्चांतर्हितोऽभवत् ॥५१॥ राजा सर्वजनैरादौ व्रतं चक्रे स हर्षितः । फाल्गुने भूप शुक्लस्थचतुर्थीसंज्ञकं परम् ॥५२॥ ततो राज्ञाऽपि सर्वत्र कृतो घोषो जनैर्नृप । शौक्लं कार्ष्णं व्रतं भूमौ क्रियतां भावसंयुतैः ॥५३॥ ततः शूलव्यथाहीनो बभूवे राजसत्तमः । दुःखहीना जनाः सर्वे जाता व्रतप्रभावतः ॥५४॥ पुत्रपौत्रादिसंयुक्ता रोगाद्यभिविवर्जिताः । धनधान्यादिभिः सर्वे मुमुदुर्भूमिमंडले ॥५५॥ ततो हेमांगदो राजा भक्त्या विघ्नेशमुत्तमैः । उपचारैः प्रपूज्याऽपि सिषेवे नित्यमादरात् ॥५६॥ पुत्रं राज्ये निधायाऽसौ सस्त्रीकः शांतिसंयुतः । गणेशं सर्वभावेनांते च तन्मयतामयात् ॥५७॥ क्रमेण भूमिसंस्था ये नराः स्वानंदगा बभुः । भुक्त्वा भोगान् विशेषेण व्रतपुण्यप्रभावतः ॥५८॥ अधुना शृणु चान्यत्त्वं माहात्म्यं व्रतसंश्रितम् । भाकरे नगरे विप्रो वसद्वै जातिदूषणः ॥५९॥ बाल्यात्प्रभृति तेनैव कृतं कर्म सुदुःखदम् । हिंसादिसंयुतं राजन् चौर्यं क्लेशविवर्धनम् ॥६०॥ परस्त्रीलंपटो नित्यं यौवने सोऽतिदारुणः । पतिव्रता हठेनैव व्रतभ्रष्टाश्चकार ह ॥६१॥ शस्त्रधारी वने गत्वा जतून् जघ्ने स नित्यशः । द्विजादीन् द्रव्यलुब्धश्च मानवान् मनुजप्रिय ॥६२॥ एवं पापसमाचारो वने कस्मिन् दिने स्थितः । वैश्यं दृष्ट्वा च तं हंतुमधावत् स वधप्रियः ॥६३॥ पलता वैश्यपुत्रेण नादस्तत्र कृतो महान् । तं श्रुत्वा मार्गसंस्थाश्च चत्वारः पुरुषाऽऽययुः ॥६४॥ ते धृत्वा राजदूतास्तं ताडयामासुरुल्बणम् । राजानं दर्शयामासुश्चौरं बद्धं जनास्ततः ॥६५॥ राज्ञाऽऽज्ञप्ताश्च तं तत्राताडयंस्ते द्विजाधमम् । नाविदन् ब्राह्मणं राजंश्चिक्षिपुर्निगडे द्विजम् ॥६६॥ ततः फाल्गुनसंस्था या चतुर्थी शुक्लगाऽऽगता । बद्धस्तत्र निराहारो बभूवे स नराधमः ॥६७॥ पंचम्यां तं मृतं ज्ञात्वा ततो गाणेशकाऽऽययुः । दूता नेतुं द्विजं तत्र व्रतपुण्यप्रभावतः ॥६८॥ स स्वानंदपुरे नीतो गाणपत्यैर्नृपात्मज । तत्र विघ्नेश्वरं दृष्ट्वा ब्रह्मभूतो बभूव ह ॥६९॥ एवं नाना जनाश्चैव ब्रह्मभूता बभूविरे । तेषां चरित्रकं सर्वं वक्तुं ते न प्रशक्यते ॥७०॥ फाल्गुने वरदायास्तु चरित्रं यः शृणोति चेत् । पठेद्वा तस्य विघ्नेशः सर्वान् कामान् ददाति हि ॥७१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते फाल्गुनशुक्लचतुर्थीचरित्रवर्णनं नाम त्रयोदशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । श्रुतं चरित्रं सुख्यं यच्चतुर्थ्याः फाल्गुने मया । शुक्लायाः सर्वदं योगिन् न तृप्तोऽहं भवामि तु ॥१॥ अतो मां चैत्रगाया यद्वरदायाश्चरित्रकम् । गुरो सुदयया ब्रूहि पावनं सर्वजन्मिनाम् ॥२॥ वसिष्ठ उवाच । बंगालं नगरं ख्यातं शोभाभद्राख्यमुत्तमम् । तत्र चंद्रप्रियो राजा प्रचक्रे राज्यमुत्तमम् ॥३॥ शस्त्रास्त्रैः शत्रुसंघातान् जित्वा वीरश्रिया युतः । सागरांतां धरित्रीं स चकार वशवर्तिनीम् ॥४॥ सामंता वशगाः सर्वे चक्रुः सेवादिकं नृपाः । तस्य राज्ये प्रजाः सर्वाः स्वस्वधर्मपरायणाः ॥५॥ स्वयं धर्मपरो राजा नीत्या वर्णाश्रमादिषु । संस्थितान् रक्षयंश्चैव सदा हीनानदंडयत् ॥६॥ चौराणां न भयं तत्र स्वस्वव्यापारकारिणाम् । तथापि रोगसंयुक्ता नरा नार्योऽभवन् हि वै ॥७॥ वंध्यादिदोषसंयुक्ता जनाः सर्वे समाययुः । राजानं सर्वनीतिज्ञं पप्रच्छुश्चेष्टितं महत् ॥८॥ नागरादय ऊचुः । वयं राजन् स्वधर्मस्था त्वदाज्ञावशवर्तिनः । अपि त्वं धर्मसंयुक्तः प्रधानादिभिरादरात् ॥९॥ तथापि रोगदोषैश्च वंध्यदोषैर्विशेषतः । धनधान्यविहीनाश्च पीडिता वयमुत्कटम् ॥१०॥ पृथिवी रसहीना वै फलहीना महीरुहाः । गावो दुग्धविहीनाश्च तव राज्ये महामते ॥११॥ धर्मशीले नृपे राजन् सर्वे सुखयुता जनाः । विपरीतं महाराज त्वयि राज्यं प्रशासति ॥१२॥ अतोऽस्मान् रक्ष भूपाल रोगादिभिः प्रपीडितान् । अस्माकं बलमत्यंतं त्वमेव परमं मतम् ॥१३॥ वसिष्ठ उवाच । चंद्रप्रियो वचः श्रुत्वा तेषामेवं सुदुःखितः । प्रधानेषु समाक्षिप्य राज्यं निहतकंटकम् ॥१४॥ वने गंतुं मनश्चक्रे ततस्तत्राऽऽजगाम ह । अष्टावक्रो महायोगी तं दृष्ट्वा प्रणनाम सः ॥१५॥ संपूज्य भोजयामास पादसंवाहने रतः । स्वयं स्थितो महाविप्रमूचेऽसौ दुःखसंयुतः ॥१६॥ चंद्रप्रिय उवाच । धन्यं मे जन्म कर्मादि पिता माता तपो यशः । दानं ज्ञानं तथा योगिन् त्वत्पादयुगदर्शनात् ॥१७॥ ततः सर्वं स्ववृत्तांतं कथयामास यत्नतः । अष्टावक्रश्च संश्रुत्य तं जगाद नराधिपम् ॥१८॥ अष्टावक्र उवाच । राजन् राज्ये त्वदीये यत् महत्पापं प्रवर्तते । तेन दुःखयुता सर्वा प्रजा जाता न संशयः ॥१९॥ चतुर्णां पुरुषार्थानां प्रापकं यन्महाव्रतम् । चतुर्थीसंज्ञकं नष्टं तव राज्ये नृपाधम ॥२०॥ पुरुषार्थैर्नरास्तेन हीनाः सर्वेऽधुना परम् । अंते नरकगा राजन् भविष्यंति त्वया सह ॥२१॥ अष्टावक्रवचः श्रुत्वा तं प्रणम्य महीपतिः । उवाच दुःखसंयुक्तो वचनं स्वहितप्रदम् ॥२२॥ चंद्रप्रिय उवाच । ब्रह्मन् दयानिधे स्वामिन् वद मे व्रतमुत्तमम् । कीदृशं कस्य देवस्य प्रियमित्यादिकं प्रभो ॥२३॥ अष्टावक्र उवाच । कृष्णशुक्लचतुर्थीजं व्रतं गाणेश्वरं नृप । सर्वादौ तत् प्रकर्तव्यं धर्मकामार्थमुक्तये ॥२४॥ इत्युक्त्वा

कथयामास चरित्रं सकलं द्विजः । चतुर्थीसंभवं तात श्रुत्वा राजा सुविस्मितः ॥२५॥ पुनः पप्रच्छ तं विप्रं विनयेन समन्वितः । कीदृशो गणराजोऽयं व्रतं यस्य महाद्भुतम् ॥२६॥ वद तस्य स्वरूपं मे ज्ञात्वा तं सर्वभावतः । व्रतयुक्तो भजिष्यामि गणेशं सर्वसिद्धिदम् ॥२७॥ अष्टावक्र उवाच । गणेशस्य स्वरूपं तु मया वक्तुं न शक्यते । तथापि शृणु भूपाल येन त्वं ज्ञास्यसि प्रभुम् ॥२८॥ पुराऽहं तपसि प्राज्ञ संस्थितो यत्नधारकः । सुरूपका अप्सरसो याताश्चलयितुं ततः ॥२९॥ तासामत्याग्रहं दृष्ट्वा कुपितः स्म शपामि ताः । मृत्युलोके पतध्वं वै चौरग्रस्ता भवेत हि ॥३०॥ इति मद्गिरमाकर्ण्य भयभीताः समंततः । ता मां प्रसादयामासुस्ततोऽहं दयया युतः ॥३१॥ अवदं तत्र विष्णुर्वै यादवेषु भविष्यति । तस्य पत्न्यो भविष्यंत्योंऽते चौराणां भविष्यथ ॥३२॥ गता अप्सरसो राजंस्ततोऽहं तप आचरम् । प्रभावेणातितपसोंऽतज्ज्ञानं मेऽभवत् परम् ॥३३॥ ततोऽहं तप उत्सृज्य शमी दमपरोऽभवम् । नानायोगविचारेण समाधिं साधयन्नृप ॥३४॥ एवमंते समानंदे संस्थितोऽहं विशेषतः । तत्र मोहं समालोक्य समरूपे सुविस्मितः ॥३५॥ ततः शांत्यर्थमत्यंतं क्लिश्यामि स्म महामते । ततोऽकस्मान् महायोगी ऋभुस्तत्र समागतः ॥३६॥ वर्णाश्रमविहीनं तं दृष्ट्वा हर्षसमन्वितः । प्रणम्याऽहं विशेषेणापूज्यावोचं महामुनिम् ॥३७॥ धन्यं मे तप उग्रं यज्जन्म ज्ञानादिकं तथा । तव पादस्य योगेन कृतकृत्योऽस्मि सांप्रतम् ॥३८॥ एवं मदीयं वाक्यं स श्रुत्वोवाच महामुनिः । किं वाञ्छसि महाप्राज्ञ वदस्वाऽहं करोमि तत् ॥३९॥ ततस्तं प्रणतो भूत्वा कृतांजलिपुटः पुनः । अवदं योगशांतिं मे वद योगींद्रसत्तम ॥४०॥ ऋभुरुवाच । संयोगः पंचधा तात सदसत्समनेतितः । स्वसंवेद्यमयेनैव मुने योगेन लभ्यते ॥४१॥ अयोगः पंचभिर्हीनो निवृत्त्या लभ्यते जनैः । तयोर्योगे भवेद्योगो लभ्यते शांतिमार्गतः ॥४२॥ तमेव गणराजं त्वं ज्ञात्वा भज महामते । तेन शांतिभवं सौख्यं लभसे नान्यथा क्वचित् ॥४३॥ संयोगो हि गकारश्च णकारोऽयोगवाचकः । तयोः स्वामी गणेशानः पश्य वेदे महामते ॥४४॥ अहं पुरा युतो भ्रांत्या नानायोगपरायणः । अभवं तत्र भो विप्र सहजेन समाश्रितः ॥४५॥ स्वाधीनत्वमहो दृष्ट्वा तत्र तेन सुविस्मितः । शरणं शंकरस्यैव गतोऽहं योगकाम्यया ॥४६॥ शंकरेणोपदिष्टः स्म भजामि गणनायकम् । एकाक्षरविधानेन तेन शांतिं गतोऽभवम् ॥४७॥ एवमुक्त्वा गणेशस्य मह्यं मंत्रं ददौ ऋभुः । एकाक्षरस्य मंत्रस्य जपैः शांतिं गतोऽभवम् ॥४८॥ अष्टावक्रः प्रसन्नात्मा योगिवंद्यो महायशाः । तस्मै नृपाय मंत्रं स ददौ द्वादशवर्णकम् ॥४९॥ सविधिं मंत्रराजं तं

दत्त्वा चांतर्हितोऽभवत् । राजा विघ्नेश्वरस्यैव भजने तत्परोऽभवत् ॥५०॥ तत्रादौ चैत्रमासे या नृप शुक्ला समागता । चतुर्थी सा कृता तेन नागरैः स्वजनैः पुरा ॥५१॥ ततः स घोषयामास व्रतं जनपदेषु तत् । शौक्लं कार्ष्णं विशेषेण चक्रुः सर्वे जनास्तथा ॥५२॥ ततो रोगादिभिर्हीना बभूवुः पुत्रसंयुताः । नानादोषविहीनास्ते विहारं चक्रुरादरात् ॥५३॥ चंद्रप्रियो गणेशानमभजन्नान्यचेतसा । पुत्रे राज्यं निवेद्यैव सस्त्रीको वनगोऽभवत् ॥५४॥ ततः स्वल्पेन कालेन सस्त्रीको नृपसत्तमः । स्वानंदे गणपं गत्वा ब्रह्मभूतो बभूव ह ॥५५॥ क्रमेण भूमिसंस्था ये व्रतपुण्यप्रभावतः । ब्रह्मभूता बभूवुस्ते दृष्ट्वा गणपतिं नृप ॥५६॥ अन्यत्त्वं शृणु चैत्रे वै शुक्लपक्षे चतुर्थिका । तस्याश्चरित्रं पापघ्नं सर्वसिद्धिप्रदायकम् ॥५७॥ मालवे शूद्रजः पापी कोऽवसन् वनगोचरान् । जघान पथिकान् दुष्टो द्रव्यलोभी नराधमः ॥५८॥ तस्य पापस्य संख्यानं कर्तुं नैव भवाम्यहम् । समर्थो गणना त्यक्ता ग्रंथबाहुल्यदोषतः ॥५९॥ तं कदाचिद्वने संस्थं वृक्षाग्रे शस्त्रधारकम् । वंचयित्वा जनान् घ्नंतं तत्र सर्पो ददंश ह ॥६०॥ ततः सोऽपि भयोद्विग्नः स्वगृहं प्रत्यपद्यत । ततो विषेण राजेंद्र पीडितो मूर्च्छितोऽभवत् ॥६१॥ दैवयोगेन तस्यापि चतुर्थी शुक्लगा नृप । चैत्रे प्राप्ता च शूद्रोऽभूत् पीडयाऽन्नविवर्जितः ॥६२॥ पंचम्यां स मृतः पापी गतः स्वानंदके पुरे । व्रतपुण्यप्रभावेणाऽज्ञानेनाऽपि नृपात्मज ॥६३॥ एवं नानाविधा राजन् ब्रह्मभूता बभूविरे । तेषां चरित्रकं वक्तुं शक्यते न मया कदा ॥६४॥ इदं चैत्रचतुर्थ्यास्तु शुक्लायाः संशृणोति चेत् । माहात्म्यं स लभेत् कामानीप्सितान् पठते यदा ॥६५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते चैत्रशुक्लचतुर्थीवर्णनं नाम चतुर्दशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । अधुना शुक्लगायास्तु वैशाखे चरितं वद । चतुर्थ्याः शुभदं पूर्णं न तृप्यामि कथामृतात् ॥१॥ वसिष्ठ उवाच । गुर्जरे सर्वशोभाढ्यं नगरं भद्रकं परम् । तत्र राज्यं चकारैव राजा ब्रह्मप्रियो महान् ॥२॥ सर्वशास्त्रार्थसंपन्नो यज्वा दानप्रियः सदा । देवद्विजातिथिप्रेप्सुः शस्त्रास्त्रे पारगोऽभवत् ॥३॥ सर्वान् राज्ञो वशे कृत्वा पृथिवीमंडलाधिपः । बभूव बलसंपन्नः सर्वमान्यो महामतिः ॥४॥ तस्य पत्नी मृता सद्यो रजो दर्शनमात्रतः । द्वितीया च कृता पत्नी समशीला नृपेण ह ॥५॥ साऽपि तद्वन् मृता राजन्नेवं पंच मृतास्ततः । पत्न्योऽभवन् सुदुःखार्तो राजा ब्रह्मप्रियोऽभवत् ॥६॥

राज्यं निक्षिप्य राजर्षिः प्रधानेषु ययौ वनम् । स्वगुरुं श्वेतकेतुं स प्रणम्य पुरतः स्थितः ॥७॥ श्वेतकेतुः स्वशिष्यं तमासनादिषु मानदम् । संस्थाप्य कुशलत्वेन मानयामास हर्षितः ॥८॥ भोजयित्वा स राजानं महत् पप्रच्छ कारणम् । किमर्थं राजशार्दूल कृतमागमनं त्वया ॥९॥ वद तत् कारणं मुख्यं तत् करिष्येऽहमादरात् । ममाश्रमे त्वमेकाकी राज्यं त्यक्त्वा समागतः ॥१०॥ एवं पृष्टः स राजर्षिस्तं प्रणम्य कृतांजलिः । जगाद सर्वं वृत्तांतं पत्नीनाशात्मकं स्वयम् ॥११॥ तच्छ्रुत्वा गाणपत्यश्च श्वेतकेतुर्महातपाः । ध्यानेनालोक्य तं भूपं जगाद क्रोधसंयुतः ॥१२॥ श्वेतकेतुरुवाच । नृपाधम महापापिन् शृणु मे वचनं हितम् । व्रतं मुख्यं चतुर्थ्यास्ते राज्ये नष्टं विशेषतः ॥१३॥ चतुर्थीव्रतहीनस्य कर्म सर्वं सुनिष्फलम् । नारकी च भवत्यंते स नरो नाऽत्र संशयः ॥१४॥ चतुर्भिः पुरुषार्थैस्त्वं वर्जितो नितरां नृप । चतुःपदार्थदातृत्वाच्चतुर्थी कथिता बुधैः ॥१५॥ श्वेतकेतुवचः श्रुत्वा कोपयुक्तं महीपतिः । प्रणम्य तमुवाचाऽथ लज्जितः खेदसंयुतः ॥१६॥ ब्रह्मप्रिय उवाच । अज्ञानेन कृतं विप्र सर्वदस्य व्रतस्य यत् । अनाचरणकं तेन क्षमस्व करुणानिधे ॥१७॥ वद मां कीदृशं स्वामिन् व्रतं सर्वार्थदं परम् । पूजनं कस्य वा कार्यं विधियुक्तं च तत्र वै ॥१८॥ एवं पृष्टो महातेजाः श्वेतकेतुस्तमब्रवीत् । माहात्म्यं व्रतमुख्यस्य श्रुत्वा सोऽपि तमब्रवीत् ॥१९॥ ब्रह्मप्रिय उवाच । कीदृशोऽयं गणाधीशो व्रतं यस्य महाद्भुतम् । स्वरूपं वद मे तस्य भजिष्यामि तमादरात् ॥२०॥ श्वेतकेतुरुवाच । शृणु राजन् पुरावृत्तं कथयामि समासतः । मदीयं चेष्टितं तेन गणेशं ज्ञास्यसे परम् ॥२१॥ अहं पुरा तपोनिष्ठो बभूवातितरां नृप । उद्दालकं प्रणम्यैव पितरं साधने रतः ॥२२॥ ततोऽतितपसा युक्तं दृष्ट्वा मां जनको वचः । जगाद स्नेहसंयुक्तः शांतिदाता महायशाः ॥२३॥ उद्दालक उवाच । पुत्र शांत्यर्थमेव त्वं तपस्त्यक्त्वा महामते । कुरु श्रमं विशेषेण ब्रह्माहमिति धारयन् ॥२४॥ कोऽसि त्वं कुत आयातो कुत्र गच्छसि मां वद । चित्ते चिंतामणिं तात पश्य पश्य विशेषतः ॥२५॥ पितुर्वचनमाकर्ण्य तमहं पुनरब्रवम् । वद तात स्वपुत्राय ज्ञानं शांतिप्रदं महत् ॥२६॥ चित्तं च कीदृशं तात तत्र चिंतामणिः कथम् । सोऽपि तिष्ठति विप्रेश कथं ज्ञेयो महात्मभिः ॥२७॥ वसिष्ठ उवाच । एवं पृष्टो महायोगी तमारुणिरुवाच ह । हर्षेण महता युक्तो गाणपत्यस्वभाववान् ॥२८॥ उद्दालक उवाच । शृणु पुत्र महाभाग योगशांतिप्रदायकम् । येन त्वं सर्वयोगज्ञो ब्रह्मभूतो भविष्यसि ॥२९॥ चित्तं पंचविधं प्रोक्तं क्षिप्तं मूढं महामते । विक्षिप्तं च तथैकाग्रं निरोधं भूमिसंज्ञितम् ॥३०॥ तत्र प्रकाशकर्ताऽसौ हृदि चिंतामणिः स्थितः । साक्षाद्योगेन

योगज्ञैर्लभ्यते भूमिनाशनात् ॥३१॥ चित्तरूपा स्वयं बुद्धिश्चित्तभ्रांतिकरी मता । सिद्धिर्मायि गणेशस्य मायाखेलक उच्यते
॥३२॥ अतो गणेशमंत्रेण गणेशं भज पुत्रक । तेन त्वं ब्रह्मभूतत्वं शांत्या योगेन यास्यसि ॥३३॥ इत्युक्त्वा गणराजस्य
ददौ मंत्रं तथाऽऽरुणिः । एकाक्षरं स्वपुत्राय नृप ध्यानादिसंयुतम् ॥३४॥ तेनाऽहं साधयामि स्म गणेशं सर्वसिद्धिदम् ।
क्रमेण शांतिमापन्नो योगिवंद्योऽभवं ततः ॥३५॥ अतस्त्वमपि राजेंद्र भजस्व गणनायकम् । तेनेहपरलोकस्थसुखं
प्राप्स्यसि शाश्वतम् ॥३६॥ ब्रह्मणि ब्रह्मभूतस्त्वं भविष्यसि न संशयः । एवमुक्त्वा स द्वात्रिंशदक्षरस्थं ददौ मनुम् ॥३७॥
विधियुक्तं मनुं राजाऽऽगृह्य स्वगृहमाययौ । श्वेतकेतुं प्रणम्यैव हर्षयुक्तेन चेतसा ॥३८॥ तत्राऽऽदौ शुक्लपक्षस्था वैशाखी
च समागता । चतुर्थी तां चकाराऽसौ नागरैर्हर्षसंयुतः ॥३९॥ तेन सर्वत्र घोषश्च व्रतस्य प्रकृतो महान् । शौक्लं कार्ष्णं
व्रतं चक्रुर्भूमिसंस्था जना नृप ॥४०॥ राजा स्वस्त्रीसमायुक्तोऽभजत्तं गणनायकम् । पुत्रं राज्ये समास्थाप्य निवृत्त्या
संयुतोऽभवत् ॥४१॥ मंत्रं जजाप विघ्नेशं ध्यात्वा पूजापरायणः । व्रतयुक्तस्तथांऽते स ब्रह्मभूतो बभूव ह ॥४२॥ ब्रह्मप्रियेति
नामाऽभूत् तदेवं सार्थकं कृतम् । तेन राज्ञा महाभाग गाणपत्यस्वभावतः ॥४३॥ तस्य राज्ये जनाः सर्वे व्रतपुण्येन भूमिप ।
क्रमेण ब्रह्मभूतास्तेऽभवन् स्वानंदके पुरे ॥४४॥ उद्दालकश्वेतकेतू गाणपत्यस्वभावतः । अवधूतौ तु विख्यातौ बभूवाते
महाप्रभू ॥४५॥ श्वेतकेतुद्विजेनाऽपि मर्यादा प्रकृता बलात् । सर्वेभ्यः सुखदाऽत्यंतं तां शृणुष्व विशेषतः ॥४६॥ कदाचि-
दारुणिस्तत्र सस्त्रीकः स्वाश्रमे स्थितः । आजगाम द्विजः कश्चित् सर्वशास्त्रविशारदः ॥४७॥ जगाद स्त्रियमेवं स आरुणेः
कामविह्वलः । मैथुनाय समागच्छ मया सह सुरूपिणि ॥४८॥ तच्छ्रुत्वा श्वेतकेतुं तं क्रुद्धमारुणिरब्रवीत् । मा क्रोधं कुरु पुत्र
त्वमवृतास्तु स्त्रियो मताः ॥४९॥ तच्छ्रुत्वा पितरं प्राह श्वेतकेतू रुषा युतः । एवं चेत् पतिमेकं वृणोति सा कामिनी कथम् ॥५०॥
अतो वै वेधसा स्वामिन्न कृतं कर्म शाश्वतम् । असमंजसकं मत्वा मर्यादां कारयाम्यहम् ॥५१॥ अद्यप्रभृति रागेण स्पृशेद्यश्च
परस्त्रियम् । स्त्रीहत्यां लभतां तत्र पुरुषः स न संशयः ॥५२॥ अथवा पुरुषं कंचित् पतिं त्यक्त्वा च कामिनी । गच्छेन्
मैथुनभावार्थं पतिहत्यां तु सा लभेत् ॥५३॥ यद्यहं गणराजस्य भक्तश्चेद्विघ्ननायक । तदा मे वचनं सत्यं भवेत्तत्ते नमो
नमः ॥५४॥ तदादि संवृता स्त्री सा सेवते भावतः पतिम् । विनायकप्रसादेन तेनेयं स्थापिताऽभवत् ॥५५॥ प्रसंगात्ते मया
ख्यातमुद्दालकविचेष्टितम् । माहात्म्यमन्यदधुना चतुर्थीसंभवं शृणु ॥५६॥ महाराष्ट्रे द्विजः कश्चित् परस्त्रीलंपटोऽभवत् ।

तदर्थं तेन मद्यस्य कृतं पानं विशेषतः ॥५७॥ चौर्येण धनमादाय हिंसाकर्मपरायणः । नानापापरतो भूत्वा परस्त्रियमसेवत ॥५८॥ जगाम शूद्रगेहे स एकदा कामविह्वलः । धनं गृहीत्वा स्वं लब्धं धनं दत्त्वा रराम ह ॥५९॥ एवं किंचिद्गते काले शूद्रः स्वगृहमागतः । तेन शस्त्राभिघातेन हतोऽभूत्स द्विजाधमः ॥६०॥ तस्मिन् दिने समायाता चतुर्थी दैवयोगतः । तत्र शस्त्राभिघातस्य पीडया संयुतोऽभवत् ॥६१॥ अन्नादिभिर्विहीनश्च पंचम्यां स ममार ह । ततः स्वानंदके लोके जगाम भृशपूजितः ॥६२॥ वैशाखशुक्लपक्षस्य चतुर्थीव्रतयोगतः । ब्रह्मभूतः स वै जातो महापापपरायणः ॥६३॥ अज्ञानव्रतजेनैव पुण्येनाऽसौ द्विजाऽधमः । ब्रह्मभूतश्च संजातो ज्ञानिनां तत्र का कथा ॥६४॥ नाना जना व्रतं कृत्वा ज्ञानतोऽज्ञानतो नृप । बभूवुर्ब्रह्मभूताश्च मया वक्तुं न शक्यते ॥६५॥ एतद् वैशाखशुक्लायाश्चतुर्थ्याः शृणुयात्तु यः । माहात्म्यं प्रपठेद्वाऽपि स लभेदीप्सितं फलम् ॥६६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते वैशाखशुक्लचतुर्थीमाहात्म्यवर्णनं नाम पंचदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । श्रुतं वैशाखमासे वै शुक्लायाः फलमुत्तमम् । चतुर्थ्या अधुना योगिन् ज्येष्ठशुक्लां वद प्रभो ॥१॥ वसिष्ठ उवाच । आंध्रे शेषपुरे राजन् राजाऽभूत् कर्दमाभिधः । शस्त्रास्त्रनिपुणोऽत्यंतं नानाधर्मपरायणः ॥२॥ वशं भूमंडलं यस्य समुद्रांतं बभूव ह । तेजसा धर्मनीत्या वै ह्यतुलो यशसाऽभवत् ॥३॥ दैवयोगेन तस्याऽभूत् प्रमेहश्चाऽतिदारुणः । अग्निवद् दाहको देहे पापेन प्रेरितः परः ॥४॥ तेनातिपीडितो राजा मूत्रितुं न शशाक सः । रुरोद कर्दमो भूत्वा सदा दाहयुतो भृशम् ॥५॥ नानोपायाः कृतास्तेन शांतो रोगो बभूव न । ततो राज्यं परित्यज्य सस्त्रीकः स ययौ वनम् ॥६॥ वनाद्वनांतरं गत्वा महोग्रं भयवर्धनम् । सिंहव्याघ्रादियुक्तं च मरणाय रुरोद ह ॥७॥ तत्राऽऽजगाम विप्रेंद्रो भरद्वाजो महायशाः । तं दृष्ट्वा सहसोत्थाय सस्त्रीकः प्रणनाम सः ॥८॥ स हि बध्वा करपुटं तत्पुरः संस्थितोऽभवत् । ततोऽतिदाहसंयुक्तः पपात च रुरोद सः ॥९॥ तादृशं नृपनाथं स दृष्ट्वा योगींद्रसत्तमः । ध्यानेनालोक्य राजानमुवाच दयया युतम् ॥१०॥ भरद्वाज उवाच । शृणु कर्दम राजेंद्र वचनं मे हितावहम् । येन दुःखविहीनस्त्वं भविष्यसि महामते ॥११॥

चतुर्थीव्रतमत्यंतं नष्टं राज्ये त्वदीयके । तेन पापसमायुक्तस्त्वं जातोऽसि नृपाधमः ॥१२॥ अतस्त्वं जनसंयुक्तो व्रतं कुरु महामते । पुण्येन तेन राजेंद्र दुःखहीनो भविष्यसि ॥१३॥ भरद्वाजवचः श्रुत्वा तं पप्रच्छ प्रणम्य सः । कर्दमो हर्षसंयुक्तो व्रतस्याऽऽचरणाय च ॥१४॥ कर्दम उवाच । भगवन् सर्वतत्त्वज्ञ त्वयाऽहमनुकंपितः । व्रतस्य वद माहात्म्यमधुना तत् करोम्यहम् ॥१५॥ भरद्वाज उवाच । संकष्टं वरदं कृष्णे चतुर्थीजं च शुक्लके । व्रतं सर्वार्थदं पूर्णं चतुर्णां साधकं मतम् ॥१६॥ सर्वादौ तन्नरः कुर्यात्तदा सर्वं नराधिप । चतुर्णां पुरुषार्थानां दातृकर्मफलं लभेत् ॥१७॥ अतो हीनश्चतुर्भिस्त्वं स जनो नरके नृप । पतिष्यसि न संदेहस्तदर्थं यत्नमाचर ॥१८॥ एवमुक्त्वा स माहात्म्यं चतुर्थीसंभवं नृप । कथयामास भूपाय श्रुत्वा राजा ननंद ह ॥१९॥ पुनः प्रपच्छ तं विप्रं भरद्वाजं स कर्दमः । गणेशस्य स्वरूपं मे वद सर्वज्ञ ते नमः ॥२०॥ भरद्वाज उवाच । गणेशस्य स्वरूपं तु वक्तुं वेदादिका नृप । न समर्थास्तथाऽपि त्वं शृणु सारं सुखप्रदम् ॥२१॥ पुराऽहं तपसा युक्तोऽतपं च तप उत्तमम् । सर्वं चराचरं राजन् मदधीनं बभूव ह ॥२२॥ तथाऽपि तपसोग्रेणाऽसाधयं तु तपः पुनः । ततोंऽतज्ज्ञानभावे मे मतिर्जाता सुपुण्यतः ॥२३॥ तपस्त्यक्त्वा ततोऽहं तु शमी दमपरोऽभवम् । जडोन्मत्तादिजे मार्गे संस्थितो योगकारणात् ॥२४॥ ततः क्रमेण भो राजन्नसत्स्वानंदगोऽभवम् । तत्र संपूर्णयोगेन शांतिं प्राप्तो विशेषतः ॥२५॥ तस्माद्भेदादिकं सर्वमुत्पन्नं तु विशेषतः । तद् दृष्ट्वा क्षुभितोऽत्यंतं शांतिहीनो यथाऽभवम् ॥२६॥ ततोऽकस्माद्रैवतो यो महायोगी समागतः । आश्रमे मे च तं दृष्ट्वा प्रणतोऽहं सुपूजयन् ॥२७॥ स्वासने सुखमासीनमब्रवं तं महामुनिम् । अद्याऽहं कृतकृत्यश्च जातस्ते दर्शनेन वै ॥२८॥ वद मे योगशांतिं त्वं योगींद्राणां गुरुर्भवान् । तिष्ठामि शांतिगो भूत्वा यथाऽहं योगधारकः ॥२९॥ रैवत उवाच । स्वानंदः पंचधा प्रोक्तः सदसत्समनेतितः । चतुर्णां चैव संयोगे स्वस्वरूपः प्रकीर्तितः ॥३०॥ अयोगः स्वस्वरूपेण हीनः सर्वत्र संमतः । तयोर्योगो भरद्वाज योगशांतिप्रदायकः ॥३१॥ स्वसंवेद्यो गकारश्च णकारो योग उच्यते । तयोः स्वामी गणेशोऽयं ब्रह्मणस्पतिवाचकः ॥३२॥ तं भजस्व महाभाग ततः शांतिमवाप्स्यसि । नान्यथा शतवर्षैस्त्वं भ्रमयुक्तो भविष्यसि ॥३३॥ एतद्विष्णुमुखाद्ब्रह्मन् श्रुत्वा ज्ञानं महत् पुरा । तेनाऽहं शांतिमापन्नो गाणपत्यश्चरामि वै ॥३४॥ एवमुक्त्वा ददौ तस्मै स्वमंत्रं सिद्धिदायकम् । एकाक्षरं गणेशस्य सविधिं न्याससंयुतम् ॥३५॥ पूजितो रैवतस्तेन जगाम स्वेच्छया चरन् । भरद्वाजो गणेशानमभजन्नान्यचेतसा ॥३६॥ ततः शांतिं समापन्नो तथापि भजने रतः ।

गतेषु दशवर्षेषु विघ्नेशस्तं समाययौ ॥३७॥ तं दृष्ट्वा पूजयामास भरद्वाजः प्रतापवान् । स साम्नामष्टनामार्थस्तोत्रेण प्रणनाम ह ॥३८॥ ततो मां गाणपत्यं स कृत्वा स्वानंदगोऽभवत् । गणेशस्तं विशेषेणाऽहं भजामि सुभक्तितः ॥३९॥ एवमुक्त्वा ददौ तस्मै कर्दमाय महामनुम् । अष्टाक्षरं गणेशस्य विधियुक्तं विधानवित् ॥४०॥ ततश्चांतर्हितो राजन् भरद्वाजो महामुनिः । कर्दमः स्वगृहे गत्वा हर्षयुक्तः पुपूज तम् ॥४१॥ तत्राऽऽदौ ज्येष्ठमासे या नृप शुक्ला समागता । चतुर्थी सा कृता तेन नागरैर्हर्षसंयुतः ॥४२॥ वरदं संकटं शुक्ले चतुर्थीजं च कृष्णके । न करोति नरो यः स संताड्यो नगराद्बहिः ॥४३॥ प्रकाशितं ततस्तेन सर्वत्र व्रतमुत्तमम् । कृतं भूमितले राजन् चक्रुः सर्वे जना व्रतम् ॥४४॥ प्रमेह-दुःखनिर्मुक्तो बभूवे राजसत्तमः । कर्दमः स स्वकीयं वै राज्यं पुत्राय संददौ ॥४५॥ वाटिकायां स्थितो राजा सस्त्रीको ह्यभजत् सदा । गणेशं सर्वभावेन सोंऽते तन्मयतामयात् ॥४६॥ तस्य राज्ये जनाः सर्वे ते क्रमेण महामते । अभवन् ब्रह्म-भूताश्च व्रतपुण्यप्रभावतः ॥४७॥ कथां रम्यां दशरथ अन्यां शृणु सुसिद्धिदाम् । गौडदेशेंऽत्यजः कश्चिद्बभूवे पापकारकः ॥४८॥ वने गत्वा जघानाऽसौ द्रव्यलोभी जनान् सदा । योनिलंपटभावेन दूषितामकरोत् स्त्रियम् ॥४९॥ वन एकाकिनीं दृष्ट्वा ब्राह्मणीं क्षत्रियां तथा । धृत्वाऽयभत् स वेगेन शूद्रीं वैश्यस्त्रियं खलः ॥५०॥ एवं नानास्वभावेन पापं चक्रे स नित्यशः । एकदा ब्राह्मणं कंचिद् दृष्ट्वा हंतुं तमाययौ ॥५१॥ पलायत भयोद्विग्नो हाहाकारपरायणः । तस्य नादं समाकर्ण्य पुरुषाः पंच आययुः ॥५२॥ तैर्हतः शस्त्रघातेन पपात धरणीतले । तस्मिन् दिने समायाता ज्येष्ठी शुक्ला चतुर्थिका ॥५३॥ स उपोषणयुक्तश्च बभूवे दैवयोगतः । ममार पीडया युक्तः पंचम्यां पापरूपकः ॥५४॥ अज्ञानव्रतपुण्येन ब्रह्मभूतो बभूव ह । चांडालः किं पुनर्भूप ज्ञानिनां चित्रमेव च ॥५५॥ एवं नानाविधा राजन् व्रतपुण्यप्रभावतः । इह भुक्त्वाऽखिलान् भोगानंते स्वानंदगा बभुः ॥५६॥ तत्रैवं कति भूपाल ब्रूयां वक्तुं न शक्यते । अपारमहिमा तस्मादानंत्यं कथितं द्विजैः ॥५७॥ इदं ज्येष्ठचतुर्थ्या यन् माहात्म्यं संशृणोति सः । पठेद्वा यो लभेत् सर्वं शुक्लाया मनसीप्सितम् ॥५८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते ज्येष्ठशुक्लचतुर्थीमाहात्म्यवर्णनं नाम षोडशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । वद ब्रह्मंश्च शुक्लाया आषाढे चरितं महत् । चतुर्थ्यां नैव तृप्यामि कथां श्रुत्वा सुसिद्धिदाम् ॥१॥ वसिष्ठ उवाच । मैथिले विषये राजन्नगरं गंडकी महत् । तत्र राज्यं भद्रसेनश्चकारामिततेजसा ॥२॥ शस्त्रास्त्रनिपुणोऽत्यंतं परराष्ट्रावमर्दनः । जित्वा भूमंडलं सर्वं समुद्रवलयांकितम् ॥३॥ राज्यं चकार धर्मेण नीत्या दंडेन भूमिप । यज्वा विनीतको मानी द्विजदेवातिथिप्रियः ॥४॥ वशगाः सर्वराजानः सेवंते स्म नराधिपम् । अपारसेनया युक्तं करदा इतरेऽभवन् ॥५॥ तस्य राज्ये शुका राजन् शलभा मूषकास्तथा । अपारा भक्षयंति स्म धान्यं वस्त्रादिकं बलात् ॥६॥ तेषां नाशार्थमत्यंतं भद्रसेनः प्रतापवान् । अस्त्रैर्यत्नपरो भूत्वा मारयामास तान् बहून् ॥७॥ अग्न्यस्त्रेण समंतात्तान् दग्धानपि च तादृशान् । ददर्श पुनरुत्पन्नांस्ततो राजाऽतिविस्मितः ॥८॥ यत्र तत्र गृहांतेषु चेरुस्ते शलभादयः । अशक्तः स वने गत्वा बभूव ह सुदुःखितः ॥९॥ उपोषणपरो राजा तताप तप उत्तमम् । शिवं स्मृत्वा स तुष्टावापूज्य रौद्रेण भावतः ॥१०॥ गते वर्षे महायोगी बकदाल्भ्यः समाययौ । तं देशं दैवयोगेन ददर्शाऽसौ भ्रमन्नृपम् ॥११॥ राजा तं पूजयामास संभोज्य नयसंयुतः । पप्रच्छ योगिनं तत्र दुःखयुक्तेन चेतसा ॥१२॥ भद्रसेन उवाच । स्वामिन् राज्ये मदीये वै मूषकाः शलभाः शुकाः । अत्यंतं पीडयंति स्म जनान्मां भक्षणे रताः ॥१३॥ तत्रोपायाः कृता विप्राऽभवन् सर्वे सुनिष्फलाः । राज्यं त्यक्त्वा वनेऽहं च संस्थितो दुःखकारणात् ॥१४॥ शंकरं संभजंस्तत्र दर्शनं ते महामते । प्राप्तस्तपः-प्रभावेण तत्रोपायं वद प्रभो ॥१५॥ वसिष्ठ उवाच । भद्रसेनवचः श्रुत्वा गाणपत्यो महायशाः । जगाद बकदाल्भ्यः स तं भूपं हर्षयन्निव ॥१६॥ बकदाल्भ्य उवाच । शिवेन प्रेषितोऽत्राऽहं त्वदर्थं राजसत्तम । शृणु मे परमं वाक्यं दुःखनाशकरं महत् ॥१७॥ राज्ये ते भद्रसेनाऽद्य व्रतं नष्टं बभूव ह । चतुर्थी संज्ञकं तेन विघ्नयुक्तोऽसि सांप्रतम् ॥१८॥ प्रजाः सर्वा भयोद्विग्ना जाता दुष्टे नराधिपे । राज्यकर्तरि रे पापिन् नरके गच्छसि ध्रुवः ॥१९॥ सर्वादौ तद्व्रतं सर्वैः कर्तव्यं नित्यवत्प्रभो । चतुर्णां पुरुषार्थानां दायकं विघ्नहारकम् ॥२०॥ न कृतं चेत्तदा सर्वं कृतं कर्म निरर्थकम् । चतुःपदार्थहीनस्त्वाद्विचारय महामते ॥२१॥ एवमुक्त्वा चतुर्थ्या यन् माहात्म्यं बकदाल्भ्यकः । कथयामास राज्ञे वै श्रुत्वा तं सोऽब्रवीद्वचः ॥२२॥ भद्रसेन उवाच । कीदृशोऽयं गणाधीशो वद तस्य स्वरूपकम् । ज्ञात्वा तं सर्वदेवेशं भजिष्यामि विशेषतः ॥२३॥ बकदाल्भ्य उवाच । पुरावृत्तं मदीयं यच्चेष्टितं शृणु भूमिप । तेन त्वं गणराजस्य ज्ञाने सुनिपुणो भवेः ॥२४॥ पुराऽहं तपसा युक्तो

वायुमात्राशनोऽभवम् । चराचरं ततो मत्तेजसा व्याप्तं भयातुरम् ॥२५॥ तथापि तपसा राजन् युक्तोऽहं तत्र मेऽद्भुतम् । बभूव विश्वरूपस्य दर्शनं सर्वगं परम् ॥२६॥ तेनाऽहं ज्ञानभावेन संस्थितो योगकारणात् । तपस्त्यक्त्वा विशेषेण जडोन्मत्तादिके रतः ॥२७॥ शमी दमपरो भूत्वा योगं पूर्णसुखप्रदम् । असाधयं सदाऽत्यंतं मनोनिग्रहतत्परः ॥२८॥ एवं क्रमेण भूपाल सहजे ब्रह्मणि ह्यहम् । ब्रह्मभूतस्वभावेन संस्थितो हर्षवांस्तदा ॥२९॥ ततो मयाऽतिमोहेन शून्यं स्वाधीन-रूपकम् । दृष्टं तेनाऽभवं भ्रांतो ब्रह्मणि त्वीदृशं कथम् ॥३०॥ ततोऽहं शरणं शंभुं गत्वा तं स्तुतवान् स्तवैः । प्रसन्नं शंकरं दृष्ट्वाऽवदं योगं वद प्रभो ॥३१॥ शिव उवाच । सत्यासत्यसमानानि सहजेन युतानि वै । निजात्मबोधतो विद्धि स्वानंदादुद्भवानि च ॥३२॥ संयोगे स्वस्वरूपत्वं ज्ञातव्यं वेदवादतः । अयोगे सर्वसंयोगो नश्यत्यत्र न संशयः ॥३३॥ संयोगश्च तथा योगस्तयोर्योगो महामते । योगशांतिप्रदः प्रोक्तो योगिभिर्योगसेवया ॥३४॥ योगशांतिमयं विद्धि गणेशं ब्रह्मनायकम् । तं भजस्व विधानेन ब्रह्मभूतो भविष्यसि ॥३५॥ संयोगश्च गकाराख्यो णकारो योगवाचकः । तयोः स्वामी गणाधीशः पश्य वेदे विशेषतः ॥३६॥ एवमुक्त्वा महादेवो ददौ मंत्रं द्विजाय मे । एकाक्षरं गणेशस्य विधियुक्तं सुयोगदम् ॥३७॥ प्रणम्य शंकरं भूप गतोऽहं वनमेव च । अभजं गणराजं तं ध्यात्वा जपपरायणः ॥३८॥ ततस्तत्कृपया शांतिर्मया प्राप्ता विशेषतः । तथाऽपि पूजने सक्तस्तं ध्यायामि स्म चेतसा ॥३९॥ ततो मां दर्शयामास रूपं शुंडा-विराजितम् । दृष्ट्वा तं प्रणमामि स्म स्तौमि हर्षसमन्वितः ॥४०॥ भक्तिं दत्त्वा गणाधीशो ह्यंतर्धानं चकार मे । तदारभ्य महाभाग गाणपत्योऽहमादरात् ॥४१॥ एवमुक्त्वा ददौ तस्मै मंत्रं पंचाक्षरं मुनिः । अंतर्धानं गणेशस्य स चकार द्विजोत्तमः ॥४२॥ बकदाल्भ्यं गतं दृष्ट्वा राजा हर्षसमन्वितः । चकार स्वपुरे राज्यं पुनरागत्य धर्मतः ॥४३॥ ततः स नागरैः सार्धं चकार व्रतमुत्तमम् । आषाढे शुक्लपक्षे वै चतुर्थीजं सुभक्तितः ॥४४॥ ततः सर्वत्र तेनैव प्रशस्तं तद्व्रतं कृतम् । शुक्लकृष्णचतुर्थीजं व्रतं चक्रुर्जना नृप ॥४५॥ शुकाश्च मूषकास्तत्र शलभा नाशमाययुः । धनधान्ययुता लोकाः पुष्टिं लेभुः सुहर्षतः ॥४६॥ नानादुःखं परित्यज्यानंदेनैव समावृताः । अंते स्वानंदगाः सर्वे ब्रह्मभूता बभूविरे ॥४७॥ राज्येऽभिषिच्य पुत्रं स्वं सपत्नीको ययौ वनम् । तत्र तं गणराजं सोऽभजतानन्यभावतः ॥४८॥ अंते स्वानंदगो भूत्वा सस्त्रीकोऽजसमुद्भव । ब्रह्मभूतो व्रतस्यास्य प्रसादेन बभूव ह ॥४९॥ अन्यच्छृणु चरित्रं तद्व्रतजं पुण्यवर्धनम् । आषाढे

वरदायाश्च भुक्तिमुक्तिफलप्रदम् ॥५०॥ वंगदेशे समुत्पन्नो वाणिजः पापकारकः। स्वधर्मं स परित्यज्य दुष्टकर्मरतोऽभवत् ॥५१॥ द्यूतमद्यादिकं नित्यं हिंसयाऽसेवतान्वितः । बलात् धृत्वाऽभुंक्त परस्त्रियं वशमनागताम् ॥५२॥ तस्य कर्म दुराचारं ज्ञात्वा पित्रा तिरस्कृतः। असकृत्तेन स क्षुब्धो विषं पित्रे ददौ खलः ॥५३॥ विषबाधासमायुक्तः स ममार ददाह तम्। ततो मातरमागम्य धनं जग्राह वै बलात् ॥५४॥ लोकाः सर्वे ततो ज्ञात्वा चेष्टितं दुःखदं परम् । तस्य दुष्टस्य ते तत्र व्यथिताः संबभूविरे ॥५५॥ जनाः श्रेष्ठा नृपं गत्वाऽकथयंस्तद्विशेषतः। चेष्टितं क्षुभितो राजा श्रुत्वा तं तत्र चानयत् ॥५६॥ शूले नृप नरैः प्रोतो दुर्मतिः स नृपाज्ञया। तद्दिने दैवयोगेनाषाढी शुक्ला बभूव ह ॥५७॥ तत्राऽयं जलहीनश्च निराहारः स्थितोऽभवत् । पंचम्यां पीडया युक्तो ममार नृप दुष्टधीः ॥५८॥ अज्ञानव्रतपुण्येन स स्वानंदगतोऽभवत्। महापापी व्रतस्यैव प्रभावेण महीपते ॥५९॥ स्वानंदे गणपं दृष्ट्वा ब्रह्मभूतो बभूव ह। एवं व्रतप्रभावेण जना ब्रह्म प्रलेभिरे ॥६०॥ तत्रैवं कति संख्यातुं शक्यते न कदाचन। वर्षायुतैर्महाराजाऽखिलं केनाऽपि योगिना ॥६१॥ यदि ज्ञानेन सा देवी चतुर्थी साधिता भवेत्। वरदा तत्र किं चित्रं तस्मै ब्रह्मप्रदा भवेत् ॥६२॥ इदमाषाढगायाश्च चतुर्थ्याश्चरितं पठेत्। शृणुयाद्वरदायाश्चेत् स लभेदीप्सितं फलम् ॥६३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते आषाढशुक्लचतुर्थीचरितवर्णनं नाम सप्तदशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच। श्रावणे वरदायाश्च माहात्म्यं वद विस्तरात्। न तृप्यामि कथां श्रुत्वा ब्रह्मभूयप्रदां प्रभो ॥१॥ वसिष्ठ उवाच। अंगदेशे पुरं श्रीमच्छततारं बभूव ह। राजा राज्यं चकाराश्वसेनसंज्ञोऽपि तत्र हि ॥२॥ धर्मेण नीतियुक्तेन नानादानपरायणः । देवविप्रातिथिप्रेप्सुर्बभूवातिपराक्रमी ॥३॥ नानाव्रतपरो राजा यज्वा तेजस्विनां वरः। शस्त्रास्त्रैः पृथिवीं सर्वां जिग्ये बलसमन्वितः ॥४॥ सार्वभौमः स विख्यातस्त्रिलोकीकीर्तिकारकः । राज्ञः सर्वान् वशे चक्रे सेवकान् करदायिनः ॥५॥ एवं राज्यं वशं कृत्वा भूतलं स चकार ह । ततोऽकस्माज्ज्वरस्तस्य समुत्पन्नोऽतिदाहकः ॥६॥ ज्वरेण पीडितोऽत्यंतं निशि निद्रां न चाऽलभत्। नानोपायांश्चकाराऽसौ ज्वरहीनो बभूव न ॥७॥ एवं वर्षे गते पूर्णे सोऽस्थिचर्मावशेषितः। अत्यंतदुःखितो राजा विललाप भृशातुरः ॥८॥ विषेण देहपातार्थमुद्यतोऽभून् महीपतिः। जगाम

सहसा तत्र देवलो योगिसत्तमः ॥९॥ तं दृष्ट्वा प्रणनामाथ पूजयामास बांधवैः । भुक्त्वा तृप्तं जगादेदं वचनं साधुमार्गवित् ॥१०॥ अश्वसेन उवाच । धन्यं मे जन्म कर्माऽपि पिता माता व्रतादिकम् । अधुना सफलं दानं येन ते दर्शनं मुने ॥११॥ ज्वरेण पीडितोऽत्यंतं विषपाने महामुने । तत्परोऽहं प्रपश्याम्यागतं त्वां योगिसत्तम ॥१२॥ मृतोऽहं विषपानेनात्महत्यां न लभे कदा । तव दर्शनमात्रेण मुक्तो यास्यामि धाम तत् ॥१३॥ एवमुक्त्वा रुरोदाऽपि ततस्तं देवलो मुनिः । उवाच भावगंभीरः सर्वशास्त्रार्थतत्त्ववित् ॥१४॥ देवल उवाच । राज्ये नष्टे त्वदीये यच्चतुर्थीसंज्ञितं व्रतम् । तेन त्वं रोगयुक्तोऽसि मृतो गच्छसि नारके ॥१५॥ चतुःपदार्थदं पूर्णं सर्वादौ संमतं परम् । न कृतं चेत् फलैर्हीनं कर्म सर्वं भवेन्नृप ॥१६॥ त्वया यच्च कृतं कर्म नानापुण्यात्मकं महत् । चतुःपदार्थहीनं तच्चतुर्थीव्रतहीनकम् ॥१७॥ एवमुक्त्वा महायोगी चतुर्थीव्रतसंश्रिताम् । कथां संश्रावयामास राजा श्रुत्वा तमब्रवीत् ॥१८॥ अश्वसेन उवाच । अहो व्रतस्य माहात्म्यं संश्रुतं परमाद्भुतम् । अधुना वद माहात्म्यं गणेशस्य महामुने ॥१९॥ देवल उवाच । गणेश्वरस्य माहात्म्यं मया वक्तुं न शक्यते । उपाधिना युतं राजन् वदिष्यामि स्वरूपकम् ॥२०॥ असितान् मे पितुर्वक्त्राच्छ्रुतं तत्ते वदाम्यहम् । सर्वसिद्धिकरं पूर्णं ब्रह्मयोगप्रकाशकम् ॥२१॥ पुराऽहं तपसा युक्तोऽभवंस्तत्र समागतः । जैगीषव्यो महायोगी शैवः सहजगो बभौ ॥२२॥ मया सुसत्कृतो योगी संस्थितः पूजितः स्तुतः । ममाश्रमे न किंचिन् माऽवदत् सोऽपि महायशाः ॥२३॥ तस्य चिह्नं समालोक्य मनसा धारयाम्यहम् । अकर्मकारकश्च स्म देहरक्षणतत्परः ॥२४॥ ध्यानादिशून्यभावेन तिष्ठति भ्रष्ट एव च । शांतियोगेन हीनः स्म तथा योगिस्वरूपधृक् ॥२५॥ ततोऽहं तं गृहे त्यक्त्वा गतः सामुद्रके जले । मदीयचित्तगं ज्ञात्वा स तत्रैव समाययौ ॥२६॥ अहो केनैव मार्गेणाऽऽगतोऽयं योगिसत्तमः । तापसेन मयाऽऽकाशे गच्छता नावलोकितः ॥२७॥ त्यक्त्वा ततस्तं तत्राहमगमं स्वर्गमंडलम् । तत्रापि जैगीषव्यश्च मया दृष्टो महामते ॥२८॥ एवं नानाविधैर्मार्गैः स्वर्गेषु गतवानहम् । मया तेषु महायोगी दृष्टः संपूजितोऽमरैः ॥२९॥ ततोऽकस्मान् महायोगी सोंऽतर्धानं चकार ह । तद् दृष्ट्वा सिद्धसंघांश्चापृच्छं तैः कथितं नृप ॥३०॥ ब्रह्मलोके गतः सोऽपि तत्र तेन गतिर्भवेत् । ततोऽहं खेदसंयुक्तः स्वाश्रमं पुनरागमम् ॥३१॥ तत्रापि गृहमध्येऽसौ मया दृष्टो महायशाः । संपूज्य प्रणतो भूत्वाऽवदं योगपरायणः ॥३२॥ तारयस्व महायोगिन् संसारान् मां कुशिष्यकम् । छलनायां समायुक्तं दयया त्वं दयानिधे ॥३३॥ जैगीषव्य उवाच । हिंसात्मकं कुरुष्व त्वं

कर्म मा यत्नधारकः । ब्रह्माहमिति बोधेन शमी दमपरो भव ॥३४॥ यदाज्ञावशगं सर्वं वर्तते तं भजस्व च । तेन योगी त्वमेवेह भविष्यसि न संशयः ॥३५॥ जैगीषव्यश्चैवमुक्त्वा तत्रैवांतरधीयत । अहं तत्र समासीनो हिंसां त्यक्त्वा तथाऽभवम् ॥३६॥ ततः स्म पितरः सर्वे महत् कुर्वंति रोदनम् । अहो कर्म परित्यज्य देवलो न उपेक्षते ॥३७॥ अस्मान् कः पुष्यति प्राज्ञो निराधारा वयं कृताः । देवलेन न संदेहः क्षुधाविष्टास्तृषा युताः ॥३८॥ तान् दृष्ट्वा दुःखितोऽहं वै कर्म कर्तुं समुद्यतः । मया दृष्टा ओषधयो महत् कुर्वंति रोदनम् ॥३९॥ अस्मानहोऽभयं दत्वा देवलः क्रौर्यमाश्रितः । निर्लज्जः पुनरेवाऽसौ छेदयिष्यति दुर्मतिः ॥४०॥ ततोऽहं नितरां खिन्नो ह्युभयत्रैव संकटात् । विचार्य स्वहिते सक्तः शमी दमपरोऽभवम् ॥४१॥ सर्वाभयस्वभावेन कर्मणा योगसेवया । क्रमेण सहजे योग्यऽहं ब्रह्मणि परोऽभवम् ॥४२॥ तत्र स्वाधीनतां दृष्ट्वा शांतिहीनोऽभवं पुनः । अगमं पितरं तत्र योगींद्रैर्वंदितं स्तुतम् ॥४३॥ तत्राऽसितं प्रणम्यैवाऽपृच्छं ब्रह्म सनातनम् । योगशांतिप्रदं पूर्णं ततो मां सोऽब्रवीद्वचः ॥४४॥ असित उवाच । संयोगाद्विद्धि पुत्र त्वं स्वसंवेद्यात्मकात् किल । चतुर्विधं समुत्पन्नं तत्त्यजस्व समाधिदम् ॥४५॥ अयोगेन च संयोगो दृश्यते योगिभिः कदा । संयोगायोगयोर्योगो योगशांतिप्रदो मतः ॥४६॥ भजस्व गणराजं त्वं तदर्थं नित्यमादरात् । सदा योगस्वरूपं तं शांतिदं योगिनोऽब्रुवन् ॥४७॥ संयोगेऽयं गकाराख्यो णकाराख्यस्त्वयोगके । तयोर्योगे गणाधीशो ज्ञातव्यो विबुधैः सदा ॥४८॥ एवमुक्त्वा ददौ मंत्रं मह्यमेकाक्षरं परम् । गाणपत्यः प्रसन्नात्मा पिता मे गणपं भजन् ॥४९॥ ततस्तं प्रणिपत्यैव गतोऽहं स्वाश्रमे नृप । गणेशं पूजयामि स्म ध्यात्वा जपपरोऽभवम् ॥५०॥ ततः स्वल्पेन कालेन शांतिं प्राप्तोऽहमेव च । योगिवंद्योऽभवं राजंस्तथापि गणपं भजे ॥५१॥ गते वर्षे समायातो गणेशो भक्तवत्सलः । स्तुतः संपूजितस्तत्र मया हृष्टेन चेतसा ॥५२॥ ततो मां गाणपत्यं स पितृतुल्यं महोदरः । कृत्वा स्वानंदके धाम्नि गतो ब्रह्मपतिः प्रभुः ॥५३॥ उक्त्वा दशाक्षरं मंत्रं ददावेवं नृपाय च । अंतर्धाय स्वमात्मानं देवलः स्वाश्रमेऽगमत् ॥५४॥ ततः स राजशार्दूलो गणेशभजने रतः । तत्राऽऽदौ श्रावणी प्राप्ता वरदा या चतुर्थिका ॥५५॥ तां चकार जनैः सर्वैः पुरवासिभिरादरात् । उपोषणसमायुक्तः पंचम्यां पारणे रतः ॥५६॥ ततो दाहविनिर्मुक्तो ज्वरहीनो बभूव ह । जनाः सर्वे च रोगाद्यैर्हीना जातास्तदद्भुतम् ॥५७॥ ततस्तेन महीपृष्ठे विख्यातं तद्व्रतं कृतम् । शुक्लकृष्णभवं चक्रुर्व्रतं सर्वे धरातले ॥५८॥ आरोग्यादिसमायुक्ता हृष्टपुष्टा जनाः बभुः । व्रतस्य पुण्ययोगेन

पुत्रपौत्रधनान्विताः ॥५९॥ पुत्रे राज्यं परित्यज्य राजा शांतिपरायणः । सस्त्रीक एकांते सोऽभूदभजद्गणनायकम् ॥६०॥ अंते स्वानंदगो राजा ब्रह्मभूतो बभूव ह । क्रमेण सर्वे लोका वै ब्रह्मभूता बभूविरे ॥६१॥ एवं व्रतस्य माहात्म्यं सर्वसिद्धि-प्रदायकम् । कथितं ते महाराज पुनः शृणु कथानकम् ॥६२॥ गुर्जरे पापकर्माकः क्षत्रियो दुर्बलोऽभवत् । बाल्यात् प्रारभ्य दुष्टात्मा पापकर्मपरायणः ॥६३॥ स्त्रीमांसमदिरासक्तो जनानां च पशोस्तथा । वधे रतो गुरुं चैव मारयामास मंदधीः ॥६४॥ गुरोर्द्रव्यं गृहीत्वा स वनगश्च बभूव ह । एवं नानाविधं पापं चकार नित्यमादरात् ॥६५॥ एकदा ज्वरयुक्तः स बभूव क्षत्रियाधमः । अत्यंतं व्याकुलो जातो देहशुद्धिं न चास्मरत् ॥६६॥ दैवयोगेन शुक्ला सा श्रावणे सुसमागता । चतुर्थी तत्र तेनैवान्नं जलं भक्षितं न च ॥६७॥ पंचम्यां तेन किंचिद्वै भक्षितं त्वन्नमादरात् । रोगहीनो बभूवाऽपि पुनः पापं समाचरत् ॥६८॥ कालेन निधनं प्राप्तं तं नेतुं च समागताः । दुष्टं संगृह्य गाणेशा ब्रह्मभूतं प्रचक्रिरे ॥६९॥ अज्ञान-व्रतजेनैव पुण्येन क्षत्रियो ययौ । स्वानंदं किं पुनर्ज्ञानिनां कथा का नृपात्मज ॥७०॥ एवं नाना जनाद्याश्च चतुर्थीव्रतपुण्यतः । ब्रह्मभूता मया वक्तुं न शक्यास्ते बभूविरे ॥७१॥ इदं श्रावणगायाश्च वरदायाः पठेन्नरः । माहात्म्यं शृणुयाचेद्वा स सर्वं संल्लभेत् फलम् ॥७२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते श्रावणशुक्लचतुर्थीव्रतकथनं नामाष्टादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । वद ब्रह्मन् मले मासे चतुर्थी या समागता । वरदा चरितं तस्याः सर्वसिद्धिप्रदायकम् ॥१॥ वसिष्ठ उवाच । अत्र ते कथयिष्यामि चेतिहासं पुरातनम् । चतुर्थी महिमायुक्तं श्रवणात् सर्वदं परम् ॥२॥ आंध्रे राजा सुषेणश्च चकार राज्यमुत्तमम् । नगरे चंपके भूप शस्त्रास्त्रे पारगो मतः ॥३॥ नीत्या धर्मेण कीर्त्या च दानेन यश आर्जयत् । देवविप्रातिथिप्रेप्सुर्यज्वा व्रतपरायणः ॥४॥ जित्वा भूमंडलं सर्वं राज्यं चकार धर्मतः । राजानः करदाः सर्वे सेवां चक्रुर्महीपतेः ॥५॥ तस्य राज्ये महा सर्पा बभक्षुस्तज्जनान् सदा । यत्र तत्राऽचरन् क्षुब्धाः सर्पाः परमदारुणाः ॥६॥ जनैः कुत्र महीपाल प्रगंतुं नैव शक्यते । तथैव दुःखितैः स्थातुं वनेषु च गृहेषु च ॥७॥ राजा तथैव दुःखार्तो महाभयपरायणः ।

नागानां शांतये सर्वैः पंचमी साधिताऽभवत् ॥८॥ तथा स्म न शमं यांति नागाः परमदारुणाः । नानापुण्यानि तीर्थानि जनाश्चक्रुर्विशेषतः ॥९॥ तथाऽधिकं ययुः क्रूरा नागाः सर्वत्र भूमिषु । राजेंद्रः स्वगुरुं तत्र जैमिनिं शरणं ययौ ॥१०॥ तं प्रणम्य पुरस्तस्य संस्थितः स कृतांजलिः । तं मुनिर्मानयामासाऽऽसनदानाद्विशेषतः ॥११॥ पप्रच्छ विनयेनैव युक्तं किमर्थमागतः । सुषेणः स तथोवाच निःश्वस्य मुनिपुंगवम् ॥१२॥ सुषेण उवाच । स्वामिन् सर्पा अपाराश्च धर्षंतश्च सदा जनान् । न स्थातुं शक्यते तत्र भयसंकुलितैर्मुने ॥१३॥ नानोपायाः कृतास्तत्र न शांतिं लेभिरे ततः । तदर्थं त्वां महाभाग प्रष्टुमत्र समागतः ॥१४॥ वद सर्पगणानां च शांतये किं करोम्यहम् । विप्र नो चेत् त्वत्समीपे देहत्यागं करोमि वै ॥१५॥ वसिष्ठ उवाच । एवं पृष्टो महातेजा जैमिनिस्तमुवाच ह । स्वशिष्यं निंदयन् राजंस्तच्छृणुष्व समाहितः ॥१६॥ जैमिनिरुवाच । चतुर्थीजं महापापिन्नष्टं राज्ये तव व्रतम् । तेन त्वं च मृतैः सर्वैर्नरके प्रपतिष्यसि ॥१७॥ चतुर्णां पुरुषार्थानां दातृत्वाद्वरदा मता । तथा संकटनाशित्वात् संकष्टी सा प्रकीर्तिता ॥१८॥ यदि व्रतं च सर्वादौ न कृतं चेन्निरर्थकम् । कर्महीनं चतुर्भिस्तन्नित्यं कार्यां ततः प्रभो ॥१९॥ एवमुक्त्वा चतुर्थ्याश्च माहात्म्यं मुनिसत्तमः । कथयामास तच्छ्रुत्वा सुषेणस्तं तथाऽब्रवीत् ॥२०॥ सुषेण उवाच । कीदृशोऽयं गणेशानो व्रतं यस्य महाद्भुतम् । वद तस्य स्वरूपं मे भजिष्यामि महाप्रभुम् ॥२१॥ जैमिनिरुवाच । न वक्तुं शक्यते राजन् केनाप्येतत् स्वरूपकम् । उपाधिना युतं ढुंढिं वदामि शृणु तत्त्वतः ॥२२॥ अहं पुरा सुशांत्यर्थं व्यासं च शरणं गतः । मह्यं संकथितं तेन साक्षान्नारायणेन च ॥२३॥ तदेव त्वां वदिष्यामि स्वशिष्यं च नृपाधमम् । यदि तं भजसि ह्यद्य सर्वसिद्धिप्रदायकम् ॥२४॥ देहदेहिमयं सर्वं गकाराक्षरवाचकम् । णकारवाचकं ब्रह्म संयोगायोगरूपकम् ॥२५॥ तयोः स्वामी गणेशस्तु पश्य वेदे महामते । चित्ते निवासकत्वाच्चिंतामणिर्वै स कथ्यते ॥२६॥ चित्तरूपा स्वयं बुद्धिर्भ्रांतिरूपा महीपते । सिद्धिस्तत्र तयोर्योगे प्रलभ्येत तयोः पतिः ॥२७॥ एवमुक्त्वा गणेशस्य ददौ मंत्रं षडक्षरम् । सुषेणाय यथान्यायं विधियुक्तं विशेषतः ॥२८॥ ततस्तेनाभ्यनुज्ञातः स्वपुरं स जगाम ह । तत्राऽऽदौ मलमासश्च संप्राप्तस्तेन भूमिप ॥२९॥ मलमासे गणेशस्य वरदाख्यं समागतम् । सोऽपि शुक्ले चतुर्थीजं व्रतं चक्रे सुभक्तितः ॥३०॥ नागरैर्विविधैर्लोकैः समीपग्रामसंस्थितैः । तत्कृतं विधिना राजन् सर्वसिद्धिप्रदायकम् ॥३१॥ ततस्तेन सुषेणेन प्रशस्तं भूमिमंडले । कृतं ततो जनाः सर्वे चक्रुर्हर्षसमन्विताः ॥३२॥ अभवन् व्रतपुण्येन सर्पा अंतर्हिता बभुः । लोका रोगादिभिः

सर्वे वर्जिता हर्षसंयुताः ॥३३॥ पुत्रपौत्रादिसंयुक्ता धनधान्यसमन्विताः । नानासुखेषु संसक्ता अभवंस्तत्र ते ततः ॥३४॥ राजा गणपतिं नित्यमभजन्नान्यचेतसा । षडक्षरेण मंत्रेण विधियुक्तेन पूजयन् ॥३५॥ पुत्रे राज्यं विनिक्षिप्य सस्त्रीकः स वनं ययौ । तत्र विघ्नेशमेवं सोऽपूजयज्जपतत्परः ॥३६॥ अंते स्वानंदगो भूत्वा ब्रह्मभूतो बभूव ह । जनाः सर्वे व्रते संस्थाः शुक्लकृष्णभवे परे ॥३७॥ स्वांते क्रमेण ते सर्वे ब्रह्मभूता बभूविरे । व्रतस्यैव प्रभावेण न किंचिद् दुर्लभं भवेत् ॥३८॥ अन्यच्छृणु महीपाल चरितं मलमासगम् । पुण्यं शुक्लचतुर्थीजं श्रवणात् सर्वदं भवेत् ॥३९॥ हस्तिनापुरवासी च क्षत्रियः कः सुदारुणः । बाल्यात् प्रभृति वै सोऽपि पापाचारो बभूव ह । ॥४०॥ द्रव्यलोभार्थमेवं स्वजनकं स जघान ह । परस्त्रीलालसः पूर्णश्चौरकर्मपरोऽभवत् ॥४१॥ एवं नानाविधं पापं चक्रेऽसौ दुर्मतिः सदा । वने स्थितः कदाचिद्वै जनान् जघ्ने महाखलः ॥४२॥ एतस्मिन्नंतरे तत्र सर्पेणैव महीपते । दष्टः सोऽपि भयोद्विग्नो गृहे गंतुं मनो दधे ॥४३॥ ततो विषेण संव्याप्तो देहस्तेन पपात ह । दैवयोगेन तत्राऽसौ जलान्नरहितोऽभवत् ॥४४॥ शुक्लपक्षे मले मासे चतुर्थी सा तिथिस्तदा । तेन प्राप्ता तत्र भूप अज्ञानेन व्रतं कृतम् ॥४५॥ पंचम्यां स मृतस्तत्र वने घोरे महाखलः । स्वानंदे गणपं दृष्ट्वा ब्रह्मभूतो बभूव ह ॥४६॥ नाना जना व्रतेनैव ब्रह्मभूता बभूविरे । इह भुक्त्वाऽखिलान् भोगानंते वक्तुं न शक्यते ॥४७॥ इदं चतुर्थीमाहात्म्यं मलमासे शृणोति चत् । शुक्लपक्षे लभेत् सोऽपि पठेद्वा सर्वमंजसा ॥४८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते मलमासशुक्लचतुर्थीचरितवर्णनं नाम एकोनविंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । संश्रुत्य वरदाया वै माहात्म्यं सर्वदं परम् । अत्यंतं कृतकृत्योऽहं जातो नास्त्यत्र संशयः ॥१॥ नानेन सदृशं किंचिद्व्रतं सर्वार्थदं परम् । धन्यास्ते पुरुषा विप्र चतुर्थीव्रतकारकाः ॥२॥ अधुना संकटायाश्च माहात्म्यं वद विस्तरात् । न तृप्यामि सुधारूपां कथां श्रुत्वा समासतः ॥३॥ मुद्गल उवाच । एवं पृष्टो महायोगी वसिष्ठस्तमुवाच ह । तच्छृणुष्व प्रजानाथ श्रवणानंददायकम् ॥४॥ वसिष्ठ उवाच । तव भावं विदित्वाऽहं संतुष्टो नृपसत्तम । पुण्यवानसि येन त्वं गणेशे भक्तिमानसि ॥५॥ न ह्यल्पपुण्ययोगेन गणेशस्य महात्मनः । कथायां जायते प्रीतिर्धन्योऽस्यत्र न संशयः ॥६॥ कथां शृणु महाभाग चतुर्थीसंश्रितां पराम् । कृष्णपक्षे महापुण्यां सर्वसिद्धिप्रदायिनीम् ॥७॥

अत्र ते कथयिष्यामि चेतिहासं पुरातनम् । महापुण्यप्रदः पूर्णश्रवणात् पठनाद्भवेत् ॥८॥ सहस्राख्ये पुरे राजन् शूरसेनो महीपतिः । सभायां गानसंयुक्तो बभूवे भूपसेवितः ॥९॥ तत्राऽकस्माद्विमानं वै पतितं ज्वलनप्रभम् । तद् दृष्ट्वा परमाश्चर्यं ज्ञातुं दूतानचोदयत् ॥१०॥ दूतैः संज्ञापितो राजा विमानं द्रष्टुमुत्सुकः । स ययौ नगरप्रांते पुरवासिभिरावृतः ॥११॥ तत्रेंद्रं देवयुक्तं स दृष्ट्वा विस्मितमानसः । प्रणनाम पदा गत्वा दंडवत् पृथिवीतले ॥१२॥ पुनरुत्थाय राजाऽसौ कृत्वा करपुटं शनैः । हर्षयुक्त उवाचेदं वचनं भक्तिसंयुतः ॥१३॥ शूरसेन उवाच । धन्यं जन्म वयो दानं पितरौ नगरादिकम् । कृतकृत्योऽस्मि देवेंद्र दर्शनात्ते सहानुगः ॥१४॥ वद कुत्र विभो गंतुं कुतो व्रजसि वा स्थलात् । लालसस्ते विमानं च कथं निपतितं भुवि ॥१५॥ न जाने केन पुण्येन सर्वेषां दर्शनं च ते । जातं देवसमूहेन वदाज्ञां किं करोम्यहम् ॥१६॥ विमानचलने यत्नं कुरु त्वं देवनायक । केन पापेन ते यानं पतितं तद्वदस्व मे ॥१७॥ एवं पृष्टो महातेजा महेंद्रस्तमुवाच ह । विनीतं भक्तिसंयुक्तं राजेंद्रं हर्षसंयुतः ॥१८॥ इंद्र उवाच । कैवर्तको महापापी नामा विघ्नेशमाभजत् । मुद्गलेनोपदिष्टश्च नाममंत्रपरायणः ॥१९॥ सहस्रे तद्वरेणाऽसौ वर्षेषु ब्राह्मणोत्तमः । भ्रूमध्यान्निःसृता शुंडा भ्रूशुंडी चाऽभवन् मुनिः ॥२०॥ तस्य दर्शनमात्रेण पुनर्जन्म न विद्यते । दर्शनार्थं गतोऽहं तु संपूज्येह समागमम् ॥२१॥ अत्रापि पापरूपस्य हशा वैश्यस्य कुष्ठिनः । विमानं पतितं भूमौ तव दूतस्य मानद ॥२२॥ यदि संकष्टिका राजंश्चतुर्थी कृष्णपक्षगा । साधिता व्रतभावेन तस्याः पुण्यं प्रदीयताम् ॥२३॥ तदा विमानमेवेदं चलेदत्र न संशयः । नान्यथा पुरुषार्थैश्च विमानचलनं भवेत् ॥२४॥ एतस्मिन्नंतरे तत्र विमानं च द्वितीयकम् । समागतं गणेशस्य दूतयुक्तं महाद्भुतम् ॥२५॥ तत्रैव नगरे भूप चांडाली पापकारिणी । अंधा कुष्ठयुताऽत्यंतं कृमिभारसमाकुला ॥२६॥ पूयशोणितदिग्धांगा दुर्गंधेन समावृता । बभूव भिक्षया सा वै रता जठरपोषणे ॥२७॥ पौषकृष्णतृतीयायां निशा किंचावशेषिता । मद्यपानं तया तत्र कृतं सुष्वाप निर्भया ॥२८॥ मद्यपानबलेनैव निद्रां लेभे तथाऽन्त्यजा । चतुर्थ्यामुदिते चंद्रे जाते जागरिताऽभवत् ॥२९॥ ततोऽपि क्षुधयाऽऽविष्टा रात्रौ भिक्षार्थमेव च । बभ्राम तत्र केनाऽपि दत्तान्नं बुभुजे च सा ॥३०॥ पंचम्यां सा मृता तत्र नृप संगृह्य गाणपाः । विमानेन ययुस्ते वै स्वानंदे व्रतकारिणीम् ॥३१॥ गच्छंती वायुना स्पृष्टा विमानेंत्यजजा नृप । स वायुः सहसा गत्यास्पृशदिन्द्रविमानकम् ॥३२॥ व्रतकारिशरीरस्य स्पृष्टो वायुः सुपुण्यवान् । विमानं चालयामास देवेंद्रस्य महाद्भुतम् ॥३३॥

तद् दृष्ट्वा विस्मिताः सर्वे देवा मुनिगणादयः । ज्ञानदृष्ट्या च तज्ज्ञात्वा शशंसू राजसत्तमम् ॥३४॥ इन्द्रे स्वर्गं गते देवै राजा स्वनगरं ययौ । विस्मितस्तं प्रणम्यैव वसिष्ठं मां समानयत् ॥३५॥ मया विधियुतं तस्योपदिष्टं मुख्यकं व्रतम् । चकार स यथान्यायमंगारकयुतं पुरा ॥३६॥ माघे कृष्णचतुर्थ्यां स कृत्वा व्रतमनुत्तमम् । पुनः संपूज्य पंचम्यां गणेशं संस्थितोऽभवत् ॥३७॥ एतस्मिन्नंतरे तत्र विमानं सहसाऽऽगतम् । गणेशदूतसंयुक्तं शूरसेनपुरे महत् ॥३८॥ विमानाद्गण-नाथस्य दूता उत्तीर्य तं नृपम् । जगुर्व्रतप्रभावेण चल राजन् गणेश्वरम् ॥३९॥ दूतानां वचनं श्रुत्वा राजा विस्मितमानसः । प्रणिपत्य प्रपूज्यैव तानुवाच सुहर्षितः ॥४०॥ शूरसेन उवाच । आरभ्य जन्मतो देवा अद्यावधि मया हठात् । यत्किंचिन्नागरैः सार्धं सदा भुक्तं शुभाशुभम् ॥४१॥ अधुना तान् परित्यज्य कथं यामि गजाननम् । ततस्तं गणराजस्य दूता ऊचुः शृणुष्व तत् ॥४२॥ गाणपत्या ऊचुः । नागरैः सह राजेंद्र चल त्वं विघ्ननायकम् । यथाविधि व्रतस्यैव प्रभावेण महामते ॥४३॥ यथाशास्त्रं व्रतस्यास्य महिमा केन गम्यते । अतो विश्वस्य चोद्धारे समर्थस्तु सुपुण्यतः ॥४४॥ ततोऽतिहर्षितो राजा चतुर्वर्णजनैः सह । नगरस्थैर्विमानं स समारुह्य स्थितोऽभवत् ॥४५॥ ततो गाणेशकैस्तत्र विमानं चालितं नृप । न चचाल जडीभूतं ध्यानयुक्ता बभूविरे ॥४६॥ ज्ञात्वा तं कुष्ठिनं त्यक्तुं गाणेशाश्च समागताः । तान् प्रणम्य जगादाऽसौ राजेंद्रो रोदनाकुलः ॥४७॥ महापापी च वैश्योऽयं यस्य दृष्ट्या पपात ह । विमानं सुरनाथस्य तथापि शृणुत प्रियाः ॥४८॥ किमनेन कृतं पापं मां ततो वदत ह्यहम् । प्रायश्चित्तं करिष्याम्यनेन गच्छामि संयुतः ॥४९॥ ततस्तं गणनाथस्य दूता ऊचुः प्रहर्षिताः । शृणु राजन्नयं वैश्यः पूर्वजन्मनि वाडवः ॥५०॥ बुधनामा महापापी बाल्यात् प्रारभ्य सर्वदा । माता पतिव्रता चास्य शाकिनी परिकीर्तिता ॥५१॥ दूर्वो नाम पिता चास्य तपस्वी वेदपारगः । पत्नी पतिव्रता प्रोक्ता सावित्री कुलजाऽभवत् ॥५२॥ यौवनस्थः स्त्रियं त्यक्त्वा परस्त्रीलालसोऽभवत् । कदाचिद्गौडपुर्यां का वेश्या रूपवती ययौ ॥५३॥ तां दृष्ट्वा विस्मितोऽत्यंतं तया रेमे निरंतरम् । हृत्वा गृहस्थं द्रव्यं स ददौ तस्यै विशेषतः ॥५४॥ पात्रभूषण-काद्यं वै हृत्वा परगृहस्थितम् । चौर्यमद्यादिसंयुक्तस्तया रेमे सुदुर्मतिः ॥५५॥ कदाचित् स निशायां वै नागतः स्वगृहे नृप । तदर्थं मुनिमुख्योऽसौ दूर्वो बभ्राम तत्पुरे ॥५६॥ जनाः केऽपि न विप्रं त्वकथयंस्तं विशेषतः । पुत्रस्य दुर्विनीतस्य चरित्रं क्रोधभीतितः ॥५७॥ गृहे गृहे स्वपुत्रं स नालभच्च ततो ययौ । निशीथे स्वगृहे प्राप्ते पप्रच्छ वनितां द्विजः ॥५८॥

सोवाच नागतः स्वामिन् पुत्रो मे स्वगृहे प्रभो । एकपुत्रस्नेहवशात् पुनस्तं सो गवेषयत् ॥५९॥ निशीथे निद्रिते लोके जनान् पप्रच्छ मार्गगान् । बुधः कुत्र प्रदृष्टो मामेकं वदत पुत्रकम् ॥६०॥ एवं नाना जनास्तेन पृष्टास्तेन जगुः सुतम् । ततो भीमोऽत्यजो वृद्धो मिलितस्तं जगाद सः ॥६१॥ तेनैव कथितं स्पष्टं पुत्रो वेश्यागृहे स्थितः । मद्यपः किं पृच्छसि त्वं तपस्विन् जातिदूषणम् ॥६२॥ तस्य तद्वचनं श्रुत्वा विस्मितो मुनिपुंगवः । वेश्यागृहे स्वपुत्रं तं दृष्ट्वोवाच मदान्वितम् ॥६३॥ किं त्वं मद्यप वेश्याया गृहे तिष्ठसि दूषक । अधुना देहमुत्सृज्य व्रजस्व यममंदिरे ॥६४॥ पुन्नामनरकात् त्राता पुत्रस्तेन प्रकीर्तितः । नरकप्रद एवं मे किमर्थं पुत्र आगतः ॥६५॥ एवं पितुर्वचः श्रुत्वा बुधः क्रोधसमन्वितः । लत्तया ताडयामास पितरं च पुनः पुनः ॥६६॥ वृद्धः क्षुधातुरः सोऽपि मर्मस्थाने प्रहारतः । ममार तं प्रगृह्याऽसौ बुधश्चिक्षेप वै बहिः ॥६७॥ प्रभाते स्वगृहे पुत्रमागतं सा बुधं ततः । जननी स्नेहसंयुक्ता पप्रच्छ क्व स्थितं त्वया ॥६८॥ गवेषितुं च ते पुत्र पिता त्वां प्रजगाम ह । तमानय महाभाग ततः स्नानं समाचर ॥६९॥ मातुर्वचनमेवं स बुधः श्रुत्वा पुनः पुनः । क्रोधयुक्तः स्वयष्ट्या तां ताडयामास मस्तके ॥७०॥ मस्तकः स्फुटितस्तस्याः सा ममार तपस्विनी । बहिः प्रक्षिप्य तां वेश्यागृहमागात् स हर्षितः ॥७१॥ अदहंस्तौ जनाः संतो ब्राह्मणीं ब्राह्मणं तथा । पितृगौरवभावेन राजा तं न शशास ह ॥७२॥ पुनर्गृहागतं सा तं सावित्री दुःखसंयुता । उवाच किं कृतं स्वामिन् पितुर्मातुर्वधात्मकम् ॥७३॥ वेश्यां त्वं मां परित्यज्य किमर्थं गच्छसि प्रभो । सर्वावयवसंपूर्णां सुंदरीं धर्मपालिनीम् ॥७४॥ चतुरा करजेष्वेव नरदेहः सुदुर्लभः । ज्ञानकर्मादिसंयुक्तस्तत्र ब्राह्मण्यकं कुतः ॥७५॥ ब्राह्मणत्वं समासाद्य पापमिच्छति दुर्मतिः । निधिं त्यक्त्वा स्वहस्तस्थं विष्ठाभक्षणलालसः ॥७६॥ तथा कृतं त्वया नाथ तेनाऽहं दुःखिता भृशम् । कां गतिं च त्वया सार्धं गमिष्यामि महामते ॥७७॥ एवमाकर्ण्य दुष्टात्मा तां जघान स्वयष्टितः । काष्ठैः सा मर्मभेदेन ममार स्वर्गगाऽभवत् ॥७८॥ एवं स्वल्पे गते काले बुधोऽगात् स्वगुरोर्गृहे । अयभद्गुरुपत्नीमेकाकिनीं तां सुदुर्मतिः ॥७९॥ दारुणानि च पापानि एवं नानाविधानि सः । चकारांते गृहे याम्ये यातनां बुभुजे ततः ॥८०॥ भुक्तभोगः स वैश्योऽयं जातः कुष्ठसमन्वितः । पापाचरणमत्रापि कुरुते दारुणं महत् ॥८१॥ द्रव्यलोभार्थमेवायं वने गत्वा द्विजादिकान् । हंति नित्यं सतीनां च स वने दूषकोऽभवत् ॥८२॥ शूरसेन अतस्त्यक्त्वैनं याहि त्वं गजाननम् । अस्य स्पर्शेन राजेंद्र सचैलं स्नानमापतेत् ॥८३॥ दूतानां वचनं श्रुत्वा

कंपितो राजसत्तमः । जगाद तान् प्रणम्यैव हा हा कृत्वा सुदारुणम् ॥८४॥ शूरसेन उवाच । पापानां गणना नास्ति प्रायश्चित्तं न विद्यते । अधुना तादृशं चात्र मया किं क्रियते गणाः ॥८५॥ कृपया सर्वपापानां प्रायश्चित्तं महाद्भुतम् । कथ्यतां तत् करिष्यामि देहपातावधिं किल ॥८६॥ ततस्तं गाणपत्यास्तेऽब्रुवन् हर्षसमन्विताः । गजानन इति प्राज्ञ श्रावयस्व जनाधमम् ॥८७॥ चतुर्वेदसमुद्भूतं सारं ब्रह्ममुखोद्गतम् । चतुर्मुखैश्च संगीतं सुयोगेन गजाननम् ॥८८॥ तेषां वचनमाकर्ण्य शूरसेनः प्रहर्षितः । गजाननेति वैश्यस्याऽजपत् कर्णे स सादरः ॥८९॥ श्रुत्वा पापविनिर्मुक्तो वैश्यः स्वर्णतनुर्यथा । कुष्ठहीनः स शोभाभिर्युक्तो वै हर्षितोऽभवत् ॥९०॥ ततः सर्वैः समायुक्तो नगरस्थैर्विशेषतः । चतुराकरजै राजा ययौ विघ्नेशमादरात् ॥९१॥ स्वानंदे गणपं दृष्ट्वा ब्रह्मभूताश्च जंतवः । बभूवुः स यथा राजा गाणपत्यो बभूव ह ॥९२॥ ब्रह्मभूतः स राजेंद्रो व्रतपुण्यप्रभावतः । जंतुभिः सहितश्चातः कोऽहं वर्णयितुं व्रतम् ॥९३॥ चतुर्विधं जगत् सर्वं संकष्टं संमतं नृप । तत्त्यक्त्वा व्रतपुण्येन ब्रह्मभूतो भवेन्नरः ॥९४॥ इदं माघचतुर्थ्यास्तु संकष्टयाः संशृणोति यः । माहात्म्यं वाऽपि पठति सर्वार्थं लभते परम् ॥९५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते माघकृष्णचतुर्थीमाहात्म्यवर्णनं नाम विंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । ब्रह्मन् श्रुत्वा च वै माघी संकष्टीजं सुविस्मितः । माहात्म्यं सर्वदं पुण्यं सर्वसंकटहारकम् ॥१॥ फाल्गुने कृष्णपक्षे या चतुर्थी संकटी मता । तस्याश्चरित्रमेवं मे कथयस्व कृपानिधे ॥२॥ वसिष्ठ उवाच । पौलस्त्यो रावणः प्रोक्तस्तपस्तप्त्वा सुदारुणम् । वरं लब्ध्वा त्रिलोकस्य राज्यं चक्रे महाबलः ॥३॥ प्रधानेषु समाक्षिप्य राज्यं राक्षससत्तमः । एकांते निर्जने गत्वा ध्यानसंस्थो बभूव ह ॥४॥ वेदोपनिषदि प्रोक्तं ब्रह्म वेदांतपारगम् । ध्यायति स्म विचारज्ञो ज्ञानयोगपरायणः ॥५॥ एवं बहौ गते काले न लेभे ज्ञानमुत्तमम् । तदा खेदसमायुक्तः सोऽतिष्ठच्छंकरं स्मरन् ॥६॥ ततः शिवेन तत्रैव प्रेषितो नारदो मुनिः । तं दृष्ट्वा नारदं रक्षः प्रणनाम कृतांऽजलिः ॥७॥ पप्रच्छ खेदसंयुक्तो नारदं योगिनां वरम् । स्वामिन् ज्ञानप्रदं किंचिद्वदस्व करुणायुतः ॥८॥ ज्ञानार्थं ध्याननिष्ठोऽहं नित्यं तिष्ठामि चादरात् । न लेभे तन् महत्

ज्ञानं किं करोमि महामुने ॥९॥ नारद उवाच । शिवेन प्रेषितोऽहं वै त्वदर्थं राक्षसोत्तम । शृणु ज्ञानप्रदं पूर्णं वाक्यं तत्कुरु सादरः ॥१०॥ चतुर्विधं जगद्ब्रह्म संकष्टं संमतं बुधैः । तन्नाशार्थं व्रतं मुख्यं संकष्टीसंज्ञकं कुरु ॥११॥ एवमुक्त्वा चतुर्थ्याः स माहात्म्यं नारदोऽब्रवीत् । तच्छ्रुत्वा रावणस्तं चाब्रवीद्धर्षसमन्वितः ॥१२॥ रावण उवाच । कीदृशोऽयं गणाधीशस्तस्य ज्ञानं वद प्रभो । यस्य व्रतं चतुर्णां च पदार्थानां प्रदायकम् ॥१३॥ न कृतं चेच्चतुर्णां तन्नाशकं नाऽत्र संशयः । सर्वादौ संमतं विप्र सर्वसिद्धिप्रदायकम् ॥१४॥ एवं पृष्टो महायोगी नारदस्तमुवाच ह । हर्षेण महता युक्तो रावणं लोकरावणम् ॥१५॥ नारद उवाच । महज्ज्ञानं कथयितुं गणेशस्य न शक्यते । उपाधिना वदिष्यामि राक्षसाधिप तच्छृणु ॥१६॥ गणः समूहरूपश्च समूहा ब्रह्मवाचकाः । बाह्यांतरादियोगेऽयं समूहो जायते यतः ॥१७॥ देहिदेहमयं ब्रह्म गकाराक्षरवाचकम् । संयोगायोगरूपं यणकाराक्षरगं मतम् ॥१८॥ तयोर्योगे गणेशश्च स्वामी सर्वत्र संमतः । तं भजस्व विधानेन तदा शांतिमवाप्स्यसि ॥१९॥ एवमुक्त्वा गणेशस्य ददौ मंत्रं दशाक्षरम् । रावणाय महायोगी विधियुक्तं तमब्रवीत् ॥२०॥ यदि त्यजसि दैत्येंद्र तदा भ्रंशमवाप्स्यसि । अतो गणेशमंत्रो न त्याज्यो रक्षः कदाचन ॥२१॥ एवमुक्त्वा महातेजा नारदोंऽतर्दधे स्वयम् । रावणस्य तदा प्राप्ता संकष्टी फाल्गुनी नृप ॥२२॥ सा कृता तेन हर्षेण विधियुक्तेन कर्मणा । व्रतपुण्यप्रभावेण स्फूर्तिः प्राप्ता च तत्क्षणात् ॥२३॥ चकार स ततः शुक्लां कृष्णां वै राक्षसाधिपः । जनान् विशेषेणाबोध्य सह तैर्गणपे रतः ॥२४॥ ततो ज्ञानं समालब्धं रावणेन महात्मना । ययौ स्वनगरे दैत्यै राज्यं चक्रे मदान्वितः ॥२५॥ दुष्टसंगतियोगेन क्रमेण ज्ञानमुत्तमम् । नष्टं तस्य सुदुष्टस्य स्त्रीमांसादिपरोऽभवत् ॥२६॥ अहं गणेशरूपश्च नाऽन्यो जगति वर्तते । न पापपुण्यभोक्तृत्वं कस्य पूजनमाचरे ॥२७॥ ततो ज्ञानमदेनैव त्यक्तो मंत्रः सुखप्रदः । व्रतं त्यक्तमिदं पुण्यं पूजा त्यक्ता विशेषतः ॥२८॥ नष्टं ज्ञानं स्थितिर्निष्ठा राक्षसो राक्षसोऽभवत् । धर्मलोपे रतोऽत्यंतं चकार कर्मखंडनम् ॥२९॥ तेनैव दोषयुक्तोऽभूद्धतो रामेण तत्क्षणात् । राक्षसैः स्वजनैः सार्धं तव पुत्रेण धीमता ॥३०॥ दशरथ उवाच । अहं वंद्यश्च विप्रेश रावणश्च प्रवर्तते । किमिदं भाषसे स्वामिन् कूटरूपं भ्रमप्रदम् ॥३१॥ वसिष्ठ उवाच । कल्पे कल्पे स रामो वै तव पुत्रोऽभवत्प्रभुः । जघान रावणं वीरो गाणपत्यबलान्वितः ॥३२॥ अन्यच्छृणु चरित्रं त्वं फाल्गुने संकटीभवम् । सर्वपापहरं पूर्णं भुक्तिमुक्तिप्रदायकम् ॥३३॥ महाराष्ट्रे द्विजः कश्चित् पापकर्मा बभूव ह । ब्राह्मणत्वं परित्यज्य चांडाल्यां

निरतोऽभवत् ॥३४॥ चांडालैर्योनिसंबंधं पुत्रपुत्रीसमुद्भवम् । चकार मंदधीः सोऽपि मद्यमांसपरायणः ॥३५॥ स कदाचिद्वने संस्थो जनान् हंतुं समुद्यतः । द्रव्यलोभी महापापी परस्त्रीलालसोऽभवत् ॥३६॥ तत्र फाल्गुनमासे सा चतुर्थी कृष्णगाऽऽगता । संस्थितः पर्वतद्रोण्यां बभूव ब्राह्मणोऽधमः ॥३७॥ तत्र कश्चिन्नृपः सैन्यैश्चतुरंगैः समागतः । तद्भयात् सोऽपि तत्रैव संस्थितोऽन्नजलैर्विना ॥३८॥ महत् सैन्यं नृपस्यैव मार्गे गमनकारकम् । किंचिद्दिवसशेषे तत् संपूर्णगतमाभवत् ॥३९॥ ततः सोऽपि बहिर्वीक्ष्य निःसृतो भयवर्जितः । जगाम स्वगृहं चंद्रोदये दुष्टः क्षुधातुरः ॥४०॥ बभक्षान्नं स्वपुत्रैः स रात्रौ सुप्तो निजालये । तत्र सर्पेण दष्टश्च ममार नृप दुर्मतिः ॥४१॥ ततो गणेशदूतैः स नीतः स्वानंदके पुरे । दृष्ट्वा विघ्नेश्वरं तत्र ब्रह्मभूतो बभूव ह ॥४२॥ अज्ञानव्रतपुण्येन विधिहीनेन भो नृप । मुक्तश्चतुर्भिरेवं स किं पुनर्ज्ञानिनां परम् ॥४३॥ एतादृशा महाभागा विधियुक्ता विधिं विना । व्रतपुण्यप्रभावेण ब्रह्मभूता बभूविरे ॥४४॥ तत्रैवं कति ते ब्रूयां नालं वर्षायुतैरपि । भवामि नृप माहात्म्यं संक्षेपेण निरूपितम् ॥४५॥ इदं फाल्गुनमासे या चतुर्थी कृष्णगा मता । तस्याः शृणोति माहात्म्यं पठेद्वा सर्वमालभेत् ॥४६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते फाल्गुनकृष्णचतुर्थीवर्णनं नामैकविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । चैत्रकृष्णचतुर्थी या तां मे वद महामुने । न तृप्यामि गणेशस्य कथां श्रुत्वा सुखप्रदाम् ॥१॥ वसिष्ठ उवाच । अत्र ते कथयिष्यामि चेतिहासं पुरातनम् । चतुर्थीमहिमायुक्तं सर्वसिद्धिप्रदायकम् ॥२॥ कलिंगे नृपवर्यश्चोग्रसेनो धर्मतत्परः । यज्वा दानपरो नित्यं धर्मात्मा शंसितव्रतः ॥३॥ शस्त्रास्त्रकुशलो धीमान् सत्यवाक् नीतिसंयुतः । जित्वा राजगणान् सर्वांश्चकार राज्यमुत्तमम् ॥४॥ तस्य राज्ये नृपश्रेष्ठ बभक्षुः सर्वमानवान् । अपारास्तत्पुरे व्याघ्राः समागत्य महाबलाः ॥५॥ उग्रसेनश्च शस्त्रैस्तान् जघान नृपसंयुतः । तथा स्म न शमं यांति व्याघ्रा दैवोद्भवा यथा ॥६॥ लोकाः संपीडिता व्याघ्रैर्निनिंदुस्तं नृपं तदा । पापकर्मा नृपोऽयं वै प्रजाभ्यो दुःखदायकः ॥७॥ धर्मयुक्तो यदा राजा प्रजास्तत्र सुखे रताः । किं कर्तव्यं प्रजाभिश्च दुष्टे राजनि नित्यदा ॥८॥ स राजर्षिर्दूतमुखाच्छ्रुत्वा दुःखसमन्वितः । ययौ वनं प्रधानेषु राज्यं त्यक्त्वा सुदारुणम् ॥९॥ तत्र गत्वा स एकांते तताप तप उत्तमम् ।

सूर्यं ध्यात्वा च सौरैस्तं तोषयामास नित्यदा ॥१०॥ निराहारपरो राजा गते वर्षे बभूव ह । अस्थिचर्मावशेषः स तथाऽपि तप आचरत् ॥११॥ ततो ब्राह्मणरूपेण रविस्तं प्रजगाम ह । राजा प्रणम्य तं विप्रं फलैरापूजयत्ततः ॥१२॥ फलानि भक्षयित्वा स उवाच राजसत्तमम् । तपः किमर्थं राजन् ते देहं शोषयसे वद ॥१३॥ उग्रसेनस्ततो विप्रं तमुवाच कृतांजलिः । दुःखेन महता युक्तो निःश्वस्य स पुनः पुनः ॥१४॥ उग्रसेन उवाच । करोमि नीतियुक्तेन राज्यं धर्मेण नित्यदा । तत्र व्याघ्रगणाः क्रूरा नरान् संभक्षयंति भोः ॥१५॥ शांतयेऽत्र मया तेषां नानोपायाः कृता मुने । अपरास्ते भवंतीह तदर्थं तप आचरम् ॥१६॥ राज्ञो वचनमाकर्ण्य विप्रस्तं पुनरब्रवीत् । निंदयन् सर्वभावेन साक्षाद्भानुः प्रतापवान् ॥१७॥ द्विज उवाच । महापापी त्वमेवासि कर्मदूषणतो नृप । चतुर्थीजं व्रतं मुख्यं नष्टं राज्ये सुदुर्मते ॥१८॥ सर्वादौ तत् प्रकर्तव्यं सर्वसिद्धि-प्रदायकम् । तदा कर्म कृतं भूप फलयुक्तं भवेत् सदा ॥१९॥ चतुःपदार्थदं पूर्णं व्रतानामुत्तमं व्रतम् । व्याघ्रास्तद्दोषभावेन पीडयंति च मानवान् ॥२०॥ एवमुक्त्वा चतुर्थीजं माहात्म्यं द्विजसत्तमः । श्रावयामास तस्मै स श्रुत्वा सोऽभूत् सुविस्मितः ॥२१॥ जगाद हर्षसंयुक्तस्तं विप्रं ज्ञानदं परम् । कृतांजलिः प्रणम्याऽसौ वचनं स्वहितप्रदम् ॥२२॥ उग्रसेन उवाच । किं त्वं साक्षात् स्वयं भानुस्तपसा तुष्टचेतसा । आगतोऽनुग्रहार्थं मे धन्योऽहं ते प्रदर्शनात् ॥२३॥ अधुना वद मे ब्रह्मन् गणेशस्य स्वरूपकम् । ज्ञात्वा तं देवदेवशं भजिष्यामि विशेषतः ॥२४॥ द्विज उवाच । शृणु राजन् गणेशस्य स्वरूपं योगदं परम् । भुक्तिमुक्तिप्रदं पूर्णं धारितं चेन्नरेण वै ॥२५॥ चित्ते चिंतामणिः साक्षात् पंचचित्तप्रचालकः । पंचवृत्तिनिरोधेन प्राप्यते योगसेवया ॥२६॥ असंप्रज्ञातसंस्थश्च गजशब्दो महामते । तदेव मस्तकं यस्य देहः सर्वात्मकोऽभवत् ॥२७॥ भ्रांतिरूपा महामाया सिद्धिर्वामांगसंश्रिता । भ्रांतिधारकरूपा च बुद्धिः सा दक्षिणांगके ॥२८॥ तयोः स्वामी गणेशश्च मायाभ्यां खेलते सदा । तं भजस्व विधानेन तदा शं लभसे नृप ॥२९॥ एवमुक्त्वा गणेशस्य ददौ मंत्रं दशाक्षरम् । विधियुक्तं ततः सूर्योऽतर्धानं प्रचकार ह ॥३०॥ राजा स्वनगरे गत्वा प्रधानैरनुमोदितः । कथयामास वृत्तांतं सर्वेभ्यः सुखदायकम् ॥३१॥ तत्रादौ चैत्रगा कृष्णा चतुर्थी सहसाऽऽगता । तां चकार विधानेन गणेशे भक्तिसंयुतः ॥३२॥ समीपे नागराः संस्था नरा ग्रामांतरे स्थिताः । चक्रुस्ते हर्षसंयुक्ताः संकष्टीं कष्टहारिणीम् ॥३३॥ तत् सर्वत्र व्रतं मुख्यं प्रशस्तं स चकार ह । भयाद्धठेन चक्रुस्ते जना भूमिस्थिताः परे ॥३४॥ ततो व्याघ्रा महोग्राः स सर्वेंऽतर्धानमाययुः । रोगादिभिर्विनिर्मुक्ताश्चिक्रीडुर्हर्षिता

जनाः ॥३५॥ राजा गणपतिं नित्यमभजन्नान्यचेतसा । गुरुरूपेण भानुं स पूजयामास नित्यदा ॥३६॥ गते काले ततः पुत्रं स संस्थाप्य महामतिः । राज्ये निवृत्तिमास्थाय गणेशमभजत् परम् ॥३७॥ अंते स्वानंदगो भूत्वा ब्रह्मभूतो बभूव ह । तस्य राज्ये जनाः सर्वे क्रमात्ते मुक्तिमाप्नुवन् ॥३८॥ एवं व्रतस्य माहात्म्यं लेशतः कथितं मया । अन्यच्छृणु महाभाग पापनाशकरं परम् ॥३९॥ द्राविडे भिल्लजातिस्थः क्षत्रियः पापकारकः । भिल्लैः संस्कारहीनश्च संबंधं स चकार ह ॥४०॥ एकदा वनसंस्थश्च द्रव्यलोभी दुरात्मवान् । कंचित् दृष्ट्वा नरं तत्राऽधावच्छस्त्रप्रधारकः ॥४१॥ पपाल सोऽपि दूरं वै नरो भयसमन्वितः । ऋक्षस्तत्र समायातो वने कश्चिन् महाबलः ॥४२॥ तेनैव क्षत्रियः पापी धृतो वेगेन भूमिप । ऋक्षं स तं स शस्त्रेण पातयामास भूतले ॥४३॥ भिल्लस्तत्र पपाताऽसौ भृशमृक्षेण पीडितः । निर्जने वनमध्ये स विललापाऽतिदारुणम् ॥४४॥ दैवयोगेन सा देवी चैत्री संकष्टहारिणी । तद्दिने तेन संप्राप्ता चतुर्थी कृष्णपक्षगा ॥४५॥ जलान्नसंविहीनोऽयं बभूवे पापकारकः । चंद्रोदये फलं तत्र पपात नृप वृक्षतः ॥४६॥ दुष्टेन क्षत्रियेणैव भक्षितं विकलेन तत् । पंचम्यां स मृतस्तत्र ब्रह्मभूतो बभूव ह ॥४७॥ एवं नाना जना राजन् व्रतस्यैव प्रभावतः । इह भुक्त्वाऽखिलान् भोगानंते ब्रह्म प्रलेभिरे ॥४८॥ तत्र ते कति शक्यं न वक्तुं वर्षायुतैरपि । नानेन सदृशं किंचिद्व्रतं सर्वार्थदायकम् ॥४९॥ अज्ञानेन कृतं दुष्टैर्व्रतं गाणेश्वरं महत् । ब्रह्मभूतकरं प्रोक्तं ज्ञानिनां तत्र का कथा ॥५०॥ इदं चैत्रचतुर्थ्या यो माहात्म्यं प्रपठेन्नरः । शृणोति चेच्च कृष्णायाः स सर्वं प्रलभेद् ध्रुवम् ॥५१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते चैत्रकृष्णचतुर्थीचरितवर्णनं नाम द्वाविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । वैशाखे कृष्णगायास्त्वं चतुर्थ्या वद सांप्रतम् । माहात्म्यं मुनिशार्दूल न तृप्यामि समासतः ॥१॥ वसिष्ठ उवाच । अगस्त्यो मुनिमुख्यश्च समुद्रशोषणे रतः । न शशाक महातेजा ब्रह्माणं शरणं ययौ ॥२॥ ब्रह्मणा नोदितः सोऽपि चकार व्रतमुत्तमम् । वैशाखे कृष्णपक्षे स चतुर्थ्यां विधिपूर्वकम् ॥३॥ ज्ञात्वा माहात्म्यमुग्रं स नित्यं मंत्रपरायणः । शौक्लं कार्ष्णं व्रतं सर्वैश्चकार मुनिसत्तमैः ॥४॥ दशरथ उवाच । तपस्तेजोयुतः साक्षादगस्त्यः सर्वशास्त्रवित् । व्रतहीनः कथं सोऽपि कुंठितश्च महाद्युतिः ॥५॥ वसिष्ठ उवाच । शृणु राजन् महाभाग सम्यक् पृष्टं विचक्षण ।

अधुना तस्य माहात्म्यं कथयामि समासतः ॥६॥ अगस्त्यस्तपसा युक्तो बभूवाऽतीव दारुणः । न समस्तेन राजेंद्र ब्राह्मणेषु तपस्विषु ॥७॥ न व्रतं तेन तदपि कृतमज्ञानभावतः । ब्रवीमि कारणं तत्र शृणु संशयनाशनम् ॥८॥ वेदशास्त्रपुराणेषु कर्म नानाविधं नृप । कथितं तच्च सर्वं तु कर्तुं केन प्रशक्यते ॥९॥ स्वेच्छया कर्मणः कर्ता स्वयं भवति मानवः । तत्र मार्गं प्रवक्ष्यामि शृणुष्व सुसमाहितः ॥१०॥ नित्यं नैमित्तिकं कर्म द्विविधं शास्त्रमार्गतः । तत्रागस्त्यश्चकाराऽसौ नित्यं कर्म महीपते ॥११॥ अन्यव्रतादिकं सर्वं त्यक्त्वा विधिसमन्वितः । तपस्सु तत्परो नान्यदजानात् स तपोधनः ॥१२॥ अतस्तेन व्रतं मुख्यं न धृतं राजसत्तम । न समर्थेन शास्त्रेऽन्यच्छृणुष्व कथयामि ते ॥१३॥ गणेशभजनं मुख्यं सर्वेषां नात्र संशयः । सर्वसिद्धिकरं प्रोक्तं वेदादिषु विशेषतः ॥१४॥ राजशार्दूल तदपि नराः संस्कारहीनकाः । नाभजंस्तं गणेशानं ब्रह्मणां नायकं परम् ॥१५॥ तपसा दग्धपापश्च पुण्यराशिः प्रजायते । तदा रुचिर्भवेत्तत्र गणेशे भक्तिसंयुता ॥१६॥ अतोऽयं तपसा युक्तोऽगस्त्यस्तेजस्विनां वरः । जातः पात्रं विजानीहि ज्ञाने गाणेशसंज्ञिते ॥१७॥ अगस्त्यः क्रोधसंयुक्तो नृप वातापिरक्षकम् । समुद्रं तं शोषयितुं क्षोभयामास चोद्यतः ॥१८॥ तत्राऽतिकुंठितो जातस्तदर्थं विस्मितः स्वयम् । गत्वा ब्रह्माणमानम्य वचनं स जगाद ह ॥१९॥ अगस्त्य उवाच । तपसा जलधिं ब्रह्मन् शोषयामि न संशयः । तत्र मे तपसः शक्तिः कुंठिताऽभूत् कथं वद ॥२०॥ ब्रह्मोवाच । शृणु पुत्र महाभाग कारणं कथयामि ते । नित्यकर्मपरस्त्वं वै सदा तपसि संस्थितः ॥२१॥ गणेशस्मरणं वत्स पूजनं नित्यमादरात् । करोषि तेन भवति कर्म ते सफलं मुने ॥२२॥ तथापि नित्यवत्तात चतुर्थी व्रतमुत्तमम् । कर्तव्यं यत्त्वया त्यक्तं तन्नैमित्तिकमानतः ॥२३॥ चतुर्णां पुरुषार्थानां दायकं शास्त्रसंमतम् । तेन हीनस्त्वमद्यैव कुंठितो नात्र संशयः ॥२४॥ अधुना तद्व्रतं मुख्यं कुरु भावसमन्वितः । नित्यवत्तन् महाभाग समाचर विशेषतः ॥२५॥ तदा संकटहीनस्त्वं चतुष्पदसमन्वितः । पूर्णयोगी भवसि वै गाणपत्यमवाप्स्यसि ॥२६॥ ततस्तेन कृतं राजन् व्रतं गाणेश्वरं महत् । पुरुषार्थसमायुक्तस्तेनैव स बभूव ह ॥२७॥ समुद्रं शोषयामास व्रतपुण्यप्रभावतः । अचलां गणनाथस्य भक्तिं चकार नित्यदा ॥२८॥ ततस्तेन मुनींद्रेषु विख्यातं तत् कृतं व्रतम् । नित्यवत्ते व्रतं मुख्यं चक्रुः सर्वार्थसिद्धये ॥२९॥ अन्यच्च शृणु माहात्म्यं पुण्यदं श्रवणान्नृणाम् । अवंतीनगरे वैश्यो बभूव पापकारकः ॥३०॥ बाल्यात् प्रारभ्य तेनैव कृतं पापं महाद्भुतम् । मरणावधि राजेंद्र वक्तुं तन्न प्रशक्यते ॥३१॥

मातृहा द्रव्यलोभार्थं पितृहा संबभूव ह । गुरुद्रोहं चकारैव ब्रह्महत्यां समाचरत् ॥३२॥ ततो लोकैः समाज्ञप्तो राजा तं निरवासयत् । ग्रामाद्वनं समागत्य गुहायां संस्थितोऽभवत् ॥३३॥ जघान मार्गगान् लोकान् जीवाज्ञानाविधान् सदा । तत्र प्रयोजनेनैव हीनो वा युक्त एव वा ॥३४॥ ततो बहुधनो जातश्चौराः संमिलिताः परे । सह तैस्तत्र तेनैव कृतं दुर्गं सुदुर्गमम् ॥३५॥ पर्वतद्रोणगं तत्र गृहं चक्रे महाखलः । चौरास्तत्र निवासार्थमाययुः सर्वतः स्थिताः ॥३६॥ तेषां राजा बभूवाऽसौ भार्या तत्र महीपते । समानीताऽतिदुष्टेन पुत्रपुत्रीभिरावृता ॥३७॥ यथेष्टं रमते तत्र चौरैश्चौर्यपरायणः । चकार लेशमात्रं स न पुण्यं दुर्मतिः कदा ॥३८॥ मार्गे परस्त्रियं धृत्वा स सतीदूषकोऽयभत् । काश्चित्तत्र मृता राजन् स्त्रियः सत्यो महाभयात् ॥३९॥ सोऽवंतीपालको लोकै राजेंद्रो बोधितस्ततः । मार्गरोधभयाच्चौरं तं हंतुं प्रोद्यतोऽभवत् ॥४०॥ सर्वत्र दशदिक्ष्वेव सैनिकाः प्रेषितास्ततः । राज्ञा चक्रुः प्रयत्नेन रुद्धं सर्वत्र तं खलम् ॥४१॥ ततस्ते संधृतं चौरं पुत्रश्चौरैः समन्वितम् । राज्ञे निवेदयामासुस्तं दुष्टं वैश्ययोनिजम् ॥४२॥ राजा चौरान् जघानापि जनैः शस्त्रधरैर्नृप । तं वैश्यं बंधने क्षिप्त्वा ताडयन्नित्यदा खलम् ॥४३॥ ततोऽकस्माच्चतुर्थी सा वैशाखी सहसाऽऽगता । कृष्णा तत्र च वैश्येन न प्राप्तं त्वन्नभक्षणम् ॥४४॥ नित्यताडनभावेन दुःखितोऽतितरां खलः । क्षुधया पीडितोऽत्यंतं पापी स निशि चैककः ॥४५॥ ततो दयायुतैस्तत्र राजदूतैश्च भक्षणम् । किंचिद्दत्तं विधोरेवोदये वैश्यो बभक्ष सः ॥४६॥ पंचम्यां स मृतस्तत्र बंधने ताडितो भृशम् । गाणेशैर्ब्रह्मभूतः स कृतः स्वानंदके पुरे ॥४७॥ एतादृशः सुदुष्टात्मा व्रतपुण्यप्रभावतः । ब्रह्मभूतो बभूवाऽपि किं पुनर्व्रतकारिणः ॥४८॥ एवं व्रतप्रभावेण जना ब्रह्म प्रलेभिरे । तेऽत्र वक्तुं न शक्या वै भवंति नृपसत्तम ॥४९॥ इदं वैशाखमासे वै चतुर्थ्याः संशृणोति चेत् । कृष्णाया वाऽपि पठति माहात्म्यं लभते परम् ॥५०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते वैशाखकृष्णचतुर्थीचरितं नाम त्रयोविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । माहात्म्यं तच्छ्रुतं मुख्यं मया वैशाखके परम् । संकष्टीसंभवं मुख्यं न तृप्तस्तदपि प्रभो ॥१॥ अतो ज्येष्ठे चतुर्थी या संकष्टी मुनिसत्तम । तस्याश्चरितमेवं मे वद पूर्णं समासतः ॥२॥ वसिष्ठ उवाच । निषधेषु महाभागो नलो नामाऽभवन्नृपः । तेजस्वी शस्त्रसंपन्नः शास्त्रज्ञश्च बभूव ह ॥३॥ रूपवान् धनसंपन्नश्चतुरंगबलान्वितः । शस्त्रास्त्रैर्भूमिपालांश्च बभौ जित्वा महाबलान् ॥४॥ सामंता वशगा यस्य करदा इतरे नृपाः । सार्वभौमो महाराजः शशास पृथिवीमिमाम् ॥५॥ धर्मेण दानशीलेन नीत्या त्यागेन भूमिपः । यशसा पूरयामास त्रैलोक्यं स चराचरम् ॥६॥ इन्द्रलोके विधेर्लोके कैलासे वैष्णवे पदे । यस्य वार्तां प्रचक्रुस्ते धर्मशीलस्य देवपाः ॥७॥ त्रिलोकीगमने सक्तः साधुदर्शनतत्परः । देवविप्रातिथिप्रेप्सुर्दीनांधादीनपालयत् ॥८॥ दमयंती महाभागा रूपेणाऽप्रतिमा भुवि । भार्या यस्य विशालाक्षी जगन्मोहकरी बभौ ॥९॥ गुणा वर्णयितुं नैव शक्यास्तस्य महात्मनः । पुण्यश्लोकः स वै राजा कलिं जिग्ये महायशाः ॥१०॥ कदाचिद्दूनगेनैव भ्रात्रा कलिवशेन सः । जितो द्यूतेन राज्यं त्यक्त्वा वनं स जगाम ह ॥११॥ तत्राऽपि कलिना मत्स्यमिषेणैव महासती । प्रेरितेन नलेनाऽसौ त्यक्ता नृप वनांतरे ॥१२॥ अर्धवस्त्रधरा साऽपि दमयंती पितुर्गृहे । नानादुःखसमायुक्ता जगाम नलवर्जिता ॥१३॥ गुप्तरूपेण वर्षाणि त्रीणि क्रमणलालसः । नलो बभ्राम तेजस्वी वने वस्त्रार्धधारकः ॥१४॥ धर्मशीलं स राजानं कलिना पीडितं परम् । दृष्ट्वा मुनिवरस्तत्र नारदः प्रजगाम ह ॥१५॥ तं दृष्ट्वा लज्जितो राजा प्रणनाम कृतांजलिः । लज्जितं तं समाज्ञाय नारदः स उवाच ह ॥१६॥ नारद उवाच । मा लज्जां कुरु राजेंद्र कर्मणां गतिरीदृशी । सावधानमना भूत्वा शृणु मे परमं वचः ॥१७॥ तव राज्ये महाभाग व्रतं नष्टं महाद्भुतम् । चतुर्थी-संज्ञितं तेन राज्यभ्रष्टोऽसि सांप्रतम् ॥१८॥ सर्वादौ तत् प्रकर्तव्यं चतुर्वर्गफलप्रदम् । न कृतं चेन् महाराज कर्म सर्वं निरर्थकम् ॥१९॥ चतुःफलविहीनस्त्वं भवस्यत्र न संशयः । अतोऽवश्यकभावेन कुरु त्वं सर्वसिद्धिदम् ॥२०॥ एवमुक्त्वा महायोगी नारदः श्रावयन्नृपम् । माहात्म्यं व्रतमुख्यस्य चतुर्थ्याः शांतिकारकम् ॥२१॥ तच्छ्रुत्वा विस्मितो राजा नलस्तं प्रत्युवाच ह । गणेश्वरस्य माहात्म्यं भजिष्यामि वदस्व मे ॥२२॥ नारद उवाच । गणेश्वरस्य माहात्म्यं शांतियोगफलप्रदम् । वक्तुं न शक्यते राजंस्तथापि शृणु मे वचः ॥२३॥ ब्रह्मा विष्णुश्च शंभुश्च शक्तिः सूर्योऽमरास्तथा । शेषादिनागमुख्यास्तं भजंति कुलदैवतम् ॥२४॥ अन्नप्राणादिकान्येव ब्रह्माणि नृपसत्तम । भजंति तं विशेषेण कुलदेवं सनातनम् ॥२५॥

महावाक्यादिभिर्वेदास्तं भजंति सुयोगदम् । महावाक्यानि राजेंद्र भजंति ब्रह्मनायकम् ॥२६॥ सर्वसिद्धिप्रदा यस्य वामांगे प्रकृतिः परा । पंचचित्तमयी बुद्धिर्दक्षिणांगे व्यवस्थिता ॥२७॥ स्वानंदे वसतिर्यस्य सर्वपूज्योऽयमुच्यते । सर्वादिर्गणनाथश्च विप्रैः सोंऽतेषु तिष्ठति ॥२८॥ गणाः समूहरूपाश्चांतरबाह्यादियोगतः । तेषां स्वामी गणेशोऽयं तं भजस्व विधानतः ॥२९॥ एवमुक्त्वा ददौ तस्मै नृप मंत्रं षडक्षरम् । विधियुक्तं ततः सोंऽतर्दधे गाणेशको मुनिः ॥३०॥ ततः स नृपशार्दूलो ध्यात्वा हृदि गजाननम् । मंत्रं जजाप भावेन स्वात्मानं निंदयन् भृशम् ॥३१॥ ततः कर्कोटकेनैव दष्टस्तेन बभूव ह । विरूपस्तं ददौ वस्त्रं नागः पुनः स्वरूपदम् ॥३२॥ तेन संहर्षितो भूप ऋतुपर्णं जगाम ह । तेनैव मानितोऽत्यंतं विरूपो गुणसंयुतः ॥३३॥ पितुर्गृहे गता नारी दमयंती महासती । तद्व्रतं कारयामास गत्वा तामपि नारदः ॥३४॥ नलेन दमयंत्या तज्ज्येष्ठमासे समागतम् । प्रथमं तद्व्रतं मुख्यं संकष्टीसंज्ञकं कृतम् ॥३५॥ त्रीणि वर्षाणि पूर्णानि गुप्तरूपेण संस्थितः । नलश्चतुर्थीजेनैव पुण्येन ज्ञानवानभूत् ॥३६॥ ततः श्वशुरमागम्य ऋतुपर्णेन संयुतः । स्वात्मानं नागवस्त्रेण पूर्वरूपं चकार ह ॥३७॥ दमयंत्या युतः सोऽपि श्वशुरेण च सेनया । ऋतुपर्णेन राजेंद्रो गतः स्वनगरे ततः ॥३८॥ भ्रात्रा संमानितोऽत्यंतं चकार राज्यमुत्तमम् । विघ्नहीनः स्वभावेन हृष्टपुष्टजनैर्वृतः ॥३९॥ ततो बहौ गते काले पुत्रं राज्येऽभिषिच्य सः । सपत्नीको वने गत्वाऽभजत्तं गणनायकम् ॥४०॥ अंते जगाम राजाऽसौ स्वानंदे गणपं नृप । तत्रैव ब्रह्मभूतः स बभूव नलनामकः ॥४१॥ नलेन संप्रदिष्टा ये जना भूमितले ततः । शुक्लकृष्णचतुर्थीजं मुख्यं चक्रुर्व्रतं नृप ॥४२॥ ते सर्वे सुखसंयुक्ता बुभुजुः सुखमुत्तमम् । पुत्रपौत्रादिभिर्युक्ता रोगैः संवर्जिता नृप ॥४३॥ अंते क्रमेण सर्वे ते ब्रह्मभूता बभूविरे । एवं कृष्णे ज्येष्ठमासे माहात्म्यं संकटीभवम् ॥४४॥ कथितं ते नृपश्रेष्ठ पुनस्त्वं शृणु सिद्धिदम् । ज्येष्ठकृष्णचतुर्थीजं सर्वसंकटहारकम् ॥४५॥ मालवेंत्यजजः कश्चित् पापकर्मा बभूव ह । वनं गत्वा द्विजादीन् स जघान द्रव्यलोलुपः ॥४६॥ एकाकिनीं स्त्रियं दृष्ट्वा बलेन बुभुजे खलः । सती परनरस्पर्शहीना तत्याज सा तनुम् ॥४७॥ एवं नानाविधं पापं चकार जातिदूषणः । न तच्छक्यं कथयितुं पापभोगभयान् मया ॥४८॥ एकदा वनसंस्थश्च चांडालः शस्त्रधारकः । कंचित् पुरुषकं दृष्ट्वाऽधावत् स हननाय तम् ॥४९॥ पलायनपरः सोऽपि जगाम भयसंकुलः । हाहा कृत्वा पुरोदेशे स ततो निष्फलोऽभवत् ॥५०॥ एतस्मिन्नंतरे तत्र पुरुषाः शस्त्रधारकाः । राज्ञः समागतास्तत्र श्रुत्वा कोलाहलं तयोः ॥५१॥

ते धृत्वा ताडयामासुः पुनस्तं राजसेवकाः। बद्ध्वा राज्ञे ददुर्दुष्टं राजा चिक्षेप बंधने ॥५२॥ तत्रैव दैवयोगेन प्राप्ता ज्येष्ठ-चतुर्थिका। कृता तेनान्नहीनोऽयं बभूवे बंधनाकुलः ॥५३॥ चंद्रोदये दयायुक्तै रक्षकैस्तैर्महामते। अन्नं दत्तं तथा भुक्तं तेन दुष्टेन तत्क्षणात् ॥५४॥ राजाज्ञया च तं दुष्टं पंचम्यां जघ्नुरादरात्। स मृतोंत्यजजस्तत्र ब्रह्मभूतो बभूव ह ॥५५॥ एवं नाना जना राजन् व्रतपुण्यप्रभावतः। भुक्त्वा भोगांश्च ते सर्वे ब्रह्मभूता बभूविरे ॥५६॥ अपारमाहात्म्ययुतं व्रतं वक्तुं न शक्यते। तथाऽपि कथितं भूप माहात्म्यं संकटीभवम् ॥५७॥ इदं ज्येष्ठचतुर्थ्यास्तु कृष्णायाः संशृणोति यः। माहात्म्यं वा पठति स लभते स्वेप्सितं फलम् ॥५८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते ज्येष्ठकृष्णचतुर्थीवर्णनं नाम चतुर्विंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच। आषाढे संकटी प्रोक्ता चतुर्थी चरितं शुभम्। तस्या वद महायोगिन् सर्वदं पापनाशनम् ॥१॥ वसिष्ठ उवाच। अत्र ते कथयिष्यामि चेतिहासं पुरातनम्। सर्वसिद्धिकरं पूर्णं सेवितं चेन्नृपात्मज ॥२॥ वृत्रेण पीडितोऽत्यंतं महेंद्रश्चिंतयान्वितः। वने वसत्तु संत्रस्तस्त्यक्त्वा राज्यादिकं पुरा ॥३॥ मुनयः श्रुतिभिर्हीना भ्रष्टाचाराः समंततः। अतिष्ठंस्ते भयोद्विग्ना वर्णाः सर्वे तथा नृप ॥४॥ कर्मखंडनभावेन देवाः परमविह्वलाः। उपोषणपरा भूत्वाऽतिष्ठंस्ते मरणोन्मुखाः ॥५॥ गिरेर्गुहासु संस्थास्ते ददृशुर्मुनिपुंगवम्। विशेषज्ञं गृत्समदं योगिनां गुरुमागतम् ॥६॥ तं दृष्ट्वा दंडवत् सर्वे प्रणेमुश्चेन्द्रमुख्यकाः। पप्रच्छुः पूजयित्वा तं स्वासने संस्थितं मुनिम् ॥७॥ इन्द्र उवाच। दृष्टिर्धन्या जन्म धन्यं पिता माता व्रतादिकम्। यज्ञो ज्ञानादिकं मे वै त्वदंघ्रेर्दर्शनात् प्रभो ॥८॥ तव दर्शनमात्रेण कल्याणं नो भविष्यति। साक्षाद्योगीश्वरस्यैव सर्वसिद्धिप्रदस्य च ॥९॥ वृत्रासुरेण दुष्टेन निर्जिता वयमेव च। राज्यं त्यक्त्वा वने विप्र तिष्ठामः पशवो यथा ॥१०॥ अत्रातिकर्मनाशेनोपोषणेन समन्विताः। मरिष्यामो न संदेहस्तत्र किं दर्शनं भवेत् ॥११॥ तथाऽपि पुण्ययोगेन प्राप्तं ते दर्शनं परम्। वद ब्रह्मन् दयां कृत्वा वृत्रनाशकरं महत् ॥१२॥ जगत् सर्वं महायोगिन् भ्रष्टाचारं कृतं

सदा । किं पश्यसि सुसंहारे प्राप्ते योगींद्रसत्तम ॥१३॥ वसिष्ठ उवाच । एवं पृष्टो गृत्समदस्तमुवाच दयान्वितः । विश्वरक्षण-भावार्थं दुष्टनाशकरं वचः ॥१४॥ गृत्समद उवाच । राज्यं प्राप्य महाभाग सुर त्यक्ता चतुर्थिका । व्रतभ्रष्टोऽसि देवेंद्र अधुना तद्व्रतं कुरु ॥१५॥ ज्ञानमदेन विघ्नेशमंत्रस्त्यक्तस्तथा त्वया । किं चित्रं राज्यहीनत्वे दुर्मते मदलालस ॥१६॥ एवमुक्त्वा चतुर्थ्या यत् माहात्म्यं मुनिसत्तमः । कथयामास तस्मै तत् पुनर्मंत्रं ददौ स्वयम् ॥१७॥ यदृच्छया गते राजन् मुनाविंद्रेण तत्ततः । व्रतं कृतं द्विजैर्देवैर्गणेशं संप्रपूज्य च ॥१८॥ तत्रादौ देवराजेनाषाढी कृष्णा महातिथिः । प्राप्ता चतुर्थिका भूप सा कृता भूतिदायिका ॥१९॥ गणेशं मनसा ध्यात्वा दधीचेरस्थिजं महत् । वज्रं धृत्वा ययौ देवैर्वृत्रं युद्धपरायणः ॥२०॥ चतुर्थीव्रतजेनाऽसौ प्रभावेण महासुरम् । कृत्वा युद्धं महाघोरं वज्रेणैव जघान तम् ॥२१॥ हत्वा वृत्रं महावीर्यं देवैः सह शतक्रतुः । स्वस्थोऽभूदमरावत्या मुमुदे स्वजनैर्नृप ॥२२॥ ततो देवगणाः सर्वे स्वस्वस्थानेषु नित्यशः । शुक्लकृष्णभवं चक्रुश्चतुर्थीसंज्ञितं व्रतम् ॥२३॥ पृथिव्यां सर्वलोकास्तद्व्रतं चक्रुर्विशेषतः । इन्द्रेण बोधितं भक्त्या सर्वसिद्धिकरं महत् ॥२४॥ मन्वंतरे गते देवैरिन्द्रः स्वानंदगोऽभवत् । दृष्ट्वा विघ्नेश्वरं तत्र ब्रह्मभूतो बभूव ह ॥२५॥ भूमिसंस्था नराः सर्वे क्रमेण प्रययुर्नृप । गणेशं ब्रह्मभूतास्ते व्रतपुण्यप्रभावतः ॥२६॥ एतत्ते कथितं स्वल्पं माहात्म्यं व्रतसंभवम् । पुनरन्यच्छृणुष्व त्वं पापकंचुकनाशनम् ॥२७॥ गुर्जरे ब्राह्मणः कश्चिद् बाल्यात् पापपरायणः । परयोनिषु संसक्तो जीवघातं चकार ह ॥२८॥ एकदा भगिनी यब्धा तेन दुष्टेन चाऽभवत् । मद्यमांसपरेणाऽपि चरता वनगह्वरे ॥२९॥ द्रव्यलोभी जघानाऽसौ द्विजादींश्च विशेषतः । पशुपक्षिगणान् राजन् भ्रष्टाचारः सुदुर्मतिः ॥३०॥ नित्यं चकार स खलो यवनैः सह भोजनम् । न शक्यं तन्मया तस्य पापं वर्णयितुं परम् ॥३१॥ एकदा वनमध्यस्थो बभूवे जातिदूषकः । आषाढे कृष्णपक्षे स चतुर्थ्यां पापकारकः ॥३२॥ दैवयोगेन तेनैव न प्राप्तं वनगह्वरे । किंचित्तेनाऽतिदुःखार्तस्तदा बभ्राम पर्वते ॥३३॥ तथाऽपि नालभत् किंचित् ततो दुःखपरायणः । अपराह्णे पुनः सोऽपि स्वगृहं गंतुमुत्सुकः ॥३४॥ न ददर्श स तत्राऽपि जलान्नं दैवयोगतः । आजगाम क्षुधार्तः स स्वगृहे शोकसंयुतः ॥३५॥ यवनजां समालिंग्य निशि चंद्रोदये नृप । बभक्षान्नं सुतैः सार्धं मोहितो मायया भृशम् ॥३६॥ ततो ज्वरयुतोऽकस्माद्बभूवे पापनिश्चयः । राजन् यवनजातेन न स्पृष्टा पापकारिणी ॥३७॥ पंचम्यां स मृतस्तत्र भृशं दुःखेन पीडितः । गाणेशास्तं प्रगृह्यैव ब्रह्मभूतं प्रचक्रिरे ॥३८॥ एतादृशा महापापा उद्धरंति व्रतेन वै ।

अज्ञानकृतपुण्येन तत्र किं वर्णयाम्यहम् ॥३९॥ विधियुक्तं व्रतं भूप ये कुर्वंति नरोत्तमाः । दर्शनेन जनानां ते तारकाः संभवंति हि ॥४०॥ एवं व्रतप्रभावेण ब्रह्मभूता बभूविरे । अनंताश्चरितं तेषां वक्तुं नैव प्रशक्यते ॥४१॥ इदमाषाढसंकष्टयाश्चरितं यः शृणोति चेत्। पठेद्वा लभते सोऽपि वाञ्छितं नात्र संशयः ॥४२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते आषाढकृष्णचतुर्थीवर्णनं नाम पंचविंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । श्रावणे कृष्णपक्षे या चतुर्थी संकटी भवेत् । माहात्म्यं वद तस्या मे सर्वेभ्यः सुखदायकम् ॥१॥ वसिष्ठ उवाच । इतिहासं प्रवक्ष्यामि श्रावणे संकटीभवम् । श्रवणात् सुखदः पूर्णो भवते पठनात्तथा ॥२॥ चन्द्रवंशे समुत्पन्नो युधिष्ठिरः प्रतापवान् । धर्मशीलो वदान्यश्च मान्यान् मानयिता भृशम् ॥३॥ साक्षाद्धर्मावतारश्च सत्यवाक् करुणायुतः । पांडुपुत्रो महातेजाः प्रजापालनतत्परः ॥४॥ द्रौपद्या भ्रातृभिश्चैव सहितः सर्वसंमतः । कुंत्या मात्रा महाभागो विख्यातः सर्वमंडले ॥५॥ कृष्णो यस्य सहायोऽभूत् सदा वृष्णिकुलोद्भवः । साक्षान्नारायणः श्रीमान् भूभारहरणे रतः ॥६॥ एकदा स्वगृहे राजा संस्थितो राजभिर्वृतः । राजसूयं महायज्ञं कृत्वा कृष्णविवर्जितः ॥७॥ धृतराष्ट्रेण तत्रैव प्रेषितो विदुरः स्वयम् । आजगाम स तं दृष्ट्वा मानयामास कुंतिजः ॥८॥ भोजितं परमान्नेन विदुरं सदसि स्थितम् । तमुवाच महाभागो हर्षितः स युधिष्ठिरः ॥९॥ धन्यं मे जन्म कर्मादि त्वदंघ्रियुगदर्शनात् । वयं पाल्याः सदा तात त्वया धर्मभृता प्रभो ॥१०॥ कुशलं स्वजनानां ते किमर्थं त्वं समागतः । वद मे सकलं पूर्णं वृत्तांतं धृतराष्ट्रगम् ॥११॥ विदुर उवाच । सर्वत्र कुशलं वत्स स्वजनेषु महामते । धृतराष्ट्रस्य दुर्बुद्धेरादराद्वचनं शृणु ॥१२॥ पुत्रवत्सलभावेन दुर्योधनसमाश्रितः । तेनाऽहं प्रेषितो भूप त्वत्समीपे विचक्षणः ॥१३॥ इच्छति त्वां विजेतुं स प्रभो द्यूतेन मंदधीः । दुर्योधनो महापापी कुलक्लेशविवर्धनः ॥१४॥ कर्णेन प्रेरितोऽत्यंतं शकुनिना विशेषतः । सक्तस्ते राज्यहरणे दुःशासनसमन्वितः ॥१५॥ धृतराष्ट्रस्तथा राजन् मन्यते मनसि ध्रुवम् । स त्वामाह्वयते लोभी मया चैव युधिष्ठिर ॥१६॥ मा गच्छ दुर्मतिं तात पुत्रपक्षसमाश्रितम् । धृतराष्ट्रं च कुंत्या त्वं सस्त्रीको भ्रातृभिः कदा ॥१७॥ वसिष्ठ उवाच । विदुरस्य वचः

श्रुत्वा युधिष्ठिरो महायशाः । उवाच तं महाभागं निःश्वस्य वचनं हितम् ॥१८॥ युधिष्ठिर उवाच । शृणु तात मदीयं त्वं वाक्यं धर्मयुतं महत् । राज्ये सुसंस्थितो राजा धृतराष्ट्रो विशेषतः ॥१९॥ तदाज्ञावशगाः सर्वे वयं भीष्मादयः किल । अतो यामि त्वया सार्धं भावि यत्तद्भविष्यति ॥२०॥ धर्मयुक्तं वचः श्रुत्वा विदुरः खिन्नमानसः । न किंचिदुक्तवांस्तत्र तं निःश्वस्य महायशाः ॥२१॥ विदुरेण युताः सर्वे सस्त्रीकाः पांडवा नृप । समागताश्च द्रौपद्या धृतराष्ट्रं सभास्थितम् ॥२२॥ तेनाज्ञप्ताश्च ते सर्वे भ्रातरः कलहे रताः । चिक्रीडुर्द्यूतमुग्रं वै दुर्योधनमुखैः पुरा ॥२३॥ शकुनिना महोग्रेण तपसा साधितं पुरा । द्यूतं तदेव राजेंद्र तदधीनं बभूव ह ॥२४॥ क्रमेण राज्यमुग्रं तत् सर्वं जित्वा सुयोधनः । वनवासे पांडवान् स स्थापयामास दुर्मतिः ॥२५॥ द्रौपदी तेन दुष्टेन सभायां सर्वसंनिधौ । समानीता स तां प्राह पत्नी मे भव सुंदरि ॥२६॥ पतयः पंच कुत्राऽपि न दृश्यंते स्त्रियाः क्वचित् । अस्माकं कुलजं सर्वं यशो नष्टं त्वया खले ॥२७॥ भ्राता तां हठसंयुक्तो नग्नां चक्रे महाखलः । भीष्मादींश्च तिरस्कृत्य दुःशासनसमन्वितः ॥२८॥ पांडवा धर्मरक्षार्थमसहंस्तस्य कर्म तत् । द्रौपद्या संस्मृतः कृष्णो गुप्तरूपधरो ययौ ॥२९॥ मायया वस्त्रसंयुक्तां द्रौपदीं स पुनः पुनः । चकार च ततः सर्वे क्षुभिताः स्वगृहं ययुः ॥३०॥ द्रौपदी पांडवैः सार्धं ययौ मुक्ता वने तदा । तत्र कृष्णः समायातो बलेन क्रोधसंयुतः ॥३१॥ उवाच राजशार्दूलं युधिष्ठिरं प्रतापवान् । कृष्ण उवाच । हत्वा दुर्योधनं तात सपक्षं राज्यकामुकम् ॥३२॥ त्वां राज्ये स्थापयिष्यामि मा गच्छ वनमेव च । ततस्तं धर्मराजस्तु जगाद वचनं हितम् ॥३३॥ क्रोधं त्यज महाबाहो धर्मं रक्ष जनार्दन । धर्मयुक्तं च राज्यं मे देहि वृष्णिकुलोद्भव ॥३४॥ एवमुक्तो महातेजाः कृष्णस्तं प्रत्युवाच ह । कुरु त्वं भ्रातृभिः सार्धं गणेशोपासनं स्त्रिया ॥३५॥ सत्यासत्यसमाना व्यक्तैश्चतुर्धा बभौ प्रभुः । स्वानंदवासकर्ताऽसावस्माकं कुलदैवतम् ॥३६॥ एवमुक्त्वा ददौ तस्मै प्रभुर्मंत्रं दशाक्षरम् । स विधिं हर्षसंयुक्तः सर्वसिद्धिकरं परम् ॥३७॥ माहात्म्यं व्रतजं तत्र श्रावयामास केशवः । युधिष्ठिरस्य सर्वं वै पुण्यदं भ्रांतिनाशनम् ॥३८॥ चतुर्विधप्रदं पूर्णं सर्वादौ संमतं व्रतम् । कृतं चेत् कर्म तत् सर्वं सफलं भवति प्रभो ॥३९॥ तव राज्ये व्रतं मुख्यं नष्टं तेन महामते । राज्यभ्रष्टश्च संजातश्चतुःपदविवर्जितः ॥४०॥ श्रुत्वा युधिष्ठिरो राजा विस्मितः सुमहायशाः । गणेशं मनसि ध्यात्वा चकार विधिसंयुतः ॥४१॥ तत्रादौ श्रावणे मासे प्राप्ता संकटनाशिनी । चतुर्थी कृष्णपक्षे तां साधयामास सानुजैः ॥४२॥ शुक्लकृष्णचतुर्थीजं व्रतं चक्रुश्च पांडवाः ।

सस्त्रीकास्तेन ते सर्वे वनेषु सुखिनोऽभवन् ॥४३॥ पुनः स्वराज्यकर्तारो बभूवुश्च सुयोधनम् । हत्वा सर्वनृपैर्युक्तं कृष्णेन हर्षसंयुतः ॥४४॥ पुनस्तेन पृथिव्यां तद्विख्यातं प्रकृतं व्रतम् । शुक्लकृष्णचतुर्थीजं चक्रुः सर्वे जनास्ततः ॥४५॥ इह भुक्त्वाऽखिलान् भोगान् पौत्रं राज्येऽभिषिच्य ते । पांडवा ज्ञानसंयुक्ता बभुः स्वांशेषु संगताः ॥४६॥ अन्ये जनाः क्रमेणैव गता गाणेश्वरं पदम् । दृष्ट्वा गणेश्वरं तत्र ब्रह्मभूता बभूविरे ॥४७॥ एवं व्रतस्य माहात्म्यं कथितं ते नृपोत्तम । अन्यच्छृणु महाभाग महापुण्यप्रदं परम् ॥४८॥ कर्णाटे कारुकः कश्चिन् महापापपरोऽभवत् । वनेषु शस्त्रधारी जनान् जघान स नित्यदा ॥४९॥ परस्त्रियं तत्र दृष्ट्वैकाकिनीं स तथा दरात् । अयभद्धठसंयुक्तो बलेन स महाखलः ॥५०॥ गोवधादिकमेवं स ब्राह्मणानां च हिंसनम् । चकार दुष्टभावेन द्रव्यार्थं मांसकारणात् ॥५१॥ एवं नित्यं वने गत्वा पापं चक्रे स दुर्मतिः । चोरो ग्रामे जनान् जघ्ने गृहीत्वाऽर्थं विशेषतः ॥५२॥ कदाचित् स वने गत्वा गुहायां संस्थितोऽभवत् । जनान् हंतुं महाचोरस्ततो वृष्टिर्बभूव ह ॥५३॥ अतिवृष्टिप्रभावेन जलैर्नद्यश्च पूरिताः । यत्र तत्र जलं पूर्णं गंतुं मार्गो न विद्यते ॥५४॥ तत्र वृष्टिभयेनैव संस्थितः क्षुधितो नृप । दैवयोगेन सा देवी चतुर्थी तिथिराबभौ ॥५५॥ श्रावणे कृष्णपक्षे सा प्राप्ता तस्या व्रतं शुभम् । कृतं तेन सुदुष्टेन ह्यन्नहीनप्रभावतः ॥५६॥ चन्द्रोदये समुत्पन्ने जलेनागतमादरात् । फलं च नारिकेलं यत्तद्बभंज बभक्ष सः ॥५७॥ निशाशेषे बहिः पापी निःसृतस्तत्र चाययौ । व्याघ्रः संगृह्य तं हत्वा बभक्ष क्षुधितो भृशम् ॥५८॥ गाणपास्तं संप्रगृह्य ययुः स्वानंदके पुरे । चक्रुर्व्रतप्रभावेण तत्र ब्रह्ममयं ततः ॥५९॥ महापापी व्रतेनैवाज्ञानजेन नृपात्मज । ब्रह्मभूतो बभूवाऽथ वर्णये किं महाद्भुतम् ॥६०॥ नानाजना व्रतेनैव भुक्त्वा भोगान् हृदीप्सितान् । ययुः स्वानंदके वर्णयितुं तत्र न शक्यते ॥६१॥ इदं श्रावणकृष्णायाश्चतुर्थ्या वर्णनं पठेत् । माहात्म्यं शृणुयाद्यो वै भुक्तिं मुक्तिं स विंदति ॥६२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते श्रावणकृष्णचतुर्थीमाहात्म्यवर्णनं नाम षड्विंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । भाद्रकृष्णचतुर्थ्यास्त्वं माहात्म्यं वद भो मुने । न तृप्यामि कथां शृण्वन् सर्वसिद्धिप्रदायिनीम् ॥१॥ वसिष्ठ उवाच । द्राविडे राजशार्दूलो बभूव परमद्युतिः । वीरसेनो यशोयुक्तः सार्वभौमो महाबलः ॥२॥ नीतिज्ञो नीतियुक्तश्च चक्रे सौराज्यमुत्तमम् । सर्वान् राज्ञो वशे कृत्वा करभारेण संयुतान् ॥३॥ धर्मशीलः सदानंदं चाददाद्भक्तिसंयुतः । क्षुधितं न नरं नारीमसहत् सुखकारकः ॥४॥ पुत्रानिव प्रजाः सर्वाः पालयामास यत्नतः । अपुत्रो दैवयोगेन बभूव परवीरहा ॥५॥ पुत्रार्थं यत्नमत्यंतं जपहोमादिभिः सदा । चकार तीर्थक्षेत्रादि विधाने तादृशोऽभवत् ॥६॥ एवं बहौ गते काले पुत्रो नासीन् महीपते । ततोऽतिदुःखितो राजा राज्यं त्यक्त्वा ययौ वनम् ॥७॥ सस्त्रीकः स वने राजा बभ्राम यत्र तत्र ह । ततो महावनं गत्वा पपात क्षुधयान्वितः ॥८॥ सुमंतुस्तत्र विप्रर्षिः समिदर्थं समाययौ । नृपं दृष्ट्वा दयायुक्त आययौ तं निरीक्षितुम् ॥९॥ वेदवेदांगवित् साक्षात् सर्वशास्त्रप्रवर्तकः । पुराणज्ञो महायोगी व्यासशिष्यः प्रतापवान् ॥१०॥ तं दृष्ट्वा सहसोत्थाय प्रणनाम महामुनिम् । वीरसेनः प्रहर्षेण सस्त्रीकः संयुतो नृपः ॥११॥ करसंपुटमुत्थाय पुरः कृत्वा महामुनेः । तं जगाद विशेषज्ञं राजा वचनमुत्तमम् ॥१२॥ वीरसेन उवाच । धन्यं मे कर्म जन्मादि पिता माता कुलं यशः । विद्या व्रतादिकं सर्वं त्वदंघ्रियुगदर्शनात् ॥१३॥ राज्यं त्यक्त्वा वने संस्थः पुत्रार्थं पापवानहम् । तत्र ते दर्शनं प्राप्तं पूर्वपुण्यफलोदयात् ॥१४॥ नानायत्नेन विप्रेश पुत्रो मे नाऽभवत्किल । त्वत्कृपोपायमेकं च पश्यामि सुखदायकम् ॥१५॥ वसिष्ठ उवाच । एवं तस्य नृपस्याऽसौ श्रुत्वा वचनमुत्तमम् । संतुष्टस्तं जगादेदं सुमंतुर्मुनिसत्तमः ॥१६॥ सुमंतुरुवाच । मा चिंतां कुरु राजेंद्र पुत्रस्ते कुलतारकः । भविष्यति न संदेहः शृणु मे वचनं हितम् ॥१७॥ राज्ये नष्टं त्वदीये तच्चतुर्थीजं व्रतं महत् । तेन त्वं पुत्रहीनोऽसि नृपाधम न बुध्यसे ॥१८॥ सर्वादौ तद्व्रतं मुख्यं कर्तव्यं सर्वसिद्धिदम् । चतुःपदार्थदं सर्वैर्नोचेत् सर्वं सुनिष्फलम् ॥१९॥ त्वया कर्म कृतं नानापुण्यदं सर्वसंमतम् । चतुर्भिः पुरुषार्थैर्हीनं चतुर्थीविवर्जितम् ॥२०॥ एवमुक्त्वा नृपायाऽथ माहात्म्यं व्रतजं महत् । श्रावयामास तं सोऽपि श्रुत्वा पप्रच्छ भाविकः ॥२१॥ वीरसेन उवाच । वद ब्रह्मन् गणेशस्य ज्ञानं यस्य चतुःप्रदम् । व्रतं सर्वादिसंमान्यं तं भजिष्यामि नित्यदा ॥२२॥ सुमंतुरुवाच । गणेशस्य स्वरूपं यद्वक्तुं शक्तो भवेत्तु कः । उपाधिसंयुतं ज्ञानं शृणु राजेंद्र सर्वदम् ॥२३॥ अहं तपःप्रभावेण पुरा जातो विशेषतः । शापानुग्रहणे राजन् समर्थः सर्वमंडले ॥२४॥ ततोऽतितपसा युक्तोऽभवं तेन महामते । अंतर्ज्ञानं समुत्पन्नं स दृष्ट्वा

विस्मितो ह्यहम् ॥२५॥ ततो जडादिका नाना भूमिकाः साधयंस्ततः । नानाब्रह्मविभेदेषु संस्थितो ब्रह्मधारकः ॥२६॥ एवं क्रमेण राजेंद्र आसं स्वानंदगोऽभवम् । तत्र शांतिसुखे सक्तो ब्रह्मभूतस्वभावतः ॥२७॥ तस्माद्भेदमयं द्वंद्वं दृष्ट्वा शांतो महामुनिम् । व्यासं गत्वा प्रणम्यैवाऽऽपृच्छं तं स्वहितप्रदम् ॥२८॥ ब्रह्मभूतस्वरूपां मे वद शांतिं महामुने । शिष्योऽहं ते महाभाग तारयस्व भवार्णवात् ॥२९॥ इति पृष्टो महायोगी मामुवाच प्रहर्षितः । तत्तेऽहं कथयिष्यामि गणेशज्ञानकारकम् ॥३०॥ व्यास उवाच । शृणु पुत्र प्रवक्ष्यामि ब्रह्मभूतस्वरूपकम् । शांतीनां शांतिरूपं तं ज्ञातव्यं योगसेवया ॥३१॥ स्वत उत्थानकं ब्रह्म उत्थानं परतस्तथा । तयोरभेदभावे च ह्यसत् स्वानंद उच्यते ॥३२॥ तत्रामृतमयं यत्तत् सद्रूपं स्वस्वरूपकम् । तयोरभेदभावे चानंदः स्वानंद उच्यते ॥३३॥ त्रिभिर्हीनं त्रिभिर्युक्तमव्यक्तं ब्रह्म कथ्यते । चतुर्णामेव संयोगे स्वानंदो ब्रह्म उच्यते ॥३४॥ पंचभिर्गतिहीनं यन्मतं चायोगवाचकम् । न तत्र कस्यचिद्योगस्ततः कुत्राऽपि पुत्रक ॥३५॥ संयोगायोगयोर्योगे योगः शांतिप्रदायकः । स एव गणराजश्च ज्ञातव्यो विबुधैः सदा ॥३६॥ गणाः समूहरूपाश्चांतर-बाह्यादियोगतः । अन्नादिब्रह्मरूपास्ते ज्ञातव्या योगसेवया ॥३७॥ तेषां स्वामी गणेशानस्तं भजस्व विधानतः । तदा त्वं ब्रह्मभूतश्च भविष्यसि न संशयः ॥३८॥ चित्तं पंचविधं प्रोक्तं तदेव बुद्धिवाचकम् । चित्तं मोहस्वरूपं यत् सिद्धिरूपं वदंति च ॥३९॥ तयोः स्वामी गणाधीशो मायाभ्यां क्रीडति प्रभुः । पंचचित्तनिरोधेन लभ्यते चित्तधारकः ॥४०॥ अतश्चिंतामणिः प्रोक्तो पश्य वेदेषु पुत्रक । चित्तं त्यक्त्वा समोहं त्वं भव चिंतामणिस्ततः ॥४१॥ एवमुक्त्वा ददौ मह्यं मंत्रमेकाक्षरं प्रभुः । सविधिं तं प्रणम्यैवाऽऽगतोऽहं स्वाश्रमे पुनः ॥४२॥ ध्यात्वा गणपतिं राजन् मंत्रे जपपरोऽभवम् । ततः स्वल्पेन कालेन शांतिं प्राप्तोऽहमेव च ॥४३॥ तथाऽपि गणराजं त्वपूजयंतं विशेषतः । ततो मे दर्शयामास स्वात्मानं विघ्नपः प्रभुः ॥४४॥ समागतं गणेशानं दृष्ट्वा विस्मितमानसः । अपूजयं प्रहर्षेण तं प्रणम्य पुनः पुनः ॥४५॥ अथर्वोपनिषद्भिः स संस्तुतो गणनायकः । भक्तिं दत्त्वा स्वकीयां मेंऽतर्धानं प्रचकार ह ॥४६॥ तदादि गाणपत्योऽहं प्रभजे नित्यमादरात् । तं भजस्व महाराज ततः सर्वं शुभं भवेत् ॥४७॥ एवमुक्त्वा ददौ तस्मै स मंत्रं षोडशाक्षरम् । सविधिं मुनिमुख्यः सोंऽतर्धानमगम-त्ततः ॥४८॥ राजाऽतिविस्मितो भूत्वा सपत्नीकः प्रणम्य तम् । स्वपुरे स समागत्याऽभजत्तं गणनायकम् ॥४९॥ तत्राऽऽदौ भाद्रमासे सा कृष्णा प्राप्ता चतुर्थिका । कृता तेन जनैः सर्वैः पुरवासिभिरादरात् ॥५०॥ विशेषतस्ततस्तेन प्रशस्तं तद्व्रतं

कृतम् । शुक्लकृष्णचतुर्थीजं चक्रुः सर्वे धरातले ॥५१॥ व्रतपुण्यप्रभावेण राजा पुत्रसमन्वितः । बभूवू रोगहीनास्ते भूमिपैवं जनास्तथा ॥५२॥ पुत्रे राज्यं परित्यज्य राजा निर्वृत्तिसंयुतः । सपत्नीको गणेशानमभजन्नित्यमादरात् ॥५३॥ अंते गणेशलोके स गत्वा ब्रह्ममयोऽभवत् । क्रमेण सर्वलोकाश्च ब्रह्मभूता बभूविरे ॥५४॥ एतत्ते कथितं भूप माहात्म्यं संकटीभवम् । अन्यच्छृणु चतुर्थ्यास्त्वं पापघ्नं सर्वदं परम् ॥५५॥ आंध्रे च धीवरः कश्चिद् बभूव सर्वहिंसकः । बाल्यात् प्रभृति सोऽत्यंतं पापकर्मपरायणः ॥५६॥ वृथा साक्ष्यपरो भूत्वा कलहं सोऽकरोन् मिथः । लोकानां लोभशीलश्च चौर्यद्रव्यं समाहरत् ॥५७॥ वने गत्वा महापापी मार्गस्थान् प्रजघान वै । ब्राह्मणादीन् विशेषेण नानापापपरायणः ॥५८॥ न तस्य कर्म वक्तुं वै शक्यते पापभीतितः । ग्रंथबाहुल्यतो भूप परस्त्रीलालसोऽभवत् ॥५९॥ भाद्रकृष्णचतुर्थीजे वनमध्यस्थ एकदा । व्रते प्राप्ते महापापी निराहारो बभूव ह ॥६०॥ अकस्मात् तत्र संप्राप्तो जनसंघो महान्नृप । भयात्तस्य प्रलीनोऽभूद्गुहायां धीवरः स तु ॥६१॥ किंचिद्दिनावशेषे स जनसंघो गतोऽभवत् । तदा बहिर्विनिःसृत्य गृहे गंतुं मनो दधे ॥६२॥ न प्राप्तं तेन दुष्टेन किंचित्तदपि दारुणः । स्वात्मन्यास्थाय धैर्यं स मार्गसंस्थो बभूव ह ॥६३॥ रात्रौ समागतो दुष्टः स्वगृहे राजसत्तम । चन्द्रोदये सुतैः सार्धं भोजनं स चकार ह ॥६४॥ पंचम्यां सर्पदंशेन मृतः पापेन निश्चयः । गणराजस्य तदपि दूता नेतुं समागमन् ॥६५॥ गृहीत्वा धीवरं तेऽयुर्गणाः स्वानंदके पुरे । गणेशानं स तं दृष्ट्वा ब्रह्मभूतो बभूव ह ॥६६॥ व्रतेनाऽज्ञानजेनाऽयं विधिहीनेन भूमिप । ब्रह्मभूतो धीवरश्च संबभूव वदामि किम् ॥६७॥ एवं नाना जना राजन् ब्रह्मभूता बभूविरे । चतुर्थ्यां व्रतपुण्येन वक्तुं नैव प्रशक्यते ॥६८॥ इदं भाद्रपदे कृष्णचतुर्थीजं शृणोति यः । माहात्म्यं वाऽपि पठति स ईप्सितमवाप्नुयात् ॥६९॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते भाद्रपदकृष्णचतुर्थीमाहात्म्यवर्णनं नाम सप्तविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । माहात्म्यं यद्वद ब्रह्मन्नाश्विने कृष्णके महत् । चतुर्थीजं विशेषेण न तृप्तोऽहं भवामि वै ॥१॥ वसिष्ठ उवाच । इतिहासं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् । अत्र तेन महाराज शृणु तृप्तो भविष्यसि ॥२॥ पार्वती-शंकराभ्यां च तपसाऽऽराधितोऽभवत् । दिव्यवर्षसहस्रेण गणेशः पुत्रतां गतः ॥३॥ कार्तिकेयस्तथा जातः स्ववीर्यात् स्नेहकारकः । न तथा प्रीतिरुत्पन्ना गणेशे च तयोरभूत् ॥४॥ कार्तिकेयो गणेशानं स्पर्धते नित्यमादरात् । विवाहो मे पुरा पश्चात्तवापि स्म भविष्यति ॥५॥ एवं स्पर्धयतोर्वीक्ष्य पुत्रयोः पार्वतीशिवौ । विचारं चक्रतुस्तत्र विवाहार्थं महामते ॥६॥ अयं विघ्नेश्वरः साक्षाद्ब्रह्मरूपो न संशयः । क्षोभितश्चेत् पदभ्रष्टं करिष्यति विशेषतः ॥७॥ साक्षात् पुत्रं समुत्पन्नं स्कंदं संत्यज्य विघ्नपम् । ज्येष्ठं विवाहयेचेद्वा सेनानीः कोपितो भवेत् ॥८॥ त्यक्त्वा स्वपुत्रं सेनान्यं विवाहो नैव शोभते । अतः कपट-रूपेण कर्तव्यं कार्यमुत्तमम् ॥९॥ ततः शिवो गणेशानं स्कंदं चैवाऽब्रवीद्वचः । धराप्रदक्षिणां कृत्वा य आदौ सुसमागतः ॥१०॥ पूर्वं विवाहकं तस्य करिष्यामि न संशयः । ततस्तं गणनाथस्तु जगाद वचनं हितम् ॥११॥ ज्येष्ठं मां किं परित्यज्य प्रभो वदसि शंकर । वेदहीनं तथा मेऽस्तु भवदाज्ञां करोम्यहम् ॥१२॥ स्थूलदेहधरोऽहं मे वाहनं मूषको मतः । पृथ्वीप्रदक्षिणां कर्तुं न शक्नोमि सदाशिव ॥१३॥ एवमुक्त्वा गणाधीशः स्वगृहे संस्थितोऽभवत् । जगाम स्कंद आरुह्य मयूरं हर्ष-संयुतः ॥१४॥ पृथ्वीप्रदक्षिणायां स रतः स्कंदः स वेगवान् । चकार मायया तत्र गणेशः कौतुकं महत् ॥१५॥ संपूज्य पार्वतीं शंकरं चकार प्रदक्षिणाम् । उवाच शंकरं तत्र विवाहो मे विधीयताम् ॥१६॥ प्रदक्षिणा कृता येन पितुर्मातुः सदाशिव । पृथ्वीप्रदक्षिणा तेन कृता शास्त्रे न संशयः ॥१७॥ श्रुत्वा गणपतेर्वाक्यं कंपितः शंकरोऽब्रवीत् । करोमि ते विवाहं वै क्रोधं मा कुरु पुत्रक ॥१८॥ तत एकांतगं शंभुं पार्वती प्रेमविह्वला । उवाच कार्तिकेयं किं त्यक्त्वा ढुंढिः स मानितः ॥१९॥ ततस्तां शंकरो वाक्यं जगाद शृणु पार्वति । अयं क्रुद्धश्च सर्वस्वं हरत्यत्र न संशयः ॥२०॥ अतः स्नेहं परित्यज्य रक्ष धर्मं सनातनम् । नाऽयं पुत्रो महादेवि ब्रह्मभूतः समागतः ॥२१॥ एवमुक्त्वा सतीं शंभुर्विवाहमकरोत्ततः । गणेशस्य विधानेन हृदयेनाविदूयता ॥२२॥ सिद्धे विवाहके पूर्णे कार्तिकेयः समागतः । तत्र विघ्नकरो विघ्नं चकार परमाद्भुतम् ॥२३॥ नारदः सहसाऽऽगत्य कार्तिकेयमुवाच ह । विवाहकृत्यमेतस्य पित्रा मात्रा कृतं पुरा ॥२४॥ त्वां वंचयित्वा सेनानीः कृतं कर्म जुगुप्सितम् । नावलोक्यं मुखं मातुः पितुश्चापि त्वया कदा ॥२५॥ एवमुक्त्वा गतो विप्रो

नारदः कलहप्रियः । स्कंदो निःश्वस्य तस्मात् स ययौ श्रीशैलपर्वतम् ॥२६॥ ज्ञात्वा पुत्रस्य वृत्तांतं पार्वतीशंकराविमम् । शोधार्थं तत्र शैले तौ गतौ ज्ञात्वा पपाल सः ॥२७॥ क्रौंचे स्कंदं स्थितं ज्ञात्वा पार्वतीशंकरौ नृप । शोकसंविग्नचित्तौ तौ विलापं चक्रतुः पुरा ॥२८॥ तत्राऽऽजगाम विप्रेंद्रो मुद्गलः सर्वमुद्गलः । तं दृष्ट्वा सहसोत्थाय पूजयामासतुर्मुनिम् ॥२९॥ सुखासीनं महाभाग उवाच शोकसंकुलः । भगवन् सर्वतत्त्वज्ञ वद मां शोकनाशनम् ॥३०॥ स्कंदसंयोगदं पूर्णमुपायं तं करोम्यहम् । रुरोद पार्वती तत्र ततस्तौ मुनिरब्रवीत् ॥३१॥ मुद्गल उवाच । शंभो शृणु महाभाग त्वं साक्षात् सर्ववित् प्रभुः । विद्यारूपेयमाद्या सा शक्तिः सर्वार्थदायिनी ॥३२॥ तथापि कथयामि त्वां पुत्रौ शास्त्रे प्रकीर्तितौ । द्विविधौ तौ त्वया प्राप्तौ त्वत्समो नैव दृश्यते ॥३३॥ योगाभ्यासेन विघ्नेशो ब्रह्मणां नायकस्तव । पुत्रः समाधिजः प्रोक्तस्तत्तश्चिंतामणिः स्मृतः ॥३४॥ देहः शक्तिमयस्तत्रात्मा त्वं पुरुष उच्यसे । ताभ्यां योगबलेनैव क्रियते ब्रह्मपुत्रकः ॥३५॥ अर्धनारीश्वरस्त्वं च तस्माज्जातो गजाननः । ब्रह्मभूतपदस्याऽसौ पालको नात्र संशयः ॥३६॥ भिन्ना शक्तिरियं जाता भिन्नस्त्वं देहधारकः । भिन्नभावात् समुत्पन्नः पुत्रस्ते स्कंद एव च ॥३७॥ देहसौख्यकरः प्रोक्तः स्कंदः सर्वत्र संमतः । शांतिसौख्यकरश्चैव गणेशः पुत्रभावतः ॥३८॥ तत्र त्वं भिन्नभावेन मोहितोऽसि न संशयः । स्कंदं स्नेहेन शंभो त्वमधिकं मन्यसे सदा ॥३९॥ न तथा ब्रह्मणि श्रद्धाऽधिका विश्वेश्वरेऽधुना । तेन विघ्नसमायुक्तो जातोऽसि च भजस्व तम् ॥४०॥ ब्रह्मणि स्नेहभावेन विषयान्निंदयन् स्थितः । तदा विषयतापास्ते स्वयं वश्या भवंति वै ॥४१॥ विघ्नेश्वरमनादृत्य स्कंदं विवाहसंयुतम् । आदौ पश्यामि शक्त्या वै संधृतं मानसे त्वया ॥४२॥ तदैव निष्फलं सर्वं कृतं विघ्नकरेण ते । वियोगश्च समुत्पन्नस्तस्मात्तं शरणं व्रज ॥४३॥ एवमुक्त्वा मुद्गलस्तं जगाम स्वेच्छया चरन् । शिवः शक्त्या युतः स स्म मन्यते सत्यमेव तत् ॥४४॥ त्यक्त्वा स्कंदभवं स्नेहं विघ्नेशमभजत् सदा । तत्रादौ संकटी प्राप्ताऽऽश्विनी तां तौ प्रचक्रतुः ॥४५॥ मायां भ्रांतिकरीं सर्वां भिन्नभावप्रमोहतः । त्यक्त्वा शिवश्च शक्तिश्च शांतिस्थौ तौ बभूवतुः ॥४६॥ कस्य पुत्रश्च का माता पिता को भ्रमदायकम् । कृतं विघ्नेश्वरेणैव तमावां शरणं गतौ ॥४७॥ ततो विघ्नेश्वरेणैव कृतं कौतुकमादरात् । बुद्धिभेदः कृतस्तत्र स्कंदस्य नृप तच्छृणु ॥४८॥ त्यक्तौ मयाऽतिमूढेन पार्वतीशंकरावहो । ज्येष्ठं गणपतिं नित्यं स्पर्धयामि महाप्रभुम् ॥४९॥ शक्त्या शिवेन विघ्नेशस्तपसाऽऽराधितोऽभवत् । सोऽयं पुत्रस्वरूपेण बभूव वरदानतः ॥५०॥ स्वानंदवासकारी स

सिद्धिबुद्धिपतिः स्वयम् । योगशांतिस्वरूपोऽयं न जानामि सुमूर्खवत् ॥५१॥ एवं विचार्य स्कंदः स ययौ कैलासमादरात् । आदौ प्रणम्य विघ्नेशं पूजयामास भक्तितः ॥५२॥ अथर्वशिरसा तं स ततः स्तुत्वा सदाशिवम् । उमां संपूज्य तुष्टाव प्रणनामाऽथ दंडवत् ॥५३॥ संमानितः स तैः स्कंदोऽतिष्ठत्तद्भक्तिसंयुतः । तदाज्ञावशगो भूत्वा शांतियोगपरोऽभवत् ॥५४॥ विवाहार्थं शिवेनाऽसौ प्रेरितस्तमुवाच ह । स्त्रियं बंधकरीं नाथ नेच्छामि गणपे रतः ॥५५॥ अत्याग्रहयुतः स्कंदोऽभजत्तं गणनायकम् । मायासुखं परित्यज्य तन्निष्ठः स बभूव ह ॥५६॥ एवं संकटहारिण्या चतुर्थ्या महिमाद्भुतः । कथितः शांतिदः सर्वसंमेलनकरोऽभवत् ॥५७॥ अन्यच्छृणु महाभाग चरित्रं पापनाशनम् । वंगदेशे द्विजः कश्चित् पापकर्मा बभूव ह ॥५८॥ त्यक्त्वा ब्राह्मणमार्गं स मद्यपानरतोऽभवत् । यवनीं स समादाय यवनोऽभून् महाबलः ॥५९॥ वक्तुं न शक्यते तस्य कर्म पापमयं महत् । कथने परदोषाणां दोषी भवति मानवः ॥६०॥ कदाचिज्ज्वरसंयुक्तो बभूवे जातिदूषणः । तत्राश्विनभवा प्राप्ता नृप कृष्णा चतुर्थिका ॥६१॥ तत्र तेन जलान्नं च भक्षितं न भयान्नृप । सुपक्कानां तंदुलानां पीतं चंद्रोदये जलम् ॥६२॥ ततो बहौ गते काले ममार यवनो द्विजः । संगृह्य ब्रह्मभूतं तं गाणेशाश्चक्रिरे नृप ॥६३॥ एतादृशा महापापा व्रतपुण्यप्रभावतः । ब्रह्मभूता बभूवुश्च का कथा विधिकारिणाम् ॥६४॥ एवं नाना जना राजन् भुक्त्वा भोगान् यथेप्सितान् । ब्रह्मण्यं ते गतास्तत्तु मया वक्तुं न शक्यते ॥६५॥ इदमाश्विनजायास्तु माहात्म्यं यः शृणोति वा । पठेत् स कृष्णसंकष्ट्याः सर्वार्थं लभते नरः ॥६६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते आश्विनकृष्णचतुर्थीमाहात्म्यवर्णनं नाम अष्टाविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । कार्तिके कृष्णपक्षे या चतुर्थी संकटी मता । माहात्म्यं वद तस्यास्त्वं सर्वपापहरं परम् ॥१॥ वसिष्ठ उवाच । अत्र ते कथयिष्यामि चेतिहासं पुरातनम् । महाराष्ट्रे महातेजा राजाऽभूत् कर्दमाभिधः ॥२॥ वेदवेदार्थतत्त्वज्ञः स्वधर्मनिरतोऽभवत् । लोकान् संगृह्य षष्ठांशं पालयन् पुत्रकान् यथा ॥३॥ अपारसेनया युक्तश्चतुरंग-प्रमोदया । पूर्णकोशः कुबेराभो बभौ शस्त्रास्त्रपारगः ॥४॥ स्वबलेन नृपान् सर्वान् वशान् कृत्वा महाबलः । चकार

वशगां पृथ्वीं समुद्रांतां विशेषतः ॥५॥ करदा इतरे सर्वे राजानः सेवका इव । सामंताश्च महाराज तस्याज्ञावशवर्तिनः ॥६॥ पुण्यवान् धर्मशीलश्च नानादानपरायणः । देवविप्राऽतिथिप्रेप्सुः स्वदारनिरतोऽभवत् ॥७॥ यज्वा विनीतकस्तीर्थकारकः परवीरहा । नानागुणयुतः सोऽपि मया वक्तुं न शक्यते ॥८॥ स एव यक्ष्मणाऽत्यंतं पीडितः पापरूपिणा । शोकाकुलोऽभवद्राजा अस्थिशेषो बभूव ह ॥९॥ नानोपायाः कृतास्तस्य शांतये न च सोऽभवत्। शांतस्ततो महाराजस्तीर्थयात्रापरोऽभवत् ॥१०॥ नानातीर्थानि राजाऽसौ चकार तदपि ह्यहो । पीडया नैव मुक्तोऽभूत्ततो दुःखितमानसः ॥११॥ देवार्चनरता विप्राः कृतास्तेन महात्मना । तथापि रोगसंयुक्तोऽधिको राजा बभूव ह ॥१२॥ ततः शांतिधरो राजा वैराग्ये निदधे मनः । राज्यं त्यक्त्वा प्रधानेषु सस्त्रीकः स वनं ययौ ॥१३॥ बभ्राम वनगो भूत्वा यत्र तत्र महीपतिः । ततो मंकणकं विप्रमदर्शद्योगिसत्तमम् ॥१४॥ तद् दृष्ट्वा निपपातोर्व्यां रुरोद भृशमेव सः । ततस्तं मुनिमुख्योऽसौ जगाद दयया युतः ॥१५॥ मंकणक उवाच । शृणु राजन् महाभाग येन त्वं रोगपीडितः । अभवस्तदघं सर्वं कथयामि नृपाधम ॥१६॥ मुख्यं नष्टं च राज्ये ते चतुर्थीसंज्ञितं व्रतम् । तेन त्वं पापसंयुक्तो नरके गच्छसि ध्रुवम् ॥१७॥ सर्वादौ तद्व्रतं कार्यं नित्यवद्राजसत्तम । सर्वसिद्धिकरं पूर्णं चतुर्विधफलप्रदम् ॥१८॥ तद्व्रतेन विहीनस्त्वं नानाधर्मपरायणः । चतुःपदार्थहीनत्वान्निष्फलोऽसि नृपाधम ॥१९॥ एवमुक्त्वा च माहात्म्यं चतुर्थीसंभवं मुनिः । श्रावयामास तस्मै तच्छ्रुत्वा सोऽपि तमब्रवीत् ॥२०॥ कर्दम उवाच । धन्यं मे जन्म कर्मादि त्वदंघ्रियुगदर्शनात् । व्रतस्य श्रवणाद्धन्यो कृतकृत्यो न संशयः ॥२१॥ दयानिधे गणेशस्य स्वरूपं वद विस्तरात् । सर्वदेवाधिदेवं तं भजिष्यामि निरंतरम् ॥२२॥ मंकणक उवाच । गणेशस्य स्वरूपं कथयितुं शक्यते न तत् । तथाप्युपाधिसंयुक्तं वदामि शृणु कर्दम ॥२३॥ पुराऽहं पत्रभक्षः संस्तपसे संस्थितोऽभवम् । बहुकाले गते हस्तो विद्धो मे कंटकेन च ॥२४॥ तदा पत्ररसस्तस्मादस्रवत् किंचिदप्यहो । दृष्ट्वा विस्मितचित्तोऽहं नृत्यं चाकरवं तदा ॥२५॥ अहो देहाद्गतं कुत्र रुधिरं मे स्वभावजम् । पत्रभक्षणभावेन रसः स्रवति हस्ततः ॥२६॥ ततो नृत्यस्य वेगेन कंपितं स चराचरम् । मदीयतपसा युक्तं देवाः शंकरमाययुः ॥२७॥ शंकरः सर्वदेवैश्चागत्य मामब्रवीद्वचः । किं नृत्यसि महाभाग पश्य मे कौतुकं महत् ॥२८॥ इत्युक्त्वा त्रुटिका तेन कृता तत्र रसस्य मे । भस्मरूपं कृतं भूपाऽभवं तेनातिविस्मितः ॥२९॥ त्यक्त्वा नृत्यं महेशानं प्रणम्य स्तुतवान् क्षणात् । अंतर्धाय स्वमात्मानं शंकरः स

गतोऽभवत् ॥३०॥ मया मनसि राजेंद्र संधृतं शंकरात् परम् । विद्यते न तथा कर्तुमन्यथा कर्तुमीश्वरः ॥३१॥ दर्शयित्वा तपोरूपमतो भस्म कृतं महत् । रसस्य सर्वगः सोऽपि ब्रह्माकारः प्रदृश्यते ॥३२॥ त्यक्त्वा विष्णुं महेशस्य भजने निरतोऽभवम् । क्रमेण योगयुक्तोऽहं तपस्त्यक्त्वा शमे रतः ॥३३॥ जडादिका मया योगभूमयः क्रमितास्ततः । क्रमेण सहजे संस्थोऽभवं वै मोहवर्जितः ॥३४॥ यत्र तत्र महीदेशे भ्रांतोऽहं योगधारकः । सहजं ब्रह्म मोहेन हीनं दृष्टं मया ततः ॥३५॥ स्वाधीनं सहजं ब्रह्म न योग्यं शांतिदे परे । तेनाऽहं ब्रह्मणि भ्रांतः सूर्यं च शरणं गतः ॥३६॥ प्रणम्य सौरमार्गेण स्तोत्रेण प्रस्तुतो मया । प्रसन्नो माऽवदत्तत्र वरं वरय चेप्सितम् ॥३७॥ ततोऽहमवदं सूर्यं वद शांतिप्रदं प्रभो । सहजं मोहहीनत्वात् स्वाधीनं नैव शांतिदम् ॥३८॥ ततो मामब्रवीत् सूर्यः प्रसन्नो भक्तियंत्रितः । गणेशं भज भावेन तदा शांतिमवाप्स्यसि ॥३९॥ असच्छक्तिश्च सत् सूर्यः समो विष्णुर्महामुने । सहजः शंकरः प्रोक्तस्तेषां योगे गणेश्वरः ॥४०॥ चतुर्णां चैव संयोगे स्वानंदः परिकीर्तितः । अयोगः पंचभिर्हीनस्तत्र निर्मायिको बभौ ॥४१॥ संयोगे मायया युक्तो योगे मायाविवर्जितः । तयोर्योगे शांतिदः स गणेशो ब्रह्मनायकः ॥४२॥ चित्तरूपा महाबुद्धिः पंचधा परिकीर्तिता । चित्तमोहप्रदा सिद्धिस्ताभ्यां क्रीडति विघ्नपः ॥४३॥ चित्तं मोहयुतं विप्र त्यक्त्वा योगेन शांतिदम् । चिंतामणिं भजस्व त्वं योगिवंद्यो भविष्यसि ॥४४॥ एवमुक्त्वा ददौ मंत्रं प्रभुर्मह्यं षडक्षरम् । स विधिं तं नमस्कृत्य स्वाश्रमेऽहं समागमम् ॥४५॥ तत्र विघ्नेश्वरं भक्त्या भजं तं नित्यमादरात् । ततः स्वल्पेन शांतिस्थोऽभवं योगस्य सेवया ॥४६॥ तथापि गणराजं संपूज्य मंत्रपरायणः । अभजं तेन संतुष्टः प्रत्यक्षं प्रययौ स्वयम् ॥४७॥ मया संपूजितो भक्त्या स्तुतो नानाविधैः स्तवैः । मह्यं दत्त्वा दृढां भक्तिमंतर्धानं चकार ह ॥४८॥ तदारभ्य महीपाल गाणपत्योऽहमादरात् । भजामि तं गणेशानं स्वच्छंदेन महामते ॥४९॥ एवमुक्त्वा ददौ तस्मै कर्दमाय षडक्षरम् । मंत्रं विधियुतं विप्रो गणेशकृपया युतः ॥५०॥ अंतर्धानं चकारापि महान् मंकणको मुनिः । राजा हर्षसमायुक्तः स्वगृहं प्रत्यपद्यत ॥५१॥ तत्राऽऽदौ कार्तिके मास्यागता कृष्णा चतुर्थिका । तां चकार पुरस्थैश्च जनैर्हर्षयुतो नृप ॥५२॥ ततो भूपेन विख्यातं कृतं व्रतमनुत्तमम् । शुक्लकृष्णचतुर्थीजं व्रतं चक्रुर्जना भुवि ॥५३॥ रोगहीनः स राजर्षिरभजद्गणनायकम् । जना वंध्यत्वहीनाश्चाऽभजंस्ते भावसंयुताः ॥५४॥ पुत्रे राज्यं परित्यज्य सस्त्रीकः स वनं ययौ । तत्र विघ्नेश्वरं भक्त्याऽभजच्चानन्यचेतसा ॥५५॥ अंते स्वानंदगो

भूत्वा ब्रह्मभूतो बभूव ह । क्रमेण भूमिसंस्थास्ते ब्रह्मभूता बभूविरे ॥५६॥ एवं व्रतस्य माहात्म्यं कथितं ते नृपोत्तम । अन्यत्त्वं शृणु भावेन परं कार्तिकसंभवम् ॥५७॥ चांडालः कोऽपि पापात्मा हिंसायां तत्परोऽभवत् । जघान ब्राह्मणानन्यान् जंतून् वनसमाश्रितान् ॥५८॥ परस्त्रियं वने दृष्ट्वाऽयभर्त्तां हठसंयुतः । एवं नानाविधं पापं चकार दुर्मतिः सदा ॥५९॥ कदाचित् कार्तिके मासि चतुर्थ्यां वनमाश्रितः । कृष्णायां तत्र सर्पेण दष्टः पापपरायणः ॥६०॥ ततोऽतिभयसंयुक्तः स्वगृहं प्रत्यपद्यत । तत्रोपायाः कृता नाना स्वजनैर्विषहारकाः ॥६१॥ तथापि विषबाधा च न जहौ तं सुदुर्मतिम् । ततश्चन्द्रोदये किंचित् सावधानो बभूव ह ॥६२॥ तत्रान्नं भक्षयित्वा स पुनस्तद्गरलेन च । व्याकुलः पतितस्तत्र गतचेष्टोऽत्यजोऽभवत् ॥६३॥ पंचम्यां स मृतः पापी ब्रह्मभूतो बभूव ह । व्रतपुण्यप्रभावेन तदद्भुतमिवाऽभवत् ॥६४॥ एवं नानाविधा राजन् व्रतपुण्यप्रभावतः । बभूविरे ब्रह्मभूता मया वक्तुं न शक्यते ॥६५॥ एतत्ते कथितं सर्वं माहात्म्यं कार्तिके नृप । संकष्ट्या यस्तु पठति शृणोतीप्सितमालभेत् ॥६६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते कार्तिककृष्णचतुर्थीमाहात्म्यवर्णनं नाम एकोनत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । मार्गशीर्षे च कृष्णायाश्चतुर्थ्या वद मानद । माहात्म्यं सर्वदं स्वामिन् येन तृप्तो भवाम्यहम् ॥१॥ वसिष्ठ उवाच । इतिहासं पुरावृत्तं कथयामि सविस्तरम् । राजा बभूव तेजस्वी हरिश्चंद्रः प्रतापवान् ॥२॥ अयोध्यायां स्थितः सोऽपि नानाधर्मपरायणः । सदा सद्गुणसंयुक्तो यज्वा कर्मपरायणः ॥३॥ यद्यच्च याचते विप्रस्तद्ददाति स हर्षतः । तस्य पुण्येन तुल्यं तु न बभूव धरातले ॥४॥ ततश्छलयितुं योगी विश्वामित्रः समाययौ । सर्वराज्यं नृपस्यैव जगृहे दानमार्गतः ॥५॥ राज्यभ्रष्टं नृपं कृत्वा परप्रांते गतं पुनः । नानामिषेण तं तत्राच्छलयन् मुनिसत्तमः ॥६॥ ततः सोऽपि नृपोऽत्यंतं धर्मयुक्तो बभूव ह । न चचालातिदुःखेन संयुक्तः परमार्थवित् ॥७॥ तत्रैकदा चतुर्थी सा मार्गशीर्षे समागता । कृष्णा नृपः क्षुधायुक्तो बभूव तृषया युतः ॥८॥ छलितो मुनिनाऽत्यंतं ततश्चंद्रोदयोऽभवत् । तत्रान्नं भक्षयामास राजेंद्रो दैवयोगतः ॥९॥ पंचम्यां बुद्धिसंभेदो विश्वामित्रस्य चाऽभवत् । तज्ज्ञात्वा विस्मितो योगी विचचार स्वचेतसि ॥१०॥

ततस्तेन व्रतं तत्र ज्ञातं राज्ञा कृतं महत् । प्रत्यक्षं वरदो भूत्वा हरिश्चंद्रमुवाच ह ॥११॥ कुरु राज्यं महाबुद्धे शृणु मे परमं वचः । तव राज्ये चतुर्थीजं व्रतं नष्टं बभूव ह ॥१२॥ तेन त्वं पीडया युक्तः प्रजातोऽसि नृपाधम । अहं संक्षुभितो वाऽपि तदर्थं नात्र संशयः ॥१३॥ सर्वादौ तद्व्रतं कार्यं चतुःपादप्रदं नृप । नित्यवन्नात्र संदेहः सर्वसिद्धिप्रदायकम् ॥१४॥ त्वया नानाविधं पुण्यं कृतं विधियुतं महत् । तत्सर्वं निष्फलं जातं व्रतहीनप्रभावतः ॥१५॥ जनैः सर्वैर्महाराज नरके त्वं पतिष्यसि । त्वया कृतं व्रतं मुख्यमधुनाऽज्ञानतो महत् ॥१६॥ तेनाऽहं प्रीतिसंयुक्तः कृतो वै राजसत्तम । तत् कुरुष्व महीपाल जनैः सौख्यमवाप्स्यसि ॥१७॥ एवमुक्त्वा ददौ तस्मै मंत्रमष्टाक्षरं मुनिः । सविधिं गणनाथस्य सोऽपि तं पुनरब्रवीत् ॥१८॥ हरिश्चन्द्र उवाच । गणेशस्य स्वरूपं मे वद सर्वज्ञ ते नमः । व्रतस्यैव प्रभावं त्वं विधियुक्तं महामुने ॥१९॥ विश्वामित्र उवाच । गणेश्वरस्य माहात्म्यं शृणु संक्षेपतो नृप । एक एव गणेशोऽयं सर्वे तस्य गणाः स्मृताः ॥२०॥ मनोवाणीमयं विश्वं तदेव गणवाचकम् । नानाभावसमायुक्तं मया वक्तुं न शक्यते ॥२१॥ मनोवाणीविहीनं यन्नानाब्रह्मप्रवाचकम् । गणरूपं तु विज्ञेयं वेदे पश्य महीपते ॥२२॥ सिद्धिर्भ्रांतिकरी प्रोक्ता बुद्धिर्भ्रांतिधरा नृप । ताभ्यां क्रीडति विघ्नेशश्चित्ते चिंतामणिः स्थितः ॥२३॥ तं भजस्व विधानेन तदा शांतिमवाप्स्यसि । राज्यकर्ताऽपि वन्द्यस्त्वं योगिनां प्रभविष्यसि ॥२४॥ चित्तं पंचविधं प्रोक्तं तत्र मोहश्च पंचधा । समोऽहं चित्तमुत्सृज्य चिंतामणिर्भविष्यसि ॥२५॥ एवमुक्त्वा व्रतस्यैव माहात्म्यं मुनिपुंगवः । श्रावयामास तस्मै तत्ततश्चांतर्हितोऽभवत् ॥२६॥ विश्वामित्रे गतं ज्ञात्वा राजा हर्षसमन्वितः । अयोध्यायां ययौ वेगात् प्रधानैरनुमोदितः ॥२७॥ नागरैः सह राजाऽपि चकार व्रतमुत्तमम् । शुक्लकृष्णचतुर्थीजं गणेशभजने रतः ॥२८॥ सर्वत्रैवं प्रशस्तं तद् व्रतं चकार हर्षतः । भूमिसंस्था जनाः सर्वे व्रतं चक्रुर्विशेषतः ॥२९॥ नानेन सदृशं किंचित् सर्वदं व्रतमुत्तमम् । ततो रोगादिभिर्हीनो बभूव हर्षसंयुतः ॥३०॥ राजा गणपतिं नित्यमभजन्नान्यचेतसा । पुत्रे राज्यं विनिक्षिप्य सस्त्रीकश्च ययौ वनम् ॥३१॥ तत्रैव गणराजं सोऽभजत् सुतपसा युतः । शांतिं प्राप्तो विशेषेणाऽभवद्योगी स पार्थिवः ॥३२॥ अंते स्वानंदगो भूत्वा गणेशे लीनतां गतः । एवं व्रतस्य माहात्म्यं कथितं तेऽजनंदन ॥३३॥ जनाः सर्वे क्रमेणैव ब्रह्मभूता बभूविरे । चतुर्थीव्रतजेनैव पुण्येन परमेण ते ॥३४॥ अन्यच्छृणु महीपाल मालवे नगरं महत् । कर्णा नाम च तत्राऽऽसीद्वेश्या नरविमोहिनी ॥३५॥ लोकान् सा हावभावेन मोहयामास तत्क्षणात् । नाना जनाः स्वधर्मं त्यक्त्वाऽभवन् वै तदात्मकाः

॥३६॥ स्वस्वस्त्रियं परित्यज्य तन्निष्ठास्ते बभूविरे । मद्यमांसरताः सर्वे नराधिप कृतास्तया ॥३७॥ ब्राह्मणादय एवं ते भ्रष्टा जाता विशेषतः । चौर्यादिकर्मसंयुक्ताः किं वदामि महामते ॥३८॥ कथने परदोषाणां दोषी भवति मानवः । एतादृशी तु सा वेश्या पापरूपाऽतिदारुणा ॥३९॥ नानाजनैर्युता राजन्नरके कृतनिश्चया । न विरामं चकाराऽपि नराणां मोहने कदा ॥४०॥ एकदा ज्वरसंयुक्ता मार्गशीर्षे बभूव च । चतुर्थ्यां कृष्णपक्षे साऽभवद्दाहेन पीडिता ॥४१॥ पंचम्यां सा मृता तत्र ब्रह्मभूता बभूव ह । व्रतस्यैव प्रभावेण पतितानां सहायिनी ॥४२॥ एवं नाना जना राजन् ब्रह्मभूता बभूविरे । तत्र ते कति वै ब्रूयां नालं वर्षायुतैरपि ॥४३॥ मार्गशीर्षचतुर्थ्यां यन् माहात्म्यं कथितं परम् । पठनात् श्रवणात् सर्वसिद्धिदं भवति ह्यहो ॥४४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते मार्गशीर्षकृष्णचतुर्थीमाहात्म्यवर्णनं नाम त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । पौषकृष्णचतुर्थ्यास्तु माहात्म्यं वद भो गुरो । न तृप्यामि कथां शृण्वन् सर्वसिद्धिकरीं पराम् ॥१॥ वसिष्ठ उवाच । इतिहासं प्रवक्ष्यामि पुरातनभवं महान् । राजा वीरसहो नाम बभूवे हस्तिनापुरे ॥२॥ बलवान्नीति-युक्तश्चाभवच्छस्त्रास्त्रपारगः । धर्मशीलो वदान्यः स मान्यान् मानयिता भृशम् ॥३॥ नानादानरतश्चापि वांध्यदोषयुतो-ऽभवत् । तदर्थं यत्नमास्थाय देवसेवापरोऽभवत् ॥४॥ ब्राह्मणैः पुत्रकामार्थं पुत्रीयामिष्टिमाहरत् । नैव लेभे स तदपि पुत्रं वंशविवर्धनम् ॥५॥ तीर्थक्षेत्रादिकस्थाने नानाधर्मानकारयत् । स्वयं पूजापरो भूत्वा न लेभे संततिं ततः ॥६॥ ततोऽति-दुःखितो राजा त्यक्त्वा राज्यं वने ययौ । सस्त्रीको भ्रममाणः स शीतोष्णैः पीडितोऽभवत् ॥७॥ महावनांतरं गत्वा दुःखशोकसमन्वितः । सिंहव्याघ्रादिकान् दृष्ट्वा भयहीनश्चचार ह ॥८॥ तत्राऽऽजगाम योगींद्रस्त्रितो नाम महामुनिः । तं दृष्ट्वा प्रणनामाऽऽदौ कृतांजलिपुटः स्थितः ॥९॥ तेन पृष्ट उवाचाऽसौ निजं सर्वं महायशाः । रुरोद तं महायोगी जगाद करुणायुतः ॥१०॥ त्रित उवाच । राज्ये ते नृपशार्दूल सर्वसिद्धिकरं व्रतम् । नष्टं चतुर्थीजं पूर्णं तेन वंध्योऽसि निश्चितम् ॥११॥ सर्वादौ तत् प्रकर्तव्यं चतुर्वर्गफलप्रदम् । तदा कर्म कृतं सर्वं चतुःपादप्रदं भवेत् ॥१२॥ नानाधर्मपरस्त्वं वै जनास्तथैव

मानद । फलहीनप्रभावेण पतिष्यंति च रौरवे ॥१३॥ एवमुक्त्वा चतुर्थ्यास्तु माहात्म्यं मुनिसत्तमः । श्रावयामास संपूर्णं ततस्तं त्वब्रवीन्नृपः ॥१४॥ वीरसह उवाच । गणेश्वरस्य माहात्म्यं वद मे करुणानिधे । एतादृशं व्रतं यस्य तं भजिष्यामि नित्यदा ॥१५॥ त्रित उवाच । गणेशस्य स्वरूपं यद्वक्तुं शक्यं कथं भवेत् । उपाधियुक्तं भावेन कथयामि शृणुष्व तत् ॥१६॥ अहं पुरा तपोयुक्तः शापानुग्रहणे क्षमः । एको द्वितश्च मे राजन् भ्रातरौ विद्यया युतौ ॥१७॥ ताभ्यां यज्ञार्थमेवाहं गतो राज्ञो महात्मनः । अभवं कारयित्वा तं स्वगृहे गंतुमुत्सुकः ॥१८॥ दक्षिणापशुभिर्युक्तं विपुलैर्मार्गसंस्थितम् । भ्रातरौ लोकसंयुक्तौ कूपे क्षिप्त्वा प्रजग्मतुः ॥१९॥ जलहीने हि कूपेऽहं पतितः खेदसंयुतः । तत्र मानसिकं यज्ञं प्रचकार हितावहम् ॥२०॥ आजग्मुस्तत्र देवाद्या हविर्भागार्थमादरात् । मया संपूजिताः सर्वे तृप्ताः संहर्षिता बभुः ॥२१॥ अमरा ईप्सितं सर्वे वरं मह्यं ददुर्नृप । ततः कूपाच्च मां सर्वे बहिः क्षिप्त्वा प्रजग्मिरे ॥२२॥ ततोऽहं याचयित्वाऽन्यं नृपं गोभिः समन्वितः । हर्षेण स्वाश्रमं गत्वा संस्थितस्तप आचरन् ॥२३॥ ततोऽतितपसा ज्ञानं सर्वगं ह्यभवत्ततः । तपस्त्यक्त्वा च योगेन प्राभवं भूमिसाधकः ॥२४॥ जडोन्मत्तपिशाचाद्या भूमयः साधिता मया । अंते ब्रह्मगतोऽतिष्ठं समात्माऽहं स्वशांतिदे ॥२५॥ स्वाश्रमे हर्षयुक्तोऽहं ततो मुद्गल आगतः । धर्मशीलो वदान्यश्च मान्यान् मानयिता भृशम् ॥२६॥ योगींद्रैर्वंदितो नित्यं तं दृष्ट्वा प्रणतोऽभवम् । पूजयित्वा सुविश्रांतं तमपृच्छं कृतांजलिः । शांतियोगं वद स्वामिन् शांतिभ्यः शांतिदायकम् ॥२७॥ मुद्गल उवाच । असच्छक्तिश्च सत्सूर्यः समो विष्णुर्महामुने । अव्यक्तः शंकरस्तेषां संयोगे गणपोऽभवत् ॥२८॥ संयोगे मायया युक्तो गणेशो ब्रह्मनायकः । अयोगे मायया हीनो भव ते मुनिसत्तम ॥२९॥ संयोगायोगयोर्योगे योगो गाणेशसंज्ञकः । शांतिभ्यः शांतिदः प्रोक्तो भज तं भक्तिसंयुतः ॥३०॥ एवमुक्त्वा गणेशस्य ददौ मंत्रं स मुद्गलः । एकाक्षरं विधियुतं ततः सोऽन्तर्हितोऽभवत् ॥३१॥ ततोऽहं गणराजं तमभजं सर्वभावतः । तेन शांतिसमायुक्तश्चरामि ह्यकुतोभयः ॥३२॥ न गणेशात् परं ब्रह्म न गणेशात् परं तपः । न गणेशात् परं कर्म ज्ञानं न गणपात् परम् ॥३३॥ न गणेशात् परो योगो भक्तिर्न गणपात् परा । तस्माच्च सर्वपूज्योऽयं सर्वादौ सिद्धिदायकः ॥३४॥ गणेशानं परित्यज्य कर्म ज्ञानादिकं चरेत् । तत्सर्वं निष्फलं याति भस्मनि प्रहुतं यथा ॥३५॥ सर्वांस्त्यक्त्वा गणेशानं भजतेऽनन्यचेतसा । सर्वसिद्धिं लभेत् सद्यो ब्रह्मभूतः स कथ्यते ॥३६॥ एवमुक्त्वा त्रितस्तस्मै ददौ मंत्रं दशाक्षरम् । विधियुक्तं ततः

साक्षादंतर्धानं चकार ह ॥३७॥ राजा वीरसहो राजन् हर्षतः स्वपुरं ययौ । प्रधानैर्नागरैः सर्वैर्मानितः संस्थितोऽभवत् ॥३८॥ तत्रादौ पौषगां कृष्णां चतुर्थीं तां समागताम् । चकार स्वपुरस्थैः स विधियुक्तां सुहर्षितः ॥३९॥ प्रशस्तं तद् व्रतं तेन कृतं सर्वत्र भूमिप । शुक्लकृष्णचतुर्थीजं व्रतं चक्रुर्जना भुवि ॥४०॥ ततः पुत्रं महाशूरं नीतिज्ञं धर्मसंयुतम् । लेभे नानागुणैर्युक्तं जनाः संहर्षिता बभुः ॥४१॥ रोगादिभिर्विनिर्मुक्ता हृष्टाः पुष्टाश्च तेऽभवन् । यत्र तत्र चतुर्थीजं माहात्म्यमवदन् जनाः ॥४२॥ पुत्रं राज्ये समास्थाप्य राजा निर्वृत्तिधारकः । सस्त्रीको गणनाथं तमभजद्भावसंयुतः ॥४३॥ अंते ब्रह्ममयः सोऽपि बभूव व्रतपुण्यतः । क्रमेण भूमिसंस्थास्ते ब्रह्मभूता बभूविरे ॥४४॥ एवं व्रतस्य माहात्म्यं कथितं ते नृपोत्तम । अन्यच्छृणु महाभाग पापनाशकरं महत् ॥४५॥ गौडे कश्चिद् वणिक् पापी लोभयुक्तो बभूव ह । द्रव्यार्थं पितरं सोऽपि जघान विषदोषतः ॥४६॥ मातरं स तथा दुष्टो मार्गे नानाजनांस्तथा । वणिजो विषयोगेन मारयामास नित्यदा ॥४७॥ एवं बहुधनो जातः परस्त्रीलालसोऽभवत् । मद्यमांसपरो दुष्टो सतीसंगेषु लालसः ॥४८॥ नानामिषेण दुष्टः स्म सतीर्भजति वेगतः । परस्त्रियस्ततो राज्ञा धृतोऽसौ ताडितोऽभवत् ॥४९॥ निगडैर्बद्ध एवाऽसौ संस्थितो राजवेश्मनि । दैवयोगेन पौषी सा प्राप्ता कृष्णा चतुर्थिका ॥५०॥ तस्यामन्नादिभिर्हीनः स्थितो दुःखसमन्वितः । चंद्रोदये रक्षकैर्यद्दत्तमन्नमभक्षयत् ॥५१॥ पंचम्यां राजदूतैः स शूलप्रोतो ममार ह । ब्रह्मभूतः स वै जातो व्रतपुण्यप्रभावतः ॥५२॥ एवमज्ञानसंयुक्ता ज्ञानयुक्ता बभूविरे । ब्रह्मभूता व्रतस्यैव प्रभावेण महामते ॥५३॥ तत्रैव कति ते राजन् कथयामि विशेषतः । न वक्तुं शक्यते तस्मादुक्तं संक्षेपतो मया ॥५४॥ इदं पौषस्य संकष्टया माहात्म्यं संशृणोति यः । पठेद्वा तस्य शुभदं भविष्यति निरंतरम् ॥५५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते पौषकृष्णचतुर्थीमाहात्म्यवर्णनं नामैकत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच। मलमासे च संकष्ट्याश्चतुर्थ्यां वद मानद । माहात्म्यं प्रीतिदं पूर्णं न तृप्तोऽहं कृपानिधे ॥१॥ वसिष्ठ उवाच। आंध्रदेशे महाराजो बभूवे रैवतांतरे । धर्मदत्त इति ख्यातो नानाधर्मपरायणः ॥२॥ यज्वा विनीतकोऽत्यंतं नीतिज्ञोऽखिलतोषकृत्। षष्ठांशग्राहकः सोऽपि प्रजापालनतत्परः ॥३॥ जलोदरयुतोऽकस्मादभवन् मानदायकः। सार्वभौमोऽतिपापेन गृहीतः सर्वशास्त्रवित् ॥४॥ नानोपायाः कृतास्तस्य शांतये नृपसत्तम । तथाऽपि रोगनिर्मुक्तो न बभूव महीपतिः ॥५॥ तुलादानादिकान्येव महादानानि पीडितः। चकार रोगयुक्तस्तदप्यत्यंतमजायत ॥६॥ परिभ्रमन् स तीर्थानि चकार विधिसंयुतः। देवताऽऽराधनं राजा नाऽभवद्रोगवर्जितः ॥७॥ ततोऽतिदुःखितो राजा जलेनैवात्मघातनम् । विषेण कर्तुमुद्युक्तो नानाजनैः सुविह्वलैः ॥८॥ ततोऽकस्मान् महायोगी चाष्टावक्रः समाययौ । तद्गृहे तं नमस्कृत्य पूजयामास बांधवैः ॥९॥ भोजितं तं प्रणम्यैव कृत्वा करपुटं नृपः। धर्मदत्त उवाचाऽसौ विनयावनतोऽभवत् ॥१०॥ धर्मदत्त उवाच। धन्योऽस्म्यनुगृहीतोस्मि सफलो मे भवोऽभवत्। तव दर्शनतो विप्र साक्षाद्योगीश्वरस्य तु ॥११॥ आत्मघातेऽहमुद्युक्तस्तत्र ते दर्शनं महत् । प्राप्तं पुण्यसमूहेन नरको न भविष्यति ॥१२॥ वसिष्ठ उवाच। एवं वदंतमानंदयुक्तो योगींद्रसत्तमः। उवाच तं महाराजं दयया करुणानिधिः ॥१३॥ अष्टावक्र उवाच। किमर्थं देहघाते त्वमुद्यतोऽसि महामते। रोगदुःखविनिर्मुक्तो भविष्यसि न संशयः ॥१४॥ तव राज्ये महीपाल चतुर्थीमुख्यकव्रतम् । नष्टं तेन महोग्रेण पापेन संयुतो भवान् ॥१५॥ राजा राष्ट्रकृतं पापं त्वया प्राप्तं तथैव तत् । त्वमपि व्रतसंहीनः पतितोऽसि नृपाधम ॥१६॥ सर्वादौ तद्व्रतं कार्यं चतुर्वर्गफलप्रदम् । तदा कर्म कृतं राजन् फलयुक्तं भवेत् किल ॥१७॥ त्वया धर्मयुतं कर्म कृतं नानाविधं तथा। चतुःपदार्थहीनं तद्बभूव ह जनैः कृतम् ॥१८॥ सर्वैः सह जनै राजन्नरके त्वं पतिष्यसि। तदर्थं व्रतराजं तत् कुरु सर्वसमन्वितः ॥१९॥ एवमुक्त्वा चतुर्थ्या यन् माहात्म्यं मुनिसत्तमः। श्रावयामास तस्मै स करुणायुतचेतसा ॥२०॥ श्रुत्वा मुख्यं स माहात्म्यं धर्मदत्तः सुविस्मितः। उवाच तं हि योगींद्रं हर्षयुक्तेन चेतसा ॥२१॥ धर्मदत्त उवाच। पूर्वपुण्यं महन् मेऽस्ति कथनाय न शक्यते। मयेदृशं व्रतं विप्र श्रुतं तेन महाद्भुतम् ॥२२॥ अधुना विघ्नराजस्य स्वरूपं मे दयानिधे। कथयस्व सदा देवं भजिष्यामि महाप्रभुम् ॥२३॥ न सामान्यं चरित्रं तत्तस्य देवाधिपस्य यत्। यस्येदृशं व्रतं मुख्यं सर्वसिद्धिप्रदं भवेत् ॥२४॥ अष्टावक्र उवाच। धर्मदत्त महाभाग शृणु त्वं गणपस्य यत्। यस्येदृशं व्रतं मुख्यं सर्वसिद्धि-

प्रदं भवेत् ॥२५॥ निर्गुणं गजवाच्यं यद्ब्रह्म मस्तकमेव च । तस्य देहः सगुणकं ब्रह्म योगे गजाननः ॥२६॥ सिद्धिर्भ्रांतिस्वरूपा सा बुद्धिर्भ्रांतिधराऽभवत् । ताभ्यां क्रीडति विघ्नेशो मायाभ्यां परमार्थतः ॥२७॥ स्वसंवेद्येन योगेन लभ्यते दर्शनं महत् । तेन स्वानंदवासी स कथ्यते योगिभिः प्रभुः ॥२८॥ संयोगेऽयं गकारः सो योगेऽयं च णकारकः । तयोः स्वामी गणेशानः शांतियोगेन लभ्यते ॥२९॥ पंचधा चित्तवृत्तिर्या तस्यां मोहस्तु पंचधा । समोहं चित्तमुत्सृज्य लभ्यते चित्तचालकः ॥३०॥ तेनाऽयं गणनाथस्तु चिंतामणिरिति स्मृतः । तं भजस्व महाभाग तदा शांतो भविष्यसि ॥३१॥ एवमुक्त्वा ददौ तस्मै मंत्रं मालात्मकं प्रभुः । सविधिं धर्मदत्ताय ततः सोंऽतर्हितोऽभवत् ॥३२॥ राजाऽपि हर्षसंयुक्तो बभूवातितरां ततः । धन्यमात्मानमेवं स्म मन्यते भाग्यगौरवात् ॥३३॥ तत्रादौ मलमासे या चतुर्थी कृष्णपक्षगा । समागता जनै राजा तां चकार विधानतः ॥३४॥ ततस्तेन व्रतं मुख्यं तत् सर्वत्र प्रकाशितम् । ततो जना व्रतं चक्रुर्भूमिस्था यत्र तत्र ते ॥३५॥ ततो रोगविनिर्मुक्तो धर्मदत्तो बभूव ह । जनाः सर्वे तथा हृष्टा बभूवू रोगवर्जिताः ॥३६॥ नित्यं गणपतिं राजाऽभजच्चानन्य-मानसः । गणेशप्रीतये नानादानानि स ददौ सदा ॥३७॥ ततो राज्ये स्वपुत्रं स संस्थाप्यैकांतसंस्थितः । सस्त्रीको गणनाथं तमभजद्ध्यानमार्गतः ॥३८॥ अंते जगाम विघ्नेशं तल्लीनः स बभूव ह । जनाः सर्वे क्रमेणैते ब्रह्मभूता बभूविरे ॥३९॥ एवं व्रतस्य माहात्म्यं सर्वसिद्धिप्रदायकम् । कथितं ते महीपाल शृण्वन्यत्त्वं कथानकम् ॥४०॥ गांधारदेशवासीयः क्षत्रियः पापकारकः । बभूव स परद्रव्यहारकश्चौर्यमार्गतः ॥४१॥ द्यूतमद्यरतो नित्यं परस्त्रीलंपटोऽभवत् । गोमांसभक्षणे सक्तो मिथ्यावाक् साक्ष्यपूरकः ॥४२॥ नानाभेदैः सुदुर्बुद्धिः कलहं यत्र तत्र वै । चकार सर्वदा राजन् हिंसाकर्मपरायणः ॥४३॥ ततो राज्ञा महापापी वने निष्कासितो बलात् । जघान मार्गगांस्तत्र जंतून्नानाविधान् खलः ॥४४॥ द्विजादीनां वधे सक्तः स्त्रीबालवधकारकः । एवं नानाविधं पापं नित्यमेव चकार सः ॥४५॥ ततो द्रव्ययुतोऽत्यंतं बुभुजे भोगमुत्तमम् । हृदीप्सितं स दुष्टात्मा नानाचौरसमन्वितः ॥४६॥ कदाचित् पर्वतद्रोणीं मलमासे स आश्रितः । चतुर्थ्यां कृष्णपक्षस्य हिंसार्थं लोभसंयुतः ॥४७॥ ततो मानवमेकं तु मार्गस्थं स ददर्श ह । निःसृत्याधावदत्यंतं शस्त्रहस्तो वधाय वै ॥४८॥ पपाल क्रूरकर्माणं दृष्ट्वा तं सोऽपि भीतितः । क्रोशमात्रं ततो दुष्टः पपात पदव्युत्क्रमात् ॥४९॥ पतितं तं समाज्ञाय नरः क्रोधसमन्वितः । पाषाणेन महादुष्टं मारयामास मस्तके ॥५०॥ मस्तकः स्फुटितस्तत्र क्षत्रियस्य नराधिप । तेन स

व्याकुलोऽत्यंतं गतचेष्टो बभूव ह ॥५१॥ रात्रौ चंद्रोदये किंचित् सावधानोऽभवत् कुधीः । पायसं भक्षयामास स्वल्पं दुःखसमन्वितः ॥५२॥ ततो ममार पंचम्यां गतः स्वानंदके पुरे। तत्र दृष्ट्वा गणेशानं ब्रह्मभूतो बभूव ह ॥५३॥ एवं व्रतप्रभावेण पापकर्मा स क्षत्रियः । ब्रह्मभूतो बभूवाऽपि किं पुनर्ज्ञानतः कृतम् ॥५४॥ नानाजना व्रतेनैव भुक्त्वा भोगान् हृदीप्सितान् । ब्रह्मभूता बभूवुश्च कथितुं तन्न शक्यते ॥५५॥ इदं कृष्णचतुर्थ्या यन् माहात्म्यं मलमासके। शृणोति यस्तु पठति स ईप्सितमवाप्नुयात् ॥५६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते मलमासकृष्णपक्षचतुर्थीमाहात्म्यवर्णनं नाम द्वात्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । शमीमूले च यस्तिष्ठेच्चतुर्थ्यां मुनिसत्तम । संकष्ट्यां तस्य माहात्म्यं वद मे करुणानिधे ॥१॥ वसिष्ठ उवाच । इतिहासं प्रवक्ष्यामि पुरातनभवं नृप । सर्वसिद्धिकरं पूर्णं श्रवणात् पठनान्नृणाम् ॥२॥ पांचाले ब्राह्मणः कश्चिदत्रिगोत्रसमुद्भवः । पूर्वकर्मविपाकेन कुष्ठयुक्तो बभूव ह ॥३॥ नानाक्षतसमाकीर्णः प्रस्रवत् पूयशोणितः । कीटकैः सर्वतो व्याप्तो ह्यंधः कुब्जोऽभवन्नृप ॥४॥ तं दृष्ट्वा तादृशं पुत्रं पिता परमदुःखितः । अत्रिं जगाम शरणं तं पप्रच्छ प्रणम्य सः ॥५॥ तेनापि कथितं राजन् शमीमूले स्थितो भवेत् । चतुर्थीं संकटीं कुर्यात्तदा पापात् प्रमुच्यते ॥६॥ ततः सोऽपि स्वपुत्रं तं शमीमूले महीपते । समानाय्य बबंधैव दाम्ना सर्वार्थसाधकः ॥७॥ सूर्योदयात् समारभ्य यावच्चन्द्रोदयोऽभवत् । तावत्तत्र महारोगी सोऽतिष्ठद्बंधनाकुलः ॥८॥ ततः पित्रा समानीतः स्वगृहे सोऽपि तत्क्षणात् । नेत्रयुक्तो बभूवाऽथ रोगादिभिर्विवर्जितः ॥९॥ कुब्जताहीनरूपं तं संस्थितं विगतज्वरम् । तद् दृष्ट्वा परमाश्चर्यं विप्राः सर्वे विसिस्मिरे ॥१०॥ ततः सोऽपि गणेशानमभजन्नित्यमादरात् । चतुर्थ्यां कृष्णपक्षे वै शमीमूले स्म तिष्ठति ॥११॥ अंते शांतिसमायुक्तो ब्रह्मभूतो बभूव ह । एवं तिष्ठेच्छमीमूले सोऽसाध्यं कुरुते वशम् ॥१२॥ अन्यच्छृणु महीपाल माहात्म्यं सर्वसिद्धिदम् । चोरः कश्चिन् महान् पापी नगरे स गतोऽभवत् ॥१३॥ स्फोटयित्वा गृहं किंचित्तेन तत्र प्रविश्य सः । धनं गृहीत्वा निर्यातो नरैर्दृष्टः पपाल सः ॥१४॥ जनैः कोलाहलस्तत्र कृतः परमदारुणः । श्रुत्वा राज्ञो ययुर्दूताः शस्त्रहस्ता महाबलाः ॥१५॥

ज्ञात्वा वृत्तांतमुग्रं ते धाविताः क्रोधसंयुताः । वेगेन तं महाचौरं जघ्नुः शस्त्रप्रहारतः ॥१६॥ छिन्नांगं पतितं चौरं दूताः संगृह्य दारुणम् । तं बबंधुः शमीवृक्षे ततो राजानमाययुः ॥१७॥ समागता चतुर्थी सा तत्राऽकस्मान् महीपते । कृष्णा सोऽपि महाचौरो शमीमूलस्थितोऽभवत् ॥१८॥ पंचम्यां क्षतहीनांगं चौरं सर्वत्र शोभनम् । संजातं राजदूतास्ते ज्ञात्वा राज्ञे न्यवेदयन् ॥१९॥ राजा तत्र समागम्य तं प्रणम्य पुरःस्थितः । एतस्मिन्नंतरे तत्र विमानं सहसाऽऽगतम् ॥२०॥ तं तत्रागृह्य निक्षिप्य गणान् शुंडाविराजितान् । तान् प्रणम्य स पप्रच्छ राजर्षिर्गंतुमुत्सुकान् ॥२१॥ महासेन उवाच । भो भो गणपतेर्दूताः किमनेन कृतं महत् । वदेत करुणायुक्तास्तद्वयं करवामहै ॥२२॥ गाणेशा ऊचुः । कृष्णपक्षे चतुर्थ्यां यः शमीमूले जपेन्मनुम् । तिष्ठेत् सूर्योदयाद्यावत्तथा चन्द्रोदयो भवेत् ॥२३॥ निराहारः स विघ्नेशं पूजयेत् व्रतकारकः । पश्चाद्विप्रांश्च संभोज्य स्वयं भुंजीत वाग्यतः ॥२४॥ रात्रौ जागरणं कुर्यात् पंचम्यां पूजनं पुनः । प्रकुर्यात् गणराजस्य स ईप्सितमवाप्नुयात् ॥२५॥ फलयुक्तः सद्य एव भवत्यत्र न संशयः । अंते स्वानंदगो भूत्वा ब्रह्मभूतः स जायते ॥२६॥ एवमुक्त्वा गता दूताश्चौरेण सहिता नृप । चौरो विघ्नेश्वरं दृष्ट्वा ब्रह्मभूतो बभूव ह ॥२७॥ ततो राजा महाभागो गणेशभजने रतः । स चतुर्थ्यां शमीमूले तिष्ठन्नियमसंयुतः ॥२८॥ ततो राजा गतिं लेभे त्रिलोक्यां व्रतपुण्यतः । ब्रह्मादीनां सभायां स गत्वाऽतिष्ठत् स्वयेच्छया ॥२९॥ पुनः स्वनगरे राजा चंपावत्यां जगाम ह । एवं सर्वत्रगो भूत्वा रराजे राजमंडले ॥३०॥ अंते सर्वजनै राजा नगरस्थैर्महामते । जगाम विघ्नराजं तं ब्रह्मभूतो बभूव ह ॥३१॥ इदं ते मुख्यमाहात्म्यं शमीमूलस्थितेर्महत् । चतुर्थ्यां कथितं राजन् संकष्ट्यां सर्वसिद्धिदम् ॥३२॥ शृणुयाद्यः पठेद्वा स सद्य एव फलं लभेत् । ईप्सितं गणराजस्य प्रसादान्नात्र संशयः ॥३३॥ एवं नाना जना राजन्नांध्यदोषादिवर्जिताः । बभूवुश्चरितं तेषां मया वक्तुं न शक्यते ॥३४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते शमीमूलचतुर्थीव्रताचरणवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दशरथ उवाच । श्रावणादिषु मासेषु लड्वादीन् यस्तु भक्षति । तस्य विधियुतं विप्र माहात्म्यं वद सर्वदम् ॥१॥ वसिष्ठ उवाच । मनोर्वैवस्वतस्यैव पुत्र इक्ष्वाकुसंज्ञकः । राज्यलोभी कनिष्ठः सन् व्रतं चकार सिद्धिदम् ॥२॥ बभक्ष श्रावणे कृष्णसंकष्टयां पंचखाद्यजान् । लड्डुकान् सप्त भावेन व्रतसाधनतत्परः ॥३॥ दधिभक्षणमात्रं स भाद्रे कृष्णे चकार ह । आश्विने निर्जलं तद्वच्चकार व्रतमद्भुतम् ॥४॥ कार्तिके दुग्धभुक् राजाऽतिष्ठत् स्वनियमे रतः । मार्गशीर्षे जलं पीत्वाऽभजत्तं गणनायकम् ॥५॥ पौषे गोमूत्रमात्रं तु व्रतं पीत्वा समाचरत् । माघे शुक्लतिलान् राजा बभक्ष व्रतकारणात् ॥६॥ फाल्गुने शर्करायुक्तं मानवोऽभक्षयद् घृतम् । चैत्रे तद्वत् पंचगव्यं पूजयित्वा विनायकम् ॥७॥ वैशाखे पद्मबीजं स बभक्ष व्रतधारकः । ज्येष्ठे घृतं गवां भक्षंश्चकार व्रतमुत्तमम् ॥८॥ आषाढे मधुमात्रं स बभक्ष नियमे रतः । चंद्रोदये गणेशानं पूजयित्वा विधानतः ॥९॥ ततस्तस्य व्रतस्यैव प्रभावेण महामते । सुद्युम्नो मनुपुत्रो य इलो ज्येष्ठोऽभवन्नृप ॥१०॥ ततो मुनिभिराद्यं तं राजानं स चकार ह । मनुरिक्ष्वाकुमेवं तु सार्वभौमं महाद्युतिम् ॥११॥ एवं त्वसाध्यकं राजन्निच्छेद्वै यदि मानवः । धर्ममार्गेण तत् सोऽपि लभते नात्र संशयः ॥१२॥ एवं नाना जना राजन् व्रतपुण्यप्रभावतः । लब्ध्वांऽते ब्रह्मभूताश्च बभूवुर्भूमिमंडले ॥१३॥ अतस्त्वं राजशार्दूल पापरूपोऽसि सांप्रतम् । तव राज्ये व्रतं नष्टं नृपाधम न बुद्ध्यसे ॥१४॥ जनैः सह व्रतं तस्मात् कुरुष्व त्वं भविष्यसि । पुत्रयुक्तश्च विघ्नेशमंते गच्छसि निश्चितम् ॥१५॥ मुद्गल उवाच । प्रणम्य तं दशरथो महाराजो जगाम ह । स्वपुरे जनसंयुक्तश्चकार व्रतमुत्तमम् ॥१६॥ ततो भूपेन सर्वत्र प्रशस्तं तद्व्रतं कृतम् । चक्रुः सर्वजना भूमौ व्रतं गाणेश्वरं महत् ॥१७॥ व्रतपुण्यप्रभावेण विष्णुः साक्षाद्बभूव ह । चतुर्धाऽऽत्मानमाभज्य पुत्रस्तस्य महात्मनः ॥१८॥ रामश्च भरतो राजा लक्ष्मणः शत्रुसूदनः । पुत्राश्चत्वार एवं ते बभूवुर्बलसंयुताः ॥१९॥ अंते जगाम विघ्नेशं दशरथः प्रतापवान् । लोका दुःखविहीनाश्च ब्रह्मभूता बभूविरे ॥२०॥ वसिष्ठर्षेर्दशरथस्येमं विप्रस्य धीमतः । संवादं व्रतहेतुं तु यः शृणोति पठेन्नरः ॥२१॥ तस्मै विघ्नेश्वरः साक्षाद्ददाति फलमुत्तमम् । पुत्रपौत्रादिसंयुक्तं धनधान्यसमन्वितम् ॥२२॥ नानारोगविहीनत्वमैश्वर्यादियुतं महत् । अंते गणपतौ लीनं करोत्यत्र न संशयः ॥२३॥ चतुर्थ्याश्चरितं पूर्णं कथितं ते प्रजापते । श्रोतुमिच्छा पुनः किं ते वर्तते वद सांप्रतम् ॥२४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते वसिष्ठदशरथसंवादसमाप्तिवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । उद्यापनं व्रतस्यास्य वद त्वं मुनिसत्तम । येन सांगं फलं सर्वं लभते व्रतकारकः ॥१॥ मुद्गल उवाच । उद्यापनं प्रजानाथ व्रतस्यादौ मतं बुधैः । अथवा वर्षमध्ये तत् कर्तव्यं व्रतकारिणा ॥२॥ अथवा भाद्रमासे वै शुक्लायां च प्रजापते । उद्यापनं प्रकर्तव्यं कृष्णायां माघमासके ॥३॥ महामंडपकं कुर्यात् कदलीस्तंभमंडितम् । नानाशोभासमायुक्तं विभवे सति मानद ॥४॥ वित्तशाठ्यं न कुर्यात् स यथाविभवमाचरेत् । छत्राऽऽदर्शादिभिः शोभां दीपमालाविराजितम् ॥५॥ मणिमुक्तादिकैः पूर्णं भूषणैश्च विशेषतः । यत्र तत्र यथायोग्यं प्रकुर्याद्व्रतकारकः ॥६॥ मध्याह्नसमये तस्याः शुक्लायाः कथितं प्रभो । चन्द्रोदये च कृष्णायाश्चतुर्थ्याः पूजनं चरेत् ॥७॥ गोमयेन प्रलिप्याऽथ धान्यराशिं प्रकल्पयेत् । तन्मध्येऽष्टदलं पद्मं कुर्यात्तद्गुरुणा स्वयम् ॥८॥ तत्र संस्थाप्य सौवर्णं कलशं ताम्रजं तथा । रौप्यं वा मृन्मयं दक्ष वस्त्रयुग्मेन वेष्टयेत् ॥९॥ तस्योपरि सुवर्णस्य पात्रं स्थाप्य महामतिः । वस्त्रं ततो गणेशस्य यंत्रं कुर्याद्विचक्षणः ॥१०॥ तत्र गणपतेश्चैव मूर्तिर्धातुविनिर्मिता । सर्वावयवसंयुक्ता भूषणै राजिता भवेत् ॥११॥ द्विजोत्तमश्च संस्थाप्य पूजयेत्तां यथाविधि । ब्राह्मणान् वरयेच्छुद्धानेकविंशतिसंख्यकान् ॥१२॥ गणानां त्वेति मंत्रस्य जपं कुर्याद्विशेषतः । ततो होमं प्रकुर्वीत सहस्रं वा तदर्धकम् ॥१३॥ अष्टोत्तरशतं वाऽपि तथा जपदशांशकम् । गीतवाद्यपुराणानि वेदाध्ययनमेव च ॥१४॥ नानाशास्त्रप्रवादांश्च कुर्वंतु ब्राह्मणास्ततः । यत्र तत्र गणेशस्य कथाः संकथयंतु ते ॥१५॥ ततः पूर्णाहुतिं कुर्याद्वसोर्धारां स पातयेत् । बलिदानं ततः कुर्यात्ततो वायनकं चरेत् ॥१६॥ एकविंशतिपक्वान्नैरेकविंशतिसंख्यकैः । नैवेद्यैर्ब्राह्मणान् संभोज्यार्थयेत्तान् विशेषतः ॥१७॥ दक्षिणां विपुलां दत्त्वा सपत्नीकान् प्रतोषयेत् । योषिद्भ्यः कंचुकीर्दद्याद्भूषणानि महामतिः ॥१८॥ कृष्णायां च चतुर्थ्यां स चन्द्रायार्घ्यं प्रदापयेत् । शुक्लायां तत्तथा दक्ष चरेच्चन्द्रार्घ्यवर्जितम् ॥१९॥ आदौ स तिथये दद्यात् पश्चाद्विघ्नेश्वराय वै । ततश्चन्द्राय तन् मंत्रैरर्घ्यं मंत्रसमन्वितम् ॥२०॥ तिथीनां मातृरूपे त्वं देवि सर्वार्थदायिनि । गृहाणार्घ्यं मया दत्तं चतुर्थ्यै ते नमो नमः ॥२१॥ गजानन नमस्तुभ्यं नानासिद्धिप्रदायिने । गृहाणार्घ्यं बुद्धिपते मया दत्तं शुभप्रद ॥२२॥ अत्रिगोत्रसमुद्भूत गणेशप्रीतिवर्धन । गृहाणार्घ्यं मया दत्तं रोहिण्यामृतधारक ॥२३॥ कृष्णपक्षे सदा रात्रौ भोजनं स समाचरेत् । शुक्लपक्षे च पंचम्यां ब्राह्मणादींस्तु भोजयेत् ॥२४॥ चतुर्थ्यां जागरं कुर्यात् गणेशकथयान्वितः । पंचम्यां पूर्ववत् पूज्य नैवेद्याद्यैर्महामतिः ॥२५॥ दीनांधकृपणेभ्यश्च दद्यादन्नादिकं

तथा । ब्राह्मणेभ्यो विशेषेण दक्षिणां दापयेन्नरः ॥२६॥ सर्वान् संभोज्य दानेन तोषयेद्देवसन्निधौ । गणेशदृढभक्तिं स याचयेत्तेभ्य आदरात् ॥२७॥ ततः सोपस्करां मूर्तिं दद्यात् स्वगुरवे स्वयम् । एकविंशतिविप्रेभ्यः कलशान् दापयेत्ततः ॥२८॥ संतोष्योदारधीः सर्वान् स भावेन क्षमापयेत् । ततो गणपतिं नित्यं भजेतानन्यचेतसा ॥२९॥ एवमुद्यापनं कुर्याद्व्रतस्यास्य महामतिः । स संपूर्णफलं भुक्त्वा ब्रह्मभूतो भविष्यति ॥३०॥ वक्तुं न शक्यते दक्ष माहात्म्यं च व्रतोद्भवम् । सोद्यापनं विशेषेण कथितं ते यथामति ॥३१॥ इदं चतुर्थीजं दक्ष चरितं संशृणोति चेत् । पठेद्वा तस्य विघ्नेशो मानसेप्सितदो भवेत् ॥३२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते चतुर्थ्युद्यापननिरूपणं नाम पंचत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । माहात्म्यं यच्छ्रुतं मुख्यं चतुर्थीसंभवं महत् । कृतकृत्यश्च तेनाऽहं संजातो मुनिसत्तम ॥१॥ अधुना वद माहात्म्यं लोभासुरनिबर्हणे । गजाननस्य योगीश चरित्रं सर्वसिद्धिदम् ॥२॥ मुद्गल उवाच । इतिहासं प्रवक्ष्यामि पुरातनभवं प्रभो । सर्वसिद्धिप्रदं दक्ष श्रवणेन न संशयः ॥३॥ एकदा शैलवर्ये तु कैलासे शंकरः स्थितः । पार्वत्या स्वगणैः सार्धं देवैर्मुनिभिरावृतः ॥४॥ तत्राऽऽजगाम पौलस्त्यः कुबेरो निधिसंयुतः । प्रणम्य गिरिजायुक्तं शंकरं पुरतः स्थितः ॥५॥ समीपे शंकरस्यैव गत्वा चामरसंयुतः । असेवत महात्मानं भक्तियुक्तेन चेतसा ॥६॥ अकस्माद्दैवयोगेन दृष्ट्वा पर्वतनंदिनीम् । रूपेणाप्रतिमां सर्वावयवैः शोभनैर्युताम् ॥७॥ साक्षान् मायामयीं शक्तिं मोहयुक्तो बभूव ह । कामबाणाभिभूतः सन्नपश्यत्तां सुविह्वलः ॥८॥ सकामदृष्टिसंयुक्तं पश्यंतं तं धनाधिपम् । दृष्ट्वा कोपसमायुक्ता बभूवे शंकरप्रिया ॥९॥ क्रोधेन वक्रनेत्रं सा ज्वालयामास तत्क्षणात् । कुबेरस्य महादेवी सोऽपि शोकाकुलोऽभवत् ॥१०॥ अतिविह्वलगात्रत्वात् प्रास्कंदद् वीर्यमुत्तमम् । धनपस्याऽत्र पुत्रोभूत् पपात शोभया युतः ॥११॥ ततः स लज्जया युक्तः प्रणनाम महेश्वरीम् । नियम्यात्मानमानिंद्य तुष्टाव विविधैः स्तवैः ॥१२॥ ततः सा शंकरेणैव सांत्विता जगदंबिका । पिंगाक्षं तं चकाराऽपि पुत्रभावप्रदर्शिनी ॥१३॥ जगदंबा लोभनार्थं कुबेरोऽभूत् समुद्यतः । मातृगामिस्वरूपत्वात् पुत्रस्तस्य प्रतापवान् ॥१४॥

लोभ एव समाख्यातं नाम तस्य द्विजैस्ततः । संगृह्य तं गृहं देवो धनदः प्रजगाम ह ॥१५॥ कुबेरभवने संस्थं लोभं तं नारदो मुनिः । ज्ञात्वा जगाम पाताले वीणागानपरायणः ॥१६॥ तारं पातालसंस्थं तं दानवानां हितैषिणम् । इंद्रेण निर्जितं ज्ञात्वा नारदः प्रययौ मुनिः ॥१७॥ तारः समुत्थितो विप्रं प्रणनाम मुदा युतः । प्रपच्छाऽऽपूज्य वृत्तांतं दानवानां हितावहम् ॥१८॥ तार उवाच । इंद्रेणाऽहं जितो विप्र दानवा मर्दिता भृशम् । अधुना किमु कुर्यां तद्वद मे मुनिसत्तम ॥१९॥ नारद उवाच । अलकायां कुबेरस्य पुत्रोऽभूद्वीर्यपाततः । लोभस्तत्र समागत्य हर त्वं पुत्रमादरात् ॥२०॥ तं पालय महाभाग तेन ते वाञ्छितं महत् । भविष्यति न संदेहो मम तस्माद्वचः कुरु ॥२१॥ एवमुक्त्वा महायोगी नारदोंऽतर्हितोऽभवत् । तारः स्म हर्षितोऽत्यंतं मेने स कृतकृत्यताम् ॥२२॥ मायया दानवाधीशस्त्वलकायां जगाम ह । गृहीत्वा लोभकं पुत्रं सुप्तं स्वगृहमागमत् ॥२३॥ लोभं केनचिदागत्य हृतं ज्ञात्वा धनाधिपः । न शोकं मानसे सोऽपि प्रचक्रे दुर्निमित्तजम् ॥२४॥ तारः पुत्रं समानीय पालयामास हर्षतः । बालक्रीडनकैर्युक्तं तं दृष्ट्वा विस्मितोऽभवत् ॥२५॥ उत्पाट्य बालकैर्वृक्षान् रेमे लोभः प्रतापवान् । तलप्रहारवेगेन दारुणां बिभिदे शिलाम् ॥२६॥ एवं नानाविधं कर्मास्य दृष्ट्वा दानवोत्तमाः । हर्षयुक्ता बभूवुस्ते मेनिरे कृतकृत्यताम् ॥२७॥ ततः पंचमवर्षे स चकार व्रतबंधनम् । वेदानध्यापयामास शुक्रशिष्यैर्महाबलः ॥२८॥ स आसुरीं महामायां सर्वदेवविमोहिनीम् । विद्यामभ्यस्य लोभस्तु शस्त्रास्त्रे पारगोऽभवत् ॥२९॥ ततः प्रणम्य विप्रेंद्रं शुक्रं सर्वविदांवरम् । पप्रच्छ सर्वदं पूर्णमुपायं लोभ आदरात् ॥३०॥ ततः पंचाक्षरीं विद्यां ददौ तस्मै महामुनिः । शैवीं विधियुतां लोभस्तं प्रणम्य ययौ वनम् ॥३१॥ तत्र गत्वा तपस्तेपे शिवं ध्यात्वा महासुरः । जपं चकार भावेन निराहार-परायणः ॥३२॥ भस्मांगलेपसंयुक्तः शैवमार्गपरायणः । तोषयामास यत्नेन शंकरं सर्वदं परम् ॥३३॥ एवं तपसि लोभः स संस्थितो बहुवासरम् । ततस्तस्य शरीरेऽपि वल्मीको ववृधे महान् ॥३४॥ दिव्यवर्षसहस्रेण प्रसन्नः शंकरः प्रभुः । आययौ तं वरं दातुं पार्वत्या सह शूलभृत् ॥३५॥ समागतं महेशानं न बुबोध स दानवः । ततस्तं जलमासिच्य शंभुः शक्तं चकार ह ॥३६॥ ततः शंभुं समालोक्य हर्षयुक्तेन चेतसा । जगाद तं प्रणम्यादावुत्थितो दानवाधिपः ॥३७॥ लोभासुर उवाच । धन्यं मेऽद्य तपो मंत्रो धन्यौ मे जनकौ प्रभो । जन्म ज्ञानादिकं सर्वं येन दृष्टो महेश्वरः ॥३८॥ किं स्तौमि त्वां महेशान साक्षाद्ब्रह्म सनातनम् । तथापि स्तौमि देवेश त्वद्दर्शनस्फुरन्मतिः ॥३९॥ नमस्ते विश्वनाथाय सर्वांतर्यामिणे

नमः । शंकराय शिवायैव ह्यनंतगुणराशये ॥४०॥ त्रिनेत्राय महादेव शक्तियुक्ताय शंभवे । निर्गुणाय गुणानां ते चालकाय नमो नमः ॥४१॥ अमेयशक्तये तुभ्यं गिरीशाय वृषध्वज । स्रष्ट्रे पात्रे च संहर्त्रे त्रिधारूपाय वै नमः ॥४२॥ अकर्तुमन्यथा कर्तुं कर्तुं शक्ताय ते नमः । सदा मोहविहीनाय मृडाय सततं नमः ॥४३॥ स्वाधीनाय परेशाय सहजे खेलकारिणे । शूलहस्ताय देवानां पतये ते नमो नमः ॥४४॥ कैलासवासिने तुभ्यं भस्मलेपकराय वै । दिगंबराय सर्वेभ्यः सर्वदाय नमो नमः ॥४५॥ एवं स्तुत्वा महेशानं तूष्णीं भावेन संस्थितः । लोभासुरः प्रसन्नात्मा साश्रुकः स कृतांजलिः ॥४६॥ तमुवाच महादेवो वरं वृणु हृदीप्सितम् । दास्यामि तपसा स्तोत्रेण तुष्टो दानवोत्तम ॥४७॥ त्वया कृतमिदं स्तोत्रं मम प्रीतिविवर्धनम् । भविष्यति न संदेहो भुक्तिमुक्तिप्रदायकम् ॥४८॥ यः पठिष्यति दैत्येंद्र श्रावयिष्यति वा नरः । श्रोष्यते स लभेत् सद्यो वाञ्छितं मत्प्रियः सदा ॥४९॥ श्रुत्वा शंकरवाक्यं स तं जगाद महासुरः । हर्षेणोत्फुल्लनेत्रश्च भक्त्या विनयसंयुतः ॥५०॥ लोभासुर उवाच । वरदोऽसि यदि त्वं च तदा भक्तिं च ते दृढाम् । देहि राज्यं महादेव ब्रह्मांडस्य विशेषतः ॥५१॥ नानैश्वर्यसमायुक्तमारोग्यादिसमन्वितम् । मनसीप्सितमेवं मे सिद्ध्यतु त्वदनुग्रहात् ॥५२॥ मनोवाणीमयं यच्च तस्मान् मृत्युर्न मे भवेत् । सदानंदसमायुक्तं मां कुरुष्व कृपानिधे ॥५३॥ लोभासुरस्य वाक्यं वै श्रुत्वा चकितमानसः । शंकरस्तपसा बद्धस्तथेति तमुवाच ह ॥५४॥ अंतर्धाय स्वमात्मानं कैलासस्थो बभूव ह । लोभासुरः प्रसन्नात्मा स्वगृहं प्रत्यपद्यत ॥५५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते लोभासुरवरप्राप्तिवर्णनं नाम षट्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । लोभासुरः समागत्य पितरं मातरं ततः । प्रणम्य सुहृदः सर्वान् यथायोग्यं चकार ह ॥१॥ महिषासुरपुत्रीं स उवाह रूपशालिनीम् । तृष्णां गुणयुतां सोऽपि तया संहर्षितोऽभवत् ॥२॥ एवं नाना विभोगेन सुहृदानंदकारकः । बभूव बलसंयुक्तो मदेन भृशमोहितः ॥३॥ मह्यां समागतः सोऽपि दानवैः परिवारितः । नगरं निर्ममे तत्र सदा विषयवर्धनम् ॥४॥ चकार नाम तस्यापि सुखदं दानवेरितः । ततो दिग्भ्यः समायाता नाना दैत्यगणाः

पुरे ॥५॥ ततो लोभोऽसुरैः सर्वैः स्वयं गत्वा महामुनिम् । शुक्रं समानयत्तत्र प्रणम्य भावसंयुतः ॥६॥ शुक्रेण प्रेरिता दैत्या गतास्तत्र महापुरे । देवांतकश्च वृत्रश्च बलिर्जृंभः प्रतापवान् ॥७॥ नरांतकः प्रहेतिश्च हेतिर्विप्रचितिस्तथा । इत्याद्या बहवश्चान्ये मिलिता अभवन् प्रभो ॥८॥ ब्राह्मणैः कारयामास ततः शुक्रोऽभिषेचनम् । दैत्यादीनां महाराज्ये स्थापयामास तं मुनिः ॥९॥ सर्वे संहृष्टकास्तत्र बभूवुर्दानवोत्तमाः । ततः स्वस्वगृहेष्वेतेऽगमन् घोषकरा भृशम् ॥१०॥ ततो बहौ गते कालेऽसुरो लोभः प्रतापवान् । आह्वयामास दूतैस्तान् दानवान् बलसंयुतान् ॥११॥ आज्ञामात्रेण तस्यैव समाजग्मुर्बलान्विताः । असुरा भयदाः सर्वेऽसुरं लोभं प्रजापते ॥१२॥ लोभासुरोऽसुरान् सर्वान् संप्रपूज्य यथाविधि । उवाच तान् महावाक्यं हर्षयन् दानवोत्तमः ॥१३॥ लोभासुर उवाच । विप्रचित्त्यादिकाः सर्वे शृणुध्वं मे वचो हितम् । भवतां पुण्ययोगेन जेष्यामि सकलं जगत् ॥१४॥ यदीच्छा भवतां वृद्धाः श्रेष्ठा अत्रैव संगताः । तदाऽऽज्ञा मे प्रकर्तव्या करोमि बलसंयुतः ॥१५॥ एवं तस्य वचः श्रुत्वा हर्षिता दानवोत्तमाः । जगुस्तं भावगंभीरं साधु साधु त्वयेरितम् ॥१६॥ जेष्यामस्त्वत्प्रसादेन देवान् विष्णुपुरोगमान् । पराक्रमतुला तेन विद्यते जगति प्रभो ॥१७॥ ततोऽतिहर्षिताः सर्वे शुक्रं तत्र समानयन् । तेनाज्ञप्ता महाभागाः सज्जास्ते प्रबभूविरे ॥१८॥ गजासुरो विप्रचित्तिर्देवांतकनरांतकौ । प्रतापवांश्च तारो वै प्रहेतिर्हेतिरेव च ॥१९॥ बलिर्जृंभस्तथाऽन्ये वै दंशिता अभवंस्तदा । स्वस्वसेनायुताः सर्वे नानावाहनगा बभुः ॥२०॥ पदातयोऽप्यसंख्याता अश्वारोहास्तथाऽपरे । पशुसंस्थाः खगारोहा अपाराश्च समाययुः ॥२१॥ गजारोहा रथारूढा नानावाहनसंस्थिताः । महासुराः शस्त्रसंयुक्ता लोभासुरमाययुः ॥२२॥ तैः समेत्य महाबाहुर्लोभः संहर्षितोऽभवत् । पृथिवीजयनार्थाय कालकंपनकारकः ॥२३॥ एतादृशा महावीरा यत्रातिष्ठन् सुदंशिताः । तैर्युद्धं नृपशार्दूलाः किं कर्तारोऽल्पमानवाः ॥२४॥ नृपाः केचिन् मृतास्तत्र संग्रामे दारुणे प्रभो । केचित्तान् शरणं जग्मुः पलायनपरा ययुः ॥२५॥ एवं सप्तसमुद्रांतां पृथ्वीं जित्वा महाबलाः । असुरा हर्षिताः सर्वे सार्वभौमा बभूविरे ॥२६॥ ये मृतास्तत्सुतास्तैस्ते स्थापिताः करदायिनः । पलायिताश्च तत्स्थाने स्थापिता दानवोत्तमाः ॥२७॥ शरणं ये गतास्तेऽपि स्थापिता हर्षसंयुताः । वरं तस्य समाज्ञाय शेषस्तांश्च समाययौ ॥२८॥ वार्षिकं करभारं स कृत्वा दत्त्वा महाधनम् । साम्ना तैः पूजितः सोऽपि स्वगृहे नागराड् ययौ ॥२९॥ ततोऽतिहर्षिता दैत्या ययुः स्वर्गं सुशोभनम् । लोभासुरेण संयुक्ता महामाया महाबलाः ॥३०॥ इंद्रः सुरगणैः सार्धं

दंशितो वज्रधारकः । बृहस्पतिं प्रणम्यैवं जगाद स्वमतं प्रभुः ॥३१॥ इंद्र उवाच । लोभासुरः समायातो दानवैर्बलवत्तरैः । तेन योद्धुं गमिष्यामि त्वदाज्ञावशगः प्रभो ॥३२॥ इंद्रस्य वचनं श्रुत्वा निःश्वस्य मुनिपुंगवः । जगाद तं महेंद्रं बृहस्पतिः स प्रतापवान् ॥३३॥ गुरुरुवाच । शैवेन वरदानेन युक्तोऽसौ दैत्यनायकः । नानारूपधरः सोऽपि जेतुं नैव प्रशक्यते ॥३४॥ अतः सर्वं परित्यज्य विष्णोश्च शरणं सुर । गच्छ सोऽपि महाबुद्धिः करिष्यति हितं महत् ॥३५॥ गुरोर्वचनमाकर्ण्य सुरेंद्रः शोकसंयुतः । सुरेंद्रैः सहितः सोऽपि विकुंठमगमत्तदा ॥३६॥ देवस्थानानि सर्वाणि दृष्ट्वा शून्यानि सर्वतः । दैत्या हर्षयुताः सर्वे प्रवेशं चक्रुरंजसा ॥३७॥ दैत्यराजोऽमरावत्यां लोभः सर्वसमन्वितः । गत्वाऽऽसने महेंद्रस्य समारूढो बभौ स्वयम् ॥३८॥ सर्वान् संमान्य दैत्येंद्रो ददौ नानापदानि सः । दैत्येंद्रास्तत्र संस्थास्ते मुमुदुर्भोगकारकाः ॥३९॥ गंधर्वास्तं महादैत्यमप्सरोभिः समन्विताः । सिषेविरे प्रजापाल विद्याध्राद्याः समाहृताः ॥४०॥ देवोद्यानेषु दैत्येंद्रा बभ्रमुर्हर्षसंयुताः । यत्र तत्र महाभागा व्यहरंस्ते यथासुखम् ॥४१॥ लोभासुरं प्रणम्यैव संस्थिता विगतज्वराः । अवदन्न समः कश्चिल्लोभेन भुवनेषु च ॥४२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते लोभासुरस्येन्द्रपदप्राप्तिवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । इंद्रः सुरगणैः सार्धं बृहस्पतिपुरोगमः । वैकुंठे विष्णुमानम्य गत्वा तुष्टाव तं स्तवैः ॥१॥ ततस्तुष्टो हरिः प्राह महेंद्रं मान्यभावतः । स्थीयतां दैवतैः सर्वैः किं कार्यं समुपस्थितम् ॥२॥ त्यक्त्वाऽमरावतीं तात किमर्थं चागतो भवान् । श्रिया हीनः पदा देवैर्वद दुःखं महाद्भुतम् ॥३॥ इंद्र उवाच । किं वदामि जगत्पाल सर्वज्ञं त्वां महामते । तथापि शृणु वृत्तांतं शोकदं दैवकारितम् ॥४॥ लोभासुरश्च शैवेन वरेण बलदर्पितः । दानवेंद्रैर्महाबाहुर्यो त्वं स ह्यागतोऽधुना ॥५॥ गुरुणा बोधिताः सर्वे वयं प्राप्ता जनार्दन । त्यक्त्वा राज्यादिकं सर्वं विचारं कुरु सर्वथा ॥६॥ दैत्योऽमरावतीसंस्थो देवस्थानानि माधव । प्रददाति च दैत्येभ्यः स्वर्गराज्यं करोति सः ॥७॥ त्वं पालकः श्रुतौ प्रोक्तस्तस्माच्छरणमागतान् । रक्ष लोभासुरं हत्वा देवानामीश्वरो भवान् ॥८॥ तेषां तद्वचनं श्रुत्वा विष्णुः कोपसमन्वितः ।

जगाद देवराजं तं महाबाहुर्विचक्षणः ॥९॥ श्रीहरिरुवाच । हनिष्यामि महादैत्यं लोभं दानवसंयुतम् । मा कुरुष्व वृथा चिंतां कुरु राज्यं मयार्पितम् ॥१०॥ एवमुक्त्वा महेंद्रं स देवेंद्रैः सह माधवः । वेगेनारुह्य गरुडं ययौ याताममरावतीम् ॥११॥ समागतं महाविष्णुं महासैन्यसमाकुलम् । ज्ञात्वा दूतमुखात् सर्वे दानवाः सज्जका ययुः ॥१२॥ लोभः क्रोधसमाविष्ट आययौ योद्धुमाहतः । रथारूढः स्वयं साक्षान् मृत्युरूपोऽयमुच्यते ॥१३॥ लोभं दृष्ट्वाऽसुराः सर्वे भयभीताः समंततः । महाकायं महावीर्यं कालकालं प्रदुद्रुवुः ॥१४॥ पलतस्तान् समाश्वास्य विष्णुर्युद्धोद्यतोऽभवत् । तेन सार्धं ययुः सर्वे महेंद्राद्याश्च दंशिताः ॥१५॥ समागतं रमानाथं रणभूमौ प्रतापवान् । लोभः क्रोधसमाविष्टो चोदयत् सोऽसुरांस्ततः ॥१६॥ ततो युद्धं समभवद्देवानां दानवैः सह । तुमुलं शस्त्रसंघातैर्मारयंतः परस्परम् ॥१७॥ अन्योन्यं ते जयं सर्वे दानवाः सुरनायकाः । इच्छंतो न जयं तत्राप्नुवन् दक्ष हतोद्यमाः ॥१८॥ रक्तौघैः संप्रवृत्ता स्म नदी परमभीतिदा । विश्रामं निशि चक्रुर्न क्रोधावेशैः परस्परम् ॥१९॥ दिनत्रयं महाघोरं युद्धं दारुणरूपकम् । तत्र प्रवृत्तं क्रोधेन युक्ता देवाः समाययुः ॥२०॥ गणा विष्णोश्च संक्रुद्धास्तथा देवेंद्रमुख्यकाः । नानास्त्रैर्दानवान् सर्वान् ममर्दुः सर्वतः प्रभो ॥२१॥ ततो हाहारवं कृत्वा दानवा भयसंयुताः । न लेभिरे यशो दैत्याः पलायंत समंततः ॥२२॥ ततो हर्षयुता देवा नादं चक्रुः सुदारुणम् । जय विष्णो महाभाग वदंति स्म परस्परम् ॥२३॥ ततोऽतिक्रोधसंयुक्ता दानवेंद्राः समाययुः । विप्रचित्तिमुखास्तत्र शरवृष्टिं प्रचक्रिरे ॥२४॥ तेषां बाणैः सुराः सर्वे छिन्नांगाः पतिता मृधे । तद् दृष्ट्वा क्रोधयुक्ताश्च देवेंद्रास्तान् प्रदुद्रुवुः ॥२५॥ अभवत् द्वंद्वयुद्धं च नियतं रोमहर्षणम् । तेषां मध्येऽथ किंचित्त्वां कथयामि समासतः ॥२६॥ इंद्रेण युयुधे तत्र गजासुरः प्रतापवान् । अग्निना च स्वयं तारो वायुना विप्रचित्तिकः ॥२७॥ वरुणेन ययौ तत्र बलिः क्रोधसमन्वितः । कुबेरेण प्रहेतिश्च मदनेन च हेतिकः ॥२८॥ सूर्येण युयुधे क्रोधात् स प्रतापी नरांतकः । देवांतको विष्णुना स क्रोधयुक्तः समाययौ ॥२९॥ जृंभः सोमेन दैत्येशो युयुधे बलसंयुतः । यमेनैव महाबाहुर्वृत्रश्च युयुधे भृशम् ॥३०॥ नानाद्वंद्वभवं युद्धं चक्रुर्देवेंद्रकैः सह । दैत्येंद्रा बलगर्विष्ठा वर्णनाय न शक्यते ॥३१॥ अहोरात्रं रता युद्धे न विरामं प्रचक्रिरे । नानाशस्त्रास्त्रवर्षेण ववृषुस्ते परस्परम् ॥३२॥ दिवसास्तत्र पंचैव गतास्तेषां प्रयुध्यताम् । नाप्राप्यत जयो देवैर्दैत्यैः परमदुर्जयैः ॥३३॥ ततोऽतिकोपसंयुक्तः स प्रतापी गजासुरः । इंद्रं संगृह्य चिक्षेप महापर्वतमस्तके ॥३४॥ मूर्च्छितो देवराजः स ततो देवाः पलायिताः ।

एवं द्वंद्वरतैर्दैत्यैर्देवेंद्रा मूर्च्छिताः कृताः ॥३५॥ हा हा कृत्वा ततः सर्वं देवसैन्यं दिशो दश । पपाल तन् महाश्चर्यं दृष्ट्वा विष्णुश्चुकोप ह ॥३६॥ चक्रं प्रगृह्य चिक्षेप महाबाहुः स दारुणम् । दैत्यसैन्ये ततस्तेन हता दैत्या अनेकशः ॥३७॥ केषांचिन्मस्तकेष्वेतदपतद्दारुणं महत् । चिच्छेद हस्तपादादीन् दानवानामितस्ततः ॥३८॥ ततो दैत्येंद्रकाः सर्वे आययुस्ते जनार्दनम् । शस्त्रास्त्रैः सर्वतो दुष्टा मारयामासुरेव तम् ॥३९॥ नारायणस्ततः कोपसंयुक्तोऽतिप्रतापवान् । गजासुरं स विव्याध बाणैर्दशभिरावृतम् ॥४०॥ तं मूर्च्छितं चकाराऽसौ ततो देवांतकं हरिः । सप्तभिस्ताडयामास पातयामास भूतले ॥४१॥ एवं सर्वान् महाविष्णुः दानवेंद्रान् सुदारुणान् । विव्याध मूर्च्छितांश्चक्रे शरवर्षैः समंततः ॥४२॥ ततो हाहारवं कृत्वाऽपलत्तत् सैन्यमुल्बणम् । दानवानां भयार्तं वै दशदिक्षु विशेषतः ॥४३॥ ततो लोभः समायातः क्रोधयुक्तो जनार्दनम् । जगाद वचनं सोऽपि मोहयुक्तो महासुरः ॥४४॥ लोभ उवाच । सम्यक् कृतं त्वया विष्णो येन मे दर्शनं गतः । अधुना त्वां न मुंचामि जीवयुक्तं कदाचन ॥४५॥ नामरूपात्मकेभ्यश्च मरणं नैव मे भवेत् । ज्ञात्वा किमर्थमायातो ज्ञानहीनो यथा नरः ॥४६॥ गदां गृहीत्वैवमुक्त्वा ताडयामास केशवम् । पपात मूर्च्छया विष्णुस्ततः सैन्यं व्यमर्दयत् ॥४७॥ मुहूर्तमात्रकालेन सावधानो बभूव ह । पपाल देवराजैः स त्यक्त्वा संग्राममंडलम् ॥४८॥ प्रहस्य दानवान् सर्वान् सावधानानथाऽकरोत् । लोभासुरः प्रसन्नात्मा तैः सार्धं स्वपुरेऽगमत् ॥४९॥ स्तुतो बंदिजनैस्तेभ्यो दत्त्वा दानानि हर्षितः । इंद्रासने समासीनो रेजे दानवसत्तमः ॥५०॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते विष्णुपराजयो नामाष्टत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ततोऽतिदुःखितो विष्णुर्देवेंद्रैश्च समन्वितः । त्यक्त्वा विकुंठमेवं स ययौ शंभुं शरण्यकम् ॥१॥ गत्वा कैलासके दक्ष शिवं नत्वा जनार्दनः । स्तुत्वा वृत्तांतमेवं स कथयामास विस्तरात् ॥२॥ श्रुत्वा महेश्वरो विष्णुं स देवं स्वपुरागतम् । सांत्वयामास युक्तैश्च नानादृष्टांतदर्शनैः ॥३॥ शिव उवाच । मा चिंतां कुरु विष्णो त्वं सर्वज्ञ जगदीश्वर । तपःपुण्यं महोग्रं यत्तेन त्वं स पराजितः ॥४॥ तपः कृतं च लोभेन फलं तस्य जनार्दन । भुक्त्वा

मरिष्यते नाथ कालस्तत्र प्रतीक्ष्यताम् ॥५॥ देवैः सह महाविष्णो मत्समीपे स्थिरो भव। मदीयभक्तियुक्तो ह्यागमिष्यत्यत्र नैव सः ॥६॥ एवमुक्त्वा वचो विष्णुं शंकरः शोकसंयुतः। देवैस्तेन समायुक्तोऽतिष्ठत् कैलासपर्वते ॥७॥ अथ लोभासुरं सर्वैः संस्थितं दानवैर्वृतम्। इंद्रासने महाबाहुं तमूचुर्दानवोत्तमाः ॥८॥ विप्रचित्त्याद्या ऊचुः। लोभ लोभ महाभाग शृणु नो वचनं हितम्। विष्णुर्देवगणैः सर्वैः कैलासे शंकरं ययौ ॥९॥ अस्माकं शंकरः सोऽपीष्टदेवः पूज्य आदरात्। शत्रून् रक्षति नः शंभुर्भविष्यति विपक्षगः ॥१०॥ अधुना शंकरस्यास्य भावार्थं प्रेष्यतां महान्। दूतः सर्वार्थसूज्ञः कस्ततः क्षेमं भविष्यति ॥११॥ शिवो यदि स देवानां पक्षगो भवति प्रभो। तदा शंभुं प्रजेष्यामस्तपोबलसमन्विताः ॥१२॥ न ते शंभुर्वरस्यैव दाता जानीहि मानद। कर्मणां फलदातारः कृता देवाश्च कर्मणा ॥१३॥ कर्माधीनं जगत् सर्वं सदेवासुरमानुषम्। कर्माज्ञावशगं दैत्य कर्मणा त्वं महाप्रभुः ॥१४॥ देवाः कर्मफलं लोभाददते न विशेषतः। तदैश्वर्यविहीनास्ते पतंति स्वपदात् किल ॥१५॥ अतस्त्यक्त्वा स्वसंदेहं त्यज शंभुं विपक्षगम्। कुरु कर्माश्रयं त्वं वै तेन क्षेमं भविष्यति ॥१६॥ इत्युक्त्वा दानवेंद्रास्ते विरामं चक्रुरंजसा। लोभासुरस्ततस्तेषां वचने निरतोऽभवत् ॥१७॥ गजासुरं महावीर्यं प्रेषयामास सत्वरम्। कैलासे शंकरस्यैव भावार्थं भावधारकः ॥१८॥ गत्वा शंभुं महादैत्यः प्रणम्य प्रत्युवाच सः। वचनं लोभदैत्येन प्रेषितं सामपूर्वकम् ॥१९॥ गजासुर उवाच। महादेव नमस्तुभ्यं शृणु मे वचनं हितम्। लोभासुरेण देवेश प्रेषितोऽहं विशेषतः ॥२०॥ तेन संकथितं वाक्यं तच्छृणुष्व सुखप्रदम्। त्वं साक्षादीश्वरः पूर्णोऽस्माकं पूज्यो निरंतरम् ॥२१॥ विष्णुर्देववरः स्वामिन्नागतस्ते प्रसन्निधौ। अस्माकं शत्रुरेवाऽसौ तं त्यज त्वं सदाशिव ॥२२॥ वयं भक्तास्त्वदीयाश्चास्माकं मित्रं तदेव ते। मित्रं शत्रुस्तथा शंभो पालयस्वादराद्धि नः ॥२३॥ नो चेत् संग्रामभावेन जेष्यामस्त्वां न संशयः। कर्मणा त्वं समर्थश्चेत् संजातो भुंक्ष्व विष्टपम् ॥२४॥ कर्मणा लोभकः शंभो सर्वैश्वर्ययुतोऽधुना। तस्मादस्मान् महाभाग रक्ष ते भक्तिसंयुतान् ॥२५॥ तस्य तद्वचनं श्रुत्वाऽब्रवीन्निःश्वस्य शंकरः। गजासुरं स्वयं साम्ना वचनं हितकारकम् ॥२६॥ शिव उवाच। गजासुर महालोभं वद मे वचनं हितम्। गत्वा तं दानवेंद्रं त्वं सर्वासुरसमन्वितम् ॥२७॥ कैलासं विष्णुना त्यक्त्वा सहितोऽहं स्वदेवपैः। गच्छामि यत्र कुत्रापि न त्यजामि जनार्दनम् ॥२८॥ कर्मणा त्वं समर्थश्चेत् संजातो भुंक्ष्व विष्टपम्। सर्वं चराचरं तेऽभूत् स्वाधीनं नात्र संशयः ॥२९॥ एवमुक्त्वा सुदुर्बुद्धिं शंकरः सुरनायकैः। जगाम पर्वतोद्देशे

त्यक्त्वा कैलासमात्मनः ॥३०॥ महावने महेशानः पर्वतद्रोणिमाश्रितः। देवैर्विष्णुमुखैः सर्वैः पशुवत् कालचालकः ॥३१॥ गजासुरः सभां गत्वा जगाद सकलैर्युतम्। लोभासुरं स वृत्तांतं श्रुत्वा संहर्षितोऽभवत् ॥३२॥ ततः स सत्यलोके च विकुंठे शंकरालये। दानवान् स्थापयामास नानादेवपदेषु वै ॥३३॥ इंद्रासनं परित्यज्य ययौ भूम्यां महासुरः। स्वपुरे दानवेंद्रैश्चावसद्भोगपरायणः ॥३४॥ न ममर्श निजात्मानं गर्वितः केवलं स तु। स्त्रीमांसमदिरादिष्वासंसक्तोऽभूत् सुदुर्मतिः ॥३५॥ धन्यमात्मानमेवं स मन्यते स्म कृतार्थकम्। ब्रह्मांडं वशगं मेऽभून्न मत्तः श्रेष्ठ एककः ॥३६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते लोभासुरब्रह्माण्डजयो नामैकोनचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। ततो बहौ गते काले दानवा बलदर्पिताः। जगुर्लोभासुरं तत्र लोभयुक्ता विशेषतः ॥१॥ दानवेंद्रा ऊचुः। देवा लोभासुर स्वामिन्नस्माकं शत्रवो मताः। सुराश्चासुरवर्याणां वेदे प्रोक्ता विचारय ॥२॥ शस्त्रास्त्रैर्देवसंघास्ते न मरिष्यंति कर्हिचित्। अमरा वेदशास्त्रेषु कथिता नात्र संशयः ॥३॥ कर्मान्ना देवताः स्वामिन् क्षते कर्मणि तत्क्षणात्। मरिष्यंति महाभाग तदर्थं यत्नमाचर ॥४॥ जित्वा ब्रह्मांडगोलं किं संस्थितोऽसि महासुर। न कृतार्थस्त्वमेवैवं कदा जीवत्सु शत्रुषु ॥५॥ हिरण्यकशिपुर्जित्वा पुरा देवगणान् स्वयम्। राज्यं चकार सर्वत्र भुवनेषु न संशयः ॥६॥ ततो देवैः प्रयत्नेन निर्मितो नृहरिः प्रभो। तेन हत्वा सुराधीशं देवाः स्वस्थानगा बभुः ॥७॥ अतस्त्वं दैत्यराजेंद्र हितं कुरु विशेषतः। तदा चिरं महाराज सुखयुक्तो भविष्यसि ॥८॥ तेषां वचनमाकर्ण्य लोभासुरः सुमंदधीः। आज्ञापयत्ततो दैत्यो दैत्येंद्रान् कर्मखंडने ॥९॥ ततो गजासुराद्याश्च निर्गता क्रोधसंयुताः। यत्र तत्र द्विजान् धृत्वा जघ्नुर्यज्ञान् विशेषतः ॥१०॥ यज्ञवृक्षांस्तथा गाश्च तीर्थानि यत्र तत्र ते। जघ्नुर्बभंजुरत्यंतं कर्मखंडनकारणात् ॥११॥ बभंजुः क्रोधसंयुक्ता देवताऽऽयतनानि ते। स्वधर्मस्थं जनं दृष्ट्वा जघ्नुर्दानवसत्तमाः ॥१२॥ सर्वत्र दानवाधीशैर्लोभासुरस्य मूर्तयः। जनैः पूज्याः कृता दक्ष तदाधारं बभूव ह ॥१३॥ न स्वाहा न स्वधा कुत्र बभूव प्रलये यथा। न वषट्कारगं कर्म त्रासितं भूमिमंडलम् ॥१४॥ लोभासुरयुतं सर्वैः कर्म तैः प्रतिपादितम्। ततो हाहारवैर्युक्ता बभूवुर्मानवाः प्रभो ॥१५॥ ब्राह्मणा वनगा भूत्वा केचिन्

मरणनिश्चयाः । चक्रुः कर्म तथा भ्रष्टा बभूवुर्बहवो द्विजाः ॥१६॥ एवं बहौ गते काले देवाः परमदुःखिताः । उपवासपराः सर्वे बभूवुस्ते प्रजापते ॥१७॥ ततोऽतियत्नसंयुक्ता विचारं चक्रुरंजसा । लोभासुरविनाशाय न प्रापुस्ते दिवौकसः ॥१८॥ ततोऽतिदुःखिताः सर्वे किं कुर्म इति विह्वलाः । संतस्थुः पर्वतोद्देशे गुप्तभावेन देवपाः ॥१९॥ तत्राऽऽजगाम योगींद्रो रैभ्यः सर्वप्रियंकरः । अवधूतः स्वरूपेण साक्षाद्विघ्नेश्वरो यथा ॥२०॥ तं प्रणम्य शिवाद्यास्ते पप्रच्छुर्लोभनाशकम् । उपायं दीनभावेन सास्थिचर्मावशेषिताः ॥२१॥ ततोऽतिकरुणायुक्तो रैभ्यः सर्वार्थकोविदः । जगाद तान् सुरेंद्रान् स दीनान् दृष्ट्वा विशेषतः ॥२२॥ रैभ्य उवाच । शृणुध्वं विष्णुशंभ्वाद्या मुनयस्तत्त्वभाविताः । लोभासुरो महापापी दुर्जयो नात्र संशयः ॥२३॥ विघ्नराजं तदपि वै भजध्वं भक्तिसंयुताः । तेनाऽयं सुजयो देवा भविष्यति विशेषतः ॥२४॥ स्वयं साक्षाद् बुद्धिपतिर्बुद्धिं संचालयिष्यति । गजाननस्य मंत्रं वै जपध्वं विधिपूर्वकम् ॥२५॥ एवमुक्त्वा महायोगी रैभ्यः स्वच्छंदगोऽभवत् । शिवादयो महाभागा हर्षिताः संबभूविरे ॥२६॥ गजाननस्य मंत्रं ते जेपुस्तपःपरायणाः । सविधिं ध्यानसंयुक्तास्तोषयामासुरन्वहम् ॥२७॥ निराहारप्रभावेण संतुष्टो भक्तिभावितः । शतवर्षेषु देवेशानाययौ स गजाननः ॥२८॥ दृष्ट्वा गजाननं ते तु हर्षिता देवनायकाः । देवा मुनिगणाः सर्वे पुपूजुः स्नेहसंयुताः ॥२९॥ कृत्वा करपुटं भक्त्या तुष्टुवुस्तं गजाननम् । पुनरुत्थाय ते सर्वे प्रणेमुस्तं गजाननम् ॥३०॥ देवर्षय ऊचुः । गजानन नमस्तुभ्यं सर्वेषां बीजरूपिणे । निर्बीजाय गणेशाय विघ्नानां पतये नमः ॥३१॥ अनंतायैकदंताय हेरंबाय नमो नमः । चतुर्भुजाय सर्वेश सर्वपूज्याय ते नमः ॥३२॥ सर्वसिद्धिप्रदात्रे च सुरासुरमयाय ते । सिद्धिबुद्धिप्रचालाय सिद्धिबुद्धिपते नमः ॥३३॥ अगुणाय गुणेशाय गुणरूपाय गौणिने । मायामयाय मायायाश्चालकाय परात्मने ॥३४॥ सर्वादये महोदार पराक्रमपराय ते । स्वानंदवासिने तेऽस्तु नमः स्वानंददायिने ॥३५॥ योगाकाराय योगानां स्वामिने शांतिदायिने । ब्रह्मणस्पतये तेऽस्तु ब्रह्मणां ब्रह्मणे नमः ॥३६॥ अनाधाराय सर्वेषामाधाराय नमो नमः । आदिमध्यांतहीनायादिमध्यांताय ते नमः ॥३७॥ परश्वंकुशहस्ताय त्रिनेत्राय महोदर । नमो मूषकवाहाय मूषकध्वजिने नमः ॥३८॥ नमो नमस्ते सकलाय धाम्ने सदा सुखानंदकराय पात्रे । जगत् सुस्रष्ट्रे सकलस्य हंत्रे गुणैर्विहीनाय गणाधिपाय ॥३९॥ विदेहरूपाय पराय भोक्त्रे बोधेन हीनाय सुसांख्यकाय । सदा स्वबुद्धौ परसंस्थिताय गजात्मरूपाय नमो नमस्ते ॥४०॥ बोधहीनं च यद्ब्रह्म तदेव गजवाचकम् । गजचिह्नेन योगींद्राः पश्यंति

त्वां गजाननम् ॥४१॥ यथा मुखस्य चिह्नेन ज्ञायंते मानवादयः । तथा विदेहचिह्नेन ज्ञायसे त्वं तु योगिभिः ॥४२॥ विदेहं गजरूपं यत्तेन ते मुखमुच्यते । गणेशस्य प्राप्तिकरं गजानन नमोस्तु ते ॥४३॥ किं स्तवाम गणाधीश यत्र वेदादिकास्तथा । योगिनः शांतिमापन्नास्तं वयं शरणं गताः ॥४४॥ स्तुत्वा विघ्नेश्वरं ते तु प्रणेमुस्तं पुनः पुनः । तानुवाच गणाधीशो हर्षयन् सर्वभाववित् ॥४५॥ गजानन उवाच । स्तोत्रं भवत्कृतं देवा ईश्वरा मुनयश्च मे । सर्वसिद्धिप्रदं पूर्णं भविष्यति निरंतरम् ॥४६॥ यद्यदिच्छति तत्तद्वै दास्यामि भक्तियंत्रितः । पठनाच्छ्रवणादस्य संतुष्टोऽहं विशेषतः ॥४७॥ वरदोऽहं वृणुत वो दास्यामि वरमीप्सितम् । तपसा भक्तिभावेन स्तोत्रेण तुष्टिमागतः ॥४८॥ गजाननवचः श्रुत्वा हर्षिता देवतर्षयः । प्रत्यूचिरे प्रणम्येदं वचनं सर्वसौख्यदम् ॥४९॥ देवर्षय ऊचुः । लोभासुरेण भो स्वामिन् त्रासितं भुवनत्रयम् । वयं कर्मविहीनत्वादुपोषणयुताः कृताः ॥५०॥ अतस्त्वं जहि दैत्येशं सर्वाजेयं गजानन । तव भक्तिं दृढां देहि लोभहीनां विशेषतः ॥५१॥ तेषां वचनमाकर्ण्य गजानन उवाच तान् । मा भयं कुरुत प्राज्ञा हनिष्यामि महासुरम् ॥५२॥ लोभहीना मदीया या भक्तिर्वश्च भविष्यति । अधुना दानवेंद्रं तं जेष्यामि च न संशयः ॥५३॥ मुनीन् देवानेवमुक्त्वाऽभवत्तत्रैव संस्थितः । सर्वेषां कार्यसिद्ध्यर्थं गजाननः प्रतापवान् ॥५४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते गजाननप्रादुर्भावो नाम चत्वारिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । दूतं गजाननस्तत्र प्रेषयामास शंकरम् । स गत्वा दैत्यपं दक्ष जगाद शृणु तद्वचः ॥१॥ शिव उवाच । शृणु लोभासुर त्वं मे वचनं हितकारकम् । करिष्यसि यदा साम्ना भविष्यसि तदा सुखी ॥२॥ गजाननः स्वयं साक्षाद्ब्रह्मणां नायकः स्मृतः । स आगतः सुरैः सर्वैर्देवेंद्रैर्मुनिभिर्वृतः ॥३॥ नगरप्रांतभागे ते दशयोजनदूरतः । संस्थितेन च दैत्येश प्रेषितोऽहं विशेषतः ॥४॥ मदीयवरदानेन निर्भयोऽसि हि मानद । अतस्त्वदीयरक्षार्थं प्रेषयामास मां प्रभुः ॥५॥ ब्रह्मांडं वशमानीय त्वं सर्वेशोऽसि सांप्रतम् । देवान् पशुसमानांश्च कृत्वा दैत्यैर्निरंतरम् ॥६॥ अधुना वैरमुत्सृज्य स्नेहं कुरु महामते । देवाः स्वपदगाः संतु ब्राह्मणाः कर्मकारिणः ॥७॥ गजाननस्य वर्तस्व मित्रभावेन दानव । भुंक्ष्व

भोगान् महाभाग नोचेत्त्वां स हनिष्यति ॥८॥ शिवस्य वचनं श्रुत्वा क्रोधयुक्तो महासुरः। जगाद तं तिरस्कृत्य महादेवं मदान्वितः ॥९॥ लोभासुर उवाच। कोऽसौ गजाननः शंभो त्वं भेदकर एव च । मोहयस्यधुना मां किं देवानां पक्षगः पुरः ॥१०॥ अधुना त्वां महादेव हन्मि क्रोधसमन्वितः। किं करोमि च दूतस्त्वं गच्छ देवं गजाननम् ॥११॥ वद वाक्यं मदीयं त्वं हनिष्यामि सदेवकम्। गजाननं न संदेहः पश्य मे पौरुषं महत् ॥१२॥ एवं निर्भर्त्सितः शंभुः क्रोधारुणविलोचनः। जगाद तं महादैत्यं विशेषज्ञः सुदुर्मतिम् ॥१३॥ शिव उवाच। मृत्युयोगेन पापिष्ठ त्वं युतोसि न संशयः। गजाननं तेन लोभ निंदसि ब्रह्मनायकम् ॥१४॥ शिवः पुनः सुदुर्बुद्धिमेवमुक्त्वा ययौ प्रभुम् । गजाननं प्रणम्यादौ वृत्तांतं संजगौ पुनः ॥१५॥ तदाकर्ण्य वचः क्रूरं गजाननः प्रतापवान्। क्रोधसंरक्तचक्षुः सन् परशुं त्वक्षिपत्ततः ॥१६॥ अनंतादित्यसंकाशः परशुः कालभीतिदः। आययौ दैत्यपुर्यां वै ज्वालामालाभिरावृतः ॥१७॥ तेजोमयं महास्त्रं तद् दृष्ट्वा दैत्यगणाः परम्। भयभीता ययुस्तं ते हाहाकाररवाकुलाः ॥१८॥ दानवेंद्रैः सभासंस्थं लोभं दृष्ट्वा सुखं वचः। जगुर्दारुणरूपं यत् सर्वेभ्यो भयदायकम् ॥१९॥ नागरा ऊचुः। किं स्थितोऽसि महादैत्य लोभ ज्वालासमाकुलम् । अस्त्रं समागतं क्रूरं दाहयामास दानवान् ॥२०॥ तेषां तद्वचनं श्रुत्वा भयहर्षसमन्वितः। जगाद दानवाधीशान् महाकोपयुतोऽसुरः ॥२१॥ लोभासुर उवाच। गजाननोऽमरैः सार्धं समायातो न संशयः। समर्थो दृश्यते नूनं यस्यास्त्रबलमीदृशम् ॥२२॥ तस्य तद्वचनं श्रुत्वा दानवेंद्रा महाबलाः। ऊचुः प्रांजलयः सर्वे मा भयं कुरु सत्तम ॥२३॥ गजाननं हनिष्यामः पश्यति त्वयि मानद। एवमुक्त्वा ययुः सर्वे दंशिता योद्धुमाहताः ॥२४॥ ततस्तैर्यमसंकाशैर्दृष्टं तेजोमयं महत् । अस्त्रं ब्रह्मपते क्रूरं प्रलयस्य प्रकाशकम् ॥२५॥ ददाह दानवांस्तत्र सर्वतस्तीक्ष्णतेजसा। हाहाकाररवाः सर्वे पपलुर्भयविह्वलाः ॥२६॥ दानवेंद्रैस्ततो दक्ष मेघास्त्रं मोचितं महत्। जलौघैः सर्वतो मेघा ववृषुर्दारुणं परम् ॥२७॥ जलं सर्वं महास्त्रं तच्छोषयामास तत्क्षणात् । मेघस्थं ते ततो मेघा निस्तेजस्का बभूविरे ॥२८॥ दैत्येंद्रान् दैत्यमुख्यांश्च ज्वालया परशुस्तदा। ददाह च ततो भीता पपलुर्यत्र तत्र ते ॥२९॥ तद् दृष्ट्वा परमाश्चर्यं स लोभासुर आययौ। रथारूढो महातेजास्तन्निवृत्त्यर्थमाहतः ॥३०॥ पश्यतो दैत्यराजस्य ज्वालाऽकस्मात् समागता। रथं साश्वं ददाहाऽपि ततः शस्त्राणि सर्वतः ॥३१॥ ततः पपाल दैत्येंद्रः कविं लोभासुरो ययौ। तं प्रणम्य महाभागं पप्रच्छ विनयान्वितः ॥३२॥ लोभासुर उवाच। स्वामिन् गजाननो देव आगतः स महाबलः।

दाहयामास शस्त्रेणाऽनिवार्येण रथं स मे ॥३३॥ तन्निवृत्त्यर्थमेवाहं न पश्यामीह किंचन। अतस्ते शरणं नाथ प्राप्तोऽहं रक्ष मां मुने ॥३४॥ मनोवाणीमयं सर्वं तस्मान् मृत्युर्न मे भवेत् । नामरूपधरः सोऽपि कथं मां धक्ष्यति प्रभो ॥३५॥ यदि मे मरणं प्राप्तमेवं तर्ह्यस्तु सांप्रतम्। देवानां शरणं नाथ न गमिष्यामि कर्हिचित् ॥३६॥ अतो वद महाभाग उपायं हितदायकम्। त्वदाधारं च योगींद्र जीवनं मे प्रवर्तते ॥३७॥ इति तस्य वचः श्रुत्वा शुक्रः सर्वज्ञमुख्यकः। लोभासुरं भयोद्विग्नं तं जगाद प्रहर्षयन् ॥३८॥ शुक्र उवाच। मा कुरुष्व भयं वत्स शृणु मे वचनं हितम् । तत् समाचर दैत्येंद्र ततः क्षेमं भविष्यति ॥३९॥ गजाननः प्रसन्नात्मा यदिच्छति महासुर । तदेव सत्यरूपं वै भविष्यति न संशयः ॥४०॥ ब्रह्मणां नायकः प्रोक्तो गच्छ तं विनयान्वितः। नाऽयं देवाधिपो दैत्य सुरासुरमयः प्रभुः ॥४१॥ एवं तस्य वचः श्रुत्वा लोभस्तं पुनरब्रवीत्। निःश्वस्य देवपैः सार्धं कथं योद्धुं समाययौ ॥४२॥ मध्यस्थश्चेन् महाभागं तं गच्छामि शरण्यकम्। न लज्जा तेन मे स्वामिन् संशयं छिंधि हृत्स्थितम् ॥४३॥ शुक्र उवाच। देहरूपं महद्ब्रह्म देह्यात्मा वेदभाषितम्। तयोर्योगे महादैत्य बोधोऽसि पदवाचकः ॥४४॥ बोधनाशे विदेहाख्यं ब्रह्म सौख्यं प्रकीर्तितम् । सुसिद्धिदं तदेव त्वं विजानीहि गजाननम् ॥४५॥ सर्वेषां बीजरूपं यत्तस्य बीजं न विद्यते। तदेव गजशब्दाख्यं ब्रह्म वेदे प्रकीर्तितम् ॥४६॥ गजचिह्नेन गच्छंति योगिनो हि गजाननम्। तेन नाम्ना समाख्यातो मुनिभिस्तत्त्वदर्शिभिः ॥४७॥ यथा मुखस्य चिह्नेन ज्ञायते मानवादिभिः। गजचिह्नेन तद्ब्रह्म ज्ञायते योगिभिः सदा ॥४८॥ तेनैव स्थापितं विश्वं बोधरूपं महामते। स्वस्वधर्मयुतं पूर्णं तत्राऽयं संस्थितोऽभवत् ॥४९॥ पाताले दानवानां च राज्यं स्वर्गे दिवौकसाम् । पृथिव्यां मानवानां वै त्रिविधं रचितं पुरा ॥५०॥ यदा देवा महाभाग लोभयुक्ता मदान्विताः। पातालस्थान् दैत्यगणाञ्जघ्नुर्मूलविनाशकाः ॥५१॥ तदाऽयं देहधारी च दैत्येभ्यो वरदोऽभवत्। देवानां विघ्नसंदाता गणेशः सर्वभाववित् ॥५२॥ ततो दैत्यगणाः सर्वे बलयुक्ता सुरेंद्रकान्। जघ्नुर्वीरश्रिया राजन् विघ्नहीनप्रभावतः ॥५३॥ यदा दैत्या महालोभ लोभयुक्ता विशेषतः। देवानां जीवनाशार्थमभवन् कर्मखंडनात् ॥५४॥ तदा विघ्नेश्वरः साक्षाद्देहं धृत्वा च दानवान्। हत्वा स्वस्थानगान् देवानकरोद्धर्म-पालकः ॥५५॥ सुराऽसुरादयः सर्वे स्वस्वधर्मरता यदा। तदाऽयं ब्रह्मरूपः संश्रित्ते चिंतामणिर्बभौ ॥५६॥ चित्तरूपा स्वयं बुद्धिर्भ्रांतिरूपा महामते। सिद्धिस्ताभ्यां गणाधीशः खेलति ब्रह्मनायकः ॥५७॥ स्वसंवेद्यात् मनस्तस्य दर्शनं जायते यतः।

तेनाऽयं गणपः स्वानंदवासी कथ्यते बुधैः ॥५८॥ अतस्तस्यैव दैत्येंद्र शरणं सुखदं भवेत् । अन्यथा सकलं हत्वा मरिष्यसि न संशयः ॥५९॥ गजाननस्य दैत्येश शस्त्रं ब्रह्ममयं ह्यतः । तस्मै कुरु नमो भक्त्या शांतरूपं भविष्यति ॥६०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते शुक्रोपदेशवर्णनं नामैकचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । शुक्रस्य वचनं श्रुत्वा लोभासुरः प्रणम्य तम् । तथेति प्रतिपाद्यैव सकविः शरणं ययौ ॥१॥ नगरप्रांतभागे तच्छस्त्रं गजाननस्य च । समीपसंस्थान् जज्वाल दानवादीन् समास्थितम् ॥२॥ तं प्रणम्य महादैत्यो लोभः परशुमुत्तमम् । कृतांजलिः प्रतुष्टाव भयभीतः समंततः ॥३॥ लोभासुर उवाच । नमस्ते शस्त्रराजाय शस्त्राणां ब्रह्मरूपिणे । नानाशस्त्राणि शस्त्रेश त्वदाधाराणि ते नमः ॥४॥ प्रलयानलसंकाशं स्वरूपं धरते नमः । अनंतवीर्ययुक्ताय भास्करामिततेजसे ॥५॥ दृश्यादृश्यमयायैव सर्वदर्पहराय ते । धर्मसंस्थापनार्थाय नानारूपधराय च ॥६॥ साक्षाद्गजाननस्यैव यद्वीर्यं नियतात्मकम् । तदेव त्वं महाशस्त्रं किं ते स्तौमि नमो नमः ॥७॥ शरणागतपालाय सदा स्वानंदसंस्थित । रक्ष मां भयभीतं भोः परशो ते नमो नमः ॥८॥ एवं लोभासुरं संस्तुवंतं तं तु महाबलम् । काव्येन शस्त्रराजं तच्छांतिरूपधरं बभौ ॥९॥ गत्वा गजाननस्यैव हस्तगं तद्बभूव ह । लोभासुरः स शुक्रेणाऽऽययौ विघ्नेश्वरं ततः ॥१०॥ समागतं महादैत्यं दृष्ट्वा देवर्षयोऽभवन् । विस्मिता हर्षिताः सर्वे परस्परमुखेक्षणाः ॥११॥ गजाननं प्रणम्यैव लोभासुरः प्रतापवान् । काव्येन पूजयामास भक्तियुक्तो विशेषतः ॥१२॥ प्रणम्य तं पुनर्दैत्यः कृत्वा करपुटं प्रभुम् । गजाननं भावसंयुक्तस्तुष्टाव प्रहर्षितः ॥१३॥ लोभासुर उवाच । नमस्ते गजवक्त्राय नानासिद्धिप्रदायिने । बुद्धिचालकवेषाय ब्रह्मणे वै नमो नमः ॥१४॥ हेरंबाय सदा स्वानंदवासिने महात्मने । परात्परतरायैव विघ्नेशाय नमो नमः ॥१५॥ सुरासुरप्रियकर सुरासुरमयाय ते । लोभयुक्तान् विधर्मस्थान्नाशनाय नमो नमः ॥१६॥ देवानां पालकायैव दैत्यानां रक्षकाय ते । सर्वेषां दर्पहंत्रे वै गणेशाय नमो नमः ॥१७॥ लंबोदराय देवेश दैत्येश मूषकध्वज । अनादये च सर्वेषामादिरूपाय ते नमः ॥१८॥ आदिमध्यांत-हीनायादिमध्यांतस्वरूपिणे । ब्रह्मेशाय महेशानां पालकाय नमो नमः ॥१९॥ ब्रह्मभ्यो ब्रह्मदात्रे च सदा शांतिधराय

ते । शांतीनां शांतिरूपाय नमो योगाय वै नमः ॥२०॥ एकदंताय सर्वेश वक्रतुंडाय ते नमः । महोदराय पूर्णाय पूर्णानंदाय ते नमः ॥२१॥ सर्वेषां मूलबीजाय मात्रे पित्रे नमो नमः । ज्येष्ठराजाय ज्येष्ठानां पालकाय नमो नमः ॥२२॥ बीजरूपं गणाधीश जगतां ब्रह्मणां गजम् । चिह्नेन लभ्यसे तेन गजानन नमोऽस्तु ते ॥२३॥ बोधहीनाय रूपाय सदा सांख्यमयाय च । विदेहाय नमस्तुभ्यं प्रत्यक्षं रूपधारिणे ॥२४॥ यं स्तोतुं न समर्थाश्च वेदा योगिशिवादयः । तं किं स्तौमि गणाधीश नमस्ते वरदो भव ॥२५॥ त्वद्दर्शनजमाहात्म्यात् संस्तुतोऽसि महाप्रभो । तेन मेऽभयदो भूत्वा रक्ष दासं विशेषतः ॥२६॥ एवं स्तुत्वा महालोभः प्रणनाम गजाननम् । तमुवाच दयासिंधुर्भक्तं भक्तप्रपालकः ॥२७॥ गजानन उवाच । वरं वृणु महालोभ ददामि मनसीप्सितम् । प्रसन्नोऽहं विशेषेण भक्त्या काव्यप्रदत्तया ॥२८॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धिकरं भवेत् । पठतः शृण्वतश्चैव लोभ तं नैव पीडय ॥२९॥ पुत्रपौत्रादिसंयुक्तो भुक्त्वा भोगान् मनेप्सितान् । अंते स्वानंदलोके स ब्रह्मभूतो भविष्यति ॥३०॥ यः स्तौति मामनेनैव स मे मान्यो न संशयः । सदा सुरस्वभावेन हीनः सोऽपि भविष्यति ॥३१॥ त्वां हंतुं क्रोधसंयुक्त आगतोऽहं न संशयः । शरणागतमेवं तु दानवोत्तम हन्मि न ॥३२॥ गजाननवचः श्रुत्वा लोभो हर्षसमन्वितः । उवाच तं महाबुद्धिर्भावेन ब्रह्मनायकम् ॥३३॥ लोभासुर उवाच । गजानन वरं मे त्वं देहि संपूर्णदायक । तव भक्तिस्वरूपं च गाणपत्यप्रियात्मताम् ॥३४॥ स्थानं देहि विशेषेण प्रभो वृत्तिं च शाश्वतीम् । कार्यं कथय सर्वेश करिष्यामि गजानन ॥३५॥ गजानन उवाच । मदीया भक्तिराद्या ते भविष्यति महामते । गाणपत्येषु ते स्नेहो वृद्धिं यास्यति नित्यदा ॥३६॥ स्वस्थाने त्वं स्थिरो भूत्वा तिष्ठ मे भक्तिसंयुतः । यत्र मे स्मरणं नास्ति पूजनं वाऽसुरोत्तम ॥३७॥ आदौ कर्मादिषु प्राज्ञ तत् समाहर नित्यदा । यथा देवाः प्रिया मे तु तथा त्वमपि लोभक ॥३८॥ मम भक्ताश्च ये दैत्य तान् रक्षस्व विशेषतः । मदीयभक्तिरूपं तु लोभ वर्धय तेषु वै ॥३९॥ एवमुक्तः प्रभुं लोभस्तं प्रणम्य गजाननम् । काव्येन सहितः सोऽपि स्वपुरं प्रययौ प्रभो ॥४०॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते लोभासुरशांतिवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । शांतिरूपधरं लोभं दृष्ट्वा देवर्षयोऽमलाः । गजाननं निजं नाथं हर्षिता नेमुरादरात् ॥१॥ गजाननं पूजयित्वा विधानेन सुरर्षयः । पुनः प्रणम्य तं सर्वे तुष्टुवुः करसंपुटैः ॥२॥ विदेहरूपं भवबंधहारं सदा स्वनिष्ठं स्वसुखप्रदं तम् । अमेयसांख्येन च लभ्यमीशं गजाननं भक्तियुता भजामः ॥३॥ मुनींद्रवंद्यं विधिबोधहीनं सुबुद्धिदं बुद्धिधरं प्रशांतम् । विकालहीनं सकलांतगं वै गजाननं भक्तियुता भजामः ॥४॥ अमेयरूपं हृदि संस्थितं तं ब्रह्माहमेकं भ्रमनाशकारम् । अनादिमध्यांतमपाररूपं गजाननं भक्तियुता भजामः ॥५॥ जगत्प्रमाणं जगदीशमेवमगम्यमाद्यं जगदादिहीनम् । अनात्मनां मोहप्रदं पुराणं गजाननं भक्तियुता भजामः ॥६॥ न भूर्न रूपं न जलं प्रकाशं न तेजसिस्थं न समीरणस्थम् । न खे गतं पंचविभूतिहीनं गजाननं भक्तियुता भजामः ॥७॥ न विश्वगं तैजसगं न प्राज्ञं समष्टिव्यष्टिस्थमनंतगं न । गुणैर्विहीनं परमार्थभूतं गजाननं भक्तियुता भजामः ॥८॥ गुणेशगं नैव च बिंदुसंस्थं न देहिनं बोधमयं न ढुंढिम् । संयोगहीनाः प्रवदंति तत्स्थं गजाननं भक्तियुता भजामः ॥९॥ अनागतं नैव गतं गणेशं कथं तदाकारमयं वदामः । तथापि सर्वं प्रभुदेहसंस्थं गजाननं भक्तियुता भजामः ॥१०॥ यदि त्वया नाथ कृतं न किंचित्तदा कथं सर्वमिदं विभाति । अतो महात्मानमचिंत्यमेव गजाननं भक्तियुता भजामः ॥११॥ सुसिद्धिदं भक्तजनस्य देवं स कामिकानामिह सौख्यदं तम् । अकामिकानां भवबंधहारं गजाननं भक्तियुता भजामः ॥१२॥ सुरेंद्रसेव्यं ह्यसुरैः सुसेव्यं समानभावेन विराजयंतम् । अनंतवाहं मुषकध्वजं तं गजाननं भक्तियुता भजामः ॥१३॥ सदा सुखानंदमये जले च समुद्रजे चेक्षुरसे निवासम् । द्वंद्वस्य पानेन च नाशरूपे गजाननं भक्तियुता भजामः ॥१४॥ चतुःपदार्था विविधप्रकाशास्त एव हस्ताः स चतुर्भुजं तम् । अनाथनाथं च महोदरं वै गजाननं भक्तियुता भजामः ॥१५॥ महाखुमारूढमकालकालं विदेहयोगेन च लभ्यमानम् । अमायिनं मायिकमोहदं तं गजाननं भक्तियुता भजामः ॥१६॥ रविस्वरूपं रविभासहीनं हरिस्वरूपं हरिबोधहीनम् । शिवस्वरूपं शिवभासनाशं गजाननं भक्तियुता भजामः ॥१७॥ महेश्वरीस्थं च सुशक्तिहीनं प्रभुं परेशं परवंद्यमेवम् । अचालकं चालकबीजभूतं गजाननं भक्तियुता भजामः ॥१८॥ शिवादिदेवैश्च खगैः सुवंद्यं नरैर्लतावृक्षपशुप्रभूभिः । चराचरैर्लोकविहीनमेवं गजाननं भक्तियुता भजामः ॥१९॥ मनोवचोहीनतया सुसंस्थं निवृत्तिमात्रं ह्यजमव्ययं तम् । तथापि देवं पुर आस्थितं तं गजाननं भक्तियुता भजामः ॥२०॥ वयं सुधन्या गणपस्तवेन तथैव नत्यार्चनतस्तवैव ।

गणेशरूपाश्च कृतास्त्वया तं गजाननं भक्तियुता भजामः ॥२१॥ गजाख्यबीजं प्रवदंति वेदास्तदेव चिह्नेन च योगिनस्त्वाम् । गच्छंति तेनैव गजाननस्त्वं गजाननं भक्तियुता भजामः ॥२२॥ पुराणवेदाः शिवविष्णुकाद्याऽमराः शुकाद्या गणपस्तवे वै । विकुंठिताः किं च वयं स्तवाम गजाननं भक्तियुता भजामः ॥२३॥ मुद्गल उवाच । एवं स्तुत्वा गणेशानं नेमुः सर्वे पुनः पुनः । तानुत्थाप्य वचो रम्यं गजानन उवाच ह ॥२४॥ गजानन उवाच । वरं ब्रूत महाभागा देवाः सर्षिगणाः परम् । स्तोत्रेण प्रीतिसंयुक्तः परं दास्यामि वाञ्छितम् ॥२५॥ गजाननवचः श्रुत्वा हर्षयुक्ताः सुरर्षयः । जगुस्तं भक्तिभावेन साश्रुनेत्राः प्रजापते ॥२६॥ देवर्षय ऊचुः । गजानन यदि स्वामिन् प्रसन्नो वरदोऽसि भोः । तदा भक्तिं दृढां देहि लोभहीनां त्वदीयकाम् ॥२७॥ लोभासुरस्य देवेश कृता शांतिः सुखप्रदा । तदा जगदिदं सर्वं वरयुक्तं कृतं त्वया ॥२८॥ अधुना देवदेवेश कर्मयुक्ता द्विजादयः । भविष्यंति धरायां वै वयं स्वस्थानगास्तथा ॥२९॥ स्वस्वधर्मरताः सर्वे गजानन कृतास्त्वया । अतःपरं वरं याचामहे ढुंढे कमप्यहो ॥३०॥ यदा ते स्मरणं नाथ करिष्यामो वयं प्रभो । तदा संकटहीनान् वै कुरु त्वं नो गजानन ॥३१॥ एवमुक्त्वा प्रणेमुस्तं गजाननमनामयम् । स तानुवाच प्रीतात्मा भक्त्यधीनस्वभावतः ॥३२॥ गजानन उवाच । यद्यच्च प्रार्थितं देवा मुनयः सर्वमंजसा । भविष्यति न संदेहो मत्स्मृत्या सर्वदा हि वः ॥३३॥ भवत्कृतमदीयं वै स्तोत्रं सर्वत्र सिद्धिदम् । भविष्यति विशेषेण मम भक्तिप्रदायकम् ॥३४॥ पुत्रपौत्रप्रदं पूर्णं धनधान्यविवर्धनम् । सर्वसंपत्करं देवाः पठनाच्छ्रवणान्नृणाम् ॥३५॥ मारणोच्चाटनादीनि नश्यंति स्तोत्रपाठतः । परकृत्यं च विप्रेंद्रा अशुभं नैव बाधते ॥३६॥ संग्रामे जयदं चैव यात्राकाले फलप्रदम् । शत्रूच्चाटनकार्येषु प्रशस्तं तद्भविष्यति ॥३७॥ कारागृहगतस्यैव बंधनाशकरं भवेत् । असाध्यं साधयेत् सर्वमनेनैव सुरर्षयः ॥३८॥ एकविंशतिवारं चैकविंशति दिनावधिम् । प्रयोगं यः करोत्येव स भवेत् सर्वसिद्धिभाक् ॥३९॥ धर्मार्थकाममोक्षाणां ब्रह्मभूयस्य दायकम् । भविष्यति न संदेहः स्तोत्रं मद्भक्तिवर्धनम् ॥४०॥ एवमुक्त्वा गणाधीशस्तत्रैवांतरधीयत । देवाः सर्षिगणाः सर्वेऽभवन् खिन्ना इव प्रभो ॥४१॥ गजाननस्य मूर्तिस्तैः स्थापिता सिद्धिदा ततः । नैर्ऋते कोणभागे स्म दर्शनेन सुखप्रदा ॥४२॥ तत्रैव संस्थिता देवा मुनयो भक्तिसंयुताः । अंशेन स्वाधिकारेषु स्वाश्रमेषु गता बभुः ॥४३॥ ततः स्वधर्मसंयुक्ता बभूवुर्मानवा भुवि । यथायोग्यं जगत् सर्वं

बभूवे हर्षितं विधे ॥४४॥ एतद्गजाननस्यैव चरितं पापनाशनम् । भुक्तिमुक्तिप्रदं दक्ष कथितं ब्रह्मदं परम् ॥४५॥ यः पठेत् पाठयेद्वापि शृणुते श्रद्धयान्वितः । स ईप्सितफलं भुक्त्वा ब्रह्मभूतो भविष्यति ॥४६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते देवमुनिकृतस्तुतिवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । धन्योऽहं मुद्गल स्वामिंस्त्वत्संगान्नात्र संशयः । लोभशांतिकरं चित्रं श्रुतं भक्त्या चरित्रकम् ॥१॥ न तृप्तोऽहं गजास्यस्य सुधापान इव प्रभो । वद क्षेत्रस्य माहात्म्यमधुना तस्य सर्वदम् ॥२॥ गजाननस्य भक्त्यर्थमवतारान् धृतान् वद । संक्षेपेण महाभाग सर्वज्ञोऽसि च ते नमः ॥३॥ सूत उवाच । दक्षस्य वचनं श्रुत्वा मुद्गलो हर्षसंयुतः । जगाद तं महाभागं महाभागो दयान्वितः ॥४॥ मुद्गल उवाच । अवतारा अनंताश्च गजाननस्य मानद । भक्तानां कार्यसिद्ध्यर्थं कथनं नैव शक्यते ॥५॥ तथापि शृणु दक्ष त्वमवतारचरित्रकम् । गजाननस्य कथयामि समासेन सर्वदम् ॥६॥ पार्वत्या शंकरेणैवाऽऽराधितो गणनायकः । दिव्यवर्षसहस्रेण प्रसन्नो वरदोऽभवत् ॥७॥ ताभ्यां संपूजितो देवः स्तुतः संयाचितोऽभवत् । त्वं पुत्रो भव नौ स्वामिन् संसारोत्तारणाय वै ॥८॥ तथेति प्रतिपाद्याऽसौ गणेशोंऽतर्दधे स्वयम् । पुत्रः सिंधुवधायाभून् मयूरेश इति स्मृतः ॥९॥ हत्वा सिंधुं महावीर्यं गतः स्वानंदके पुरे । एवं नानाऽवतारान् स दधार शिवयोर्गृहे ॥१०॥ अष्टकोट्यवताराश्च गणेशस्य प्रकीर्तिताः । शिवपुत्राश्च ते ख्याताः कार्यार्थं त्वंशभावतः ॥११॥ केचिच्छिवात् सुमुद्भूताः केचिच्छक्तेर्महात्मनः । उभयोर्योगतः केचित् कलांशा अभवन् पराः ॥१२॥ यादृशं संकटं प्राप्तं तदर्थं संस्मृतो विभुः । तावत् कलांशयोगेन पुत्रोऽभूत् सुखदायकः ॥१३॥ कृत्वा कार्यस्य संसिद्धिं पुनः स्वानंदगोऽभवत् । तद्वियोगेन संतप्तौ शिवौ किल बभूवतुः ॥१४॥ अन्ये नानाऽवताराश्च कश्यपादिगृहेंऽशतः । धृता गजाननेनैव वक्तुं नैव प्रशक्यते ॥१५॥ इतिहासं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् । गजाननावतारेण युक्तं शृणु प्रजापते ॥१६॥ एकदा निद्रितं शंभुर्ब्रह्माणं प्रययौ प्रभुः । किंचित् कार्यार्थमेवं तमुत्थाप्य स्वगृहेऽगमत् ॥१७॥ स उत्थितो महाजृंभां चकार क्रोधसंयुतः । तस्माज्जातः पुमानेको रक्तवर्णः सुशोभनः ॥१८॥ सुवासबहुलेनैव युक्तः काम इवापरः । तं दृष्ट्वा विस्मितो ब्रह्मा जगाद

स महाबलम् ॥१९॥ ब्रह्मोवाच । कोऽसि त्वं पुरुषश्रेष्ठ किमर्थं ह्यागतो वद । एवं पृष्टः स तं देवं जगाद मेघनिःस्वनः ॥२०॥ पुमानुवाच । जृंभायास्ते समुत्पन्नः पुत्रोऽहं देवनायक । स्थानं नामादिकं देहि भक्षणं विविधं पितः ॥२१॥ ततोऽतिहर्षितो ब्रह्मा पुत्रं दृष्ट्वा महाद्भुतम् । ददौ तस्मै विशेषेण वरांस्ताञ्शृणु मानद ॥२२॥ सुवासबहुलं रक्तं वपुस्ते तेन सिंदुर । नाम नानाविधान् भोगान् भुंक्ष्व सर्वत्रगः स्वयम् ॥२३॥ न बलेन समस्ते वै भविष्यति चराचरे । ब्रह्मांडजयसंयुक्तो भव पुत्र ममाज्ञया ॥२४॥ यद्यदिच्छसि तत्तत्ते सफलं प्रभविष्यति । क्रोधादालिंगसे यं त्वं भस्मसात्तं करिष्यसि ॥२५॥ एवं नानावरान् दत्त्वा संस्थितं प्रपितामहम् । तं प्रणम्य स सिंदूरो जगामास्तुत्य भूतले ॥२६॥ शौनक उवाच । तपोहीनाय दाताऽसौ ददौ संदुर्लभान् वरान् । किं कारणं वद प्राज्ञ संशयो मे महान् हृदि ॥२७॥ सूत उवाच । इच्छासंकल्पसिद्ध्यर्थं तपस्तपति यो नरः । विपुले सोऽपि तपसि मृतो यदि भवेन् मुने ॥२८॥ अन्यस्मिन् जन्मनि प्राज्ञः फलयुक्तः प्रजायते । स्वल्पश्रमेण देवोऽपि वरं ददाति निश्चितम् ॥२९॥ एतत्ते कथितं सर्वं संशयच्छेदनं वचः । अधुना शृणु संवादं प्रकृतं यं पुरा भवम् ॥३०॥ विचारं मार्गमध्ये स गत्वा सिंदूर आकरोत् । तपोहीनायाऽपि देवो मे ददाति वरं कथम् ॥३१॥ अतोऽहं वंचितो नूनं विधिना नात्र संशयः । लिंगयित्वा मृतं कुर्वे तं सत्यत्वदिदृक्षया ॥३२॥ निःसंशयं भवेदेवं विचार्य सिंदुरासुरः । आययौ ब्रह्मणः सोऽपि समीपे क्रोधसंयुतः ॥३३॥ गर्जयित्वा विधातारमालिंगितुं प्रचक्रमे । तद् दृष्ट्वा परमाश्चर्यं ब्रह्मोवाच सुदारुणम् ॥३४॥ ब्रह्मोवाच । मद्वरस्य प्रभावेन मां हंतुं समुपागतः । अतो दैत्योऽसि दुष्ट त्वमभाग्यान्नात्र संशयः ॥३५॥ पुत्रस्नेहेन रे दुष्ट वरा दत्ताः सुदुर्लभाः । अतो गजाननस्त्वां वै हनिष्यति कुलाधम ॥३६॥ एवमुक्त्वा पपालाऽसौ विकुंठे शरणं ययौ । नारायणं च सिंदूरस्तमनु प्रययौ खलः ॥३७॥ नारायणाय वृत्तांतं कथयामास विस्तरात् । सोऽपि श्रुत्वा विनिःश्वस्याऽभवत् संपूज्य संस्थितः ॥३८॥ एतस्मिन्नंतरे तत्र सिंदूरश्च समागमत् । जगाद विष्णुमव्यक्तं वचः क्रोधसमन्वितः ॥३९॥ सिंदूर उवाच । विष्णो रक्ष विधातारं मां शप्त्वा प्रसमागतम् । हनिष्यामि त्वया सार्धं पश्य मे पौरुषं परम् ॥४०॥ विष्णुरुवाच । अहं सत्त्वगुणश्चायं वेदाध्ययनतत्परः । आवां हत्वा महादैत्य न यशस्ते भविष्यति ॥४१॥ त्वदधीनौ च सिंदूर आवां जानीहि मानद । शंकरः सर्वसंहर्ता स यशस्ते हरिष्यति ॥४२॥ विष्णोर्वचनमाकर्ण्य त्यक्त्वा विष्णुं चतुर्मुखम् । जगाम शंकरं सद्यः कैलासे युद्धलालसः ॥४३॥ ध्यानस्थं शंकरं दृष्ट्वा विचारमकरोद्धृदि । अमुं नग्नं

तपोयुक्तं किमर्थं हन्मि मूर्खवत् ॥४४॥ वामांगे संस्थितां नारीं रूपेणाप्रतिमां पराम् । तां गृहीत्वा गमिष्यामि स्वेच्छया क्रीडानोत्सुकः ॥४५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते सिंदूरशिवसमागमो नाम चतुश्चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । एवं निश्चितसंकल्पः सिंदूरो गिरिजां ततः । गृह्योड्डीय ययौ सद्यो मूर्च्छितां भयविह्वलाम् ॥१॥ तस्य श्वसनवेगेन पतिता नंदिमुख्यकाः । गणाः पुनः समुत्थाय हाहाकारं प्रचक्रिरे ॥२॥ हस्तगा पार्वती तत्र सावधाना बभूव ह । सस्मार गणपं देवं दैत्यपाशनियंत्रिता ॥३॥ गौर्युवाच । गजानन ज्ञानविहारकारिन् न मां च जानासि परावमर्शाम् । गणेश रक्षस्व न चेच्छरीरं त्यजामि सद्यस्त्वयि भक्तियुक्ता ॥४॥ विघ्नस्य शत्रोऽसुरसंघहंतर्विघ्नेश हेरंब महोदरप्रिय । मां रक्ष दैत्यात्त्वयि भक्तियुक्तां लंबोदर प्रेमविवर्धनाच्युत ॥५॥ किं सिद्धिबुद्धिप्रसरेण मोहयुक्तोऽसि किं वा निशि निद्रितोऽसि । किं लक्षलाभार्थविचारयुक्तः किं मां च विस्मृत्य सुसंस्थितोऽसि ॥६॥ किं भक्तसंगेन च देवदेव नानोपचारैश्च सुयंत्रितोऽसि । किं मोदकाद्यैर्गणपाऽऽवृतोऽसि नानाविहारेषु च वक्रतुंड ॥७॥ स्वानंदभोगेषु परिप्लुतोऽसि दासीं च विस्मृत्य महानुभाव । अनंतलीलासु सलालसोऽसि किं भक्तरक्षार्थसुसंकटस्थ ॥८॥ अहो गणेशामृतपानदक्षामरैस्तथा वाऽसुरपैः स्मृतोऽसि । तदर्थनानाविधिसंयुतोऽसि विसृज्य दासीं त्वमनन्यभावाम् ॥९॥ रक्षस्व मां दीनतमां परेश सर्वत्र चित्तेषु च संस्थितस्त्वम् । प्रभो विलंबेन विनायकोऽसि ब्रह्मेश किं देव नमो नमस्ते ॥१०॥ भक्ताभिमानीति च नाम मुख्यं वेदे बभूवात्र न किं महात्मन् । आगत्य हत्वा दितिजं सुरेश मां रक्ष दासीं हृदि पादनिष्ठाम् ॥११॥ अहो न दूरं बत किंचिदेव कथं न बुद्धीश समागतोऽसि । संचिंत्य देहं प्रजहामि ते हि यशः करिष्ये विपरीतमेव ॥१२॥ रक्ष रक्ष दयासिंधोऽपराधान् मे क्षमस्व च । क्षणे क्षणे वयं दास्यो रक्षितव्या विशेषतः ॥१३॥ स्तुवंत्यामेव पार्वत्यां शंकरो बोधसंयुतः । बभूव गणपानां वै श्रुत्वा हाहारवं विधे ॥१४॥ गणेशं मनसा स्मृत्वा वृषारूढः समाययौ । क्षणेन दैत्यराजं तं दृष्ट्वा डमरुणा त्वहन् ॥१५॥ ततः सोऽपि शिवं वीक्ष्याऽऽलिंगितुं धावितोऽभवत् । शिवस्य

शूलकादीनि शस्त्राण्याकुंठितानि वै ॥१६॥ तद् दृष्ट्वा परमाश्चर्यं भयभीतो महेश्वरः। सस्मार गणपं सोऽपि निर्विघ्नार्थं प्रजापते ॥१७॥ पार्वत्याः स्तवनं श्रुत्वा स गजानन आययौ। ब्राह्मणस्य स्वरूपेण तयोर्मध्ये प्रयुद्ध्यतोः ॥१८॥ गणेशेन कृतं तत्र कौतुकं परमाद्भुतम्। पपात गुप्तरूपश्च परशुर्दैत्यवक्षसि ॥१९॥ तेनाहतं महादैत्यं व्याकुलं वीक्ष्य विघ्नपः। ततस्तं ब्राह्मणः प्राह शृणु दैत्य वचो हितम् ॥२०॥ जगज्जनिमिमां शक्तिं मुंच नो चेच्छिवः स्वयम्। गुप्तरूपेण सद्यस्त्वां मारयिष्यति निश्चितम् ॥२१॥ अहं शंभुं करिष्यामि त्वदाज्ञावशवर्तिनम्। भार्यां तस्य परित्यज्य कुरु राज्यं त्रिलोकगः॥२२॥ तथेति सिंदुरेणैव कृतं सोऽपि शिवं वचः। जगाद हास्यवदनो दैत्याधीनो भव प्रभो ॥२३॥ ब्रह्मलब्धवरं दैत्यं न जेतुं तं क्षमो भवान्। महेशशक्तिं संगृह्य कालस्य क्रमणं कुरु ॥२४॥ तथेति शंकरेणोक्तं ददौ शक्तिं शिवाय सः। दैत्यः कैलासगो भूत्वा ननंद विजयी ततः ॥२५॥ ततः कैलासमेवं स त्यक्त्वा भूलोकगोऽभवत्। दैत्यस्त्रिभुवनं जित्वा जगदीशो बभूव ह ॥२६॥ अंतर्धानं चकाराऽसौ गणेशो द्विजरूपधृक्। तत् दृष्ट्वा पार्वती तत्र शोकयुक्ता बभूव ह ॥२७॥ अहो ब्राह्मणरूपेणाऽऽगतोऽयं गणनायकः। मोचयित्वा स मां शंभो त्वां संरक्ष्य ययौ पुनः ॥२८॥ ततस्तौ पार्वतीशंभू परलीवनगौ प्रभू। बभूवतुश्च विघ्नेशं तपसा हृदि चिंतकौ ॥२९॥ तताप तप उग्रं स सस्त्रीकः शंकरस्ततः। गते वर्षशते पूर्णे तं गजानन आययौ ॥३०॥ गणेश उवाच। वरं वृणु महादेव यत्ते चित्ते प्रवर्तते। दास्यामि तपसा तुष्टो वाञ्छितं प्राह शंकरम् ॥३१॥ ततस्तं शंकरो नत्वा स्तुत्वा नानाविधैः स्तवैः। पार्वत्या पूज्य विघ्नेशं प्रणम्य प्रत्युवाच ह ॥३२॥ शिव उवाच। वरदोऽसि गणाधीश तदा मे त्वं सुतो भव। यावज्जीवनपर्यंतं तिष्ठ नाथ नमोऽस्तु ते ॥३३॥ त्वया नानाऽवताराश्च धृता मदीयवेश्मनि। ते सर्वे स्वल्पकांशस्था बभूवुर्गणनायक ॥३४॥ तादृशं मा कुरु स्वामिन् वस नित्यं च मे गृहे। तत्राऽहं त्वां भजिष्यामि पुत्रभावेन विघ्नप ॥३५॥ संसारे पुत्रभावेन मूर्तौ त्वां कुलदैवतम्। हृदये योगयुक्तोऽहं भजिष्यामि गजानन ॥३६॥ तथेति गणनाथस्तं जगादांतर्दधे पुनः। कैलासमागतः शंभुः शोकयुक्तो विशेषतः ॥३७॥ ततः किंचिद्गते काले पार्वती स्नानमाचरत्। नग्ना तत्र महेशानः सहसा समुपागतः ॥३८॥ लज्जिता तं निरीक्ष्यैव जगदंबा स्वकेशतः। देहं सञ्छादयामास शंकरो गृहगोऽभवत् ॥३९॥ ततः कदाचित्सा देवी सखीभ्यां संस्थिताऽभवत्। उवाच तां सखी तत्र जया च विजया परा ॥४०॥ जयाविजये ऊचतुः। गणा नंदिमुखाः सर्वेऽस्मदीया नात्र संशयः। शिवं यदि निरुद्ध्यैव

तिष्ठामश्चेच्छिवात्मकाः ॥४१॥ अतः कं च महादेवि स्वकीयं वशगं गणम्। कुरु त्वं सा ततः शक्तिस्तथेति प्रत्युवाच ते ॥४२॥ स्वांगान् मलं समाकृष्य कृत्वा तं पुरुषाकृतिम्। पुनः संजीवयामास पार्वती तं जगाद ह ॥४३॥ द्वारे तिष्ठ महाबाहो मदाज्ञावशगः सदा। मदाज्ञया विना पुत्र मा प्रवेश्यस्त्वया नरः ॥४४॥ अहं स्नानार्थमत्रैव संस्थिता कालपर्यये। पतिर्मे तत्र रे वत्स त्वागतोऽपि भवेत् स्वयम् ॥४५॥ केनापि कथितं तत्राऽतो मा कुरु च तादृशम्। स्वामिनं शंकरं पुत्र निषेधस्व मदाज्ञया ॥४६॥ तथेति तां प्रणम्याऽऽदौ द्वारसंस्थो बभूव सः। पुरुषः सा सखीभ्यां च मुदिता संस्थिताऽभवत् ॥४७॥ एतस्मिन्नंतरे तत्र गणयुक्तः शिवो ययौ। तं न्यषेधत् स्ववेगेन बोधितोऽपि प्रजापते ॥४८॥ ततोऽतिकोपसंयुक्तः शंकरः प्रबभूव ह। तज्ज्ञात्वा सा सखीभ्यां च मुदिता संस्थिताऽभवत् ॥४९॥ ततोऽतिक्रोधसंयुक्तो गणान्नंदिमुखान् शिवः। आज्ञापयच्च युद्धाय हंतव्योऽयं न संशयः ॥५०॥ ततस्ते शस्त्रसंघातैर्जघ्नुस्तं क्रोधसंयुताः। पार्वत्या तेज उग्रं यन्निक्षिप्तं पुरुषे तदा ॥५१॥ तेजसा शस्त्रसंघाता मोघा जाता विशेषतः। मुसलेन जघानाऽसौ गणान् सर्वान् महाबलः ॥५२॥ ततः पलायनं चक्रुर्गणाः सर्वे भयान्विताः। ततः स्कंदं शिवः क्रुद्धः प्रेषयामास दारुणम् ॥५३॥ कुंठितास्त्रो भयोद्विग्नः सेनानीस्ताडितो भृशम्। पपाल च ततः शंभुः सस्माराऽमरमुख्यकान् ॥५४॥ ब्रह्मा विष्णुश्च देवेंद्रो यमाद्याः सर्व आगताः। प्रणिपत्य महेशानं संस्थिताश्चाऽभवन् पुरः ॥५५॥ तान् शिवः कथयामास वृत्तांतं ते ततो ययुः। इंद्रादयः सगंधर्वा युयुधुः पुरुषेण च ॥५६॥ पलायनं तेऽपि चक्रुः कुंठितास्त्रा भयातुराः। ताडिता मुसलेनैव शंकरः क्षोभितोऽभवत् ॥५७॥ ततस्तत्र विचारं ते चक्रुः सर्वे सुरेंद्रकाः। विष्णुमुख्याः शिवेनैव मुनिभिश्च प्रजापते ॥५८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते शिवविचारवर्णनप्रसंगो नाम पंचचत्वारिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। विचार्य देवपैः सर्वैः प्रेषयामास शंकरः। ब्रह्माणं ब्राह्मणैः सार्धं स्नेहार्थं सोऽपि तं ययौ ॥१॥ तं दृष्ट्वा गृह्य पुरुषो मुसलं सोऽपि दारुणम्। आययौ तं निरीक्ष्यैव पपाल स पितामहः ॥२॥ वयं सर्वे द्विजाः पुत्र शस्त्रहीनाः समागताः। शृणु वाक्यं विचारज्ञ पलंतस्ते तमब्रुवन् ॥३॥ तथापि न बुबोधैव पुरुषस्तं विलोक्य सः। ब्रह्मा जगाम शंभुं तं वृत्तांतमवदत्ततः ॥४॥ ततो विष्णुयुतः शंभुः क्रोधानलविलोचनः। संग्रामाय ययौ तत्र मुसलं

सोऽपि चाददे ॥५॥ आगत्यैव न्यहञ्छंभुं हृदये यमसन्निभः । शूलं पपात तद्धस्ताच्छिवश्च व्याकुलोऽभवत् ॥६॥ ततस्तं गदया विष्णुर्योधयामास दारुणम् । ततस्त्रिशूलघातेन शिरश्चिच्छेद शंकरः ॥७॥ ममार पुरुषस्तत्र श्रुत्वा सा पार्वती पुनः । कोपयुक्ता च कोटीः सा शक्तीस्ता नव निर्ममे ॥८॥ तयाऽऽज्ञप्ता महादेव्यः संहर्तुं सकलं जगत् । प्राप्ता आलोक्य देवास्ते भयभीता बभूविरे ॥९॥ शंकरेण द्विजास्तत्र प्रेषिता नारदादयः । अंतरिक्षचराः सर्वे प्रणेमुः पार्वतीं ततः ॥१०॥ रक्ष रक्ष जगत्सर्वं जगदंब त्वदुद्भवम् । तुष्टुवुस्तामथोवाच मुनीन् क्रोधयुता सती ॥११॥ पार्वत्युवाच । मम पुत्रः किमर्थं तैर्हतः सर्वैः सुरेश्वरैः । सजीवं संहरिष्यामि कुरुध्वं चेन्न संशयः ॥१२॥ तथेति प्रतिपाद्यैव गतास्ते शंकरं पुनः । शक्त्यस्तंभिताः सर्वाः शिवः सर्वैः समाययौ ॥१३॥ युद्धे मृतस्य बालस्य मस्तकं त्वप्सरोगणाः । जगृहुस्तत्र तं दृष्ट्वा शिरोहीनं सुदुःखितः ॥१४॥ शिवस्ततो गणान् प्राह यः पूर्वं दृश्यते त्वया । तमानयत हत्वा वै तस्य मस्तकमत्र यत् ॥१५॥ ततो गजासुरः प्राप्तः सहसा नारदेरितः । हंतुं देवगणान् सर्वान् महाबलपराक्रमः ॥१६॥ ततश्च क्षोभिताः सर्वे पलायंत दिशो दश । शूलघातेन शंभुस्तं मारयामास तत्क्षणात् ॥१७॥ तस्य मस्तकयोगेन पुरुषं ते दिवौकसः । योजयित्वा प्रजानाथ सजीवं चक्रिरे नरम् ॥१८॥ सर्वे हतोद्यमा जातास्ततो ब्रह्मा समागतः । जीवयामास तं तत्र सजीवो न बभूव ह ॥१९॥ ततो विष्णुः स्वयं तत्र जीवयामास विद्यया । सजीवो न बभूवाऽपि दुःखितोऽतितरोऽभवत् ॥२०॥ ततः शिवः स्वयं तत्र जीवयुक्तं चकार तम् । सजीवं न ददर्शैव दुःखितोऽतितरां तदा ॥२१॥ ततो विघ्नेश्वरं सर्वे तुष्टुवुः कार्यसिद्धये । अथर्वशिरसा दक्ष शंकराद्याः सुरेश्वराः ॥२२॥ प्रार्थयामासुरत्यंतं निर्विघ्नं कुरु विघ्नप । अधुना विश्वमेवेदमकाले लयमेष्यति ॥२३॥ गणेशस्मरणेन स्म बुद्धिः प्राप्ता दिवौकसाम् । वेदमंत्रेण देवास्ते तारमावाहयंति च ॥२४॥ ओंकारस्तत्र मंत्रेणाऽऽकर्षितः सहसाऽऽगतः । शवं प्रविश्य संतस्थौ ततः सोऽभवदुत्थितः ॥२५॥ ततो ज्ञानयुता देवा जाता विघ्नविहीनकाः । तं दृष्ट्वा गजवक्त्रं वै प्रणवं प्रणवाकृतिम् ॥२६॥ तुष्टुवुर्देवदेवेशं नानास्तोत्रैः प्रजापते । पुपूजुस्तं च सर्वादौ पूज्यं चक्रुः स्वमूलकम् ॥२७॥ दक्ष उवाच । साक्षादोंकाररूपश्च गणेशोऽयं न संशयः । स कथं मलजः शक्तेर्दैत्यमस्तकधारकः ॥२८॥ एनं मे संशयं ब्रह्मञ्छेत्तुमर्हसि सांप्रतम् । श्रुत्वा कथां महारम्यां ज्ञानयुक्तो भवाम्यहम् ॥२९॥ मुद्गल उवाच । सती दक्षगृहे तात दग्धा सा शैलजाऽभवत् । हिमाचले स्वयं शंभुस्तताप तप उत्तमम् ॥३०॥ तत्र सा पार्वती देवी शुश्रूषायां प्रजापते ।

निरता तां निरीक्ष्यैव शंभुः सस्मार पूर्वगाम् ॥३१॥ ममाज्ञावशगा देवी नेयं दक्षगृहे गता । अतोऽहं न वृणोम्येतां पुनः शैलसुतां कदा ॥३२॥ तारकासुरभीतैर्देवैः कामः प्रार्थितस्ततः । स ययौ शंकरस्थानं मोहितुं मदसंयुतः ॥३३॥ तं प्रज्वाल्य महेशानस्त्यक्त्वा हिमगिरिं ययौ । अन्यत्र सा ततो देवी खेदयुक्ता बभूव ह ॥३४॥ मनसि ज्ञानमार्गेण ज्ञात्वा शंभुविचेष्टितम् । तपसा संयुता भूत्वा वनगा शिवमार्चयत् ॥३५॥ गते वर्षशते शंभुः प्रसन्नो न बभूव ह । ततः सा विघ्नराजं च सस्मार ध्यानसंयुता ॥३६॥ वर्षेणैकेन हेरंबः प्रसन्नश्च बभूव ह । शिवबुद्धिप्रभेदं स चकार बुद्धिधारकः ॥३७॥ ततो दयायुतः शंभुस्तां ययौ द्विजरूपधृक् । शंकरं निंदयामास नानावाक्यैः समीपगः ॥३८॥ तच्छ्रुत्वा कंपिता देवी बोधयामास शांभवैः । चेष्टितैस्तं ततः सोऽपि पुनर्निंदां चकार ह ॥३९॥ स्थानं त्यक्त्वा ततो देवी तं जगाम द्विजं पुनः । तिरस्कृत्य शिवस्तां स्वं दर्शयामास रूपकम् ॥४०॥ ततः सा तं प्रणम्यैव तुष्टाव विविधैः स्तवैः । गणेशं मनसा ध्यात्वा प्रार्थ्य तं सिद्धिदो भव ॥४१॥ ततः प्रसन्नभावेन शंकरः प्रददौ वरम् । विस्मितस्तां निरीक्ष्यैव तपसा कर्शितां प्रभुः ॥४२॥ शिव उवाच । वृणोमि त्वां महादेवि वश्योऽहं ते सदाऽनघे । तपसा भक्तिभावेन न वियोगो भविष्यति ॥४३॥ धूलिधूसरितं तेंऽगं शिरोभूच्च जटान्वितम् । अतो मलस्तवांगस्य सर्वपूज्यो भविष्यति ॥४४॥ इत्युक्त्वा शंकरस्तत्रांतर्धानं प्रचकार सः । पार्वती प्रेमसंयुक्ता स्वगृहं वै जगाम ह ॥४५॥ स्वभक्तस्य शिवस्यैव रक्षणार्थं वचो महत् । गौरीमलांगसंभूतो बभूव ह गजाननः ॥४६॥ गणेशान्न परः कोऽपि सर्वपूज्यो महामते । गणेशवरदानेन सत्यवाक्याः शिवादयः ॥४७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते शक्तिमलमाहात्म्यवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । अन्यच्छृणु चरित्रं तु गजमस्तकधारणे । महेश इति विख्यातो राजा धर्मयुतोऽभवत् ॥१॥ तस्य गेहे गुरुः साक्षाज्जगाम कीर्तिमोहितः । राज्ञा संमानितः सोऽपि नृपाय च ददौ वरम् ॥२॥ बृहस्पतिरुवाच । प्रणतस्ते महीपाल मूर्धा मे प्रभविष्यति । सर्वपूज्यो विशेषेण गतोऽभूत् स्वगृहे गुरुः ॥३॥ ततः कदाचिद्राजर्षिर्नारदं मार्गसंस्थितम् । अवमत्य ययौ सोऽपि तं शशाप नृपाधमम् ॥४॥ नारद उवाच । मदेन राजशार्दूल मामनादृत्य गच्छसि ।

अतोऽसुरस्य योनौ त्वं पतिष्यसि न संशयः ॥५॥ काले सोऽपि ममाराऽथ गजयोनौ बभूव ह । गजासुर इति ख्यातो नरकुंजरवेषभृत् ॥६॥ गजासुरेण शंभोस्तपः कृतं च विशेषतः । मंत्रं जजाप शैवेनातोषयन्नियमे रतः ॥७॥ सहस्रेषु गतेष्वेव वर्षेषु वरदः शिवः । जगाद वृणु दैत्येश यत्ते मनसि वर्तते ॥८॥ स वव्रे राज्यमुग्रं मे देहि लोकत्रयस्य च । बलं सर्वातिगं शंभो आरोग्यं सर्वपूज्यताम् ॥९॥ अंते मोक्षं च मे देहि तथेति शंकरोऽब्रवीत् । मस्तकः सर्वपूज्यस्ते भविष्यति गजासुर ॥१०॥ अतो गजासुरस्यैव मस्तकं गणपेन तत् । धृतं वचो रक्षणार्थं शंकरस्य बृहस्पतेः ॥११॥ अन्यच्छृणु प्रजानाथ इतिहासं पुरातनम् । कदाचिच्छंकरेणैव पूजितो गणनायकः ॥१२॥ ददौ शिवाय निर्माल्यं मूर्तिसंस्थश्च विघ्नपः । स्वप्ने तस्य स माहात्म्यं कथयामास विस्तरात् ॥१३॥ श्रीगणेश उवाच । एकनिष्ठतया शंभो भक्त्याऽहं पूजितस्त्वया । प्रसन्नोऽहं स्वमूर्तिस्थः शृणु मे वचनं हितम् ॥१४॥ निर्माल्यं मे गृहाण त्वं सर्वसिद्धिप्रदं शिव । येनेदं मस्तके पुष्पं धृतं मान्येन भक्तितः ॥१५॥ सर्वपूज्यः स वै भावी सर्वातिगयशोधरः । ततः सोंऽतर्दधे ढुंढिः शिवो जागरितोऽभवत् ॥१६॥ हस्ते पुष्पं समालोक्य विस्मितः शंकरोऽभवत् । विचारं स चकारैव किमिदं देवभाषितम् ॥१७॥ सर्वपूज्यो गणाधीशो नान्यो ब्रह्मांडमंडले । अतो मे भक्तिमाहात्म्यं परीक्षार्थं ददौ प्रभुः ॥१८॥ ततः शिवेन निर्माल्यं न धृतं मस्तके स्वके । पूजायां स्थापितं दक्ष महाभक्तेन सर्वदम् ॥१९॥ ततोऽत्रिसंभवस्तत्र दुर्वासाः सहसाऽऽययौ । दर्शनार्थं महेशस्य शिवेन भृशमानितः ॥२०॥ शिवो विचारमकरोदयं योगी सयोगवित् । वर्णाश्रमविहीनश्च मतः साक्षाद्विनायकः ॥२१॥ अतो निर्माल्ययोग्योयं ददौ तस्मै सदाशिवः । निर्माल्यं विघ्नराजस्य कथयित्वा यशो महत् ॥२२॥ तं प्रणम्य महायोगी दुर्वासाः प्रययौ प्रभुम् । यथेच्छं विचरन् मार्गे ददर्श देवनायकम् ॥२३॥ विचारं मनसा योगी चकार स्वहितावहम् । सर्वपूज्यो गणेशाद्वै नान्यो भवति निश्चितम् ॥२४॥ वयं भक्ता गणेशस्य भजामोऽनन्यचेतसः । अतो निर्माल्य-योग्योऽहं नैव शंकरवत् कदा ॥२५॥ अयं देवपतिः साक्षादिंद्रः सत्त्वगुणान्वितः । योग्योऽयं नैव संदेहस्तं ययौ मुनिसत्तमः ॥२६॥ तं दृष्ट्वा मघवा नत्वा स्थित ऐरावते प्रभुः । आज्ञां कुरु महाभाग मुने दासोऽस्मि ते जगौ ॥२७॥ ततः सोऽपि प्रसन्नात्मा ददौ तस्मै महामुनिः । निर्माल्यं गणनाथस्य माहात्म्यं प्रोच्य सादरः ॥२८॥ इन्द्रो राज्यश्रिया युक्तो गृहीत्वा गजमस्तके । निर्माल्यमिंद्रः संस्थाप्य ययौ मार्गमवस्थितः ॥२९॥ निर्माल्यस्यापमानेन भ्रष्टोऽभूद्देवनायकः । गता सत्त्वमयी

लक्ष्मीर्गजस्तेजोयुतोऽभवत् ॥३०॥ तिरस्कृत्य महेंद्रं तं गजो हत्वा सुरान् परान् । ययौ वने प्रजानाथ स्वच्छंदश्च बभूव सः ॥३१॥ ततोऽतितापसंयुक्त इन्द्रो हीनः श्रियाऽभवत् । दैत्यराजा बुभुजिरे संगृह्य स्वर्गमागताः ॥३२॥ ततो बहौ गते काले गुरुणा बोधितः सुरः । देवैः सह गणेशानं तोषयामास नित्यदा ॥३३॥ गते वर्षसहस्रे तु गणेशस्तं ययौ तदा । पूजितः संस्तुतस्तेन प्रसन्नो वरदोऽभवत् ॥३४॥ श्रीगणेश उवाच । मा कुरुष्व महेंद्र त्वं मम निर्माल्यदूषणम् । भक्त्यधीनः स्वभावेन प्रसन्नोऽहं कृतस्त्वया ॥३५॥ समुद्रतनया लक्ष्मीर्भविष्यति सुसिद्धिदा । तां प्राप्य पूर्ववद्देवाः श्रिया युक्ता भविष्यथ ॥३६॥ पूजाकृतफलं यच्च निर्माल्ये संस्थितं भवेत् । तस्य वंदनमात्रेण सफलो जायते नरः ॥३७॥ भावेनाऽऽगृह्य निर्माल्यं मस्तके धारितं यदि । पुनस्तच्छुद्धभूमौ वै स्थापयेद्वा जले सुर ॥३८॥ गर्ते यत्र मनुष्यस्य पादस्पर्शो न वै भवेत् । तदा फलयुतः सोऽपि मद्रूपो जायते नरः ॥३९॥ सदा दुःखयुतं त्वाऽहं पुरा कर्तुं समुद्यतः । गुरुणा बोधितं मत्वाऽपराधं ते सहाम्यहम् ॥४०॥ मामेव शरणं देवमागतं संविचिंत्य वै । बहुकालेन देवेश क्रोधहीनोऽहमागतः ॥४१॥ एवमुक्त्वा गणाधीशो गतः स्वानंदके पुरे । इन्द्रो राज्यश्रिया युक्तो बभूव स प्रजापते ॥४२॥ सदा निर्माल्यभावज्ञो गणेशभजने रतः । निर्विघ्नेन महेंद्रश्चाऽऽमरणं राज्यमाकरोत् ॥४३॥ अधुना शृणु वृत्तांतमैरावतगजस्य च । इन्द्रं त्यक्त्वा वने गत्वा चचार स्वेच्छयेरितः ॥४४॥ हस्तिनीभिः सदा मोहयुक्तः परमदुर्जयः । बुभुजे विविधान् भोगान् मदेनैव समन्वितः ॥४५॥ ततः स्वल्पेन कालेन गणेशो जठरे गतः । पार्वत्या वरदानेन तस्य दैत्यः शिरोऽहरत् ॥४६॥ मस्तकेन विहीनश्च बभूव गणनायकः । तादृशोऽवातरत्तत्र विष्णुः शोकपरोऽभवत् ॥४७॥ जनार्दनश्चेष्टितं ज्ञात्वा ध्यानेन ययौ वने । ऐरावतशिरश्छित्वा योजयामास तत्क्षणात् ॥४८॥ तत्रोंकारं समावाह्य मंत्रेण जीवसंयुतम् । चकार विघ्नराजं स देवास्ते हर्षिता बभुः ॥४९॥ दैत्येन तच्छिरस्त्यक्तं नर्मदायां प्रजापते । तत्र कुंडं समुत्पन्नं गणेशमहिमान्वितम् ॥५०॥ तत्र या दृषदो रक्ता नर्मदायां समास्थिताः । यत्र तत्र गणेशास्ते बभूवुः सर्वसिद्धिदाः ॥५१॥ दक्ष उवाच । कथं रेवाजले संस्था दृषदो मुनिसत्तम । गणेशास्तन्ममाऽऽचक्ष्व धन्या सा सरितां वरा ॥५२॥ मुद्गल उवाच । ब्रह्मकमंडलूत्पन्नाश्चतस्रो नद्य एव च । गंगा च यमुना दक्ष नर्मदा तु सरस्वती ॥५३॥ गंगाया महिमानं तं सर्वत्रातुलमुत्तमम् । ज्ञात्वा सा नर्मदा देवी संतप्ता चेतसाऽभवत् ॥५४॥ ततस्तया तपस्तप्तं शंकरस्य महात्मनः । शतवर्षे गते शंभुः प्रसन्नो वरदोऽभवत् ॥५५॥ तया संपूजितः

शंभुः स्तुतो ज्ञात्वा मनेप्सितम् । तस्या जले शिवाः सर्वे दृषदश्च कृतास्तदा ॥५६॥ ततो गंगासमं तेजो बभूव सरितः प्रभोः । नर्मदायास्तथा सापि न संतोषयुताऽभवत् ॥५७॥ पुनस्तताप तीव्रं सा तपो विघ्नेश्वरे रता । गतेषु वै सहस्रेषु वर्षेषु वरदोऽभवत् ॥५८॥ स्तुतः संपूजितः सोऽपि हृदीप्सितवरं ददौ । रक्तवर्णा गणेशाना दृषदो जलगाः कृताः ॥५९॥ ततः साऽतीव माहात्म्ययुता जाता सरिद्वरा । दर्शनेन जनानां वै गंगास्नानफलप्रदा ॥६०॥ यस्यास्तीरे जले संस्था दृषदः शंकरात्मिकाः । रक्ता गणेशरूपास्तत् साम्यगा का भवेन्नदी ॥६१॥ महिमानं वर्णयितुं रेवायाः कः क्षमो भवेत् । गणेशशिवसंयुक्ता यत्र तत्र महानदी ॥६२॥ एतत्ते कथितं सर्वं विस्तराद्गणपस्य वै । चेष्टितं सर्वपापघ्नं सर्वसंशयनाशनम् ॥६३॥ आदौ दक्ष गणेशस्य दैत्यमस्तकधारणम् । ऐरावतस्य तद्वद्वै भक्तमाहात्म्यरक्षणात् ॥६४॥ शिरश्छेदादिकं तस्य चरित्रं तद् बृहस्पतेः । निर्माल्यस्य च रक्षार्थं माहात्म्यं गणपाश्रितम् ॥६५॥ भक्तवचः समाबद्धो गणेशः किं प्रजापते । न करोति महाभाग भक्ताधीनस्ततः स्मृतः ॥६६॥ येन स्वशिरसश्छेदः कृतो भक्तस्य कारणात् । मलजो गजवक्त्रश्च बभूवे भक्तिमोहितः ॥६७॥ एतत्ते कथितं सर्वं चेष्टितं परमाद्भुतम् । प्रकृतं शृणु दक्ष त्वं गजाननचरित्रकम् ॥६८॥ पार्वती प्रेमसंयुक्ता पूजयामास तं सुतम् । देवा हर्षयुताः सर्वे जग्मुः स्वं स्वं निवेशनम् ॥६९॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते गणेशभक्ताधीनत्ववर्णनं नाम सप्तचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । एकदा नारदो योगी सिंदूरासुरमागमत् । पूजितस्तेन तं विप्रो हर्षयुक्तो जगाद ह ॥१॥ नारद उवाच । कैलासे शंकरस्यैव बभूवे पुत्र उत्तमः । गणेशस्तपसा तुष्टः सिद्धिबुद्धिपतिः स्वयम् ॥२॥ देवैः संप्रार्थितः सोऽपि त्वां हनिष्यति निश्चितम् । अतो यत्नपरो दैत्य भव गच्छामि मानद ॥३॥ एवमुक्त्वा महायोगी नारदः स्वेच्छया चरन् । गतः सोऽपि भयोद्विग्नो बभूवासुरनायकः ॥४॥ एतस्मिन्नंतरे तत्र प्रधानं सहसाऽऽगतम् । विचार्य तेन दैत्येंद्रो ययौ हंतुं सुरान् पुरा ॥५॥ समागतं विलोक्यैव पलायंतेंद्रमुख्यकाः । ब्रह्माणं शरणं सर्वे भयभीता दिवौकसः ॥६॥ सिंदूरः कोपसंयुक्त आययौ तत्र मानद । ब्रह्मा हंसं समारुह्य देवैः पपाल तत्क्षणात् ॥७॥ विकुंठे स गतो विष्णुं

दैत्यस्तत्र समागतः । ततो विष्णुः शिवं देवैर्ययौ सत्वर एव च ॥८॥ तत्राऽपि स ययौ दैत्यः शंभुर्देवैर्गणेश्वरम् । तुष्टाव दैत्यनाशार्थं ततः स वरदोऽभवत् ॥९॥ सिंदूरमाययौ तत्र प्रभुः परशुधारकः । गजाननो मूषकारूढको भूत्वा प्रतापवान् ॥१०॥ तं दृष्ट्वा योद्धुमायांतं सिंदूरः क्रोधसंयुतः । जगाद स्वमदेनैव युक्तः परमदुर्जयः ॥११॥ सिंदूर उवाच । किमर्थं रणभूमौ त्वमागतोऽसि गजानन । बालभावेन मां मूर्ख न जानासि सुरेरितः ॥१२॥ मच्छ्वासेन चलंति स्म मेरुमंदरकादयः । तलप्रहारवेगेन ब्रह्मांडं शतधा भवेत् ॥१३॥ शिवादयः सुरेशाश्च भयभीताः समागताः । तान् दृष्ट्वाऽपि गणाधीश योद्धुं कथमुपागतः ॥१४॥ बालभावेन संयातं न त्वां हन्मि गजानन । त्वत्प्रेरकान् सुरांश्चाहं हनिष्यामि न संशयः ॥१५॥ क्रोधेनाहं च यं कंचिदालिंगामि गजानन । स भस्मसाद्भवेन्नूनं किं करिष्यसि मां वद ॥१६॥ एवं श्रुत्वा गणाधीशो दैत्येशस्य वचो महत् । स उवाच प्रहस्याऽथ सिंदूरं लोकपीडकम् ॥१७॥ श्रीगजानन उवाच । दैत्याधम महाबाहो मां न वेत्सि प्रभाविणम् । स्वानंदवासिनं पूर्णं ब्रह्मभूतं विशेषतः ॥१८॥ एवमुक्त्वा विराड्रूपं दधार स गजाननः । हस्ताभ्यां मर्दयित्वा तं मस्तके विभुरालिपत् ॥१९॥ ब्रह्मणो रक्षणार्थं स वचः सिंदूरधारकः । गजाननो बभूवापि भक्तेशो भक्तिभावितः ॥२०॥ सिंदूरं मर्दितं दृष्ट्वा देवा हर्षसमन्विताः । तुष्टुवुस्तं प्रपूज्यैव भक्तिनम्रात्मकंधराः ॥२१॥ देवा ऊचुः । गजाननाय पूर्णाय सांख्यरूपमयाय ते । विदेहेन च सर्वत्र संस्थिताय नमो नमः ॥२२॥ अमेयाय च हेरंबाय ते परशुधारक । मूषकवाहनायैव विघ्नेशाय नमो नमः ॥२३॥ अनंतविभवायैव परेषां पररूपिणे । गुहाग्रजाय देवाय शिवपुत्राय ते नमः ॥२४॥ पार्वतीनंदनायैव देवानां पालकाय ते । सर्वेषां पूज्यदेहाय गणेशाय नमो नमः ॥२५॥ स्वानंदवासिने तुभ्यं शिवस्य कुलदैवत । विष्णवादीनां विशेषेण कुलदेवाय ते नमः ॥२६॥ योगाकाराय सर्वेषां योगशांतिप्रदाय च । ब्रह्मेशाय नमस्तुभ्यं ब्रह्मभूयप्रदाय ते ॥२७॥ सिद्धिबुद्धिपते नाथ सिद्धिबुद्धिप्रदायिने । मायिने मायिकेभ्यश्च मोहदाय नमो नमः ॥२८॥ लंबोदराय वै तुभ्यं सर्वोदरगताय च । अमायिने च मायाया आधाराय नमो नमः ॥२९॥ गजः सर्वस्य बीजं यत्तेन चिह्नेन विघ्नप । योगिनस्त्वां प्रजानंति तदाकारा भवंति ते ॥३०॥ तेन त्वं गजवक्त्रश्च किं स्तुमस्त्वां गजानन । वेदादयो विकुंठाश्च शंकराद्याश्च देवपाः ॥३१॥ शुकादयश्च शेषाद्याः स्तोतुं शक्ता भवंति न । तथापि संस्तुतोऽसि त्वं स्फूर्त्या त्वद्दर्शनात्मना ॥३२॥ गजाननं प्रणेमुस्तमेवमुक्त्वा शिवादयः । स तानुवाच प्रीतात्मा भक्तिभावेन तोषितः ॥३३॥

श्रीगजानन उवाच। भवत्कृतमिदं स्तोत्रं मदीयं सर्वदं भवेत्। पठते शृण्वते देवा ब्रह्मभूयप्रदायकम् ॥३४॥ वरं वृणुत देवेशास्तुष्टिं स्तोत्रेण चागतः। दास्यामि सकलाभीष्टं भवतां यच्चिकीर्षितम् ॥३५॥ शिवादय ऊचुः। यदि प्रसन्नभावेन वरदोऽसि गजानन। तदा तिष्ठ गृहे शंभोः सर्वदा विघ्ननाशनः ॥३६॥ त्वां दृष्ट्वा विघ्नहीनाश्च भविष्यामो निरंतरम्। प्रत्यक्षं योगरूपं च पश्यामस्तेन सार्थकाः ॥३७॥ मुद्गल उवाच। गजाननस्तानुवाचाऽथ तथेति सुरेश्वरान्। स्वलोकं कल्पयामास तत्रैव शिवपार्श्वगम् ॥३८॥ दशयोजनसाहस्रविस्तारस्तस्य मानद। गणाः कुमुदमुख्याश्च कल्पिता मोदकादयः ॥३९॥ तिष्ठति स्वर्गलोकेषु तदादि गणनायकः। गणेशलोक एवाऽसौ बभूवे भुक्तिमुक्तिदः ॥४०॥ सकामास्तं समागम्य पतंति पृथिवीतले। निष्कामास्तस्य देहे ते अंते लीना भवंति हि ॥४१॥ एतत्ते कथितं सारं गजाननचरित्रकम्। शिवपुत्रत्वभावेन ब्रह्मेशोऽयं बभूव ह ॥४२॥ यः शृणोति नरो भक्त्या पठेद्वा तस्य सिद्धिदम्। भविष्यति प्रजानाथ तथा नानासुखप्रदम् ॥४३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते सिंदूरवधो नामाष्टचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच। निर्माल्यस्य च माहात्म्यं श्रुतं यत् परमाद्भुतम्। विस्तरेण पुनः स्वामिन् वद तस्य चरित्रकम् ॥१॥ मुद्गल उवाच। पराशरगृहे देवो बभूव ह गजाननः। पुत्रभावेन तस्यापि चरितं कथितं पुरा ॥२॥ पराशरेणैव तत्र स्थापिता मूर्तिरादरात्। गजाननस्य भो दक्ष सर्वदाऽभूत् सुसेविता ॥३॥ नित्यं तत्रैव देवेशा ब्रह्मविष्णुशिवादयः। रात्रौ गजाननं ते संपूजयंति सुसिद्धिदम् ॥४॥ गजासुरवधाद्दक्ष प्रारभ्य भक्तिसंयुताः। स्वर्गपुष्पोपहाराद्यैः सुप्रसन्नाननांबुजाः ॥५॥ कदाचित् तत्र राजर्षिर्मृगयासक्त आययौ। सैन्येन स्वप्रधानैश्च संवृतो वीरभद्रकः ॥६॥ स आगत्य गणेशानं पूजयन् भक्तिसंयुतः। तत्रैव निशि संस्थोऽभूद्गाणपत्यो महायशाः ॥७॥ उषःकाले समागत्य स पुपूज गजाननम्। पुष्पाणि दृष्टवान् सोऽभूत् तत्र स्वर्गोद्भवानि च ॥८॥ सुवासबहुलान्येव मंदाराद्यानि भूमिपः। विस्मितो मानसे भूत्वाऽभवत्तत्रैव संस्थितः ॥९॥ देवालयं पिधायाऽसौ भूपः संस्थाप्य रक्षकान्। सैन्ययुक्तो जजागार देवदर्शनलालसः ॥१०॥

ततो देवेंद्रमुख्याश्च रात्रौ देवाः समाययुः । तद् दृष्ट्वा गुप्तरूपेण पुपूजुस्तं गजाननम् ॥११॥ पूजयित्वा गताः सर्वे राजा तत्र समागतः । पूजां दृष्ट्वा महाभागो विस्मितोऽभूत् पुनः पुनः ॥१२॥ ततः स्वगुरवे गत्वा पप्रच्छ विनयान्वितः । देवदर्शनकांक्षी कृतांजलिः स विशेषतः ॥१३॥ वीरभद्र उवाच । स्वामिन् देवगणाः पूजयितुं चात्र गजाननम् । नित्यमायांति तान् द्रष्टुमिच्छामि वद कारणम् ॥१४॥ शिवशर्मोवाच । निर्माल्यसंभवानि त्वं पुष्पाणि यत्र तत्र च । आच्छादय महीपाल तेषां ते दर्शनं भवेत् ॥१५॥ तथेति वीरभद्रेण कृतं देवालये पुनः । देवाः समागता रात्रावज्ञानेनाचरंस्ततः ॥१६॥ निर्माल्यस्पर्शमात्रेण पुण्यहीना बभूविरे । पूजां कृत्वा पुनर्गंतुमिच्छां चक्रुः सुरेश्वराः ॥१७॥ ततोऽतिवेगहीनैश्च देवैर्देवेंद्रसत्तमैः । विचारेण समाज्ञातं कारणं गतिखंडने ॥१८॥ पादस्पर्शः कृतोऽस्माभिर्निर्माल्ये गणपस्य च । अतो गतिविहीनैश्च किं कर्तव्यं विशेषतः ॥१९॥ ततो राजा समायातः पूजार्थं देवसन्निधौ । निर्माल्यमार्जनं कृत्वा ददर्श देवमुख्यकान् ॥२०॥ तान् प्रणम्य महाभक्त्या तुष्टाव विविधैः स्तवैः । प्रसन्नास्ते च राजानमूचुः शंभ्वादयः सुराः ॥२१॥ शिवादय ऊचुः । राजंस्त्वया कृतं कर्म स्वार्थभावेन दुःखदम् । देवानां तत्र चोपायं कुरु गतिप्रदायकम् ॥२२॥ ततो राजा भयोद्विग्नः स्वगुरुं प्रणिपत्य तम् । पप्रच्छ चलने तेषामुपायं पुण्यदं परम् ॥२३॥ गुरुणा बोधितो राजा हृदि ध्यात्वा गजाननम् । गणेशपूजया जातं पुण्यपुष्पं ददौ तदा ॥२४॥ अगाधपुण्ययोगेन देवा गतियुताः कृताः । विष्णवादयो जगुस्तं ते वरं वृणु महीपते ॥२५॥ अमोघं दर्शनं प्रोक्तमस्माकं शास्त्रसंमतम् । अतो मनेप्सितं भूप दास्यामो नात्र संशयः ॥२६॥ ततो राजा च ब्रह्माद्यानुवाच स कृतांजलिः । गणेशे दृढभक्तिर्मेऽस्तु भवत्कृपया परा ॥२७॥ ततस्ते विस्मिताः सर्वे प्रार्थयित्वा गजाननम् । ददुर्भक्तिं गणेशाने ब्रह्मभूतपदप्रदाम् ॥२८॥ गताः स्वर्गेषु देवास्ते राजा तत्र समास्थितः । राज्यं पुत्रे विनिक्षिप्य बाले प्रधानसंयुते ॥२९॥ नित्यं गजाननं भक्त्याऽभजदनन्यचेतसा । अंते स्वानंदगो भूत्वा भजते गणनायकम् ॥३०॥ एवं निर्माल्यमाहात्म्यं संक्षेपेण निरूपितम् । पठनाच्छ्रवणान्नृभ्यो भुक्तिमुक्तिफलप्रदम् ॥३१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खण्डे गजाननचरिते गणेशनिर्माल्यमाहात्म्यवर्णनं नामैकोनपंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । पार्श्वेण मुनिना पूर्वं दीपवत्सलया सह । पत्न्या परमसत्या वै तपसाऽऽराधितो विभुः ॥१॥ दशवर्षसहस्रेषु गणेशो वरदोऽभवत् । स्तुतः संपूजितस्तेन नानास्तोत्रैः प्रजापते ॥२॥ ताभ्यां पुत्रो भव स्वामिन् वृतस्तवन्नौ वरो महान् । तथेति गणराजस्तौ कथयित्वा ययौ पुरम् ॥३॥ ततः कदाचिद्देवर्षिर्नारदस्त्विद्रमाययौ । पूजितः सुरनाथेन जगाद वचनं हितम् ॥४॥ नारद उवाच । हिमवत्यां हिमप्रांते राजा मदसमन्वितः । अभिनंदन एवाऽसौ यज्ञं करोति दुर्मतिः ॥५॥ ब्राह्मणान् स समानीय प्रोवाच बलगर्वितः । यज्ञमिंद्रेण हीनं मे कुरुध्वं यत्नसंयुताः ॥६॥ नो चेत् सर्वान् हनिष्यामि क्रोधयुक्तो महर्षयः । तस्य तद्वचनं श्रुत्वा तथेति ब्राह्मणा जगुः ॥७॥ अद्य श्वो वा करिष्यंति यज्ञं भयसमन्विताः । ब्राह्मणा नात्र संदेहो यथेच्छसि तथा कुरु ॥८॥ एवमुक्त्वा महायोगी नारदः प्रययौ ततः । विकुंठे स महाविष्णुं ततः स्वच्छंदगोऽभवत् ॥९॥ इंद्रः क्रोधसमाविष्टः सस्मार कालरूपिणम् । भगवंतं महाकायमिंद्रं स प्रययौ प्रभुः ॥१०॥ तं प्रणम्य प्रतुष्टाव कथयामास दुःखदम् । वृत्तांतं प्रार्थयामास यज्ञविध्वंसनाय तम् ॥११॥ कालस्तथेति तं तुष्टः कथयित्वा ययौ धराम् । धारयामास मनसि कालः कलयतां प्रभुः ॥१२॥ कालाधीनं जगत् सर्वं सदा कालेन भुज्यते । कालं योगबलेनैव जयंत्यत्र हि योगिनः ॥१३॥ तत्रादौ कर्मसंशुद्धा योगनिष्ठा भवंति च । अतः कर्मविनाशार्थं यतिष्येऽहं विशेषतः ॥१४॥ कर्महीना नराः सर्वे मलिनाः संभवंति च । नेच्छंति योगमाद्यं ते भविष्यंति मदात्मकाः ॥१५॥ जन्ममृत्युयुताः सर्वे मदधीना न संशयः । इंद्रेण प्रेरितस्तत्र च्छद्म नैव करोम्यहम् ॥१६॥ विचार्य काल इति स आसुरं रूपमादधे । विघ्नरूपेण तं भूपं ययौ क्रोधसमन्वितः ॥१७॥ यज्ञं बभंज वेगेन ब्राह्मणांस्ताडयन् पुरा । ततो नानास्थले दुष्टो ह्यगमद्विघ्नरूपधृक् ॥१८॥ कर्मखंडनभावेन चचार बलमोहितः । सर्वत्र कर्मलोपाय विघ्नेनापीड्य मानवान् ॥१९॥ ततः सोऽपि महावेगो जनान् कालेन मोहयन् । भ्रामयामास विप्रान् योगिनो नानास्वरूपधृक् ॥२०॥ प्रातःकालं चकाराऽसौ निशीथं सायमादरात् । मध्याह्नं कारयामास नानाभ्रमकरः सदा ॥२१॥ चकार रात्रिरूपं स दिवसं कर्मखंडकः । रात्रिं दिवसरूपां तां वक्तुं नैव प्रशक्यते ॥२२॥ लोकान् भ्रमयुतान् सर्वान् कर्महीनांश्चकार सः । चंद्रमाच्छाद्य कालस्तु सूर्यं नक्षत्रकादिकान् ॥२३॥ ततोऽतिभयसंयुक्ता देवा भ्रांता बभूविरे । कर्महीनप्रभावेण चोपोषणपरायणाः ॥२४॥ न समर्था बभूवुस्ते कालं चलयितुं प्रभुम् । कालाधीनाः सुराः सर्वे सृष्टिस्थितिलयात्मकाः ॥२५॥ ततो वसिष्ठमुख्याश्च ब्रह्माणं

शरणं ययुः । तेन सार्धं च वैकुंठं जग्मुः कालभयान्विताः ॥२६॥ विष्णुना शंकरं जग्मुर्ब्राह्मणा भयसंकुलाः । स्तुत्वा नानाविधैः स्तोत्रैः शशंसुः कालचेष्टितम् ॥२७॥ शिवेन संयुताः सर्वे विघ्नेशं तुष्टुवुः प्रभुम् । तपसा ध्यानयुक्तेन तोषयामासुरादरात् ॥२८॥ गते वर्षशते काले परमात्मा गजाननः । वरदस्तान् ययौ देवान् बोधयामास तापसान् ॥२९॥ ततस्तैः संस्तुतो देवः प्रार्थितो विघ्ननाशने । तथेति प्रतिपाद्यैव पार्श्वपुत्रो बभूव सः ॥३०॥ दीपवत्सलया युक्तः पार्श्वः परमयोगवित् । पुरा तताप घोरं स तपो विघ्नेश्वरं स्मरन् ॥३१॥ प्रगतेषु स वर्षेषु सहस्रे गणनायकः । प्रसन्नस्तं ययौ तेन पूजितः संस्तुतोऽभवत् ॥३२॥ स वव्रे मे भव स्वामिन् पुत्रः परमतारकः । संसारे पुत्रवात्सल्याद्भजिष्यामि सह स्त्रिया ॥३३॥ मूर्तौ देवस्वभावेन हृदये योगमार्गतः । भजिष्यामि त्रिधा ढुंढे त्वां सर्वत्र विशेषतः ॥३४॥ नानाकर्मपरोऽहं वै तव देव गजानन । पिता जातश्च तेन त्वं तारको मे भविष्यसि ॥३५॥ तथेति विघ्नराजस्तमुवाचांऽतर्दधे प्रभुः । विघ्नासुरविनाशाय बभूव देहधारकः ॥३६॥ दीपवत्सलिकायाः स जठरे संगतो विभुः । स्तनपानादिकं सर्वं स चकारातितोषितः ॥३७॥ पंचवर्षात्मको बालो बभूव मुनिवेश्मनि । तदा देवर्षयः सर्वे तं ययुर्भक्तिसंयुताः ॥३८॥ शंभ्वाद्यान् स सुरान् वीक्ष्य वसिष्ठादिमुनीश्वरान् । पार्श्वः संभ्रमसंयुक्तस्तान् पुपूज यथाविधि ॥३९॥ उवाच प्रेमसंयुक्तो धन्यं मे जन्म कर्म च । येन देवगणाः सर्वे मुनयो गृहमागताः ॥४०॥ आज्ञां कुरुत देवेशा दासोऽहं भवतां द्विजाः । करिष्यामि न संदेहो भवत्स्मृतिबलेन वै ॥४१॥ देवर्षय ऊचुः । तव भाग्यबलेनैव सुतः स्वानंदगोऽभवत् । गजाननः स्वयं सर्वे प्रार्थयामो हिताय तम् ॥४२॥ विघ्नासुरेण दुष्टेन जगद्भ्रष्टं कृतं मुने । तस्य नाशार्थमेवं त्वं कुरु यत्नं महामते ॥४३॥ श्रुत्वा तेषां वचः क्रूरं मुनिः शोकयुतोऽभवत् । एतस्मिन्नंतरे तत्र स गजानन आययौ ॥४४॥ तं दृष्ट्वा सहसोत्थाय नेमुः सर्वे सुरेश्वराः । मुनयस्तुष्टुवुर्देवं प्रार्थयामासुरादरात् ॥४५॥ तेषां हृदि स्थितं ज्ञात्वा शस्त्रहस्तश्चतुर्भुजः । मूषकोपरि संस्थो यो ययौ हंतुं महासुरम् ॥४६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते विघ्नासुराश्रमगमनं नाम पंचाशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । केनाऽपि विघ्नदैत्यस्य स्थानं न ज्ञायते सदा । कालस्य गणनाथस्तु ययौ तस्याऽश्रमं प्रभुः ॥१॥ गुप्तरूपधरं विघ्नमंकुशेन समानयत् । तद् दृष्ट्वा परमाश्चर्यं देवाः सर्वे विसिस्मिरे ॥२॥ ततस्तं स महाकालः प्रावमत्य गजाननम् । अंतर्धाय स्वमात्मानमग्निरूपो बभूव ह ॥३॥ त्रैलोक्यसंस्थितं ज्ञात्वा तेजस्तत्त्वसमाश्रितम् । विघ्नं गजाननः क्रुद्धो वायुः संहारकोऽभवत् ॥४॥ ततः कालः स्वयं दक्षाऽभवदाकाशतत्त्वगः । वायुस्थं गणनाथं स कर्षयामास दारुणः ॥५॥ आकाशस्थं महाकालं ज्ञात्वाऽहंकारधारकः । गजाननश्च तं क्रुद्धोऽकर्षयत् प्रलयं प्रभुः ॥६॥ ततो विघ्नो महत्तत्त्वं समाश्रित्य गजाननम् । ताडयामास संक्रुद्धः कालः कलयतां प्रभुः ॥७॥ ततो गजाननः क्रुद्धः प्रधानरूपधारकः । महत्तत्त्वस्थमेवं तं कर्षयामास दारुणम् ॥८॥ ततोऽभवत् सोऽपि महत्तत्त्वं त्यक्त्वा गुणेशगः । प्रधानं हंतुमारेभे कालः परमदुर्जयः ॥९॥ ततो गजाननः साक्षाद्बिंदुब्रह्मस्थितोऽभवत् । चतुष्पादमयीं शक्तिं हंतुं चिक्षेप सोंऽतकम् ॥१०॥ गुणेशान्न परः कालस्ततः खंडितविक्रमः । कालो मायां चतुष्पादां निरीक्ष्य त्रासितोऽभवत् ॥११॥ शक्तिं दृष्ट्वा महाघोरां कालगर्वहरां पराम् । शरणं गणराजं स ययौ कालः प्रजापते ॥१२॥ समागतं महाविघ्नं देवा मुनिगणास्ततः । विस्मिताश्चाऽभवन् सर्वे जयेति गणपं जगुः ॥१३॥ विघ्नासुरः प्रणम्यादौ पुपूज ह गजाननम् । तद् दर्शनजबोधेन तुष्टाव स कृतांजलिः ॥१४॥ विघ्नासुर उवाच । नमस्ते गणनाथाय गजाननस्वरूपिणे । योगाय योगनाथाय योगिभ्यो योगदायिने ॥१५॥ अनाकाराय साकाररूपाय ते नमो नमः । नानाभेदविहीनाय भेदानां पतये नमः ॥१६॥ विघ्नेशाय परेशाय कालभीतिहराय ते । हेरंबाय परेषां वै परात्पर नमो नमः ॥१७॥ अनादये ह्यनाथाय सर्वेषामादिमूर्तये । भक्तेशाय सदा भक्तवाञ्छितप्रद ते नमः ॥१८॥ स्वानंदवासिने तुभ्यं मूषकध्वजिने नमः । मूषकोपरिसंस्थाय ढुंढिराजाय ते नमः ॥१९॥ आदिमध्यांतहीनायादिमध्यांतस्वरूपिणे । गजवक्त्राय वै तुभ्यं सर्वपूज्याय ते नमः ॥२०॥ सिद्धिबुद्धिस्वरूपाय सिद्धिबुद्धिप्रदाय च । सिद्धिबुद्धिपते तुभ्यं महोदर नमो नमः ॥२१॥ अमेयमायातिगमूर्तयेऽपि ते सदा सुशांतिप्रदपूर्णमूर्तये । मनोवचोहीनमयाय तेजसे मनोवचोयुक्तकलाय ते नमः ॥२२॥ अज्ञानदोषेण कृतोऽपराधो हेरंब तं क्षंतुमिहार्हसि त्वम् । रक्षस्व मां भक्तियुतं दयाब्धे श्रेष्ठं वरं देहि परेशपाल ॥२३॥ अधुना हि मया बुद्धं स्वरूपं ते गजानन । योगाकारमयोऽसि त्वं ततोऽहं निर्जितस्त्वया ॥२४॥ त्वां विना कः समर्थः स्यात् कालं कलयतां प्रभुम् । जेतुं धन्यः कृतो नाथ पादपद्मस्य दर्शनात् ॥२५॥

एवं स्तुत्वा महाविघ्नः प्रणनाम गजाननम् । तमुत्थाप्य जगादेदं वचनं सर्वदः परः ॥२६॥ श्रीगजानन उवाच । त्वया कृतं मदीयं वै स्तोत्रं सर्वप्रदं भवेत् । कालस्य न भयं तेषां पठतां शृण्वतां सदा ॥२७॥ यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः । महायोगप्रदं चास्तु स्तोत्रं मत्प्रीतिवर्धनम् ॥२८॥ हंतुं त्वां क्रोधसंयुक्त आगतोऽहं न संशयः । वाञ्छितं वृणु नो हन्मि अधुना शरणार्थिनम् ॥२९॥ महाकाल उवाच । भक्तिं देहि त्वदीयां मे सुदृढां तां गजानन । दासरूपेण मां नाथ रक्षस्व त्वत्समीपगम् ॥३०॥ ब्रह्मेश कार्यं कथय तत् करिष्यामि यंत्रितः । स्थानं भक्ष्ययुतं देहि तत्र तिष्ठामि नित्यशः ॥३१॥ मन्नामपूर्वकं नाम कुरु त्वं ते गजानन । सर्वसिद्धिकरं नाथ पूर्णयोगप्रदं परम् ॥३२॥ जगाद गणराजस्तु ततस्तं भक्तमुत्तमम् । निर्विकल्पं मनस्तस्य ज्ञात्वा भक्तप्रपालकः ॥३३॥ श्रीगजानन उवाच । मदीया भक्तिरचला भविष्यति तवाऽनघ । यद्यदिच्छसि तत्तत्ते सफलं चास्तु सर्वदा ॥३४॥ मत् समीपे गणो भूत्वा तिष्ठ त्वं बलसंयुतः । महाविघ्नस्वरूपेण नानाविघ्नगणैर्वृतः ॥३५॥ विघ्नराजेति मन्नाम भविष्यति सुसिद्धिदम् । ब्रह्मभूयकरं पूर्णं वाञ्छितार्थप्रदायकम् ॥३६॥ यत्र मे स्मरणं नास्ति कर्मादौ पूजनं तथा । तत् सर्वं भुंक्ष्व विघ्न त्वं भ्रंशयित्वा सुरेंद्रकान् ॥३७॥ शिवविष्णुमुखा देवा अन्ये मुनिमुखा नराः । शेषाद्या नागराजास्ते नानाजंतव एव च ॥३८॥ अहंकारेण संयुक्ता भवंति यदि तेऽसुर । तदा तान् भ्रंशयित्वा त्वं भुंक्ष्व भोगान् यथेप्सितान् ॥३९॥ मद्भक्तिकारिणः सर्वे त्वया पाल्या विशेषतः । तेषां निर्विघ्नभावेन पुरो भावपरो भव ॥४०॥ एवमुक्त्वांतर्दधेऽसौ गजाननः प्रतापवान् । विघ्नो विघ्नैः समायुक्तः शांतरूपो बभूव ह ॥४१॥ देवा मुनिमुखाः सर्वे स्वस्वस्थानं ययुस्ततः । सपत्नीकस्तत्र पार्श्वो मूर्च्छितोऽभूत् प्रजापते ॥४२॥ तयोर्हृदि गणाधीशः प्रकटोऽभूद्वचोऽब्रवीत् । मां चिंतामणिरूपं ते पश्य तात हृदि स्थितम् ॥४३॥ मूर्तौ पूजनमात्रेण हृदि ध्यानेन मानदौ । संतुष्टौ जनकौ नित्यं संशयो न भविष्यथः ॥४४॥ यदा मे स्मरणं तातौ महाकार्ये करिष्यथः । द्रक्ष्यथो मां न संदेहो योगशांतौ भविष्यथः ॥४५॥ एवमुक्त्वांतर्दधे सोऽपि गणेशो हृदि रूपधृक् । तौ स्वस्थौ मूर्तिमास्थाप्य निरंतरमपूजताम् ॥४६॥ इति ते गणराजस्य कथितं चरितं महत् । अंशा गजाननस्यैते अवतारा विधे स्मृताः ॥४७॥ वरेण्यपुत्रभावेन बभूव ह गजाननः । कस्मिन् काले वधार्थाय सिंदूरस्य न संशयः ॥४८॥ कल्पभेदानुसारेण नानारूपधरः प्रभुः । गजाननो ह्यभूद्वर्णयितुं वापि

न शक्यते ॥४९॥ इत्याद्या बहवो भेदा गजाननस्य सिद्धिदाः । तांश्च ज्ञातुं कोऽर्हति वर्णयितुं वा प्रजापते ॥५०॥ संक्षेपेण मया तुभ्यं कथितं पापनाशनम् । चरितं विघ्नराजस्य भुक्तिमुक्तिफलप्रदम् ॥५१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते विघ्नराजावतारवर्णनं नामैकपंचशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । गजाननस्य क्षेत्रं मे वद कुत्र प्रतिष्ठितम् । माहात्म्यं तस्य विप्रेश संक्षेपेण सुसिद्धिदम् ॥१॥ मुद्गल उवाच । दिशांते नैर्ऋते कोणे देवैर्मुनिभिरादरात् । स्थापितो गणनाथश्च गजवक्त्रावतारधृक् ॥२॥ द्वीपेषु स्वस्वखंडेषु विभुर्नैर्ऋतकोणगः । पूज्यते मानवैः सर्वैर्देवैश्च मुनिभिस्तथा ॥३॥ भाद्रशुक्लचतुर्थ्यां तैः स्थापितो गणनायकः । मध्याह्नसमये दक्ष पुरा सोत्सववर्धिनी ॥४॥ तस्यां यात्रां प्रकुर्वंति जना भक्तिपरायणाः । त्रिलोकस्था विशेषेण नानासिद्धिप्रवृद्धये ॥५॥ दशयोजनविस्तारो विभुः क्षेत्रस्य मध्यगः । मूषकश्चतुरस्रस्य पुरतस्तिष्ठति प्रभोः ॥६॥ सिद्धिस्तस्याऽपि वामांगे दक्षिणांगे च बुद्धिका । अष्टदिक्षु प्रजानाथ सिद्धयोऽष्टौ व्यवस्थिताः ॥७॥ अष्टमातृगणः पश्चात्ततोऽष्टौ भैरवा मताः । दशदिक्षु च दिक्पालाः सशस्त्राः संस्थिताः प्रभोः ॥८॥ शिवविष्णुमुखा देवा वामांगे संस्थिता विभोः । काश्यादिमुख्यक्षेत्राणि गंगाद्याश्च तथोत्तरे ॥९॥ मुनयः शेषकाद्याश्च पृष्ठभागे व्यवस्थिताः । भक्ता मुद्गलमुख्याश्च पुरतः संस्तुवंति तम् ॥१०॥ त्रिलोकेषु च ये मुख्यास्ते सर्वे तत्र संस्थिताः । अंशेन देवसेवार्थं स्वाधिकारेषु मानद ॥११॥ तीर्थेषु स्नानकर्तारः समुद्रे भक्तिसंयुताः । स्वस्वनाम्नांकितेष्वेव स्वल्पदेहधरा अपि ॥१२॥ परस्परं बोधयंतो गजाननचरित्रकम् । नृत्यंति ते हसंत्येव देवचेष्टापरायणाः ॥१३॥ गणेशतीर्थं वै तत्र गजाननसुसिद्धिदम् । तत्र स्नानं प्रकुर्वंति ये नरास्ते प्रजापते ॥१४॥ कृतकृत्या न संदेहो मनेप्सितफलप्रदे । तत्र यात्रां प्रकुर्वंति चतुर्विधफलप्रदाम् ॥१५॥ धन्यास्ते पुरुषा लोके कृतकृत्या भवंति वै । वसंति ये यत्र कुत्र गजाननपरायणाः ॥१६॥ ब्रह्मभूताश्च ते प्रोक्ता दर्शनात् पापनाशनाः । अन्यदेवस्य ये भक्ता मृताः क्षेत्रे भवंति चेत् ॥१७॥ ते तस्य लोकमासाद्य भोगान् भुंजंति शाश्वतान् । तदंते गणनाथं वै गच्छंति ब्रह्मसिद्धये ॥१८॥ तत्र सिद्धिं गता नाना नरा नार्यश्च भो विधे । तेषां चरित्रकं

पूर्णं मया वक्तुं न शक्यते ॥१९॥ यात्रामात्रेण तत्रैव चतुर्विधफलं लभेत्। मरणे ब्रह्मभूतश्च नरो भवति निश्चितम् ॥२०॥ संक्षेपेण मया तुभ्यं कथितं क्षेत्रगं महत्। माहात्म्यं विस्तरेणैव कोऽपि नार्हति निश्चितम् ॥२१॥ इदं गजाननस्यापि चरितं सर्वसिद्धिदम्। भविष्यति महाभाग सर्वसौख्यकरं तथा ॥२२॥ नानाख्यानसमायुक्तं कथितं ते प्रजापते। यः शृणोति नरो भक्त्या पठेद्वा तस्य सिद्धिदम् ॥ भविष्यति महाभाग सर्वसौख्यकरं तथा ॥२३॥ नानेन सदृशं किंचित् पावनं ब्रह्मदायकम्। विद्यते सर्वशास्त्रेषु भुक्तिमुक्तिप्रदायकम् ॥२४॥ स्वर्णभारसहस्राणि नित्यं यो वै ददाति चेत्। तदस्य श्रवणान् मर्त्यो लभते नात्र संशयः ॥२५॥ गोदानानि नरो यस्तु ददाति भक्तिसंयुतः। नित्यं सहस्रशो दक्ष फलं प्राप्नोति शाश्वतम् ॥२६॥ नानादानानि यो दद्याद्ब्राह्मणेभ्यो यथाविधि। तेषां पुण्यफलं भुक्त्वा पतति मानवो भुवि ॥२७॥ अस्य श्रवणमात्रेण भुक्त्वा भोगान् मनेप्सितान्। अंते स्वानंदगो भूत्वा ब्रह्मभूतो भवेन्नरः ॥२८॥ नानायज्ञादिकं कर्म कुरुते मानवः सदा। नास्य श्रवणमात्रेण कलांशमपि तत् फलम् ॥२९॥ जन्ममृत्युप्रदान्येव कर्माणि सकलानि च। इदं सर्वप्रदं प्रोक्तमंते ब्रह्मप्रदायकम् ॥३०॥ संक्षेपेण प्रजानाथ कथितं सुखदं परम्। गजाननस्य माहात्म्यं किं भूयः श्रोतुमिच्छसि ॥३१॥ सूत उवाच। एवमुक्त्वा महायोगी मुद्गलो विरराम ह। श्रुत्वा दक्षोऽपि संहृष्टो बभूव मुनिसत्तम ॥३२॥ मयाऽपि कथितं सर्वं माहात्म्यं पूर्णसिद्धिदम्। तुभ्यं विप्रर्षियुक्ताय यथा मुद्गलभाषितम् ॥३३॥ धन्योऽहं कृतकृत्योऽहं भवतां संगमेन वै। गणेशामृतधारायां प्रवृत्तः सर्वभावतः ॥३४॥ गणेशान्न परं किंचित् सर्वादौ तेन स स्मृतः। सर्वपूज्यश्च विप्रर्षे ब्रह्मेशो ब्रह्मदः परः ॥३५॥ श्रुतं त्वया महाभाग ब्राह्मणैः शास्त्रकोविदैः। अधुना किं च ते विप्र इच्छा श्रोतुं वदस्व ताम् ॥३६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे चतुर्थे खंडे गजाननचरिते चरित्रमाहात्म्यवर्णनं नाम द्विपंचाशत्तमोऽध्यायः ॥



॥ इति चतुर्थः खंडः समाप्तः ॥

॥ श्रीगणेशाय नमः ॥ शौनक उवाच। श्रुतं मया महाख्यानं गजाननकथाश्रितम्। सर्वसौख्यकरं तात ब्रह्मभूतपदप्रदम् ॥१॥ तथा तृप्तिं न याम्येव पीत्वा ब्रह्मामृतं परम्। गुणज्ञो गणराजस्य कस्तं मुंचति मानद ॥२॥ धन्या वयं महाभाग त्वदासंग-समाश्रयात्। यत्र योगप्रदा गाथा वर्तते त्वन्मुखे द्विज ॥३॥ लंबोदरस्य माहात्म्यमधुना वद सर्वदम्। कीदृशोऽयं गणेशानः कीदृशं ब्रह्म तस्य च ॥४॥ कति तस्यावताराश्च किंकर्मा सोऽपि विघ्नपः। किमर्थमागतो भूमौ तत् सर्वं वद विस्तरात् ॥५॥ सूत उवाच। एवं दक्षेण संश्रुत्य गजाननचरित्रकम्। पृष्टो योगींद्रमुख्यश्च गाणपत्योऽथ मुद्गलः ॥६॥ दक्ष उवाच। गजाननस्य माहात्म्यं श्रुत्वा संक्षेपतः परम्। न तृप्तोऽहं महाभाग पायं पायं सुधामिव ॥७॥ अतो लंबोदरस्य त्वं चरित्रं वद विस्तरात्। सर्वसिद्धिप्रदं पूर्णं श्रवणात् पठनान्नृणाम् ॥८॥ गणेशस्य कथां योगिन् शृण्वंति च पठंति ये। श्रावयंति प्रपृच्छंति चत्वारः पुण्यभागिनः ॥९॥ धन्या ये पुरुषा लोके सादरा मुनिसत्तम। कथायां कृतकृत्यास्ते योगिनो योगभूषणाः ॥१०॥ सूत उवाच। एवं तस्यादरं दृष्ट्वा हर्षितो मुद्गलो मुनिः। जगाद तं महाभागं प्राजापत्येंद्रमादरात् ॥११॥ मुद्गल उवाच। साक्षाद्ब्रह्मसुतस्त्वं च ब्रह्मतुल्यो न संशयः। तत्र किं गणनाथे वै चित्रं रसयुतः प्रभो ॥१२॥ येषां मुखारविंदेषु गणेशस्मरणं भवेत्। इच्छामि तेषां दासत्वं नित्यं दक्ष प्रजापते ॥१३॥ अधुना शृणु वक्ष्यामि संक्षेपण चरित्रकम्। लंबोदरस्य विस्तारे कः समर्थो भवेत् प्रभो ॥१४॥ संवादं पूर्णसंभूतमसितस्य महात्मनः। नैध्रुवस्याऽत्र वक्ष्यामि सर्वसिद्धिप्रदायकम् ॥१५॥ प्रणम्य मुनिशार्दूलो नैध्रुवो वत्सरं वनम्। ययौ तपःप्रसिद्ध्यर्थं महाभागो महामुनिम् ॥१६॥ स ततापं तपो घोरं दिव्यवर्षसहस्रकम्। तपसा तस्य देवेंद्रा भीताश्च प्रबभूविरे ॥१७॥ किमयं तपसा साध्यं कर्तुमिच्छति वाडवः। न तुल्यं तपसोऽस्यात्र ब्रह्मांडे किं भविष्यति ॥१८॥ ततस्तस्याऽऽश्रमेऽकस्मादसितोऽभवदागतः। पितृव्यं मुनिरुत्थाय प्रणनाम कृतांजलिः ॥१९॥ पुपूज भक्तिसंयुक्तः कृतांजलिपुटः स्थितः। तस्याऽऽज्ञया विनीतः स आसने संस्थितोऽभवत् ॥२०॥ तमुवाच महायोगी सोऽसितो हितकारकम्। वचो भावेन संतुष्टो भ्रातृपुत्रं तपोधनम् ॥२१॥ असित उवाच। देहं किं तपसा पुत्राऽतिशोषयसि तापस। देहशोषणरूपं यत्तपो मुख्यं न शास्त्रतः ॥२२॥ अतो देहश्रमं त्यक्त्वा तपो मुख्यं समाचर। येन त्वं ब्राह्मणो भूत्वांऽते ब्रह्मणि गमिष्यसि ॥२३॥ मुद्गल उवाच। असितस्य वचः श्रुत्वा नैध्रुवो भक्तिसंयुतः। पुनः प्रपच्छ योगींद्रं संशयेन समन्वितः ॥२४॥ नैध्रुव उवाच। कृच्छ्रचांद्रादिधर्मेण यथाविधि कृतं मुने। तपो ब्रुवंति सर्वज्ञास्तत्र मुख्यं

किमप्यहो ॥२५॥ असित उवाच । तपश्च त्रिविधं प्रोक्तं तापदं नात्र संशयः । तच्छृणुष्व विधानेन योगिवंद्यो भविष्यसि ॥२६॥ कृच्छ्रचांद्रायणादीनि तपांसि प्रवदंति च । पंचाग्निसाधनादीनि वायुभक्षात्मकानि च ॥२७॥ इत्यादिभेदा बहवस्तपसो विविधस्य च । तदेव बाह्यभावस्थं पुत्र जानीहि निश्चितम् ॥२८॥ इहामुत्रप्रदं तात तपः फलमयं स्मृतम् । फलं भुक्त्वा पुनः सोऽपि दीनरूपो भवेत् किल ॥२९॥ अन्यच्छृणु महाभाग तपः परमदुश्चरम् । वायुरोधात्मकं देहे प्राणायामेन जायते ॥३०॥ तत्र प्राणस्य संतापो जायते नात्र संशयः । देहस्यापि तथा पुत्र तपस्तेन तदुच्यते ॥३१॥ षट्चक्रभेदने दक्षमंतर्ध्यान-परायणः । सहस्रारे गतं वायुं रोधयेत्तत्र लालसः ॥३२॥ तपःप्रभावेन तेन क्षुद्रसिद्धियुतो नरः । भवति ज्ञानमार्गज्ञ-स्त्रिकालज्ञानसंयुतः ॥३३॥ दूरश्रवणसामीप्यं कुरुते कामगां गतिम् । जले स्थलं स्थले तोयमाकाशे नगरादिकम् ॥३४॥ अहताज्ञश्च सर्वत्र भवते परमद्युतिः । अपरायुः समायुक्तो ब्रह्माद्यांश्चालयत्यपि ॥३५॥ एककल्पस्य सर्वेषां वृत्तांतं कथयत्यपि । जानाति स तपो योगादंतर्ध्यानपरायणः ॥३६॥ सोऽपि गत्वा विधेर्लोकं भुनक्ति विविधं सुखम् । पुण्यांते पुनरत्रैव दीनो भवति निश्चितम् ॥३७॥ तृतीयं त्वं तपोरूपं शृणु मत्तो सुयोगदम् । द्विविधं च तपो येन साधितं गुरुमार्गतः ॥३८॥ तेनैकाग्रमयं चित्तं भवत्यत्र न संशयः । सर्वत्रात्मस्वरूपं स पश्यति ज्ञानचक्षुषा ॥३९॥ तत्रानुभवमात्रेण शमदम-परायणः । भवते तेन संतापो देहे मनसि जायते ॥४०॥ विषयान्निंदयन् सोऽपि जडोन्मत्तपिशाचवत् । चरति सर्वभावज्ञ आत्मनिष्ठतया सुत ॥४१॥ ततो निरोधयोगेन निवृत्तिषु परायणः । चित्तं संरुध्य सर्वत्र निवृत्तिं लभते स्वयम् ॥४२॥ अहं ब्रह्मेति यत् प्रोक्तं कुतस्तत्र भयं भवेत् । न जगज्जगदात्मा वै मनो वाणीविहीनकः ॥४३॥ स्वत उत्थानभावो नोत्थानं परत एव न । न स्वतः परतस्तत्र उत्थानं वर्जितं भवेत् ॥४४॥ एवं निरोधयोगेन शमी दमपरायणः । संतोषेण स्वयं योगी वर्तते नित्यदा सुत ॥४५॥ तत्र संतोषभावेन स्थितस्य देहचेतसोः । संतापो जायते नित्यं तदेव तप उच्यते ॥४६॥ ततो निरोधभूमिं स त्यक्त्वा शांतिपरायणः । त्यक्त्वा पंचविधं चित्तमेवं ब्रह्मैव जायते ॥४७॥ ततो विधिनिषेधाभ्यां हीनो योगधरः स्वयम् । रसहीनश्चरत्यत्र प्रारब्धानुभवेन सः ॥४८॥ यथा जलानि सर्वत्र सुत गच्छंति सागरे । यदृच्छया तथा सोऽपि भोक्ता भोगेन नित्यदा ॥४९॥ तत्रांऽतरे शरीरेऽस्य तापः संजायते सदा । शांत्या भोगपरत्वेन तदेव

तप उच्यते ॥५०॥ एतद्योगात्मकं सुज्ञ तपस्ते कथितं मया । तृतीयं ब्रह्मदं पूर्णं तदर्थं यत्नमाचर ॥५१॥ तपोधना महाभागा योगिनस्तत्परायणाः । ब्राह्मणास्तपसा युक्ता ब्रह्मभूता भवंति ते ॥५२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते असितनैध्रुवसंवादे त्रिविधतपोवर्णनं नाम प्रथमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । असितस्य वचः श्रुत्वा नैध्रुवो विस्मितोऽभवत् । प्रणम्य तं महाभागं जगाद विनयान्वितः ॥१॥ नैध्रुव उवाच । स्वामिन् वद महायोगं योगदं साधनं परम् । तदर्थं कस्य भक्तिर्मे कर्तव्या योगिसत्तम ॥२॥ असित उवाच । शृणु पुत्र प्रवक्ष्यामि लंबोदरकथानकम् । तेन सर्वं महायोगं लभसे नात्र संशयः ॥३॥ एकदाऽहं तथा पुत्र वत्सरस्ते पिता पुरा । तपसा शुद्धभावेन भवावः स्म च निर्मलौ ॥४॥ ततो योगस्य प्राप्त्यर्थं यत्नवंतौ सुसंस्थितौ । अंतर्ज्ञानसमायुक्तौ जडोन्मत्तादिसुप्रियौ ॥५॥ एकाग्रं साधयित्वा वै निरोधे संस्थितौ तथा । सहजावस्थया युक्तौ सुखयुक्तौ भवावहे ॥६॥ तत्रैव मोहहीनत्वं दृष्ट्वा परमविस्मितौ । शांतिहीनौ ततो जातौ गतौ च ब्रह्मणोंऽतिकम् ॥७॥ तत्र स्पर्धा-समायुक्तौ विश्वामित्रवसिष्ठकौ । समायातौ प्रणम्यैनं प्रतिष्ठंतौ मदान्वितौ ॥८॥ क्रोधयुक्तौ विधातारं प्रपृच्छंतौ विशेषतः । कोऽधिको वद धातस्त्वं तपसा योगसेवया ॥९॥ तच्छ्रुत्वा तौ जगादाऽथ ब्रह्मा सर्वपितामहः । येन क्रोधो जितो नूनं तं जानाम्यधिकं मुनिम् ॥१०॥ युवां क्रोधयुतौ पूर्णौ तत्र किं विद्यते तपः । सर्वत्र शांतिदं योगं तं यो जयति सोऽधिकः ॥११॥ ततः प्रणम्य विश्वेशं वदतः स्म तपोधनौ । विनयेन समायुक्तौ तपस्पर्धापरायणौ ॥१२॥ वसिष्ठविश्वामित्रावूचतुः । कीदृशोऽयं प्रजानाथ क्रोधः सर्वभयंकरः । कुत्र तिष्ठति देवेश किंरूपः किंस्वभाववान् ॥१३॥ जयंति केन योगेन तं दुष्टं योगिनः प्रभो । सर्वं वद विभो तस्य तं जेष्यावो न संशयः ॥१४॥ ब्रह्मोवाच । अत्राऽहं कथयिष्यामीतिहासं सर्वसिद्धिदम् । तेन क्रोधं च कामं चाभिमानं जयति प्रभुः ॥१५॥ शकुनेरभवत् पुत्रः शुक्रं भस्मासुरोऽतपत् । उपसंगम्य संगृह्य विद्यां पंचाक्षरीं पुरा ॥१६॥ दीक्षां गृह्य महादेवमुपासनविधानतः । साधयामास भावेन भस्मोद्धूलितविग्रहः ॥१७॥ सहस्रे प्रगतेष्वेव प्रभुर्वर्षेषु शंकरः । तं ययौ वरदानार्थं सर्वदेवसमावृतः ॥१८॥ आगतं शंकरं दृष्ट्वा उत्थाय

प्रणिपत्य तम् । पूजयित्वा प्रतुष्टाव स्तोत्रैः शैवैर्महासुरः ॥१९॥ जगाद शंकरो दैत्यं संतुष्टो भक्तमुत्तमम् । वरं वरय दास्येऽहं भक्त्या ते तपसाऽसुर ॥२०॥ भस्मासुर उवाच । यस्य शंभो महेशान मस्तकेऽहं धरामि सः । हस्तं सद्यो मृतो भूत्वा ततो भवतु भस्मसात् ॥२१॥ अन्येभ्यः सर्वभूतेभ्यो न भयं मे कदाचन । भवेत् सर्वातिगा शक्तिस्तथा कुरु महेश्वर ॥२२॥ तच्छ्रुत्वा विस्मितः शंभुस्तं जगाद महासुरम् । सर्वं च ते महादैत्य भविष्यति मदाज्ञया ॥२३॥ हस्तस्ते यस्य शिरसि दक्षिणः संपतिष्यति । स वै भस्ममयः सद्यो भविष्यति न संशयः ॥२४॥ ततः शिवो ययौ स्थानं कैलासं गणसंवृतः । दैत्यस्तत्रैव तिष्ठन् स विचारमकरोत् स्वयम् ॥२५॥ अहो शिवस्य वामांगे संस्थिता जगदंबिका । रूपलावण्य-संयुक्ता रत्नभूताऽतिसुंदरी ॥२६॥ एतादृशी मया कुत्र दृष्टा नैव सुरूपिणी । नग्नः शंभुरयं तस्याऽयोग्यो नैव भवेद्रतौ ॥२७॥ अतोऽहं यत्नमास्थाय वरदानप्रभावतः । शंभुं भस्ममयं कृत्वा ग्रहीष्यामि च पार्वतीम् ॥२८॥ एवं विचार्य दैत्येंद्र आययौ शंकरांतिकम् । कैलासे गिरिवर्ये स वेगमास्थाय दारुणः ॥२९॥ दक्षिणं हस्तमूर्ध्वं स कृत्वा शंकरसन्निधौ । आययौ तं विलोक्यैव पपाल गिरिजापतिः ॥३०॥ नमस्कारादिचिह्नैश्च हीनं दृष्ट्वा स्वसन्निधौ । असुरं भावसंयुक्तं भयभीतः समंततः ॥३१॥ ततः सोऽपि महादैत्यः क्रोधयुक्तो विशेषतः । धावयित्वा तमनु वै ग्रहीतुं प्रोद्यतोऽभवत् ॥३२॥ ततोऽतिवेगमास्थाय शिवो भीत्या पलायत । अधावत् पृष्ठमास्थाय तं भस्मासुर एव च ॥३३॥ पलंतं शंकरं तत्र ददर्श कमलापतिः । सस्मार गणपं चित्ते किं भविष्यति विह्वलः ॥३४॥ सोऽपि तुष्टाव चाथर्वशिरसा विघ्ननायकम् । विष्णुः परमशोकार्तो महादेवस्य कारणात् ॥३५॥ शिवश्च भयसंयुक्तो गणेशं स्वयमस्तवीत् । महासंकटनाशार्थं शरणागतवत्सलम् ॥३६॥ शिव उवाच । किं पश्यसे नाथ विनायकस्त्वं दैत्येन सर्वत्र च मां सुत्रासितम् । दक्षं भुजं मस्तकगं गणेश कृत्वा स मां भस्ममयं करिष्यति ॥३७॥ नानाजनैः सेवितपादपद्म किं विस्मृतो मां भयभंगकारिन् । चिंतामणे चित्तनिवासक त्वं संरक्ष विघ्नेश दयाघनात्र ॥३८॥ त्वदन्यदेवं शरणं गजास्य प्रभुं समर्थं न च यामि नाथ । न कोऽपि हेरंब महानुभाव क्षमो हि मां रक्षितुमीश्वरः कः ॥३९॥ लंबोदरामोघ सुचिंतनं ते स्वानंदवासिंश्च महोदरस्य । रक्षस्व मां मृत्युमुपागतं त्वं त्वत्पादनिष्ठं भयभंजनाशु ॥४०॥ किं सिद्धिबुद्धिप्रविहारकेण सक्तः प्रजातोऽसि विनायक त्वम् । भक्तानुकंपीति तवैव नाम वेदे कथं संकथितं महात्मन् ॥४१॥ किं लक्षलाभप्रभवार्थमेवं संसक्तभावैरसि विस्मरंश्च । मां रक्ष नो चेन्निगमस्य देव

व्यर्थं यशः संभविता परात्मन् ॥४२॥ यथा दिनेशः समकालयुक्तः प्रकाशदाता भवतीति नित्यम् । तथा हि ते भक्तजनानपारान् क्षमोऽसि तान् रक्षितुमंतरं किम् ॥४३॥ किं योगरूपातिविलंबनेन रक्षस्व भीतं मरणे सुसंस्थम् । हेरंब विघ्नेश विनायकाशु रक्षस्व रक्षस्व महेशपुत्र ॥४४॥ एवं स्तुवति शंभौ स विष्णोर्हृदि गजाननः । प्रविश्य बुद्धिसंदाता बभूवे भक्तवत्सलः ॥४५॥ धृत्वा स्त्रीवेषकं विष्णुर्ययौ तं भस्मकारकम् । महासुरो मुमोहाऽसौ तां दृष्ट्वा मोहिनीं स्त्रियम् ॥४६॥ तां समागत्य पप्रच्छ दैत्येंद्रो मोहसंयुतः । कुत्र गच्छसि सुश्रोणि किं ते कार्यमुपस्थितम् ॥४७॥ वद मां तत् करिष्यामि त्वद्दासोऽहं न संशयः । अहं सर्वेश्वरोऽत्रैव न समो मे प्रविद्यते ॥४८॥ भज मां भावसंयुक्ता भजंतं ते च दासकम् । त्वदधीनो भविष्यामि सदा वरांगने मतम् ॥४९॥ तस्य तद्वचनं श्रुत्वा स्मित्वा सा तं जगाद ह । अहं मोहप्रदा नारी मोहिन्यत्र समागता ॥५०॥ मदाज्ञया दैत्य यदि वर्तसे त्वं निरंतरम् । तदा ते गृहगा भूत्वा तिष्ठाम्यत्र न संशयः ॥५१॥ तथेति दैत्यराजस्तां जगाद साऽब्रवीत् पुनः । नृत्यं कुरु मदग्रे त्वं यथा नृत्यामि वै अहम् ॥५२॥ तथेति प्रतिपाद्यैव सा ननर्त कलान्विता । तथा दैत्याधिपस्तत्र ननर्त काममोहितः ॥५३॥ तया दक्षिणहस्तश्च स्थापितः शिरसि स्वके । तथा सोऽपि चकाराशु भ्रांतो विघ्नेशमायया ॥५४॥ भस्मसादभवद्दैत्यो भस्मासुरश्च तत्क्षणात् । ततः सा विस्मिता भूत्वा तुष्टाव गणनायकम् ॥५५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते भस्मासुरवधो नाम द्वितीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ब्रह्मोवाच । गाणेशैः स्तोत्रमुख्यैः संतुष्टाव विष्टरश्रवाः । गणेशं सिद्धिदं पूर्णं भक्तेभ्यो भक्तवत्सलम् ॥१॥ ततः स मोहिनीरूपमभूत् त्यक्तुं समुद्यतः । एतस्मिन्नंतरे तत्राऽमरैः संबोधितः शिवः ॥२॥ ज्ञात्वा भस्मासुरं शंभुर्मृतं विस्मितमानसः । ननर्त भक्तिसंयुक्तो जय विघ्नेश उच्चरन् ॥३॥ ततः सर्वैः समायुक्तो मुकुंदकपुरं ययौ । तत्र नारीस्वरूपस्थमदर्शत् केशवं शिवः ॥४॥ महामोहप्रदं रूपं दृष्ट्वा विष्णोः सुविस्मितः । तदज्ञानो महादेवस्तां ययौ कामविह्वलः ॥५॥ तं दृष्ट्वा मोहितं विष्णुः पपाल स्त्रीस्वरूपधृक् । तामन्वधावद्देवेशः शंकरो विह्वलो भृशम् ॥६॥ ततस्तत्याज

तद्रूपं विष्णुः स पुरुषोऽभवत् । शिवः खिन्नश्च तत्रैव स्खलितोऽभूत् सुविह्वलः ॥७॥ ततः सर्वे ययुर्देवाः स्वस्वस्थानं मुदा युताः । स्तुत्वा विष्णुं महाभागं शिवः स्वस्थानगोऽभवत् ॥८॥ शिवस्य वीर्यसंपातात्तद्वीर्यप्रभवोऽसुरः । बभूव श्यामवर्णश्च ताम्रचक्षुः प्रतापवान् ॥९॥ स शुक्रमुपसंगम्योवाच तं विनयान्वितः । प्रणम्य तेजसा युक्तः शिष्यं पालय मां मुने ॥१०॥ ततो ध्यानेन स ज्ञात्वा तस्य सर्वं महामुनिः । पुनस्तं प्रजगादैव वचनं हर्षयन्नरम् ॥११॥ शुक्र उवाच । मोहिनीं शंकरो दृष्ट्वा कामबाणप्रपीडितः । पश्चाद्विष्णुं समालोक्य स्वचित्ते क्रोधमादधे ॥१२॥ मनो मे चंचलं पूर्णं तद् ग्रहीष्यामि यत्नतः । मनोग्रहणरूपश्च क्रोधस्तत्र प्रवर्तते ॥१३॥ तस्मिन् काले च वीर्यस्य स्खलनं सहसाऽभवत् । तस्माज्जातोसि तेन त्वं क्रोधनामा भविष्यसि ॥१४॥ ततो दानवमुख्यैः स कारयामास विप्रप । मौंज्यंतसर्वसंस्कारान् यथाविधि स शास्त्रवित् ॥१५॥ क्रोधो वेदादिकं सर्वमभ्यस्य गुरुसन्निधौ । शंबरस्य सुतां तुल्यामुपयेमे महासुरः ॥१६॥ प्रीतिनाम्नीं महारूपां सर्वावयवशालिनीम् । रूपलावण्यसंयुक्तां विषयानां प्रवर्द्धिनीम् ॥१७॥ ततः शुक्रं समागम्य जगाद प्रणिपत्य तम् । कृतांजलिर्महातेजा दैत्येभ्यः सुखदं वचः ॥१८॥ क्रोधासुर उवाच । ब्रह्मांडविजयं स्वामिन् करिष्यामि त्वदाज्ञया । मंत्रं देहि तदर्थं मे सर्वं यशोविवर्धनम् ॥१९॥ ब्रह्मोवाच । तस्य तद्वचनं श्रुत्वा काव्यः सर्वज्ञसत्तमः । दैत्यानां प्रहितार्थाय ददौ तस्मै महामनुम् ॥२०॥ सूर्यस्य विधियुक्तं प्रणम्य संगृह्य तं ययौ । वनं व्याघ्रादिसंकीर्णं तपसे कृतनिश्चयः ॥२१॥ एकपादेन तिष्ठन् समजपन् मंत्रमुत्तमम् । चित्ते ध्यायन्नर्यमाणमूर्ध्वदृष्टिर्महासुरः ॥२२॥ निराहारेण देवेशं तोषयामास यत्नतः । शीतोष्णादिभयं त्यक्त्वा काष्ठवत् संस्थितोऽभवत् ॥२३॥ दिव्यवर्षसहस्रेण तुष्टो भानुस्तमाययौ । वरं दातुं महादैत्यमुवाच घननिःस्वनः ॥२४॥ रविरुवाच । वरान् वृणु महाभाग क्रोधाऽहं ते ददामि तान् । संतुष्टस्तपसोग्रेणेप्सितान् हृदि महामते ॥२५॥ श्रुत्वा रवेर्वचो दैत्यो दृष्ट्वा तं पुरतः स्थितम् । प्रणनाम महाभक्त्याऽपूजयत्तेजसां निधिम् ॥२६॥ पुनः प्रणम्य तुष्टाव कृतांजलिपुटोऽसुरः । सौरसूक्तेन देवेशं पुनः संनत आदरात् ॥२७॥ तमुवाचार्यमा दैत्यं वरं वृणु महामते । यं यमिच्छसि तं तं ते दास्याम्यत्र न संशयः ॥२८॥ क्रोधासुर उवाच । उत्पत्तिस्थितिसंहारयुक्ता ये देवनायकाः । तेभ्यो मे मरणं भानो न भवेद्वै कदाचन ॥२९॥ ब्रह्मांडजयने शक्तं मां कुरुष्व विशेषतः । राज्यं चराचरस्यैव देहि मेऽदितिनंदन ॥३०॥ आरोग्यं मनसा यद्यच्चिंतितं सफलं भवेत् । न मे समो भवेत् कुत्र तथा कुरु दिवस्पते ॥३१॥ श्रुत्वा तस्य वचो रम्यं सर्वेभ्यो भयदायकम् ।

विस्मितस्तेजसां नाथस्तं जगाद सुयंत्रितः ॥३२॥ भानुरुवाच। क्रोध त्वया च यत् प्रोक्तं तदेव सफलं भवेत्। तपसा यंत्रितो दैत्य तस्माद्दत्तं मया परम् ॥३३॥ एवमुक्त्वार्यमा लोकमगमद्दुःखसंयुतः। क्रोधो हर्षसमाविष्टः प्रययौ स्वगृहं ततः ॥३४॥ सुहृदो नंदयामासासुरान् सर्वान् महायशाः। काव्यं प्रणम्य स्वस्थाने संस्थितोऽभून् मदान्वितः ॥३५॥ हर्षः शोकश्च पुत्रौ द्वौ प्रीत्यामुत्पाद्य दैत्यपः। नानाभोगान् प्रभुंजानो गर्वितोऽभूत्ततः परम् ॥३६॥ शुक्रं सकलनीतिज्ञं समानाय्य प्रपूज्य तम्। तस्यानुमतमागृह्य नगरं निर्ममेऽसुरः ॥३७॥ आवेशनामकं रम्यं सर्वशोभासमन्वितम्। तत्राजग्मुश्च विप्रर्षे दानवा दैत्यराक्षसाः ॥३८॥ चातुर्वर्ण्यसमायुक्ता निवासं चक्रिरे पुरा। जना हर्षयुतास्तत्र मुमुदुः ससुहृद्गणाः ॥३९॥ ततः काव्यः समागत्य क्रोधं चकार विप्रपैः। अभिषिक्तं स सर्वेषां दानवानां पदे प्रभुम् ॥४०॥ ततः क्रोधस्य तत्पुर्यां प्रधानाः पंच दारुणाः। बभूवुः सर्वनीतिज्ञा महामाया महाबलाः ॥४१॥ बलिर्जृंभस्तथा राहू रावणो माल्यवान् परः। तैर्युक्तः शुशुभेऽत्यंतं क्रोधः परमदारुणः ॥४२॥ अन्ये प्रहस्तमुख्याश्च राक्षसा दानवास्तथा। सिषेविरे भावयुक्ता महाक्रोधं महाबलाः ॥४३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते क्रोधासुरराज्यप्राप्तिवर्णनं नाम तृतीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ब्रह्मोवाच। ततः किंचिद्गते काले क्रोधो हर्षसमन्वितः। उवाच बलिमुख्यांश्च दानवान् गर्वपूरितः ॥१॥ क्रोधासुर उवाच। शृणुध्वं दानवाः सर्वे बलिमुख्या महाबलाः। ब्रह्मांडं प्रजयिष्यामि भवद्भिः संयुतो ह्यहम् ॥२॥ तस्य तद्वचनं श्रुत्वा दैत्याः संहर्षिता नृपम्। जगुस्तं भक्तिसंयुक्ता कृत्वा करपुटं वचः ॥३॥ बल्याद्या ऊचुः। सम्यगुक्तं त्वया नाथ प्रजेष्यामः सुराधिपान्। त्वत्प्रसादेन दैत्येश आज्ञापय महासुरान् ॥४॥ पराक्रमतुलां ते न तिष्ठंति ब्रह्मगोलके। निर्भयोऽसि महाराज जय त्वं सर्वदेवपान् ॥५॥ तेषां वचनमाकर्ण्याऽसुरः क्रोधः प्रहर्षितः। शुक्रं नत्वा समानाय्य बभौ तेनानुमोदितः ॥६॥ ततो दैत्यगणान् सर्वानाजुहाव नरैः स्वकैः। ते सर्वे हर्षसंयुक्ता आययुस्तं नराधिपम् ॥७॥ ततः सैन्यसमायुक्तो निर्जगाम महासुरः। चतुरंगबलैर्युक्तोऽपारैः सर्वत्र संबभौ ॥८॥ रथस्थश्च स्वयं क्रोधो दैत्यपैः संवृतो बभौ। तत्रादौ

पृथिवीं जेतुं ययौ भूमंडले नृपान् ॥९॥ बलिमुख्यैर्महावीरैः स्थितैर्यत्र च मानदौ । तैर्युद्धं कः पुमान् भूमौ कर्तुं शक्तो भवेत्तदा ॥१०॥ राजानः शरणं जग्मुर्दैत्येंद्रभयपीडिताः । केचिन् मृताश्च तैर्युद्धं कृत्वाऽहंकारसंयुताः ॥११॥ केचिद्राज्यं परित्यज्य सुदारुणवनं ययुः । एवं वसुंधरां जित्वा मुमुदुः सप्तसागराम् ॥१२॥ राज्ञस्ते करदांश्चक्रुर्दैत्याः शरणमागतान् । मृतास्तेषां सुताः सर्वे करदान् स्थाप्य चक्रिरे ॥१३॥ वनेषु ये गतास्तेषु दैत्याः संस्थापिताश्च तैः । बभुः संस्थापिता दैत्याः सर्वत्र नगरेषु वै ॥१४॥ ततः पाताललोकेषु ययुर्दैत्येंद्रमुख्यकाः । क्रोधासुरसमायुक्ता जेतुं नागान् महाबलान् ॥१५॥ समागतं महानागैः शेषं दूतमुखेन वृत्तांतं ज्ञात्वा शेष उदारधीः । वरगर्वसमायुक्तं क्रोधं ज्ञात्वा ययौ स्वयम् ॥१६॥ समागतं महानागैः शेषं ज्ञात्वा समावृतम् । क्रोधासुरः प्रसन्नात्मा मान्य तं सादरोऽभवत् ॥१७॥ करभारं वार्षिकं स वृतः स्वीकृत्य नागपैः । दत्त्वा रत्नादिकं शेषो ययौ स्वस्थानमेव च ॥१८॥ ततः स दैत्यपैः सर्वैर्ययौ शुक्रेण पालितः । देवस्थानेषु सर्वेषु देवोद्याना-न्यभंजयत् ॥१९॥ ततो दूतं महादैत्यः प्रेषयामास हर्षितः । जगाद मघवंतं च स गत्वा चेष्टितं महत् ॥२०॥ बृहस्पतिं च देवेंद्रैस्तत इंद्रः समाययौ । तेन संज्ञापितः सर्वैः प्रपपाल गुहांतरम् ॥२१॥ तज्ज्ञात्वा दैत्यपैः सर्वैर्हर्षितः क्रोधकोऽसुरः । आययावमरावत्यामिंद्रासनस्थितोऽभवत् ॥२२॥ देवस्थानानि सर्वाणि विभज्य प्रददौ स्वयम् । असुरेभ्यो महादैत्यस्तेषु दैत्याः स्थिता बभुः ॥२३॥ नाना भोगान् प्रभुंजाना देवसौख्यकरान् मुनी । अन्योन्यस्नेहसंयुक्ता बभूवुः साहसप्रियाः ॥२४॥ गंधर्वांश्चारणाद्यांश्चाप्सरसस्तान् सिषविरे । दुःखयुक्ता विशेषेण देवैर्हीना महामुनी ॥२५॥ ततः कदाचिद्दैत्येंद्रो दैत्यपैः संवृतो ययौ । सत्यलोकं सुविख्यातं ज्ञात्वा ब्रह्मा पपाल ह ॥२६॥ तत्रैव संस्थितो दैत्यः क्रोधः परमदारुणः । बुभुजे सत्यलोकोत्थान् भोगान् दैत्यैर्महाबलैः ॥२७॥ ततो विकुंठमेवं स जगामासुरसंवृतः । ज्ञात्वा तत्र स्थितो विष्णुः पपाल क्रोधभीतितः ॥२८॥ तत्र स्थित्वा विकुंठस्य भोगान् विष्णुकृतान् स्वयम् । बुभुजे ज्ञातिभिः सार्धं क्रोधः परमदारुणः ॥२९॥ ततः कैलासकं दैत्यः शंकरं जेतुमाययौ । महादेवः पपालैव क्रोधसंतापतापितः ॥३०॥ तत्रस्थः क्रोधको दैत्यो ननंद हृदि चाद्भुतम् । दैत्यैः समावृतः क्रूरस्तान् जगाद बलान्वितः ॥३१॥ क्रोधासुर उवाच । बले रावणमुख्याश्च शृणुध्वं मे वचो हितम् । अधुना न जितं स्थानं वदताऽहं जयामि तत् ॥३२॥ दैत्येंद्रा ऊचुः । सर्वं जितं त्वया राजन् भानुरेकः सुराधिपः । न जितः स तदर्थं त्वं प्रयतस्वाऽसुराधिप ॥३३॥ जगाद क्रोधको दैत्यस्ततस्तान् हर्षसंयुतः । इष्टदेवं मदीयं तं भानुं त्यजत दैत्यपाः ॥३४॥

तस्य तद्वचनं श्रुत्वा क्षोभयुक्ता महासुराः । जगुस्तं मायया युक्ताः क्रोधं भेदपरायणाः ॥३५॥ अस्माकमिष्टदेवोऽयं सूर्यः स्वामिन्न संशयः । भजिष्यामो विशेषेण तं सदा भक्तिलालसम् ॥३६॥ देवानां पक्षमुत्सृज्येच्छत्यस्माकं हितं यदि । तदा वंद्योऽर्यमा नाथ नान्यथा जय तं बलात् ॥३७॥ परपक्षाश्रितं देवमस्मत्संहनने रतम् । जयिष्यामो वयमतो हितं राजन् समाचर ॥३८॥ दैत्येशानां वचः श्रुत्वा क्रोधः संहर्षितोऽभवत् । दूतं संप्रेषयामास रावणं गर्वसंयुतम् ॥३९॥ रावणात् सर्ववृत्तांतं ज्ञात्वा भानुः प्रतापवान् । तमुवाच तदा क्रुद्धो भयभीतश्च मानदौ ॥४०॥ रविरुवाच । देवानां पक्षमुत्सृज्य क्रोधासुरपरायणः । न भविष्यामि भो दूत देवोऽहं नात्र संशयः ॥४१॥ उन्मत्तं वरसंयुक्तं क्रोधं वद महामते । त्यक्त्वा राज्यं वने भानुर्गतो राज्यं कुरुष्व च ॥४२॥ एवमुक्त्वा रावणं स सूर्यः सर्वसमन्वितः । पपाल लोकमुत्सृज्य रावणस्तं समाययौ ॥४३॥ ततोऽतिहर्षितो दैत्यः क्रोधो दुष्टैः समावृतः । आययौ सौरलोकं तं मुमुदे प्राप्य दुर्जनः ॥४४॥ आत्मानं कृतकृत्यं स मानयामास दुर्मतिः । ब्रह्मांडविजयी भूत्वा भोगांश्च बुभुजे परान् ॥४५॥ ततः संस्थाप्य दैत्येंद्रान् तेषु स्वर्गेषु दैत्यपः । पृथिव्यां नगरं मुख्यमाययौ प्रीतिसंज्ञकम् ॥४६॥ क्रोधासुरोऽसौ तत्रस्थः प्रशशास प्रतापवान् । त्रैलोक्यं भोगसंयुक्तः सुहृदानंददायकः ॥४७॥ स्त्रीमांसमदिरासक्तो बभूव विषयप्रियः । न बुबोध गतं कालं यथाकालेन वंचितः ॥४८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते क्रोधासुरब्रह्मांडविजयो नाम चतुर्थोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ब्रह्मोवाच । ततोऽतिमदसंयुक्तोऽसुरः क्रोधः प्रतापवान् । दैत्यानाज्ञापयत् क्रूरान् कर्मणः खंडनाय तान् ॥१॥ तस्याज्ञया ययुर्दैत्या यत्र तत्र महीतले । ब्राह्मणांस्ताडयामासुर्वर्णाश्रमप्रवर्तकान् ॥२॥ अन्यान् वर्णांस्तथा गृह्य कर्महीनांश्च चक्रिरे । देवतीर्थादिकं दैत्या बभंजुर्यज्ञवृक्षकान् ॥३॥ सर्वत्र त्रासिता लोकाः कर्महीना बभूविरे । न स्वाहा न स्वधा कुत्र न वषट्कार एव च ॥४॥ ततो विप्रानुवाचाऽथ क्रोधासुरः प्रतापवान् । मदीयनामसंयुक्तं कर्म कुर्वंतु विप्रपाः ॥५॥ जगदीशो महाभागा अहं द्विजा न संशयः । भजतां पादयोर्मे नो दुर्लभं किं भविष्यति ॥६॥ ततो द्विजास्तपोनिष्ठा गता वनेषु मानदौ । त्यक्त्वा विषयजं सौख्यं सिंहव्याघ्रयुतेषु ते ॥७॥ केचिद् भ्रष्टास्तदाज्ञायां संस्थिता

दुःखसंयुताः । वर्णाश्रमविहीनाश्च जनाः सर्वे बभूविरे ॥८॥ सर्वत्र क्रोधकस्यैव प्रतिमा स्थापिताऽभवत् । गृहे गृहे तथा तस्याऽसुरैः पूजा प्रवर्तिता ॥९॥ एवं हा हा कृतं सर्वं त्रैलोक्यं तेन वैरिणा । देवाः सर्वे भयोद्विग्ना बभूवुः कर्मखंडनात् ॥१०॥ कर्मखंडनभावेनोपोषणैः संयुताः सुराः । ततस्तस्य विनाशार्थं यत्नवंतो बभूविरे ॥११॥ न प्रापुस्तस्य शांत्यर्थमुपायं ते सुरेश्वराः । ततोऽतिखेदसंयुक्ता बभूवुस्त्रासकंपिताः ॥१२॥ एतस्मिन्नंतरे तत्र वसिष्ठो योगिनां वरः । जगाद तान् सुरेशानान्निःश्वस्य हितकारकः ॥१३॥ वसिष्ठ उवाच । उत्पत्तिस्थितिसंहारैर्वयं युक्ता न संशयः । अस्मभ्यो मरणं तस्य न भविष्यति निश्चितम् ॥१४॥ स्वानंदवासकरणं गणेशं ब्रह्मनायकम् । त्रिभिर्हीनं जगुर्वेदास्तं सेवध्वं सुरेश्वराः ॥१५॥ हत्वा क्रोधासुरं सोऽपि स्वपदानि प्रदास्यति । अस्मभ्यं नात्र संदेहं कुर्वंतु प्रयताः सुराः ॥१६॥ वसिष्ठवचनं श्रुत्वा हर्षयुक्ताः सुरर्षयः । साधु साधु मुनि सर्वे जगुर्ज्ञाननिधिं परम् ॥१७॥ ततस्ते मंत्रराजं वै जेपुर्लंबोदरस्य च । भक्तियुक्तास्तपोनिष्ठा ध्यानसंस्था बभूविरे ॥१८॥ नानानुष्ठानयोगैश्चातोषयंस्ते गजाननम् । उपोषणपराः सर्वे विधियुक्ता महामुनी ॥१९॥ एवं वर्षसहस्रे च प्रगते तोषसंयुतः । लंबोदरः प्रसन्नात्मा तान् ययौ वरदायकः ॥२०॥ समागतं गणेशानं दृष्ट्वा देवर्षयः पुरः । उत्थाय हर्षसंयुक्ताः प्रणेमुर्दंडवद्भुवि ॥२१॥ पुपूजुर्भक्तिसंयुक्ताः प्रभुं नानोपचारकैः । पुनः प्रणम्य संतुष्टास्तुष्टुवुः करसंपुटैः ॥२२॥ देवर्षय ऊचुः । नमस्ते गणनाथाय लंबोदरधराय च । गजवक्त्राय सर्वेषां नमः पूज्याय ते नमः ॥२३॥ स्वानंदपतये तुभ्यं सर्वस्वानंददायिने । अनाथाय च सर्वेषां नायकाय नमो नमः ॥२४॥ नमो विघ्नेश्वरायैव भक्तविघ्नविनाशिने । अभक्तानां महाविघ्नकारकाय नमो नमः ॥२५॥ उत्पत्तिस्थितिसंहारहीनाय सर्वरूपिणे । अनादये परेशाय महोदर नमोऽस्तु ते ॥२६॥ मायिनां मोहकायैव मायाविने परात्मने । सर्वसिद्धिप्रदायैव नानाविद्याकलात्मने ॥२७॥ अपाराननरूपायापारहस्तपदाय च । गुणेशाय गुणानां ते चालकाय नमो नमः ॥२८॥ आदिमध्यांतरूपायादिमध्यांतस्वरूपिणे । अनाकाराय ते चाकारयुक्ताय नमो नमः ॥२९॥ ज्येष्ठराजाय ज्येष्ठानां पतये सर्वदायिने । आदिपूज्याय चांते ते संस्थिताय नमो नमः ॥३०॥ नानाविधं जगत् सर्वं ब्रह्म नानाविधं प्रभो । संभूतमुदरात्ते वै तेन लंबोदरो भवान् ॥३१॥ तवोदरभवाः सर्वे त्वं न कस्योदरोद्भवः । तेन लंबोदरोऽसि त्वं लंबोदर नमोऽस्तु ते ॥३२॥ सर्वेषामुदराणां त्वं पारं जानासि विघ्नप । उदरस्य न कस्तेऽपि पारं जानाति ते नमः ॥३३॥ एतादृशोऽयमानंदानामानंदप्रदायकः । प्रत्यक्षं

दृष्टिगो जातोऽस्माकं धन्या वयं ततः ॥३४॥ मनोवाणीविहीनो न मनोवाणीमयो न च । लंबोदरः समायात आश्चर्यं भाति ते नमः ॥३५॥ किं स्तुवीमः गणेशानं यत्र वेदादयः प्रभो । शांतिं प्राप्ता वयं तत्र नः प्रसीद नमो नमः ॥३६॥ एवमुक्त्वा सुराः सर्वे ननृतुर्मुनयस्तथा । तानुवाच गणेशानो मेघगंभीरनिःस्वनः ॥३७॥ लंबोदर उवाच । वरं ब्रूत महाभागा देवेंद्रा मुनयोऽमलाः । तपसा मनसाऽभीष्टं भक्त्या तुष्टो ददाम्यहम् ॥३८॥ भवत्कृतं मदीयं यत् स्तोत्रं सर्वप्रदं भवेत् । पठते शृण्वते चेहामुत्र सौख्यप्रदं परम् ॥३९॥ यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः । नानासिद्धिप्रदं चास्तु मम भक्तिविवर्धनम् ॥४०॥ ब्रह्मोवाच । लंबोदरवचः श्रुत्वा हृष्टा देवर्षयोऽभवन् । जगुस्तं प्रणिपत्यैव सर्वेशं भक्तपालकम् ॥४१॥ देवर्षय ऊचुः । यदि प्रसन्नभावेन वरदोऽसि गजानन । तदा क्रोधासुरं नाथ मारयस्वाधुना प्रभो ॥४२॥ स्थानभ्रष्टा वयं तेन कृताः कर्मविहीनकाः । ऋषयश्च जगत् सर्वं स्वधास्वाहाविवर्जितम् ॥४३॥ अतो लंबोदर स्वामिंस्तवोदरसमुद्भवान् । एकं हत्वा तथा सर्वान् रक्ष स्वभक्तकान् प्रभो ॥४४॥ भक्तिं देहि त्वदीयां नः सर्वक्रोधविनाशिनीम् । तया शांतिसमायुक्ता भजिष्यामो विशेषतः ॥४५॥ तव भक्तिर्यदा प्राप्ता लंबोदर तदा शुभम् । भुनक्ति सर्वदा स्वामिन् ब्रह्मभूतः स वै स्मृतः ॥४६॥ सर्वं मुनीनां देवानां वचः श्रुत्वा महाप्रभुः । लंबोदरश्च तान् प्राह तथेति भक्तियंत्रितः ॥४७॥ ततः सोऽतर्हितो देवो देवास्तत्रैव संस्थिताः । मुनयश्च भयोद्विग्नाः कालकांक्षां प्रचक्रिरे ॥४८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते देवर्षिवरप्रदानं नाम पंचमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ब्रह्मोवाच । विश्वामित्रवसिष्ठौ च शृणुतं परमाद्भुतम् । चरितं गणनाथस्य महाशांतिप्रदायकम् ॥१॥ कदाचित् क्रोधको दैत्यः सभासनगतोऽभवत् । तत्राकाशभवां वाणीं शुश्राव भयदायिनीम् ॥२॥ लंबोदरश्च मुनिभिर्देवैः सार्धं वधाय ते । प्रार्थितः स तु हत्वा त्वां जगत् सुखि करिष्यति ॥३॥ तच्छ्रुत्वा मूर्च्छितं क्रोधं सहसा भयविह्वलम् । तं दैत्येंद्राश्च विप्रर्षी सावधानं प्रचक्रिरे ॥४॥ शोकयुक्ता विशेषेण पप्रच्छुस्तं महासुराः । बल्याद्या भयभीताश्च किं जातं वद मानद ॥५॥ दैत्येशानां वचः श्रुत्वा भययुक्तो महासुरः । जगाद तान् स वृत्तांतमाकाशे वाक्समुद्भवम् ॥६॥ तच्छ्रुत्वा

कुपिता दैत्यास्तमूचुर्मदसंयुताः। देवान् मुनिगणान्नाथ हनिष्यामोऽद्य निश्चितम् ॥७॥ अस्माकं शत्रवो देवास्तैः कृतं दारुणं महत्। आज्ञापय महाभाग सर्वान् देवजिघांसया ॥८॥ ततोऽतिहर्षितः क्रोधः स्वयं युद्धाय सज्जितः। दैत्येशैः संवृतः सद्यो ययौ शैलेंद्रमुख्यकम् ॥९॥ समागतं महाक्रोधं दैत्येशैः संवृतं ततः। देवाः सर्वे भयोद्विग्नाः सस्मरुर्गणनायकम् ॥१०॥ तेषां स्मरणमात्रेण लंबोदरः प्रतापवान्। मूषकारूढ एवासावागतोऽभून् महाप्रभुः ॥११॥ पाशादिशस्त्रसंयुक्तं सिद्धिबुद्धि-समन्वितम्। नाभिशेषं त्रिनेत्रं तं ददृशुश्च सुरर्षयः ॥१२॥ ततस्तं ते प्रणेमुर्वै भयं त्यक्त्वा सुहर्षिताः। स्तुत्वा वृत्तांतमुग्रं तं कथयामासुरादृताः ॥१३॥ श्रुत्वा वृत्तांतमुग्रं स तान् जगाद सुराधिपान्। लंबोदरः प्रसन्नात्मा मुनीन् क्रोधयुतः प्रभुः ॥१४॥ लंबोदर उवाच। मा भयं कुरुत प्राज्ञा हनिष्यामि महासुरम्। स्वधर्मस्थान् जनान् सर्वान् करिष्यामि न संशयः ॥१५॥ ततः क्रोधासुरस्तत्र समीपे समुपागतः। दृष्ट्वा लंबोदरं देवं भयभीतो बभूव ह ॥१६॥ उवाच दैत्यपांस्तत्र सत्या वाक् सा न संशयः। अयं लंबोदरो नूनं देवैः संप्रार्थ्यतेऽसुराः ॥१७॥ तस्य तद्वचनं श्रुत्वा दैत्याः क्रोधारुणेक्षणाः। ऊचुस्तं दैत्यनाथं ते गर्वयुक्ता बलान्विताः ॥१८॥ दैत्येशा ऊचुः। लंबोदरयुतान् देवान् हनिष्यामो न संशयः। मा कुरुष्व वृथा चिंतां रक्ष पृष्ठं महामते ॥१९॥ देहधारी गणाध्यक्ष आगतो नात्र संशयः। उत्पत्तिनाशवान् देहः किं करिष्यति तेऽशुभम् ॥२०॥ काव्यं दैत्यगणास्तत्र सस्मरुर्भक्तिसंयुताः। तेषां स्मरणमात्रेण स चापि ह्यागतोऽभवत् ॥२१॥ तं प्रणम्य गुरुं दैत्या वृत्तांतं सर्वमंजसा। कथयंति स्म तं श्रुत्वा शुक्रस्तान् प्रत्युवाच ह ॥२२॥ शुक्र उवाच। सिद्धिपतिं परित्यज्य सिद्धिमिच्छति दुर्मतिः। तथा त्यक्त्वा बुद्धिपतिं स्फूर्तिमिच्छति मूर्खवत् ॥२३॥ विघ्नराजं सदैकं यं तं त्यक्त्वा विघ्नहीनकाः। कथं भवंति वदत दैत्येंद्रा मां विनिश्चयात् ॥२४॥ अतो युद्धं परित्यज्य शरणं तस्य शोभनम्। भविष्यति न संदेहो नोचेत् क्रोधो मरिष्यति ॥२५॥ शुक्रस्य वचनं श्रुत्वा बलिस्तत्र जगाद तम्। कर्मणा सिद्धिदाताऽयं स्फूर्तिदाता भवत्यहो ॥२६॥ कर्मणा विघ्नहीनत्वं सविघ्नं प्रकरोति च। अतो वयं महायोगिन् कर्मणा तं जयामहे ॥२७॥ तस्य तद्वचनं श्रुत्वा सर्वे दैत्येंद्रकादयः। साधु साध्वब्रुवंस्तत्र संग्रामायोद्यता बभुः ॥२८॥ ततो भावि बलं वीक्ष्य काव्यस्तत्र मुनीश्वरौ। तूष्णींभावं समाधृत्य संस्थितोऽभूत् स योगवित् ॥२९॥ देवाः सर्वे महास्त्रैस्ते युक्ताः क्रोधसमन्विताः। आययू रणभूमिं च दैत्येशाश्च तथा ययुः ॥३०॥ ततः परस्परं युद्धं बभूवे दारुणं महत्। दैत्यानां चैव देवानां परस्परविनाशनम् ॥३१॥ देवा दैत्या युयुधिरे



कृत्वा मरणनिश्चयम् । शस्त्रास्त्रैर्बलगर्वेण प्रेरिता रणदुर्मदाः ॥३२॥ वीराणामभवन्नादैर्वादित्राणां च वाजिनाम् । बृंहितानां च शंखानां दिशो नादयुतास्ततः ॥३३॥ सैन्यपादभवो रेणुश्छादयामास भास्करम् । नाभूत् स्वपरबोधोऽपि जघ्नुस्ते च परस्परम् ॥३४॥ ततो रक्तप्रवाहश्च संभूतः शस्त्रघाततः । रजःकणास्तेन सर्वे मज्जिता अभवन् मृधे ॥३५॥ ततः परस्परं दृष्ट्वा जघ्निरे क्रोधसंयुताः। देवाश्च दानवास्तद्वत् परस्परजये रताः ॥३६॥ दिनत्रयमभूद्युद्धं घोरं सर्वभयावहम् । ततो दैत्यगणाः सर्वे पपलुस्त्राससंयुताः ॥३७॥ देवा हर्षयुतास्तत्र जय लंबोदर प्रभो । ऊचुस्तान् हंतुमायाता दैत्येशाः क्रोधसंयुताः ॥३८॥ बलिश्च रावणो जृंभो माल्यवान् कुंभकर्णकः । राहुश्चान्ये महावीराः संख्यातुं न प्रशक्यते ॥३९॥ तैः शस्त्रनिचयैर्देवाः संहताः पपलुस्तदा । हित्वा संग्रामभूमिं ते छिन्नभिन्नाः समंततः ॥४०॥ तत इंद्रश्च संक्रुद्धः शंकरो विष्णुरेव च । सूर्यश्चंद्रश्च देवेंद्रा आययुः क्रोधसंयुताः ॥४१॥ तैरस्त्राणां महावृष्टिः कृता परमदारुणा । तया दैत्यगणाः सर्वे पपलुश्च दिशो दश ॥४२॥ ततोऽतिक्रोधसंयुक्ता रावणाद्याः समाययुः । द्वंद्वयुद्धमभूद्धोरं सर्वेभ्यो भयदायकम् ॥४३॥ जृंभो ययौ महेंद्रेण राहुः सूर्येण संयुगे । बलिश्च विष्णुना क्रुद्धो रावणः शंकरेण च ॥४४॥ कुंभकर्णश्च चंद्रेण नाना दैत्येंद्रकादयः । देवेंद्रैर्वायु-मुख्यैश्च युयुधुर्जयकांक्षिणः ॥४५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते देवासुरयुद्धवर्णनं नाम षष्ठोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ब्रह्मोवाच । एकरात्रं महाघोरं युद्धं बभूव दारुणम् । ततो रक्तप्रवाहैश्च नद्यो जाता जलौघवत् ॥१॥ न जयः प्राप्यते देवैर्नासुरैर्यमसन्निभैः । मघवा वज्रपातैस्तांश्चूर्णयामास दानवान् ॥२॥ ततो जृंभोऽतिसंक्रुद्धो गदामादाय दारुणाम् । युयुधे देवराजेन महाबलपराक्रमः ॥३॥ गदया देवराजं स मूर्च्छितं प्रचकार ह । ततो हाहाकृतं सर्वैर्देवसैन्यं पपाल तत् ॥४॥ इंद्रः संज्ञासमायुक्तः पुनः संयुयुधे भृशम् । वज्रेण पातयामास जृंभं तं धरणीतले ॥५॥ त्रिशूलेन हतस्तत्र रावणः पतितो भुवि । शंकरेण ततः सर्वे पपलुर्दानवा मृधे ॥६॥ गदया विष्णुना तत्र बलिः संमूर्च्छितः कृतः । कुंभकर्णश्च चंद्रेण पीडितो मूर्च्छितोऽभवत् ॥७॥ राहुः सूर्येण संग्रामे तेजसा पीडितो भृशम् । पपात मूर्च्छया भूमौ हा हा कृत्वा

महामुनी ॥८॥ द्वंद्वयुद्धं परे ये ये ह्यकुर्वन्नमरैर्बलात् । ते ते सर्वे च देवेंद्रैर्जिताः सर्वे पलायिताः ॥९॥ भक्तवत्सलभावेन शंकरो विष्णुरंजसा । रावणं च बलिं तत्र चक्रतुर्न मृतौ मृधे ॥१०॥ ततोऽतिकोपसंयुक्ता देवेंद्राः शस्त्रवृष्टिभिः । असुरान् मारयामासुः सर्वत्र भयसंयुतान् ॥११॥ प्रलयं मेनिरे तत्र दैत्यास्त्रासससमाकुलाः । देवांस्ते शरणं जग्मुः केचित् प्राणपरीप्सया ॥१२॥ जय लंबोदर स्वामिन् जय विघ्नेश देवप । हेरंब वक्रतुंड त्वं जयेत्यूचुः प्रहर्षिताः ॥१३॥ दैत्यानां कदनं दृष्ट्वा क्रोधः परमविस्मितः । निःश्वस्य चिंतया युक्तो बभूवे किं भविष्यति ॥१४॥ पितुः शोकं विदित्वा तौ हर्षः शोकश्च संयुगे । ययतुः शस्त्रवर्षेण ववर्ष तौ घनौ यथा ॥१५॥ तयोरमोघरूपैश्च शस्त्रैर्देवा हता मृधे । छिन्नांगाः पपलुस्तत्र दैत्यसंत्राससतापिताः ॥१६॥ इंद्रं च सहसाऽऽगत्य शोकः परमदारुणः । चकार मूर्च्छितं सद्यो गदया मूर्ध्नि घाततः ॥१७॥ संगृह्य स्वबले सोऽपि स्थापयामास देवपम् । ततः शुक्रेण दैत्येंद्रा विद्यया नीरुजाः कृताः ॥१८॥ बलिमुख्या ययुः संग्रामं पुनश्च महामुनी । चक्रेण सहसा हर्षश्चंद्रं चक्रे स मूर्च्छितम् ॥१९॥ ततः कोपसमायुक्तः शंकरो युयुधे भृशम् । त्रिशूलेन महादैत्यान् जघान सकलान् प्रभुः ॥२०॥ शंकरस्य बलं वीक्ष्य हर्षस्तत्र समाययौ । युयुधे तेन दैत्येंद्रपुत्रस्तेजस्विनां वरः ॥२१॥ नानाविधं महाघोरं युद्धं बभूव दारुणम् । हर्षस्य शंकरस्यैव परस्परजयैषिणोः ॥२२॥ ततस्त्रिशूलघातेन शंकरस्तं जघान ह । पतितं मूर्च्छितं हर्षं दृष्ट्वा दैत्या भयातुराः ॥२३॥ पतितान् दैत्यपान् दृष्ट्वा काव्यस्तत्र समागतः । हर्षं मूर्च्छाविहीनं वै चकार स्वेन तेजसा ॥२४॥ ततो हर्षसमायुक्ता दैत्येंद्रा युयुधुर्भृशम् । विष्णुस्तेषां बलं वीक्ष्य चक्रं मुमोच दारुणम् ॥२५॥ चक्रेण क्षुरधारेण हता दैत्या अनेकशः । प्रपेलुर्भयसंयुक्ताश्छिन्नभिन्नांगका मृधे ॥२६॥ ततः शोकः समायातः शूलं मुमोच तैजसम् । आगत्य सहसा विष्णोः पपात हृदि विप्रपौ ॥२७॥ ततः संमूर्च्छितस्तत्र पपात च जनार्दनः । दैत्या हर्षयुताः सर्वे नादं चक्रुर्महारणे ॥२८॥ ततो हर्षो महाक्रोधाद्गदया मृत्युकल्पया । चकार शंकरं तत्र पतितं मूर्च्छया भृशम् ॥२९॥ ततो हा हा रवं कृत्वा देवाः सर्वे पराजिताः । प्रपेलुः सर्वदेवेंद्रा दैत्याभ्यां त्रासिता बलात् ॥३०॥ तद् दृष्ट्वा परमाश्चर्यं लंबोदरः प्रतापवान् । अंकुशं क्रोधसंयुक्तो मुमोच दैत्यमंडले ॥३१॥ तेजोरूपं महास्त्रं तद् दृष्ट्वा दैत्या विसिस्मिरे । यावत्तावच्च दैत्येंद्रौ हतौ हर्षश्च शोककः ॥३२॥ मायया गणनाथश्च शुक्रं गृह्य गुहांतरे । चिक्षेप च ततः सर्वे प्रपेलू राहुमुख्यकाः ॥३३॥ ततोऽतिकोपसंयुक्तः क्रोधः स्वयमुपागतः । पुत्रशोकं हठात् गृह्य बाणवृष्टिं चकार ह ॥३४॥

तद्बाणैरपि तत्रस्था देवाः सर्वे महामुनी । छिन्नांगा अपलन् सद्यो हाहाकाररवा दिशः ॥३५॥ लंबोदरः समाश्वास्य देवेशस्तान् प्रतापवान् । आययौ रणभूमिं स पाशहस्तोऽसिधारकः ॥३६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते क्रोधासुरसमागमो नाम सप्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ब्रह्मोवाच । लंबोदरं महादैत्यः समालोक्य रणं गतः । जगाद क्रोधसंयुक्तः क्रोधः सर्वविचारवित् ॥१॥ क्रोधासुर उवाच । लंबोदर महामूर्ख किमर्थं रणमागतः । देवानां हितमिच्छन् सन् मरिष्यसि च मेऽग्रतः ॥२॥ येन ब्रह्मांडगं पूर्णं जितं देवादयः कृताः । पशुतुल्या वने संस्था जेतुमिच्छसि तं मुधा ॥३॥ मम क्रोधो दहेत् सर्वं त्रैलोक्यं सचराचरम् । तत् पुरः कथमायातः संग्रामाय सुयंत्रितः ॥४॥ त्वया मदीयकं सैन्यं हतं पुत्रौ हतौ तथा । अधुना शोकसंयुक्तो हनिष्यामि मदान्वितम् ॥५॥ शरणं याहि मां नो चेन् मरिष्यसि गजानन । उदरं स्फोटयिष्यामि बाणेनैकेन ते महत् ॥६॥ इत्यादि विविधैर्वाक्यैर्लंबोदरं महासुरः । भर्त्सयामास तं देवो जगाद मदसंयुतम् ॥७॥ लंबोदर उवाच । किं मां वदसि दैत्येंद्र हनिष्यामि महाखलम् । त्वां धर्मस्य निहंतारं स्वधर्मस्थापको ह्यहम् ॥८॥ सूर्यदत्ताद् वराद् दुष्ट दुष्टकर्मरतो भवान् । अतिपापैश्च तत् सर्वं निष्फलं ते बभूव ह ॥९॥ उत्पत्तिनाशयुक्तेभ्यो मरणं नैव ते भवेत् । नाऽहं जातो न दैत्येंद्र मरिष्यामि कदाचन ॥१०॥ ब्रह्मभूतं च मां विद्धि सदा स्वानंदवासिनम् । कथं जेष्यसि तं दुष्ट मनोवाणीविवर्जितम् ॥११॥ लंबोदरस्य वचनं श्रुत्वा तत्तस्य धीमतः । उवाच विस्मितो भूत्वा तं पुनर्दैत्यनायकः ॥१२॥ क्रोधासुर उवाच । न जातोऽसि यदा ब्रह्मन् कथं देहधरोऽसि वै । मनोवाणीविहीनश्चेत् कथं पश्यामि मां वद ॥१३॥ लंबोदर उवाच । इयं मदीयवामांऽगे सिद्धिर्भ्रांतिस्वरूपिका । सिद्ध्यर्थं सर्वलोकाश्च भ्रमंति भ्रांतिसंयुताः ॥१४॥ दक्षिणांऽगे स्वयं बुद्धिः संस्थिता भ्रांतिधारिणी । बुध्या बुध्या पुनस्तत्र भ्रांतो भवति मानवः ॥१५॥ चित्तरूपा स्वयं बुद्धिः पंचधा परिकीर्तिता । पंचभ्रांतिमयी सिद्धिस्तयोः पतिरहं किल ॥१६॥ नाना विश्वं महादैत्य नाना ब्रह्म तथा सदा । मदीयोदरगं विद्धि तेन लंबोदरः स्मृतः ॥१७॥ ममोदरात् समुत्पन्नं मया संपालितं तथा । अंते उदरगं कृत्वा क्रीडयामि निरंतरम् ॥१८॥ अतो मां शरणं गच्छ

जीवितुं यदि वाञ्छसि । शुक्रो मां वेत्ति तेन त्वं बोधितोऽपि न बुद्ध्यसे ॥१९॥ नाऽहं दैत्यवधाकांक्षी तथा देववधप्रियः । स्वस्वधर्मयुतान् सर्वान् पालयामि न संशयः ॥२०॥ पाताले दैत्यपाः सर्वे नरा भूमौ सुरा दिवि । संस्थिताश्चेदहं दैत्य स्वानंदस्थो भवामि च ॥२१॥ देवाः क्रोधसमाविष्टा जघ्नुर्दैत्यान् विशेषतः । पातालस्थांस्ततोऽहं वै दैत्येभ्यः सिद्धिदोऽभवम् ॥२२॥ पुनस्तपोयुता दैत्या जित्वा देवान् महाबलान् । कर्मखंडनभावेन हंतुमिच्छां प्रचक्रिरे ॥२३॥ तदाऽहं देवसंघेभ्यः सिद्धिदाताऽभवं पुरा । तेन च्छिद्रज्ञका देवा जघ्नुः सर्वासुरान् पुनः ॥२४॥ त्वया सर्वं जितं दैत्य देवमूलनिकृंतनः । सर्वेंद्रस्तेन भवसि त्वां हनिष्यामि निश्चितम् ॥२५॥ तस्य तद्वचनं रम्यं श्रुत्वा क्रोधासुरः पुनः । विस्मितस्तं जगादैव हर्षनिर्भरमानसः ॥२६॥ क्रोधासुर उवाच । नमामि त्वां गणाध्यक्ष सुरासुरमयं परम् । अधुना भक्तिसंयुक्तं पालयस्व शरण्यद ॥२७॥ दर्शय स्वात्मरूपं मे सर्वसंशयनाशनम् । लंबोदरार्थसंयुक्तं ब्रह्माकारं गजाननम् ॥२८॥ लंबोदरस्तस्य वाक्यं समाकर्ण्य सुहर्षितः । भक्तियुक्तं मनस्तस्य ज्ञात्वा रूपमदर्शयत् ॥२९॥ ज्ञानचक्षुश्च संदत्तं तेन दैत्याय तं पुनः । लंबोदरं महाक्रोधोऽपश्यत् परमविस्मितः ॥३०॥ ब्रह्मेशं प्रणनामाऽथ सरोमांचो महासुरः । लंबोदरः पुनस्तत्र पूर्वरूपो बभूव ह ॥३१॥ तत्र क्रोधासुरस्तं वै पूजयन् भक्तिसंयुतः । नत्वा तुष्टाव संहृष्टः साश्रुनेत्रः प्रतापवान् ॥३२॥ क्रोधासुर उवाच । लंबोदर नमस्तुभ्यं शांतियोगस्वरूपिणे । सर्वशांतिप्रदात्रे ते विघ्नेशाय नमो नमः ॥३३॥ असंप्रज्ञातरूपेयं शुंडा ते नात्र संशयः । संप्रज्ञातमयो देहो देहधारिन्नमो नमः ॥३४॥ स्वानंदे योगिभिर्नित्यं दृष्टस्त्वं ब्रह्मनायकः । तेन स्वानंदवासी त्वं नमः संयोगधारिणे ॥३५॥ समुत्पन्नं त्वदुदराज्जगन्नानाविधं प्रभो । ब्रह्म तद्वन्न संदेहो लंबोदर नमोऽस्तु ते ॥३६॥ त्वदीय-कृपया देव मया ज्ञातं महोदर । त्वत्तः परतरं नास्ति परेशाय नमो नमः ॥३७॥ हेरंबाय नमस्तुभ्यं विघ्नहर्त्रे कृपालवे । आदिमध्यांतहीनाय तन्मयाय नमो नमः ॥३८॥ सिद्धिबुद्धिविहारज्ञ सिद्धिबुद्धिपते नमः । सिद्धिबुद्धिप्रदात्रे ते वक्रतुंडाय वै नमः ॥३९॥ सर्वात्मकाय सर्वादिपूज्याय ते नमो नमः । सर्वपूज्याय वै तुभ्यं भक्तसंरक्षकाय च ॥४०॥ अतः प्रसीद विघ्नेश दासोऽहं ते गजानन । लंबोदराय नित्यं नमो नमस्ते महात्मने ॥४१॥ स्वत उत्थानपरत उत्थाने ब्रह्म धारयन् । तवोदरात् समुत्पन्नं तं किं स्तौमि परात्परम् ॥४२॥ इति स्तुत्वा महादैत्यः प्रणनाम गजाननम् । तमुवाच गणाध्यक्षो भक्तं भक्तजनप्रियः ॥४३॥ लंबोदर उवाच । वरं वृणु महाभाग क्रोधासुर हृदीप्सितम् । दास्यामि भक्तिभावेन स्तोत्रेणाऽहं

हि तोषितः ॥४४॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदं भवेत् । यः पठिष्यति तस्यैव क्रोधजं न भयं भवेत् ॥४५॥ शृणुयात्तस्य तद्वच्च भविष्यति न संशयः । यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः ॥४६॥ क्रोधासुर उवाच । यदि लंबोदर त्वं मे प्रसन्नो वरदोऽसि भोः । तदा त्वत्पादपद्मे च भक्तिं देहि दृढां प्रभो ॥४७॥ आज्ञां कुरु महाभाग सेवार्थं तां करोम्यहम् । स्थानं वृत्तिं च मे देहि देहपोषणकारिणीम् ॥४८॥ ब्रह्मोवाच । क्रोधासुरस्य वाक्यं तच्छ्रुत्वा हर्षसमन्वितः । लंबोदरस्तं जगाद स पुनर्दैत्यनायकम् ॥४९॥ लंबोदर उवाच । मदीया सुदृढा भक्तिः प्रभविष्यति तेऽनघ । वस त्वं भयहीनश्च स्थाने ते नात्र संशयः ॥५०॥ यत्रारंभे महादैत्य मदीयं स्मरणं न हि । तत्र त्वं दैत्यभावेन कुरु राज्यं महामते ॥५१॥ तदीयपुण्यजं सर्वं भुंक्ष्व नित्यं सुकर्मजम् । ज्ञानादिसकलं तद्वत् त्वदीयं नात्र संशयः ॥५२॥ मद्भक्ता ये महादैत्य तान् रक्षस्व यथासुखम् । गाणपत्यप्रियस्त्वं वै भविष्यसि न संशयः ॥५३॥ एवमुक्तो महादैत्यः क्रोधः परमहर्षितः । लंबोदरं प्रणम्यैव ययौ स्वस्थानमुत्तमम् ॥५४॥ दैत्या राहुमुखाः सर्वे तं त्यक्त्वा भयसंयुताः । पातालं विविशुर्विप्रौ शुक्रः संहर्षितोऽभवत् ॥५५॥ एवं क्रोधासुरं शांतं चकार गणनायकः । क्रोधो गणेशभक्तिं वै कुर्वन् सन् संस्थितोऽभवत् ॥५६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते क्रोधासुरशांतिवर्णनं नामाऽष्टमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ब्रह्मोवाच । एवं क्रोधासुरं शांतं दृष्ट्वा देवर्षयोऽमलाः । हर्षयुक्ता विशेषेण पुपूजुर्गणनायकम् ॥१॥ पूजयित्वा विधानेन नेमुर्लंबोदरं पुनः । ततस्तं तुष्टुवुः सर्वे भक्तिनम्रात्मकंधराः ॥२॥ देवर्षय ऊचुः । श्रेष्ठं प्रधानं सकलादिभूतं सर्वांतगं पूर्णमनंतभावम् । नित्यं निजात्मानमचिंत्यसंस्थं लंबोदरं तं च वयं नताः स्मः ॥३॥ बोधेन हीनं स्वसुखे निमग्नं बीजात्मकं सांख्यमनंतवेद्यम् । वैदेहयोगेन च लभ्यमेवं लंबोदरं तं च वयं नताः स्मः ॥४॥ जीवं परानंदमयं परेशं बोधस्वरूपं प्रकृतेर्लयस्थम् । देहैर्विहीनं च तदात्महीनं लंबोदरं तं च वयं नताः स्मः ॥५॥ सोऽहं सदाभेदविवर्जितं वै देहात्मयोगं सकलावभासम् । नित्यं पुराणं पुरुषं गणेशं लंबोदरं तं च वयं नताः स्मः ॥६॥ बिंदुस्वरूपं मनसाऽथ गम्यं पादैर्विहीनं च चतुष्पदं यम् । नानात्मभेदाश्रितमेकदंतं लंबोदरं तं च वयं नताः स्मः ॥७॥ नादस्वरूपं च गुणेशमेकं

सर्वत्र चक्षुः श्रुतितुंडभूतम् । सर्वत्र हस्तोदरपादपद्मं लंबोदरं तं च वयं नताः स्मः ॥८॥ संस्थं सुषुप्तौ समभावदं वै द्वंद्वज्ञमाद्यं द्विविधावभासम् । आनंदकंदं तमसा विभांतं लंबोदरं तं च वयं नताः स्मः ॥९॥ सूक्ष्मस्वरूपं च तथान्तरस्थं सर्वज्ञमाद्यं गणनायकं यम् । विज्ञानकोशस्थविहारकारं लंबोदरं तं च वयं नताः स्मः ॥१०॥ स्थूलस्वरूपं सकलाभिमानं श्रेष्ठं रजोयुक्तमनंतमाद्यम् । अन्नात्मभोगेषु विहारसिद्धं लंबोदरं तं च वयं नताः स्मः ॥११॥ अध्यात्मरूपं तमसा चरंतं द्रव्यप्रकाशं परमार्थभूतम् । देहेंद्रियज्ञानमयं च ढुंढिं लंबोदरं तं च वयं नताः स्मः ॥१२॥ नित्यं रजोदेहविकारगं वै कर्मस्वरूपं विविधेंद्रियस्थम् । तज्ज्ञाधिभूतात्मकमप्रमेयं लंबोदरं तं च वयं नताः स्मः ॥१३॥ ज्ञानस्वरूपं सकलामरस्थं सर्वेंद्रियज्ञानकरं प्रभुं वै । तज्ज्ञाधिदैवप्रचुरं महांतं लंबोदरं तं च वयं नताः स्मः ॥१४॥ आकाशरूपं सकलावभासं नादप्रचुरं सकलादिभूतम् । भूतैः सदा खेलकमादिनाथं लंबोदरं तं च वयं नताः स्मः ॥१५॥ वायुस्वरूपं जगदेकचालं प्राणादिसंस्थं स्वविभागदं यम् । देहप्रचारं दश नामभिश्च लंबोदरं तं च वयं नताः स्मः ॥१६॥ तेजःस्वरूपं सकलावभासं द्वंद्वप्रचारं जठरे सुसंस्थम् । संधौ सदा व्याप्य विभागकारं लंबोदरं तं च वयं नताः स्मः ॥१७॥ जलस्वरूपं रसयुक्तमेव पुष्टिप्रदं षड्रसगं परेशम् । नित्यार्द्रभावस्य प्रकाशदं यं लंबोदरं तं च वयं नताः स्मः ॥१८॥ पृथ्वीस्वरूपं च धराधरेशं सर्वान्नमूलं विविधौषधिस्थम् । आकाररूपं च गजाननं वै लंबोदरं तं च वयं नताः स्मः ॥१९॥ विराट्स्वरूपस्थमनंतपारं सर्वत्रनेत्रं च सहस्रशीर्षम् । सर्वत्र हस्ताननपादकादिं लंबोदरं तं च वयं नताः स्मः ॥२०॥ रजोयुतं सृष्टिकरं द्विजेशमादि-स्वरूपं प्रपितामहं यम् । समानभावेन सुरासुरस्थं लंबोदरं तं च वयं नताः स्मः ॥२१॥ सत्त्वप्रचारं हरिरूपधारं यं तामसं शंकरवेषसंस्थम् । सूर्यप्रचारं जगदंबिकागं लंबोदरं तं च वयं नताः स्मः ॥२२॥ इत्यादिभेदैः सुविराजमानं सर्वैर्विहीनं तु कथं स्तुवीमः । देवाः शिवाद्याश्च विकुंठिता वै लंबोदरं तं च वयं नताः ॥२३॥ ब्रह्मोवाच । स्तुत्वा देवर्षयस्त्वेवं प्रणेमुस्ते गजाननम् । लंबोदरस्तानुवाच महाभागान् सुसिद्धिदः ॥२४॥ भवत्कृतमिदं स्तोत्रं भवेन् मत्प्रीतिवर्धनम् । पठतां शृण्वतां सद्यः सर्वसिद्धिप्रदायकम् ॥२५॥ धर्मार्थकाममोक्षाणां साधनं ब्रह्मदं परम् । भविष्यति सदा मान्यं सर्वकार्येषु सर्वदा ॥२६॥ मारणोच्चाटनादीनि स्तोत्रेणैव सुरर्षयः । भविष्यति न संदेहः परकृत्यविनाशनम् ॥२७॥ पुत्रपौत्रादिकं सर्वं लभते स्तोत्र-पाठतः । धनधान्यकलत्रादि सुखं विंदति मानवः ॥२८॥ कारागृहगतं सद्यो मोचयेत् स्तोत्रपाठतः । हृदीप्सितं लभेत् सर्व-

मेकविंशतिवारतः ॥२९॥ एकविंशतिपाठांश्च स्तोत्रस्यास्य करिष्यति । स सद्यो हि फलं भुंक्त एकविंशद्दिनावधि ॥३०॥ प्रसन्नोऽहं प्रदास्यामि स्तोत्रेण मुनयोऽमराः। वरं ब्रूत महाभागा यद्यपि स्यात् सुदुर्लभम् ॥३१॥ लंबोदरवचो देवर्षयः श्रुत्वा प्रणम्य तम्। जगुः प्रहृष्टचित्तास्ते साश्रुनेत्राः सुयंत्रिताः ॥३२॥ देवर्षय ऊचुः । लंबोदर प्रसन्नोऽसि वरदोऽसि महाप्रभो। तव भक्तिं सुसंपूर्णां देहि क्रोधविवर्जिताम् ॥३३॥ क्रोधासुरस्त्वया नाथ कृतः सुशांतिधारकः। तेन विश्वं गणाधीश वरयुक्तं कृतं प्रभो ॥३४॥ स्वस्वकर्मरताः सर्वे भविष्यंति सुधर्मिणः। वयं च स्वाधिकारेषु स्थास्यामस्त्वत्प्रसादतः ॥३५॥ मुनयो भयहीनास्ते यथाऽऽचारकराः प्रभो। भविष्यंति गणाधीश कं वरं तु वृणीमहे ॥३६॥ एवमुक्त्वा प्रणेमुस्ते लंबोदरं सुखप्रदम्। ननृतुस्तत्पुरः सर्वे हर्षनिर्भरमानसाः ॥३७॥ लंबोदरस्तानुवाच तथेत्येव प्रतापवान् । अंतर्धानं चकाराऽसौ पश्यताममरर्षिणाम् ॥३८॥ ततो देवा द्विजास्तत्र मूर्तिं कृत्वा सुशोभनाम्। चतुर्भुजां गणेशस्य स्थापयामासुरादरात् ॥३९॥ पश्चिमे सागरे तीरे पुपूजुस्तां विशेषतः। तदादि तत् समुद्भूतं क्षेत्रं लंबोदरस्य च ॥४०॥ अंशेन स्वाधिकारेषु स्थिता देवर्षयोऽमलाः। पूर्णभावेन तत्रैव भक्तिं कुर्वंति नित्यदा ॥४१॥ एतल्लंबोदरस्यैव कथितं सुचरित्रकम् । विश्वामित्रवसिष्ठौ च संश्रुतं क्रोधनाशनम् ॥४२॥ असद्ब्रह्ममयो लंबोदरश्चायं गणेश्वरः। स्वतः परत उत्थानं करोति लीलया प्रभुः ॥४३॥ तस्य रूपं परं केन वक्तुं नैव प्रशक्यते । सर्वसंयोगयोगेन लभ्यते योगसेवया ॥४४॥ अयं लंबोदरश्चैव पूर्णयोगप्रवाचकः। संयोगायोगयोर्योगे लभ्यते योगसेवया ॥४५॥ उदरात्तस्य संभूतौ संयोगायोगरूपकौ । तेन लंबोदरश्चायं कथ्यते वेदवादिभिः ॥४६॥ असित उवाच। एवमुक्त्वा स्वयं ब्रह्मा विरराम महामते । वसिष्ठस्तं प्रणम्यैव गतः स्वाश्रममंडले ॥४७॥ विश्वामित्रश्च मेधावी निःश्वस्य स्वस्थलं गतः। एवं गते मया तत्र पृष्टः सोऽपि पितामहः ॥४८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे गजाननचरिते लंबोदरदेवर्षिकृतस्तुतिवर्णनं नाम नवमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ नैध्रुव उवाच। श्रुत्वा कथां महाभाग क्रोधशांतिकरीं प्रभो। न तृप्यामि पुनः स्वामिन् वद विघ्नेश-चेष्टितम् ॥१॥ त्वया पृष्टः कथं ब्रह्मा स जगाद किमप्यहो। तद्वदस्व दयासिंधो तात योगप्रदं हि चेत् ॥२॥ मुद्गल उवाच। एवं पृष्टो महातेजा नैध्रुवेण पितृव्यकः। कथांतरमुवाचेदं महायोगप्रदं महत् ॥३॥ असित उवाच। शृणु पुत्र प्रवक्ष्यामि योगशांतिपदप्रदम्। गणेशानस्य माहात्म्यं ब्रह्मेशस्य विचक्षण ॥४॥ ब्रह्माणं च प्रणम्यादावपृच्छं विनयान्वितः। वद तात महायोगं शांतिदं सर्वतारक ॥५॥ सहजे च महायोगिन् स्वाधीनत्वं प्रदृश्यते। स्वेच्छामयं कथं नाथ भवति ब्रह्म ते नमः ॥६॥ अतः शांतिविहीनौ त्वां समागतौ न संशयः। शांत्यर्थं वद किं सेव्यं करिष्यावस्त्वदाज्ञया ॥७॥ असित उवाच। वत्सरेण मया तात पृष्टः सर्वविदां वरः। उवाच प्रेमसंयुक्तो गाणपत्यः पितामहः ॥८॥ ब्रह्मोवाच। कर्मज्ञानं समं ब्रह्म सहजं तु चतुर्थकम्। तेषां संयोगभावे वै स्वानंदो मौनधारकः ॥९॥ तत्र स्वाधीनगं ब्रह्म पराधीनं कुतस्त्रिधा। स्वसंवेद्यमयेनैव सुतो योगेन लभ्यते ॥१०॥ संयोगो मायया युक्तः सर्वसंयोगभावतः। अयोगे सर्वसंयोगो नश्यति व्यतिरेकतः ॥११॥ निवृत्त्या स्वधिया ब्रह्म प्राप्यते नान्यथा क्वचित्। स्वकीयाऽभेदतस्तत्र निवृत्तिर्योगिभिर्धृता ॥१२॥ संयोगायोगयोर्योगे योगः शांतिप्रदायकः। शांत्या स एव लभ्यश्च सुतौ भवति नान्यथा ॥१३॥ शांतिरूपधरं पूर्णं गणेशं संवदंति च। वेदास्तं भावसंयुक्तो मुनी यदि भजिष्यथः ॥१४॥ तदा शांतियुतौ योगी भवंतौ योगिसंमतौ। भविष्यथो महाभागौ नान्यथा मे वचोऽनृतम् ॥१५॥ संप्रज्ञातमयो देहोऽसंप्रज्ञातमयं शिरः। गजाकारं तयोर्योगे गणेशो देहधारकः ॥१६॥ गणाः समूहरूपाश्च समूहा ब्रह्मवाचकाः। तेषां स्वामी न संदेहो गणेशो नामधारकः ॥१७॥ चित्तरूपा महाबुद्धि-श्चित्तमोहकरी मता। सिद्धिस्तयोः पतिः साक्षाद्गणेशो वेदवादतः ॥१८॥ चित्तं मोहयुतं त्यक्त्वा चिंतामणिं भजिष्यथः। योगशांत्या महाभागौ नित्यं तं योगरूपकम् ॥१९॥ असित उवाच। एवमुक्त्वा विधाता वां विरराम महामते। वत्सरेण समायुक्तस्तं प्रणम्य वनेऽगमम् ॥२०॥ आवाभ्यां साधितं पुत्र यथोद्दिष्टं च वेधसा। शमदमयुताभ्यां वै शांतिः प्राप्ता सुनिश्चला ॥२१॥ तथापि गणराजस्य भजने निरतौ पुरा। गते वर्षे गणाध्यक्ष आययौ वरदायकः ॥२२॥ तं दृष्ट्वा प्रणतौ देवं पुनः पूज्य यथाविधि। गणेशानं तुष्टुविव भक्त्या नम्रात्मकंधरौ ॥२३॥ असितवत्सरावूचतुः। लंबोदर नमस्तुभ्यं सततं योगरूपिणे। योगाकारशरीराय योगशांतिप्रदायिने ॥२४॥ विघ्नेशाय महाभक्तानां विघ्नहरणाय च। अभक्तानां

महाविघ्नकारिणे ते नमो नमः ॥२५॥ स्वानंदवासिने तुभ्यं सदा स्वानंददायिने। मूषकवाहनायैव मूषकध्वज वै नमः ॥२६॥ अनाथाय गणेशाय सर्वेषां नाथरूपिणे। नाथानां नाथरूपाय विनायक नमोऽस्तु ते ॥२७॥ हेरंबाय च सर्वेषां मात्रे पित्रे नमो नमः। ज्येष्ठराजाय ज्येष्ठाय ज्येष्ठानां ज्येष्ठ ते नमः ॥२८॥ अमेयायाऽप्रेमयायाऽनंतखेलकराय ते। अनंतानंतरूपायानंतदाय नमो नमः ॥२९॥ सिद्धिबुद्धिपते नाथ भक्तसंरक्षकाय च । नानाशक्तिप्रपालायानंतमायाविहारिणे ॥३०॥ गजवक्त्राय सर्वेषामादिपूज्याय ते नमः। सर्वपूज्याय सर्वेषां सिद्धिदाय नमो नमः ॥३१॥ वक्रतुंडाय वीराय चैकदंताय ते नमः। महोदराय देवाय देवदेवेश ते नमः ॥३२॥ असुराणां सहायाय नानावरप्रदाय च। असुराणां निहंत्रे त आसुराय नमो नमः ॥३३॥ ब्रह्मणां पतये तुभ्यं ब्रह्मणां ब्रह्मवादिने । ब्रह्माकाराय वै ढुंढे वेदवेद्याय ते नमः ॥३४॥ मनोवाणीविहीनाय मनोवाणीमयाय च। योगेशाय परेशाय सर्वामयविवर्जित॥३५॥ किं स्तुवस्त्वां गणाधीश यत्र शांतिं समागताः। वेदा योगींद्रमुख्याश्चास्तुवन्तं प्रणमावहे ॥३६॥ एवं स्तुतो गणाधीशस्तौ जगाद महामुनी । वरं संवृणुतं विप्रौ दास्यामि भक्तियंत्रितः ॥३७॥ भवद्भ्यां यत् कृतं स्तोत्रं तदेव मे प्रियं भवेत् । सर्वसिद्धिप्रदं पूर्णं तथा मद्भक्तिदायकम् ॥३८॥ एवमुक्तौ महायोगिनावूचतुर्गजाननम् । भक्तिं देहि गणाध्यक्ष त्वत्पदे सुदृढां पराम् ॥३९॥ गाणपत्यप्रियत्वं नौ देहि नाथ नमोऽस्तु ते। नान्यं वरं गणाधीश वृणुवः सुखदं कदा ॥४०॥ तथेति तावुवाचाथ गणेशोऽन्तर्दधे स्वयम्। आवां भक्तिसमायुक्तौ भजावो गणनायकम् ॥४१॥ इति ते कथितं वत्स ज्ञानं गणपतेर्मया। शमदमपरो भूत्वा भज तं गणनायकम् ॥४२॥ एवमुक्त्वाऽसितस्तं वै नैध्रुवं गणपस्य सः । मंत्रं ददौ प्रजानाथ तस्मा एकाक्षरं पुनः ॥४३॥ ततश्चांतर्हितो योगी सोऽसितः परमार्थवित्। गणेशं नैध्रुवस्तेपे तपः संपूज्य यत्नतः ॥४४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते वत्सराऽसितशांतिवर्णनं नाम दशमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । नैध्रुवो योगमार्गेण शमदमपरायणः । शांतिं प्राप्तः क्रमेणैव योगिवंद्यो बभूव ह ॥१॥ ततः सोऽपि गणाधीशं न मुमोच ततापं सः । तपः सेवापरो भूत्वा गाणपत्यप्रियार्थतः ॥२॥ एवं तस्य तपो ज्ञात्वा तं ययौ स गजाननः । तं दृष्ट्वा सहसोत्थाय प्रणनाम कृतांजलिः ॥३॥ पुपूज भक्तिसंयुक्तः साश्रुनेत्रो महायशाः । सरोमांचः प्रतुष्टाव सूक्तैर्गाणेशकैः प्रभुम् ॥४॥ ततस्तुष्टो गणाधीशस्तस्मै भक्तिं ददौ दृढाम् । गाणपत्यप्रियं कृत्वांऽतर्धानं स चकार वै ॥५॥ तदादि नैध्रुवो योगी गाणपत्यो बभूव ह । भजते गणनाथं सोऽधुना सर्वत्र संमतः ॥६॥ इति ते कथितं दक्ष चरित्रं सर्वदं परम् । लंबोदरस्य माहात्म्यं सर्वशांतिप्रदं प्रभो ॥७॥ क्रोधासुरचरित्रं तत्तथा ते कथितं मया । न संशयो भवेत्तस्मै श्रवणात् क्रोधशांतिदम् ॥८॥ स्वस्वखंडेषु सर्वत्र पश्चिमांतदिगंतरे । मुनिभिः स्थापितो लंबोदरश्चैव गजाननः ॥९॥ तस्य दर्शनमात्रेण यथेप्सितफलं लभेत् । समुद्रतीरसंस्थस्य मूषकारूढकस्य वै ॥१०॥ एवं लंबोदरस्यांशा अनंता विविधाः स्मृताः । स्वस्वधर्मप्ररक्षार्थं जनेभ्यः सर्वदाः प्रभो ॥११॥ तेषां चरित्रकोट्यंशो वक्तुं नैव प्रशक्यते । ब्रह्मादिभिर्महाभाग तत्र कोऽहं नराकृतिः ॥१२॥ जगद्ब्रह्मक्रियार्थं स याचितस्तैः पुरा प्रभो । शक्तिरूपावतारं च धृत्वा सर्वार्थदोऽभवत् ॥१३॥ महिषासुरनाशार्थं याचितो मायया पुरा । विघ्नराजः स्वयं सोऽपि बभूव धर्मपालकः ॥१४॥ मायाकरविनाशाय शेषपुत्रो बभूव ह । लंबोदरः स्वयं साक्षात् स वै मूषकगः स्मृतः ॥१५॥ सावर्णिमनुना चैवाऽऽराधितो गणनायकः । बभूव वै तत्र लंबोदरः शक्तिविनायकः ॥१६॥ ब्रह्म नानाविधं वेदे कथितं तु प्रजापते । जगत्तेषां तथा भिन्नं विहारार्थं बभूव ह ॥१७॥ तेषु स्वानंदभावेन स्थितोऽयं ब्रह्मधारकः । संयोगाभेदयोगेन स वै लंबोदरः स्मृतः ॥१८॥ संयोगाभेदयोगेन समाधिना प्रजापते । नानाविधं जगद्ब्रह्म भवन्नश्यति तद्गतम् ॥१९॥ तेषां भेदा गणेशेन तथा सृष्टाश्च पालिताः । हृतास्तेन समाख्यातो वेदे स ब्रह्मवाचकः ॥२०॥ भेदा असत्यरूपाश्च तेषां ब्रह्म प्रकथ्यते । शक्तिर्जानीहि तां लंबोदरमेव गजाननम् ॥२१॥ समुत्पन्नास्तदुदरादंते तत्र गता बभुः । भेदा लंबोदरस्तेन समाख्यातो ह्यसन्मयः ॥२२॥ इदं लंबोदराऽऽख्यानं कथितं ते प्रजापते । श्रवणात् पठनात् सर्वदायकं सर्वसंमतम् ॥२३॥ श्रोतुमिच्छसि किं भूयस्तद्वदस्व प्रजापते । कथयिष्यामि ते भावं प्रभो ज्ञात्वा गणेश्वरे ॥२४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते लंबोदरब्रह्मवर्णनं नाम एकादशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । लंबोदरस्य माहात्म्यं त्वं जानासि सुखप्रदम् । मुखांबुजात् स्रवति च यस्यैवं शांतिदामृतम् ॥१॥ लंबोदरस्य माहात्म्यं श्रुतं क्रोधहरं परम् । श्रोतुमिच्छा तथा मेऽपि वर्धते भावसंयुता ॥२॥ अतो वद महाभाग पुनर्विघ्नेश-सत्कथाम् । दक्षेण संश्रुतां पुण्यां मुद्गलाद्योगसागरात् ॥३॥ सूत उवाच । मुने शौनक धन्यस्त्वं महच्छृणु कथामृतम् । दक्षेण संश्रुतं पूर्णं मुद्गलेन प्रभाषितम् ॥४॥ लंबोदरकथां श्रुत्वा हृष्टरोमा प्रजापतिः । प्रणम्य मुद्गलं विप्रमुवाच वचनं हितम् ॥५॥ दक्ष उवाच । धन्योऽसि योगिवंद्योऽसि मुद्गल त्वं न संशयः । कथां वदसि कल्याणदायिनीं हर्षवर्धिनीम् ॥६॥ श्रुत्वा श्रुत्वा न मे तृप्तिर्जायतेऽमृतसन्निभाम् । अधुना वद योगींद्र पुनर्गणपतेः कथाम् ॥७॥ लंबोदरः कथं चायं शक्तिरूपो बभूव ह । तस्य मुख्यं चरित्रं मे वद सर्वार्थदायकम् ॥८॥ शक्त्या संराधितो देवो महिषस्य वधाय च । कथं प्रकटरूपोऽसौ बभूवे तद्वदस्व मे ॥९॥ शेषपुत्रः कथं साक्षाद्बभूव गणनायकः । मायाकरविनाशाय कथं मूषकगः स्मृतः ॥१०॥ सावर्णिमनुना चैव कथमाराधितोऽभवत् । कथं शक्तिगणेशानोऽवतारः प्रबभूव ह ॥११॥ एतत्सर्वं सुविस्तीर्य वद मे करुणानिधे । लंबोदरावताराश्च सुखदाः श्रवणात् प्रभो ॥१२॥ अन्यच्च वद योगींद्र गाणपत्यस्वरूपकम् । दीक्षायुक्तं विशेषेण कीदृशो गणपः स्मृतः ॥१३॥ पूजा गणपतेश्चैव कीदृशी क्रियते जनैः । मंत्रः केन प्रकारेण गृह्यते गुरुवक्त्रतः ॥१४॥ विधियुक्तं गाणपत्यमार्गं मे वद विस्तरात् । येनाहं गाणपत्यश्च भविष्यामि सुदीक्षया ॥१५॥ गाणपत्यांश्च योगींद्र प्रभो ज्ञास्यामि दृष्टिगान् । तदर्थं वद विप्रर्षे सर्वज्ञोऽसि न संशयः ॥१६॥ महाभाग्येन ते विप्र दर्शनं मेऽभवत् किल । तव पादस्य वैचित्र्यं सर्वसंतोषकारकम् ॥१७॥ सूत उवाच । एवं पृष्टो महायोगी दक्षेण गणपप्रियः । जगाद तं प्रजानाथं पुनर्भावेन तोषितः ॥१८॥ मुद्गल उवाच । धन्योऽसि कृतकृत्योऽसि दक्ष त्वं नात्र संशयः । येन प्रीतिर्गणपतावद्भुता ते प्रजापते ॥१९॥ प्रष्टुः श्रोतुश्च वक्तुर्वै पावनीं सर्वदां पराम् । गणेशं कथयिष्यामि भक्तिं दृष्ट्वा सुतोषितः ॥२०॥ आदौ ब्रह्म च यत् प्रोक्तं तदेव ब्रह्मणि स्थितम् । स्वेच्छा तत्र समुत्पन्ना माया तस्य प्रजायते ॥२१॥ स्वेच्छया द्विविधं जातं तदेवात्र न संशयः । स्वतः परत उत्थानात्तच्छृणुष्व सुयोगदम् ॥२२॥ सदा स्वसुखनिष्ठं वै नानामायाविवर्जितम् । तद्वै परत उत्थानवाचकं कथितं मया ॥२३॥ मायाखेलकरं यच्च ब्रह्म स्वेच्छामयं प्रभो । स्वत उत्थानकं प्रोक्तं पश्य वेदेषु मानद ॥२४॥ स्वत उत्थानकं ब्रह्म विकल्पं प्रचकार ह । विकल्पात्तत् द्विधा भूतमेकानेकमयत्वतः ॥२५॥ एकं देहिस्वरूपं तद्बहुरूपं शरीरकम् । ताभ्यां चतुर्विधं सृष्टं

जगदेतचराचरम् ॥२६॥ एते ब्रह्मगणाः सर्वे क्रियासामर्थ्यहीनतः । न शक्ताः स्वस्वकार्येषु तपोयुक्तास्ततोऽभवन् ॥२७॥ स्वस्वरूपं च सर्वेषां भवेत्तु किल यादृशम् । तादृशाय नमस्तुभ्यं मंत्रं जेपुः परेश्वराः ॥२८॥ दिव्यवर्षसहस्रेण प्रसन्नो गणनायकः । नरकुंजररूपः स प्रकटोऽभूत् हृदि प्रभुः ॥२९॥ तं दृष्ट्वा ज्ञानसंपन्ना जाता ब्रह्मगणाः परम् । ततस्ते ध्यानशीलाश्च पुपूजुर्हृदि संस्थितम् ॥३०॥ तेषां पुरः स्वयं साक्षात् प्रकटोऽभूत् प्रजापते । शक्तिरूपधरो भूत्वा प्रसन्नो वरदायकः ॥३१॥ चतुर्बाहुधरा देवी सर्वावयवसंयुता । स्तनभारभराक्रांता शुशुभे परमात्मिका ॥३२॥ तां दृष्ट्वा विस्मिताः सर्वे पप्रच्छुः स्वहिते रताम् । का त्वं कस्मादिहायाता वद नः सकले परे ॥३३॥ श्रीदेव्युवाच । गणेशोऽहं महाभागा यं ध्यायथ तपोन्विताः । तपसा तुष्टभावेन वरदाता समागतः ॥३४॥ एवमुक्त्वा स्वयं तत्र शक्तिः सा परमाद्भुता । गजवक्त्रयुतं रूपं दधे तेषां प्रपश्यताम् ॥३५॥ लंबोदरं समालोक्य पुनर्विस्मितचेतसा । स्तोत्रं तैर्वै समारब्धं तावत् स्त्रीरूपमादधे ॥३६॥ दृष्ट्वा ब्रह्मगणास्तां ते विस्मिता गणपे रताः । गणेशकृपया सर्वे ज्ञानयुक्ता बभूविरे ॥३७॥ ततस्तैश्चेष्टितं तस्य ज्ञातं भक्त्या प्रजापते । लंबोदरः स्वयं शक्तिरूपोऽयं नात्र संशयः ॥३८॥ या शक्तिः स गणेशानो गणेशः शक्तिरुच्यते । लंबोदरात्मिका साक्षात् सर्वेषां जननी परा ॥३९॥ ततस्तां ते प्रणम्यादौ तुष्टुवुः करसंपुटैः । प्रजानाथ ब्रह्मगणाः सरोमांचा विशेषतः ॥४०॥ ब्रह्मगणा ऊचुः । नमस्ते शक्तिरूपायै सर्वेषां च क्रियात्मने । सर्वसत्ताप्रदात्र्यै ते जगदंब नमोऽस्तु ते ॥४१॥ अपारायै च सर्वेभ्यः सर्वदायै नमो नमः । भक्त्या स्वाधीनरूपायै महामाये नमोऽस्तु ते ॥४२॥ सदा स्वानंदसंस्थायै जगद्ब्रह्मप्रचालिके । नानाभेदधरायै ते विघ्नेशायै नमो नमः ॥४३॥ अमेयायै नमस्तुभ्यं भक्तसंरक्षरूपिणि । कर्त्र्यै पात्र्यै च संहर्त्र्यै गणेशायै नमो नमः ॥४४॥ समुत्पन्नं त्वदुदरात् जगद्ब्रह्म न संशयः । तदेव सृष्टिरूपं त उदरं ते नमो नमः ॥४५॥ स्तनपानेन देवेशि पोषणं कुरुषे सदा । स्थितिरूपं तदेवांगे स्तनौ ते वै नमो नमः ॥४६॥ अंते प्रलयकालज्ञे त्वया ग्रस्तं मुखेन च । संहारकं तदेवांगे मुखं ते वै नमो नमः ॥४७॥ मनोवाणीविहीना त्वं भक्तवत्सलभावतः । स्वयं देहधरा जाता भक्तेशायै नमो नमः ॥४८॥ किं स्तुमस्त्वां महामाये शक्तिनामधरे परे । सर्वत्र शक्तभावेषु संस्थितायै नमो नमः ॥४९॥ वेदानां योगिनां चैव शक्तत्वं तत्त्वदीयकम् । त्वां स्तोतुं कः समर्थः स्यादतस्ते प्रणमामहे ॥५०॥ इति स्तुता जगन्माता ब्रह्मणां जननी प्रभो । प्रसन्ना तानुवाचाऽथ भक्तिभावेन तोषिता ॥५१॥ शक्तिरुवाच । वरान् ब्रह्माणि वृणुत येषां ये

मनसीप्सिताः । दास्यामि तपसा तुष्टा भक्त्या स्तोत्रेण सर्वपाः ॥५२॥ भवत्कृतं मदीयं यत् स्तोत्रं सर्वार्थदं भवेत् । भक्तिप्रदं महाभागाः सर्वसामर्थ्यदायकम् ॥५३॥ यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः । भुक्तिमुक्तिप्रदं पूर्णं भविष्यति न संशयः ॥५४॥ एवं शक्तेर्वचः श्रुत्वा तां ब्रह्माणि प्रणम्य च । जगुः प्रहृष्टभावेन तां परां सर्वमातरम् ॥५५॥ ब्रह्माण्यूचुः । वरान् दास्यसि सर्वेशि तदा ते भक्तिमुत्तमाम् । देहि शक्ते यया मोहो नश्यत्यत्र न संशयः ॥५६॥ किं कर्तव्यं महादेवि तत्र सामर्थ्यमुत्तमम् । देह्यस्मभ्यस्ततो मातः करिष्यामश्च ते प्रियम् ॥५७॥ तेषां वचनमाकर्ण्य संतुष्टा सर्वदायिनी । तथेति तान्युवाचाथाऽन्तर्धानं सा चकार ह ॥५८॥ ततो वरबलेनैव सृष्ट्वा विश्वं चराचरम् । स्वस्वभोगप्रदं भिन्नं तेषु क्रीडंति नित्यदा ॥५९॥ पालयंति च विश्वानि संहरंति प्रजापते । स्वमहिम्नि स्थितान्येव ब्रह्माण्यत्र न संशयः ॥६०॥ इति ते कथितश्चायमवतारः पुरातनः । लंबोदरस्य भो दक्ष शक्तिरूपः सुखप्रदः ॥६१॥ यः शृणोति नरो भक्त्या तस्मै सर्वार्थदो भवेत् । ब्रह्मभूतकरश्चापि भुक्तिमुक्तिप्रदः परः ॥६२॥ सूत उवाच । श्रुत्वा मुद्गलवाक्यं वै दक्षो हृष्टमनाः स्वयम् । जगाद तं पुनर्विप्र शृणु संशयसंयुतः ॥६३॥ दक्ष उवाच । त्वया मुद्गल माहात्म्यं कथितं शक्तिसंभवम् । श्रुतं मया महाभाग तथापि नुद संशयम् ॥६४॥ ब्रह्माणि देहहीनानि देहिहीनानि योगिप । तपादिकं तेषु नाथ कथं भवति तद्वद ॥६५॥ साश्रुनेत्रादिकं सर्वं स्तुतिपूजादिकं प्रभो । कथं तेषु भवेदेतद्भ्रांतोऽहमधुना ह्यतः ॥६६॥ तस्य तद्वचनं श्रुत्वा हर्षयुक्तो महामुनिः । जगाद तं प्रजानाथं सर्वज्ञानां शिरोमणिः ॥६७॥ मुद्गल उवाच । ब्रह्माणि ब्रह्मभूतानि तेषु नास्ति महामते । देहदेहिमयो भाव इति सत्यं श्रुतेर्मुखात् ॥६८॥ तथापि सर्वरूपाणि वदंते तानि निश्चितम् । देहविकारहीनानि देहरूपाणि सर्वतः ॥६९॥ देहिविकारहीनानि देहिरूपाणि सर्वतः । ताभ्यां हीनानि भो दक्ष द्वाभ्यां वै संयुतानि च ॥७०॥ ब्रह्माणि सर्वशास्त्रेषु विचारय महामते । अतः सर्वं सदा तेषु संभवति न संशयः ॥७१॥ अन्यच्च शृणु वाक्यं मे सर्वसंशयनाशनम् । ब्रह्मणि ब्रह्मभावश्च वक्तुं केन न शक्यते ॥७२॥ सर्वं भोगादिकं तेषां तपआदि महामते । कथनीयं कथं शास्त्रैर्देहवद्वर्ण्यते ह्यतः ॥७३॥ शिष्यस्य बोधदानार्थं जानीहि त्वं प्रजापते । मा कुरुष्व वृथा तत्र संशयं वा विकारकम् ॥७४॥ सूत उवाच । मुद्गलस्य वचः श्रुत्वा हृष्टो दक्षस्तमब्रवीत् । संशयो मे गतः स्वामिंस्त्वदुक्तवचसाऽधुना ॥७५॥ लंबोदरस्य माहात्म्यमधुना वद मानद । सर्वज्ञस्त्वमतो निःसंशयं सर्वं करोषि वै ॥७६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते शक्तिस्वरूपावतारवर्णनं नाम द्वादशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । पुरा दैत्याधिपः क्रूरो ब्रह्मणो वरदानतः । महिषासुरनामाऽथ बभूव भुवनाधिपः ॥१॥ जित्वा देवगणान् सर्वांस्तथा स्वर्गेषु दैत्यपान् । स्थापयामास दुर्बुद्धिरवध्यः सर्वभावतः ॥२॥ ततः कर्मविहीनं वै चकार स धरातलम् । अभवन्नमराः सर्वे उपोषणपरास्ततः ॥३॥ ततो देवर्षिभिस्तत्र तपसाऽऽराधिनाऽभवत् । शक्तिः सर्वमयी साक्षादसत्स्वानंदवासिनी ॥४॥ प्रगतेषु सहस्रे वै वर्षेषु प्रकटाऽभवत् । वरदानैर्वृता देवी वधाय महिषस्य सा ॥५॥ पुरुषात्तस्य भवति न भयं महिषस्य च । जिता वयं महादेवि रक्ष नो महतो भयात् ॥६॥ तस्य नाशं कुरुष्व त्वं सर्वेषां सुखकारणात् । पुत्रास्ते च वयं देवि रक्ष रक्ष महाभयात् ॥७॥ तथेति तानुवाचैव सिंहगा क्रोधसंयुता । ययौ दैत्यवधार्थं सा महामाया प्रजापते ॥८॥ स्थिता वनांतरे धृत्वा मोहिनीरूपकं जगौ । गानं रसयुतं शक्तिः शुश्रुवे तत्र कोऽसुरः ॥९॥ स आगत्य महाशक्तिं दृष्ट्वा मोहयुतोऽभवत् । गत्वा दैत्याधिपं सद्यः कथयामास विस्तरात् ॥१०॥ न ब्रह्मांडे समं किंचित्तया रूपेण तेजसा । स्त्रीरत्नं तद्विजानीहि राज्यभोगि गृहाण च ॥११॥ दैत्यस्य वचनं श्रुत्वा मोहयुक्तो महासुरः । प्रधानं प्रेषयामास तां समानेतुमादरात् ॥१२॥ प्रधानेन महामाया दृष्टा मोहविवर्धिनी । मोहितः स उवाचाथ तां सर्वातिगरूपिणीम् ॥१३॥ महिषो देवि सर्वस्य ब्रह्मांडस्य पतिः परः । मृत्युहीनः सदा यौवनशाली शोभया युतः ॥१४॥ तेनाऽहं प्रेषितो नूनं त्वदर्थं रूपशालिनि । भव पत्नी महाभागे दैत्येशस्य महात्मनः ॥१५॥ तस्य तद्वचनं श्रुत्वा क्रोधयुक्ता बभूव ह । जगाद तं मदोत्सिक्तं दैत्यामात्यं प्रजापते ॥१६॥ शक्तिरुवाच । परस्याऽहं महादैत्य स्त्री किं वदसि मां वचः । मूढवत्त्वां हनिष्यामि पुनर्भाषणसंयुतम् ॥१७॥ तस्यास्तद्वचनं श्रुत्वा क्रोधयुक्तो महासुरः । दैत्यानाज्ञापयामास तां समानेतुमादरात् ॥१८॥ तदाज्ञया महादैत्याः समाजग्मुः समंततः । तान् दृष्ट्वा क्रोधसंयुक्ता सा बभूव यशस्विनी ॥१९॥ क्रोधानलेन सर्वान् सा ददाह च प्रजापते । तद् दृष्ट्वा परमाश्चर्यं पपाल सचिवो भयात् ॥२०॥ ज्ञात्वा वृत्तांतमुग्रं स महिषो मोहसंयुतः । स्वयं सैन्यसमायुक्त आययौ तां यशस्विनीम् ॥२१॥ तां दृष्ट्वा कामबाणैः स विद्धो दैत्याधिपः स्वयम् । सचिवान् प्रेषयामास धर्तुं समीपसंस्थिताम् ॥२२॥ देव्या शस्त्रप्रहारेण हताः सर्वे प्रजापते । ततोऽतिकोपसंयुक्तः स्वयं रणसमागतः ॥२३॥ समागतं महादैत्यं देवी क्रोधसमन्विता । धनुः सज्जमथो कृत्वा बाणान् चिक्षेप दारुणान् ॥२४॥ तद्बाणैरपि दैत्येशा मृताः केचिद्रणाजिरे । केचिच्छिन्नास्तथा केचिन् मूर्छिताः संबभूविरे ॥२५॥ ततः कोपयुतो

दैत्यो महिषासुरसंज्ञितः । युयुधे तां महाभागां नानाशस्त्रास्त्रकैः परैः ॥२६॥ युद्धं तत्र महाघोरं जातं तद्भयदायकम् । सर्वेषां च प्रजानाथ परस्परजयैषिणोः ॥२७॥ एकवर्षं महादैत्यो युयुधे च तया पुरा । ततः कोपसमायुक्तः पर्वतं चिक्षिपेऽसुरः ॥२८॥ पर्वताघातमात्रेण मूर्च्छितां जगदंबिकाम् । तादृशीं तां गृहीत्वा स गंतुं यावन्मनो दधे ॥२९॥ तावत् सा सावधानाऽभूत् दृष्ट्वा दैत्यं महाबलम् । अंतर्धाय स्वमात्मानं ययौ देवी हिमालयम् ॥३०॥ तत्र खेदसमायुक्ता सा चेतसि दधार ह । अहोऽहं मनसा सर्वं भस्म कुर्यां क्षणार्धतः ॥३१॥ स्त्रीहस्तेन महादैत्यो मरिष्यति न संशयः । तथाऽपि मां जिगायैव यशोयुक्तोऽभवत् कथम् ॥३२॥ अतो विघ्नेश्वरेणैव कृतो विघ्नो न संशयः । भ्रांताऽहं तमपूज्याऽऽदौ गता संग्राममंडले ॥३३॥ अहो शक्तिस्वरूपाऽहं मच्छक्त्या वर्ततेऽखिलम् । जिता शक्तिविहीना च जाता कौतुकमुत्तमम् ॥३४॥ अतः शक्तिरशक्तत्वं ममाधीनं न वर्तते । विघ्नराजस्य सत्ता या सत्या साऽन्यत्र भ्रांतिजा ॥३५॥ यदा गणेश्वरस्तुष्टस्तदा जीवा महेश्वराः । ब्रह्माणि शक्तिरूपाणि शक्तं नान्यत् कदाचन ॥३६॥ एवं मनसि संधार्य सती संतापसंयुता । त्यक्त्वा सर्वं तपस्तेपे निराहारपरायणा ॥३७॥ विंध्याचलं समासाद्य संस्थिता जगदंबिका । विघ्नराजं हृदि ध्यात्वा जजाप मंत्रमुत्तमम् ॥३८॥ एवं वर्षसहस्रेणैकाक्षरं विधिना तथा । तपसोग्रेण विघ्नेशः संतुष्टस्तां ययौ परम् ॥३९॥ अस्थिचर्मावशेषां तां वीक्ष्य विस्मितमानसः । बोधयामास शक्तिं स विघ्नेशः करुणानिधिः ॥४०॥ विघ्नेश उवाच । पश्य शक्ते च मां प्राप्तं यं ध्यायसि निरंतरम् । वरं दातुं वृणुष्व त्वं दास्यामि भक्तियंत्रितः ॥४१॥ भक्त्या च तपसा देवि संतुष्टं ते विशेषतः । तवाधीनं न संदेहः पश्य मां वरदायिनम् ॥४२॥ तस्य तद्वचनं श्रुत्वा जगदंबा बुबोध च । अपश्यद्गणराजं तमुत्थाय प्रणनाम सा ॥४३॥ पुपूज भक्तिसंयुक्ता तुष्टाव करसंपुटैः । पुनः प्रणम्य विघ्नेशं सर्वसिद्धिप्रदायकम् ॥४४॥ शक्तिरुवाच । विघ्नेशाय नमस्तुभ्यं भक्तविघ्नविनाशिने । अभक्तानां विशेषेण विघ्नकर्त्रे नमो नमः ॥४५॥ गणेशाय गणानां वै पालकाय परात्मने । गुणरूपाय सर्वत्र संस्थिताय नमो नमः ॥४६॥ अमेयशक्तये चैवामेयमायाप्रचालक । मायाहीनस्वरूपाय मायिभ्यो मोहदायिने ॥४७॥ ब्रह्मभ्यो ब्रह्मदात्रे ते ब्रह्मणस्पतये नमः । ब्रह्मणे ब्रह्मरूपाय हेरंबाय नमो नमः ॥४८॥ कर्मणां फलदात्रे ते कर्मणां कर्मधारक । कर्मयोगस्वरूपाय परेशाय नमो नमः ॥४९॥ ज्ञानानां ज्ञानरूपाय ज्ञानिनां ज्ञानधारिणे । सदा ज्ञानविहीनाय ज्ञानयोगाय ते नमः ॥५०॥ समाय च स्वरूपाय समेभ्यः साम्यदाय ते ।

आनंदानंदकंदाय समहीनाय ते नमः ॥५१॥ सहजाय विहीनाय सहजैः सहजात्मने । सहजानां तु योगाय निर्मोहाय नमो नमः ॥५२॥ स्वानंदाय सदा स्वानंदानां स्वानंदमूर्तये । मायायुक्ताय देवेश सर्वाधीशाय ते नमः ॥५३॥ अयोगाय सदा ब्रह्मनिवृत्ति धारिणे नमः । असंप्रज्ञातभावाय लंबोदर नमो नमः ॥५४॥ शांतिरूपाय योगाय योगेभ्यो योगदाय ते चित्तभूमिविहीनाय नमश्चिंतामणे नमः ॥५५॥ क्षमापराधकं नाथ विस्मृत्या भ्रमसंयुता । अप्रपूज्य गणाधीश गता योद्धुं परात्परम् ॥५६॥ अधुना मे वरं देहि त्वत्पादरसदायकम् । महाभक्तिप्रदं नाथ येनाऽहं तोषिता त्वया ॥५७॥ जयं देहि गणाधीश महिषस्य वधाय वै । रतायै देवदेवेश नमस्ते परमेश्वर ॥५८॥ एवं तस्याः संस्तुवत्या भक्त्या रससमुद्भवः तेन युक्ता ननर्तैव साश्रुनेत्रा प्रजापते ॥५९॥ लंबोदरस्तादृशीं स निरीक्ष्यैव जगाद ताम् । त्वया यद्याचितं देवि तत् सर्व सफलं भवेत् ॥६०॥ त्वया कृतमिदं स्तोत्रं भवेद् भक्तिरसप्रदम् । अपराधस्य देवेशि सहने कारणं मयि ॥६१॥ भुक्तिं मुक्तिं प्रदास्यामि स्तोत्रेणाऽहं हि संस्तुतः । यं यं चिंतयसे कामं तं तं दास्यामि निश्चितम् ॥६२॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः । शक्तिः खिन्नेव तत्रैव संस्थिता ध्यानसंयुता ॥६३॥ स्थापयामास मूर्तिं सा ब्राह्मणैर्वेदपारगैः पूजयामास तां तत्र ततो योद्धुं समागता ॥६४॥ तदादि गणराजस्य स्थानं तत् पप्रथे भुवि । सर्वसिद्धिकरं पूर्ण यात्राकारि जनस्य च ॥६५॥ ब्रह्मभूयप्रदं पूर्णं तत्रैव मरणे सति । विघ्नेश्वरस्य दक्षैतद् बभूव सर्वदा प्रियम् ॥६६॥ महिषासुरकं देवी जघान वरदानतः । युद्धं कृत्वा महाघोरं जगद्रक्षणलालसा ॥६७॥ पुनः समागता देवी विघ्नेशक्षेत्रके प्रभो । तत्र नित्यं महाभक्त्या भजते गणनायकम् ॥६८॥ इदं लंबोदरस्यैव चरित्रं सर्वदं परम् । यः शृणोति नरो भक्त्या पठेद्वा तस्य संभवेत् ॥६९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते शक्तिवरप्रदानं नाम त्रयोदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । अन्यच्छृणु महाभाग लंबोदरचरित्रकम् । शक्त्यधीनस्वभावाख्यं सर्वसिद्धिप्रदायकम् ॥१॥ एकदा मिलिता देवाः सर्वे तत्र प्रजापते । विंध्ये देशे महाक्षेत्रे यात्रार्थं गणपस्य च ॥२॥ तत्र वादः समुत्पन्नो मुनीनां सर्वसन्निधौ । पंच देवाः समानाश्च सगुणा निर्गुणा मताः ॥३॥ कथं विघ्नेश्वरो देवः सर्वपूज्यो बभूव ह । सर्वादौ पूजनीयः स चतुर्भिरपि निश्चितम् ॥४॥ अन्यदेवस्य भक्तैश्चेष्टदेवादौ गजाननः। पूजनीयः प्रयत्नेन किमिदं विपरीतकम् ॥५॥ गणेशोच्छिष्टभोक्तारो देवा विष्णुशिवादयः । इदं किं वेदवादेषु कथितमादिपूज्यतः ॥६॥ यथा देवाश्च चत्वारस्तथाऽयं गणनायकः । स्वस्वभक्तविधानेन पूजनीयो यदा भवेत् ॥७॥ तदा सर्वं समीचीनं स्वस्वमार्गपरं भवेत् । शुभाशुभे गणाधीशः सर्वादौ संमतः कथम् ॥८॥ इति प्राप्ते विवादे तु शक्तिः क्रोधसमन्विता । जगाद तान् मुनीन् सर्वान् देवांस्तद्धितकाम्यया ॥९॥ शक्तिरुवाच । लंबोदरोऽयमेकश्च वेदे संकथितोऽभवत् । न वयं तादृशा विप्रा लंबोदरप्रवाचकाः ॥१०॥ तस्योदरात् समुत्पन्नं नाना विश्वं न संशयः । नाना ब्रह्म तथेशाश्च तत्रांते संस्थिता बभुः ॥११॥ मध्ये कलांशरूपेण क्रीडते गणनायकः । अतः सर्वादिपूज्यः स सर्वपूज्यो बभूव ह ॥१२॥ सर्वेषां जनको माता तथा सर्वप्रदायकः । तत्र किं संशयं विप्राः कुरुथ ब्रह्मणस्पतौ ॥१३॥ तस्यास्तद्वचनं श्रुत्वा जगदंबामुवाच ह । शंकरः क्रोधसंयुक्तस्तथा विष्णुश्च मानद ॥१४॥ शिवविष्णू ऊचतुः । किं शक्ते वदसि प्रेम्णा गणेशे भक्तिभाविता। वयं पंच समानाश्च तत्राधिक्यं न विद्यते ॥१५॥ परस्परं च देवेशि भावयामो न संशयः । आधिक्यं तेन किं देवे कत्थसे त्वं गणेश्वरे ॥१६॥ यदि लंबोदरश्चायमेको देवो न संशयः । तस्योदरात् समुत्पन्ना वयं सर्वे सुनिश्चितम् ॥१७॥ तदाधारास्तथांऽते वै तत्र लीना भवामहे । तदा वयं सृजामश्च जगद्ब्रह्म कथं वद ॥१८॥ पालयामो हरामश्चाधिकं भवति किं महः । तथापि वेदवादेषु वयं लंबोदरा नहि ॥१९॥ अतो लंबोदरस्यादौ सामर्थ्यं कीदृशं महत् । पश्यामस्त्वत्सन्निधाने पश्चात्तं प्रभजामहे ॥२०॥ यदाधिक्यं प्रपश्यामस्तदा सर्वादिपूज्यकम् । सर्वपूज्यं करिष्यामो नान्यथा देवि निश्चितम् ॥२१॥ ततः शिवश्च विष्णुश्च कल्पयित्वा ह्यपारकम् । नैवेद्यं सत्यसंकल्पौ पूजायां संस्थितौ परौ ॥२२॥ एककालसमाविष्टावावाह्य गणनायकम् । पुपूजतुर्महाभक्त्या छलधर्मस्वरूपया ॥२३॥ गणेश्वरस्तत्र साक्षात् समायातः प्रजापते। दृष्ट्वाऽपारं स नैवेद्यं विस्मितोऽभूत् स्वेचतसि ॥२४॥ ध्यानेनालोक्य विघ्नेशो ज्ञात्वा तयोर्हृदि स्थितम् । सत्यसंकल्परूपां तां सिद्धिमाकृष्य संस्थितः ॥२५॥ सिद्धिहीनौ विष्णुशिवौ पूजायां

निरतौ मुदा । नैवेद्यं गणराजाय ददतुः परमं ततः ॥२६॥ एकग्रासेन नैवेद्यमपारं गणनायकः । बभक्ष पुनरूचे तौ क्षुधितोऽहं विशेषतः ॥२७॥ तस्य तद्वचनं श्रुत्वा शिवो विष्णुः पुनः प्रभू । नैवेद्यं सत्यसंकल्पात् कल्पयामासतुः पुरः ॥२८॥ तथापि न च नैवेद्यं बभूवाणुस्वरूपकम् । तेन खेदसमायुक्तौ परस्परमथोचतुः ॥२९॥ सत्यसंकल्परूपं यदैश्वर्यं क्व गतं परम् । आवां नरसमौ जातौ किं भविष्यति दैवतः ॥३०॥ ब्रह्माणामीश्वराणां च महत् ब्रह्मत्वमैश्वरम् । सत्यसंकल्पभावाख्यं तेन हीना नराः स्मृताः ॥३१॥ अधुना किं करिष्यावो जीवतुल्यौ न संशयः । अयं लंबोदरः क्रोधान्नरके पातयिष्यति ॥३२॥ अथवा मृत्युलोके वै निश्चितं भयमागतम् । कं यावः शरणं नाथं छलनायां परायणौ ॥३३॥ शक्त्या संबोधितं पूर्वं तत्राज्ञानसमन्वितौ । वादं कृत्वा महाविघ्नमावाभ्यां प्रकटीकृतम् ॥३४॥ अधुना शरणं श्रेष्ठं शुभदं प्रभविष्यति । गणेशश्च विशेषेण ब्रह्मनायक एव सः ॥३५॥ ततस्तौ भक्षितुं तत्र क्रोधयुक्तो गजाननः । बभूवाद्भुतरूपश्च दृष्ट्वा तं संप्रपेलतुः ॥३६॥ शक्तेश्चरणमासाद्य पेततुर्भयविह्वलौ । ततः सा तौ समाश्वास्यागृह्य दूर्वां तमाययौ ॥३७॥ प्रणम्य गणनाथं सोवाच कृत्वा करांजलिम् । हृष्टरोमा च सर्वेशी भक्तिनम्रात्मकंधरा ॥३८॥ शक्तिरुवाच । क्षमापराधमत्युग्रं देवदेवेश ते नमः । त्वन्मायागर्वसंयुक्तयोर्विष्णुशिवयोः प्रभो ॥३९॥ समुत्पन्नौ त्वदुदराद् बालभावधरौ तथा । शिवविष्णुगणेशानतयोर्दंडं च मा कुरु ॥४०॥ सर्वेषां पोषणे स्वामिंस्त्वं शक्तो नात्र संशयः । त्वदीयपोषणं पूर्णं त्वमेव कुरुषे सदा ॥४१॥ एवमुक्त्वा महामाया तस्मै दूर्वांकुरं ददौ । मनसा कल्पयामासान्नं चतुर्विधमुत्तमम् ॥४२॥ ततो दूर्वांकुरेणैव तृप्तोऽभूद्गणनायकः । महाभक्तिं ददौ तस्यै शक्तये भक्तवत्सलः ॥४३॥ प्रसन्नं तं गणाधीशं दृष्ट्वा तत्र समाययौ । हरिश्च शंकरो देवः प्रणम्य प्रोचतुर्वचः ॥४४॥ क्षमापराधमुग्रं नौ गणाधीश विशेषतः । त्वन्मायया मोहितयोः सदा स्वानंददायक ॥४५॥ अधुना ते स्वरूपं यज्ज्ञातं पूर्णं महाप्रभो । सर्वादिपूज्य एकस्त्वं सर्वपूज्यो यथातथम् ॥४६॥ एवमुक्त्वा तुष्टुवतुर्गणेशानं महेश्वरौ । अथर्वशिरसा भक्त्या संतुष्टः स ततोऽभवत् ॥४७॥ शक्त्या संप्रार्थितस्तत्र भावयुक्तेन चेतसा । यथापूर्वं शिवो विष्णुस्तादृशौ स चकार ह ॥४८॥ संकल्पसिद्धिसंयुक्तौ संबभूवतुरीश्वरौ । सदा भक्तिसमायुक्तौ भजतो गणनायकम् ॥४९॥ संशयेन विहीनाश्च जाता देवर्षयो जनाः । पूर्णभावयुतं ढुंढिमभजंस्ते विमत्सराः ॥५०॥ न गणेशात् परं किंचित्तस्मादादौ गणेश्वरः । अंते सोऽपि न संदेहो मध्ये नानाविधः स्मृतः ॥५१॥ सर्वेषां बीजरूपोऽयमतः

सर्वादिपूज्यकः । सर्वपूज्यो गणेशानो वेदेषु कथितोऽभवत् ॥५२॥ गाणपत्यस्वभावस्था बभूवुर्मुनयोऽमलाः । यत्र तत्र गणेशानं भजंते तेऽधुना प्रभुम् ॥५३॥ एतल्लंबोदरस्यैव चरित्रं यः शृणोति वा । पठते तस्य विघ्नेशः सर्वदः प्रभविष्यति ॥५४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते शिवविष्णुगर्वहरणं नाम चतुर्दशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । सुरथो नाम राजर्षिः प्रधानैर्नयवर्जितैः । बलिष्ठैः पीडितोऽत्यंतं राज्यं त्यक्त्वा वनं ययौ ॥१॥ तत्र मुनिवरेणैवोपदिष्टः शक्तिमाभजत् । तस्याश्च कृपया राजा समर्थः प्रबभूव ह ॥२॥ स्वराज्यं प्राप्य राजर्षिश्चक्रे तद्धर्मसंयुतः । अभजच्छक्तिमत्यंतं भावयुक्तेन चेतसा ॥३॥ ततो मृतः पुनः सोऽपि सावर्णिश्च बभूव ह । मनुर्भानुसुतो दक्ष सर्वमान्य उदारधीः ॥४॥ पूर्वसंस्कारयोगेन शक्तिभक्तो बभूव ह । वने गत्वा महाशक्तिं पूजयामास नित्यदा ॥५॥ उपोषणसमायुक्तस्तताप तप उत्तमम् । ध्यात्वा हृदि महामायां नवार्णजपकारकः ॥६॥ माहात्म्यमपठन्नित्यं शक्त्या भक्तिसमन्वितः । एवं वर्षशते पूर्णे प्रसन्नाऽभून् महासती ॥७॥ अंते तत्तपसा युक्तं ज्ञानमार्गपरायणम् । ज्ञात्वा लंबोदरस्तत्र वरदाता समाययौ ॥८॥ हृदि तस्य स्थितं ध्यानं शक्तेस्तत्र गणेश्वरः । शुशुभे रक्तवर्णाभो दृष्ट्वा तं सोऽपि विस्मितः ॥९॥ ततः शक्तिस्वरूपं स ददर्श पुनरंजसा । पुनर्लंबोदरं देवं पुनः शक्तियुतं प्रभुम् ॥१०॥ वामांगे संस्थितां शक्तिं हावभावसमन्विताम् । भक्तियुक्तां गणेशस्य ततोऽतिविस्मितोऽभवत् ॥११॥ लंबोदरार्थजं दक्ष शक्तेश्च कृपया महत् । ज्ञानं प्रकटरूपं तद्बभूव हृदये मनोः ॥१२॥ ततो मनुर्विशेषेण भक्तियुक्तो हृदि स्वयम् । विचारमकरोत् पूर्णं तच्छृणु त्वं प्रजापते ॥१३॥ लंबोदरः स्वयं शक्तिः शक्तिर्लंबोदरात्मिका । शक्तेर्लंबोदरस्यैव नांतरं विद्यते कदा ॥१४॥ शक्तिर्वामांगसंभूता दक्षिणांगाद्गणेश्वरः । तयोरभेदभावे यद्ब्रह्म स्वानंदसंज्ञकम् ॥१५॥ क्रीडार्थं भक्तरक्षार्थं देहाकृतिधराविमौ । बभूवतुर्न संदेहस्ततः सर्वमिदं बभौ ॥१६॥ एवं विचारयुक्तः स मनुर्यावत् प्रतापवान् । तावत्तौ बहिरायातौ वरदौ च प्रजापते ॥१७॥ हृदि संस्थौ विस्मितः स क्व गतौ शक्तिविघ्नपौ । पुनर्ध्यानबलेनैव

चिंतयामास भूमिपः ॥१८॥ ततस्तं तावूचतुश्च वरं वरय सुव्रत। तपसा भक्तिभावेन तुष्टौ दास्यावहे मुने ॥१९॥ तयोर्वचनमाकर्ण्योन्मील्याऽपश्यद्बहिर्मनुः। दृष्ट्वा शक्तियुतं देवं प्रणनाम मुदायुतः ॥२०॥ पूजयित्वा विधानेन तुष्टाव भक्तिसंयुतः। प्रणम्य तौ पुनर्देवौ कृत्वा करपुटं विधे ॥२१॥ सावर्णिरुवाच। नमस्ते गणनाथायै नमस्ते गणपालक। चतुर्बाहुधरायैव चतुर्बाहुधराय ते ॥२२॥ अनाद्यायै ह्यनाद्याय परेशायै परात्मने। भक्तविघ्नहरायै ते भक्तविघ्नहराय च ॥२३॥ हेरंबायै नमस्तुभ्यं हेरंबाय नमो नमः। लंबोदरस्वरूपायै नमो लंबोदराय ते ॥२४॥ नानारूपधरायैव नानारूपधराय च। नमो नमो महादेव्यै देवाधिपतये नमः ॥२५॥ गजवक्त्रधरायै ते गजवक्त्रधराय च। शूर्पकर्णस्वरूपायै शूर्पकर्णाय ते नमः ॥२६॥ एकदंतधरायै चैकदंतरूपिणे नमः। मायामोहहरायैव मोहहर्त्रे नमो नमः ॥२७॥ स्वानंदपुरसंस्थायै नमः स्वानंदवासिने। परश्वादिधरायै च परश्वादिधराय ते ॥२८॥ नमः सर्वप्रबोधायै नमः सर्वप्रबोधक। मायिभ्यो मोहदात्र्यै ते मायिभ्यो मोहदाय च ॥२९॥ ढुंढिराज्यै नमस्तुभ्यं ढुंढिराजाय ते नमः। वक्रतुंडधरायै ते वक्रतुंडाय ते नमः ॥३०॥ सर्वादिपूज्यकायै च सर्वादिपूज्यकाय ते। नमस्ते सर्वपूज्यायै सर्वपूज्याय ते नमः ॥३१॥ अनंतखेलकारिण्यै ह्यनंतखेलकारिणे। नमो नमो महाशक्ते नमः शक्तिधराय ते ॥३२॥ नानाभेदकरायै ते नानाभेदमयाय च। नमो नमः परेशायै परेशाय नमो नमः ॥३३॥ या शक्तिः सैव विघ्नेशो नांतरं विद्यते क्वचित्। अज्ञानेन महाभागौ स्त्रीपुंभावः प्रदृश्यते ॥३४॥ यत्र वेदादयो योगिनो देवेशा विसिस्मिरे। तत्र स्तोतुं च कोऽहं तावल्पज्ञानप्रधारकः ॥३५॥ भवतोर्दर्शनेनैव बोधयुक्तोऽहमंजसा। तेन स्तुतौ गणाध्यक्षौ योगशांतिप्रदायकौ ॥३६॥ प्रयच्छतं महायोगमधुना मे नमाम्यहम्। भक्तिं च भवतोर्मे तु सुदृढां दातुमर्हथः ॥३७॥ इत्युक्त्वा दंडवद्भूमौ पपात पदयोस्तयोः। मनुस्तौ हर्षसंयुक्तावूचतुस्तं महीपतिम् ॥३८॥ शक्तिविनायकावूचतुः। शांतियोगं महाभाग लभसे योगसेवया। भक्तिं दृढां च नौ पादे सदाऽऽदित्यकुमारक ॥३९॥ भुक्त्वा मन्वंतरं पूर्णं यशः स्थाप्य जगत्त्रये। अंते स्वानंदगो भूत्वा ब्रह्मभूतो भविष्यसि ॥४०॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदायकम्। पठते शृण्वते चैव भविष्यति न संशयः ॥४१॥ एवमुक्त्वा गणाध्यक्षावंतर्धानं प्रचक्रतुः। मनुः स्वगृहमागत्याऽभजत्तौ भावसंयुतः ॥४२॥ मन्वंतरसमा भुक्त्वा ब्रह्मभूतो बभूव ह। गाणपत्यो महाभागः सावर्णिः प्रथितोऽभवत् ॥४३॥ मयाऽवतारः कथितो नाम्ना शक्तिविनायकः। सर्वसिद्धिप्रदः पूर्णो लंबोदरस्य भक्तितः ॥४४॥ मायया मोहितानां वै भिन्ना शक्तिः प्रदृश्यते। या शक्तिः

स स्वयं दक्ष लंबोदरो न संशयः ॥४५॥ स्त्रीपुंभावमयी माया त्यक्तव्या योगसेवया । तदा लंबोदरः प्राप्तो योगिभिर्ब्रह्मनायकः ॥४६॥ केचिच्छक्तिं वदंत्येनं केचिल्लंबोदरं परम् । भक्त्या भिन्नं स्वरुच्यर्थं जानीह्यत्र न संशयः ॥४७॥ असत्स्वानंदरूपा वै शक्तिर्वेदे प्रकीर्तिता । स लंबोदर आख्यातो गणेशस्यावतारभृत् ॥४८॥ शक्तिविनायकस्यैतच्चरित्रं यः शृणोति वा । पठते भविता तस्य भुक्तिर्मुक्तिर्न संशयः ॥४९॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते शक्तिविनायकमाहात्म्ये पंचदशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । शेषपुत्रस्य माहात्म्यं कथयामि समासतः । तच्छृणुष्व प्रजानाथ योगशांतिप्रदायकम् ॥१॥ एकदा सत्यलोकस्थो ब्रह्मा ध्यानपरायणः । बभूव सर्वजंतूनां हितार्थं मोहितः स्वयम् ॥२॥ सदा सृष्टिर्मदीयेयमखंडा जायते कथम् । तत्र तस्य स्वनिःश्वासात् पुरुषः संबभूव ह ॥३॥ स प्रणम्य विधातारं तुष्टाव विविधैः स्तवैः । तमुवाच तदा ब्रह्मा किं वाञ्छसि वदाऽशु मे ॥४॥ ब्रह्मणो वचनं श्रुत्वा हर्षयुक्तः पुमानभूत् । तं जगाद प्रजानाथं भक्तिनम्रात्मकंधरः ॥५॥ पुमानुवाच । तव निःश्वाससंभूतं पुत्रं मां पालय प्रभो । देहि नाम तथा स्थानं भक्ष्यं नानाविधं विधे ॥६॥ अन्यत् सुखकरं सर्वं देहि नाथ नमोऽस्तु ते । त्वं गतिः सर्वभूतानामधुना मे विशेषतः ॥७॥ तस्य तद्वचनं श्रुत्वा ब्रह्मा स्नेहयुतोऽभवत् । स जगाद तमालिंग्य चुचुंबे पुत्रवत्सलः ॥८॥ ब्रह्मोवाच । मायादर्शनमात्रेण वर्धसे त्वं महामते । मायाकरस्ते विख्यातमतो नाम भविष्यति ॥९॥ यद्यदिच्छसि तत्तत्ते सफलं च भविष्यति । त्रैलोक्ये वसतिः पुत्र गतिरव्याहता भवेत् ॥१०॥ चतुःपदार्थसंभूतं सदा वश्यं भविष्यति । चतुर्विधमयेभ्यस्ते मरणं न कदा भवेत् ॥११॥ युद्धे चतुर्विधं सर्वं प्रजेष्यसि न संशयः । सदाऽऽरोग्यादिसंयुक्तो भविष्यसि मदात्मज ॥१२॥ ब्रह्मणो वचनं श्रुत्वा हर्षितोऽभूत् पुमान् स्वयम् । मायाकरः प्रणम्यैव तं ययौ स्वेच्छया चरन् ॥१३॥ ततो दानवमुख्यश्च विप्रचित्तिः प्रतापवान् । तं दृष्ट्वा बलसंयुक्तं समागत्य ननाम सः ॥१४॥ ज्ञात्वा वृत्तांतमेतस्य मायाकरस्य दुर्मतिः । जगाद तं पुनः सोऽपि विप्रचित्तिः प्रतापवान् ॥१५॥ विप्रचित्तिरुवाच । मायाकर महाभाग शृणु मे परमं वचः । वराः प्राप्तास्त्वया सर्वे दुर्लभा

नात्र संशयः ॥१६॥ तेषां भोगः प्रकर्तव्यस्त्वया नित्यं महामते। तदा शोभायुता जाता वरास्ते नान्यथा प्रभो ॥१७॥ यथा रूपवयोयुक्ता नारी स्वपतिना युता। नित्यं भुक्ता विशेषेण शोभतेऽतीव मानद ॥१८॥ मिलिता विविधा भोगा भुक्ताश्चेत् सार्थकं भवेत्। निक्षिप्ता भोगहीनास्ते शपंति पुरुषं सदा ॥१९॥ अतो वरान् महाभाग साधयस्व विशेषतः। नोचेत्ते त्वां शपिष्यंति वरा भोगविहीनतः ॥२०॥ वयं दानवमुख्याश्च त्वदधीना भवामहे। अस्माभिर्बलसंयुक्तैर्भुंक्ष्व भोगं महाबल ॥२१॥ दानवा बलसंयुक्ता अजेयाः सर्वभावतः। त्वदाज्ञावशगा नाथ चरिष्यंति न संशयः ॥२२॥ एवं मायाकरस्तेन बोधितो दुष्टधीः स्वयम्। तदधीनो बभूवाऽपि ययौ तेन रसातलम् ॥२३॥ तत्र दानवमुख्यैश्च मिलितैर्यमसन्निभैः। तैर्मानितो विधेः पुत्रो मायाकरस्तुतोष ह ॥२४॥ ततः शुक्रं समानीय प्रणता दानवा विधे। ब्राह्मणै-रभिषिक्तं तं कारयामासुरादरात् ॥२५॥ असुराणां महाराजो बभूव ब्रह्मणः सुतः। मायाकरोऽतिशुशुभे सर्वेभ्यो भयदायकः ॥२६॥ नानाभोगान् प्रभुंजानो बलेन गर्वितोऽभवत्। अमन्यतासुराधीश आत्मनः कृतकृत्यताम् ॥२७॥ ततो दानवमुख्यैः स जित्वा पृथ्वीं ससागराम्। ततो देवगणान् जित्वेंद्रासने संस्थितोऽभवत् ॥२८॥ ततः सिषेविरे सर्वे दानवास्तं विशेषतः। स्वर्गभोगकरा भूत्वा हर्षिताः स्वजनैः प्रभो ॥२९॥ ततः शिवं समागम्य स युद्धायोद्यतोऽभवत्। त्यक्त्वा कैलासमादौ स पपाल शंकरः स्वयम् ॥३०॥ ततो विकुंठगो भूत्वा रराजे दानवाधिपः। त्यक्त्वा विकुंठमेवं स विष्णुः पपाल भीतितः ॥३१॥ ततः शांतिधरं वीक्ष्य तमूचुर्दानवाः पुनः। जय त्वं सत्यलोकस्थं ब्रह्माणं देवनायकम् ॥३२॥ सुरेभ्यः सर्वदाता स पक्षगश्च पितामहः॥ असुराणामहो हंता न समो वर्तते कदा ॥३३॥ तमाश्रित्य महादेवादयोऽभूवंश्च संस्थिताः। कालं प्राप्य महावेगा मारयिष्यंति नः खलु ॥३४॥ त्वया सर्वं जितं राजन् तदपि पश्य चेष्टितम्। ब्रह्मणा दूतवर्येण सत्कृतो न कदा भवान् ॥३५॥ मायाकरस्ततस्तेषां वचः श्रुत्वाऽसुरः स्वयम्। सत्यं विचार्य धातारमभूत् जेतुं समुद्यतः ॥३६॥ दानवैर्ब्रह्मलोके तमागतं वीक्ष्य वै विधिः। शोकयुक्तः पपालाऽसौ देवौघैः संवृतः प्रभुः ॥३७॥ ततः स सत्यलोकस्थः शुशुभेऽतीव तत्क्षणात्। दानवान् मानयन् दैत्यः सह तैर्बुभुजे सुखम् ॥३८॥ ततः स सत्यलोके च कैलासे वैष्णवे पदे। सौरे शाक्तेऽन्यदेवानां पदेष्वास्थापयत् स्वकान् ॥३९॥ पुनर्भूमौ समागम्य संस्थितो नगरे स्वके। प्रपंचाख्ये महादैत्यो दैत्यपैः संवृतो बभौ ॥४०॥ ततो दानवमुख्यांश्च पातालजयने सुरः। प्रास्थापयच्च ते सर्वे गताः सर्वे

समन्विताः ॥४१॥ तैर्जिताः सर्पराजास्ते शेषस्ताञ्छरणं ययौ। स्वीकृत्य करभारं स संस्थितो नागपैर्वृतः ॥४२॥ तथापि दानवास्तत्र संस्थिता भयदायकाः। नागानधर्षयन् सर्वे यमकालनिभा बलात् ॥४३॥ ततोऽतिदुःखितः शेषः सस्मार गणनायकम्। निर्विघ्नार्थं प्रजानाथ पुत्रभावार्थमादरात् ॥४४॥ अंतर्ध्यानेन विघ्नेशं तोषयामास नागपः। ततो वर्षे गते पूर्णे प्रकटोऽभूद् गजाननः ॥४५॥ हृदयाद् बहिरेवाऽसौ निर्गत्य तमुवाच ह। पश्य शेष महाभाग ध्यानजं ते सुतं च माम् ॥४६॥ दक्ष उवाच। स्वल्पायासेन हेरंबः कथं पुत्रो बभूव ह। कथयस्व महायोगिन् शेषस्य चरितं महत् ॥४७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते शेषातिदुःखवर्णनं नाम षोडशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। पुरा कश्यपविप्रेणाराधितौ तपसा प्रभू। शिवविष्णू च पुत्रार्थं मंत्रध्यानसमाधिना ॥१॥ दश वर्षे गते तौ च वरदौ तं समागतौ। सुतौ मुनिवरेणैव वरं दत्त्वा प्रजग्मतुः ॥२॥ तयोरंशेन शेषश्च पुत्रस्तस्य बभूव ह। धराधरणभावेन पालको विष्णुरेव सः ॥३॥ ब्रह्मणो दिवसांते स ज्वालया विष्टपं महत्। ददाह शंकरांशश्च महानागः प्रतापवान् ॥४॥ सहस्रशीर्षा पुरुषः शेष एव स उच्यते। मृत्युहीनो ह्यनंतोऽयं सर्वेषामंतकोऽभवत् ॥५॥ लय एकोऽवशेषश्च तेन शेषः प्रकीर्तितः। ब्रह्मांडं धारयामास सर्वाधारो बभूव ह ॥६॥ उत्पन्नोऽभूत् स्वयं शेषः साक्षाद्धरिहरात्मकः। ब्रह्मणा-गत्य तत्रैवाऽभिषिक्तो राज्यकर्मणि ॥७॥ नागानामीश्वरो भूत्वा स्थितः सर्वत्र संमतः। ततः स कश्यपं नत्वा जगाद वचनं हितम् ॥८॥ शेष उवाच। ब्रह्मांडं धारयामीश कथं सर्वसमाकुलम्। तदर्थं मां महायोगिन् शाधि शिष्यं पितः प्रभो ॥९॥ ततस्तस्मै मुनिश्रेष्ठो ददौ मंत्रं षडक्षरम्। गणेशस्य यथान्यायं शोधयित्वा प्रजापते ॥१०॥ ततस्तं प्रणिपत्यैव तताप तप उत्तमम्। वने गत्वा गणेशं स ध्यात्वा जपपरायणः ॥११॥ निराहारेण विघ्नेशं तोषयामास नित्यदा। पुपूज भक्तिसंयुक्तस्तुष्टाव विविधैः स्तवैः ॥१२॥ एवं वर्षसहस्रेण प्रसन्नो गणनायकः। अस्थिमात्रावशेषं तं त्वचायुक्तं समाययौ ॥१३॥ तं दृष्ट्वा नागपः शेषः प्रणम्योत्थाय चादरात्। पुपूज हर्षसंयुक्तस्तुष्टाव करसंपुटैः ॥१४॥

ततस्तं गणराजः स जगाद वृणु वाञ्छितम्। दास्यामि तपसा तुष्टो यत्ते चित्ते भविष्यति ॥१५॥ शेषः प्रणम्य विघ्नेशं जगाद हर्षसंयुतः। ब्रह्मांडधारणे शक्तिं देहि नाथ नमोऽस्तु ते ॥१६॥ भक्तिं देहि गणाधीश भुक्तिमुक्तिप्रदायिनीम्। मृत्युहीनं दिशां नाथं मां कुरुष्व यशोतिगम्॥१७॥ तथेति गणराजस्तु तमुक्त्वांऽतरधात्ततः। शेषो हृष्टः स्वयं दक्ष स्वस्थानं प्रजगाम ह ॥१८॥ तदारभ्य स्वयं नागो धराधारो बभूव ह। दिक्पालत्वं सदा लेभे मान्यः सर्वार्थदोऽभवत् ॥१९॥ ततो योगबलेनैव नाना मायाविशारदः। नाना रूपधरः शेषः शुशुभे सर्वमंडले ॥२०॥ एवं बहौ गते काले हिरण्यकशिपोर्भयात्। ऐश्वर्यं नश्वरं मत्वाऽभवत् ज्ञानार्थमुद्यतः ॥२१॥ विपुलं स तपस्तप्त्वा शमदमपरायणः। योगभूमिस्थभावेनांतर्निष्ठश्च बभूव ह ॥२२॥ ततः क्रमेण नागेशः समस्वानंदगोऽभवत्। योगेन तत्र शांतिं च स दृष्ट्वा संस्थितोऽभवत् ॥२३॥ विष्णुं ज्ञात्वा परं भावं तदर्थं संयतः स्वयम्। वैष्णवेनैव मार्गेण तोषयामास केशवम् ॥२४॥ ततस्तं वरदो विष्णुर्ययौ शेषेण संस्तुतः। याचितो नित्यमेवं मे दर्शनं देहि केशव ॥२५॥ मदीयदेहसंस्थस्त्वं भव नित्यं जनार्दन। तथेति तमुवाचाऽसौ नारायणो बभूव ह ॥२६॥ शेषशायी सदा तस्य स देहे संस्थितोऽभवत्। तेन संहर्षितोऽत्यंतं बभूवे नागपालकः ॥२७॥ ततो योगबलेनाऽसौ मायामोहं ददर्श ह। समानंदं द्वंद्वमयमशांतोऽपि बभूव ह ॥२८॥ एवं बहौ गते काले योगमार्गरतोऽभवत्। समाधिना प्रजानाथ सहजं ब्रह्म संश्रितः ॥२९॥ साहजं शंकरं ज्ञात्वा शैवमार्गपरोऽभवत्। ब्रह्म स्वेच्छामयं दृष्ट्वा शांतिं प्राप्य समास्थितः ॥३०॥ ततस्तं वरदः शंभुराययौ तं प्रणम्य सः। शेषस्तुष्टाव संहृष्टः शैवैः स्तोत्रैः सदाशिवम् ॥३१॥ प्रसन्नं शंकरं दृष्ट्वा ययाचे भक्तिमुत्तमाम्। सदा दर्शनभावार्थं संगतिं शंकरस्य सः ॥३२॥ तथेति शंकरो देवः स चकार प्रजापते। मस्तके तं बबंधाऽथ नित्यदर्शनकांक्षिणम् ॥३३॥ ततोऽतिहर्षितोऽनंतः शंभुमार्गपरायणः। सिषेवे भावसंयुक्तः शंकरं वृषभध्वजम् ॥३४॥ ततो योगबलेनैव शेषस्तत् सहजं परम्। मोहहीनं विदित्वा स शांतिहीनो बभूव ह ॥३५॥ मनसा शांकरं ब्रह्म नामन्यत परं प्रभुम्। शिवं नत्वा महानागः पप्रच्छ योगशांतिदम् ॥३६॥ पात्रं गणेशयोगे तं ज्ञात्वा शेषं सदाशिवः। जगाद गणनाथस्य ज्ञानं सर्वहितावहम् ॥३७॥ शिव उवाच। योगशांतिप्रदं पूर्णं गणेशं विद्धि मानद। सत्यासत्यसमानानि सहजेन युतानि वै ॥३८॥ ब्रह्माणि यत्र लीयंते संयोगेन महामते। स्वसंवेद्यं तद्वदंति ब्रह्म शांतिप्रदं परम् ॥३९॥ संयोगे

गणनाथस्य स्वसंवेद्यात्मकं परम् । दर्शनं जायते येनाऽभवत् स्वानंदवासिकः ॥४०॥ सर्वसंयोगरूपश्च दोषस्तत्र महान् स्मृतः । तेन शांतिप्रदं पूर्णं न मतं योगिभिः कदा ॥४१॥ स्वसंवेद्यविहीनं यद्ब्रह्म योगमयं भवेत् । तत्र संदर्शनं तस्य न भवेद्व्यतिरेकतः ॥४२॥ स्वकीयाऽभेदतस्तत्र निवृत्तिर्जायते नृणाम् । तत्र शांतिः समाख्याता सा न मुख्या मता बुधैः ॥४३॥ अयोगात्मकरूपश्च दोषः संवर्तते सदा । मायाहीनप्रभावेण तिष्ठते गणनायकः ॥४४॥ संयोगायोगयोर्योगे योगः शांतिप्रदायकः । सा शांतिः सर्वमान्या वै भवते वेदवादतः ॥४५॥ संयोगश्च गकारस्थो णकारो योगगः प्रभो । तयोरीशो गणेशानो वेदे पश्य विचक्षण ॥४६॥ पंचभूमिमयं चित्तं तदेव बुद्धिभावगम् । मोहो भ्रांतिप्रदस्तेषु सा सिद्धिः संमता बुधैः ॥४७॥ तयोः स्वामी गणेशानः चिंतामणिः प्रकथ्यते । चित्तप्रकाशकः साक्षाच्छांतिदो योगसेवया ॥४८॥ तं भजस्व महानाग ततः शांतिमवाप्स्यसि । नान्यथा कोटिवर्षैः कः शांतिं प्रलभते नरः ॥४९॥ एवमुक्त्वा महादेवो विरराम स तं प्रभुः । प्रणम्य शेषनागश्च ययौ तपोवनं परम् ॥५०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते शेषयोगोपदेशवर्णनं नाम सप्तदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच ॥ ततः शेषः स्वयं तत्र तताप तप उत्तमम् । शमदमपरो भूत्वा योगभूमिमशोधयत् ॥ १ ॥ क्रमेण पंचभूमीनां चित्तस्य पारमागतः । शांतिं प्राप्तो महानागोऽभजत्तं गणनायकम् ॥२॥ गाणपत्यस्वभावेनाऽपूजयद् भक्तिसंयुतः । एवं तपःप्रभावेण संतुष्टोऽभूद् गजाननः ॥ ३ ॥ तमाययौ महाभक्तं ध्यानस्तिमितलोचनम् । जगाद स वृणुष्व त्वं वरान् मत्तो सुदुर्लभान् ॥४॥ तस्य तद्वचनं श्रुत्वा प्रबुद्धो गणनायकम् । दृष्ट्वा लंबोदरं देवं प्रणनाम कृतांजलिः ॥५॥ प्रणम्य विघ्नपं भक्तिसंयुक्तोऽपूजयत् पुनः । तुष्टाव सुस्थिरो भूत्वा निबद्धकरसंपुटः ॥ ६ ॥ शेष उवाच । गणेशाय नमस्तुभ्यं सिद्धिबुद्धिपते नमः । चिंतामणे महाविघ्ननाशनाय नमो नमः ॥७॥ सर्वादिपूज्यरूपाय सर्वपूज्याय ते नमः । ज्येष्ठराजाय ज्येष्ठानां मात्रे पित्रे नमो

नमः ॥८॥ विनायकाय सर्वेषां नायकाय नमो नमः। नायकानां प्रचालाय नायकैः सेविताय ते ॥९॥ विघ्नेशाय च सर्वेषां पदभ्रंशकराय ते। अभक्तानां सुभक्तानां विघ्नहंत्रे नमो नमः ॥१०॥ ढुंढिराजाय सर्वैश्च ढुंढिताय सुसिद्धिद। ढुंढितानां महाराज परेशाय नमो नमः ॥११॥ ब्रह्मणां पतये तुभ्यं ब्रह्मेभ्यो ब्रह्मदायिने। ब्रह्मभ्यः सुखदायाऽथ शांतिरूपाय ते नमः ॥१२॥ स्वानंदवासिने तुभ्यं सदा स्वानंदमूर्तये। नाना विहारकर्त्रे ते समाधये नमो नमः ॥१३॥ मूषकवाहनायैव मूषकप्रियमूर्तये। मूषकध्वजिने तुभ्यं स्तेयरूपाय ते नमः ॥१४॥ अयोगाय सदा ब्रह्मन् ब्रह्मणे ब्रह्ममूर्तये। असमाधिस्थ हेरंब मायाहीनाय ते नमः ॥१५॥ योगाय योगनाथाय योगेभ्यो योगदायिने। चित्तवृत्तिविहीनाय गणेशाय नमो नमः ॥१६॥ किं स्तौमि त्वां गणाधीश मनोवाणीविवर्जितम्। मनोवाणीमयं स्वामिन् द्वाभ्यां हीनतया स्थित ॥१७॥ अतो वेदादयः सर्वे कुंठिता नात्र संशयः। योगिनः शुकमुख्याश्चातस्त्वां पश्यामि भाग्यतः ॥१८॥ एवं संस्तुवतस्तस्य भक्तिरससमुद्भवः। ननर्त तेन शेषश्च हृष्टरोमाऽश्रुलोचनः ॥१९॥ जगाद गणराजस्तु ततस्तं भक्तमुत्तमम्। वरान् वरय शेष त्वं दास्यामि भक्तिभावितः ॥२०॥ त्वया कृतमिदं स्तोत्रं शांतियोगप्रदं भवेत्। धर्मार्थकाममोक्षाणां दायकं सर्वसिद्धिदम् ॥२१॥ यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः। श्रवणान्नाऽत्र संदेहो भवेन् मद्भक्तिवर्धनम् ॥२२॥ ततस्तं नागराजश्च जगाद वचनं हितम्। प्रणम्य भावसंयुक्तो विघ्नेशं भक्तिलालसः ॥२३॥ शेष उवाच। भक्तिं देहि गणाधीश तव पादांबुजे पराम्। सदा शांतिस्थमत्यंतं कुरुष्व गणनायक ॥ २४ ॥ चित्तं पंचविधं प्रोक्तं तत्र त्वं सततं प्रभो। तिष्ठस्व स्फूर्तिरूपेण मदीयभ्रमनाशकः ॥२५॥ मनश्चंचलभावेन संसारविषये रतम्। भविष्यति न संदेहोऽतस्त्वं मे तनयो भव ॥ २६ ॥ संसारे पुत्रभावेन भजिष्यामि निरंतरम्। हृदि शांत्या तथा देव कुलदैवतरूपिणम् ॥२७॥ गणेशक्षेत्रमत्रैव भवतु त्वत्प्रसादतः। सर्वसिद्धिप्रदं नाथ भक्तेभ्यः शांतिदायकम् ॥२८॥ चित्तभूमिधरं वीक्ष्याऽहं शांतोऽत्र गजानन। धरणीधरसंज्ञं त्वां वदिष्यंति जनाः प्रभो ॥२९॥ येनाऽहं वै गणाध्यक्ष त्वद्रूपो नाऽत्र संशयः। अतो मदीयनाम्ना त्वं धरणीधरको भव ॥३०॥ अहं धराधरः प्रोक्तः स्थूलशब्दप्रधारकः। त्वं चित्तभूमिगः स्वामिन् योगेन धरणीधरः ॥३१॥ एवमुक्त्वा गणेशानं विरराम च काश्यपः। तमुवाच गणाधीशः संतुष्टो भक्तवत्सलः ॥ ३२॥ श्रीगणेश उवाच। त्वयोक्तं सकलं शेष सफलं ते भविष्यति। सदा शांतिस्वरूपस्थो मां भजिष्यसि निश्चितम् ॥ ३३॥

योगशास्त्रस्य कर्ता वै त्वं भविष्यसि मानद । न योगे त्वत्समः क्वापि भविष्यति महामते ॥३४॥ सदा भक्तिकरस्त्वं मे नाभौ तिष्ठ धराधर । श्रमहीनः स्वभावेन मां भजस्व विशेषतः ॥३५॥ धराधरणदुःखश्रमादिकं वै कदाचन । न भविष्यति ते शेष सर्षपेण समा भवेत् ॥३६॥ तव विष्णुः शरीरस्थः शयिता नित्यमादरात् । पुष्पतुल्यो भवेद्देवः सोऽपि ब्रह्मांडनायकः ॥३७॥ सदा यज्ञेषु भागस्थो भविष्यसि न संशयः । दिक्पालस्त्वं महाभाग सर्वमान्यो न संशयः ॥३८॥ एवमुक्त्वा गणाधीशो रूपं नानाविधं स्वकम् । दर्शयामास शेषाय नाना योगधरं परम् ॥३९॥ समष्टिव्यष्टिरूपं च ददर्श नादरूपकम् । बिंदुं सोऽहं तथा बोधं विदेहं नागराट् प्रभो ॥४०॥ स्वस्वरूपमयोगस्थं योगशांतिमयं तथा । ददर्श विस्मितः शेषोऽभवत् संशयवर्जितः ॥४१॥ अंतर्धानं ययौ सद्यो गणेशो ब्रह्मनायकः । शेषस्तत्र गणेशानं स्थापयामास विप्रपैः ॥४२॥ धरणीधरविघ्नेशोऽभवत्तत्रैव संस्थितः । भक्तेभ्यः सिद्धिदाता स यात्रामात्रेण निश्चितम् ॥४३॥ शेषो जगाम दक्ष स्वभवनं हर्षसंयुतः । विघ्नराजस्य नाभौ च स्वयं तिष्ठति नागराट् ॥४४॥ अनन्यभावसंयुक्तोऽभजत्तं गणनायकम् । अथो व्यासावतारश्च बभूवे धर्मपालकः ॥४५॥ ब्रह्माणं शरणं गत्वा गाणेशं शुश्रुवे मुनिः । पुराणं स तथा देवमभजत्तपसा युतः ॥४६॥ प्रसन्नो गणराजः स तस्मै दत्वा ययौ वरम् । वेदशाखादिकं सर्वं चकार भिन्नमादरात् ॥४७॥ ततो बहौ गते काले मायया भ्रांतिसंयुतः । योगभ्रष्टोऽभवद्योगी चित्तचंचलभावतः ॥४८॥ कदा नदीजले व्यासस्तर्पणं नित्यमाकरोत् । तस्यांजलौ स्वयं शेषः पपात सूक्ष्मरूपधृक् ॥४९॥ तं दृष्ट्वा विस्मितो व्यासस्तत्याज स जले भयात् । मुनिं तं प्रत्युवाचेदं सर्पोऽगुष्ठप्रमाणकः ॥५०॥ सर्प उवाच । जले सत्त्वा महोग्राश्च प्रग्रसिष्यंति मां प्रभो । रक्षस्व त्वं महाभाग शरणं त्वां समागतम् ॥५१॥ तच्छ्रुत्वा विस्मितो व्यासस्तं प्रणम्य महायशाः । जगाद हर्षसंयुक्तो वचनं स्वहितावहम् ॥५२॥ व्यास उवाच । कस्त्वं वद महाभागांऽजलौ मम समागतः । नरवन्नाथ वदसि न त्वां जानामि भावतः ॥५३॥ तस्य तद्वचनं श्रुत्वा तं जगाद पतंजलिः । हर्षयन् हेतुगर्भाभिर्वाग्भिर्हर्षसमन्वितः ॥५४॥ चिंतनं यदि संत्यक्तं तदा कुत्र प्रवर्तते । अपूर्वं मुनिशार्दूल मायया पृच्छसि प्रभो ॥५५॥ मायया सर्पजातिस्थो नरवद्भाषणं सदा । करोति नात्र संदेहो न तया दुर्लभं भवेत् ॥५६॥ तस्य तद्वचनं श्रुत्वा तं प्रणम्य मुनिः पुनः । पप्रच्छ ते स्वरूपं मे दर्शयस्व नमो नमः ॥५७॥ ततो नराकृतिर्भूत्वा संस्थितो भगवान् स्वयम् । शेषो ब्राह्मणरूपस्थस्तं जगाद महामुनिम् ॥५८॥ पतंजलिरुवाच । तवांजलौ

महाभाग पतितोऽहं हिताय ते। पतंजलिं च मां विद्धि मुने शेषं धराधरम् ॥५९॥ गणेशाऽनेन विप्रेश प्रेरितं मां विशेषतः। भ्रांतिनाशार्थमेवं ते जानीहि सहसाऽऽगतम् ॥६०॥ ज्ञात्वाऽतिहर्षितो व्यासः प्रणम्य तमुवाच ह। चिंतनं च कथं नाथ त्यक्तव्यं चित्तगेन तु ॥६१॥ नानाभावमिदं दृष्ट्वा तत्र तत्तादृशं भवेत्। चित्तं नागेंद्रवंद्य त्वं वदस्वातिमहाद्भुतम् ॥६२॥ योगशास्त्रं स्वयं तस्मै जगाद स पतंजलिः। यथा विघ्नेश्वरेणैव दर्शितं तादृशं परम् ॥६३॥ विप्रेशोऽतर्हितो योगी शेषः सर्वार्थदायकः। व्यासस्तत्र प्रजानाथ खेदयुक्तो बभूव ह ॥६४॥ शुश्राव स यथाशास्त्रं परं शेषमुखात् पुरा। तथा चित्तं समागृह्य योगिवंद्यो बभूव ह ॥६५॥ पंचधा चित्तभूमिस्थस्त्यक्त्वा तच्चिंतनं स्वयम्। चिंतामणौ तदाकारो बभूव मुनिसत्तमः ॥६६॥ तस्य भाष्यं चकारापि व्यासो गूढार्थसिद्धये। नराणां प्रहितार्थाय सुगमार्थं प्रजापते ॥६७॥ इदं शेषस्य माहात्म्यं कथितं योगशांतिदम्। अधुना शृणु दक्ष त्वं प्रकृतं यत् कथानकम् ॥६८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते शेषाख्यानवर्णनं नामाष्टादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। हृदयाद्बहिरागत्य शेषस्य गणनायकः। पुत्रभावेन संस्थोऽभून् मूषकारूढ आदरात् ॥१॥ तत उत्थाय शेषस्तं प्रणनाम कृतांजलिः। पूजयामास सर्वेशं पुनः स प्रणतोऽभवत् ॥२॥ अथर्वोपनिषद्भिस्तं तुष्टाव करसंपुटैः। नागेशः प्रार्थयामास भक्तिनम्रात्मकंधरः ॥३॥ शेष उवाच। योगेशस्त्वं गणाध्यक्ष ब्रह्मणां नायकः स्मृतः। कथं मे पुत्रभावेन संस्थितोऽसि विडंबनम् ॥४॥ ततो गजाननस्तं वै मोहयामास मायया। मोहितो नागराजस्तं पुत्रं मेने गजाननम् ॥५॥ शेषः सस्त्रीक आगृह्य लालयामास बालकम्। क्रमेण पंचवर्षस्थो बभूवे तद्गृहे प्रभुः ॥६॥ अथ शृणु प्रजानाथ वृत्तांतं दैत्यसंभवम्। मायाकरासुरो दुष्टश्चकार कर्मखंडनम् ॥७॥ आसुरं कर्म सर्वत्र कृतं तेन दुरात्मना। तेनोपोषणसंयुक्ता बभूवुर्देवनायकाः ॥८॥ ततो हाहाकृतं सर्वैर्वर्णाश्रमयुतैर्जनैः। न स्वाहा न स्वधाद्यं वै कर्तुं केनाऽपि शक्यते ॥९॥ ततो मुनिवराः सर्वे देवाः शंभुपुरोगमाः। विचारं दैत्यनाशार्थं चक्रुर्भयसमन्विताः ॥१०॥ तत्रोवाच

महायोगी बृहस्पतिरुदारधीः। गणेशं भक्तिसंयुक्ता भजध्वं पदप्राप्तये ॥११॥ चतुःपदार्थसंयोगे गणेशो निजबोधकः। चतुर्भिर्वर्जितश्चाऽयं हनिष्यति महाखलम् ॥१२॥ श्रुत्वा ते गुरुसंयुक्तास्तपस्तेपुर्महत् प्रभो। निराहारादिसंयुक्ता नानाऽनुष्ठानतत्पराः ॥१३॥ गते वर्षशते पूर्णे प्रसन्नोऽभूद् गजाननः। आययौ तान् वरान् दातुं भक्त्या तुष्टो महायशाः ॥१४॥ तं दृष्ट्वा हर्षसंयुक्ता देवा मुनय आदरात्। प्रणेमुः पूजयामासुस्तुष्टुवुर्विविधैः स्तवैः ॥१५॥ वरयामासुराहत्य गणेशं सर्वनायकम्। दैत्यं जहि गणाध्यक्ष प्रभो मायाकरासुरम् ॥१६॥ तथा मायाविहीनां वै भक्तिं देहि त्वदीयकाम्। दासास्ते पादपद्मस्य वयं सर्वे न संशयः ॥१७॥ श्रुत्वा तान् गणराजस्तु जगाद हर्षसंयुतः। मायाकरं हनिष्यामि शेषपुत्रोऽहमंजसा ॥१८॥ यदि मे वाहनं तत्र मुख्यं भवति देवपाः। चतुर्देवमयं विप्रास्तदाऽऽरोहं करोम्यहम् ॥१९॥ मदीया भक्तिरुग्रा वो भविष्यति तु निश्चितम्। सुदृढा मे सदा दासा भविष्यथ विशेषतः ॥२०॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो देवनायकः। शेषध्यानात् समुद्भूतो भक्तानां कार्यसिद्धये ॥२१॥ अथो देवर्षिमुख्यास्ते विचारं चक्रुरंजसा। चतुर्देवमयं तस्य वाहनं कीदृशं भवेत् ॥२२॥ सर्वास्तत्र शिवः साक्षादुक्तवान् वाक्यमुत्तमम्। वेदमूर्तिमयो देवः सर्वेषां गुरुरंजसा ॥२३॥ शिव उवाच। अयं मूषकवाहश्च वेदेषु कथितोऽभवत्। मूषस्तेये तथा धातुर्ज्ञातव्यः स्तेयब्रह्मधृक् ॥२४॥ नामरूपात्मकं सर्वं तत्राऽसद्ब्रह्म वर्तते। नामरूपेषु ये भोगास्तेषां भोक्ता स्वमायया ॥२५॥ भोगेषु भोगभोक्ता यस्तदाकारेण वर्तते। अहंकारयुतास्ते वै न जानंति विमोहिताः ॥२६॥ वयं भोक्तार एवं ते मानयंति विशेषतः। ईश्वरः सर्वभोक्ता च चौर्यवृत्तिषु संस्थितः ॥२७॥ स एव मूषकः प्रोक्तो मनुजानां प्रचालकः। मायया गूढरूपो भोगान् भुनक्ति स चोरवत् ॥२८॥ तद्वज्जीवनगो देवः सूर्य आत्मा विशेषतः। नाना जीवेषु भोगान् भुनक्ति वै चौरवत् स्वयम् ॥२९॥ समेषु सर्वभोक्ता च विष्णुस्तद्वन्न संशयः। सदसन्मयरूपश्च चौरवन् मायया प्रभुः ॥३०॥ सहजेषु तथा देवः शिवो भोक्ता तुरीयगः। चौरवन्नाऽत्र संदेहो युतो निर्मोहमायया ॥३१॥ भोक्तारं चौरभावस्थं वाहनं कुरुत प्रियाः। मूषकाकृतिरूपं वै दीयतां गणपाय तत् ॥३२॥ श्रुत्वा ते हर्षिताः सर्वे शिवं देवर्षयोऽब्रुवन्। साधु साधु त्वया प्रोक्तं सर्वज्ञस्त्वं सदाशिव ॥३३॥ ततो गणेश्वरं ध्यात्वा चतुर्भिः कल्पितं वपुः। तत्र स्वांशं ददुर्देवा भोक्तृरूपं प्रजापते ॥३४॥ तदंशेन सजीवोऽभून् मूषको बलसंयुतः। ब्रह्मा देवर्षिभिः सार्धमभिषेकं चकार ह ॥३५॥ अंतर्बाह्यादिकं स्तेयं परं सर्वत्र वर्तते।

नानाविधं तथैकं च तेषु राजाऽयमुच्यते ॥३६॥ अभिषिक्तः स्वयं तत्र मूषको हर्षितोऽभवत् । यज्ञभागस्य भोक्ताऽसौ कृतो देवैः सवासवैः ॥३७॥ संगृह्य सर्वदेवास्तं मुनयः शेषमंदिरम् । आजग्मुस्तान् समालोक्य शेषश्च विस्मितोऽभवत् ॥३८॥ पूजयामास सर्वान् स नागराजो महायशाः । नानाऽऽसनेषु संस्थाप्य पुनस्तान् प्रत्युवाच ह ॥३९॥ शेष उवाच । धन्यं मे जन्म दानं वै तपो ज्ञानं स्वभावजम् । पितरो मुनयो देवा दर्शनाद्भवतां किल ॥४०॥ किमर्थमागताः सर्वे वदत मां सुरर्षयः । भवतां कृपया युक्तः करिष्यामि सुभक्तितः ॥४१॥ तस्य तद्वचनं श्रुत्वा शंकरः सर्वनायकः । जगाद नागराजं तं हर्षयन् हर्षवर्धनः ॥४२॥ शिव उवाच । शेष शेष महाभाग धन्यस्त्वं सर्वमंडले । तव पुत्रत्वमापन्नो ब्रह्मणां नायकः प्रभो ॥४३॥ मूषकगोऽवतारोऽयं पंचवर्षवयोन्वितः । मा पुत्रं तं विजानीहि तपसा ध्यानजं प्रभुम् ॥४४॥ तस्येदं वाहनं मुख्यं चतुर्देवकलांशजम् । स्तेयधर्मधरं पूर्णं सर्वेषां हृदि वर्तते ॥४५॥ अस्योपरि समारुह्य मूषकगः प्रतापवान् । मायाकरासुरं सद्यो हनिष्यति गणेश्वरः ॥४६॥ एवं तेषां वचः श्रुत्वा खेदयुक्तः स नागराट् । न किंचित् संजगौ देवान् पुत्रवत्सलभावतः ॥४७॥ ततस्तं शंकरो देव उवाच वचनं पुनः । मा खेदं कुरु कल्याण विघ्नहा न मरिष्यति ॥४८॥ तपोभिर्विविधैर्देवैः मुनिभिः प्रार्थितोऽभवत् । मायाकरविनाशाय तव पुत्रो गजाननः ॥४९॥ त्वयाऽऽदौ तपसा देव आराधितो गजाननः । वरदानप्रभावेण तव पुत्रो बभूव ह ॥५०॥ एतस्मिन्नंतरे मूषकगस्तत्र समागतः । नागबालैर्महाभागैः क्रीडायुक्तो गजाननः ॥५१॥ समुत्तस्थुः प्रणेमुस्तं दृष्ट्वा विप्राः सदेवपाः । तुष्टुवुः सामवेदस्थेन स्तोत्रेण गणेश्वरम् ॥५२॥ ततस्तान् गणराजो वै वचनं हितकारकम् । उवाच वृणुत प्राज्ञा वरं मनेप्सितं परम् ॥५३॥ ततोऽतिहर्षसंयुक्तास्तमूचुस्ते सुरर्षयः । मायाकरासुरं स्वामिन् जहि सर्वभयंकरम् ॥५४॥ भक्तिं देहि गणाधीश तव पादे च निश्चलाम् । दासा वयं गणेशान पालयस्व विशेषतः ॥५५॥ तथेति तानुवाचाऽथ वाहनं मे न वर्तते । अतो योग्यं महादेवा वाहनं दीयतां परम् ॥५६॥ चतुःपदार्थरूपेभ्यो मरणं न प्रविद्यते । मायाकरस्य दुष्टस्य कथं कार्यं मया सुराः ॥५७॥ चतुःपदार्थरूपं मे वाहनं यदि जायते । तदाऽहं तं हनिष्यामि नाऽत्र कार्या विचारणा ॥५८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते मूषकदेवसमागमो नाम एकोनविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। मूषकगवचः श्रुत्वा देवेंद्रा हर्षिता बभुः। ऊचुः प्रांजलयस्तं ते विघ्नेशं विघ्नवारणम् ॥१॥ देवर्षय ऊचुः। चतुर्ब्रह्ममयं देव वाहनं ते प्रवर्तते। स्वानंदे मूषकाख्यं च सर्वभोगकरं परम् ॥२॥ अधुना भोगकारं तु चतुर्भिः शिवमुख्यकैः। कृतं स्वस्वकलांशेन वाहनं ते गजानन ॥३॥ जीवेषु सर्वभोक्ता वै चौरवत् परमेश्वरः। तदेव वाहनं तेऽभूद् गृहाण स्तेयरूपिणम् ॥४॥ एवमुक्त्वा गणेशानं देवा मुनिसमन्विताः। तुष्टुवुस्तं महावीर्यं मूषकं मूषकाकृतिम् ॥५॥ देवर्षय ऊचुः। नमस्ते स्तेयरूपाय सर्वहृत्स्थाय धीमते। अंतर्भोगकरायैव मूषकाय नमो नमः ॥६॥ मायया स्तेयरूपिण्या मोहयित्वा चराचरम्। चौरवद्भोगकर्ता त्वं चौररूपाय ते नमः ॥७॥ चराचरमयायैव चराचरधराय ते। सर्वाधीशाय लोकाय कालकालाय ते नमः ॥८॥ अनादये महेशाय चतुर्वर्गप्रदायिने। गणेशवाहनायैव गणेशध्वजसंस्थित ॥९॥ सर्वत्रग गणाधीशस्त्वया हृत्स्थ न संशयः। चालकात्मकवीर्यं यद्गणेशस्य त्वमंजसा ॥१०॥ ब्रह्माकारशरीराय स्तेयानां स्वस्वरूपिणे। नमो नमः परेशाय चतुर्मयस्वरूपिणे ॥११॥ चतुर्णां गणपः पाता त्वया तद्रूपधारिणा। भव वाहनमुख्यं वै गणेशस्याऽधुना प्रभो ॥१२॥ इति स्तुतः प्रसन्नात्मा मूषकस्तानुवाच ह। भविष्यामि महाभागा वाहनं गणपस्य च ॥१३॥ एवमुक्त्वा गणेशानं प्रभुं तुष्टाव लब्धधीः। मूषको दर्शनेनैव हर्षयुक्तो महाद्युतिः ॥१४॥ मूषक उवाच। देवाय योगरूपाय नमो मूषकगाय ते। गणेशाय परेशाय परात्परतराय ते ॥१५॥ अनंताय महेशाय महेशैः संस्तुताय च। विघ्नेशाय महाविघ्नधारिणे ते नमो नमः ॥१६॥ अनंतसूनवे तुभ्यं दैत्यदानवमर्दिने। देवानां पालकायैव हेरंबाय नमो नमः ॥१७॥ स्वानंदवासिने तुभ्यं भक्तस्वानंददायिने। ब्रह्मणे ब्रह्मणां चैव पतये ते नमो नमः ॥१८॥ चतुर्णां चालकायैव चतुःसंयोगमूर्तये। चतुर्णां पददात्रे ते तैर्हीनाय नमो नमः ॥१९॥ योगेशयोगरूपाय योगिभ्यो योगदायिने। शांतिरूपाय वै तुभ्यं शांतिदाय नमो नमः ॥२०॥ मूषकवाहनायैव मूषकध्वजिने नमः। सिद्धिबुद्धिपते नाथ भक्तेशाय नमो नमः ॥२१॥ वेदवाक्यप्रमाणेन मां कुरुष्व गजानन। वाहनं भक्तिसंयुक्तं सेवार्थे ते नमो नमः ॥२२॥ इदं मूषकगो नाम मदीयं तु त्वया धृतम्। अतोऽभेदमयीं भक्तिं देहि नाथ नमो नमः ॥२३॥ मदीयनाथरूपेण नाम ते चाऽभवत् प्रभो। ततो मूषकगो भक्तं मां कुरुष्व महाद्भुतम् ॥२४॥ एवं स्तुत्वा गणाधीशं प्रणनाम स दंडवत्। भक्तिसंयुतमुत्थाप्य गणाधीशो जगाद तम् ॥२५॥ मूषकग उवाच। वाहनं मे सदा साधो भविष्यसि

महामते। मदीया भक्तिरत्यंतं सुदृढा ते भविष्यति ॥२६॥ त्वया कृतमिदं स्तोत्रं मदीयं भक्तिदं भवेत् । धर्मार्थकाममोक्षाणां दायकं सर्वदं परम् ॥२७॥ पठते शृण्वते चैतत् पुत्रपौत्रादिकप्रदम् । यद्यदिच्छति तत्तद्वै सफलं प्रभविष्यति ॥२८॥ अन्यत्त्वं शृणु मे वाक्यं देवैर्विप्रैः कृतं महत् । स्तवनं सर्वमान्यं ते भविष्यति न संशयः ॥२९॥ यस्त्वां स्तोष्यति चौरेशस्तोत्रेणानेन मानवः । स सर्वं लभते नित्यमीप्सितं नाऽत्र संशयः ॥३०॥ अंते स्वानंदगो भूत्वा ब्रह्मभूतो भविष्यति । मदीयकृपया सोऽपि त्वत्समो मे प्रियो भवेत् ॥३१॥ एवमुक्त्वा महादेवं मूषकं गणनायकः । तमारुह्य ययौ तत्र यत्र दैत्याधिपोऽभवत् ॥३२॥ ते देवराजास्तमनुदेवाश्च मुनयः प्रभो । नागाः शेषमुखाः सर्वे ययुर्ब्रह्मसमन्विताः ॥३३॥ ब्रह्माणं प्रेषयामास मूषकगः प्रतापवान् । दूतं मायाकरस्याऽग्रे बोधार्थं नीतिपालकः ॥३४॥ गत्वा तमसुरं ब्रह्मा जगाद वचनं हितम् । आखुवाहं च शरणं याहि नो चेन् मरिष्यसि ॥३५॥ चतुर्णां ब्रह्मणां मूषकगो योगे प्रकीर्तितः । स्वानंदवासकारी स गणेशोऽयं विचारय ॥३६॥ सुरासुरमयश्चायं गच्छतं भक्तिसंयुतः । मम पुत्रत्वमापन्नो हितं ते प्रवदाम्यहम् ॥३७॥ ब्रह्मणो वचनं श्रुत्वा क्रोधयुक्तस्तमब्रवीत् । मायाकरासुरः पापी पापयुक्तेन चेतसा ॥३८॥ मायाकरासुर उवाच । त्वं देवपक्षगो भूत्वा मोहनार्थं समागतः । पंचमं ब्रह्म सर्वत्र योगरूपं प्रतिष्ठति ॥३९॥ तदेव नागतं कुत्र न गतं च प्रजापते । समागतं गणेशानं तं हनिष्यामि सामरम् ॥४०॥ त्वं गच्छ दूतरूपेणागतस्तस्मान् महामते। सहामि तेऽपराधं वै नोचेद्धन्मि सुरप्रियम् ॥४१॥ ततो ब्रह्मा गणेशानमाययौ प्रणिपत्य तम्। वृत्तांतं कथयामास तच्छ्रुत्वा क्रोधमादधे ॥४२॥ देवानाज्ञापयामास जेतुं मूषकगोऽपि तम् । ततस्ते शस्त्रसंघातैर्जघ्नुर्दैत्यगणान् मृधे ॥४३॥ असुराः छिन्नभिन्नास्ते पपलुर्गुल्मसंस्थिताः । सभासीनं समाचख्युर्वचो मायाकरासुरम् ॥४४॥ दैत्या ऊचुः । किं स्थितोऽसि महावीर देवाः क्रोधसमन्विताः । आगता नगरं सर्वं तेषामस्त्रैः सुपीडितम् ॥४५॥ तेषां तद्वचनं श्रुत्वा क्रोधयुक्तः समाययौ । प्रधानैरसुरैः सर्वैः संवृतो रणमंडलम् ॥४६॥ मायाकरं समालोक्य पपलुर्देवसत्तमाः । आगम्य तं मूषकगं शशंसुश्चेष्टितं महत् ॥४७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते मूषकगमायाकरासुरसमागमो नाम विंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । मायाकरासुरं वीक्ष्य तुतोष गणनायकः । मूषकं स समारुह्य ययौ संग्राममंडलम् ॥१॥ चतुरायुधसंयुक्तं दृष्ट्वा विघ्नेश्वरं खलः । दैत्यानाज्ञापयामास देवानां हननाय सः ॥२॥ ततो दैत्यगणाः सर्वे क्रोधयुक्ता महाबलाः । ववृषुः शस्त्रधाराभिर्मेघा इव सुदुर्मदाः ॥३॥ दृष्ट्वा देवगणाः क्रुद्धा युयुधुस्तान् समागतान् । एवं युद्धं महाघोरं सैन्ययोरुभयोरभूत् ॥४॥ परस्परं मम्रुरेत्य संमुखं ते जयेप्सवः । रक्तौघैः सरितस्तत्र संजाता भयदायिकाः ॥५॥ कदाचिज्जयिनो दैत्याः कदाचिदमरा मृधे । न रात्रौ विश्रमं ते तु चक्रिरे क्रोधसंयुताः ॥६॥ एवं दिनानि सप्तैव युयुधुः शस्त्रकोविदाः । पलायंतामरा भिन्ना हाहारवकरा भृशम् ॥७॥ तद् दृष्ट्वा शंकरः क्रुद्ध आययौ रणमंडले । ततो विष्णुमुखा देवा युयुधुः क्रोधसंयुताः ॥८॥ तेषां शस्त्रप्रहारेण मृता दैत्या अनेकशः । प्रजापते पलायंत भयभीता दिशो दश ॥९॥ मूर्च्छिता दैत्यराजास्ते सर्वे भूतलमाश्रिताः । दृष्ट्वा सिंहरवं मायाकरः कृत्वा समागतः ॥१०॥ क्रोधयुक्तो महादैत्यः शस्त्रवृष्टिं चकार ह । तया देवाः क्षता भूमौ पेतुः सर्वे प्रजापते ॥११॥ अग्न्यस्त्रेण महादैत्यः पातयामास शंकरम् । अन्ये दाहयुताः सर्वे पलायंत दिशो दश ॥१२॥ एवं मूषकगस्तस्य बलं दृष्ट्वा तुतोष ह । स्वयं समागतो हर्षाद्रणभूमौ महाबलः ॥१३॥ दृष्ट्वा मूषकसंस्थं तमवोचद् दैत्यनायकः । क्रोधयुक्तः प्रहस्याऽऽदौ वचनं मद्यपो यथा ॥१४॥ मायाकरासुर उवाच । किं संग्रामाय विघ्नेश मया सह समागतः । एकबाणेन हत्वा त्वां हनिष्यामि सुरान् मुनीन् ॥१५॥ चतुःपदार्थरूपं वै जगत् सर्वं प्रवर्तते । तस्मान्मे मरणं नास्ति किं करिष्यसि देवप ॥१६॥ ब्रह्मांडं निर्जितं येन तेन सार्धं गजानन । योद्धुमिच्छसि बालः सन् बालभावान्न संशयः ॥१७॥ नत्वा मां स्वगृहं याहि न हनिष्यामि निश्चितम् । त्वामज्ञानसमायुक्तं प्रेरकांस्तान्निहन्म्यहम् ॥१८॥ नाम मूषकगस्तेचाखुतुल्यस्त्वं मतो मम । मूर्खवन्नैव जानासि मां सर्वभयदायकम् ॥१९॥ एवं मायाकरं वीक्ष्य ब्रुवंतं स्वपराक्रमम् । मूषकगस्तमेवं वै जगाद वचनं हितम् ॥२०॥ मूषकग उवाच । किं मां वदसि दैत्येंद्र नाऽहं बालोऽसुराधम । स्वानंदवासकारी वै त्वां हंतुं रूपवान् परः ॥२१॥ हनिष्यामि न संदेहश्चतुर्भिर्वर्जितोऽधुना । बालस्य पश्य मे मूर्ख पौरुषं दैत्यनायक ॥२२॥ इत्युक्त्वा क्रोधसंयुक्तः कमलं निजहस्तगम् । बिंदुब्रह्ममयं ज्योतिस्तत्याज मूषकेशगः ॥२३॥ आगतं कमलं दृष्ट्वा ज्योतीरूपमयं महत् । मायाकरासुरस्तद्वै जग्राह बलगर्वितः ॥२४॥ गृहीतं दैत्यराजेन हस्तगं न च हस्तगम् । पपात कंठदेशेऽस्य ममार दैत्यनायकः ॥२५॥ कमलं

गणराजस्य हस्तगं पुनरंजसा । बभूव चासुरेशाना विस्मिताः संबभूविरे ॥२६॥ अहो मायाकरो राजा कथं ममार गर्वितः । शरीरं यादृशं तस्य तादृशं दृश्यतेऽधुना ॥२७॥ तेजः समागतं ह्यत्र तेन तेजो हृतं मृधे । शस्त्रघातविहीनोऽयं ममार दैत्यनायकः ॥२८॥ ततो दैत्यगणाः सर्वे भयभीताः समंततः । पातालं विविशुर्दक्ष देवा हर्षयुता बभुः ॥२९॥ मूषकगं नमस्कृत्य मुनिभिस्तत्त्वकोविदैः । सर्वे पुपूजुर्देवेशास्तुष्टुवुः करसंपुटैः ॥३०॥ देवर्षय ऊचुः । सर्वेषां भोगभोक्त्रे मूषकगाय नमो नमः । सर्वदेवाधिदेवाय गणेशाय नमो नमः ॥३१॥ लंबोदराय विघ्नानां नायकाय परात्मने । भक्तानां विघ्नहर्त्रे ते विघ्नदात्रे दुरात्मनाम् ॥३२॥ हेरंबाय नमस्तुभ्यं भक्तवत्सलरूपिणे । स्वानंदवासिने चैव परेशाय नमो नमः ॥३३॥ महोदराय पूज्याय सर्वेषां सर्वरूपिणे । सर्वादिपूज्यकायैव वक्रतुंडाय ते नमः ॥३४॥ त्रिनेत्राय चतुर्हस्तकमलस्य धराय ते । मूषकोपरिसंस्थाय ज्येष्ठराजाय ते नमः ॥३५॥ अमेयाय गणाध्यक्ष शूर्पकर्णप्रधारिणे । सर्वेशाय नमस्तुभ्यं ब्रह्मणे ब्रह्मरूपिणे ॥३६॥ अनादये तथा मध्ये नानारूपधराय ते । अंते तादृशरूपाय त्रिस्वरूपाय वै नमः ॥३७॥ शेषपुत्राय शैवाय पाराशर्याय ते नमः । सर्वेषां जनकायैव मात्रे ब्रह्मेश ते नमः ॥३८॥ स्रष्ट्रे पात्रे च संहर्त्रे गणेशाय नमो नमः । शांतिरूपाय शांतिभ्यः शांतिदाय नमो नमः ॥३९॥ अपारगुणधाराय योगिनां हृदि संस्थित । तत् किं स्तुमो नः प्रसीद गणाधीश नमो नमः ॥४०॥ एवं स्तुत्वा गणेशानं प्रणेमुस्ते सुरर्षयः । प्रसन्नात्मा मूषकगस्तानुवाच प्रहर्षितः ॥४१॥ मूषकग उवाच । कृतं मे स्तवनं सर्वैर्भवद्भिः सर्वदं भवेत् । यद्यदिच्छथ तत्तद्दास्यामि वै भक्तितंत्रितः ॥४२॥ पठतां शृण्वतां नित्यं स्वाधीनोऽहं भवामि च । भुक्तिमुक्तिप्रदं पूर्णं पुत्रपौत्रादिवर्धनम् ॥४३॥ वरं वृणुत देवेशा देवा मुनिसमन्विताः । दास्यामि स्तोत्रतुष्टोऽहं वाञ्छितं नात्र संशयः ॥४४॥ देवर्षय ऊचुः । मायाकरासुरस्यैव त्वया नाशः कृतो महान् । तेन तुष्टा गणाधीश किं वदामो वरं परम् ॥४५॥ भक्तिं देहि दृढां नाथ त्वदीयां शांतिदायिनीम् । तया वयं गणेशान कृतकृत्या न संशयः ॥४६॥ तथेति तानुवाचाथ गणेशोंऽतर्दधे स्वयम् । देवाः खिन्ना ययुः सर्वे स्वस्वस्थानं निरामयाः ॥४७॥ मुनयः स्वाश्रमं जग्मुर्महाहर्षसमन्विताः । पूर्ववत् कर्मकर्तारो बभूवुः सर्वजंतवः ॥४८॥ शेषः संमूर्च्छित-स्तत्र पपात धरणीतले । हृदि तस्य गणेशानः प्रकटोऽभूच्च तत्क्षणात् ॥४९॥ जगाद तं महानागं मन्मूर्तिस्थापनं कुरु । तत्र पूजापरो भूत्वा कालं क्राम च सर्पप ॥५०॥ पातालविवरे क्षेत्रं भविष्यति सुसिद्धिदम् । तत्र मां पूजयिष्यंति

तेभ्यः सर्वं ददाम्यहम् ॥५१॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः । शेषः स्वगृहमागत्य तथा चक्रे स भावतः ॥५२॥ शतयोजनपर्यंतं क्षेत्रं गणपतेः स्मृतम् । पाताले सिद्धिदं सर्वं स्वानंदं कथ्यतेऽपरम् ॥५३॥ तत्र पूजनमात्रेण वाञ्छितं लभते नरः । अनुष्ठानविधानेन ब्रह्मभूयं लभेत्तथा ॥५४॥ इदं ते कथितं दक्ष मूषकगस्य चेष्टितम् । भुक्तिमुक्तिप्रदं पूर्णं श्रवणात् पठनान्नृणाम् ॥५५॥ जगत्सु ब्रह्मसु स्थित्वा चौरवद् गणनायकः । भुनक्ति भोगकान् सर्वांस्तेनाऽयं मूषकध्वजः ॥५६॥ भक्तानां स्मरणेनाऽयं पुण्यपापभवं मलम् । हृत्वा ब्रह्ममयांस्तांश्च कुरुते मूषकध्वजः ॥५७॥ ज्येष्ठशुक्लचतुर्थ्यां महोत्सवो वै प्रवर्तते । जनुस्तिथिर्गणेशस्यांगारकी मध्यगे रवौ ॥५८॥ स्तेयानां विविधानां स राजवाहोऽयमुच्यते । ततो मूषकगो लंबोदरः प्रोक्तः प्रजापते ॥५९॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते मूषकगावतारचरितं नाम एकविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । लंबोदरावतारो मूषकगोऽयं प्रकीर्तितः । स एव शक्तिपुत्रोऽभूत्तच्छृणुष्व प्रजापते ॥१॥ शक्तिलोकस्थिता देवी निर्ममे सकलं जगत् । तद्रक्षणविहारार्थं त्रिधाऽभूत् साऽपि मायया ॥२॥ महाकाली तथा दक्ष महालक्ष्मीः प्रकीर्तिता । महासरस्वती प्रोक्ता भक्तानां भेदनाशनात् ॥३॥ ताभ्यो नानाविधा जाता देव्यो दुर्गादिकाः किल । देवीभिः सहिता साऽपि तताप तप उत्तमम् ॥४॥ एकाक्षरविधानेन दिव्यवर्षसहस्रकम् । ततः प्रसन्नभावेन विघ्नेशो वरदोऽभवत् ॥५॥ स्तुतः संपूजितस्ताभिर्वरं चित्तेप्सितं ददौ । बहुत्वान्नो कथयितुं भवेच्छक्यं प्रजापते ॥६॥ वरस्यैव प्रभावेण स्वस्वकार्यरता बभुः । देव्यो लंबोदरं नित्यं भजंते कुलदैवतम् ॥७॥ आदिशक्तिर्महामाया शांत्यर्थं पुनरारभत् । तपो दुष्करमत्यंतं ततः शांतिमवाप सा ॥८॥ तथापि तपसा युक्ता पुपूज गणनायकम् । ततो वर्षेषु पूर्णेषु शते हृदि समागतः ॥९॥ तं दृष्ट्वा हृदि संस्थं सा तुष्टाव विविधैः स्तवैः । ततो बहिर्विनिःसृत्य जगाद जगदंबिकाम् ॥१०॥ पुत्रोऽहं ते महाभागे ध्यानजो नाऽत्र संशयः । पश्य मां त्वं महामाये स्थितं लंबोदरं बहिः ॥११॥ सा प्रबुद्धा बहिर्लंबोदरं

वीक्ष्य तुतोष ह । अथर्वशिरसा देवी तुष्टवापूज्य साश्रुका ॥१२॥ तुष्टस्तां गणराजश्च जगाद वृणु वाञ्छितम् । दास्यामि भक्तियुक्तायै पुत्रोऽहं पालयस्व माम् ॥१३॥ शक्तिरुवाच । अनेन वपुषा नाथ स्थिरो भव गजानन । भक्तिं देहि दृढां वत्स तव पादांबुजे पराम् ॥१४॥ योगिनां ध्यानजं ब्रह्म पुत्रो वेदे प्रकीर्तितः । तत्र किं चित्रमेवेदं विनायक कृतं त्वया ॥१५॥ श्रुत्वा तां गणराजस्तु जगाद वचनं हितम् । मन्मूर्तिस्थापनं कृत्वा पूजयस्व निरंतरम् ॥१६॥ पुत्रवत्सलतां तत्र कुलदेवत्वमादरात् । ब्रह्मभावं तथा देवि कुरु त्वं सर्वदा मयि ॥१७॥ तत्र पूजोपचाराद्यैः पूजयस्व निरंतरम् । तया त्वं कृतकृत्या च भक्तियुक्ता भविष्यसि ॥१८॥ एवमुक्त्वांऽतर्दधेऽसौ लंबोदरः प्रजापते । शक्तिस्तथैव कृत्वा तं भजते ब्रह्मनायकम् ॥१९॥ एवं नानाऽवताराश्च लंबोदरस्य मानद । भक्तानां सर्वसिद्ध्यर्थं भजतां परमाद्भुताः ॥२०॥ रक्तदंतादिभिश्चैव देवीभिस्तपसा प्रभुः । आराधितो वधार्थाय दैत्यानां गणनायकः ॥२१॥ देवीभिः संस्तुतो देवः प्रसन्नो वरदोऽभवत् । वरस्यैव प्रभावेण हता दैत्या अनेकशः ॥२२॥ योगनिष्ठा महादेव्योऽभजंस्तं विघ्ननाशनम् । कुलदैवतभावेन शांत्यर्थं च प्रजापते ॥२३॥ ते सर्वे गणराजा वै स्मृता लंबोदरात्मकाः । ज्ञातव्याः सर्वभावेन ब्रह्मभूतपदप्रदाः ॥२४॥ इदं लंबोदरस्यैवावतारस्य कथामृतम् । शृणोति पठते वापि स सर्वफलभाग् भवेत् ॥२५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते शक्तिपुत्रचरितं नाम द्वाविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । अथो शृणु महाभाग गाणपत्यस्वरूपकम् । येन त्वं गाणपत्ये वै पदे सुनिपुणो भवेः ॥१॥ नरो गणेशभक्तिं यो भवेत् कर्तुं समुद्यतः । गणेशप्रीतिकामार्थं दीक्षायुक्तो भवेदयम् ॥२॥ गाणपत्यं सुशांतिस्थं गुरुं वेदार्थपारगम् । नत्वा तं संवदेत् पूर्वं दीक्षां देहि महाप्रभो ॥३॥ त्वमेव गणराजोऽसि गाणपत्यपरायणः । मां कुरुष्व महाभाग गाणपत्यं सुशीलकम् ॥४॥ एवं पृष्टो गुरुः शिष्यं वदेद् दृष्ट्वा सुशीलगम् । श्रौतस्मार्तक्रियायुक्तं गणेशभावलालसम् ॥५॥ ततस्तं शिक्षयेदादौ धर्मान् गाणेशकान् परान् । तांस्तुभ्यं कथयाम्येव शृणु सर्वसुखप्रदान् ॥६॥

परान्नं भक्षयेन्नैवालोकयेन्न रजस्वलाम् । परस्त्रीगमनं क्वापि न कुर्यान् मनसाऽपि सः ॥७॥ स्वार्थाय क्रोधसंयुक्तो न भवेल्लोभसंयुतः । अभक्ष्यभक्षणं नैव कुर्यात् हिंसां कदापि न ॥८॥ गुरुद्रोहं च पैशून्यं ज्येष्ठानामपमानकम् । वेदशास्त्रादिमार्गेभ्यो हीनं नैव समाचरेत् ॥९॥ इहामुत्र विरक्तः स भवेद्ब्रह्मपरायणः । इत्यादिविविधान् धर्मानुपदिश्य मनुं दिशेत् ॥१०॥ आदौ कृच्छ्रादिकं तस्मै दापयेच्च ततः परम् । गाणपत्यान् समाज्ञाप्य सुदिनं त्ववलोकयेत् ॥११॥ अथवा गणराजस्योत्सवदां तिथिमादरात् । चतुर्थीं शुक्लपक्षस्थां वा कृष्णामवलोकयेत् ॥१२॥ गणेशप्रियकालं वा समालोक्य सुसिद्धिदः । गुरुः शिष्याय मंत्रं वै दद्याद्भक्त्यर्थमादरात् ॥१३॥ शृणु तत्र विधिं दक्ष कथयामि सुखप्रदम् । शुचौ मंडपिकां कृत्वा गोमयेनाऽवलेपयेत् ॥१४॥ मृन्मयां तु स्वयं तत्र वेदिं कुर्याद्विचक्षणः । चतुरस्रां च तन्मध्ये दिक्षु संस्थापयेद् घटान् ॥१५॥ आदौ गणेशयंत्रं स्वं कुंकुमेनात्र कारयेत् । स्वेष्टमष्टगणेशानान् पूजयेद् विधिपूर्वकम् ॥१६॥ दीक्षायुक्तांश्च गाणेशान् पूजयेत् स ततः परम् । तेभ्यो भूषणवस्त्रादीन् दापयेच्छाठ्यवर्जितः ॥१७॥ गाणेशेनैव मंत्रेण स जपं कारयेत्तु तैः । पुरश्चरणसंख्याकमथवा लक्षमादरात् ॥१८॥ अथवा दशसाहस्रमथवा च सहस्रकम् । तद्दशांशेन होमं वै कुर्यात्तत्र महामतिः ॥१९॥ ततो बलिप्रदानं वै कुर्यात् पूर्णाहुतिं ततः । पुनः संपूज्य विघ्नेशं स प्रणम्य ततो गुरुम् ॥२०॥ प्रार्थयेत् सर्वभावेन शिष्यं मां तारय प्रभो । मंत्रं देहि महाभाग गाणपत्यं विशेषतः ॥२१॥ पुनर्गुरुं समभ्यर्च्य ततः सकलशं पुनः । स्थापयेत् स्वेष्टदेवाढ्यं गाणेशेनैव मंत्रतः ॥२२॥ तत्र विघ्नेश्वरं ध्यात्वा पूजयेत् स्वल्पमार्गतः । ततो वस्त्रं समाच्छाद्य मस्तके गुरुसंयुतः ॥२३॥ प्रणम्य स्वगुरुं तत्र प्रार्थयेद्वद मंत्रकम् । संसारतारणार्थाय देहि मंत्रं द्विजोत्तम ॥२४॥ एवं गुरुर्महर्षिश्च प्रार्थितस्तं सुशिक्ष्य वै । गणेशं मनसा ध्यात्वा मंत्रं शिष्याय दापयेत् ॥२५॥ ततस्तान् कलशान् गृह्य पूर्वदिक्क्रमतश्च तैः । अष्टोत्तरशतं मंत्रं जपंस्तं स्नापयेद्गुरुः ॥२६॥ एकैकसिद्धिदः प्रोक्तः कलशः स्नानमात्रतः । ब्रह्मभूयकरः प्रोक्तो मध्यमः सर्वसिद्धिदः ॥२७॥ स्नातं शिष्यं समादाय गणेशं प्रणिपत्य च । शिष्येण पूजयेद्देवं ततस्तं स विसर्जयेत् ॥२८॥ प्रणमेद् गाणपत्यांस्तांस्ततो दद्याच्च दक्षिणाम् । पुष्कलां शाठ्यहीनः स भोजयेत्तान् महायशाः ॥२९॥ मोदकापूपलड्डूकपायसान्नैर्महामते । सूक्ष्मतंदुलसंयुक्तैर्नानापक्वान्नमिश्रितैः ॥३०॥ यथेष्टं भोजयित्वा वै प्रणमेत् स पुनः पुनः । प्रार्थयेत्तान् विशेषेण तारितोऽहं भवार्णवात् ॥३१॥ संभारं गुरवे दद्याद्गुरुवंशं नमेत् सदा ।

गाणपत्यान् प्रदृश्यैवोत्थाय तांश्च नमेन्नरः ॥३२॥ गाणपत्यान् समालोक्य न नमेद्यः प्रजापते। तेन विघ्नेश्वरः साक्षाद्धिंसितो नाऽत्र संशयः ॥३३॥ एवं दीक्षां समागृह्य गणेशं पूजयेत् सदा। तत्समीपे तु मंत्रस्य पुरश्चरणकं चरेत् ॥३४॥ अथ धर्मान् प्रवक्ष्यामि शृणु तान् सुसमाहितः। दंतकाष्ठमभुक्त्वा तु न गच्छेद्गणपालयम् ॥३५॥ मैथुनं यदि कृत्वा देवालयं च गमिष्यति। स सद्यो भ्रंशमागच्छेदतः स्नात्वा च तं व्रजेत् ॥३६॥ अशुद्धवस्त्रसंयुक्तो विघ्नराजं न संस्पृशेत्। परवस्त्रधरो भूत्वा पूजयेन्न गणाधिपम् ॥३७॥ छिद्रयुक्तं न वस्त्रं स धारयेद्देवपूजने। मौनेन पूजयेद्देवं यथाविधि गणेश्वरम् ॥ ३८॥ गणेशपूजने सक्तो यदि वाचं वदेन्नरः। पूजांतरायदोषेण विघ्नयुक्तो भवेन्नरः ॥३९॥ अभ्यंगसंयुतो यस्तु स्नानहीनो यदा भवेत्। देवालयं समागच्छेत्तदा भ्रंशमवाप्नुयात् ॥४०॥ उपानत्स्पर्शसंयुक्तः पादक्षालनवर्जितः। गणेशानालयं गच्छेद्विघ्नयुक्तो भवेन्नरः ॥४१॥ गंधादिचर्चितो भूत्वा यो नार्च्य गणनायकम्। देवालयं गतो दैवाल्लभेद् भ्रंशं स मानवः ॥४२॥ अजीर्णदोषसंयुक्तो यस्तिष्ठेद्देवसन्निधौ। उद्गाराधः समीरेण विघ्नयुक्तो भवेत्तु सः ॥४३॥ भेरीशब्दमनावाद्य गणेशालयगो भवेत्। स भ्रंशं च लभेद्दक्ष देवगुह्यप्रभंजनात् ॥४४॥ देवालयं समागत्याऽनृतवाचं वदेन्नरः। अथवा देवस्तुत्यादिहीनां स भ्रंशितामियात् ॥४५॥ नित्यं तत्र प्रजानाथ संयतो देवसंनिधौ। मर्यादां पालयंस्तिष्ठेत् स ईप्सितफलं लभेत् ॥४६॥ यथाशास्त्रं विचारेण गणेशं सर्वसिद्धिदम्। यो भजेत् गाणपत्यस्तं स गणेशो भवेन्नरः ॥४७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते गाणपत्यदीक्षावर्णनं नाम त्रयोविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। यदि क्षत्रियवंशस्थो दीक्षामिच्छति शाश्वतीम्। गाणेशीं शृणु वक्ष्यामि विधिं तस्य प्रजापते ॥१॥ ब्राह्मणस्यैव हस्तेन कारयेदेतदादरात्। मंत्रमात्रं जपेत् सोऽपि न होमादि स्वहस्ततः ॥२॥ शस्त्रविद्यां परित्यज्य दंडादिकमशेषतः। गाणपत्यो भवेत् सोऽपि क्षत्रियो नाऽत्र संशयः ॥३॥ वैश्यः स्ववृत्तिजं कर्म क्रयविक्रयकं परम्। त्यजेत्ततो गणेशस्य दीक्षायां योग्यतामियात् ॥४॥ शूद्राणां नाममंत्रश्च वक्तव्यो ब्राह्मणैः सदा। हिंसादिकमथो

त्यक्त्वा शूद्रो दीक्षां लभेत् पराम् ॥५॥ नाममंत्रेण सर्वं वै कुर्यात् शूद्रः स्वयं विधिम् । गणेश्वरस्य पूजादि न श्लोकादि समुच्चरेत् ॥६॥ न होमादिभवं कर्म प्रायश्चित्तं चरेत्तथा। गाणपत्यो भवेच्छूद्रो दीक्षायुक्तो महायशाः ॥७॥ गणेशदीक्षया युक्तो भवेद् विपथगो यदि । स एव विघ्नसंयुक्तो भविष्यति प्रकोपतः ॥८॥ अथ दीक्षितजंतूनां चिह्नानि ते वदाम्यहम् । तैर्युक्तान् गाणपत्यान् वै परान् जानाति मानवः ॥९॥ प्रातः स्नानादिकं कृत्वा संध्यां शास्त्रोक्तमार्गतः । आगमोक्तां च वेदोक्तां पूजां कृत्वा समापयेत् ॥१०॥ अर्चनं द्वादशांगेषु यः कुर्यात् मंत्रपूर्वकम् । सर्वांगलेपनेनैव तत्र मंत्रान् शृणु प्रभो ॥११॥ गणेशोच्छिष्टगंधं वै गृह्यादौ नियतो न्यसेत् । स्वानंदवासिने जप्त्वा नमो मूर्धानमर्चयेत् ॥१२॥ ललाटं गणनाथाय नम उच्चार्य चार्चयेत् । दक्षिणं कर्णमूलं च गजकर्णाय वै नमः ॥१३॥ वामकर्णं तथा दक्ष शूर्पकर्णाय ते नमः । अर्चयेच्च ततः कंठं विघ्नेशाय ततः पठन् ॥१४॥ बाहुं दक्षिणगं तद्वद् हेरंबाय नमोऽर्चयेत् । वामं समर्चयेत् सुज्ञः सिद्धिनाथाय वै नमः ॥१५॥ हृदयं चार्चयेत्तत्र बुद्धीशाय नमो विधे । उदरं नाभिसंस्थानं नमो लंबोदराय ते ॥१६॥ दक्षिणं चैव कुक्षिं स वक्रतुंडाय वै नमः । वामं तु चिंतामणये ह्यर्चयेन्नात्र संशयः ॥१७॥ पृष्ठदेशं नाभिसममर्चयेत् ढुंढये नमः । एते द्वादश मंत्राश्च कथितास्ते प्रजापते ॥१८॥ ललाटं चार्चयेत् सुज्ञः सर्वभद्रविधानतः । अंगानि स तथा दक्ष नाभेरूर्ध्वं समर्चयेत् ॥१९॥ सर्वांगलेपनं शस्तं गाणेशानां विशेषतः । रक्तचंदनसंयुक्तो गंधस्तेषां मतः सदा ॥२०॥ मालां शमीभवां वाऽपि प्रभो मंदारवृक्षजाम् । प्रशस्तां स्वगले बाहौ सर्वसिद्धिप्रदायिनीम् ॥२१॥ धारयेन्नात्र संदेहो देवकाष्ठप्रमाणतः । अन्यकाष्ठभवां मालां धारयेन्न कदाचन ॥२२॥ वैष्णवानां यथा दक्ष तुलसीकाष्ठसंभवा । तथा वै गाणपत्यानां शमीमंदारसंभवा ॥२३॥ तदभावे प्रजानाथ विद्रुमजां तु धारयेत् । अथवाऽक्षमयीं मालां धारयेन् मंदमार्गतः ॥२४॥ सदा शुचिस्वभावस्थो मित्रशत्रुत्ववर्जितः । द्वंद्वभावविनिर्मुक्तो गाणपत्यश्चरेन् महीम् ॥२५॥ शुक्लकृष्ण-चतुर्थीजं व्रतं नित्यं समाचरेत् । गाणपत्यानि सर्वाणि व्रतानि श्रद्धयान्वितः ॥२६॥ अन्यदेवप्रियं दक्ष व्रतं तीर्थं चरेत्तथा । शक्तियुक्तो भवेत् सोऽपि तदा सर्वं प्रतिष्ठितम् ॥२७॥ क्षेत्राणि गाणपत्यानि चरेन्नियमसंयुतः । अन्यानि शक्तियुक्त-श्चेत् निश्चितं मुनिभिः पुरा ॥२८॥ यथा गणेश्वरो देवः सर्वेषामादिपूज्यकः । अन्यदेवस्य भक्तानां तथा तस्य व्रतादिकम् ॥२९॥ गाणेशानां यथा दक्ष एक एव गणेश्वरः । आवश्यकेन तद्वद्व्रतादिकं च समाचरेत् ॥३०॥ सदा

गणेशनाम्नश्च कीर्तनं तत्र वर्तते। कथा नानाविधा रम्याः कथयंति परस्परम् ॥३१॥ चरित्राणि गणेशस्य गायेयुर्हर्षसंयुताः। पात्रीभूतान् जनान् दृष्ट्वा बोधयंति सुसिद्धये ॥३२॥ अत्र ते कथयिष्यामि संवादं नारदेंद्रजम्। एकदा नारदो योगी भ्रमन्निंद्रं समाययौ ॥३३॥ इंद्रेण पूजितः सोपि गाणेशं गानमाकरोत् । तं प्रणम्य महेंद्रश्च जगाद वाक्यमुत्तमम् ॥३४॥ इंद्र उवाच। वद ब्रह्मन् महाभाग चिह्नानि गणपात्मनाम्। कैश्चिह्नैः संयुता नित्यं गाणपत्याश्चरंति हि ॥३५॥ नारद उवाच। सर्वांगे चंदनालेपो रक्तचंदनसंयुतः । शमीमंदारमाला च तेषां हस्ते गले भवेत् ॥३६॥ सदा गणेशनाम्नश्च श्रवणे तत्पराः स्मृताः। कीर्तने भावसंयुक्ताः गाणपत्या इमे बुधाः ॥३७॥ द्वंद्वस्य भावो हृदि नोभवेत् कदा ये निःस्पृहा योगधराः सुनिर्मलाः। गाणेश्वरा वंदनशीलकाः सदा तान् गाणपत्यान् प्रवदंति योगिनः ॥३८॥ नित्यं स्वधर्मेण च संयुतास्तथा न मानयंति ह्यपवर्गकं कदा। भक्तौ निमग्ना गणराजवर्त्मनि तान् गाणपत्यान् प्रवदंति योगिनः ॥३९॥ न स्थानगेहादिकमाश्रयंति ये प्रारब्धमात्रेत्यवलंबिनोऽपरे। चिंतामणौ चित्तनिवेशकाः सदा तान् गाणपत्यान् प्रवदंति योगिनः ॥४०॥ श्रौते तथा स्मार्तभवे सुकर्मणि संसक्तदेहा गणराजसिद्धये। सर्वाणि कर्माणि समर्प्य नैज्यपे तान् गाणपत्यान् प्रवदन्ति योगिनः ॥४१॥ निंदां स्तुतिं वीक्ष्य विकारवर्जिताः कांतासुवर्णादिषु भावहीनकाः । प्राटंति विघ्नेश्वरभक्तिलालसा तान् गाणपत्यान् प्रवदन्ति योगिनः ॥४२॥ आच्छादिता ये न च केन भावितास्तिरस्कृता देववरिष्ठ-भोजिनः। जीवैर्हता दोषविहीनचेतसस्तान् गाणपत्यान् प्रवदंति योगिनः ॥४३॥ नेच्छंति कैलासविकुंठकादिकं न ब्रह्मभूयं न रसां रसातलम्। भक्तिं सदेच्छंति गणेशभाविकान् तान् गाणपत्यान् प्रवदंति योगिनः ॥४४॥ मुद्गल उवाच। एवमुक्त्वा महेंद्रं स नारदः स्वेच्छया मुनिः। ययौ विघ्नेश्वरं गायन् यत्र तत्र प्रजापते ॥४५॥ एतत्ते गाणपत्यानां स्वरूपं कथितं मया। श्रवणात् पापसंभूतमज्ञानं नाशमाव्रजेत् ॥४६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते गाणपत्यस्वरूपवर्णनं नाम चतुर्विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । शमीमंदारमाहात्म्यं वद मे करुणानिधे । कथं विघ्नेश्वरस्यैव प्रियौ तौ संबभूवतुः ॥१॥ मुद्गल उवाच । और्वो नामाऽभवद्विप्रः श्रौतस्मार्तक्रियापरः । स्वधर्मरतया पत्न्या ब्रह्मनिष्ठो महायशाः ॥२॥ तयोः कालेन संजाता पुत्री तेजस्विनी प्रभो । तस्या नाम द्विजौ तौ तु शमीकेति प्रचक्रतुः ॥३॥ सा कन्या रूपसंयुक्ता गुणयुक्ता प्रजापते । सप्तवर्षवयः संस्था बभूव जनकप्रिया ॥४॥ तदर्थं ब्राह्मणः सोऽपि वरमिच्छन् समाययौ । शौनकस्याश्रमं तत्र ददर्श मुनिसत्तमम् ॥५॥ पूजितः शौनकेनैव मंदारं शिष्यमुत्तमम् । शौनकस्य ददर्शाऽसौ विद्याढ्यं धौम्यनंदनम् ॥६॥ सुशीलं गुरुसेवायां निरतं धर्मलालसम् । हर्षयुक्तोऽभवत्तत्र मेने जामातरं हृदि ॥७॥ विचार्य शौनकेनैव स्वगृहं प्रत्यपद्यत । सुदिने तं समानाय्य ददौ कन्यां महात्मने ॥८॥ तेन युक्ता शमी तत्र शुशुभे रूपसंयुता । रत्नकांचनयोर्योगस्तथा जातः प्रजापते ॥९॥ पुनर्गते कियत्काले यौवनस्थां विभाव्य ताम् । शमीकां स समानेतुं मंदारः प्रययौ स्वयम् ॥१०॥ तं प्रपूज्य ददौ कन्यामौर्वो हर्षसमन्वितः । मंदारः श्वशुरं नत्वा मार्गसंस्थो बभूव ह ॥११॥ कदा भ्रूशुंडिनामा यो गाणेशश्च महायशाः । विश्रांतिमाश्रमे तस्य चक्रतुर्दंपती परे ॥१२॥ स्वकाश्रमविहारार्थं भ्रूशुंडी संगतोऽभवत् । तं दृष्ट्वा शुंडया युक्तं जहसतुश्च मूर्खवत् ॥१३॥ शुंडाया अपमानेन पापं प्राप्तं महाद्भुतम् । तेन संप्रेरितो योगी चुकोप रक्तलोचनः ॥१४॥ उवाच तौ महायोगी भ्रूशुंडी च द्विजाधमौ । दृष्ट्वा जहसथुः शुंडां पादपौ भवतं रुषा ॥१५॥ शुंडाया अपमानं यः करिष्यति नराधमः । स मे शत्रुर्न संदेहो गजास्यस्यावमानतः ॥१६॥ तौ तं भ्रूशुंडिनं विप्रौ प्रणेमतुः सुदुःखितौ । अज्ञानेन कृतं हास्यं क्षंतुमर्हसि योगिप ॥१७॥ उच्छापं वद विप्रेश दासौ ते नात्र संशयः । अत्यंतं गणराजस्य प्रियौ कुरु च मानद ॥१८॥ ततोऽतिकरुणाविष्टो जगाद मुनिसत्तमः । शुंडाया अपमानेन मया शप्तौ न संशयः ॥१९॥ अतः शुंडाधरो देवः प्रसन्नश्च भविष्यति । तदा सर्वं शुभं पूर्णं युवयोर्वाञ्छितं भवेत् ॥२०॥ ममाधीनं न किंचिद्वै शापदाता गजाननः । क्रोधहीनस्य मे क्रोधः प्रेरितस्य समाययौ ॥२१॥ एवमुक्त्वा महायोगी स्वासनस्थो बभूव ह । तौ सद्यो वृक्षयोनिस्थौ बभूवतुः प्रजापते ॥२२॥ अथ मासे गते विप्रः शौनकश्चिंतयान्वितः । शिष्यान् गृह्य ययौ विप्रमौर्वं दुःखान् महामुनिः ॥२३॥ तं पप्रच्छ शनैः सोऽपि मंदारः कुत्र वर्तते । शमीकाया आनयने प्रेषितोऽयं मया सुतः ॥२४॥ ततस्तं शोकसंयुक्तमौर्वो जगाद विस्मितः । दत्वा कन्यां मया सद्यः प्रेषितश्च त्वदंतिके ॥२५॥

श्रुत्वैवं शोकसंयुक्ता और्वशौनकमुख्यकाः । तयोः शोधनकामास्ते निसस्रुस्त्वरितास्ततः ॥२६॥ तत्र मार्गे जनान् सर्वान् ग्रामस्थान् वनसंस्थितान् । पप्रच्छुस्ते समूचुस्तान् मासमात्राद् गतौ किल ॥२७॥ एवं विचार्य ते याता भ्रूशुंड्या-श्रममुत्तमम् । तत्र विश्रांतिकृत् स्थाने जनानां ददृशुस्तरू ॥२८॥ अनुपेतौ ततो ज्ञात्वा शौनको ध्यानमाश्रितः । ज्ञात्वा भ्रूशुंडिना शप्तौ वृत्तांतं तानवेदयत् ॥२९॥ ततः सर्वान् महायोगी विसृज्य तपसि स्थितौ । शौनकौर्वौ महादुःखाद् गणेशाराधने रतौ ॥३०॥ अवायुभक्षभावेन ध्यानेन गणनायकम् । तोषयामासतुः प्रीत्या तयोरघविमुक्तये ॥३१॥ एवं द्वादशवर्षेषु गतेषु द्विरदाननः । आययौ तौ वरं दातुं भृशं तत् क्लेशतापितः ॥३२॥ दृष्ट्वा विघ्नेश्वरं तौ तु प्रणम्या-पूज्य हर्षतः । गणाध्यक्षं तुष्टुवतुः प्रणम्य करसंपुटैः ॥३३॥ शौनकौर्वौ ऊचतुः । नमस्ते गजवक्त्राय विघ्नेशाय परात्मने । अपाराय महेशाय हेरंबाय नमो नमः ॥३४॥ संसारार्णवताराय मायामोहहराय ते । ब्रह्मेशाय शिवादिभ्यो योगदाय नमो नमः ॥३५॥ ज्येष्ठानां ज्येष्ठराजाय सर्वेषां पूज्यमूर्तये । आदिपूज्याय देवाय चांतःस्थाय नमो नमः ॥३६॥ अनादये च सर्वेषां मात्रे पित्रे परात्मने । स्वानंदवासिने तुभ्यं गणेशाय नमो नमः ॥३७॥ शूर्पकर्णाय शूराय लंबोदराय ढुंढये । विघ्नकर्त्रे ह्यभक्तानां भक्तानां विघ्नहारिणे ॥३८॥ ब्रह्मेशाय नमस्तुभ्यं ब्रह्मभूतप्रदाय च । योगेशाय सुशांताय शांतिदाय नमो नमः ॥३९॥ गुणांतं न ययुर्यस्य शिवविष्णवादयोऽमराः । योगिनः सगुणस्यापि निर्गुणस्याऽत्र का कथा ॥४०॥ नमो नमः प्रसन्नस्त्वं भव स्वामिन् गजानन । धौम्यपुत्रं च मंदारं शिष्यं मे तारयाऽधुना ॥४१॥ तारयस्व शमीमौर्वकन्यां तां नाथ विघ्नप । वृक्षयोनिगतौ तौ तु मानुषौ कुरु तादृशौ ॥४२॥ भक्तिं ते देहि हेरंब यया भ्रांतिर्विनश्यति । दासौ ते पादपद्मस्य वाञ्छितं कुरु सर्वदा ॥४३॥ तयोर्वचनमाकर्ण्य जगाद गणनायकः । तौ भक्तौ तपसा युक्तौ भक्तिबद्ध-स्वभावतः ॥४४॥ श्रीगजानन उवाच । भ्रूशुंडिना च विप्रर्षी शप्तौ तौ दंपती पुरा । ज्ञात्वा मदीयतुंडस्यापमानान्नात्र संशयः ॥४५॥ भ्रूशुंडिनोऽतिभक्तस्य मम मिथ्यावचः कदा । न करोमि महाभागौ देहादधिक एव सः ॥४६॥ भ्रूशुंडिनो-ऽपमानश्च क्रियते विविधैर्जनैः । न तत्र कोपसंयुक्तो भवते मुनिसत्तमः ॥४७॥ मदीयमपमानं स सहते न कदाचन । अतोऽहं तस्य वाक्यं वै न करोमि निरर्थकम् ॥४८॥ भवद्भ्यां तपसा बद्धः करिष्यामि हितावहम् । शृणुतं मे वचो रम्यं वरं दास्यामि मुख्यकम् ॥४९॥ मंदारस्य च शम्याश्च मूले स्थास्यामि निश्चलः । मद्रूपौ वृक्षजातीनां सर्ववंद्यौ भविष्यतः ॥५०॥

देवास्तौ प्रणमस्यंति किं पुनर्जंतवो मताः। दर्शनात् स्पर्शनाच्चैव पापघ्नौ तौ भविष्यतः ॥५१॥ मत्प्रियौ सर्वभावेन देवानां प्रियरूपिणौ। भविष्यतो विशेषेण वृक्षराजौ महामुनी ॥५२॥ शमीपत्रेण मां विप्रा पूजयिष्यंति मानवाः। तेषां वाञ्छां सदाऽहं वै पूरयिष्यामि शाश्वतीम् ॥ ५३ ॥ मंदारपुष्पमेकं समर्पयिष्यति मे नरः। तेन हृष्टो भविष्यामि फलं दास्यामि वाञ्छितम् ॥५४॥ कृता नानाविधा पूजा मदीया मानवेन च। दूर्वाहीना वृथा सर्वा भवत्यत्र न संशयः ॥५५॥ अद्य प्रभृति विप्रेशौ शमीपत्रेण संयुता। मंदारकुसुमेनैव सफला सा भविष्यति ॥५६॥ शमीपत्रं नरेणैव भवेन् मयि समर्पितम्। न तु क्रतुशतेनैव तुल्यं तेभ्योऽधिकं मतम् ॥५७॥ शमीपत्रेण संतुष्टो भविष्यामि निरंतरम्। मंदारपुष्पकेणैव को वदेत्तु तयोः फलम् ॥५८॥ नित्यं शमीं नमेद्यस्तु पूजयेद्वा तु संस्पृशेत्। स सप्तकुलसंयुक्तः स्वानंदं मे गमिष्यति ॥५९॥ तथा मंदारवृक्षं यो नमेत् संपूजयेन्नरः। संस्पृशेत् सोऽपि स्वानंदं व्रजेत् सप्तकुलैर्युतः ॥६०॥ प्रदक्षिणां प्रकुर्वीत शमीमंदारवृक्षयोः। सप्तद्वीपवती पृथ्व्याः कृता तेन प्रदक्षिणा ॥६१॥ यदि भावेन वृक्षस्य प्रदक्षिणा कृता भवेत्। शतभूमिप्रदाक्षिण्यसमं पुण्यं लभेन्नरः ॥६२॥ बहुनाऽत्र किमुक्तेन मद्रूपौ वृक्षजातिषु। तयोश्च महिमानं को भवेद्वर्णयितुं क्षमः ॥६३॥ वृक्षबुद्ध्या शमीं यो वै मंदारं यदि पश्यति। स नारकी नरो विप्रौ भविष्यति न संशयः ॥६४॥ शमीं मंदारकं वीक्ष्य न नमेद्यो नराधमः। दक्षिणं कुरुते नैव नष्टपुण्यो भवेत्तदा ॥६५॥ शमीं यश्छेदयेद्वापि मंदारं मुनिसत्तमौ। नरकेषु महापापी पतिष्यति न संशयः ॥६६॥ शाखां पत्रं तु यः पापी छेदयिष्यति मानवः। नारकी स भवेन्नूनं दर्शनात् पापदो भवेत् ॥६७॥ शमीं यो निंदयेद्वा यो मंदारं वृक्षसत्तमम्। सर्वभाग्यविहीनः स नारकी जायते ततः ॥६८॥ मद्रूपेणैव मंदारं शमीं यस्तु प्रपश्यति। स भुक्त्वा विविधान् भोगानंते स्वानंदगो भवेत् ॥६९॥ मंदारमूलमादाय मूर्तिं कृत्वा मदीयिकाम्। पूजयिष्यंति मद्भक्तास्तेषां साध्योऽहमञ्जसा ॥७०॥ मंदारमूलजा मूर्तिः सद्यः सिद्धिप्रदायिका। तद्वन्नैवान्यसंभूता मम मूर्तिर्भविष्यति ॥७१॥ मंदारमूर्तिगं पूजेत् शमीपत्रेण भावतः। दूर्वामंदारपुष्पैश्च त्रयं सुदुर्लभं मतम् ॥७२॥ शमी मंदारदूर्वाश्च त्रयमेकत्र कारितम्। भक्तेन स तु मत्तुल्यो पूजायां मे भविष्यति ॥७३॥ शमीमंदारजां मालां कृत्वा जपं समाचरेत्। अनंतफलभोक्ताऽसौ भविष्यति न संशयः ॥७४॥ शमीमंदारजां मालां दधानः पुरुषो भवेत्। तस्य देहं समालोक्य विघ्ना नश्यंति पापकाः ॥७५॥ अंते शमीभवं पत्रं मंदारकुसुमं तथा।

दूर्वापत्रं धृतं येन धरिष्यति यमो न तम् ॥७६॥ शमीमंदारसामीप्ये पूजयेन् मां च मानवः । तेनाप्यसंख्यका पूजा कृता मे नाऽत्र संशयः ॥७७॥ एवमुक्त्वा पुनस्तौ स जगाद गणनायकः । मद्भक्तिं यदि विप्रेशाविच्छथो भावसंयुतौ ॥७८॥ तदा मंदारवृक्षस्य मूलजां मूर्तिमादरात् । कृत्वा पूजां प्रकुर्वाथां यथा विधिसमन्वितौ ॥७९॥ शमीमंदारदूर्वाभिः संतुष्टोऽहं भवामि तु । नान्यथा पूर्णभावेन मम तुष्टिकरं भवेत् ॥८०॥ तुलसीवर्जितां पूजां मदीयां कुरुतं सदा । शमीमंदारमालाभिर्जपं मे कुरुतं सदा ॥८१॥ एवमुक्त्वा गणाधीशस्तत्रैवांतरधीयत । विप्रौ बभूवतुर्हर्षसमायुक्तौ विशेषतः ॥८२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते शमीमंदारवरप्रदानं नाम पंचविंशतितमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ततो धौम्यं समागम्य शौनको हर्षसंयुतः । कथयामास वृत्तांतं सोऽपि संहर्षितोऽभवत् ॥१॥ धन्यो मे वृक्षगः पुत्रः सर्वसिद्धिप्रदायकः । साक्षाद्गणेशरूपश्च सर्वेषां वंद्य आदरात् ॥२॥ शमीसमीपगो हर्षसंयुक्तस्तत और्वकः। ततप तप उग्रं स शमीसंयोगकारणात् ॥३॥ स एव मरणे तत्र शमीगर्भस्थितो ह्यभूत्। अग्निरौर्वाभिधानश्च गाणपत्यो महायशाः ॥४॥ कल्पांते गणनाथं स ययौ योगसमन्वितः। शौनकश्च तथा ढुंढिमभजत् स्नेहसंयुतः॥५॥ मंदारमूलजां मूर्तिं कृत्वा पूजापरायणः । शमीमंदारदूर्वाभिस्तोषयामास विघ्नपम् ॥६॥ शमीमंदारमालाभिः शुशुभे ब्राह्मणोत्तमः । गाणपत्यस्वरूपेण तथा धौम्यो बभूव ह ॥७॥ भ्रूशुंडी तद्भवं वृत्तं श्रुत्वा हर्षसमन्वितः । आगत्य स्वाश्रमे संस्थौ ननाम वृक्षसत्तमौ ॥८॥ नित्यं पुपूज च शमीं मंदारं भक्तिसंयुतः । शमीमंदारदूर्वाभिः पूजयामास विघ्नपम् ॥९॥ शमीमंदारमालाभिर्भूषितो मुनिसत्तमः । शुशुभे गाणपत्येषु गणराज इवापरः ॥१०॥ एवं ये ये स्थिता दक्ष गाणपत्या विशेषतः । ते ते सर्वे शमीमंदारपूजासंयुता बभुः ॥११॥ एतत्ते कथितं सर्वं शमीमंदारसंभवम् । माहात्म्यं पुनरन्यत्त्वं शृणु पापहरं परम् ॥१२॥ द्राविडे शूद्रयोनिस्थो बभूवे पापकारकः। वनं गत्वा जनान् हत्वा द्रव्यलोभी दुरात्मवान् ॥१३॥ एकदा वनमध्यस्थोऽभवत् व्याघ्रेण धर्षितः। पपात भयभीतश्च सद्यस्तेन प्रभक्षितः ॥१४॥ तत्र

वायुबलेनैव शमीपत्रं समाययौ। तस्य स्पर्शोऽभवत्तस्य दैवयोगात् प्रजापते ॥१५॥ तं नेतुं यमदूताश्च समाजग्मुर्महाबलाः। गाणेशास्तत्र संयाताः समकाले नराधमम् ॥१६॥ यमदूतांस्तिरस्कृत्य गाणेशास्तं प्रगृह्य वै। गंतुं समुद्यता यावत्तावत्ते तान् प्रदुद्रुवुः ॥१७॥ मुसलेन हताः पेतुर्यमदूता महीतले । गाणेशास्तं प्रगृह्यैव ब्रह्मभूतं प्रचक्रिरे ॥१८॥ यमदूता यमं गत्वा शोकदुःखसमन्विताः। वृत्तांतं कथयामासुः क्रोधेन परिपूरिताः ॥१९॥ यामा ऊचुः। स्वामिन् शास्त्रकराः केचिद्बभूवुर्भूमिमंडले। त्वदाज्ञावशगं सर्वं वर्तते कुत्र तद् गतम् ॥२०॥ त्वं साक्षाद्धर्मराजश्च यथा वेदार्थवान् प्रभुः । वर्तसे तेन सर्वं वै त्वदाज्ञावशगं मतम् ॥२१॥ शंभुविष्णुमुखा देवा धर्माधारा भवंति वै। धर्मयुक्तस्वभावेन वर्तेरन्नात्र संशयः ॥२२॥ महापापी विशालाक्षो नाम शूद्रो ममार ह । तं गृहीतुं वयं तत्र गताः पाशधराः प्रभो ॥२३॥ अकस्मात्तत्र संयाता पुरुषाः परमाद्भुताः । शुंडादंडधराः सर्वे चतुर्बाहुविराजिताः ॥२४॥ अस्मांस्ते तु तिरस्कृत्य तं शूद्रं गृह्य सूर्यज । गंतुं समुद्यता यावत्तावद्योद्धुं वयं स्थिताः ॥२५॥ निपात्य नो महावीर्या मुसलेन प्रगृह्य तम्। गताः कुत्र न जानीमोऽधुना सर्वे महामते ॥२६॥ अतस्तं यत्नसंयुक्तो मंदं तेषां हरस्व च । एवमुक्त्वा प्रणम्यैनं स्थिताः प्रांजलयोऽभवन् ॥२७॥ मुद्गल उवाच। तेषां तद्वचनं श्रुत्वा ध्यानस्थोऽभून् महामतिः। यमः सर्वं विदित्वा तु भयं दध्रे महायशाः ॥२८॥ ध्यात्वा गजाननं देवं हृष्टरोमा च साश्रुकः। हृदि प्रणम्य विघ्नेशमुवाच भयसंकुलः ॥२९॥ मदीयकिंकरैः स्वामिन्नपराधः कृतो महान्। तं क्षमस्व दयासिंधो प्रभो ह्यज्ञानसंयुतैः ॥३०॥ गाणपत्यैर्महाभागैर्विवादो नैव शोभनः। स एव तु मया प्राप्तो भाग्यहीनबलेन च ॥३१॥ एवं क्षमाप्य विघ्नेशं स्थितं मनसि किंकरान्। आकार्य भानुजः सर्वान् जगाद वचनं हितम् ॥३२॥ यम उवाच। मंदारमालाशमिकाष्ठजा च यस्यैव देहे भवति प्रमाणम्। पुष्पं तयोः पत्रयुतं च शूराः संत्यज्य दूरं चरत प्रभीताः ॥३३॥ दूर्वायुतं विघ्नहरस्य गाथां संगायमानं यदि पापयुक्तम् । पूजादिकारं गणनायकस्य संत्यज्य दूरं चरत प्रभीताः ॥३४॥ गणेश हेरंब गजाननेति महोदर स्वानुभवप्रकाशिन्। वरिष्ठ सिद्धिप्रिय बुद्धिनाथ वदंतमेवं त्यजत प्रभीताः ॥३५॥ अनेकविघ्नांतक वक्रतुंड स्वसंज्ञवासिंश्च चतुर्भुजेति । कवीश देवांतकनाशकारिन् वदंतमेवं त्यजत प्रभीताः ॥३६॥ महेशसूनो गजदैत्यशत्रो वरेण्यसूनो विकट त्रिनेत्र। परेश धरणीधर एकदंत वदंतमेवं त्यजत प्रभीताः ॥३७॥ प्रमोदमोदेति नरांतकारे षडूर्मिहंतर्गजकर्ण ढुंढे । द्वंद्वारिसिंधौ स्थिरभावकारिन् वदंतमेवं त्यजत प्रभीताः ॥३८॥

विनायक ज्ञानविघातशत्रो पराशरस्यात्मज विष्णुपुत्र । अनादिपूज्याखुग सर्वपूज्य वदंतमेवं त्यजत प्रभीताः ॥३९॥
विधेर्ज लंबोदर धूम्रवर्ण मयूरपालेति मयूरवाहिन् । सुरासुरैः सेवितपादपद्म वदंतमेवं त्यजत प्रभीताः ॥४०॥
वरिन् महाखुध्वज शूर्पकर्ण शिवाज सिंहस्थ अनंतवाह । दितौज विघ्नेश्वर शेषनाभे वदंतमेवं त्यजत प्रभीताः ॥४१॥
अणोरणीयन् महतो महीयन् रवेर्ज योगेश वरिष्ठराज । निधीश मंत्रेश च शेषपुत्र वदंतमेवं त्यजत प्रभीताः ॥४२॥
वरप्रदातर्यदितेश्च सूनो पराशरज्ञानद तारवक्त्र । गुहाग्रज ब्रह्मप पार्श्वपुत्र वदंतमेवं त्यजत प्रभीताः ॥४३॥
सिंधोश्च शत्रो परशुप्रपाणे शमीश पुष्पप्रिय विघ्नहारिन् । दूर्वाभरैरर्चित देवदेव वदंतमेवं त्यजत प्रभीताः ॥४४॥
धियः प्रदातश्च शमीप्रियेति सुसिद्धिदातश्च सुशांतिदातः । अमेयमायामितविक्रमेमि वदंतमेवं त्यजत प्रभीताः ॥४५॥
द्विधा चतुर्थीप्रिय कश्यपाज्ज धनप्रद ज्ञानप्रदप्रकाश । चिंतामणे चित्तविहारकारिन् वदंतमेवं त्यजत प्रभीताः ॥४६॥
यमस्य शत्रो अभिमानशत्रो विधेर्जहंतः कपिलस्य सूनो । विदेह स्वानंद अयोगयोग वदंतमेवं त्यजत प्रभीताः ॥४७॥
गणस्य शत्रो कमलस्य शत्रो समस्थ भावज्ञ च भालचंद्र । अनादिमध्यांतमयप्रचारिन् वदंतमेवं त्यजत प्रभीताः ॥४८॥
विभो जगद्रूप गुणेश भूमन् पुष्टेः पते आखुगतेति बोध । कर्तश्च पातश्च तु संहरेति वदंतमेवं त्यजत प्रभीताः ॥४९॥
इदमष्टोत्तरशतं नाम्नां तत् प्रपठंति ये । शृण्वंति तेषु कुरुत भीता मा वै प्रवेशनम् ॥५०॥ भुक्तिमुक्तिप्रदं ढुंढेर्धनधान्य-प्रवर्धनम् । ब्रह्मभूयकरं स्तोत्रं जपतो नित्यमादरात् ॥५१॥ यत्र कुत्र गणेशस्य चिह्नयुक्तानि वै भटाः । धामानि तत्र कुरुत संभीता मा प्रवेशनम् ॥५२॥ तेन संस्थापिताः सर्वे स्वस्वकार्येषु सेवकाः । केशाद्यास्तत्र के यूयं वयं भजत तं सदा ॥५३॥ एवमुक्त्वा यमः सर्वान् किंकरान् मौनमादधे । यामाः सर्वे गणेशानं भजंते भावसंयुताः ॥५४॥ इदं शमीभवं पुण्यं माहात्म्यं यः शृणोति चेत् । पठति सिद्धिदं तस्य मंदारस्य भविष्यति ॥५५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते शमीमंदारस्पर्शमहिमावर्णनं नाम षड्विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । दूर्वायाश्चरितं हर्षकारकं ब्रूहि मुद्गल । अहो शम्यासमं नास्ति मंदारेण पवित्रकम् ॥१॥ मुद्गल उवाच । पुराऽऽदौ देवदेवेशो ब्रह्मा सृष्ट्वा चराचरम् । तेषामन्नार्थमत्यंतचिंतायुक्तो बभूव ह ॥२॥ ध्यात्वा गजाननं देवं संस्थितः प्रपितामहः । तस्य रोमभ्य एका वै देवी संनिःसृता बभौ ॥३॥ सर्वतः पाणिपादां तां सहस्रवदनां पराम् । सहस्रावयवैः सर्वैः शोभमानां ददर्श सः ॥४॥ ततोऽतिहर्षितो ब्रह्मा बभूवे सर्वधारकः । ज्ञात्वा तामन्नरूपां वै सर्वपोषणकारिणीम् ॥५॥ धातारं तं प्रणम्याऽसौ संस्थिता करसंपुटा । आज्ञां कुरु जगद्धातः किं करोमि पितामह ॥६॥ ब्रह्मोवाच । सर्वेषामन्नभूता त्वं दूर्वानाम्नी भविष्यसि । तपस्व च ततः सर्वमन्नं सृज विधानतः ॥७॥ तथेति तं प्रणम्यैव तताप तप उत्तमम् । गणेशं मनसि ध्यात्वा निराहारसमन्विता ॥८॥ एकाक्षरस्य मंत्रस्य जपेन द्विरदाननः । दिव्यवर्षसहस्रेण ययौ तां वरदायकः ॥९॥ तं दृष्ट्वा सहसोत्थाय प्रणनाम पुपूज सा । अथर्वशिरसा देवं तुष्टाव करसंपुटा ॥१०॥ तामुवाच गणेशानः सृष्टिं नानाविधां सदा । करिष्यसि महाभागे सर्ववंद्या भविष्यसि ॥११॥ एवमुक्त्वा गणाधीशोऽस्तर्धानं प्रजगाम ह । साऽपि हर्षसमायुक्ता सृष्टिं कर्तुं मनो दधे ॥१२॥ तस्या मस्तकभागाद् वै स्वर्गान्नं विविधं महत् । निःसृतं तेन स्वर्गस्था भुंजते विविधान् रसान् ॥१३॥ उदराद् भूमिसंस्थानां निःसृतं विविधं विधे । अन्नं तेनैव भूमिस्था भुंजते विविधान् रसान् ॥१४॥ पातालवासिनां पद्भ्यामन्नं नानाविधं परम् । भुंजते षड्रसान्नित्यं निःसृतं तेन तद्गताः ॥१५॥ अंगप्रत्यंगरूपेभ्यो नानान्नं ससृजे प्रभो । देवी तेन तु संतुष्टा बभूवुः सर्वजंतवः ॥१६॥ हृष्टपुष्टजनान् वीक्ष्य ब्रह्मा संतोषमादधे । तामागत्य द्विजैर्मंत्रैरभिषेकं चकार ह ॥१७॥ अन्नानामाधिपत्ये चाभिषिक्ता ब्रह्मणा पुरा । शुशुभे सर्वमान्या सा देवी दूर्वा विशेषतः ॥१८॥ राज्यश्रीसंयुता देवी मदयुक्ता बभूव ह । विसस्मार जपं मंत्रं गणेशस्य प्रजापते ॥१९॥ ततो विघ्नाकुला जाता स्पर्धां चक्रे विशेषतः । पार्वत्या नित्यमानंदादन्नपूर्णाहमादरात् ॥२०॥ जगदंबा च सर्वेषामन्नपूर्णत्वकारणात् । साऽहमन्नस्वरूपस्था वृथेयं गर्वमादधे ॥२१॥ तस्याश्चेष्टितमाज्ञाय क्रोधयुक्ता जगन्मयी । दौरात्म्यसहनं कृत्वा ह्यतिष्ठच्छिवसंनिधौ ॥२२॥ एकदा चंद्रगेहे वै बभूव ह महोत्सवः । तत्र देवादिकाः सर्वे सस्त्रीकाश्च समाययुः ॥२३॥ तत्र दूर्वा मदोत्सिक्ता निनिंद जगदंबिकाम् । वृथेयं जगदंबा वै नाम्ना ख्याता बभूव ह ॥२४॥ इत्यादिविविधैर्वाक्यैर्निनिंद जगदंबिकाम् । ततः क्रोधसमायुक्ता पार्वती तां शशाप ह ॥२५॥ पार्वत्युवाच । मदीयरोमकूपस्था

निःसृता त्वं न संशयः। वृथा मां स्पर्धसे दुष्टे पतस्व तृणरूपिणी ॥२६॥ पृथिव्यां तृणरूपा च सा बभूव प्रजापते। तदादि सर्ववंद्येयं दूर्वा परमपावनी ॥२७॥ ततोऽतिदुःखसंयुक्ता सस्मार द्विरदाननम्। भो क्षमस्वापराधं मे मंत्रत्यागकृतं प्रभो ॥२८॥ गत्वा वनांतरे दूर्वा तताप तप उत्तमम्। ध्यात्वा विघ्नेश्वरं देवं मंत्रजपपरायणा ॥२९॥ गते वर्षशते पूर्णे प्रसन्नोऽभूद् गजाननः। तामाययौ वरं दातुं भक्तिस्थां भजनप्रियः ॥३०॥ आगतं गणराजं सा दृष्ट्वा ननाम भावतः। संहृष्टा पूज्य तुष्टाव कृत्वा करपुटं विधे ॥३१॥ दूर्वोवाच। गणेशाय नमस्तुभ्यं विघ्नराजाय ते नमः। भक्तानां विघ्नसंहर्त्रे त्वभक्तानां भयंकर ॥३२॥ अनंतायाप्रमेयाय नानालीलाधराय च। हेरंबाय महेशानां नमः पूज्याय ते नमः ॥३३॥ सर्वपूज्याय सर्वादिपूज्याय ब्रह्मरूपिणे। ब्रह्माकाराय सर्वेश ब्रह्मणस्पतये नमः ॥३४॥ अनाकाराय साकारमूर्तये ब्रह्मरूपिणे। शांतिभ्यः शांतिदात्रे ते परेशाय नमो नमः ॥३५॥ लंबोदराय चौरेशवाहनाय परात्मने। चतुर्भुजाय सर्वेषां मात्रे पित्रे नमो नमः ॥३६॥ ज्येष्ठेभ्यो ज्येष्ठराजाय ज्येष्ठपदप्रदायिने। महोदराय पूर्णाय पूर्णानंदाय ते नमः ॥३७॥ स्वानंदवासिने तुभ्यं सिद्धिबुद्धिमयाय च। सिद्धिबुद्धिपते नाथ भक्तेशाय नमो नमः ॥३८॥ किं स्तौमि त्वां गणाधीश यत्र वेदा विसिस्मिरे। अतस्त्वां प्रणमाम्येव तेन तुष्टो भव प्रभो ॥३९॥ एवं स्तुत्वा गणेशानं भक्तियुक्ता ननर्त ह। जगाद गणराजस्तु दूर्वां तां हर्षसंयुतः ॥४०॥ श्रीगणेश उवाच। त्वया कृतमिदं स्तोत्रमपराधसहं भवेत्। मां स्तौति तस्य दूर्वेऽहमपराधं सहाम्यहम् ॥४१॥ यं यं चिंतयते कामं तं तं दास्यामि सर्वदा। भुक्तिमुक्तिप्रदं स्तोत्रं भविष्यति सुसिद्धिदम् ॥४२॥ वरं वरय दास्यामि चित्तस्थं भक्तितोषितः। क्रोधयुक्तोऽपि देवि त्वां मंत्रत्यागकरीं पुनः ॥४३॥ श्रुत्वा तं भयसंयुक्ता जगाद वाक्यमुत्तमम्। दूर्वा लंबोदरं प्रीत्या साश्रुनेत्रा प्रजापते ॥४४॥ दूर्वोवाच। वरदोसि यदा नाथ तदा ते भक्तिमुत्तमाम्। दृढां देहि गणाध्यक्ष तया सर्वं शुभं भवेत् ॥४५॥ अन्यच्च मदसंयुक्तां जगदंबां गजानन। स्पर्धेहं तत्कलांशा वै तया शप्ताऽतिदारुणम् ॥४६॥ तृणरूपा भविष्यामि पतिष्यामि धरातले। तदर्थं त्वामनुप्राप्ता रक्ष मां महतो भयात् ॥४७॥ श्रीगजानन उवाच। मा कुरुष्व वृथा चिंतां दूर्वे मे शरणागते। सर्वं शुभं करिष्यामि भविष्यामि नियंत्रितः ॥४८॥ अंशेन तृणरूपा त्वं भविष्यसि महीतले। देवी देहधरा स्वर्गे चरिष्यसि यथा पुरा ॥४९॥ पृथिव्यां तृणरूपा त्वममृतरूपधारिका। शतमूला प्रकांडाद् वै प्ररोहा च शतांकुरा ॥५०॥ सर्वमान्या सर्वपूज्या देवादीनां सदा

प्रिया। भविष्यसि न संदेहो मद्वरादन्ननायिके ॥५१॥ महामंगलदा प्रोक्ता मम प्रीतिविवर्धिनी। भविष्यसि तु लोकानां शुभमंगलदायिका ॥५२॥ त्वत्पत्रेण नरा भूमावर्चयिष्यंति देवपान्। न त्वत्समं तु पत्रेषु पुण्यदं प्रभविष्यति ॥५३॥ शक्तेश्चैवावतारा ये लक्ष्मीललितिकादयः । तासां प्रिया विशेषेण भविष्यसि महाशुभे ॥५४॥ शापिता गिरिपुत्र्या त्वं सा त्वां नैव स्पृशेत् कदा। अन्यत्र मान्यभावेन भविष्यसि न संशयः ॥५५॥ मदीया भक्तिरत्यंतं दृढा ते प्रभविष्यति। मच्चित्ता मद्गतप्राणा भविष्यसि च दूर्विके ॥५६॥ मदीयामिच्छसि भक्तिमतस्तेऽहं सुहर्षितः। करिष्यामि सदा देवि मम प्रीतिविवर्धिनीम् ॥५७॥ दूर्वापत्रं विना देवि पूजयिष्यंति मां नराः। तेषां नैव फलं तस्याः पूजायाः प्रभविष्यति ॥५८॥ दूर्वासमं न मे किंचित् पूजायां सुप्रियं भवेत्। विना दूर्वां निराहारी भविष्यामि निरंतरम् ॥५९॥ त्यक्त्वा दूर्वादलं ये वै पूजयिष्यंति मानवाः। शत्रवस्ते मता नित्यं नरकेषु पचंतु ते ॥६०॥ येनार्पितं च पूजायां दूर्वापत्रं महामते। तेनापारमयं सर्वं दत्तं मह्यं विशेषतः॥६१॥ दूर्वापत्रेण संतुष्टो दास्यामि सकलं च मे। ऐश्वर्यं तदपि प्राज्ञे न समं दूर्वया भवेत् ॥६२॥ ये मद्भक्ताश्च तैर्नित्यं कर्तव्यं दूर्वया युतम्। पूजनं मे सदा देवि जितोऽहं नात्र संशयः ॥६३॥ एवमुक्त्वा गणेशानोंऽतर्दधे च प्रजापते। दूर्वा हर्षसमायुक्ता विघ्नेशं भजते परम् ॥६४॥ यथा लंबोदरेणैव कथितं तादृशं नराः। देवेशाद्यास्ततश्चक्रुः पार्वती सा विशेषतः ॥६५॥ सर्वमंगलरूपा सा बभूवे पापनाशिनी। गणेशवरदानेन गाणपत्या तथाऽभवत् ॥६६॥ एतत्ते कथितं सर्वं दूर्वामाहात्म्यमुत्तमम्। शृण्वते पठते तस्मै भुक्ति-मुक्तिप्रदं भवेत् ॥६७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते दूर्वोत्पत्तिकथनं नाम सप्तविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः॥ मुद्गल उवाच । अत्र ते वर्णयिष्येहमितिहासं पुरातनम् । दूर्वाया महिमा यत्र ज्ञायते मानवैः परः ॥१॥ दंडकारण्यदेशस्थो बभूवांत्यजजः पुमान् । पिशुनो नाम दुर्बुद्धिः पापकर्मपरायणः ॥२॥ चौरकर्मा वने गत्वा जनान् जघान दारुणः । क्वचित् परस्त्रियं दृष्ट्वैकाकिनीमयभत् खलः ॥३॥ शिश्नोदरपरो भूत्वा विचचार वनांतरे । ग्रामे च नगरे वाऽपि शस्त्रधारी दुरात्मवान् ॥४॥ ब्रह्महत्यादिकं पापमपारं स चकार ह । न वक्तुं शक्यते दक्ष मया तस्य चरित्रकम् ॥५॥ एकदा वनसंस्थोऽयं द्विजं दृष्ट्वा महाखलः । कोटरात् स विनिःसृत्याधावच्छस्त्रधरः स्वयम् ॥६॥ तमागतं समालोक्य कालं दंडधरं यथा । पपाल स द्विजस्तस्मात् हाहाकारकरो भृशम् ॥ ७ ॥ द्विजशब्दं समाकर्ण्य क्षत्रिया आगता वनात् । दैवयोगेन पंचैव समीपे मार्गयायिनः ॥ ८ ॥ तैः शस्त्रैः स हतः पापी ममार च पपात ह । ब्राह्मणो हर्षसंयुक्तः स्वाश्रमं चागतोऽभवत् ॥९॥ ततो यामाः प्रगृह्यैव पिशुनं तं महाखलम् । रौरवे ते विनिक्षिप्य नरके पाचयंस्तदा ॥१०॥ पंचमे दिवसे प्राप्ते तत्राश्चर्यं बभूव वै । नरकः शांतरूपश्च यातनावर्जितोऽभवत् ॥११॥ तं दृष्ट्वा परमाश्चर्यं यमदूता यमं ययुः । वृत्तांतं कथयामासुर्नरकस्य सुशांतिजम् ॥१२॥ तच्छ्रुत्वा विस्मितो धर्मो ध्यानसंस्थो बभूव ह । ज्ञात्वा तान् कथयामास स्मृत्वा लंबोदरं प्रभुः ॥१३॥ धर्मराज उवाच । पिशुनोऽयं महापापी चांडालो नाऽत्र संशयः । न योग्यो नरके दूता अधुना पुण्यवानभूत् ॥१४॥ यत्राऽयं तु मृतस्तत्र गाणपत्यः समागतः । तस्य मस्तकगा दूर्वा पपात पिशुनोपरि ॥१५॥ यस्य स्पर्शो भवेद् दूता अस्थिकस्य शवस्य वा । तस्य पापं लयं सर्वं गमिष्यति न संशयः ॥१६॥ पुण्यराशिर्भवेत् सोऽपि सर्वमान्यो विशेषतः । अत एनं तु निष्कास्यानयंतु मम संनिधौ ॥१७॥ यमस्य वचनं श्रुत्वा विस्मितास्ते समाययुः । निष्कासितुं समुद्युक्तास्तावच्चित्रं बभूव ह ॥१८॥ गणेशदूतसंयुक्तं विमानं नेतुमाययौ । तं गृह्य गाणपत्यास्ते ययुः स्वानंदकं पुरम् ॥१९॥ पिशुनं ब्रह्मभूतं ते चक्रुर्हर्षसमन्विताः । पूर्वदेहस्य दूर्वायाः स्पर्शो भक्तिपरायणाः ॥२०॥ धर्मोऽति-विस्मितो भूत्वा तान् जगाद स्वसेवकान् । अहो पश्यत दूतेशा दूर्वामाहात्म्यमुत्कटम् ॥२१॥ धन्योऽयं पिशुनो पापी यस्य देहे समागता । दूर्वा यया विशेषेण योगिनां पदगोऽभवत् ॥२२॥ महिमानं तु दूर्वायाः को जानाति समग्रकम् । शवस्पर्शेन दूतेशा ब्रह्मभूतपदप्रदम् ॥२३॥ तानुक्त्वा साश्रुनेत्रः स बभूव रविनंदनः । गणेशं मन्यते नित्यं भजते भक्तिसंयुतः ॥२४॥ इदं दूर्वाभवं चित्रं माहात्म्यं यः शृणोति चेत् । पठति तस्य विघ्नेशो वाञ्छितं ददते सदा ॥२५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते दूर्वापत्रस्पर्शमहिमावर्णनं नामाष्टाविंशतितमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । अन्यत्त्वं शृणु माहात्म्यं दूर्वायाः स्वसुखप्रदम् । यया तृप्तिसमायुक्तो बभूव द्विरदाननः ॥१॥ एकदा नारदो योगी जगाम जनकालयम् । पूजितो जनकं सोऽपि जगाद हर्षसंयुतः ॥२॥ नारद उवाच । धन्यस्त्वं गणनाथस्य भक्तः परमभाविकः । मनेप्सितं गणाध्यक्षो ददते ते नियंत्रितः ॥३॥ नारदस्य वचः श्रुत्वा तं प्रहस्य महामुनिम् । जगाद जनको वाक्यं योगयुक्तं स योगवित् ॥४॥ जनक उवाच । याज्ञवल्क्येन योगश्च कथितो मे शुभप्रदः । पूर्णशांतिप्रदो विप्र गाणेशो नात्र संशयः ॥५॥ एकाक्षरं गणेशस्य ददौ मंत्रं सुसिद्धिदम् । मह्यं स कृपया योगिन् साधनं प्रजगाम ह ॥६॥ तथा मया महायोगिन् साधितं ज्ञानमुत्तमम् । गणेशकृपयाऽहं तु योगी जातो गुरुर्यथा ॥७॥ अतोऽहं गणनाथश्च न भिन्नौ मुनिसत्तम । गणेशस्य कृपा कुत्र वर्तते भेददायिनी ॥८॥ मया यच्चिंतितं तत्तत् कथं ददाति विघ्नपः । अयोगिनामिदं सर्वं भ्रांतिदं भवतीत्यहो ॥९॥ पंचधा चित्तवृत्तिश्च तासां प्रकाशकारकः । चिंतामणिः स्वयं साक्षात् खेलति हृदि संस्थितः ॥१०॥ जनकः कुत्र योगींद्र वर्तते वद सांप्रतम् । तस्योपरि गणेशस्य कृपादिकमिदं मुने ॥११॥ अहं हर्ता अहं कर्ताऽहं पाता च मदात्मनाम् । भ्रांतवद्भाषणं योग्यं नैव ते योगिसत्तम ॥१२॥ जनकस्य वचः श्रुत्वा नारदः क्रोधसंयुतः । उवाच तं महाभागं निर्भर्त्स्य जनकं पुनः ॥१३॥ नारद उवाच । ज्ञानमत्तोऽसि राजेंद्र नश्वरस्त्वं कथं भवेः । गणेशाकाररूपश्च देहवान् भ्रमधारकः ॥१४॥ ब्रह्मणस्पतिनामा वै गणेशो वेदवादतः । शरीरे तस्य सा सत्ता वर्तते पूर्णभावतः ॥१५॥ योगिदेहेन सा सत्ता कदापि नृप वर्तते । समाधिना च योगींद्रो गणेशः कथितो बुधैः ॥१६॥ प्रारब्धदेहधारित्वान्नरो योगी न संशयः । नरतुल्या शरीरेस्य भवेत् सत्ता हि सर्वदा ॥१७॥ गर्विष्ठो योगमाहात्म्याज्जनक त्वां विशेषतः । भविता गर्वभंगस्ते गजाननप्रसादतः ॥१८॥ एवमुक्त्वा नृपं योगी कैलासे गणपं ययौ । तं प्रणम्य विनीतः स वृत्तांतं प्रजगाद ह ॥१९॥ पुनः प्रणम्य विघ्नेशं ययौ स्वेच्छाचरो मुनिः । नारदो गणनाथस्य गानासक्तो महामतिः ॥२०॥ ततो गजाननो भूपं वृद्धब्राह्मणरूपधृक् । आययौ जनकं कुष्ठी कृमिभाराकुलः पतन् ॥२१॥ कंपेन संयुतः सोऽपि दुर्गंधेन समावृतः । पूयशोणितघर्मौघैर्व्याप्तश्च मक्षिकावृतः ॥२२॥ द्वारपालेन राज्ञश्चाज्ञया तत्र प्रवेशितः । ययाचे तं नृपं विप्रो भोजनं तोषकारकम् ॥२३॥ राज्ञा संपूजितो विप्रो बुभुजेऽन्नं समागतम् । अन्नं पुनर्ययाचे तं पुष्कलं प्रददौ नृपः ॥२४॥ तदेव तेन संभुक्तं पुना राजा भयाकुलः । अयुतानां समं तस्मै ददावन्नं

सुतुष्टिदम् ॥२५॥ भक्षयित्वा तदपि स ययाचेऽन्नं महामुनिः । ततोऽपक्वं ददौ तस्मै तद् बभक्ष द्विजोत्तमः ॥२६॥ ततो राजा पुरे संस्थं भूमिस्थं प्रददौ पुनः । अन्नं बभक्ष तत् सोऽपि ययाचे तं धरापतिम् ॥२७॥ पुरप्रांते स्थिता ग्रामास्तेभ्यो राज्ञा समाहृतम् । अन्नं दत्तं च विप्रेण भक्षितं सकलं प्रभो ॥२८॥ ययाचे स नृपं विप्रो देह्यन्नं राजसत्तम । राज्ञा लज्जासमायुक्तो न किंचित्तमुवाच ह ॥२९॥ राजानं मुनिवर्यश्च जगाद प्रहसन्निव । त्वं गणेशो न संदेहः कथं सत्ताविवर्जितः ॥३०॥ अकर्तुं कर्तुमन्यैवान्यथा कर्तुं गजाननः । समर्थस्त्वं कथं राजंस्तूष्णीं तिष्ठसि तद् वद ॥३१॥ भ्रांतो योगमदेनासि राजेंद्रात्र न संशयः । प्रत्यक्षं नरतुल्योऽसि न गणेशो मतः कदा ॥३२॥ एवमुक्त्वा गणेशानो ब्राह्मणस्य स्वरूपधृक् । बहिर्निःसृत्य लोकान् स ययाचेऽन्नं क्षुधातुरः ॥३३॥ लोकाः सर्वे समूचुस्तं सर्वेषां गृहगं मुने । राज्ञा समाहृतं चान्नं त्वया सर्वं प्रभक्षितम् ॥३४॥ नास्मद्गेहेऽधुना किंचिदन्नं त्वं गच्छ वाडव । सर्वभक्षः कुतो यातः कोऽसि न ज्ञायते जनैः ॥३५॥ श्रुत्वा सोऽपि हसन् विप्रो बभ्राम यत्र तत्र तु । पुरप्रांते गतो दैवाद् ददर्श वाडवालयम् ॥३६॥ त्रिशिरा मुनिवर्यश्चायाचिता वृत्तिधारकः । गाणपत्याग्रणीः पत्न्या स विरोचनया युतः ॥३७॥ तं ददर्श गणेशानः प्रविवेश तदाश्रमम् । सर्वापकारसंयुक्तं धातुधान्यादिवर्जितम् ॥३८॥ ययाचे तं महाभागमन्नं तृप्तिकरं मुने । दीयतां मे क्षुधार्ताय गाणपत्यस्वरूपधृक् ॥३९॥ जगाद त्रिशिरास्तत्र ब्राह्मणं वाक्य-मुत्तमम् । मद्गृहे नैव विप्रेंद्र धान्यं किंचित् प्रवर्तते ॥४०॥ दरिद्राणां महाराजोऽहमेको नात्र संशयः । मत्समो मानवो युक्तो दारिद्र्येण न तिष्ठति ॥४१॥ दूर्वांकुराः समानीता गणेशपूजनाय च । तेष्वेको विद्यते विप्र नान्यत् किंचिद् विचारय ॥४२॥ तस्य तद् वचनं श्रुत्वा जगाद क्षुधितो द्विजः । भक्त्या देहि महाभाग दूर्वांकुरं क्षुधापहम् ॥४३॥ ततो विरोचना विप्रं ददौ नत्वा गजाननम् । ध्यात्वा दूर्वांकुरं तस्मै नानान्नं कल्प्य तत्र सा ॥४४॥ भक्त्या दत्तं तया विप्रो बभक्ष प्रीतिसंयुतः । तेन दूर्वांकुरेणैव संतृप्तोऽभून् महामते ॥४५॥ भक्त्या तुष्टो ददौ विप्रं दर्शनं गणनायकः । गजवक्त्रादिचिह्नैश्च युतं रूपं परात्परम् ॥४६॥ दृष्ट्वा लंबोदरं तौ तु प्रणेमतुः पुनः पुनः । तं साश्रुनयनौ पूज्य तुष्टुवतुः कृतांजली ॥४७॥ विरोचनात्रिशिरसावूचतुः । गणेशाय नमस्तुभ्यं नमः सर्वप्रियंकर । ब्रह्मणे ब्रह्मनाथाय विघ्नेशाय नमो नमः ॥४८॥ हेरंबाय परेशाय मूषकध्वजिने नमः । आत्मनेऽनात्मने तुभ्यं नमो लंबोदराय वै ॥४९॥ अनामय ह्यनाधार

सर्वाधार सुमूर्तये । वक्रतुंडाय सर्वेषां नमः पूज्याय ते नमः ॥५०॥ आदिमध्यांतहीनाय तदाकाराय ढुंढये । ज्येष्ठराजाय सर्वेषां मात्रे पित्रे नमो नमः ॥५१॥ सर्वादिशूर्पकर्णाय पूर्णाय धरणीधर । शेषनाभिविभूषाय नमश्चिंतामणे नमः ॥५२॥ सिद्धिबुद्धिप्रदात्रे ते स्वानंदे वासकारिणे । भक्तेभ्यः शांतिदात्रे वै शांतिस्थाय नमो नमः ॥५३॥ सिद्धिबुद्धिवरायैव नमो मूषकवाहन । गजाननाय ज्येष्ठेभ्यः पदज्येष्ठप्रदायिने ॥५४॥ धन्यौ माता पिता नाथ कुलशीलादिकं च मे । येन दृष्टो गणाधीशो वेदांतागोचरो विभुः ॥५५॥ वेदा विदुर्नो न च योगिनोऽयं ब्रह्मादयो वेदविदः शिवादयः । शांत्या प्रलभ्यं गणनाथमेवं पश्यावहे चित्रमिदं न संशयः ॥५६॥ परात्परस्त्वं परमप्रमेयः कथं महात्मन् सदने गतो मम । न मत्समो ह्यंडकटाहमध्ये गणेश ते पादसमीपगादहो ॥५७॥ एवं संस्तुवतस्तस्य सस्त्रीकस्य महामुने । अत्यंतभक्तिमाहात्म्यात् कंठरोधः समाभवत् ॥५८॥ ननर्त परमानंदयुक्तस्तत्र प्रजापते । सरोमांचो न सस्मार यथा भ्रांतश्च साश्रुकः ॥५९॥ ततस्तं गणनाथो वै जगाद वचनं हितम् ॥ स्वयं साश्रुः सरोमांचो भक्तिं दृष्ट्वा महामुने ॥६०॥ श्रीगणेश उवाच । भवत्कृतमिदं स्तोत्रं मम प्रीतिकरं बहु । भविष्यति जनानां वै मुने मद्भक्तिवर्धनम् ॥६१॥ यः पठिष्यति यो मर्त्यः श्रोष्यते सर्वमालभेत् । भुक्तिं मुक्तिं ब्रह्मभूयं सर्वदा मत्प्रियो भवेत् ॥६२॥ वरान् वृणु महायोगिंस्त्रिशिरो मनसीप्सितान् । सर्वं दास्यामि भक्त्या ते तोषितोऽहं न संशयः ॥६३॥ गणेशवचनं श्रुत्वा सस्त्रीकस्त्रिशिराः पुनः । उवाच तं प्रणम्यादौ भक्त्या नम्रो महामुनिः ॥६४॥ त्रिशिरा उवाच । मां मोहयसि किं नाथ न वृणोमि गजानन । सर्वं भ्रांतिप्रदं मत्वा भक्तिं याचे त्वयि स्थिराम् ॥६५॥ श्रुत्वा जगाद तं विघ्नराजोऽसौ विस्मितोऽभवत् । अहो यः सुदृढां भक्तिमेकां वृणोति वाडवः ॥६६॥ श्रीगणेश उवाच । पूर्णां भक्तिं महायोगिन् लभसे नात्र संशयः । मदीयां ते वशे नित्यं भविष्यामि तथा किल ॥६७॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः । सस्त्रीकस्त्रिशिरास्तत्र खेदयुक्तो बभूव ह ॥६८॥ गणेशकृपया तत्र गृहं तस्य महामुनेः । शुशुभे रत्नसंयुक्तं सुवर्णभित्तिराजितम् ॥६९॥ द्वारि नाना जनास्तत्र सुवर्णयष्टिधारकाः । स्थितास्तथा स्त्रियो दासाः सेवां कर्तुं सुलालसाः ॥७०॥ नानासंपत्तिसंयुक्तं दृष्ट्वाऽसौ विस्मितोऽभवत् । तावद्दासाश्च तं गृह्य सेवां चक्रुः सुभाविकाः ॥७१॥ तद् दृष्ट्वा परमाश्चर्यं मुनिः पत्नीं समब्रवीत् । माया भक्तिप्रणाशार्थं दत्ता विघ्नेश्वरेण च ॥७२॥ अतो यत्नसमायुक्ता भुंक्ष्व भोगान् महासति । एवं मदविहीनौ तौ परं बुभुजतुः सुखम् ॥७३॥

दानमार्गेण स ददौ द्रव्यं नानाविधं विधे । तथापि तादृशं तत्र रेजे सोऽपि सुविस्मितः ॥७४॥ एतत्ते कथितं किंचित्
दूर्वामाहात्म्यमुत्कटम् । गणेशतोषकं पूर्णं सर्वसिद्धिप्रदायकम् ॥७५॥ गणेशरोमकूपेषु ब्रह्मांडानि ह्यनेकशः । ब्रह्म
नानाविधं देहे स्थितं तस्य प्रजापते ॥७६॥ तत्सर्वं तृप्तिमायाति तृप्ते विघ्नेश्वरे परे । फलं तस्य च लोके को वर्णयेद्वद
मानद ॥७७॥ त्रैलोक्यादिकमेतस्मान्न तुल्यं दूर्वया भवेत् । अपारपुण्यदा प्रोक्ता गणेशे तोषकारिणी ॥७८॥ दूर्वाया महिमा
दक्ष कथितो ब्रह्मदायकः । भुक्तिमुक्तिप्रदः पूर्णः पठते शृण्वते भवेत् ॥७९॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते त्रिशिरसश्चरितवर्णनं नाम एकोनत्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । श्रुतं दूर्वार्पणस्याऽपि माहात्म्यं सर्वसिद्धिदम् । न दूर्वया समं किंचिद् दृश्यते भुवनेषु
वै ॥१॥ तथापि तृप्तिं नो यामि योगामृतपरायणः । अतो मे वद योगींद्र जनकस्य कथानकम् ॥२॥ गणेशेन महायोगी
जनकश्छलितोऽभवत् । किं चकार ततः सोऽपि गते विघ्नेश्वरे वद ॥३॥ मुद्गल उवाच । शृणु प्रजापते चित्रं चरित्रं जनकस्य
च । गते गणेश्वरे सोऽपि दुःखयुक्तो बभूव ह ॥४॥ शुशोच हृदि संक्षुब्धो जगाद स्वस्य चेतसि । अहो नारदविप्रेण
कथितं सत्यमेव तत् ॥५॥ देहो भक्तिकरः प्रोक्तो न भजेद्यस्तमाप्य सः । गजाननं नरो नित्यं वंचितो मायया
परम् ॥६॥ कर्मनिष्ठैर्गणेशानः सेव्यः स्वहितकारणात् । तपःफलप्रदः सेव्यः तपोनिष्ठैस्तथाऽपि सः ॥७॥ ज्ञाननिष्ठैः सदा
सेव्यो ज्ञानसिद्धिप्रदायकः । योगिभिर्योगदाता स सेव्यो ब्रह्ममयः प्रभुः ॥८॥ अहो देहधरः साक्षाद्ब्रह्मणस्पतिवाचकः ।
वेदेषु कथितश्चायं गणेशो नात्र संशयः ॥९॥ संत्यज्य मूर्खवद्भ्रांतोऽहं गणेशं प्रभावतः । योगस्य चावदं मिथ्या
नरतुल्यस्वभाववान् ॥१०॥ गणेशभजनं मुख्यं धृतं येन महात्मना । स योगींद्रगुरुः साक्षात्तत्समं नैव विद्यते ॥११॥
एवं क्षोभसमायुक्तो जनकः स्वगृहे स्थितः । समाययुश्च योगींद्रास्तं नवर्षभनंदनाः ॥१२॥ नग्नाः सर्वत्र पूज्याश्च
सदा यौवनधारकाः । अव्याहतास्त्रिलोकेषु भ्रमंतः स्वेच्छयाचराः ॥१३॥ सर्ववंद्याः सदा दक्ष ब्रह्मभूयपरायणाः ।

विधिनिषेधहीनाश्च योगरूपधरा इव ॥१४॥ गणेशस्य चरित्राणि कथयंतः परस्परम् । तद्रूपास्तस्य नामानि वदंतो हर्षसंयुताः ॥१५॥ स्वपरभ्रांतिशून्याश्च समलोष्टाश्मकांचनाः । भेदाभेदविहीना वै वर्णाश्रमविवर्जिताः ॥१६॥ स्वेच्छया कर्म कर्तारः स्वेच्छया ज्ञानधारकाः । स्वेच्छया समशीला वै स्वेच्छया सहजप्रियाः ॥१७॥ स्वेच्छया स्वस्वरूपस्था स्वेच्छया योगतत्पराः । स्वेच्छया पूर्णयोगस्था वर्णवंतश्च स्वेच्छया ॥१८॥ स्वेच्छयाऽऽश्रमसंयुक्ताः स्वेच्छया विधिधारकाः । निषेधे स्वेच्छया युक्ताः स्वाधीनास्ते च योगिनः ॥१९॥ विधिनिषेधहीनाश्च स्वेच्छया वै विनायकाः । दंडादिभिर्विहीनास्ते गणेशगानतत्पराः ॥२०॥ तान् दृष्ट्वा जनको राजा संभ्रमाकुलचेतसा । समुत्थाय ननामाऽऽदौ दंडवत् पृथिवीतले ॥२१॥ उत्थाय तान् प्रपूज्याऽथ भोजयामास चांधसा । पादसंवाहने संस्थो जगाद वचनं हितम् ॥२२॥ जनक उवाच । धन्यौ मे पितरौ विद्या तपःस्वाध्यायकादयः । ब्रह्मणस्पतिरूपाणां भवतां दर्शनात् किल ॥२३॥ निःस्पृहाः सर्वभावेषु भवंतो नात्र संशयः । तथापि भवदाज्ञां वै कर्तुमीहे च योगिनः ॥२४॥ भवतां किंचिदाज्ञायां संस्थितो यदि मानवः । सकृत्तस्य पुनर्जन्म विद्यते नैव भक्तिभाक् ॥२५॥ अवमानेन सद्यो वै नारकी जायते नरः । साक्षाद्योगस्वरूपाश्च भवंतः कृपयाऽऽगताः ॥२६॥ न मत्समस्त्रिलोकेषु भवतां दर्शनाद्भवेत् । अधुना कृतकृत्योऽस्मि जातोऽहं भाग्यगौरवात् ॥२७॥ मुद्गल उवाच । जनकस्य वचः श्रुत्वा साधु तं ते प्रजापते । जगुः प्रहृष्टभावेन राजानं शांतिदायकाः ॥२८॥ नवयोगिन ऊचुः । धन्यस्त्वं मानवो राजा विदेहोऽसि न संशयः । साधुत्वे देहसंस्थोऽपि त्वयि चित्रं न संभवेत् ॥२९॥ साधुदर्शनकामाश्च वयं ते गृहमागताः । दृष्ट्वा त्वां योगिनं पूर्णं तृप्ताः स्मः श्रुतकीर्तयः ॥३०॥ गच्छामो राजशार्दूल नेच्छामः किंचिदप्यहो । पूजां त्वया कृतां दृष्ट्वा संतुष्टाः स्मो महामते ॥३१॥ तेषां तद्वचनं श्रुत्वा तान् जगाद नृपः पुनः । प्रणम्य भक्तिसंयुक्तो हितं सर्वजनप्रियः ॥३२॥ जनक उवाच । वदेत योगसंसिध्यै किं कर्तव्यं जनैः सदा । येन योगींद्र वंद्यास्ते भवंति मानवा बुधाः ॥३३॥ कविरुवाच । स्वधर्मपालको नित्यं भवेद्योगपरायणः । रजस्तमस्तिरस्कृत्य सत्त्वयुक्तो मुमुक्षुकः ॥३४॥ गणेशार्पणबुद्ध्या वै कर्माणि सततं नरः । कुर्याच्छ्रौतानि स्मार्तानि व्रतादीनि विशेषतः ॥३५॥ आंतराणि महाराज वायुसाधनकानि वै । स्मृतानि तानि सर्वाणि कुर्यात् ध्यानपरायणः ॥३६॥ गणेशस्य सदा ध्यानं कुर्यात् स्वहृदि भूमिप । एकाक्षरादिमंत्राश्च तेष्वैकजपकारकः ॥३७॥ संप्रज्ञातसमाधिस्थः संभवेद्यदि मानवः । तथापि गणराजस्य ध्यानं नैव

परित्यजेत् ॥३८॥ असंप्रज्ञातयोगस्थः भवेद्यदि स मानवः । तथापि विघ्नराजस्य सदा ध्यानं समाचरेत् ॥३९॥ गणेशध्यान-संयुक्तो योगभूमिं नृपात्मज । स च स्वल्पेन कालेनोल्लंघयेद्विघ्नहानतः ॥४०॥ ततो योगी भवेन्नूनं शांतियोगपरायणः । चित्ते चिंतामणौ सोऽपि तदाकारः सुसाधनात् ॥४१॥ न गणेशसमं किंचिज्जगत्सु ब्रह्मदं भवेत् । सर्वेभ्यो योगदानार्थं बभूवे देहधारकः ॥४२॥ एतत्ते कथितं भूप योगप्राप्तौ सुसिद्धिदम् । भजनं सिद्धिनाथस्य योगसिद्धिप्रदायकम् ॥४३॥ जनक उवाच । कथं चिंतामणिः प्रोक्तो गणेशानो वदंतु मे । तस्य रूपं कथं ज्ञेयं नरैश्चित्ते विशेषतः ॥४४॥ हरिरुवाच । चित्तं पंचविधं प्रोक्तं तत्र चिंतामणिः स्थितः । चित्तप्रकाशकत्वाद्वै विघ्नेशानः प्रकथ्यते ॥४५॥ क्षिप्तं मूढं च विक्षिप्तमेकाग्रं च निरोधकम् । पंचधा चित्तमेवं तु भवते शृणु भूमिप ॥४६॥ यत्र क्षिप्तं मनः सर्वैस्तत्र ज्ञानयुतं भवेत् । तदेव कर्तुमुद्युक्तं समर्थं संभवेत् कथम् ॥४७॥ क्षिप्तं चित्तं विजानीहि स्मृतस्तत्र प्रकाशकः । चिंतामणिर्गणाधीशस्तं भजस्व महामते ॥४८॥ यत्र क्षिप्तं नरेणैव चित्तं तत्र न गच्छति । ज्ञानहीनतया तस्य मूढवन् मूढसंज्ञितम् ॥४९॥ अन्यच्च भ्रांतियुक्तानां पिशाचवत् स्थितं सदा । चित्तं तदेव मूढं च ज्ञातव्यं जनवत्सल ॥५०॥ तत्र प्रकाशकर्ता स नानाखेलपरायणः । चिंतामणिर्गणाध्यक्षः स तिष्ठति भजस्व तम् ॥५१॥ सत्वभावसमायुक्तो मानवो मोक्षकामुकः । ब्रह्मार्पणतया सर्वं कुरुते कर्म नित्यदा ॥५२॥ ब्रह्मानुभवहीनो न जगत्सु सुखलालसः । ब्रह्मार्थं तस्य चित्तं वै विक्षिप्तं कथितं बुधैः ॥५३॥ संसारे क्षिप्तभावश्च तस्माद्विगतक्षेपणम् । कर्तुं समुद्यतः सोऽपि सदा साधनतत्परः ॥५४॥ अनेन विधिना राजन् विक्षिप्तं चित्तमुच्यते । तत्र प्रकाशकर्तारं चिंतामणिं भजस्व तम् ॥५५॥ ज्ञानदृष्टिः समुत्पन्ना हृदि सर्वत्र भूमिप । साक्षाद्भावस्यैक्यकरावयवादिक-वर्जिता ॥५६॥ तया सोऽपि नरस्तत्र यत्र पश्यति योगवित् । आकाररहितं भाति विश्वं सर्वं न संशयः ॥५७॥ अष्टधा सा समाख्याता संप्रज्ञातस्वरूपिका । एकभावकरा वृत्तिरेकाग्रा कथिता बुधैः ॥५८॥ तत्र चिंतामणिः साक्षात् प्रकाशकारकः स्मृतः । तं भजस्व विधानेन सर्वसिद्धिप्रदायकम् ॥५९॥ जगदवयवैर्युक्तं चतुर्देहमयं नृप । बिंदुस्तस्य परा काष्ठा ब्रह्मकायाप्रधारकम् ॥६०॥ देही भेदविहीनश्च देहचालक उच्यते । सोऽहं मात्रात्मकः सोऽपि कथितो वेदवादिभिः ॥६१॥ तयोर्योगे निरोधश्च सदा भवति चेतसः । तस्य भेदौ समाख्यातौ संयोगायोगरूपिणौ ॥६२॥ स्वत उत्थानयुक्तं परत उत्थानधारकम् । स्वतः परत उत्थानवर्जितं ब्रह्म उच्यते ॥६३॥ एतत् संयोगकं प्रोक्तं समाधेर्धारकं परम् । सर्वेषां तत्र

संयोगो ब्रह्माकारेण जायते ॥६४॥ अन्यदयोगरूपं वै निवृत्तेर्धारकं परम् । ब्रह्म मायाविहीनं तु व्यतिरेकप्रभावतः ॥६५॥ केषांचित्तत्र संयोगो ब्रह्मणां जगतां भवेत् । नैव केषु च तस्यापि ब्रह्मायोगं प्रकथ्यते ॥६६॥ स्वकीयभेदनाशेन लभ्यते नात्र संशयः । तदेव ब्रह्मभूतत्वं निरोधवृत्तिजं मतम् ॥६७॥ निरोधे चित्तके राजन् प्रकाशदगणेश्वरम् । चिंतामणिं भजस्व त्वं परं तत् खेललालसम् ॥६८॥ पंचधा चित्तभूमिस्थं त्यक्त्वा योगपरो भवेत् । स्वयं चिंतामणिः साक्षाद्भवते चित्तनाशनात् ॥६९॥ शांत्या सर्वत्र राजेंद्र चित्तेषु नित्यमादरात् । चिंतामणिः प्रलभ्येत त्यक्त्वा सद्यश्च चिंतनम् ॥७०॥ एतत्ते कथितं पूर्णं चिंतामणिस्वरूपकम् । तं भजस्व विधानेन शांत्या योगपरायणः ॥७१॥ जनक उवाच । एतादृशो गणेशानः कथं देहधरोऽभवत् । तत्र श्रद्धादिकं नाथास्तादृशं जायते कथम् ॥७२॥ अंतरिक्ष उवाच । वामभागे राजसश्च दक्षिणे तामसः स्मृतः । मध्ये सत्त्वमयः प्रोक्तस्तेषां योगे तुरीयकः ॥७३॥ चतुर्विधमयो देहस्तत्राहंकारधारकः । देही च तन्मयः साक्षात् कंठाधो गणनायकः ॥७४॥ यस्मात् सर्वं समुत्पन्नं यत्र गच्छति भूमिप । समाधिना महोग्रेण प्रलये तद्गजः स्मृतः ॥७५॥ कदा न जायते भूप लयं गच्छति नो कदा । तदेव गजशब्दाख्यं ब्रह्म वेदैः प्रकथ्यते ॥७६॥ तदेव मस्तकं तस्य गणेशस्य महात्मनः । तयोर्योगे गणाध्यक्षः साकारो भवतीत्यहो ॥७७॥ संप्रज्ञातमयो देहः कंठाधस्तस्य कीर्तितः । असंप्रज्ञातरूपं च कंठादूर्ध्वं शिरः स्मृतम् ॥७८॥ तयोर्योगे स्वयं साक्षाद्भक्तानुग्रहकारणात् । देहधारी बभूवाऽपि गणेशो ब्रह्मनायकः ॥७९॥ न सर्वसमभावाख्यो देहस्तस्य महात्मनः । देहधारी गणाधीशो भक्तिभोगार्थमंजसा ॥८०॥ न भक्तेश्च समं तस्य प्रियं राजेंद्र वर्तते । तदर्थं सकलं हित्वा भक्ताधीनो भवेत् स्वयम् ॥८१॥ मायया भ्रांतचित्तानां देहधारी यथा नरः । तथाऽयं भवति प्राज्ञ साक्षाद्योगस्वरूपधृक् ॥८२॥ जनक उवाच । कीदृशी गणराजस्य माया भ्रांतिकरी मता । तां मे वदत योगींद्रा ब्रह्मभूयार्थमंजसा ॥८३॥ प्रबुद्ध उवाच । वामांगात् सिद्धिरुत्पन्ना वामभागप्रकाशिनी । दक्षिणांगात्तथा बुद्धिर्दक्षिणांगधरा बभौ ॥८४॥ सिद्धिपुत्रः स्वयं लक्षो बुद्धिपुत्रो महामते । लाभस्तयोश्च चित्तात्तौ संजातौ खेलकौ परौ ॥८५॥ मायामोहितचित्तानां भ्रामकौ नात्र संशयः । तयो रूपं प्रवक्ष्यामि शृणु लोकहिताय च ॥८६॥ पापेषु च नरा राजन् यदा लक्षं प्रकुर्वते । तदा नरकदो लाभो भवते पापकारिणाम् ॥८७॥ यदा पुण्येषु लक्षं वै कुर्वते मानवा नृप । तदा स्वर्गप्रदो लाभो जायते पुण्यकर्मणाम् ॥८८॥ यदा ब्रह्मणि लक्षं वै कुर्वते मानवा नृप । तदा

योगमयो लाभः सदा भवति योगिनाम् ॥८९॥ हृदि लक्षः स्थितो नित्यं सर्वत्र लक्षदायकः। पदार्थेषु स्थितो लाभो मतो नाना फलप्रदः ॥९०॥ ताभ्यां स युवराजाभ्यां विघ्नेशो मायया चरन्। बंधहीनः खेलति च स्वेच्छाचारिस्वरूपधृक् ॥९१॥ तत्र भ्रांतिकरी प्रोक्ता सिद्धिः सर्वत्र वर्तते। सिद्ध्यर्थं सर्वलोकाश्च बभ्रमुस्त्वं विचारय ॥९२॥ धर्मसिद्धिस्तथार्थस्य सिद्धिः कामप्रदायिनी। मोक्षसिद्धिस्तथा राजन् ब्रह्मभूयकरी मता ॥९३॥ अहं गणेशरूपश्चेत् कथमत्र प्रवर्तते। भुक्तिमुक्ति-ब्रह्मभूयं सिद्धिः सुभ्रांतिदा मता ॥९४॥ भ्रांतिधारकरूपा सा बुद्धिः सर्वत्र वर्तते। बुद्ध्या बुद्ध्वा तु राजेंद्र पश्चान् मोहो निवर्तते ॥९५॥ पंचचित्तमयी बुद्धिः स्वयं विश्वात्मिका मता। ब्रह्माकारा तथा भिन्नं पदमिच्छति दुःखदम् ॥९६॥ सकामा चैव निष्कामा ब्रह्मभूयपरायणा। बुद्धिर्भवति सा भ्रांत्या भ्रांतिधारकतां गता ॥९७॥ नानाभ्रांतियुतं सर्वं चकार सिद्धिमंजसा। नानामोहयुतं तद्वद् बुद्धिश्चकार खेलया ॥९८॥ ताभ्यां संमोहितं सर्वं लक्षलाभयुतं भवेत्। नानालक्ष-समायुक्तं नानालाभफलैर्युतम् ॥९९॥ अतो मायायुतः सोऽपि गणेशो ब्रह्मनायकः। बिंबे खेलति बिंबीव जानीहि नृपसत्तम ॥१००॥ एतन् मायास्वरूपं ते कथितं मोहकारकम्। यज्ज्ञात्वा योगिवंद्यश्च जायते मानवः क्षणात् ॥१॥ जनक उवाच। भक्तिप्रियो गणेशश्चेत् कथं मोहयुतान् जनान्। स्वभक्तान्न स योगींद्राः करोति वदत प्रियाः ॥२॥ न पराधीनता तस्य स्वप्रियं गणनायकः। पराधीनसमानं न न करोति महाद्भुतम् ॥३॥ पिप्पलायन उवाच। गणेशेन महाराज क्रीडार्थं रचितं जगत्। मायामयं विशेषेण नानाखेलयुतं तथा ॥४॥ तत्रादौ द्विविधं तेन तदर्थं रचितं पुरा। तच्छृणुष्व विधानेन सर्वसंशयहारकम् ॥५॥ स्वस्वस्वार्थयुतं पूर्णं मायासुखकरं मतम्। तदर्थं सर्वलोकाश्च ब्रह्माणि संभ्रमंति वै ॥६॥ योगमार्गस्तथा राजन् गाणेशः शांतिदः परः। रचितो मोहनाशार्थं मायानाशकरो मतः ॥७॥ योगेन गणपं ज्ञात्वा नरः पूर्णं ततो नृप। भजतेऽनन्यभावेन तन्निष्ठस्तत्परायणः ॥८॥ यस्य भावो भवेद्यत्र यादृशस्तादृशं चरेत्। तत्र विघ्नेश्वरः साक्षादाग्रहं न करोति च ॥९॥ यदा गणेश्वरो विश्वं भक्तियुक्तं निरंतरम्। करोति चेद्गणेशस्य तदा खेलः कुतो भवेत् ॥१०॥ न पराधीनता तस्य क्रीडार्थं गणनायकः। विश्वं तु द्विविधं कृत्वा परां पश्यति भावनाम् ॥११॥ एतत्ते कथितं राजन् श्रोतुमिच्छसि किं परम्। स्वाधीनं तु पराधीनं मायया दृश्यते सदा ॥१२॥ जनक उवाच। किं कर्म किमकर्मापि विकर्मापि कथं भवेत्। कर्मयोगश्च विप्रेंद्राः कीदृशो वदत प्रियाः ॥१३॥ आविर्होत्र उवाच। स्वस्वधर्मयुतं कर्म विधियुक्तं

महामते। देहसौख्यप्रदं प्रोक्तं जन्ममृत्युप्रदं भवेत् ॥१४॥ स्वस्वधर्मविहीनं यद्विधिहीनं विशेषतः। विकर्म विद्धि राजेंद्र तदेवं पापरूपकम् ॥१५॥ पापाचरणमात्रेण नरो दुर्गतिमाप्नुयात्। देहदुःखकरं प्रोक्तं परिणामे न संशयः ॥१६॥ सत्कर्म मुक्तिकामार्थं कुरुते नित्यमादरात्। ब्रह्मार्पणस्वभावेनाकर्म विद्धि महामते ॥१७॥ शुक्लगत्या नरो वेदे मुक्तिं प्राप्नोति शाश्वतीम्। अकर्मणः प्रभावेण स निष्कामपरो मतः ॥१८॥ कर्मयोगमयं विश्वं सर्वं जानीहि पार्थिव। क्रियायां यत् स्थितं ब्रह्म स एव कर्मयोगकः ॥१९॥ क्रियमाणं च यत्प्रोक्तं तदेव कर्म उच्यते। तस्य भेदान् प्रवक्ष्यामि समाहितमनाः शृणु ॥१२०॥ मौनं यदि धृतं तेन तदा जातं नृपात्मज। अतः कर्ममयं विद्धि धारणान्नात्र संशयः ॥२१॥ वायुबंधनयोगेन प्राणो नीतः स्वमस्तके। तदेव कर्मरूपं वै वायुचालनतः परम् ॥२२॥ ध्यानं करोति चेच्चित्ते दमयित्वा मनः स्वयम्। तदेवं कर्मरूपं तु मनोनिग्रहकारणात् ॥२३॥ जागृतिर्जागरं कर्म स्वप्नः सुप्तिमयं भवेत्। अज्ञानं विद्धि सौषुप्तं कर्मरूपं न संशयः ॥२४॥ इत्याद्या बहवो भेदा मया वक्तुं न शक्यते। नामरूपधरः कोऽपि कर्महीनो न वर्तते ॥२५॥ उत्पत्तिश्च स्थिती राजन् संहारस्त्रिविधं परम्। सर्वं कर्ममयं विद्धि कर्मयोगेन जायते ॥२६॥ असद्ब्रह्म च यत् प्रोक्तं वेदे तन्मायया बभौ। कर्मरूपं न संदेहो नामरूपप्रधारणात् ॥२७॥ नामरूपपरित्यागे ह्यसत् स्वानंदगं भवेत्। मानवो ब्रह्मरूपः स कर्मयोगी प्रकथ्यते ॥२८॥ एतत् कर्मस्वरूपं ते कथितं ब्रह्मवाचकम्। कर्माधीनं जगत् सर्वं ब्रह्म नानाविधं तथा ॥२९॥ जनक उवाच। ज्ञानं च कीदृशं प्रोक्तं तन्मे वदत योगिनः। येन योगी भवेज्जंतुर्ज्ञानयोगपरायणः ॥१३०॥ द्रुमिल उवाच। हृदि स्फूर्तिमयं ज्ञानं ज्ञातव्यं विबुधैः सदा। स्फूर्तिदातृस्वरूपेण ब्रह्म तत्र स्थितं भवेत् ॥३१॥ नामरूपविहीनं यत् सदाऽमृतमयं भवेत्। आद्यंतभावहीनं वै तद्विद्धि ज्ञानमुत्तमम् ॥३२॥ ज्ञानचक्षुः स्वभावेन ब्रह्मानुभवकारकम्। नानाज्ञानलयं कृत्वा ज्ञानयोगी भवेत्ततः ॥३३॥ सत्यस्वानंदरूपं त्वं जानीहि ज्ञानमूलकम्। ज्ञानानां योगभावेन लभ्यते योगसेवया ॥३४॥ जनक उवाच। आनंदः कीदृशः प्रोक्तः सहजं कीदृशं मतम्। ब्रह्मभूयं च योगींद्राः कीदृशं कथयंतु मे ॥३५॥ चमस उवाच। बाह्यांतरविभेदेनानंदः सर्वत्र वर्तते। उभयात्मकभावस्थः समरूपधरो मतः ॥३६॥ नानाद्वंद्वेषु राजेंद्र स्थितमानंदरूपकम्। समं विद्धि च सर्वत्र जगत्सु ब्रह्मसु परम् ॥३७॥ सत्यासत्यमयं तद्धि समस्वानंदगं परम्। ब्रह्म राजन् सदानंदरूपं तदेव संमतम् ॥३८॥ द्वंद्वेषु त्वासमंताद्यन्नंदनात्तन् महीपते। आनंदः परमानंदो ब्रह्मानंदः प्रकथ्यते ॥३९॥ समभावस्थितानां च योगेन ब्रह्म

लभ्यते। आनंदाख्यं प्रजानाथ योगसाधनतः परम् ॥१४०॥ एतत्ते कथितं पूर्णमानंदस्य स्वरूपकम्। आनंदानां समायोगे समस्वानंदगो भवेत् ॥४१॥ द्विविधा तस्य माया तु द्वंद्वभावधरा मता। तयोः संयोगभावे स उभयात्मक उच्यते ॥४२॥ तदेव द्विविधेष्वेव मोहयुक्तं नराधिप। समं सर्वत्र जानीहि द्वंद्वमोहादिदायकम् ॥४३॥ त्रिषु मोहविहीनं यत् सदा नेति स्वरूपकम्। स्वाधीनं सहजं विद्धि चतुर्थं राजसत्तम ॥४४॥ स्वेच्छया सत् समायुक्तं स्वेच्छया सत् परायणम्। स्वेच्छयाऽऽनंदसंयुक्तं त्रिभिर्हीनं निजेच्छया ॥४५॥ आज्ञया त्रिविधं ब्रह्म वर्तते नात्र संशयः। सर्वेषां नाशकं तुर्यं सहजं नेति भावतः ॥४६॥ न तस्य नेति कर्ता वै विद्यते योगभावतः। तेन नेतिमयं स्वच्छंदगं प्रोक्तं सनातनम् ॥४७॥ स्वेच्छया बंधयुक्तश्च स्वेच्छया बंधवर्जितः। स्वेच्छया समभावस्थो भवते सहजाख्यकः ॥४८॥ अव्यक्तेन त्रिभावेषु तेन योगेन लभ्यते। सहजं ब्रह्म वेदेषु यत् प्रोक्तं वेदवादिभिः ॥४९॥ स्वाधीनानां समायोगे व्यक्तः स्वानंद उच्यते। अव्यक्तयोगभावत्वान्निराकर्तुं न शक्यते ॥१५०॥ एतत्ते कथितं भूप सहजं मोहवर्जितम्। अधुना शृणु योगं त्वं ब्रह्मभूयप्रकाशकम् ॥५१॥ स्वानंदः सर्वसंयोगे भवति ब्रह्मधारकः। चतुर्णां तत्र संयोगः कर्तव्यः स्वसमाधिना ॥५२॥ त्रिविधं मोहयुक्तं च मोहहीनं चतुर्थकम्। नैव ब्रह्मणि राजेंद्र मोहयुक्तविहीन ते ॥५३॥ स्वाधीनं न भवेत्तत्तु पराधीनं न वर्तते। ब्रह्मणां जगतां तत्र संयोगो जायते परः ॥५४॥ स्वसंवेद्यमयो भूत्वा यस्तु तिष्ठति मानवः। तत्र किं भिन्नभावाख्यं वर्तते योगनाशकम् ॥५५॥ संयोगे नाशभूते तु ब्रह्मायोगः प्रकीर्तितः। न तत्र जगतां भूप संयोगो ब्रह्मणां भवेत् ॥५६॥ अयोगस्य न संयोगः केषु ब्रह्मसु कीर्तितः। योगिभिर्योगप्राप्त्यर्थं व्यतिरेकाद्विचारय ॥५७॥ संयोगे मायया युक्तो भवते गणनायकः। मायाधीनस्वरूपेण सदाऽयोगः प्रवर्तते ॥५८॥ मायया सर्वभावस्थो भवति द्विरदाननः। संयोगाभेदभावेन निजमायामयः स्मृतः ॥५९॥ स्वानंदे गणनाथस्य दर्शनं योगिनां भवेत्। संयोगाभेदकं तेन विदुः स्वानंदवासिनम् ॥१६०॥ अयोगे माययाहीनो गणेशः सर्वदा मतः। यादृशस्तादृशः सोऽपि नागतो न गतो भवेत् ॥६१॥ वृथा भ्रांतिमयं सर्वं भासते मायया किल। भ्रांतानां तेन सर्वत्र निवृत्तिर्जायते परा ॥६२॥ स्वकीया भेदभावाच्च निवृत्तिं व्यतिरेकतः। धृत्वा ह्ययोगयोगस्थः स्वयं भवति मानवः ॥६३॥ अयोगे मायया हीनः संयोगे मायया युतः। नरो भवति राजेंद्र पंचपंचस्वरूपया ॥६४॥ ब्रह्मणि ब्रह्मभूतस्य संयोगः कुत्र वर्तते।

अयोगश्च महीपाल नान्वयव्यतिरेकतः ॥६५॥ चित्तं पंचविधं त्यक्त्वा चित्तभ्रांतिं च पंचधा । स्वयं चिंतामणिः साक्षाद् ब्रह्मभूतो नरो भवेत् ॥६६॥ संयोगात्मा गकारश्च णकारोऽयोगवाचकः । तयोः स्वामी गणाधीशः संयोगायोगवर्जितः ॥६७॥ इति ते कथितं भूप ब्रह्मभूतस्वरूपकम् । किं श्रोतुमिच्छसि प्राज्ञ गमिष्यामो यदृच्छया ॥६८॥ जनक उवाच । गणेशो भक्तिभावेन नराधीनो भवेत् स्वयम् । न भक्तिसमभावाख्यं मोहदं तस्य संभवेत् ॥६९॥ अतो वदत मे भक्तिस्वरूपं योगिसत्तमाः । तया विघ्नेश्वरं नित्यं भजिष्यामि विशेषतः ॥१७०॥ करभाजन उवाच । भक्तिश्च नवधा प्रोक्ता हृदये रसधारिणी । कथयामि समासेन स्वरूपं रसदायकम् ॥७१॥ श्रवणं कीर्तनं तस्य स्मरणं पादसेवनम् । अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम् ॥७२॥ नवधा मानसी राजन् गतिः सर्वत्र वर्तते । भावेषु रससंयुक्ता दशमी नैव विद्यते ॥७३॥ यदा भक्तौ नरस्यैव रसः पूर्णः प्रवर्तते । तदाऽस्य नवधा नित्यं चित्तं तस्यां वसेत् स्वयम् ॥७४॥ यदा मुक्तौ तथा जंतो रसः पूर्णो जनाधिप । तदा मुक्तिपदार्थेषु चित्तं तु नवधा भवेत् ॥७५॥ यदा च ब्रह्मभूतेषु रसस्तस्य प्रवर्तते । तदा नरस्य योगेषु चित्तं तन्नवधा भवेत् ॥७६॥ योगी भूत्वा नरो यस्तु भजते गणनायकम् । तस्यैव नवधा चित्तं गणेशे सर्वदा भवेत् ॥७७॥ योगिनां हृदि विघ्नेशः पूर्णरूपधरो वसेत् । अयोगिनां कलांशश्च तस्माद्योगी भवेन्नरः ॥७८॥ ततो गणेशरूपस्य भजनं पूर्णभावतः । भवत्यत्र न संदेहो रसयुक्तं विशेषतः ॥७९॥ गणेशगुणवादानां प्रीत्या संपूर्णभावतः । प्रकुर्यात् स नरो नित्यं श्रवणं रससंयुतः ॥१८०॥ सर्वश्रवणजातीनां रसं ज्वाल्य महामतिः । गणेशगुणवादेषु रसं पूर्णं स पश्यति ॥८१॥ एवं श्रवणभक्तिं त्वं प्राप्तां जानीहि भूमिप । समतो योगिषु श्रेष्ठो बुधैर्नृप न संशयः ॥८२॥ तथा कीर्तनभावश्च उत्पद्येत नराधिप । गाणेशकीर्तने भक्तिः प्राप्ता तेन विनिश्चितम् ॥८३॥ गणेशार्थं च या किंचिद्विस्मृतिस्तत्र नो भवेत् । तदा स्मरणभक्तिः सा प्राप्ता संपूर्णभावतः ॥८४॥ गणेशपादपद्मं यो मत्वा शाश्वतकं परम् । तत्रैव सकलो यत्नो भवेत्तत् पादसेवनम् ॥८५॥ सांगं गाणेश्वरं सर्वं कुरुते नित्यमादरात् । अर्चनात्मकरूपां तां भक्तिं प्राप्तो महामतिः ॥८६॥ गणेशान्न परं श्रेष्ठं वेदशास्त्रविचारतः । न चलेत् क्वापि जानीहि तदा वंदनवान् भवेत् ॥८७॥ गाणपत्यानि चिह्नानि धृत्वा तत्परचेतसा । तदा दास्यात्मिका भक्तिः प्राप्ता तेन नराधिप ॥८८॥ अंतर्बाह्यकृतं यद्वै तत्र साक्षी गणेश्वरः । अंतर्भयेन भक्तिर्या सा प्रोक्ता सख्यरूपिणी ॥८९॥ पंचधा मोहयुक्तं स चित्तमुत्सृज्य योगतः । न भिन्नोऽहं गणेशानान्

मत आत्मनिवेदकः ॥१९०॥ मनोगतिः प्राज्ञ यत्र तत्र विघ्नेश्वरं सदा । भजते रससंयुक्तः स वै भक्तः प्रकीर्तितः ॥९१॥ रसरूपा स्वयं भक्तिर्यत्र पूर्णस्वभावतः । यस्य तिष्ठति जंतुः स तद्भक्तः संमतो नृप ॥९२॥ भोगेषु न रसोत्पत्तिर्मुक्तौ च ब्रह्मभूयके । गणेशभक्तिभावेन भक्तस्यैवावतिष्ठति ॥९३॥ आदौ ते कथितं राजन् गणेशस्य स्वरूपकम् । ब्रह्माकारैर्महाचिह्नैः संयुक्तं योगदायकम् ॥९४॥ तत्र विश्वासभावेन तादृगुत्पद्यते रसः । तदा भक्तो महाराज भवते योगिवंद्यकः ॥९५॥ नारदेनैव राजेंद्र बोधितस्त्वं न बुद्ध्यसे । तव भावपरीक्षार्थं भक्तिदानार्थमंजसा ॥९६॥ प्रेषितस्तेन विघ्नेशो वृद्धः कुष्ठयुतो द्विजः । समायातः सर्वभक्षी छलयामास साधुपम् ॥९७॥ नरदेहं समासाद्य गणेशं भजेत न यः । पशुतुल्यः स राजेंद्र तस्य धिक् जन्म निश्चितम् ॥९८॥ मुद्गल उवाच । एवमुक्त्वा विदेहं तं जनकं योगिनो नव । अनुज्ञाप्य ययुस्तस्मात् स्वेच्छया गणपे रताः ॥९९॥ जनकस्तान्नमस्कृत्य स्वगृहे गणनायके । योगी नवविधां भक्तिमकरोद्भाव-संयुतः ॥२००॥ अहर्निशं गणेशानमभजन्नान्यचेतसा । जनकः सर्वभावेन योगिवंद्यो बभूव ह ॥१॥ तिष्ठन् स्वपन् पिबन् वाऽदन् गच्छन् विघ्नेश्वरे रतः । अतो गणेशसंतुष्ट्या तद्वंशे जनका बभुः ॥२॥ सर्वज्ञानसमायुक्ताः सर्वे साधुगुणान्विताः । गणेशभजने सक्ता बभूवुश्च प्रजापते ॥३॥ नवयोगिषु यातेषु जनकस्त्रिशिरोभवम् । वृत्तांतं परिशुश्राव गणेश-गमनात्मकम् ॥४॥ स्वयं तस्य गृहं गत्वा ननाम मुनिपुंगवम् । दैवीसमृद्धिसंयुक्तं योगपारंगतं परम् ॥५॥ तेन संबोधितो राजा नित्यं दूर्वापरायणः । पुपूज गणनाथं तं सदा भक्तिसमन्वितः ॥६॥ दूर्वाहीनां न पूजां स चकार मरणावधि । अंते स्वानंदगो भूत्वा भजते गणनायकम् ॥७॥ इदं जनकमाहात्म्यं कथितं ते प्रजापते । भुक्तिमुक्तिप्रदं नृभ्यः श्रवणात् पठनाद्भवेत् ॥२०८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते दूर्वामाहात्म्यवर्णनं नाम त्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । तुलसीवर्जिता पूजा कर्तव्या कथितं त्वया । किमर्थं पावनी सा तु दोषयुक्ता बभूव ह ॥१॥ तुलस्या किं कृतं विप्र गणेशानस्य विप्रियम् । येन रुष्टोऽमरेशानस्तां तत्याज यशस्विनीम् ॥२॥ मुद्गल उवाच । धर्मध्वजो महीपालो बभूवे धर्मसंयुतः । दाता मान्यो विशेषेण सुज्ञैः सर्वगुणान्वितः ॥३॥ तस्य पुत्री बभूवाऽसौ रूपलावण्यसंयुता । न तया सदृशी कुत्र वर्तते कामिनी विधे ॥४॥ वृंदा नाम्नी च विख्याता प्रणम्य पितरं कदा । जगाद भावगंभीरा चतुरा सुवयोयुता ॥५॥ वृंदोवाच । तात विष्णुं परित्यज्य वृणोम्यन्यं न निश्चितम् । वरं तदर्थमेवं मां देहि तस्मै महामते ॥६॥ धर्मध्वज उवाच । विष्णुर्देववरः साक्षाद् भगवान् विश्वभावनः । स कथं च त्वया लभ्यो वरो लक्ष्मीपतिः सुते ॥७॥ मानुषेषु वरं पुत्रि वरयस्व हृदि स्थितम् । नरा वयं स वै साक्षाद् भगवान् भगधारकः ॥८॥ एवं नानाविधैर्भावैर्बोधिता न बुबोध सा । तदर्थं मंत्रराजं संगृह्य विष्णोर्वनं ययौ ॥९॥ ध्यात्वा चतुर्भुजं विष्णुं निराहारपरायणा । तताप तप उग्रं सा पतिं विष्णुमभीप्सितम् ॥१०॥ तीर्थेषु माधवं दृष्ट्वा तेषु क्षेत्रेषु मानद । तपस्तताप वृंदोग्रं नानामार्गपरायणा ॥११॥ शुष्कपत्राणि वायुं सा जलं मूलं फलं तथा । भुक्त्वा संतोषयामास विष्णुं देववरं विधे ॥१२॥ वर्षाणि लक्षसंख्यानि गतानि तपसो बलात् । राजपुत्र्याश्च वृंदाया न तुतोष जनार्दनः ॥१३॥ अतीव तपसा तस्या अंतर्ज्ञानं बभूव ह । आत्माकारं जगत् सर्वमपश्यद् बोधसंयुता ॥१४॥ कदा विघ्नेश्वरं वृंदा ददर्श नियमे रतम् । संपूज्य गणनाथं वै हृदि ध्यानपरायणम् ॥१५॥ तं दृष्ट्वा कुंजरास्यं सा शिवपुत्रं नृपात्मजा । भागीरथीसंनिधिस्थं विस्मिताऽभूत् प्रजापते ॥१६॥ गणेशार्थं समालोक्य मोहिताऽभूत् स्वचेतसि । अहो गणेश्वरः साक्षाद् ब्रह्मणां नायकः स्मृतः ॥१७॥ अस्य कलांशसंभूताः शिवविष्णवादयोऽपरे । पूर्णभावात्मकः साक्षाद् गणेशो नात्र संशयः ॥१८॥ शिवेन तपसोग्रेणाराधितो गणनायकः । पुत्रोऽभूद्योगशांतिस्थो भक्तभक्तिपदप्रदः ॥१९॥ खेलत्यात्मानमाभज्य चतुर्धाऽनन्यभावतः । अयं विष्णुस्तथा शंभुः शक्तिः सूर्यो न संशयः ॥२०॥ पूर्णभावमविज्ञायाऽहं विष्णुपरमाऽभवम् । अधुना तं समालोक्य बोधयुक्ता न संशयः ॥२१॥ तपःप्रभावसामर्थ्याद् वृणोमि गणनायकम् । व्यभिचारो न मे भावी विष्णुरूपोऽयमंजसा ॥२२॥ एवं विचार्य विघ्नेशमाययौ ध्यानसंस्थितम् । ध्यानभंगार्थमुद्युक्ता वृंदा तं प्रत्युवाच ह ॥२३॥ वृंदोवाच । त्वं साक्षाद् गणराजश्च तपसाऽऽराधितो भवान् । शिवपुत्रत्वमापन्नः किं ध्यायसि वदस्व माम् ॥२४॥ शिवविष्णवादयो देवास्त्वां

भजंति निरंतरम् । कुलदैवतरूपस्थं सर्वसिद्धिप्रदायकम् ॥२५॥ गणेश्वरं समास्थाप्य कथं पूजयसेऽप्यहो । गणेश्वरो विशेषेण स्वयं ध्यायसि तं प्रभो ॥२६॥ अहो चित्रं मया दृष्टं गणेशो गणनायकम् । भजतेऽनन्यभावस्थः शिवपुत्रत्वकारणात् ॥२७॥ न त्वं शिवसुतः स्वामिन् न ते विघ्नेश्वरः कदा । कुलदेवस्तथाऽपि ध्यायसि किं गणपं प्रभो ॥२८॥ तव स्मरणमात्रेण ब्रह्मभूता भवंति ते । नरा देवेंद्रमुख्याश्च योगिनो वेदकादयः ॥२९॥ स्वयं शांतिप्रदाता त्वं किं ध्यायसि गणेश्वरम् । गणेश्वराशु वद मां वाक्यं सगुणनिर्गुण ॥३०॥ कामबाणार्दिता सा तं वृंदा नानाप्रकारतः । बोधयामास विघ्नेशो ध्यानस्थो न बुबोध ताम् ॥३१॥ ततः सा जलबिंदुं वै चिक्षेप गणपोपरि । तथापि ध्यानसंस्थो नालोकयत्तां गजाननः ॥३२॥ जघान मोहसंयुक्तांऽगुल्या तं सा ततोऽसकृत् । ध्यानं त्यक्त्वा गणाधीशस्तामपश्यत् पुरः स्थिताम् ॥३३॥ गणेशाय नम इति मंत्रमुच्चार्य विघ्नपः । जगाद तां सकामां स निष्कामो गणपे रतः ॥३४॥ श्रीमहागणपतिरुवाच । काऽसि त्वं वद मातर्मां चापल्यगुणसंयुते । ध्यानभंगो न कर्तव्यः साधुभिश्च कदाचन ॥३५॥ गणेशकर्मसंस्थं तं नरं यश्च नराधमः । पृच्छते बोधयति वा स वै नरकगो भवेत् ॥३६॥ ध्यानभंगस्य दोषस्ते माऽस्तु बाले सुलक्षणे । मा कुरुष्व पुनस्त्वं च कर्म चापल्यसंयुता ॥३७॥ किमर्थमागता बाले वद मां काममोहिते । निष्कामं गणपे संस्थं गच्छ वा यत्र ते रुचिः ॥३८॥ वृंदोवाच । धर्मध्वजस्य पुत्रीं मां विद्धि नानातपोयुताम् । वरो मम भव स्वामिन् भर्ता त्वं सर्वनायक ॥३९॥ सर्वासां त्वं विशेषेण भर्ताऽस्यत्र न संशयः । तथापि मां भजस्व त्वं भजमानां गजानन ॥४०॥ तस्यास्तद्वचनं श्रुत्वा प्रहस्य गणनायकः । उवाच कामबाणैस्तामर्दितां शांतिधारकः ॥४१॥ श्रीमहागणपतिरुवाच । नाहं वृणोमि धर्मज्ञे स्त्रियं मोहयुतां कदा । तपसा त्वं वरं तुल्यं सुतुष्टं वरयस्व च ॥४२॥ सकामं पुरुषं पश्य सकामा त्वं नृपात्मजे । अहं गणेश्वरस्यैव दासो देवं भजामि तम् ॥४३॥ वृणोमि नैव निष्कामः सकामां देवि निश्चितम् । शांतिस्था मे भवेत् पत्नी गच्छातो यत्र ते समः ॥४४॥ तस्य तद्वचनं श्रुत्वा पुनः सा तमुवाच ह । अहं शांतिसमायुक्ता मां भजस्व दयानिधे ॥४५॥ तिरस्कृता गणेशेन निर्लज्जे गच्छ पुंश्चलि । तथाऽपि तं हठाद्देवी चालिलिंग सुविह्वला ॥४६॥ अंशुकं गणनाथस्याकृष्य तं काममोहिता । नग्नं कर्तुं समुद्युक्ता क्रुद्धस्तां स शशाप ह ॥४७॥ दैत्यग्रस्ता सुदुर्बुद्धे भविष्यसि न संशयः । असुरीव स्पृशसि च मां दुष्टे हठसंयुता ॥४८॥ मूढेव मां समाकृष्य नग्नं कर्तुं समुद्यता । अतो वृक्षस्वरूपा त्वं मूढयोनौ

पतिष्यसि ॥४९॥ गणेशवचनं श्रुत्वा दारुणं भयसंयुता। त्यक्त्वा तं कंपमानांगी ननाम रुदती भृशम् ॥५०॥ उवाच तं गणाधीशं मां क्षमस्व महागसाम्। न योग्याऽहं गणाधीश तव वामांगके कदा ॥५१॥ कंपंतीं रुदतीं वीक्ष्य दयायुक्तो गजाननः। जगाद तां प्रजानाथ परां ज्ञात्वा तपोयुताम् ॥५२॥ श्रीमहागणपतिरुवाच। गच्छ देवि न ते दुःखं भविष्यति कदाचन। असुरेण वने दृष्टा तत्र सक्ता भविष्यसि ॥५३॥ तत्र त्वां केशवः क्वापि शंखचूडस्वरूपधृक्। यप्स्यते स तदा दैत्यः शंभुहस्तान् मरिष्यति ॥५४॥ ज्ञात्वा तं देहसंत्यागं करिष्यसि हुताशने। पुर्नवृक्षस्वरूपस्था भविष्यसि न संशयः ॥५५॥ त्वया शप्तो महाविष्णुः शिलारूपधरो भवेत्। तेन सार्धं सदा देवि रंस्यसे त्वं निरंतरम् ॥५६॥ पतिस्ते भविता विष्णुः सदा सुखप्रदायकः। मदीयकृपया देवि सर्वमान्या भविष्यसि ॥५७॥ देवानां पत्रपुष्पैस्त्वं प्रियाऽत्यंतं भविष्यसि। त्वत्काष्ठसंभवां मालां धरिष्यंति गले जनाः ॥५८॥ त्वामन्यकाष्ठवत् सर्वे मानयिष्यंति निश्चितम्। त्रिलोकस्था जना नैव मा चिंतां कुरु भामिनि ॥५९॥ देवानां त्वं प्रिया भूया विष्णोरत्यंतभावतः। पत्रैः पुष्पैश्च वृंदे त्वां पूजयिष्यंति मानवाः ॥ ६० ॥ मम वर्ज्या सदा देवि भविष्यसि न संशयः। गच्छ त्वं यत्र भावस्ते चिंतां त्यक्त्वा विशेषतः ॥६१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते तुलसीवर्जनकारणं नामैकात्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच। यथा गजाननः प्राह तथा जातं प्रजापते। वृंदा तं प्रणिपत्यैव तपसे वनमाययौ ॥१॥ चिंताक्रान्ता स्वयं देवी गणेशे भावलालसा। गणेशं मनसि ध्यात्वा तताप तप उत्तमम् ॥२॥ नाममंत्रं जजापैव पूजयामास सादरम्। एवं लक्षं च लक्षार्धं वर्षाणि प्रगतानि च ॥३॥ ततस्तां गणराजस्तु वरदः सहसाऽऽययौ। प्रणम्य तं प्रपूज्यैव वृंदा तुष्टाव हर्षिता ॥४॥ वृंदोवाच। नमस्ते विघ्नराजाय भक्तविघ्नहराय च। अभक्तेभ्यो विशेषेण विघ्नदाय नमो नमः ॥५॥ परेशाय पराणां ते परात्परतराय च। भक्तेशाय सदा भक्तिप्रियाय ते नमो नमः ॥६॥ ब्रह्मेशाय गणाधीश ब्रह्मणां ब्रह्मरूपिणे। ब्रह्मणां पतये तुभ्यं गणाधिपतये नमः ॥७॥ अमेयायाप्रतर्क्याय सदा स्वानंदवासिने।

शिवविष्णुमुखेभ्यश्च पददात्रे नमो नमः ॥८॥ अनाथाय च सर्वेषां नाथाय परमात्मने । वक्रतुंडाय सर्वेषामादिपूज्याय ते नमः ॥९॥ विनायकाय वीराय शूर्पकर्णाय ढुंढये । गजाननाय चिंतामणये हेरंब ते नमः ॥१०॥ अनंतगुणधाराय नानाखेलकराय ते । परेषां तु परेशाय मूषकध्वजिने नमः ॥११॥ पूर्णानंदाय सर्वेषां मात्रे पित्रे नमो नमः । ज्येष्ठेभ्यो ज्येष्ठराजाय ज्येष्ठपदप्रदायिने ॥१२॥ किं स्तौमि त्वां गणाधीश योगाकारं परात्परम् । अतस्त्वां प्रणमाम्येवं तेन तुष्टो भव प्रभो ॥१३॥ गाणेशं देहि मे योगं गाणपत्यां च मां कुरु । क्षमस्व मेऽपराधं त्वं त्वदुल्लंघनभावजम् ॥ १४ ॥ अन्यत्त्वं मां गणाधीश मान्यां कुरु त्वदीयके । पूजने किंचिदल्पेन भावेन वरदायक ॥१५॥ काऽहं ते समतां नाथ संप्राप्नोमि कदापि न । तथा तपोमदेनैतत् कृतं क्षंतुं त्वमर्हसि ॥१६॥ एवं स्तुत्वा गणाधीशं प्रणनाम प्रजापते । वृंदा तां प्रत्युवाचेदं वाक्यं वाक्यविशारदः ॥१७॥ श्रीगणेश उवाच । मदीयं योगमाद्यं त्वं प्राप्स्यसे नात्र संशयः । गाणपत्या महाभागे भविष्यसि सदा सुते ॥१८॥ भाद्रशुक्लचतुर्थ्यां ये महोत्सवपरायणाः । पूजयिष्यंति मां भक्त्या तत्र त्वां धारयाम्यहम् ॥१९॥ एकविंशतिपत्राणि ह्यर्पयिष्यंति मानवाः । तत्र ते पत्रमेकं मे मान्यं देवि भविष्यति ॥२०॥ उल्लंघनसमं पापं न भूतं न भविष्यति । स्वल्पोल्लंघनमात्रेण त्वं त्यक्ता च मया सदा ॥२१॥ ये मामुल्लंघयिष्यंति तांस्त्यजामि निरंतरम् । तत्रापि तपसा बद्धो वृंदे त्वां मानयाम्यहम् ॥२२॥ त्वया कृतमिदं स्तोत्रं भुक्तिमुक्तिप्रदं भवेत् । ब्रह्मभूयप्रदं पूर्णं पठते शृण्वते सदा ॥२३॥ तुलसीं ये नरा मह्यमर्पयंति कदा सुते । तत्पापहरणं स्तोत्रं भविष्यति कृतं त्वया ॥२४॥ उल्लंघनाघहं नित्यं भविष्यति विशेषतः । अनेन स्तुवतां नित्यं न सर्वं दुर्लभं भवेत् ॥२५॥ एवमुक्त्वा गणाधीशोंऽतर्धानमगमत् स्वयम् । तुलसी हर्षसंयुक्ता बभूवे च प्रजापते ॥२६॥ तदादि सा महाभागा बभूव विगतज्वरा । क्रमेण तुलसी जाता विष्णुपत्नी सुपूतिता ॥२७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते तुलसीवरप्रदानं नाम द्वात्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । अज्ञानेन महायोगिन् ज्ञानेन तुलसीयुतम् । पूजनं गणनाथस्य कृतं तस्य फलं वद ॥१॥ श्रुत्वा कथामृतं त्वत्तो न तृप्तोऽहं भवामि भोः । अहो गणेशभक्तिर्वै दुर्लभा नात्र संशयः ॥२॥ मुद्गल उवाच । अत्र ते कथयिष्यामि इतिहासं पुरा भवम् । श्रवणात् संशयः सर्वो नाशं यास्यति तत्त्वतः ॥३॥ ब्राह्मणः कोऽपि दुर्बुद्धिर्बभूवे काश्यपे कुले । स तु नित्यं गणपतिं तुलस्याऽपूजयद्धठात् ॥४॥ अन्ये तत्र द्विजास्तं वै वारयंतो विशेषतः । न वाक्यं जगृहे तेषां ज्ञानं बौद्धं खलोऽब्रवीत् ॥५॥ गणेशः सर्वरूपश्चेत् कुतस्तत्र प्रवर्तते । विधिनिषेधकाद्यं हि मा वदेत क्रियात्मकाः ॥६॥ ततः सर्वे भयोद्विग्ना बभूवुस्ते द्विजोत्तमाः । परस्परं समूचुर्वै गाणपत्याः प्रजापते ॥७॥ अहो गाणेश्वरे देहे तुलसी मस्तकेऽथवा । दृष्टा सद्यश्च निष्कास्या गाणपत्यैर्विशेषतः ॥८॥ अन्यैरपि न संदेहो नो चेन्नरकगामिनः । उपानदादिसंयुक्तैरशुचिभिस्तदप्यहो ॥९॥ तत्र विलंबभावेन पापभागी नरो भवेत् । किं कर्तव्यं द्विजैरन्यैर्दुष्टोऽयं कथ्यतां द्विजाः ॥१०॥ यथा वज्रेण पीडां तु बुभुजुः पर्वतादयः । तथा विघ्नेश्वरः साक्षात्तुलस्या पीडितो भवेत् ॥११॥ ततः सर्वैर्विनिश्चित्य स गाणेशालयात्तदा । बहिष्कृतो महापापी स्वगृहे तादृशो रतः ॥१२॥ ततः स्वल्पेन कालेन ममार काश्यपाधमः । नरकेषु च तं यामाः पातयामासुरंजसा ॥१३॥ एककल्पसमं कालं नरकेषु स्थितोऽभवत् । क्रमेण सकलान् भुक्त्वा राक्षसोऽभूत् सुदारुणः ॥१४॥ सदा क्षुधा समाविष्टो दाहरोगादिसंयुतः । अशक्तः सर्वकार्येषु वनेषु विचचार ह ॥१५॥ एकदा तत्र गार्ग्यश्च समायातो निजेच्छया । गणेशभक्तमुख्यः स महायोगी प्रजापते ॥१६॥ तं दृष्ट्वा राक्षसो दुष्टो भक्षितुं च समाययौ । गार्ग्यो गणेशमंत्रेण मंत्रितं जलमाक्षिपत् ॥१७॥ जलस्पर्शजपुण्येन गार्ग्यदर्शनजेन सः । धर्मध्रुक् राक्षसो जातिस्मरस्तत्र बभूव ह ॥ १८ ॥ ततोऽतिखेदसंयुक्तः स रुरोद प्रणम्य तम् । जगाद प्रांजलिं बद्ध्वा हाहाकाररवाऽऽकुलः ॥१९॥ धर्मध्रुगुवाच । रक्ष मां मुनिशार्दूल गाणपत्य महायशाः । त्वत्पादप्रवणं गार्ग्य मोचयाशु भवार्णवात् ॥२०॥ ततः स सर्ववृत्तांतं कथयामास राक्षसः । पूर्वजन्मभवं तस्मै गार्ग्याय भयसंकुलः ॥२१॥ त्वदीय-दर्शनेनैव मंत्रितेन जलेन च । जातिस्मरत्वमापन्नो दुःखं ते कथयाम्यहम् ॥२२॥ श्रुत्वा शरणगं वीक्ष्य दयायुक्तो महामुनिः । गणेशनाममंत्रं स ददौ तस्मै हितावहम् ॥२३॥ जगाद तं महायोगी जप त्वं नाममंत्रकम् । नित्यं तथा तुलस्या वै कृतं स्तोत्रं पठस्व च ॥२४॥ एवमुक्त्वांऽतर्दधेऽसौ गार्ग्यः परमपावनः । दुष्टो नित्यं तथा चक्रे दुःखं दृष्ट्वा भयाकुलः ॥२५॥

ततः क्षुधा सुशांता वै बभूवे तस्य दुर्मतेः। रोगहीनः सशक्तश्च गाणपत्यप्रियोऽभवत् ॥२६॥ अंते गणेश्वरं सोऽपि जगाम दुःखवर्जितः। तत्र योगस्वभावेनाऽभजद्विघ्नेश्वरं विधे ॥२७॥ एतत्ते कथितं सर्वं संक्षेपेण चरित्रकम्। तुलसीवर्जने भूतं सर्वसंशयनाशनम् ॥२८॥ तुलसीं गणनाथाय समर्पयति यो नरः। स चांडालो न संदेहो नारकीभूमिसंस्थितः ॥२९॥ वंशहानिर्भवेत्तस्य लक्ष्मीनाशस्तथा विधे। रोगाद्यैः पीडितोऽत्यंतमंते नरकगो भवेत् ॥३०॥ तस्य स्पर्शं न कुर्यात् कः कृत्वा स्नानं समाचरेत्। सचैलस्नानहीनश्चेत् ज्ञात्वा पापी सदा भवेत् ॥३१॥ नाम तस्य प्रजानाथ न ग्राह्यं पापदायकम्। बहुनाऽत्र किमुक्तेन पापरूपः स वै स्मृतः ॥३२॥ इदं ते कथितं सर्वं पृच्छते च यथातथम्। श्रोतुमिच्छसि किं भूयश्चरित्रं वद सांप्रतम् ॥३३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते तुलसीसमर्पणवर्जनवर्णनं नाम त्रयस्त्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच। वद पूजां विधियुतां गणेशस्य सविस्तराम्। मानसीं बाह्यरूपां च सर्वसिद्धिप्रदायिनीम् ॥१॥ गणेशलोकगं सर्वं माहात्म्यं कथयस्व मे। कीदृशोऽयं निजो लोको मुने केनैव लभ्यते ॥२॥ मुद्गल उवाच। अत्र ते कथयिष्यामि पुरातनभवं शुभम्। इतिहासं महाभाग सर्वसिद्धिप्रदायकम् ॥३॥ पुरा ते कथितं स्थानं गणेशस्य महात्मनः। कार्तिकेयवराज्जातं लक्षवैनायकात्मकम् ॥४॥ तत्र राजा बभूवाऽपि सर्वशास्त्रविशारदः। ऐलः शस्त्रास्त्रतत्त्वज्ञो धर्मशीलश्च सत्यवाक् ॥५॥ सदा गणेशभक्तश्चाभजद्विघ्नेश्वरं सदा। सार्वभौमः सुविख्यातो गाणपत्यप्रियोऽभवत् ॥६॥ तत्राऽऽजगाम गाणेशो गार्ग्यः सर्वार्थकोविदः। तं प्रणम्य प्रपूज्यैव पप्रच्छैलो महायशाः ॥७॥ ऐल उवाच। स्वामिंस्त्वं गणराजस्य भक्तस्तादृशयोगधृक्। साक्षाद्गणपतिः किं वा त्वमेवात्र न संशयः ॥८॥ मयूरेशावतारे त्वं मयूरेशसमन्वितः। स्थितस्तत्र त्वया विप्र मयूरेशो निरीक्षितः ॥९॥ धन्यस्त्वं योगिनां मध्ये प्रत्यक्षं गणनायकम्। मित्रं कृत्वा सुहर्षेणाऽहो तिष्ठसि विशेषतः ॥१०॥ मयूरेशस्य विप्रेशाज्ञया योगविदांवर। भाष्यं कृतं गणेशस्य गीतायाः

शांतिदं परम् ॥११॥ त्वदीयभाष्ययोगेन गीताज्ञा ब्राह्मणादयः। बभूवुर्गाणपत्याश्च त्वच्छिष्यास्ते मता मुने ॥१२॥ यादृशं गणनाथेन कथितं तादृशं प्रभो। त्वया ज्ञातं न संदेहो गणेशस्त्वमतो मतः ॥१३॥ गणेशगीताहार्दं यद्गणेशश्च वरेण्यकः। त्वं त्रयः संमताः शास्त्रे जानते पूर्णयोगतः ॥१४॥ धन्येन येन भाग्येन दृष्टं ते पादपंकजम्। विद्याव्रत-तपोदानं पितरौ कुलमेव मे ॥१५॥ यशो राज्यादिकं सर्वं धन्यं ते पाददर्शनात्। न ह्यल्पपुण्ययोगेन दर्शनं योगिनां भवेत् ॥१६॥ अधुना वद मे ब्रह्मन् गणेशस्य यथाविधि। पूजां बाह्यां तथाऽऽतर्यां गाणपत्यप्रकारतः ॥१७॥ एवं पृष्टो महायोगी गार्ग्यः सर्वार्थकोविदः। तं जगाद सुहर्षेण गाणपत्यो महायशाः ॥१८॥ गार्ग्य उवाच। अत्र ते कथयिष्यामि चेतिहासं पुरातनम्। गृत्समदस्य विप्रस्य चरित्रसंयुतं नृप ॥१९॥ वाचक्नविस्तपोनिष्ठो बभूव परमार्थवित्। तस्य पत्नी मुकुंदा वै रूपयौवनशालिनी ॥२०॥ वनमध्ये स्थितौ चोभौ तत्राकस्मात् समागतः। रुक्मांगदो नृपो भूप मृगयासक्त-चेतसा ॥२१॥ क्षुधातृषायुतो राजा भ्रष्टसार्थो द्विजाश्रमम्। प्रविश्य तं प्रणम्यैव सस्त्रीकं संस्थितोऽभवत् ॥२२॥ तस्मिन् काले द्विजः सोऽपि मध्याह्ने कर्मकारणात्। निर्जगामाश्रमाद्वाचक्नविस्तस्मान् महायशाः ॥२३॥ गते मुनौ नृपस्तत्र जगाद देहि मे जलम्। मातर्मुकुंदे श्रांताय चाकुलाय क्षुधातृषा ॥२४॥ तस्य तद्वचनं श्रुत्वा मुनिपत्नी सुविह्वला। दृष्ट्वा नृपवरं तं च कामबाणार्दिताऽवदत् ॥२५॥ मुकुंदोवाच। त्वत्समं पुरुषं क्वापि न पश्यामि नृपात्मज। त्रैलोक्येऽतो महाभाग मां भजस्व सुविह्वलाम् ॥२६॥ नो चेत् प्राणा गमिष्यंति कामबाणैर्हता मम। इत्युक्त्वा तं नृपं सा तु चुचुंबे हठतत्परा ॥२७॥ ततोऽतिक्षोभितो राजा धृत्वा दूरे समाक्षिपत्। जगाद तां मुनेः पत्नीं व्यभिचाररतां वचः ॥२८॥ रुक्मांगद उवाच। सर्वेषां गुरवो देवि ब्राह्मणा नात्र संशयः। पुत्रतुल्या वयं सर्वे त्वदीयाः पापकारिणि ॥२९॥ तत्र विघ्नेश्वरे सक्ता न चलंति कदाचन। परस्त्रियं समालोक्य मातृबुद्धिकरा मताः ॥३०॥ एवं निर्भर्त्स्य तां राजा निःसृतः शोकसंकुलः। आश्रमात् सा शशापैव तं नृपं काममोहिता ॥३१॥ कुष्ठी भव महादुष्ट सकामां त्यजसि स्त्रियम्। मोहितां पापकर्मा त्वं कठिनोऽसि सुदुर्मते ॥३२॥ तस्याः शापस्य योगेन श्वेतकुष्ठी बभूव ह। रुक्मांगदो वने गत्वा सस्मार द्विरदाननम् ॥३३॥ ततो रात्रौ महायोगी नारदस्तत्र चागतः। तं दृष्ट्वा प्रणनामादौ पप्रच्छ विनयान्वितः ॥३४॥ रुक्मांगद उवाच। कुष्ठनाशकरं तीर्थं क्षेत्रमौषधमेव च। वद मे सर्वधर्मज्ञ गाणपत्यप्रिय प्रभो ॥३५॥ नारद उवाच। इंद्रेण तपसा देवो गणेशः

पूजितोऽभवत् । सहस्रभगनाशार्थं स देवो वरदोऽभवत् ॥३६॥ गणेशवरदानेन महेंद्रस्तेजसा युतः । योगयुक्तोऽपालयत त्रैलोक्यं सचराचरम् ॥३७॥ तत्र तीर्थं सुविख्यातं गणेशपदलाञ्छितम् । चिंतामणिर्गणेशश्च तेन संस्थापितोऽभवत् ॥३८॥ तत्र गत्वा महीपाल कुरु स्नानं च तत्क्षणात् । कुष्ठहीनः सुवर्णस्त्वं भविष्यसि न संशयः ॥३९॥ तत्र तीर्थप्रभावेण कुष्ठरोगविवर्जिताः । भवंति स्वानंदगास्तु नृप नास्त्यत्र संशयः ॥४०॥ एवमुक्त्वा महायोगी नारदो गणपं स्मरन् । गतः सोऽपि महाबुद्धिर्हर्षयुक्तो बभूव ह ॥४१॥ ततः प्रातः समायाता सेना तस्य महात्मनः । तया सार्द्धं जगामाऽसौ विदर्भे तीर्थसेवकः ॥४२॥ चिंतामणिभवं तीर्थं दृष्ट्वा राजा प्रजापते । कुष्ठहीनो बभूवाऽथ सर्वैः संहर्षितोऽभवत् ॥४३॥ ततः स्नात्वा ससैन्येन यथाविधियुतः स्वयम् । पूजयामास हर्षेण चिंतामणिं नृपात्मजः ॥४४॥ पूजयित्वा यथान्यायं दत्त्वा दानानि कृत्स्नशः । संस्थितो मंडपे राजा गणेशे भक्तिसंयुतः ॥४५॥ तत्राकस्माद्विमानं तु समायातं सुखप्रदम् । तत्र दूता गणेशस्य जगुस्तं नृपसत्तमम् ॥४६॥ गाणपत्या ऊचुः । इदं विमानमारुह्य ससैन्यो नृपसत्तम । चल स्वानंदलोके त्वं तीर्थस्नानप्रभावतः ॥४७॥ ततोऽतिहर्षसंयुक्तस्तान् प्रणम्य महायशाः । पूज्योवाच विचारज्ञो गाणपत्यो नृपात्मजः ॥४८॥ रुक्मांगद उवाच । भीमं मे गाणपत्यास्तु पितरं चारुहासिनीम् । मातरं त्यज्य विघ्नेशं कथं यामि त्वरान्वितः ॥४९॥ गाणेशानौ विशेषेण तथा तं ते समब्रुवन् । तयोः स्नानं नृपाध्यक्ष कुरु तीर्थेऽधुना किल ॥५०॥ ततस्तावपि नेष्यामो मा चिंतां कुरु सत्तम । स्नानमात्रेण स्वानंददायकं तीर्थमुच्यते ॥५१॥ ततोऽतिहर्षितो राजा कुशान् गृह्य तयोः पुनः । नाम्ना ग्रंथिं समाबध्य चक्रे स्नानं यथाविधि ॥५२॥ ततोऽतिहर्षिता लोका नगरस्थास्तथा पुनः । स्नानं चक्रुर्जनानां ते आबालं श्वपचावधि ॥५३॥ ततस्ते यानमारुह्य कौंडिन्यनगरं ययुः । पुण्यं दत्वा च तान् सर्वान् गृह्य स्वानंदमाययुः ॥५४॥ एवं तीर्थप्रभावेण नगरस्थजना नृप । गत्वा विघ्नेश्वरं दृष्ट्वा ब्रह्मभूता बभूविरे ॥५५॥ धर्मयुक्तो गणेशस्य भक्तो रुक्मांगदः स्वयम् । स्वल्पकालेन निर्विघ्नो बभूव छलितोऽपि सः ॥५६॥ गणेशभक्तमत्युग्रं ये छलंति नराधमाः । तेषां तु निष्कृतिर्नास्ति दुःखं भुंजंति दारुणम् ॥५७॥ रुक्मांगदं मुकुंदा सा छलयित्वा विशेषतः । या गतिश्च तया प्राप्ता तां शृणुष्व महीपते ॥५८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते रुक्मांगदचरितं नाम चतुस्त्रिंशत्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ गार्ग्य उवाच । मुकुन्दा कामदग्धा सा पपात धरणीतले । न किंचित् सुखदं तस्या बभूव पृथिवीतले ॥१॥ ततोऽतिशोकसंयुक्ता तमेवाचिंत्य संस्थिता । निद्रां लेभे ततस्तां सोऽबोधयद्देवनायकः ॥२॥ तस्याः शान्तिप्रदानार्थं स्वयं तत्राजगाम ह । रुक्मांगदस्वरूपी स बुभुजे तां सुराधिपः ॥३॥ सा हर्षिता जगामैव स्वगृहं गर्भसंस्थिता । इंद्रः स्वर्गं ययौ भूप हर्षयुक्तो विहायसा ॥४॥ वाचक्नविः समायातः कृत्वा नित्यक्रियां मुनिः । न बुबोध मुकुंदायाश्चरितं स तपोरतः ॥५॥ ततः पूर्णे च गर्भे सा सुषुवे पुत्रमुत्तमम् । जातकर्मादिकं सर्वं चकार मुनिसत्तमः ॥६॥ गृत्समदेति पुत्रस्य नाम चक्रे सुखप्रदम् । चकार व्रतबंधं तु पंचमे हर्षसंयुतः ॥७॥ वेदानध्यापयामास श्रवणग्राहकाय वै । स्वयं तस्मै ददौ मंत्रं गणानां त्वेति ऋग्भवम् ॥८॥ तेन मंत्रेण विघ्नेशं ध्यात्वा गृत्समदो मुनिः । तोषयामास भावेन नित्यं जपपरायणः ॥९॥ कदाचित्तत्र राजा स मगधस्तं जुहाव च । पितुः श्राद्धे सुदांतं वै तपोयुक्तं यशस्विनम् ॥१०॥ तत्र वसिष्ठमुख्याश्च मुनयो योगपारगाः । समागताः सभायां ते विविशुः पूजिता नृप ॥११॥ तत्र शास्त्रप्रसंगे स गृत्समद उवाच ह । योगमयोगिभावस्थः श्रुत्वाऽत्रिस्तं वचोऽब्रवीत् ॥१२॥ अयोगी योगिनां मध्ये रुक्मांगदसुतस्तथा । वदसि त्वं न योग्योऽसि पंक्तौ गच्छ निजाश्रमम् ॥१३॥ ततोऽतिकोपसंयुक्तः स्वं गृत्समद आश्रमम् । जगाम सोऽपि जननीमपृच्छद्रक्तलोचनः ॥१४॥ वद तातं मदीयं त्वं कामुके निरपत्रपे । कथं रुक्मांगदाज्जातोऽहं नोचेत्त्वां शपामि तु ॥१५॥ जगाद शापभीता तं ततः सा कंपसंयुता । वृत्तांतं पूर्वसंभूतं रुक्मांगदविहारजम् ॥१६॥ तच्छ्रुत्वा कोपसंयुक्तः शशाप जननीं सुतः । कंटकी भव मातस्त्वं दुष्टकर्मपरायणा ॥१७॥ अतितिक्तफलां तत्र भक्षिष्यंति नरा न ताम् । अरण्ये निंदिता नित्यं भुंक्ष्व पापं पुरा कृतम् ॥१८॥ ततः सापि स्वपुत्रं तं शशाप क्रोधपूरिता । त्वत्तः पुत्रो महादैत्यो भविष्यति सुदारुणः ॥१९॥ ततो देहं समुत्सृज्य मुकुंदा साऽभवन्नृप । कंटकी श्यामसंज्ञा सा पापकर्मपरायणा ॥२०॥ गणेशभक्तविक्षेपदातृत्वादघमुत्तमम् । तया प्राप्तं चिरं पूर्णं तेन शापयुताऽभवत् ॥२१॥ कल्पे कल्पे च शापात् सा सदा वृक्षत्वमागता । पश्य विघ्नस्वरूपं त्वं महाभयकरं नृप ॥२२॥ ततो गृत्समदः क्षुब्धो देहत्यागे समुद्यतः । तत आकाशवाणी तं जगाद प्रेमसंयुता ॥२३॥ इंद्रो रुक्मांगदीभूतस्तस्माज्जातोऽसि मानद । भज लंबोदरं नित्यं ततः सौख्यमवाप्स्यसि ॥२४॥ श्रुत्वा सोऽपि वने गत्वा तताप तप उत्तमम् । निराहारेण संस्थश्च गणेशमभजत् सदा ॥२५॥ ब्रह्मणस्पतिसूक्तैश्चा-

भिषिंचन् मंडले स्थितम् । जपं चकार भावेन ब्राह्मणत्वस्य कारणात् ॥२६॥ ऐल उवाच । ब्रह्मणस्पतिसूक्तानां मंडलं कीदृशं स्मृतम् । फलं च कीदृशं तत्र लभते मानवः प्रभो ॥२७॥ कथयस्व विधानेन सर्वज्ञोऽसि दयानिधे । येन विघ्नेश्वरः प्रीतो भवेत् सर्वार्थदायकः ॥२८॥ गार्ग्य उवाच । ब्रह्मणस्पतिसूक्तानां विधिं शृणु महामते । यथा गृत्समदः सिद्धो बभूवे तस्य सेवनात् ॥२९॥ गणानां त्वेति मंत्रेण षोडशांगेषु भूमिप । न्यासं कुर्यात्तथा पूज्याऽभिषेकं तु समाचरेत् ॥३०॥ एकविंशतिभिर्भूपा वृत्तिभिरेकविंशतिः । समाख्याता च सूक्तानामभिषेके तथा जपे ॥३१॥ एतादृशाश्च राजेंद्र भवंत्येकाधिकास्ततः । विंशत्यो मंडलं ह्येकं ज्ञातव्यं विबुधैः परम् ॥३२॥ मंडलानि महाभाग एकविंशन्मितानि च । भवंति चेत् समाख्यातं महामंडलकं बुधैः ॥३३॥ अभिषेके समाख्यातं जपे वा राजसत्तम । सर्वसिद्धिप्रदं पूर्णं महामंडलकं सुरैः ॥३४॥ धर्मार्थकाममोक्षेषु प्रशस्तं कर्म सिद्धिदम् । गणेशप्रीतये भक्त्या ब्रह्मभूतकरं भवेत् ॥३५॥ ब्राह्मणत्वस्य कार्यार्थं कृतं तेन महात्मना । गृत्समदेन सूक्तानां महामंडलकं नृप ॥३६॥ एतत्ते कथितं भूपाधुना शृणु कथानकम् । विघ्नेशप्रापकं गृत्समदस्य दुरितापहम् ॥३७॥ स्वयं गृत्समदस्तत्र नित्यं कृत्वा यथाविधि । गणानां त्वेति मंत्रेण पुपूज विघ्ननायकम् ॥३८॥ एकविंशतिमेकां स नित्यं चकार भूमिप । अभिषेकार्थमेवं तु ततो जपपरोऽभवत् ॥३९॥ गणानां त्वेति मंत्रस्य जपं चकार नित्यदा । शतानि ध्याननिष्ठः स सैकविंशतिकानि तु ॥४०॥ नासाग्रन्यस्तदृष्टिश्च सदा यत्नपरायणः । महोग्रतपसा देवं तोषयामास विघ्नपम् ॥४१॥ एवं वर्षसहस्रैस्तु दिव्यैर्विघ्नेश्वरो ययौ । मुनिं तं भक्तवात्सल्यादुवाच ध्यानसंस्थितम् ॥४२॥ श्रीगणेश उवाच । पश्य मां मुनिशार्दूल ब्रह्मणस्पतिमागतम् । वरयस्व वरान् मत्तो दास्यामि तुभ्यमादरात् ॥४३॥ गणेशवचनं श्रुत्वा गृत्समदः सुहर्षितः । उन्मील्य लोचने ढुंढिमपश्यन्निकटे स्थितम् ॥४४॥ ततोऽतिहर्षसंयुक्तः प्रणनाम विनायकम् । भक्त्या संपूज्य तुष्टाव साश्रुनेत्रो नराधिप ॥४५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते गृत्समदगणेशसमागमो नाम पंचत्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । नमस्ते ब्रह्मणां नाथ ब्रह्मणां ब्रह्मरूपिणे । ब्रह्मणस्पतये तुभ्यं गणेशाय नमो नमः ॥१॥ ज्येष्ठराजाय ज्येष्ठानां ज्येष्ठपदप्रदायिने । ज्येष्ठानां ज्येष्ठरूपाय सर्वपूज्याय ते नमः ॥२॥ कर्तॄणां कर्तृरूपाय कवये कविनायक । कर्तृभ्यः कर्तृदात्रे वै कविराजाय ते नमः ॥३॥ जगत्सु ब्रह्मसु प्राज्ञ नानाभोगकराय ते । उपमान्न-प्रभोक्त्रे तु ब्रह्मभोक्त्रे नमो नमः ॥४॥ सदा मोहयुतायैव मोहमोहकराय ते । जीवाय बृहतां नाथाय बृहस्पतये नमः ॥५॥ सदा ब्रह्मसुखस्थाय परमात्मस्वरूपिणे । गुहाहिताय सांख्याय बृहस्पतिसखाय ते ॥६॥ स्वसंवेद्यमयायैव स्वानंदे योगधारिणे । जीवानां ब्रह्मणां संयोगाय ते वै नमो नमः ॥७॥ सत्यायायोगरूपाय मनोवाणीविवर्जित । भद्राणां भद्रकायैव सत्यसत्याय ते नमः ॥८॥ सर्वेषां पोषकायैव सोमायामृतरूपिणे । सोमानां सोमदात्रे ते पुष्टिनाथाय ते नमः ॥९॥ उत्तिष्ठत्सृष्टिकर्त्रे ते पालकाय हराय च । त्रयीमयाय तूर्याय तूर्यातीताय ते नमः ॥१०॥ इंद्रादिदेवतानां वै सहायाय नमो नमः । धर्मपालकभावाय धर्माधीशाय ते नमः ॥११॥ सर्वेषां राज्यदात्रे वै राज्यराजाय ते नमः । अराज्याय परेशाय संसारार्णवतारिणे ॥१२॥ योगेभ्यो योगदात्रे च योगयोगाय ते नमः । शांतिदाय सदा शांतिस्थाय तत्पतये नमः ॥१३॥ इत्यादि भेदा बहवो ब्रह्मणो वेदवादतः । तेषां स्वामिस्वरूपाय ब्रह्मणे ते नमो नमः ॥१४॥ किं स्तौमि गणनाथ त्वां ब्रह्मणस्पतिरूपिणम् । भव प्रसन्नो ब्रह्मेश कृपया ते नमो नमः ॥१५॥ एवं गृत्समदः स्तुत्वा गणेशानं महीपते । हर्षेणोत्फुल्लनयनो ननर्त प्रेमविह्वलः ॥१६॥ दृष्ट्वा तं गणराजस्तु जगाद घननिस्वनः । वरं मत्तस्त्वं वरयाधुना स्तोत्रेण तोषितः ॥१७॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदायकम् । भविष्यति न संदेहो मम भक्तिविवर्धनम् ॥१८॥ सदा शांतिमयो भूत्वा मां भजिष्यसि मानद । त्वया कृतेन स्तोत्रेण ब्रह्मभूतो भविष्यसि ॥१९॥ पुत्रपौत्रादिकं सर्वं धनधान्यादिवर्धनम् । प्रभविष्यति पाठेन श्रवणेन मुनेऽस्य तु ॥२०॥ तस्य तद्वचनं श्रुत्वा सावधानो बभूव ह । नियम्य हर्षमुग्रं स प्रणनाम गजाननम् ॥२१॥ उवाच विस्खलद्वाक्यो मुनिर्गृत्समदो महान् । गणेशं भक्तिसंयुक्तो भक्तराजेश्वरः स्वयम् ॥२२॥ गृत्समद उवाच । धन्यौ मे जनकौ नाथ जन्म धन्यं तपो वयः । विद्या व्रतादिकं सर्वं त्वदंघ्रियुगदर्शनात् ॥२३॥ अहो साक्षाद्गणेशानो ब्रह्मेंद्रो दृष्टिमागतः । मनोवाणीविहीनो न ताभ्यां युक्तो न वै भवान् ॥२४॥ एतादृशं गणेशानं दृष्ट्वा त्वां किं वृणोम्यहम् । तथापि वरयामि त्वां त्वदाज्ञापालनार्थतः ॥२५॥ ब्रह्मभूताश्च वेदेषु ब्राह्मणाः कथिता बुधैः

अतो मां ब्राह्मणं नाथ कुरु योगींद्र वंद्यकम् ॥२६॥ यथा त्वं ब्रह्मणां नाथस्तथाऽहं ब्रह्मभूयिनाम् । नाथो भवामि विघ्नेश योगींद्राणां गुरोर्गुरुः ॥२७॥ त्वदीयपादपद्मे वै भक्तिं देहि गजानन । सुदृढां गाणपत्येषु संगं देहि सदा च मे ॥२८॥ गाणपत्येषु विख्यातं मां कुरुष्व विशेषतः । गृत्समदसमो नास्ति गाणपत्यस्वभावधृक् ॥२९॥ एवमुक्त्वा गणेशानं प्रणनाम महामुनिः । तमुवाच गणेशानो भक्तिं दृष्ट्वा महाद्भुताम् ॥३०॥ श्रीगणेश उवाच । गणानां त्वेति मंत्रस्य जपः खलु कृतस्त्वया । सूक्तस्यापि तथा मे वै तत्र मुख्यो भविष्यसि ॥३१॥ ऋषिर्भव महाभाग गणानां त्वास्य मंत्रतः । सूक्तस्यापि विशेषेण ब्राह्मणेंद्रो भवापि तु ॥३२॥ आदावृषेश्च यज्ञादौ स्मरणं ते करिष्यति । पश्चान् मे देवतायाश्च मुख्यो भव मदीयके ॥३३॥ न त्वत्समो भवेत् कुत्र मद्भक्तेषु महामुने । मानयिष्यंति विप्रास्त्वामत्रिमुख्या न संशयः ॥३४॥ त्वदीयस्मरणं नास्ति मंत्रे वैदिकगे च मे । गणानां त्वा जपिष्यंति फलहीना भवंतु ते ॥३५॥ शिवविष्वादयो देवा ब्रह्माद्या ब्राह्मणा नराः । शेषाद्याश्चासुराद्याश्च त्वां नमस्यंति नित्यदा ॥३६॥ त्वदीयावज्ञया क्रुद्धो दहिष्यामि चराचरम् । त्वदीयहृदये नित्यं स्थास्यामि भक्तिलोलुपः ॥३७॥ त्वया यत्र तपस्तप्तं तदेव क्षेत्रमुत्तमम् । भविष्यति मदीयं वै पुष्पकं सर्वसिद्धिदम् ॥३८॥ भुक्तिं मुक्तिं ब्रह्मभूयं भक्तिं पुष्णाति मानद । तेन क्षेत्रं समाख्यातं पुष्पकं मत्समाश्रितम् ॥३९॥ यद्यच्चिंतयसि प्राज्ञ तत्तत्ते सफलं भवेत् । स्मरणेन महाकार्ये प्रत्यक्षोऽहं भवामि च ॥४०॥ एवमुक्त्वांऽतर्दधेऽसौ ब्रह्मणस्पतिरंजसा । स्वयं गृत्समदः खिन्नोऽभवत्तत्रैव संस्थितः ॥४१॥ ततः स ब्राह्मणैः सार्धं स्थापयामास विघ्नपम् । ब्रह्मणस्पतिनामानं चकार क्षेत्रसंस्थितम् ॥४२॥ ततो गृत्समदो योगी सर्वमान्यो बभूव ह । ब्रह्मणस्पतिभक्तश्च ब्राह्मणैः पूजितोऽभवत् ॥४३॥ यथा गजाननः प्राह तथा सर्वं बभूव ह । मुनिस्तत्र महीपालाऽभजत्तं स विनायकम् ॥४४॥ नित्यं च मानसीं पूजां बाह्यां चकार विघ्नपः । गणेशस्याऽतिभक्तो गृत्समदः सर्वतो बभौ ॥४५॥ इदं गृत्समदाख्यानं कथितं सर्वसिद्धिदम् । सर्वपापहरं पुण्यं श्रवणात् पठनान्नृणाम् ॥४६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते गृत्समदवरप्रदानं नाम षट्त्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ऐल उवाच । कथं नित्यं महायोगी गाणपत्याग्र्य एव च । महापूजां गृत्समदो द्विविधां प्रचकार ह ॥१॥ तन्मे विस्तरतो ब्रूहि धन्योऽयं ब्राह्मणेषु वै । गणेशेन कृतो विप्रो ऋषिः स्वसूक्तकस्य च ॥२॥ गार्ग्य उवाच । शृणु तस्य मुनींद्रस्य चरित्रं भक्तिसंश्रितम् । यथा गजाननं सोप्यभजत्तं नित्यमादरात् ॥३॥ प्रातः काले समुत्थाय गुरुं नत्वा स्वमस्तके । मानस्या पूजया पूज्य तथा हृदि गणेश्वरम् ॥४॥ गाणेशांश्च तथा स्मृत्वा विभूतिरूपधारकान् । क्षमाप्य धरणीं पश्चात् पादं चिक्षेप विप्रपः ॥५॥ शौचाचारमशेषं च चकार शास्त्रमार्गतः । दंतकाष्ठं ततो भक्ष्य स्नानं चक्रे यथाविधि ॥६॥ आदावाभ्यंतरं स्नानं चकार शृणु तन्नृप । वक्ष्यामि सिद्धिदं पूर्णमज्ञानमलनाशनम् ॥७॥ सहस्रारे समासीनं गजानन-मनामयम् । अंगुष्ठपर्वमात्रं तं प्रभुं ध्यायेच्चतुर्भुजम् ॥८॥ पाशांकुशधरं पूर्णं दंताभयसमन्वितम् । त्रिनेत्रं भूषणैर्युक्तमनर्घ्य-वस्त्रराजितम् ॥९॥ पादांगुष्ठाग्रसंभूतां तस्य तीर्थमयीं पराम् । सरितं चिंतयेत् पूर्णामासमंतात् प्रसारिणीम् ॥१०॥ सर्वांतर्गतजं पूर्णमज्ञानं मलरूपकम् । तया संक्षालयेच्चित्ते नृप सर्वगया सुधीः ॥११॥ एवमांतरगं स्नानं यः करोति नरोत्तमः । स सर्वमलहीनश्च भुक्तिं मुक्तिं लभेत् पराम् ॥१२॥ बाह्यं ततः समाख्यातं वैदिकं तांत्रिकं द्विधा । स्वशाखोक्तविधानेनादौ वैदिकं समाचरेत् ॥१३॥ ततः स्वमूलमंत्रेण युक्तं तांत्रिकमाचरेत् । स शुद्धः सर्वकर्मार्हो भवते देवतासमः ॥१४॥ एवं गृत्समदः सर्वं चकार राजसत्तम । गणेशप्रीतिकामार्थं भक्तियुक्तो महामुनिः ॥१५॥ शुचिवस्त्रे तथा गृह्य संध्यां चकार वैदिकीम् । तत आगमसंभूतां गाणेशीं सर्वसिद्धिदाम् ॥१६॥ तत्राचमनकं प्रोक्तं त्रिविधं विबुधोत्तमैः । वैदिकं तांत्रिकं पौराणिकं चैव सुसिद्धिदम् ॥१७॥ व्याहृत्या वैदिकं प्रोक्तं मूलमंत्रेण तांत्रिकम् । पौराणिकं चतुर्थ्यंतं गणेशनामसंयुतम् ॥१८॥ तत्र पौराणिकं वक्ष्ये महत् शुचिकरं शृणु । यथा गृत्समदो विप्रेंद्रश्चकार महायशाः ॥१९॥ गणेशो ढुंढिराजश्च हेरंबो वक्रतुंडकः । शूर्पकर्णश्च विघ्नेशश्चिंतामणिर्गजाननः ॥२०॥ लंबोदरश्चैकदंतो ब्रह्मणस्पतिरेव च । विनायको ज्येष्ठराजो विकटः कपिलस्तथा ॥२१॥ धरणीधर आशापूरको महोदरस्तथा । धूम्रकेतुर्मयूरेशः स्वानंदवासकारकः ॥२२॥ त्रिभिराचम्य हस्तौ वै द्वाभ्यां संक्षालयेन्नरः । द्वाभ्यामोष्ठौ संपुटं चैकेन वै संस्पृशेत्ततः ॥२३॥ पादौ तथैव नाम्ना वै शिरश्च चिबुकं नृप । द्वाभ्यां दक्षिणवामे तु नासिके संस्पृशेत्ततः ॥२४॥ द्वाभ्यां नेत्रे तथा कर्णौ नाभिं चैकेन हृत्तथा । ललाटमेकनाम्ना तु बाहू चैकेन संस्पृशेत् ॥२५॥ जलयुक्तेन नाम्ना यो नरश्चैवं समाचरेत् । आचमनं

भवेत् साक्षाद्गणेशो भूमिमंडले ॥२६॥ ततो न्यासादिकं कुर्यात् कलाशस्थापनं चरेत् । पीठपूजां ततः कृत्वा मंत्रन्यासं समाचरेत् ॥२७॥ आगमोक्तेन मार्गेण मुनिर्गृत्समदो महान् । चकार सकलं राजन् देवतुल्योऽपि नित्यशः ॥२८॥ ध्यात्वा गजाननं चित्ते पूजां चक्रे स मानसीम् । स्थिरचित्तेन योगीशो गणेशस्य विधानवित् ॥२९॥ मानस्यां स्थिरचित्तत्वं कारणं परमं मतम् । न वर्णाश्रमभागश्च वर्तते नृपसत्तम ॥३०॥ वर्णाश्रमयुतानां चात्रावर्णाश्रमरूपिणाम् । अधिकारः सदा शास्त्रे वर्तते स्थिरचेतसाम् ॥३१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते गृत्समदनित्यकर्मवर्णनं नाम सप्तत्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ गृत्समद उवाच । विघ्नेश वीर्याणि विचित्रकाणि सुमागधैर्बंदिजनैः स्मृतानि । श्रुत्वा समुत्तिष्ठ गजानन त्वं ब्राह्मे जगन्मंगलगं कुरुष्व ॥१॥ एवं मया प्रार्थितविघ्नराजश्चित्तेन चोत्थाय बहिर्गणेशः । तं निर्गतं वीक्ष्य नमंति देवाः शंभ्वादयो योगिमुखास्तथाऽहम् ॥२॥ शौचादिकं ते परिकल्पयामि हेरंब वै दंतविशुद्धिमेवम् । वस्त्रेण संप्रोञ्छ्य मुखारविंदं देवं सभार्यां विनिवेशयामि ॥३॥ द्विजादिसर्वैरभिवंदितं च शुकादिभिर्मोदसुमोदकाद्यैः । संभाष्य चालोक्य समुत्थितं तं सुमंडपं कल्प्य निवेशयामि ॥४॥ रत्नैः सुदीप्तैः प्रतिबिंबितं तं पश्यामि चित्तेन विनायकं च । तत्रासनं रत्नसुवर्णयुक्तं संकल्प्य देवं विनिवेशयामि ॥५॥ सिद्ध्या च बुद्ध्या सह विघ्नराज पाद्यं कुरु प्रेमभरेण सर्वैः । तोयं सुवासै रचितं गृहाण चित्तेन दत्तं च सुखोष्णभावम् ॥६॥ शुद्धेन वस्त्रेण गणेश पादौ संप्रोञ्छ्य दूर्वादिभिरर्चयामि । चित्तेन भावप्रिय दीनबंधो चित्तं विलीनं कुरु ते पदाब्जे ॥७॥ कर्पूरकैलादिसुवासितं तु सुकल्पितं तोयमथो गृहाण । आचम्य तेनैव गजानन त्वं कृपाकटाक्षेण विलोकयाऽऽशु ॥८॥ प्रवालमुक्ताफलहारकाद्यैः सुसंस्कृतं ह्यंतरभावकेन । अनर्घ्यमर्घ्यं सफलं कुरुष्व मया प्रदत्तं गणराज ढुंढे ॥९॥ शुद्धं त्रियुक्तं मधुपर्कमाद्यं संकल्पितं भावयुतं गृहाण । तोयेन चाचम्य विनायक त्वं भक्तांश्च भक्तेश सुरक्षयाशु ॥१०॥ द्रव्यैर्युतं चंपकजातिकाद्यैः तैलं मया कल्पितमेव ढुंढे । दत्तं गृहाणाऽऽशु विमर्दयामि

सर्वांगमानंदद सेवनाय ॥११॥ देवं सुखोष्णेन जलेन चाऽहं सर्वार्घतीर्थाहृतकेन ढुंढिम् । चित्तेन शुद्धेन च स्नापयामि स्नानं मया दत्तमथो गृहाण ॥१२॥ ततः पयःस्नानमचिंत्यभाव गृहाण तोयस्य तथा गणेश । पुनर्दधिस्नानमनामय त्वं प्रकल्पितं नाथ जलस्य चाथ ॥१३॥ ततो घृतस्नानमपारवंद्य सुतीर्थजं विघ्नहर प्रसीद । गृहाण चित्तेन सुकल्पितं तु ततो मधुस्नानमथो जलस्य ॥१४॥ सुशर्करायुक्तमथो गृहाण स्नानं मया कल्पितमेव ढुंढे । ततो जलस्नानमघापहंतर्गणेश मायाभ्रमवारणाशु ॥१५॥ सुयक्षपंकस्थमथो गृहाण स्नानं परेशाधिपते ततश्च । कमंडलौ संभवजं कुरुष्व स्नानं विशुद्धं परिकल्पितं ते ॥१६॥ दुग्धेन सूक्तैर्मनसा सुतीर्थैः संपूज्य दूर्वादिभिरल्पभावैः । संख्यातिगैर्मंडलभूतब्राह्मणस्पत्यकैस्त्वामभिषेचयामि ॥१७॥ ततः सुवस्त्रेण तु प्रोञ्छनं त्वं गृहाण चित्तेन मया सुकल्पितम् । ततो विशुद्धेन जलेन चाचांतमेव ढुंढे कुरु विघ्नराज ॥१८॥ अग्नौ विशुद्धे प्रगृहाण वस्त्रे मौल्यातिगे ते मनसा मया वै । दत्ते परिच्छाद्य निजात्मदेहं ताभ्यां मयूरेश जनांश्च पालय ॥१९॥ आचम्य विघ्नेश पुनस्त्वमेवं चित्तेन दत्तं सुखमुत्तरीयम् । भक्त्या गृहाण प्रतिपालयाऽऽशु नभो यथा तारकसंयुतं किम् ॥२०॥ यज्ञोपवीतं त्रिगुणस्वरूपं सौवर्णमेवं ह्यहिनाथभूतम् । भावेन दत्तं गणनाथ तत्त्वं सौत्रं गृहाणोद्धृतिकारणाय ॥२१॥ आचांतमेवं मनसा कुरुष्व दत्तं मया तीर्थजलेन ढुंढे । भावेन कामंडलवेन पाहि विश्वं प्रभो खेलकृतं सदा ते ॥२२॥ उद्यद्दिनेशाभमथो गृहाण सिंदूरकं ते मनसा प्रदत्तम् । सर्वांगसंलेपनमादरात्त्वं हेरंब चित्तेन कुरुष्व पूर्णम् ॥२३॥ साहस्रशीर्षं मनसा मया त्वं दत्तं किरीटं तु सुवर्णजं वै । अनंतरत्नैः खचितं गृहाण ब्रह्मेश ते मस्तकशोभनाय ॥२४॥ विचित्ररत्नैः कनकेन ढुंढे युतानि चित्तेन मया परेश । दत्तानि नानापदकुंडलानि गृहाण शूर्पश्रुतिभूषणाय ॥२५॥ शुंडाविभूषार्थमनंतखेलिन् सुवर्णजं कंचुकमागृहाण । रत्नैश्च युक्तं मनसा मया यद्दत्तं प्रभो तत् सफलं कुरुष्व ॥२६॥ सुवर्णरत्नैश्च युतानि संप्रकल्प्यैकदंताभरणानि ढुंढे । गृहाण चूडाकृतिनी परेश समर्पिते ते रदशोभनार्थम् ॥२७॥ रत्नैः सुवर्णेन कृतानि यानि चत्वारिसंकल्प्य गृहाण तानि । संभूषय त्वं कटकानि नाथ चतुर्भुजेषु ह्यज विघ्नहारिन् ॥२८॥ विचित्ररत्नैः खचितं सुवर्णसंभूतकं गृह्य मया प्रदत्तम् । तथांगुलिष्वेव यदंगुलीयं गणेश संशोभय तत्परेश ॥२९॥ रत्नैर्विचित्रैः खचितानि ढुंढे केयूरकाणि ह्यथ कल्पितानि । सुवर्णजानि प्रमथाधिनाथ गृहाण दत्तानि तु बाहुषु त्वम् ॥३०॥ प्रवालमुक्ताफलरत्नजास्त्वं सौवर्णसूत्रैश्च गृहाण कंठे । चित्तेन दत्ता विविधाश्च माला ह्युदरे शोभय विघ्नराज ॥३१॥

चंद्रं ललाटे गणनाथ पूर्णं वृद्धिक्षयाभ्यां तु विहीनमाद्यम्। संशोभय त्वं वरसंयुतं ते भक्तिप्रियत्वं प्रकटीकुरुष्व ॥३२॥ चिंतामणिं चिंतितदं परेश हृद्देशगं कांतिमयं कुरुष्व। मणिं सदानंदसुखप्रदं च विघ्नेश दीनानथ पालयस्व ॥३३॥ नाभौ फणीशं च सहस्रशीर्षं संवेष्टनैव गणाधिनाथ। भक्तं सुभूषं कुरु भूषणेन दत्तं वरं तं सफलं परेश ॥३४॥ देशे कटौ रत्नसुवर्णयुक्तां कांचीं सुचित्तेन च धारयामि। विघ्नेश ज्योतिर्गणदीपिनीं ते पाहि प्रभक्तं कुरु मां दयाब्धे ॥३५॥ गणेश ते रत्नसुवर्णयुक्ते मंजीरके नूपुरके तथैव। सुकिंकिणीनादयुते सुबुद्ध्या सुपादयोः शोभय मे प्रदत्ते ॥३६॥ इत्यादि नानाविधभूषणानि भक्तेच्छया मानसकल्पितानि। सुभूषयाम्येव तवांगकेषु रत्नादिधातुप्रभवाणि ढुंढे ॥३७॥ सुचंदनं रक्तममोघवीर्यं सुघर्षितं ह्यष्टसुगंधमुख्यैः। मया युतं कल्पितमेकदंत गृहाण ते त्वंगविलेपनार्थम् ॥३८॥ लिप्तेषु वैचित्र्यमथाष्टगंधैरंगेषु तेऽहं प्रकरोमि चित्रम्। मां पाहि चित्तेन विनायक त्वं रक्तं ततो वर्तुलमेव भाले ॥३९॥ आज्येन वै कुंकुमकेन रक्तान् सूक्ष्माक्षतांस्ते परिकल्पयामि। भाले गणाध्यक्ष गृहाण पाहि भक्तान् सुभक्तिप्रिय दीनबंधो ॥४०॥ गृहाण भोश्चंपकमालतीस्थलपंकजान्यंबुजपंकजानि। मया प्रदत्तानि च मल्लिकाश्च गणेश पुष्पाणि च रक्तकानि ॥४१॥ पुष्पोपरि त्वं मनसा गृहाण हेरंब मंदारशमीदलानि। दत्तानि चित्तेन सुकल्पितानि संख्यातिगानि प्रणवाकृते ते ॥४२॥ दूर्वांकुरान् वै मनसा प्रदत्तान् पंचत्रिपत्रान्वितकार्द्रभूतान्। श्वेतांश्च विघ्नेश्वर संख्यया त्वं हीनांश्च सर्वोपरि संगृहाण ॥४३॥ दशांगभूतं मनसा मया ते धूपं प्रदत्तं गणराज चाग्नौ। मां पाहि सौरभ्यकरं परेश सिद्ध्या च बुद्ध्या सह संगृहाण ॥४४॥ दीपं सुवर्त्यायुतमादरात्ते दत्तं मया मानसकं गृहाण। विघ्नेश कर्पूरभवं गृहाण तैलादिसंभूतममोघदृष्टे ॥४५॥ भोज्यं तु लेह्यं गणराज पेयं चोष्यं च नानाविधषड्रसाढ्यम्। हेरंब नैवेद्यमथो गृहाण संकल्पितं पुष्टिपते ह्यपारम् ॥४६॥ सुवासितं भोजनमध्यभागे जलं मया दत्तमथो गृहाण। सदात्मतीर्थं मनसा गणेश पिबस्व विश्वादिकतृप्तिकारिन् ॥४७॥ ततः करोद्वर्तनकं गृहाण सुगंधयुक्तं मुखमार्जनाय। सुवासितेनैव सुतीर्थजेन सुकल्पितं भक्तियुतं च ढुंढे ॥४८॥ आचम्य सर्वेश सुवासितं च दत्तं मया तीर्थजलं पिबस्व। संकल्प्य विघ्नेश ततः परं ते संप्रोञ्छनं हस्तमुखे करोमि ॥४९॥ द्राक्षादिरंभा-फलचूतकानि खर्जूरकर्कंधुकदाडिमानि। स्वादेन युक्तानि मया गृहाण संकल्प्य दत्तानि फलानि ढुंढे ॥५०॥ पुनर्जलेनैव करादिकं क्षालयामि तेऽहं मनसा गणेश। सुवासितं तोयमथो पिबस्व मया प्रदत्तं मनसा परेश ॥५१॥ अष्टांगयुक्तं

गणनाथ दत्तं तांबूलकं ते मनसा मया वै। सुकल्प्य विघ्नेश्वर संगृहाण नाथासकृत्तुंडविशोधनार्थम् ॥५२॥ ततो मया कल्पितके गणेश महासने रत्नसुवर्णयुक्ते। शमीशकार्पासकयुक्तवस्त्रैरनर्घ्यसंछादितके प्रसीद ॥५३॥ भक्त्या त्वदीयावरणं परेश संपूजयामि मनसा यथावत्। नानोपचारैः परमप्रियैस्तु त्वत्प्रीतिकामार्थमनाथबंधो ॥५४॥ गृहाण लंबोदर दक्षिणां तामसंख्यभूतां मनसा प्रदत्ताम्। सुवर्णरत्नादिकमुख्यभूतां प्रभो जगत्कृत्स्नमिदं सुपाहि ॥५५॥ राजोपचारान्विविधान् गृहाण छत्राश्वहस्त्यादिकमादराद्वै। चित्तेन दत्तान् गणनाथ ढुंढे ह्यपारसंख्यान् स्थिरजंगमांस्ते ॥५६॥ दानस्य नानाविधरूपकांस्ते दत्तान् मया वै मनसा गृहाण। गोभूमिकाद्यान् स्थिरजंगमांश्च हेरंब मां तारय मोहभावात् ॥५७॥ मंदारपुष्पाणि शमीदलानि दूर्वांकुरांस्ते मनसा ददामि। हेरंब लंबोदर दीनपाल संगृह्य भक्तं कुरु मां पदस्ते ॥५८॥ ततो हरिद्रामबिरं गुलालं सिंदूरकं ते परिकल्पयामि। सुवासितं वस्तु सुवासभूतैर्गृहाण ब्रह्मेश्वर शोभनार्थम् ॥५९॥ ततः शुकाद्याः शिवविष्णुमुख्यामराधिपाः शेषमुखास्तथान्ये। मुनींद्रकाः सेवकभावयुक्ताः सभासनस्थं प्रणमंति ढुंढिम् ॥६०॥ वामांगके भक्तियुता गणेशं सिद्धिश्च नानाविधसिद्धिभिस्तम्। अत्यंतभावेन सुसेवते तु मायास्वरूपा परमार्थभूता ॥६१॥ ब्रह्मेश्वरं दक्षिणभागसंस्था बुद्धिः कलाभिश्च सुबोधिकाभिः। विद्याभिरेवं भजते परेशा माया सुसांख्यप्रदचित्तरूपा ॥६२॥ प्रमोदमुख्याः प्रभुपृष्ठभागे गणेश्वरं भावयुता भजंते। भक्तेश्वरा मुद्गलशंभुमुख्याः शुकादयस्तं स्म पुरो भजंते ॥६३॥ गंधर्वमुख्या मधुरं जगुश्च विश्वेशगीतं विविधस्वरूपम्। नृत्यं कलायुक्तमथो पुरस्ताचक्रुस्तथा ह्यप्सरसो विचित्रम् ॥६४॥ इत्यादि नानाविधभावयुक्तैः संसेवितं विघ्नपतिं भजामि। चित्तेन ध्यात्वा तु निराजनं वै करोमि नानाविधदीपयुक्तम् ॥६५॥ चतुर्भुजं पाशधरं गणेशं तथांऽकुशं वै दधतं च दंतम्। त्रिनेत्रयुक्तं ह्यभयंधरं तं महोदरं चैकरदं गजास्यम् ॥६६॥ सर्पोपवीतं गजकर्णधारं विभूतिभिः सेवितपादपद्मम्। ध्याये गणेशं विविधप्रकारैः संपूजितं शक्तियुतं परेशम् ॥६७॥ ततो जपं वै मनसा करोमि स्वमूलमंत्रस्य विधानयुक्तम्। असंख्यभूतं गणराजहस्ते समर्पयाम्येव गृहाण ढुंढे ॥६८॥ आरार्तिकं त्वेतदपारदीपं कर्पूरभूतं प्रकरोमि पूर्णम्। चित्तेन लंबोदर तत् गृहाण ह्यज्ञानध्वांताघहरं निजानाम् ॥६९॥ गणेश वैघ्नेश्वरकैः सुमंत्रैः सुमंत्रितं पुष्पदलप्रभूतम्। गृहाण चित्तेन मया प्रदत्तमपारवृत्त्या त्वथ मंत्रपुष्पम् ॥७०॥ अनंतवृत्त्या स्तुतिमेकदंत विघ्नेश चित्तेन कृतां गृहाण। युक्तां श्रुतिस्मार्तभवैः पुराणैः सर्वैः परेशाधिपते मया वै ॥७१॥ प्रदक्षिणा मानसकल्पितास्ता

गृहाण लंबोदर भावयुक्ताः । असंख्यभूता विविधस्वरूपा दासान् सदा रक्ष भवार्णवाद्वै ॥७२॥ नतिं ततो विघ्नपते गृहाण साष्टांगकाद्यां विविधस्वरूपाम् । संख्याविहीनां मनसा कृतां ते सिद्ध्या च बुद्ध्या परिपालयाशु ॥७३॥ न्यूनातिरिक्तं तु मया कृतं चेदं ते तदर्थं मनसा गृहाण । दूर्वांकुरान् विघ्नपते प्रदत्तान् संपूर्णमेवं कुरु पूजनं मे ॥७४॥ क्षमस्व विघ्नाधिपते मदीयान् सदाऽपराधान् विविधस्वरूपान् । मदीयभक्तिं सफलां कुरुष्व संप्रार्थयेऽहं मनसा गणेश ॥७५॥ मह्यं प्रसन्नेन गजाननेन दत्तं प्रसादं च शिरोभिवंद्यम् । स्वमस्तके तं परिधारयामि चित्तेन विघ्नेश्वरमानतोऽस्मि ॥७६॥ गणेश उत्थाय सभां विहाय गतस्ततस्त्वंतरधामशक्त्या । शिवादयस्तं प्रणिपत्य सर्वे गताः सुचित्तेन च चिंतयामि ॥७७॥ सर्वान्नमस्कृत्य ततो भजामि चित्तेन भक्त्या च गणाधिपं तम् । स्वस्थानमागत्य महानुभावैर्भक्तैर्गणेशस्य च खेलयामि ॥७८॥ एवं त्रिकालेषु गणाधिपं तं चित्तेन नित्यं परिपूजयामि । तेनैव तुष्टः प्रददातु भावं विघ्नेश्वरो भक्तिमयं महांतम् ॥७९॥ विघ्नेशपादोदकपानकं मे तत्त्यक्तगंधस्य सुलेपनं तु । निर्माल्यसंधारणकं सुभोज्यं लंबोदरस्यास्तु हि भुक्तशेषम् ॥८०॥ करोमि यद्यच्च तदेव दीक्षा गणेश्वरस्यास्तु सदा परेश । प्रसीद नित्यं तव पादभक्तं कुरुष्व मां ब्रह्मपते दयालो ॥८१॥ शय्यामनर्घां परिकल्पयामि मंदारकार्पासकवस्त्रयुक्ताम् । नानासुपुष्पादिभिरर्चितां ते विघ्नेश निद्रां कुरु संगृहाण ॥८२॥ सिद्ध्या च बुद्ध्या सहितं गणेशं सुनिद्रितं वीक्ष्य तथाऽहमेव । गत्वा स्ववासं च करोमि निद्रां ध्यात्वा हृदि ब्रह्मपतिं तदीयः ॥८३॥ एतादृशं सौख्यममोघशक्ते देहीश यन् मानसजं गणेश । मह्यं च तेनैव कृतार्थरूपो भवामि भक्तेरसलालसोऽहम् ॥८४॥ गार्ग्य उवाच । एवं नित्यं महाराज गृत्समदो महायशाः । चकार मानसीं पूजां योगींद्राणां गुरुः स्वयम् ॥८५॥ य एतां मानसीं पूजां करिष्यति नरोत्तमः । पठिष्यति सदा सोऽपि गाणपत्यो भविष्यति ॥८६॥ श्रावयिष्यति यो मर्त्यः श्रोष्यते भावसंयुतः । स क्रमेण महीपाल ब्रह्मभूतो भविष्यति ॥८७॥ यद्यदिच्छति तत्तद्वै सफलं तस्य जायते । अंते स्वानंदगः सोऽपि योगिवंद्यो भविष्यति ॥८८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते गृत्समदप्रोक्तमानसपूजाकथनं नामाष्टत्रिंशत्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ ऐल उवाच । बाह्यां पूजां गृत्समदकीर्तितां वद मे विभो । तेन मार्गेण विघ्नेशं भजिष्यामि निरंतरम् ॥१॥ गार्ग्य उवाच । आदौ च मानसीं पूजां कृत्वा गृत्समदो मुनिः । चकार विधिवद्बाह्यां तां शृणुष्व सुखप्रदाम् ॥२॥ हृदि ध्यात्वा गणेशानं परिवारादिसंयुतम् । नासिकारंध्रमार्गेण बाह्यगं तं चकार सः ॥३॥ आदौ वैदिकमंत्रं स गणानां त्वेति संपठन् । पश्चात् श्लोकं समुच्चार्य पूजयामास विघ्नपम् ॥४॥ गृत्समद उवाच । चतुर्बाहुं त्रिनेत्रं च गजास्यं रक्तवर्णकम् । पाशांकुशादिसंयुक्तं मायायुक्तं प्रचिंतये ॥५॥ आगच्छ ब्रह्मणां नाथ सुरासुरवरार्चित । सिद्धिबुद्ध्यादिसंयुक्त भक्तिग्रहणलालस ॥६॥ कृतार्थोऽहं कृतार्थोऽहं तवागमनतः प्रभो । विघ्नेशानुगृहीतोऽहं सफलो मे भवो भवेत् ॥७॥ रत्नसिंहासनं स्वामिन् गृहाण गणनायक । तत्रोपविश्य विघ्नेश रक्ष भक्तान् विशेषतः ॥८॥ सुवासिताभिरद्भिश्च पादप्रक्षालनं प्रभो । शीतोष्णाभिस्ते करोमि गृहाण पाद्यमुत्तमम् ॥९॥ सर्वतीर्थाहृतं तोयं सुवासितं सुवस्तुभिः । आचमनं च तेनैव कुरुष्व गणनायक ॥१०॥ रत्नप्रवालमुक्ताद्यैरनर्घैः संस्कृतं प्रभो । अर्घ्यं गृहाण हेरंब द्विरदानन तोषकम् ॥११॥ दधिमधुघृतैर्युक्तं मधुपर्कं गजानन । गृहाण भावसंयुक्तं मया दत्तं नमोऽस्तु ते ॥१२॥ पाद्ये च मधुपर्के च स्नाने वस्त्रोपधारणे । उपवीते भोजनांते पुनराचमनं कुरु ॥१३॥ चंपकाद्यैर्गणाध्यक्ष वासितं तैलमुत्तमम् । अभ्यंगं कुरु सर्वेश लंबोदर नमोऽस्तु ते ॥१४॥ यक्षकर्दमकाद्यैश्च विघ्नेश भक्तवत्सल । उद्वर्तनं कुरुष्व त्वं मया दत्तैर्महाप्रभो ॥१५॥ नानातीर्थजलैर्ढुंढे सुखोष्णभावरूपकैः । कमंडलूद्भवैः स्नानं मया कुरु समर्पितैः ॥१६॥ कामधेनुसमुद्भूतं पयः परमपावनम् । तेन स्नानं कुरुष्व त्वं हेरंब परमार्थवित् ॥१७॥ पंचामृतस्य मध्ये तु जलस्नानं पुनः पुनः । कुरु त्वं सर्वतीर्थेन ब्रह्मकमंडलूद्भवैः ॥१८॥ दधिधेनुपयोभूतं मलापहरणं परम् । गृहाण स्नानकार्यार्थं विनायक दयानिधे ॥१९॥ संतोषकारकं ढुंढे घृतं धेनुसमुद्भवम् । महामलापघातार्थं तेन स्नानं कुरुष्व भोः ॥२०॥ पूर्णं मधुरसोद्भूतं सरघासंस्कृतं मधु । गृहाण स्नानकार्यार्थं विनायक नमोऽस्तु ते ॥२१॥ इक्षो रससमुद्भूतां शर्करां मलनाशिनीम् । गृहाण गणनाथ त्वं तया स्नानं समाचर ॥२२॥ यक्षकर्दमकाद्यैश्च स्नानं कुरु गणेश्वर । आंत्यं मलहरं शुद्धं सर्वसौगंध्यकारकम् ॥२३॥ ततो गंधाक्षतादीन् दूर्वांकुरांश्च गजानन । समर्पयामि स्वल्पांस्त्वं गृहाण परमेश्वर ॥२४॥ ब्राह्मणस्पत्यसूक्तैश्च ह्येकविंशतिवारकैः । अभिषेकं ते करोमि गृहाण द्विरदानन ॥२५॥ तीर्थैराचमनं देव सुवस्त्वभिसुवासितैः । कुरुष्व गणनाथ त्वं सर्वतीर्थभवेन वै ॥२६॥

वस्त्रयुग्मे गृहाण त्वमनर्घे रक्तवर्णके। लोकलज्जाहरायैव विघ्नराज नमोऽस्तु ते ॥२७॥ उत्तरीयं सुचित्रं ते नभस्तारांकितं यथा। गृहाण सर्वसिद्धीश मया दत्तं सुभक्तितः ॥२८॥ उपवीतं गणाध्यक्ष गृहाण त्वं ततः परम् । त्रैगुण्यमयरूपं तु प्रणवग्रंथिबंधनम् ॥२९॥ ततः सिंदूरकं देव गृहाण गणनायक । अंगलेपनभावार्थं सदानंदविवर्धन ॥३०॥ भूषणानि विचित्राणि सर्वांगे भूषणाय ते। सुवर्णरत्नकाद्यैश्च निर्मितानि गृहाण भोः ॥३१॥ अष्टगंधं समायुक्तं गंधं रक्तं गजानन। द्वादशांगेषु ते ढुंढे लेपयामि सुचित्रवत् ॥३२॥ रक्तचंदनसंयुक्तानथवा कुंकुमैर्युतान् । गणराज गृहाण त्वमक्षतान् भालमंडले ॥३३॥ कह्लारचंपकादीनि रक्तानि च गजानन । पुष्पाणि शमीमंदारदूर्वादीनि गृहाण च ॥३४॥ दशांगं गुग्गुलुं धूपं सर्वसौरभकारकम्। गृहाण त्वं मया दत्तं विनायक महोदर ॥३५॥ नानाजातिभवं दीपं गृहाण गणनायक। अज्ञानं मानसं दोषं हरंतं ज्योतिरात्मकम् ॥३६॥ चतुर्विधान्नसंपन्नं मधुरं लड्डुकादिकम्। नैवेद्यं ते मया दत्तं भोजनं कुरु विघ्नप ॥३७॥ सुवासितं गृहाणेदं जलं तीर्थसमाहृतम्। भुक्तिमध्ये च पानार्थं देवदेवेश ते नमः ॥३८॥ भोजनांते करोद्वर्तं यक्षकर्दमकेन च। कुरुष्व त्वं गणाध्यक्ष पिब तोयं सुवासितम् ॥३९॥ खर्जूरं दाडिमं द्राक्षां रंभादीनि फलानि वै। गृहाण देवदेवेश नानामधुरकाणि तु ॥४०॥ अष्टांगं देव तांबूलं गृहाण मुखवासनम्। असकृद्विघ्नराज त्वं मया दत्तं विशेषतः ॥४१॥ दक्षिणां कांचनाद्यां तु नानाधातुसमुद्भवाम्। रत्नाद्यैः संयुतां ढुंढे गृहाण सकलप्रिय ॥ ४२ ॥ राजोपचारकाद्यानि गृहाण गणनायक । दानानि तु विचित्राणि मया दत्तानि विघ्नप ॥४३॥ तत आवरणं तेऽद्य पूजयामि विधानतः । उपचारैश्च विविधैस्तेन तुष्टो भव प्रभो ॥४४॥ ततो दूर्वांकुरान् ढुंढे एकविंशतिसंख्यकान् । गृहाण न्यूनसिद्ध्यर्थं भक्तवात्सल्य-कारणात् ॥४५॥ नानादीपसमायुक्तं नीराजनं गजानन । गृहाण भावसंयुक्तं सर्वाज्ञानविनाशन ॥४६॥ गणानां त्वेति मंत्रस्य जपं साहस्रकं परम्। गृहाण गणनाथ त्वं सर्वसिद्धिप्रदो भव ॥४७॥ कर्पूराद्यां महार्तिं च नानादीपमयीं प्रभो। गृहाण ज्योतिषां नाथ तया नीराजयाम्यहम् ॥४८॥ पादयोस्ते तु चत्वारि नाभौ द्वे वदने प्रभो। एकं तु सप्तवारं वै सर्वांगेषु निराजनम् ॥४९॥ चतुर्वेदभवैर्मंत्रैर्गाणपत्यैर्गजानन। मंत्रितानि गृहाण त्वं पुष्पपत्राणि विघ्नप ॥५०॥ गाणपत्यैः पंचविधमयैः स्तोत्रैर्गणाधिप । स्तौमि त्वां तेन संतुष्टो भव भक्तिप्रदायक ॥५१॥ एकविंशतिसंख्याकां त्रिसंख्यां वा गजानन। प्रदक्षिणां गृहाण त्वं ब्रह्मब्रह्मेशभावतः ॥५२॥ साष्टांगां प्रणतिं नाथ एकविंशतिसंमिताम्। हेरंब सर्वपूज्य त्वं

गृहाण तु मया कृताम् ॥५३॥ न्यूनातिरिक्तभावार्थं कांचित् दूर्वांकुरान् प्रभो । समर्पयामि तेन त्वं सांगां पूजां कुरुष्व मे ॥५४॥ त्वया दत्तं स्वहस्तेन निर्माल्यं चिंतयाम्यहम् । शिखायां धारयाम्येव सदा सर्वप्रदं च तत् ॥५५॥ अपराधानसंख्यातान् क्षमस्व गणनायक । भक्तं कुरु च मां ढुंढे तव पादप्रियं सदा ॥५६॥ त्वं माता त्वं पिता त्वं वै सुहृत् संबंधिकादयः । त्वमेव कुलदेवश्च सर्वं त्वं मे न संशयः ॥५७॥ जाग्रत्स्वप्नसुषुप्तिभिर्देहवाङ्मानसैः कृतम् । सांसर्गिकं च यत् कर्म गणेशाय समर्पये ॥५८॥ बाह्यं नानाविधं पापं महोग्रं तल्लयं व्रजेत् । गणेशपादतीर्थस्य मस्तके वंदनात् किल ॥५९॥ पादोदकं गणेशस्य पीतं नरेण तत्क्षणात् । सर्वांतर्गतजं पापं नश्यति गणनातिगम् ॥६०॥ गणेशोच्छिष्टगंधं वै द्वादशांगेषु योऽर्चयेत् । गणेशतुल्यरूपः स दर्शनात् सर्वपापहा ॥६१॥ यदि गणेशपूजादौ गंधं भस्मादिकं चरेत् । गणेशोच्छिष्टगंधं तु नोचेत्तत्र विधिं चरेत् ॥६२॥ द्वादशांगेषु विघ्नेश नाममंत्रेण चार्चयेत् । तेन सोऽपि गणेशस्य समो भवति भूतले ॥६३॥ गणेश्वरं मूर्ध्नि चादौ ललाटे विघ्ननायकम् । दक्षिणे कर्णमूले तु वक्रतुंडं समर्चयेत् ॥६४॥ वामे कर्णस्य मूले वै चैकदंतं समर्चयेत् । कंठे लंबोदरं देवं हृदि चिंतामणिं तथा ॥६५॥ बाहौ दक्षिणके चैव हेरंबं वामबाहुके । विकटं नाभिदेशे तु विनायकं समर्चयेत् ॥६६॥ कुक्षौ दक्षिणभागे तु मयूरेशं समर्चयेत् । वामकुक्षौ गजास्यं वै पृष्ठे स्वानंदवासिनम् ॥६७॥ सर्वांगलेपनं शस्तं चित्रितं गंधमष्टकैः । गाणेशानां विशेषेण सर्वभद्रस्य कारणात् ॥६८॥ भुक्तशेषं तु नैवेद्यं गणेशस्य भुनज्म्यहम् । भुक्तिमुक्तिप्रदं पूर्णं नानापापनिकृंतनम् ॥६९॥ गणेशस्मरणेनैव करोमि कालखंडनम् । गाणपत्यैश्च संवासो गजानन सदाऽस्तु मे ॥७०॥ गार्ग्य उवाच । एवं गृत्समदो विप्रश्चकार बाह्यपूजनम् । त्रिकालेषु महायोगी सदा भक्तिसमन्वितः ॥७१॥ तथा कुरु महीपाल गाणपत्यो भविष्यसि । यथा गृत्समदः साक्षात्तथा त्वमपि निश्चितम् ॥७२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते गृत्समदप्रोक्तबाह्यपूजावर्णनं नामैकोनचत्वारिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ ऐल उवाच । श्रुत्वा गृत्समदस्यैव चरितं सर्वदायकम् । न तृप्तोऽहं महायोगिन् भवाम्यमृतपानवत् ॥१॥ न गृत्समदतुल्यं तु पश्यामि ब्रह्मगोलके । धन्योऽयं योगिनां मध्ये गाणपत्येषु मानद ॥२॥ अधुना वद योगीश गणेशलोकवर्णनम् । कीदृशोऽयं गणेशस्य निजलोको विशेषतः ॥३॥ गार्ग्य उवाच । अत्र ते कथयिष्यामि चेतिहासं पुरातनम् । मुद्गलस्य मुनेः संवादयुक्तं कपिलस्य वै ॥४॥ एकदा मुद्गलो योगी गाणपत्याग्रणीर्नृप । जगाम कपिलस्यैवाश्रमं गंगातटे स्थितम् ॥५॥ प्रणम्य स जगादापि कपिलं हर्षसंयुतः । कृत्वा करपुटं चांगिरस आदौ वराग्रणीः ॥६॥ मुद्गल उवाच । साक्षाद्विष्णुस्वरूपस्त्वं शुक्र सर्वार्थदायक । गाणपत्येषु मुख्यस्त्वं सांख्यानां परमा गतिः ॥७॥ त्वद्दर्शनजपुण्येन कृतकृत्योऽहमंजसा । कुलं धन्यं यशो विद्या ज्ञानं मे तेऽद्य दर्शनात् ॥८॥ एवं वदंतमत्यंतं कपिलस्तं ननाम च । पूजयामास हर्षेण मुद्गलं भावभावितम् ॥९॥ ततस्तं कपिलो योगी जगाद वचनं हितम् । तात ते दर्शनेनाद्य पवित्रोऽहं च सांप्रतम् ॥१०॥ पूर्णभक्तस्त्वमेवैको गणेशस्य महामुने । साक्षान् मुद्गल शस्त्रेशो गाणेशो नात्र संशयः ॥११॥ यथा मुद्गरशस्त्रेण चूर्णयित्वा पदार्थकान् । नामरूपविहीनांश्च कुरुते मानवः परान् ॥१२॥ तथा त्वया महायोगिंस्तपसा योगसेवया । अभिमानः समाचूर्ण्य कृतो मूलविवर्जितः ॥१३॥ नानायोगिन एवं तं योगेन स्वाभिमानकम् । चूर्णयंति महाभाग तथापि हृदि तिष्ठति ॥१४॥ तेन त्वं मुद्गलो योगी जगत्येको विनिश्चितम् । वयं न तादृशा वत्स ह्येकमार्गसमाश्रयात् ॥१५॥ त्वदीयकृत्यांगिरसं पुराणं संभविष्यति । सर्वेषां मान्यमेकं तद्योगप्रदं न संशयः ॥१६॥ अभिमानेन युक्तानि पुराणानि विशेषतः । शास्त्राणि नात्र संदेहः कारणं शृणु मुद्गल ॥१७॥ ज्ञातं गुह्यं तत्तथापि संगोप्य स्वमतं पुनः । स्थापयित्वा विशेषेणांजसा तथ्यं वदंति ते ॥१८॥ गणेशभक्तः संस्त्वं तु तथापि गणनायकम् । रहस्येन विशेषार्थं न करोषि कदाचन ॥१९॥ त्वदीयं वचनं श्रेष्ठं सर्वमान्यं न संशयः । अभिमानेन हीनत्वाद्वेदगुह्यप्रकाशकम् ॥२०॥ त्वया कृतं पुराणं यत्तदात्यं प्रभविष्यति । पुराणानां महत् श्रेष्ठं मुद्गलं मुद्गलाकृति ॥२१॥ त्वयोक्तं निंदयेद्यो वै भवेत् स निरयप्रदः । अन्येभ्यस्तु स्वयं मूर्खो नरकेषु पतिष्यति ॥२२॥ वेदशास्त्रपुराणानां मुद्गलस्त्वत्कृतो महान् । ग्रंथो भविष्यन् नूनं निरभिमानत्वकारणात् ॥२३॥ न मुद्गलसमो योगी न मुद्गलसमः कदा । गाणपत्यो महायोगी त्रिकालेषु विनिश्चितम् ॥२४॥ स्वागतं ते महाभाग स्थीयतां मे प्रसन्निधौ । त्वद्दर्शनेन संहृष्टो

भवामि गणपप्रिय ॥२५॥ कपिलेन महायोगी सत्कृतस्तत्र भूमिप । मुद्गलस्तत्र सांनिध्ये न्यवसद्भावसंयुतः ॥२६॥ एकदा सुखमासीनं कपिलं योगिनां वरम् । पप्रच्छ मुद्गलो हर्षात् विनयावनतोऽभवत् ॥२७॥ मुद्गल उवाच । स्वामिंस्त्वदीयगेहे स चिंतामणिः समागतः । पुत्रभावेन साक्षात्तु ब्रह्मणां नायकः परः ॥२८॥ त्वया भावेन सर्वेश आराधितो निरंतरम् । गुह्यं तस्य त्वमेवेह जानास्यत्र न संशयः ॥२९॥ न त्वत्समो महासिद्धः साक्षाद्विष्णुस्त्वमंजसा । गाणपत्यः स्वयं योगी गणेशजनकः पुनः ॥३०॥ परिपृच्छाम्यतस्त्वाहं वद सर्वं महाप्रभो । भवादृशा जनानां तु तारणाय भवंति हि ॥३१॥ स्वानंदवसतिः स्वामिन् कीदृशी तत्र किं सुखम् । विस्तारः कीदृशस्तस्याः केन योगेन लभ्यते ॥३२॥ न कोऽपि तस्य लोकस्य जानाति त्वदृते परम् । रहस्यं वद सर्वेश गाणपत्यस्य विस्तरात् ॥३३॥ गार्ग्य उवाच । एवं पृष्टो महासिद्धस्तं प्रहस्य प्रशंसयन् । जगाद कपिलो हर्षाद्गाणपत्याग्रणीर्वचः ॥३४॥ कपिल उवाच । शृणु मुद्गल माहात्म्यं संक्षेपेण ब्रवीम्यहम् । स्वानंदलोकगं पूर्णं सारं सर्वत्र संमतम् ॥३५॥ गणासुरं गणाध्यक्षो हत्वा परमदुर्जयम् । गंतुं समुद्यतस्तत्र निजलोके यदाऽभवत् ॥३६॥ ततो मयाऽतिभक्त्या वै प्रार्थितो गणनायकः । उवाच मां वरं योगिन् वृणु दास्यामि मानद ॥३७॥ ततश्चिंतामणिं विप्र प्रणम्योचेऽतिदुःखितः । वद स्वानंदलोकस्य माहात्म्यं गणनायक ॥३८॥ नानालोकाः श्रुताः स्वामिन् न स्वानंदं गजानन । जानाति कोऽपि यत्र त्वं प्रभो वससि नित्यदा ॥३९॥ चिंतामणिरुवाच । स्वानंदं यच्च वेदेषु ब्रह्म योगींद्रसत्तम । तदेव मायया पूर्वं बभूव नगरं महत् ॥४०॥ स्वसंवेद्येन योगेन लभ्यते नान्यथा क्वचित् । अथवा मे व्रताद्यैश्चोपासनेन महामुने ॥४१॥ न जपैस्तपसा दानैर्नानाकर्मपरायणैः । लभ्यते निजलोको वै जानीहि मुनिसत्तम ॥४२॥ न तत्र विष्णुशंभ्वाद्याः शुकाद्या योगिनोऽपरे । गच्छंति मार्गहीनत्वादगम्यः संमतः सदा ॥४३॥ चतुर्विधमयैर्भावैर्लभ्यते न कदाचन । अगम्यस्तैर्न संदेहो मम लोको महामते ॥४४॥ दशसाहस्रकं विप्र योजनानां प्रविस्तरः । अत ऊर्ध्वं च सर्वत्र तावन्मानः प्रकीर्तितः ॥४५॥ वर्तुलः सर्वतः सोऽपि स्वस्याधारेण तिष्ठति । सदा ज्योतिर्मयः साक्षाज्ज्योतिषां ज्योतिरुच्यते ॥४६॥ न तत्र सगुणं सर्वं निर्गुणं नैव विद्यते । पुमान् नपुंसकं न स्त्री वर्तते मुनिसत्तम ॥४७॥ चतुर्विधेषु सर्वेषु नानाभावगतेषु च । स्वसंवेद्यं निजात्मस्थं संस्थितं मेऽत्र संनिधौ ॥४८॥ चतुर्विधेषु सर्वेषु मायायुक्तमिह स्थितम् । सदा भ्रांतं विजानीहि स्वस्वरूपं महामते ॥४९॥ तेषु मोहविहीनं यत् साक्षिरूपं सदा स्थितम् ।

निर्गुणेन स्वभावेन सदा खंडमयं परम् ॥५०॥ तयोर्योगे निजानंदो ढुंढिलोकग एव सः । बभूव तत्र भक्त्या मे भक्तास्तिष्ठंति संनिधौ ॥५१॥ मम लोके महाभाग न क्षुधा न तृषादिकम् । सदा स्वानंदभोगस्था वसंति मम सेवकाः ॥५२॥ न कृत्रिमं सुखं तत्र विद्यतेऽकृत्रिमं न हि । स्वानंदेन निमग्नास्ते सर्वं भुंजंति नित्यदा ॥५३॥ सगुणं तु सुखं सर्वे भुंजते निर्गुणं तथा । स्वानंदसंभवं तत्स्था एककाले महामते ॥५४॥ अत्र यत् संस्थितं सर्वं नानाभेदमयं मुने । तदेव ज्योतीरूपेण मम लोके प्रतिष्ठति ॥५५॥ अत्रैव न स्थितं यच्च निर्गुणं विप्र तत्र तत् । ज्योतीरूपेण मे लोके किल तिष्ठति सर्वदा ॥५६॥ स्वानंदसंभवं सर्वं तत्र तिष्ठति नित्यदा । मायया मेऽत्र लोकेऽतः सदाऽऽश्चर्यमयो बभौ ॥५७॥ सगुणो नैव विप्रेश सगुणं तत्र वर्तते । निर्गुणो न स नैर्गुण्यं वर्तते मे च लोकगम् ॥५८॥ सगुणैर्निर्गुणैर्हीनं वर्तते तत्र सर्वदा । अत आश्चर्यसंयुक्तो मम लोको विशेषतः ॥५९॥ न तत्राऽहं स्वभावश्च नाऽहं भावविवर्जितः । मम लोके महायोगिन् सदा तिष्ठंति मत्प्रियाः ॥६०॥ सगुणाऽमृतरूपं यद्भोगदं मृततुल्यकम् । निर्गुणामृतरूपं यदमृते भोगकारकम् ॥६१॥ तयोर्योगे महायोगिन्नमृतं स्वस्वरूपकम् । तन्मयः सागरस्तत्र स्वस्थाधारेण वर्तते ॥६२॥ मिष्टं नानाविधं तस्मान्निःसृतं सगुणात्मकम् । निर्गुणात्मकमेतस्मादिक्षुसागर उच्यते ॥६३॥ स्वस्वरूपात्मकं तत्र जलं रक्तस्वरूपकम् । तस्य नश्यति पानेन नैर्गुण्यं सगुणात्मकम् ॥६४॥ तस्माद्धारा समुद्भूता मधुधारा प्रकथ्यते । तया सगुणनैर्गुण्यं वर्तते तृप्तिसंयुतम् ॥६५॥ तत्राऽहं सिद्धिबुद्धिभ्यां सदा क्रीडामि मानद । ब्रह्मप्रियाद्यकास्तत्र गणा मे निवसंति हि ॥६६॥ शुंडादंडादिचिह्नैश्च संयुतोऽहं सदा मुने । गणा मेऽन्ये तथा भक्ताः स्वेच्छारूपाः वसंति ते ॥६७॥ एतत्ते कथितं सर्वं मम लोकसुखं महत् । मानयुक्तं मानहीनं हृदये पश्य मां मुने ॥६८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते स्वानंदलोकवर्णनं नाम चत्वारिंशत्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ कपिल उवाच । त्वदीयभक्तिसंयुक्ता नराः स्वानंदगा बभुः । गच्छंति केन मार्गेण तद्वदस्व गजानन ॥१॥ चिंतामणिरुवाच । मदीयोपासनायुक्ता मन्निष्ठा मत्परायणाः । अंते मेऽत्र स्मृतिं कृत्वा गच्छंति मम लोककम् ॥२॥ विमानं स्वस्वरूपाढ्यं प्रेषयामि महामुने । शिवविष्णवादिदेवानामदृश्यं निजलोकतः ॥३॥ तमारुह्य गणैर्युक्तं भक्तो मे देहधृक् स्वयम् । स्वर्गान् पश्यंश्च सर्वान् स विस्मितो भवतीत्यहो ॥४॥ न तं पश्यति देवाद्या योगिनो यान-संस्थितम् । स्वानंदचक्षुषा हीना मृतदेहमया मुने ॥५॥ शक्तेर्लोकमतिक्रम्य तथा सौरं च वैष्णवम् । शैवं ततः परं सोऽपि मम लोकं प्रविंदति ॥६॥ तत्राज्ञानमयश्चादावंधकारः प्रदृश्यते । नरेण न गणैर्विप्र देहधारणकारणात् ॥७॥ विमानप्रभया तत्र मदीयस्मरणेन वै । योजनान्ययुतं गत्वा प्रकाशस्तेन दृश्यते ॥८॥ तत्र भ्रामरिका देवी प्रचंडदेहधारिणी । ज्योतिर्मयस्वरूपेणाज्ञानिभ्यो भयदा बभौ ॥९॥ जन्ममृत्यभयं सर्वं नानाभेदकरं भ्रमम् । तया संरचितं पूर्णं मम जानीहि मायया ॥१०॥ भ्रामयेत् सर्वभूतानि सा स्थिता भ्रामरी स्वयम् । स्वस्याधारेण तत्रैव स्वानंदमयकायभृत् ॥११॥ तां पश्य भयभीतः स मां सस्मार विशेषतः । ततो गणैः समाश्वास्याऽग्रे निन्ये मानवोत्तमः ॥१२॥ तस्या मस्तकगा शक्तिर्ज्योति-राधाररूपिणी । अज्ञानिभ्यो सदा विप्र भयदा सा बभूव ह ॥१३॥ जीवरूपं सदा सर्वभेदमोहधरं परम् । शिवरूपं तथा साक्षि तदाधारं प्रवर्तते ॥१४॥ देहादीनां महायोगिन्नाधारो जीवसंज्ञितः । स्वयमाधारहीनत्वात् परमात्मा तदेव च ॥१५॥ सर्वेषां पूर्ण आधारस्तया क्लृप्तो महामुने । आधारशक्तिरेवं सा नाम्ना तस्य स्थिताऽभवत् ॥१६॥ तयाऽहं द्विविधश्चित्ते भवाम्यज्ञानिनां सदा । जीवात्मपरमात्मस्थो माया तत्र बभौ परा ॥१७॥ मदीयध्यानजेनैव तामतिक्रम्य मानवः । गणैर्निन्ये पुरोभागे मम दर्शनकारणात् ॥१८॥ ततोऽतिज्योतिषा रूपा शक्तिर्वै कामदायिनी । तस्या मस्तकगा विप्र शोभते हर्षदायिनी ॥१९॥ जन्ममृत्युयुतं सर्वं भेदरूपं तथा परम् । आत्माकारं तयोर्योगे योगरूपा तु सा स्मृता ॥२०॥ तथा कामयुतं विप्र द्विविधं प्रकृतं सदा । तेन देहात्मनोर्योगः परस्परयुतोऽभवत् ॥२१॥ उत्पत्तिस्थितिसंहारयुक्तं भ्रांतिधरं स्मृतम् । नानाभेदमयं पूर्णं क्षयवृद्ध्यादिसंयुतम् ॥२२॥ आत्मा सदाऽमृताधार उत्पत्तिस्थितिनाशकैः । हीना वृद्धिक्षया-दिभ्यो वदंति वेदवादिनः ॥२३॥ किमर्थं भेदयुक्तं च सर्वदाऽऽत्मानमिच्छति । तथा पश्यात्मवैचित्र्यं विरुद्धे सति-मानद ॥२४॥ कामयुक्तं ह्यसिपदेन द्वंद्वस्थं कृतं सदा । तेन मोहप्रभावेण परस्परहितं जगत् ॥२५॥ अतः सा शक्ति-

राख्याता कामदा सर्वमोहिनी। असिरूपा विशेषज्ञ महामाया मदीयिका ॥२६॥ भ्रामयी भ्रामिका काऽपि शक्तिर्नात्र प्रदृश्यते। त्वं पदस्थां महामायां तां जानीहि प्रभावतः ॥२७॥ आधाराया महायोगिन्नाधारान्या न विद्यते। शक्तिः कुत्र ततः सापि तत्पदस्थाऽत्र कथ्यते ॥२८॥ कामदायाश्च का शक्तिः कामदान्या न विद्यते। सर्वदा सर्वरूपासि पदमध्यापि सा बभौ ॥२९॥ तस्या मस्तकगं विद्धि लोकं मे स्वस्वरूपकम्। मायया रचितं विप्र मया स्वानुभवात्मकम् ॥३०॥ तत्रागत्य महाभक्तः पिबेदिक्षु समुद्रजम्। जलं तेन स वै सद्यो ज्योतीरूपधरो भवेत् ॥३१॥ भेदाभेदादिहीनश्च भूत्वा पश्यति मां ततः। मद्दर्शनजयोगेन ब्रह्मभूतो भवेन्नरः ॥३२॥ स्वेच्छया निजलोकस्थो यत्र तत्र स संचरेत्। सगुणो निर्गुणो भूत्वा सदा स्वानंदगः परः ॥३३॥ ततस्तस्य पुनर्भ्रांतिर्न भवेन् मुनिसत्तम। कल्पकोटिशतैर्वाऽपि निश्चितं वेदवादिभिः ॥३४॥ महालये चतुर्भेदा मयि चैकत्वमागताः। अज्ञानेन युताः सर्वे पुनस्तान् संसृजाम्यहम् ॥३६॥ एतत्ते कथितं सर्वं मम लोकागमे मुने। संक्षेपेणैव जानीहि मार्गहीनं सुसिद्धिदम् ॥३७॥ कपिल उवाच। त्वदीयोपासनं कृत्वा बहवस्ते गजानन। लोकं गच्छंति विघ्नेश तथा योगिन एव च ॥३८॥ ब्रह्मभूताश्च ते ख्याताः कदाचिन्न पतंति चेत्। तदा जगदिदं स्वामिन् क्षीणरूपं भवेत् क्रमात् ॥३९॥ पुनः पुनः सुस्रष्टा त्वं क्षीणे क्षीणे कथं प्रभो। पूर्णं विश्वमिदं नित्यमंजसा भाति खेलसि ॥४०॥ चिंतामणिरुवाच। यथाऽहं मायया विप्र युद्धकाले विशेषतः। भूत्वा ह्यनंतरूपेण प्रयुद्ध्ये विश्वपालनात् ॥४१॥ हत्वा दैत्यादिकान् सर्वान् पुनरेकस्वरूपधृक्। भवामि सर्वभावज्ञो लीलार्थमवतारधृक् ॥४२॥ तथा मायाबलेनैव नूतनं संसृजाम्यहम्। न न्यूनाधिकमेवेदं विश्वं भवति सर्वदा ॥४३॥ कपिल उवाच। ब्रह्मभूता नरा नार्यः स्वानंदे संस्थिता बभुः। अनंतास्ते प्रभक्त्या वै पुनः स्वानंदगामिनः ॥४४॥ तेषां वासः सदा तत्र नगरं नियतं प्रभो। संकीर्णता भवेन्नूनं कुत्र तिष्ठंति तद्वद ॥४५॥ चिंतामणिरुवाच। स्वानंदे कल्पपर्यंतमवसन्नित्यमादरात्। महालये समुत्पन्ने मद्देहे संगता बभुः ॥४६॥ मया भिन्नं कृतं सर्वं युगादौ मुनिसत्तम। युगांते योगभावेन मद्रूपं भवतीत्यहो ॥४७॥ मद्देहे योगभावेनाज्ञानेनैव समागताः। सा योगनिद्रा विप्रेंद्र मदीया कथ्यते बुधैः ॥४८॥ स्वानंदस्था जनाः सर्वे ज्ञानयुक्ता मदीयके। देहे लीना वै भवंति योगींद्रा योगभावतः ॥४९॥ पुनः सृष्टियुगे विप्र निःसृतं विश्वमंजसा। अज्ञानेन युतं लीनं मायया मे न संशयः ॥५०॥ ज्ञानेन ये समायाता मद्देहे ते पुनः कदा। भवंति भिन्नरूपा न सृष्ट्यादौ योग-

भाविताः ॥५१॥ एवं वसंति ये तत्र स्वानंदे मुनिसत्तम । कल्पे कल्पे मदीये ते देहे सायुज्यमागताः ॥५२॥ कपिल उवाच । भक्तिमिच्छंति विघ्नेश त्वदीयां नित्यमादरात् । न योगे प्रेमभावेन तेषां कुत्र स्थितिं वद ॥५३॥ कल्पे कल्पे महाभागा भक्तास्ते पूर्णभावतः । भवंति ये क्रमेणैवापाराः कुत्र वसंति ते ॥५४॥ चिंतामणिरुवाच । दशयोजनसाहस्रं मानं तस्य प्रकीर्तितम् । योगिनां च मुमुक्षूणां न भक्तानां कदाचन ॥५५॥ अपारयोजनाकारो मम लोको न संशयः । स्वानंदस्तत्र मे भक्ता वसंति सेवनोत्सुकाः ॥५६॥ संख्याहीनाश्च मद्भक्ताः सदा प्रेमरसाऽऽप्लुताः । नवधा मां भजंते ते कल्पे कल्पे गतव्यथाः ॥५७॥ भवंति तु भविष्यंति बभूवुर्ये महामुने । मद्भक्ता मे प्रसान्निध्ये वसंति मोहदाः सदा ॥५८॥ महाभागा प्रियं भक्तिसमं मे नैव विद्यते । भक्त्यधीनो महानंदाद् भ्रमेयं भक्तसन्निधौ ॥५९॥ यत्र कुत्र तु तिष्ठंति भक्ता मे तत्र सर्वदा । तिष्ठामि सर्वभावेन तान् रक्षामि सुविह्वलः ॥६०॥ नवधा चित्तभावेन भक्तसामीप्यगो मुदा । भजामि भक्तमाहात्म्यं मोहितश्चेष्टितः सदा ॥६१॥ न स्वानंदप्रियो मे वै सिद्धिर्बुद्धिः सुतौ तथा । मम देहो न विप्रेश प्रिया भक्ता यथा च मे ॥६२॥ कपिल उवाच । स्वानंदस्था गणास्ते ये भक्तान्नतुं समागताः । ज्योतीरूपाश्च भक्तैस्ते दृश्यंते कथमप्यहो ॥६३॥ चिंतामणिरुवाच । मायया मे महायोगिन् दुर्लभं किं भवेद्वद । कृपया मेऽत्र पश्यंति भक्तास्तान् चर्मचक्षुषा ॥६४॥ स्वानंदः सर्वरूपश्च तत्र मार्गं वदामि ते । भेदयुक्तैर्गणा मे वै दृश्यंते भेदसंयुताः ॥६५॥ भेदहीनैः सदात्मस्थैर्निर्गुणा मे गणा मुने । दृश्यंते स्वात्मसंस्थैश्च स्वसंवेद्यात्मकारतथा ॥६६॥ जलादिषु यथा बिंबं भवते तादृशं किल । तथा मदीयलोकस्था दृश्यंते सर्वमंडले ॥६७॥ एतत्ते कथितं सर्वं ममलोकविचेष्टितम् । अधुनाऽहं गमिष्यामि निजलोकं महामुने ॥६८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खंडे लंबोदरचरिते स्वानंदस्थितिवर्णनं नामैकचत्वारिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कपिल उवाच । एतादृशी महाभक्तिस्त्वदीया गणनायक । यदा सर्वे प्रकुर्वंति तदा विश्वं कथं भवेत् ॥१॥ सर्वेभ्यः श्रेष्ठभावेन जानंति त्वां यदा नराः । तदा त्वां सर्वभावेन भजंते ते न संशयः ॥२॥ श्रेष्ठार्थिनो नराः सर्वे भजंते शीघ्रसिद्धये । देवेंद्रास्त्वां परित्यज्यान्यान् ब्रह्मप कथं वद ॥३॥ चिंतामणिरुवाच । मया सृष्टं जगत् सर्वं नानाभावमयं मुने । नानाभावयुताः सर्वे न भजंते तु मां सदा ॥४॥ चतुर्णां देवमुख्यानां कृत्वा भजनमुत्तमम् । तेन शुद्धांतरात्मानो मां भजंते ततः परम् ॥५॥ अन्यच्च श्रृणु मे वाक्यं मया माया प्रकाशिता । सर्वश्रेष्ठतमं मां ते न जानंति प्रमोहिताः ॥६॥ यदाऽहं मायया विप्र छादयामि न मे वपुः । तदा मोहविहीनाश्चेच्छ्रेष्ठं मां प्रवदंति च ॥७॥ मया नानावताराश्च कृतास्त्रैलोक्यगेषु वै । देवादीनां प्रगेहेषु तादृशं मां वदंति ते ॥८॥ अग्रपूज्यत्वमेवं यत् सर्वपूज्यत्वमंजसा । शिवेन दत्तमस्मै तद्गणेशाय वदंति ते ॥९॥ मायया मोहिता मे मां पार्वतीमलसंभवम् । शिवपुत्रं शिवेनैव स्थापितं प्रवदंति ते ॥१०॥ शिवगणस्वरूपोऽयं मुक्तिं दातुं न च क्षमः । कार्यसिद्धिस्वभावेन कामपूरो गणेश्वरः ॥११॥ इत्यादिभावा बहवो मया विप्र प्रकाशिताः । क्रीडार्थं तेन मां त्यक्त्वा श्रेष्ठं जानंति चापरम् ॥१२॥ नो चेत् स्वानंदगाः सर्वे भवंत्यत्र न संशयः । निर्मोहात् कल्पपर्यंतं जगन्नैव प्रवर्तते ॥१३॥ अन्यच्च कर्मणा सर्वं ब्रह्मांडं जनसंयुतम् । नानाभावात्ममोहस्थं भवतेऽनेकनिश्चयात् ॥१४॥ अंते मदीयभावस्था भवंते शुद्धचेतसः । वेदशास्त्रार्थतत्त्वज्ञाः स्वयमेव महामुने ॥१५॥ अहं साक्षाद् बुद्धिपतिः कृत्वा बुद्धेश्च चालनम् । गोपयामि गणेशस्य स्वरूपं देहिनां हृदि ॥१६॥ तेन मां नैव जानंति जना परमगं कदा । विवेकमार्गं ते तत्र वदामि श्रृणु यत्नतः ॥१७॥ कृते मां पूर्णभावेन भजंते सर्वमानवाः । अज्ञानावरणैर्हीनाः श्रेष्ठं ते प्रवदंति हि ॥१८॥ त्रेतायां पादहीनेन मां भजंते नरा मुने । पंचायतनभावेन पंच श्रेष्ठान् वदंति ते ॥१९॥ तत्र सर्वेषु साम्येन मां भजंते न संशयः । चतुर्भ्यः श्रेष्ठभावाख्यं ज्ञानं नष्टं मदीयकम् ॥२०॥ द्वापरे द्विपदाहीनं मां भजंते सुरादयः । वदंति न्यूनरूपं तु चतुर्भ्यः शंकरात्मजम् ॥२१॥ वेदशास्त्रे पुराणेषु श्रेष्ठं जानंति मानवाः । मोहेन युगमानेन मां न्यूनं प्रवदंति ते ॥२२॥ सर्वं ब्रह्मेति वेदेषु कथितं तत्र किं भवेत् । सत्ता समानरूपा तु तथाऽयं गणनायकः ॥२३॥ कलौ त्रिपादहीनेन मां ज्ञानेन भजंति ते । वदंति वै नरास्तत्र मलजोऽयं गजाननः ॥२४॥ शिवस्य वरदानेनाग्रपूज्योऽयं गणेश्वरः । सर्वपूज्यो यथा दैत्या जंतवो वरसंयुताः ॥२५॥ सर्वं ब्रह्मेति वेदेषु कथितं तेन विप्रपः ।

वर्णितोऽयं शिववरबलेनैव मुनींद्रकैः ॥२६॥ स्वसत्तासंयुतो देवो नाऽयं चिंतामणिः कदा । शिवभक्तिबलेनाद्यो वरयुक्तो बभूव ह ॥२७॥ कलिप्रांते मुने लोका न भजिष्यंति मां कदा । एकपादमयी भक्तिर्नाशं यास्यति निश्चितम् ॥२८॥ मतभेदेन मोहेनादौ मां त्यक्त्वा विशेषतः । शिवविष्णवादिकान् सर्वे भजंते त्वग्रपूज्यकान् ॥२९॥ सर्वपूज्याग्रपूज्यत्वं नष्टं भवति मे ततः । अंते विघ्नयुताः सर्वे नरकेषु पचंति वै ॥३०॥ युगमानप्रसिद्ध्यर्थं कृतं मेऽत्र महामुने । कर्माकर्मविकर्माणि स्थापितानि विभागशः ॥३१॥ न करोमि यदाऽहं चेत्तदा मे वरदानकम् । कर्मभ्यश्च युगेभ्यश्च निष्फलं भवतीत्यहो ॥३२॥ नरकादय आख्याताः स्वर्गाश्चैव महामुने । भवंति निष्फलाः सर्वे तदर्थं खेलयाम्यहम् ॥३३॥ शुभाशुभमयं सर्वं मया स्ववरदानतः । स्थापितं तेन मोहेन मां न जानंति मूलगम् ॥३४॥ एतत्ते सर्वमाख्यातं मदीयं चेष्टितं महत् । मा संशयं मुने त्वं तु कुरु मां भज भावतः ॥३५॥ कपिल उवाच । एवमुक्त्वा गणेशानो मामंतर्धानमाकरोत् । अहं खेदसमायुक्तो हृदये तमलोकयम् ॥३६॥ मयाऽसौ स्थापितश्चिंतामणिर्विप्र परेश्वरः । पूजयामि भजे नित्यं भक्तिभावसमन्वितः ॥३७॥ एतत्ते कथितं सर्वं रहस्यं तस्य धीमतः । लोकस्य तेन यत् प्रोक्तं भज तं भक्तिसंयुतः ॥३८॥ त्वं साक्षाद्गाणपत्यश्च देहधारी न संशयः । तवदर्शनमात्रेण सर्वे पूता भवंति च ॥३९॥ गार्ग्य उवाच । श्रुत्वैवं मुद्गलो योगी महत् स्वानंदलोकगम् । माहात्म्यं विस्मितो भूत्वा प्रणनाम महामुनिम् ॥४०॥ चिंतामणिं समभ्यर्च्य प्रणम्य कपिलं पुनः । मुद्गलः स्वाश्रमं राजन् प्रययौ गणपे रतः ॥४१॥ एवं ते सर्वमाख्यातं भज तं भावसंयुतः । अनेन जडदेहेन स्वानंदं लभसे नृप ॥४२॥ मुद्गल उवाच । एवमुक्त्वा महीपालमैलं गार्ग्यो महामुनिः । अनुज्ञातश्च भूपेन ययौ स्वस्याश्रमं विधे ॥४३॥ ऐलोऽपि गणराजं तं लक्षसंज्ञं निरंतरम् । सेव्यस्वानंदगो भूत्वा भजते तं प्रजापते ॥४४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते चिंतामण्यंतर्धानवर्णनं नाम द्विचत्वारिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । धन्योऽहं कृतकृत्योऽहं श्रुत्वा स्वानंदजां कथाम् । विस्मितो योगिराजेंद्र न समं तस्य विद्यते ॥१॥ अधुना ब्रूहि मे सर्वं यश ऐलस्य भक्तिजम् । गार्ग्येण नृपशार्दूल उपदिष्टः किमाचरत् ॥२॥ गणेशलोकगः सोऽपि बभूव वद तत्कथम् । अत्र तत्र गणेशानं भजते कथमप्यहो ॥३॥ मुद्गल उवाच । गार्ग्येण नृपवर्यश्च गाणपत्येन शिक्षितः । गाणपत्येन मार्गेणाभजत्तं गणनायकम् ॥४॥ स्कंदेन स्थापितस्तत्र लक्षो नाम गजाननः । तं नित्यं सेवयामासानन्यभावेन विघ्नपम् ॥५॥ न गणेशात् परं किंचिज्जानाति नृपसत्तमः । एकनिष्ठः स्वभावेनाभजत्तं लक्षविघ्नपम् ॥६॥ दक्ष उवाच । एकनिष्ठात्मिकां भक्तिं वद मेऽन्यां च मुद्गल । यया विघ्नेश्वरः साक्षात् संतुष्टो जायते नृणाम् ॥७॥ मुद्गल उवाच । पंचायतनपूजां वै तथाग्नेः सेवनं परम् । द्विजानां नित्यमेतत्ते कथितं सर्वसंमतम् ॥८॥ विघ्नरूपं महाघोरं परत्रेह च बंधकम् । ब्रह्ममार्गस्य संरोधकारकं विद्धि सर्वदा ॥९॥ तं जयेद्विघ्नराजस्य पूजनेन नरोत्तमः । विद्यार्थं शंकरं सोऽपि पूजयेन्नित्यमादरात् ॥१०॥ यशोर्थं केशवं चैवारोग्यार्थं रविमंजसा । सौभाग्यार्थं नरस्तद्वत् पूजयेज्जगदंबिकाम् ॥११॥ अग्निं होमादिमार्गेण पूजयेत् कर्मसिद्धये । देवादीनां विभागार्थं सर्वेषां तोषकारकम् ॥१२॥ एवं मत्वा तु यो मर्त्यः करोति सेवनं सदा । स्वधर्मस्य प्रजानाथ ब्रह्मार्पणतया किल ॥१३॥ अथवा कामनायुक्तः स चेत्तदपि तादृशम् । कुर्यात् कर्मांगदेवेभ्यः समर्प्य सकलां क्रियाम् ॥१४॥ सर्वे समानरूपाश्च तस्य प्रोक्ताः प्रजापते । स्वधर्माचरणं श्रेष्ठं जानीते सर्वसौख्यदम् ॥१५॥ तत्र विघ्नेश्वरं साक्षान् मध्ये संस्थाप्य सर्वदा । ईशान्यां विष्णुमेव त्वाग्नेय्यां शंभुं प्रपूजयेत् ॥१६॥ नैर्ऋत्यां जगदंबां च वायव्यां रविमादरात् । पंचायतनभावेन पूजयेत् पंच देवताः ॥१७॥ सर्वेषां पूज्यभावाद्वै सर्वाग्रे पूज्य भावतः । ज्येष्ठराजस्वरूपाच्च मध्ये तिष्ठति विघ्नपः ॥१८॥ अथवा पंचदेवेषु मंत्रं गृह्य स्वभावजम् । एकस्य तस्य मध्ये स स्थापनं कुरुते स्वयम् ॥१९॥ सर्वं कलांशरूपस्थं पंचायतनकस्य वै । पूजितेषु प्रजानाथ पंचसु पूजितं जगत् ॥२०॥ देवेन कार्यसिद्ध्यर्थं नाना देवाः कृताः पुरा । ते सर्वे तत्स्वरूपाश्च पूजनीया नरेण वै ॥२१॥ इयं सर्वात्मिका भक्तिः कथिता च प्रजापते । स्वेष्टभावेन सर्वत्र परात्तत् ध्यानकारणात् ॥२२॥ अधुना शृणु दक्ष त्वमेकनिष्ठां महाद्भुताम् । स्वल्पकालेन भक्तस्य सिद्धिदां परमप्रियाम् ॥२३॥ स्वस्येष्टदेवतायां तु विश्वं सर्वं प्रतिष्ठितम् । तस्य पूजनमात्रेण सर्वं संपूजितं भवेत् ॥२४॥ अनंतरूपभावेन सर्वत्र कलया स्वयम् । तिष्ठति पूजनं तेषां न भवेद्देहधारिणाम् ॥२५॥ चराचरमयो

देवः पूजनीयं चराचरम् । केनाऽपि तत्र विप्रेंद्र भवेचासंख्यभावतः ॥२६॥ चराचरं पूजितं चेत्तदपि तस्य रोमगम् । ब्रह्मांडकूटमेवेदं वदंति मुनयोऽपरे ॥२७॥ यस्य रोमांचरंध्रेषु ब्रह्मांडानां हि कोटयः । अतः संपूर्णदेहस्य पूजनं न भवेत् कदा ॥२८॥ भक्तवात्सल्यभावार्थं देहधारी बभूव ह । देवस्तस्य भवेत् सर्वं पूजनेन सुपूजितम् ॥२९॥ अनेन निश्चयेनैव पूजयेत् स्वेष्टदैवतम् । अन्येषां क्षोभतोषौ स सदा नेच्छति चेतसा ॥३०॥ नान्यान्निंदेन्न वै दक्ष स्तुयादेकत्वमाश्रितः । स्वेष्टदेवपरो भूत्वा भक्तिं कुर्याद्विशेषतः ॥३१॥ नरो विघ्नेश्वरेणैव सदा युक्तं प्रजापते । स्वेष्टदेवं समापूज्य सिद्धिं स लभते पराम् ॥३२॥ एकनिष्ठा महाभक्तिर्न भवेत्तत्र खंडिता । तत्र मार्गं प्रवक्ष्यामि सर्वसंशयनाशनम् ॥३३॥ यथा स्वशाखया संयुक्तं संध्यादिकमाचरेत् । तथाऽग्रपूज्यभावेन पूजयेद्गणनायकम् ॥३४॥ सर्वेषामादिपूज्योऽयं सर्वादौ वेदवादतः । अन्यथा वेदवैरुध्यात् सकला नश्यति क्रिया ॥३५॥ शिवविष्णुमुखादीनामग्रपूजा न विद्यते । सर्वादौ तेन ते त्याज्या न त्याज्योऽयं गजाननः ॥३६॥ अन्यच्च श्रृणु मे वाक्यं सर्वेभ्यः फलदायकः । गणेशो नात्र संदेहः सिद्धिबुद्धिसमन्वितः ॥३७॥ धर्मार्थकाममोक्षाश्च ब्रह्मभूतत्वमंजसा । सिद्ध्यधीनं प्रजानाथ पंचकं वेदवादतः ॥३८॥ कर्ता बुद्ध्या समायुक्तः स्वेष्टदेवस्तया युतः । बुद्ध्यधीनं जगत् सर्वं ज्ञानं देहादिकं परम् ॥३९॥ तयोः स्वामी गणेशानो ब्रह्मणस्पतिवाचकः । सर्वादौ तमसंपूज्य नारकी स भवेन्नरः ॥४०॥ यदा गणपतिर्दक्ष सर्वादौ पूजितो न चेत् । पतिव्रते सिद्धिबुद्धी तत्र नैवागमिष्यतः ॥४१॥ सर्वसिद्धिविहीनश्च भवेत् दुर्बुद्धिसंयुतः । देहांते नरकेष्वेव स पचेन्नात्र संशयः ॥४२॥ शिवविष्णुमुखानां स ज्येष्ठश्चैव प्रकीर्तितः । तस्योल्लंघनमात्रेण भ्रंशयिष्यंति देवताः ॥४३॥ यथा गणपतिद्वेषाद्वलिं वैष्णवमुत्तमम् । नरकेषु निबद्ध्यैवोद्यतो विष्णुर्बभूव ह ॥४४॥ संध्यादि कर्मवच्चायं सर्वादौ संमतो बुधैः । तस्य पूजनमात्रेणैकनिष्ठा नैव खंडिता ॥४५॥ गणेश एकनिष्ठश्चेत्तदा गणपतिः सदा । एकः पूज्यो न संदेहोऽन्येषामावश्यखंडनात् ॥४६॥ एकनिष्ठसमा भक्तिर्विद्यते नैव निश्चितम् । ब्रह्म नानाविधं तेन विश्वं भक्त्या प्रपूजितम् ॥४७॥ जगद्ब्रह्मयुतो देवः स्वेष्टः संपूर्णभावतः । पूजितस्तेन भवति संतुष्टे सकलं सदा ॥४८॥ एकनिष्ठो यथा भक्तस्तथा देवोऽपि मानद । एकभक्ताश्रितो भूत्वाऽभवत्तत्रैव संस्थितः ॥४९॥ एतत्ते कथितं दक्ष भजनं त्रिविधं मया । अनेन भक्तिमार्गेण वाञ्छितं लभते नरः ॥ ५० ॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते भक्तिमार्गवर्णनं नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । एवमैलः स राजर्षिरेकनिष्ठापरायणः । गणेशमभजन्नित्यं यथा गृत्समदस्तथा ॥१॥ ध्यात्वा गजाननं देवमेकांते तद्गताऽखिलः । मानसे राज्यभोगे स निःस्पृहः संबभूव ह ॥२॥ पुत्रे राज्यं परित्यज्य पूजयित्वा गजाननम् । ध्यानयुक्तः स्वभावेनातिष्ठत्तत्रैव नित्यदा ॥३॥ दक्ष उवाच । गणेशस्य ध्यानमैलकृतं मे वद सांप्रतम् । तथाऽहं ध्यानसंयुक्तो भजिष्यामि निरंतरम् ॥४॥ मुद्गल उवाच । यथैलो नृपवर्यः स गार्ग्याज्ज्ञात्वा गणेश्वरम् । अभजत् ध्यानयुक्तश्च तत् ध्यानं शृणु मानद ॥५॥ ऐल उवाच । नमामि विघ्नेश्वरपादपंकजं सुचिह्नितं चाखिलदं निजात्मनाम् । ध्वजासिपद्माभयवज्रलाञ्छनैः परश्वधेनैव सुकोमलं परम् ॥६॥ सुरक्तपादांगुलकैः सुकोमलैर्नखप्रभाताम्रतया सुराजितम् । सुगुल्फयुक्तं मृदुमांसलं महन् मोहं हरेत् तत्तिमिरं हृदि स्थितम् ॥७॥ जंघे परे रक्तसुभामये ततो ध्यायामि मांसेन युते सुकोमले । तज्जानुनी मांसलके सुरोमभिराकोमलैर्वक्रशिखैः सुसंवृते ॥८॥ ऊरू सुमांसेन समावृतौ परौ रंभासमानौ सुविराजितौ तथा । रक्तौ हृदा चिंतनमात्रभावतो भक्तिप्रदौ विघ्नहरस्य चिंतये ॥९॥ कटिं सदा मांसलरक्तरंजितां सुवर्तुलां मध्यमभागसंश्रिताम् । गणेश्वरस्यैव तु चिंतयाम्यहं सदा सुखानंदकरस्य नित्यदा ॥१०॥ वस्त्रं सुरक्तं हृदि चिंतयाम्यहमनंतमौल्यं कटिभागसंस्थितम् । नाभिं सुवृत्तां परमश्रिया युतां शेषस्य संवासकरीं तु चिंतये ॥११॥ महोदरं मांसलभावसंयुतं सुरोमयुक्तं प्रभया विराजितम् । विचिंतयेऽहं सकलप्रकाशकं त्रयीप्रमूलं परमव्ययं परम् ॥१२॥ श्रीवक्रतुंडस्य विशालरूपकं वक्षस्तथा रक्तमयं सुमांसलम् । रक्तं स्तनाभ्यां हृदयं तु चिंतये चिंतामणिं तत्र सुखप्रदं परम् ॥१३॥ कंठं त्रिरेखायुतमेव मांसलं रक्तं गणेशस्य च तेजसा युतम् । स्कंधौ वृषस्कंधसमौ सुकोमलौ ध्यायामि चित्ते सततं सुरक्तकौ ॥१४॥ बाहू सदा मांसलकौ प्रभासितौ स्वानंदनाथस्य मनोऽतिसौख्यदौ । हस्तौ तथा रक्तसुतेजसा युतौ वामौ हृदा दक्षिणकौ तु चिंतये ॥१५॥ करांगुलीर्विंशतिकाः सुवर्तुला नखैः सुरक्तैश्च सुतेजसा युताः । गणेश्वरस्यैव हृदि प्रचिंतये स्वभक्तरक्षाकरिकाः सुभूषिताः ॥१६॥ मुखं तु शुंडायुतमेव चिंतये त्रिनेत्रयुक्तं परमप्रकाशकम् । सदैक-दंतस्य च तीक्ष्णदंतकं स्वभक्तकान् प्रेमरसेन सौख्यदम् ॥१७॥ कर्णौ विशालौ हृदि चिंतये परौ भक्ताय निष्कामसुकामदौ तथा । शूर्पाकृती चंचलभावधारिणौ विघ्नेश्वरस्यैव च वेदरूपिणौ ॥१८॥ कपोलकौ षट्पदरूपधारिभिर्मुनीश्वरैर्ब्रह्ममद-द्रवार्थिभिः । सुसंवृतौ नादयुतैर्निरंतरं गणेश्वरस्यैव हृदा विचिंतये ॥१९॥ भालं सुतेजोयुतमेव चिंतये श्रीढुंढिराजस्य

निशाकरस्थलम् । रक्ताष्टगंधैश्च सुचित्रितं प्रभोर्बिंदुप्रयुक्तं त्वथ तंडुलैर्युतम् ॥२०॥ केशैः समाच्छादितमस्तकं तथा सं चिंतये विघ्नविनाशकारिणः । ब्रह्मांडमूले प्रभुमस्तकाश्रिते कुंभस्थले ब्रह्मवरस्य सौख्यदे ॥२१॥ गणेशदेहं परिचिंतयाम्यहं सुभूषणैर्भूषितकं विचित्रकैः । अनर्घमूल्यैश्च सुवस्त्रकैस्तथा सुशोभितं ब्रह्मवरस्य सर्वदा ॥२२॥ विचित्रगंधैः परिलेपितं तथा सुचित्रितं भक्तवरैः सुयोगिभिः । गणाधिपं साधु हृदि स्थितं सदा विचिंतयेऽहं निजभक्तिलालसम् ॥२३॥ पाशांकुशाद्यैश्च सुसंस्तुतं परं ढुंढिं प्रमोदादिभिरेव नित्यदा । गणेश्वरं देववरैस्तथोंदुरुराजेन पूज्यं च सुचिंतये हृदि ॥२४॥ वेदैः पुराणैः स्मृतिभिश्च शास्त्रकैः स्तोत्रैः स्तुतं देहधरैर्विचिंतये । ब्रह्मप्रियाद्यैश्च गणैरसंख्यकैर्भक्त्या तथा मुद्गलमुख्यकैः परम् ॥२५॥ सर्वांगसंशोभनरूपयुक्तया सिद्ध्या गणेशं परिचिंतये हृदि । संसेवितं वामगया सुशक्तिभिः सिद्ध्यादिभिः संवृतया स्वमायया ॥२६॥ बुद्ध्या कलाभिश्च सुसेवितं तथा विद्याभिराराद्गणनायकं हृदि । सर्वांगसंशोभनया स्वमायया संचिंतये दक्षिणभागभूषया ॥२७॥ लक्षेण लाभेन च विघ्ननायकं संसेवितं शोभनशोभनेन तु । संचिंतये पुत्रवरेण सर्वदा ब्रह्मेश्वरं भक्तजनैः स्वधामगैः ॥२८॥ अनंतमंत्रैः कथितं स्वरूपकं विचिंतये वक्तुमशक्यभावतः । हृदि स्थितं ध्यानसुलोलुपं परं गणेश्वरं ब्रह्ममयागधारिणम् ॥२९॥ मुद्गल उवाच । एवमैलः स राजर्षिर्गणेशभजने रतः । ध्यानं कृत्वा सदाऽतिष्ठद्गणेशस्य निवृत्तितः ॥३०॥ प्रातः काले समुत्थाय सस्त्रीकः स महीपतिः । धर्मयुक्तं चकाराऽपि नित्यं कर्म निरंतरम् ॥३१॥ ततो गणेश्वरं भक्त्याऽपूजयद्भक्तिसंयुतः । यथा गार्ग्येण भो दक्ष शिक्षितः स तथाऽकरोत् ॥३२॥ शमीमंदारदूर्वाश्चापूजयद्भक्तिसंयुतः । प्रार्थ्य पत्रांकुराद्यं स पुष्पं चैवाऽऽचिनोन्नृपः ॥३३॥ दक्ष उवाच । शमीमंदारदूर्वाणां पूजनं वद मुद्गल । सिद्धेर्बुद्धेश्च विप्रेंद्र सुतयोर्लक्षलाभयोः ॥३४॥ शमीमंदारदूर्वाणां प्रार्थना कीदृशी भवेत् । तां कृत्वा पुष्पपत्रादींश्चिनोम्यहं त्वदाज्ञया ॥३५॥ केन मंत्रेण योगींद्र शमीमंदारकांस्तदा । नरोत्तमो गणेशाय परेशाय समर्पयेत् ॥३६॥ मुद्गल उवाच । शृणु दक्ष महाप्राज्ञ गाणपत्यपरायण । संतुष्टोऽहं विशेषेण प्रश्नेन च वदामि ते ॥३७॥ गणेशस्यैव मंत्रेण पूजनीया इमे मताः । वस्तुभिर्गाणपत्यैश्च अभवंस्तोषसंयुताः ॥३८॥ स्त्रीपुंभावात्मकं दक्ष नास्ति तत्र विचारतः । गकारः सिद्धिरूपश्च णकारो बुद्धिरुच्यते ॥३९॥ तयोः स्वामी गणेशः स त्रेधारूपधरो बभौ । गणास्तस्य तथा पूज्या गाणपत्यैश्च मंत्रकैः ॥४०॥ गकाराद्बिंबभावाख्यो लक्षः पुत्रः प्रकथ्यते । तथा गकाररूपाद्वै लाभस्तौ तन्मयौ

मतौ ॥४१॥ शमीमंदारकौ दक्ष वरदानाद्विशेषतः । गणेशाकाररूपौ तौ भावयेन्नात्र संशयः ॥४२॥ दूर्वां देवीं गणेशस्य मंत्रेणापूजयेन्नरः । अथवा वैदिकैर्मंत्रैः कांडादिभिः प्रपूजयेत् ॥४३॥ नाममंत्रेण शूद्रस्तान् पूजयेत् सर्वभावतः । एतदेव रहस्यं ते कथितं सर्वमंजसा ॥४४॥ प्रार्थनां ते प्रवक्ष्यामि श्रृणु दक्ष महामते । स्नानयुक्तो वनं गत्वाऽथवा पुरे स्वमंदिरे ॥४५॥ यत्र दूर्वा च मंदारः शमी तिष्ठति तत्र सः । गत्वा प्रणम्य तानादौ प्रार्थयेद्भक्तिसंयुतः ॥४६॥ दूर्वेऽन्नब्रह्मरूपे चामृतरूपे शतांकुरे । गणेशप्रीणनार्थाय चिनोमि त्वां क्षमस्व भोः ॥४७॥ शमी सर्वप्रदे देवि गणेशरूपधारिणि । चिनोमि त्वां गणेशस्य प्रीणनाय नमाम्यहम् ॥४८॥ मंदारवाञ्छितार्थस्य दातर्विघ्नेशरूपक । क्षमस्व प्रीणनार्थाय गणेशस्य चिनोम्यऽहम् ॥४९॥ एवं प्रार्थ्य प्रजानाथ शमीमंदारकौ पुरा । दूर्वापत्राणि पुष्पाणि विभुं ह्यानाय्य पूजयेत् ॥५०॥ सहस्रनाममंत्रैश्च अष्टोत्तरशतैर्नरः । एकविंशतिकैश्चैव नामभिस्ताः समर्पयेत् ॥५१॥ अथवा मूलमंत्रेण नाममंत्रेण वा तथा । गाणेशैर्विविधैर्मंत्रैर्दूर्वादीनि समर्पयेत् ॥५२॥ एतत्ते कथितं सर्वं रहस्यं पावनात्मकम् । गाणपत्यप्रदं पूर्णं किं भूयः श्रोतुमिच्छसि ॥५३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते ध्यानदूर्वादिपूजाविधिवर्णनं नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । गणेशकीलकं ब्रह्मन् वद सर्वार्थदायकम् । मंत्रादीनां विशेषेण सिद्धिदं पूर्णभावतः ॥१॥ मुद्गल उवाच । कीलकेन विहीनाश्च मंत्रा नैव सुखप्रदाः । आदौ कीलकमेवं वै पठित्वा जपमाचरेत् ॥२॥ तदा वीर्ययुता मंत्रा नानासिद्धिप्रदायकाः । भवंति नात्र संदेहः कथयामि यथाश्रुतम् ॥३॥ समादिष्टं चांगिरसा मह्यं गुह्यतमं परम् । सिद्धिदं वै गणेशस्य कीलकं श्रृणु मानद ॥४॥ अस्य श्रीगणेशकीलकस्य । शिव ऋषिः । अनुष्टुप् छंदः । श्रीगणपतिर्देवता । ॐ गं योगाय स्वाहा । ॐ गं बीजम् । विद्याऽविद्याशक्तिगणपतिप्रीत्यर्थे जपे विनियोगः । छंदऋष्यादिन्यासांश्च कुर्यादादौ तथा परान् । एकाक्षरस्यैव दक्ष षडंगानाचरेत् सुधीः ॥५॥ ततो ध्यायेद् गणेशानं ज्योतीरूपधरं परम् । मनोवाणीविहीनं च चतुर्भुजविराजितम् ॥६॥ शुंडादंडमुखं पूर्णं द्रष्टुं नैव प्रशक्यते । विद्याऽविद्यासमायुक्तं विभूतिभिरुपासितम् ॥७॥

एवं ध्यात्वा गणेशानं मानसैः पूजयेत् पृथक् । पंचोपचारकैर्दक्ष ततो जपं समाचरेत् ॥८॥ एकविंशतिवारं तु जपं कुर्यात् प्रजापते । ततः स्तोत्रं समुच्चार्य पश्चात् सर्वं समाचरेत् ॥९॥ रूपं बलं श्रियं देहि यशो वीर्यं गजानन । मेधां प्रज्ञां तथा कीर्तिं विघ्नराज नमोऽस्तु ते ॥१०॥ यदा देवादयः सर्वे कुंठिता दैत्यपैः कृताः । तदा त्वं तान् निहत्य स्म कुरुषे वीर्यसंयुतान् ॥११॥ तथा मंत्रा गणेशान कुंठिताश्च दुरात्मभिः । शापैश्च तान् सवीर्यांस्ते कुरुष्व त्वं नमो नमः ॥१२॥ शक्तयः कुंठिताः सर्वाः स्मरणेन त्वया प्रभो । ज्ञानयुक्ताः सवीर्याश्च कृता विघ्नेश ते नमः ॥१३॥ चराचरं जगत् सर्वं सत्ताहीनं यदा भवेत् । त्वया सत्तायुतं ढुंढे स्मरणेन कृतं च ते ॥१४॥ तत्त्वानि वीर्यहीनानि यदा जातानि विघ्नप । स्मृत्या ते वीर्ययुक्तानि पुनर्जातानि ते नमः ॥१५॥ ब्रह्माणि योगहीनानि जातानि स्मरणेन ते । यदा पुनर्गणेशान योगयुक्तानि ते नमः ॥१६॥ इत्यादि विविधं सर्वं स्मरणेन च ते प्रभो । सत्तायुक्तं बभूवैव विघ्नेशाय नमो नमः ॥१७॥ तथा मंत्रा गणेशान वीर्यहीना बभूविरे । स्मरणेन पुनर्ढुंढे वीर्ययुक्तान् कुरुष्व ते ॥१८॥ सर्वं सत्तासमायुक्तं मंत्रपूजादिकं प्रभो । मम नाम्ना भवतु ते वक्रतुंडाय ते नमः ॥१९॥ उत्कीलय महामंत्रान् जपेन स्तोत्रपाठतः । सर्वसिद्धिप्रदा मंत्रा भवंतु त्वत्प्रसादतः ॥२०॥ गणेशाय नमस्तुभ्यं हेरंबायैकदंतिने । स्वानंदवासिने तुभ्यं ब्रह्मणस्पतये नमः ॥२१॥ गणेशकीलकमिदं कथितं ते प्रजापते । शिवप्रोक्तं तु मंत्राणामुत्कीलनकरं परम् ॥२२॥ यः पठिष्यति भावेन जप्त्वा ते मंत्रमुत्तमम् । स सर्वसिद्धिमाप्नोति नानामंत्र-समुद्भवाम् ॥२३॥ एनं त्यक्त्वा गणेशस्य मंत्रं जपति नित्यदा । स सर्वफलहीनश्च जायते नाऽत्र संशयः ॥२४॥ सर्वसिद्धिप्रदं प्रोक्तं कीलकं परमाद्भुतम् । पुराऽनेन स्वयं शंभुर्मंत्रजां सिद्धिमालभत् ॥२५॥ विष्णुब्रह्मादयो देवा मुनयो योगिनः परे । अनेन मंत्रसिद्धिं ते लेभिरे च प्रजापते ॥२६॥ ऐलः कीलकमाद्यं वै कृत्वा मंत्रपरायणः । गतः स्वानंदपूर्यां स भक्तराजो बभूव ह ॥२७॥ सस्त्रीको जडदेहेन ब्रह्मांडमवलोक्य तु । गणेशदर्शनेनैव ज्योतीरूपो बभूव ह ॥२८॥ दक्ष उवाच । ऐलो जडशरीरस्थः कथं देवादिकैर्युतम् । ब्रह्मांडं स ददर्शैव तन् मे वद कुतूहलम् ॥२९॥ पुण्यराशिः स्वयं साक्षान्नरकादीन् महामते । अपश्यच्च कथं सोऽपि पापिदर्शनयोग्यकान् ॥३०॥ मुद्गलवाच । विमानस्थः स्वयं राजा कृपया तान् ददर्श ह । गाणेशानां जडस्थश्च शिवविष्णुमुखान् प्रभो ॥३१॥ स्वानंदगे विमाने ये संस्थितास्ते शुभाशुभे । योगरूपतया सर्वे दक्ष पश्यंति चांजसा ॥३२॥ एतत्ते कथितं सर्वमैलस्य चरितं शुभम् । यः श्रृणोति स वै मर्त्यो भुक्तिं

मुक्तिं लभेत् ध्रुवम् ॥३३॥ खंडं लंबोदरस्यैतद्यः शृणोति नरोत्तमः । पठति ब्रह्मभूतः श्रावयते जायते स्वयम् ॥३४॥ नानेन सदृशं किंचिद्भुक्तिमुक्तिप्रदं मतम् । योगरूपो महाभाग यत्र लंबोदरः स्तुतः ॥३५॥ नानाश्रुतिस्मृतीनां यच्छ्रवणेन फलं लभेत् । तदस्यैकस्य खंडस्य श्रवणेन भवेदिह ॥३६॥ नानादानानि ये दद्युस्तीर्थेषु स्नानकारकाः । तेभ्यः शताधिकं पुण्यं लभेदस्य तु संश्रयात् ॥३७॥ व्रतानि यज्ञकान् सर्वान् कुरुते मानवः प्रभो । अस्य श्रवणमात्रेण लभेत् तस्माच्छताधिकम् ॥३८॥ नानातपांसि सर्वाणि यः करोति नरोऽसकृत् । अस्य श्रवणमात्रेण लभेत् पुण्यमपारकम् ॥३९॥ पुत्रपौत्रादिसंयुक्तो धनधान्यादिभाग्यवान् । श्रवणेन नरः सद्यो भवत्यत्र न संशयः ॥४०॥ यद्यदिच्छति तत्तत्तु सफलं जायते क्षणात् । श्रवणेन प्रजानाथ खंडस्यास्य न संशयः ॥४१॥ बहुनात्र किमुक्तेन साक्षाद्योगप्रदः परः । सर्वसिद्धिप्रदः खंडः कथितस्ते प्रजापते ॥४२॥ इदं लंबोदरस्यैव चरितं सर्वसिद्धिदम् । कथितं ते समासेन किं भूयः श्रोतुमिच्छसि ॥४३॥ सूत उवाच । यथा दक्षाय विप्रेश मुद्गलेन प्रकाशितम् । मया तव तथाग्रेऽपि कथितं भार्गवाग्रणीः ॥४४॥ चरितं शौनकाद्याश्च श्रुतं लंबोदरस्य यत् । धन्योऽहं भवतां योगाद्गणेशचरिते रतः ॥४५॥ विस्तरेण शिवाद्याश्च वेदाद्याः शेषमुख्यकाः । नैव वर्णयितुं शक्ता बभूवुस्तत्र कोप्यहम् ॥४६॥ व्यासेन कथितं सर्वं चरितं यादृशं पुरा । तादृशं कथितं विप्र श्रोतुमिच्छसि किं पुनः ॥४७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे पंचमे खण्डे लंबोदरचरिते श्रवणमाहात्म्यवर्णनं नाम पंचचत्वारिंशत्तमोऽध्यायः ॥

॥ श्रीगजाननार्पणमस्तु ॥





खण्ड ६ चित्र ९ — (वामतः) श्रीविघ्नराजावतारे मयूरवाहनः श्रीविकटः। (दक्षिणतः) भगवान् श्रीभ्रूशुण्डिः श्रीमयूरेशक्षेत्रमाहात्म्यं कथयति।

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । सूत त्वया महाप्राज्ञ कथितं परमाद्भुतम् । लंबोदरस्य माहात्म्यं तेनाऽहं तृप्तिमागतः ॥१॥ अहो गणेशमाहात्म्यं सर्वसंतोषकारकम् । श्रवणेनैव साक्षात्तु ब्रह्मसायुज्यदायकम् ॥२॥ अधुना वद माहात्म्यं विकटस्य विशेषवित् । सर्वसिद्धिप्रदं पूर्णं सूत योगामृतं परम् ॥३॥ अन्यन् मुद्गलविप्रेण दक्षाय कथितं पुरा । पृष्टं दक्षेण किं तात वद तन्मे प्रविस्तरात् ॥४॥ तव संगेन संतुष्टा वयं सर्वे विशेषतः । भवामः कृतकृत्याश्च कथाश्रवणमात्रतः ॥५॥ सूत उवाच । सम्यक् पृष्टं त्वया विप्र भार्गवाणां शिरोमणे । सारग्राही न संदेहः शौनक त्वं विशेषतः ॥६॥ भवतां प्रीतिकामार्थं वदिष्यामि विशेषतः । चरितं गणनाथस्य ब्रह्मभूतपदप्रदम् ॥७॥ न गणेशात् परं किंचिद् विद्यते वेदवादतः । अल्पपुण्ययुतानां तु न प्रीतिस्तत्र वर्धते ॥८॥ पुरा पृष्टो महायोगी योगं दक्षेण वीप्सता । तदेवाऽहं वदिष्यामि शृणुत ब्राह्मणाः परम् ॥९॥ दक्ष उवाच । धन्यं मे जन्मकर्मादि येन ते दर्शनं प्रभो । प्राप्तं पुण्यवशेनैव परं मुद्गलयोगदम् ॥१०॥ अधुना वद माहात्म्यं विकटस्य विचक्षण । श्रुत्वा लंबोदरस्यैव तृष्णा मे वर्धते मुने ॥११॥ कीदृशोऽयं गणाध्यक्षः कीदृशं ब्रह्म तस्य वै । केन योगेन लभ्यश्च कति तस्यावतारकाः ॥१२॥ किं विहारः किमर्थं स भूमौ देवः समागतः । कान् दैत्यान् हतवान् विप्र कथं देवैश्च संस्तुतः ॥१३॥ इत्यादि विविधं तस्य चेष्टितं वद मानद । भवादृशा महाभागाः परोपकृतिकारकाः ॥१४॥ संसाराब्धौ निमग्नानां नौकारूपा मता बुधैः । भवंतो नात्र संदेहस्तारयस्वाधुना च माम् ॥१५॥ सूत उवाच । दक्षस्य विनयेनैवं भावेन तोषसंयुतः । मुद्गलस्तमथोवाच परं तच्छृणु सौख्यदम् ॥१६॥ मुद्गल उवाच । धन्योऽसि दक्ष येन त्वं गणनाथकथां मुहुः । प्रश्नेन भक्तिसंयुक्तो वर्धयसि सुसारवित् ॥१७॥ साक्षाद्ब्रह्मसुतस्तत्र चित्रं किं भवति त्वयि । भावेन ते प्रसन्नोऽहं वदिष्यामि हितावहम् ॥१८॥ विकटस्य च माहात्म्यं ब्रह्मभूतकरं परम् । सर्वसिद्धिप्रदं तुभ्यं कथयामि समासतः ॥१९॥ अत्रेतिहासं मुख्यं वै विधे शृणु पुरा भवम् । कथयामि विचित्रं ते विकटाख्यानसंयुतम् ॥२०॥ आदिमाया महाशक्तिः शक्तिलोके निरामये । संस्थिता सेव्यमाना सा देवीभिः सेश्वरात्मभिः ॥२१॥ एकदा पूजने सक्तां नियमस्थां विशेषतः । गणेशानस्य तां दृष्ट्वा पप्रच्छुः शक्तयः पराः ॥२२॥ महाकाली प्रजानाथ महालक्ष्मीस्तथैव च । महासरस्वती देव्योऽन्याश्च नानाविधा मताः ॥२३॥ महाकालीमहालक्ष्मीमहासरस्वतय ऊचुः । त्वं साक्षात् सर्वरूपाऽसि जगद्ब्रह्मप्रकाशिनी । त्वदीयध्यानयोगेन ब्रह्मभूता भवंति च ॥२४॥ धर्मार्थकाममोक्षाणां दात्री त्वं कथिता बुधैः । वेदेषु सर्वशक्तीनां मूलभूता त्वमंजसा ॥२५॥

ब्रह्मविष्णुशिवाद्याश्च त्वदनुष्ठानतः सति । ईश्वराः सर्वकार्येषु समर्थाः प्रबभूविरे ॥२६॥ कर्मणां फलदात्री त्वं तपसां ज्ञान-धारिणाम् । त्वत्तः परतरं नास्ति वेदशास्त्रप्रमाणतः ॥२७॥ त्वं नित्यं नियमे संस्था गणेशं मूर्तिगं परम् । ध्यानयुक्ता पूजयसि तं ध्यायसि किमर्थतः ॥२८॥ सदा नामावलिं तस्य वदसि जगदंबिके । भ्रमार्थं सर्वजंतूनां गुह्यगोपनकारणात् ॥२९॥ सर्व-सत्ताधरी देवी त्वमेवात्र न संशयः । अस्मान् मोहयुतान् शक्ते किमर्थं कुरुषे वद ॥३०॥ लज्जां त्यक्त्वा त्वदीयाश्चाधुना पृच्छामहे वयम् । नित्यं दृष्ट्वा प्रसंक्षुब्धा भवामः परमाद्भुते ॥३१॥ दास्यस्त्वदीयपादस्य नान्यत्त्वत्तः परं कदा । वेदमार्गेण सर्वेशि जानीमो वद सांप्रतम् ॥३२॥ मुद्गल उवाच । तिसृभिः शक्तिमुख्याभिः पृष्टा सा शक्तिरुत्तमा । स्नेहेन ता जगादाथ रहस्यं शृणु मुख्यकम् ॥३३॥ आदिशक्तिरुवाच । शृणुध्वं शक्तयः सर्वा रहस्यं मे हृदि स्थितम् । सर्वसिद्धिप्रदं पूर्णं त्रय्याद्याः परमाद्भुतम् ॥३४॥ यथावदथ कल्याण्यस्तथाऽहं सर्वगा यतः । गणेशस्यांशरूपत्वाद्गुणभावसमाश्रिता ॥३५॥ पुरा वयं समुत्पन्ना-श्चत्वारो देवमुख्यकाः । शंभुर्विष्णुरविर्देव्यो गणेशानादहं किल ॥३६॥ नामरूपात्मकं सर्वं मत्तो ब्रह्म भवात्मकम् । तत्राऽहं ब्रह्मभूतत्वात् संस्थिता नात्र संशयः ॥३७॥ नामरूपात्मकस्यापि नाशोत्पत्ती प्रकीर्तिते । तत्र स्थितमतो ब्रह्माऽसत्स्वानंदमयं मतम् ॥३८॥ उत्पत्तिनाशभूतेषु तदाधारं सदात्मगम् । सूर्यस्तदेव देव्यस्तु ब्रह्म सत्यात्मकं परम् ॥३९॥ असत्सन्मयरूपश्च विष्णुः साम्ये व्यवस्थितः । नेतिरूपः शिवस्तत्र चतुर्थः कथ्यते परः ॥४०॥ चतुर्णां चैव संयोगे स्वानंदः पंचमः स्मृतः । स्वसंवेद्येन योगेन लभ्यते योगसेवया ॥४१॥ अयोगः पंचभिर्हीनो व्यतिरेकप्रभावतः । संयोगाऽयोगयोर्योगे गाणेशो योग उच्यते ॥४२॥ पंचधा चित्तवृत्तीनां चालकस्तेन कथ्यते । चिंतामणिः सदा देव्यः पश्यध्वं योगमार्गतः ॥४३॥ मायारूपा स्वयं सिद्धिर्भ्रांतिदा विविधा सदा । भ्रांतिधारकरूपा सा बुद्धिः शास्त्रेषु कथ्यते ॥४४॥ तयोः स्वामी गणेशानः स्वानंदनगरे स्थितः । योगशांतिमयः साक्षाल्लक्षलाभपिता हृदि ॥४५॥ संयोगश्च गकाराख्यो ह्ययोगश्च णकारकः । तयोः स्वामी गणाधीशो वयं तस्य कलात्मिकाः ॥४६॥ अतस्तं भक्तिसंयुक्ता भजाम्यत्र न संशयः । न मोहार्थं महादेव्यो गुह्यं गोपयितुं च न ॥४७॥ एतत् सर्वं समाख्यातं मदीयनियमात्मकम् । चित्ते चिंतामणिं देव्यो ध्यायामि भक्तिसंयुता ॥४८॥ काममोहितचित्तानां न प्रत्यक्षो गजाननः । भवते भावहीनानां भजतामपि सर्वदा ॥४९॥ अज्ञानावरणैर्युक्ता मां वदंति परात्पराम् । गणास्तस्य वयं सर्वे शंभुविष्णुमुखाः किल ॥५०॥ गजो निर्गुणरूपाख्यस्तदेवाननमुच्यते । कंठाधः सगुणं

ब्रह्म तयोर्योगे स देहभृत् ॥५१॥ इत्युक्त्वा विररामाथ शक्तिः स्वानंदवासिनी। असत्पात्री प्रजानाथ विस्मितास्ता बभूविरे ॥५२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खण्डे विकटचरिते शक्तिध्यानवर्णनं नाम प्रथमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । महाकालीमुखा देव्यः श्रुत्वा योगं पुरातनम् । विस्मितास्ताः पुनः सर्वा वच ऊचुः प्रहर्षिताः ॥१॥ शक्तय ऊचुः । महामाये त्वया प्रोक्तं सर्वसंशयनाशनम् । श्रुत्वा वयं गणेशस्य योगं ज्ञानयुताः कृताः ॥२॥ काममोहितचित्तानां न प्रत्यक्षो भवेत् कदा । गणेशानस्त्वया प्रोक्तो जन्मकोटिशतैरपि ॥३॥ गणेशप्राप्तिहीना ये जंतवश्चेश्वरास्तथा । जन्म तेषां विशेषेण निष्फलं संमतं बुधैः ॥४॥ अहो ज्ञानयुतं देहं प्राप्य सर्वार्थदायकम् । सर्वदं गणनाथं ये न भजंतेऽतिगूढकाः ॥५॥ रासभादिसमा देवि ज्ञातव्या ज्ञानवर्जिताः । कामयुक्तस्वभावेन त्यजंति गणनायकम् ॥६॥ कामस्य चरितं शक्ते वद विस्तरतः परम् । कामनाशकरं चापि येन ढुंढिः प्रलभ्यते ॥७॥ त्वमस्माकं परा काष्ठा गुरुरूपेण संस्थिता । देहि विघ्नेश्वरं मातर्भजिष्यामोऽखिलाः प्रभुम् ॥८॥ आदिशक्तिरुवाच । गणनाथावतारस्य तस्योपासनमात्रतः । विकटस्य स्वयं कामः खलो नश्यति तत्क्षणात् ॥९॥ अत्र वोऽहं पुरा जातमितिहासं वदामि हि । येन कामव्यथाहीना भविष्यंति जनाः सदा ॥१०॥ कैलासे गिरिवर्ये तु शंकरः स्वेच्छयैकदा । पार्वतीमोहनार्थाय भीमरूपधरोऽभवत् ॥११॥ अदृष्ट्वा शंकरं साऽपि शोकयुक्ता बभूव ह । एतस्मिन्नंतरे तत्रेंद्रस्तं द्रष्टुं समाययौ ॥१२॥ मघवोग्रस्वरूपास्यं दृष्ट्वा कैलासनायकम् । राक्षसं तं विदित्वा स क्रोधयुक्तो बभूव ह ॥१३॥ वज्रं तत्याज तं हंतुं महेंद्रः सहसा परम् । शिवदेहं समासाद्य निष्फलं तद्बभूव ह ॥१४॥ ततः क्रोधसमायुक्तः शंकरोऽग्निं समासृजत् । तृतीयं नेत्रमुद्घाट्य दग्धुं देवपतिं स्वयम् ॥१५॥ सहसाऽग्निं स दृष्ट्वा तु तं सस्मार बृहस्पतिम् । स ज्ञात्वा तत्क्षणं गत्वा प्रणनाम महेश्वरम् ॥१६॥ प्रसाद्य गिरिजानाथमिंद्रं भयसमाकुलम् । अग्निना त्यक्तमानम्यं तत्पादस्थं चकार ह ॥१७॥ इंद्रस्तं

विविधैः स्तोत्रैः प्रभुं स्तुत्वा क्षमापयत् । अज्ञानजं महेशानोऽपराधं तस्य चाक्षमत् ॥१८॥ ततः शिवं समागत्याग्निस्तदंश-समुद्भवः । प्रणम्य प्रत्युवाचेदं किं करोमि महेश्वर ॥१९॥ त्वदाज्ञया महादेव त्यक्त्वा देवपतिं खलम् । समागतं महेशान कार्यमाज्ञापयोत्तमम् ॥२०॥ निःसृतोऽहं त्वदंशाद्धि न भविष्यामि निष्फलः । सर्वं ब्रह्मांडमथ वा ग्रसिष्यामि त्वदाज्ञया ॥२१॥ अग्नेस्तद्वचनं श्रुत्वा शंकरस्तमुवाच ह । पतस्व त्वं समुद्रे वै मत्पुत्रो राक्षसाकृतिः ॥२२॥ सर्वैरवध्यभावेन भविष्यसि महाबलः । त्रैलोक्याधिपतिर्भूत्वा धर्मलोपं करिष्यसि ॥२३॥ वृंदा धर्मध्वजस्यैव पत्नी तव भविष्यति । पुत्री सती गणेशेन शप्ता चापल्यदर्शनात् ॥२४॥ तां पातिव्रत्यहीनां वै करिष्यति जनार्दनः । तदा मच्चक्रपातेन मरिष्यसि न संशयः ॥२५॥ ततो मद्देहगो भूत्वा मद्रूपस्त्वं भविष्यसि । राक्षसाकृतिरूपाद्धि जातस्तस्मात्तथा भव ॥२६॥ एवमुक्त्वा महादेवस्तं प्रचिक्षेप शक्तयः । जलधौ तत्र घोषश्च बभूव भयदायकः ॥२७॥ ततस्तत्र समुद्भूतो बालकस्तेजसा युतः । तद्बीजाद्ब्रह्मणाऽऽगत्य कृतो नाम्ना जलंधरः ॥२८॥ तस्य मौंज्यादिकं कर्म चकार जलधिः स्वयम् । कालनेम्यादयो दैत्या बभूवुस्तस्य पार्श्वगाः ॥२९॥ शिवस्य वरदानेन जिग्ये ब्रह्मांडमंडलम् । जलंधरस्ततो देवा वनवासं प्रचक्रिरे ॥३०॥ वने तपःस्थितां वृंदां दानवोऽपि ददर्श सः । उपयेमे कदा तां च गांधर्वेणैव शक्तयः ॥३१॥ तया रेमे सदा दैत्यो मोहितो मायया भृशम् । न बुबोध गतं कालं साऽपि तद्गतमानसा ॥३२॥ ततः कर्मविहीनं तु चकार स धरातलम् । उपोषणेन संयुक्ता देवादयो बभूविरे ॥३३॥ कदाचिन्नारदस्तत्र जगामासुरनायकम् । तेन संपूजितो योगी तं जगाद जलंधरम् ॥३४॥ नारद उवाच । धन्योऽसि जलधेः पुत्र सर्वरत्नविलासकृत् । तथापि शृणु दैत्येश स्त्रीरत्नं नास्ति ते गृहे ॥३५॥ पार्वत्या न समं कुत्र वर्तते सा विशेषतः । रत्नभूता न संदेहः शंकरेणानुभाविना ॥३६॥ एवमुक्त्वा महायोगी नारदोऽतर्दधे स्वयम् । सोऽपि श्रुत्वा विशेषेण कामबाणार्दितोऽभवत् ॥३७॥ दूतः संप्रेषितस्तेन शंकरं स समागतः । जगाद तं निशुंभश्च महादेवं महाखलः ॥३८॥ निशुंभ उवाच । शिवस्त्वं नग्नताद्यैश्च चिह्नैर्युक्तो न ते प्रभो । पार्वती रत्नभूता सा योग्या भवति सर्वदा ॥३९॥ ब्रह्मांडाधिपतिः साक्षात् सर्वश्रिया युतोऽधुना । जलंधरश्च तस्मै त्वं देहि शैलसुतां प्रभो ॥४०॥ प्रतापवान् क्रोधसमायुक्तो नो चेत् जलंधरः । हत्वा त्वां तां बलात् सोऽपि ग्रहीष्यति न संशयः ॥४१॥ वचस्तस्य समाकर्ण्य क्रोधयुक्तः सदाशिवः । शूलं धृत्वा निशुंभं तं हंतुं देवः प्रचक्रमे ॥४२॥ ततो भयसमायुक्तो माययाऽसुरनायकः । पपालाऽऽगत्य वृत्तांतं

कथयामास संसदि ॥४३॥ निशुंभभाषितं श्रुत्वा ततः क्रोधसमायुतः। जलंधरो ययौ तेन युद्धार्थं सैन्यसंयुतः ॥४४॥ तमागतं समालोक्य महादेवः प्रतापवान्। विष्णुमुख्यैः स युद्धाय ययौ दैत्याधिपेन च ॥४५॥ देवानां दानवानां च युद्धं परमदारुणम्। अभूद्वर्णयितुं देव्यः शक्यते न कदाचन ॥४६॥ वर्षमात्रं महाघोरं ततो दैत्यो महेश्वरम्। मायया मोह्य संगृह्य तं चिक्षेप गुहांतरे ॥४७॥ कालनेमिमुखांस्तत्रास्थाप्य संग्राममंडले। जगाम पार्वतीं दैत्यो मायया शंकराकृतिः ॥४८॥ तमागतं समालोक्य ज्ञानदृष्ट्या महासती। बुबोध विह्वलांगं चांतर्धानमकरोत् स्वयम् ॥४९॥ सा सस्मार महाविष्णुं गत्वा हिमगिरिं तदा। समागतं विलोक्यैव वृत्तांतं सर्वमब्रवीत् ॥५०॥ श्रुत्वा तां सांत्वयामास केशवः परवीरहा। जलंधरस्वरूपेण वृंदां मोहयितुं ययौ ॥५१॥ जलंधराकृतिस्थं तं दृष्ट्वा विष्णुं बुबोध सा। शशाप त्वं महाविष्णो भव शैलाकृतेर्धरः ॥५२॥ ततोऽतिभयसंयुक्तो विष्णुः शापसमन्वितः। सिद्धक्षेत्रे समागम्य पूजयामास विघ्नपम् ॥५३॥ गुहायां शंकरश्चैव सावधानो बभूव ह। ध्यानेनैव महोग्रेण तोषयामास विघ्नपम् ॥५४॥ वरदानप्रसिद्ध्यर्थमाययौ तं गणेश्वरः। तं दृष्ट्वा शंकरश्चादौ प्रणतो भक्तिसंयुतः ॥५५॥ तुष्टाव विविधैः स्तोत्रैर्गणेशं सर्वसिद्धिदम्। कथयामास वृत्तांतं प्रणम्य करसंपुटैः ॥५६॥ ततः स्वहस्तगं ढुंढिर्ददौ तस्मै महात्मने। चक्रं सुदर्शनं नाम्ना तं जगाद सदाशिवम् ॥५७॥ मां स्मृत्वा युद्धकाले तं चक्रेण जहि दानवम्। रक्ष सर्वान् महादेव विजयी प्रभविष्यसि ॥५८॥ एवमुक्त्वा गणेशानोऽतर्दधे शंकरस्ततः। चक्रं गृह्य गुहायाः स निर्जगाम बहिः स्वयम् ॥५९॥ दंडकारण्यदेशे तु विष्णुर्विघ्नेश्वरं गतः। तस्मै प्रत्यक्षभावेन वरं ददौ गणेश्वरः ॥६०॥ श्रीगणेश उवाच। मा चिंतां कुरु विष्णो त्वं मामस्मृत्वा गतः पुरा। तेन शापयुतो जातोऽधुना शरणमागतः ॥६१॥ अत्रैव तपसा तेऽहं वरदश्च पुराऽभवम्। तेन ते वै सहाम्यद्यापराधं माधवाधुना ॥६२॥ कलया त्वं शिलासंस्थो भविष्यसि न संशयः। पूर्णरूपेण देवेशः स्वस्याकृतिधरो भव ॥६३॥ नरास्त्वां पूजयिष्यंति शिलारूपधरं प्रभुम्। तत्र देवस्वरूपेण तिष्ठस्यत्र न संशयः ॥६४॥ पुनर्मां हृदि संध्याय जलंधरस्वरूपधृक्। वृंदां गच्छ महाविष्णो सा तेऽधीना भविष्यति ॥६५॥ एवमुक्त्वा गणेशानोऽतर्दधे भक्तवत्सलः। विष्णुर्जलंधरो भूत्वा ययौ वृंदां तु शक्तयः ॥६६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते शिवविष्णोर्वरप्रदानं नाम द्वितीयोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । जलंधरस्वरूपेण आगतं तं जनार्दनम् । नानावीरसमायुक्तं तादृशैः सेवकैर्वृतम् ॥१॥ नागरा मानयामासुरन्ये सर्वे सुहृज्जनाः । जित्वा महेश्वरं देवं तं समागतमब्रुवन् ॥२॥ ततो गणेशमायाभिर्मोहिता तं समीपगा । वृंदा हर्षसमायुक्ता पुपूज परमेश्वरम् ॥३॥ मोहितः केशवो देव्यस्तां दृष्ट्वा गुणसंयुताम् । रूपेणाप्रतिमां पूर्णयौवनेन विराजिताम् ॥४॥ एकांते स तया सार्धं रेमे नारायणः स्वयम् । साऽपि स्नेहसमायुक्ता रेमे तेन सुविह्वला ॥५॥ अधुना शंकरस्यैव वृत्तांतं कथयाम्यहम् । शृणुध्वं शक्तयः सर्वा गणेशमायया युतम् ॥६॥ शंकरः क्रोधसंयुक्तो युयुधे तेन वैरिणा । चक्रेण छेदयामास दैत्यानां बलमुत्कटम् ॥७॥ जलंधरः स्वयं तेन युयुधे मायया युतः । राक्षस्या देवता दैत्या युयुधुश्च परस्परम् ॥८॥ वृंदया सह विष्णुश्च रेमे तत्र मुदा युतः । जलंधरः स चक्रेण तस्मिन् काले हतोऽभवत् ॥९॥ ततस्ते देवविप्रेंद्रास्तुष्टुवुः शंकरं परम् । तैः सार्धमगमत् सोऽपि कैलासं पर्वतेश्वरम् ॥१०॥ ततश्च धर्मसंयुक्ता बभूवुर्मानवा ध्रुवम् । विश्वमानंदसंयुक्तं बभूव स्वस्वकर्मतः ॥११॥ नित्यं विष्णुस्तया सार्धं क्रीडायुक्तो बभूव ह । समागतास्तत्र दैत्याः शशंसुश्चेष्टितं महत् ॥१२॥ प्रतापवान् शंकरेण हतो दैत्यो जलंधरः । तच्छ्रुत्वा विस्मिताः सर्वे कोऽयं क्रीडति वृंदया ॥१३॥ ततोऽतर्धाय चात्मानं स्वयं विष्णुः समास्थितः । वृंदा देहं समाज्वाल्य ययौ स्वर्गमनुत्तमम् ॥१४॥ तां दृष्ट्वा मोहसंयुक्तो विष्णुस्तत्र रुरोद ह । स्मृत्वा वृंदाचरित्राणि मोहितो मायया भृशम् ॥१५॥ वृंदाचितां समाश्रित्य विललाप जनार्दनः । दैत्याः पातालगाः सर्वे बभूवुर्भयसंयुताः ॥१६॥ देवैः संबोधितो विष्णुर्मुनिभिर्न बुबोध सः । रुरोद कामबाणार्तस्तां स्मृत्वा दारुणं महत् ॥१७॥ ततस्तस्य महाविष्णोः कामबाणार्दितस्य च । वीर्यं पपात भूपृष्ठेऽमोघं तेजोयुतं बभौ ॥१८॥ तस्माच्च पुरुषो जज्ञे कामरूपातिगो बभौ । विचचार महीपृष्ठे विष्णुस्तत्र समास्थितः ॥१९॥ ततो देवैश्च सा वृंदा प्रार्थिता मुनिभिर्भृशम् । विष्णोः पत्नी भवाशु त्वं तपसाऽऽराधितस्य ते ॥२०॥ सा तथेति समुच्चार्य वृक्षरूपा बभूव ह । विष्णुः शिलास्वरूपेणोपयेमे तां शुभावहाम् ॥२१॥ कार्तिके शुक्लपक्षे च द्वादश्यां सा जनार्दनम् । उपयेमे महादेव्यस्तेन संहर्षितोऽभवत् ॥२२॥ तां गृह्य केशवो देवो विकुंठमगमत् स्वयम् । सर्वे हर्षसमायुक्ता बभूवुरमरादयः ॥२३॥ एवं कामः समुत्पन्नो महातेजोयुतः स्वयम् । बभ्राम वनसंस्थः स तत्र शुक्रः समाययौ ॥२४॥ शिवपंचाक्षरं मंत्रं ददौ तस्मै महात्मने । स गत्वा तं प्रणम्यैव वनं तपश्चचार ह ॥२५॥ तपसोग्रेण शंभुं स तोषयामास नित्यदा । निराहारेण नित्यं जजाप

तं मंत्रमुत्तमम् ॥२६॥ एवं तस्योग्रतपसा विभ्रांताः सुरमानुषाः। दिव्यवर्षसहस्रेण स्थातुं शक्ता न तेऽभवन् ॥२७॥ ततो देवैर्महेशानः प्रार्थितस्तं ययौ मुदा। बोधयामाय दैत्येशं वरं ब्रूहि समब्रवीत् ॥२८॥ ततः स शंकरं दृष्ट्वा प्रणनाम कृतांजलिः। समुत्थाय पुपूजाऽसौ तुष्टुवे भक्तिसंयुतः ॥२९॥ यजुर्वेदभवेनैव रौद्रस्तोत्रेण शंकरम्। कामासुरः प्रसन्नात्मा तोषयामास भावतः ॥३०॥ संतुष्टं शंकरं दृष्ट्वा तं जगाद महासुरः। हर्षेणोत्फुल्लनेत्रः स वरदं भक्तवत्सलम् ॥३१॥ कामासुर उवाच। यदि प्रसन्नभावेन वरदोऽसि महेश्वर। तव भक्तिं च मे देहि राज्यं ब्रह्मांडकस्य वै ॥३२॥ उपत्तिस्थिति-संहारयुतास्तेभ्यो भयं न मे। संभवेत्ताहशं नाथ कुरुष्व बलसंयुतम् ॥३३॥ उत्पत्तिस्थितिसंहारकारका ये महेश्वराः। तेभ्यो मे मरणं नैव भवेद्देव तथा कुरु ॥३४॥ आरोग्यादिसमायुक्तं संग्रामे जयशालिनम्। कुरु मां देवदेवश सर्वातिगं प्रभावतः ॥३५॥ यद्यदिच्छामि तत्तन् मे सफलं त्वदनुग्रहात्। सर्वकालेषु भवतु नमस्ते परमेश्वर ॥३६॥ शक्तिरुवाच। कामासुरस्य वाक्यं वै श्रुत्वा विस्मितमानसः। शंकरस्तमथोवाच तपसा बद्धभावतः ॥३७॥ शिव उवाच। दुर्लभं यत्त्वया काम प्रार्थितं देवदुःखदम्। दास्यामि तपसा तुष्टो महोग्रेणासुरोत्तम ॥३८॥ त्वया ये ये वराः सर्वे प्रार्थितास्ते महासुर। सफलाः संतु मद्वाक्यात्त्वं श्रेष्ठश्च भविष्यसि ॥३९॥ एवमुक्त्वा महादैत्यमंतर्धानमथाऽकरोत्। शिवः सोऽपि महादेव्यो-ऽभवत्तत्रैव संस्थितः ॥४०॥ हर्षेण महता युक्तो जगाम शरणं स्वयम्। शुक्रं सर्वविचारज्ञं स्वगुरुं प्रणनाम ह ॥४१॥ कथयामास वृत्तांतं सोऽपि संहर्षितोऽभवत्। श्रुत्वा योगींद्रमुख्यश्च दैत्याचार्यो महायशाः ॥४२॥ महिषासुरपुत्रीं स उपयेमे वरोद्धतः। तृष्णां रूपयुतां पूर्णगुणयुक्तां च तादृशीम् ॥४३॥ ततो दैत्यगणान् सर्वान् समागतान् दिगंततः। दैत्येशांस्तान् पुरस्कृत्य शुक्रस्तं ह्यभ्यषेचयत् ॥४४॥ वेदमंत्रैर्महाभागो ब्राह्मणैर्विधिसंयुतः। कामासुरोऽभवद्राजश्रिया हृष्टो विलासवान् ॥४५॥ पंच तस्य प्रधानानि बभूवुश्च महौजसः। रावणः शंबरश्चैव महिषो बलिदुर्मदौ ॥४६॥ नगरं निर्ममे भूमौ सर्वशोभासमन्वितम्। रतिदं नाम तस्यापि चकारोशनसेरितः ॥४७॥ तत्र जग्मुश्च वासार्थं दैत्यदानवराक्षसाः। चातुर्वर्ण्यसमायुक्तं शुशुभे शोभया परम् ॥४८॥

॥ ओमिति मदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते कामासुरराज्यप्राप्तिवर्णनं नाम तृतीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । कदाचिद् दैत्यराजेंद्रो बलिमुख्यान् समागतान् । जगाद हर्षसंयुक्तः कामासुरः प्रतापवान् ॥१॥ कामासुर उवाच । बले रावणमुख्याश्च वचनं मे हितावहम् । शृणुध्वं नीतितत्त्वज्ञा यदि हृद्यं भवेत् परम् ॥२॥ ब्रह्मांडं हि प्रजेष्यामि वरदर्पेण निश्चितम् । भवद्भिः संयुतोऽहं वै तथा शुक्रेण रक्षितः ॥३॥ वरदानस्य माहात्म्यं वृथा भवति चान्यथा । न वयं जयसंहीना भविष्यामः कदाचन ॥४॥ कामासुरस्य तद्वाक्यं श्रुत्वा दैत्येंद्रसत्तमाः । हर्षयुक्ता पुनस्तं त ऊचुः प्रांजलयः परम् ॥५॥ दैत्येशा ऊचुः । सम्यगुक्तं महाभाग वयं सर्वे त्वदात्मकाः । प्रजेष्यामो महेशेंद्रान् प्रतापेन प्रभो च ते ॥६॥ न ते पराक्रमस्यैव तुलां ब्रह्मांडमंडले । लभते कोऽपि दैत्येंद्रस्तत्र शुक्रः सहायकृत् ॥७॥ ततः सर्वे समागम्य शुक्रं नीतिविशारदम् । प्रणम्याऽऽपूज्य तेनैव युताः सर्वेऽपि निर्ययुः ॥८॥ अपारसेनया युक्तश्चतुरंगसुशोभया । शुशुभे कामसंज्ञोऽसौ तारायुक्तो यथा विधुः ॥९॥ नानावाहनगा वीराः शस्त्रहस्ता द्रुमैर्युताः । पर्वतानां धराः केचिन्निर्ययू रणदुर्मदाः ॥१०॥ यथा पाथोनिधिश्चैव सर्वत्र जलरूपधृक् । तथा सैन्यं धरायां संख्यातिगं दृश्यते हि तत् ॥११॥ बलिरावणमुख्या वै यत्र तिष्ठंति शक्तयः । नृपालैः किंतु सेनाभिर्युद्धं कर्तुं क्षमं भवेत् ॥१२॥ राजानः शरणं केचिद्ययुस्तं च मृताः परे । केचित् त्यक्त्वा वनं राज्यं ययुर्भयसमन्विताः ॥१३॥ एवं भूमंडलं जित्वा सप्तद्वीपसमन्वितम् । दैत्येशा हर्षसंयुक्ता बभूवुश्च जयान्विताः ॥१४॥ ततः पातालमाविश्य शेषं नागसमन्वितम् । वशं कृत्वा ययुस्तेऽपि स्वर्गं देवगणैर्युतम् ॥१५॥ समागतं महादैत्यैर्युतं कामासुरं खलम् । ज्ञात्वा देवगणाः सर्वे भयभीता बभूविरे ॥१६॥ विचार्य गुरुणा सार्धं शंकरं ते ययुस्ततः । त्यक्त्वा राज्यं भयोद्विग्ना ब्रह्मविष्णुमुखाः सुराः ॥१७॥ ततो दैत्येंद्रमुख्याश्च शून्यां दृष्ट्वाऽमरावतीम् । प्रवेशं चक्रिरे सर्वे कामासुरपुरोगमाः ॥१८॥ इंद्रासने समासीनो दैत्यपैः संवृतो बभौ । कामासुरस्ततो दैत्यान् स्थापयामास सन्निधौ ॥१९॥ ततस्तैः संयुतः सोऽपि प्रजापतिपदं ययौ । तत्रैव तादृशं दृष्ट्वा ब्रह्मासनगतोऽभवत् ॥२०॥ बुभुजेऽसौ कियत्कालं भोगान्नानाविधान् खलैः । विकुंठमगमत् सोऽपि दैत्यपैः सुसमावृतः ॥२१॥ तत्र शून्यं प्रदृश्यैव हर्षयुक्तो बभूव ह । कामासुरः स्वयं रेमे नानादैत्येंद्रमुख्यकैः ॥२२॥ ततो दैत्यगणान् सोऽपि जगाद हर्षसंयुतः । मोहेन मोहितोऽत्यंतं गर्वयुक्तो वचः परम् ॥२३॥ कामासुर उवाच । किं मया न जितं दैत्यास्तद्वदेत जयाम्यहम् । विष्णुमुख्याश्च देवेंद्रा दुद्रुवुः क्लीबभावतः ॥२४॥ न कोऽपि रणभूमौ वै संग्रामाय समागतः । देवेंद्रा युद्धहीनास्तु भवामो

जयशालिनः ॥२५॥ ततस्तं शंबरो दैत्यः प्राह वैरसमन्वितः । प्रेरितो दैत्यवर्यैश्चासुराणां हितकारकः ॥२६॥ शंबरासुर उवाच । शंभुं जय महाराज देवमुख्यैश्च संवृतम् । तदा ब्रह्मांडकस्यैव राजा त्वं तु भविष्यसि ॥२७॥ न त्वां वरप्रदो देवः शिवः श्रृणु वचो हितम् । स्वधर्मसंयुतं राजन् सर्वेभ्यः सुखदायकम् ॥२८॥ कर्मणां फलदातृत्वं देवानां कर्म निर्मितम् । स्वधर्मस्थं विजानीहि नोचेन्नश्यंति देवताः ॥२९॥ प्रवर्तत इदं कर्माधारं सर्वं तदाज्ञया । कर्मणा त्वं समर्थश्च जातोऽस्यत्र न संशयः ॥३०॥ वयं तु तपसा हीनास्तेन राजंस्त्वदाश्रिताः । भवामस्तमथो शंभुं जय त्वं दैत्यपैर्वृतः ॥३१॥ देवनाथः स्वयं शंभुस्तस्माद्देवान् प्रगृह्य सः । शत्रून्नः पश्य दैत्येंद्र संस्थितः प्रबभूव ह ॥३२॥ सुराश्चासुरकाः प्रोक्ताः पश्य वेदेषु मानद । शिवो देवमयः प्रोक्तः कथं दैत्यहितो भवेत् ॥३३॥ कामासुरः शंबरस्य वचः श्रुत्वा प्रतापवान् । मोहयुक्तः स्वभावेन तथ्यं मेने तु शक्तयः ॥३४॥ दैत्यपैः संवृतः सद्यः सन्नद्धैः शंकरं ययौ । तमागतं समाज्ञाय शिवश्चिंतातुरोऽभवत् ॥३५॥ देवैः सह विचार्यैवं दृष्ट्वा दारुणरूपकम् । कामासुरं पपालाऽसौ त्यक्त्वा कैलासमात्मनः ॥३६॥ अरण्ये देवसंयुक्तो यत्र तत्र गुहासु सः । भयभीतः स्वभावेन वासं चक्रे सदाशिवः ॥३७॥ ततः कामासुरो दुष्टो दृष्ट्वा शून्यं पुरं महत् । शैवं हर्षसमायुक्तो दैत्यपैः प्रविवेश ह ॥३८॥ कैलासशिखरारूढः कामासुरः प्रतापवान् । भोगान् कल्पितसंभूतान् बुभुजे चासुरैः सह ॥३९॥ एवं ब्रह्मांडमुग्रः स स्वयं जित्वा ननंद ह । कृतकृत्यमिवात्मानं मेने दैत्येंद्रनायकः ॥४०॥ ततो बहौ गते काले पुत्रं शोषणसंज्ञितम् । ज्येष्ठं कैलासनाथं वै चकार भयवर्जितः ॥४१॥ दुःपूरं स चकारैव विकुंठाधिपतिं खलम् । कनिष्ठं स्वसुतं कामासुरो दुष्टश्च शक्तयः ॥४२॥ बलिं सौरस्य लोकस्य नाथं चक्रे महासुरः । रावणं शक्तिलोकस्य तथा बलसमन्वितम् ॥४३॥ शंबरं ब्रह्मलोकस्याधिपं दुष्टं चकार ह । इंद्रलोकस्य नाथं तु महिषं रणदुर्मदम् ॥४४॥ दुर्मदं यमपुर्यां स स्थापयामास निर्भयः । एवं नानाऽसुरांश्चक्रे स्थापितान् भुवनेषु च ॥४५॥ स्वयं सर्वसमायुक्त आययौ भूमिमंडलम् । स्वपुरे राज्यमुग्रं स चकार जगतो बलात् ॥४६॥ स्त्रीमद्यमांसकाद्यैश्च संसक्तः सन्महाबलः । भोगांस्त्रिलोकगांस्तत्र बुभुजे स्वसुहृज्जनैः ॥४७॥ न बुबोध गतं कालं यथा कालेन वंचितः । आत्मानममृताकारं मेने स्वमदसंयुतः ॥४८॥ एवं कामासुरो दुष्टः शक्तयः स चकार ह । चराचरमयं सर्वं स्वाधीनं बलगर्वितः ॥४९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते कामासुरविजयवर्णनं नाम चतुर्थोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शक्तय ऊचुः । अहो कामासुरस्यैवं प्रभावः परमाद्भुतः । शस्त्रहीनेन मायें वै जितं सर्वं चराचरम् ॥१॥
एतादृशो महादैत्यो न श्रुतस्ते मुखांबुजात् । अधुना तस्य नाशं तु वद देवि सुदुर्गमम् ॥२॥ आदिशक्तिरुवाच । कालिमुख्याः
शृणुध्वं च शक्तयो मे वचो हितम् । यथा तं गणनाथः स जिग्ये सर्वैः सुदुर्जयम् ॥३॥ एकदा स्वसभासंस्थं कामासुरं
महानृपम् । जगुर्दैत्याधिपाः सर्वे कृतांजलय आदरात् ॥४॥ दैत्येशा ऊचुः । महाराज महाराज कृतकृत्योऽसि निश्चितम् ।
तथापि शृणु वाक्यं नः सर्वेषां ते हितावहम् ॥५॥ चराचरं तु दैत्येशा जित्वा राज्यं प्रचक्रिरे । कालेन निहताः सर्वे
देवैश्छद्मप्रदर्शिभिः ॥६॥ अतस्त्वमपि राजेंद्र शत्रुभावसमाश्रितान् । देवान् शंभुमुखान् सर्वान् मारयस्व प्रयत्नतः ॥७॥
अमरा वेदवादेषु कथिता देवपा गणाः । शस्त्रादिभिश्च ते सर्वे न मरिष्यंति कर्हिचित् ॥८॥ अतः शृणु महादैत्य विचारं
शत्रुनाशकम् । कर्महीनप्रभावेण मरिष्यंत्यमराः किल ॥९॥ कर्मान्ना देवताः सर्वा नष्टेऽन्ने नाशमाप्नुयुः । पुरा प्रोक्तं तु
वेदेषु तादृशं कुरु मानद ॥१०॥ तेनैवामररूपाश्च वयं निहतकंटकाः । भवामो नात्र संदेहस्त्वत्प्रसादेन नित्यदा ॥११॥
तेषां तद्वचनं श्रुत्वा कामासुरश्च हर्षितः । साधु साधु भवद्भिः संकथितं तानुवाच ह ॥१२॥ अधुना दैत्यपैः सर्वैः कर्तव्यं
कर्मखंडनम् । महाबलाश्च गच्छध्वं भूमिं सर्वां मदाज्ञया ॥१३॥ तथेति तं प्रणम्यादौ हर्षाद्दानवमुख्यकैः । पृथिव्यां तैः
कृतं कर्मखंडनं मदसंयुतैः ॥१४॥ ब्राह्मणादींश्च संताड्य वर्णाश्रमविवर्जितान् । चक्रुस्ते पापकर्माणो दानवा दुर्जयाः खलाः
॥१५॥ कामस्य प्रतिमा दुष्टैः कृतास्तैः स्थापितास्ततः । देशे देशे पुरे ग्रामे जनैः पूज्या इमा मताः ॥१६॥ ततो हाहारवं सर्वे
वर्णाश्रमयुता जनाः । स्नानादि नैव चक्रुस्ते दैत्यसंत्राससतापिताः ॥१७॥ न स्वाहा न स्वधा कुत्र न वषट्कार एव च ।
वर्णाश्रमविहीनाश्चातिष्ठंस्ते ब्राह्मणादयः ॥१८॥ केचिन् मुनिगणा देव्यो महोग्रं वनमाश्रिताः । स्वधर्मनिरतास्तत्रावसंस्ते
विगतज्वराः ॥ १९ ॥ ततोऽभवन् महादेवा उपोषणपरायणाः । शोकसंविग्नचित्तास्ते मिलिता भयविह्वलाः ॥२०॥
कामासुरस्य नाशार्थं विचारं चक्रुरंजसा । न किंचित् प्रापुरभवन्नतिदुःखयुतास्ततः ॥२१॥ तत्राऽऽजगाम योगींद्रो मुद्गलः
परमार्थवित् । तं दृष्ट्वा देवदेवास्ते हर्षिता अभवन् बुधम् ॥२२॥ उत्थाय तं प्रणेमुस्ते शंभुविष्णुमुखाः सुराः । भृग्वादयश्च
योगींद्राः पूजयामासुरादरात् ॥२३॥ आसने सुखमासीनं कृत्वा करपुटान् मुनिम् । शिवश्चिंतातुरोऽत्यंतं पप्रच्छ विनया-
न्वितः ॥२४॥ श्रीशिव उवाच । धन्या वयं महायोगिन् दर्शनेन च ते प्रभो । गाणपत्यस्य पूज्यस्य सर्वेषां पावनात्मनः ॥२५॥

अस्माकमादिकाले तु गुरुर्भ्रूशुंडिकः परः । तेन संबोधिता विप्र वयं ज्ञानयुता मुदा ॥२६॥ गुरुस्तस्य मुनींद्रस्य सर्वसिद्धिप्रदायकः । गाणपत्याग्रणीः साक्षात् समस्तेन न वर्तते ॥२७॥ शिष्यशिष्यान् महाभाग तारयस्वाधुना प्रभो । नोचेदन्नविहीनान्नो मृतान् पश्यसि देवपान् ॥२८॥ कामासुरेण दुष्टेन स्थानभ्रष्टाः कृता वयम् । अधुना कर्मनाशाद्वै हीना अन्नेन वै कृताः ॥ २९ ॥ उत्पत्तिस्थितिसंहारकर्तृभ्यो मरणं मुने । उत्पत्तिस्थितिसंहारयुक्तेभ्यस्तस्य नो भवेत् ॥३०॥ अतो योगींद्रमुख्य त्वं वदोपायं महागुरो । कामासुरस्य नाशार्थं करिष्यामो जवान्विताः ॥३१॥ चराचरस्य रक्षार्थं कुरु कार्यमनुमत्तमम् । दुष्टं संहर योगींद्र मार्गदर्शनभावतः ॥३२॥ यथा ज्ञानोपदेशेनाज्ञाननाशं करोषि तु । तथा हिंसा न ते स्वामिन् भविष्यति कदाचन ॥३३॥ इति तस्य वचः श्रुत्वा मुद्गलः शंकरस्य तु । दयया गणनाथं स स्मरन् जगाद तं वचः ॥३४॥ मुद्गल उवाच । श्रृणु शंभो जगन्नाथ विष्णो देवादयो वचः । कथयामि हितार्थाय कामासुरविनाशनम् ॥३५॥ साक्षादीश्वररूपस्त्वं गणेशांशः सदाशिव । तवाग्रे किमहं ब्रूयां विद्यानाथस्य मानद ॥३६॥ तव दर्शनमात्रेण कृतकृत्या भवंति वै । नरा ईश न संदेहस्तं किं ब्रूमि भयापहम् ॥३७॥ तथापि कथयिष्यामि त्वदाज्ञापालनार्थतः । गणेशं सर्वभावेन भजध्वं सर्वदेवताः ॥३८॥ स्वानंदस्थस्त्रिभिर्भावैर्हीनो देवो न संशयः । स तं क्षणार्धमात्रेण हनिष्यति महासुरम् ॥३९॥ पूर्वस्मिन् यत्र वै शंभो सिद्धिः प्राप्ता त्वया तथा । देवैः सर्वैश्च विप्रैश्चाधुना तत्र गतिं कुरु ॥४०॥ भूस्वानंदे महाभाग आराधय गजाननम् । मयूरेशं विधानेन सर्वसिद्धिप्रदायकम् ॥४१॥ एकाक्षरेण मंत्रेण चरध्वं तप उत्तमम् । स्वल्पकालेन विघ्नेशः प्रसन्नो भविता स्वयम् ॥४२॥ एवमुक्त्वा महायोगी मुद्गलस्तान् प्रणम्य तु । जगाम स्वेच्छया योगाद्गणेशभजने रतः ॥४३॥ ततो देवाश्च विप्रास्ते हर्षयुक्ता बभूविरे । मयूरेशं समाजग्मुर्दंडकारण्यगं परम् ॥४४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खण्डे विकटचरिते मुद्गलदेवसमागमो नाम पंचमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शक्तय ऊचुः । मयूरनामकं क्षेत्रं भूस्वानंदमयं कथम् । बभूव तत् समाचक्ष्व परं कौतूहलं त्विदम् ॥१॥ पुरा कथं शिवाद्यैश्च सिद्धिः प्राप्ता जगन्मयि । वद तत्र कथं तेषां भ्रूशुंडी चाऽभवद् गुरुः ॥२॥ कीदृशं क्षेत्रमुख्यं तु केन तत्र गजाननः । स्थापितः पूर्वकाले वै के के सिद्धिमवाप्नुयुः ॥३॥ वद शक्ते मयूरस्य माहात्म्यं सर्वसिद्धिदम् । क्षेत्रस्य स्वल्पकालेन लभते स्वेप्सितं नरः ॥४॥ मुद्गल उवाच । एवं पृष्टा महामाया शक्तिभिश्च प्रजापते । भक्तियुक्ताभिरत्यंतमादरात्ता उवाच सा ॥५॥ तत्तेऽहं शृणु वक्ष्यामि सर्वसिद्धिप्रदायकम् । श्रवणेन न संदेहो ब्रह्मभूतपदप्रदम् ॥६॥ आदिशक्तिरुवाच । अत्राहं कथयिष्यामीतिहासं परमाद्भुतम् । भ्रूशुंडिनः शिवादीनां संवादात्मकमुत्तमम् ॥७॥ कदाचित् प्रलये वृत्ते नष्टे स्थावरजंगमे । ब्रह्मविष्णुशिवाद्याश्च लयं ययुः स्वभावतः ॥८॥ ततोऽतिलयवेगेन पंचभूतानि शक्तयः । लयं प्राप्तानि सर्वत्र शून्यरूपं बभूव ह ॥९॥ ततो जागृन्मयं ब्रह्म स्थूलभूतं लयं गतम् । तथा सूक्ष्मं महादेव्यः स्वाप्नं प्रलयवेगतः ॥१०॥ समभावमयं ब्रह्म सौषुप्तं तल्लयं गतम् । ततः प्रकृतिरूपा सा पुरुषे तन्मयी ह्यभूत् ॥११॥ पुरुषो ब्रह्मणि स्वात्मैकभावं संस्थितोऽभवत् । ब्रह्म ब्रह्मणि संस्थं वै बभूव स्वात्मगं परम् ॥१२॥ एवं महालये प्राप्ते क्षेत्रं स्वानंदवाचकम् । स्वसंवेद्यस्वरूपेण स्थितं ब्रह्मपदप्रदम् ॥१३॥ तदा विघ्नेश्वरः साक्षाद् योगनिद्रापरायणः । क्षेत्रे मयूरे सुष्वाप तदाकारधरः प्रभुः ॥१४॥ ततो बहौ गते काले निद्राहीनो बभूव ह । निःश्वासतोऽभवन्नस्य सोंकारा निगमाः पुरा ॥१५॥ तैः स्तुतो बोधितश्चैव ससर्ज सकलं पुनः । प्रकृतिं पुरुषाद्यं च नानातत्त्वस्वरूपकम् ॥१६॥ तत्त्वैस्त्रिगुणकं सृष्टं स्थूलसूक्ष्मसमात्मकम् । त्रिविधं तु विराड्रूपं नानाभेदप्रसूतकम् ॥१७॥ ततस्त्रिविधरूपं च नानाभिन्नं बभूव ह । चराचरात्मकं ब्रह्म पंचभूतमयं बभौ ॥१८॥ भिन्नानि पंचभूतानि व्यवस्थासंयुतानि तु । बभूवुरादिकालेऽहं तेषां सृष्टिं वदामि वः ॥१९॥ नाभेः समुद्भवस्तस्य ब्रह्मा लोकपितामहः । मुखाद्विष्णुः स्वयं पाता गणेशस्य चतुर्भुजः ॥२०॥ नेत्राच्छिवः समुत्पन्नो वामांगात्तस्य चाऽभवम् । अहं भानुर्दक्षिणांगात् पंच देवाः पुरातनाः ॥२१॥ अज्ञानेन समायुक्ता न विदुः स्वपरं तदा । देवा ज्ञानप्रसिद्ध्यर्थं तपश्चेरुर्महाद्भुतम् ॥२२॥ दिव्यवर्षसहस्रेण प्रसन्नो गणनायकः । हृदिस्थं दर्शयामास बीजमेकाक्षरं स्वकम् ॥२३॥ मंत्रं प्राप्य महेशाना जेपुर्विघ्नेशमाभजन् । गते वर्षशते पूर्णे प्रसन्नोऽभूद्गजाननः ॥२४॥ आदौ शंकरहृद्देशे दर्शयामास रूपकम् । नरनागमयं पूर्णं चतुर्भुजादिचिह्नितम् ॥२५॥ तं दृष्ट्वा विस्मितः सोऽपि चित्ते विचारमाकरोत् । नरकुंजररूपोऽयं चित्ते मे कः प्रतिष्ठति ॥२६॥

यावत्तं प्रष्टुमारेभे तावदंतर्हितं वपुः । ततः सोऽपि गणेशस्य पुनर्ध्यानयुतोऽभवत् ॥२७॥ न ददर्श महद्रूपं सर्वमंगलमंगलम् । ततो विह्वलचित्तोऽसौ जगाम विष्णुसंनिधौ ॥२८॥ तदा सोऽपि विसृज्यैव ध्यानं समुत्थितोऽभवत् । शिवस्तस्मै स्ववृत्तांतं कथयामास हृद्गतम् ॥२९॥ शिवाय स जगादैवं स्वध्यानस्थं जनार्दनः । एवं क्रमेण पंचैते देवेशा मिलिता जगुः ॥३०॥ परस्परं विचार्यैते ध्यानं विस्मितमानसाः । ऊचुः कोऽयं नरश्चैवाभवत् ध्याने समागतः ॥३१॥ ततस्ते तुष्टुवुर्देवं यस्मै कस्मै नमो नमः । सर्वेषां मूलरूपाय प्रसीद करुणानिधे ॥३२॥ तत आकाशजां वाणीं शुश्रुवुस्ते महौजसः । ब्रह्मविष्णुमहेशानशक्तिसूर्याः सुखप्रदाम् ॥३३॥ आकाशवागुवाच । गणेशोऽहं महादेवाश्चित्तवृत्तिप्रचालकः । यस्य तप्तं तपो घोरं स एवाऽहं न संशयः ॥३४॥ प्रसन्नेन मयाऽऽदौवस्तपसा हृदि दर्शितम् । बीजमेकाक्षरं मे वै सिद्धा यूयं जपात्ततः ॥३५॥ साक्षान्मे दर्शने देवा नाधिकारोस्ति निश्चितम् । योगहीनप्रभावत्वात्ततश्चांतर्हितोऽभवम् ॥३६॥ भ्रूशुंडिनं महाभक्तं पृच्छध्वं सर्वमंजसा । गत्वा नत्वा स वै साक्षात् ज्ञानदाता भविष्यति ॥३७॥ तत् ज्ञात्वा देवदेवा मां भविष्यथ समर्थकाः । संद्रष्टुं नात्र संदेहस्ततः सिद्धिमवाप्स्यथ ॥३८॥ एवमुक्त्वा गणेशानः स्वस्थः सोंऽतर्हितोऽभवत् । शिवादयः प्रणम्यैव युयुस्तं मुनिपुंगवम् ॥३९॥ अमलाश्रमसंस्थं तं ददृशुर्विष्णुमुख्यकाः । भ्रूशुंडिनं प्रणम्यैते संस्थिता हर्षसंयुताः ॥४०॥ ऊचुः प्रांजलयः सर्वे तं मुनिं शुंडयायुतम् । एकमेव स्थितं पूर्णयोगानंदमयं परम् ॥४१॥ देवेशा ऊचुः । धन्यं जन्म तपो विद्या ज्ञानं ते पाददर्शनात् । धन्योऽपि योगिनां मध्य आदिमध्यांतवर्जितः ॥४२॥ सोऽपि तान् पूजयामास ज्ञात्वा देवतमान् मुनिः । कृत्वाऽऽतिथ्यं जगादैवं भ्रूशुंडी परमार्थवित् ॥४३॥ भ्रूशुंड्युवाच । जगतां मूलरूपाश्च भवंतो जगदीश्वराः । समागता मदीये मे आश्रमे भाग्यगौरवात् ॥४४॥ किमर्थमागता देवाः कार्यं ब्रूत करोम्यहम् । आदिमध्यांतभावज्ञा विश्वपालाः परेश्वराः ॥४५॥ शक्तय ऊचुः । महालये भ्रूशुंडी च कथं लयविवर्जितः । वद शक्ते मुनेस्तस्य चरितं परमाद्भुतम् ॥४६॥ मुद्गल उवाच । महालक्ष्मीमुखीनां तु देवीनां प्रश्नमुत्तमम् । श्रुत्वा ता जगदंबा सा कथयामास हर्षिता ॥४७॥ पुरा भ्रूशुंडिचरितं मया रम्यं प्रकाशितम् । श्रुत्वा संशयहीनास्तां पप्रच्छुर्विनयान्विताः ॥४८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते भ्रूशुंडिपंचदेवसमागमो नाम षष्ठोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शक्तय ऊचुः । अहो शक्ते महाचित्रं चरित्रं मुख्यकं श्रुतम् । भ्रूशुंडिनश्च संतुष्टा वयं जाता न संशयः ॥१॥ अधुना मुनिदेवानां संवादं वद सौख्यदम् । यत्र विघ्नेश्वरस्यैव ज्ञानं संगीयतेऽमलम् ॥२॥ आदिशक्तिरुवाच । शृणुध्वं शक्तयः सर्वाः पुरावृत्तं कथानकम् । सर्वपापहरं पुण्यं सर्वसिद्धिप्रदायकम् ॥३॥ भ्रूशुंडिवचनं श्रुत्वा हर्षिताः शंकरादयः । ऊचुस्तं प्रणिपत्यैव वृत्तांतं पूर्वसंभवम् ॥४॥ शिवादय ऊचुः । कोऽसौ गणेश्वरः स्वामिन् नरकुंजरवेषभृत् । तस्य ज्ञानं वदस्व त्वं कथं चित्तप्रचालकः ॥५॥ भ्रूशुंड्युवाच । संयोगवाचकः प्रोक्तो गकारश्च णकारकः । अयोगात्मकसंज्ञो वै तयोः स्वामी गणेश्वरः ॥६॥ अविनाशिपदं वेदे प्रोक्तं तद्गजवाचकम् । मस्तकं तस्य देवेशा ज्ञातव्यं मायया कृतम् ॥७॥ नाशवद्विश्वमेतद्वै तदेव देहरूपगम् । कंठाधो नात्र संदेहस्तयोर्योगे गजाननः ॥८॥ चतुःपदार्थरूपाश्च भुजास्तस्य महात्मनः । चतुर्भुजस्तेन साक्षाद्गणेशः परिकीर्तितः ॥९॥ जीवात्मपरमात्मानौ पादौ तस्य महात्मनः । द्विपदो गणराजोऽतः कथ्यते वेदवादतः ॥१०॥ तस्योदरात् समुत्पन्नं जगद्ब्रह्म महेश्वराः । तेन लंबोदरः साक्षात् कथितोऽसौ गणेश्वरः ॥११॥ भ्रांतिदा गणराजस्य मायासिद्धिः प्रकीर्तिता । वामांगाद्भिन्नरूपा सा बभूवे योगरूपिणी ॥१२॥ पंचचित्तमयी साक्षाद्बुद्धिर्भ्रांति-धरा परा । दक्षिणांगाद्गणेशस्य निःसृता ज्ञानरूपिणी ॥१३॥ तयोः स्वामी गणेशानो योगशांतिमयः स्वयम् । भक्त-वत्सलभावेन देहधारी बभूव ह ॥१४॥ स एव ज्ञानगो देवा भवतां कार्यसिद्धये । बभूव तं भजध्वं तु तेन सर्वं शुभं भवेत् ॥१५॥ श्रुत्वैवं विस्मिता भूत्वा देवेशास्तं प्रणम्य तु । ऊचुर्विस्मितचित्तास्ते गुरुं भ्रूशुंडिनं वचः ॥१६॥ ब्रह्मादय ऊचुः । त्वं साक्षाद्गणराजो वै शुंडादंडविराजितः । अस्माकं गुरुराद्यश्च बोधदातर्नमोऽस्तु ते ॥१७॥ त्वदीयवचनेनैव गणेशार्थ-विचक्षणाः । जाता वयं महायोगिंस्तद्भक्ताः सार्थकाः प्रभो ॥१८॥ अधुना वद माहात्म्यं भजनस्य विशेषतः । तत्र स्थानं च मंत्रादिविधियुक्तं महामुने ॥१९॥ भ्रूशुंड्युवाच । समाधिना भवंतोऽपि गताः पुरा महेश्वराः । भेदाभेदादिहीने तु ब्रह्मणि तन्मयत्वतः ॥२०॥ अधुना दंडकारण्ये तादृशं क्षेत्रमुत्तमम् । स्वानंदाख्यं च तत्रैव तपध्वं गणपे रताः ॥२१॥ मूर्तिं कृत्वा गणेशस्य दृष्टां स्वहृदि तादृशीम् । पूजयध्वं विधानेन ततः सिद्धिमवाप्स्यथ ॥२२॥ एवमुक्त्वा महायोगी भ्रूशुंडी विरराम ह । गणेशभक्तराजेंद्रो देवेशास्तं जगुः पुनः ॥२३॥ शिवाद्या ऊचुः । कुत्र क्षेत्रं स्थितं विप्र प्रलये समुपस्थिते । कीदृशं तस्य माहात्म्यं वद योगींद्रसत्तम ॥२४॥ तत्र मूर्तिः पुरा केन स्थापिता गणपस्य च । किमर्थं भूमिसंस्थोऽयं गणेशः

संबभूव ह ॥२५॥ तत्र सिद्धिं समाजग्मुः सेव्य विघ्नेश्वरं नराः । माहात्म्यं तत् समाचक्ष्व सर्वज्ञोऽसि महामुने ॥२६॥ गणनाथेन साक्षात्त्वं दर्शितो गुरुरादरात् । वयं शिष्यास्त्वदीयाश्च शाधि सर्वान् हिताय नः ॥२७॥ तेषां वचनमाकर्ण्य भ्रूशुंडी पुनरब्रवीत् । गाणपत्यविचारज्ञः सर्वशास्त्रार्थतत्त्ववित् ॥२८॥ भ्रूशुंड्युवाच । क्षेत्रं गणेश्वरस्यैव त्रिविधं परिकीर्तितम् । तेषां भेदं प्रवक्ष्यामि शृणुध्वं त्वेकचेतसः ॥२९॥ स्वर्गे शंभुगृहे चैव पाताले शेषमंदिरे । पृथिव्यां तु मयूरेशे क्षेत्रं विघ्नपतेः स्मृतम् ॥३०॥ तत्र कर्मप्रसिद्ध्यर्थं भूमिगं शाश्वतं सदा । वक्ष्यामि तस्य माहात्म्यं ब्रह्माकारस्य देवपाः ॥३१॥ प्रकृतिः सर्वरूपा तु पुरुषश्चात्मसंज्ञकः । तयोः संयोगभावे तु स्वानंदः परिकथ्यते ॥३२॥ स्वसंवेद्येन योगेन लभ्यते मानवैः परम् । तदेव गणराजस्य क्षेत्रं जानीत भूमिगम् ॥३३॥ तत्रैव संस्थितः साक्षाद्गणेशो योगवाचकः । तेन संरचितं स्वस्य मायया ब्रह्मदायकम् ॥३४॥ तस्य रूपं कथयितुं निजानंदं न शक्यते । सर्वक्षेत्रसमायोगो ज्ञातव्यं क्षेत्रमुत्तमम् ॥३५॥ ततः स्वस्येच्छया देवा गणेशेन स्वमायया । सृष्टं चतुर्विधं तस्मात् क्षेत्रात् खेलनभावतः ॥३६॥ पश्चिमांगाद्सद्रूपं ब्रह्म शक्तिमयं परम् । निःसृतं तत् द्विधा जातं स्वभावेन महेश्वराः ॥३७॥ रतिर्भोगमयी प्रोक्ता कामः सर्वप्रमोहकः । भोक्ता तयोः समायोगे द्वारं तच्च प्रकीर्तितम् ॥३८॥ हृदि सर्वजनानां या रतिरुत्पद्यते परा । तया मोहितचित्तास्ते भ्रमंति विषये रताः ॥३९॥ तत्र चालकरूपेण संस्थितः पुरुषो महान् । कामस्तेन जनाः सर्वे नाना कार्ये परायणाः ॥४०॥ भोगो यस्य तथा भोक्ता मोहहीनौ यदा हृदि । तदा शाक्तं लभेत् सोऽपि ब्रह्मासद्वाचकं परम् ॥४१॥ तेन द्वारेण विघ्नेशं साधयित्वा च योगिनः । गच्छंति तेन देवेंद्रा द्वारं शास्त्रे प्रकथ्यते ॥४२॥ उत्तरांगाद्गणेशस्य समुद्भूतं स्वभावतः । ब्रह्म सौरं सदा सत्यवाचकं देवसत्तमाः ॥४३॥ तदेव द्विविधं जातं कर्म ज्ञानप्रभेदतः । इच्छया गणराजस्य तच्छृणुध्वं विधानतः ॥४४॥ कर्माधारं जगत् सर्वं कर्म सृष्टं प्रवर्तते । अंते कर्मगतं भावि शास्त्रेषु तन्मयत्वतः ॥४५॥ आधारात्मकभावेन संस्थिता धरणी परा । कर्मरूपा महामाया संज्ञा सूर्यस्य भामिनी ॥४६॥ वराहो ज्ञानरूपश्च सदा निःसंगभावतः । कर्मजातिषु तिष्ठेत्तु स एव रविवाचकः ॥४७॥ कर्मयोगयुताः केचित् केचित् ज्ञानपरायणाः । भ्रमंति द्विविधे भावे यंत्रिता मोहसंयुताः ॥४८॥ कर्ममोहं परित्यज्य ज्ञानमोहं तथा जनः । तयोर्योगेऽमृतं ब्रह्म प्राप्नुयात् रविवाचकम् ॥४९॥ अथवा सौरमार्गेण लभ्यते भक्तमुख्यकैः । तदेव द्वाररूपं वै वदंति गणपस्य च ॥५०॥ तेन द्वारेण

योगींद्रा गच्छंति गणनायकम् । बुधैस्तद् द्वारमाख्यातमुत्तरांगं विशेषतः ॥५१॥ ततो गणेश्वरस्यैव पूर्वांगान्निःसृतं परम् । ब्रह्मानंदमयं पूर्णं समभागप्रकाशकम् ॥५२॥ सत्यासत्यात्मके देवाः समरूपेण संस्थितम् । वैष्णवं सर्वमान्यं तु तदेव द्विविधं बभौ ॥५३॥ लक्ष्मीः शोभात्मिका प्रोक्ता यशोरूपा विशेषतः । द्विविधं शोभया युक्तं कृतं तया विशेषतः ॥५४॥ लक्ष्म्या न समता कुत्र दृश्यते देवसत्तमाः । शोभा सा परमा माया मोहदा कथ्यते बुधैः ॥५५॥ यत्र लक्ष्मीश्च तत्रैव यशः सर्वं प्रतिष्ठितम् । भुक्तिमुक्तिमयी साक्षाल्लक्ष्मीः सर्वत्र पठ्यते ॥५६॥ तस्याश्चालकरूपश्च विष्णुः साम्ये व्यवस्थितः । आनंदभुक् विशेषेण द्वंद्वमायाधरो बभौ ॥५७॥ तयोर्योगे समाकारं ब्रह्म वेदेषु पठ्यते । आनंदवाचकं विप्रैर्वैष्णवैः प्राप्यते परम् ॥५८॥ गणेशप्राप्तये देवा द्वारमानंदधारकम् । तच्च क्षेत्रस्य पूर्वांगं गाणेशस्य प्रकथ्यते ॥५९॥ ततो दक्षिणभागाद्वै ब्रह्माव्यक्तमयं परम् । निःसृतं नेति कर्तृत्वात् त्रयाणां नेतिरूपकम् ॥६०॥ तदेव शांकरं ब्रह्म सहजं सर्वसंमतम् । मायया तत् द्विधा भूतं नरनारीस्वभावतः ॥६१॥ स्वेच्छारूपा महामाया पार्वती कथिता बुधैः । इच्छया त्रिविधं स्वस्याः सृजते सा न संशयः ॥६२॥ तत्र मोहविहीनश्च शंकरः कथ्यते परः । स्वाधीनः शैवभक्तेभ्यश्चतुर्थं ब्रह्म उच्यते ॥६३॥ तयोर्योगे महेशाना ब्रह्माव्यक्तं प्रकीर्तितम् । द्वारं दक्षिणगं तेन लभ्यते गणनायकः ॥६४॥ चतुर्णां चैव संयोगे स्वानंदः परिकीर्तितः । स्वसंवेद्येन योगेन लभ्यते योगिभिः परः ॥६५॥ तदेव गणराजस्य क्षेत्रं स्वानंदवाचकम् । चतुर्द्वारयुतं प्रोक्तं सर्वसिद्धिप्रदायकम् ॥६६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते स्वानंदक्षेत्रस्वरूपवर्णनं नाम सप्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ भृशुंड्युवाच । चतुर्द्वारमयं क्षेत्रं कथितं देवनायकाः । अधुना द्वारविस्तारं कथयामि समासतः ॥१॥ पूर्वद्वारे स्थितौ देवौ लक्ष्मीनारायणावुभौ । ताभ्यां तु विविधं सृष्टं स्वस्वस्थानार्थमादरात् ॥२॥ ब्रह्मांडे वैष्णवान्येव क्षेत्राणि विविधानि च । तानि तेन प्रसृष्टानि गणेशकृपया पुरा ॥३॥ लक्ष्म्या तद्वत् प्रसृष्टानि क्षेत्राणि विविधानि तु । लक्ष्मीवासकराण्येव प्रोक्तानि शास्त्रसंमतम् ॥४॥ दक्षिणद्वारगौ शक्तिशिवौ देवौ तथाऽमराः । गणेशकृपया युक्तौ परौ क्षेत्राणि चक्रतुः

॥५॥ क्षेत्राणि यानि ब्रह्मांडे स्वयं शैवानि शंकरः। ससृजे च ततः शक्तिः शाक्तानि विविधानि वै ॥६॥ रतिकामौ ससृजतुः पश्चिमद्वारसंस्थितौ। प्रभावाद्विघ्नराजस्य क्षेत्राणि किल मायया ॥७॥ क्षेत्राणि मातृकाणां च रत्या सृष्टानि यत्नतः। दिक्पालक्षेत्ररूपाणि सृष्टानि मदनेन तु ॥८॥ उत्तरद्वारसंस्थौ तौ महीवाराहकौ परौ। स्वक्षेत्राणि ससृजतुः परौ गणपमायया ॥९॥ संज्ञाक्षेत्राणि यावंति भूम्यां सृष्टानि तानि तु। सौराण्येवं वराहेण सृष्टानि विविधानि तु ॥१०॥ परिवारयुता देवाः परं तेपुस्तपो महत्। क्षेत्रज्ञाः क्षेत्रसंयुक्ताः गणेशस्य महात्मनः ॥११॥ नानामंत्रजपेनैव ध्यात्वा देवं गजाननम्। तोषयामासुरत्यंतभक्त्या नित्यं विशेषतः ॥१२॥ उपोषणयुतानि क्षेत्राणि ता देवतास्तथा। पूजयामासुरव्यग्राः क्षेत्रस्थं गणनायकम् ॥१३॥ एवं वर्षशते पूर्णे प्रसन्नोऽभूद्गजाननः। आययौ तान् वरान् दातुं स क्षेत्रान् देवमुख्यकान् ॥१४॥ तं दृष्ट्वा सहसोत्थाय प्रणेमुस्ते गजाननम्। पुपूजुस्तुष्टुवुः सर्वे भक्तिनम्रात्मकंधराः ॥१५॥ सक्षेत्रा देवा ऊचुः। ब्रह्मणे विघ्नराजाय स्वानंदस्थाय ते नमः। आदिमध्यांतहीनायादिमध्यांतस्वरूपिणे ॥१६॥ गणेशाय नमस्तुभ्यं भुक्तिमुक्तिप्रदायिने। नानाखेलकरायैव ज्येष्ठराजाय ते नमः ॥१७॥ सृष्टिकर्त्रे च संहर्त्रे पात्रे मोहप्रचारिणे। गुणेशाय गुणानां तु चालकाय नमो नमः ॥१८॥ परेशाय परेशेभ्यो मोहदाय गजानन। सर्वयोगमयायैव योगेशाय नमो नमः ॥१९॥ सिद्धिबुद्धिपते तुभ्यं सिद्धिबुद्धिमयाय च। सिद्धिबुद्धिप्रदात्रे ते नमश्चिंतामणे नमः ॥२०॥ पूर्वांगे विष्णुरूपाय दक्षिणांगे शिवात्मने। पश्चिमांगे च मायायै रवये उत्तरांगके ॥२१॥ चतुर्विधं गणेशान सृष्ट्वा खेलसि नित्यदा। नानाविधं तथा त्वां तु कश्च स्तोतुं क्षमो भवेत् ॥२२॥ वयं धन्या वयं धन्या दृष्टवंतो गजाननम्। ब्रह्मणस्पतिनामानं ब्रह्मणां चालकं परम् ॥२३॥ यं स्तोतुं न समर्थाश्च वेदाः सांगा गजानन। किं प्रस्तुमश्च देवेश अतस्त्वां प्रणमामहे ॥२४॥ एवं स्तुत्वा गणेशानं देवाः क्षेत्रसमन्विताः। प्रणेमुस्तं प्रहर्षेण भक्तिभावसमन्विताः ॥२५॥ ततस्तान् प्रत्युवाचेदं वचनं गणनायकः। भक्तान् भक्तिप्रियः साक्षात्तपसा तोषितः परः ॥२६॥ श्रीगणेश उवाच। वरं ब्रूत महाभागाः सक्षेत्रा देवमुख्यकाः। दास्यामि तपसा तुष्टो भक्त्या स्तोत्रेण चेप्सितम् ॥२७॥ स्तोत्रं भवत्कृतं चैव यः पठिष्यति मामकम्। स मत्प्रियो भवेद्देवाः शृणुयाच्छ्रावयेत्तथा ॥२८॥ भुक्तिमुक्तिप्रदं चैव धनधान्यविवर्धनम्। पुत्रपौत्रप्रदं पूर्णं भविष्यति सुसिद्धिदम् ॥२९॥ मम सन्निधिगो भूत्वा पठति स्तोत्रमुत्तमम्। सर्वक्षेत्रभवं पुण्यं लभते नात्र संशयः ॥३०॥ गणेशवचनं श्रुत्वा देवा

हर्षसमन्विताः । तं ते प्रणम्य सक्षेत्रा जगुर्भक्तिसमन्विताः ॥३१॥ सक्षेत्रा देवा ऊचुः । यदि प्रसन्नभावेन वरदोऽसि गजानन । तदा ते पादपद्मे नो भक्तिरस्तु च नित्यदा ॥३२॥ किमर्थं तु वयं सर्वे सृष्टा वद गजानन । कार्यं ब्रूहि करिष्यामस्त्वदाज्ञा-वशभावतः ॥३३॥ स्वानंदे वासकार्यार्थं देहि स्थानं महोदर । तत्र त्वां पूजयिष्यामो नित्यं भक्तिसमन्विताः ॥३४॥ स्वस्वज्ञानयुतान्नाथ कुरु सर्वान् महामते । त्वदीया वशगाः सर्वे ज्ञानयुक्ता भजामहे ॥३५॥ भृशुंड्युवाच । तेषां वचनमाकर्ण्य गणेशः करुणानिधिः । जगाद तान् महाभागान् भक्तियुक्तान् महेश्वरान् ॥३६॥ श्रीगणेश उवाच । धर्मार्थकाममोक्षान् वै ददतु क्षेत्रकाणि मे । वरदानात् समर्थानि स्वस्वकार्येषु सेविनाम् ॥३७॥ धर्मदान्यर्थदान्येव कानिचित् सेविनां तथा । कामदानि भवंत्येव मोक्षदानि विभागशः ॥३८॥ कानिचिन् मरणे सद्यस्तत्रैव फलदानि तु । कानिचित् क्रमयोगेन मुख्यक्षेत्रप्रदानि तु ॥३९॥ तथा देवाश्च तत्रस्थाः पूजनेन फलप्रदाः । दर्शनेन भवंत्येवं स्वस्वक्षेत्रप्रियात्मकाः ॥४०॥ नामानि गणनाथश्च चकार विविधानि सः । काशीप्रयागकाद्यानि वक्तुं नैव प्रशक्यते ॥४१॥ पुनः स तानुवाचाऽसौ गणेशः करुणानिधिः । क्षेत्राणि स्वकलांशेन स्थातव्यं स्वस्थलेषु वै ॥४२॥ पूर्णांशेन मदीयेऽत्र क्षेत्रे स्वानंदरूपिणि । वासं कृत्वा सदा मां तु भजिष्यथ निरंतरम् ॥४३॥ स्वक्षेत्रस्थास्तथा देवाः कलांशेन भवत वै । क्षेत्रेऽत्र पूर्णभावेन मां भजेताथ मानदाः ॥४४॥ स्वस्वकार्येषु दक्षा वै भविष्यथ न संशयः । मद्भक्तिभावसंयुक्ताः सक्षेत्रा गर्वहीनकाः ॥४५॥ सर्वक्षेत्राणि ये भूम्यां करिष्यंति विधानतः । देवान् यथाविधि प्राज्ञा पूजयिष्यंति मानवाः ॥४६॥ तेन संस्कारयोगेन मत्क्षेत्रे वासमाश्रिताः । ब्रह्मभूता भविष्यंति मत्क्षेत्रे मरणे सति ॥४७॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः । क्षेत्राणि हर्षयुक्तानि संस्थि-तान्येव तत्र तु ॥४८॥ पूजयित्वा गणेशानं स्वस्वस्थानकमाययुः । सक्षेत्रा देवताः सर्वा ज्ञानयुक्ता बभूविरे ॥४९॥ यथा गजाननः प्राह तथा सर्वे महेश्वराः । कृत्वा पुनर्गणेशानं समाजग्मुः प्रहर्षिताः ॥५०॥ तत्र ते संस्थिता देवाः सक्षेत्रा ह्स्वरूपकाः । स्वानंदक्षेत्रके सर्वेऽभजन्नित्यं तमादरात् ॥५१॥ एतत् क्षेत्रामराणां वै चेष्टितं यः शृणोति वा । पठेद्वा तस्य विघ्नेशः क्षेत्रवासं तु दास्यति ॥५२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते नानाक्षेत्रदेवोत्पत्तिवर्णनं नामाष्टमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ देवा ऊचुः । द्वारेषु देवपाः संति द्वारधारकभावतः । तेषां पूजनमार्गं तु वद विघ्नेश्वरस्य च ॥१॥ भ्रूशुंड्युवाच । क्षेत्रमध्ये गणेशानस्तिष्ठति सर्वदायकः। शुंडादंडमुखः श्रीमांश्चतुर्बाहुधरः प्रभुः ॥२॥ पृथूदरो विशालाक्षस्त्रिनेत्रः स्वस्तिकासनः । पाशांकुशधरः सोऽपि दंताभयविराजितः ॥३॥ नाभिशेषो विचित्रैश्च भूषणैर्वस्त्रकादिभिः । नागयज्ञोपवीती तु शूर्पकर्णो विराजति ॥४॥ तस्य वामांगभागे च सिद्धिः सर्वप्रदाऽमराः । द्विभुजा संस्थिता माया चामरव्यजनान्विता ॥५॥ दक्षिणांगे तथा बुद्धिर्द्विहस्ता ज्ञानरूपिणी । सुगंधवस्तुलेपार्थं संस्थिता सेवनोत्सुका ॥६॥ संमुखे मूषकस्तस्य मयूरश्च विराजति। प्रमोदाऽऽमोदकाद्याश्च गणाः पृष्ठे स्थितास्तथा ॥७॥ वैदिकेन च मार्गेण नमोऽतेन प्रपूजयेत् । पौराणिकेन देवेशा गणेशं सर्वसिद्धिदम् ॥८॥ ततः पूर्वदिशायां स गत्वा द्वारसमास्थितम् । पूजयेद्गणनाथं तं सशक्तिपरिवारकम् ॥९॥ द्विभुजं गणनाथं तु वामभागे जगन्मयीम् । मांजारीं द्विभुजां तस्य पूजयेद्भक्तिसंयुतः ॥१०॥ तत्र ध्यानं समाख्यामि गजवक्त्रं गजाननम् । एकहस्ते धृतांऽभोजं द्वितीयाऽऽलिंगितप्रियम् ॥११॥ कपोलौ मदसंस्रावयुक्तौ भ्रमरसंयुतौ। सदानंदमयं देवाश्चिंतयेद्गणनायकम् ॥१२॥ द्विभुजां शक्तिमुख्यां वै दक्षिणाऽऽलिंगितप्रियाम् । वामहस्तेन पद्मं सा बिभ्रतीं चिंतयेद् हृदि ॥१३॥ भक्ताभीष्टप्रदां पूर्णां सदानंदसमन्विताम् । मायां संसारदुःखानां नाशिनीं भक्तिकारिणाम् ॥१४॥ देवेशा ऊचुः । मांजारिका त्वया प्रोक्ता माया गणपतेः प्रिया । तस्याः स्वरूपगं ज्ञानं वद नो गुरुसत्तम ॥१५॥ भ्रूशुंड्युवाच । जारः सर्वत्र शब्दश्च व्यभिचार्यर्थवाचकः । सर्वेषु जारभावेषु मता नानार्थकारिणी ॥१६॥ तेषु पुरुषरूपेण स्थित आत्मा सदैककः । तस्य जारादिकं नास्ति भ्रांतिभावात्मकं कदा ॥१७॥ तथापि देहसंस्थश्च माययात्मा प्रमोहितः । द्वंद्वभावेषु देवेंद्रास्तदाकारो बभूव ह ॥१८॥ आत्मनो जारभावं तु दर्शयंती निरंतरम् । मोहयित्वा क्रीडति तेन स्वयं शक्तिरुत्तमा ॥१९॥ मांजारी सा समाख्याता मां प्रति जारदर्शिनी । गणपः क्रीडति द्वंद्वविहारस्थः सदा तया ॥२०॥ तयोः पुत्रौ मानसिकौ लक्ष्मीनारायणौ मतौ । समीपे संस्थितौ तत्र द्वारे धर्मप्रदायकौ ॥२१॥ तेषां पूजनकं कार्यं यथाविधि सुरेश्वराः । तेन धर्मस्य भवति संप्राप्तिस्तस्य शाश्वती ॥२२॥ विधिं तत्र प्रवक्ष्यामि यात्रायाः सर्वदायकम् । देवेशास्तादृशं कार्यं तेन सिद्धिमवाप्स्यथ ॥२३॥ मासे भाद्रपदे चैव शुक्लपक्षे विशेषतः । प्रतिपद्दिनमारभ्य द्वारयात्रा प्रकीर्तिता ॥२४॥ प्रातः स्नात्वा महानद्यां गणेशं प्रतिपूजयेत् । ततः स्नानं नरः कृत्वा द्वारदेवीं समर्चयेत् ॥२५॥ पुनः स्नानं ततः कृत्वा

गणेशं पूजयेत् स्वयम् । उपोषणयुतश्चैव सदा तिष्ठेत् स देवपाः ॥२६॥ नियमस्थः स्वभावेन गणेशस्मरणादिकम् । कुर्यात्तद्वत् द्वितीयायां दक्षिणद्वारमर्चयेत् ॥२७॥ तत्र द्वारे गणेशानो द्विभुजः परिकीर्तितः । माया च द्विभुजा प्रोक्ता पूर्ववत् ध्यानगावुभौ ॥२८॥ विरजा नाम विख्याता शक्तिस्तत्र महेश्वराः । तस्य ज्ञानकरं चैवार्थं वदामि सुखप्रदम् ॥२९॥ त्रिविधं तु रूजोरूपं मलिनं सर्वगं बभौ । तत्र मोहविहीनं यद्विरजं ब्रह्म कथ्यते ॥३०॥ गणेशसंयुता देवी तन्मयी विरजा परा । तयोर्मानसिकौ पुत्रौ पार्वतीशंकरौ मतौ ॥३१॥ तेषां पूजा प्रकर्तव्या नरेण सर्वभावतः । तया सर्वार्थसंसिद्धिर्लभ्यते नात्र संशयः ॥३२॥ तृतीयायां ततो वै स पश्चिमद्वारदेवताम् । पूजयेद्विधिसंयुक्त उपोषणपरायणः ॥३३॥ देवीगणेश्वरौ तत्र पूर्वं ध्यानात्मकौ स्थितौ । आश्रया नाम शक्तिः सा सर्वाश्रयधरा बभौ ॥३४॥ तयोर्मानसिकौ पुत्रौ रतिकामौ प्रकीर्तितौ । तेषां पूजां प्रकुर्यात् स तेन कामान् लभेन्नरः ॥३५॥ ततश्चतुर्थिकायां स गच्छेदुत्तरगां पराम् । द्वारशक्तिं महादेवा भक्तिमुक्तिसमन्विताम् ॥३६॥ देव्या गणेश्वरस्यात्र ध्यानं पूर्ववदुच्यते । तयोर्मानसिकौ पुत्रौ महीवराहकौ मतौ ॥३७॥ तेषां पूजा प्रकर्तव्या पूर्ववन्नियमेन च । तया मुक्तिमवाप्नोति यात्रामात्रेण मानवः ॥३८॥ चतुर्थ्यां गणनाथं स पूजयेद्विधिसंयुतः । मध्याह्नसमये देवा उपोषणपरायणाः ॥३९॥ रात्रौ जागरणं कुर्यात् पंचम्यां पारणं चरेत् । द्विजैः सह नरः साक्षाच्चतुर्विधफलं लभेत् ॥४०॥ एवं माघे शुक्लपक्षे द्वारयात्रां समाचरेत् । ज्येष्ठे मासि तथा देवा वार्षिकं त्रिविधं स्मृतम् ॥४१॥ अथवा प्रतिमासेषु शुक्लपक्षे समाचरेत् । द्वारयात्रामथो नित्यं नरः सर्वार्थसिद्धिभाक् ॥४२॥ अथवा गणराजस्य यात्रार्थं यः समागतः । तस्मिन् काले चरेद्यात्रां द्वारभूतां महेश्वराः ॥४३॥ न तत्र नियमः प्रोक्तो मासपक्षतिथिष्वपि । चतुर्भिर्दिवसैर्जंतुः कुर्याद्यात्रां विधानतः ॥४४॥ अन्यच्च संप्रवक्ष्यामि द्वारयात्रामयं विधिम् । देहसामर्थ्ययुक्तानां चतुर्विधफलप्रदम् ॥४५॥ शुक्ला चतुर्थिका प्रोक्ता तस्यां द्वारमयीं चरेत् । यात्रां चतुर्विधां प्रोक्तामेकवासरमध्यतः ॥४६॥ सूर्योदयात् समारभ्य पूजां स्वल्पां समाचरेत् । यावन्नास्तगतो भानुस्तावन्मध्ये समापयेत् ॥४७॥ किंचिद्दिवसशेषे स गणनाथस्य पूजनम् । विधियुक्तं नरो भक्त्या कुर्यात्तस्मिन् दिने स्वयम् ॥४८॥ अथवा स्वेच्छया कोऽपि यात्रार्थं तु समागतः । तत्रैकदिवसे यात्रां प्रकुर्याच्छक्तिभावतः ॥४९॥ वृद्धानां रोगयुक्तानां नियमो नैव विद्यते । बालानां स्वेच्छया तत्र यात्रा प्रोक्ता मनीषिभिः ॥५०॥ अथवा ब्राह्मणेनैव नरो यात्रां समाचरेत् । द्वाररूपां स्वयं तत्र वाहनस्थो गतिं चरेत् ॥५१॥

शक्त्याः प्रमाणभावेन पूजयेत् द्वारसंयुतम् । गणेशं विधिसंयुक्तश्चतुर्विधफलं लभेत् ॥५२॥ गणेशं द्वारसंयुक्तं यो नरः पूजयेत् कदा । यत्र तत्र गतश्चाऽसौ धर्मकामार्थमोक्षभाक् ॥५३॥ न तस्य मरणे देवा या मतिः सा गतिर्भवेत् । न भूम्यादिविकारश्च नीचोचो नैव विद्यते ॥५४॥ एतत् द्वारस्य माहात्म्यं यः शृणोति नरोत्तमः । स वै संस्कारयोगेन भुक्तिं मुक्तिं लभेत् पराम् ॥५५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विकटचरिते मयूरेशद्वारयात्राविधिवर्णनं नाम नवमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ पंचदेवा ऊचुः । क्षेत्रस्य मानसंभूतं माहात्म्यं वद विस्तरात् । कियन्मानं समाख्यातं क्षेत्रं स्वानंद-वाचकम् ॥१॥ अन्यच्च वद योगींद्र धर्मकामार्थमोक्षगान् । अर्थान् येनैव तेषां स ज्ञानयुक्तो भवेन्नरः ॥२॥ पूर्वस्थे तु कथं द्वारे धर्म एकः प्रतिष्ठति । तथाऽर्थो दक्षिणद्वारि पश्चिमे काम एव च ॥३॥ उत्तरद्वारसंस्था तु कथं मुक्तिर्महामुने । चतुर्ब्रह्मसु चत्वारि विभक्तानि कथं वद ॥४॥ आदौ शाक्तं साधयित्वा पश्चात् सौरं लभेन्नरः । ततो वैष्णवकं ब्रह्म ततः शैवं समाधिना ॥५॥ ततो गाणेश्वरं ब्रह्म प्रलभेन्नात्र संशयः । क्रमेण योगभूमिस्थो ब्रह्मभूतो नरो भवेत् ॥६॥ अत्रादौ वैष्णवं ब्रह्म द्वारभूतं नरोत्तमः । यात्रामार्गेण विप्रेश साधयेत् कथितं त्वया ॥७॥ ततः शैवं ततः शाक्तं ततः सौरं विधानतः । विपरीतं कथं प्रोक्तं वद कारणमत्र तु ॥८॥ शक्तिसूर्यावतिक्रम्य कथं वैष्णवगो भवेत् । अकस्माद् भ्रांतभावेन भ्रष्टो भवति मानवः ॥९॥ शक्तिरुवाच । एवं पृष्टो महायोगी भ्रूशुंडी परमार्थवित् । जगाद तान् महादेवान् तच्छृणुध्वं तु शक्तयः ॥१०॥ भ्रूशुंडयुवाच । धर्मः स्वधर्मरूपश्च सर्वसिद्धिप्रदायकः । अर्थः समर्थरूपाख्यो ज्ञातव्यः सर्वदायकः ॥११॥ कामः शरीरभोगाख्यो हृद्यः सौख्यप्रदायकः । मुक्तिश्चतुः शरीरेभ्यो हीनत्वे परिकीर्तिता ॥१२॥ धर्मः सर्वसमानाख्यो यथा भवति सर्वदा । कर्मानुसारभावेन फलं नित्यं ददाति सः ॥१३॥ स्वं परं नैव देवेशाः कदा धर्मस्य वर्तते । शुभाशुभं

कृतं येन तादृशं स फलं लभेत् ॥१४॥ समानं वैष्णवं ब्रह्म तेन धर्मः स्थितोऽभवत् । पूर्वद्वारे महाभागाः सर्वधर्मप्रकाशकाः ॥१५॥ आदौ स्वधर्मनिष्ठश्चेत्ततः सर्वं नरोत्तमः । लभते नात्र संदेहः कारणं धर्म एव च ॥१६॥ विष्णोरंगमयो धर्मो विष्णुद्वारे समाश्रितः । अतः प्रथमधर्मार्थं पूर्वद्वारं समाचरेत् ॥१७॥ अर्थः समर्थरूपाख्य ईश्वरान्न परोत्तमः । समर्थस्तेन देवेंद्रा अर्थस्तत्र समाश्रितः ॥१८॥ समर्थभावेन यदि केऽपि तिष्ठंति देवताः । ते सर्वे तत्कालांशाश्च ज्ञातव्या नाऽत्र संशयः ॥१९॥ ईश्वरः सर्वशास्त्रेषु शिव एकः प्रकीर्तितः । अर्थः शिवांगात् संभूतस्तेन तं संश्रितोऽभवत् ॥२०॥ धर्मं कृत्वा समर्थश्च भवते मानवोत्तमः । सर्वकार्येषु देवेंद्राः क्रम एवं प्रकीर्तितः ॥२१॥ द्वितीयाश्रितयात्रातो दक्षिणद्वारसंभवा । कथिता सर्वभावज्ञैर्नरेभ्यः सर्वसिद्धये ॥२२॥ कामो भोगात्मकः प्रोक्तो देहाय विषयप्रदः । विषयानां समाख्यातं कारणं शक्तिरंजसा ॥२३॥ शक्तेरंगात् समुद्भूतः कामस्तेन महेश्वराः । तामाश्रित्य स्थितः सोऽपि सर्वकामविवर्धनः ॥२४॥ आदौ धर्मं समाश्रित्य समर्थो जायते नरः । ततः कामान् स्वयं भुंक्ते सर्वान्नानासुखप्रदान् ॥२५॥ तृतीयं द्वारमेतस्मात् कामभोगफलप्रदम् । कृतं यात्राविधाने तु ज्ञातव्यं विबुधैः सदा ॥२६॥ मोक्षो जन्ममृतिभ्यां च हीनः संकीर्तितो बुधैः । शुक्लां गतिं ददत्तत्र सूर्यस्तिष्ठति नित्यदा ॥२७॥ आत्मा सूर्य इति प्रोक्तं तस्मान् मोक्षः प्रलभ्यते । तेन सूर्यं समाश्रित्य मोक्षस्तत्रैव तिष्ठति ॥२८॥ कामेभ्यो धर्मसंयुक्तस्तृप्तो भवति मानवः । इच्छेन् मुक्तिं ततो यत्नाद्वितृष्णो देवसत्तमाः ॥२९॥ वासनायुक्तभावेन मुक्तौ नैव प्रवर्तते । अतो मुक्तिमयं द्वारं चतुर्थं परिकीर्तितम् ॥३०॥ एतद् द्वारस्य देवेशा रहस्यं कथितं मया । श्रवणात् सौख्यदं पूर्णं भवेत पठनात्तथा ॥३१॥ एतत् क्रमार्थप्रामाण्यात् पूर्वं धर्मसमाश्रितम् । वैष्णवं तत्र कर्तव्यं द्वारं विघ्नेशनिर्मितम् ॥३२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते द्वाररहस्यवर्णनं नाम दशमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ भ्रूशुंड्युवाच । चतुरस्रं गणेशस्य क्षेत्रं शास्त्रे प्रकीर्तितम् । ब्रह्मभूतमयं साक्षादेकं द्वादशयोजनम् ॥१॥ गणेशात् पूर्वदिग्देशे शतं च धनुषां स्थितम् । द्वारमष्टाविंशतिकं तत्रार्धेन विहीनकम् ॥२॥ दक्षिणस्यां गणेशानाद् द्विगुणं द्वारमुत्तमम् । पूर्वद्वाराच संप्रोक्तं ज्ञातव्यं विबुधैः सदा ॥३॥ ततः पश्चिमदिग्भागे गणेशाद् द्वारमुत्तमम् । द्विगुणं दक्षिणांगात्तु किंचिन्न्यूनं बुधैः पुरा ॥४॥ गणेशादुत्तरे भागे परं द्वारं च संस्थितम् । पश्चिमात् पादहीनं तदधिकं किंचिदंजसा ॥५॥ एतावान् क्षेत्रविस्तारः कथितो देवसत्तमाः । नवखंडाद्विभिन्नं तु क्षेत्रं गाणेश्वरं मतम् ॥६ ॥ क्षेत्राणि प्रलयेषु श्रेष्ठानि दैवतसत्तमाः । प्रगच्छंति लयं नैव रक्षितानि स्वदैवतैः ॥७॥ महाप्रलयवेलयां तत्त्वानि त्रिगुणैः सह । लयं गच्छंति वेगेन कालस्य परमात्मनः ॥८॥ तदा क्षेत्राणि सर्वाणि स्वस्वदेवयुतानि च । लयं गच्छंति देवेशा निश्चितं योगिभिः पुरा ॥९॥ महाप्रलयकाले तु गाणेशं क्षेत्रमीदृशम् । नाशहीनं प्रभावेण परं तिष्ठति सर्वदा ॥१०॥ देवेशा ऊचुः । क्षरं क्षेत्रमिदं वाक्यं कथितं वेदवादिभिः । कथं नाशविहीनं तद्वद योगींद्रसत्तम ॥११॥ स्वानंदः सर्वसंयोगे जायते नाऽत्र संशयः । क्षेत्रस्याख्या कथं प्राप्ता स्वानंदस्य वद प्रभो ॥१२॥ भ्रूशुंड्युवाच । क्षेत्रं गाणेश्वरं शास्त्रे सर्वमान्यं न विद्यते । ब्रह्मणस्पतिक्षेत्रत्वात् ब्रह्मरूपं च तत् स्मृतम् ॥१३॥ यथा स्वानंदरूपश्च स्वसंवेद्यात्मकः स्मृतः । तथा स्वानंदक्षेत्रं तु ब्रह्माकारं प्रकीर्तितम् ॥१४॥ देहः सगुणरूपस्तु निर्गुणं तस्य मस्तकम् । तयोर्योगे यथा देहस्तथा क्षेत्रं प्रकीर्तितम् ॥१५॥ भ्रांतिरूपा स्वयं सिद्धिर्देहधात्री बभूव ह । भ्रांतिधारकरूपा च बुद्धिः क्षेत्रं तथा स्मृतम् ॥१६॥ संगहीनतया सर्वं स्त्रीपुंभावसुखं स्मृतम् । गणेशसिद्धिबुद्धीनां तथा क्षेत्रं प्रकीर्तितम् ॥१७॥ बहुनाऽत्र किमुक्तेन गणेशस्य किमप्यहो । क्षेत्रादिकं ब्रह्ममयं प्राकृतं नैव विद्यते ॥१८॥ यत्किंचिद्गणराजस्य तत्तद्ब्रह्मप्रवाचकम् । लोकादिकं मुनींद्रैश्च ब्रह्मणस्पतिरुच्यते ॥१९॥ गणेशक्षेत्रसंभूतानि क्षेत्राणि समंततः । तत्रैव मरणे देवाः फलदानि भवंति च ॥२०॥ धर्मार्थकाममोक्षाणां प्रदानि कथितानि तु । गाणेशं पंचमं ब्रह्म ब्रह्मभूतपदप्रदम् ॥२१॥ ततो द्वारस्य यात्रायां धर्मार्थकाममुक्तयः । संस्थितास्तत्र लभ्यंते यात्राकारिजनैः पराः ॥२२॥ क्षेत्रे मरणतो देवाश्चतुर्भिर्वर्जितो भवेत् । नरः सद्यस्तु संस्काराद्ब्रह्मभूतो न संशयः ॥२३॥ सुरासुरमयं क्षेत्रं गाणेशं ब्रह्मवाचकम् । साक्षात् कृतं शिवाद्यैश्च क्षेत्रं दैवं ततः स्मृतम् ॥२४॥ कमलमस्तकस्थत्वात् पश्चादासुरकं स्मृतम् । तयोर्योगे स्वसंवेद्यं सर्वादौ तत् प्रकथ्यते ॥२५॥ यदैकद्वारयात्रां यः करोति च

चतुर्षु सः। आप्नुयात्तद्ध्रुवं सौख्यं मानवो यत्र कुत्रगः ॥२६॥ यस्मात् कस्मात् समायातः सकृद्यात्रां समाचरेत्। क्षेत्रस्य च गणेशस्य द्वारगां सर्वमाप्नुयात् ॥२७॥ यो नित्यं द्वारयात्रां स क्षेत्रसंस्थः समाचरेत्। वंद्यः क्षेत्रस्थलोकानामंते ब्रह्ममयो भवेत् ॥२८॥ ब्रह्मांडे न समं किंचिद्गणेशक्षेत्रकेण तु। चतुर्भिर्वर्जितं प्रोक्तं पंचमं तच्चतुर्मयम् ॥२९॥ बुधैर्गणेश्वरक्षेत्रं त्रिविधं परिकीर्तितम् । बाह्यांतरादिभेदैश्च श्रृणुत देवनायकाः ॥३०॥ गर्भागारं गणेशस्य वासगं योजनार्धकम्। बभुर्गणपतेश्चैवावतारास्तत्र संस्थिताः ॥३१॥ गाणेशा मुद्गलाद्या ये तत्र ते संस्थिता बभुः। सेवार्थं गणराजस्यान्ये जना भवनागताः ॥३२॥ तदेव चतुरस्रं तु चतुर्द्वारसुशोभितम् । भक्तेभ्यः सिद्धिदं पूर्णं मनोरथसुपूरकम् ॥३३॥ गणेशात् पूर्वदिग्भागे धनुषां च शतानि तु। षट्किंचिन्न्यूनमानानि द्वारं सर्वार्थदं मतम् ॥३४॥ तत्र बुद्धिः स्थिता साक्षाद्विद्याभिः सेविता स्वयम्। कलाभिः पूजयित्वा तां ज्ञानवान् पुरुषो भवेत् ॥३५॥ गणेशाद्दक्षिणे भागे द्विगुणं दूरगं भवेत्। पूर्वद्वाराद्दक्षिणगं द्वारं गर्भाश्रितं महत् ॥३६॥ तत्र प्रमोदकाद्याश्च गणा ब्रह्मसुखे रताः। संस्थिताः पूजनेनैव गाणपत्यपदप्रदाः ॥३७॥ गणेशात् पश्चिमे भागे द्वारं गर्भगृहस्य च। द्विगुणं दक्षिणद्वाराद् दूरगं परिकीर्तितम् ॥३८॥ तत्र सिद्धिः स्वयं देवाः संस्थिता पूजनेन तु। नाना सिद्धिसमायुक्ता नाना सिद्धिप्रदायिनी ॥३९॥ पादन्यूनेन मानेन पश्चिमद्वारतस्तथा। उत्तरद्वारमाख्यातं गणेशसंमुखे बुधैः ॥४०॥ तत्र देव्यश्चतुःषष्टियोगिन्यः संस्थिता बभुः। परिवारयुताः सर्वा योगसिद्धाश्च मातरः ॥४१॥ तासां पूजनमात्रेण योगं विद्यात् स मानवः। अंतर्धानादिकं नाना कामदं नात्र संशयः ॥४२॥ गर्भागारस्य यात्रां यो नित्यं कुर्यान्नरोत्तमः। अथवा तु चतुर्थ्यां वै सर्वकामार्थसिद्धये ॥४३॥ यात्रार्थं मानवो देवाः समागतो भवेद्यदा। तदा कुर्यादथो भक्त्या यात्रां गर्भगृहस्य च ॥४४॥ गर्भागारात् परं क्षेत्रं देवालयमिति श्रुतम्। तत्र देवादयः संति स्वर्गस्थाः सेवनोत्सुकाः ॥४५॥ त्रियोजनप्रमाणेन चतुरस्रं च तन्मनम् । द्वाराणि तस्य चत्वारि कथयामि समासतः ॥४६॥ गणेशात् पूर्वदिग्भागे किंचिन्न्यूनानि दूरतः। शतानि पूर्वद्वारं तु धनुषां हि चतुर्दश ॥४७॥ तत्र भैरवराजेंद्रो नग्नः सर्वभयंकरः। त्रिशूली मुक्तकेशश्चातिष्ठत् स्वतेजसान्वितः ॥४८॥ तस्य पूजनमात्रेण वाञ्छितं लभते नराः। यातनां न लभेत् सोऽपि नानाकर्मसमुद्भवाम् ॥४९॥ तस्माद् द्विगुणमानेन गणेशाद् दूरतः शिवः। नीलकंठश्च देवेशा दक्षिणद्वारपोऽभवत् ॥५०॥ तस्य पूजां प्रकुर्याद्यस्तया बंधनतो नरः। मुच्यते नात्र संदेहो विषबाधा-

विवर्जितः ॥५१॥ पश्चिमे विघ्नराजात्तु दक्षिणाद् द्विगुणे स्थितः। दूरे यः कृत्तिवासाः स द्वारदेवः प्रकीर्तितः ॥५२॥ तस्य पूजनमात्रेणाऽऽसुरं कर्म विनश्यति। ईप्सितं लभते चापि यात्रामात्रेण मानवः ॥५३॥ उत्तरे गणनाथाद्वै पश्चिमात् पादहीनतः। द्वाराद् द्वारं स्थितं देवास्तत्र भीमेश्वरः स्थितः ॥५४॥ तस्य यात्रां प्रकुर्याद्यः सद्यः सत्तासमन्वितः। भवेत् स मानवश्चारोग्यं लभेत निरंतरम् ॥५५॥ तृतीयक्षेत्ररूपं तु कथितं विस्तरान् मया। चतुर्द्वारयुतं पुण्यं मयूरं तन्मतं परम् ॥५६॥ क्षेत्रात् सर्वत्र देवेशा योजनं चतुरस्रगम्। देवक्षेत्रं समाख्यातं चतुर्विधपदप्रदम् ॥५७॥ क्षेत्रात् पूर्वविभागस्थो नरो गच्छेन् मृतः स्वयम्। विकुंठे नात्र संदेहस्तत् क्षेत्रं वैष्णवं यतः ॥५८॥ दक्षिणे क्षेत्ररूपात्तु मृतो योजनमध्यगः। स कैलासे वसेन्नूनं शैवं क्षेत्रं यतः स्मृतम् ॥५९॥ मयूरात् पश्चिमे क्षेत्राद्योजनस्थो मृतो भवेत्। शक्तिलोकं वसेत् सोऽपि शाक्तं क्षेत्रं च तत् स्मृतम् ॥६०॥ मयूरादुत्तरे देवा यो मृतो योजनस्थितः। स सौरं संवसेन्नित्यं सूर्यक्षेत्रं यतः स्मृतम् ॥६१॥ एवं क्षेत्रस्य माहात्म्यं प्रमाणसहितं मया। कथितं श्रवणाच्चैव पठनात् पापहारकम् ॥६२॥ तत्र गत्वा महेशाना पूजयेत गजाननम्। स्थापयित्वाऽचलां मूर्तिं सिद्धिं प्राप्स्यथ निश्चितम् ॥६३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते क्षेत्रप्रमाणवर्णनं नाम एकादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ देवा ऊचुः। पुरा कल्पे महाभाग मयूरे द्वारसंश्रिताम्। यात्रां कृत्वा नराः सिद्धिमलभंस्तद्वदस्व नः ॥१॥ देवभूमौ मृता ये वै तेषां सिद्धिं वदस्व च। एकद्वाराश्रितां यात्रां कृत्वा के सिद्धिमाप्नुयुः ॥२॥ श्रुत्वा कथां महारम्यां हर्षश्चेतसि वर्धते। सर्वज्ञोऽसि न संदेह आदिमध्यांतगस्तथा ॥३॥ भ्रूशुंड्युवाच। पुरा जातां कथां रम्यां शृणुध्वं देवसत्तमाः। स्वगुरुं मुद्गलं नत्वा कथयामि समासतः ॥४॥ द्राविडे ब्राह्मणः कश्चिद्विद्याहीनो बभूव ह। तत्रैवांत्यजजातिस्थो नरो मूढस्तथाऽभवत् ॥५॥ माता पिता तस्य हीनौ तथा त्यक्तौ सुहृज्जनैः। त्यक्त्वा स्वदेशभूमिं बभ्रमतुस्तौ महीतलम् ॥६॥ प्रसंगात्तु जनानां तौ मयूरे दैवयोगतः। समागतौ जनैर्युक्तौ तस्थतुस्तत्र हर्षतः ॥७॥ स्नात्वा प्रभातकाले तौ शमीदूर्वादलं

तथा । गृह्य विघ्नेशपूजार्थं जग्मतुः स्नेहभावतः ॥८॥ अंत्यजेन स्वकीया च प्रदत्ता ब्राह्मणाय तु । पूजा दूर्वादिसंयुक्ता गणेशार्थं स्वधर्मतः ॥९॥ ब्राह्मणो गणराजं तं पूजयामास भावतः । विधिमंत्रैर्विहीनस्तु जलपत्रादिभिः परम् ॥१०॥ ततस्तौ जनसंघातैर्जग्मतुर्देवसत्तमाः । गर्भागारद्वारसंस्थां यात्रां चक्रतुरादरात् ॥११॥ पूर्वद्वारे समागम्य बुद्धिं संपूज्य तं पुनः । गणेशं पूजयित्वा तौ तस्थतुस्तत्र देवपाः ॥१२॥ उपोषणसमायुक्तौ विधानेन बभूवतुः । द्वितीये दिवसे यात्रां क्षुधितौ तौ न चक्रतुः ॥१३॥ यात्रां त्यक्त्वा गतौ हर्षात्त्यक्त्वा क्षेत्रं महाद्भुतम् । अकस्मात् ज्ञानसंयुक्तौ विद्यायुक्तौ बभूवतुः ॥१४॥ जातिस्मरौ विशेषेण विचारं चक्रतुः परम् । अहो वर्णयितुं क्षेत्रमाहात्म्यं न प्रशक्यते ॥१५॥ एकद्वारस्य यात्रा तु कृताऽऽवाभ्यां ततः परम् । ज्ञानं विद्यायुतं प्राप्तं संपूर्णां किं स्तुवः कृताम् ॥१६॥ ततः स्वनगरं गत्वा सर्वमान्यौ बभूवतुः । तेन संस्कारयोगेन गणेशभजने रतौ ॥१७॥ भक्तेर्बलेन तौ देवा अंते स्वानंदलोकगौ । तत्र विघ्नेश्वरं दृष्ट्वा ब्रह्मभूतौ बभूवतुः ॥१८॥ एवं नाना जना द्वारसिद्धिं तत्र प्रलेभिरे । न मया वर्णनं शक्यमन्यैर्वर्षशतैरपि ॥१९॥ अन्यद्वारेषु सर्वेषु यथोक्तफलभोगिनः । न संदेहो बभूवुः कथयितुं नैव शक्यते ॥२०॥ मयूरे ये मृताः क्षेत्रे तेषां सिद्धिं वदाम्यहम् । देवमुख्याश्च शृणुत सर्वसंतोषवर्धिनीम् ॥२१॥ पुरा शूद्रः समायातः कश्चिद्दैववशेन तु । कुष्ठरोगसमायुक्तो मयूरे धूम्रनामकः ॥२२॥ तत्रोच्छिष्टादिकं भुंजन् भिक्षायां निरतोऽभवत् । मासमध्ये मृतः सोऽपि भृशं रोगेण पीडितः ॥२३॥ स स्वानंदं समाश्रित्य ब्रह्मभूतो बभूव ह । एवं नाना जनाः क्षेत्रे ब्रह्मभूता मयूरके ॥२४॥ तेषां न शक्यते वक्तुं चरित्रं देवसत्तमाः । यथोक्तफलभोक्तारो बभूवुर्नात्र संशयः ॥२५॥ तत्र क्षेत्रस्थिता देवा नराः पापपरायणाः । मृता क्षेत्रे यदा तेषां भयं यमकृतं न हि ॥२६॥ नग्नभैरवनामाऽसौ कथितः क्षेत्रपालकः । दंडधारक एवं तु सदा मायूरवासिनाम् ॥२७॥ तस्याधीनं समग्रं तु क्षेत्रं वैनायकं परम् । शुद्धं कृत्वा नरं दंड्यं स्वानंदे स्थापकोऽभवत् ॥२८॥ देवेशा ऊचुः । कोऽसौ नग्नस्वरूपेण भैरवः सर्वभैरवः । कीदृशी यातना विप्र मयूरे पापकारिणाम् ॥२९॥ भृशुंडयुवाच । मायासंगविहीनोऽयं सदा साक्षिवदुच्यते । तेन नग्न इति ख्यातो गाणपत्याग्रणीः परः ॥३०॥ यस्माद्भीतानि तत्त्वानि जगत् संवर्तयंति तु । ब्रह्मा सृष्टिकरो देवा विष्णुः पाता च तद्भयात् ॥३१॥ हरः संहारकारी च सूर्यस्तपति नित्यदा । संमोहधारिणी शक्तिः सदा भवति तद्भयात् ॥३२॥ इत्यादि सकलं तस्माद्भीतं स्वस्वपदे स्थितम् । स्वस्वकर्मकरं प्रोक्तं तेन भैरवकः स्मृतः ॥३३॥ मायया

गणराजेन सृष्टः सर्वार्थदायकः । गाणेशानां न संदेह इतरेषां भयंकरः ॥३४॥ गर्भागारं गणेशस्य रहस्यं रूपमुच्यते । अतस्तत्रैव देवेशाः स्थातव्यं यत्नतः सदा ॥३५॥ तत्र पूजादिकं कार्यं सत्कर्मादिकमुत्तमम् । न तत्रानृतकामादिकर्तव्यं मानवेन च ॥३६॥ न च मूत्रमलत्यागः कर्तव्यस्तत्र देवपाः । सदा गाणेशभावेन स्थातव्यं मानवैः सदा ॥३७॥ क्षेत्रे पुण्यं यथा प्रोक्तमधिकं ह्यन्यदेशतः । तथा तत्र कृतं पापमधिकं भवतीत्यहो ॥३८॥ अतः क्षेत्रेषु पापानि नाचरेत्तु नरोत्तमः । यथाशास्त्रं विधानेन पुण्यं तेषु समाचरेत् ॥३९॥ अन्यक्षेत्रेषु पापं यत् कृतं नश्यति तत्क्षणात् । क्षेत्रेषु पंचदेवानां ब्रह्मादिपदगेषु वै ॥४०॥ नरैस्तेषु कृतं पापं मयूरे नश्यति क्षणात् । मयूरे यत् कृतं पापं वज्रलेपं तु तत् स्मृतम् ॥४१॥ विधिं तत्र प्रवक्ष्यामि शृणुत देवसत्तमाः । येन संशयहीनाश्च भविष्यथ विचारतः ॥४२॥ मयूरे यत् कृतं पापं देवालये विनश्यति । देवालये कृतं चैतद्गर्भागारे लयं व्रजेत् ॥४३॥ गर्भागारे कृतं पापं द्वारयात्राबलेन च । नश्यत्यत्र न संदेहः प्रदक्षिणविधानतः ॥ ४४॥ द्वारयात्राकृतं पापं वज्रलेपमयं भवेत् । तदेव यातनां दत्त्वा नरस्य नाशमेष्यति ॥४५॥ यदा जन्मादि प्रारभ्य मरणांतं समाचरेत् । पापं मयूरक्षेत्रे स यातनां प्रलभेन्नरः ॥४६॥ दशवर्षसहस्राणि नग्नभैरवनायकः । भैरवीं यातनां दत्त्वा शुद्धं करोति मानवम् ॥४७॥ यातना त्रिविधा तस्य भैरवस्य महात्मनः । कथयामि समासेन तां शृणुध्वं महेश्वराः ॥४८॥ अग्निकुंडादिकं तत्र संस्थितं भैरवस्थले । याम्याल्लक्षाधिकं प्रोक्तमुग्रं वक्तुं न शक्यते ॥४९॥ आदावेव स तां दत्त्वा पश्चाद् यमसमां प्रभुः । ददाति यातनां घोरां भैरवो भयदायकः ॥५०॥ ततो भूतपिशाचादि संभूतां प्रददाति सः । ततः शुद्धं नरं कृत्वा स्वानंदे स्थापयिष्यति ॥५१॥ चत्वारिंशत्सहस्राणि भैरवीं यातनां स्वयम् । ददाति तु ततो याम्यां त्रीणि साहस्रकाणि हि ॥५२॥ ततस्त्रीणि सहस्राणि पैशाचीयोनिसंभवाम् । ददाति क्रोधसंयुक्तो नग्नः शूलधरः प्रभुः ॥५३॥ एवं सर्वं समाख्यातं यातनाजं महद्भयम् । यथा मयूरक्षेत्रस्थो नरो विंद्यान् मृतः परम् ॥५४॥ पापरूपा नरा ये वै गाणेशे संस्थिताः खलाः । तान् स्वयं भैरवाधीशो बहिः कुर्याद्भयप्रदः ॥५५॥ पुण्यशीलान् हृदिस्थश्च समानाय्य महेश्वराः । भैरवः क्षेत्रगान् कृत्वा रक्षेद्वै नित्यमादरात् ॥५६॥ मयूरक्षेत्रसंस्था ये क्षेत्रसंन्यासधारकाः । न तेषां दुःखलेशश्च भवेद्देवेंद्रसत्तमाः ॥५७ ॥ लक्ष्म्या नारायणस्तान् वै धर्मयुक्तान् करोति सः । पार्वत्या शंकरस्तद्वन्नानार्थान् संददाति वै ॥५८॥ रत्या कामः स्वयं तेभ्यो नाना कामान् ददाति हि । भूम्या वराहकश्चैव ज्ञानं ददाति शाश्वतम् ॥५९॥ अतः सर्वं परित्यज्य

मयूरं तत् समाश्रयेत् । सुहृद्भिस्तं तु देवेशा ब्रह्मभूतं वदंति हि ॥६०॥ नानायोनिगतो जंतुस्तत्र स्त्रीपुत्रसंयुतः । देहपोषणसक्तश्च बभूवे देवसत्तमाः ॥६१॥ नरदेहं समाश्रित्य गाणेशक्षेत्रगो यदि । न भवेत् स सदा ज्ञेयो रासभैस्तुल्यभावगः ॥६२॥ पंचमं ब्रह्मरूपं यत्तदेव भूमिगं मतम् । क्षेत्ररूपेण तद्ये वै न सेवंते समाः पशोः ॥६३॥ स्वर्गेषु देवमुख्याश्चेच्छंति मानवदेहकम् । गत्वा मयूरक्षेत्रे तु मरिष्यामः सुभाग्यतः ॥६४॥ तत्रैव मरणे ब्रह्म प्राप्यते पंचमं परम् । धर्मार्थकाममोक्षास्तु यदिच्छंति परात्परम् ॥६५॥ काश्यादिक्षेत्रमुख्येषु यत्कृतं सुकृतं नरैः । तेन संस्कार-योगेन मयूरं लभ्यते परम् ॥६६॥ इति सर्वं समाख्यातं वासरूपं विशेषतः । पठनाच्छ्रवणान्नित्यं क्षेत्रवासफलप्रदम् ॥६७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते मयूरक्षेत्रवासशुभाशुभवर्णनं नाम द्वादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ देवा ऊचुः । कथं गणेशक्षेत्रस्य नाम जातं मयूरकम् । एतत् कौतूहलं ब्रूहि भ्रुशुंडिन् परमार्थद ॥१॥ भ्रुशुंड्युवाच । पुरा कल्पे महेशाना भवद्भिस्तत्र विघ्नपः । आराधितः स वै साक्षाद्वरदस्तान् समाययौ ॥२॥ मयूरवाहनो भूत्वा दशहस्तो दशायुधः । लंबोदरो गजमुखः प्रसन्नात्मा महेश्वरः ॥३॥ उवाच तान् वृणुध्वं मे वरांश्च मनसीप्सितान् । दास्यामि तपसा तुष्टो भक्त्या स्तोत्रादिना परान् ॥४॥ तैर्मानसेप्सितं सर्वं वृत्तं तस्माद्गजाननात् । पुनस्तं ते गणाध्यक्षमूचुः प्रांजलयोऽमराः ॥५॥ मूषको वाहनं तेऽभून् मयूरध्वज चाधुना । मयूरारूढ एव त्वमागतोऽसि गजानन ॥६॥ अस्मिन् क्षेत्रे मयूरस्थो दृष्टस्त्वं गणनायक । अतो मयूरजन्माख्यं क्षेत्रं जातं त्वया कृतम् ॥७॥ अद्य प्रभृतिरेतत्तु क्षेत्रं मायूरनाम-कम् । भवेत्तत् सर्वविख्यातं त्वत्प्रसादाद्गजानन ॥८॥ मयूरक्षेत्रनाथस्त्वं मयूरेशो भव प्रभो । नाम्ना सर्वत्र विख्यातो भक्तानुग्रहकारकः ॥९॥ तथेति तानुवाचाथ गणेशोंऽतर्दधे स्वयम् । देवेशा अभवन्नत्वा स्वस्वकार्यपरायणाः ॥१०॥ एतद्वः सर्वमाख्यातं कारणं नामधारणे । क्षेत्रस्य क्षेत्रनाथस्यान्यच्छृणुध्वं महेश्वराः ॥११॥ चित्राकारा महामाया ह्यनंतखेलकारिणी । मयूरा सा समाख्याता मयूरेशस्तु तत्पतिः ॥१२॥ चतुर्ब्रह्ममयं क्षेत्रं मायारूपं मयूरकम् । विहारतस्तत्र देवा मयूरेशः

प्रकीर्तितः ॥१३॥ देवेशा ऊचुः । चतुर्भुजो गणाध्यक्षो मयूरे संस्थितोऽभवत् । कथं दशभुजः सोऽपि बभूव वद योगिप ॥१४॥ भ्रूशुंड्युवाच । भूस्वानंदमयं क्षेत्रमेकं सर्वादिसंमतम् । गाणेशं तत्र देवेशा न चित्रं किंचिदंजसा ॥१५॥ एकाक्षरभवं ध्यानं प्रथमं परिकीर्तितम् । सर्वादौ तत् सुविख्यातं क्षेत्रसंस्थं बभूव ह ॥१६॥ सप्तकोट्यो महामंत्रा गणेशस्य महात्मनः । सर्वे मयूरक्षेत्रे ते कल्पभेदे स्थिता बभुः ॥१७॥ अनंतरूपधारी स हिताय गणपोऽभवत् । लोकानां तानि सर्वाणि मयूरे संभवति हि ॥१८॥ मयूरक्षेत्रगश्चैव गणेशो भक्तकारणात् । नानाक्षेत्रस्य भावेन तिष्ठति कलयाऽमरः ॥१९॥ अतः सर्वाणि रूपाणि गाणेशानि विशेषतः । मायूरे संस्थितान्येव मूलभूते महेश्वराः ॥२०॥ शक्तिरुवाच । भ्रूशुंडिवचनं श्रुत्वा हर्षयुक्ताः सुरेश्वराः । ऊचुस्तं प्रणिपत्यादौ भक्तिनम्रात्मकंधराः ॥२१॥ ब्रह्माद्या ऊचुः । दंडकारण्यदेशो तु गणेशस्य महात्मनः । क्षेत्रं मुख्यं कथं जातं तन्नो वद महामुने ॥२२॥ भ्रूशुंड्युवाच । स्वस्वकर्मकृतं देवास्तस्य दंडः प्रकीर्तितः । शुभाशुभमयः शास्त्रे नरैर्भोक्तव्य एव च ॥२३॥ दंडानां नाशकं पूर्णं तेनारण्यं प्रकीर्तितम् । शून्यवत् सर्वशास्त्रेष्वरण्यं तत्कथ्यते बुधैः ॥२४॥ ब्रह्मभूय-पदं पूर्णं परं चादंडवाचकम् । दंडकारण्यकं तेन नाम तस्य विशेषतः ॥२५॥ दंडकारण्यगे देवो ब्रह्मभूतमयः परः । गणेशो वेदवादेष्वदंडिनां स हितावहः ॥२६॥ अदंडिनश्च योगींद्राः कथिताः शुकमुख्यकाः । योगेशो ब्रह्मणां नाथो गणेशस्तत्र राजति ॥२७॥ इतिहासं प्रवक्ष्यामि पुरा वृत्तं सुरेश्वराः । सृष्टान्यरण्यमुख्यानि ब्रह्मणा कार्यसिद्धये ॥२८॥ दंडकारण्यकं तेषु गणेशं लालसं सदा । उवाच वेधसं नत्वा कृत्वा करपुटं पुरा ॥२९॥ दंडकारण्यमुवाच । ब्रह्मभूयप्रदं देवं भजिष्यामि पितामह । तदर्थं मंत्रराजं मे देहि सर्वज्ञ मुख्यक ॥३०॥ ब्रह्मोवाच । गणेशं भज भावेन ब्रह्मभूतः स वै स्मृतः । समूहानां प्रभुः पूर्णः समूहा ब्रह्मवाचकाः ॥३१॥ स्वानंदनगरं यस्य सिद्धिर्बुद्धिः प्रिये परे । लक्षलाभौ सुतौ प्रोक्तौ वाहनं मूषकः परः ॥३२॥ गजाननमयो यस्य देहश्च नररूपधृक् । सर्वं ब्रह्ममयं तेन ब्रह्मणस्पतिरुच्यते ॥३३॥ एवमुक्त्वा ददौ तस्मै मंत्रमेकाक्षरं परम् । तं नमस्कृत्य तत्रैव जगाम तपसे स्वयम् ॥३४॥ दिव्यवर्षसहस्रेण ज्ञानं गाणेशकं परम् । लब्ध्वाऽरण्यं महादेवस्ततो भक्तिं चकार ह ॥३५॥ तद्ययौ गणराजस्तु प्रसन्नो भक्तवत्सलः । जगाद वृणु ते चित्ते स्थितं वरमरण्यक ॥३६॥ तं दृष्ट्वा दंडकारण्यं समुत्थाय ननाम तु । पूज्यं स्तोतुं गणाधीशं चक्रमे तत्कृतांजलिः ॥३७॥ दंडकारण्यमुवाच । नमस्ते गजवक्त्राय गणेशाय महोदर । ब्रह्मणे ब्रह्मपालाय विघ्नेशाय नमो नमः ॥३८॥ । हेरंबाय चतुर्बाहुधराय कंजपाणये ।

पाशांकुशधरायैव परेशाय नमो नमः ॥३९॥ अनादये च सर्वेषामादिरूपाय ते नमः । ज्येष्ठानां ज्येष्ठरूपाय ज्येष्ठाय वै नमो नमः ॥४०॥ स्वानंदवासिने तुभ्यं सिद्धिबुद्धिवराय च । सिद्धिबुद्धिप्रदात्रे ते मूषकध्वजिने नमः ॥४१॥ मूषकोपरिसंस्थाय गणेशाय परात्मने । नानामायाप्रचालाय मयूरेशाय ते नमः ॥४२॥ नायकानां विशेषेण नायकाय विनायक । नायकैर्वर्जितायैव नायकत्वप्रदायिने ॥४३॥ विघ्नेशाय महाविघ्नधारिणे सर्वदायिने । पददात्रे तथा हंत्रे विघ्नेशैस्ते नमो नमः ॥४४॥ अमेयशक्तये तुभ्यं सर्वपूज्याय ते नमः । किं स्तौमि त्वां गणाधीश योगाकारस्वरूपिणम् ॥४५॥ अधुना वरदोऽसि त्वं तदा मे नाम सार्थकम् । कुरु नित्यं वस स्वामिन् मम देहे गजानन ॥४६॥ भक्तिं देहि त्वदीयां मे सदा ब्रह्मप्रकाशिनीम् । तेनाऽहं कृतकृत्यश्च भविष्यामि गजानन ॥४७॥ एवमुक्त्वा गणेशानं प्रणनाम कृतांजलिः । भक्तिभावसमायुक्तं तञ्जगाद गजाननः ॥४८॥ श्रीगजानन उवाच । त्वया कृतमिदं स्तोत्रं मदीयं सर्वसिद्धिदम् । भविष्यति महारण्य भुक्तिमुक्तिप्रदं परम् ॥४९॥ त्वयोक्तं सफलं सर्वं भविष्यति सदा प्रियम् । मामेव सर्वभावेन भजिष्यसि न संशयः ॥५०॥ नानावनारवांश्चैव त्वद्देहस्थोऽहमंजसा । भविष्यामि गणेशोक्त्वांऽनर्दधे देवसत्तमाः ॥५१॥ अतो गणेशक्षेत्रं तु दंडकारण्यमुत्तमम् । सकलं तत्र सेवार्थं देवास्तस्य समाययुः ॥५२॥ तेषां क्षेत्राणि देवेशा दंडकारण्यगानि तु । तेषु स्थिता विशेषेण भजंते गणनायकम् ॥५३॥ सर्वेष्वरण्यदेशेषु गणेशः प्रतितिष्ठति । दंडकारण्यमध्ये स विशेषेणावतारकृत् ॥५४॥ दंडकारण्यकं सर्वं गणेशक्षेत्रमुच्यते । मयूरक्षेत्रं तन्मध्ये भिन्नं स्वानंदवाचकम् ॥५५॥ ब्रह्माद्या ऊचुः । धन्योऽसि योगिनां मध्ये सर्वसंशयनाशकः । श्रुत्वा त्वद्वदनांभोजात्न तृप्यामः कथामृतम् ॥५६॥ अधुना कृपया विप्र द्वारयात्रां विधानतः । वद क्षेत्रस्य त्रिविधामितिहासयुतां प्रभो ॥५७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विघ्नराजचरिते मयूरेशनामदंडकारण्यवरप्रदानवर्णनं नाम त्रयोदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ भृशुंड्युवाच । पुराकल्पभवां सर्वां कथयामि कथां पराम् । संक्षेपेण महाभागाः शृणुध्वं भक्तिसंयुताः ॥१॥ काचिद्विप्रस्य भार्या तु पीडिता दुर्जनैः पुरा । सा सतीभावरक्षार्थं यत्नयुक्ता बभूव ह ॥२॥ वने पतिविहीना सा तानुवाच महाखलान् । अद्य प्रारभ्य वक्ष्याहि पंचमे स्त्री भवाम्यहम् ॥३॥ सत्यं वाक्यं न संदेहो गच्छध्वं वनवासिनः । एवमुक्ता गताश्चौरा हर्षिताः स्वगृहं ततः ॥४॥ सा वने शोकसंयुक्ता विचारमकरोत्तदा । यज्ञार्थं यजमानस्य भर्ता मे संगतोऽभवत् ॥५॥ करोमि किं समीपस्थं गच्छामि च मयूरकम् । तत्र धर्मस्य संस्थानं वर्तते नाऽत्र संशयः ॥६॥ यात्रामात्रेण तत्रैव स्वस्वधर्मः प्रलभ्यते । एवं विचार्य सा देवी मयूरेशं जगाम ह ॥७॥ स्नात्वा गणेशतीर्थे सा संपूज्य गणनायकम् । पूर्वद्वारस्थितां शक्तिं सर्वयुक्तां पुपूज ह ॥८॥ पुनश्चैव मयूरेशं पूजयित्वा विधानतः । सत्यसंपालनार्थाय स्वगृहं तत्क्षणाद्ययौ ॥९॥ ततस्ते वनगा दुष्टास्तां ययौ पंचमेऽहनि । सा सस्मार गणेशानं धर्मशक्तियुतं परम् ॥१०॥ तस्याः स्मरणमात्रेणाग्निस्तान् सर्वान् ददाह च । सा विस्मिता गणेशानममन्यत विशेषतः ॥११॥ मृता सा धर्मशक्तिस्थं गणेशं चिंत्य मानदा । विकुंठमगमत् सा वै विष्णुना मानिता भृशम् ॥१२॥ पुनः कल्पे मयूरे सा पतियुक्ता बभूव ह । ब्राह्मणी तं पुनर्भक्त्या सिषेवे धर्मतत्परा ॥१३॥ अंते स्वानंदगा चैव बभूवे देवनायिका । ब्रह्मभूता महाभक्त्या पत्या युक्ता महाद्भुतम् ॥१४॥ एवं नाना जनास्तत्र नाना वर्णसमुद्भवाः । नरा नार्यश्च देवेशा महासिद्धिं प्रलेभिरे ॥१५॥ अन्यच्च दक्षिणद्वारसंस्थां शृणुत चादरात् । येन संशयहीनाश्च भविष्यथ विशेषतः ॥१६॥ मद्रदेशमहीपालः शास्त्रज्ञो बलसंयुतः । बभूव सर्वनीतिज्ञः प्रजापालनलालसः ॥१७॥ कदा सामंतकैः सर्वैः पीडितोऽतितरां नृपः । न समर्थो बभूवैव तेषां निग्रहणे बलात् ॥१८॥ ततोऽतिशोकसंयुक्तो राज्यं त्यक्त्वा महामतिः । जगाम मुनिशार्दूलं शौनकं कर्मसिद्धये ॥१९॥ ज्ञात्वा वृत्तांतमेवं तु तस्य राज्ञश्च शौनकः । जगाद गच्छ राजेंद्र मयूरेशं सुसिद्धिदम् ॥२०॥ तत्र दक्षिणभागे तु द्वारमर्थात्मकं परम् । यात्रामात्रेण सर्वार्थदायकं तत् समाचर ॥२१॥ प्रणम्य भद्रसेनस्तं मयूरेशं समागतः । दक्षिणद्वारगां यात्रां चकार भक्तिसंयुतः ॥२२॥ पुनः स्वनगरं गत्वा स्मृत्वा विघ्नेश्वरं नृपः । जित्वा सर्वान् भद्रसेनः शत्रून् राज्यं चकार ह ॥२३॥ एवं यात्राविधानेन समर्थो जायते नरः । स्वस्वजातिभवं देवा अर्थं विंदति निश्चितम् ॥२४॥ ततः सोऽपि गणेशानं दक्षिणद्वारगं सदा । भुंजानो

भोगमभजन् मृतः कैलासगोऽभवत् ॥२५॥ पुनर्वैश्योऽभवत् सोऽपि मयूरे देवसत्तमाः । नित्यं गणेश्वरं देवमभजद्भक्तिसंयुतः ॥२६॥ अंते स्वानंदगो भूत्वा क्षेत्रे मरणतः स्वयम् । ब्रह्मभूतः स वैश्योऽपि नाम्ना मेघो बभूव ह ॥२७॥ एवं नाना जना देवा अर्थयुक्ता बभूविरे । तत्रैवं कति वो ब्रूयां शक्यते न मया क्वचित् ॥२८॥ अधुना पश्चिमद्वारसंभूतं कथयाम्यहम् । चरित्रं सर्वभावज्ञाः शृणुध्वं परमार्थदम् ॥२९॥ भारके नगरे रोगादिभिर्वैश्यः प्रपीडितः । दरिद्रो भोगहीनश्च सामो नाम्ना बभूव ह ॥३०॥ तेन स्कंदपुराणस्थं माहात्म्यं संश्रुतं कदा । स्वानंदक्षेत्रजं तेन विस्मितः प्रबभूव ह ॥३१॥ देवाः समागतो यात्रार्थं मयूरे पुरा स वै । यथाशास्त्रं विधानेन तीर्थदेवं पुपूज ह ॥३२॥ अतीव पीडितः सोऽपि रोगैस्तेन चकार ह । दारिद्र्येण तथा यात्रां पश्चिमद्वारसंस्थिनाम् ॥३३॥ ततो रोगविनिर्मुक्तो बभूवे हर्षसंयुतः । स्वगृहं पुनरागत्य वैश्यवृत्तिं चकार ह ॥३४॥ धनाढ्यः स बभूवाऽपि सर्वमान्यः सुरेश्वराः । पश्चिमद्वारसंयुक्तमभजद्गणनायकम् ॥३५॥ स्वगृहे भोगसंयुक्तो बुभुजे विविधान् रसान् । अंते जगाम शक्तेः स लोकं परमसौख्यदम् ॥३६॥ पुनः क्षेत्रे बभूवाऽपि ब्राह्मणो वेदपारगः । मयूरे गणनाथं स शिवशर्माऽभजत्परम् ॥३७॥ क्षेत्रसंन्यासभावेन मयूरेशं समाश्रितः । अंते स्वानंदगो भूत्वा ब्रह्मभूतो बभूव ह ॥३८॥ अथोत्तरभवां यात्रां शृणुध्वं देवसत्तमाः । कर्णाटे शूद्रजातिस्थो बभूवे भीमनामकः ॥३९॥ कदा श्रुत्वा पुराणं स खेदयुक्तो बभूव ह । व्यर्थं मायामयं सर्वं तत्त्यजाम्यहमादरात् ॥४०॥ मुक्तिः संपूर्णभावेन लभ्यते केन कर्मणा । तदेव साधनीयं वै मया मानवदेहिना ॥४१॥ ततो बभ्रामातिखेदसंयुक्तो यत्र तत्र ह । वने ददर्श शूद्रः स विश्वामित्रं तपोधनम् ॥४२॥ तं प्रणम्य स्थितस्तत्र बभौ तेनाऽपि सत्कृतः । पप्रच्छ मुक्तिदं मार्गं तं जगाद स हर्षितः ॥४३॥ विश्वामित्र उवाच । महाश्रमयुतैश्चैव सत्कर्मभिर्विशेषतः । अनेकजन्मसंभूतैर्नरो मुक्तिमवाप्नुयात् ॥४४॥ अतो गच्छ महाक्षेत्रे मयूरेशस्य शूद्रज । उत्तरद्वारगां यात्रां कुरु मुक्तिमवाप्स्यसि ॥४५॥ आयासेन विहीनस्तु मुक्तिं तत्रैवमाप्नुयाः । मा खेदं कुरु शूद्र त्वं गच्छ गच्छ ममाज्ञया ॥४६॥ भीमस्तं कौशिकं नत्वा मयूरेशं समाययौ । उत्तरद्वारगां यात्रां चकार विधिसंयुतः ॥४७॥ अत्यंतलोलुपत्वात् स मुक्तिद्वारं चकार ह । पुनः स्वगृहमागत्य चकार कर्म देहजम् ॥४८॥ स्वधर्मेण युतो नित्यं स्त्रीपुत्राद्यैः स संयुतः । त्रिवर्णस्थजनानां वै सेवां चकार हर्षितः ॥४९॥ मुक्तियुक्तं

गणेशानमभजन्नित्यमादरात्। अंते जगाम सूर्यस्य लोकं तेजोमयं परम् ॥५०॥ ततः क्रमेण शूद्रः स शुक्लगत्या महेश्वराः। मोक्षरूपो बभूवाऽपि क्षेत्रयात्राप्रभावतः ॥५१॥ एवं नानाविधास्तत्र मुक्तिं प्राप्ता विशेषतः। तेषां मया चरित्रं यत्तद्वक्तुं न प्रशक्यते ॥५२॥ अथ देवेश्वराः पूर्णां यात्रां द्वारसमाश्रिताम्। कथयामि भवत्प्रीत्या सर्वसिद्धिप्रदायिनीम् ॥५३॥ मालवेंऽत्यजजातिस्थो बभूवे दुंदुभिस्वनः। नाम्ना ख्यातश्च पापात्मा विचचार महीतलम् ॥५४॥ द्रव्यलोभी नरादींश्च हत्वा कोटरगोऽभवत्। मुमोच ब्राह्मणं सोऽपि न गां वा पापनिश्चयः ॥५५॥ कदाचिन् मार्गगः कश्चिद्वैश्यो द्रव्यसमन्वितः। मालवाद्दंडकारण्यं जगाम क्रयकारणात् ॥५६॥ स दृष्ट्वा द्रव्यसंयुक्तं महामार्गसमाश्रितम्। नाना जनैश्च संकीर्णं तमनु प्रययौ खलः ॥५७॥ वैश्यं क्रमेण देवेशा मयूरेशं समागतम्। अनु तं सोऽपि दुर्बुद्धिरायथौ दुंदुभिस्वनः ॥५८॥ स वैश्यो गणनाथस्य यात्रायां निरतोऽभवत्। अंत्यजोऽपि तथा तत्र यात्रां तेन चकार ह ॥५९॥ चतुर्द्वाराणि कृत्वा तु संस्थिता विविधा जनाः। चांडालस्तत्र मायूरे तद्वत्तस्थौ स वै खलः ॥६०॥ ततस्तस्य च दुर्बुद्धेर्बुद्धिभेदो बभूव ह। विचारमकरोच्चित्ते स स्वयं दुंदुभिस्वनः ॥६१॥ अहो मयाऽतिमूर्खेण पापं नानाविधं कृतम्। का गतिर्मरणे मे तु भविष्यति सुदारुणा ॥६२॥ ततो वैश्यं प्रणम्यैव गतः स्वस्थानमादरात्। स्वधर्मसंयुतो भूत्वा चकार कर्म देहजम् ॥६३॥ पूर्वद्वारजपुण्येन स्वधर्माचार-संयुतः। दक्षिणद्वारजेनैव सत्तायुक्तो बभूव ह ॥६४॥ पश्चिमद्वारपुण्येन रोगाद्यभिविवर्जितः। धनाढ्यो विविधान् भोगान् बुभुजेऽसौ सुहृद्वृतः ॥६५॥ उत्तरद्वारजेनैव यात्रायाः फलरूपिणा। महामोक्षं शुक्लगत्यांऽत्यजो लेभे महेश्वराः ॥६६॥ न शक्यते मया वक्तुं चरित्रं द्वारकारिणाम्। नानावर्णाश्रमे संस्थाश्चतुर्वर्गयुता बभुः ॥६७॥ नारीनरः पशुस्थश्च जीवस्तत्र समागतः। द्वारयात्रां तु कुर्यात् स चतुर्विधं फलं लभेत् ॥६८॥ इति द्वारस्य यात्रायाश्चरितं संश्रृणोति चेत्। पठति तस्य सर्वं तु सफलं कर्म संभवेत् ॥६९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विकटचरिते द्वारयात्रावर्णनं नाम चतुर्दशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ भृशुंडयुवाच । देवालयस्य द्वाराणि चत्वारि कथितानि च । तेषां चरित्रकं देवाः कथयामि सुसेविनाम् ॥१॥ बभूव शूद्रजातिस्थो गुर्जरे मानवः खलः । नाम्ना शंभुरिति ख्यातो द्रव्ययुक्तः सुहृत्प्रियः ॥२॥ स सायाह्ने जगामैव किंचित् कार्यार्थमादरात् । ग्रामाद्बहिश्च तत्राऽपि प्रेतैः संवेष्टितोऽभवत् ॥३॥ दृष्ट्वा प्रेतान् महोग्रान् स भयभीतो बभूव ह । ततस्तं विविशुः सर्वे प्रेताः परमदारुणाः ॥४॥ तत्रैव पतितः शूद्रस्तदर्थं सुहृदस्ततः । समाययुस्तं संगृह्य स्वगृहं प्रययुः खलम् ॥५॥ ततः पिशाचतुल्यः स विचचार महीतलम् । तदर्थं सुहृदः सर्वेऽभवन् यत्नपरायणाः ॥६॥ तथाऽपि तं महाप्रेता मुमुचुर्न कदाचन । तत्तत् क्षेत्राणि तीर्थानि बभ्रमुस्तेन संयुताः ॥७॥ तदपि प्रेतराजास्तं मुमुचुर्न प्रतापतः । सुहृदस्तेन संयुक्ता महत् क्षेत्रं समाययुः ॥८॥ मयूरेशं समभ्यर्च्य शंभुं गृह्य सुहृज्जनाः । जग्मुस्ते भैरवं देवं नग्नरूपधरं परम् ॥९॥ दर्शनेन महेशाना भैरवस्य महात्मनः । प्रेतास्त्यक्त्वा ययुः सर्वे शंभुं भीता न संशयः ॥१०॥ स्वस्थप्रकृतिगं दृष्ट्वा विस्मिताः सुहृदोऽखिलाः । पुनर्विघ्नेशमापूज्य ययुः स्वनगरं ततः ॥११॥ नग्नभैरवदेवस्य दर्शनेन महेश्वराः । पिशाच-प्रेतदोषेभ्यो मुक्तः संजायते नरः ॥१२॥ ग्रहभूतादिजा नाना पीडादोषा भवंति न । कदाचिदपि देवेशा नग्नभैरवदर्शनात् ॥१३॥ नाना जना महाक्षेत्रे तं प्रणम्य विधानतः । यात्रामात्रेण दोषैश्च बभूवुर्वर्जिताः पुरा ॥१४॥ न वक्तुं शक्यते तत्र मया वर्षशतैरपि । संक्षेपेण ततो देवाः कथितं तस्य चेष्टितम् ॥१५॥ अथ दक्षिणद्वारस्य चरित्रं कथयामि वः । तत्र देवेश्वरः साक्षान्नीलकंठः स्थितोऽभवत् ॥१६॥ गणेशानं समाराध्य पपौ विषं समुद्रजम् । महोग्रं शंकरो देवः सर्वभस्मकरं परम् ॥१७॥ यस्य स्पर्शेन विष्णुश्च श्यामरूपो बभूव ह । विषयुक्तः पपाताऽसौ गर्वयुक्तप्रभावतः ॥१८॥ गणेशस्मरणं कृत्वा विषहीनो बभूव ह । महाविष्णुः शिवेनैवोपदिष्टः परवीरहा ॥१९॥ गणेशकृपया तत्तु विषं पीतं महात्मना । शंकरेण ततो दाहसंयुक्तः स बभूव ह ॥२०॥ मयूरेशेति संस्मृत्य दाहहीनो बभूव ह । सकृच्छीतलदेहः स मयूरेशं समाययौ ॥२१॥ तत्रैव संस्थितः सोऽपि नीलकंठो महेश्वरः । सेवार्थं गणराजस्य धाराधीशो बभूव ह ॥२२॥ तं प्रणम्य जनाः सर्वे विषहीना भवंति ते । इतिहासं वदाम्यत्र शृणुध्वं परमेश्वराः ॥२३॥ दंडकारण्यदेशस्थः कश्चित्तु क्षत्रियोऽभवत् । सुलोचन इति ख्यातो नानाशास्त्रविशारदः ॥२४॥ तेन भूपेन राजानो जिताः शस्त्रबलेन वै । निस्तेजसः पुनस्तं ते शरणं जग्मुराहताः ॥२५॥ तमुग्रदंडकर्तारं ज्ञात्वा सर्वे नृपास्ततः । विषबाधां ददुस्तस्मै किंचिच्छद्मबलेन वै ॥२६॥ स्वयं व्याकुल-

चित्तः सन् ज्ञात्वा विषभवां व्यथाम्। स जगाम मयूरेशं प्रधानैस्तत्क्षणान्नृपः ॥२७॥ उद्देशेन गणेशस्य महद्विषं महेश्वराः। स्तंभितं स ततो राजा क्षेत्रे समागतोऽभवत् ॥२८॥ तावद्विषेण भूपालः पीडितोऽतितरां किल। देहचेष्टाविहीनः स बभूवे देवसन्निधौ ॥२९॥ प्रधानास्तं प्रगृह्यैव यात्रां चक्रुर्यथाविधि। देवालयस्य द्वारस्थां दक्षिणे नीलकंठजाम् ॥३०॥ नीलकंठं प्रपूज्यैव तस्य तीर्थं स्वमस्तके। राजा वंद्य महेशानं विषहीनो बभूव ह ॥३१॥ ततो विघ्नेश्वरं राजा पूज्य स्वस्था-नगोऽभवत्। सुलोचनः शशासैव धरां संदंड्य दुर्जनान् ॥३२॥ एवं यात्राविधानेन विषहीनो नराधिपः। नीलकंठसमायुक्तं गणेशमभजत् परम् ॥३३॥ अंते कैलासगो राजा बुभुजे विविधं सुखम्। पुनश्च ब्राह्मणो जातः क्षेत्रे मायूरसंज्ञिते ॥३४॥ तत्रैव गणराजं स सदा भक्तिपरायणः। अभजद्धर्मशीलश्च नाम्ना ख्यातो महेश्वराः ॥३५॥ एवमंते जगामाऽसौ स्वानंदे गणपं परम्। ब्राह्मणो ब्रह्मभूतो वै बभूव परमद्युतिः ॥३६॥ एवं नाना जनास्तत्र नीलकंठं प्रदृश्य वै। सिद्धिं प्राप्ता महेशाना मया वक्तुं न शक्यते ॥३७॥ अधुना पश्चिमद्वारसंस्थं माहात्म्यमुत्तमम्। कथयामि महेशाना देवागारस्य सिद्धिदम् ॥३८॥ महिषासुरपुत्रश्च बभूव ह गजासुरः। तेन त्रैलोक्यगं सर्वं पीडितं सचराचरम् ॥३९॥ अजेयः सर्वभूतानां महाबलयुतो सुरः। कर्मखंडनभावेनापीडयत् सकलामरान् ॥४०॥ ततश्च शोकसंयुक्तो शंकरश्च मयूरगः। पूजयामास विघ्नेशं ततो दैत्यं जघान ह ॥४१॥ ततः क्षेत्रं समाश्रित्य संस्थितः पार्वतीपतिः। गणेशेन कृतः सोऽपि द्वाराधीशो महेश्वरः ॥४२॥ कृत्तिवासाः स्वयं शंभुर्देवागारस्य मानदः। पश्चिमद्वारसंस्थोऽभूद्भजतां भावपूरकः ॥४३॥ अत्रेतिहासं मुख्यं यत् संक्षेपेण वदाम्यहम्। श्रृणुध्वं सर्वपापघ्नं गणेशे भक्तिदायकम् ॥४४॥ आंध्रदेशे द्विजः कश्चित् पापकर्मपरायणः। आसुरं धर्ममाश्रित्य दुर्विनीतो बभूव ह ॥४५॥ तदर्थं सुहृदः सर्वे नाना यत्नपरायणाः। हृदिस्थं राक्षसं वारयितुं शेकुर्न ते कदा ॥४६॥ तदाऽतिशोकसंयुक्ता ययुः कंचित्तपस्विनम्। तेनैव कथितः सर्ववृत्तांतो द्विजसंभवः ॥४७॥ तपस्वी उवाच। मलं त्यक्त्वा द्विजश्चायमकरोन्न कदा पुरा। शौचभ्रमयुतस्तत्र राक्षसः पिंगलो ययौ ॥४८॥ अपवित्रं द्विजं दृष्ट्वा ससार हृदि राक्षसः। करोति कर्म तेनाऽयमासुरं नित्यमादरात् ॥४९॥ अतः क्षेत्रे मयूरे वै कृत्तिवासोऽधरंगतः। द्वारयात्रा-विधानेन पूजयध्वमनेन तु ॥५०॥ तेनायं राक्षसो मुक्तो भविष्यति न संशयः। नान्यथाऽयुतवर्षैश्च समीचीनः कदाचन ॥५१॥ ततस्ते हर्षिताः सर्वे तं गृह्य क्षेत्रमाययुः। देवागारस्य यात्रां ते चक्रुः पश्चिमद्वारगाम् ॥५२॥ कृत्तिवाससमभ्यर्च्य

द्विजः सद्यश्च देवपाः। रक्षोहीनो बभूवाऽपि स्वधर्मसहितोऽभवत् ॥५३॥ ततः स्वगृहमागत्य गणेशमभजद् द्विजः। कृत्तिवासः समायुक्तमंते कैलासगोऽभवत् ॥५४॥ पुनः स ब्राह्मणो भूत्वा मयूरेशं समाश्रितः। क्षेत्रसंन्यासभावेनाऽभजत्तं नित्यमादरात् ॥५५॥ अंते गणपतौ सोऽपि ब्रह्मभूतो बभूव ह। एवं पश्चिमद्वारस्य माहात्म्यं कथितं मया ॥५६॥ नाना जना महेशानाः पश्चिमद्वारकारिणः। रक्षोभावविहीनाश्च बभूवुर्नाऽत्र संशयः ॥५७॥ अतः परं प्रवक्ष्यामि देवागारस्य देवपाः। उत्तरद्वारसंयुक्तं चरित्रं सर्वकामदम् ॥५८॥ राक्षस्यां कुंभकर्णात्तु बभूवे राक्षसाधिपः। भीमः सर्वत्र शैवस्य मार्गध्वंसनकारकः ॥५९॥ तेन शैवा धृताः केचित् पुरा केचिच्च संहताः। ततः कदा द्विजः कोऽपि महापाशुपतो धृतः ॥६०॥ स उपोषणसंयुक्तः शिवं ध्यात्वा समास्थितः। कारागारे राक्षसस्य वधार्थं ह्युद्यतोऽभवत् ॥६१॥ हृदिस्थं शंकरं सोऽपि तं पुपूज विशेषतः ॥६२॥ शंकरः क्षुभितोऽत्यंतं भीमं हंतुं समाययौ। युद्धं कृत्वा स भीमेन ताडितस्तु पपाल ह ॥६३॥ समागत्य मयूरेशं प्रार्थयामास शंकरः। तं पूज्य प्रययौ तत्र जघान भीममुल्बणम् ॥६४॥ स एव भीमनाथस्तु स्थापितोऽभूद् द्विजैः पुरा। शैवास्तं हर्षसंयुक्ताः पुपूजुर्भक्तिभावनः ॥६५॥ ततः स भीमनाथस्तु मयूरे भक्तिकारणात्। समागतो मयूरेशं पूजयामास नित्यदा ॥६६॥ द्वाराधीशं चकारैव गणेशस्तं महेश्वराः। देवागारस्य देवेशमुत्तरे भीमशंकरम् ॥६७॥ पूजयित्वाऽमरेशानं सत्तायुक्तो नरोऽभवत्। अत्रेतिहासमाद्यं यत् कथयामि समासतः ॥६८॥ दंडकारण्यदेशस्थो राजा परमधार्मिकः। उग्रसेन इति ख्यातः सर्वविद्याविशारदः ॥६९॥ बलहीनो महीपालो बभूव वायुदूषितः। जडवच्चेष्टया हीनः संस्थितो दुःखसंयुतः ॥७०॥ नानोपायांश्चकाराऽसौ शांतये वैद्यनायकैः। तथाऽपि रोगनिर्मुक्तो न बभूव नराधिपः ॥७१॥ ततोऽकस्मान् महादैत्यः सुखभोक्ता समागतः। बलात् सर्वं नरेंद्रस्य राज्यं जग्राह तत्क्षणात् ॥७२॥ ततोऽतिभय-संयुक्ताः प्रधानास्तं प्रगृह्य वै। मयूरेशं समायाताः पप्रच्छुर्जयदायकम् ॥७३॥ गाणेशैः क्षेत्रसंस्थैश्च कथितं द्वारसंभवम्। माहात्म्यं तच्च ते श्रुत्वा हर्षयुक्ता बभूविरे ॥७४॥ नृपं गृह्य प्रधानास्ते देवागारस्य चोत्तरे। द्वारयात्रां विधानेन चक्रुः परमभक्तितः ॥७५॥ ततो रोगविहीनस्तु राजा सत्तायुतोऽभवत्। गणेशं पूज्य सैन्येन युतः स्वनगरं ययौ ॥७६॥ देवं गणेशं स्मृत्वा युतं भीमेशेन भूमिपः। युयुधे तेन दैत्येन शस्त्रास्त्रैर्विविधैर्बलात् ॥७७॥ ततो दैत्यः समाक्रुद्धो मल्लयुद्धाय तं ययौ। राजा तं योधयामास स्मृत्वा विघ्नेश्वरं हृदि ॥७८॥ दैवी सत्ता समायाता राज्ञो देहे तयामरः। क्षीणशक्तिः

पपालैव सुखभोक्ता महाबलः ॥७९॥ चकार नगरं गत्वा स ततो राज्यमुत्तमम् । भीमेशसंयुतं नित्यमभजद्गणनायकम् ॥८०॥ अंते कैलासगो भूत्वा बुभुजे भोगमुत्तमम् । पुनर्मयूरक्षेत्रे च ब्राह्मणः स बभूव ह ॥८१॥ गाणेशानेन मार्गेणाभजत्तं गणनायकम् । अंते स्वानंदगः सोऽपि तल्लीनः प्रबभूव ह ॥८२॥ एवं नानाविधा देवाः सिद्धिं प्राप्ता विशेषतः । देवागारस्थ-भीमेशयात्रया नात्र संशयः ॥८३॥ अधुना पूर्णयात्राया देवालयस्य देवपाः । माहात्म्यं कथयामीह संक्षेपेण पुरा भवम् ॥८४॥ द्राविडे शूद्रजातिस्थो बभूव विषयप्रियः । नाम्ना कदा स्वकार्यार्थं मार्गसंस्थो बभूव ह ॥८५॥ तत्राशुचिस्वभावस्थं राक्षसः प्रविवेश तम् । तेनासुरस्वभावस्थः शूद्रो बभूव सर्वदा ॥८६॥ ततः पिशाचकैः सोऽपि धृतो हृदि विशेषतः । प्रविश्य चेष्टया हीनः कृतः पैशाचकोऽभवत् ॥८७॥ ततो वीर्यविहीनं तं नानारोगैः प्रपीडितम् । एतादृशं गृहीत्वा तु सुहृदो दुःखमाययुः ॥८८॥ विदुषा ब्राह्मणेनाऽपि सुहृदश्चोपदेशिताः । मयूरेशं समागम्य यात्रां चक्रुर्यथाविधि ॥८९॥ देवागारस्य संपूर्णां चतुर्द्वारसमन्विताम् । तत्र सर्पेण दष्टाश्च यात्रां चक्रुस्तथाऽपि ते ॥९०॥ नग्नभैरवदेवस्य पूजनेन पिशाचकाः । तं त्यक्त्वा प्रययुः सर्वे भयभीताः सुरेश्वराः ॥९१॥ नीलकंठं समालोक्य विषबाधा पपाल ह । कृत्तिवासः समालोक्य राक्षसः प्रययौ ततः ॥९२॥ भीमेशं पूजयित्वा तु वीर्ययुक्तो बभूव ह । ततो विघ्नेशमापूज्य स्वगृहं स जगाम ह ॥९३॥ विस्मितो मानसेऽत्यंतं सस्मार गणनायकम् । चतुर्द्वारयुतं तं सोऽभजद्भावसमन्वितः ॥९४॥ अंते शैवे समागम्य लोके भोगान् मनोगतान् । बुभुजे स पुनः क्षेत्रे मयूरे क्षत्रियोऽभवत् ॥९५॥ क्षेत्रसंन्याससंयुक्तोऽभजत्तं गणनायकम् । स्वानंदे ब्रह्मभूतः स बभूवांते सुरेश्वराः ॥९६॥ एवं नानाविधा लोका ययुः सिद्धिं महेश्वराः । देवागारस्य तत्रैव ब्रूयां कति तु यात्रया ॥९७॥ देवालयस्य यात्राया माहात्म्यं यः शृणोति चेत् । पठेद्वा तस्य विघ्नेशः प्रसन्नो भवति प्रभुः ॥९८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विघ्नराजचरिते देवागारद्वारयात्रामाहात्म्यवर्णनं नाम पंचदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ भ्रूशुंड्युवाच । गर्भालयस्य यात्राया माहात्म्यं कथयाम्यहम् । शृणुध्वं भाग्यसंयुक्ता देवेशास्तत् समासतः ॥१॥ मूर्खः कोऽपि पुरा विप्रो वंगदेशे बभूव ह । विष्णुदत्त इति ख्यातः पशुतुल्यः स्वभावतः ॥२॥ तं दृष्ट्वा पितरौ तस्य काश्यपौ दुःखसंयुतौ । कश्यपं जग्मतुस्तेन श्रुतो वृत्तांत उल्बणः ॥३॥ गर्भागारस्य माहात्म्यं कथयामास कश्यपः । पूर्वद्वारभवं तौ तं प्रणम्य ययतुर्गृहम् ॥४॥ पुत्रं गृह्य मयूरेशं जग्मतुर्भक्तिसंयुतौ । यात्रां पुत्रेण संयुक्तौ चक्रतुः परमादरात् ॥५॥ गर्भालयस्य पूर्वस्थद्वारगां बुद्धिमालभत् । संपूज्य स महाविद्यां ज्ञानयुक्तो बभूव ह ॥६॥ ततो हर्षसमायुक्तौ पितरौ तं प्रगृह्य च । स्वाश्रमं जग्मतुर्देवा विस्मितौ पुत्रचेष्टया ॥७॥ ततो बुद्धियुतं देवं गणेशमभजन् परम् । अंते कैलाससंस्थं तं गणपं जग्मुरादरात् ॥८॥ तत्रैव विविधान् भोगान् पुनर्भुक्त्वा महेश्वराः । मयूरे ब्राह्मणाः क्षेत्रे बभूवुः शीलसंयुताः ॥९॥ तत्र विघ्नेश्वरं नित्यमभजन् भक्तिभावतः । अंते स्वानंदगा भूत्वा ब्रह्मभूता बभूविरे ॥१०॥ एवं नाना जना देवाः सिद्धिं प्राप्ता मयूरके । गर्भागारस्य पूर्वद्वारस्थयात्राविधानतः ॥११॥ तत्र वक्तुं महादेवाः शक्यते न कदाचन । अतः संक्षेपतः प्रोक्तं पूर्वद्वारयशोऽमलम् ॥१२॥ अधुना दक्षिणद्वारयात्रामाहात्म्यमुत्तमम् । गर्भागारस्य वक्ष्यामि शृणुध्वं चैकचेतसः ॥१३॥ काश्मीरे शूद्रजात्यां कः पापकर्मा बभूव च । देवालयं समालोक्याभजद्देवान् सुदारुणः ॥१४॥ कदा वैश्यं समालोक्य द्रव्ययुक्तं प्रलोभतः । तमनुप्रययौ दुष्टः प्रहंतुं खड्गधारकः ॥१५॥ वैश्योऽपि यत्नमास्थाय सार्थयुक्तो बभूव ह । तथापि पापकर्मा तं न मुमोच कदाचन ॥१६॥ वैश्यः समागतः सार्थैर्जनैः क्षेत्रे मयूरके । शूद्रस्तत्र समायातो जिघांसुर्भाग्यगौरवात् ॥१७॥ तत्र यात्रां चकाराऽसौ वैश्यो भावसमन्वितः । शूद्रः स्वयं स्थितश्चैव यात्राहीनः खलात्मवान् ॥१८॥ द्वितीये दिवसे सर्वे दक्षिणद्वारगां पराम् । यात्रां चक्रुस्ततः शूद्रस्तेषामनुययौ खलः ॥१९॥ गर्भागारस्थितान् पूज्य दक्षिणद्वारपान् जनाः । प्रमोदाद्यास्ततः सर्वे पुरो जग्मुर्महेश्वराः ॥२०॥ शूद्रस्तत्र समासीनः पुनः स्वस्थानमाययौ । गणेशं पूज्य पापात्मा पुण्यवान् स बभूव ह ॥२१॥ विचारमकरोच्चित्ते मया पापानि नित्यशः । अहो कृतानि तान्येव पीडयिष्यंति मां किल ॥२२॥ अहो देवालये देवा मया संखंडिता मुधा । जनाः संपूजयंतस्तान् किं कृतं पापरूपिणा ॥२३॥ एवं विचार्य स्वस्थाने त्यक्त्वा वैश्यं जगाम ह । काश्मीरममरान् सर्वान्‌भजद्भक्तिसंयुतः ॥२४॥ अंते जगाम कैलासे गणेशं भक्तिसंयुतः । अभजत् स पुनर्देवान् मयूरे वैश्यजोऽभवत् ॥२५॥

गणेश्वरं तत्र देवं क्षेत्रसंन्यासमार्गतः । अभजच्चांतकाले स तद्देहे लीनतां ययौ ॥२६॥ नानाविधा जना एवं ययुः सिद्धिं सुरेश्वराः । तत्र वक्तुं न शक्यं तु मया भवति नित्यशः ॥२७॥ अतः परं प्रवक्ष्यामि पश्चिमद्वारसंश्रितम् । माहात्म्यं यत् पुरा जातं गर्भागारस्य सौख्यदम् ॥२८॥ विदर्भे क्षत्रियः कश्चिद्राज्यहीनो बभूव ह । सुदासः सर्वशास्त्रज्ञः क्षत्रियो पीडितो भृशम् ॥२९॥ वनं गत्वा स राजर्षिः शोकयुक्तो बभूव ह । तत्राऽऽजगाम देवर्षिर्नारदः परमार्थवित् ॥३०॥ राज्ञा संपूजितो योगी हर्षयंश्च जगाद तम् । गच्छ क्षेत्रे मयूरे त्वं ततः सिद्धिमवाप्स्यसि ॥३१॥ गर्भागारस्य राजेंद्र पश्चिमद्वारसंश्रिताम् । सिंद्धिं पूज्य महाराजो भविष्यसि यथा पुरा ॥३२॥ एवमुक्त्वा नारदश्च विघ्नेशं संस्मरन् ययौ । राजा तथा चकाराऽसौ भक्तियुक्तेन चेतसा ॥३३॥ गर्भागारस्य यात्रां स चकार विधिसंयुतः । पश्चिमद्वारगामेकां तत-स्तत्रैव संस्थितः ॥३४॥ कौडिन्यनगरे राजा सुबाहुः पीडितोऽभवत् । शूलेन दारुणेनैव मृत्युरूपेण देवपाः ॥३५॥ रात्रौ स्वप्ने महाभीमं पुरुषं स ददर्श ह । तेन संताडितोऽत्यंतं मुमूर्छ भयसंयुतः ॥३६॥ पुनः संज्ञायुतं भूपमुवाच पुरुषः परः । राज्यं देहि सुदासाय विदर्भदेशसंभवम् ॥३७॥ मरिष्यसि न चेद्राजन् सकुलो नात्र संशयः । मयूरेशं समाश्रित्य स्थितं गच्छाधुना खल ॥३८॥ ततः पुरुषरूपं तं न ददर्श महीपतिः । शूलहीनो बभूवाऽसौ तं जगाम सुदासकम् ॥३९॥ विदर्भदेशगं राज्यं तं प्रणम्य ददौ परम् । स्वराज्यं स जगामैव वैरमुत्सृज्य देवपाः ॥४०॥ राजा सिद्धियुतं नित्यम-भजद्गणनायकम् । अंते कैलासगः सोऽपि बभूवे कामनायुतः ॥४१॥ पुनः स ब्राह्मणो जातो मयूरे वर्मसंयुतः । गणेश्वरं तत्र नित्यमभजद्भक्तिसंयुतः ॥४२॥ अंते जगाम स्वानंदे गणेशं गणपप्रियः । ब्रह्मभूतोऽभवत्तत्र क्षेत्रवासप्रभावतः ॥४३॥ एवं नाना जनाः सिद्धिं पश्चिमद्वारतो ययुः । यात्रामात्रेण गर्भागारस्य कति वदाम्यहम् ॥४४॥ अथोत्तरस्थितं द्वारं गर्भागारस्य मानदाः । चरित्रं तस्य वक्ष्यामि श्रवणात् सर्वसौख्यदम् ॥४५॥ पांचालदेशगः कश्चिद्वैश्यो विषयलंपटः । न बुबोध गतं कालं द्रव्ययुक्तः स्वभावतः ॥४६॥ स्त्रीमांसमदिरासक्तो बभूवे नित्यमादरात् । एकदा तत्र देशे तु परचक्रा-द्भयं परम् ॥४७॥ त्यक्त्वा स्वदेशं वैश्यश्च पपाल सकुटुंबकः । आययौ दंडकारण्यं निवासार्थं भयातुरः ॥४८॥ तत्र मार्गस्थभावेन क्षेत्रं प्राप्तं मयूरकम् । तद्दिने पश्चिमद्वारयात्रां चक्रुर्जनाः पराम् ॥४९॥ द्वितीयेऽह्नि स वैश्यस्तु लज्जया संयुतोऽभवत् । उत्तरद्वारयात्रार्थमुद्यतोऽभूज्जनैः स्वयम् ॥५०॥ गणेशं पूजयित्वा स गर्भागारं जगाम ह । पुपूज तत्र

वैश्योऽपि चतुःषष्टिश्च योगिनीः ॥५१॥ ततः श्रमेण संयुक्तः पुनर्गणपतिं ययौ। पूजयित्वा जगामाऽसौ यथेष्टं विषयप्रियः ॥५२॥ ततो बुद्धिश्च वैश्यस्य विपरीता बभूव ह। तया युक्तो महेशाना विचारमकरोद् हृदि ॥५३॥ मया विषययुक्तेन कृतं कर्म भयावहम्। का गतिर्मरणे मे तु भविष्यति सुदारुणा ॥५४॥ अहो क्षेत्रस्य माहात्म्यं मया वक्तुं न शक्यते। विपरीता मतिर्जाता ममापि दुष्टचेतसः ॥५५॥ योगिनीनां दर्शनेन शुद्धचित्तो भवेन्नरः। योगप्रियस्तथाऽहं वै जातः सत्यं च शास्त्रगम् ॥५६॥ योगिनीसंयुतं ढुंढिं वैश्यः स्वधर्ममास्थितः। अभजन्नित्यमानंदान्निंदयन् विषयान् सदा ॥५७॥ अंते जगाम कैलासे गणेशे कामनायुतः। तत्र भुक्त्वा महाभोगान् पुनः पपात भूतलम् ॥५८॥ मयूरक्षेत्रगो भूत्वा क्षत्रियो धर्मसंयुतः। क्षेत्रसंन्यासभावेन विघ्नेशमभजत् सदा ॥५९॥ अंते विघ्नेश्वरः सोऽपि ब्रह्मभूतो बभूव ह। पूर्वसंस्कारभावेन योगसिद्धो महेश्वराः ॥६०॥ एवं नाना जनास्तत्र ययुः सिद्धिमनुत्तमाम्। तत्रैवं कति वो ब्रूयां संख्यातुं न प्रशक्यते ॥६१॥ अतः परं प्रवक्ष्यामि संपूर्णां तु महेश्वराः। गर्भागाराश्रितां यात्रां परां माहात्म्यसंयुताम् ॥६२॥ आत्रेयो ब्राह्मणः कश्चित् पुरा मूर्खो बभूव ह। पितरौ संमृतौ तस्याऽनाथो बभ्राम भूतले ॥६३॥ विषयेषु विशेषेण प्रीतियुक्तस्तथाऽमराः। भ्रमन् समागतः सोऽपि मयूरे दैवगौरवात् ॥६४॥ तत्र कश्चिद् द्विजः सुज्ञः सेवार्थं क्षेत्रगोऽभवत्। तं गृह्य ब्राह्मणो गर्भागारयात्रां चकार ह ॥६५॥ संसर्गेण द्विजस्याऽसौ यात्रां चकार दुष्टधीः। स्वयं विद्यानिधिर्जातो यथाऽन्ये ब्राह्मणास्तथा ॥६६॥ पूर्वद्वारं समालोक्य दक्षिणस्थं जगाम ह। तत्र मार्गे पपाताऽसौ तथापि द्वारगोऽभवत् ॥६७॥ प्रमोदादीन् समालोक्य विषये निःस्पृहोऽभवत्। पश्चिमे सिद्धिमालोक्य भाग्ययुक्तो महेश्वरः ॥६८॥ योगिनीस्तत आलोक्य पुण्यशीलो बभूव ह। एवं यात्रां सकृत् कृत्वा पुनः स्वगृहगोऽभवत् ॥६९॥ ततो द्विजं प्रणम्याऽसौ स्वदेशं तु जगाम ह। तं तादृशं विलोक्यैव विस्मिताः सुहृदोऽभवन् ॥७०॥ विवाहं कारयामासुः सुहृदस्तस्य धीमतः। स गणेशं विचिंत्यैवाऽभजद्गर्भाश्रितं तदा ॥७१॥ अंते कैलासगो भूत्वा गणेशं तत्र चाभजत्। भुक्त्वा भोगान् पपाताऽसौ मयूरे ब्राह्मणोऽभवत् ॥७२॥ गणेश्वरं तत्र देवा अभजन् नान्यचेतसा। अंते स्वानंदगः सोऽपि ब्रह्मभूतो बभूव ह ॥७३॥ मयूरे गर्भयात्रायां निरताः सकृदप्यहो। ययुस्ते सिद्धिमाद्यं कथयितुं न प्रशक्यते ॥७४॥ गर्भागारस्य माहात्म्यं शृणोति द्वारजं त्विदम्। पठेद्वा तस्य विघ्नेशो ददते चेप्सितं फलम् ॥७५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते गर्भागारयात्रामाहात्म्यवर्णनं नाम षोडशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शिवाद्या ऊचुः । एतादृशा महाभागाः कथं कैलासमाययुः । अंजसा सेव्य योगींद्र गणेशं वद कारणम् ॥१॥ भृशुंडयुवाच । सकामा गणराजस्य भक्ता ये देवसत्तमाः । अंतरे विषयेष्वेते संसक्ताः संभवंति च ॥२॥ न तेषां गणराजस्य स्वानंदे गतिरुच्यते । निष्कामानां पदं तद्वै भक्तानां जन्मनाशनम् ॥३॥ अतः कैलासगाः सर्वे गणेशं पूज्य योगिनः । बभूवुस्तत्र विघ्नेशमभजन्नान्यचेतसः ॥४॥ तदा कैलासनाथे ते स्वानंदं देवसत्तमाः । गमिष्यंति न संदेहः पुनरावृत्तिवर्जितम् ॥५॥ भुक्तिमुक्तिप्रिया ये वै कैलासात् संपतंति चेत् । ते पुनर्विघ्नराजं तं भजंते नान्यचेतसः ॥६॥ कैलासे गणपं गत्वा भोगयुक्ता भवंति ये । ते पुनर्मृत्युलोकेषु पतंत्यत्र न संशयः ॥७॥ ब्रह्मभूता भवंत्यंते स्वानंदस्था महेश्वराः । गणेशेनैव रचितं क्रीडार्थं तत्तथाऽभवत् ॥८॥ अधुना क्षेत्रबाह्या वै देवभूमिः प्रकीर्तिता । तस्या माहात्म्यमुख्यं यत् कथयामि समासतः ॥९॥ दंडकारण्यदेशस्थः शूद्रः कश्चिद्बभूव ह । दारिद्र्यदोषसंयुक्तो बभ्राम वसुधातले ॥१०॥ क्षुधया पीडितोऽत्यंतं ज्वरयुक्तो बभूव ह । स पूर्वद्वारबाह्यायां देवभूम्यां ममार ह ॥११॥ संगृह्य वैष्णवा देवा विमानेन गणा नरम् । विकुंठे स्थापयामासुः शूद्रं क्षेत्रप्रभावतः ॥१२॥ पूर्वद्वारात् समारभ्य योजनं वैष्णवं मतम् । तत्र सिद्धिं ययुः केचिद्वक्तुं शक्यं न वै भवेत् ॥१३॥ अन्यच्च देवदेवशाः शृणुध्वं दक्षिणे भवम् । चरित्रं शिवभावाख्यं द्वारात् संक्षेपतः परम् ॥१४॥ ब्राह्मणस्तत्र संभूतो जगाम वृत्तिकारणात् । तस्मात् समागतः सोऽपि श्रमयुक्तोऽभवत् परम् ॥१५॥ ममाराह्नि द्वितीये स सद्यः कैलासगोऽभवत् । माहात्म्याद्देवभूम्यास्तु शैव्याः क्षेत्रान् महेश्वराः ॥१६॥ अथ पश्चिमभागात्तु द्वाराच्छाक्तं मतं परम् । क्षेत्रं योजनमात्रं तु तस्य वक्ष्यामि चेष्टितम् ॥१७॥ चांडालः कोऽपि देवेशा विदर्भादागतोऽभवत् । कार्यार्थं ज्वरयुक्तश्च बभूवाऽतीव पीडितः ॥१८॥ ममार पंचमे देवा दिवसे दैवगौरवात् । शक्तिलोकं जगामाऽसौ माहात्म्याच्छाक्तसंभवात् ॥१९॥ अथोत्तरभवं चित्रं चरित्रं शृणुत प्रियाः । सौरलोकप्रदं पूर्णं क्षेत्रादुत्तरभागतः ॥२०॥ भिल्लः कश्चिन् महाभागाः कदा कार्यार्थमाययौ । दष्टः सर्पेण तत्रैव ममार भाग्यगौरवात् ॥२१॥ सौरं लोकं समाश्रित्य मुमुदे सोऽपि देवपाः । मयूरक्षेत्रद्वारात्तूत्तरे सौरप्रभावतः ॥२२॥ अनेकनार्य एवं च नरा वर्णाश्रमस्थिताः । भ्रष्टाश्चाऽपि महेशाना ययुः सिद्धिं विशेषतः ॥२३॥ तेषां चरित्रकं कैस्तु वक्तुमत्र न शक्यते । संक्षेपेण मया किंचित् कथितं पूर्वसंभवम् ॥२४॥ फलं मयूरक्षेत्रेऽपि मरणेनाऽधुना लभेत् । तस्य माहात्म्यमुख्यं यत्

कथयामि समासतः ॥२५॥ चांडालः कोऽपि पापात्मा परस्त्रीलालसोऽभवत् । आंध्रे वनं समाश्रित्य जघ्ने लोकान् समागतान् ॥२६॥ नानापापयुतो दुष्टो वर्णने न प्रशक्यते । ग्रंथबाहुल्यभावाद्वै परदोषप्रकीर्तनात् ॥२७॥ दुष्टो जगाम मायूरे सुहृज्जनयुतः कदा । भगिनीगृहसंस्थे स भागिनेयविवाहगः ॥२८॥ पापानि तस्य दुष्टस्य बहिः क्षेत्रात् स्थितानि च । पुनः प्रतीक्षयंते तं क्रोधयुक्तानि देवपाः ॥२९॥ नरं मयूरे पापानि यत्र कुत्र कृतानि वै । तं मुक्त्वा बहिरेवाऽपि प्रवेशात् संस्थितानि तु ॥३०॥ पुनर्यदि समायातमनु तं पापकानि तु । गच्छंति शुद्धरूपस्थं यत्र सोऽपि गमिष्यति ॥३१॥ कदाचित्तेन किंचिद्वै यदि पापं कृतं भवेत् । ततः पुनः प्रविश्याऽपि भुंजते तानि तं नरम् ॥३२॥ अतो मयूरक्षेत्रं वै न त्याज्यं देहधारिणा । पापप्रवेशहीनत्वात् सदा सेव्यं महेश्वराः ॥३३॥ यदा नरः समुद्युक्तो भवति स्वगृहात् कदा । मयूरेशं गमिष्यामि यात्रार्थं नात्र संशयः ॥३४॥ तदा पापानि तस्यैव विचारं कुर्वते परम् । महाभयकरो विघ्नः प्राप्तश्चास्माकमुल्बणः ॥३५॥ मयूरे यदि देही तु गमिष्यति तदा वयम् । स्थास्यामः कुत्र पापानि चरितुं विघ्नमुत्तमम् ॥३६॥ ततः पापानि सर्वाणि तं नरं यत्नभावतः । पीडयामासुरत्यंतं येन व्यग्रो नरो भवेत् ॥३७॥ द्रव्यहानिं तथा पुत्रं पुरं पशुगृहादिकम् । पापानि कुर्वते नाशसंयुक्तं देवसत्तमाः ॥३८॥ तेन संपीडितो धत्ते यात्रार्थं न मनोऽपि सः । अतः सर्वमनादृत्य मयूरेशं समाश्रयेत् ॥३९॥ कामं नानाविधान्येव पापानि कुरुतां सदा । अंते मयूरकं गच्छेत् किं करिष्यंति तानि तम् ॥४०॥ येन केन विचारेण मयूरे देवसत्तमाः । वासः सदा प्रकर्तव्यो ब्रह्मभूयस्य कारणात् ॥४१॥ अन्यत्र विविधैर्युक्तो भोगै राज्यादिभिस्तथा । मयूरे श्रेष्ठकस्तस्माद्दारिद्र्यादियुतो भवेत् ॥४२॥ मयूरक्षेत्रे मरणे स्वानंदं लभते नरः । अन्यत्र भोगयुक्तश्चेज्जन्ममृत्युयुतो भवेत् ॥४३॥ विषयासक्तचित्तश्चेन् मयूरेशं तथापि हि । समाश्रयेद् दुराचारो यातनां लभते पराम् ॥४४॥ अधुना शृणुत प्राज्ञा अंत्यजस्य तु चेष्टितम् । प्रकृतं कथयिष्यामि बहुना किं विचक्षणाः ॥४५॥ चांडालो भगिनीगेहे मयूरे संस्थितोऽभवत् । ममार तत्र सर्पेण स दष्टो देवसत्तमाः ॥४६॥ गाणपत्या विमानं तु समानीय तदर्थतः । संगृह्य ब्रह्मभूतं तं चक्रुः क्षेत्रमृतेः फलात् ॥४७॥ मयूरे न चकाराऽसौ चांडालः पापमल्पकम् । तेन सद्यो बभूवैव ब्रह्मस्थो नीचयोनिजः ॥४८॥ मरणे ब्रह्मभूतश्च भवत्यत्र न संशयः । मयूरे तस्य किं देवाः कथयामि चरित्रकम् ॥४९॥ एवं नाना जनाद्याश्च पशुपक्ष्यादि संभवाः । मयूरे ब्रह्मभूताश्च बभूवुर्मरणात् पुरा ॥ ५० ॥ अथो देवेशमुख्याश्च शृणुध्वं

त्वेकचेतसः। चित्रं चरित्रकं वक्ष्ये मयूरे संभवं परम् ॥५१॥ वणिजो गर्दभं चैकं धृत्वा कार्यार्थमादरात् । भारेण संयुतं चक्रुरन्नाद्यैस्तं महेश्वराः ॥५२॥ ते तं गृह्य मयूरेशं समाजग्मुः स्वकारणात्। गर्दभस्तत्र भारेण पीडितस्तु ममार ह ॥५३॥ स ब्रह्मणि तदाकारो बभूव देवसत्तमाः। पशुजातिज एवं तु नराणां तत्र का कथा ॥५४॥ एवं क्षेत्रप्रभावेण जना नाना महेश्वराः। सिद्धिं प्राप्ता विशेषेण मया वक्तुं न शक्यते ॥५५॥ इदं क्षेत्रभवं चित्रं चरितं शृणुयान्नरः। पठेद्यः श्रावयेद्वाऽपि सर्वार्थं प्रलभेत् सदा ॥५६॥

॥ ओमिति श्रीमदांत्य पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते मयूरक्षेत्रमरणप्राप्तिमाहात्म्यवर्णनं नाम सप्तदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ देवेशा ऊचुः। क्षेत्रस्थानां च यात्राया माहात्म्यं वद योगिप। के के मुख्या महाक्षेत्रे पूज्या लोकैर्निरंतरम् ॥१॥ भृशुंड्युवाच। उत्तराभिमुखो देवो गणेशः क्षेत्रमध्यगः। संस्थितस्तस्य वामांगे सिद्धिः सेवार्थमास्थिता ॥२॥ चामरैर्व्यजनैर्युक्ता नानासिद्धिसमन्विता। सेवते गणराजं सा सती भक्तिसमन्विता ॥३॥ दक्षिणांऽगे तथा बुद्धिर्विद्याभिः संयुता स्वयम्। कलाभिश्च सरस्वत्याः समीपे सेवने स्थिता ॥४॥ सुगंधिवस्तुभिर्युक्ता सती परमार्थवाचका। गणेशं भावसंयुक्ता भजते नित्यमादरात् ॥५॥ पुरतो लक्षलाभौ तु भक्तिनम्रात्मकंधरौ। सेवेते तं गणाध्यक्षं नानोपचारसंयुतौ ॥६॥ पृष्ठभागे महादेव्यो भ्रामर्या धारका मदाः । नानाशक्तियुता देवं सेवंते भक्तिसंयुताः ॥७॥ समास्थितश्चासनाधो गणेशस्येक्षुसागरः। कमलं सागरोत्थं तु सहस्रदलराजितम् ॥८॥ तीव्रादिशक्तिसंयुक्ते तत्र विघ्नेश्वरः सदा । तिष्ठंतीमे हितं देवाः सेवंते रससंयुताः ॥९॥ एवं गणेश्वरः सर्वैः पूजनीयो विशेषतः। तैर्युक्तः सर्वदश्चैव भवत्यत्र न संशयः ॥१०॥ मयूराखू तत्पुरश्च संस्थितौ करसंपुटैः। तत्पुरः सिद्धयोगिन्यो नीराजयंति विघ्नपम् ॥११॥ पृष्ठभागे तथा तस्य प्रमोदाद्याश्च सायुधाः। संस्थिता भक्तिसंयुक्ताः पूजनीया नरेण ते ॥१२॥ अथ पूर्वदिशायां तु धर्ममंडप उच्यते। तत्र विष्णुः स्वयं साक्षात्तिष्ठति सेवनोत्सुकः ॥१३॥ सर्वान् कथयते धर्मान् गाणेशान् तत्र संस्थितः। गाणपत्यप्रियत्वात् स पूजनीयो विशेषतः

॥१४॥ तथा दक्षिणगः शंभुरर्थमंडपमाश्रितः। स गाणेशान् कथयते शब्दार्थान् विविधान् परान् ॥१५॥ गुह्यानर्थान् सदा देवः प्रकाशयति सर्वदा। गाणेशज्ञानकुशला भवंते तेन मानवाः ॥१६॥ मंडपः कामसंज्ञस्तु दिशि देवाः समीपगाः। पश्चिमायां स्थिता तत्र महाशक्तिर्महेश्वरः ॥१७॥ गणेशकामानायां सा कुरुते सर्वमानवान्। सौख्यमाद्यं कथयते गाणेशं परमाद्भुतम् ॥१८॥ उत्तरे मंडपो मुक्तेस्तत्र सूर्यः प्रतिष्ठते। गणेशभक्तियुक्तो बोधयते विविधान् नरान् ॥१९॥ गाणेशीं मुक्तिमाद्यां तु पूर्णमोक्षप्रदायिनीम्। प्रकाशयति तत्रस्थो जनैः संपूजितो रविः ॥२०॥ गणेशसन्निधाने तु मुद्गलाद्या महेश्वराः। महाभक्ताः प्रतिष्ठंते भक्तिं संबोधयंति ते ॥२१॥ दक्षिणांगे पुरस्तस्य मुद्गलो भक्तनायकः। अव्याहतगतिः सोऽपि गुह्यधारक उच्यते ॥२२॥ वामांगे गणराजस्य पुरो योगिसमन्वितः। शुको गाणेशयोगं बोधयते सकलान् परम् ॥२३॥ पूजनीयौ प्रयत्नेन गणेशपुरतः स्थितौ। मुद्गलश्च शुको देवाः प्रियौ विघ्नेश्वरस्य तौ ॥२४॥ मंडपा देवमुख्यानां कथिताश्च ततः परम्। विनायकाः स्थिता अष्टौ वक्रतुंडादयः पराः ॥२५॥ ततोऽष्टमातरः प्रोक्तास्ततोऽष्टौ भैरवा मताः। दिशां भागेषु देवेशाः पूजनीयाः प्रयत्नतः ॥२६॥ ततो गणेशवामांगे चतुर्थी संकटा स्थिता। दक्षिणांगे तथा शुक्ला तिष्ठति सेवनोत्सुका ॥२७॥ पृष्ठभागे शमी तद्वत् पुरो मंदार एव च। दूर्वा पुरः स्थिता एते सेवंते गणनायकम् ॥२८॥ नग्नभैरवदेवश्च पूर्वभागे समाश्रितः। भक्तियुक्तः स्वभावेन सेवते गणनायकम् ॥२९॥ तथा दक्षिणगो देवा नीलकंठः प्रतापवान्। सेवते विघ्नराजं स समागत्य निरंतरम् ॥३०॥ पश्चिमे कृत्तिवासास्तु भीमेशश्चोत्तरे तथा। समागत्य गणेशानं सेवते भक्तिसंयुतौ ॥३१॥ ततो दिक्पालरूपाश्च सेवंते द्विरदाननम्। समागत्य सशस्त्रास्ते नित्यं भक्तिसमन्विताः ॥३२॥ एते मुख्यात्मकाः प्रोक्ता गर्भागारनिवासिनः। केचिद्वासकरास्तत्र केचित् सेवार्थमागताः ॥३३॥ अतः परं प्रवक्ष्यामि सदा गर्भगृहस्थितान्। विनायकान् महाभागान् सर्वसिद्धिप्रदायकान् ॥३४॥ विदर्भाद्वक्रतुंडश्च बल्लाळः यल्लिगः तथा। हेरंबश्च महेशाना विद्यापुरसमाश्रितः ॥३५॥ विघ्नेशः पारिनेरस्थो भालचंद्रस्तथैव च। गंगातटस्थो ज्ञानेशो दत्तात्रेयेण संयुतः ॥३६॥ चिंतामणिः स्थावरस्थोऽमराः सिद्धिविनायकः। सिद्धिक्षेत्रस्थ एवं तु महागणपतिस्तथा ॥३७॥ मणिपूःस्थो विघ्नहरो विजयस्थो विनायकः। कश्यपालयसंस्थश्च एलास्थो लक्षविघ्नपः ॥३८॥ बंगालस्थो गणेशानो विघ्नराजो महेश्वराः। जीर्णपूःस्थस्तथाऽऽशापूरको ह्यमलक्षेत्रगः ॥३९॥ प्रबालस्थो गणेशश्च राजवेश्मस्थ एव च। इत्यादि बहवस्तत्र भवंति गणपाः स्थिताः ॥४०॥ मयूरेशं

समाश्रित्य गर्भागारनिवासिनः । भवंति विघ्नराजाश्च सर्वे तस्य कलात्मकाः ॥४१॥ गर्भागारं गणेशस्य मूर्तिरूपं महत्परम् । ज्ञातव्यं सर्वभावेन सेवनीयं विशेषतः ॥४२॥ शतकोटिगणेशानाः संस्थिता देवसत्तमाः । गर्भागारं समाश्रित्य निश्चितं गणपेन च ॥४३॥ नरैश्च मुनिभिर्देवैः स्थापिता गणनायकाः । गर्भागारे च ते सर्वे बुधैस्तभ्योऽधिका मताः ॥४४॥ गर्भागारे गणेशानं स्वनाम्नांकितमादरात् । स्थापयेत्तेन देवेशा जगद्ब्रह्म च स्थापिते ॥४५॥ केनाऽपि पुण्यं वक्तुं न शक्यते देवसत्तमाः । मयूरे गणनाथस्य स्थापने संभवं परम् ॥४६॥ जीर्णोद्धारं तु यः कुर्यात् स संपूर्णफलं लभेत् । मूर्तिखंडं नरो दृष्ट्वा सांगं कुर्यात्तथा फलम् ॥४७॥ देवेशा ऊचुः । आश्चर्यं भासते वाक्यं त्वदीयं गुरुसत्तम । एते गणेश्वरास्तत्र कथं तिष्ठंति तद्वद ॥४८॥ मानं वद महाभाग सर्वेषां च यथातथम् । तेन संशयहीनाश्च भविष्यामो वयं प्रभो ॥४९॥ भृशुंडयुवाच । परमाणुस्वरूपेण केचित्तत्र गणेश्वराः । केचित्तु त्रसरेणुभिः समाने देहधारकाः ॥५०॥ अंगुष्ठपर्वमात्रेण देहेन शंभुमुख्यकाः । देवाश्च मुनयः सर्वे तिष्ठंत्यत्र न संशयः ॥५१॥ चतुर्हस्तप्रमाणेन मयूरेशश्च तिष्ठति । पीठादिसंयुतो देवाः सिद्धिबुद्धी द्विहस्तगे ॥५२॥ हस्तमात्रेण सर्वे ते पूर्वस्मिन् कथिता मया । तिष्ठंति गणराजस्य सदा सेवार्थलालसाः ॥५३॥ चतुर्धनुःप्रमाणेन धर्ममंडप एव यः । तस्माद् द्विगुणितः प्रोक्तः समंतादर्थमंडपः ॥५४॥ तस्माद् द्विगुणितः प्रोक्तः काममंडप एव च । पादहीनस्तथा प्रोक्तस्तस्मान् मुक्तेश्च मंडपः ॥५५॥ गणेशाद्वै दशधनुर्द्वारे धर्मस्य मंडपः । पूर्ववद् द्वारगाः सर्वे मंडपाः स्वस्वमानतः ॥५६॥ मंडपात् पूर्वदिग्देशे वक्रतुंडः स्थितो मतः । बुधैर्दशधनुर्दूरे ज्ञातव्यं मानतोऽमराः ॥५७॥ दश पंचधनुर्दूरे संस्थस्तत्रैकदंतकः । एवं पंच प्रवृद्ध्या तु धनुषां दिक्षु विघ्नपाः ॥५८॥ अष्टभ्यो गणनाथेभ्यो दूरे पंचधनुष्कतः । मातृका संस्थिताश्चैव वृद्ध्या क्षेत्रं यथाऽभवत् ॥५९॥ तेभ्यः पंचधनुष्के तु चतुर्थी संस्थिता मता । वृद्धिन्यूनत्वमानेन क्षेत्रसामान्यभावतः ॥६०॥ तेभ्यः पंचधनुष्के तु चतुर्थी संस्थिता मता । पूर्वभागे तथाऽन्याश्च वृद्धिन्यूनत्वमानतः ॥६१॥ ततः पंचधनुष्के तु दूरे पूर्वदिशि स्थितः । नग्नभैरवनामा चान्ये तद्वत् क्षेत्रमानतः ॥६२॥ तेभ्यः पंचधनुष्के तु दिक्पालाः संस्थिता मताः । वृद्धिन्यूनत्वमानेन यथा क्षेत्रं प्रकीर्तितम् ॥६३॥ पूर्वेशानदिशोर्मध्ये प्रजापतिः स्थितः स्वयम् । नैर्ऋती पश्चिमाऽऽशागः शेषस्तत्र महेश्वराः ॥६४॥ तेभ्यः पंचधनुष्के तु वज्रादीनि स्थितानि च । क्षेत्रमानप्रमाणेन वृद्धिन्यूनेन

निश्चितम् ॥६५॥ एवं सर्वं मया प्रोक्तं यथाशास्त्रं विधानतः । गर्भागारस्य विस्तारमाहात्म्यं देवसत्तमाः ॥६६॥ अन्ये नाना गणेशाना गाणेशाः संस्थिताः परे । सेवार्थं गणनाथस्य गर्भागारे जगद्धिताः ॥६७॥ इदं शृणोति पठति यश्चित्रं भक्तिसंयुतः । स सर्वपापहीनश्च भवेद्वै देवसत्तमाः ॥६८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खण्डे विकटचरिते गर्भागारस्य प्रमाणवर्णनं नाम अष्टादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ देवेशा ऊचुः । अधुना वद माहात्म्यं देवागारस्य मानद । के के मुख्या जनैः पूज्याः संस्थिता गणपे रताः ॥१॥ भृशुंड्युवाच । द्वारकासहितो विष्णुर्देवागारे समाश्रितः । पूर्वभागे गणेशात्तु दिशि देवेंद्रसत्तमाः ॥२॥ यावंति वैष्णवान्येव क्षेत्राणि विविधानि च । मथुराद्यानि सर्वाणि पूर्वभागे स्थितानि वै ॥३॥ तत्र मध्ये महेशाना द्वारका-शतमंजसा । धनुषां तु प्रमाणेन गर्भागारात् प्रकीर्तिता ॥४॥ तत्र कृष्णश्च रामश्च प्रद्युम्नो ह्यनिरुद्धकः । समातस्थुर्गणेशस्य भक्त्यर्थं भक्तसत्तमाः ॥५॥ गणेशानं पुष्टिपतिं स्थापयित्वा जनार्दनः । सेवते तं महाभागा द्वारकावासिनस्तथा ॥६॥ गोमती कुंडरूपेण स्वयं तत्रैव संस्थिता । स्नानमात्रेण जंतूनां ब्रह्महत्यां विनश्यति ॥७॥ कृष्णपक्षे नरो नारी श्रावणे तु जनार्दनम् । मयूरे पूजयेत् क्षेत्रे वासकृत् सर्वदायकम् ॥८॥ तेषां पूजनमात्रेण सद्यः पापविवर्जितः । मनेप्सितं लभेद् देवाः शतयज्ञफलं तथा ॥९॥ मथुरावामभागे तु द्वारकायाः समास्थिता । तावन्मानेन देवेशाः सर्वार्थस्य प्रदायिनी ॥१०॥ बालरूपधरौ तत्र रामकृष्णौ समास्थितौ । पूजनीयौ नरेणैव सर्वकामफलप्रदौ ॥११॥ गौरीविनायकं तत्र स्थापयित्वा स्वहर्षतः । जनैः सह महाभक्तौ सेवेते तं जनार्दनौ ॥१२॥ तत्रैव यमुना साक्षात् संस्थिता ह्रदरूपिणी । तस्यां स्नानेन देवेशाः सर्वपापक्षयो भवेत् ॥१३॥ कृष्णाष्टम्यां विशेषेण तयोर्यात्रा प्रकीर्तिता । मासे मासे जनानां सा दहति ह्यशुभं महत् ॥१४॥ अयोध्या दक्षिणांगेऽस्यास्तावन्मानेन संस्थिता । द्वारकायाश्च तत्रैव शरयूकुंडकं स्थितम् ॥१५॥ तत्र स्नानेन जंतूनां पापं नश्यति तत्क्षणात् । इहजन्मकृतं सर्वं स्वर्गदं कुंडमंजसा ॥१६॥ तत्र रामो लक्ष्मणश्च भरतः शत्रुसूदनः ।

स्थिताः संस्थाप्य हेरंबं सेवायां तत्परा जनैः ॥१७॥ चैत्रशुक्लनवम्यां तु यात्रां तत्र प्रकुर्वते । क्षेत्रवासिन आनंदाद्वार्षिकीं दुरितापहाम् ॥१८॥ द्वारकायाः पुरोभागे व्यासः सत्यवतीसुतः । संस्थितः सर्वधर्मज्ञो दशधनुःप्रमाणतः ॥१९॥ तत्पुरो नृहरिश्चैव वामनस्तत्पुरोऽभवत् । मत्स्यस्तत्पुरतो विष्णुस्ततो बुद्धः प्रकीर्तितः ॥२०॥ नरनारायणौ देवौ तत्पुरः संस्थितौ किल । हयग्रीवस्ततः प्रोक्तः समानमानतः स्थितः ॥२१॥ तथा वामांगभागे ये धनुषां दशके परे । तिष्ठंति विष्णुरूपाश्च मथुरायाः सुखप्रदाः ॥२२॥ तान् शृणुध्वं महेशानाः कथयामि समासतः । कूर्मः परशुरामश्च कल्की पृश्निसुतस्तथा ॥२३॥ कपिलः सिद्धेशः शेषः सनकाद्याश्च योगिनः । भजंति स्वस्वनामांकानास्थाप्य गणनायकान् ॥२४॥ अयोध्यायाः पुरः सप्त संस्थिताश्च जनार्दनाः । तावन्मानेन देवेशास्तान् शृणुध्वं समासतः ॥२५॥ नारदः कार्तवीर्यश्चात्रितो यज्ञस्तथा परः । ऋषभश्च पृथुर्वैन्यो मोहिनी या स्मृता बुधैः ॥२६॥ स्वस्वेष्टनामकांस्तत्रास्थाप्य विघ्नेश्वरान् परान् । भजंते भावयुक्ताश्च सदा क्षेत्रनिवासनः ॥२७॥ द्वादश्यां प्रतिमासेषु पूजनीयाः क्रमेण तु । चतुर्विंशतिदेवेश विष्णवः क्षेत्रवासिभिः ॥२८॥ द्वारकास्थसमायुक्तास्तत्र विष्णवंशसंभवाः । अवांतरे स्थिताः सर्वे मयूरे हितकारकाः ॥२९॥ स्वयं विष्णुस्ततस्तत्र तिष्ठति क्षेत्रगोऽमराः । विकुंठं तत् समाख्यातं धनुषां द्विशतात्मकम् ॥३०॥ एकादश्यां जनाः साक्षात् पूजयंति निरंतरम् । तेन सौभाग्यसंयुक्ता भविष्यंति मयूरके ॥३१॥ अन्ये नानाऽवताराश्च क्षेत्राणि विविधानि तु । संस्थितानि मयूरेऽस्मिन् गणेशे भक्तिकारणात् ॥३२॥ विकुंठवासी भगवान् सदा सिद्धिविनायकम् । स्थाप्य पूज्यं विधानेन भजतेऽनन्यभावतः ॥३३॥ अन्ये ये स्वस्वनाम्ना ते गणेशान् स्वेष्टरूपकान् । विष्णवः स्थापयित्वा तं भजंतेऽनन्यभावतः ॥३४॥ गर्भागारस्य देवेशाः पूर्वांगं वर्णितं मया । संक्षेपेणाधुना तद्वत् दक्षिणांगं तु वर्णये ॥३५॥ गर्भागारात् स्वयं काशी संस्थिता मध्यभागतः । धनुषां द्वे शते तस्या मानं क्षेत्रे प्रकीर्तितम् ॥३६॥ तत्र तिष्ठति विश्वेशो देवो भक्तिपरायणः । ढुंढिराजं समास्थाप्य भजतेऽनन्यचेतसा ॥३७॥ मणिकर्णी ह्रदस्तत्र वर्तते पापहारकः । स्नानेन मानवस्यैव ब्रह्मघ्नः पातकं व्रजेत् ॥३८॥ भागीरथी सरस्तत्र वर्तते देवनायकाः । सद्यः स्नानेन पापानि लयं गच्छंति निश्चितम् ॥३९॥ प्रदोषे पूजनं तस्य कुर्वंति क्षेत्रवासिनः । माघकृष्णचतुदश्यां यात्रां कुर्वंति मानवाः ॥४०॥ वार्षिकीं विश्वनाथस्य यात्रां क्षेत्रनिवासिनः । जनाः कुर्वंति ते सर्वे भवंति सुखभोगिनः ॥४१॥ तस्या वामांगके देवास्तावन्मानेन संस्थिता । अवंती सर्वदा पुण्या महाकालश्च शंकरः ॥४२॥ क्षिप्रानदी-

भवं कुंडं वर्तते तत्र पापहृत् । महाकालस्य कुंडं तु स्नानेन पापनाशनम् ॥४३॥ सोमवारे प्रदोषे तमर्चयंति विशेषतः । ते सर्वे धनधान्यैश्च संयुक्ता निवसंति हि ॥४४॥ काश्या दक्षिभागे तु तावन्मानेन संयुता । मायापुरी महेशाना दक्षयज्ञच्छिदीश्वरः ॥४५॥ प्रदोषे च त्रयोदश्यां शनियुक्ते महेश्वरम् । पूजयेत्तं नरश्चैव क्षेत्रस्थः सर्वमाप्नुयात् ॥४६॥ तत्र द्वारं च गंगायाः संस्थितं कुंडरूपकम् । नरः स्नानेन सद्यश्च फलं प्राप्नोति वाञ्छितम् ॥४७॥ काश्याश्च पुरतो देवास्त्र्यंबकः संस्थितो महान् । धनुषां शतकेनैव मानेन तस्य क्षेत्रकम् ॥४८॥ नदीस्वरूपेण गोदावरी तत्र महानदी । संस्थिता स्नानमात्रेण गोघ्नाद्यघं विनश्यति ॥४९॥ कपिलं गणनाथं स त्र्यंबकः स्थाप्य नित्यदा । पुपूज भक्तिसंयुक्तो गाणपत्यप्रभाववित् ॥५०॥ क्षेत्रगो वैद्यनाथस्तु तावन्मानेन तत्पुरः । स्थितः सर्वार्थदो देवो भक्तानां भवनाशकृत् ॥५१॥ भवरोगविनाशार्थं वैद्य एकः शिवः स्मृतः । ददाति गणनाथाख्यमौषधं योगमिच्छताम् ॥५२॥ उत्कटेशस्तत्पुरश्च तावन्माने संस्थितः । उत्कंठां भक्तिमिच्छन् सन् गणेशस्य महात्मनः ॥५३॥ त्र्यंबकस्य तथा वामे रामेशः संस्थितः शिवः । तावन्मानेन तत् क्षेत्रे समुद्रः कुंडरूपतः ॥५४॥ तत्पुरः सोमनाथस्तु तत्पुरो मल्लिकार्जुनः । तावन्मानेन संयुक्तौ स्वस्वतीर्थसमन्वितौ ॥५५॥ दक्षिणांगे त्र्यंबकस्य घुसृणेशः स्थितः प्रभुः । तथोंकारेश्वरो देवोऽप्यमलेश्वरसंयुतः ॥५६॥ सरःस्वरूपेण तत्र नर्मदा संस्थिता नदी । दर्शनेनेह यत् पापं जंतूनां नाशयेत् सदा ॥५७॥ स्नानमात्रेण देवेशा दशजन्मकृतं महत् । पापं नश्यति जंतोश्च निश्चितं मुनिभिः पुरा ॥५८॥ ततः केदारशंभुश्च क्रमेण देवसत्तमाः । तावन्मानेन संयुक्ताः शिवा एते प्रकीर्तिताः ॥५९॥ स्वस्वनाम्नांकितान् सर्वे सदाऽऽस्थाप्य गणेश्वरान् । सेवंते भक्तिसंयुक्ताः शिवा एते प्रकीर्तिताः ॥६०॥ कृष्णपक्षे चतुर्दश्यां मासे मासे महेश्वराः । सेवनीयाः प्रयत्नेन क्षेत्रवासिभिरादरात् ॥६१॥ ततः पुरो महाक्षेत्रे कैलासे वासकारकः । शिवः साक्षात् स्थितस्तत्र धनुषां च चतुःशते ॥६२॥ क्षेत्रं कैलासनाथस्य तत्र भागीरथी नदी । स्वयं स्थिता विशेषेण स्नानमात्रेण सर्वदा ॥६३॥ महागणपतिं स्थाप्य पूजति नित्यमादरात् । भजते तं शिवः साक्षाद्गाणपत्याग्रणीर्महान् ॥६४॥ अन्यशंकरक्षेत्राणि शिवा नानाविधा मताः । संस्थितानि स्थिताः सर्वे क्षेत्रसंन्यासभक्तितः ॥६५॥ तेषां स्थानादिकथयितुं देवा न प्रशक्यते । स्वस्वनामयुतान् पूजंत्यास्थाप्य गणनायकान् ॥६६॥ दक्षिणे कथितं शैवं परं देवालयं मया । संक्षेपेण महाभागा अधुना पश्चिमं वदे ॥६७॥ शतेषु गर्भागाराच्च धनुषां पंचसु स्थिता । महालक्ष्मीः स्वयं साक्षाद्भक्तेभ्यः कामदायिनी ॥६८॥ लक्ष्मीकुंडभवं

तीर्थं संस्थितं तत्र पापहृत् । स्नानमात्रेण सद्यो दरिद्रतानाशकारकम् ॥६९॥ तस्या वामांगके शक्तिर्महाकाली समास्थिता । कालीसरश्च तत्रैव संस्थितं पापनाशनम् ॥७०॥ महासरस्वती शक्तिर्दक्षिणांगे स्थिता तथा । सारस्वतं महत् कुंडं तत्र जाड्य-विनाशनम् ॥७१॥ स्वानंदवासमास्थाप्य भजते गणनायकम् । महालक्ष्मीर्महेशाना अष्टम्यां पूज्यते नरैः ॥७२॥ सिद्धीशं तु महाकाल्यास्थाप्य भक्तिपरायणा । भजते नित्यमानंदाद्भूतायां पूज्यते तथा ॥७३॥ बुद्धीशं तु तृतीयायां महासरस्वती नरैः । शक्तियुक्ता स्थाप्य नित्यं भजते पूज्यते परा ॥७४॥ महालक्ष्म्याः पुरश्चैव विष्णुकांची स्थिता पुरी । लक्ष्म्या विष्णुः स्थितस्तत्र भजते स्थाप्य विघ्नपम् ॥७५॥ अष्टम्यां पूजनीयोऽसौ क्षेत्रवासिभिरादरात् । पापनाशकरस्तेषां भवते सर्वदायकः ॥७६॥ तत्पुरो मातृकाणां च धनुषां द्विशतात्मकम् । क्षेत्रं तु संस्थितं तत्र माहेश्वर्या महाद्भुतम् ॥७७॥ तत्पुर-स्तावता मानेन युतं क्षेत्रमुत्तमम् । कौमार्यस्तत्र संस्था सा तीर्थेनैव समायुता ॥७८॥ ततः क्षेत्रं समाख्यातं वाराह्याः सर्वदं परम् । तत्र शक्तिः स्थिता साक्षाद्वाराही दुरितापहा ॥७९॥ तत ऐंद्र्या महाक्षेत्रं पूर्वमानेन कीर्तितम् । ऐंद्री गणेश्वरं तत्र भजतेऽनन्यचेतसा ॥८०॥ महाकाल्याः पुरश्चैव पूर्वमानेन संस्थिता । नारसिंही महाशक्तिर्दैत्येभ्यो भयदायिनी ॥८१॥ ततः शाकंभरी शक्तिश्च ततो रक्तदंतिका । ततो भीमा महेशानाः संस्थिता तीर्थसंयुता ॥८२॥ अथो महासरस्वत्यास्तावन्मानेन संस्थिता । पुरस्तु वैष्णवी देवी ततो ब्राह्मी स्थिता मता ॥८३॥ चामुंडा च ततः प्रोक्ता तत्पुरस्त्रिपुरा मता । समानमानभावेन संस्थिता शक्तयः पराः ॥८४॥ कुंडरूपेण तीर्थानि स्वस्वक्षेत्रगतानि तु । कृत्वा ताः शक्तयः सर्वा मयूरे संस्थिताः सदा ॥८५॥ स्वस्वनाम्नांकितानास्थाप्य गणेशांश्च देवपाः । भजंतेऽनन्यभावेन गाणपत्यस्वभावतः ॥८६॥ अन्यानि शक्तिक्षेत्राणि शक्तयश्च समाश्रिताः । नरैस्तासां नवम्यां तु यात्रा कार्या सुखप्रदा ॥८७॥ तासां नामादिकं देवा मया वक्तुं न शक्यते । मुख्यास्तु नवकोट्यो वै ज्ञातव्यं विबुधैः सदा ॥८८॥ धनुः पंचशतं तस्माच्छक्तिर्लंबोदरं परम् । आस्थाप्य भजते तस्या यात्राऽष्टम्यां प्रकीर्तिता ॥८९॥ अथोत्तरगतान् वक्ष्ये देवान् देवालये स्थितान् । समासेन महेशानाः शृणुत परमार्थदान् ॥९०॥ गर्भागारात् समारभ्य चतुःशतं पितामहः । धनुषां क्षेत्रगः सोऽपि तिष्ठति वेदसंयुतः ॥९१॥ तावन्मानेन वामांगे तस्याग्निः संस्थितो महान् । अग्निभिः सहितस्तत्र सेवते गणनायकम् ॥९२॥ दक्षिणांगे स्वयं कर्म सह तिष्ठति कर्मभिः । सूर्यकलांश-संभूतास्त्रयो मुख्या इति स्मृताः ॥९३॥ ब्रह्माणं च समाश्रित्य सरः सारस्वतं स्थितम् । सरस्वती नदीरूपा तत्र तिष्ठति

नित्यदा ॥९४॥ तत्र स्नानेन पापानि प्रणश्यंति महांति चेत् । जाड्यभावो नश्यति च नराणां देवसत्तमाः ॥९५॥ सिद्धिबुद्धिपतिं स्थाप्य सेवते चतुराननः । सदा गणेशपूजायां तत्परो भक्तिसंयुतः ॥९६॥ तथाऽग्निश्च महात्मानं विनायकं निरंतरम् । आस्थाप्य भक्तिसंयुक्तो भजते नित्यमादरात् ॥९७॥ आग्नेयं तत्र कुंडं तु सर्वाघशमनं स्थितम् । स्नानमात्रेण जंतूनामग्निलोकप्रदं भवेत् ॥९८॥ कर्मनाशकरं कुंडं समीपं कर्मणः स्थितम् । स्नानेन त्रिविधं तत्र कृतं कर्म विनश्यति ॥९९॥ ब्रह्मणः पुरतो देवा धनुषां द्विशतात्मकम् । क्षेत्रं वेदांगनाम्नश्च परं सूर्यस्य संस्थितम् ॥१००॥ भानुक्षेत्रं तत्पुरस्तावता मानेन संयुतम् । इंद्रनाम्नस्तत्पुरस्तु क्षेत्रं सर्वप्रदायकम् ॥१॥ अग्नेः पुरस्तथा क्षेत्रं रवेस्तावत्प्रमाणकम् । ततः क्षेत्रं गभस्तेश्च यमस्य च ततः परम् ॥२॥ कर्मणश्च पुरोभागे तावन्मानयुतं महत् । सुवर्णरेतसः क्षेत्रं ततो दैवाकरं मतम् ॥३॥ ततः क्षेत्रं तु मित्रस्य ततो विष्णोः प्रकीर्तितम् । वरुणस्य क्षेत्रमिंद्रात् पुरः सर्वाघनाशनम् ॥४॥ यमात् पुरस्तु सूर्यस्य क्षेत्रं तत्र प्रकीर्तितम् । समानमानभावेन स्थिता द्वादश भानवः ॥५॥ स्वस्वतीर्थैः समायुक्ताः कुंडरूपैर्महेश्वराः । स्वस्वनाम्ना स्थाप्य सेवंते गणेशान्निरंतरम् ॥६॥ तत्पुरः शिवकांची तु तस्यां शक्त्या शिवः स्थितः । सोमयुक्तो प्रदोषे स जनैः पूज्यः सुखप्रदः ॥७॥ भजते सर्वभावेनास्थाप्य हेरंबमादरात् । तीर्थं तस्य स्थितं तत्र सर्वाघशमनं परम् ॥८॥ जनैः पूज्यः प्रतिपदि क्षेत्रस्थोऽग्निः प्रतापवान् । सर्वपापनिहंता च द्रव्यलाभप्रदो भवेत् ॥९॥ सप्तम्यां सर्वदा देवाः पूजनीयः पितामहः । जाड्यभावहरः सोऽपि भवत्यत्र न संशयः ॥११०॥ भानुसप्तमिकायां तु कर्म संपूजयंति ये । सर्वदोषविहीनाश्च कर्मणां संभवंति ते ॥११॥ संक्रमेषु सदा पूज्य भानून् द्वादश संस्थितान् । सर्वरोगादिनिर्मुक्ता भवंति क्षेत्रवासिनः ॥१२॥ तेषां पुरः स्वयं नित्यं तिष्ठति सौरलोकगः । चतुःशतं तु धनुषां क्षेत्रं तस्य महात्मनः ॥१३॥ रविवारे तु देवेशः पूजनीयो निरंतरम् । नरः सर्वार्थसंसिद्धिं लभते मुक्तिमुत्तमाम् ॥१४॥ वरदं गणनाथं संस्थाप्य पूजापरायणः । भजते आदिदेवस्तं सूर्यः कालभृतां वरः ॥१५॥ तत्पुरश्चंद्रमा देवाः संस्थितः शतमानतः । धनुषां क्षेत्रमेतत्तु तस्य सर्वान्नदायकम् ॥१६॥ ततः पुरो बुधः प्रोक्तस्तावता मानकेन च । तत्पुरः संस्थितो जीवः क्षेत्रवासपरायणः ॥१७॥ चंद्रवामांगसंस्थश्च भौमो देवपरायणः । तत्पुरो भार्गवः श्रेष्ठस्तत्पुरस्तु शनैश्चरः ॥१८॥ चंद्रस्य दक्षिणे भागे राहुः सर्वारिमर्दनः । तत्पुरः केतुरेवं च नक्षत्राणि ततः पुरः ॥१९॥ आस्थाप्य स्वस्वनामांकान् गणेशान् भक्तितत्परः । भानि ग्रहा भजंते तं क्षेत्रवासपरायणाः ॥१२०॥

स्वस्वांकितेषु वारेषु पूजनीया इमे नरैः । पूर्णिमायां तमश्चैवामावास्यायां च केतुकः ॥२१॥ अन्ये सूर्यावताराश्च स्वस्वक्षेत्रैः स्थिताः किल । तेषां नामादि कथयितुं देवाः शक्यते न वै ॥२२॥ देवालयादष्टदिक्षु भैरवा अष्टमुख्यकाः । नाना भैरवसंयुक्ताः संस्थिता देवतत्पराः ॥२३॥ तत इंद्रो हव्यवाहः पूर्वभागे समाश्रितौ । यमपो निर्ऋतिस्तद्वद्दक्षिणांगे च तिष्ठतः ॥२४॥ पश्चिमे वरुणो वायुः तिष्ठतः क्षेत्रसेवकौ । धनपो निर्ऋतिस्तद्वदुत्तरांगे समास्थितौ ॥२५॥ अष्टम्यां भैरवाः पूज्या जनैः पैशाचनायकाः । भूतादीनां विशेषेण भवंति भयनाशकाः ॥२६॥ दशम्यां दश दिक्पालाः पूजनीयाः प्रयत्नतः । चौरादिजं भयं सर्वं नाशयिष्यंति सर्वदा ॥२७॥ स्वस्वनामांकितानास्थाप्य दिगीशा गणेश्वरान् । पूजयंति भजंते तं भैरवाश्च महेश्वराः ॥२८॥ पूजनीयौ द्वितीयायामश्विनौ पूर्वदिक् स्थितौ । द्वारस्य सन्निधाने तु धनुषां शतमानतः ॥२९॥ देवागारे गणेशं संस्थाप्य नित्यं महाप्रभुम् । भजतस्तेन सर्वेषां रूपलावण्यदौ मतौ ॥१३०॥ दक्षिणे संस्थितौ तद्वद्गौरीस्कंदौ परेश्वरम् । आस्थाप्य पूज्य विघ्नेशं भजतो नित्यमादरात् ॥३१॥ तयोः पूजनमात्रेण भवेत् सौभाग्यसंयुतः । स्वाचारनिष्ठभावेन चित्तं सुनियतं भवेत् ॥३२॥ षष्ठयां स्कंदं भजेन्नित्यं तृतीयायां च पार्वतीम् । मयूरेशयुते देवास्ताभ्यां सौख्यं लभेन्नरः ॥३३॥ सर्वे वासुकिमुख्याः पश्चिमे नागा महाबलाः । संस्थिता द्वारसामीप्ये नागकुंडं तथाऽमलम् ॥३४॥ पंचम्यां पूजनीयास्ते दारिद्र्यनाशकारकाः । सर्वव्याधिविहीनं तु कुर्वते मानवं सदा ॥३५॥ उत्तरे धननाथं तु पूजयेद्धननायकम् । एकादश्यां विशेषेण द्वारसामीप्यसंस्थितम् ॥३६॥ त्रयोदश्यां धर्मराजं पूजयेन्नात्र संशयः । धर्मप्रदं जनानां च सदा पुण्यविवर्धनम् ॥३७॥ अन्ये देवगणाः सर्वे स्थिता देवालये किल । पूर्णिमायां जनैः पूज्याः क्षेत्रवासिभिरादरात् ॥३८॥ यमस्य सन्निधाने तु पितरः क्षेत्रवासिनः । संस्थितास्ते नरैः पूज्या अमायां वंशवर्धनाः ॥३९॥ त्रयस्त्रिंशत् कोटिमिता देवाः सर्वत्र संस्थिताः । तेषां स्थानादि देवाः कथयितुं नैव शक्यते ॥१४०॥ देवागारस्य देवेशाः कथितं यात्रया युतम् । माहात्म्यं देवजातीनां सर्वकामफलप्रदम् ॥४१॥ मयूरस्यापि अधुना कथयामि चरित्रकम् । तत्स्थानां शृणुत प्राज्ञाः सर्वसिद्धिप्रदायकम् ॥४२॥ देवागाराच्छते द्वे तु धनुषां संस्थितो भृगुः । भृगुतीर्थं महत् क्षेत्रे कुंडं पापप्रदाहकम् ॥४३॥ तत्र स्नानेन जंतूनां वंध्यदोषो विनश्यति । तथा पूज्य प्रजानाथं भृगुं सर्वमवाप्नुयात् ॥४४॥ रोहिण्यां तस्य यात्रा वै कर्तव्या क्षेत्रवासिभिः । तेन तुष्टो महायोगी भृगुः सर्वार्थदो भवेत् ॥४५॥ स्वनामसंयुतं सोप्यास्थाप्य विघ्नेश्वरं परम् । पूजत्यनन्यभावेन गाणपत्यस्वभावतः ॥४६॥

तस्य वामांगगः साक्षात्तावन्मानेन संस्थितः। पुलहस्तं प्रपूज्यैव कर्मयुक्तो भवेन्नरः ॥४७॥ कुंडं पुलहतीर्थाख्यं दोषहंतृ स्थितं परम्। भजत्यास्थाप्य गाणेशो गणेशं नान्यभावतः ॥४८॥ यात्रा मृगशिरसि च तस्य प्रोक्ता मयूरके। कर्तव्या क्षेत्रवासिभिर्महापुण्यप्रवर्द्धिनी ॥४९॥ दक्षिणांगे क्रतुश्चैव कुंडं कृत्वा स्वतीर्थजम्। गणेश्वरं स्थाप्य योगी भजतेऽनन्यचेतसा ॥१५०॥ आर्द्रायां स जनैः सर्वैः पूजनीयः प्रयत्नतः। यज्ञस्य फलदाता च भवेद्यात्राविधानतः ॥५१॥ भृगोः पुरश्च धनुषां शतं तत्र स्थितो मतः। च्यवनश्च तथा धाता विधाता देवसत्तमौ ॥५२॥ क्रमेण भार्गवाः सर्वे मुनयस्तत्र संस्थिताः। शतानि पंच तत् क्षेत्रं धनुषां शौनकादयः ॥५३॥ पूजनीयाश्च पंचम्यामृषयः सर्वभावनाः। श्रवणे मानवैस्तत्स्थैः पुण्यदाः संभवंति च ॥५४॥ पुलहस्य पुरस्तद्वत् पौलहा मुनयः सदा। तिष्ठंति पूजनीयास्ते रेवत्यां सर्वदा मताः ॥५५॥ क्रतोरग्रे महेशानाः क्रतुवंशसमुद्भवाः। तिष्ठंति मुनयः सर्वयोगज्ञाः पुण्यवर्धनाः ॥५६॥ अश्विन्यां पूजनीयाश्च मताः सर्वार्थदायकाः। गणेशमास्थाप्य विप्राः सेवंते भक्तितत्पराः ॥५७॥ तत्पुरो देवगंधर्वा विश्वावसुपुरोगमाः। धनुषां द्वे शते तेषां क्षेत्रं ख्यातं मयूरके ॥५८॥ उर्वशी चैव रंभाद्यास्ततो ह्यप्सरसः पुरः। धनुषां शतकं क्षेत्रं तासां तत्र प्रकीर्तितम् ॥५९॥ पूजनीया नरैः पुष्पैर्गंधर्वाः पुण्यवर्धनाः। पुनर्वसावप्सरसः पूजनीया विशेषतः ॥१६०॥ नानामुनिगणा अन्ये भवंते संस्थिताः पराः। विश्वामित्रो याज्ञवल्क्यस्तथा पाराशरोऽग्रणीः ॥६१॥ श्वेतकेतुर्वामदेवो परो रैभ्यो निदाघकः। इत्याद्याः बहवो देवाः कथयितुं न शक्यते ॥६२॥ स्वस्वनाम्नांकितांस्ते संस्थाप्य लंबोदरान् सदा। भजंते तीर्थसंयुक्ताः पूजनीयाः सुखप्रदाः ॥६३॥ पूर्वभागाश्रितं सर्वं कथितं वः समासतः। अधुना दक्षिणं वक्ष्ये मयूरं सर्वदायकम् ॥६४॥ देवालयाद्दक्षिणाच्चतुःशतं च प्रकीर्तितम्। धनुषां क्षेत्ररूपं तु वसिष्ठस्य महात्मनः ॥६५॥ स्वनामांकितमास्थाप्य गणेशं भजते सदा। तत्र कुंडं तु वासिष्ठं स्नानेन पापनाशनम् ॥६६॥ भरण्यां पूजनीयोऽसौ वंशवृद्धिकरो भवेत्। यात्रा तस्य समाख्याता मयूरे सुखदायिका ॥६७॥ तस्य वामांगभागे चात्रिः सर्वार्थप्रदायकः। गणेश्वरं स संस्थाप्य भजते स्वाभिधानकम् ॥६८॥ तीर्थं तत्र स्थितं तस्य स्नानमात्रेण मानदम्। कृत्तिकायां विशेषेण पूजनीयो नरैः सदा ॥६९॥ दक्षिणांगे वसिष्ठस्य पुलस्त्यः संस्थितोऽभवत्। स्वनामांकितमास्थाप्य ढुंढिं भजति देवपाः ॥१७०॥ कुंडं तस्य च तीर्थाख्यं परं स्नानेन सत्वदम्। आसुरभावसंभूतं मलं दहति सेविनाम् ॥७१॥ पूजनीयो धनिष्ठायां विशेषेण महामुनिः। सर्वार्थदायको भावी यात्राकारिण एव च ॥७२॥ वसिष्ठाच्च

पुरोभागे वासिष्ठा मुनयोऽपरे। द्वे शते धनुषां क्षेत्रं तेषां तत्र स्थिता द्विजाः ॥७३॥ अत्रेः पुरस्तथात्रेयास्तावन्मानेन संस्थिताः। पुलस्त्याग्रे च पौलस्त्या भवंति मुनयः स्थिताः ॥७४॥ स्वस्वतीर्थसमासक्ताः स्थाप्य विघ्नेश्वरांस्तथा। पूजयंति स्वनामस्थान् भक्तियुक्ता महर्षयः ॥७५॥ मघायां चैव वासिष्ठाश्चित्रायामत्रिसंभवाः। हस्ते पौलस्त्यकाः पूज्याः क्षेत्रवासिभिरादरात् ॥७६॥ अन्ये मुनिगणा नाना सदा तत्रैव संस्थिताः। तेषु मुख्यान् प्रवक्ष्यामि शृणुध्वं देवसत्तमाः ॥७७॥ कण्वश्च जैमिनिश्चैको द्वितश्च त्रितरैवतौ। मेधातिथिर्भरद्वाजो जमदग्निश्च गौतमः ॥७८॥ इत्यादि बहवोऽन्ये स्थिताः संस्थाप्य गणेश्वरान्। पूजनीया नरेणैव सर्वधर्मविवर्धनाः ॥७९॥ कथितेषु महेशाना नक्षत्रेषु विशेषतः। यात्रा तेषां समाख्याता सर्वाघशमनी परा ॥१८०॥ ततः पुरः पिशाचेशा भूतेशाः सिद्धचारणाः। संस्थिताः पूजनीयास्ते भौमवारे विशेषतः ॥८१॥ अतः परं पश्चिमस्थं वदामि पापहारकम्। चित्रं मयूरे माहात्म्यं क्षेत्रवासिभवं परम् ॥८२॥ देवालयादष्टशतं धनुषां स्थानमुत्तमम्। दक्षस्य तत्र देवेशा दक्षतीर्थं सरः स्थितम् ॥८३॥ तत्र स्नानेन दुर्बुद्धिः परा नश्यति तत्क्षणात्। सुबुद्धिर्जायते सद्यो जनानां भावितात्मनाम् ॥८४॥ महायात्राऽयभिजिति तस्य प्रोक्ता सुखप्रदा। कर्तव्या क्षेत्रवासीभिः परा सद्बुद्धिदायिका ॥८५॥ दक्षस्य वामभागे तु मरीचिः संस्थितो महान्। तावन्मानेन संयुक्तः स्वतीर्थेन समन्वितः ॥८६॥ स्वातौ तस्य महायात्रा कर्तव्या वृद्धिदायिनी। क्षेत्रवासिभिरानंदाद्योगींद्रस्य महात्मनः ॥८७॥ अंगिरास्तस्य दक्षस्य दक्षिणे योगिसत्तमः। पूजनीयो विशेषेण ज्ञानदाता भवेत् सदा ॥८८॥ तीर्थं तत्र समाख्यातं कुंडरूपेण योगिनः। स्नानेन भक्तिसंयुक्तो लभेज्ज्ञानं च मानवः ॥८९॥ दक्षादयस्त्रयः प्रोक्ताः संस्थाप्य गणनायकम्। स्वस्वनामांकितं देवाः पूजयंति निरंतरम् ॥१९०॥ दक्षाग्रे दक्षसंभूताश्चतुर्वर्णप्रकाशिकाः। पुत्र्यः षष्टीर्महाभागाः सेवंते गणनायकम् ॥९१॥ तासां क्षेत्रं समाख्यातं चतुः शतधनुर्मितम्। रविवारे पूजनीया वंशसौभाग्यवर्धनाः ॥९२॥ तासां पुरः प्रजाः सर्वा नरैस्ताभ्यः समुद्भवाः। संस्थिता पूजनीयास्ता धनिष्ठायां सुखप्रदाः ॥९३॥ द्वे शते धनुषां तासां क्षेत्रं चैव प्रकीर्तितम्। गणेशमास्थाप्य सर्वाः सेवंते नित्यमादरात् ॥९४॥ मरीचेस्तु पुरोभागे मारीचाः काश्यपादयः। संस्थितास्ते नरैः पूज्याः शततारे धनप्रदाः ॥९५॥ चतुःशतानि तत् क्षेत्रं धनुषां च प्रकीर्तितम्। स्थाप्य विघ्नेश्वरान् सर्वे पूजयंति निरंतरम् ॥९६॥ पुरोभागे ह्यंगिरसः स्थिता आंगिरसाः सदा। तावन्मानेन संयुक्तास्तीर्थयुक्ता महर्षयः ॥९७॥ लंबोदरांस्त आस्थाप्य स्वस्वनामांकितान् सदा।

पूजयंति विशेषेण भक्तिभावसमन्विताः ॥९८॥ आश्लेषायां महायात्रा तेषां कार्या नरैः परा। पुत्रपौत्रप्रवृद्ध्यर्थं क्षेत्रवासिभिरादरात् ॥९९॥ अन्ये मुनिवरास्तत्र संस्थिता गणपे रताः। तेषु श्रेष्ठान् प्रवक्ष्यामि महायोगींद्रकांस्तथा ॥२००॥ दुर्वासा गालवश्चैव त्रिशिरा नै वो मुनिः। अगस्यश्च मृकंडस्तु मार्कंडेयो दधीचिकः ॥१॥ कथितेषु दिनेष्वेते पूजनीया महात्मभिः। सर्वसौख्यप्रदातारो भवंते योगिसत्तमाः ॥२॥ तीर्थयुक्तां गणेशानास्थाप्य संपूजयंति ते। मुनयो भक्तिसंयुक्ता क्षेत्रवासपरायणाः ॥३॥ अतश्च किंनराः साध्याः पुरो विद्याधरास्तथा। सेवंते गणनाथं संस्थाप्य क्षेत्रनिवासिनः ॥४॥ पूजनीया नरैः सर्वे सर्वकारिण आदरात्। एवं संक्षेपतः प्रोक्तं माहात्म्यं पश्चिमाश्रितम् ॥५॥ अथोत्तरभवं देवाः कथयामि समासतः। मयूरक्षेत्रसंस्थानां चरित्रं सुखदं भवेत् ॥६॥ देवागारात्तु धनुषां देवपाः शतपंचके। वसवोऽष्टौ स्थिताश्चैवास्थाप्य गाणेश्वरं परम् ॥७॥ स्वस्वतीर्थभवं कुंडं कृत्वा भक्तिपरायणाः। भजंते पूर्णिमायां ते पूजनीया विशेषतः ॥८॥ तेषां वामांगभागे तु धेनवः कामदायिकाः। संस्थिता तावता मानेन युतास्तीर्थसंयुताः ॥९॥ गणेश्वरं ताः संस्थाप्य स्वस्वनामयुतं पराः। पूजयंति विधानेन भक्तियुक्ता महौजसः ॥२१०॥ द्वादश्यां ता नरैः पूज्याः कामधेनुमुखाः सुराः। क्षेत्रवासिभिरानंददायिकाः कामपूरिकाः ॥११॥ दक्षिणांगे सितश्चैव देवलश्च समास्थितौ। गणेश्वरं तौ संस्थाप्य पूजतो योगिसत्तमाः ॥१२॥ उत्तरायां विशेषेण पूजनीयौ नरैः सदा। एकनिष्ठाप्रदौ स्यातां नराणां पापहारकौ ॥१३॥ वसूनां च पुरोभागे क्षेत्रं शतधनुर्द्वयम्। गार्ग्याणां ते नरैर्विद्याप्रदाः पूज्या विशेषतः ॥१४॥ उत्तराषाढनक्षत्रे यात्रा तेषां प्रकीर्तिता। गर्गः स्वयं महायोगी भजते गणनायकम् ॥१५॥ गवां पुरो महेशाना मौद्गला गणपप्रियाः। सेवंते विघ्नराजं ते तावन्मानेन संस्थिताः ॥१६॥ देवा विप्राश्च मांडूका देवलासितयोः पुरः। सेवंते गणनाथं ते सर्वे भक्तियुताः सदा ॥१७॥ उत्तराभाद्रनक्षत्रे मौद्गला मानवैः सदा। पूजनीया विशेषेण योगदाः संभवंति ते ॥१८॥ मांडूकाः पूर्वफल्गुन्यां पूजनीया नरैः सदा। व्याधिदोषहरास्ते तु भवंत्यत्र न संशयः ॥१९॥ असिताद्या इमे सर्वे स्वस्वनामांकितं परम्। पूजयंति गणेशं संस्थाप्य तीर्थसमन्विताः ॥२२०॥ तेषां पुरो महात्मानो मुनयस्तत्र संस्थिताः। मुख्यांस्तेषु प्रवक्ष्यामि शृणुध्वं योगिसत्तमान् ॥२१॥ धौम्यश्च वाल्मिकीवाचक्नवी मंकणको मुनिः। कहोडश्च सुमंतुर्वै वैशंपायन एव च ॥२२॥ जाबालिः पर्वतः पैल ऋष्य-

शृंगः प्रतापवान् । लोमशश्च विभांडोऽन्यो बल्लवाद्या महर्षयः ॥२३॥ स्वस्वतीर्थयुतास्ते संस्थाप्य विघ्नेश्वरान् सदा । पूजयंति महाभागाः स्वस्वनामसमन्वितान् ॥२४॥ उत्तराषाढनक्षत्रे पूजनीया नरैः सदा । सर्वपापहरास्ते वै भवंते योगिसत्तमाः ॥२५॥ तत्पुरो गुह्यकाश्चैव हनूमान् पवनात्मजः । यक्षा रक्षोगणाः सर्वे भजंते गणनायकम् ॥२६॥ स्थाप्य ढुंढिं स्वतीर्थैस्तु युता ध्यानपरायणाः । उत्तराभाद्रनक्षत्रे पूजनीयाः शुभप्रदाः ॥२७॥ मुक्तेरीशानभागे तु सरः प्रणवसंज्ञितम् । प्रणवाकृति तत्रैव स्नाने मूर्ध्नि ध्वनिर्भवेत् ॥२८॥ तत्रोंकारगणेशश्च सरस्वत्या समन्वितः । चतुर्थ्यां पूजनीयोऽसौ सर्वसिद्धिप्रदायकः ॥२९॥ तत्पुरो भैरवस्यैव दूता नग्नस्य सर्वतः । रक्षार्थं संस्थिता देवा महाबलसमन्विताः ॥२३०॥ अन्ये नानाविधास्तत्र स्थितास्तेषां महात्मनाम् । नामादिकं बहुत्वात् कथयितुं नैव शक्यते ॥३१॥ इदमुत्तरगं प्रोक्तं मयूरस्य चरित्रकम् । संक्षेपेण महादेवाः सर्वसिद्धिप्रदायकम् ॥३२॥ यात्रादिसंयुतं यस्तु शृणोति क्षेत्रवासिनाम् । मुख्यानां चरितं पुण्यं स सर्वं प्रलभेत् सुखम् ॥२३३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते क्षेत्रवासिचरितवर्णनं नामैकोनविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ देवेशा ऊचुः । मयूरं कीदृशं देवालयं विप्र किमात्मकम् । गर्भागारं तथा योगिन् वद गाणेशरूपकम् ॥१॥ भृशुंड्युवाच । चित्रं नानाविधं सर्वं मायारूपं मयूरकम् । तदेव गणनाथस्य रूपं ज्ञातव्यमुत्तमम् ॥२॥ दिवुः क्रीडात्मको धातुर्माया-क्रीडाकरः स्वयम् । गणेशस्तस्य रूपं यद्देवागारं प्रकीर्तितम् ॥३॥ यथा गर्भश्च देवेंद्राः शुक्रशोणितसंभवः । द्वाभ्यामेकत्व-मापन्नो जायते द्वंद्वधारकः ॥४॥ मायामायिकयोर्योगे तथा स्वानंद उच्यते । गर्भागारं तदेवाऽपि ज्ञातव्यं योगिभिः परम् ॥५॥ स्वानंदे वसतिस्तस्य गणेशस्य महात्मनः । स एव मूर्तिमास्थाय संतस्थावुत्तरामुखः ॥६॥ एतत् सर्वं रहस्यं यत् कथितं सर्वमंजसा । तं सेवध्वं महेशानास्तेन सर्वमवाप्स्यथ ॥७॥ देवेंद्रा ऊचुः । क्षेत्रं गणपतेर्योगिन् सर्वं गाणेशरूपकम् । तत्र स्थिता विशेषेण देवविप्रादयः प्रभो ॥८॥ तेषां पुरीषमूत्रादिव्यवहारः कथं भवेत् । स्त्रीसंगपुत्रपौत्राद्यं सर्वं तद्दुर्घटं भवेत् ॥९॥ भृशुंड्युवाच ।

साक्षाद्गणेश्वरस्यैव देहो योगमयोऽमराः। न नस्य बाधते किंचिन् मृतरूपमिदं कदा॥१०॥ लोकानामुपकाराय जलपृथ्व्यादिकं तथा। रचितं सर्वसामान्यं तत्र वासेन लभ्यते॥११॥ गणेशः सर्वयोगानामधिपो नात्र संशयः। न गणेशस्वरूपस्य विक्रिया जायते ततः॥१२॥ योगरूपे नरास्तत्र निश्चये न मृताः किल। गाणेशे संभविष्यंति तदाकारा न संशयः॥१३॥ तथा नरादयश्चान्ये वसंति क्षेत्रवासिनः। कुर्वंति मलमूत्रादि देवादीनां न बाधते॥१४॥ देवविप्रादयस्तत्र संस्थिता व्याप्य देवपाः। अंगुष्ठपर्वमात्रेण रूपेण क्षेत्रवासिनः॥१५॥ मयूरं तन्मयं क्षेत्रं ज्ञातव्यं दिव्यचक्षुषा। मृन्मयं मानवानां तु तद्दोषस्तत्र नो भवेत्॥१६॥ तथापि मृन्मये क्षेत्रे गर्भागारं विशेषतः। मलमूत्रादिदोषैश्च संयुतं नैव कारयेत्॥१७॥ तेन सर्वं शुभं सर्वैर्लभ्यते मानवैः परम्। यथा धर्मयुतैर्नित्यं सेवनीयं मयूरकम्॥१८॥ भवेद्द्विपथभावेन मयूरे संस्थितो यदि। स यातनां लभेच्चोग्रां नग्नभैरवकारिताम्॥१९॥ देवेशा ऊचुः। गर्भागारे मलस्यैव नरस्त्यागं समाचरेत्। तस्मै भैरवदत्तां तां यातनां कीदृशीं वद॥२०॥ मयूरे पापकर्माणि यः करोति तु मानवः। स भुंक्ते यातनां विप्र कीदृशीं तां वदस्व नः॥२१॥ मयूरं केन पुण्येन लभ्यते तद्वदस्व च। क्षेत्रसंन्यासिनां चैव द्वारयात्रां किमात्मिकाम्॥२२॥ भृशुंड्युवाच। इतिहासं प्रवक्ष्यामि पुराकल्पसमुद्भवम्। तेन संशयहीनाश्च भविष्यथ सुरोत्तमाः॥२३॥ देवागारे द्विजः कश्चिद्देवानीकेति नामतः। अत्रिगोत्रोद्भवः सुज्ञः संस्थितोऽभूत् सुकर्मवान्॥२४॥ स्वधर्मसंयुतो नित्यं सिषेवे गणनायकम्। देवविप्रातिथिप्रेप्सुः क्षेत्रयात्रापरायणः॥२५॥ एवं बहौ गते काले वृद्धस्तत्र बभूव ह। तथापि नित्ययात्रायां रतोऽभूद् धर्मधारकः॥२६॥ एकदा ज्वरयुक्तश्चाजीर्णान्नेन प्रपीडितः। जगाम स मयूरेशं पूजनाय महायशाः॥२७॥ पूजयित्वा गणेशानं नित्ययात्रां चकार ह। तत्रापानभवो वायुः पीडयन्नतिदूषितः॥२८॥ हठात् संगृह्य विप्रस्तं त्यक्त्वा यात्रां महामतिः। स्वगृहं प्रजगामाऽसौ त्वरायुक्तोऽतिदुःखितः॥२९॥ गच्छतोऽजीर्णदोषेणातिसारेण महात्मनः। मलः शिथिलभावेन निःसृतो गर्भमंदिरे॥३०॥ ततोऽतिदुःखसंयुक्तः स्नानं चक्रे स वाडवः। शनैः स्वगृहमागम्य शोकयुक्तो बभूव ह॥३१॥ अहो मयाऽतिमूर्खेण गर्भागारे कृतं परम्। मलत्यागभवं पापं का गतिर्मे भविष्यति॥३२॥ ततस्तत्र ममारैव स्वल्पकालेन विप्रपः। रोगेण पीडितोऽत्यंतं देवानीको महायशाः॥३३॥ ततस्तं भैरवस्यापि दूता नेतुं समागताः। बद्ध्वा संताड्य विप्रं संगृह्य ते भैरवं ययुः॥३४॥ दृष्ट्वा स भैरवो देवस्तमुवाच द्विजाधमम्। किमर्थं रोगयुक्तस्त्वं गर्भागारं गतो वद॥३५॥

अल्पसाध्यशरीरेण गमनं यत्त्वया कृतम् । भुंक्ष्व पापं महादुष्ट मलत्यागभवं परम् ॥३६॥ साक्षाद्गणपतेः स्थाने गर्भागारे गतो भवान् । तस्य मस्तकमध्ये तु पपात किल ते मलः ॥३७॥ अस्माभिश्च सुवासेन जलेन क्षालितं तदा । मस्तकं तस्य देवस्य विष्ठायुक्तं तया कृतम् ॥३८॥ इत्युक्त्वा क्रूररूपं स दर्शयामास भैरवः । देवानीकाय तं सोऽपि दृष्ट्वा मूर्च्छामवाप ह ॥३९॥ ततस्तं सावधानं स पुनः कृत्वाऽग्निचक्रगम् । चकार दूतवर्यैश्च नग्नभैरव एव च ॥४०॥ अग्निचक्रे द्विजो नित्यं दाहयुक्तो बभूव ह । बभ्राम देवमुख्याश्च हाहाकाररवाकुलः ॥४१॥ भैरवाणां महावह्निर्मतः कोटिगुणाधिकः । यमस्याग्नेश्च जंतूनां तं स्प्रष्टुं कः क्षमो भवेत् ॥४२॥ शतवर्षाणि विप्रेशोऽग्निचक्रं तत् समाश्रितः । बभ्राम दाहसंयुक्तो न ममार स मायया ॥४३॥ भैरवेण निबद्धः स दुःखमेव सुदारुणम् । बुभुजे ब्राह्मणस्तत्र मया वक्तुं न शक्यते ॥४४॥ ततो हैमगुहायां स निक्षिप्तो ब्राह्मणाधमः । शतवर्षाणि तत्रैवाभवच्छैत्येन पीडितः ॥४५॥ ततः स रौरवे तेन निक्षिप्तो जंतुभिस्तथा । दंशितस्तत्र संस्थश्च कोटिवृश्चिकसन्निभैः ॥४६॥ शतवर्षाणि तत्रैव पीडितस्तेन दारुणम् । ततस्तप्तशिलायां स पोथितोऽभूत् पुनः पुनः ॥४७॥ शतवर्षाणि तत्रैव यातनां बुभुजे पराम् । ततः पिशाचयोनिस्थः क्षेत्रे पीडायुतोऽभवत् ॥४८॥ अन्नवस्त्रजलादिभ्यो हीनो बभ्राम वाडवः । अशुचीन् स नरान् प्राप्य तद्देहस्थो बभूव ह ॥४९॥ तत्रैव शास्त्रमंत्रेण वैदिकेन द्विजोत्तमैः । ताडितस्तान् परित्यज्य बभ्राम यत्र तत्र ह ॥५०॥ एवं वर्षाणि देवेशः शतं कृत्वा पुनश्च तम् । आनाय्य भैरवो देवो जगाद वचनं हितम् ॥५१॥ देवानीक त्वया भक्त्या यात्रार्थं गर्भमंदिरम् । अशक्तेन कृतं चैव मलयुक्तं महामते ॥५२॥ तेन त्वं पंचशतकं वर्षाणां यातनाभवम् । दुःखं भुक्त्वा महाविप्राऽधुना तं गणपं व्रज ॥५३॥ इत्युक्त्वा तं महेशाना ब्रह्मभूतं चकार ह । एवं वः कथितं तत्र मलत्यागे महद्भयम् ॥५४॥ यदि स्वाधीनदेहश्चेत् ज्ञात्वा गर्भालये मलम् । त्यजेत् सोऽपि नरः पूर्णां यातनां प्रलभेत् पराम् ॥५५॥ इदं श्रुत्वा नरो यस्तु त्रासयुक्तो भवेत् कदा । तदारभ्य मलत्यागं न कुर्यात् स लभेद्गतिम् ॥५६॥ तं निर्भर्त्स्य महा क्रूरा भैरवा यातनाभवम् । दर्शयित्वा महद् दुःखं ब्रह्मभूतं तु चक्रिरे ॥५७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते मलत्यागयातनाकथनं नाम विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ भुशुंड्युवाच । विकर्मकारिणां क्षेत्रे कथयिष्यामि चाधुना । यथा दंडः स्वहस्तैश्च क्रियते भैरवैर्महान् ॥१॥ मयूरे क्षत्रियः कश्चिद्वासं कृत्वा स्थितोऽभवत् । गत्वा वनांतरे लोकान् हत्वा द्रव्यं समग्रहीत् ॥२॥ कुटुंबपोषणे सक्तः शिश्नोदरपरायणः । चकार विविधं पापं क्षेत्रे मायूरसंज्ञिते ॥३॥ परस्त्रियं बलाद् गृह्यायभक्तां निरपत्रपः । जातिभेदादिकं सोऽपि मान्यं नैव चकार ह ॥४॥ भगिनीमेकला दृष्ट्वा कदा मद्येन विह्वलः । हठात् गृह्य महेशाना बुभुजे कामनायुतः ॥५॥ चौरादीनि चकारापि ब्रह्महत्यां तथा खलः । गोस्त्रीवधादिकं दुष्टः किं वदामि विशेषतः ॥६॥ गणेशं न पुपूजासौ कदाचिदमरान् परान् । यात्रां नैव चकारापि पापनिष्ठो ममार ह ॥७॥ भैरवास्तं समागृह्य बद्ध्वा ताडय नराधमम् । निन्युः स्वस्थानगं ते तु नग्नं भैरवनायकम् ॥८॥ क्षत्रियोऽथ महाक्रूरं दृष्ट्वा भैरवनायकम् । हाहा कृत्वा पपाताऽसौ मूर्च्छितो धरणीतले ॥९॥ सावधानं ततः कृत्वा मायया नग्नभैरवः । मृतिमूर्च्छाविहीनं च दुष्टं चकार सर्वपः ॥१०॥ ततस्तं गृह्य दूतास्ते भैरवस्य महात्मनः । अग्निकुंडेषु संक्षिप्य दाहयामासुरंजसा ॥११॥ सहस्रे ते तं गतेषु वर्षेषु क्रोधसंयुतः । अग्निचक्रे समाक्षिप्य भ्रामयामासुरंजसा ॥१२॥ हाहाकाररवैर्युक्तो बभ्रामाग्नौ नराधमः । न ममार न मूर्च्छां सोऽलभद्भैरवमायया ॥१३॥ ततः सहस्रवर्षांते हैमकुंडे समाक्षिपन् । भैरवास्तं महादुष्टं शीतैश्चक्रुः प्रपीडितम् ॥१४॥ ततः सहस्रवर्षांते शिलायां स्थाप्य मुद्गरैः । चूर्णयामासुरुग्रैस्तं खलं कंटकसंयुतैः ॥१५॥ एवं गतानि वर्षाणि सहस्रं देवसत्तमाः । ततो याम्यां ददुस्तस्मै यातनां दारुणां पराम् ॥१६॥ रुरुजंतुभिरादष्टो रौरवेऽभून्नराधमः । स सहस्रं वर्षकाणि महोग्रैर्वह्निसन्निभैः ॥१७॥ ततस्तैलकटाहेषु संतप्तेषु च तं भटाः । चिक्षिपुर्दारुणां सोऽपि वेदनां बुभुजे पराम् ॥१८॥ ततः सहस्रवर्षांते तप्तवालुभिरेव तम् । आच्छाद्य स्थापयामासुर्भैरवाः क्षत्रियाधमम् ॥१९॥ सहस्रं तत्र वर्षाणि बुभुजे दुःखमुल्बणम् । ततः स पपात पिशाचयोन्यां दुःखसंयुतः ॥२०॥ क्षुधा तृषा समायुक्तः सदा शीतोष्णभावकैः । बभ्राम क्षेत्रमध्ये स पीडितो यत्र तत्र च ॥२१॥ तत्र तं देवदूताश्च दृष्ट्वा स्वनिकटे स्थितम् । तदा दंडादिभिः सर्वे ताडयामासुरोजसा ॥२२॥ वेदशास्त्रध्वनिं श्रुत्वा होमधूमादिकं तथा । पपाल दुःखसंयुक्तो मंत्रशास्त्रभयात् कदा ॥२३॥ त्रीणि वर्षसहस्राणि भुक्त्वा दुःखं ततः परम् । भैरवैश्च समानीतो ननाम नग्नभैरवम् ॥२४॥ शुद्धस्तेन समानीतो गणेशस्यैव मंदिरे । गणेश्वरं तत्र दृष्ट्वा ब्रह्मभूतो बभूव ह ॥२५॥ एवं पापप्रचारान् संदंडय ब्रह्ममयं पुनः । चक्रुः क्षेत्रे मृतत्वात् कथयितुं शक्यते

न वै ॥२६॥ अन्यं पापकृतः कर्म दाहकं विधिमुत्तमम् । कथयामि समासेन श्रृणुध्वं शिवमुख्यकाः ॥२७॥ ब्राह्मणः काश्यपः कश्चित् मयूरे संस्थितोऽभवत् । चौर्यमद्यादिकं सोऽपि चकार नित्यमादरात् ॥२८॥ परस्त्रीलंपटः सोऽपि शिश्नोदरपरोऽभवत् । ब्रह्महत्यां द्रव्यलोभाच्चकार काश्यपोऽधमः ॥२९॥ ज्ञात्वा राज्ञा द्विजस्यैवाहृत्य सर्वं पुनर्द्विजम् । बद्ध्वा क्षेत्राद्बहिश्चक्रे नरैर्धर्मपरायणैः ॥३०॥ ततो द्विजो विलप्यैव कृत्वा शपथमागतः । मयूरं तत्र लोकैः स द्वारयात्रा परोऽभवत् ॥३१॥ द्वारयात्रारतं दृष्ट्वा लोकास्तं मेनिरे पुनः । ब्राह्मणं श्रद्धया युक्ता वस्त्रान्नं च ददुः परम् ॥३२॥ चतुर्द्वारमयीं यात्रां चकार ब्राह्मणाधमः । पंचम्यां पारणं चक्रे षष्ठयां सर्पेण दंशितः ॥३३॥ मृतं मयूरक्षेत्रे तं विषोग्रेण प्रपीडितम् । संगृह्य भैरवाः सर्वे नग्नभैरवमाययुः ॥३४॥ यातनागारकं देवो दर्शयामास भीतिदम् । तस्मै पुनश्च विघ्नेशं दर्शयामास देवपाः ॥३५॥ दृष्ट्वा गणपतिं सोऽपि ब्रह्मभूतो बभूव ह । क्षेत्रे कृतं महत्पापं द्वाराणां यात्रया गतम् ॥३६॥ अन्यच्च शृणुत प्राज्ञा मयूरे चरितं भवम् । पुरा कल्पे समासेन कथयामि महेश्वराः ॥३७॥ दंडकारण्यदेशे तु ब्राह्मणोऽत्रिकुलोद्भवः । बाल्यात् प्रारभ्य दुर्बुद्धिः पापकर्मपरोऽभवत् ॥३८॥ नाम्ना देवाः सुप्रतीको द्रव्यलोभी बभूव ह । चौर्यद्रव्यं जनानां संगृह्य भोगान् बुभोज च ॥३९॥ कदा सप्तपुरीणां च यात्रार्थं जग्मुरादरात् । चतुर्वर्णजनाः सोऽपि तेषां मध्ये जगाम ह ॥४०॥ द्रव्यलोभी जनानां च चौर्यद्रव्यं समग्रहीत् । एवं बहुधनस्तत्र जातोऽसौ ब्राह्मणाधमः ॥४१॥ कृत्वा सप्तपुरीणां ते यात्रां पुनः समाययुः । स्वदेशं तैः समायुक्तः सोऽपि स्वगृहमाययौ ॥४२॥ ततः स्त्रीपुत्रकान् स्वस्य मंडयामास भूषणैः । चचार तीर्थगो भूत्वा कदाचिच्चौर्यकारणात् ॥४३॥ द्विजः पौराणिकं दृष्ट्वा पुराणकथने रतम् । चौर्यार्थं तत्र पापात्मा जनमध्ये समास्थितः ॥४४॥ ततो मयूरक्षेत्रस्य माहात्म्यं स्कांदसंभवम् । शुश्राव सुप्रतीकश्च जनैः सर्वैर्महेश्वराः ॥४५॥ मयूरक्षेत्रमाहात्म्यश्रवणेन दुरात्मनः । द्विजस्य बुद्धिभेदो वै बभूवे दैवयोगतः ॥४६॥ स तु तत्र चकारापि विचारं मानसे परम् । अहो मया द्विजेनैव किं कृतं पापमुल्बणम् ॥४७॥ विषादिना हता लोका ब्राह्मणाद्या मया बहु । तीर्थेषु चौर्यहत्यादि पापं तु प्रकृतं मया ॥४८॥ काश्यां प्रदक्षिणायां तु पंचक्रोश्यां मया परम् । पापं कृतमपारं वै का गतिर्मे भविष्यति ॥४९॥ मद्विना ब्राह्मणः कश्चिदीदृशो न भवेत् कदा । यो ब्रह्मणि रतः सर्वो ब्राह्मणस्तेन कथ्यते ॥५०॥ एकांतगं ततः पौराणिकं गत्वा द्विजाधमः । उवाच तं प्रणम्यादौ कृत्वा करपुटं वचः ॥५१॥ सुप्रतीक उवाच ।

सर्वतीर्थेषु क्षेत्रेषु पापं दुष्टः समाचरेत् । वज्रलेपं तदेवाऽपि कुत्र नाशं गमिष्यति ॥५२॥ पौराणिक उवाच । सप्तपुर्यादिक्षेत्रेषु नरः पापं समाचरेत् । तन् मयूरक्षेत्र एव प्रवेशेन लयं व्रजेत् ॥५३॥ चतुर्विधानि क्षेत्राणि सर्वत्र ब्रह्मगोलके । धर्मार्थकाममोक्षाणां प्रदानि सेवनां द्विज ॥५४॥ पंचमं ब्रह्मभूताख्यं मयूरं नात्र संशयः । तत्र पापं कृतं चेद्वै वज्रलेपतमं भवेत् ॥५५॥ एवं तस्य वचः श्रुत्वा तं प्रणम्य समाययौ । गृहं दारादि संगृह्य मयूरेशं जगाम ह ॥५६॥ यथाविधि चकाराऽसौ यात्रां क्षेत्रसमुद्भवाम् । द्वारादिचिह्नितां सोऽपि निवासमकरोत्ततः ॥५७॥ देवागारं समाश्रित्याभजत्तं गणनायकम् । अंते पापविहीनः स ब्रह्मभूतो बभूव ह ॥५८॥ एवं नाना जनास्तत्र पतितानां महेश्वराः । पतिताः पापहीनाः प्रवेशे जाता मयूरके ॥५९॥ अधुना कथयिष्यामि चरित्रं यत् पुरातनम् । श्रुत्वा संशयहीनास्तं मयूरेशं भजंति वै ॥६०॥ वैश्यो धर्मध्वजो नाम द्रव्यलोभी बभूव ह । विषेण पितरं सोऽपि मारयामास लोभतः ॥६१॥ नाना-द्विजादिकान् सोऽपि वंद्य पूज्यान् दुरात्मवान् । विषेण मारयामास नित्यं द्रव्यार्थमुल्बणः ॥६२॥ स कदाचिद्वणिग्भिश्च क्रयविक्रयकारणात् । जगाम दंडकारण्ये जनैः सह महाखलः ॥६३॥ तत्र माघे महायात्रां जग्मुर्लोका विशेषतः । मयूरेशं ततः सोऽपि तैर्जगाम सुहर्षितः ॥६४॥ द्रव्यलोभार्थमानंदात् पुरं मायूरमाययौ । तत्र प्रवेशमात्रेण तं च पापानि तत्यजुः ॥६५॥ बहिः स्थितानि पश्यंति यदाऽसावागमिष्यति । तदा पुनः प्रवेशं वै करिष्यामो नराधमम् ॥६६॥ तत्र दैव-प्रसंगेन न पापानि चकार ह । यथाविधि तथा यात्रां चक्रे हर्षसमन्वितः ॥६७॥ पुनर्मानवसंघैः स निर्जगाम महेश्वरः । मयूरेशं परित्यज्य मार्गसंस्थो बभूव ह ॥६८॥ तं दृष्ट्वा तस्य पापानि शुद्धं यात्राविधानतः । स्प्रष्टुं तान्यसमर्थानि बभूवु-र्देवसत्तमाः ॥६९॥ ततः पापानि सर्वाणि विचारं चक्रुरादरात् । अहो यः क्षेत्रगो भूत्वा पापानि कुरुते सदा ॥७०॥ तथाऽस्माभिर्मयूरेऽयं गत्वा पापं करिष्यति । ज्ञातं तेन महाविघ्नैः पीडितो नैव निश्चितम् ॥७१॥ अधुना शुद्धरूपोऽयं बहिः सदा समागतः । अतः पुण्यानि नित्यं तु करिष्यति विशेषतः ॥७२॥ वयं कुत्र गमिष्यामो विघ्नं कुरुत सर्वतः । येनाऽयं पापकर्माऽपि कुरुते पापमल्पकम् ॥७३॥ किंचित् पापयुतं वैश्यं प्रविश्यामो विशेषतः । ततो महाघसंयुक्तं करि-ष्यामो न संशयः ॥७४॥ एवं विचार्य पापानि पापिनां हृदयेषु च । प्रविश्य तान् समानाय्य वैश्यं तं समपीडयन् ॥७५॥ अकस्माच्चौरमुख्यैश्च द्रव्यं तस्य समाहृतम् । तेनातिदुःखयुक्तो हि धर्मध्वजो बभूव ह ॥७६॥ ततः पापेषु दुर्बुद्धिश्चकार

ह पुनर्मतिम् । एतस्मिन्नंतरे तत्र ब्राह्मणं स ददर्श ह ॥७७॥ तं प्रणम्य स्ववृत्तांतं कथयामास विस्तरात् । श्रुत्वा तं पुनरप्याह ब्राह्मणः सर्वमार्गवित् ॥७८॥ त्वया कृतानि पापानि तानि त्वां पीडयंति वै । अतस्त्वं सत्वरो भूत्वा मयूरेशं समाश्रय ॥७९॥ स्वजनैः पुत्रदारादि समानाय्य महामते । तत्रस्थो धर्मसंयुक्तो दुःखहीनो भविष्यसि ॥८०॥ तच्छ्रुत्वा स प्रणम्यादौ तं मयूरेशकं द्विजम् । जगाम त्वरया युक्तस्ततः सर्वान् समानयत् ॥८१॥ मयूरे वैश्यवृत्त्या च धर्मयुक्तः समास्थितः । धर्मध्वजश्चकाराऽसौ गणेशभजनं सदा ॥८२॥ पापानि भोगहीनानि बहिर्मग्नः स्थितान्यपि । धर्मध्वजश्च देवेशा ब्रह्मैवांते बभूव ह ॥८३॥ क्षेत्रं नरेण मायूरं न त्याज्यं तु कदाचन । पीडितेन महादोषैर्मतं तदपि तद्वरम् ॥८४॥ अन्यत्र राज्यभोगस्थोऽथवा स्वर्गस्थ एव सः । मयूरे नीचजातिस्था किंच तेन समो न हि ॥८५॥ आयासेन विहीनत्वाद्ब्रह्मभूतो भवेन्नरः । मयूरे तेन किं तुल्यं भवेद्ब्रह्मांडमंडले ॥८६॥ इदं यः शृणुयाद्देवा श्रावयेद्वा पठेन्नरः । पापहीनः स्वभावेन धर्मयुक्तो भविष्यति ॥८७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते मयूरे यात्रार्थप्रवेशफलादिवर्णनं नामैकविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ भ्रूशुंडयुवाच । अथ वक्ष्यामि देवेशा मयूरप्रापकं महत् । पुण्यं चित्तैकभावेन शृणुध्वं सुखदायकम् ॥१॥ कुत्र आंगिरसे जातो देवप्रिय इति श्रुतः । पुरा कल्पे स धर्मात्मा स्वधर्मनिरतोऽभवत् ॥२॥ गणेशे प्रीतिसंयुक्तो गाणपत्यप्रियोऽभवत् । मुक्तिमिच्छन् सदा कर्माणि चकार विधानतः ॥३॥ ततस्तस्य महेशाना बुद्धिः प्रादुर्बभूव ह । तया संप्रेरितस्तीर्थानि क्षेत्राणि चकार ह ॥४॥ शास्त्रे विधिं समाश्रित्य पृथिव्यां मुख्यकानि सः । क्षेत्राणि तीर्थमुख्यानि यात्रया चाकरोद् द्विजः ॥५॥ ततः स्वगृहमागत्य दारापत्यैः समन्वितः । गणेशमभजन्नित्यं भक्तियुक्तेन चेतसा ॥६॥ ततश्च मानसे सोऽपि विचारमकरोत् परम् । अहो मयूरपक्षेत्रं सेवनीयं निरंतरम् ॥७॥ ज्ञात्वा द्विजं समुद्युक्तं दारापत्यैः समन्वितम् । माया तं पीडयामास मयूरे वासभंजनात् ॥८॥ यात्रार्थं तेन यत्किंचित् गृहे द्रव्यादि

संचितम्। तदेव चौरमार्गेण नष्टं मायाप्रभावतः ॥९॥ ततोऽतिविस्मितो भूत्वा खेदयुक्तो बभूव ह। पापयुक्तोऽहमत्यंतं तेन विघ्नयुतः कृतः ॥१०॥ शुक्लवृत्त्या गमिष्यामि मयूरेशं न संशयः। ततो ज्वरसमायुक्तो बभूव ब्राह्मणोत्तमः ॥११॥ निर्जगाम ततः सोऽपि स्वगृहे ज्वरसंयुतः। शुक्लवृत्तिधरो भूत्वा नियम्यात्मानमात्मना ॥१२॥ तृतीये दिवसे तत्र विघ्नेशो विघ्नहारकः। बभूव स द्विजस्याऽपि परं श्रृणुत चेष्टितम् ॥१३॥ गणेशकृपया विप्रो ज्वरहीनो बभूव ह। ब्राह्मणस्य स्वरूपेण गणेशस्तं समाययौ ॥१४॥ तस्य पुत्रं समाहूय द्रव्यं दत्वा सुपुष्कलम्। अंतर्धानं चकाराऽसौ पुत्रस्तातं जगाद तु ॥१५॥ ज्ञात्वा देवं विचार्यैव स्वस्थचित्तो बभूव ह। देवप्रियो मयूरेशमाजगाम द्विजोत्तमः ॥१६॥ यात्रादिकं चकाराऽसौ गर्भागारे समाश्रितः। अभजद्गणराजं तमंते तल्लीनतां ययौ ॥१७॥ यानि क्षेत्राणि तीर्थानि ब्रह्मांडे सेवितानि चेत्। तदा नरेण मायूरक्षेत्रं लभ्यं महेश्वराः ॥१८॥ देवेशा ऊचुः। चोरादयः समाख्यातास्त्वया ब्रह्मर्षिसत्तम। किं चक्रुर्येन पुण्येन मयूरेशे लयं ययुः ॥१९॥ भ्रूशुंड्युवाच। पूर्वजन्मनि माहात्म्यं संश्रुतं किंचिदप्यहो। क्षेत्रस्य पापकर्मस्था अंते तत् सस्मरुर्यदि ॥२०॥ अंते स्मरणयोगेन पापिनोऽन्यभवे कदा। ययुः क्षेत्रे मरणतो लयं देवा गणेश्वरे ॥२१॥ गाणेशस्य च मार्गस्य श्रवणं पापचेतसाम्। भवेन्नानाविधस्याऽपि किंचिद्देवेंद्रसत्तमाः ॥२२॥ यदि मरणकाले तु तस्य संस्मरणं भवेत्। पुरो जन्मनि चाज्ञानात्तस्य संसेवनं भवेत् ॥२३॥ अथवा ज्ञानयुक्तः स नरस्तत् सकृदाचरेत्। यद्वा तद्वाऽऽचरेद्वापि ब्रह्मभूतः स जायते ॥२४॥ अथासंस्कारयुक्तस्य गाणेशेनाधिकारतः। प्रवेशो न भवेत्तस्य चरित्रं श्रृणुत प्रियाः ॥२५॥ क्षत्रियः सुलभो नामा बभूव पृथिवीपतिः। अंगदेशस्य राज्यं स चकार धर्मसंयुतः ॥२६॥ मयूरेशस्य स श्रुत्वा माहात्म्यं क्षेत्रसंभवम्। पुत्रे राज्यं परित्यज्य वासार्थं तु मनो दधे ॥२७॥ यथाशास्त्रं विधानेन मयूरेशं समाययौ। चकार विधिना यात्रां स्वयं द्वारादिचिह्निताम् ॥२८॥ ततस्तत्र स्थितो राजा वार्षिकीं विविधां पुनः। चकार यात्रां क्षेत्रस्थो देवादीनां विधानतः ॥२९॥ ततो मनसि संधार्य क्षेत्रसंन्यासकारणात्। सर्वानाज्ञापयामास सस्त्रीकः स उवास ह ॥३०॥ ततः स भैरवेणैव बुद्धिभेदयुतः कृतः। विचारमकरोच्चित्ते किमिदं क्षेत्रमुत्तमम् ॥३१॥ न काशीतुल्यतां याति क्षेत्रं ब्रह्मांडमंडले। अयं शिवसुतः प्रोक्तो मयूरेशो न संशयः ॥३२॥ ब्रह्म सर्वत्र योगेन तिष्ठति तेन वर्ण्यते। वेदादिषु गणेशानो ब्रह्मरूपी न मुख्यतः ॥३३॥ अतोऽहं भ्रमितो नूनं वाण्या पुराणसंस्थया।

गमिष्यामि न संदेहः क्षेत्रं काशीसमाश्रितम् ॥३४॥ एवं विचार्य भूपालो मयूरं त्यज्य देवपाः। काशीं जगाम मार्गे स ममार रोगसंयुतः ॥३५॥ पूर्वसंस्कारयोगेन काश्यां स ब्राह्मणोऽभवत्। धर्मयुक्तश्चकाराऽपि काशीवासं हितार्थतः ॥३६॥ मरणोन्मुखकालाय तस्मै विश्वेश्वरः स्वयम्। गणेशैकाक्षरं मंत्रं ददौ तारकनामकम् ॥३७॥ शौनक उवाच। कथां विचित्रां वदसि सूत त्वं हर्षदायिनीम्। तत्र संशयकं छिंधि वदिष्यामि त्वदग्रतः ॥३८॥ रामनामभवं मंत्रमवदत्तारकं परम्। पुराणं कुत्रचित् देवं शिवपंचाक्षरं पुनः ॥३९॥ कुत्रौंकारं च कुत्रापि शक्तिसूर्यात्मकं परम्। गणेशैकाक्षरं कुत्र निश्चयो नैव जायते ॥४०॥ अतः संशयनाशार्थं वद सर्वज्ञसत्तम। त्वदन्यः संशयच्छेत्ताऽस्माकं नैव भविष्यति ॥४१॥ सूत उवाच। बिंबरूपं महद्ब्रह्म स एव चतुराननः। गकाराक्षरगश्चात्र गणेशैकाक्षरे मतः ॥४२॥ तस्य पालकभावेन विष्णुः सर्वप्रवर्तकः। अकाराक्षरसंस्थश्च मंत्रराजे महामुने ॥४३॥ तयोः संहारकर्ता त्वनुस्वारः शंकरः स्मृतः। वरदानाद् गणेशस्य मंत्रे जानीहि निश्चितम् ॥४४॥ तेषां मनोमयो भानुः स्वस्वकर्मधरो बभौ। सानुनासिकरूपेण मंत्रे सोऽपि प्रतिष्ठितः ॥४५॥ चतुर्णां देहरूपा सा शक्तिर्वाणीमयी मता। सर्वत्र संस्थिता विप्र मंत्रे दृश्यस्वभावतः ॥४६॥ एभिः सृष्टं जगत्सर्वमोंकाराकृतिलक्षणम्। तत्र क्रीडंति तेनैव मंत्र ओंकारसंयुतः ॥४७॥ एतेषामर्थभावेन गणेशश्च प्रकीर्तितः। स एव देवता प्रोक्ता वेदेषु वेदवादिभिः ॥४८॥ गणेशमंत्रगाः सर्वे देवेशाः शंकरादयः। जगन्नानाविधं ब्रह्म तथा तत्र स्थितं मतम् ॥४९॥ यथा देवाश्च विप्रेश कलया गणपस्य वै। गणेशाकाररूपास्ते तथा मंत्राः प्रकीर्तिताः ॥५०॥ अन्यच्च शृणु भावेन काश्यां नानाविधा जनाः। तिष्ठंति विविधान् देवान् भजंते भक्तिसंयुताः ॥५१॥ तेषु स्वधर्मनिष्ठा ये काशीवासं यथाविधि। कुर्वंति तारकं तेभ्यो ददाति शंकरः स्वयम् ॥५२॥ तेषु शाक्ताः स्थितास्तत्र तेभ्यः शक्तिमयं परम्। तारकं कथयामास शंकरः करुणानिधिः ॥५३॥ सौरेभ्यः सौरभावाख्यं शैवेभ्यः शिवरूपकम्। वैष्णवं विष्णुभक्तेभ्यस्तारकं ह्यवदच्छिवः ॥५४॥ स्वधर्मनिरतास्तत्र कर्म चक्रुश्च नित्यशः। कर्मांगदेवप्रीत्यर्थमोंकारं तेभ्य आदिशत् ॥५५॥ गाणेशा ये स्थितास्तेभ्यः पूर्णतारकरूपकम्। गणेशैकाक्षरं मंत्रं ददाति हर्षसंयुतः ॥५६॥ ते सर्वे तारकं प्राप्य कैलासे शिवसन्निभाः। अतिष्ठन् योगमास्थाय मंत्रध्यानपरायणाः ॥५७॥ साक्षात्कारं प्रचक्रुस्ते ब्रह्म यन् मंत्रगं परम्। तत्र तल्लीनभावेन योगिनो बभ्रमुस्ततः ॥५८॥ महालये महेशस्य शरीरे लीनतां ययुः। पुनः सृष्टौ नरा भूत्वा तत्र योगरता बभुः ॥५९॥

मंत्रं मंत्रार्थभावं च त्यक्त्वा ब्रह्मणि संस्थिताः । स्वस्वेष्टब्रह्मगा अंते भवंस्ते मुनिसत्तम ॥६०॥ ये पापकारिणः काश्यां वसंति यदि ते मृताः । तेभ्यस्तारकरूपं तु न ददाति सदाशिवः ॥६१॥ भैरवीं यातनां ते तु भुक्त्वा कैलासमास्थिताः । लये मरणसंयुक्ताः पुनर्जन्मधरा मताः ॥६२॥ शौनक उवाच । वदंति वै पुराणेषु मुनयो ब्रह्मवादिनः । क्षेत्रेषु नानाभावेषु मृता मुक्तिमवाप्नुयुः ॥६३॥ तीर्थानि स्नानमात्रेण मुक्तिदानि वदंति च । व्रतादीनि महाप्राज्ञ नानामतविभेदतः ॥६४॥ सकामानि च कर्माणि कथितानि मुनीश्वरैः । नानाविधानि वै तेषु संस्मृतानि फलानि च ॥६५॥ तेषां कर्तार एवं ये फलानि प्राप्नुवंति ते । इहैव किंचित् केचित्तु परत्र द्विजसत्तम ॥६६॥ केचित् स्वल्पफलं केचित् पुष्कलं नात्र संशयः । किमिदं कौतुकं विप्र वद कारणमुत्तमम् ॥६७॥ काश्यां मुक्तिं विशेषेण प्राप्नुवंति नरादयः । तत्रैव मरणे सूत कथं ते जन्मिनोऽभवन् ॥६८॥ सूत उवाच । शब्दब्रह्मस्वरूपोऽयं गुरुरेकः प्रकीर्तितः । सर्वेषां विविधानां तु शिष्याणां नात्र संशयः ॥६९॥ शिष्याश्चतुर्विधाः प्रोक्ता उत्तमा मध्यमास्तथा । अधमा अधमेषु चाधमा मुनींद्रसत्तम ॥७०॥ विषयासक्तचित्ता ये पापकर्मपरायणाः । दुःखयुक्ता यदाऽत्यंतं तदर्थं कर्मसेविनः ॥७१॥ अधमाधमरूपाश्च कथितास्ते महर्षिभिः । स्वल्पं फलं प्राप्नुवंतीह परत्र सुनिश्चितम् ॥७२॥ यदि कर्मफलं स्वल्पं ददाति कथितं सदा । तेषां तत्र रुचिर्नैवोत्पद्यते मूर्खभावतः ॥७३॥ तेषां वचनभावार्थं प्रवृत्त्यर्थं च कर्मणि । फलमेकं समाख्यातं उत्तमाधममार्गिणाम् ॥७४॥ परेषां लज्जया ये तु भयाद्वा कर्म कारिणः । अधमास्ते समाख्याताः प्राप्नुवंत्यधिकं फलम् ॥७५॥ सकामा ये स्वधर्मस्थाः कर्म कुर्वंति नित्यशः । मध्यमास्ते फलं सर्वं भुंजंति कालमानतः ॥७६॥ निःकामाः कर्मकर्तार उत्तमास्ते फलं मुने । अक्षयं कल्पपर्यंतं भुंजंत्यत्र न संशयः ॥७७॥ तत्रैव युगमानं ते कथयामि समासतः । कृते कर्म कृतं सद्यः फलदं जायते मुने ॥७८॥ त्रेतायां च कृतं कर्मान्यकर्माबाधभावतः । कालेन फलसंयुक्तं भवनि प्राणिनां किल ॥७९॥ द्वापरे परलोके वाऽन्यकर्माबाधभावतः । इह ते वापि भुंजंति धर्महीनप्रभावतः ॥८०॥ कलौ तु परलोके ते वाऽन्यजन्मनि मानवाः । संभोक्ष्यंति कृतं कर्म कालमानप्रभावतः ॥८१॥ आसुरेणैव भावेन नराः सत्त्वादिवर्जिताः । अतो जानीहि रुच्यर्थं फलं चित्रं भवत्यहो ॥८२॥ यथाविधि कृतं कर्म तदा फलप्रदं भवेत् । अन्यथा कारकायैवासुरं दद्यात् फलं सदा ॥८३॥ कृते कर्म कृतं येन सकृत्तस्य फलं लभेत् । त्रेतायां निष्फलं दृष्ट्वा तदा द्विगुणमाचरेत् ॥८४॥ फलं ददाति त्रिगुणं द्वापरे कर्म

निश्चितम् । कलौ चतुर्गुणं प्रोक्तं इहजन्मनि सौख्यदम् ॥८५॥ सकृच्चापि फलं कृत्वा लभेत् सत्कर्म मानवः । अथवा युगधर्मेण चतुर्गुणं फलं लभेत् ॥८६॥ अन्यत् काश्यादि माहात्म्यसंभवं विपरीतगम् । मन्यसे तत्र वक्ष्यामि शृणु संशय-नाशनम् ॥८७॥ आत्मानुभवहीनो यो मर्त्यो मोक्षं लभेन्न वै । इदं मुख्यं विजानीहि ह्यन्यत्र भ्रममात्रकम् ॥८८॥ यथा देवगणाः सर्वेऽमराः शास्त्रे प्रकीर्तिताः । ब्रह्मणो दिवसांते ते मृत्युयुक्ता भवंत्युत ॥८९॥ नराणां तत्र जन्मानि संख्या-हीनानि शौनक । भवंति तेन देवाश्चामराः संकीर्तिता बुधैः ॥९०॥ तथापि पंच देवाश्चेश्वराः शास्त्रे प्रकीर्तिताः । विघ्नयुक्ता अनीशास्ते भवंति पश्य मानद ॥९१॥ महालये मरिष्यंति त्रिगुणैः संयुताः किल । पंच देवा न संदेहो ब्रह्माद्याः शास्त्र-मार्गतः ॥९२॥ तेषां लोकेषु क्षेत्रेषु मता मुक्तिश्च तादृशी । मरणैः संयुतान्येव क्षेत्राणि तत्र का कथा ॥९३॥ इंद्रादीनां विनाशे ते समर्था मृत्युहीनकाः । तेषां जन्ममृती जंतुर्न पश्यति कदाचन ॥९४॥ ईश्वरत्वमतः शास्त्रे कथितं रुचि-कारणात् । जन्ममृत्युविहीनाऽपि मुक्तिः संकथिता बुधैः ॥९५॥ वेदशास्त्रपुराणेषु स्वानंदो लयवर्जितः । सदा ब्रह्ममय-त्वाद्धि तत्र मुक्तिर्विशिष्यते ॥९६॥ स्वानंदेनैव यद्दत्तं तदेव ब्रह्म सौख्यदम् । पात्रहीनप्रभावत्वाद् द्विजैरन्यत्र वर्ण्यते ॥९७॥ अन्यत्र मुक्तिदान्येव प्रोक्तानि शास्त्रसंमतैः । वासदानि तु तीर्थानि तानि क्षेत्राणि सप्तसु ॥९८॥ मृतः षट्सु नरस्तासु काश्यां धर्मयुतो भवेत् । मरणं तारकं प्राप्य ज्ञानयुक्तो भवेत् स्वयम् ॥९९॥ पुनर्जन्मनि योगी स भवत्यत्र न संशयः । स्वेष्टं ब्रह्म समाप्नोति निश्चितं वेदगुह्यतः ॥१००॥ योगं श्रुत्वा नरो यस्तु पापकर्मपरायणः । मरणे संस्मरेद्योगं स मयूरे भवि-ष्यति ॥१॥ यत्र कुत्रस्थ आगत्य मयूरे ह्यथवा स्वयम् । मरिष्यति न संदेहो महापापयुतोऽपि चेत् ॥२॥ अथवा क्षेत्र-माहात्म्यं श्रुत्वा कुत्र स्थितो भवेत् । यदि मरणकाले स संस्मरेत् स तथा भवेत् ॥३॥ मयूरस्याथ वा यात्रामेव कृत्वा नरोत्तमः । यत्र कुत्र मृतः सोंऽते संस्मरेत् स तथा भवेत् ॥४॥ अथवा संगयोगेन गणेशे रुचिमालभेत् । नरो मयूरक्षेत्रे स मरणं प्राप्नुयात् परम् ॥५॥ शिवविष्णवादिलोकेषु संस्थितस्तत्र संगतः । गणेशे प्रीतियुक्तश्चेत् स मयूरे भविष्यति ॥६॥ अतिसंस्कारसंयुक्तः स क्षेत्रे धर्मसंयुतः । क्षेत्रसंन्यासभावेन मरणं तत्र चालभेत् ॥७॥ योगिनः शांतिरूपाश्च चित्तं त्यक्त्वा गणेश्वरे । लीनास्ते यत्र कुत्रापि मृता गाणेशतां ययुः ॥८॥ योगिनां मरणे विप्र यादृशं स्मरणं भवेत् । तादृशीं न गतिं सोऽपि लभते ब्रह्मणि रतः ॥९॥ तथा मयूरक्षेत्रे ये मृतास्तेषां न विद्यते । अंते मतिर्यथा विप्र गतिः सर्वत्र

पठ्यते ॥११०॥ इदं सर्वं समाख्यातं शृणु प्रकृतमुत्तमम् । कथानकं महीपस्य यथा मुद्गलभाषितम् ॥११॥ भृशुंड्युवाच । मयूरक्षेत्रे सुलभो वासं कृत्वा ययौ पुनः । काश्यां तस्य मृतौ क्षेत्रं मयूरं स्मृतिगं बभौ ॥१२॥ तेन गणेश्वरस्यैव ददौ मंत्रं महेश्वरः । सस्त्रीकः शिवरूपः कैलासे वासं चकार सः ॥१३॥ महालये शिवे लीनः पुनः सृष्टौ मयूरके । ब्राह्मणः स बभूवाऽपि सस्त्रीको भक्तिसंयुतः ॥१४॥ तत्र स्वल्पेन कालेन योगयुक्तो बभूव ह । ब्रह्मभूतः स जीवन् वै मरणे तत्र का कथा ॥१५॥ एवं संस्कारयोगेन मयूरे निवसंति ते । यत्र कुत्र स्थिताश्चेद्वै गमिष्यंति मयूरकम् ॥१६॥ क्षेत्रसंन्यासिनां देवा वदामि मार्गमुत्तमम् । आदौ द्वारयुतां यात्रां कुर्यात् संन्यासकारणात् ॥१७॥ पश्चात् क्षेत्रं समाश्रित्य तिष्ठेन्नियमसंयुतः । न गच्छेत् क्षेत्रबाह्यं संन्यासभंगभयाकुलः ॥१८॥ नानादुःखयुतश्चेत् त्यागं मयूरस्य वै न सः । कुर्यात्तेन गणेशेन तुल्यः सर्वत्र संमतः ॥१९॥ देवागारस्य यात्रां स कुर्याद् द्वारसमन्विताम् । अन्यां नैव समाख्यातां क्षेत्रबाह्यप्रवेशनात् ॥१२०॥ क्षेत्रसीमास्थदेवाद्यास्तेषां कुर्यान्निरंतरम् । यात्रां यात्राविचारज्ञः स योगी योगिनां गुरुः ॥२१॥ अत्राऽहं कथयिष्यामि चेतिहासं पुरातनम् । क्षेत्रसंन्यासिना युक्तं क्षेत्रं नैव भवेत् कदा ॥२२॥ जामदग्न्यो द्विजः कश्चित् सोमदत्त इति श्रुतः । बाल्यात् प्रारभ्य विघ्नेशभक्तियुक्तो बभूव ह ॥२३॥ स्वाश्रमात् सोऽपि सस्त्रीको मयूरेशं समाययौ । यात्रां कृत्वा विधानेन स्थितो द्वारादिचिह्निताम् ॥२४॥ ततः क्षेत्रे स वासार्थं मनो दध्रे महामतिः । क्षेत्रसंन्यासकं कृत्वा मयूरे संस्थितः पुरा ॥२५॥ तत्र रक्षोबलं प्राप्तं खरस्य दारुणं महत् । राक्षसं पपलुः सर्वे दृष्ट्वा क्षेत्रनिवासिनः ॥२६॥ दृढाऽऽग्रहं सोऽपि कृत्वा सोमदत्तो महामुनिः । मयूरे संस्थितो देवा मयूरेशपरायणः ॥२७॥ राक्षसास्तं महाभागं धृत्वा क्रोधसमन्विताः । ताडयामासुरत्यंतं कर्मखंडनकारणात् ॥२८॥ मुमोचाऽसौ तदापि न स्वधर्मं सोमदत्तकः । मद्यमांसादिकं गृह्य छलितो राक्षसैर्बहु ॥२९॥ तथापि धैर्यमालंब्य स्मृत्वा विघ्नेश्वरं द्विजः । मयूरेशं समभ्यर्च्य संस्थितो भयसंकुलः ॥१३०॥ ततस्तं राक्षसा बद्ध्वा खरं निन्युर्महोल्बणम् । तेन कारागृहे क्षिप्तो मयूरेशपरायणः ॥३१॥ उपोषणपरः पूजां मानसीं स चकार ह । अतिशोकसमायुक्तो हृदि ध्यात्वा गजाननम् ॥३२॥ ततो विघ्नेश्वरः क्षुब्धो बभूव भक्तकारणात् । चकार राक्षसेशं स सविघ्नं विघ्नदायकः ॥३३॥ समायाता शूर्पनखा तं जगाद खरं वचः । छिन्ननासिकरूपं स्ववृत्तांतं तु न्यवेदयत् ॥३४॥ तच्छ्रुत्वा क्रोधसंयुक्तः खरो रामं जगाम ह । रामेण राक्षसैः सार्द्धं हतो मृत्युमवाप ह ॥३५॥ ततः क्षेत्रनिवासस्था

आययुस्ते महेश्वराः। बंधाद्विमुच्य ते सर्वे सोमदत्तं सुहर्षिताः ॥३६॥ एवं नानाविधैर्दुःखैः पीडितो मुनिसत्तमः। तथापि क्षेत्रसंत्यागं न चकार कदाचन ॥३७॥ ततो गणेश्वरो देवो ययौ भक्त्या नियंत्रितः। स्तुतः संपूजितस्तेन तमीप्सित-वरं ददौ ॥३८॥ स ययाचे गणेशानं तव सान्निध्यगं कुरु। तत्र नित्यं भजिष्यामि भक्तिमार्गपरायणः ॥३९॥ तथेति तं चकारासौ मयूरेशो महामुनिम्। स बभूव महेशाना योगप्रिय इति श्रुतः ॥१४०॥ एवं नानाविधास्तत्र क्षेत्रसंन्यास-माश्रिताः। सिद्धिं ययुर्महाभागा मया वक्तुं न शक्यते ॥४१॥ इति सर्वं समाख्यातं संक्षेपेण मया परम्। श्रवणात् पठनात् सर्वसौख्यदं भक्तिवर्धनम् ॥१४२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते क्षेत्रसंन्यासादिवर्णनं नाम द्वाविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ देवेशा ऊचुः। मयूरे तीर्थमुख्यं किं वद योगींद्रनायक। तीर्थानां तीर्थरूपं यत् सर्वसिद्धिप्रदायकम् ॥१॥ भ्रूशुंड्युवाच। क्षेत्रं ब्रह्ममयं प्रोक्तं तीर्थतीर्थं महेश्वराः। गाणेशं सर्वविख्यातं मुख्यं पूर्णं बभूव ह ॥२॥ यथा पंचविधं सर्वं भासते विविधार्थतः। चतुर्विधं जगत् संस्थं पंचमं ब्रह्म उच्यते ॥३॥ गंगा च यमुनादेवी सरस्वती महानदी। त्रिगुणरूप-संयुक्तास्ताभ्यो नद्यः समुद्भवाः ॥४॥ तुरीया सर्वतीर्थाख्या ब्रह्मकमंडलूद्भवा। तासां संयोगभावे तु पंचमं ब्रह्म उच्यते ॥५॥ तदेव तीर्थरूपेण प्रकटं संबभूव ह। गणेशमायया देवा गाणेशं तीर्थमुच्यते ॥६॥ भूस्वानंदमयं क्षेत्रं गणेशेन प्रकाशितम्। मायया तत्र विघ्नेशोऽभवत् स्नानार्थमुद्यतः ॥७॥ ततोऽङ्कुशेन पृथ्वीं स भेदयामास मायया। तीर्थं ब्रह्ममयं तत्र सेवार्थं तु समाययौ ॥८॥ ततः स्नानं चकाराऽसौ सर्वं कार्यं गजाननः। अक्षयं जलसंयुक्तं कुंडं तत्र बभूव ह ॥९॥ नाम तस्य चकाराऽसौ गणेशकुंडमादरात्। तस्य दर्शनमात्रेण भुक्तिं मुक्तिं लभेन्नरः ॥१०॥ जलस्पर्शादिसंभूतं पुण्यं वक्तुं न शक्यते। साक्षाद्ब्रह्ममयस्यापि किं तीर्थस्य वदाम्यहम् ॥११॥ स्नानेन मुक्तिदा प्रोक्ता ब्रह्मकमंडलूद्भवा। तुरीया सर्वतीर्थानां ज्ञातव्यं शास्त्रसंमतम् ॥१२॥ भागीरथी तृतीया च स्नानेन स्वर्गदायिनी। स्वर्णदी सा समाख्याता विशेषेण महेश्वराः ॥१३॥ ततः सरस्वती प्रोक्ता द्वितीयपदधारिणी। त्रिभिर्दिनैश्च स्नानेन स्वर्गदा सा प्रकीर्तिता ॥१४॥ यमुना च

ततः ख्याता स्थूलरूपा महानदी। सप्तभिर्दिवसैः साक्षाज्जंतूनां स्वर्गदा मता ॥१५॥ अन्या नानाविधास्ताभ्यः कथनं नैव शक्यते। अतः संक्षेपतः प्रोक्तं माहात्म्यं पंचसंभवम् ॥१६॥ अत्रेतिहासकं वक्ष्ये शृणुध्वं ह्येकचेतसः। गुर्जरे पापकर्मा तु राजा भद्रोऽभवत् पुरा ॥१७॥ स्वधर्मं स परित्यज्य मांसस्त्रीमद्यलालसः। यथेच्छं वर्तयामास नानापापपरायणः ॥१८॥ एकदा मद्यसंयुक्तः पुत्रीं दृष्ट्वा स दुर्मतिः। एकांते बुभुजे तां स हाहाकाररवाकुलाम् ॥१९॥ इत्यादिविविधान्येव चकार देवसत्तमाः। पापानि तेषु किं ब्रूयां वक्तुं त्रासः प्रवर्तते ॥२०॥ मृतं तं यमदूताश्च गृह्य निन्युर्यमालयम्। बद्ध्वा संताड्य तत्रैकं चित्रं पूर्णं बभूव ह ॥२१॥ गच्छता तेन संदृष्टं विमानं सूर्यसन्निभम्। गणेशकुंडतीर्थस्य द्रष्ट्रा तच्च समाश्रितम् ॥२२॥ तस्यांगवायुना स्पृष्टो भद्रः पापपरः परः। पापहीनो बभूवाऽपि जगाम यममंदिरम् ॥२३॥ यमेन नरयोन्यां स संक्षिप्तो वैश्ययोनिजः। बभूव देवधर्माख्यः स्वधर्मनिरतः सदा ॥२४॥ स्वर्गात् पतनकाले स सस्मार कुंडमुत्तमम्। तेन संस्कार-योगेन मयूरेशं समाययौ ॥२५॥ दृष्ट्वा गणेशकुंडं स जातिस्मरो बभूव ह। ततः क्षेत्रं समाश्रित्य कुंडपूजापरोऽभवत् ॥२६॥ ममार कुंडसान्निध्ये ब्रह्मभूतो बभूव ह। एवं संस्कारमाहात्म्यं पूर्वजन्मनि देवपाः ॥२७॥ देवेशा ऊचुः। गणेशकुंडद्रष्टा स कथं जातो महामते। किं जातियों वद स्वामिन्नाश्चर्यं भासते परम् ॥२८॥ भृशुंड्युवाच। चांडालः कोऽपि पापात्मा नित्यं पापपरोऽभवत्। कंचिद् द्रव्ययुतं दृष्ट्वा तत् पृष्ठगो बभूव ह ॥२९॥ स आगतो मयूरेशं कथयामास मानवान्। जघान द्रव्यलोभी च चांडालो मानवान् सदा ॥३०॥ समाययौ मे सांनिध्यमधुनाऽत्र विशेषतः। मारणाय न संदेहस्तच्छ्रुत्वा स पपाल ह ॥३१॥ लोका यात्रारताः सर्वे नैव मत्ताडने रताः। पलता तेन कुंडं तु दृष्टं गाणेश्वरं महत् ॥३२॥ क्षेत्रं त्यक्त्वा गतं दूरे ममार विषयप्रियम्। भोगवुद्धियुतं दुष्टं निन्युरिंद्रपुरेऽमराः ॥३३॥ गणेशकुंडजेनैव दर्शनेन न संशयः। पापानि विलयं यांति भुक्तिर्मुक्तिस्ततो भवेत् ॥३४॥ अन्यच्छृणुत देवेशाश्चरितं कुंडसंभवम्। वैश्यः कश्चित् समायातो द्रव्यलोभी मयूरके ॥३५॥ प्रवेशेनास्य पापानि तं त्यक्त्वा बहिरंजसा। स्थितानि सोऽपि शुद्धः सन् बभ्राम द्रव्यकारणात् ॥३६॥ तत्र यात्रापरा लोका अवदंस्ते परस्परम्। गणेशकुंडमाहात्म्यं सोऽपि शुश्राव मंदधीः ॥३७॥ विचारमकरोच्चित्ते दर्शनेनात्र लभ्यते। भुक्तिर्मुक्तिः किमेवेदं वचनं सत्यगं भवेत् ॥३८॥ अतोऽहं विक्रयार्थं तु भवामि तत्र संस्थितः। तदा दर्शनमेवं मे कुंडस्यात्र भविष्यति ॥३९॥ इति विचार्य खाद्यानि गृह्य कुंडगतोऽभवत्। दधार मनसा दृष्ट्वा मुक्तिर्मे भवतु प्रभो

॥४०॥ पुनश्च स मयूरेशं त्यक्त्वा स्वगृहगोऽभवत् । तत्र स्वल्पेन कालेन ममार वैश्यजः खलः ॥४१॥ ततो विमानमारुह्य शुक्लगत्या महेश्वराः । मोक्षं जगाम वैश्यः स गणेशकुंडदर्शनात् ॥४२॥ अन्यच्च शृणुत प्राज्ञा इतिहासं पुरातनम् । शूद्रौ मेघमणीसंज्ञौ मालवे संबभूवतुः ॥४३॥ सेवार्थं पुत्रसंयुक्तौ क्षत्रियस्य समाश्रितौ । स काश्यां प्रेमसंयुक्तो यात्रार्थं प्रजगाम ह ॥४४॥ तेन नीतौ स्वसेवार्थं सपुत्रौ शूद्रयोनिजौ । मेघो मार्गे ममारैव तस्य पुत्रो ददाह तम् ॥४५॥ तत्राऽऽवंत्यो द्विजः कोऽपि चकारास्थिप्रसंचयम् । मणिः पप्रच्छ तं विप्रं कुत्रास्थि त्वं प्रणेष्यसि ॥४६॥ स उवाच गणेशस्य क्षेत्रे कुंडं महाद्भुतम् । तत्रास्थित्यागमात्रेण पंचमं लभते पदम् ॥४७॥ अतो मेऽस्थि पितुस्तत्र शूद्र नेष्यामि निश्चितम् । तच्छ्रुत्वा सोऽपि शूद्रास्यास्थिसंचयं चकार ह ॥४८॥ काश्यां दुःखयुतो त्यक्त्वा ममार मणिरेव च । तस्यास्थिसंचयं चक्रे तस्य पुत्रो महेश्वराः ॥४९॥ तज्ज्ञात्वा क्षत्रियस्तं स निर्भर्त्स्य बहुधा जगौ । काशीं त्यक्त्वा मयूरे किमस्थित्यागं करिष्यसि ॥५०॥ उवाच पितुराज्ञा स मया मान्या निरंतरम् । एतस्मिन्नंतरे तत्र ब्राह्मणः शास्त्रवित् ययौ ॥५१॥ तं प्रणम्य विशेषेण पप्रच्छ क्षत्रियोद्भवः । दुराग्रहं स्वशूद्रस्य दृष्ट्वा सर्वं विधानतः ॥५२॥ ज्ञात्वा वृत्तांतमेतस्य तमुवाच जनार्दनः । ब्राह्मणो वेदसारज्ञः क्षत्रियं शास्त्रजं वचः ॥५३॥ जनार्दन उवाच । चतुर्विधानि तीर्थानि तथा क्षेत्राणि क्षत्रिय । पंचमं गणराजस्य क्षेत्रं तीर्थं च कीर्त्यते ॥५४॥ ब्रह्मणस्पतिनामाऽसौ गणेशो वेदवादतः । तस्य लीलादिकं सर्वं नानाब्रह्ममयं बभौ ॥५५॥ काश्यां ये शास्त्रवादज्ञास्तेऽस्थि तत्र नयंति तु । अन्यक्षेत्रस्य गास्तद्वन्नयंत्यस्थि मयूरके ॥५६॥ ततः संशयहीनः स संपूज्य प्रणनाम ह । जनार्दनं स्वगेहं स आययौ हर्षसंयुतः ॥५७॥ कृत्वा क्षत्रियजो यात्रां स्वगृहं प्रत्यपद्यत । शूद्रावस्थि समागृह्य मयूरेशं प्रजग्मतुः ॥५८॥ गणेशकुंडं संपूज्य त्यक्त्वा तावस्थिसंचयम् । यथाशास्त्रं विधानेन यात्रां चक्रतुरादरात् ॥५९॥ स्वगृहं जग्मतुः शूद्रौ देवेशाः शृणुताऽपरम् । अस्थित्यागप्रभावेण मेघं नेतुं ययुर्गणाः ॥६०॥ शंकरलोकसंस्थं तं गृह्य स्वानंदमाययुः । मणिं कैलासगं ते तु ब्रह्मभूतौ प्रचक्रिरे ॥६१॥ एवं नाना जनास्तत्र सिद्धिं प्राप्ता विशेषतः । तत्र किं कथयामीह वक्तुं केन प्रशक्यते ॥६२॥ एतद्गणेशकुंडस्य माहात्म्यं शृणुयान्नरः । श्रावयेत् स लभेद्देवा ईप्सितं फलमुत्तमम् ॥६३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते गणेशकुंडचरितवर्णनं नाम त्रयोविंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ भ्रुशुंडयुवाच । एकदा गणनाथस्य दर्शनार्थं समाययौ । ब्रह्मा स्नात्वा महाकुंडे स्नोतुं स्तोत्रं समारभत् ॥१॥ ब्रह्मोवाच । नमामि तीर्थं गणनायकस्य गणेशकुंडं गणनातिगं च । अनंततीर्थप्रभवं पुराणं संसेविनां ब्रह्मप्रदं निजात्मयम् ॥२॥ अभेदभेदादिविहीनरूपं चतुष्पदं पंचममाद्यभूतम् । गणेशमायाकृतहृद्ययभावं नमामि कैवल्यघनं परेषाम् ॥३॥ भवत्प्रसूतं च तुरीयमात्म्यं भवेदरूपं किल तीर्थकानाम् । अहं विशुद्धोऽपि च दर्शनेनाऽभवं कृतब्रह्मकमंडलुस्थम् ॥४॥ तदेव त्रैगुण्यमयं बभूव भागीरथीस्थं रविजामयं च । सरस्वतीस्थं च ततः प्रसूताः सरित्समूहा भुवनेषु संस्थाः ॥५॥ स्नानेन पापं विनिहत्य सर्वा नद्यो नराणामथ पापयुक्ताः । नित्यं जले ते विनिमज्य शुद्धा आयांति स्वस्थानमघापहारि ॥६॥ प्रयागतीर्थे मरणेन जंतुर्मनीषितं तीर्थवरे लभेद्वै । तवावलोकेन गणेशकुंड तदेव सद्यो लभते सकृच्चेत् ॥७॥ वाचः परं ते जलबिंदुजेऽहं स्पर्शे भवं किं प्रवदामि पुण्यम् । साक्षाद्गणेशांकुशघातजं तन्नमामि कुंडं गणनायकस्य ॥८॥ धन्योऽहमेवं तव दर्शनेन स्पर्शेन तोयस्य निमज्जनेन । तोये तथा ते च महानुभावं ब्रह्मैव तुष्टं च नमो नमस्ते ॥९॥ त्वदीयतीरे मरणं वरिष्ठं सुमंगलं ब्रह्ममयप्रदं तत् । विना श्रमेणैव नरा लभंते शुकादिकानां पदमत्र चित्रम् ॥१०॥ त्वत्तोयजस्पृष्टिरहो ममास्तु स्नानं तु पानं च सदावलोकः । किं वर्णयाम्येव गणेशकुंड स्वल्पज्ञभावात्तु नमो नमस्ते ॥११॥ भ्रुशुंडयुवाच । स्तोत्रं गणेशकुंडस्य यः पठिष्यति मानवः । भुक्तिं मुक्तिं लभेत् सोपि श्रद्धया ब्रह्मभूयकम् ॥१२॥ इदं ब्रह्मकृतं स्तोत्रं सर्वसिद्धिप्रदायकम् । यत्र कुत्र स्थितायापि भक्त्या भवति पाठतः ॥१३॥ ब्रह्मा ततो गणेशानं जगाम हर्षसंयुतः । पूज्य स्तुत्वा महेशानाः प्रदक्षिणपरोऽभवत् ॥१४॥ पादस्पर्शेन तस्यापि कमंडलुजलैर्युतः । न्युब्जतामगमत्तत्र नदी तस्मादजायत ॥१५॥ ततः प्रणम्य विघ्नेशं योगमायासमन्वितः । सरितं तां चकर्षाऽसौ पुनर्ब्रह्मा कमंडलौ ॥१६॥ जगाद गणराजश्च ततस्तं हर्षसंयुतः । मा गृह्णीष्व विधातस्त्वं सर्वतीर्थमयीं नदीम् ॥१७॥ मम सेवार्थमत्यंतलालसा नित्यमाभजेत् । मदिच्छया नदी जाता मत्क्षेत्रे सर्वपावनी ॥१८॥ ततस्तं प्रणतो भूत्वा ब्रह्मा शोकसमन्वितः । जगाद तीर्थहीनोऽहं भविष्यामि गजानन ॥१९॥ श्रीगजानन उवाच । योगमायाबलेनेमां मा कर्ष त्वं पितामह । कमंडलुं तीर्थजलैरापूर्य स्थानगो भव ॥२०॥ श्रुत्वा ब्रह्मा तथा कृत्वा ययौ हर्षसमन्वितः । ब्रह्मकमंडलुः साक्षान्नदी तत्र प्रतिष्ठिता ॥२१॥ तया क्षेत्रं महेशानाः शुशुभेऽतीव विघ्नपम् । नद्याश्च महिमानं को वर्णयितुं क्षमो भवेत् ॥२२॥ देवेशा ऊचुः । तुरीयं तीर्थमुख्यं यत् स्थितं ब्रह्मकमंडलौ । कथं बभूव

विप्रेश तद्वदस्व सुखप्रदम् ॥२३॥ भृशुंड्युवाच। ब्रह्मा कामं च तं सृष्ट्वा स्थापयामास सर्वपः। दृष्ट्वा कामं स्वयं तत्र विह्वलोऽभूत् पितामहः ॥२४॥ दृष्ट्वा सरस्वतीं वेधाः कामबाणप्रपीडितः। तां गृह्य स्ववशां कृत्वा मैथुनायोद्यतोऽभवत् ॥२५॥ हाहाकाररवा देवी सस्मार गणनायकम्। ततः शांतमना ब्रह्मा ज्ञानयुक्तो बभूव ह ॥२६॥ मुक्त्वा तां गर्हयामास स्वात्मानं काममोहितम्। ततः क्रोधसमायुक्तः शशाप मदनं विधिः ॥२७॥ मां प्रमोहयुतं कृत्वा क्रीडसि त्वं खलाऽधुना। काम शंकरतो वह्नौ नष्टरूपो भविष्यसि ॥२८॥ शप्त्वा कामं विधाताऽसौ ततः सस्मार देवपान्। मुनीन् श्रेष्ठांश्च ते सर्वे समाजग्मुः पितामहम् ॥२९॥ श्रुत्वा वृत्तांतमुग्रं ते शोकयुक्ताः बभूविरे। प्रायश्चित्तार्थमुद्युक्ताः सर्वे देवर्षयस्ततः ॥३०॥ ततस्तीर्थानि सर्वे ते निर्ममुर्दैवतर्षयः। सार्धत्रिकोटिसंज्ञानि स्वस्वतेजोयुतानि वै ॥३१॥ तेषु संमज्जितो ब्रह्मा पवित्रो न बभूव ह। तीर्थराजं तथा सर्वे सस्मरुर्ब्रह्महेतवे ॥३२॥ स वै प्रत्यक्षतां तत्र ययौ सर्वेच्छया परः। ब्रह्मा ममज्ज तत्रापि स्वयं शुद्धोऽभवन्न च ॥३३॥ ततः सूर्यः स्वदेहाद्वै यमुनां निर्ममे पराम्। तस्यां निमज्य धाताऽसौ पवित्रो न बभूव ह ॥३४॥ आदिमाया ततस्तत्र विनिर्ममे सरस्वतीम्। निमज्य तत्र वेधाः सोऽभवन्नैव यथा पुरा ॥३५॥ ततः शिवः स्वयं रेवां निर्ममे तीर्थरूपिणीम्। तथा निमज्य तस्यां स पवित्रो न बभूव ह ॥३६॥ ततो विष्णुः स्वदेहाद्वै निर्ममे पावनाय च। गंगां तस्यां निमज्याऽसौ वेधाः शुद्धोऽभवन्न च ॥३७॥ ततः खेदसमायुक्तो देवेशा मुनिभिः सह। विचार्य त्रिगुणानां तु बीजं तीर्थं प्रतुष्टुवुः ॥३८॥ ततः प्रसन्नभावेन तुरीयं तत्र देवपाः। प्रकटं तेजसा युक्तं बभूव जलमंजसा ॥३९॥ प्रकाशमयतीर्थं तद् दृष्ट्वा देवर्षयोऽमराः। प्रणम्यापूज्य संहर्षादूचुः प्रांजलयोऽभवन् ॥४०॥ सर्वतीर्थमिदं नाम भवतु त्रिजगत्सु ते। पवित्रं कुरु धातारं नमस्ते तीर्थतीर्थमु ॥४१॥ त्रैगुण्यमयरूपाणि तीर्थानि त्रिजगत्सु तु। त्रिजगत्पावनान्येव भवंते शास्त्रसंमते ॥४२॥ ब्रह्मविष्णुमहेशानां दोषं क्षालयितुं द्रुतम्। न समर्थानि तेभ्यस्तु द्विजैर्जातानि निश्चितम् ॥४३॥ अतस्तुरीयतीर्थं चास्माभिः संप्रार्थितं परम्। त्रिगुणानां हितार्थाय पावनाय विशेषतः ॥४४॥ अतो हितं च सर्वेषां कुरु तीर्थात्मरूपकम्। एवमुक्त्वा प्रणेमुस्ते सर्वतीर्थं महेश्वराः ॥४५॥ ततः प्रसन्नतां यातं दर्शयामास रूपकम्। विधात्रे तेन निःपापो बभूव प्रपितामहः ॥४६॥ ततस्तीर्थं प्रणम्याऽसौ तुष्टाव सर्वसंयुतः। ततस्तं प्रत्युवाचेदं वचनं तीर्थमुत्तमम् ॥४७॥ सर्वतीर्थमुवाच। वरं वृणु महाभाग तुष्टं दास्यामि वाञ्छितम्। स्तोत्रेण सृष्टिकर्तस्वं विधातर्मा विचारय ॥४८॥ ब्रह्मोवाच। वरं ददासि

तीर्थं त्वं तदा मे संस्थितं भव। कमंडलौ सदा तेन कृतकृत्योऽसि निश्चितम् ॥४९॥ भ्रूशुंड्युवाच । तथेति तमथोक्त्वा तत्तीर्थं तस्य कमंडलौ। जानीत वरदानेन संस्थितं देवनायकाः ॥५०॥ तत्र स्थितं गणेशस्य ध्यानं चक्रे निरंतरम्। सर्वतीर्थं हितार्थाय तस्य सेवार्थमादरात् ॥५१॥ उवाच विघ्नराजं संचिंत्य तीर्थं परं हृदि। दृश्यभावं समासाद्य न ते पादार्चनं कृतम् ॥५२॥ वरदानप्रभावेण ब्रह्मणः सदने प्रभो। स्थितं मां तेऽद्य पादाब्जसमीपस्थं कुरु प्रभो ॥५३॥ पवित्रं तु विधातारं कृत्वा मायूरक्षेत्रगम्। भविष्यामि तदर्थायाकरवं दृश्यभावकम् ॥५४॥ पराधीनतया स्वामिन् किं करोमि गणेश्वर। विघ्नहीनं कुरुष्व त्वं मां भक्तं भक्तवत्सल ॥५५॥ दृश्यभावं समासाद्य मयूरं नावलोकितम्। निरर्थकं जनुस्तस्यातस्त्वां संप्रार्थये प्रभो ॥५६॥ एवं नित्यं गणेशानं ध्यात्वा संप्रार्थयत् परम् । स्थापितं सर्वतीर्थं तद्गणेशानेन संनिधौ ॥५७॥ देवेशा ऊचुः। तीर्थराजः प्रयागो यस्तत्र ब्रह्मा बभूव न। पवित्रश्च ततः श्रेष्ठं कथं तीर्थं भवेन् मुने ॥५८॥ कथं राजेति संज्ञा च तस्य शास्त्रे प्रकीर्तिता। एतत् संशयकं छिंधि योगींद्रोऽसि पुरातनः ॥५९॥ भ्रूशुंड्युवाच। यथा देवसमूहानां राजेंद्रः परिकीर्तितः। इंद्रान्नैवापरः श्रेष्ठो देवो भवति कुत्रचित् ॥६०॥ ब्रह्मादयो न देवाश्च गुणाधाराः प्रकीर्तिताः। पूज्यत्वाद्देवसंज्ञास्था भवंते चैकदेशतः ॥६१॥ सार्धत्रिकोटितीर्थानां तथा राजा प्रयागकः । प्रयागान्न परं तीर्थं श्रेष्ठं कुत्राऽपि वर्तते ॥६२॥ गंगाद्याः सरितस्तद्वद् गुणाधाराः प्रकीर्तिताः । तीर्थसंज्ञा तथा तासामेकलक्षणतो मता ॥६३॥ प्रार्थितं तीर्थराजेन तत्रैकभवकारणात्। गंगायमुनयोर्योगस्तेन संमिलितोऽभवत् ॥६४॥ गंगायमुनयोर्योगे स्नानजं यत् फलं लभेत्। तदेव महिमा तत्र तयोरेव न संशयः ॥६५॥ नर्मदा वरदानेन श्रेष्ठा जाता विशेषतः। गुणरूपा न सा प्रोक्ता जानीत शास्त्रसंमते ॥६६॥ अधुना शृणुत प्राज्ञा प्रकृतं यत् कथानकम् । कमंडलुस्थितत्वात्तन्नाम्ना ब्रह्मकमंडलुः ॥६७॥ गां गता तेन गंगा सा कमंडलूद्भवा मता। पूर्वगा सा समाख्याता ब्रह्मादीनां सुदुर्लभा ॥६८॥ तस्या मूलस्थितः साक्षाद्ब्रह्मा लोकपितामहः । तस्यां स्नात्वा गणेशानं भजतेऽनन्यचेतसा ॥६९॥ पूर्वं पितामहं तत्र नरः स्नात्वा समर्चयेत् । विद्यायुक्तो भवेत् सद्योऽते परां मुक्तिमाप्नुयात् ॥७०॥ मध्ये शिवस्तथा तस्या मयूरे संस्थितस्ततः। मध्यमेश्वरनामा स भजते गणनायकम् ॥७१॥ मध्यमेश्वरतीर्थं यस्तस्यां स्नानं समाचरेत्। स सामर्थ्यं परं प्राप्यापूज्येशं मुक्तिमाप्नुयात् ॥७२॥ अंते विष्णुः स्थितस्तस्या हृषीकेश इति श्रुतः। स्नात्वा नित्यं गणेशानं भजतेऽनन्यमानसः ॥७३॥

तत्र तीर्थे नरः स्नात्वा हृषीकेशं समर्चयेत् । यशः स विपुलं प्राप्यांऽते परं मोक्षमाप्नुयात् ॥७४॥ यस्यास्तीरे च तीर्थानि देवास्तिष्ठंत्यनेकशः । उभयत्र महेशाना मया वक्तुं न शक्यते ॥७५॥ कमंडलूद्भवायास्तु दर्शनेनाघनाशनम् । प्रभवेत् सर्वजंतूनां निश्चितं चेहजन्मजम् ॥७६॥ संचितं जलबिंदोश्च स्पर्शेनैव विनश्यति । पापं ह्यनेकजन्मस्थं नराणां सर्वदेहिनाम् ॥७७॥ जलपानेन तस्यास्तु शक्रलोकं लभेत् स्वयम् । स्नानेन मुक्तिमाप्नोति यत्र तत्र महेश्वराः ॥७८॥ मयूरे ये नरास्तस्यां स्नानं कुर्वंति देवपाः । सकृच्चेदीप्सितं सद्यो लभंते ते समोक्षकम् ॥७९॥ एतादृशी महाभागा नदी तत्र व्यवस्थिता । दशयोजनविस्तारस्तस्याः प्रोक्तो मनीषिभिः ॥८०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते ब्रह्मकमंडलुप्रादुर्भावादिवर्णनं नाम चतुर्विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ देवेशा ऊचुः । कथं देवैश्च मुनिभिः स्तुता विप्र महानदी । ब्रह्मणोऽर्थं तदेवापि स्तोत्रं वद सुखप्रदम् ॥१॥ भृशुंडयुवाच । नानातीर्थबलेनैव ब्रह्माणं ते सुरर्षयः । शुद्धं कर्तुं समर्था न बभूवुश्च यदा पुरा ॥२॥ ततः सर्वे विचार्यैव तुरीयं तीर्थमुत्तमम् । स्तोतुं करपुटा भूत्वा समारेभुः सुस्तोत्रकम् ॥३॥ देवर्षय ऊचुः । सर्वादिभूतं त्रिगुणेषु संस्थं तीर्थेषु यत् सर्वविकारहीनम् । तीर्थं तुरीयं च नमामहे तत्तीर्थात्मकं पापविनाशदक्षम् ॥४॥ गंगादिनद्यः प्रभवा यतश्च सर्वांतरस्थं स्थितमात्मरूपम् । नादात्मकं रूपमथो विधाय तच्चालकं यत्तु नमामहे तत् ॥५॥ पुराणगीतं विधिपापनाशं कमंडलुस्थं परमप्रमेयम् । अपारतीर्थेषु तदात्मभावं भविष्यते देहधरं नमामः ॥६॥ नाथो विधाता च भवेन्महात्मन् पापेन युक्तश्च तथा स्थितश्चेत् । विश्वं परं नाशमुपैष्यति त्वं प्रत्यक्षतामेहि दयाकरातः ॥७॥ गंगास्वरूपाय नमो नमस्ते ब्रह्मात्मजारूपधराय तुभ्यम् । तुभ्यं प्रयागाय च नार्मदाय कालिंदिकास्थाय नमो नमो वै ॥८॥ कृष्णास्वरूपाय ककुद्मतीस्थ यद्देवनद्यै च पयोष्णिकायै । वेणीस्वरूपाय च पुष्कराय तापीप्रभासाय च सर्वतीर्थ ॥९॥ गोदावरीरूपधराय तुभ्यं क्षिप्रास्थसिंधुस्थ महीस्वरूप । कावेरिकास्थं सरयूस्वरूपं पूर्णे नमस्तेऽस्तु कमंडलुस्थम् ॥१०॥ सार्धत्रिकोटीप्रवरस्थकाय तीर्थेश्वरायैव नमो

नमस्ते। अनंततीर्थप्रवराय नित्यं क्षेत्रे मयूरे तु समास्थिताय ॥११॥ वारांपतिस्थाय सरोवराय वापीस्थकूपाय नमो नमस्ते। यद्यज्जलं भानुघनस्थरूपं तत्रस्थकायैव नमो नमस्ते ॥१२॥ त्वया ततं सर्वमिदं विभाति चराचरस्थं च जलं परेश। कृपाकटाक्षामृतधारयाऽस्मान् रक्षस्व संदर्शय ते स्वरूपम् ॥१३॥ भ्रूशुंडयुवाच। एवं संस्तुवतां तेषां पुरस्तेजोमयं जलम्। प्रादुर्बभूव तत् दृष्ट्वा प्रणेमुः ससुरर्षयः ॥१४॥ तानुवाच महातीर्थं हर्षयुक्तेन चेतसा। वरं वृणुत देवेशा मुनयस्तं ददाम्यहम् ॥१५॥ भवत्कृतमिदं पुण्यं स्तोत्रं मे प्रीतिवर्धनम्। भविष्यति न संदेहो भुक्तिमुक्तिप्रदायकम् ॥१६॥ पठते शृण्वते नित्यं मयि स्नानफलप्रदम्। सर्वाघनाशनं सद्यो भविष्यति विशेषतः ॥१७॥ सर्वतीर्थवचः श्रुत्वा हर्षयुक्ताः सुरर्षयः। जगुः प्रणम्य देवेशाः प्रबद्धकरसंपुटाः ॥१८॥ देवर्षय ऊचुः। प्रसन्नं चेन् महातीर्थ तदा पितामहं परम्। शुद्धं कुरु तथा तस्य कमंडलौ स्थितिं स्थिराम् ॥१९॥ सर्वतीर्थं च ते नाम तथा ब्रह्मकमंडलुः। भवतु त्वत्प्रसादेन वर एव वृतः परः ॥२०॥ तथेति तानुवाचैव याचितं तीर्थमुत्तमम्। चकार देवविप्रैर्यत्तत् सर्वं कथितं मया ॥२१॥ देवेशा ऊचुः। श्रुतं सर्वं विशेषेण सर्वसंशयनाशनम्। तथापि न च तृप्यामः परं पीत्वा कथामृतम् ॥२२॥ माहात्म्यं कथितं विप्र तत्र सिद्धिं महाद्भुताम्। अलभन् के पुरा योगिन् वद तेषां चरित्रकम् ॥२३॥ भ्रूशुंडयुवाच। पुरा कल्पे द्विजः कश्चिद्भरद्वाजकुलोद्भवः। मूर्खो बभूव देवेशा विद्यासंध्यादिवर्जितः ॥२४॥ तं गृह्य पितरौ तस्य स्थितं ब्रह्मकमंडलौ। ब्रह्माणं ययुतः प्रीत्या नदीमूलविराजितम् ॥२५॥ स्नात्वा नदीजले तत्र पूजयामासुरादरात्। विधिं कमंडलुस्थाने बभूवुर्भक्तिसंयुताः ॥२६॥ पुत्रस्तयोः सुबुद्ध्या वै युक्तो बभूव तत्क्षणात्। वेदादीन् कंठगान् देवा अवदत् प्रेमसंयुतः ॥२७॥ ततो हर्षयुतौ तस्य पितरौ गृह्य तं सुतम्। स्वस्थानं जग्मतुः प्रीत्या मुक्तिमंते प्रलेभिरे ॥२८॥ एवं नाना जनास्तत्र ज्ञानतोऽज्ञानतोऽपि वा। स्नानेन दर्शनेनैव ब्रह्मणः सिद्धिमाप्नुवन् ॥२९॥ अथान्यत् कथयिष्यामि क्षत्रियो रविवंशजः। सुरथो मालवे राजा बभूव परवीरहा ॥३०॥ स्वराज्यं धर्मसंयुक्तश्चकार सचिवैर्युतः। बहुकाले गते तत्र विदर्भाधिपतिर्ययौ ॥३१॥ दिग्जयार्थं ततस्तेन युयुधे बलसंयुतः। पराजितो विदर्भस्य राज्ञा राजा पपाल ह ॥३२॥ ततो यत्नं समास्थाय ह्यन्यराजसमन्वितः। संग्राममकरोद्घोरं पुनः पराजितोऽभवत् ॥३३॥ भूपालो ब्राह्मणान् पृष्ट्वा मयूरं चागतोऽभवत्। मध्यमेश्वरतीर्थे स स्नात्वा शिवं पुपूज ह ॥३४॥ तं नमस्कृत्य सेनाभिः संयुतो युयुधे पुनः। भूपः संजित्य वैदर्भं स्वराज्यं प्राप तत्क्षणात् ॥३५॥ अंते

मुक्तिं जगामैव स्नानमाहात्म्यकारणात् । एवं तत्र ययुः सिद्धिं ज्ञानतोऽज्ञानतो जनाः ॥३६॥ अन्यच्च श्रृणुत प्राज्ञाश्चरितं पुण्यदं परम् । द्विजो गौतमवंशेऽभूत् स्वधर्माचारसंयुतः ॥३७॥ विद्याज्ञानादिसंयुक्तो न यशोऽप्यलभत् कदा । दीक्षादिषु प्रयत्नेनाभवत् कर्मसु तत्परः ॥३८॥ ब्राह्मणास्तत्कृतं कर्म दृष्ट्वा सविधि वैदिकम् । दोषयुक्तं विशेषेण ददृशुः पापगौरवात् ॥३९॥ ततोऽतिखेदसंयुक्तो जगाम सर्वतीर्थिकाम् । अंते विचार्य तस्यां स स्नानं चकार भक्तितः ॥४०॥ हृषीकेशं प्रपूज्यैव नमस्कृत्य गृहं ययौ । ततः कर्म कृतं तेन ददृशुः सविधि द्विजाः ॥४१॥ यद्यत्तेन कृतं देवा यशोयुक्तं बभूव ह । अंते मुक्तिं ययौ सोऽपि तीर्थसेवनपुण्यतः ॥४२॥ ज्ञानतोऽज्ञानतस्तत्र ययुः सिद्धिं विशेषतः । मया वक्तुं न शक्येत केनापि देवसत्तमाः ॥४३॥ अथान्यच्चरितं देवाः श्रृणुध्वं भावसंयुताः । दंडकारण्यदेशैकश्चांडालः पापकारकः ॥४४॥ वने गत्वा द्विजादींश्च मारयामास नित्यदा । परस्त्रियं स एकांतेऽयभत् दृष्ट्वा हठेन च ॥४५॥ एवं नानाविधं पापं चकार विषयप्रियः । एकदा धनसंयुक्तं वणिजं स ददर्श ह ॥४६॥ तमनु प्रययौ दुष्टः शस्त्रपाणिर्जिघांसया । तत्र मार्गे महेशाना ब्रह्मकमंडलूद्भवाम् ॥४७॥ महानदीं स चांडालो ददर्श सन्निधौ गतः । जलस्पर्शादिकं तत्र न चकार सुदुर्मतिः ॥४८॥ ततो योजनमात्रेण जघान वणिजं खलः । द्रव्यं तस्य प्रगृह्यैव स्वगृहं पुनरागमत् ॥४९॥ एवं कृत्वा ततः काले ममार नीचयोनिजः । यामास्तं गृह्य संताड्य ययुः संयमिनीं पुरीम् ॥५०॥ यमस्तान् प्रत्युवाचेदं वचनं धर्मलक्षणम् । महापापी भटा नूनमयं तदपि मुच्यताम् ॥५१॥ सर्वतीर्थस्य दूतेशा दर्शनं त्वभवत् पुरा । वणिजं हंतुकामस्य पापनाशकरं महत् ॥५२॥ त्यज्यतां मानुषे देहेषु नरेनं विचक्षणाः । शुभाशुभं तत्र कृत्वा गमिष्यति पुनः पुरम् ॥५३॥ स कैवर्तोऽभवत्तत्र बंगाले देवसत्तमाः । एवं दर्शनमात्रेणेह कृतं दुरितं गतम् ॥५४॥ अन्यद्यज्जलबिंदोश्च स्पर्शजं कथयाम्यहम् । चरितं तस्य सर्वज्ञाः शृणुध्वं सिद्धिदं परम् ॥५५॥ व्याधः कश्चिद्वने संस्थो बभूवे तत्र देशजः । ब्रह्महत्यादिकं पापं चकार नित्यमादरात् ॥५६॥ ददर्श द्रव्यसंयुक्तं दुष्टधीरेकदा नरम् । खड्गमुद्यम्य निःकोशं तं हंतुं धावितोऽभवत् ॥५७॥ पपाल मानवो भीतः पृष्ठे व्याधस्तथागमत् । कमंडलूद्भवा गंगा प्राप्ता दैववशेन ह ॥५८॥ तामुल्लंघ्य पपालाऽसौ सोऽपि खड्गयुतस्तथा । व्याधः पपात दैवेनोल्लंघ्य तीरे दुरात्मवान् ॥५९॥ स तत्र जलबिंदूनां स्पर्शयुक्तो बभूव ह । नरो दूरं गतः सोऽपि निःश्वस्य स्वगृहं ययौ ॥६०॥ एवं पापसमाचारं मृतं काले सुदुर्मतिम् । व्याधं तं गृह्य देवेशा यमदूता यमं ययुः ॥६१॥ तं दृष्ट्वा धर्मराजस्तानुवाच प्रेमसंयुतः।

अयं शुद्धो महाभागाः सर्वपापविवर्जितः ॥६२॥ कमंडलूद्भवातीरे पपात धावनाकुलः। तत्र तस्या जलस्पर्शो बभूवे चास्य दर्शनम् ॥६३॥ दर्शनेनेहजं पापं गतं सर्वं लयं किल। अनेकजन्मजं पापं तोयस्य स्पर्शनाद्गतम् ॥६४॥ ततः परं कृतं पापं यातनार्दं मतं यमाः। तथापि नैव योग्योऽयं यातनायां विशेषतः ॥६५॥ ब्रह्मकमंडलोर्यस्य दर्शनादिकमंजसा। भवेत्तस्य भटा नेदं यातनाजं भयं भवेत् ॥६६॥ काश्मीरे स बभूवापि ब्राह्मणो वेदपारगः। एवं नाना जनास्तस्यां पापहीना बभूविरे ॥६७॥ अथेतिहासकं वक्ष्ये पुराकल्पभवं परम् । शूद्रः कश्चिद्बभूवाऽपि वंगदेशे महेश्वराः ॥६८॥ श्यामो नाम महापापी शिश्नोदरपरायणः । चौर्यकर्मपरो नित्यं नगरेषु वनेषु च ॥६९॥ बभ्राम शस्त्रसंयुक्तो मारयामास नित्यदा । जनान्नानाविधांश्चैव मद्यमांसपरोऽभवत् ॥७०॥ स कदाचिद्वने संस्थो ददर्श वणिगुत्तमान्। द्रव्ययुक्तांस्ततो दुष्टो मार्गसंस्थो बभूव तैः ॥७१॥ ते ययुर्दंडकारण्ये सोऽपि चौर्यार्थमाययौ। तत्रोष्णकामयोगेन जलहीनाश्च बभ्रमुः ॥७२॥ तृषायुक्ताः समायातास्तटे ब्रह्मकमंडलोः। तस्यां जलं पपुः सर्वे पुनर्ग्रामं समाययुः ॥७३॥ निशि सुप्ताश्च चौरेण हता मृत्युं ययुस्ततः। देवेंद्रनगरे सर्वे ययुः पुण्यप्रभावतः ॥७४॥ जलपानेन देवेशाः किल ब्रह्मकमंडलोः। इंद्रपुर्यां निवासं ते चक्रिरे वणिगुत्तमाः ॥७५॥ ततः काले मृतं चौरं गृहीतुं तं यमस्य च। दूता ययुर्यमं गृह्य दृष्ट्वा देवोऽब्रवीद्यमः ॥७६॥ धर्म उवाच । अयं शूद्रो महापापी तथाऽपि पुण्यवानभूत्। सर्वतीर्थमयीं दृष्ट्वा दुष्टकार्यवशात् किल ॥७७॥ जलपानं कृतं तस्यास्तत्र स्पर्शो जलस्य च। बभूव त्रिविधं पुण्यं तेषां वक्ष्यामि कारणम् ॥७८॥ इह जन्मकृतं पापं दर्शनेन लयं गतम्। कमंडलूद्भवायास्तु स्पर्शनानेकजन्मजम् ॥७९॥ पानेनेंद्रपदप्राप्तिसमं पुण्यं बभूव ह। बाह्यांतः पापहीनश्च पुण्ययुक्तोऽयमुच्यते ॥८०॥ अत एनं प्रगृह्य त्वं महेंद्रं दूतसत्तम। प्रापय तत्पुरे संस्थो भोगान् भोक्ष्यति निश्चितम् ॥८१॥ पुनः पतिष्यति प्राज्ञः पृथिव्यां नात्र संशयः। दूतस्तथा चकारैव प्रणनाम यमं पुनः ॥८२॥ एवं नाना नरा देवा ययुः सिद्धिं विशेषतः। तन्न शक्यं कथयितुं न भवति शतवर्षतः ॥८३॥ अन्यद्वः कथयिष्यामि चेतिहासं पुरा भवम्। संक्षेपेण महाभागा स्नानसिद्धिप्रकाशकम् ॥८४॥ धनप्रिय इति ख्यातो बंगाले कारुकोऽभवत्। पापनिष्ठः सदा पापं चकार दुर्मतिर्मुदा ॥८५॥ द्रव्यार्थं विषदानेन हतौ मातापिता स्वकौ। प्रणम्य ब्राह्मणादींश्च जघान विषयोगतः ॥८६॥ साधुभावप्रदर्शी स बाह्येंतस्तु दुरात्मवान्। तेन मोहयुताः सर्वे तदधीना बभूविरे ॥८७॥ ततो बहौ गते

काले राज्ञा ज्ञातं दुरात्मनः । कर्म तं गृह्य तस्यैव द्रव्यं नीतं समग्रकम् ॥८८॥ स्वदेशात्तं बहिः कृत्य राजा धर्मपरायणः । पालयामास लोकान् स सदा नीत्या स्वदेशगान् ॥८९॥ ततोऽयं दंडकारण्ये पुत्रदारैर्जगाम ह । तत्रैव रोचयामास वासार्थं ग्राममुत्तमम् ॥९०॥ तादृशीं वृत्तिमास्थाय पुनः पापं चकार ह । एकदा द्रव्यसंयुक्तं वणिजं स ददर्श ह ॥९१॥ अनु तं विषसंयुक्तो जगाम दुष्टधीः खलः । साधुलक्षणसंयुक्तो लोभनाय वणिक्सुतम् ॥९२॥ मार्गे महानदी प्राप्ता सर्वतीर्थमयी परा । तस्यां स्नानं चकारऽसौ वणिजेन समन्वितः ॥९३॥ प्रगच्छंतं ततो मार्गे द्वितीये दिवसे खलः । विषेणामोह्य वणिजं मारयामास तत्क्षणात् ॥९४॥ वणिक्स स्नानपुण्येन शुक्लगत्या महेश्वराः । कमंडलोर्महामोक्षं लेभे क्रमेण निश्चितम् ॥९५॥ धनप्रियो ममारैव कालेन स्वगृहे स्थितः । सोऽपि मोक्षं महादेवा लेभे स्नानप्रभावतः ॥९६॥ अधुनाऽन्यत् प्रवक्ष्यामि चरित्रं च कमंडलोः । स्मरणेन महेशाना महासिद्धिप्रदायकम् ॥९७॥ गुर्जरे वैश्यजः कश्चिद् बभूवे धर्मनामकः । स्वधर्मनिरतो नित्यं चकार कर्म चादरात् ॥९८॥ तेन स्कांदभवं तत्र माहात्म्यं संश्रुतं परम् । कमंडलुप्रभावेण युक्तं स्वयं सुविस्मितः ॥९९॥ मनसा धारयामास धन्येयं सरितांवरा । मया लभ्या यदा देवी तदा मे सफलं जनुः ॥१००॥ धर्मो नित्यं महेशानास्तां सस्मार महानदीम् । तत्र कोऽपि समायातः क्षत्रियो मार्गगः कदा ॥१॥ तेनाऽपि संश्रुतं नाम ब्रह्मकमंडलूद्भवम् । प्रातरुत्थाय स्वस्थानं जगाम क्षत्रियः खलः ॥२॥ ततो बहौ गते काले धर्मसंज्ञो ममार ह । स्वर्गं गत्वा स विविधान् बुभुजे भोगकान् परान् ॥३॥ पुनश्च ब्राह्मणः सोऽपि बभूवात्रिकुलोद्भवः । शिवदत्त इति ख्यातः सर्वतीर्थनदीतटे ॥४॥ स्वधर्मनिरतो विप्रो न मुमोच नदीतटम् । तत्र स्नानादिकं सर्वं जलकार्यं चकार ह ॥५॥ पूर्वपुण्यबलेनैवोत्तमतीर्थस्य सेवनात् । योगी बभूव तत्राऽसौ ममार तु तटे स्थितः ॥६॥ ब्रह्मणि ब्रह्मभूतः स बभूवे देवसत्तमाः । एवं दूरस्थितस्याऽपि स्मरणेन गतिप्रदा ॥७॥ येन श्रुतं महन्नाम सर्वतीर्थस्य देवपाः । क्षत्रियः पापकर्मा स चकार पापमुल्बणम् ॥८॥ मृतं तं यमदूताः संगृह्य संताडय भानुजम् । प्रणम्य नरके दुष्टं चिक्षिपुश्च तदाज्ञया ॥९॥ पुनः श्वानो बभूवाऽपि क्षत्रियः पापकारकः । बभ्राम दंडकारण्य आजगाम महानदीम् ॥११०॥ तत्र कीटादिभिः श्वानो मक्षिकाभिः प्रपीडितः । स्नानं चक्रे महानद्यां पूर्वसंस्कारयोगतः ॥११॥ ममार तेन पुण्येन मोक्षं लेभे न संशयः । सकृन्नाम्नः श्रुतस्यैव पुण्येनेदं कृतं महत् ॥१२॥ धन्यास्ता वीरुधो वल्ल्यस्तृणानि वृक्षकादयः । ब्रह्मकमंडलोस्तीरे नान्यत्र राज्यसंयुतः ॥१३॥

यस्यास्तीरे मृतो जंतुः शुक्लगत्या गमिष्यति । ब्रह्म राजा मृतोऽन्यत्र जन्मयुक्तो भविष्यति ॥१४॥ एवं सर्वत्र देवेशा ब्रह्मकमंडलूद्भवा । शुभदा पूर्वगा प्रोक्ता मयूरेशपरायणा ॥१५॥ चतुर्मुखे मध्यमेशे हृषीकेशे विशेषदा । सर्वत्र दुर्लभा देवादीनां त्रिषु कमंडलुः ॥१६॥ कोटितीर्थानि मूलेऽस्याः स्थितानि मध्यमे तथा । अंते कोटिश्च सर्वत्र तीरे कोट्यर्धमंजसा ॥१७॥ संक्षेपेण मया तस्याश्चरितं कथितं परम् । श्रवणात् पठनाद्देवाः सर्वपापहरं भवेत् ॥११८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खण्डे विकटचरिते ब्रह्मकमंडलुतीर्थचरितं नाम पंचविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ भृशुंड्युवाच । अधुना यानि मायूरे कमंडलुतटेऽमराः । तीर्थानि तेषु मुख्यानि कथयामि समासतः ॥१॥ मुख्यं गणेशकुंडाख्यं तीर्थमेकं प्रकीर्तितम् । संक्षेपतश्चरित्रं तु कथितं तस्य देवपाः ॥२॥ अतः परं पंचतीर्थानि शृणुध्वं समासतः । गाणेशं मध्यभागे यद्धनुषां द्विशतात्मकम् ॥३॥ तत्र क्षेत्राणि तीर्थानि देवा मुनिनरादयः । स्नानं कुर्वंति सर्वेऽन्ये नित्यमेकं प्रयत्नतः ॥४॥ उभयोस्तीरगं प्रोक्तं परं ब्रह्म कमंडलोः । तत्र स्नानेन गाणेशा भवंति जंतवः सदा ॥५॥ ततः परं महातीर्थं कापिलं तादृशं मतम् । कमलासुरनाशाय गणेशः कपिलोऽभवन् ॥६॥ हत्वाऽसुरं महावीर्यमजेयं शंकरादिभिः । तन्मस्तकं समाश्रित्य मयूरे संस्थितोऽभवत् ॥७॥ तत्राभिषेकमकरोद्ब्रह्मा मुनिगणान्वितः । कपिलाय गणेशस्य सूक्तैर्हर्षसमन्वितः ॥८॥ तत्र पंचामृतं नाम बभूव किल पूजनात् । नद्यास्तेषां च योगेन तत्तीर्थं परमं मतम् ॥९॥ स्नानेन कापिलं तत्र ज्ञानं सांख्यात्मकं लभेत् । कपिलो विष्णुराख्यातोऽभवत्तत्रैव संस्थितः ॥१०॥ ततः परं व्यासतीर्थं सर्वाज्ञानविनाशनम् । तावता मानयोगेन ज्ञातव्यं विबुधैः परम् ॥११॥ व्यासेन तत्र देवेशास्तपस्तप्तं सुदारुणम् । शतवर्षे गते चाढ्यं ददौ वरं गणेश्वरः ॥१२॥ तेन भारतकं धर्माऽधर्मयुक्तं चकार ह । शास्त्रं ब्रह्मपदं तच्च तयोरैक्ये महेश्वराः ॥१३॥ तत्र स्नानेनैव सद्यो जाड्यभावविवर्जितः । धर्माऽधर्मव्यवस्थां स ज्ञात्वा बोधयुतो भवेत् ॥१४॥ गणेशतीर्थादथ तु पूर्वभागे समास्थितम् । भीमकुंडं महेशाना भीमेशेन विनिर्मितम् ॥१५॥ तत्र स्थित्वा तपश्चक्रे भीमेशो गणपस्य च ।

वरदानप्रभावेण भीमासुरं जघान सः ॥१६॥ भीमेशतीर्थं मुख्यं वै महदैश्वर्यदायकम् । तत्र स्नानेनैव सद्यस्तावन्मानयुतं बभौ ॥१७॥ कदाचिदुष्णकाले तज्जलहीनं बभूव ह । तीर्थं तत्रागतो भीमः पांडुपुत्रः प्रतापवान् ॥१८॥ गदाप्रहारेण तेन खातं तीर्थमनुत्तमम् । जलं तत्र स निःष्कास्य स्नानं चक्रेऽतिभक्तितः ॥१९॥ बलात्मकं तेन तत्रैश्वर्यं प्राप्तं महाद्भुतम् । धृतराष्ट्रसुतान् सर्वान् जघानैश्वर्यसंयुतः ॥२०॥ ततः परमृषीणां च तीर्थं स्वधर्मदायकम् । तावन्मानेन तत्रैव तपः सामर्थ्यदायकम् ॥२१॥ अष्टाशीति सहस्राणि मुनयो ब्रह्म तत्पराः । प्राप्त्यर्थं ब्राह्मणत्वस्य तपश्चेरुश्च तत्र ते ॥२२॥ ब्रह्मभूता बभूवुस्ते स्थितास्तत्र विशेषतः । जीवन्मुक्तस्वभावेनाभजल्लंबोदरं परम् ॥२३॥ पंचतीर्थी समाख्याताऽमराः क्षेत्रे मयूरके । पंचसु स्नानमात्रेण ब्रह्मभूतो नरो भवेत् ॥२४॥ आदौ स्नायात् स गाणेशे भैमे चार्षे ततः परम् । व्यासतीर्थे कापिले च गाणेशेंऽते क्रमं चरेत् ॥२५॥ गणेशतीर्थात् पूर्वस्मात् क्षेत्रांते तीर्थमुत्तमम् । षट्त्रिंशत्तु शतान्येव धनुषां पापनाशनम् ॥२६॥ दक्षिणतीरगस्तत्र शिवः शक्तिसमन्वितः । संस्थितस्तीर्थमाश्रित्य सर्वार्थानां प्रवर्तकः ॥२७॥ उत्तरं तीरमाश्रित्य रमया केशवः स्थितः । सर्वधर्मप्रदाता तु क्षेत्रांते क्षेत्रधारकः ॥२८॥ सर्वाघघ्नमिति ख्यातं तीर्थं स्नानेन देवपाः । षष्ठं सर्वत्र विख्यातं दुःखनाशकरं भवेत् ॥२९॥ गणेशतीर्थकाद्देवाः प्रतीच्यां तीर्थमुत्तमम् । क्षेत्रांते संस्थितं नाम्ना सर्वपुण्यप्रदायकम् ॥३०॥ तीर्थस्योत्तरतीरस्थो भानुः संज्ञासमन्वितः । दक्षिणतीरसंस्थौ च परौ प्रकृतिपूरुषौ ॥३१॥ तत्र स्नानेनैव सद्यः पुण्यराशिर्भवेन्नरः । यद्यदिच्छेच्छुभं तत्तत् स लभेन्नात्र संशयः ॥३२॥ सप्तमं तीर्थमुख्यं तु पूर्वे दूरे चतुर्गुणम् । सप्ततीर्थेषु यः स्नायात् स वै सर्वं लभेच्छुभम् ॥३३॥ आदौ गाणेशके स्नायाद्भैमे चार्षे ह्यघघ्नके । पुण्यदेव्या स तीर्थे स कापिले गाणपे पुनः ॥३४॥ एवं मुख्यानि सप्तैव कथितानि समासतः । श्रवणात् पापनाशं तु कुर्वंति पठनान्नृणाम् ॥३५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते सप्ततीर्थवर्णनं नाम षड्विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ भृशुंडयुवाच । गणेशतीर्थमध्ये तु गणेशः संश्रितोऽभवत् । वामे सिद्धेः समाख्यातं तीर्थं स्नानेन सिद्धिदम् ॥१॥ दक्षिणे बुद्धितीर्थं तु स्नानेन बुद्धिदायकम्। लक्षतीर्थं ततः सिद्धेः समीपे ध्यानदायकम् ॥२॥ बुद्धेर्लाभस्थतीर्थं तु समीपे लाभदं परम् । लाभस्य संनिधाने तु मयूरस्य प्रकीर्तितम् ॥३॥ स्नानेन विविधो मोहो नश्येत्तत्र विनिश्चितम् । लक्षस्य मौषकं तीर्थं समीपे स्नानमात्रतः ॥४॥ अहंभावहरं प्रोक्तं नराणां देवसत्तमाः । ततश्च मौद्गलं तीर्थं ततो गात्सेमदं स्मृतम् ॥५॥ ततश्च शुक्रतीर्थं तु दत्तात्रेयस्य तत्परम् । अन्यानि गाणपत्यानां तीर्थानि विविधानि तु ॥६॥ तत्र मानं प्रवक्ष्यामि समासेन विचक्षणाः । धनुर्दशकमानं तु गाणेशं परिकीर्तितम् ॥७॥ तदर्धं सिद्धिबुद्ध्योश्चान्येषां धनुः प्रमाणकम् । तेषां शिष्यादिकानां तु यवमात्रं प्रकीर्तितम् ॥८॥ मयूराखुपुरोभागे तीर्थं ब्रह्मप्रियस्य च । प्रमोदस्य तथा मोदस्य योग-प्रियकस्य च ॥९॥ गणानां तीर्थमुख्यानि तत्रैवं संस्थितान्यपि । एतद्गणेशतीर्थस्थतीर्थानि कथितानि तु ॥१०॥ दक्षिणोत्तर-गान्येव तीर्थानि द्विधनूंषि च । वक्रतुंडादिकानां चाष्टानां देवेंद्रसत्तमाः ॥११॥ अन्ये नानाऽवताराश्च गणेशस्य महात्मनः । तेषां तत्रैव तीर्थानि गाणपत्यप्रदानि तु ॥१२॥ तत्र क्रमं प्रवक्ष्यामि पूर्वभागे गणेश्वराः । संस्थितास्तीर्थगास्तान् वै शृणुध्वं देवसत्तमाः ॥१३॥ वक्रतुंडश्चैकदंतो महोदरो गजाननः । बल्लाळश्चैव हेरंबो विघ्नेशो भालचंद्रकः ॥१४॥ ज्ञानेशः शूर्पकर्णश्च चिंतामणिर्विनायकः । एते द्वादश मुख्याश्च कथितास्तेषु विघ्नपाः ॥१५॥ संस्थांस्तु पश्चिमे भागे कथयामि समासतः । लंबोदरोऽथ विकटो विघ्नेशो धूम्रवर्णकः ॥१६॥ महागणपतिश्चैव तथा सिद्धिविनायकः । विघ्नहारश्च ढुंढीशो लक्ष्य आशाप्रपूरकः ॥१७॥ वरदो देवदेवेशा मदोत्कट इति श्रुतः । एते द्वादश विघ्नेशाः संस्थितास्तीर्थगाः पराः ॥१८॥ अन्ये नानावताराश्चांगुष्ठपर्वसमाश्रिताः । तीर्थं मया समाख्यातं गाणेशं गणपप्रियम् ॥१९॥ एतादृशानि चान्यानि कथयितुं न शक्यते । तथापि प्रब्रवीम्येव भवतां भक्तियंत्रितः ॥२०॥ ऋषितीर्थाचतुर्थ्याश्च तीर्थं कार्ष्णं च शौक्लकम् । चतुर्थ्यां स्नानमात्रेण चतुर्विधफलं भवेत् ॥२१॥ ततः शम्याश्च मंदारस्य ततस्तीर्थमुत्तमम् । दूर्वाया धनुषां पंच प्रमाणेन व्यवस्थितम् ॥२२॥ तेषु स्नानेन देवेशा ईप्सितं सर्वमाप्नुयात् । संस्थमुत्तरत्तीरे यत्तीर्थं तद्भैरवप्रियम् ॥२३॥ नग्नभैरवदेवेशः स्थितस्तत्र बभूव ह । नग्नभैरवतीर्थे तु यः स्नायाद्भावसंयुतः ॥२४॥ यातनासंभवं दुःखं प्राप्नुयान्न नरोत्तमः । तत्पुरो द्वारकातीर्थं तत्र स्नानेन मोक्षदम् ॥२५॥ ततोऽयोध्याश्रितं तीर्थं मथुरासंश्रितं ततः । स्नानेन मुक्तिदं तत्र नराणामीप्सितं भवेत् ॥२६॥

संस्थमुत्तरतीरे च प्रभासं रोगनाशनम् । तत्र स्नानेन देवेशाः सद्यो वै सुखदं भवेत् ॥२७॥ ततः पुष्करतीर्थं च स्नानतः पापनाशकम् । ततः कावेरिकायाश्च तीर्थं स्नानेन मुक्तिदम् ॥२८॥ चतुर्विंशतिकानां च ततो विष्णोः कलात्मनाम् । तीर्थानि पापसंघानां दाहकानि स्थितान्यपि ॥२९॥ तत उत्तरतीरस्थः स्वयं विष्णुः प्रतिष्ठितः । एतेषु स्नानमात्रेण स लभेद्वैष्णवं पदम् ॥३०॥ भृगुतीर्थं ततः पश्चात् पुलहस्य प्रकीर्तितम् । ततः क्रतोः समाख्यातं तीर्थं पापहरं परम् ॥३१॥ ततो मुनिगणानां च तीर्थानि संस्थितान्यपि । तत्र मानं प्रवक्ष्यामि शृणुध्वं ह्येकचेतसः ॥३२॥ वैष्णवानि च तीर्थानि स्नानतो देवसत्तमाः । विष्णुलोकप्रदान्येव ज्ञातव्यानि विशेषतः ॥३३॥ येषां देवोऽपदेवानामृषीणां तीर्थकानि तु । तत्तल्लोक-प्रदान्येव स्नानेन स्नानकारिणाम् ॥३४॥ शुक्लगत्या लये तेषां मुक्तिं गच्छंति मानवाः । मयूरक्षेत्रमाहात्म्यात् स्नानेनैव कमंडलोः ॥३५॥ एकैकं धनुराख्यातं मानं मुख्यात्मनां परम् । तीर्थं सर्वत्र माहात्म्ये मयूरे कथितं मया ॥३६॥ अन्यमुनिगणादीनां तीर्थानि कथितानि च । अंगुष्ठपर्वमात्राणि ज्ञातव्यानि विशेषतः ॥३७॥ आदौ सृष्टिसमारंभे स्रष्टा देवालयः किल । मुनयः क्षेत्रतीर्थानि तपस्तेपुः स्वसिद्धये ॥३८॥ मयूरे तपसा सिद्धाः स्वस्थाने संगता बभुः । कलया मुख्यभावेन मयूरेशं समाययुः ॥३९॥ अतो वक्तुमशक्तं तत्तेषां स्थानादिकं परम् । मानं तीर्थं च तद्वच्च ज्ञातव्यं सूक्ष्मचक्षुषा ॥४०॥ अवंतीतीर्थमाख्यातं दक्षिणे च तटे स्थितम् । शुक्रतीर्थमगस्त्यस्य तीर्थं सोमेश्वरस्य च ॥४१॥ पिशाचानां तथा तीर्थं तीर्थमेव यमस्य च । नैर्ऋतस्य तथा तीर्थं हंसतीर्थं ततः परम् ॥४२॥ भैरवाणां महातीर्थं रुद्राणां तीर्थकानि तु । रामेश्वरस्य तीर्थं तु मल्लिकार्जुनकस्य च ॥४३॥ अधुनोत्तरतीर्थस्य सीमां वः कथयाम्यहम् । विष्णववतार-तीर्थेभ्योऽप्सरस्तीर्थं प्रकीर्तितम् ॥४४॥ देवतीर्थं ततः पश्चात्ततो गंधर्वतीर्थकम् । इंद्रस्याग्नेस्ततस्तीर्थे विष्णुतीर्थं तदंतगम् ॥४५॥ दक्षिणतीरगं तीर्थमत्रेः पापहरं परम् । एकद्वितत्रितादीनां तीर्थानि गणपात्मनाम् ॥४६॥ ततः शंभोर्महातीर्थं सीमासंस्थं महेश्वराः । गाणेशात्पूर्वभागे च तीर्थानि कथितानि वै ॥४७॥ अथ पश्चिमदिग्भागे तीर्थानि कथयाम्यहम् । संक्षेपेण सुरश्रेष्ठाः शृणुध्वं विधिपूर्वकम् ॥४८॥ व्यासतीर्थात् परं तीर्थं काश्याश्चैव ततः परम् । मायापुर्याः समाख्यातं ततो विरजकं मतम् ॥४९॥ कृत्तिवस्त्रत्र्यंबकेशशिवानां च ततः परम् । वैद्यनाथादिकानां च तीर्थानि संस्थितानि च ॥५०॥ ततः कैलास-नाथस्य तीर्थं पापहरं परम् । ततो द्वादश मासानां तीर्थानि संस्थितानि च ॥५१॥ मलमासस्य तीर्थं तु गाणेशं नात्र संशयः ।

देवो गणेश्वरस्तेन कृतश्च तपसा पुरा ॥५२॥ मलमासे गणेशस्य पूजनं सेवनं मतम् । सर्वार्थसाधकं तच्च भविष्यति महेश्वराः ॥५३॥ ततः शिवस्य शैवानि तीर्थानि संस्थितानि च । लक्ष्मीतीर्थं ततः पश्चात्ततः सरस्वतीकृतम् ॥५४॥ विष्णुकांच्यास्ततस्तीर्थं कौमार्याश्च ततः परम् । वाराह्यास्तीर्थमुख्यं तु तत ऐंद्याः प्रकीर्तितम् ॥५५॥ वैष्णव्याश्च ततस्तीर्थं माहेश्वर्यास्ततः परम् । ब्राह्मयास्तीर्थं ततो रक्तदंतायाश्च प्रकीर्तितम् ॥५६॥ ततो वसिष्ठतीर्थं तु पौलस्त्यं तीर्थमुत्तमम् । ततश्चांगिरसस्तीर्थं कण्वतीर्थं ततः परम् ॥५७॥ जैमिनेस्तीर्थमुख्यं च ततो मेधातिथेः स्मृतम् । कार्तवीर्यस्य तीर्थं तु मांधातुश्च ततः परम् ॥५८॥ ययातेर्नहुषस्यैव ध्रुवस्य च ततः परम् । भरद्वाजस्य तीर्थं तु जमदग्नेस्ततः परम् ॥५९॥ गौतमस्य ततस्तीर्थं पांडवैश्च ततः कृतम् । ततो वरुणतीर्थं तु मरुतश्च ततः परम् ॥६०॥ पितृतीर्थं ततः प्रोक्तं गयातीर्थं ततः परम् । तत्रैव संस्थिता देवी गयागदाधरादिभिः ॥६१॥ उभयोस्तीरयोः सेवि नराणां ब्रह्मदायिनी । तत्र पिंडप्रदानेन ब्रह्मभूताः पितामहाः ॥६२॥ पितरश्च तथाऽन्ये वै भवंति क्षेत्रकारणात् । ऋणैः सर्वैर्विनिर्मुक्तः स वै गच्छेत्ततः परम् ॥६३॥ ततः परं मुनीनां तु तीर्थानि विविधानि च । कथयितुं न शक्यानि मया केनापि निश्चितम् ॥६४॥ भैरवाणां ततस्तीर्थं स्कंदस्य च ततः परम् । नागेशस्य ततः प्रोक्तं रुद्राणां च ततः परम् ॥६५॥ वसूनां स्थानसंयुक्तं तीर्थं प्रत्येकमेव च । पार्वत्याश्च ततः प्रोक्तं ततो धनपकस्य च ॥६६॥ साध्यानां तीर्थमुख्यं तु ततः शक्तेश्च तीर्थकम् । सीमाभूतं महेशानास्तटे दक्षिणगे परम् ॥६७॥ अधुनोत्तरगे तीरे व्यासतीर्थान् महेश्वराः । तीर्थानि संस्थितान्येव तान्यहं प्रवदामि तु ॥६८॥ व्यासतीर्थात् स्वयं ब्रह्मा प्रयाग-संयुतः स्थितः । तस्य तीर्थं महत्तत्र सर्वपापप्रणाशनम् ॥६९॥ कर्मतीर्थं ततः पश्चात्ततोऽग्नेस्तीर्थमुत्तमम् । द्वादशादित्यकानां च तीर्थानि च ततः परम् ॥७०॥ शिवकांच्यास्ततस्तीर्थं ततः सूर्यस्य तीर्थकम् । पूर्णस्य पूर्णभावाख्यं सर्वरोगनिकृंतनम् ॥७१॥ ततो ग्रहाणां तीर्थानि दिक्पालाश्चावशेषिताः । तेषां तीर्थानि देवेशा देवानां यक्षरक्षसाम् ॥७२॥ महाकाल्यास्ततस्तीर्थं नारसिंह्यास्ततः परम् । शाकंभर्यास्ततः प्रोक्तं चामुंडायास्ततः परम् ॥७३॥ त्रिपुरायास्ततस्तीर्थं ततस्तीर्थानि देवपाः । महामाया-युतानां वै शक्तीनां विविधानि च ॥७४॥ चतुःषष्टिमितानां च योगिनीनां मतानि वै । तीर्थानि योगादान्येव परदेहजकानि च ॥७५॥ ततश्च नैध्रुवं तीर्थं देवलस्य ततः परम् । मार्कंडेयस्य तीर्थं तु भैरवाणां ततः परम् ॥७६॥ कालभैरवतीर्थं तु ततः ऋतुमुखाः परम् । तेषां प्रजापतीनां तु तीर्थानि संस्थितानि तु ॥७७॥ ततो रैवतकं तीर्थं ततो योगमयं परम् । जडभरततीर्थं

च योगसिद्धिप्रदायकम् ॥७८॥ ओंकारगणनाथस्य ततस्तीर्थं प्रकीर्तितम्। विद्याधराणां तीर्थं च ततः पैशाचमोचनम् ॥७९॥ ततो धर्मस्य तीर्थं त्वश्विनोस्तीर्थं ततः परम्। नागानां शेषकादीनां ततस्तीर्थशतानि च ॥८०॥ ततो गवां महातीर्थं सनकादेस्ततः परम्। चतुर्दश मनूनां च तीर्थानि च ततः परम् ॥८१॥ महाशक्तेस्ततस्तीर्थमसितस्य ततः परम्। दक्षादीनां च तीर्थानि ततो मातृगणाः स्मृताः ॥८२॥ तेषां तीर्थानि देवेशाः षष्टिर्दक्षस्य कन्यकाः। तासां तीर्थानि तत्पश्चाद्गंधर्वाणां ततः परम् ॥८३॥ गुह्यकानां तु तीर्थानि ततो बिभीषणस्य च। रावणस्य ततस्तीर्थं श्वेतकेतोस्ततः परम् ॥८४॥ उद्दालकस्य तीर्थं तु रक्षसां च ततः स्मृतम्। अष्टावक्रस्य तीर्थं तु वैश्वदेवं ततः परम् ॥८५॥ तीर्थानि चैव तेषां तु ततो दक्षस्य धीमतः। पुत्री संतान-कादीनां तीर्थानि विविधानि च ॥८६॥ मारीचमौद्गलादीनां विप्राणां च ततः परम्। तीर्थानि पांडवेशस्य तीर्थं दुर्वाससः परम् ॥८७॥ दत्तस्य तीर्थकं प्रोक्तं निदाघस्य ततः परम्। हनूमतस्ततस्तीर्थं सुग्रीवस्य ततः परम् ॥८८॥ तीर्थं जांबवतः प्रोक्तं बलेस्तीर्थं ततः परम्। ततश्च वालखिल्यानां गालवस्य ततः परम् ॥८९॥ विश्वामित्रस्य तीर्थं तु तीर्थं त्रिशिरसस्ततः। मृकंडस्य ततस्तीर्थं दधीचेश्च ततः परम् ॥९०॥ किंनराणां ततस्तीर्थं साध्यानां च ततः परम्। कामधेनुमुखीनां च गवां तीर्थं ततः परम् ॥९१॥ असितस्य ततस्तीर्थमिक्ष्वाकोश्च ततः परम्। गार्ग्याणां च ततस्तीर्थं मांडूकानां ततः परम् ॥९२॥ धौम्यस्य चैव वाल्मीकेस्ततस्तीर्थं च जैमिनेः। वाचक्नवेस्ततस्तीर्थं ततो मंकणकस्य च ॥९३॥ प्रह्लादस्य ततस्तीर्थं दधीचेश्च ततः परम्। उपमन्योस्ततस्तीर्थं वैशंपायनकस्य च ॥९४॥ जाजलेः पर्वतस्यैव पैलस्य च ततः परम्। लोमशस्य विभांडस्य ऋष्यश्रृंगस्य तत्परम् ॥९५॥ ततो मुनिगणानां च तीर्थानि विविधानि तु। अश्वत्थाम्नस्ततस्तीर्थं कृपस्य च ततः परम् ॥९६॥ ततो वराहतीर्थं तु भूम्यास्तीर्थं ततः परम्। प्रकृतेः पुरुषस्यैका महामाया प्रकीर्तिता ॥९७॥ तस्यास्तीर्थं समाख्यातं सीमासंस्थं महेश्वराः। एतानि तीर्थमुख्यानि कथितानि समासतः ॥९८॥ स्वस्वमुख्यदिनेष्वेव सेवनीयानि मानवैः। मयूरवासिभिः स्वस्वसिद्धिदानि भवंति हि ॥९९॥ मयूरेऽपारतीर्थानि तेषां मानं वदाम्यहम्। अंगुष्ठपर्वमात्राणि तीर्थानि तीर्थसेविनाम् ॥१००॥ यवमात्रस्वरूपेण संस्थितास्तीर्थसेविनः। त्रैलोक्ये यानि तीर्थानि नानाभेदधराणि च ॥१॥ मयूरे तानि सर्वाणि संस्थितानि विशेषतः। अणुमात्रस्वरूपैस्तु ज्ञातव्यानि मनीषिभिः ॥२॥ मयूरे यानि तीर्थानि न गच्छंति तु

कुत्रचित् । स्वस्वस्थानं समाश्रित्य सेवंते द्विरदाननम् ॥३॥ गाणेशक्षेत्रभूतेषु देवास्तीर्थसमन्विताः । संस्थितास्ते तु गच्छंति मयूरे दर्शनार्थिनः ॥४॥ एतत् संक्षेपतः प्रोक्तं तीर्थानां तु चरित्रकम् । श्रवणात् पठनात् नृभ्यो भुक्तिमुक्तिप्रदं भवेत् ॥१०५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते ब्रह्मकमंडलुस्थतीर्थवर्णनं नाम सप्तविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ देवेशा ऊचुः । एतेषु तीर्थमुख्येषु के के सिद्धिं समाययुः । तेषां समासतः स्वामिंश्चरित्रं वद सौख्यदम् ॥१॥ भ्रूशुंडयुवाच । गच्छध्वं देवदेवेशा मयूरेशं मदाज्ञया । तत्र सिद्धा भविष्यंतः सर्वं ज्ञास्यथ सिद्धिदम् ॥२॥ स्कांदे विस्तरतः सर्वं प्रोक्तं चैव न संशयः । समासतः समाख्यातं मया क्षेत्रचरित्रकम् ॥३॥ देवेशा ऊचुः । नित्ययात्रां वद स्वामिंस्तथा क्षेत्र-प्रदक्षिणाम् । यात्रामन्यनराणां तु सर्वसिद्धिप्रदां वद ॥४॥ पापयुक्तः स्वभावेन मयूरे संस्थितोऽभवत् । चकार नगराद्बाह्यं कथं तं नग्नभैरवः ॥५॥ संस्कारेण समायुक्तं गाणपत्यं तथा प्रभुः । कथं स मानयत् क्षेत्रे तद्वदस्व समासतः ॥६॥ भ्रूशुंडयुवाच । बंगाले ब्राह्मणः कश्चिद्गाणपत्यपरायणः । विश्वामित्रकुले जातो नाम्ना शंभुर्महायशाः ॥७॥ हृदि तस्य समाश्रित्य नग्नो भैरवनायकः । बुद्धिभेदं चकाराऽसौ तेन संव्यथितो द्विजः ॥८॥ मयूरेशं तु द्रक्ष्यामि कदाऽहं देहधारकः । क्षणभंगुरदेहस्थः किं करोमि त्वरायुतः ॥९॥ ततः सपुत्रदारादिसंयुक्तो निःसृतो गृहात् । भिक्षाशनश्च देवेशा द्रव्यहीनतयाऽभवत् ॥१०॥ द्वाभ्यां समागतः सोऽपि मासाभ्यां लंघ्य मार्गकम् । गणेशतीर्थगो विप्रो ननंद हर्षयन् स्वकान् ॥११॥ मयूरेशं प्रपूज्यादौ यात्रां कृत्वा विधानवित् । क्षेत्रसंन्यासभावेनाऽभजत्तं द्विरदाननम् ॥१२॥ अंते स्वानंदगो भूत्वा भजते गणनायकम् । हृदि प्रभुः समाश्रित्य नरमेवं समानयत् ॥१३॥ अथ पापपरा ये च तेषां वदामि देवपाः । क्षेत्रत्यागभवं चित्रं चरित्रं शृणुत प्रियाः ॥१४॥ मयूरे ब्राह्मणः कश्चिद्वासिष्ठे जनितोऽभवत् । जन्मारभ्य महापापी पापनिष्ठो बभूव ह ॥१५॥ न वेदाध्ययनं चक्रे बाल्ये चौर्यपरोऽभवत् । यौवने मद्यमांसादि सिषेवे स परस्त्रियम् ॥१६॥ तस्य बुद्धिविभेदं स चकार नग्नभैरवः । परस्त्रियं समागृह्य विदर्भे प्रययौ खलः ॥१७॥ एवं नानाविधं देवो नग्नो भैरवनायकः । चकार चाधिपत्यं स मयूरे

दंडधारकः ॥१८॥ अन्यच्च कथयिष्यामि चरित्रं पापकारिणाम्। मयूरे ये मतिं कृत्वा न प्रापुस्तं मयूरकम् ॥१९॥ द्राविडे वैश्यजातिस्था बभूवुः पापकारकाः। विषादिना जनान् जघ्नुर्द्रव्ययुक्तान्निरंतरम् ॥२०॥ शंभुश्च सोमकः कुब्जः कंबलश्चैव मित्रकाः। चत्वारो मद्यमांसादिबभक्षुर्नित्यमादरात् ॥२१॥ परस्त्रीलालसाः सर्वे शिश्नोदरपरायणाः। न चक्रुः पुण्यलेशं ते न स्वधर्मादिकं कदा ॥२२॥ तत्रैव नगरे कश्चिद्वैश्यः श्यामलसंज्ञितः। द्रव्ययुक्तो महापापी ममार दैवयोगतः ॥२३॥ श्यालकस्तस्य तत्रस्थः स्वधर्मस्थो बभूव ह। नाम्ना शंकर आख्यातः पुण्यकर्मपरायणः ॥२४॥ तेनास्थिसंचयस्तस्य कृत उद्धारकारणात्। गते मासे महापापा वैश्याश्चत्वार एव ये ॥२५॥ दंडकारण्यदेशे तु जग्मुर्विक्रयकारणात्। श्यामलास्थि ददौ तेभ्यः शंकरो विनयान्वितः ॥२६॥ जगाद तान् महाभागो मयूरेऽस्थि प्रगृह्य तु। त्यज्यतां गणनाथस्य तीर्थे ब्रह्मसुखप्रदे ॥२७॥ तथेति गृह्य तस्यास्थि समाजग्मुर्मयूरकम्। तत्र विघ्नं चकाराऽसौ नग्नो भैरवनायकः ॥२८॥ चौरैस्तेषां हृतं सर्वं गतस्तत्रास्थिसंचयः। ते पुनः स्वगृहं जग्मुः किंचिद् द्रव्ययुताः खलाः ॥२९॥ मयूरेशस्य चक्रुर्न यात्रां पापपरायणाः। निश्चितामपि देवेशा बुद्धिभेदबलाश्रयात् ॥३०॥ एवं महाबलः सोऽपि भैरवो हृदि संस्थितः। गणेशाज्ञावशो भूत्वा रक्षति क्षेत्रमुत्तमम् ॥३१॥ एतद्भैरवनाथस्य चरित्रं यः शृणोति चेत्। तस्य सर्वं मयूरे तु शुभरूपं भविष्यति ॥३२॥ देवेशा ऊचुः। एतादृशो महाभागो नग्नो भैरवनायकः। स्तोत्रं तस्य वद स्वामिन् संस्तुमस्तं निरंतरम् ॥३३॥ बुद्धिभेदात् स नः क्रुद्धः करिष्यति विशेषतः। क्षेत्रप्रवेशहीनांश्चेदतस्तं सेवयामहे ॥३४॥ भ्रूशुंडयुवाच। सर्वमायाविहीनाय सर्वमायाप्रचालक। सर्वांतर्यामिणे नित्यं नग्नभैरव ते नमः ॥३५॥ मयूरेशपरायैव मयूरपुरपालक। धर्मिष्ठानां सुपालाय नग्नभैरव ते नमः ॥३६॥ अधर्मनिरतांश्चैव बहिःकाराय देवप। सदा स्वानंदनिष्ठाय नग्नभैरव ते नमः ॥३७॥ संस्कारयुक्तभावेन पापकर्मपरात्मनाम्। मयूरे दंडकर्त्रे वै नग्नभैरव ते नमः ॥३८॥ महाबलधरायैव ब्रह्मादीनां प्रचालक। अमेयशक्तये देव नग्नभैरव ते नमः ॥३९॥ भुक्तिमुक्तिप्रदात्रे च धनधान्यविवर्धन। गाणेशानां प्रपालाय नग्नभैरव ते नमः ॥४०॥ प्रलये शूलमुद्यम्य ब्रह्माण्डभयकारक। शूलप्रोतमहांडाय नग्नभैरव ते नमः ॥४१॥ अट्टहासेन देवेंद्रांस्तथा संत्रास्य चासुरान्। नृत्यसे गणनाथाग्रे नग्नभैरव ते नमः ॥४२॥ विश्वं ततं सर्वमिदं त्वयेश आद्यंतमध्येषु महानुभाव। संरक्ष देवेश मयूरसंस्थानस्मान् कुरुष्व त्वमनन्यभावान् ॥४३॥ शूलिन्नमस्तेऽखिलकारणाय त्वद्भीतिभावेन जगत्प्रवृत्तिः। व्यापारयुक्तं विविधेषु नित्यं स्वस्वप्रकार्यं प्रकरोति

चात्मन् ॥४४॥ अतस्त्वदाधारमयं परेश सुरक्ष ते भक्तियुतं कुरुष्व। गणेशक्षेत्रं त्वदधीनगं तु गणेशसंस्थं कुरु ते नमो वै ॥४५॥ इदं स्तोत्रं महेशाना नग्नभैरवकस्य च। यः पठेच्छृणुयाद्वाऽपि स सर्वं प्रलभेच्छुभम् ॥४६॥ धनधान्यादिकं सर्वं भुक्तिमुक्तिसमन्वितम् । लभेदनेन देवेशास्तुविध्वं नग्नभैरवम् ॥४७॥ मयूरक्षेत्रत्यागश्च कदापि न भवेन्नृणाम् । स्तोत्रेण स्तुवतां नित्यं न किंचिद् दुर्लभं भवेत् ॥४८॥

ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते नग्नभैरवप्रशंसा नामाष्टाविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ भृशुंडयुवाच। द्वारयात्रा समाख्याता सैव क्षेत्रप्रदक्षिणा। ज्ञातव्या देवदेवेशाः कुरुध्वं यत्नसंयुताः ॥१॥ पुण्यकर्म नरः कुर्यात्तदा पापानि मानवम्। छलयंति विशेषेण तस्माद्यत्नपरो भवेत् ॥२॥ नित्ययात्रां प्रवक्ष्यामि मयूरक्षेत्र-वासिनाम्। अन्येषां सर्वदां पूर्णां शृणुध्वं सुसमाहिताः ॥३॥ मयूरेशं समभ्यर्च्य परिवारसमन्वितम् । ततोऽष्टगणपान् क्षेत्रं कुंडं नदीं प्रपूजयेत् ॥४॥ शमीं मंदारकं दूर्वां चतुर्थीं च ततः परम्। मुद्गलं शुकयोगीशं ततो मंडपगो भवेत् ॥५॥ चतुर्देवांश्च पूर्वादिक्रमतः संस्थितो नरः । तत्र धर्मादिकान् श्रुत्वा यथावकाशमानतः ॥६॥ पुनर्गणेश्वरं नत्वा गच्छेत् स्वगृहकं ततः। एवं कुर्यान्नित्ययात्रां स गणेशप्रियो भवेत् ॥७॥ नित्ययात्रां नरो यस्तु न कुर्याद्यदि देवपाः। क्षेत्रवासफलं तस्य न भवेत् पूर्णमंजसा ॥८॥ यातनां स लभेदंते संपूर्णां भैरवीं पराम् । अतो यात्रां समाकुर्यात् क्षेत्रस्थो नियमेन तु ॥९॥ अधुना गणपप्रीत्यै यात्रामन्यां वदाम्यहम् । संपूर्णभक्तिदात्रीं च गाणेशीं गणपप्रियाः ॥१०॥ गर्भागारे चतुर्दिक्षु स्थिता विघ्नेश्वराः पराः। षट्पंचाशच्च ते तेषु मुख्याः पूज्या विशेषतः ॥११॥ दिक्पालानां महास्त्राणि तेभ्यः पंच धनुः पुरः। सर्वत्र संस्थिताः सर्वे गणेशा गणपे रताः ॥१२॥ चतुर्दशप्रमाणेन प्रत्येकं दिक्षु संस्थितान्। गणपान् पूजयेद्यस्तु गाणपत्यो भवेन्नरः ॥१३॥ बल्लाळः कपिलो ढुंढिर्वक्रतुंडो महोदरः। हेरंबो गणनाथस्तु विघ्नेशो विघ्नहारकः ॥१४॥ भालचंद्रः शूर्पकर्णो ज्येष्ठराजो गजाननः । महोत्कटश्च देवेशा अभवन् पूर्वदिक् स्थिताः ॥१५॥ एकैकस्मात् क्रमेणैव

धनुषां पंचविंशतिम् । दूरे संस्था गणेशाना ज्ञातव्या भक्तिकारिभिः ॥१६॥ तस्माद् द्विगुणमानेन दक्षिणे संस्थिताः पराः । तस्माचतुर्गुणेनैव पश्चिमे गणपा बभुः ॥ १७ ॥ तस्मात् पादविहीनेन गणपा उत्तरे भवन् । एवं क्रमेण पूज्यास्ते सर्वसिद्धिप्रदायकाः ॥१८॥ अथ दक्षिणसंस्थांस्तु कथयामि गणेश्वरान् । ज्ञानेशः कर्मपश्चैव योगेशः सिद्धिविघ्नपः ॥१९॥ चिंतामणिश्च बुद्धीशो महागणपतिस्तथा । पूर्णानंदश्च लक्ष्येशः सहजेशैकदंतकौ ॥२०॥ लंबोदरो धूम्रवर्णस्तथा क्षिप्रप्रसादनः । एते दक्षिणगाः प्रोक्ता गर्भागारे महेश्वराः ॥२१॥ विनायकश्च विकट आशापूरक संज्ञितः । धूम्रकेतुः प्रमोदश्च मोदः सुमुखदुर्मुखौ ॥२२॥ पाशपाणिः परेशश्च लाभेशो धरणीधरः । मंगलेशश्च मूषकध्वज एते प्रकीर्तिताः ॥२३॥ पश्चिमे देवदवेशाः पूजनीया विधानतः । अथोत्तरगतान् वक्ष्ये गणेशान् भक्तपालकान् ॥२४॥ मयूरध्वजसंज्ञश्च राजेशो विद्रुमेश्वरः । ओंकारेशो गुणेशश्च वरदः सिद्धिबुद्धिपः ॥२५॥ गणेशश्च चतुर्बाहुस्त्रिनेत्रो गजमस्तकः । निधिपो गजकर्णश्च चिंतामणिविभूषणः ॥२६॥ एते गणेश्वराः प्रोक्ताः पूजनीया महेश्वराः । यात्राकारिण एवैते ददति स्वेप्सितं फलम् ॥२७॥ अथ देवालये देवाः स्थितां यात्रां वदाम्यहम् । मुख्यां सर्वार्थदां पूर्णां यात्राकारिजनस्य च ॥२८॥ अयोध्या मथुरा चैव द्वारका पूर्वमंदिरे । महाविष्णुस्ततो देवाः पूजनीयो विशेषतः ॥२९॥ काशी माया ह्यवंती च शिवः कैलासगस्ततः । गौरी स्कंदो जनैः पूज्या दक्षिणे मुख्यभावतः ॥३०॥ महाकाली महालक्ष्मीर्महासरस्वती परा । आदिशक्तिर्जनैः पूज्या पश्चिमे विष्णुकांचिका ॥३१॥ विधाताग्निः कर्मजडभरतोऽथ दिवाकरः । शिवकांची जनैः पूज्या उत्तरे देवमंदिरे ॥ ३२ ॥ देवागारस्य देवेशा रहस्यं संप्रकाशितम् । यात्रां कुर्यान्नरस्तेषां सर्वसिद्धिप्रदा भवेत् ॥३३॥ अथो मयूरसंस्थानां रहस्यं कथयाम्यहम् । पुलहं च भृगुं देवाः क्रतुं संपूजयेन्नरः ॥३४॥ पूर्वभागे तथा याम्ये वसिष्ठात्री पुलस्त्यकम् । पश्चिमे दक्षमेवं तु मरीचांगिरसौ तथा ॥३५॥ उत्तरे वसवोऽष्टौ च कामधेनुश्च देवलः । असितः पूजनीयास्ते जनैः सर्वार्थसिद्धये ॥३६॥ एतद्यात्राविधानं तु संक्षेपेण निरूपितम् । सर्वसिद्धिप्रदं देवा जनेभ्यो यात्रया भवेत् ॥३७॥ गच्छध्वं तत्र देवेशा मयूरे भक्तिसंयुताः । भजिष्यथ गणेशानं ततः सर्वमवाप्स्यथ ॥३८॥ आदिशक्तिरुवाच । एवमुक्त्वा महायोगी भ्रूशुंडी विरराम ह । तस्मादेकाक्षरं गृह्य विधियुक्तं महामनुम् ॥३९॥ प्रणम्यापूज्य योगीशं ततः कृत्वा प्रदक्षिणम् । ययुर्हर्षयुताः सर्वे देवेंद्राः पंच मुख्यकाः ॥४०॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते भ्रूशुंडिदेवेंद्रसंवादसमाप्तिवर्णनं नामैकोनत्रिंशत्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । ततो भ्रांता महेशाना ददृशुर्न मयूरकम् । स्वानंदरूपगं ब्रह्म सस्मरुर्गणनायकम् ॥१॥ भ्रूशुंडिनं हृदि ध्यात्वा पुपूजुर्गणपप्रियम् । ततो गणेश्वरं पूज्य प्रार्थयामासुरादरात् ॥२॥ देवेशा ऊचुः । मयूरं दर्शयस्वाद्य न जानीमो वयं परम् । अज्ञानावरणैर्युक्तान् रक्ष नस्ते पदार्थिनः ॥३॥ अकस्माद् वेदमुख्याश्च बभुः सांगाः समागताः । गणेशश्वाससंभूना देवेशान् ज्ञानदायिनः ॥४॥ तान् दृष्ट्वा तेजसां पुंजयुक्तांस्ते देवसत्तमाः । प्रणम्य वेदान् पप्रच्छुः के यूयं वदत प्रियाः ॥५॥ अज्ञानावरणैर्युक्ता गणेशस्मरणे रताः । वयं तत्र भवंतोऽपि प्रेषिता गणपेन किम् ॥६॥ वेदा ऊचुः । वेदा वयं महेशानाः सांगा अत्र समागताः । किमर्थं दुःखसंयुक्ता भवंतो वदत प्रियाः ॥७॥ ततः सर्वं जगुर्देवा वृत्तांतं पूर्वसंभवम् । तच्छ्रुत्वा वेदमुख्यास्तान् मयूरं नददर्शयन् ॥८॥ ननो ब्रह्ममयं क्षेत्रं दृष्ट्वा ज्योतिर्मयं परम् । प्रणेमुस्ते ततः सर्वे प्रवेशं चक्रुरादरात् ॥९॥ विधियुक्तं प्रचक्रुस्ते देवेशा वेदसंयुताः । ततो वेदाज्ञया हृष्टाः स्थापयंति स्म मूर्तिकाम् ॥१०॥ संपूज्य ध्याननिष्ठास्ते जेपुर्मंत्रं विधाननः । निराहारेण विघ्नेशं तोषयंति स्म देवपाः ॥११॥ यस्मिन् काले च देवेशैः स्थापिता मूर्तिरुत्तमा । भाद्रशुक्लचतुर्थी सा तदा मध्याह्नगाऽभवत् ॥१२॥ सोमवासरसंयोगः स्वातीनक्षत्रकं महत् । दैवयोगेन कालश्च संप्राप्तः शक्तयः परः ॥१३॥ शक्तय ऊचुः । सृष्टिहीनं तदा देवि कथं मासादिकं बभौ । एतत् कुतूहलं ब्रूहि संशयच्छेदनाय नः ॥१४॥ आदिशक्तिरुवाच । दृश्यभावात्मकः कालो नश्यति स्म युगे युगे । सदैव ब्रह्मणि सर्वं ब्रह्माकारं प्रवर्तते ॥१५॥ कालमानेन विघ्नेशो योगनिद्रापरोऽभवत् । तथा निद्राविहीनः स चकार सृष्टिमुत्तमाम् ॥१६॥ ब्रह्मणि ब्रह्मरूपः स कालस्तत्र समास्थितः । अज्ञानेन जनानां चेत्तस्य संसेवनं भवेत् ॥१७॥ तेन सिद्धियुताः सर्वे भवंति स्म न संशयः । ज्ञानतोऽज्ञानतो वाऽपि यथा वह्निकणो दहेत् ॥१८॥ माघे शुक्लचतुर्थ्यां स गणेशो वरदोऽभवत् । अंगारकयुतायां तु मूर्तिमध्याद्विनिर्ययौ ॥१९॥ दृष्ट्वा चतुर्भुजं ढुंढिं मयूरोपरि संस्थितम् । सिद्धिबुद्धिसमायुक्तं भालचंद्रं महोदरम् ॥२०॥ त्रिनेत्रं शेषनाभिं च चिंतामणिधरं परम् । शूर्पकर्णं गजास्यं च एकदंतविराजितम् ॥२१॥ पाशांकुशवरैर्युक्तमभयं दधतं प्रभुम् । भूषणैर्भूषितं वस्त्रै राजितं ददृशुः परम् ॥२२॥ तत उत्थाय देवेशा मया युक्ताः प्रणम्य तम् । पुपूजुस्तुष्टुवुश्चैव प्रहृष्टमनसोऽभवन् ॥२३॥ ब्रह्माद्या ऊचुः । अनादिरूपं मयूरोपरिस्थं निजस्य नाथं सकलावभासम् । मनोवचोहीनमनोवचःस्थं नमामहे तं गणनाथमीड्यम् ॥२४॥ अजं पुराणं सकलादिपूज्यं परेशमानंदप्रदं हृदिस्थम् । चतुःप्रचालं परमार्थभूतं नमामहे

तं गणनाथमीड्यम् ॥२५॥ जगत् स्वकोत्थानबलेन सृष्ट्वा स्वबोधगं यं जगतीशसंस्थम्। विदेहभावेन सदात्मसंस्थं नमामहे तं गणनाथमीड्यम् ॥२६॥ तयोर्विहीनं स्वसुखे प्रलीनं निजात्मगं योगधरं स्वधीस्थम्। अयोगरूपेण निवृत्तिसंस्थं नमामहे तं गणनाथमीड्यम् ॥२७॥ प्रभुं स्वभक्तस्य सुशांतिकारं सुशांतिगं यं गजवक्त्रधारम्। चतुर्भुजं ह्येकरदं त्रिनेत्रं नमामहे तं गणनाथमीड्यम् ॥२८॥ महोदरं पाशधरं सुसिद्धिप्रदं विभुं बीजममोघवीर्यम्। परात्परं शूर्पश्रुतिं गणेशं नमामहे तं गणनाथमीड्यम् ॥२९॥ नमस्ते सृष्टिकर्त्रे ते ब्रह्मणे पालकाय च। विष्णवे शंभवे तुभ्यं संहर्त्रे वै नमो नमः ॥३०॥ अनाथानां प्रणाथाय शक्तये मोहधारिणे। कर्मणे भानवे चैव हेरंबाय नमो नमः ॥३१॥ मयूरेशाय देवाय मयूरध्वजधारिणे। विघ्नेशाय महाविघ्नचालकाय नमो नमः ॥३२॥ किं स्तुमस्त्वां गणेशान ब्रह्मणां ब्रह्मरूपिणम्। यत्र देवादयः शांतिं गच्छंति स्म निरंतरम् ॥३३॥ अतो नमामहे नाथ तेन तुष्टो भवस्व च। भक्तान् रक्ष महाभक्तिप्रिय विघ्नेश आदरात् ॥३४॥ एवमुक्त्वा प्रणेमुस्ते गणेशं भक्तिसंयुताः। साश्रुनेत्राः सरोमांचास्तानुत्थाप्य जगाद सः ॥३५॥ श्रीगणेश उवाच। भवत्कृतमिदं स्तोत्रं सर्वदं प्रभविष्यति। पठतां शृण्वतां देवा सर्वं दास्यामि वाञ्छितम् ॥३६॥ वरं ब्रूत विशेषेण दास्यामि मनसीप्सितम्। तपसा स्थापनेनैव ह्यहं स्तोत्रेण तोषितः ॥३७॥ देवेशा ऊचुः। यदि विघ्नेश संतुष्टो वरं दास्यसि वाञ्छितम्। तदा ते पादपद्मे नो भक्तिरस्तु निरंतरम् ॥३८॥ अन्यच्चास्माभिरानंदात् करणीयं किमप्यहो। कार्यं ब्रूहि गणाधीश करिष्यामो जवान्विताः ॥३९॥ श्रीगणेश उवाच। चतुर्मुख रजोयुक्तः सृष्टिं कुरु मदाज्ञया। ब्रह्मा नाम्ना भवस्व त्वं मां स्मृत्वाऽहंविवर्जितः ॥४०॥ विष्णुश्चतुर्भुजः सत्वयुक्तोऽसि कुरु पालनम्। नानावतारभृन्नित्यं मां स्मृत्वा सिद्धिमेष्यसि ॥४१॥ तमोयुक्तः पंचमुख तेन त्वं संहरस्व च। मां स्मृत्वा बंधहीनश्च भविष्यसि हरो भव ॥४२॥ चतुर्भुजे क्रियायुक्ता त्वं ततो मोहयस्व च। नानाभेदविभागेन मां स्मृत्वा सिद्धिमेष्यसि ॥४३॥ नाम्ना शक्तिर्भवस्व त्वं सर्वशक्तियुतेऽनघे। सहस्रकरसूर्यस्त्वं भव नाम्ना महामते ॥४४॥ कर्माधारस्वरूपेण धारयस्व चराचरम्। मां स्मृत्वा बंधहीनोऽपि भविष्यसि न संशयः ॥४५॥ एवमुक्त्वा गणाधीशो ददौ तेभ्यो विशेषतः। संकल्पसिद्धिजं देव्यः सामर्थ्यं विविधं तथा ॥४६॥ शक्तयो नगराण्येवायुधानि वहनादिकम्। निर्मायांऽतर्दधे सद्यो मूर्तिसंस्थो बभूव ह ॥४७॥ देवाः स्वस्वपदे गत्वा चक्रुः सर्वं जगत्ततः। चराचरं यथाभागमाश्रित्य किल रेमिरे ॥४८॥ तत्र ये मुख्यरूपाश्च प्रजापतिमुखोद्भवाः। अप्रेषयन् महेशास्तान् मयूरेश-

हिताय च ॥४९॥ ते गणेशं समाराध्य मयूरे वरसंयुताः । स्वस्वव्यापारसंयुक्ता बभूवुः स्वपदे रताः ॥५०॥ एवं क्रमेण सर्वे तु चराचरमया मुखाः । मयूरेशं समाराध्य सत्तायुक्ता बभूविरे ॥५१॥ ततः सर्वांशभावेन मयूरेशं सिषेविरे । क्षेत्रवासपरा देव्यः कथितं सर्वमंजसा ॥५२॥ शंकरेण तपस्तप्तं पुनस्तत्र मयूरके । गणेशवरदानेन महादेवो बभूव ह ॥५३॥ इदं मयूर-क्षेत्रस्य माहात्म्यं कथितं मया । संक्षेपेण महादेव्यः सर्वसिद्धिप्रदायकम् ॥५४॥ शृणुयाद्यो नरो भक्त्या श्रावयेद्यः पठेत्तथा । धर्मार्थकाममोक्षांश्च भुक्त्वा ब्रह्ममयो भवेत् ॥५५॥ नानेन सदृशं किंचित् पावनं त्रिषु वर्तते । वेदशास्त्रपुराणेषु सारात् सारतमं मतम् ॥५६॥ पुत्रपौत्रयुतश्चात्र धनधान्यसमन्वितः । सुहृद्भिः संयुतः सोऽपि मोदते सुखदायकः ॥५७॥ अंते स्वानंदवासी तु भूत्वा ब्रह्ममयो भवेत् । अस्य श्रवणमात्रेण नरः सर्वमवाप्नुयात् ॥५८॥ अपुत्रो यो लभेत् पुत्रान् गुणयुक्तांस्तु शक्तयः । मयूरस्यैव श्रवणात् दुर्लभं न भविष्यति ॥५९॥ व्रतानि सर्वभावेन यः करोति नरोत्तमः । तेभ्यः शताधिकं पुण्यमस्य श्रवणतो लभेत् ॥६०॥ तीर्थानि क्षेत्रमुख्यानि सेवंते धर्मसंयुताः । तेभ्यः शताधिकं पुण्यमस्य श्रवणतो लभेत् ॥६१॥ दानानि सर्वयज्ञांश्च यः करोति विधानतः । तेभ्यः शताधिकं पुण्यमस्य श्रवणतो लभेत् ॥६२॥ वेदशास्त्रपुराणानि श्रुत्वा यत् प्राप्नुयात् फलम् । तस्माच्छताधिकं पुण्यमस्य श्रवणतो लभेत् ॥६३॥ बहुनाऽत्र किमुक्तेन नानेन सदृशं परम् । किंचित् साधनकं प्रोक्तं सत्यं सत्यं वदाम्यहम् ॥६४॥ यत्र ब्रह्मपतिः साक्षात् क्षेत्रं स्वानंदवाचकम् । कमंडलुनदी तस्य साम्यं किं भवतीत्यहो ॥६५॥ ब्रह्मभूयकरं प्रोक्तं वेदादिषु इदं किल । तेन किं शक्तयः कुत्र समतां लभते परम् ॥६६॥ नित्यं भक्तियुतो जंतुर्माहात्म्यं यः पठिष्यति । स गणेशो न संदेहो दर्शनाद् दुःखहारकः ॥६७॥ अथवा शुक्लकृष्णायां चतुर्थ्यां नियतः पठेत् । सोऽपि दर्शनमात्रेण पवित्रान् कुरुते नरान् ॥६८॥ संस्कारहीनभावेन नरो नेदं कदाचन । शृणुयाच्च पठेद्वाऽपि सदा पापैः स वंचितः ॥६९॥ नहि श्रावयितव्यं तद् भक्तिहीनाय विद्विषे । शठाय पापयुक्ताय पाखंडनिरताय च ॥७०॥ यदि विघ्नेश्वरं सर्वे भावयुक्ता भजंति चेत् । तदा जन्मधराः के वै भवंते विघ्नसंयुताः ॥७१॥ अतः पात्रं प्रदृश्य श्रावयितव्यं विशेषतः । भक्तियुक्तः स निंदां तु न करिष्यति सेवितुम् ॥७२॥ सर्वसारं मया प्रोक्तं देव्यः सर्वपदं परम् । तत्र गत्वा गणेशानं सेवध्वं भक्तिसंयुताः ॥७३॥ देहधारणकस्यैव सार्थकं वस्तदा भवेत् । नो चेत् पतिततुल्यश्च देहो वश्च न संशयः ॥७४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते मयूरेशक्षेत्रमाहात्म्यसमाप्तिवर्णनं नाम त्रिंशत्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शक्त्य ऊचः । अहो भाग्यबलेनैव संश्रुतं जगदंबिके । मयूरक्षेत्रमाहात्म्यं सर्वसिद्धिप्रदायकम् ॥१॥ अधुना वद देवेशि मुद्गलेनोपदेशिताः । शिवाद्याः किं समाचक्रुः कामासुरभयार्दिताः ॥२॥ आदिशक्तिरुवाच । गते मुनौ महाभागे मुद्गले योगिनां गुरौ । तं प्रणम्य शिवाद्यास्ते ययुः क्षेत्रं मयूरकम् ॥३॥ यथाशास्त्रं विधानेन यात्रां चक्रुः सुरर्षयः । ततस्तपोयुताः सर्वे गणेशमभजन् पुरा ॥४॥ एकाक्षरविधानेनातोषयंस्ते विनायकम् । ततस्तान् वरदो ढुंढि-वेषेणैव समाययौ ॥५॥ मयूरोपरिसंस्थं तं दृष्ट्वा विघ्नेश्वरं पुरः । देवर्षयः समुत्थाय प्रणेमुर्हर्षसंयुताः ॥६॥ प्रणम्य परया भक्त्या पुपूजुर्विघ्नपं पुनः । तुष्टुवुर्विष्णुमुख्यास्तं कृतांजलिपुटाऽमराः ॥७॥ देवर्षय ऊचुः । नमस्तेऽस्तु मयूरेश सर्वसिद्धि-प्रदायक । ज्ञानदात्रे स्वभक्तेभ्यः पालकाय नमो नमः ॥८॥ स्वानंदवासिने तुभ्यं परात्परतराय च । ढुंढिराजाय सर्वेषां मात्रे पित्रे नमो नमः ॥९॥ अनादये च सर्वेषां पूज्याय परमात्मने । अनंताननधारायानंतरूपाय ते नमः ॥१०॥ सिद्धि-बुद्धिप्रदात्रे ते सिद्धिबुद्धिवराय च । ज्येष्ठराजाय ज्येष्ठेभ्यो वरदाय नमो नमः ॥११॥ त्रिनेत्राय चतुर्बाहुधराय कंजपाणये । महोदराय सर्पेशनाभये ते नमो नमः ॥१२॥ मायाश्रयाय मायायाश्चालकाय विलासिने । ब्रह्मणां ब्रह्मरूपाय गणेशाय नमो नमः ॥१३॥ एकदंताय सर्वादिपूज्याय सर्वमूर्तये । शूर्पकर्णाय योगाय शांतिदाय नमो नमः ॥१४॥ पूर्वांगे विष्णु-रूपाय दक्षिणे शंकरात्मने । पश्चिमे शक्तिदेहायोत्तरे ते भानवे नमः ॥१५॥ किं स्तुवीमो मयूरेशं यत्र वेदाश्च योगिनः । शांतिं प्राप्ता विशेषेण देवदेवेश ते नमः ॥१६॥ चित्तं पंचविधं देव तत्र माया भ्रमात्मिका । चित्रा मयूरसंज्ञा च नमस्तत् स्वामिने नमः ॥१७॥ माया मयूरवाच्या तु तत्र खेलकरो भवान् । मयूरेश इति ख्यातः साक्षाद् दृष्टो न संशयः ॥१८॥ जन्म धन्यं वयो विद्या तपो ज्ञानादिकं परम् । तवांघ्रिदर्शनान्नाथ कृतकृत्या भवामहे ॥१९॥ एवं तं नन्तुः स्तुत्वा भक्त्या साश्रुविलोचनाः । सरोमांचा मयूरेश जयेति ह्यब्रुवन् प्रभुम् ॥२०॥ जगाद गणनाथश्च ततस्तान् भक्तिभावितः । वरान् वृणुत दास्यामि देवेशा भक्तियंत्रितः ॥२१॥ भवद्भिर्यत् कृतं स्तोत्रं मदीयं सर्वसिद्धिदम् । भविष्यति सदा भक्तिदायकं पठते परम् ॥२२॥ यं यमिच्छति तं तं तु दास्यामि हर्षसंयुतः । पठेद्वा शृणुयाच्चेद्वा मत्प्रियः स नरो भवेत् ॥२३॥ देवेशाद्या ऊचुः । प्रसन्नोऽसि गणाध्यक्ष तदा भक्तिं त्वदीयिकाम् । देहि कामासुरं नाथ जहि सर्वभयं-करम् ॥२४॥ स्थानभ्रष्टाः सुरश्रेष्ठाः कर्मभ्रष्टा मुनीश्वराः । कृतास्तेनासुरेणैवातस्तं जहि गजानन ॥२५॥ तथेति गणनाथ-

स्तानुक्त्वांऽतर्धानमाकरोत् । देवा हर्षयुताः सर्वे जग्मुर्गिरिगुहांतरे ॥२६॥ गणेशं भजमानास्ते मुनयो देवनायकाः । कालाकांक्षिण आनंदाद्बभूवुः शक्तिमुख्यकाः ॥२७॥ अथ कामासुरः क्वापि सभायां संस्थितोऽभवत् । तत्राकाशभवां वाणीं शुश्राव भयदायिनीम् ॥२८॥ देवैः संप्रार्थितं ब्रह्म मयूरेश्वरसंज्ञितम् । हत्वा त्वामखिलं विश्वं सुखयुक्तं करिष्यति ॥२९॥ ततो मुमूर्च्छ तस्मात् स कामासुरो भयातुरः । श्रुत्वा वाचं महाक्रूरां दैत्येशास्तं समाययुः ॥३०॥ महायत्नेन दैत्येशाः सावधानं महासुरम् । चक्रुः स तानुवाचेदं वचनं खसमुद्भवम् ॥३१॥ तच्छ्रुत्वा क्रोधसंयुक्ता दैत्येशास्तमथाऽब्रुवन् । देवाः शत्रव आद्याश्चास्माकं नित्यं श्रुतेर्मुखात् ॥३२॥ अस्माभिः कथितं स्वामिन् जहि देवान् महामते । मुक्तेस्त्वया सुरेशानैस्तैरिदं दारुणं कृतम् ॥३३॥ उत्पत्तिस्थितिसंहारकारकेभ्यो महाप्रभो । तद्भवेभ्यो भयं ते न किं करिष्यति देवपः ॥३४॥ आज्ञापय महाभागास्मान् देवहननाय वै । मृता देवा यदा नाथ निःसपत्ना वयं तदा ॥३५॥ ततः कामासुरस्तानाज्ञापयद्देवकंदने । कुंभकर्णादयो जग्मुर्गिरिकंदरकानने ॥३६॥ ततो मेरुगुहासंस्थान् दृष्ट्वा देवर्षिसत्तमान् । शस्त्राणि दैत्यास्तान् हंतुं तत्यजुर्दैत्यनायकाः ॥३७॥ शिवमुख्या मयूरेशं सस्मरुर्भयसंकुलाः । एहि नाथ दयासिंधो रक्ष नो भयसंयुतान् ॥३८॥ स्मृतिमात्रेण हेरंबस्तान् ययौ मूषकध्वजः । मयूरोपरिसंस्थश्च शस्त्रधारक आदरात् ॥३९॥ तेजोराशिमयं रूपं दृष्ट्वा देवा विसिस्मिरे । तुष्टुवुस्तं महेशाना नानास्तोत्रैर्गजाननम् ॥४०॥ ततस्तेजोमयं रूपं तान् जगाद सुरर्षिकान् । विकटोऽहं महाभागास्तथा भजत मा चिरम् ॥४१॥ कामयुक्ता मया माया मयूरा विविधात्मिका । कामहीनोऽयमेवाहं भजध्वं कामहानतः ॥४२॥ मायासुखाच्च देवेशा विकटा भवत प्रियाः । तदा मे रूपकं द्रष्टुं भविष्यथ समर्थकाः ॥४३॥ तस्य तद्वचनं श्रुत्वा शोकयुक्ताः सुरर्षयः । बलेन चित्तमागृह्य निःकामं चक्रुरादरात् ॥४४॥ ततो गणेश्वरं देवा मुनयो ददृशुश्च ते । तं प्रणम्य स्थिताः सर्वे दैत्यशस्त्रैः प्रपीडिताः ॥४५॥ ततोऽतिक्रोधसंयुक्तो विकटस्तानुवाच ह । भयहीना मदीयेन दर्शनेन भवेत वै ॥४६॥ अधुना शस्त्रसंयुक्ता युध्यध्वं मे ह्यनुग्रहात् । कामासुरं हनिष्यामि आगतं तं महेश्वराः ॥४७॥ ततस्ते क्रोधसंयुक्ता देवेंद्राः शस्त्रपाणयः । युयुधुर्दैत्यमुख्यैश्च तेजोयुक्ता विशेषतः ॥४८॥ इंद्रेण सहसाऽऽगत्य वज्रेण निहतोऽपतत् । कुंभकर्णस्ततो दैत्या प्रपेलुर्भयसंकुलाः ॥४९॥ द्विमुहूर्ते गते देव्यो

राक्षसेशः प्रतापवान् । सावधानो बभूवाऽपि पपाल भयसंकुलः ॥५०॥ जययुक्ता महेशानाः प्रणेमुर्विकटं ततः । जयशब्देन सर्वेशं तुष्टुवुर्हर्षसंयुताः ॥५१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते विकटप्रादुर्भावो नाम एकत्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शक्तय ऊचुः । कामासुरवधार्थाय भक्तियुक्ता गजाननम् । देवर्षयः प्रार्थयंतो निःकामाः कथमप्यहो ॥१॥ आदिशक्तिरुवाच । अथो सकामनिःकाममार्गं वक्ष्यामि शक्तयः । शृणुध्वं भावसंयुक्ताः संशयच्छेदनाय तम् ॥२॥ स्वदेहपोषणाद्यर्थं यशोर्थं भावसंयुताः । भजंते कामसंयुक्ता देवं जानीत तान्नरान् ॥३॥ स्वस्वधर्मप्रसिद्ध्यर्थं देवसेवार्थमेव ये । निःकामास्ते भजंते तं देवं भावसमन्विताः ॥४॥ निःकामिका कृता भक्तिर्देवेशैः शृणुत प्रियाः । तस्याश्चिह्नं प्रवक्ष्यामि भवती हितकाम्यया ॥५॥ सृष्टिस्थितिलयाद्यर्थं निर्मिता विधिमुख्यकाः । वयं तदेव सेवा ते खेलसि त्वं गजानन ॥६॥ हृदि स्थित्वा च सर्वेषां भोगांस्त्वं दोषवर्जितः । भुंक्षे तेन गणेशान सेवा ते देहपोषिका ॥७॥ तव प्रीत्यर्थमानंदात् प्रकुर्मः स्वस्वधर्मजाम् । क्रियां सृष्ट्यादिकां नाथ तदर्थं प्रार्थयामहे ॥८॥ अधुना दैत्यमुख्येन सेवा ते खंडिता परा । असमर्थाश्च तां कर्तुं रक्ष नः सेवनोत्सुकान् ॥९॥ एवं संप्रार्थितो देवैर्विकटो नात्र संशयः । देहभोगादिभावेषु यशः स्वप्य स्पृहात्मभिः ॥१०॥ स्वधर्मसंयुतैः सर्वैः स्वस्वव्यापारजा क्रिया । कर्तव्या ढुंढिप्रीत्यर्थं निःकामा सा मता किल ॥११॥ अधुना प्रकृतं देव्यो महच्छृणुत चेष्टितम् । विकटस्य विशेषेण येन भक्तिः प्रलभ्यते ॥१२॥ कुंभकर्णादयः सर्वे जग्मुर्भयसमन्विताः । कामासुरं महावीर्यं वृत्तांतं तं न्यवेदयन् ॥१३॥ मयूरेशः समायातो विकटश्चेति कथ्यते । देवैः संप्रार्थितो नाथ हनिष्यति महासुरान् ॥१४॥ तस्य दृष्टिनिपातेन देवास्तेजोयुताः कृताः । वयं तेजोविहीनाश्च पश्याश्चर्यं महामते ॥१५॥ शरणं विकटं चैव शुभदं ते भविष्यति । अन्यथाऽसुरसंघानां विनाशो निश्चितोऽधुना ॥१६॥ कुंभकर्णवचः श्रुत्वा क्रोधयुक्तो बलिश्च तम् । निर्भर्त्स्यं प्रत्युवाचेदं वचनं सर्वसन्निधौ ॥१७॥ बलिरुवाच । किं भ्रांतोऽसि विशेषेण वदसे विकलो यथा । कामा-

सुरस्य वेगं तु सहते कः स्वरूपधृक् ॥१८॥ बलेर्वचनमाकर्ण्यासुरः कामः प्रतापवान् । जगाद दैत्यमुख्यांश्च हृदयेन विदूयता ॥१९॥ कामासुर उवाच । वाणी सत्या बभूवापि स्वस्था मे शत्रुरागतः । हनिष्यामि मरिष्यामि किं वा तत्र भविष्यति ॥२०॥ कामासुरवचः श्रुत्वा दुर्मदस्तत्र चाब्रवीत् । वचनं तेजसा युक्तो वीर्ययुक्तं महासुरः ॥२१॥ दुर्मद उवाच । कुंभकर्णेन दृष्टश्च विकटो नात्र संशयः । उत्पत्तिनाशसंयुक्तो विचारय महामते ॥२२॥ यद् दृष्टं तत्प्रणष्टं वै पश्य वेदे विचक्षण । कथं त्वां स महाराज हनिष्यति वरैर्युतम् ॥२३॥ मा चिंतां कुरु राजेंद्र वधिष्यामो वयं च ते । शत्रुं तत्र जयैर्युक्ता भविष्यामो न संशयः ॥२४॥ अज्ञापय महादैत्यास्मांस्ते पादस्य किंकरान् । पश्य नो यत् महावीर्यं देवनाशकरं परम् ॥२५॥ देवैर्माया कृता चेयं खवाणी भयरूपिणी । मायया तं विनिर्माय भयार्थं दैत्यरक्षसाम् ॥२६॥ नेयमाकाशवाणी वै विचारय महामते । देहधारी कथं त्वां स हनिष्यति महाबलम् ॥२७॥ दुर्मदस्य वचः श्रुत्वा बलिमुख्या महाऽसुराः । हर्षयुक्ताः पुनस्तं ते जगुः सत्यं त्वयोदितम् ॥२८॥ ततः कामासुरश्चैव सन्नद्धः सर्वदैत्यपैः । चतुरंगबलैर्युक्तैर्निर्जगाम गजाननम् ॥२९॥ ततः शुक्रेण दैत्येंद्रो बोधितो बहुलोक्तिभिः । न बुबोध मदोत्सिक्तो बलगर्वेण मोहितः ॥३०॥ भाविनं मुनिमुख्यश्च ज्ञात्वा काव्यो महायशाः । कालवेगं समाश्रित्य प्रययौ तमनु प्रभुः ॥३१॥ दैत्याः क्रोधयुताः सर्वे समाजग्मुः प्रहर्षिताः । देवमर्दनकामार्थं यत्र देवाः स्थिताः पुरा ॥३२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते देवदैत्यसमागमो नाम द्वात्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । समागतं महत् सैन्यं नानाशस्त्रविराजितम् । अपारं तत् समालोक्य देवेशा गणपं ययुः ॥१॥ देवेशा ऊचुः । कामासुरः स्वयं साक्षादागतः स महाबलः । यस्याग्रे देवदेवेशा मशका इव संबभुः ॥२॥ यस्य शस्त्रबलं स्वामिन्नमोघं सर्वदा बभौ । न बले सहशस्तस्य सोऽयं कामः समागतः ॥३॥ रक्ष नः कामसंत्रस्तान्नोचेत् कामः प्रतापवान् । देवर्षीणां गणेशान जीवग्राहं करिष्यति ॥४॥ तेषां वचनमाकर्ण्य तान् जगाद गजाननः । मा भयं

कुरुत प्राज्ञा हनिष्यामि महासुरम् ॥५॥ मदनुग्रहतः सर्वे समर्था देवनायकाः । भविष्यथ न संदेहो युध्यध्वं दानवैः सह ॥६॥ विकटस्य वचः श्रुत्वा देवा हर्षसमन्विताः । जगर्जुः शस्त्रसंयुक्ता भयहीनाश्च शक्तयः ॥७॥ तेषां गर्जितशब्देन व्याप्तं सर्वं दिगंतरम् । दैत्या भययुताः सर्वे बभूवुर्ये समागताः ॥८॥ ततः क्रोधसमाविष्टा दैत्येशा बलिमुख्यकाः । जगर्जुः सिंहनादैश्च शंखनादैः समंततः ॥९॥ ततो दैत्यगणाः सर्वे मुमुचुः शस्त्रपाणयः । शस्त्रवृष्टिं महोग्रां च मेघा इव शिलोच्चये ॥१०॥ ततो देवाः स्वशस्त्रैस्तान्निवार्य युयुधुः परम् । दैत्या देवा महोग्राश्च युयुधुस्ते परस्परम् ॥११॥ नाऽभूत् स्वपरबोधोऽपि रजसा छादिते रवौ । जघ्नुः परस्परं देव्यः शस्त्रास्त्रैर्मर्मभेदिभिः ॥१२॥ ततो रक्तसमोघैश्च नदी जाता दुरत्यया । प्रवाहबहुला रक्तै रजः शांतं बभूव ह ॥१३॥ एवमेकदिनं घोरं दिवानिशि निरंतरम् । युद्धं बभूव दैत्यानां देवानां तु जयैषिणाम् ॥१४॥ ततो देवा जयैर्युक्ता बभूवुर्दैत्यमुख्यकान् । जघ्नुः शस्त्रप्रहारैस्तु प्रपेलुर्दैत्यनायकाः ॥१५॥ तद् दृष्ट्वा परमाश्चर्यं दैत्येंद्राः क्रोधमादधुः । बलिमुख्या महावीर्या आययू रणमंडलम् ॥१६॥ तैः शस्त्रास्त्रबलैः सर्वं देवानां प्रहतं बलम् । प्रपेलुरमरास्तत्र भयभीता दिशो दश ॥१७॥ तत इंद्रः समायातो जघानामर्षतो बलिम् । वज्रेण पातयामास दानवेंद्रं महाबलम् ॥१८॥ ततो हर्षयुता देवा जगर्जुर्नादसंयुताः । महेंद्रं कुंभकर्णश्च हृदि विव्याध मुष्टिना ॥१९॥ इंद्रः पपात भूपृष्ठे ततो विष्णुर्महाबलः । चक्रं तत्याज संक्रुद्धो रणभूमौ विचक्षणः ॥२०॥ चक्रेण क्षुरधारेण हता दैत्याः समंततः । रावणः क्रोधसंयुक्तस्तं ययौ रणकाम्यया ॥२१॥ गदया विष्णुना तत्र हतो मूर्च्छामवाप ह । कुंभकर्णं तथा विष्णुर्मूर्च्छितं प्रचकार ह ॥२२॥ ततो दुर्मदकस्तत्र महिषः शंकरस्तथा । समाजग्मुर्महाविष्णुं क्रोधयुक्ताः समंततः ॥२३॥ ततोऽतिव्याकुलं दृष्ट्वा केशवं शंकरः स्वयम् । त्रिशूलं गृह्य वेगेन भानुश्चैव समाययौ ॥२४॥ भानुना दुर्मदस्तत्र गदया पीडितो भृशम् । मूर्च्छितः स पपातैव वमन् रक्तं मुखाद् बहु ॥२५॥ त्रिशूलेन हतस्तत्र शंकरः शंकरेण च । पपात स धरापृष्ठे मूर्च्छितो सुरनायकः ॥२६॥ चक्रेण महिषस्तत्र विष्णुना मूर्च्छितः कृतः । ततो हाहारवं कृत्वा प्रपेलुर्दैत्यदानवाः ॥२७॥ देवानां जययुक्तानां बलं दृष्ट्वा महामुनिः । शुक्रस्तान् दैत्यमुख्यांश्च जीवितुं यत्नमादधे ॥२८॥ एतस्मिन्नंतरे तत्र महाकाली समाययौ । काव्यं गृह्य ययौ देवी तं चिक्षेप गुहांतरे ॥२९॥ ततः कामासुरः शोकयुतो दैत्यः प्रतापवान् । निःश्वस्य योद्धुमायातस्तस्य पुत्रौ समूचतुः ॥३०॥ तिष्ठ तात गमिष्यावो रणं कृत्वा महारिपुम् । हनिष्यावो न संदेहः किं करिष्यति

विघ्नपः ॥३१॥ एवमुक्त्वा महावीर्यौ दैत्यपुत्रौ रणस्थलम् । ययतुः शंकरं विष्णुमूचतुः क्रोधसंयुतौ ॥३२॥ शोषण उवाच । तिष्ठ तिष्ठ महादेव हत्वा दैत्यगणान् पुरा । अधुना त्वां हनिष्यामि पश्य मे पौरुषं परम् ॥३३॥ शिवोऽसि त्वं शिवातुल्यो गच्छारण्यं मरिष्यसि । पशुभिश्च मदग्रे तु किं करिष्यसि तद्वद ॥३४॥ श्रीशंकर उवाच । शोषण त्वं समर्थश्चाधुना हन्मि न संशयः । विकट तेजसा युक्तः पौरुषं दर्शयस्व रे ॥३५॥ श्रुत्वा बाणान् महाबाहुश्चिक्षिपामोघरूपकान् । तैस्ते देवगणाः सर्वे मूर्च्छिताः पतिता मृधे ॥३६॥ शंकरस्तं महावीर्यं योधयामास वेगतः । सोऽपि क्रोधसमायुक्तस्तं विव्याध शरैः पुनः ॥३७॥ ततस्त्रिशूलघातेन शोषणश्च पपात ह । क्षणाल्लभ्य ततः संज्ञां शंभुं जग्राह कोपतः ॥३८॥ भ्रामयित्वा प्रचिक्षेप महापर्वतमस्तके । ततो हर्षयुता दैत्यास्तं जयेति शशंसिरे ॥३९॥ दुष्पूरो विष्णुमागत्य तं जगाद सुरेश्वरम् । क्रोधयुक्तो महाबाहुर्बलेन भृशगर्वितः ॥४०॥ दुष्पूर उवाच । किं विष्णो त्वं मदोत्सिक्तो मां न जानासि दुर्मते । हतास्त्वया महावीरा मदीया दैत्यनायकाः ॥४१॥ फलं गृहाण मत्तस्त्वं तेषां देवानुसारिणाम् । सहायस्त्वं हतो नूनं गमिष्यसि यमक्षयम् ॥४२॥ तस्य तद्वचनं श्रुत्वा क्रोधयुक्तश्च केशवः । जगाद तं महावीर्यं दैत्यपुत्रं सुगर्वितम् ॥४३॥ श्रीविष्णुरुवाच । किं मां वदसि पापिष्ठ हनिष्यामि न संशयः । विकट सत्तया त्वाऽहं मा गर्वं कुरु दैत्यज ॥४४॥ ततः क्रोधसमाविष्टो दुष्पूरो गदया त्वहन् । विष्णुं तयाऽतिदुःखेन पपात धरणीतले ॥४५॥ ततो देवेंद्रमुख्याश्च दुष्पूरं शस्त्रवर्षतः । मारयामासुरव्यग्राः सोऽपि चिक्षेप सायकान् ॥४६॥ शतैः संताडयामास भानुं तेजस्विनां वरम् । इंद्रं शतैर्यमं वायुं ब्रह्माणं च व्यपातयत् ॥४७॥ ततो विष्णुश्च दुष्पूरं सावधानो जघान ह । चक्रेण मूर्च्छितं चक्रे दैत्यपं रणमूर्धनि ॥४८॥ पुनः संज्ञां समासाद्य बाणैर्विष्णुमपीडयत् । सहस्रैर्मूर्च्छितं कृत्वा जगर्ज हर्षयन् स्वकान् ॥४९॥ एवं दुष्पूरदैत्येन शोषणेन च शक्तयः । कृतं कर्म रणे तुल्यं जययुक्तप्रभावतः ॥५०॥ दैत्येंद्रैर्बलिमुख्यैश्च सावधानैस्तदंतरे । तैः स्तुतौ दैत्यराजस्य पुत्रौ तत्र विरेजतुः ॥५१॥ ततो देवगणान् हंतुं दैत्येशा बलसंयुताः । मतिं चक्रुस्ततः क्रुद्धो बभूव द्विरदाननः ॥५२॥ पाशं चिक्षेप वेगेन तथाऽङ्कुशं गजाननः । पाशः शोषणकंठं तु समागत्य स्थितोऽभवत् ॥५३॥ रुद्धश्वासः स पाशेन पपात शोषणो मृधे । हस्तौ पादौ प्रचाल्यैव ममार तत्क्षणात्ततः ॥५४॥ अंकुशः सहसाऽऽगत्य जघानोदरके ततः । दुष्पूरं स ममारैव पश्यतां दैत्यरक्षसाम् ॥५५॥ ततः पाशांकुशौ तत्र चेरतू रणमंडले । हत्वा दैत्याननेकांश्च हाहाकाररवाकुलान् ॥५६॥

बलिमुख्या भयोद्विग्नास्त्यक्त्वा लज्जां च शक्तयः । प्रपेलुः शस्त्रहीनास्ते दशदिक्षु तथाऽपरे ॥५७॥ ततो विघ्नेश्वरस्यैव हस्तगौ संबभूवतुः । पाशांकुशौ गणेशस्योत्तस्थुर्दृष्ट्वाऽमराः पुनः ॥५८॥ नीरुजो बलसंयुक्तास्तुष्टुवुर्विकटं ततः । दैत्याः शोकाकुलास्तद्वद्दुरुदुः सर्वतो दिशाम् ॥५९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते कामासुरपुत्रवधो नाम त्रयस्त्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । छिन्नांगा असुराः कामासुरं केचिन् महाबलम् । जग्मुर्भययुतं दृष्ट्वा वृत्तांतं तमवेदयन् ॥१॥ दैत्या ऊचुः । किं स्थितोऽसि महाराज मृता दैत्या महामृधे । तव पुत्रौ मृतौ तत्र शरणं व्रज विघ्नपम् ॥२॥ नोचेत् दैत्यकुलानां वै मूलच्छेदो भविष्यति । इति तेषां वचः श्रुत्वा कामासुरो मुमूर्च्छ ह ॥३॥ सावधानः कृतो दैत्यै रुरोद भयसंकुलः । शोकसंतप्तगात्रोऽसौ देवान् हंतुं मनो दधे ॥४॥ गृहीत्वा शस्त्रसंघातान् रथारूढो बभूव ह । शेषसेनां समादाय विकटं प्रययौ पुरः ॥५॥ रणभूमौ महावीरं प्राप्तं कामासुरं परम् । दृष्ट्वा भययुता देवा वचो विकटमब्रुवन् ॥६॥ समागतः स्वयं कामासुरः स्वामिन् महायशाः । इदानीं गणनाथ त्वं यत् करिष्यसि तत् कुरु ॥७॥ ततः क्रोधयुतो देवान् विकटः प्रत्युवाच ह । भयहीना महेशाना युध्यध्वं मदनुग्रहात् ॥८॥ तस्य तद्वचनं श्रुत्वा शंभुविष्णुमुखाऽमराः । गर्जित्वा घनवद्घोरं तं ययुः शस्त्रपाणयः ॥९॥ समागतान् महेशाद्यान् जगाद दैत्यनायकः । क्रोधेन महता युक्तो देवान् देवनिषूदनः ॥१०॥ कामासुर उवाच । शंभो विष्णो तथाऽन्ये तु देवेशा मे वचोऽधुना । शृणुध्वं किं कृतं घोरं वैरं पुत्रवधात्मकम् ॥११॥ मया स्नेहयुतेनैव न हताः प्राक् सुरेश्वराः । दयायुक्तेन तस्येदं फलं दत्तं सुरैः परम् ॥१२॥ अधुना क्रोधसंयुक्तो हनिष्यामि सुरेश्वरान् । विकटं देवप हत्वा मुनीन् देवेंद्रसत्तमाः ॥१३॥ एवमुक्त्वा धनुः सज्जं चकार दैत्यनायकः । जगाद धैर्यमालंब्य ततस्तं शंकरो वचः ॥१४॥ श्रीशंकर उवाच । त्वयाऽस्माकं महादैत्य गृहीतं सकलं पुरा । धर्मनाशः कृतश्चैव त्रैलोक्यं पीडितं बलात् ॥१५॥ फलं दैत्यपते तस्य त्वया प्राप्तं न संशयः । त्वां हनिष्यामि विकट

कृपयाऽहं खलोत्तम ॥१६॥ शिवस्य वचनं श्रुत्वा क्रोधयुक्तो महासुरः। गदया तं जघानैव पातयामास शंकरम् ॥१७॥ शंकरं पतितं दृष्ट्वा चक्रं तत्याज केशवः। कामासुरं समासाद्य निष्फलं तद्बभूव ह ॥१८॥ ततः क्रोधसमायुक्तो धनुः कामः प्रगृह्य च। सज्जं कृत्वा महाबाणान् ववर्ष घनवद् भृशम् ॥१९॥ तैर्बाणैर्देवमुख्याश्च पतिता धरणीतले। छिन्नांगा बलहीनाश्च मुमूर्च्छुस्ते ततः परम् ॥२०॥ ततो बलिमुखाः सर्वे दानवा युद्धदुर्मदाः। देवान् क्रोधसमायुक्ता जघ्नुस्तत्र समंततः ॥२१॥ विष्णुः कामं जघानैव बाणैः परमदारुणैः। सोऽपि तं मूर्च्छितं चक्रे दैतेयो गरुडध्वजम् ॥२२॥ ततो मूर्च्छां परित्यज्य शंकरो युयुधे भृशम्। कामासुरेण दैत्येंद्रस्तं जघानासिघाततः ॥२३॥ तथापि न चचालैव शिवः संहारकारकः। ततो विष्णुः समुत्तस्थौ युयुधे दानवैः सह ॥२४॥ भानुना शरघातेन रावणस्ताडितो भृशम्। दुर्मदश्च तथा देव्यः पेततुस्तौ धरातले ॥२५॥ विष्णुना चक्रघातेन हतो मूर्च्छामवाप ह। महिषः कुंभकर्णश्च शंकरश्च बलिस्तथा ॥२६॥ ततश्चक्रेण गोविंदो जघान दानवान् परम्। हाहा कृत्वा सुराः सर्वे पलायंत दिशो दश ॥२७॥ तत् दृष्ट्वा परमाश्चर्यं कामासुरः सुविस्मितः। क्रोधयुक्तो महेशानं धृत्वा ह्यास्फालयत्तदा ॥२८॥ विष्णुं धृत्वा प्रचिक्षेप महापर्वतमस्तके। भानुं गृह्य धरायां स पोथयामास दारुणः ॥२९॥ ततो हाहारवं कृत्वा देवाः सर्वे भयातुराः। प्रपलुश्छिन्नभिन्नांगाः कामासुरनिपीडिताः ॥३०॥ दैत्येंद्रस्य बलं दृष्ट्वा हर्षितो विकटः स्वयम्। मूषकोपरि संस्थाय ययौ संग्रामकारणात् ॥३१॥ कामासुरः समालोक्य आगतं तं प्रतापवान्। क्रोधसंरक्तचक्षुः स जगाद भयसंयुतः ॥३२॥ कामासुर उवाच। मयूरेश कथं यातः संग्रामाय मया सह। मूषकोपरि संस्थायाखुतुल्यस्त्वं मतोऽसि मे ॥३३॥ मम पुत्रौ महावीर्यौ गजानन हतौ त्वया। तयोः शोकेन संतप्तो हनिष्यामि समूषकम् ॥३४॥ देवैः संप्रार्थितस्त्वं तु किं करिष्यसि मां वद। मम भ्रूभंगमात्रेण कंपते सचराचरम् ॥३५॥ उत्पत्तिस्थितिसंहारकर्तृभ्यो मे गजानन। नैर्युक्तेभ्यो भयं नैव भविष्यति कदाचन ॥३६॥ देहधारी गणाध्यक्ष किं करिष्यसि मूर्खवत्। अज्ञानसंयुतस्त्वं तु मरिष्यसि मदग्रतः ॥३७॥ कामासुरस्य वाक्यं स श्रुत्वा गणपतिः स्वयम्। जगाद हास्यवदनः परं तं गर्वसंयुतम् ॥३८॥ मूर्खोऽसि काम अत्यंतं विकटोऽहं विचारय। जन्ममृत्युविहीनो वै कथं हंसि महाखल ॥३९॥ न सृष्टिस्थितिसंहारकर्ताऽहं दैत्यपुंगव। यदि जीवितुमिच्छा ते तदा मां शरणं व्रज ॥४०॥ नोचेत्त्वां पापकर्माणं हनिष्यामि न संशयः। गर्वं त्यज महामूर्ख ब्रह्माऽहं नात्र संशयः ॥४१॥ शुक्रेण कथितं सर्वं न बुद्धं मूर्ख-

भावतः । स्वरूपं मे त्वया दुष्टाधुनापि शरणं व्रज ॥४२॥ विकटस्य वचः श्रुत्वा क्रोधयुक्तो बभूव ह । कामासुरश्च तं हंतुं गदां चिक्षेप दारुणाम् ॥४३॥ सा गदा निष्फला तत्र पपात धरणीतले । अकस्माद्दैत्यराजस्तु मूर्च्छितः प्रबभूव ह ॥४४॥ प्रहरेण महाक्रूरः सावधानो बभूव ह । अशक्तः सर्वदेहे स पीडां लेभेऽतिदारुणाम् ॥४५॥ ततो मनसि संधार्य विचारमकरोत् खलः । अहो शस्त्रं विना मां स जघान विकटः कथम् ॥ ४६॥ शक्तिहीनोऽहमत्यंतं कथं युद्धं करोमि वै । शुक्रेण कथितं सत्यं ब्रह्माकारोऽयमुच्यते ॥४७॥ तथापि देवपक्षस्य धारकोऽयं कथं भवेत् । अतः संशयसंयुक्तः शरणं न व्रजाम्यहम् ॥४८॥ मरिष्यामि न संदेहस्तदेव कीर्तिवर्धनम् । शत्रूणां शरणं चैव न योग्यं भासते हृदि ॥४९॥ अतोऽहं विकटं गत्वा करोमि प्रश्नमद्भुतम् । देवपक्षविहीनश्चेद्व्रजामि शरणं च तम् ॥५०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते कामासुरविचारवर्णनं नाम चतुस्त्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । ततः कामासुरो दैत्यैर्जगाम द्विरदाननम् । जगाद भयसंयुक्तो वचनं हितकारकम् ॥१॥ कामासुर उवाच । ब्रह्म त्वं विकट प्राज्ञ देव साहाय्यकृत् कथम् । सुरासुरमयं तद्वै कथमेकगुणाश्रितम् ॥२॥ विकटस्त्वं कथं वेदे कीदृशं ब्रह्म तस्य तु । जन्मादिहीनभावश्चेत् कथं देहप्रधारकः ॥३॥ वद सर्वं विशेषेण त्वां ज्ञास्यामि यथार्थतः । तदा ते शरणं नाथाऽऽगमिष्यामि न संशयः ॥४॥ विकट उवाच । माया नानाविधा दैत्य सा खेलति मया धृता । भेदान् कृत्वा तदाधारान् मयूरेशं वदंति माम् ॥५॥ मायाशब्दं मयूराख्यं वदंते तत्त्वदर्शिनः । तस्याः स्वामिनमेवं मां मयूरेशं विलोकय ॥६॥ नानाभेदयुतं ब्रह्मासद्रूपं कथ्यते बुधैः । उत्पत्तिस्थितिसंहारसाक्षिरूपप्रदर्शनात् ॥७॥ तत्रामृतमयं ब्रह्म सदा भेदविवर्जितम् । तदेव विकटं तस्मात् सत्यं जानीहि मां परम् ॥८॥ सदाऽखंडमये दैत्य कुत्र ब्रह्मणि वर्तते । सृष्टिस्थितिलयत्वं च साक्षिरूपं वदस्व माम् ॥९॥ चतुर्भिर्वर्जितं ब्रह्म चतुर्युक्तं महामते । तत्र नैव विजानीहि विकटेऽमृतसंज्ञिते ॥१०॥ सर्वेषां जीवनं ब्रह्म तदेव विकटं मतम् । तं भजस्व विधानेन मृत्युहीनो भविष्यसि ॥११॥

सिद्धिर्भ्रांतिकरी प्रोक्ता बुद्धिर्भ्रांतिधरा मता । तयोः स्वामी गणेशश्च विचारय हृदि स्थितः ॥१२॥ चित्तं पंचविधं दैत्य तत्र भ्रांतिश्च पंचधा । भ्रांतियुक्तं महच्चित्तं त्यक्त्वा चिंतामणिं भज ॥१३॥ सर्वेषां चित्तगोऽहं तु मत्प्राप्त्यर्थं महामते । देहधारी स्वयं भूत्वा भक्तान् शांतिं ददाम्यहम् ॥१४॥ संप्रज्ञातो नराकारो संप्रज्ञातात्मकं शिरः । तयोर्योगेऽभवं देहधारी गजं विचारय ॥१५॥ अतोऽहं गजवक्त्रश्च दर्शनं मे सुयोगिनाम् । स्वसंवेद्यं भवेन्नूनं तेन स्वानंदवासकृत् ॥१६॥ मायाक्रीडार्थमानंदाद्रचितं विविधं पुरा । स्वस्वधर्मयुतं विश्वं चित्ते तिष्ठामि नित्यदा ॥१७॥ देवासुरमयोऽहं तु न भिन्नं मे प्रवर्तते । तथापि धर्मरक्षार्थं हन्मि सर्वान्न संशयः ॥१८॥ स्वर्गेषु स्थापिता देवा नराः पृथ्व्यां मया तथा । असुरा विवरेष्वेवं त्रिविधं त्रिषु संस्थितम् ॥१९॥ यदा लोभयुता देवाः पातालस्थान् महासुरान् । हंतुं विष्णुमुखाः क्रोधाद् बभूवुश्चोत्सुका बलात् ॥२०॥ तदा क्रोधयुतोऽहं तु दैत्यानां हृदि संस्थितः । तपःसामर्थ्यसंयुक्तान् करोमि दानवान् परान् ॥२१॥ विघ्नकर्ताऽमराणां वै दैत्यानां विघ्नहारकः । भवामि तेन दैत्येंद्रा जययुक्ताः सदाऽभवन् ॥२२॥ असुरैर्हन्यमानाश्च देवेंद्रा वनवासिनः । बभूवुः काम जानीहि संशयो न मदिच्छया ॥२३॥ यदा दैत्या महादुष्टा मदयुक्ता बभूविरे । कर्मनाशप्रभावेण देवानां मूलछेदकाः ॥२४॥ तदा देवाः समर्थाश्च प्रजघ्नुर्दैत्यनायकान् । दैत्यानां छिद्रकं सर्वं दर्शयामि हृदि स्थितः ॥२५॥ ब्रह्मादीनामवध्याश्चेयदा दैत्या भवंति च । तदाऽहं देहधारी तान् भूत्वा हन्मि विशेषतः ॥२६॥ यदा स्वधर्मसंयुक्ता देवा दैत्या बभूविरे । तदा तेषां हृदि स्थित्वा तिष्ठाम्यसुर सर्वदा ॥२७॥ त्वया देवगणाः सर्वे पीडिता धर्मलोपक । अतस्त्वां हंतुमायातो देवपक्षधरो ह्यहम् ॥२८॥ हनिष्यामि महादुष्ट यदि मामवमन्यसे । जीवितुं त्वं सुखी देव वैरं त्यक्त्वा भवेच्छसि ॥२९॥ एवमुक्त्वा महादैत्यं विकटो विरराम ह । कामासुरः प्रसन्नात्मा बभूवे भाविगौरवात् ॥३०॥ विचारमकरोच्चित्ते विकटोऽयं न संशयः । सुरासुरमयः पूर्णो व्रजामि शरणं ततः ॥३१॥ कामः करपुटं कृत्वा त्यक्त्वा शस्त्रादिकं पुरः । विकटं प्रणनामाथ हर्षयुक्तस्वभावतः ॥३२॥ प्रणम्य पूजयामास पुनर्यत्नेन विघ्नपम् । तुष्टाव भक्तिसंयुक्तोऽसुरः कामो गजाननम् ॥३३॥ कामासुर उवाच । नमस्ते विकटायैव गणेशाय परात्मने । सर्वपूज्याय सर्वेश देवासुरमयाय च ॥३४॥ अनंतमाययायुक्त ब्रह्मभूतस्वरूपिणे । गजाननाय हेरंब देवेशाय नमो नमः ॥३५॥ शूर्पकर्णाय विघ्नानां चालकाय नमो नमः । भक्तानां विघ्नहर्त्रे ते ह्यभक्तानां विनाशिने ॥३६॥ स्वानंदवासिने तुभ्यं योगाकार-

स्वरूपिणे। योगिभ्यः शांतिदात्रे ते योगेशाय नमो नमः ॥३७॥ अनामयाय सर्वादिपूज्याय ज्येष्ठरूपिणे । ज्येष्ठेभ्यः पददात्रे ते ज्येष्ठराजाय वै नमः ॥३८॥ सिद्धिबुद्धिप्रदात्रे च सिद्धिबुद्धिविहारिणे। सिद्धिबुद्धिस्वरूपाय गणानां पतये नमः ॥३९॥ त्रिनेत्राय नमस्तुभ्यं चतुर्बाहुधराय च । लंबोदराय ब्रह्मेश ब्रह्मणां पतये नमः ॥४०॥ देवानां पालकायैव दैत्येभ्यो वरदायिने। सर्वेषां समभावाय ढुंढिराजाय ते नमः॥४१॥ विष्णुपुत्राय शंभोश्च शक्तेः पुत्राय काश्यप। वरेण्यसूनवे सर्वमात्रे पित्रे नमो नमः ॥४२॥ किं स्तौमि त्वां गणाधीश यत्र योगींद्रमुख्यकाः। वेदादयो विशेषेण शांतिं प्राप्ताः स्वभावतः ॥४३॥ मायासुखं विशेषेण भ्रांतिदं सर्वजंतवे । त्यक्त्वा तल्लभ्यसे नाथ भक्त्या विकटया प्रभो ॥४४॥ अशांतं मायया युक्तं चित्तं भ्रांतियुतं सदा। विकटे शांतिमापन्नमतस्त्वं विकटो मतः ॥४५॥ एवं संस्तुवतस्तस्य भक्त्या रोमोद्गमोऽभवत्। कामासुरो ननर्तोऽसौ रुद्धकंठो महायशाः ॥४६॥ भक्तियुक्तं मनस्तस्य दृष्ट्वा तं विकटोऽवदत्। वरं वरय काम त्वं दास्यामि मनसीप्सितम् ॥४७॥ त्वां हंतुं क्रोधयुक्तोऽहं समागतो न संशयः। अधुना न हनिष्यामि शरणागतमादरात् ॥४८॥ त्वया कृतमिदं स्तोत्रं सर्वकामप्रदं भवेत् । शृण्वते पठते चैवांते स्वानंदप्रदायकम् ॥४९॥ एवं गणपतेर्वाक्यं श्रुत्वा कामासुरश्च तम्। प्रणम्य हर्षसंयुक्तो जगाद द्विरदाननम् ॥५०॥ कामासुर उवाच । प्रसन्नोऽसि यदा नाथ तदा ते भक्तिमुत्तमाम्। देहि स्थानादिकं देव भजामि तत्र संस्थितः ॥५१॥ गाणपत्यप्रियत्वं मे देहि नित्यं गजानन। नान्यद्याचे परं किंचिन्नश्वरं सर्वमंजसा ॥५२॥ अहो योगींद्रमुख्यानां दुर्लभं ते पदं प्रभो । साक्षाद् दृष्टोऽसि विघ्नेश तेन ज्ञातं मयाऽधुना ॥५३॥ तस्य तद्वचनं श्रुत्वा विकटो भक्तवत्सलः। उवाच तं महाभक्तं कामं गाणेशकामुकम् ॥५४॥ विकट उवाच । मदीया भक्तिरुग्रा ते भविष्यति महासुर। गाणपत्यप्रियत्वं तु सदा योगपरायणः ॥५५॥ तिष्ठ स्थाने स्वके दैत्य यथा पूर्वं तथा भव। मदीयस्मरणं नैव पूजनं यत्र कर्मणि ॥५६॥ आदौ तत्रासुरेणैव फलं भुंक्ष्व सुकर्मजम्। मदीयभक्तिसंयुक्तान् कुरु मत् कामसंयुतान् ॥५७॥ तथेति गणपं नत्वा सुरः कामो महायशाः। स्वस्थानं स जगामैव गणेशे भक्तिकामुकः ॥५८॥ तं शांतं दैत्यमुख्याश्च दृष्ट्वा महिषकादयः। स्वस्वस्थानं ययुः सर्वे त्यक्त्वा कामासुरं किल ॥५९॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते कामासुरशांतिवर्णनं नाम पंचत्रिंशत्तमोऽध्यायः ॥

|| श्रीगणेशाय नमः || आदिशक्तिरुवाच। कामासुरं महाशांतियुतं दृष्ट्वा सुरर्षयः। विस्मिता विकटं पूज्य तुष्टुवुः करसंपुटाः ||१||
देवर्षय ऊचुः। अजं पुराणं परमव्ययं च सदात्मरूपं सकलावभासम्। असद्विहीनं विविधांतरस्थं भजामहे तं विकटं परेशम् ||२||
अनादिमध्यांतविवर्जितं यत् सुजीवनं जीवनधर्मधारम् । सदामृतं ब्रह्म विकारहीनं भजामहे तं विकटं परेशम् ||३||
त्वयैव माया रचिता स्वबिंबात् स्वयं दधौ जीवनबिंबवीर्यम् । बभूव युक्ता रचने समर्था भजामहे तं विकटं परेशम् ||४||
तथा ह्यसद्रूपमयं च सांख्यं कृतं तथा ब्रह्म सुबोधरूपम् । अनंतभेदाश्रितमप्रमेयं भजामहे तं विकटं परेशम् ||५||
ततः स्वबोधेन कृतं च सोऽहं पवित्रमेकाश्रितमादिरूपम् । जगद्धरं बिंदुमयं तथा वै भजामहे तं विकटं परेशम् ||६||
जगच्चतुष्पादमयं च ताभ्यां व्यष्ट्या समष्ट्या च युतं हि सृष्टम्। अजेषु संजीवनदं गणेशं भजामहे तं विकटं परेशम् ||७||
ततं त्वया भेदविहीनभावात् प्रकाशरूपेण विभासि नाथ । अनंतलीलाकरमप्रमेयं भजामहे तं विकटं परेशम् ||८||
अजैर्विहीनोऽसि गजानन त्वं तथाऽपि सर्वत्र विभासि भक्त्या। अतो गणेशं विकटं वदंति भजामहे तं विकटं परेशम् ||९||
हरिस्वरूपेण विनायक त्वं सुरक्षसीदं रजसा विधाता । तथा तमोयुक्ततया हरोऽसि भजामहे तं विकटं परेशम् ||१०||
प्रसृष्टकर्माणि तदंतरस्थोऽर्यमाऽसि संजीवनरूपकेण । क्रियास्वरूपेण तु शक्तिसंस्थो भजामहे तं विकटं परेशम् ||११||
सदात्मरूपेण च ढुंढिराज स्थितोऽसि विश्वंभर विश्वमूर्ते। न ते कदाचिज्जगति प्रवेशो भजामहे तं विकटं परेशम् ||१२||
सदादिपूज्यं सकलैः सुवंद्यं गणेशसिद्धिप्रदमासमंतात् । सुचित्तभासं गजकर्णधारं भजामहे तं विकटं परेशम् ||१३||
स्वानंदनाम्नि नगरे सुसंस्थं त्रिनेत्रयुक्तं मूषकोपरिस्थम् । महोदरं चैकरदं विभूपं भजामहे तं विकटं परेशम् ||१४||
स्वभक्तपक्षेषु विराजमानं विघ्नैर्विहीनं मनसेप्सितं च । अभक्तसर्वाश्रितनाशकारं भजामहे तं विकटं परेशम् ||१५||
नियंतृरूपं तव हस्तसंस्थं जगत्सु नानाविधब्रह्मसु प्रभो । महांकुशं ह्यंकुशधारमेकं भजामहे तं विकटं परेशम् ||१६||
भ्रमात्मकं बंधनमेकमेव तदेव पाशं प्रभुहस्तसंस्थम् । स्वभक्तिकृद्बंधनहानिकारं भजामहे तं विकटं परेशम् ||१७||
त्वदाश्रितानां न भयं कदाचित् सदाऽभयं ते करसंस्थितं च। प्रत्यज्य दुष्टा भयसंयुतास्ते भजामहे तं विकटं परेशम् ||१८||
निजामृतं विघ्नपते यदन्नं जगत्सु संस्थं प्रभुहस्तगं तम्। सुमोदकं मोदकरं जनानां भजामहे तं विकटं परेशम् ||१९||
असन्मयी सर्वगता विभिन्ना परं सदाऽस्याश्च सुशांतिसंस्थम् । अतो वदंते विकटं जनास्त्वां भजामहे तं विकटं

परेशम् ॥२०॥ वयं स्तुवीमोऽल्पसुबोधगाः किं प्रभुं न शक्यं निगमादिभिश्च । शुकादिभिस्तोतुमपारगं यं भजामहे तं विकटं परेशम् ॥२१॥ तथापि ते दर्शनजेन नाथ बोधेन ब्रह्मेश सुसंस्तुतोऽसि । अतः प्रतुष्टो भव दीनपाल भजामहे तं विकटं परेशम् ॥२२॥ आदिशक्तिरुवाच । एवं स्तुत्वा महादेव्यो विकटं त्वमरर्षयः । प्रणेमुर्दंडवत् सर्वे ततश्च ननृतुः पुरः ॥२३॥ स तानुवाच सर्वेशो विकटो भक्तियंत्रितः । देवर्षीन् भक्तिसंयुक्तान् भक्तवात्सल्यवान् प्रभुः ॥२४॥ विकट उवाच । वरान् ब्रूत महाभागा देवा मुनिसमन्विताः । दास्यामि भक्तियुक्तेभ्यो भृशं स्तोत्रेण तोषितः ॥२५॥ इदं स्तोत्रं कृतं सर्वैर्मदीयं मत्पदप्रदम् । भविष्यति जनायैव पठते श्रृण्वते परम् ॥२६॥ भुक्तिमुक्तिप्रदं पूर्णं पुत्रपौत्रादिवर्धनम् । धनधान्यादिकं कामप्रदं स्तोत्रस्य पाठतः ॥२७॥ षट्कर्मसाधनकरं परकृत्यविनाशनम् । नानारोगहरं पूर्णं भविष्यति सुसेविनाम् ॥२८॥ कारागृहगतानां च बंधमोक्षकरं भवेत् । सहस्रावर्तनेनैव सदा सौभाग्यवर्धनम् ॥२९॥ नानापापसमूहानां दाहकं पठनात्तथा । सर्वसिद्धिकरं चैव भविष्यति न संशयः ॥३०॥ एकविंशतिवारं यः पठिष्यति निरंतरम् । स सर्वं साधयेत् सद्यो दिनानामेकविंशतिम् ॥३१॥ एवं विकटवाक्यं ते श्रुत्वा देवर्षिसत्तमाः । जगुस्तं प्रणिपत्यैव भक्तियुक्ताश्च शक्तयः ॥३२॥ देवर्षय ऊचुः । कामासुरं महावीर्यं शांत्या युक्तं गजानन । दृष्ट्वा सर्वे च संतुष्टा भवामो नात्र संशयः ॥३३॥ अधुना कर्मसंयुक्ता भविष्यंति द्विजादयः । देवाः स्वपदसंस्थास्तु स्वस्वधर्मयुता जनाः ॥३४॥ जातं वरस्य कृत्यं यदधुना किं वृणीमहे । तव भक्तिं स्थिरां देहि यथा कामभयं न हि ॥३५॥ तथेति तानुवाचैव विकटोंऽतर्दधे ततः । देवर्षयोऽभवंस्तत्र स्थिताः खेदसमन्विताः ॥३६॥ ततो मुनिगणैः सार्धं विकटं देवसत्तमाः । स्थापयामासुरानंददायकं भक्तिकारिणे ॥३७॥ हिमाचलस्य प्रांते तत् स्थानं वायुदिशि स्थितम् । विकटस्य महादेव्यः सर्वसिद्धिप्रदायकम् ॥३८॥ मूर्तिं देवर्षयः पूज्य विकटस्य महात्मनः । गत्वा स्वस्वपदेष्वेते पुनः क्षेत्रं समाययुः ॥३९॥ अंशेन स्वाधिकारेषु स्थिता देवर्षयो मताः । विकटं पूर्णभावेनाभजंस्ते क्षेत्रवासिनः ॥४०॥ चतुरस्रं महत् क्षेत्रं दशयोजनविस्तृतम् । तत्र मध्ये स्वयं साक्षाद्विकटः संस्थितोऽभवत् ॥४१॥ चतुर्दिक्षु चतुर्देवाः शंभुमुख्याः स्थितास्ततः । अन्ये देवा वामभागे दक्षिणे मुनयस्तथा ॥४२॥ तीर्थानि क्षेत्रयुक्तानि पश्चिमे संस्थितानि च । पुरो भक्तजनास्तत्र सेवार्थं संस्थिता बभुः ॥४३॥ मूषको विकटस्यैव समीपे स्थापितोऽभवत् । वामांगे संस्थिता सिद्धिर्बुद्धिर्वै दक्षिणांगके ॥४४॥ ब्रह्मप्रिया-

दिकास्तत्र गणाः सर्वत्र संस्थिताः। शस्त्रहस्ता भजंते स्म विकटं विकटप्रियाः ॥४५॥ तत्र विकटतीर्थं तु विख्यातमभवत् परम्। जंतुः स्नानेन सद्यश्च स्वेप्सितं लभते परम् ॥४६॥ अंते मुक्तिमवाप्नोति स्वानंदे नात्र संशयः। विकटस्य प्रियं पूर्णं तीर्थं त्रैलोक्यविश्रुतम् ॥४७॥ अन्यानि तीर्थमुख्यानि देवर्षीणां समंततः। स्थितानि विकटक्षेत्रे स्नानेन सुखदानि तु ॥४८॥ अन्यदेवस्य ये भक्ता मृताः क्षेत्रे भवंति चेत्। विकटस्य च ते तस्य लोकं गच्छंति निश्चितम् ॥४९॥ तत्र भोगान् प्रभुक्त्वा ते लये स्वानंदगामिनः। विकटदर्शनेनैव ब्रह्मभूता बभूविरे ॥५०॥ क्षेत्रस्य यात्रामात्रेणेप्सितं सर्वं लभेन्नरः। दर्शनेन तथा तस्य विकटस्य न संशयः ॥५१॥ विकटस्य च ये भक्ता यत्र कुत्र मृता यदि। ब्रह्मभूता न संदेहो बभूवुः शास्त्रसंमतम् ॥५२॥ भाद्रशुक्लचतुर्थ्यां तु सा मूर्तिः स्थापिताऽभवत्। विकटस्य ततो मुख्या सा बभूव तिथिः परा ॥५३॥ भाद्रशुक्लचतुर्थ्यां तु महोत्सवः प्रकीर्तितः। वार्षिकस्तत्र कुर्वंति देवाद्या भक्तिसंयुताः ॥५४॥ मध्याह्ने पूजनं प्रोक्तं सर्वसिद्धिप्रदायकम्। स्वल्पसिद्धिदमाद्यं ते ज्ञातव्यं शास्त्रमार्गतः ॥५५॥ धन्यास्ते पुरुषा लोके पश्यंति विकटं परम्। कृतकृत्या महादेव्यो मता वेदेषु नित्यदा ॥५६॥ तत्र देवर्षयो नानाऽन्ये क्षेत्रे वासकारकाः। भजंते विकटं नित्यं हर्षयुक्ताः स्वभावतः ॥५७॥ विकटस्य चरित्राणि कथयंति परस्परम्। साश्रुनेत्राः स रोमांचा भवंते भक्तिभावतः ॥५८॥ नरदेहं समासाद्य न दृष्टो विकटो जनैः। निष्फलं जीवितं तेषां पशुतुल्यस्वभाविनाम् ॥५९॥ एतत् संक्षेपतः प्रोक्तं माहात्म्यं क्षेत्रसंभवम्। विस्तरेणायुतैर्वर्षैर्न समर्थो भवाम्यहम् ॥६०॥ अन्ये देवमुखा देव्यो योगिनो वेदमुख्यकाः। न समर्था वर्णयितुं भवंते वर्षकोटिभिः ॥६१॥ एवं नानाऽवतारान् स धृत्वा धर्मधरः प्रभुः। विकटः कलया देव्यो रक्षति स चराचरम् ॥६२॥ एतद्विकटमाहात्म्यं यः शृणोति नरोत्तमः। पठेद्वा स लभेत् सर्वमंते ब्रह्ममयो भवेत् ॥६३॥ न कामस्य भयं तस्य भवेद्देव्यः कदाचन। कामहीनः स्वभावेन लभेत् कामान् विशेषतः ॥६४॥ एवं कामं निगृह्यैव स्ववशं तं चकार ह। विकटस्तत् समाख्यातं किं भूयः श्रोतुमिच्छथ ॥६५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते विकटावतारचरितसमाप्तिवर्णनं नाम षट्त्रिंशत्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शक्तय ऊचुः । विकटस्य च माहात्म्यं श्रुत्वा शक्के वयं परम्। हर्षं प्राप्ता विशेषेण योगामृतमयं किल ॥१॥ तथापि देवि तृप्तिं न प्रयामो रसवर्धिनीम्। कथां श्रुत्वा पुनस्तां च वद वैघ्नेश्वरीं पराम् ॥२॥ विकटेन जगन्मातरवतारा धृताः परे। तेषां संक्षेपतो ब्रूहि चरित्रमवतारजम् ॥३॥ आदिशक्तिरुवाच। गंडकी नगरीपालश्चक्रपाणि-र्नृपोऽभवत्। उग्रा पत्नी च तस्यासीत् पातिव्रत्यगुणान्विता ॥४॥ धर्मशीलो वदान्यश्च राजा नीतिपरायणः। देवविप्रा-तिथिप्रेप्सुः पंचयज्ञकरोऽभवत् ॥५॥ जित्वा भूमंडलं सर्वं चकार वशवर्तिनम्। संपत्तिं बुभुजे सोऽपि देवमान्यां विशेषतः ॥६॥ अपत्यं जायते यद्यत्तत्तन्नश्यति तत्क्षणात्। वांध्यदोषसमायुक्तौ दंपती संबभूवतुः ॥७॥ तदर्थं व्रतदानादींश्चकार विधिसंयुतः। तथापि संततिं राजा न प्राप परमेश्वरात् ॥८॥ ततो राज्यममात्येषु निक्षिप्याऽभवदुद्यतः। वनं गंतुं महादेव्यः सस्त्रीकः शोकसंयुतः ॥९॥ एतस्मिन्नंतरे तत्र शौनको मुनिसत्तमः। यदृच्छया ययौ योगी तं नृपं विचरन् परः ॥१०॥ भानोस्तेनोपदिष्टं स व्रतं चक्रे नराधिपः। तुष्टस्तेन रविः स्वप्ने राज्ञ्यां गर्भं समादधे ॥११॥ सूर्यतेजोयुतं गर्भं न क्षमा संबभूव ह। धर्तुं दाहयुतोग्रा सा समुद्रे तं ततोऽत्यजत् ॥१२॥ तत्र पुत्रो बभूवापि त्रिनेत्रश्चक्रधारकः। जलं संशोषयामास समुद्रस्य विशेषतः ॥१३॥ ततो ब्राह्मणरूपेण चक्रपाणिं समाययौ। समुद्रः कथयामास वृत्तांतं पुत्रसंभवम् ॥१४॥ दत्वा पुत्रं समुद्रस्त्वंतर्दधे हर्षितोऽभवत्। नृपः सर्वजनैः सार्धं जातकर्माऽकरोद् द्विजैः ॥१५॥ सिंधुर्नाम्ना द्विजैः पुत्रः कृतस्तस्य विशेषतः। अपारवीर्ययुक्तत्वात् सोऽपि बलयुतोऽभवत् ॥१६॥ आज्ञां गृह्य वनायैव तपोऽर्थं मार्गमध्यगः। काव्यः सौरं ददौ मंत्रं विधियुक्तं तु सिंधवे ॥१७॥ एकपादमधिष्ठाय तताप तप उत्तमम्। निराहारः स्वभावेन तोषयामास काश्यपम् ॥१८॥ द्विसहस्रे तु वर्षेषु सविता वरदोऽभवत्। त्रैलोक्यविभवं तस्मै ददावमृतपानकम् ॥१९॥ त्रिगुणैर्हीनभावेन तिष्ठति ब्रह्मशास्त्रगम्। देहं धृत्वाऽमृतं सोऽपि निष्काश्य त्वां हनिष्यति ॥२०॥ एवमुक्त्वा स्वभक्तं तु सविताऽतर्दधे तदा। हर्षयुक्तः स्वयं सिंधुः स्वगृहं प्रत्यपद्यत ॥२१॥ पितृभ्यां मानितोऽत्यंतं शुशुभे तेजसा युतः। तस्मै राज्यं ददौ राजा सस्त्रीको वनगोऽभवत् ॥२२॥ ततः सिंधुर्धरां जिग्ये सप्तद्वीपवतीं पराम्। वरदानबलेनैवं ज्ञात्वा दैत्यास्तमाययुः ॥२३॥ शुंभोतिशुंभवृत्रौ च कमलः शंख एव च। कोलासुरादयश्चान्ये तदाज्ञागा बभूविरे ॥२४॥ तैर्युतो देवराजेंद्रान् जिग्ये शंभुमुखान् किल। पपाल शंकरः सद्यस्त्यक्त्वा कैलासमात्मनः ॥२५॥ विष्णुं सूर्यं विधींद्रादीन्

संगृह्य स्वपुरं ययौ । कारागारे स चिक्षेप देवेंद्रान् बलसंयुतः ॥२६॥ एवं जित्वा त्रिलोकान् स राज्यं चक्रे महासुरः । दैत्येंद्रान् स्थापयामास देवस्थानेषु सर्वतः ॥२७॥ ततो बहुगते काले क्रोधयुक्तो महासुरः । देवतीर्थादिकान् भङ्क्त्वा दैत्यः कर्म त्वलोपयत् ॥२८॥ स्वकीयां प्रतिमां कृत्वा स्थापयद्भूमिमंडले । देशे देशे पुरे ग्रामे पूजयत्तां स मानवैः ॥२९॥ ततो हाहाकृतं सर्वैर्वर्णाश्रमयुतैर्जनैः । स्वाहा स्वधादिकं कर्म नष्टं सर्वत्र शक्तयः ॥३०॥ अधुना तद्वधोपायं वदामि श्रृणुत प्रियाः । शंकरो गणसंयुक्तस्त्रिसंध्याक्षेत्रमागमत् ॥३१॥ गौतमाद्यैर्युतस्तत्र वासं सस्त्रीक आकरोत् । ध्यानमास्थाय विघ्नेशमभजद्भक्तिसंयुतः ॥३२॥ एकदा संशयाविष्टा पार्वती तं प्रणम्य च । जगाद शंकरं देव्यो विनयेन समन्विता ॥३३॥ पार्वत्युवाच । ईशस्त्वं सर्वदेवानां तेनेशो विद्यते न च । तेनेशो वेदवादेषु कथितोऽसि महेश्वर ॥३४॥ तथापि ध्यानसंयुक्तो भजसे कं विशेषतः । वद मां पादपद्मस्य दासीं संशयसंयुताम् ॥३५॥ शिव उवाच । अनीशाश्चैव देवेशि ईशा येन विनिर्मिताः । तं गणेशं भजाम्येव भक्त्या ब्रह्मपतिं सदा ॥३६॥ अनीशश्च गकारो णकार ईशमयः स्मृतः । तयोः स्वामी गणेशानः पश्य वेदे शुचिस्मिते ॥३७॥ तस्य तद्वचनं श्रुत्वा पार्वती विनयान्विता । जगाद तस्य प्राप्त्यर्थं वचनं शंकरं प्रति ॥३८॥ पार्वत्युवाच । एतादृशं गणेशं चेन्न जानामि कदाचन । प्राप्त्यर्थं वद मुख्यं मे चोपायं साधयाम्यहम् ॥३९॥ शिव उवाच । एकाक्षरं गृहाण त्वं सविधिं च तपः कुरु । ध्यात्वा गजाननं देवं ततः सिद्धिमवाप्स्यसि ॥४०॥ एवमुक्त्वा ददौ तस्यै मंत्रं गणपतेः परम् । तं प्रणम्य ययौ देवी लेखनाद्रिं मनोहरम् ॥४१॥ अवायुभक्षणेनैव तपसा ध्यानशालिना । तया संराधितो ढुंढिर्वरदश्च बभूव ह ॥४२॥ ययौ वर्षशते देवीं वरं याचेति सोऽब्रवीत् । तया संयाचितो देव्या पुत्रो मे भव विघ्नप ॥४३॥ तत्र ते सेवनं नाथ करिष्यामि विशेषतः । माता पिता भविष्यावो बंधहीनौ सुते त्वयि ॥४४॥ तथेति पार्वतीं दत्वा वरं सोऽन्तर्हितोऽभवत् । देवी विघ्नेश्वरं तत्र स्थापयामास विप्रपैः ॥४५॥ पूजयित्वा गणेशानं ययौ सा शंकरं ततः । वृत्तांतं कथयामास सोऽपि संहर्षितोऽभवत् ॥४६॥ ततः सा तन्मना जाता सस्मार वरदं प्रभुम् । सर्वत्र गणराजं तं ददर्श भाग्यगौरवात् ॥४७॥ ततो भाद्रपदे मासि कृत्वा मूर्तिं पुपूज ह । शंकरेण युता देवी मध्याह्ने शुक्लपक्षगे ॥४८॥ चतुर्थ्यां सोमवारे तु स्वातीनक्षत्रसंयुते । सचेतनाऽभवन् मूर्तिर्विकटस्य वरप्रदा ॥४९॥ तेजसा धर्षितौ देवौ किंचित् द्रष्टुं न शेकतुः । स्तुतस्ताभ्यां ततः सौम्यतेजोयुक्तो बभूव ह ॥५०॥ शिवो ददर्श तं तत्र षड्भुजं

शशिसन्निभम् । जातकर्मादिकं सर्वं चक्रतुर्ब्राह्मणैः परौ ॥५१॥ एकादशदिने नाम गुणेश इति चक्रिरे । द्विजाः शिवौ हर्षयुतौ पूजयामासतुर्द्विजान् ॥५२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे विकटचरिते गुणेशावतारवर्णनं नाम सप्तत्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । ततः सिंधुचरास्तत्र गुप्तरूपेण संस्थिताः । ज्ञात्वा संकथयामासुर्वृत्तांतं सिंधवे परम् ॥१॥ एतस्मिन्नंतरे वाणी बभूवे तत्र शक्तयः । अशरीरा च तां सिंधुं शुश्राव भयदायिनीम् ॥२॥ अयं वै दैत्यनाथाशु त्वां हनिष्यति वेगतः । स्वस्वधर्मयुतं सर्वं करिष्यति चराचरम् ॥३॥ श्रुत्वा संमूर्च्छितो दैत्यः सावधानो बभूव ह । मुहूर्तेन महायत्नैस्ततः शुशोच मंदधीः ॥४॥ तं हंतुं प्रेषयामास दैत्येंद्रान् दैत्यनायकः । गुप्तरूपेण ते सर्वे त्रिसंध्याक्षेत्रमाययुः ॥५॥ नानामायां समाश्रित्य तं हंतुं तान् समागतान् । पशुपक्ष्यादिरूपस्थान् जघान शिवनंदनः ॥६॥ ततः सा पार्वती देवी शुशोच बहुधा सती । अहा संख्यातिगा दैत्या हताः पुत्रेण नित्यदा ॥७॥ तथापि दैत्या राजानः किं करिष्यंति मे सुतम् । हनिष्यंति गुणाधीशं न जानामि विचारतः ॥८॥ साक्षाद्ब्रह्मपतिः पूर्णः पुत्रो मे प्रबभूव ह । भाग्यहीनप्रभावेण गमिष्यति मिषेण किम् ॥९॥ ततो मायां गुणेशानश्चकार मोहिनीं पराम् । तया मोहयुता देवी पुत्रं मेने गणेश्वरम् ॥१०॥ एतस्मिन्नंतरे योगी मरीचिर्गणपं भजन् । प्रार्थयामास देवेशं दर्शनं देहि विघ्नप ॥११॥ ततः सोऽपि महायोगी शुश्राव स्ववचोऽमलम् । शिवपुत्रत्वमापन्नो गणेशस्तं विलोकय ॥१२॥ श्रुत्वा समागतं हर्षात् पार्वती तं ददर्श ह । प्रणम्यापूज्य संभोज्य प्रार्थयामास तं मुनिम् ॥१३॥ त्वं साक्षाद्ब्रह्मभूतश्च न गच्छसि ममाश्रमम् । त्यक्त्वा तीर्थादिकं विप्र गणेशभजने रतः ॥१४॥ यथा विघ्नहरो देवस्तथा त्वमपि निश्चितम् । अतस्त्वां प्रार्थये स्वामिन् पुत्रं मे रक्ष रक्षया ॥१५॥ दैत्यादीनां समूहश्च सर्वदा कालधिक्कृताम् । समायाति गणेशानं हंतुं भवंति ते मृताः ॥१६॥ अस्माकं कुलदेवस्तु विघ्नेशो नात्र संशयः । स रक्षति मुने पुत्रं मम नो चेन् मृतो भवेत् ॥१७॥ शंकरेण गणेशानः सेवितोऽभून्

महामुने। तस्य पुण्यं सुतं मे तु रक्षत्यत्र न संशयः ॥१८॥ पार्वतीवचनं श्रुत्वा विस्मितोऽभून् महामुनिः। साक्षाच्छक्तिरियं भ्रांता सुतं जानाति विघ्नपम् ॥१९॥ गणेशकवचं तस्मै ददौ शंभुसुताय सः । तं प्रणम्य च संस्तुत्य ययौ स्वस्याश्रमं मुनिः ॥२०॥ तथापि दैत्यराजान् स तं हंतुं नित्यमागतान्। नानावेषधरान् वीक्ष्य जघ्ने वै बालखेलतः ॥२१॥ एकदा पार्वती प्रातः समुत्थाय शिवे रता। मूर्तिं लिंगमयीं कृत्वा वामहस्ते दधार ताम् ॥२२॥ आवाह्य शंकरं तस्यां पूजने संरताऽभवत्। एतस्मिन्नंतरे तत्र गुणेशोऽभवदुत्थितः ॥२३॥ स्तन्यं देहि जगादाऽसौ पार्वतीं सा तमब्रवीत् । पूजयित्वा महेशानं दास्यामि स्तनपानकम् ॥२४॥ ततस्तां स जगादैव किमर्थं पूजने रता। मां त्यक्त्वा तेऽधिकं देवि ददते शंकरः कुतः ॥२५॥ स्तन्यं देहि च मे मातस्तत्रानंतशिवादयः । संतुष्टाः प्रभविष्यंति ब्रह्माणि शैलनंदिनि ॥२६॥ तथापि हास्यसंयुक्ता न ददौ स्तनपानकम्। ततो रोषसमाविष्टो मयूरेशो बभूव ह ॥२७॥ तलाघातेन देव्याः स हस्तस्थं शिवलिंगकम् । पातयामास भूम्यां तद्भग्नं बभूव शक्तयः ॥२८॥ ततोऽतिदुःखसंयुक्ता पार्वती विकटं पुनः । जघान तलघातेन महाक्रोधवती परम् ॥२९॥ ततो गणेश्वरः क्रुद्धः समागत्य स्वमानरम्। ददंशांगुलिकां तस्या रक्तं सुस्राव चोल्बणम् ॥३०॥ हाहाकाररवां तां स त्यक्त्वा पपाल भीतितः। भीतीनां भयदाताऽपि बालक्रीडां प्रदर्शयन् ॥३१॥ दृष्ट्वा रुरोदातिदुःखसंयुक्ता शंकरप्रिया । प्राणप्रतिष्ठया युक्तं भग्नं लिंगं शिवस्य च ॥३२॥ शिवहत्यासमं पापं मया प्राप्तं न संशयः। अन्यत्पतिवधे जातं तदेवाप्यधुना कृतम् ॥३३॥ अयं पुत्रो गुणेशो मे नरकस्य प्रदो मतः। वंध्याहं चेत्तदा दैवं धन्यं मे नात्र संशयः ॥३४॥ अधुना दुःखिनाऽहं वै स्मृत्वा हृदि गजाननम् । देहत्यागं करिष्यमि विघ्नराज नमोऽस्तु ते ॥३५॥ गणेशस्मरणेनैव बुद्धिभेदो बभूव ह। ददर्श गणराजं तं समीपे पुत्ररूपिणम् ॥३६॥ यष्टिहस्ता ययौ देवी हंतुं पुत्रं परात्परम्। पपाल भयसंयुक्तो गणेशस्तां विलोक्य च ॥३७॥ सा जग्राह स्वपुत्रं तं धावयित्वा शिवप्रिया। मायां चकार विघ्नेशः शिवरूपो बभूव ह ॥३८॥ मोहिता शंकरं देवी मायया दृश्य दुःखिता । किमर्थं यष्टिहस्ताऽहं महेशं हंतुमुद्यता ॥३९॥ त्यक्त्वा तं दुःखिनाऽत्यंतं देहत्यागे समुद्यता। बभूव गणराजोऽपि पुनः पुत्रस्वरूपधृक् ॥४०॥ पलंतं भयसंयुक्तं देवी हंतुं समुद्यता। ययौ तमनु वै सोऽपि पपाल वनगोऽभवत् ॥४१॥ एतस्मिन्नंतरे तत्र दैत्यः कर्दमसंज्ञितः। शैवो द्विजस्वरूपेण बालं जगाद चागतः ॥४२॥ किमर्थं पुत्र पलसि रक्षामि त्वां न संशयः। यत्र माता न जानाति तत्र तस्मात् स्थिरो भव

॥४३॥ तथेति बालभावेन गुणेशेन कृतं वचः। बालं जिगेल गृह्यासौ हर्षयुक्तो बभूव ह ॥४४॥ अहो सिंधोर्महाशत्रुर्मया संभक्षितोऽभवत्। सर्वेषां दैत्यमुख्यानां भयमद्य प्रणाशितम् ॥४५॥ एतस्मिन्नंतरे तत्र जगदंबा तमाययौ। शैवं द्विजं प्रदृश्यैव प्रणनाम जगाद च ॥४६॥ पार्वत्युवाच। स्वामिन् मम सुतः कुत्र गुप्तो बभूव सन्निधौ। त्वदीये नात्र संदेहः पादं पश्यामि नो पुरः ॥४७॥ पादमार्गेण तं विप्र गृहीतुं चागताऽभवम्। परश्वादिकचिह्नेन वद सत्यं महामते ॥४८॥ द्विज उवाच। न दृष्टः शैलजे पुत्रो मया तव न संशयः। शिवस्य शपथं कृत्वा वदामि पश्य पुत्रकम् ॥४९॥ ततोऽतिदुःखसंयुक्ता सस्मार द्विरदाननम्। ततस्तस्य मुखांभोजान्निःसृतो गणनायकः ॥५०॥ निःसृत्य मुष्टिघातेन गुणेशेन हतोऽसुरः। स ममार महादुष्टोऽष्टादशयोजनोऽभवत् ॥५१॥ ततः सा हर्षिताऽत्यंतं क्रोधहीना बभूव ह। पुत्रं गृह्य ययौ देवी स्वाश्रमं गृहगाऽभवत् ॥५२॥ पुत्रः पपात भूपृष्ठेऽलोडयत्तत्र शक्तयः। पुनः पुनः स जृंभां च चकार विकटाननः ॥५३॥ तं तादृशं निरीक्ष्यैव पार्वती दुःखसंयुता। किं जातं मे सुतस्याद्य किं भविष्यति विप्रप ॥५४॥ ततः सा तन्मुखे विश्वं ददर्श भयसंकुला। अनंतांडसमायुक्तं पपात धरणीतले ॥५५॥ स्वगुरुं शंकरं सा तु सस्मार स्वेष्टदेवकम्। गणेशं तेन मोहेन हीना बभूव पार्वती ॥५६॥ विचारमकरोद्देवी गणेशोऽयं सुतोऽभवत्। तं त्यक्त्वा लिंगसेवायां निरता मूर्खवत् किल ॥५७॥ पतिभावेन देवेशं शंकरं देहधारिणम्। भजामि देवभावेन गणेशं तच्च विस्मृतम् ॥५८॥ स्तनपानं गणेशाय न दत्तं मूढभावतः। अनंता वै मया यत्र संस्थिताः शंकरादयः ॥५९॥ तेन तुष्टेन सर्वे ते संतुष्टाः संभवंति च। गणेशो ब्रह्मणां नाथः सोऽपि संतुष्ट एव वै ॥६०॥ अहोऽयं शिवरूपश्च मया दृष्टः प्रसन्निधौ। गृहीतस्तत्र चित्रं तु मया न ज्ञायते कथम् ॥६१॥ अतः परं गणेशानं पुत्रभावेन चागतम्। सर्वभावेन नित्यं तं भजिष्यामि हितावहम् ॥६२॥ अयं पतिरयं तातो माता पुत्रः सुहृत्तथा। देवो ब्रह्म न संदेहो गुणेशो मे सुशांतिदः ॥६३॥ एवं निश्चित्य सा देवी समुत्थाय प्रणम्य तम्। तुष्टाव हर्षसंयुक्ता भक्तिनम्रात्मकंधरा ॥६४॥ स्तुवंतीं तां समालोक्य गणेशो मोहमादधे। ततः संमोहिता देवी विस्मृतिं परमां ययौ ॥६५॥ पुत्रभावेन विघ्नेशं लालयामास गृह्य तम्। गृहकार्यरता देवी बभूव पूर्ववद्यथा ॥६६॥ शक्तय ऊचुः। बालक्रीडार्थमुद्युक्तो गणेशो ब्रह्मनायकः। पुत्रभावं समासाद्य पुत्रतुल्यः समाचरत् ॥६७॥ किमर्थमखिलं विश्वं नानाब्रह्मांडसंयुतम्। शिवरूपं किमर्थं स दर्शयामास शक्तये ॥६८॥ दर्शयित्वा किमर्थं स लोपयामास तद्भवम्। ज्ञानं कुतूहलं

चेदं वद संशयनाशनात् ॥६९॥ आदिशक्तिरुवाच। पुत्रभावमयी भक्तिग्रहणे लालसः सदा। वरदानप्रभावेण तपः-फलप्रदोऽभवत् ॥७०॥ कार्यं कृत्वा सुरर्षीणामंतर्धानं करिष्यति। तदा ज्ञानस्य देव्यास्तु स्मरणं संभविष्यति ॥७१॥ गणेशः पुत्रभावेनागतो मे नात्र संशयः। अज्ञानेन युताऽहं तं सुतं जानामि निश्चितम् ॥७२॥ पुत्रवन्नरदेहस्थो गणेशो मे त्वदर्शयत्। ब्रह्मसामर्थ्यमाहात्म्यं तथापि ज्ञायते न सः ॥७३॥ तेनातिभक्तिसंयुक्ता भजिष्यति गजाननम्। तदर्थं गणराजोऽपि कौतुकं तत्र चाकरोत् ॥७४॥ एवं नानाविधान् दैत्यान् स्वयं हत्वा च शक्तयः। शिवयोः सेवनं चक्रे पुत्रभावप्रभावतः ॥७५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठ खंडे विकटचरिते बालखेलावर्णनं नामाष्टत्रिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच। गौतमादिमुनीनां स सुतैर्नित्यं गणेश्वरः। चिक्रीड बालमध्यस्थो बालवन्नात्र संशयः ॥१॥ तेषां मुनिसुतानां स तिरस्कारादिकं कदा। असहद्धर्षसंयुक्तो मित्रभावप्रदर्शनात् ॥२॥ तेपुः ये सख्यभक्त्यर्थं तपस्ते सततं नराः। सेवार्थमभवन् सर्वे मुनिपुत्रस्वभावतः ॥३॥ कश्यपस्य सुतो जज्ञे मयूरो विष्णुरव्ययः। यज्ञः सेवार्थमुद्युक्तो युयुधे गणपेन सः ॥४॥ सुतो विनतया सोऽपि बोधितः प्रणनाम तम्। गणेशं याचते स्तुत्वा मयूरः स्म वरं परम् ॥५॥ आदौ मयूरनाम्ना संयुतं नाम त्वदीयकम्। भवेत्तु सर्वविख्यातं सर्वसिद्धिप्रदायकम् ॥६॥ तथेत्यभून् मयूरेशो नाम्ना सर्वत्र शक्तयः। सोऽपि वाहनभावेन सेवायामास विघ्नपम् ॥७॥ कदाचित् द्विजपुत्रैश्च मज्जितोऽभूद् गजाननः। जलस्थं नागकन्यास्तं निन्युः कामप्रपीडिताः ॥८॥ पुरा गणेशमाहात्म्यं श्रुत्वा तेपुः तपो महत्। ब्राह्मण्यः पतिभावेन गणेशो भवतु प्रभुः ॥९॥ गणेशमंत्रसंयुक्ता नानाऽनुष्ठानतत्पराः। ता एव नागकन्याश्च बभूवुस्तपसा युताः ॥१०॥ शेषवासुकि-मुख्यैस्ता लालिताः परमादरात्। पत्यर्थं प्रार्थिताः सर्वा जगुस्तान्नागमुख्यकान् ॥११॥ गणेशं भावसंयुक्ता वृणीमहि पतिं वरम्। नान्यं कदा महाराज इच्छामो ह्यसमर्थकम् ॥१२॥ तच्छ्रुत्वा शेषमुख्यास्ता जगुः किं हठसंयुताः। ब्रह्मेशो

गणनाथस्तु स्वानंदस्थो बभूव ह ॥१३॥ स कथं भवतां पुत्र्यो भविष्यति पतिः परः । अभिमानं परित्यज्य समानं वृणुत प्रभुम् ॥१४॥ तेषां वचनमाकर्ण्य क्रोधयुक्ताः कुमारिकाः । जगुस्तांश्च वयं ताता ब्रह्मचर्यं वृणीमहे ॥१५॥ पूर्वसंस्कारयोगेन मयूरेशं जलस्थितम् । ददृशुर्नागकन्यास्तं मेनिरे गणनायकम् ॥१६॥ नारदस्य मुखाच्छ्रुत्वा शिवपुत्रं गजाननम् । अत्रागतं प्रगृह्यैव वृणीत वरमुत्तमम् ॥१७॥ स्वगृहे गणनाथं ताः समानाय्य सुविह्वलाः । पुपूजुर्भक्तिसंयुक्ताः पतिभावेन शक्तयः ॥१८॥ ततः सोऽपि हृदा चक्रे ददौ योगं सुशांतिदम् । ताभ्यः तां कामहीनास्तं सिषेविरे विशेषतः ॥१९॥ अकृत्रिमं सुखं ताभ्यो ददौ भक्तिप्रभावतः । दिवानक्तं बुभुजिरे ह्यत्यंतं पौरुषं सुखम् ॥२०॥ एवं कृत्वा स्वयं शेषं गर्विष्ठं मदसंयुतम् । मर्दयित्वा ययौ तत्राभवन् द्विजसुताः पुरा ॥२१॥ एवं नानाविधान्येव चरित्राणि चकार ह । स सर्वं गौतमस्यान्नं बुभुजे नादरेण च ॥२२॥ भक्तेभ्यो भक्तिदानार्थं प्रभुः किं किं गजाननः । न करोति महादेव्यो दासदास्यपरायणः ॥२३॥ भक्तैर्यद्यत्कृतं चैव तदेवामृतरूपकम् । अभक्तैः सादरतया स कृतं मन्यते विषम् ॥२४॥ तिरस्कारादिकं देव्यस्ताडनादिकमुत्तमम् । सौख्यदं गणनाथस्य बभूवे भक्तिमोहतः ॥२५॥ पार्वतीशिवमुख्यैश्चादितिकश्यपमुख्यकैः । तिरस्कृतस्ताडितः सोऽमृतं मेने गजाननः ॥२६॥ भक्तस्य वचनार्थं स दैत्यमस्तकधारकः । स्वांगच्छेदकरश्चैव मलजोऽपि बभूव ह ॥२७॥ इत्यादि विविधं चैव नीचवद्गणनायकः । चकार कर्म भक्त्या संमोहितो मोहनाशनः ॥२८॥ ततो गौतममुख्याश्च गणेशमायया युताः । आययुः शंकरं देवं जगुस्तं मोहिता भृशम् ॥२९॥ गौतमाद्या ऊचुः । मयूरेशयुतः शंभो गच्छ त्वं यत्र ते रुचिः । वयं पीडायुता नित्यं भवामो दैत्यसंगमात् ॥३०॥ नित्यं दैत्येंद्रमुख्यास्तं मयूरेशं समाययुः । प्रहता मायया युक्ता मयूरेशेन तत्क्षणात् ॥३१॥ मृता दैत्या बभूवुश्च स्वस्वरूपधराः प्रभो । दश द्वादश पंचत्रिंशतविंशतियोजनम् ॥३२॥ तेषां देहप्रपातेन गृहवृक्षाश्रमादिकम् । भंजते नित्यमेवातोऽस्माकं किं करवामहै ॥३३॥ अतस्त्वं सर्वसंयुक्तो गच्छ यत्र च ते रुचिः । अथवा वयमीशान त्वां त्यक्त्वा किं व्रजामहे ॥३४॥ तेषां वचनमाकर्ण्य शिवश्चिंतातुरोऽवदत् । मुनीन् सर्वान् महादेव्यो देवानां पालकः प्रभुः ॥३५॥ श्रीशिव उवाच । भवतामाश्रमेष्वद्याहं विप्रा ह्यागतोऽभवम् । मदीयसंगदोषेण पीडिता मुनयः परम् ॥३६॥ स्वाश्रमेषु सदा विप्राः स्थीयतां सुखभोगिनः । गमिष्यामि स्थलेऽन्यत्र सर्वैः साकं न संशयः ॥३७॥ मयूरेशस्य विप्रेशा नित्यं दुःखादिकं परम् । दैत्येंद्रैः क्रियते दैत्या हतास्तेन महाबलाः ॥३८॥ निर्विघ्नार्थं गणेशस्य स्थानं

ब्रूत महर्षयः । तत्राहं ससुतो नित्यं स्थास्यामि ध्यानसंयुतः ।।३९।। गौतमाद्या ऊचुः । क्षेत्रं दक्षिणभागे तु वैघ्नेशं सर्वसिद्धिदम् । भूस्वानंदं वदंते तद्ब्रह्मसायुज्यदायकम् ।।४०।। मूर्तिर्गणपतेस्तत्र सिंधुदूतैः प्रखंडिता । सिंधोश्च प्रतिमा दुष्टैः स्थापिता हर्षसंयुतैः ।।४१।। जनैस्त्यक्तं महादेव दैत्यसंत्राससतापितैः । तत्र गच्छ सपुत्रस्त्वं विघ्नहीनो भविष्यसि ।।४२।। तथेति शंकरः सर्वैर्गणैर्विघ्नेशसंयुतः । निर्ययौ तं महादेव्यो ब्राह्मणाः प्रययुः किल ।।४३।। एतस्मिन्नंतरे तत्र सिंधुना प्रेषितो महान् । कमलासुरनामा यो दैत्यपैरागतोऽभवत् ।।४४।। ब्रह्मविष्णुशिवादीनामजेयं दैत्यसंयुतम् । महामायं च तं दृष्ट्वा प्रपेलुर्मुनयस्ततः ।।४५।। अहो शिवं परित्यज्य न स्थातुं शक्यते कदा । मुनयो दैत्यनाथैश्च हताः कुत्र व्रजामहे ।।४६।। एवं विचार्य ते सर्वे पुनः शंकरमाययुः । जगुस्तं भयभीताश्च रक्ष नो दैत्यनायकात् ।।४७।। मयूरेशेन संयुक्तो तिष्ठ नित्यं महेश्वर । नोचेदत्रानुगाः सर्वे वयं ते प्रभवामहे ।।४८।। तेषां वचनमाकर्ण्य भयभीतः सदाशिवः । जगाद तान् वचो रम्यं द्विजपालनकारकः ।।४९।। श्रीशिव उवाच । कमलासुरनामाऽयं दैत्यनाथैर्महाबलैः । समायातश्च तं जेतुं न क्षमोऽहं कदाचन ।।५०।। अधुना मां समागृह्य कारागारे महाबलः । क्षेपयिष्यति नूनं मां यत्र विष्णवादयः सुराः ।।५१।। शिवस्य वचनं श्रुत्वा मयूरेशस्तमब्रवीत् । मा भयं कुरु तात त्वं हनिष्यामि महासुरम् ।।५२।। त्वं साक्षाद्गणनाथस्य कलांऽशो भक्त-नायकः । ब्राह्मणा गाणपत्याश्च तेषां विघ्नः कथं भवेत् ।।५३।। मरीचिना गणेशस्य कवचं मे महेश्वर । रक्षणार्थं प्रदत्तं तु न भयं मे भविष्यति ।।५४।। एवमुक्त्वा महादैत्यं ययौ विघ्नविदारणः । मयूरोपरि संस्थाय पर्शोः शूलस्य धारकः ।।५५।। कृत्वा युद्धं महाघोरं त्रिशूलेन महासुरम् । चिच्छेद त्रिविधं कृत्वा पातयामास चासुरम् ।।५६।। मस्तकं मयूरक्षेत्रे तदाकारं बभूव ह । उदरं राजसदने प्रवाले जघनं तथा ।।५७।। त्रिषु स्थानेषु दैत्येंद्रः पपात त्रिविधोऽभवन् । गणेश्वरश्चैव तेषु संस्थितोऽभूत् प्रतापवान् ।।५८।। शिवेन मुनिभिः सार्धं मयूरेश्वर आययौ । क्षेत्रे मयूरसंज्ञे तु तत्रसंस्था बभूविरे ।।५९।।

।। ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते कमलासुरवधो नामैकोनचत्वारिंशत्तमोऽध्यायः ।।



॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । तत्रागत्य मयूरेशो दृष्ट्वा मूर्तिस्थितं प्रभुः । सिंधुं क्रोधसमायुक्तश्चूर्णयामास तत्क्षणात् ॥१॥ ततोतिभयसंयुक्ता मुनयः शंकरादयः । किं भविष्यति दैत्येभ्यः श्रुत्वा वार्तां बभूविरे ॥२॥ तत्रापि मायया युक्ता दैत्येंद्राश्च समाययुः । हंतुं शिवसुतं नित्यं तान् जघान मयूरपः ॥३॥ ततो विघ्नविनाशार्थमिंद्रयज्ञं समारभत् । शंकरस्तं मयूरेशो बभंज क्रोधसंयुतः ॥४॥ तत इंद्रः सुरेशानैर्मयूरेशमयोधयत् । तं जित्वा गणराजस्तु स्वपुरस्थो बभूव ह ॥५॥ शक्तय ऊचुः । कारागारे स्थिता देवाः सिंधोस्ते योद्धुमाययुः । कथं देवि वदाशु त्वं संशयस्यापनुत्तये ॥६॥ आदिशक्तिरुवाच । मेरुसंस्था महेशाना दैत्यैः संप्रधूताः पुरा । निराधारेषु संस्थास्ते पुरेषु गणपं ययुः ॥७॥ तान् ग्रहीतुं न शक्ताश्च भवंते केऽपि शक्तयः । तेषां मार्गं प्रवक्ष्यामि संशयच्छेदनाय वः ॥८॥ देवाश्च त्रिविधाः प्रोक्तास्तत्त्वाकाराश्च शक्तयः । तथा कर्ममया शास्त्रे देहरूपा न संशयः ॥९॥ दीव्यंति सर्वभावेषु तेन देवाः प्रकीर्तिताः । देवत्वं त्रिविधं तेषु ज्ञातव्यं वेदवादिभिः ॥१०॥ शताश्वमेधयज्ञानां कर्तेंद्रो भवति प्रियाः । तिष्ठंति कर्मजा देवास्तादृशाः कांचनाचले ॥११॥ मंदारादिषु सर्वत्र नगराणि दिवौकसाम् । तान् जयंति समर्थाश्चासुरादयो न संशयः ॥१२॥ ब्रह्मणो दिवसांते ते मन्वंतरपरायणाः । लयं गच्छंति यज्ञानां फलं भुक्त्वा न संशयः ॥१३॥ पुनर्जन्मधराः सर्वे भवंति नरजातिषु । कुर्वते यादृशं कर्म लभंते तादृशं फलम् ॥१४॥ अन्ये कर्ममया देवा व्याप्य ते संस्थिताः पराः । कुर्वते स्वाधिकारांश्च सदा कर्मपरायणाः ॥१५॥ जठराग्निस्तथा बाह्याग्निरित्यादि दिवौकसाम् । अधिकाराः समाख्याता यमस्य यातनादयः ॥१६॥ दैत्या धर्षयितुं शक्तास्तान् भवंति न कर्मणा । सदाऽधिकारसंयुक्तांस्तान् देवान् प्रवदंति च ॥१७॥ योगबलेन योगीशास्तान् देवांश्चालयंति च । नान्यबलेन देवेशाश्चलंति स्वाधिकारिणः ॥१८॥ ब्रह्मणो दिवसांते ते न मृत्युं देवसत्तमाः । लभंते वै निराधाराः कर्मरूपप्रधारकाः ॥१९॥ महालये लयं देवा गच्छंत्यत्र न संशयः । सलोकपरिवारास्ते पुनर्देहधरा मताः ॥२०॥ मृत्युलोके नराः सर्वे भवंते कर्मयंत्रिताः । यादृशं कुर्वते कर्म लभंते तादृशं फलम् ॥२१॥ तत्त्वरूपा महादेव्यो देवा वेदे प्रकीर्तिताः । ते तत्त्वैर्विश्वमानंदाद्भावयंति चराचरम् ॥२२॥ उत्पत्तिस्थितिसंहारकर्तारः सर्वरूपकाः । ब्रह्माकारस्वभावेन तिष्ठंति जगदीश्वराः ॥२३॥ महाप्रलयवेलायां स्वविहारं समाप्य ते । योगनिद्रां प्रकुर्वंति योगाकारा विशेषतः ॥२४॥ पुनः क्रीडंति सृष्ट्वा च ब्रह्मांडं देवनायकाः । न तान् योगबलेनैव समो धर्षयितुं भवेत् ॥२५॥ योगोऽयं द्विविधः प्रोक्तः शास्त्रेषु विबुधोत्तमैः ।

वायुसाधनजश्चैकः प्राणायामेन लभ्यते ॥२६॥ तेन योगेन तत्त्वस्था देवास्तद्वशवर्तिनः। न भवंति कदा देव्यो ज्ञातव्यं शास्त्रमार्गतः ॥२७॥ संप्रज्ञाताऽसंप्रज्ञातमयो योगः प्रकीर्तितः । द्वितीयो ब्रह्मभूताख्यो योगिभिः साध्यते सदा ॥२८॥ तेन योगबलेनैव तान् जयंति सुरान्नराः । साध्याः सर्वे भवंत्येव देवास्तद्वशवर्तिनः ॥२९॥ यं यमिच्छति योगींद्रस्तं तं कुर्वंति देवपाः। प्रारब्धं चालयंत्येव योगिवश्यपरायणाः ॥३०॥ यदा तेषां विहारेषु संसक्ता योगिनोऽभवन्। योगभ्रष्टा भवंत्येव जन्ममृत्युपरायणाः ॥३१॥ योगिनां योगभावेन भयं गच्छंति देवताः । तत्त्वरूपा न संदेहो ज्ञातव्यं वेदवादतः ॥३२॥ कर्मैकं त्रिविधस्थानामेकैकाश्रितरूपिणाम्। सेवनाद्भंजनात्तस्य द्वंद्वयुक्ता भवंति ते ॥३३॥ अधुना प्रकृतं देव्यः शृणुध्वं त्वेकचेतसः । अवतारचरित्रं तु विकटस्य महात्मनः ॥३४॥ प्रद्रष्टुं स कदाचित्तं विधिः क्षेत्रे मयूरके। समाययौ स तं दृष्ट्वा मोहयुक्तो बभूव ह ॥३५॥ विचारमकरोच्चित्ते शिवपुत्रोऽयमुच्यते । अस्मै न नमनं कार्यं मया ज्येष्ठेन शक्तयः ॥३६॥ अयं गणेश्वरः साक्षात् कथितो नात्र संशयः। परीक्षां गणराजस्य कृत्वा पश्चान्नमाम्यहम् ॥३७॥ एवं विचार्य ब्रह्मांडं शिवशक्तिसमन्वितम् । अंतर्धाय स्थितो ब्रह्मा गुप्तरूपेण सर्वगः ॥३८॥ मयूरेशस्ततस्तच्च ज्ञात्वा चराचरं जगत्। निर्ममे ब्रह्मदेवस्तं जगाम शरणं पुनः ॥३९॥ ततः श्वासेन विघ्नेशो ब्रह्माणं स्वोदरे नयत्। तत्रानंतांडकं दृष्ट्वा बभ्राम यत्र तत्र सः ॥४०॥ गते वर्षसहस्रे च ब्रह्माणं श्वासवायुना । बहिर्निःष्कासयामास मयूरेशो महायशाः ॥४१॥ बहिरागत्य वेधाः स क्षणमेकं ददर्श ह। ततोऽतिविस्मितो भूत्वा पुनस्तं प्रणतोऽभवत् ॥४२॥ स्तुत्वा तं स जगामैव स्वस्थलं हर्षसंयुतः। मयूरक्षेत्रे नदादि स्थिता ब्रह्मकमंडलुः ॥४३॥ एवं विधेर्मदं हत्वा चिक्रीड द्विजबालकैः। मयूरेशो जगत्स्रष्टा भक्तेभ्यः सर्वदायकः ॥४४॥ ततः कदाचिद्भाद्री सा चतुर्थी शुक्लपक्षगा । समागता च तस्यां ते मृण्मयीं चक्रुराहताः ॥४५॥ स्वे स्वे गृहे तु सर्वे ते मुनयः शंकरादयः। गणा गणेश्वरं कृत्वा पूजयामासुरादरात् ॥४६॥ मयूरेशः स्वयं चक्रे मूर्तिं शुंडादिचिह्नितान्। संपूज्यानम्य तुष्टाव कृत्वा करपुटं पुरः ॥४७॥ मयूरेश उवाच। नमस्ते गणनाथाय सर्वविघ्नविदारिणे । भक्तानां दुष्टरूपेभ्यो विघ्नदात्रे नमो नमः ॥४८॥ ब्रह्मणां पतये तुभ्यं सर्वसिद्धिप्रदायिने। अमेयमायया युक्ताय नमो ढुंढये नमः ॥४९॥ वक्रतुंडाय वक्राणां नाशकार परात्मने। लंबोदराय सर्वेषां जठरस्थाय ते नमः ॥५०॥ चिंतामणिस्वरूपाय पंचचित्तप्रधारिणे। हेरंबाय परेशानां दीनानां बीजरूपिणे ॥५१॥ योगेशाय सदा शांति-

दात्रे शांतिमयाय च । शांतीनां शांतिरूपाय गणेशाय नमो नमः ॥५२॥ ज्येष्ठराजाय ज्येष्ठानां पूज्याय विकटाय ते । ज्येष्ठेभ्यः पददात्रे वै मात्रे पित्रे नमो नमः ॥५३॥ अनादये च सर्वेषामादिरूपाय विघ्नप । विघ्नानां विघ्नरूपाय सर्वसत्तात्मने नमः ॥५४॥ स्वानंदवासिने तुभ्यं संयोगायोगमूर्तये । सर्वपूज्याय भक्तेभ्यो भक्तिदात्रे नमो नमः ॥५५॥ महोदराय भीमाय पापिनां दंडधारिणे । स्वधर्मनिरतेभ्यस्तु सुखदाय नमो नमः ॥५६॥ मयूरवाहनायैव मयूरेश्वर ते नमः । आखुवाहाय सर्वेश परात्पराय वै नमः ॥५७॥ किं स्तौमि त्वां गणाधीश योगाकारस्वरूपिणम् । शिवादयो न संस्तोतुं समर्था वेदमुख्यकाः ॥५८॥ रक्ष नस्ते सदा दासान् देहि भक्तिं त्वदीयकाम् । यया माया न बाध्यते बुद्धीश ते नमो नमः ॥५९॥ एवं स्तुत्वा मयूरेशं मयूरेशो नतोऽभवत् । पूजाविधिं समाप्यैव भक्तियुक्तो बभूव ह ॥६०॥ एवं शिवादयः सर्वे पुपूजुर्गणनायकम् । मुनयश्चैव सर्वेशं मृन्मूर्तिस्थं विशेषतः ॥६१॥ एतस्मिन्नंतरे तत्र विश्वदेवो महायशाः । समाययौ च तीर्थानि भ्रममाणो यदृच्छया ॥६२॥ एकनिष्ठतया सोऽपि नारायणपरायणः । पुपूज नित्यमानंदाच्छेषशायिनमादरात् ॥६३॥ अव्याहतगतिः सोऽपि तपसा दग्धकिल्बिषः । गत्वा समुद्रमध्यस्थं तं पुपूज जनार्दनम् ॥६४॥ पश्चाज्जलादिकं विप्रो बुभुजे भक्तिसंयुतः । अत्यंतभक्तियोगेन गाणेशे योग्यतां गतः ॥६५॥ मायया च मयूरेशस्तं ज्ञात्वा शेषशायिनः । ज्ञानं संछादयामास विश्वदेवस्य संस्मृतिम् ॥६६॥ विश्वदेवस्य नित्यं तु बुद्धिमोहेन विघ्नपः । अकारयत्तद्योगेशो विस्मृतं योगमायया ॥६७॥ आगत्य विश्वदेवस्तु पार्वतीं सर्वभाविनीम् । अयाचत स भिक्षां तां सा ददौ पायसादिकम् ॥६८॥ अपोशनं स कृत्वा च सस्मार शेषशायिनम् । महादुःखयुतस्तत्र संस्थितोऽभूद् द्विजोत्तमः ॥६९॥ ततस्तं गणराजस्तु खेदयुक्तं विशेषतः । दृष्ट्वा नारायणो भूत्वा सांत्वयामास भावतः ॥७०॥ चतुर्वर्षात्मको मूर्तिं स पुपूज पराशरः । मृन्मयैरुपचारैस्तां दर्शयामास भक्तितः ॥७१॥ गाणेशाख्यं ददौ ज्ञानं विश्वदेवाय शांतिदम् । गाणपत्यस्वभावेन स ननाम गुणेश्वरम् ॥७२॥ विश्वदेवो ययौ स्थानं स्वकीयं शांतिसंयुतः । एकनिष्ठतया विप्रो मयूरेशं तमाभजत् ॥७३॥ एवं विस्मृतभावेन ज्ञानसंछादनेन च । विष्णोः पराक्रमं हत्वा चिक्रीड द्विजबालकैः ॥७४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते विष्ण्वादिपराधीनतादर्शनं नाम चत्वारिंशत्तमोऽध्यायः ॥



|| श्रीगणेशाय नमः || आदिशक्तिरुवाच । कदाचित् सुखमासीनं गणैः सर्वैः समावृतम् । शिवं दृष्ट्वा मयूरेशो मायामाविश्चकार ह ॥१॥ समागत्य महेशानं तस्य भालस्थितं प्रभुः । चंद्रं गृह्य गणेशानः प्रययौ क्रीडनोत्सुकः ॥२॥ मायया मोहिताः सर्वे शिवमुख्या विशेषतः । न जानंति स्म देवेशं चंद्रतास्कर्यकारिणम् ॥३॥ ततः शिवः स्वभाले तं न ददर्श निशाकरम् । क्रोधयुक्तो गणान् प्राह कथं चंद्रो गतो गणाः ॥४॥ ततो मुनिसुताः प्रोचुः समागत्य महेश्वरम् । चंद्रं गृह्य मयूरेशः खेलत्यस्माभिरादरात् ॥५॥ ततः क्रोधसमाविष्ट उवाच ह शिवो गणान् । बद्ध्वा गणेश्वरं ताञ्यानयध्वं मेऽद्य सन्निधौ ॥६॥ ततो गणा ययुस्तं ते तेन निःश्वासवायुना । निक्षिप्ताः शंकरस्याग्रे शुष्कपत्रसमप्रभाः ॥७॥ एवं क्रमेण सर्वान् स मयूरेशो गणेश्वरान् । भग्नदर्पांश्चकारैव शिवश्चिंतातुरोऽभवत् ॥८॥ ततो मायां समाश्रित्य शिवभाले निशाकरम् । मयूरेशः समागत्याऽऽस्थाप्य भ्रांतांश्चकार ह ॥९॥ स्वभालस्थं महेशानो दृष्ट्वा चंद्रं गणास्तथा । मेनिरे तं सदा तत्र संस्थितं तं गतागतम् ॥१०॥ एवं शिवं पराधीनं कारयामास विघ्नपः । ततः कदाचिद्दैत्येंद्रं वनं हंतुं जगाम ह ॥११॥ व्याघ्ररूपधरं दृष्ट्वा शार्दूलोऽभूद्गजाननः । न तं जानंति विप्राणां सुताः शार्दूलरूपिणम् ॥१२॥ यत्र तत्र भ्रमंति स्म बालास्तद्दर्शनोत्सुकाः । ते सर्वे सुष्वपुः श्रांता निद्रां लेभुः श्रमान्विताः ॥१३॥ पादं दक्षिणदिक्संस्थं दृष्ट्वा तेषां च भानुजः । तान् गृह्य निगडैर्बद्ध्वा चिक्षेप स्वपुरे यमः ॥१४॥ हत्वा दैत्यं मयूरेशः स्वपुरं पुनराययौ । न तत्र मुनिपुत्रान् स ददर्श विस्मनोऽभवत् ॥१५॥ गत्वा स्वर्गे यमं जित्वा ययौ तैर्मुनिबालकैः । एवं नानाविधां क्रीडां चकार मयूरध्वजः ॥१६॥ दशपंच वयोवर्षाण्यतिक्रम्य गणेश्वरः । शुशुभे खेलसंयुक्तो दैत्यान् हत्वा विशेषतः ॥१७॥ अथ तत्राऽऽययौ योगी नारदो गणपं स्मरन् । उवाच शंकरं सोऽपि हर्षयुक्तेन चेतसा ॥१८॥ नारद उवाच । तपसाऽऽराधितौ देव्यौ सिद्धिबुद्धी तु वेधसा । वरदानेन ते पुत्र्यौ बभूवतुः प्रजापतेः ॥१९॥ तदर्थं सदृशं ब्रह्मा नावाप वरमुत्तमम् । मयूरेशाय अधुना दातुमिच्छति स प्रभुः ॥२०॥ तथेति तमुवाचाथ शंकरस्तेन संयुतः । मयूरेशं समागृह्य निर्ययौ स गणः स्वयम् ॥२१॥ मार्गमध्ये मयूरेशो ददर्श नगरं परम् । सिंधोर्देवविमोक्षार्थं विचारमकरोत् परम् ॥२२॥ ततो युद्धं महाघोरं चकार सिंधुना स्वयम् । मयूरेशो गणैः सार्धं सोऽपि तेन महासुरः ॥२३॥ ततः परशुना भित्वा नाभिं त्वमृतसंयुताम् । मारयामास सिंधुं च नानादैत्येंद्रनायकैः ॥२४॥ विष्णुभक्तः पिता तस्य चक्रपाणिर्महायशाः ।

मयूरेशार्थमेवं स विचार्य शरणं ययौ ॥२५॥ त्यक्त्वा सर्वं गणेशे स लालसो भक्तिसंयुतः। बभूव तं स्वपुर्यां तु समानाय्य पुपूज ह ॥ २६ ॥ कारागृहाच्चक्रपाणिर्निष्कास्य विष्णुमुख्यकान्। देवान् देवेंद्रयुक्तांश्चापूजयद्भक्तिसंयुतः ॥२७॥ तत्र ब्रह्मा प्रहर्षेण सस्मार तनये स्वके। सिद्धिबुद्धी समायाते रूपलावण्यसंयुते ॥२८॥ ते दृष्ट्वा कामसंतप्ता देवेंद्राश्च बभूविरे। देवास्तं प्रार्थयामासुः प्रत्येके विधिमादरात् ॥२९॥ अस्मभ्यो देहि देवेश कन्ये परमसुंदरे। न दृष्टे सदृशे कुत्र कामिनीनां गणेषु च ॥३०॥ ततो ब्रह्मा जगादैव न सदृशः सुरेश्वराः। आभ्यां तस्मान् मयूरेशाय दास्यामि मदात्मजे ॥३१॥ ततोऽतिप्रार्थयामासुर्देवाः सर्वे पितामहम्। जगाद वचनं युक्तं सपुत्र्यौ खेदसंयुतः ॥३२॥ सिद्धिबुद्धी सुरेंद्रेषु वृणुतं वरमीप्सितम्। ते ऊचतुर्विधातारं चित्तस्थं तं वृणीवहे ॥३३॥ ततो मात्रां समागृह्य चिंतामणिं प्रहृष्य ते। सिद्धिबुद्धी मयूरेशं त्यक्त्वा देवांश्च जग्मतुः ॥३४॥ मालां गले गणेशस्य ततश्चिक्षिपतुर्विधिः। तस्मै समर्पयामास सिद्धिं बुद्धिं विधानतः ॥३५॥ ततः सर्वे प्रणेमुस्तं देवेंद्रादय आदरात्। सिंधोर्वधात् प्रहर्षेण युक्ताः संपूज्य तुष्टुवुः ॥३६॥ देवर्षय ऊचुः। नमस्ते शिखिवाहाय मयूरध्वजधारिणे। मयूरेश्वरनाम्ने वै गणेशाय नमो नमः ॥३७॥ अनाथानां प्रणाथाय गताहंकारिणां पते। मायाप्रचालकायैव विघ्नेशाय नमो नमः ॥३८॥ सर्वानंदप्रदात्रे ते सदा स्वानंदवासिने। स्वस्वधर्मरतानां च पालकाय नमो नमः ॥३९॥ अनादये परेशाय दैत्यदानवमर्दिने। विधर्मस्थस्वभावानां हर्त्रे विकट ते नमः ॥४०॥ शिवपुत्राय सर्वेषां मात्रे पित्रे नमो नमः। पार्वतीनंदनायैव स्कंदाग्रज नमो नमः ॥४१॥ नानावताररूपैस्तु विश्वसंस्थाकराय ते। काश्यपाय नमस्तुभ्यं शेषपुत्राय ते नमः ॥४२॥ सिंधुहंत्रे च हेरंबाय परशुधराय ते। देवदेवेश पालाय ब्रह्मणां पतये नमः ॥४३॥ योगेशाय सुशांतिभ्यः शांतिदात्रे कृपालवे। अनंताननबाहो तेऽनंतोदर नमो नमः ॥४४॥ अनंतविभवायैव चित्तवृत्तिप्रचालक। सर्वहृत्स्थाय सर्वेषां पूज्याय ते नमो नमः ॥४५॥ सर्वादिपूज्यरूपाय ज्येष्ठराजाय ते नमः। गणानां पतये चैव सिद्धिबुद्धिवराय च ॥४६॥ किं स्तुमस्त्वां मयूरेश यत्र वेदादयः प्रभो। योगिनः शांतिमापन्ना अतो नमामहे वयम् ॥४७॥ तेन तुष्टो भव स्वामिन् दयाघन प्रवर्तक। त्वदीयांगसमुद्भूतान् रक्ष नो नित्यदा प्रभो ॥४८॥ एवं स्तुत्वा प्रणेमुस्तं ततो देवोऽब्रवीन् स तान्। वरान् वृणुत देवेशा मुनिभिश्च समन्विताः ॥४९॥ भवत्कृतमिदं स्तोत्रं सर्वसिद्धिप्रदायकम्। भविष्यति महाभागा मम प्रीतिविवर्धनम्

॥ ५० ॥ यः पठेच्छृणुयाद्वापि श्रावयेत्स लभेत् पराम्। भुक्तिं मुक्तिं मदीयां तु नरो भक्तिं न संशयः ॥५१॥ मयूरेशवचः श्रुत्वा देवाः सर्षिगणाश्च तम्। प्रत्यूचुस्ते प्रणम्येदं वचनं हर्षसंयुताः ॥५२॥ देवर्षय ऊचुः। यदि प्रसन्नभावेन वरान् दास्यसि विघ्नप। त्वदीयामचलां भक्तिं देहि नाथ नमोस्तु ते ॥५३॥ हतः सिंधुर्महावीर्यस्तेन सर्वे कृतार्थकाः। अधुना स्वाधिकारेषु गमिष्यामस्त्वदाज्ञया ॥५४॥ तथेति नानुवाचाथ मयूरेशः प्रतापवान्। दत्त्वा भक्तिं स्वकीयां तु राज्ञे सर्वैर्जगाम ह ॥५५॥ चक्रपाणिर्गणेशस्य पंचायतनमार्गनः। अभजत्तं मयूरेशमंते स्वानंदगोऽभवत् ॥५६॥ मयूरेशः समायातो मयूरे सर्वसंयुतः। सर्वान् संस्थाप्य देवेशान् जगाद मुनिसत्तमान् ॥५७॥ यदर्थमागता देवास्तत् सर्वं सुकृतं मया। अधुना निजलोकेऽहं गमिष्यामि मुनीश्वराः ॥५८॥ एवमुक्त्वांतर्दधेऽसौ मयूरेशः स्वलीलया। देवर्षयश्च खेदेन युक्तास्तत्रैव संस्थिताः ॥५९॥ पार्वतीशंकरौ तत्र मूर्च्छितौ स बभूवतुः। तयोर्हृदि मयूरेशः प्रकटोऽभूद् जगाद तौ ॥६०॥ भवतोर्हृदि संस्थोऽहं चित्तवृत्तिप्रचालकः। न वियोगः कदा मे वां पितरौ नात्र संशयः ॥६१॥ बर्हिमूर्तिं समास्थाप्यापूज्य तत्रैव भक्तितः। सेवेथां मां विशेषेण तेन तुष्टौ भविष्यथः ॥६२॥ एवमुक्त्वांऽनर्दधेऽसौ गणेशो गणवल्लभः। ब्रह्मा मूर्तिं द्विजैस्तस्य स्थापयामास हर्षतः ॥६३॥ ततो हर्षयुताः सर्वे स्वांशेन स्वस्थलेषु ते। संस्थिताः कार्यसिद्ध्यर्थं स्वस्वकर्मपरायणाः ॥६४॥ पूर्णभावेन तत्रैव मयूरेशं सिषेविरे। क्षेत्रवासपराः सर्वे भक्तियुक्ताश्च शक्तयः ॥६५॥ विकटस्यावतारोऽयं मयूरेश्वरसंज्ञितः। भक्तानां कथितः सर्वसिद्धिदः प्रीतिवर्धनः ॥६६॥ यः पठेत् शृणुयाच्चेद्वा स लभेदीप्सितं फलम्। अंते स्वानंदगो भूत्वा मोदते ब्रह्मतत्परः ॥६७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खण्डे विकटचरिते मयूरेशचरितवर्णनं नामैकचत्वारिंशत्तमोऽध्यायः ॥

॥श्रीगणेशाय नमः॥ आदिशक्तिरुवाच । विकटेन महादेव्यो रचितं मायया परम् । नानाभेदयुतं ब्रह्माऽसद्रूपं विविधे रतम् ॥१॥ तेन नानाविधं ब्रह्म जगन्नानाविधं तथा। सृष्टं तानि विशेषेण जीवहीनानि मेनिरे॥२॥ ततस्तैर्विकटस्यैव तपस्तप्तं सुदारुणम् । एकाक्षरविधानेन दिव्यवर्षसहस्रकम् ॥३॥ तुष्टस्तानि ययौ देवो वरदानार्थमादरात् । रथस्थः सूर्यरूपेण सर्वात्मा सर्वभावनः ॥४॥ तं दृष्ट्वा तानि हर्षेण युक्तानि नेमुरादरात् । तद्दर्शनजबोधेन ज्ञानयुक्तानि शक्तयः ॥५॥ आत्माकारोऽयमेकश्च विकटः सूर्यरूपधृक् । न कुत्रचित् प्रदृश्येत भेदो विकटसूर्ययोः ॥६॥ तान्याऽऽपूज्य प्रणेमुस्तं पुनस्तोतुं प्रचक्रमुः । स्तोत्रं नानाविधान्येव ब्रह्माणि विश्वपालकैः ॥७॥ नानाब्रह्माण्यूचुः । विकटाय परेशाय सर्वजीवनधारिणे । आत्माकाराय सूर्याय भानवे ते नमो नमः ॥८॥ सप्ताश्वरथसंस्थाय विघ्नेशाय परात्मने । हेरंबाय जगन्नाथ ब्रह्मनाथाय ते नमः ॥९॥ संज्ञापते नमस्तुभ्यं साक्षिरूपाय साक्षिणे । छायानाथाय देवेश देवदेवेश ते नमः ॥१०॥ अनामयाय नित्याय सहस्रकरधारिणे । अनंतभेदहीनायाऽद्वितीयाय नमो नमः ॥११॥ सर्वादये सदा सर्वाधाराय विश्वमूर्तये । कर्माधाराय सर्वेषां पालकाय नमो नमः ॥१२॥ आदित्याय परेशाय परात्परतराय ते । दिनस्य पतये नाथ दिनपालाय वै नमः ॥१३॥ अर्यम्णे काश्यपायैव तेजसां पतये नमः । अनाधाराय वृष्ट्यास्तु चालकाय नमो नमः ॥१४॥ किं स्तुमस्त्वां रवे यत्र वेदाः संकुंठिता बभुः । योगिनं सततं सर्वं आत्माकारं परात्परम् ॥१५॥ एकमेवाद्वितीयं त्वां वदंति वेदवादिनः । वयं भिन्नानि तेन त्वं विकटोऽसि न संशयः ॥१६॥ एवं स्तुत्वा तं ब्रह्माणि प्रणेमुर्हर्षभावतः । तान्युत्थाप्यार्यमा वाक्यं जगाद भक्तवत्सलः ॥१७॥ सूर्य उवाच । वरान् ब्रूत च ब्रह्माणि दास्यामि भक्तियंत्रितः । भवत्कृतमिदं स्तोत्रं भुक्तिमुक्तिप्रदं भवेत् ॥१८॥ यं यमिच्छति तं तं तु दास्यामि स्तोत्रपाठतः । ब्रह्मभूयप्रदं मेऽस्तु स्तोत्रं मद्भक्तिवर्धनम् ॥१९॥ सूर्यस्य वचनं श्रुत्वा हर्षेण संयुतानि तु । जगुस्तं ब्रह्ममुख्यानि भक्तियुक्तानि शक्तयः ॥२०॥ ब्रह्माण्यूचुः । तुष्टश्चेद्ब्रह्मब्रह्मेश जीवयुक्तानि नित्यदा । कुरुष्व सर्वभावेन स्वस्य सौख्यपराणि तु ॥२१॥ भक्तिं देहि सदा नाथ तव पादांबुजे पराम् । मायामोहविनाशार्थं योगं देहि परात्परम् ॥२२॥ तथेति सविता तेभ्य उक्त्वा ज्ञानं जगाद ह । मायामोहविनाशार्थं गाणेशं योगशांतिदम् ॥२३॥ सूर्य उवाच । असत् सत् समनेतीनां संयोगे योग उच्यते । स्वसंवेद्यात्मकश्चैव गकाराक्षरवाचकः ॥२४॥ स्वस्वरूपेण हीनोऽयमयोगो योग उच्यते । णकाराक्षरगः सोऽपि वेदेषु कथितोऽभवत् ॥२५॥ तयोर्योगे गणेशानः शांतीनां शांति-

दायकः । चित्ते चिंतामणिं दृष्ट्वा भविष्यथ सुयोगिनः ॥२६॥ संयोगायोगरूपं यन्मायामयं विशेषतः । तस्या विकटभावेन भजध्वं विकटं सदा ॥२७॥ स्वस्वब्रह्मणि संस्थं तु कर्म कृत्वा स्वभावजम् । गणेशार्पणभावेन भवद्भिः स्थीयतां सदा ॥२८॥ एवमुक्त्वा स्वयं भानुर्ब्रह्माणि सर्वनायकः । अंतर्दधे महादेव्यः स्वानंदस्थो बभूव ह ॥२९॥ ततो सन्मुख्यब्रह्माणि स्वस्वविश्वयुतानि च । जीवयुक्तानि जातानि खेलां चक्रुः परस्परम् ॥३०॥ यथा सूर्येण संदिष्टो योगो विकटसंज्ञितः । साधयित्वा तथा तानि सुशांतानि बभूविरे ॥३१॥ हृदि चिंतामणिं ज्ञात्वा बहिः कर्माणि कृत्स्नशः । समर्प्य विकटं देव्यो भजन् ब्रह्माणि रेमिरे ॥३२॥ एवं विकटमाहात्म्यं सूर्यावतारसंज्ञितम् । कथितं विस्तरेणैव समासेनापि निश्चितम् ॥३३॥ अयं सूर्यात्मकश्चैव विकटस्य महात्मनः । अवतारः समाख्यातः सर्वसिद्धिप्रदायकः ॥३४॥ शृणुयाद्यः पठेद्वापि स सिद्धिं परमां लभेत् । ईप्सितं सर्वमेवं तु परत्रेह लभेत् सुखम् ॥३५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खण्डे विकटचरिते सूर्यावतारचरितं नाम द्विचत्वारिंशत्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । कश्यपस्य च भार्याऽऽसीद्विनता रूपशालिनी । तस्यामंडे समुत्पन्ने द्वेऽनीव तेजसा युते ॥१॥ ताभ्यां ज्येष्ठोऽरुणो जज्ञे गरुडोऽनुज एव च । अरुणः सूर्यमाराध्य वरं प्राप हितावहम् ॥२॥ सारथिः स रवेरासीन्नित्यं तद्भक्तिसंयुतः । सेवयाऽनन्यभावेन सूर्यं आत्मानमच्युतम् ॥३॥ गणेशं नित्यमानंदात् सूर्यो भजे विशेषतः । प्रणम्य सोऽपि पप्रच्छारुणस्तं खेदसंयुतः ॥४॥ अरुण उवाच । स्वामिंस्त्वं सर्वभावानामात्माऽमृतमयः सदा । एक एवाद्वितीयोऽसि भजसे कं गजाननम् ॥५॥ कोऽसौ गणेश्वरः पूर्णो मिथ्यात्मा कश्यपात्मज । मोहं करोषि देवेश स्वरूपच्छादनाय ते ॥६॥ योगिनो देवमुख्याश्च त्वां ज्ञात्वा शांतिमादधुः । त्वत्तः परतरं नास्ति किमर्थं भजसे परम् ॥७॥ सूर्य उवाच । त्वयाऽनूरो सत्यमुक्तं वेत्सि मां त्वं विशेषतः । न त्वत्समो मदीये तु योगे कोऽपि विशेषतः ॥८॥ पूर्णभावमविज्ञाय शांतिं धृत्वा त्वमंजसा । संस्थितः किमहं ब्रूयामज्ञानं त्वां महायशः ॥९॥ गणेशादहमुत्पन्नस्तस्यान्ये शंकरादयः । ज्येष्ठराजश्च

तेनायं तस्य ज्येष्ठो न विद्यते ॥१०॥ असन्नानाविधा शक्तिस्तत्राहं चात्मवाचकः । तयोः समानभावे त्वाऽऽनंदो विष्णुः प्रकीर्तितः ॥११॥ आनंदाच्च परो व्यक्तः शंकरस्तुर्यसंज्ञितः । तेषां योगे गणेशानः स्वानंदाख्यः प्रकीर्तितः ॥१२॥ सर्वसंयोगकर्तृत्वात् मायायुक्तो गणेश्वरः । स्वसंवेद्येन योगेन लभ्यतेऽरुण निश्चितम् ॥१३॥ तस्मात्परो ह्ययोगश्च स्वसंवेद्यविवर्जितः । तयोर्योगे गणेशानो वेदे पश्य विचक्षण ॥१४॥ ब्रह्मणस्पतिवाच्योऽसौ वयं ब्रह्ममयाः किल । अस्माकं गणराजस्तु स्वामी तस्माद्भजामहे ॥१५॥ एवं तस्य वचः श्रुत्वाऽनूरुस्तं प्रणनाम ह । जगाद भक्तिसंयुक्तः सूर्यं तेजस्विनां पतिम् ॥१६॥ अरुण उवाच । गणेशप्राप्तये नाथ वदोपायं सुसौख्यदम् । भवामि गाणपत्यश्च येनाऽहं देवनायकः ॥१७॥ सूर्य उवाच । एकाक्षरविधानेन तं भजस्व तु काश्यप । हृदि चिंतामणिं दृष्ट्वा योगिवंद्यो भविष्यसि ॥१८॥ एवमुक्त्वा ददौ तस्मै मंत्रं गणपतेः प्रभुः । स विधिं तं प्रणम्याऽसौ जगाम वनमुत्तमम् ॥१९॥ ततोप तप उग्रं स गणेशध्यानतत्परः । योगमार्गेण विघ्नेशं साधयामास भक्तितः ॥२०॥ ततो योगींद्रवंद्यः स बभूव योगसेवया । चित्तं पंचविधं त्यक्त्वा रसयुक्तं जपे रतः ॥२१॥ एवं वर्षशतेष्वेवं गतेषु द्विरदाननः । आययौ वरदानार्थं भक्तिसंभावितः प्रभुः ॥२२॥ ततः सोऽपि गणेशानं न बुबोध महायशाः । हृदिध्यानेऽस्य संलीनस्तत्र चित्रं बभूव ह ॥२३॥ संज्ञायुक्तं गणेशानं रथस्थं स ददर्श ह । पुनः सिद्ध्या च बुद्ध्या च युक्तं दृष्ट्वा सुविस्मितः ॥२४॥ हृदि ध्यानं परित्यज्य नेत्रे उन्मील्य चारुणः । अपश्यत्तं बहिः सोऽपि गणेशं वरदायकम् ॥२५॥ ततोऽतिहर्षसंयुक्तः समुत्थाय ननाम तम् । पुपूज विधिसंयुक्तस्तुष्टावानम्य हर्षतः ॥२६॥ यावत् स्तोतुं समारेभे तावत्तं रथसंस्थितम् । रविं संज्ञायुतं दृष्ट्वा विस्मयं परमं ययौ ॥२७॥ गणेशकृपया तेन ज्ञातं सर्वं सुबुद्धिना । गणेशोऽयं रविः प्रोक्तो विकटत्वान्न संशयः ॥२८॥ नानाभेदमयी माया तत्रात्मा भेदवर्जितः । अतो विकटसंज्ञोऽयमात्माकारो गजाननः ॥२९॥ विकटरूपिणं सूर्यं भजिष्यामि निरंतरम् । कलांशं गणेराजस्य तेन तुष्टोऽयमंजसा ॥३०॥ एतदर्थं गणेशेन रूपं सूर्यात्मकं परम् । स्वकीयाभेदभावाख्यं दर्शितं मेऽत्र सांप्रतम् ॥३१॥ ततोऽतिभक्तिसंयुक्तः साश्रुनेत्रो बभूव ह । नियम्यात्मानमानंदयुक्तस्तोत्रं प्रचक्रमे ॥३२॥ अरुण उवाच । नमस्ते गणनाथाय तेजसां पतये नमः । अनामयाय देवेश आत्मने ते नमो नमः ॥३३॥ ब्रह्मणां पतये तुभ्यं जीवानां पतये नमः । आखुवाहनगायैव सप्ताश्वाय नमो नमः ॥३४॥ स्वानंदवासिने तुभ्यं सौरलोकनिवासिने । चतुर्भुजधरायैव सहस्रकिरणाय

च ॥३५॥ सिद्धिबुद्धिपते तुभ्यं संज्ञानाथाय ते नमः। विघ्नहंत्रे नमोहंत्रे हेरंबाय नमो नमः ॥३६॥ अनंतविभवायैव नामरूपप्रधारिणे। मायाचालक सर्वेश सर्वपूज्याय ते नमः ॥३७॥ ग्रहराजाय दीप्तीनां दीप्तिदाय यशस्विने। गणेशाय परेशाय विघ्नेशाय नमो नमः ॥३८॥ विवस्वते भानवे ते रवये ज्योतिषां पते। लंबोदरैकदंताय महोत्कटाय ते नमः ॥३९॥ यः सूर्यो विकटः सोऽपि न भेदो दृश्यते कदा। भक्तिं देहि गजास्य त्वं त्वदीयां मे नमो नमः ॥४०॥ किं स्तौमि त्वां गणाधीश योगाकारस्वरूपिणम्। चतुर्धा भज्य स्वात्मानं खेलसि त्वं न संशयः ॥४१॥ एवं स्वस्य स्तुतिं श्रुत्वा विकटो रूपमादधे। वामांगे संज्ञया युक्तं गजवक्त्रादिचिह्नितम् ॥४२॥ तं दृष्ट्वा प्रणनामाथानूरुर्हर्षसमन्वितः। तं जगाद गणाधीशो वरं वृणु हृदीप्सितम् ॥४३॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदायकम्। भविष्यति न संदेहश्चिंतितं स लभेत् परम् ॥४४॥ शृणुयाद्वा जपेद्वाऽपि तस्य किंचिन्न दुर्लभम्। भविष्यति महापक्षिन् मम संतोषकारकम् ॥४५॥ गणेशवचनं श्रुत्वाऽनूरुस्तं प्रणिपत्य च। जगाद साश्रुनेत्रः सन् सरोमांचो गजाननम् ॥४६॥ अनूरुरुवाच। भक्तिं देहि गणाधीश तव पादांबुजाश्रिताम्। गाणपत्यप्रियत्वं मे सदा संगं महात्मनाम् ॥४७॥ तथेति तमथोक्त्वाऽसौ विकटोंऽतर्दधे स्वयम्। अनूरुः खेदसंयुक्तोऽभवत्तत्रैव संस्थितः ॥४८॥ ततः संस्थापयामास मूर्तिं गणपतेर्द्विजैः। भानुविनायक इति नाम चक्रे सुहर्षितः ॥४९॥ पूजयित्वा गणेशानं सूर्यं समागतोऽभवत्। अरुणस्तं प्रणम्यैव वृत्तांतं कथयत् परम् ॥५०॥ तेनैवं स्थापितं तत्रारुणो गणपतिं परम्। अभजद्रथसंस्थश्च योगशांतिपरोऽभवत् ॥५१॥ एवं विकटमाहात्म्यं भानुविघ्नेशगं परम्। तदीयांशावतारस्थं कथितं सर्वसिद्धिदम् ॥५२॥ शृणुयाद्यः पठेद्वापि श्रावयेद्वा नरः किल। स ईप्सितफलं प्राप्यांते स्वानंदमवाप्नुयात् ॥५३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठ खंडे विकटचरिते भानुविनायकचरितं नाम त्रिचत्वारिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । एकमेवाद्वितीयं यद्ब्रह्म वेदेषु शक्तयः। तदेव विकटः प्रोक्तस्तेन माया प्रकाशिता ॥१॥ मायायां बिंबितं ब्रह्म विकटस्य महात्मनः। आत्माकारं च सर्वत्र भ्रमस्थं जीववाचकम् ॥२॥ संज्ञा जाता ततस्तस्य विकटस्य परात्मनः। सा संज्ञाऽभूद्रवेर्भार्या माया खेलकरी परा ॥३॥ तस्यां बिंबमयाद्वीर्यान्नाना जीवा बभूविरे। तेषां सूतिकरः सोऽपि सूर्य इत्यभिधीयते ॥४॥ संज्ञया संयुतः सूर्यो ज्ञानहीनो बभूव ह। तपस्तताप घोरं स गणेशस्य महात्मनः ॥५॥ दिव्यवर्षसहस्रेणैकाक्षरेण सुतोषितः । प्रसन्नस्तं ययौ सोऽपि भक्तवात्सल्यकारणात् ॥६॥ उवाच तं रविं देवो वरं ब्रूहि हृदीप्सितम्। दास्यामि तपसा तुष्टो भवेद्यदपि दुर्लभम् ॥७॥ ततो भानुर्गणेशानं दृष्ट्वा हर्षसमन्वितः। संज्ञया सहसोत्थाय प्रणनाम गजाननम् ॥८॥ पुनः पुनर्ननामाथ तं संपूज्य महायशाः। कृत्वा करपुटं संज्ञायुतः स्तोतुं प्रचक्रमे ॥९॥ सूर्य उवाच। नमस्ते विकटायैव मायामायिकरूपिणे । वामांगे संज्ञया युक्त दक्षिणांगे च भानवे ॥१०॥ तयोर्योगे गणाधीश सिद्धिबुद्धिपतिर्मतः। गजाननादिचिह्नैश्च संयुतस्ते नमो नमः ॥११॥ एकमेवाद्वितीयं यद्ब्रह्म तद्वर्णये कथम्। धन्योऽहं सर्वभावेन देवं दृष्ट्वा गजाननम् ॥१२॥ गजाननाय सर्वादिपूज्याय परमात्मने। हेरंबाय सदा ज्येष्ठराजाय ते नमो नमः ॥१३॥ परेशाय महाविघ्ननाशनाय महात्मने । दुरात्मभ्यो महाविघ्नदायकाय नमो नमः ॥१४॥ अनाथाय सनाथानां नाथाय सर्वदायिने। अनाथानां प्रणाथाय नाथनाथाय ते नमः ॥१५॥ अनंतविभवायैवानंतमायाप्रधारिणे। ब्रह्मणस्पतये तुभ्यं कवये ते नमो नमः ॥१६॥ मूषकवाहनायैव सर्वांतरप्रचारिणे। मूषकध्वजिने तुभ्यं मयूरेश नमोस्तु ते ॥१७॥ किं स्तौमि त्वां गणाधीश पंचचित्तप्रचालक। अतोऽहं प्रणमाम्येव तेन तुष्टो भव प्रभो ॥१८॥ एवं संस्तुवतस्तस्य भक्त्या रोमोद्गमोऽभवत्। रुद्धकंठं प्रनृत्यंतं गणेशस्तं जगाद ह ॥१९॥ श्रीगणेश उवाच। मदीयस्तवनं चेदं सर्वदं संभविष्यति। त्वया कृतं पठेद्यश्च शृणुयात्तस्य सर्वदा ॥२०॥ यं यमिच्छति तं तं तु दास्यामि स्तोत्रपाठतः । संतुष्टोऽन्ते ब्रह्ममयं करिष्यामि महामते ॥२१॥ दास्यामि त्वं वरान् ब्रूहि ह्यधुना भक्तिमोहितः। सस्त्रीकस्तान् महाभानो मम भक्ततरो मतः ॥२२॥ भानुरुवाच। प्रसन्नोऽसि यदा ढुंढे देहि भक्तिं त्वदीयिकाम् । ज्ञानं स्वाभाविकं देहि नानाकार्यकरं प्रभो ॥२३॥ परं सामर्थ्यमतुलं देहि सर्वांतमधारकम्। मां कुरुष्व गणेशान गाणपत्यप्रियं सदा ॥२४॥ त्वं मे पुत्रो भव स्वामिन् संसारे तारणात्मकः। तत्र त्वां पुत्रभावेन भजिष्यामि निरंतरम् ॥२५॥ हृदये चित्तसंस्थं त्वां मूर्तौ देवस्वरूपिणम्। तेनाहं कृतकृत्यश्च भविष्यामि

गजानन ॥२६॥ ओमित्युक्त्वा गणाधीशस्ततोऽन्तर्धानगोऽभवत् । सूर्यस्तं चिंत्य स्वस्थानं जगाम प्रियया सह ॥२७॥ सूर्यः सत्तासमायुक्तो ज्ञानवान्निर्ममे परम् । असद्ब्रह्म ततः सर्वं नानारूपम कल्पयत् ॥२८॥ गणेशवरदानेन मोहहीनो बभूव ह । अभजत्तं सदा भानुर्भक्त्या योगींद्रवंदितः ॥२९॥ एकदा प्रियया युक्तः सस्मार गणनायकम् । तामिस्रासुरगर्वेण पीडितो बलवत्तरम् ॥३०॥ स्मृतया समागतं तत्र गणेशं पुत्ररूपिणम् । बालं शुंडाधरं वीक्ष्य तं पप्रच्छ विभावसुः ॥३१॥ सूर्य उवाच । कोऽसि त्वं वद मां बाल गणेशाकृतिधारक । किमर्थमिह चायातः किं गणेशो भवान् परः ॥३२॥ सूर्यस्य वचनं श्रुत्वा तं जगाद गजाननः । स्मृतिजोऽहं सुतो भानो तव विघ्नेश्वरः स्वयम् ॥३३॥ पुरा दत्तो वरस्तेन पुत्रोऽहं ते समागतः । पालयस्व पितर्मां त्वं संज्ञया सह मानद ॥३४॥ तस्य तद्वचनं श्रुत्वा संज्ञया सह चार्यमा । प्रणम्यापूज्य तुष्टाव अथर्वशिरसा प्रभुम् ॥३५॥ एतस्मिन्नंतरे तत्राऽऽजगाम सुरसत्तमः । तामिस्रस्तं विलोक्यैव पपाल सविता भयात् ॥३६॥ उत्थाय गणनाथस्तं जघान मुष्टिघाततः । पातयामास भूम्यां स निर्जीवं दैत्यपुंगवम् ॥३७॥ मृतं दैत्यं विलोक्यैवाऽऽजगाम सविता पुनः । तं प्रणम्य स्थितो दूरे गणेशेन विमोहितः ॥३८॥ मोहितः संज्ञया सार्धं भानुस्तं गृह्य पुत्रकम् । लालयामास हर्षेण पुत्रभावपरायणः ॥३९॥ गणेशमायया तत्र संज्ञा स्तन्यमपाययत् । वरं दत्वा गतं पुत्रं वरदाख्यं चकार तम् ॥४०॥ ततः सोऽन्तर्हित पुत्रो भानुः संमूर्च्छितोऽभवत् । संज्ञया च तयोर्दुंढिर्हृदि संस्थो बभूव ह ॥४१॥ मा शोकं कुरुतं तातौ न वियोगश्च मे क्वचित् । मूर्तिं कृत्वा सदा तत्र पूजयेथां निरंतरम् ॥४२॥ ततस्तौ सावधानौ तु तथा चक्रतुरादरात् । भक्त्या गणपतिं नित्यं भजतः परमेश्वरौ ॥४३॥ शक्तय ऊचुः । कोऽसौ तामिस्रसंज्ञश्चासुरस्तस्य चरित्रकम् । वद शक्ते यदर्थं तु वरदः संबभूव ह ॥४४॥ आदिशक्तिरुवाच । सूर्योऽहंकारसंयुक्तो बभूव जीवनात्मकः । सर्वेषां दीप्तिदाताऽहं मम दीप्तिकरो न च ॥४५॥ एवं बहौ गते काले विस्मृतो गणनायकम् । छायायां तस्य जज्ञेऽयं तामिस्रः पुरुषाकृतिः ॥४६॥ तं दृष्ट्वा हर्षितो भानुः पुत्रं मेने हितावहम् । अंधकारकरं पूर्णं वरदस्तमुवाच ह ॥४७॥ भानुरुवाच । त्रिगुणात्तभयं पुत्र भविष्यति कदाचन । त्रैलोक्यराज्यमुग्रं ते मया दत्तं विशेषतः ॥४८॥ यद्यदिच्छसि तत्तत्ते सफलं सर्वदा किल । भविष्यति च तामिस्र नाम भव सुभाग्यवान् ॥४९॥ तं प्रणम्य महादैत्यः पातालमगमन्मुदा । शुक्रेण प्रेरितैर्दैत्यैः कृतो राजा सुरद्विषाम् ॥५०॥ सह तैर्मदसंयुक्तो जिग्ये ब्रह्मांडमंडलम् । राज्यं चकार दैत्येशैर्महाबलयुतो बभौ ॥५१॥ रविं तेजस्विनं दृष्ट्वा वैरभावेन

संयुतः । अंधकारेण नित्यं संछादयामास शक्तयः ॥५२॥ निरर्थकं चकारासौ सूर्यं तेजस्विनां वरम् । नानायत्नपरः सूर्यस्तं जेतुं न शशाक ह ॥५३॥ ततोऽहंकारहीनः स सस्मार गणनायकम् । गणेशेन हतो दैत्यः सूर्यभावप्ररक्षणात् ॥५४॥ एतत् सर्वं समाख्यानं सूर्यपुत्रस्य चेष्टितम् । वरदस्य महादेव्यः सर्वसिद्धिकरं परम् ॥५५॥ शृणुयादिदमाख्यानं पठेद्वा तस्य सर्वदम् । भविष्यनि सदा चांते ब्रह्मभूयप्रदायकम् ॥५६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटवरदचरितं नाम चतुश्चत्वारिंशत्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ आदिशक्तिरुवाच । एवं नानावताराश्च धृतास्तेन महात्मना । विकटेन महादेव्यः संख्यातुं नैव शक्यते ॥१॥ भक्तिप्रियस्वभावेन भक्तानां विघ्ननाशनात् । कुरुते स्वावतारान् स विकटः परमेश्वरः ॥२॥ मयूरक्षेत्रमधुना गच्छध्वं तत्र चाप्यहम् । संस्थिता पूर्णरूपेणात्र कलांशात्मिका मुदा ॥३॥ तत्र विघ्नेश्वरं भक्त्या सेवध्वं शक्तयः पराः । तेन योगींद्रवंद्याश्च भविष्यथ न संशयः ॥४॥ विषयादिषु भावेषु मा चित्तं कुरुत प्रियाः । गाणेशमार्गमाश्रित्य भजध्वं विकटं परम् ॥५॥ वेदादिषु गणेशस्य प्रीतिदं कर्म चोत्तमम् । तदेव भक्तिसंयुक्ताः कुरुध्वं नित्यमादरात् ॥६॥ गणेशमूर्तेश्च हृदि चिंतनं कुरुत प्रियाः । मानसीं बाह्यपूजां च गणेशप्रीणनाय ताम् ॥७॥ विषयेषु विरक्तत्वाद्विकटा भक्तिरुत्तमा । गणेशे सक्तचित्ता सा कर्तव्या नित्यमादरात् ॥८॥ मुद्गल उवाच । एवमुक्त्वा ददौ ताभ्यो मंत्रमेकाक्षरं परम् । सविधिं गणराजस्य ततो मौनं समादधे ॥९॥ प्रणम्य शक्तयः सर्वास्ततस्तां भक्तिसंयुताः । महाकालीमुखा दक्ष ययुः क्षेत्रं मयूरकम् ॥१०॥ मयूरके तत्र देवीं ददृशुस्ताः सुहर्षिताः । प्रणम्यापूज्य तां ढुंढिं ततस्तेपुस्तपो महत् ॥११॥ शतवर्षे गते तासां पुरतो मयूरेश्वरः । समाययौ ततस्तां ताः प्रणेमुर्हर्षसंयुताः ॥१२॥ पूज्य नानाविधैर्देवमुपचारैर्मनोरमैः । पुनः प्रणम्य विघ्नेशं तुष्टुवुः करसंपुटाः ॥१३॥ महाकालीमहालक्ष्मीमहासरस्वतय ऊचुः । मयूरेशाय विघ्नेशाय भक्तविघ्नहारिणे । विघ्नदात्रे ह्यभक्तेभ्यो गणेशाय नमो नमः ॥१४॥ लंबोदराय देवाय मूषकध्वजिने नमः । अनाथानां सनाथाय नमो नाथाय ते नमः ॥१५॥ परेशाय महेशेभ्यः सिद्धिदाय गजानन । अनंताय सदा स्वेभ्यः सर्वदाय नमो नमः ॥१६॥ ब्रह्मणां पतये तुभ्यं सदा

शांतिमयाय च। शांतीनां शांतिरूपाय परात्मने नमो नमः ॥१७॥ हेरंबाय नमस्तुभ्यं कवये कविरूपिणे । कविभ्यः पददात्रे च कवीशाय नमो नमः ॥१८॥ सिद्धिबुद्धिवरायैव सिद्धिबुद्धिप्रदायिने । सिद्धिबुद्धिप्रचालाय तद्रूपाय नमो नमः ॥१९॥ मायामायिकचिह्नाद्यैः प्रखेलकस्वरूपिणे। योगशांतिस्थभावाय शांतिदाय नमो नमः ॥२०॥ शक्तये भानवे तुभ्यं विष्णवे शंकरात्मने । नानारूपधरायैव खेलकाय नमो नमः ॥२१॥ किं स्तुमस्त्वां गणाधीश यत्र शांतिं प्रलेभिरे। वेदादयः शिवाद्याश्च नमामो मयूरध्वज ॥२२॥ भक्तिं ने देहि सर्वेश वासं क्षेत्रे त्वदीयिके। तथेति ना गणाधीशो ह्यगदद्भक्तियंत्रितः ॥२३॥ इदं स्तोत्रं पठेद्यस्तु शृणुयात् स लभेत् परम् । इह भुक्त्वाऽखिलान् भोगानंते स्वानंदमाप्नुयात् ॥२४॥ एवं दक्ष महच्चित्रं चरितं कथितं मया । विकटस्य समासेन सर्वसिद्धिप्रदायकम् ॥२५॥ नानेन सदृशं किंचित् सर्वदं कुत्र वर्तते। साक्षाद्ब्रह्मप्रदं पूर्णं तत्र किं वर्णयाम्यहम् ॥२६॥ इदं विकटमाहात्म्यं शृणुयाद्यो नरोत्तमः । श्रावयेच्च पठेत्सोऽपि सर्वसिद्धिमवाप्नुयात् ॥२७॥ एकमावर्तनं नित्यं यः कुर्यात् स मतो परः । साक्षाद्विकटरूपः स दर्शनात् पावनो नृणाम् ॥२८॥ यावंति साधनान्येव साधयेत् परमाहृतः । शतवारं लभेत् पुण्यं खंडस्यास्य श्रवाच्च तत् ॥२९॥ इष्टापूर्तादिकं यस्तु कुर्याद्भक्तिसमन्वितः । तस्माच्छतगुणं पुण्यं श्रवणादस्य संलभेत् ॥३०॥ पुराणोपपुराणानि सेतिहासानि नित्यशः । शृणुयाच्च ततः पुण्यमनेन स्याच्छताधिकम् ॥३१॥ बहुनात्र किमुक्तेन यत्र ब्रह्मपतिः परः । वर्णितो विकटस्तेन समं किं संभवेद्वद ॥३२॥ सूत उवाच । एवमुक्त्वा महायोगी मुद्गलो विरराम ह । दक्षो हर्षयुतोऽत्यंतं प्रणनाम च मुद्गलम् ॥३३॥ मया संपूर्णभावेन कथितं ते द्विजोत्तम। कामनाशकरं पूर्णं विकटस्य चरित्रकम् ॥३४॥ धर्मार्थकाममोक्षाणां ब्रह्मभूयस्य दायकम् । नानेन सदृशं किंचित् किं भूयः श्रोतुमिच्छसि ॥३५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे षष्ठे खंडे विकटचरिते विकटचरितसमाप्तिवर्णनं नाम पंचचत्वारिंशत्तमोऽध्यायः ॥

॥ इति श्रीमुद्गलपुराणे षष्ठः खंडः समाप्तः ॥

॥ श्रीगजाननार्पणमस्तु ॥

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । विकटस्य चरित्रं वै श्रुत्वा सूत महामते । हर्षितोऽहं विशेषेण ब्रह्मभूयप्रकाशकम् ॥१॥ यत्किंचिद्गणराजस्य चेष्टितं व्यासशिष्यक । तदेव ब्रह्मसायुज्यदायकं नाऽत्र संशयः ॥२॥ धन्यं भाग्यं मुनींद्राणां मदीयं येन ते द्विज । दर्शनं साधुरूपस्य जातं योगप्रदस्य च ॥३॥ योगवृष्टिमयीं गाथां च्युतां त्वन्मुखमेघतः । पीत्वा न यामि तृप्तिं च सुधां पीत्वा यथा नरः ॥४॥ अधुना कृपया ब्रूहि विघ्नराजस्य चेष्टितम् । ममासुरविनाशाख्यं ब्रह्मप्राप्तिकरं परम् ॥५॥ सूत उवाच । मुद्गलस्य मुखात् पुण्यां कथां श्रुत्वा प्रजापतिः । विकटस्य पुनस्तं च जगादैव स हर्षितः ॥६॥ दक्ष उवाच । धन्यं मे जन्म कर्मादि येन तेऽभूत्समागमः । वदसे योगदां पूर्णां कथां योगींद्रवंदित ॥७॥ आंगिरसकुले साक्षाद्योगरूपधरः प्रभो । त्वं जातोऽसि न संदेहः कुलतारक एव च ॥८॥ अधुना वद माहात्म्यं विघ्नराजस्य सर्वदम् । श्रुतं विकटमाहात्म्यं न तृप्तोऽहं तु मुद्गल ॥९॥ कीदृशं ब्रह्म तस्याऽपि किमर्थं देहधारकः । किं कर्मा कुत्र वासः संतिष्ठते विघ्ननायकः ॥१०॥ कस्य दैत्यस्य हंताऽसौ चरित्रं वद सर्वपम् । विघ्नराजस्य सर्वं तु विचारेण महात्मनः ॥११॥ मुद्गल उवाच । दक्ष त्वं योगिवंद्यश्च भविष्यसि न संशयः । कथां श्रुत्वा गणेशस्य प्रीतिः संवर्धते यतः ॥१२॥ समासेन प्रवक्ष्यामि विघ्नराजस्य सौख्यदम् । चरित्रं शृणु भावेन सर्वसिद्धिप्रदायकम् ॥१३॥ अत्र ते कथयिष्यामि पुरातनभवं परम् । इतिहासं कश्यपस्य दित्याः संवादसंयुतम् ॥१४॥ महासुरौऽदितेः पुत्रौ हिरण्यकशिपुर्महान् । हिरण्याक्षो हतो पूर्वं विष्णुना मायया परौ ॥१५॥ ततोऽतिशोकसंयुक्ता दितिः कश्यपमाययौ । सेवायां निरता तस्य नित्यं भक्तिपरायणा ॥१६॥ एवं बहौ गते काले काश्यपस्तोषमाययौ । तामुवाच वरं ब्रूहि ततस्तं सा जगाद ह ॥१७॥ दितिरुवाच । मम पुत्रौ हतौ तेन विष्णुना मघवार्थतः । अत इंद्रघ्नपुत्रं मे देहि तुष्टोऽसि कश्यप ॥१८॥ तस्यास्तद्वचनं श्रुत्वा शोकयुक्तो बभूव ह । अहो साधुचरित्राऽपि स्त्री विश्वास्या न केनचित् ॥१९॥ अधुना किं करिष्यामि धर्मपालकमुत्तमम् । साधुं गुणयुतं पुत्रमिंद्रं रक्षामि वै कथम् ॥२०॥ अतो विघ्नेश्वरं स्मृत्वा तां जगाद प्रजापतिः । व्रतं कुरु प्रयत्नेन वर्षमात्रं महाखले ॥२१॥ तदा ते भविता पुत्रो हंतेंद्रस्य न संशयः । छिद्रं मा कुरु भावेन व्रते विघ्नयुताऽपि चेत् ॥२२॥ एवमुक्त्वा गणेशं स ध्यात्वा रेमे तया सह । तस्यां वीर्यं समाधाय व्रतं ददौ सुपुत्रदम् ॥२३॥ प्रणम्य स्वगृहं सा तमाययौ हर्षसंयुता । व्रतं चकार यत्नेन नियमस्था प्रजापते ॥२४॥ तत इंद्रेण वृत्तांतो ज्ञातो नारदवाक्यतः । गणेशं मनसि ध्यात्वा निःश्वासं स मुमोच ह ॥२५॥

ततस्तस्य हृदिस्थो वै विघ्नराजो मतिं ददौ । इंद्रस्तामाययौ देवीं मातरं सेवनोत्सुकः ॥२६॥ दितिं सिषेवे नित्यं स व्रतयुक्तां प्रणम्य ह । छिद्रदर्शी प्रजानाथ भक्तियुक्तः प्रतापवान् ॥२७॥ नवमासा गतास्तत्र तथापि छिद्रकं परम् । किंचिन्न ददर्श सोऽपि विह्वलोऽभूत् सुरेश्वरः ॥२८॥ विघ्नराजं हृदि ध्यात्वा चिंतायुक्तः सुराधिपः । तां सिषेवे युतो भक्त्या सदा तन्मयचेतसा ॥२९॥ दशभिर्दिवसैर्न्यूनं वर्षं तत्र गतं किल । ततोऽतितापसंयुक्तः किं भविष्यति विह्वलः ॥३०॥ ततो विघ्नकरो विघ्नं चकार परमाद्भुतम् । स्वयं सा मोहिता देवी भ्रांता जाता सहर्षतः ॥३१॥ विचारमकरोच्चित्ते व्रते संवत्सरो गतः । किंचिन्न्यूना च मे वाञ्छा सिद्धा जाता न संशयः ॥३२॥ हित्वा त्रिलोकगं राज्यं सुत ऐंद्रं करिष्यति । ममोदरात् समुत्पन्नः कृतकृत्याऽस्मि सांप्रतम् ॥३३॥ ततोऽतिनिद्रया देवी पीडिता मस्तकं मुदा । जानुमध्ये समाकृत्य सुष्वाप मोहसंयुता ॥३४॥ दिवसे निद्रया तस्या व्रतं भग्नं बभूव ह । जानुमध्ये शिरस्तेन हृ छिद्रं संबभूवतुः ॥३५॥ इंद्रस्तां तादृशीं दृष्ट्वा हर्षितोऽभूद्गजाननम् । स्मृत्वा वज्रं समागृह्योदरं विवेश मायया ॥३६॥ तत्र तेजोयुतं गर्भं ददर्श देवनायकः । चकार तस्य वज्रेण सप्त खंडानि वैरतः ॥३७॥ तपसोग्रेण दित्याः स न ममार तथाप्यहो । रुरोद सप्तदेहस्थो गर्भस्तेजस्विनां वरः ॥३८॥ दृष्ट्वा विस्मितचित्तः स स्मृत्वा विघ्नेश्वरं पुनः । एकैकं सप्तधा कृत्वा संस्थितो वज्रधारया ॥३९॥ तथापि न ममाराऽसौ गर्भः परमपावनः । तावद्देहधरो भूत्वा रुरोद भयविह्वलः ॥४०॥ जगाद मघवंतं स गर्भो हंसि सुरेश्वर । किमर्थं भ्रातरस्ते वै वयं सर्वे न संशयः ॥४१॥ तेषां तद्वचनं श्रुत्वा पुनरिन्द्र उवाच तान् । वैरभावं परित्यज्य भविष्यथ दिवौकसः ॥४२॥ तथेति तैः कृतं तत्र बहिरिंद्रः समाययौ । ततो दितिः प्रजानाथ जजागार शुशोच ह ॥४३॥ एतस्मिन्नंतरे तत्र पुत्रान् सा सुषुवे परान् । एकोनपंचाशत्कांस्तु वीक्ष्य चेंद्रमुवाच सा ॥४४॥ दितिरुवाच । इंद्र किं बहवः पुत्रा एकः संकल्पितोऽभवत् । वद सत्यं महाभाग चेज्जानासि सुरेश्वर ॥४५॥ इंद्र उवाच । मया ज्ञातं त्वदीयं यच्चेष्टितं मेऽत्र नाशकम् । मातस्तदर्थमायातः सेवार्थं ते न संशयः ॥४६॥ छिद्रं दृष्टं व्रते मातस्तत एतत् कृतं मया । वज्रेण जठरे गत्वा गर्भं छित्वा बहिर्गतः ॥४७॥ तपोबलेनैव तव न मृतास्ते सुता इमे । स्वयं प्राणधरा जाता वायवश्च भवंतु हि ॥४८॥ तान् गृह्य मघवा स्वर्गं जगाम न शशाप सा । सत्यभाषणसंयुक्तमिंद्रं तुष्टा बभूव ह ॥४९॥ कदा दैत्यान् समालोक्य

दीनान् शोकपरायणा। पुनः कश्यपमागत्य प्रणनाम पतिव्रता ॥५०॥ जगाद तं सुदुःखेन युक्ता प्रजापतिं वचः। विनयेन समायुक्ता स्वार्थमोहयुता परा ॥५१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते दितिशोकवर्णनं नाम प्रथमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दितिरुवाच। स्वामिन् पुत्रौ मृतावादौ पुनस्त्वद्दूरदानतः। पुत्रो जातो महेंद्रस्य मित्रं नानास्वरूपधृक् ॥१॥ दैत्या दुःखयुता नाथ तदर्थं किं करोम्यहम्। निष्फलो मे समारंभो भवति स्म निरंतरम् ॥२॥ मूर्धनि त्वयि मे नाथ समर्थे दुःखमीदृशम्। मया प्राप्तं विशेषेण किं करोमि वदस्व माम् ॥३॥ पुत्रपौत्रादिसंयुक्तः संसारः परिकीर्तितः। स एव त्वयि संस्थे मे निष्फलः प्रबभूव ह ॥४॥ मुद्गल उवाच। तस्यास्तद्वचनं श्रुत्वा खिन्नायास्तां प्रजापतिः। जगाद स्मयमानः स योगींद्रः परमार्थवित् ॥५॥ कश्यप उवाच। मा खेदं कुरु कल्याणि कर्मणां गतिरीदृशी। संसारो दुःखमोहादियुक्तः शास्त्रे निगद्यते ॥६॥ दैत्याः पापसमाचारा देवाः पुण्यतमा मताः। पापिनां न सुखं देवि शाश्वतं वेदवादतः ॥७॥ कथितं वेदवादेषु वचनं सत्यमेव तत्। भविष्यति न संदेहो ममतां तत्र मा कुरु ॥८॥ पुत्रा जाताः प्रिये ते ये तेषां पुत्रादयः स्मृताः। एवं परंपरा जाता भविष्यति निरंतरम् ॥९॥ न वंशच्छेदिता ते तु भविष्यति कदाचन। दैत्या मृत्युयुताः प्रोक्ताः किमर्थं श्राम्यसे वृथा ॥१०॥ कश्यपस्य वचः श्रुत्वा दितिस्तं पुनरब्रवीत्। शोकसंतप्तगात्रा सा पतिं तेजस्विनां वरम् ॥११॥ दितिरुवाच। सृष्टिकर्ता स्वयं साक्षात्त्वं समर्थो न संशयः। अकर्तं कर्तुमीशश्चान्यथा कर्तुमपि प्रभो ॥१२॥ ममतां सर्वभावेषु त्यक्त्वा त्वं योगिसत्तम। संस्थितोऽसि यथा वेदवादं ज्ञात्वा महामते ॥१३॥ अहं मोहसमायुक्ता सदा तापत्रयान्विता। दहामि ममतात्यागमार्गं मे ब्रूहि मानद ॥१४॥ येन शांतिं समालभ्य स्थास्यामि दाहवर्जिता। तत्सुखेनैव भवतु भावि यत्तादृशीं कुरु ॥१५॥ तस्यास्तद्वचनं श्रुत्वा कश्यपो दयया युतः। शांतिमार्गार्थमेवं तां जगाद हर्षसंयुतः ॥१६॥ कश्यप उवाच। अत्र तेऽहं वदिष्यामीतिहासं च पुरातनम्। तं ज्ञात्वा शांतियुक्ता त्वं भजि-

ष्यसि गजाननम् ॥१७॥ हिमाचलसुता जाता पार्वती भगिनी च ते । तपसाऽऽराधिता तेन महामाया परात्परा ॥१८॥ हिमाचलं समाश्रित्य शिवो ध्यानपरायणः । तताप तप उग्रं स गणेशं चिंत्य सर्वदा ॥१९॥ अत्रागत्य महेशानं पार्वती सेवनोत्सुका । पतिं ज्ञात्वा विशेषेण सिषेवे यत्नसंयुता ॥२०॥ महादेवो विदित्वा तां मनसि क्रोधमादधे । मामुल्लंघ्य गता दक्षाध्वरे चेयं विशेषतः ॥२१॥ स्वाज्ञाहीना न योग्या वै पत्नी वेदे प्रकीर्तितम् । अतः पत्नीविहीनः सन् भजेऽहं विघ्नपं सदा ॥२२॥ एवं मनसि संधार्य न तां मेने महेश्वरः । समागतां तया सोऽपि भाषणं न चकार ह ॥२३॥ ततोऽतिखेदसंयुक्ता पार्वती तं महेश्वरम् । सिषेवे भक्तिसंयुक्ता नियमस्था सुरूपिणी ॥२४॥ हावभावसमायुक्तां नित्यं सेवापरायणाम् । जगाम पर्वताद्वीक्ष्य पतिभावकरीं शिवः ॥२५॥ गतं सदाशिवं वीक्ष्य पार्वती शोकसंयुता । देहत्यागे समारब्धा सस्मार द्विरदाननम् ॥२६॥ तस्य स्मरणमात्रेण स्फूर्तिर्जाता परा हृदि । विचारमकरोच्चित्ते शिवा दुःखसमन्विता ॥२७॥ मां त्यक्त्वा शंकरो देवो गतो मानसमन्वितः । न वृणोति कदाचित् स निश्चितं शंकरेण तत् ॥२८॥ वेदे संकथितं वाक्यं तपसा दुर्लभं कदा । किंचिद्भवेन्न तं देवं तपसाऽऽराधयाम्यहम् ॥२९॥ एवं निश्चित्य सा देवी तताप तप उत्तमम् । ध्यात्वा सदाशिवं नित्यं वनस्था सखिसंयुता ॥३०॥ पंचाक्षरविधानेन तोषयामास शंकरम् । लिंगपूजापरा देवी नानातपःपरायणा ॥३१॥ एवं बहौ गते काले न तुतोष सदाशिवः । क्रोधयुक्तः स्वभावेन न तां मेने कदाचन ॥३२॥ ततो विघ्नेश्वरं देवी मंत्रेणैकाक्षरेण च । तोषयामास तं ध्यात्वा नित्यं पूजापरायणा ॥३३॥ त्यक्त्वा सदाशिवं देवी गणेशभजने रता । ततः स्वल्पेन कालेन शिवबुद्धिश्चचाल ह ॥३४॥ श्रावणे शुक्लपक्षे सा चतुर्थ्यां मृन्मयं परम् । कृत्वा गणेश्वरं नित्यं पूजयामास भक्तितः ॥३५॥ वायुमात्राशना देवी तां मूर्तिं भावसंयुता । पूज्य ध्यानपरा भूत्वा जजाप मंत्रमुत्तमम् ॥३६॥ पुरश्चरणमार्गेण मंत्रं जजाप नित्यदा । ततस्तां शंकरो देवो मनसा संगतोऽभवत् ॥३७॥ शिवश्चिंतां चकारैवं देवी तपसि संस्थिता । अधुना तां गमिष्यामि मदर्थं नियमान्विताम् ॥३८॥ देहभृदपराधैश्च संयुक्तो जायते कदा । अतः क्षमापनं कृत्वा वरिष्यामि न संशयः ॥३९॥ एवं विचार्य देवेशस्तां ययौ पार्वतीपतिः । दृष्ट्वा श्रमयुतां देवीं विस्मितो मोहितोऽभवत् ॥४०॥ ब्रह्मचारिस्वरूपेण निंदयामास शंकरम् । सा तं क्रोधयुता भर्त्स्य निर्ययौ वनगाचरत् ॥४१॥ ततोऽतितोषसंयुक्तः शंकरो रूपमादधे । स्वकीयं तद्विलोक्यैव ननाम जगदंबिका ॥४२॥ तुष्टाव तं महादेवं ततः स

वरदोऽभवत् । जगाद मोहसंयुक्तः पार्वतीमीश्वरेश्वरः ॥४३॥ शिव उवाच । वरं वृणु महाभागे तपसा विजितस्त्वया । दास्यामि नात्र संदेहस्त्वदधीनोऽहमादरात् ॥४४॥ त्वदाज्ञावशगो भूत्वा स्थास्यामि नित्यमंजसा । भार्या मे भव कल्याणि पतिस्तेऽहं पुरातनः ॥४५॥ पार्वत्युवाच । यदि प्रसन्नभावेन वरं दास्यसि शंकर । तदा मे पितरं गत्वा भार्यार्थं याचयस्व माम् ॥४६॥ पतिव्रतात्मकं धर्मं देहि मे विघ्नहीनकम् । तेन तुष्टा महादेव त्वयि नित्यं परायणा ॥४७॥ शिव उवाच । त्वयोक्तं सफलं सर्वं भविष्यति न संशयः । पितरं याचयित्वा ते त्वां वरिष्यामि निश्चितम् ॥४८॥ अहो तपो ह्यहो धैर्यमतस्ते देहजो मलः । सर्वपूज्यो महादेवि भविष्यति न संशयः ॥४९॥ कश्यप उवाच । तस्मिन् दिने तृतीया तु भाद्री शुक्ला बभूव ह । शिवेन संयुता देवी गणेशानं पुपूज ह ॥५०॥ ततश्चतुर्थिकायां सा होमं चकार हर्षिता । पंचम्यां ब्राह्मणैः सार्धं पारणं जगदंबिका ॥५१॥ महोत्सवयुता देवी मूर्तिं तां गृह्य हर्षिता । जले चिक्षेप विघ्नेशं प्रार्थयामास यत्नतः ॥५२॥ ततः शिवो जगामैव स्वस्थानं हर्षसंयुतः । गत्वा प्रणम्य पितरं पार्वती संस्थिताऽभवत् ॥५३॥

॥ ओमिति मदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते शिवपार्वतीसमागमो नाम द्वितीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कश्यप उवाच । गणेशव्रतपुण्येन मोहितः शंकरः सदा । तन्मना अभवद्देवो विप्रवेषधरो बभौ ॥१॥ हिमाचलं समागम्य स्मृत्वा विघ्नेश्वरं शिवः । नानाकलां प्रदर्श्यैव मोहयामास तं क्षणात् ॥२॥ हिमाचलो जगादैव वरं वृणु यमिच्छसि । दास्यामि मदधीनं चेन्नात्र कार्या विचारणा ॥३॥ द्विज उवाच । उमां देहि नगाधीश नान्यं याचे वरं परम् । ततः स खेदसंयुक्तस्तूष्णीमेवाऽभवद्गिरिः ॥४॥ तं चातिशोकसंयुक्तं दृष्ट्वोवाच जगन्मयी । उमा तं देहि मां तात शिवोऽयं नात्र संशयः ॥५॥ ततः स हर्षितोऽत्यंतं ददौ तस्मै सुतां प्रिये । शिवः स्वस्थानमागम्य देवैः संमानितोऽभवत् ॥६॥ लग्नं शुभं समालोक्य पूजयित्वा गजाननम् । देवादिभिः समायुक्तः पर्वतेशं ययौ शिवः ॥७॥ हिमाचलः प्रसन्नात्मा विवाहमकरोत्ततः । शिवयोर्भक्तिसंयुक्तो ब्राह्मणैर्वेदपारगैः ॥८॥ शिवां गृह्य महेशानः कैलासमगमत् स्वयम् । तया रेमे

महायोगी ततः स्कंदो बभूव ह ॥९॥ गणेशानं समाराध्य तारकं दैत्यनायकम् । जघान सुखसंयुक्तं चकार सचराचरम् ॥१०॥ शिवः शक्त्या समायुक्तो मोहितो मायया भृशम् । तदधीनस्वभावेनाऽतिष्ठन्नित्यं महासती ॥११॥ कदाचित् पार्वती देवी सखीभिः संवृता स्थिता । मनसा धारयामास धन्याऽहं सर्वभावतः ॥१२॥ शिवं त्यक्त्वा दक्षगृहे गताऽहं मानसंयुता । देहं त्यक्त्वा पुनर्जाता हिमाचलगृहे सुता ॥१३॥ देवेशो मां ततस्त्यक्त्वा शंकरः पर्वतांतरे । गतः स्वयं स याचित्वाऽवृणोत् मां पितरं प्रभुः ॥१४॥ किं त्यक्त्वा मां गतः शंभुः किं पुनर्याचिता ह्युत । अधुना मदधीनः स वर्तते नात्र संशयः ॥१५॥ मदीया ममता सर्वा पूर्णा जाता विशेषतः । मानिनीनां रहस्यं तु मया संरक्षितं भवेत् ॥१६॥ एवं मनसि हर्षेण धन्यात्मानं नगात्मजा । मेने नित्यं ततः सर्वाः सख्यस्तां वचनं जगुः ॥१७॥ सख्य ऊचुः । धन्या त्वं मानिनीमध्ये मानो जित्वा तु शंकरम् । तपसा रक्षितो देवि त्वदधीनः शिवोऽभवत् ॥१८॥ तच्छ्रुत्वा जगदंबा साऽतीव मानयुताऽभवत् । हास्यं चकार तत्रैव चित्रं देवि बभूव ह ॥१९॥ तस्या हास्यात् समुत्पन्नः पुरुषः कामसन्निभः । ममनामा महाभागो महान् पर्वतसन्निभः ॥२०॥ सा दृष्ट्वा विस्मिता देवी सखीभिस्तमुवाच ह । कस्त्वं कस्मादिहायातः कस्य किं च चिकीर्षसि ॥२१॥ पुरुष उवाच । तव हास्यात् समुत्पन्नं पुत्रं मां विद्धि मानदे । आज्ञां कुरु करिष्यामि त्वदीयां सर्वभावतः ॥२२॥ पार्वत्युवाच । मया मानः कृतः पूर्णः तस्मात् त्वं निर्गतः स्वयम् । ममनामा भवस्वाद्य पुत्र मानपरायणः ॥२३॥ गणेशं भज भक्त्या त्वं स ते सर्वं प्रदास्यति । तेन सर्वत्र विश्वस्मिन् विख्यातः प्रभविष्यसि ॥२४॥ ततस्तस्मै महादेवी ददौ मंत्रं षडक्षरम् । गणेशस्य प्रहर्षेण विधियुक्तं सुताय सा ॥२५॥ स तां प्रणम्य देवेशीं तपसे वनमाययौ । तत्राऽऽजगाम दैत्येशः शंबरः कालचोदितः ॥२६॥ पप्रच्छ पार्वतीपुत्रस्तं दृष्ट्वा को भवानिति । किमर्थमिह संयातो वद मे कारणं महत् ॥२७॥ शंबर उवाच । विद्यां दातुं महाभाग समायातोऽहमादरात् । समर्थस्त्वं तया नित्यं भविष्यसि न संशयः ॥२८॥ एवमुक्त्वा महादैत्यो विद्यां नानाविधां ददौ । आसुरीं तां ममो नाम साधयामास यत्नतः ॥२९॥ साधयित्वा स्वयं विद्यां कामरूपो बभूव ह । नानासामर्थ्यसंयुक्तस्ततो वै हर्षितोऽभवत् ॥३०॥ शंबरं प्रणिपत्यैव जगाद वचनं हितम् । भक्तियुक्तस्वभावेन कृतांजलिरुदारधीः ॥३१॥ ममासुर उवाच । त्वया कृतं महाभाग महत् कार्यं मदीयकम् । अधुना शिष्यभूतं ते शाधि मां किं करोम्यहम् ॥३२॥ शंबर उवाच । गणेशं शक्तिदत्तेन मंत्रेणाराध्य मानद । ब्रह्मांडराज्यमुग्रं तं याचयस्व महाप्रभुम् ॥३३॥

तत्त्वैश्च तत्त्वसंभूतैर्न मे मृत्युर्भवेत् प्रभो। याचस्व सर्वभावेन नान्यं कंचिद्वरं परम् ॥३४॥ वरान् लब्ध्वा महाभाग मद्देहे संगतो भव। पश्चात् किंचित् कुरुष्व त्वमिति याचेऽहमादरात् ॥३५॥ तथेति शंबरं सोऽपि ममनामा जगाद ह। शंबरः स्वगृहं गत्वा हर्षयुक्तो बभूव ह ॥३६॥ ममस्तत्र समासीनस्तपस्तेपे सुदारुणम्। वायुमात्राशनो देवि ध्यात्वा हृदि गजाननम् ॥३७॥ दिव्यवर्षसहस्रेण प्रसन्नो गणनायकः। प्राणशेषं ममं तत्र ययौ दातुं वरान् स्वयम् ॥३८॥ आगतं गणनाथं स न बुबोध महासुरः। ध्यानसंस्थं गणाधीशस्तमुवाच दयायुतः ॥३९॥ श्रीगणेश उवाच। वरान् ब्रूहि महाभाग मम ते हृदि संस्थितान्। दास्यामि तपसा तुष्टो मंत्रसेवनतः परम् ॥४०॥ गणेशवचनं श्रुत्वा मम उन्मील्य लोचने। पश्यन् विघ्नेश्वरं सोऽपि सत्तायुक्तो बभूव ह ॥४१॥ उत्थाय तं नमस्कृत्य पूजयामास भक्तितः। पुनः प्रणम्य तं स्तोतुं स्तोत्रं सोऽपि समारभत् ॥४२॥ ममासुर उवाच। नमस्ते गणनाथाय गणानां पतये नमः। गणपदप्रदात्रे ते गणरूपप्रधारिणे ॥४३॥ विघ्नानां पतये तुभ्यं विघ्नानां विघ्नरूपिणे। भक्तानां विघ्नहंत्रे ते इतरेषां प्रहारिणे ॥४४॥ अनाथानां प्रणानाथ नाथाय नाथदायिने। नाथानां नाथरूपायानाथाय तु नमो नमः ॥४५॥ ब्रह्मणां पतये तुभ्यं ब्रह्मभ्यो ब्रह्मदायिने। ब्रह्मणे ब्राह्मणानां च पालकाय नमो नमः ॥४६॥ अमेयशक्तये चैव शक्तिरूपधराय ते। शक्तिभ्यः शक्तिदात्रे ते शक्तिशक्ते नमो नमः ॥४७॥ परेशाय परेभ्यस्तु परपदप्रदायिने। पराय पररूपाय परात्पर नमोऽस्तु ते ॥४८॥ ज्येष्ठराजाय ज्येष्ठेभ्यः परपदप्रदायिने। ज्येष्ठाय ज्येष्ठहीनाय मात्रे पित्रे नमो नमः ॥४९॥ विघ्नेश्वरानंतविहारकारिन् स्वानंददात्रे सकलानुगोप्त्रे। सिद्धेश्च बुद्धेः पतये परात्मन् हेरंब सर्वत्र नमो नमस्ते ॥५०॥ किं स्तौमि योगप्रदमेकदंतं योगस्वरूपं परमार्थभूतम्। स्तोतुं न शक्ताः प्रभवंति वेदाः शंभ्वादयो योगिन एव ढुंढिम् ॥५१॥ धन्योऽहं सर्वभावेभ्यो दृष्ट्वा देवं गजाननम्। अगम्यं योगिनां साक्षात् कृतकृत्योऽहमंजसा ॥५२॥ वरदोऽसि गणाधीश तदा मे तत्त्वभिः कदा। न भवेत्तद्भवेभ्यो वै मरणं त्वत्प्रसादतः ॥५३॥ यद्यदिच्छामि तत्तन् मे सफलं भवतु प्रभो। आरोग्यादि समायुक्तं मां कुरुष्व गजानन ॥५४॥ राज्यं ब्रह्मांडगोलस्य देहि मे वाञ्छितप्रद। संग्रामे न समं तत्र किंचिद्भवतु विघ्नप ॥५५॥ सदा विजयसंयुक्तमजेयं शंकरादिभिः। मां कुरुष्व गणाधीशामोघशस्त्रप्रधारिणम् ॥५६॥ श्रीगणेश उवाच। दुर्घटं कथितं सर्वं त्वया दैत्येंद्रनायक। तुष्टस्तथापि

दास्यामि त्वयोक्तं ते भविष्यति ॥५७॥ स्तोत्रं भवत्कृतं मे च कामदं काममिच्छते । भविष्यति न संदेहो भुक्तिमुक्तिप्रदं तथा ॥५८॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मणां पतिः । ममासुरः प्रसन्नात्माऽभवच्छंबरगेहगः ॥५९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खण्डे विघ्नराजचरिते ममासुरवरप्रदानं नाम तृतीयोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कश्यप उवाच । शंबरं प्रणिपत्यादौ कथयामास विस्तरात् । वृत्तांतं ममनामाऽसौ हर्षितं तं चकार ह ॥१॥ मोहिनीं प्रददौ तस्मै स्वपुत्रीं शंबरासुरः । तया च संस्थितो रेमे प्रिये तत्र ममासुरः ॥२॥ ततः स्वल्पे गते काले शंबरः शुक्रमाययौ । तं प्रणम्य महाभागं वृत्तांतं प्रजगाद ह ॥३॥ ततः शुक्रेण दैत्येंद्राः प्रेरिताः सर्व आययुः । स्वयं शंबरसंयुक्तो जगाम ह ममासुरम् ॥४॥ शुक्रं समागतं दृष्ट्वा ममासुरः प्रतापवान् । तं प्रणम्य महाभागं कृतांजलिः पुरः स्थितः ॥५॥ पूजयामास तं विप्रं हर्षयुक्तेन चेतसा । प्रणम्य चाऽऽज्ञया तस्याऽऽसनेऽसौ संस्थितोऽभवत् ॥६॥ ततो दैत्यगणास्तत्र समाजग्मुः प्रहर्षिताः । तान् सर्वान् मानयामास यथाविधि ममासुरः ॥७॥ ततः सर्वमतं गृह्य काव्यो नीतिविशारदः । ब्राह्मणैस्तं चाभिषिच्य दैत्याधीशं चकार ह ॥८॥ प्रधानाः पंच तस्यापि बभूवुर्बलसंयुताः । प्रेतः कालः कलापश्च कालजित् धर्महा प्रिये ॥९॥ दैत्या दानवभूपाश्च राक्षसादय आदरात् । हर्षयुक्ता बभूवुस्ते ततः स्वस्वगृहे गताः ॥१०॥ चिंतानाशं ममो भूम्यां निर्ममे नगरं परम् । सर्वशोभासमायुक्तं परिखावलयांकितम् ॥११॥ तत्र नाना जना जग्मुर्वासार्थं विषयप्रियाः । वर्णाश्रमयुताः सर्वे वासं चक्रुः प्रहर्षिताः ॥१२॥ दैत्याद्यास्तत्र संरेजुर्विशेषेण निवासकाः । राजा ममासुरस्तान् वै पालयामास हर्षितः ॥१३॥ पुत्रौ द्वौ समशीलौ तु मोहिन्यां संबभूवतुः । ममासुरान् महातेजो युक्तौ दैत्यविवर्धिनौ ॥१४॥ धर्माधर्मौ तयोर्नाम चक्रिरे ब्राह्मणादयः । ताभ्यां ममासुरोऽत्यंतं रेजे तेजोयुतो महान् ॥१५॥ एकदा श्वशुरेणाऽसौ समानाय्य महामुनिम् । उशनसं प्रणम्याऽऽदौ जगाद वचनं परम् ॥१६॥ ममासुर उवाच । तव स्वामिन् प्रसादेन समर्थोऽहं न संशयः । प्रजेष्यामि विशेषेण ब्रह्मांडं लोकसंकुलम् ॥१७॥ आज्ञापय महायोगिन्

त्वदाज्ञावशवर्तिनम् । दासं मां शाधि विप्रेंद्र तवेच्छा कीदृशी भवेत् ॥१८॥ कश्यप उवाच । ममासुरस्य वाक्यं स श्रुत्वा वेदविदां वरः । शुक्रस्तं भक्तिसंयुक्तं दृष्ट्वोवाच सुरूपिणम् ॥१९॥ शुक्र उवाच । गणेशवरदानेन समर्थोऽसि महासुर । गणेशभक्तिसंयुक्तो जय त्वं विश्वमंजसा ॥२०॥ कदाचिदपि दैत्येश द्वेषं विघ्नेश्वरस्य च । मा कुरुष्व तदा राज्यं करिष्यसि विशेषतः ॥२१॥ तथेति दैत्यमुख्यस्तं जगाद हर्षसंयुतः । ततोऽसुरान् समाहूय वृत्तमाकथयत्परम् ॥२२॥ ते सर्वे हर्षसंयुक्ताः साधु साध्वब्रुवन् वचः । द्विजैर्मुहूर्तमालोक्य निर्ययौ च ममासुरः ॥२३॥ अपारसेनया युक्तश्चतुरंग-प्रभूतया । नानावाहनगा दैत्या दैत्येंद्रा रेजुरंजसा ॥२४॥ सन्नद्धा वीरमुख्याश्च समाजग्मुर्महासुरम् । महाबला महा-वीर्याः पर्वतोन्मूलने क्षमाः ॥२५॥ प्रधानैर्युद्धमार्गज्ञैः पुत्राभ्यां संयुतः स्वयम् । ममासुरो रथे संस्थः शुशुभे तेजसा युतः ॥२६॥ पृथ्वीं जेतुं महावीरा जग्मुर्द्वीपसमन्विताम् । जित्वा क्षत्रगणान् सर्वान् स्ववशे तांस्तु चक्रिरे ॥२७॥ ततः पातालगाः सर्वे शेषं जित्वा महाबलम् । ययुः स्वर्गेषु दैत्येंद्रा इंद्रं क्रोधसमन्विताः ॥२८॥ इंद्रः सुरगणैः सार्धं योद्धुं समुद्यतोऽभवत् । ऐरावतसमारूढो ययौ संग्राममंडलम् ॥२९॥ दैत्येंद्रा शस्त्रसंघातैर्मर्दयित्वा सुरेंद्रकान् । ममासुरं ययुः सर्वे धृत्वेंद्रं ते प्रहर्षिताः ॥३०॥ इंद्रासनसमारूढो ममासुरः प्रतापवान् । शुशुभे दानवेंद्रैः स सेव्यमानः सदारुणैः ॥३१॥ सत्यलोकागतं वीक्ष्य दूतं संप्रेष्य दारुणम् । योद्धुं समुद्यतं ज्ञात्वा वेधाः पपाल तद्भयात् ॥३२॥ विष्णुं गत्वा विधाताऽसौ रक्ष रक्षेति चाब्रवीत् । विष्णुस्तं गृह्य शंभुं वै शरणं प्रजगाम ह ॥३३॥ ज्ञात्वा वृत्तांतमेवं स ममासुरः प्रतापवान् । कैलास-माययौ दैत्यैर्योद्धुं महेश्वरेण ह ॥३४॥ शिवलोके समायातो भानुः शक्तिस्तथा भयात् । विचार्य देवपाः सर्वे दैत्येंद्रं जग्मुरावृताः ॥३५॥ मरणे निश्चयं कृत्वा शंभुमुख्याः सुरेश्वराः । ममासुरं तं सन्नद्धाः प्रययुस्ते सुलोचने ॥३६॥ ममासुरस्य सैन्यं तु सन्नद्धं क्रोधसंयुतम् । देवेंद्रान् योद्धुमायातं नानावीरप्रपालितम् ॥३७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते शिवममासुरसमागमो नाम चतुर्थोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कश्यप उवाच । समागतान् पुरो देवान् दृष्ट्वा क्रोधसमन्विताः । दैत्याः प्रहरणैर्जघ्नुः शस्त्रास्त्रैर्मर्मभेदिभिः ॥१॥ देवाः क्रोधयुतास्तद्वज्जघ्नुस्तान् दैत्यपुंगवान् । अन्योन्यं मिलिताः सर्वे एकीभूता यथाऽभवन् ॥२॥ रजस्तिमिरभावेन स्वपरज्ञानवर्जिताः । पुरोगाङ्घ्रिभिः सर्वे स्वान् परानपि दुर्मदाः ॥३॥ दिनैकं दारुणं युद्धं बभूव वीरमोहनम् । ततः शोणितजा घोरा नदी तत्र प्रसुस्रुवे ॥४॥ ततो रजोऽभवच्छांतं प्रकाशसंयुताः पुनः । दैत्या देवा विवेकेन युयुधुर्जातसंभ्रमाः ॥५॥ ततो दैत्यबलैर्भग्नं देवसैन्यं सुदारुणम् । पपाल दैत्यसंघैस्तद्धतं हर्षसमन्वितैः ॥६॥ ततो भैरवमुख्याश्च विष्वक्सेनादयो ययुः । आदित्याः कालिमुख्याश्च शक्तयः क्रोधसंयुताः ॥७॥ तैः समंतात् महास्त्रैस्तद्दलं संमर्दितं परम् । दैत्यानां भयसंयुक्तं पपाल च दिशो दश ॥८॥ ततः क्रोधसमायुक्ताः प्रधाना ममकस्य ते । जग्मुः प्रहरणैर्वीक्ष्य शस्त्रैर्जघ्नुः सुरेंद्रकान् ॥९॥ दैत्यपैर्भैरवाद्याश्च युयुधुर्जातसंभ्रमाः । युद्धं तत्राऽभवद्घोरं दिनैकं जयमिच्छताम् ॥१०॥ ततो दैत्येंद्रमुख्यास्ते पतिता मूर्च्छया युताः । पपालासुरसैन्यं तद्भययुक्तं दिशो दश ॥११॥ ज्ञात्वा ममासुरस्यैव पुत्रौ द्वौ समुपस्थितौ । प्रणम्य पितरं तौ तु योद्धुं जग्मतुरादरात् ॥१२॥ ततः काव्येन दैत्येंद्रा जीविताः पुनरुत्थिताः । युयुधुस्ते महावीरा देवैः परमदारुणाः ॥१३॥ दैत्यैर्धर्मश्च संक्रुद्धोऽधर्मः शस्त्रास्त्रवर्षिणौ । बभूवतुश्च देवेंद्रान् मूर्च्छितांश्चक्रतुर्मृधे ॥१४॥ न कोऽपि देवसैन्यस्थस्तयोरस्त्रबलं परम् । असहत्ततो देवाः प्रपलुर्भयसंयुताः ॥१५॥ ततः शिवः स्वयं क्रुद्धो वृषारूढः समाययौ । अनु तं जगदंबा सा भानुर्विष्णुर्ययौ पुरः ॥१६॥ तेषां युद्धं महाघोरं बभूव रोमहर्षणम् । न वक्तुं शक्यते देवि ब्रह्मांडभयकारकम् ॥१७॥ अधर्मो विष्णुना सार्धं धर्मः शंकरमाययौ । कालजिह्वानुना सार्धं प्रेतः शक्त्या महाबलः ॥१८॥ कपालः कालरुद्रेण काल्या धर्मघ्न एव च । नियतं युयुधुः सर्वे शस्त्रास्त्रैर्मर्मभेदिभिः ॥१९॥ दिनैकं दारुणं युद्धं बभूव देवरक्षसाम् । ततः काल्या हतः पापी धर्मघ्नश्च मृतोऽभवत् ॥२०॥ कपालः कालरुद्रेण त्रिशूलेन प्रमूर्च्छितः । प्रेतः शक्त्या हतस्तत्र ममार खड्गघाततः ॥२१॥ त्रिशूलेन हतो धर्मः शिवेनामूर्च्छितोऽभवत् । चक्रेण विष्णुना तद्वदधर्मो मूर्च्छितः कृतः ॥२२॥ चक्रत्रिशूलकाद्यैश्च शस्त्रास्त्रैर्दैत्यसैन्यकम् । हतं सर्वत्र देवशैर्हाहाकाररवाकुलम् ॥२३॥ शोणितौघा महानद्यस्तत्र जाता भयानकाः । छिन्नभिन्नाश्च दैत्याद्याः पपलुः सर्वतोदिशम् ॥२४॥ तत्राऽपि शस्त्रवेगेन मृताः केऽपि सुलोचने । ततो ममासुरः क्रुद्धः संग्रामाय ययौ स्वयम् ॥२५॥ पुरः स्थितं शिवं वीक्ष्य जगाद

क्रोधसंयुतः । सर्वसंहारकं सोऽपि महाबलपराक्रमः ॥२६॥ ममासुर उवाच । तिष्ठ तिष्ठ महादेव पश्य मे पौरुषं परम् । दृष्टं त्वदीयं सामर्थ्यं सर्वदेवानिगं मया ॥२७॥ एवमुक्त्वा महादेवं धनुः सज्जमथाऽकरोत् । निष्काश्य सुदृढं बाणं मुमोच दैत्यनायकः ॥२८॥ तावत् त्रिशूलकं शंभुश्चिक्षेप नाशकारकम् । ममासुरं समासाद्य निष्फलं तद्बभूव ह ॥२९॥ बाणेन स हतः शंभुः पपात धरणीतले । मूर्च्छया पीडितोऽत्यंतं सहसा दैत्यपालिनि ॥३०॥ ततो ममासुरः क्रुद्धो बाणेनैकेन वक्षसि । विव्याध माधवं देवं मूर्च्छितं तं चकार ह ॥३१॥ शक्तिः सूर्यस्ततः क्रुद्धौ बाणान् चिक्षिपतुः परान् । ते सर्वे निष्फला बाणाः पेतुः परमदारुणाः ॥३२॥ ततो ममासुरः सूर्यं शक्तिं विव्याध वक्षसि । एकैकेन स बाणेन पतितौ धरणीतले ॥३३॥ बाणवृष्टिं महोग्रां स चक्रे क्रोधसमन्वितः । तया देवेंद्रमुख्याश्च देवाः संमर्दिता मृधे ॥३४॥ ततो देवान् मृतान् वीक्ष्य कांश्चिद्भयसमन्वितान् । पलतो दैत्यराजः स हर्षितोऽभून् महामते ॥३५॥ देवान् शंभुमुखान् गृह्य ययौ स्वस्थानमुत्तमम् । काव्येन जीवितान् दैत्यान् प्रधानपुत्रमुख्यकान् ॥३६॥ ततो धर्मं महादैत्यः कैलासाधिपतिं सुतम् । अधर्मं विष्णुलोकस्य नाथं चकार हर्षितः ॥३७॥ प्रेतं शक्तिपुरस्यापि कपालं स चकार ह । सौरलोकाधिपं वीरं धर्मघ्नं ब्रह्मणस्तथा ॥३८॥ कालजितं महेंद्रस्य यमस्य कालकं परम् । लोकस्य चाधिपं चक्रे तथाऽन्येषां च दानवान् ॥३९॥ ततः स्वपुरमागम्य कारागारे समाक्षिपत् । देवेन्द्रान् शिवमुख्यान् स राज्यं चक्रे महाबलः ॥४०॥ ब्रह्मांडाधिपतिर्दुष्टो बभूव स ममासुरः । कृतकृत्यमिवात्मानं मेने दैत्येंद्रसंयुतः ॥४१॥ स्त्रीमांसमदिरायुक्तो बभूवे भोगलालसः । अविनाशं स्वमात्मानं मेने देहधरोऽपि सन् ॥४२॥ ततोऽतिमदसंयुक्तो ममासुरः प्रतापवान् । देवांगना नराणां तु कन्या नागोद्भवा बलात् ॥४३॥ समानाय्यासुरेंद्रैः स बुभुजे पापनिश्चयः । ततो बहुगते काले दैत्यैंद्रान् प्रेष्य दारुणान् ॥४४॥ खलः खंडनकं चक्रे वर्णाश्रमसुकर्मणाम् । आसुरं कर्म सर्वत्र स्थापयामास दंडतः ॥४५॥ न स्वाहा न स्वधा कुत्र भवति स्म कदाचन । न वषट्कारभावश्च वर्णसंकरभावतः ॥४६॥ ऋषयस्ताडिताः केचित् केचिद्बंधनसंयुताः । देवस्थानानि सर्वाणि खंडितानि च दानवैः ॥४७॥ तीर्थानि पुण्यवृक्षास्ते बभंजुः पापकारकाः । ममासुरात्मकं कर्म चक्रिरे सर्वमानवैः ॥४८॥ प्रतिमा दैत्यनाथस्य स्थापिताः सर्वमंदिरे । इत्यादिकर्मनाशश्च बभूव जगतीतले ॥४९॥ हाहाकारयुताः सर्वे भ्रष्टा जाताः सुलोचने । वर्णाश्रमविहीनास्ते जना दुःखसमन्विताः ॥५०॥ राज्यं चकार दैत्येशो ममासुरः सुहर्षितः । वृष्ट्यादिक-

मभूत्तत्र काले सर्वं भयाकुलम् ॥५१॥ एवं पापे प्रवृद्धे तु देवाश्चोपोषणान्विताः। कारागारे स्थिताः सर्वे बभूवुः शोकपीडिताः ॥५२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते ममासुरराज्यभोगवर्णनं नाम पंचमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कश्यप उवाच। ततः शंभुमुखा देवा विचारं दुःखसंयुताः। ममासुरस्य नाशार्थं चक्रुः सर्वे भयातुराः ॥१॥ तत्र विष्णुर्महाबुद्धिरुवाच वाक्यमुत्तमम्। देवान् सर्वान् समाश्वास्य विघ्नराजं हृदि स्मरन् ॥२॥ विष्णुरुवाच। कारागारे वयं क्षिप्तास्तत्र कर्मप्रखंडनात्। उपोषणसमायुक्ताः कृता ममासुरेण च ॥३॥ अतिपापं ममस्यैव राज्ये वृत्तं महेश्वराः। तेन पुण्यविहीनोऽयं मरिष्यति न संशयः ॥४॥ सर्वसत्ताधरः प्रोक्तो गणेशो वेदवादिभिः। विघ्नराजश्च तेनाऽसौ नामाऽभूद्धर्मपालकः ॥५॥ आपद्धर्मविधानेन तदुपासनकं परम्। करिष्यामो विशेषेण स एनं घातयिष्यति ॥६॥ तत्त्वप्रकाशकः सोऽपि न तत्त्वरूपधारकः। तत्त्वहीनो न देवेशा अत एनं वधिष्यति ॥७॥ अतिविषयसंयुक्तो दैत्येंद्रैर्मोहितो भृशम्। ममासुरो गणेशानं त्यक्त्वा भोगपरोऽधुना ॥८॥ अन्यच्च शृणुत प्राज्ञाः क्षेत्रेषु विघ्नपस्य च। मूर्तयः खंडिताः सर्वाः स्वकीयाः स्थापिताः खलैः ॥९॥ आदौ गणपतेः प्रोक्तं पूजनं स्मरणादिकम्। तत्कर्मस्तु ममेनैव खंडितं भूमिमंडले ॥१०॥ अतो विघ्नेश्वरश्चैनं मारयिष्यति निश्चितम्। तं विशेषेण भजत देवा भावसमन्विताः ॥११॥ विष्णोर्वचनमाकर्ण्य देवाः शंभुपुरोगमाः। साधु साधु त्वया प्रोक्तं जगुस्तं केशवं प्रिये ॥१२॥ ततो देवा गणेशानं चिंत्य संकटमुक्तये। मंत्रस्नानं प्रचक्रुस्ते न्यासादींश्च मनोमयान् ॥१३॥ ध्यात्वा गणपतिं सर्वे पुपूजुर्मानसैः पृथक्। उपचारैरनेकैस्ते जेपुर्मंत्रं हृदा परम् ॥१४॥ एकाक्षरविधानेन युक्तास्तेपुस्तपो महत्। संगोप्य भयसंयुक्ता निराहारपरायणाः ॥१५॥ एवं वर्षशते पूर्णे तान् ययौ गणनायकः। भाद्रशुक्लचतुर्थ्यां तु मध्याह्ने वरदायकः ॥१६॥ तं दृष्ट्वा हर्षसंयुक्ता देवा उत्थाय सत्वरम्। प्रणेमुः पूजयामासुर्मानसैरुपचारकैः ॥१७॥ पुनः प्रणम्य विघ्नेशं तुष्टुवुः करसंपुटाः। साश्रुनेत्राः प्रिये देवा

भक्तिनम्रात्मकंधराः ॥१८॥ देवेंद्रा ऊचुः । नमस्ते विघ्नराजाय भक्तविघ्नविदारण । अभक्तेभ्यो विशेषेण विघ्नदात्रे नमो नमः ॥१९॥ गणेशाय परेशाय हेरंबाय नमो नमः । चतुर्बाहुधरायैव नागेशध्वजिने नमः ॥२०॥ अमेयायाप्रतर्क्याय सदा स्वानंदवासिने । ब्रह्मणां पतये तुभ्यं ब्रह्मदात्रे नमो नमः ॥२१॥ सांख्याय बोधरूपाय पुरुषाय परात्मने । गणेशाय प्रकृतये त्रिगुणाय नमो नमः ॥२२॥ स्रष्ट्रे पात्रे च संहर्त्रे प्रकाशरूपधारिणे । मोहकाय त्रिलोकस्थनाथाय ते नमो नमः ॥२३॥ नानामायाप्रचालाय मायिभ्यो मायया प्रभो । मोहदाय विशेषेण मायिकाय नमो नमः ॥२४॥ नानाभेदमयं ब्रह्म विघ्नयुक्तं न संशयः । तत्रानंदयुतायैव समभावाय ते नमः ॥२५॥ सर्वभेदविहीनं यद्ब्रह्मामृतमयं परम् । भेदहीनेन विघ्नेन युतं शास्त्रप्रमाणतः ॥२६॥ भेदयुक्तं गणाधीश भेदहीनं त्वया परम् । सृष्टं द्वंद्वमयं नाथ तयोर्नाथाय ते नमः ॥२७॥ आनंदं परमं ब्रह्म विघ्नानां हारकं मतम् । दायकं तत्त्वमेवेति विघ्नराज नमोऽस्तु ते ॥२८॥ तं विघ्नराजराजं तु पश्यामश्चर्म-चक्षुषा। धन्या वयं गणाधीश तव पादस्य दर्शनात् ॥२९॥ एवमुक्त्वा प्रणेमुस्ते देवाः शंभुपुरोगमाः । स तानुवाच विघ्नेशो भक्त्या स्तोत्रेण यंत्रितः ॥३०॥ श्रीविघ्नराज उवाच । वरान् ब्रूत महादेवा येषां यान् मनसीप्सितान् । दास्यामि स्तोत्रसंतुष्टस्तपसा ध्यानशालिना ॥३१॥ भवत्कृतमिदं स्तोत्रं सर्वसिद्धिप्रदं भवेत् । पठते शृण्वते देवा वाञ्छितार्थप्रदायकम् ॥३२॥ गणेश-वचनं श्रुत्वा देवा हर्षसमन्विताः । प्रणम्य तं पुनः प्रोचुर्हर्षगद्गदया गिरा ॥३३॥ देवा ऊचुः । तव पादेऽचलां भक्तिं देहि विघ्नेश नः पराम् । यया विघ्नविहीनाश्च शांतिं प्राप्ताः सुयोगिनः ॥३४॥ ममासुरं नाथ जहि सर्वपीडाप्रदायकम् । धर्मध्वंसकरं पूर्णं वर्णसंकरकारिणम् ॥३५॥ कारागारे वयं क्षिप्ता वरदानप्रभावतः । अधुनोपोषणैर्युक्ताः कृतास्तेनासुरेण च ॥३६॥ एवं तेषां वचः श्रुत्वा विघ्नराजः प्रतापवान् । तथेति तानुवाचेदं करिष्यामि वचो हितम् ॥३७॥ एतस्मिन्नंतरे देवि तत्र चित्रं बभूव ह । दैत्याः संस्थापिताः पूर्वं रक्षार्थं ये दिवौकसाम् ॥३८॥ ते दृष्ट्वा चेष्टितं तेषां गणेशाऽऽगमनात्मकम् । गत्वा तं सर्ववृत्तांतं कथयामासुरादरात् ॥३९॥ रक्षका ऊचुः । देवैः संराधितस्तत्राऽऽययौ विघ्नपतिः प्रभो । तं प्रणम्य महेशाद्यास्तुष्टुवुस्तद्वधाय च ॥४०॥ तथेति गणनाथेन कृतं सर्वं न संशयः । अधुना दैत्यनाथ त्वं यत् करिष्यसि तत् कुरु ॥४१॥ तेषां वचनमाकर्ण्य क्रोधयुक्तो ममासुरः । सर्वानानाय्य वृत्तांतं कथयामास विस्तरात् ॥४२॥ श्रुत्वा ते भय-संयुक्ता बभूवुर्जातसंभ्रमाः । जगुस्तं प्रणिपत्यैव वचनं स्वहितावहम् ॥४३॥ दैत्येंद्रा ऊचुः । कारागारे स्थिता देवास्तैः कथं

गणनायकः। आराधितो विशेषेण वरदश्च बभूव ह ॥४४॥ दैत्यैर्दृष्टस्तत्त्वमयो गणाधीशो न संशयः। तत्त्वहीनो न दैत्येंद्र दृश्यते केनचित् कदा ॥४५॥ अतः सदेवकं तं तु हनिष्यामो न संशयः। किं करिष्यति विघ्नेशस्त्वां ध्रुवं मृत्युवर्जितम् ॥४६॥ एवमुक्त्वा महादैत्याश्चक्रुर्नादं भयंकरम्। देवादीनां ततः सर्वे सन्नद्धाः प्रबभूविरे ॥४७॥ एतस्मिन्नंतरे तत्र पुनश्चित्रं बभूव ह। नारदो विघ्नराजं तं ययौ हर्षसमन्वितः ॥४८॥ प्रणम्यास्तुत्य विघ्नेशं गानं चकार हर्षतः। जगाद तं महायोगी प्रभो जहि ममासुरम् ॥४९॥ मुनिं तं विघ्नराजस्तु सामार्थं दैत्यपस्य वै। समीपे प्रेषयामास स ययौ दैत्यनायकम् ॥५०॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते विघ्नराजप्रादुर्भावो नाम षष्ठोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कश्यप उवाच। समागतं ममो दैत्यो नारदं पूज्य दैत्यपैः। प्रष्टुं समुद्यतो यावत्तावत्तं नारदोऽब्रवीत् ॥१॥ नारद उवाच। आपद्धर्मविवेकेन देवैः संराधितोऽधुना। गणेशो वरदो भाति देवेभ्यः सिद्धिदायकः ॥२॥ त्वद्वधार्थं महाराज प्रार्थितो देवनायकैः। नथंति प्रनिपात्यैव तत्र संस्थोऽधुना प्रभुः ॥३॥ सामार्थं प्रेषयामास मां मम तेऽत्र सन्निधौ। शृणु वाक्यं मदीयं त्वं हितं तेन भविष्यति ॥४॥ विघ्नाः सत्तात्मकाः प्रोक्ताः सत्ताऽत्र त्रिविधा मता। सत्यसंकल्परूपा च पराधीनात्मिका प्रभो ॥५॥ सत्यसंकल्पसत्ताया धारका ब्रह्मवाचकाः। परमेश्वरसंज्ञास्ते स्वाधीनाः प्रभवंति ये ॥६॥ अन्ये नरादयः प्रोक्ताः सत्तावंतो न संशयः। तेषु दैवं समाख्यातं दैवाधीनास्ततः स्मृताः ॥७॥ त्वं वरेण समर्थोऽसि स्वसत्तासंयुतो न च। वरसत्तात्मको दैत्य पराधीनो न संशयः ॥८॥ पराधीना नरा विघ्नैः पीडिताः सर्वदा मताः। वृथा गर्वयुता अंते सत्ताहीना भवंत्युत ॥९॥ अहं ब्रह्मेति मोहेन मोहिता जगदीश्वराः। मदाधारमिदं सर्वं विश्वं चलति तेऽब्रुवन् ॥१०॥ अस्मभ्यो न परं किंतु सत्ताहीनास्तदाऽभवन्। सत्यसंकल्पजां तेषां सिद्धिं गृह्णाति विघ्नपः ॥११॥ अतो विघ्नयुतं सर्वं जानीहि द्विविधं मतम्। सत्यासत्यमयं दैत्य द्वंद्वमायाविमोहितम् ॥१२॥ आनंदं परमं ब्रह्म द्वंद्वहीनं समात्मकम्। द्वंद्वेषु द्वंद्वभावाख्यं परं तन्मोहवर्जितम् ॥१३॥ तदेव विघ्नराजाख्यं ब्रह्म वेदैः प्रकाशितम्। देवैरारा-

धितं पूर्णं देहधारि बभूव ह ॥१४॥ अधुना तत् समायातं देवागारेषु दैत्यप । तद्गच्छ शरणं नो चेन् मरिष्यसि न संशयः ॥१५॥ स्वस्वधर्मयुतं सर्वं विश्वं भवतु दैत्यप । स्वधर्मनिरतो भूत्वा तिष्ठ स्थाने स्वके सदा ॥१६॥ स्वर्गभोगकरा देवा नरा भूमिसमाश्रिताः । दैत्याः पातालगा भूत्वा तिष्ठंतु सुखसंयुताः ॥१७॥ वर्णाश्रमयुता लोकास्तिष्ठंतु नित्यमादरात् । एवं कृत्वा मम त्वं तु तिष्ठ वै भोगसंयुतः ॥१८॥ एतस्मिन्नंतरे तत्र वाग्बभूवाशरीरिणी । मा गर्वं कुरु दैत्येंद्र नारदाज्ञावशो भव ॥१९॥ नोचेद्विघ्नपतिः क्रुद्धस्त्वां हनिष्यति निश्चितम् । अतस्तं शरणं गच्छ सर्वसिद्धिप्रदायकम् ॥२०॥ ममासुरश्च तां श्रुत्वा खेदयुक्तो बभूव ह । शुक्रं तत्र समानाय्य विचारमकरोत् परम् ॥२१॥ शुक्रेणाऽपि तथा प्रोक्तं ततः स भयसंयुतः । प्रणम्य नारदं वाक्यं जगाद हितमात्मनः ॥२२॥ ममासुर उवाच । त्वया नारद यत् प्रोक्तं तथा शुक्रेण निश्चितम् । देवानां हितमत्यंतं नाऽहं यामि गजाननम् ॥२३॥ आदौ मया विशेषेण सेवितोऽयं महामुने । मां त्यक्त्वा देवनाथः सोऽभवत्तेन नयामि तम् ॥२४॥ मरणं मे यदा प्राप्तं भविष्यति यशस्करम् । शत्रूणां शरणं विप्र न योग्यं मानिनां कदा ॥२५॥ तस्य तद्वचनं श्रुत्वा नारदः पुनरब्रवीत् । मा चिंतां कुरु दैत्येंद्र नायं देवसहायवान् ॥२६॥ देवा मदयुता जाता दैत्यान् जघ्नुः प्रमोहिताः । दैत्यानां मूलनाशार्थं पातालं विविशुः पुरा ॥२७॥ तदाऽयं वरदो भूत्वा तव सामर्थ्यतः स्वयम् । देवान् मदविहीनांश्च चकार विघ्ननायकः ॥२८॥ अपि त्वं मोहसंयुक्तस्त्यक्त्वा गणपतिं परम् । कर्मनाशनतः सर्वान् देवान् हंतुं समुद्यतः ॥२९॥ कर्मनाशप्रभावेण देवा नष्टा भवंति च । निर्देवं विश्वमत्यंतं तदा भवति सर्वदा ॥३०॥ अतस्त्वां हंतुमुद्युक्तो विघ्नराजो महासुर । स्वस्वधर्मयुतांश्चेत्तान्न हंति ब्रह्मनायकः ॥३१॥ सुरासुरमयश्चायं सिद्धिबुद्धिविहारकृत् । सिद्धिबुद्धिविहीनस्त्वं किं करिष्यसि तद्वद ॥३२॥ विघ्नराजस्य विघ्नं तु कः क्षमो जायते वद । कर्तुं विघ्नयुतो नित्यं मूर्खभावान् मरिष्यसि ॥३३॥ आनंदं ब्रह्म वेदेषु कथितं सदसन्मयम् । न तत्त्वसंयुतं दैत्य तत्त्वहीनं न विद्यते ॥३४॥ सर्वत्र योगभावेन संस्थितं द्वंद्वधारकम् । स एव विघ्नराजस्त्वां हनिष्यति न संशयः ॥३५॥ तेनैव त्रिविधं सर्वं रचितं योगमायया । स्वस्वधर्मयुतं विश्वं कृतं क्रीडार्थमंजसा ॥३६॥ यदा गर्वयुता दैत्य जंतवश्चेश्वरादयः । त्यक्त्वा स्वधर्मं मोहेन संसक्ता विषयेऽभवन् ॥३७॥ सर्वैरवध्यतां प्राप्य कुर्वंति मनसीप्सितम् । तदाऽयं देहधारी संभवते मदनाशकः ॥३८॥ असन्मयो गणेशस्य देहः सन्मयमस्तकम् । तेनाऽयं गजवक्त्रोऽभूत्तं गच्छ शरणं परम् ॥३९॥ नारदस्य वचः श्रुत्वा तथा काव्यस्य दैत्यपः । ममा-

सुरः खवाणीं तां विचारमकरोत् हृदि ॥४०॥ गणेशो ब्रह्मरूपोऽयं स्वानंदे वासकारकः । गच्छामि शरणं तं स्वहितं तेन भविष्यति ॥४१॥ विघ्नराजमनादृत्य सिद्धिबुद्धिपतिं प्रभुम् । को विघ्नहीनतां प्राप्य तिष्ठेद्वै सर्वमंडले ॥४२॥ स्वयं दैत्यानुवाचाथ वचनं हितकारकम् । ममासुरः प्रसन्नात्मा गणेशो ममतां दधौ ॥४३॥ ममासुर उवाच । दैत्येंद्राः कालमुख्या मे वचनं शृणुत प्रियाः । काव्येन नारदेनोक्तं खवाण्या तत् करोम्यहम् ॥४४॥ तस्य तद्वचनं श्रुत्वा धर्माधर्मौ समूचतुः । न देवपक्षिणं योग्यं शरणं जगदीश्वरम् ॥४५॥ मरणं रणमध्ये तु स्वर्गदं कीर्तिदं भवेत् । तस्माद्युध्यामहे तात विघ्नेशेन विशेषतः ॥४६॥ देहधारी गणेशानः किं करिष्यति मां वद । तात ते मायया देवा दर्शयंति प्रमोहकम् ॥४७॥ नारदो गणराजस्य भक्तस्तस्य वचः कथम् । दैत्येंद्रैः सह मान्यं त्वं करिष्यसि महामते ॥४८॥ नारदभावरक्षार्थं काव्यो वदति वै तथा । देवैः संरचिता वाणी खस्था तस्या वचो वृथा ॥४९॥ मा कुरुष्व भयं तात तत्त्वयुक्तं गजाननम् । हनिष्यामः प्रतापेन तव दैत्यप्रपालक ॥५०॥ एवमुक्त्वा महावीरौ रथारूढौ बभूवतुः । देवान् हन्तुं प्रगर्वेण जग्मतुः क्रोधसंयुतौ ॥५१॥ मामेति वचनं दैत्यनाथस्य त्यज्य दुर्मदौ । धर्माधर्मौ गणेशानं जग्मतुर्हननाय च ॥५२॥ ततो गणेश्वरं विप्रो नारदः प्रजगाम ह । कथयामास वृत्तांतं सोऽपि क्रोधयुतोऽभवत् ॥५३॥ देवान् भययुतान् वीक्ष्य जगाद गणनायकः । मा भयं कुरुत प्राज्ञा हनिष्यामि ममासुरान् ॥५४॥ अमोघास्त्रबलैर्युक्तो ममासुरः प्रतापवान् । समागतः सोऽपि चेत्तं हनिष्यामि न संशयः ॥५५॥ एवमुक्त्वा गणाधीशः कमलं निजहस्तगम् । मुमोच क्रोधसंयुक्तो महास्त्रं ब्रह्मरूपकम् ॥५६॥ क्षणेन कमलं तत्र दैत्यसैन्ये पपात ह । तस्माज्जातः सुवासश्च प्रससार महीतले ॥५७॥ गणेशानं द्विषंतस्तान् जघान वास आगतः । द्वेषहीनान् समुत्सृज्य तदद्भुतमिवाऽभवत् ॥५८॥ वासं गृह्य महादैत्यौ धर्माधर्मौ मृतौ मृधे । प्रधानाः पंच तद्वत्ते मृतास्तत्र बभूविरे ॥५९॥ ततो हाहारवं कृत्वा दैत्याः पातालमाविशन् । कमलं क्रोधसंयुक्तं जगाम ह ममासुरम् ॥६०॥ सुवासकं तस्य गृह्य मूर्च्छितोऽभूत् ममासुरः । प्रहरार्धेन दैत्येशः सावधानो बभूव ह ॥६१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते ममासुरगर्वहरणं नाम सप्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कश्यप उवाच । ततो ममासुरस्तत्र सावधानो बभूव ह । समीपे कमलं संस्थं दृष्ट्वा भययुतोऽभवत् ॥१॥ त्यक्त्वा गर्वं महादैत्यः कमलं प्रणनाम ह । कृत्वा करपुटं भीतोऽभवत् स्तोतुं समुद्यतः ॥२॥ ममासुर उवाच । कमलाय नमस्तुभ्यं गणेशशस्त्रमुख्यक । वासनानां परेशाय सुवासधारिणे नमः ॥३॥ विषयेषु सुवासेन मोहिताः संभ्रमंति ते। संसारे दुःखसंयुक्ताः सुखयुक्ताः त्वया कृताः ॥४॥ योगवासनया युक्ता ब्रह्मभूता भवंति ते। वासनानां प्रभेदाश्च बह्वस्तेषु किं ब्रुवे ॥५॥ तेषां ब्रह्मस्वरूपाय खेलकाय नमो नमः। विश्वं कमलसंभूतं पद्माकारं वदंति तत् ॥६॥ अनस्त्वां कः समर्थः स्यात् स्तोतुं शस्त्रोत्तमोत्तम। नमो नमः प्रसन्न त्वं भव मां रक्ष ते भयात् ॥७॥ दैत्येशं संस्तुवंतं तं दृष्ट्वा शांतिं समादधे। कमलं गणराजस्य हस्तगं प्रबभूव ह ॥८॥ ममासुरः प्रसन्नात्मा काव्येन विघ्ननायकम्। जगाम तं प्रणम्यैव पुपूजे भक्तिसंयुतः ॥९॥ पुनः प्रणम्य विघ्नेशं कृत्वा करपुटं प्रिये। तुष्टाव हर्षसंयुक्तो ज्ञात्वा तं ब्रह्मनायकम् ॥१०॥ ममासुर उवाच । विघ्नेशाय नमस्तुभ्यं सर्वसत्ताप्रचालिने । अनादये परेशाय ब्रह्मेशाय नमो नमः ॥११॥ गणेशाय गणानां तु चालकाय परात्मने। आनंदाय सदानंददायकाय नमो नमः ॥१२॥ हेरंबायैकदंताय शूर्पकर्णाय ढुंढये। लंबोदराय वै तुभ्यं भक्तपाल नमो नमः ॥१३॥ स्वानंदपतये तुभ्यं योगाकारस्वरूपिणे। शांतिभ्यः शांतिदात्रे ते शांतिस्थाय नमो नमः ॥१४॥ ज्येष्ठराजाय पूज्याय सर्वेषां सर्वनायक। विनायकाय देवानां दैत्यानां पालकाय ते ॥१५॥ आदिपूज्याय चांते ते अवशिष्टाय ते नमः। सिद्धिबुद्धिपते तुभ्यं चतुर्भुज नमो नमः ॥१६॥ शेषस्योपरिसंस्थाय नागेशध्वजधारिणे। गजाननाय देवेश नमो दैत्येशरूपिणे ॥१७॥ भक्तानां विघ्नहंत्रे ते ह्यभक्तानां विनाशिने। योगिनां समभावाय हृदिस्थाय नमो नमः ॥१८॥ नानाभेदमयं ब्रह्मासद्रूपं वेदवादतः। भेदहीनं च सद्रूपं तयोः साम्ये त्वमंजसा ॥१९॥ समस्वानंदसंस्थो यः को जानाति च तं प्रभुम्। विघ्नराजं प्रपश्यामि प्रत्यक्षं ब्रह्मनायकम् ॥२०॥ तेनाऽहं कृतकृत्यश्चाऽधुना जातो न संशयः। धन्यं मे जन्म कर्मादि येन दृष्टो गजाननः ॥२१॥ किं स्तौमि त्वां गणेशान यत्र वेदादयः प्रभो। शांतिं प्राप्ता विशेषेण योगिनस्ते नमो नमः ॥२२॥ एवं ममासुरः स्तुत्वा ननर्तासौ सुभाग्यवान्। रोमांचितशरीरश्च साश्रुनेत्रः सुरूपिणि ॥२३॥ तमुवाच महाभक्त्या युतं विघ्नप्रनायकः। वरं ब्रूहि महाबाहो दास्यामि स्तोत्रतोषितः ॥२४॥ त्वया कृतमिदं स्तोत्रं मदीयं सर्वदं भवेत्। सकामेभ्यो विशेषेण नानाकामप्रदायकम् ॥२५॥ निष्कामेभ्यो महामोक्ष-

दायकं प्रभविष्यति । मम भक्तिप्रदं चैतत् मम भावहरं सदा ॥२६॥ विघ्नेशवचनं श्रुत्वा तं प्रणम्य ममासुरः । जगाद भक्तिसंयुक्तो विघ्नराजं कृतांजलिः ॥२७॥ ममासुर उवाच । यदि प्रसन्नभावेन वरं दास्यसि विघ्नप । तव भक्तिं स्थिरां देहि मायानाशकरीं प्रभो ॥२८॥ गाणपत्यसहावासं देहि नाथ निरंतरम् । स्थानं भक्ष्यादिकं ढुंढे तत्र स्थास्यामि यंत्रितः ॥२९॥ दासोऽहं ते गणाधीश नान्यं याचे वरं परम् । तव दर्शनमात्रेण ज्ञानयुक्तोऽहमंजसा ॥३०॥ विघ्नेश उवाच । मदीया भक्ति-रुग्रा ते भविष्यति ममासुर । गाणपत्यप्रियत्वं च योगयुक्तो भविष्यसि ॥३१॥ स्वस्थाने निर्भयो भूत्वा तिष्ठ त्वं मत्परायणः । स्वधर्मविधिहीनं त्वं कर्म भुंक्ष्व जनैः कृतम् ॥३२॥ यत्रादौ पूजनं मे न स्मरणं वा ममासुर । मम भावेन संमोह्य राज्यं कुरु हृदि स्थितः ॥३३॥ मद्भक्तान् दासवन्नित्यं रक्षस्व स्नेहभावतः । मम भावविहीनांश्च कुरु मे ममता-युतान् ॥३४॥ एवं विघ्नेश्वरस्यैव श्रुत्वा वचनमुत्तमम् । ममासुरस्तं तथेति प्रहृष्टो वाक्यमब्रवीत् ॥३५॥ प्रणम्य तं ममो दैत्यः स्वस्थाने प्रजगाम ह । शांतिं धृत्वा गणेशानं भजन् सर्वभावतः ॥३६॥ दैत्यास्तं त्यज्य सर्वे तु भययुक्ता विशेषतः । पातालं विविशुः सद्यः सोऽपि हर्षयुतोऽभवत् ॥३७॥ एवं ममासुरं शांतं चकार विघ्ननायकः । स्वाधीनं कृत्य तं स्थाने स्थापयामास मानिनि ॥३८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते ममासुरशांतिवर्णनं नामाष्टमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कश्यप उवाच । ममासुरं शांतियुतं वीक्ष्य देवाः सुहर्षिताः । प्रणम्य मुनिसंयुक्ताः पुपूजुर्विघ्ननायकम् ॥१॥ पूज्य तं हृष्टरोमाणः पुनः प्रणम्य भावतः । तुष्टुवुर्विघ्नराजं ते बद्धांजलय आदरात् ॥२॥ देवर्षय ऊचुः । साम्यस्वरूपं द्विविधेषु संस्थं द्वंद्वैर्विहीनं परमार्थभूतम् । आनंदनाथं निजभक्तपोषं तं विघ्नराजं सततं भजामः ॥३॥ सर्वात्मकं विंबमथो विधाय तेनैव द्वंद्वं रचितं गणेश । सत्यस्वरूपं च परं ह्यसत्यं तं विघ्नराजं सततं भजामः ॥४॥ भेदैर्विहीनं परमप्रमेयं साक्षिमयं कृत्य विनायकत्वम् । तत्रैव नित्यं समभावसंस्थस्तं विघ्नराजं सततं भजामः ॥५॥ ढुंढे त्वया भेदयुतं द्वितीयं

सृष्टं परं ब्रह्म विहारदं च । उत्थानरूपं त्वमपि प्रसंस्थस्तं विघ्नराजं सततं भजामः ॥६॥ त्वन्मायया मोहयुते परेशे अन्योन्यमादौ मिलिते प्रकाशिन् । तत्र स्थितस्त्वं च विमोहशून्यस्तं विघ्नराजं सततं भजामः ॥७॥ त्वत्प्रेरितं द्वंद्वमयं परं च सोऽहं तथा बिंदुमयं चकार । तत्स्थः समत्वेन विहारकारिंस्तं विघ्नराजं सततं भजामः ॥८॥ ताभ्यां मिलित्वा रचितं गणेश विश्वं चतुष्पादमयं पुराणम् । तत्रैव ते नाथ प्रकाशभावस्तं विघ्नराजं सततं भजामः ॥९॥ एवं स्वतोत्थान-बलेन कृत्वा साम्यस्वरूपेण विहारकारिन् । तद्भावशून्योऽसि गजानन त्वं तं विघ्नराजं सततं भजामः ॥१०॥ एवं परेशाधिपतेन सृष्टं त्वं तादृशो नो गणराज भासि । सांख्यस्वरूपं प्रवदंति वेदास्तं विघ्नराजं सततं भजामः ॥११॥ दोषैर्विहीनं प्रवदंति सांख्यं तस्मान्न विघ्नेश्वर सांख्यसंस्थः । उत्थानहीनो न भवेः कदापि तं विघ्नराजं सततं भजामः ॥१२॥ स्वानंदवासी गणनायकस्त्वमानंदरूपोऽसि वदंति वेदाः । द्वंद्वप्रकाशश्च तदात्मशून्यः तं विघ्नराजं सततं भजामः ॥१३॥ नित्यं मनोवाक्प्रभवैश्च हीनः साम्यात्मकेनैव सुयोगकेन । लक्ष्यः सदानंदघनप्रकाशस्तं विघ्नराजं सततं भजामः ॥१४॥ स्तोतुं न शक्ताः प्रभवंति वेदा हेरंबमाद्यं प्रणमामहे त्वाम् । तेनैव तुष्टो भव देवदेव तं विघ्नराजं सततं भजामः ॥१५॥ सर्वात्मकं त्वां प्रवदंति सर्वे योगींद्रमुख्याः प्रभुदासभूताः । तत्रैव ते ध्यानमपारमेवं तं विघ्नराजं सततं भजामः ॥१६॥ तेषां मनोभक्तिभवं च भावं संरक्षणार्थं वपुषा प्रयुक्तः । तत्रैव भक्तिं कुरुते सुभक्तस्तं विघ्नराजं सततं भजामः ॥१७॥ देहस्त्वसद्ब्रह्ममयश्च तेऽयं सद्रूपतुंडं गजवाचकं ते । योगे तयोस्त्वं च विभासि देवस्तं विघ्नराजं सततं भजामः ॥१८॥ कयाननं त्वां प्रवदंति तेन संतः सदा योगमयं हृदिस्थम् । सिद्धिप्रदं बुद्धिप्रचालकं वै तं विघ्नराजं सततं भजामः ॥१९॥ ब्रह्माऽहमेवं मदधीनकं च विश्वादिकं ब्रह्मगणा वदंति । त्वन्मायया मोहितचेतसस्ते तं विघ्नराजं सततं भजामः ॥२०॥ सत्ताविहीनान् प्रकरोषि तांस्त्वं विघ्नप्रदानेन महानुभाव । स्वार्थैर्विहीनाः प्रभवंति पूर्णास्तं विघ्नराजं सततं भजामः ॥२१॥ अंघ्रिं पुनस्ते शरणाश्रितास्ते विघ्नेन हीनाः प्रभवो भवंति । विघ्नेशनामाऽसि ततस्त्वमेव तं विघ्नराजं सततं भजामः ॥२२॥ एतादृशं विघ्नपतिं कथं वै स्तोतुं वयं योगमयं भवामः । वेदा न शक्ता मनसा ह्यलभ्यं तं विघ्नराजं सततं भजामः ॥२३॥ कश्यप उवाच । एवं स्तुत्वा गणाधीशं प्रणेमुरमरर्षयः । तुष्टस्तानब्रवीद्देवो विघ्नेशो ब्रह्मणां पतिः ॥२४॥ विघ्नेश उवाच । देवर्षयो वरान् ब्रूत महाभागा हृदीप्सितान् । दास्यामि स्तोत्रतुष्टोऽहं भक्त्या स्वाधीनतां गतः ॥२५॥ भवत्कृतमिदं स्तोत्रं भवेत्

सर्वार्थदायकम् । यः पठेच्छृणुयाद्वाऽपि स सर्वं प्राप्नुयात् परम् ॥२६॥ विद्यामायुर्धनं धान्यं यशो धर्मं तथार्थकम् । कामं मोक्षं ब्रह्मभूयं दास्यामि स्तोत्रपाठतः ॥२७॥ पुत्रपौत्रादिकं सौख्यमारोग्यादिसमन्वितम् । विजयं जयकाले च स्तोत्र-पाठाल्लभेन्नरः ॥२८॥ मारणोच्चाटनाद्यं चानेन सिद्धं भविष्यति । परकृत्यप्रशमनं भवेच्च मरणादिकम् ॥२९॥ कारागृहादिजा पीडा नश्येदनेन निश्चितम् । सहस्रावर्तनाद्देवा मुनयो नाऽत्र संशयः ॥३०॥ एकविंशतिवारं चैकविंशति दिनानि च । पठेद्वा शृणुयात् सोऽपि मनसीप्सितमाप्नुयात् ॥३१॥ मद्भक्तिवर्धनं चेदं भविष्यति निरंतरम् । अपराधादिकस्याऽपि नाशकं चास्तु सर्वदा ॥३२॥ एवं गणपतेर्वाक्यं श्रुत्वा तममरर्षयः । प्रणम्य देवमूचुस्तं वचनं भक्तिसंयुताः ॥३३॥ देवर्षय ऊचुः । यदि प्रसन्नतां यातो विघ्नेशस्ते पदांबुजे । भक्तिं देहि विशेषेण वरं नान्यं वृणीमहे ॥३४॥ ममासुरस्त्वया नाथ शांतियुक्तः कृतो महान् । तेन स्वस्थानगाः सर्वे भविष्यंति दिवौकसः ॥३५॥ मुनयः कर्मकर्तारो जनाः स्वधर्मसंयुताः । भविष्यंति गणाध्यक्ष वृणीमहि किमप्यहो ॥३६॥ कृतं त्वया वराणां यत् कार्यं विघ्नविदारण । तथेति तानथोक्त्वाऽसौ देवेशोऽन्तर्दधे प्रिये ॥३७॥ देवा मुनिगणैः सार्धं तं प्रणम्य विशेषतः । खेदयुक्ता गणाध्यक्षं स्थापयामासुरादरात् ॥३८॥ हिमाचलस्य मध्ये तत् स्थानं विघ्नपतेः परम् । संपूर्णमुत्तरदिशि सर्वसिद्धिप्रदायकम् ॥३९॥ भाद्रशुक्लचतुर्थ्यां तु मध्याह्ने स्थापितः परः । विघ्नेशो मुनिभिः सार्धं देवैः सर्वसुखावहः ॥४०॥ मध्ये विघ्नपतिः साक्षाद्वामे सिद्धिः स्थिता स्वयम् । बुद्धिश्च दक्षिणांगे तु नागेशः पुरतः स्थितः ॥४१॥ क्षेत्राणि पृष्ठभागे च प्रयागादीनि मानदे । संस्थितानि प्रसेवार्थं विघ्नराजस्य नित्यदा ॥४२॥ वामे शुंमुमुखा देवा दक्षिणांगे मुनीश्वराः । पुरतो गणराजस्य सेवने ते सुलोचने ॥४३॥ असुरा नागमुख्याश्च गंधर्वा-प्सरसस्तथा । नानासिद्धगणास्तत्र वसंति सेवनोत्सुकाः ॥४४॥ गंगाद्याः सरितस्तत्र भक्तियुक्ता वसंति च । अन्ये नाना जना देवि वसंति भक्तिकारकाः ॥४५॥ दशयोजनविस्तारं क्षेत्रस्य मुख्यभावतः । चतुरस्रं महाक्षेत्रं ज्ञातव्यं स्वसुखप्रदम् ॥४६॥ तत्र गणेशतीर्थं तु सर्वसिद्धिप्रदायकम् । जंतवे स्नानमात्रेण भुक्तिमुक्तिप्रदं भवेत् ॥४७॥ अन्येषां विष्णुमुख्यानां तत्र तीर्थानि योगिनाम् । स्थितानि स्नानमात्रेण स्वस्वसायुज्यदानि तु ॥४८॥ अन्यदेवादिकानां ये भक्ताः क्षेत्रे मृता यदि । ते सर्वे शुक्लगत्या च ब्रह्मभूता भवंति वै ॥४९॥ यात्रां तत्र प्रकुर्वंति भक्ता भाद्रपदे प्रिये । शुक्लपक्षे चतुर्थ्यां वै महोत्सवपरायणाः ॥५०॥ क्षेत्रवासिजनाः सर्वे देवर्षिगणसंयुताः । परस्परं विशेषेण बोधयंति गजाननम् ॥५१॥

विघ्नराजचरित्राणि कथयंति परस्परम् । साश्रुनेत्रा भवंत्येते भक्त्या विघ्नेश्वरस्य च ॥५२॥ यस्मिन् कस्मिन् दिने देवि यात्रां कुर्वंति मानवाः । इह भुक्त्वाऽखिलान् भोगानंते मुक्तिमवाप्नुयुः ॥५३॥ ये तत्र विघ्नराजं तु नमंति मनसीप्सितम् । लब्ध्वा सुखयुताः सर्वे भवंते नात्र संशयः ॥५४॥ यत्र कुत्र स्थिता देवि भक्ता विघ्नेश्वरस्य च । ब्रह्मभूता न संदेहो दर्शनात् पावना नृणाम् ॥५५॥ मानुषं देहमाप्यैव न पश्येद्विघ्ननायकम् । पशुतुल्यः स विज्ञेयो जन्म तस्य निरर्थकम् ॥५६॥ एवं खंडेषु सर्वेषु द्वीपेषु क्षेत्रमुत्तमम् । विघ्नराजस्य विप्रेशैः कृतमुत्तरदिग्भवम् ॥५७॥ ब्रह्मभूयप्रदं क्षेत्रं वैघ्नेशं च चतुष्पदम् । तस्य किं वर्णनं कुर्यां यत्र वेदा विसिस्मिरे ॥५८॥ संक्षेपेण मया प्रोक्तं क्षेत्रमाहात्म्यमुत्तमम् । विस्तरेण न कोऽप्येतद्वर्णयितुं क्षमो भवेत् ॥५९॥ एवं विघ्नेश्वरो देवो नानाऽवतारकारकः । भक्तानां रक्षणार्थाया भक्तानां हरणाय च ॥६०॥ अवतारा असंख्याता विघ्नेशस्य महात्मनः । तेषां चरित्रकं वक्तुं न समर्थोऽहमंजसा ॥६१॥ इदं ममासुरस्यैव शमनं कथितं मया । चरित्रं विघ्नराजस्य सर्वसिद्धिप्रदायकम् ॥६२॥ शृणुयाद्यः पठेद्वाऽपि भयं तस्य ममात्मकम् । न भवेदीप्सितं सर्वं लभेद्ब्रह्म सनातनम् ॥६३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते ममासुरशांतियुक्तविघ्नेशचरितक्षेत्रवर्णनं नाम नवमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दितिरुवाच । श्रुत्वा ब्रह्मप्रदं पूर्णं सर्वसिद्धिप्रदायकम् । चरितं विघ्नराजस्य न तृप्ताऽहं मुनीश्वर ॥१॥ अहो विघ्नपतिः साक्षाद्ब्रह्मभूतो न संशयः । मया ज्ञातोऽधुना नाथ तव वाक्याद्विशेषतः ॥२॥ अवतारान् वद स्वामिन् विघ्नेशस्य महात्मनः । मुख्यानपारकेषु त्वं तारयस्व भवार्णवात् ॥३॥ मुद्गल उवाच । एवं पृष्टो महायोगी कश्यपो हर्षसंयुतः । समालिंग्य प्रियां दक्ष जगाद वचनं हितम् ॥४॥ धन्याऽसि दक्षपुत्रि त्वं येन विघ्नेश्वरे रतिः । जाता ते सार्थकं सर्वं करिष्यसि न संशयः ॥५॥ विघ्नेशेन महादेवि सृष्टं ब्रह्म ह्यसन्मयम् । सद्रूपं तत्र बिंबेन मायाभ्यां संस्थितः प्रभुः ॥६॥ ततस्ताभ्यां मिलित्वा वै सृष्टं च द्विविधं परम् । स्वतः परत उत्थानं ततः सोऽहं च बिंदुकम् ॥७॥ ततश्चतुर्विधं देवि विश्वं

सृष्टं विशेषतः। स्थूलसूक्ष्मसमात्माख्यमेकानेकादिसंयुतम् ॥८॥ एवं नानाविधं ब्रह्म विश्वं नानाविधं पुरा । आनंदेन विहीनत्वाद्धभौ व्यापारवर्जितम् ॥९॥ स्वस्वक्रियां प्रचक्रुर्वै न तत्र मोहयुक्तता। हीनता न तथा तानि खेदयुक्तानि संबभुः ॥१०॥ तैस्तपो घोररूपं तु कृतं विघ्नेश्वरस्य वै। ध्यात्वा ब्रह्ममयं रूपमेकाक्षरविधानतः ॥११॥ दिव्यवर्षसहस्रे तु गते तु विघ्ननायकः। हृदि तेषां प्रसन्नोऽभूत् प्रकटश्च बभूव ह ॥१२॥ नरकुंजरयुक्तं यद्दर्शयामास रूपकम्। दृष्ट्वा तं हर्षितानि ब्रह्माणि वै नेमुरंतरे ॥१३॥ विघ्नेशकृपया तेषां तद्रूपज्ञानजोऽमलः। बोधो बभूव तेनैव तुष्टानि स्म भजंति तम् ॥१४॥ ततो विष्णुस्वरूपेण विघ्नेशो वरदोऽभवत्। आगत्य तान् उवाचाथ वरान् वृणुत सर्वपः ॥१५॥ ततो ब्रह्माणि तं दृष्ट्वा विस्मितानि बभूविरे। विघ्नेशकृपया तेषां ज्ञानं तस्य बभूव ह ॥१६॥ बिंबात्मकश्च सर्वत्र विघ्नेशोऽयं प्रतापवान्। स्वमहिम्नि स्थितः सोऽपि गजवक्त्रादिचिह्नितः ॥१७॥ ततो हर्षयुतान्येवं प्रणेमुर्भक्तिभावतः। नत्वा पूज्य महाविष्णुं तुष्टुवुस्तं सुलोचने ॥१८॥ ब्रह्माण्यूचुः। विघ्नेशाय नमस्तुभ्यं गरुडध्वजिने नमः। चतुर्भुजाय सर्वेषां पतये वै नमो नमः ॥१९॥ चक्रपाणे रमेशाय परात्परतराय च। हेरंबाय विकुंठस्य नाथाय ते नमो नमः ॥२०॥ स्वानंदवासिने तुभ्यं गजाननाय ढुंढये। अपाराय महेशानसुताय तु नमो नमः ॥२१॥ काश्यपाय च शेषस्य पुत्राय भक्तवत्सल। दैत्यदानवनाशाय शार्ङ्गिणे ते नमो नमः ॥२२॥ गदाधराय देवाय वासुदेवाय देवप। धर्मस्थापनकाराय ब्रह्मणे ते नमो नमः ॥२३॥ सदसन्मयरूपाय चानंदपदधारिणे। समाय सर्वभावेषु शाश्वताय नमो नमः ॥२४॥ नमो वागतिरूपाय देहदेहिप्रचारिणे। बोधाय च विदेहाय विष्णवे ते नमो नमः ॥२५॥ किं स्तुमस्त्वां परेशान यत्र वेदा विकुंठिताः। योगिनस्तु महाभाग प्रसन्नो भव ते नमः ॥२६॥ ब्रह्माणि एवं स्तुत्वा च प्रणेमुस्तं जनार्दनम्। तान्युत्थाप्य जगाद स्वयं विष्णुर्हर्षसंयुतः ॥२७॥ विष्णुरुवाच। भवत्कृतं मदीयं च स्तोत्रं भुक्तिप्रदं भवेत्। मुक्तिदं शृण्वते ब्रह्मदायकं पठते सदा ॥२८॥ ब्रह्माणि यद्यदिच्छत तत्तद् वृणुत सत्वरम्। दास्यामि तपसा तुष्टः स्तोत्रेणानेन निश्चितम् ॥२९॥ ब्रह्माण्यूचुः। देह्यानंदमयं नाथ सौख्यं स्वाभाविकं परम्। सामर्थ्यं स्वस्वकार्येषु सत्यसंकल्पसंभवम् ॥३०॥ तव पादयुगे नाथ भक्तिं देहि विशेषतः। योगशांतिभवं सौख्यं ब्रह्मभूयप्रदायकम् ॥३१॥ विष्णुरुवाच। भवद्भिः प्रार्थितं सर्वं तत्तत् सर्वं भविष्यति। सफलं सर्वभावेन कुरुध्वं कार्यमुत्तमम् ॥३२॥ योगशांतिं प्रवक्ष्यामि ब्रह्मभूयप्रदायिनीम्। ब्रह्माणि भक्तियुक्तानि शृणुध्वं योगसेवनात् ॥३३॥

पंचचित्तमयीं बुद्धिं तत्र भ्रांतिकरीं पराम्। सिद्धिं जानीत सर्वत्र तयोः स्वामी गजाननः ॥३४॥ संप्रज्ञातमयो देहो संप्रज्ञातात्मकं शिरः। गजरूपं तयोर्योगे देहधारी बभूव ह ॥३५॥ संयोगाख्यो गकारश्च णकारो योगगः स्मृतः। तयोर्योगे गणेशोऽयं नामाऽभून्नात्र संशयः ॥३६॥ स्वसंवेद्येन योगेन दर्शनं जायते परम्। गणेशस्य च तेनाऽयं स्मृतः स्वानंदवासकः ॥३७॥ असच्छक्तिश्च सद्भानुः समोहं नेति शंकरः। चतुर्णां ब्रह्मणां योगे स्वानंदः कथ्यते बुधैः ॥३८॥ स्वानंदो मायया युक्तः संयोगात् ब्रह्मणां मतः। अयोगो ब्रह्मणां मायया हीनो व्यतिरेकतः ॥३९॥ संयोगाऽयोगयोर्योगे गणेशः शांतिरूपधृक्। तं भजध्वं विशेषेण हृदि चित्तप्रचालकम् ॥४०॥ तेन च ब्रह्मभूतानि भविष्यथ न संशयः। ब्रह्माणि कथितं योगं प्रयुङ्ध्वं भक्तिकारणात् ॥४१॥ यद्यच्च क्रियते तत्त्वैर्जगद्रचनकादिकम्। भवद्भिस्तद्गणेशाय समर्प्य सकलाः क्रियाः ॥४२॥ एवमुक्त्वा महाविष्णुस्तत्रैवांतरधीयत। ब्रह्माणि तं नमस्कृत्य साधयामासुरंजसा ॥४३॥ क्रमेण ब्रह्मभूतानि ब्रह्माणि च बभूविरे। तानि ब्रह्माणि योगेन गाणेशे दक्षनंदिनि ॥४४॥ तत आनंदयुक्तानि चक्रुः सर्वं चराचरम्। तत्रानंदेन सर्वाणि क्रीडां चक्रुः परस्परम् ॥४५॥ एतत्ते कथितं सर्वं चरित्रं देवि शोभनम्। विष्णुरूपधरस्यास्य विघ्नराजस्य सर्वदम् ॥४६॥ शृणुयाद्यो नरो वाऽपि पठेत्तस्य प्रिये सदा। भुक्तिमुक्तिप्रदं पूर्णं सर्वानंदकरं भवेत् ॥४७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते विष्ण्ववतारवर्णनं नाम दशमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कश्यप उवाच। एकदा सुखमासीनं नारायणमनामयम्। प्रणम्य तं महाभागो विष्वक्सेन उवाच ह ॥१॥ विष्वक्सेन उवाच। वद केशव योगं मे शांतिदं ते पदप्रदम्। संसाध्य विष्णुरूपोऽहं भविष्यामि सुभक्तितः ॥२॥ श्रीनारायण उवाच। नामरूपात्मकं सर्वमसत्यं वेदवादतः। जन्ममृत्युयुतं विद्धि ब्रह्म तत्र च तादृशम् ॥३॥ सर्वभेदविहीनं यत् परं ब्रह्मात्मवाचकम्। अमृतं सत्यमेकं तज्जानीहि योगसेवया ॥४॥ तयोर्योगे समं ब्रह्म सदानंदमयं परम्। विष्णुरूपं समाख्यातं जानीहि भक्तिभावतः ॥५॥ तदेव विघ्नराजाख्यं ब्रह्म वेदे प्रतिष्ठितम्। तं भजस्व विधानेन

तदा शांतिमवाप्स्यसि ॥६॥ विष्वक्सेन उवाच । कथं विघ्नेश्वरः स्वामिन् विष्णुरूपः प्रकीर्तितः । वद मां सर्वशास्त्रज्ञ संशयस्यापनुत्तये ॥७॥ श्रीविष्णुरुवाच । मायासुखं विजानीहि विघ्नयुक्तं विशेषतः । आत्मसौख्यं सदा प्रोक्तं विघ्नहीनं बुधैः पुरा ॥८॥ तयोर्योगे गणेशानो विघ्नराजः प्रकीर्तितः । सदानंदमयः सोऽपि योगिभिः सेवितोऽभवत् ॥९॥ गणः समूहरूपश्च समूहा ब्रह्मवाचकाः । बाह्यांतरादियोगेन ज्ञायते योगिभिर्ध्रुवम् ॥१०॥ गणेशानस्य बिंबं यत् पतितं मायया युतम् । तदेव शिवविष्ण्वादि वाचकं प्रबभूव ह ॥११॥ अतो गणेशरूपा वै वयं सर्वे कलांशतः । तं भजस्व विधानेन तदा शांतिमवाप्स्यसि ॥१२॥ कश्यप उवाच । विष्णोर्वचनमाकर्ण्य विष्वक्सेनः प्रणम्य तम् । जगाद भक्तिसंयुक्तो वचनं दक्ष पुत्रिके ॥१३॥ विष्वक्सेन उवाच । नाऽहं भजामि विघ्नेशं तव भक्तिपरायणः । त्वत्तः परतरं नास्ति वदसे किं जनार्दन ॥१४॥ एवमुक्त्वा स्वयं विष्णुं तं प्रणम्य ययौ प्रिये । वनं योगस्य सिद्ध्यर्थं तताप तप आदरात् ॥१५॥ आनंदं सर्वभावेषु विष्णुं धृत्वा स्वयं हृदि । जजाप मंत्रराजं स इदं विष्णुस्तु ऋगभवम् ॥१६॥ निराहारपरो भूत्वा विष्वक्सेनः प्रतापवान् । तपश्चकार तद्भक्त्या वैष्णवानां शिरोमणिः ॥१७॥ ततो वर्षशते पूर्णे प्रसन्नो गणनायकः । ददौ योगं समाख्यं तु तस्मै भावधरः प्रभुः ॥१८॥ स्वयं संयोगरूपं तं दृष्ट्वा संहर्षितोऽभवत् । ततो हृदि गणेशानं ददर्श लक्ष्मीसंयुतम् ॥१९॥ दृष्ट्वा खेदसमायुक्तो विष्णुं चिंत्य महायशाः । मंत्रं जजाप तत्रैव गणेशमवलोकयन् ॥२०॥ क्षणं नारायणं लक्ष्म्या युक्तं ददर्श चेतसि । क्षणाद्विघ्नेश्वरं सोऽपि विस्मितः प्रबभूव ह ॥२१॥ तपसोऽतिप्रभावेण शुद्धचित्तो बभूव ह । त्यक्त्वाऽभिमानजं मोहं विचारमकरोत् हृदि ॥२२॥ मायामयं शरीरं तु मायाहीनं च मस्तकम् । गजाकारं तयोर्योगे देहधारी गणेश्वरः ॥२३॥ अस्य बिंबं सदा मोहयुतं देवि विनिश्चितम् । विष्णुः समस्वभावस्थो लक्ष्म्यायुक्तो विशेषतः ॥२४॥ स्वमहिम्नि स्थितो देवः सिद्धिबुद्धिसमन्वितः । मायाखेलकरः सोऽपि लक्ष्मीपतिरुदाहृतः ॥२५॥ विष्णुना बोधितोऽहं तु पूर्वकालेऽभिमानतः । अबुध्यं नैव तद्रूपं वृथा पंडितको यथा ॥२६॥ अहो योगसमं किंचिन्न दृष्टं नैव संश्रुतम् । यस्य सेवनमात्रेणाभिमानो नाशमेष्यति ॥२७॥ एवं विचार्य देवेशं गणेशं ध्यानसंयुतः । ध्यात्वा पुपूज भावेन मानस्या पूजया स तु ॥२८॥ ततः प्रसन्नतां यातो गणेशो भक्तवत्सलः । वरान् दातुं समायातो विष्वक्सेनाश्रमे प्रिये ॥२९॥ ध्यानस्थो न बुबोधैव समागतं गजाननम् । विष्वक्सेनस्ततश्चित्रं चकार विघ्ननायकः ॥३०॥ हृदिस्थं गणनाथं

स लोपयामास तत्क्षणात्। ततोऽतिविह्वलः सोऽपि तं ददर्श बहिः स्थितम् ॥३१॥ लक्ष्म्यायुक्तं गणाधीशं दृष्ट्वा हर्षसमन्वितः। उत्थाय तं प्रणम्याऽऽदौ विष्वक्सेनः पुपूज ह ॥३२॥ पूजयित्वा पुनर्देहं प्रणम्य साश्रुलोचनः। तुष्टाव भक्तिसंयुक्तः कृतांजलिर्गजाननम् ॥३३॥ विष्वक्सेन उवाच। विघ्नेशाय नमस्तुभ्यं भक्तविघ्नविनाशिने। विघ्नदात्रे सुनाथाय ह्यभक्तेभ्यो नमो नमः ॥३४॥ लक्ष्मीपते नमस्तुभ्यं सिद्धिबुद्धिवराय च। स्वानंदवासिने देव विकुंठस्थाय ते नमः ॥३५॥ केशवाय परेशाय चक्रपाणे गदाधर। हेरंबाय नमस्तुभ्यं परशोधारकाय च ॥३६॥ दशरथसुतायैव वासुदेवाय ते नमः। शिवपुत्राय देवेश वरेण्यसूनवे नमः ॥३७॥ योगाकाराय नाथाय योगानां शांतिदायिने। कर्त्रे हर्त्रे सदा पात्रे गणेशाय नमो नमः ॥३८॥ शेषशायिन्नमस्तुभ्यं नाभिशेषाय ते नमः। सर्पयज्ञोपवीताय लंबोदराय शाश्वते ॥३९॥ नानाखेलकरायैव नानामायाप्रचालक। खेलहीनाय देवानां सहायाय नमो नमः ॥४०॥ असुराणां विनाशायासुरेभ्यो वरदायिने। ढुंढिराजाय भक्तेश भक्तिप्रियाय ते नमः ॥४१॥ गणेशाय गणानां तु चालकाय परात्पर। नारायणाय कृष्णाय मेघश्यामाय ते नमः ॥४२॥ मायायुक्ततया नाथ विष्णुरूपोऽसि सर्वदा। स्वमहिम्नि स्थितस्त्वं तु गणेशस्ते नमो नमः ॥४३॥ अतो गणेश ते नाम विष्णुर्वेदेषु कथ्यते। यो विष्णुः स हि विघ्नेशो नांतरं विद्यते कदा ॥४४॥ एवं स्तुत्वा गणेशानं प्रणनाम महामतिः। जगाद विष्वक्सेनं च तं देवो विघ्ननायकः ॥४५॥ श्रीविघ्नेश उवाच। वरान् वरय मत्तस्त्वं विष्वक्सेन महामते। तव दास्यामि भक्त्याऽहं तुष्टः स्तोत्रेण मानद ॥४६॥ त्वया कृतमिदं स्तोत्रं भुक्तिमुक्तिप्रदं भवेत्। पठते शृण्वते चैव सर्वसिद्धि-प्रदायकम् ॥४७॥ कश्यप उवाच। गणेशवचनं श्रुत्वा विष्वक्सेनस्तमब्रवीत्। कृत्वा करपुटं भक्त्या नम्रकंधर आदरात् ॥४८॥ विष्वक्सेन उवाच। यदि प्रसन्नतां यातस्तदा देहि गजानन। भक्तिं ते पादपद्मे मे शांतियोगं प्रयच्छ च ॥४९॥ जगाद गणराजस्तु श्रुत्वा तं हर्षयन्निव। मदीया भक्तिरुग्रा ते भविष्यति न संशयः ॥५०॥ विष्णुसंगतियोगेन शांतियोगमवाप्स्यसि। यद्यदिच्छसि तत्तत्ते सफलं चाऽस्तु सर्वदा ॥५१॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो भक्तियंत्रितः। विष्वक्सेनो जगामैव विकुंठं विष्णुमानमत् ॥५२॥ वृत्तांतं कथयामास श्रुत्वा संहर्षितोऽभवत्। केशवस्तूत्तमं तस्मै महायोगं जगाद च ॥५३॥ साधयित्वा यथान्यायं योगिवंद्यो बभूव ह। विष्वक्सेनो गणेशानमभजद्भक्तिसंयुतः ॥५४॥ गुरुरूपं महाविष्णुं

देवरूपं गणेश्वरम् । धृत्वा हृदि महातेजा योगध्यानपरोऽभवत् ॥५५॥ इदं लक्ष्मीगणेशस्य कथितं ते चरित्रकम् । सर्वसिद्धिप्रदं पूर्णं पठनाच्छ्रवणाद्भवेत् ॥५६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते लक्ष्मीविनायकचरितवर्णनं नामैकादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कश्यप उवाच । मधुकैटभनाशार्थं विष्णुना तपसा पुरा । आराधितो गणेशानस्तद्भक्त्या योगसेवया ॥१॥ ततः प्रसन्नतां यातो विघ्नेशः प्रददौ वरान् । तैर्युक्तः स जघानैव दैत्यौ परमदारुणौ ॥२॥ गणेशवरदानेन यशोयुक्तो जनार्दनः । तं जेतुं कः क्षमो देवि प्रभविष्यति ते सुतः ॥३॥ अतस्त्यक्त्वा स्वपुत्रेषु ममतां भज भावतः । विघ्नेशं योगिनां तेन वंद्या त्वं प्रभविष्यसि ॥४॥ यादृशं गणराजेन रचितं त्रिविधं पुरा । तादृशं वर्तते सर्वं सदेवासुरमानुषम् ॥५॥ कश्यपस्य वचः श्रुत्वा हर्षयुक्ता दितिः पुनः । जगाद तं सुखार्थाय योगिवंद्यं प्रजापते ॥६॥ दितिरुवाच । विघ्नराजावतारस्य चरितं पुनरादरात् । वद मे मुनिमुख्य त्वं ज्ञानं तस्य तथा परम् ॥७॥ कश्यप उवाच । धर्मघ्नस्य च पुत्रोऽभूद्यज्ञभुङ्नामकोऽसुरः । स शैवीं साधयामासोपासनां पापनिश्चयः ॥८॥ पंचाक्षरविधानेन तोषयामास शंकरम् । दिव्यैर्वर्षसहस्रैस्तं वरदः शंकरो ययौ ॥९॥ स्तुतः संपूजितस्तेन प्रसन्नस्तमुवाच ह । वरान् वरय दास्यामि तपसा तोषितोऽसुर ॥१०॥ स वव्रे त्रिगुणेभ्यो मे मरणं न भवेत् कदा । राज्यमारोग्यसंयुक्तं ब्रह्मांडस्य च देहि भोः ॥११॥ यद्यदिच्छामि देवेश तत्तन् मे सफलं भवेत् । तथेति तं जगादैव शंकरोऽन्तर्हितोऽभवत् ॥१२॥ ततः स्वगृहमागत्य दैत्यराजो बभूव ह । यज्ञभुक् सैन्यमादाय जिग्ये ब्रह्मांडमोजसा ॥१३॥ देवाः शंभुमुखाः सर्वे प्रपेलुश्च दिशो दश । तेषां पदेषु दैत्येन्द्रान् स्थापयामास यज्ञहा ॥१४॥ ततो यज्ञविनाशार्थं यतते स्म विशेषतः । यज्ञहा क्रोधसंयुक्तो मुनीन् सर्वानताडयत् ॥१५॥ त्यक्त्वा मुनिगणा यज्ञान् प्रपेलुर्भयसंयुताः । वर्णसंकरभावं च चकार सचराचरम् ॥१६॥ ततो विष्णुविनाशार्थं यतते स्म महाखलः । देवानां मूलनाशार्थं दैत्यः परमदारुणैः ॥१७॥ यज्ञो विष्णुः समाख्यातो वेदेषु वेदवादिभिः । यज्ञनाशे स्वयं नष्टो भवि-

ष्यति जनार्दनः ॥१८॥ एवं विचार्य दैत्येशो यज्ञान् सर्वान् बभंज ह । यज्ञहीनं चकारैव त्रैलोक्यं सचराचरम् ॥१९॥ ततो विष्णुः क्षुधाविष्टो बभूवे देवसंयुतः । अस्थिचर्मावशेषश्च सस्मार गणनायकम् ॥२०॥ रक्ष मां गणनाथ त्वं दैत्यात् परमदारुणात् । मरिष्यामि न संदेहो यज्ञनाशप्रभावतः ॥२१॥ देवैः सार्धं महाविष्णुस्तताप तप उत्तमम् । एकाक्षरविधानेन तोषयामास विघ्नपम् ॥२२॥ गते वर्षशते पूर्णे तं ययौ गणनायकः । स्तुतः संपूजितः सर्वैः प्रसन्नो वरदोऽभवत् ॥२३॥ तैर्वृतो दैत्यनाशार्थं तथेति क्रोधसंयुतः । तान् जगाद ययौ हंतुं यज्ञघ्नं देवपैर्वृतः ॥२४॥ कृत्वा युद्धं महाघोरं जघानांकुशघाततः । यज्ञघ्नं मुक्तिगं चक्रे दैत्यान् पातालगामिनः ॥२५॥ ततः स देवसंयुक्तो विष्णुर्मुनिगणैस्तथा । तुष्टाव सुस्थिरो भूत्वा पूज्य नत्वा कृतांजलिः ॥२६॥ श्रीविष्णुरुवाच । नमस्ते विघ्नराजाय विघ्नानां विघ्नकारिणे । महाविघ्नप्रशांताय देवदेवेश ते नमः ॥२७॥ अनादये परेशाय सर्वाऽऽदौ संस्तुताय च । सर्वेभ्यो वरदात्रे ते वरदाय नमो नमः ॥२८॥ विनायकाय सर्वेषां नायकाय परात्पर । ढुंढिराजाय वेदादिढुंढिताय नमो नमः ॥२९॥ सर्वेभ्यः स्वस्वरूपेण सुखदाय परात्मने । आनंदायाप्रमेयाय ब्रह्मणे ते नमो नमः ॥३०॥ गणानां पतये तुभ्यं नानागणसुरूपिणे । सदा स्वानंदनाथाय सिद्धिबुद्धिपते नमः ॥३१॥ ब्रह्मणे विष्णवे तुभ्यं शक्तये शंकराय च । इंद्रादिदेवरूपाय कलया ते नमो नमः ॥३२॥ मुनये क्षेत्ररूपाय वैश्याय शूद्ररूपिणे । पशुपक्ष्यादिरूपाय वर्णाश्रमयुजे नमः ॥३३॥ नागाय सुररूपाय राक्षसाय विहारिणे । चराचरमयायैव शूर्पकर्णाय ते नमः ॥३४॥ त्रिनेत्राय त्रिशूलस्य धारकाय च चक्रिणे । पाशांकुशधरायैव हेरंबाय नमो नमः ॥३५॥ नमस्ते परेशाय सर्वात्मकाय सदा घोधरूपाय नैरंजनाय । अयोगाय संयोगमायाधराय जनेभ्यः सुशांतिप्रदायाथ धाम्ने ॥३६॥ किं स्तौमि त्वां गणाधीश यत्र वेदाश्च योगिनः । विसिस्मिरे सुशांतिस्थाः शांतिरूपाय ते नमः ॥३७॥ यज्ञहा निहतः स्वामिंस्तेन देवर्षयो वयम् । रक्षिताः सर्वभावेन प्राणदातर्नमो नमः ॥३८॥ भक्तिं देहि गणाधीश तव पादांबुजेऽमलाम् । तया वयं च योगेश बंधहीना भवामहे ॥३९॥ एवमुक्त्वा प्रणेमुस्तं देवा मुनिसमन्विताः । तांस्तथेति जगादैवांऽतर्दधे शूर्पकर्णकः ॥४०॥ तत्र मूर्तिं समास्थाय शूर्पकर्णस्य सर्वदाम् । पूज्य स्वस्थानगाः सर्वे बभूवुर्विगतज्वराः ॥४१॥ स्वस्वाचारसमायुक्तं बभूव ह चराचरम् । एवं चकार विघ्नेशो नानादैत्यविहिंसनम् ॥४२॥ अवतारा असंख्याता विघ्नराजस्य शोभने । तेषां वक्तुं चरित्राणि न समर्थाः शिवादयः ॥४३॥ संक्षेपेण मया तस्याऽवताराः कथिताः पराः ।

भजस्व तं विधानेन तदा शांतिमवाप्स्यसि ॥४४॥ रजोयुक्तं यथा धान्यं रजोहीनं करोति च । नरैः संसाधितं शूर्पं योग्यं भोजनकादिषु ॥४५॥ तथा मायाविकारेण युक्तं ब्रह्म न लभ्यते । त्यक्त्वोपासनकं तस्य शूर्पकर्णस्य सुंदरि ॥४६॥ शूर्पकर्णं समाश्रुत्य मलं त्यक्त्वा हृदि स्थितम् । ब्रह्मैव तज्जानिस्थः शूर्पकर्णस्ततः स्मृतः ॥४७॥ ब्रह्मदः शूर्पवत् हृत्स्थो वेदेषु कथितो भवेत् । तं भजस्व विधानेन शांतियुक्ता भविष्यसि ॥४८॥ शूर्पकर्णावतारस्य कथितं चरितं मया । यज्ञघ्नस्य वधार्थाय बभूव देहधारकः ॥४९॥ य इदं शृणुयाद्वाऽपि पठेद्वा पाठयेन्नरः । स मानसेप्सितं लब्ध्वा सुखी भवेन्निरंतरम् ॥५०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते शूर्पकर्णावतारवर्णनं नाम द्वादशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ कश्यप उवाच । एकदा माघमासे तु मकरस्थे दिवाकरे । तीर्थानि देवविप्राद्याः प्रयागं जग्मुरादरात् ॥१॥ सर्वे संहृष्टभावस्था माघस्नानपरायणाः । ओंकारगणनाथं ते पुपूजुर्भक्तिसंयुताः ॥२॥ ततः शूलभृतं पूज्य तत्रस्थं माधवं प्रियं । त्रिवर्णी भावसंयुक्ताः कथां चक्रुः पुरातनीम् ॥३॥ अमंस्तत्राऽऽजगामैव दत्तो योगींद्रसत्तमः । अवधूतस्य मार्गस्य प्रकाशक उदाहृतः ॥४॥ गाणेशं ब्रह्मपं ब्रह्म परं सर्वार्थदायकम् । ओंकारगणनाथं स प्रणम्य स्तोत्रमारभत् ॥५॥ तत् दृष्ट्वा परमाश्चर्यमाययुस्ते शिवादयः । योगिनः कश्यपाद्याश्चाऽन्ये देवादय आदरात् ॥६॥ तं प्रणम्य स्थिताः सर्वे योगींद्रं ब्रह्म तत्परम् । गणेशभजने सक्तं दृष्ट्वा पप्रच्छुरादरात् ॥७॥ शिवादय ऊचुः । भगवन् सर्वतत्त्वज्ञ ब्रह्मभूतपरायण । साक्षाद्ब्रह्मशरीरस्त्वं समागतो यदृच्छया ॥८॥ अवधूतस्य मार्गस्य प्रकाशार्थं विशेषतः । देहधारी भवान्नाथ पावनाय शरीरिणाम् ॥९॥ तव दर्शनमात्रेण कृतकृत्या वयं प्रभो । जाताः कुलयुताः स्वामिन् बोधयस्व मुनीन् सुरान् ॥१०॥ एवं विनयसंयुक्तैः स्तुतः पृष्टो महामुनिः । जगाद तान् महाभागान् हर्षेण महताऽऽवृतः ॥११॥ दत्तात्रेय उवाच । ब्रह्मविष्णुशिवाद्याश्चांगिराद्या मुनयोऽमलाः । शेषाद्या नागराजाश्च शृणुध्वं मे वचो हितम् ॥१२॥ ब्रह्मेदं सर्वमाभाति तं भजध्वं हिताय वः । समर्था ब्रह्मभूताश्च भविष्यथ न संशयः ॥१३॥ तस्य तद्वचनं श्रुत्वा पुनः सर्वे जगुर्वचः । हर्षेण योगिवंद्यं तं कृत्वा

करपुटं प्रिये ॥१४॥ शिवाद्या ऊचुः । ब्रह्मणि ब्रह्मभूतस्त्वं गणेशं भजसे कथम् । नामरूपधरं देवमोंकाराकृतिधारकम् ॥१५॥ अस्माकं कुलदेवोऽयं त्रिगुणात्मशरीरिणाम् । मूलभूतो न संदेहो योगिनां कथमंजसा ॥१६॥ तेषां तद्वचनं श्रुत्वा स्मयमानो महायशाः । दत्तो जगाद हर्षेण ज्ञानदानार्थमादरात् ॥१७॥ दत्त उवाच । गणेशो ब्रह्मणां नाथो वेदेषु परिकीर्तितः । ब्रह्म नानाविधं तद्वत् कथितं मायया युतम् ॥१८॥ अन्नं ब्रह्मेति देवेशा मुनयः शृणुत प्रियाः । तत्रान्नमयरूपा तु माया मोहकरी बभौ ॥१९॥ प्राणो ब्रह्मेति तत्रैव प्राणाकारविमोहिनी । माया मनोमयी तद्वन् मनो ब्रह्मणि संस्थिता ॥२०॥ विज्ञानं ब्रह्म तत्रेयं माया विज्ञानरूपिणी । आनंदं ब्रह्म यत् प्रोक्तं युतमानंदमायया ॥२१॥ चैतन्यं ब्रह्म यत् प्रोक्तं माया चेतनरूपिणी । बिंदुब्रह्मेति तत्रैव माया बिंदुमयी बभौ ॥२२॥ सोऽहं ब्रह्मेति यत्रेयं माया सोऽहं प्रकाशिनी । बोधो ब्रह्मेति बोधाख्या माया तत्र विमोहिनी ॥२३॥ विदेहं ब्रह्म यत् प्रोक्तं माया वै देहरूपिणी । तया तत्र महादेवा भ्रमंति ब्रह्ममानिनः ॥२४॥ कर्म ब्रह्मेति कर्माख्या माया तत्र विमोहिनी । ज्ञानं ब्रह्मेति तद्वत्तु ज्ञानमायायुतं बभौ ॥२५॥ समं ब्रह्मेति तत्रैव माया समस्वरूपिणी । सहजं ब्रह्म यत् प्रोक्तं सहजाख्यविकारदम् ॥२६॥ असद्ब्रह्मेति यत् प्रोक्तं तत्रासन्मायया युतम् । सद्ब्रह्मेति सदाकारमायायुक्तं प्रकीर्तितम् ॥२७॥ सदसन्मयभावाख्यं ब्रह्म प्रोक्तं मुनीश्वराः । उभयात्मविकारेण ज्ञातव्यं संयुतं सदा ॥२८॥ अव्यक्तं ब्रह्म यत् प्रोक्तं युतमव्यक्तमायया । स्वसंवेद्यं परं ब्रह्म युतं स्वानंदमायया ॥२९॥ आत्मा-द्वयैकसर्वाख्याद्याः शब्दाः परिकीर्तिताः । महावाक्यादिभिस्ते तु तत्तन्मायाप्रकाशकाः ॥३०॥ शिवविष्णुमुखाः शब्दा ब्रह्मवाच्याः प्रकीर्तिताः । तत्तद्विकारसंयुक्तान् जानीत देवसत्तमाः ॥३१॥ पृथ्वी जलादितत्त्वानि ब्रह्मणां वाचकानि तु । तत्तद्विकारयुक्तानि जानीत देवसत्तमाः ॥३२॥ एवं नानाविधान्येव ब्रह्माणि कथितानि च । वेदादिषु समस्तानि माया-मोहयुतानि तु ॥३३॥ तेषां स्वामिस्वरूपेण तिष्ठति ब्रह्मणस्पतिः । ब्रह्मणां पातृभावाच्च पालयितृत्वकारणात् ॥३४॥ स एवायं गणाध्यक्षो वेदेषु कथितोऽभवत् । ब्रह्मभूयमयः साक्षात्तं भजामि द्विजोत्तमाः ॥३५॥ उत्पत्तिनाशहीनं यद् गजाख्यं ब्रह्म चक्षते । सांख्यं शिरो गणेशस्य गजानन इति स्मृतः ॥३६॥ भूमिसाधनभावेन भवेत् ब्रह्मणि तन्मयः । देहस्तस्य च योगाख्यो नानाभूमिप्रधारणात् ॥३७॥ तयोर्योगे गणेशानो देहधारी बभूव ह । सांख्ये योगमयः साक्षात् पूर्णशांतिप्रदायकः ॥३८॥ संयोगेऽयं गकाराख्यो ह्ययोगे णमयः स्मृतः । तयोरीशो गणेशानो नामाऽयं वेदवादतः ॥३९॥

पंचचित्तमयी बुद्धिर्दक्षिणांगं बभूव ह । पंचभ्रांतिकरी सिद्धिर्वामांगं तस्य सर्वदा ॥४०॥ तयोः स्वामी गणाध्यक्षो
मायाभ्यामत्र खेलति । चित्ते चिंतामणिः साक्षात् प्रकाशकारकस्तयोः ॥४१॥ समोहं चित्तमुत्सृज्य योगींद्रो जायते
नरः । तं भजामि विशेषेण चित्तचालनकारकम् ॥४२॥ कृतानि सिद्धिबुद्धिभ्यां ब्रह्माणि सकलानि वै । तानि त्यक्त्वा
कथं ब्रह्म लभ्यते मानवैः परम् ॥४३॥ अतोऽयं देहभृद्भूत्वा भक्तमार्गप्रदायकः । सुलभत्वाय देवेशो परो जानीत
संस्थितः ॥४४॥ तस्य तद्वचनं श्रुत्वा वसिष्ठस्तमुवाच ह । संशयस्य विनाशार्थं सर्वैः संप्रेरितो वचः ॥४५॥ वसिष्ठ उवाच ।
ब्रह्म ब्रह्मैव वेदेषु कथितं सर्वसंमतम् । ब्रह्मणस्पतिरेकोऽयं पतिस्तत्र कथं मुने ॥४६॥ पतिरूपा महामाया गणेशे
संस्थिताऽभवत् । यथाऽन्नादिविकारस्थं ब्रह्म तद्वदयं मतः ॥४७॥ वसिष्ठस्य वचः श्रुत्वा दत्तो हर्षसमन्वितः । जगाद तं
विशेषज्ञं योगींद्रः परमार्थवित् ॥४८॥ अन्नप्राणादियुक्तानि ब्रह्माणि रचितानि तु । गणेशेन महायोगिंस्तेनायं पति-
रुच्यते ॥४९॥ ब्रह्मभिः कथितश्चायं पतिस्तेषां न संशयः । स्वयं ब्रह्मैव तन्नाशे तथाऽपि पातृभावतः ॥५०॥ अन्नप्राणादि-
कान्येव विकारान् संत्यजंति च । ब्रह्माणि ब्रह्मभूतानि भविष्यंत्यस्य सेवनात् ॥५१॥ ब्रह्माणि ब्रह्मणि यदि चेद्गतानि
महामुने । पतिः केषां गणेशानः कथ्यते कैर्वदाशु मे ॥५२॥ अतो मायाविकारेण हीनोऽयं गणनायकः । ब्रह्मैवोपास्य-
भावात्तु पतित्वं कथनात्मकम् ॥५३॥ इति तस्य वचः श्रुत्वा पुनस्तं नारदोऽब्रवीत् । योगींद्रं भावबोधार्थमवधूतमकल्मषम् ॥५४॥ नारद उवाच । गणेशे त्वं महायोगिंस्तदाकारो न संशयः । अहं दत्तोऽयमेकश्च गणेशः कुत्र वर्तते ॥५५॥
न भिन्नश्चेत् महाभाग भजसे कं पुरः स्थितम् । इमं मे संशयं छिंधि सर्वज्ञोऽसि महामते ॥५६॥ दत्त उवाच । देहोऽयं
नरतुल्यो मे करोति कर्म नित्यदा । शुभाशुभं विशेषेण नामरूपविकारतः ॥५७॥ ब्रह्म सर्वत्र विप्रेश तन्मयं नात्र संशयः ।
सत्ता न्यूनाधिका भाति विचारय विचक्षण ॥५८॥ ब्रह्मणस्पतिशब्दाख्या सत्ता गणपतौ स्थिता । नान्यत्र शंभुविष्णवादि
भावेषु पश्य मानद ॥५९॥ अतः प्रत्यक्षचित्तस्थं ब्रह्म विघ्नेशवाचकम् । दृष्ट्वा तत्र भजेत् कोऽपि ब्रह्मभूयपरः कथम् ॥६०॥
अतो देहधरोऽहं तु ब्रह्माकारो गणेश्वरः । तं भजामि विशेषेण देहचेष्टापरायणः ॥६१॥ देहः क्रियात्मकः प्रोक्तश्चित्तं
चिंतनकारकम् । स्वभावेन यथाऽन्यद्वै करोति चिंतनादिकम् ॥६२॥ तथा गणेश्वरं मेऽत्र देहश्चित्तं भजेत् ध्रुवम् । तयोः
प्रकाशकं ब्रह्म कथं भजेद्गजाननम् ॥६३॥ ब्रह्म ब्रह्मैव संजातं तदाकारं मदीयकम् । देहश्चित्तं भजेत्तं वै स्वप्रकाशकरं

सदा ॥६४॥ अनेन योगमार्गेण भजामि गणनायकम्। न भिन्नोऽहं गणेशानात् कं पृच्छसि विचारय ॥६५॥ यथा करोमि नित्यं तु भक्षणादिकमादरात्। तथा गणेश्वरं तात भजामि भक्तिसंयुतः ॥६६॥ नाऽहं भोक्ता स्वदेहस्थस्तथा मां विद्धि देहगम्। न भक्तं गणराजस्य देहधर्मः प्रवर्तते ॥६७॥ ब्रह्मणि ब्रह्मभूतो यो न भजेद्गणनायकम्। तथाऽपि देहचित्तेऽन्यत् करिष्यतः स्वभावतः ॥६८॥ न मुख्यो ब्रह्मभूतेषु योगिषु भक्त उच्यते। श्रेष्ठस्तस्माद्गणेशानं भजामि हर्षसंयुतः ॥६९॥ अनायासेन चित्तस्थं देहस्थं ब्रह्म प्राप्य यः। दृष्ट्वा तं न भजेत् सोऽपि ब्रह्मघ्नः परिकीर्तितः ॥७०॥ गणेशं मूर्तिगं दृष्ट्वा योगेशं शांतिदायकम्। कस्य योगिजनस्यात्र प्रीतिः सद्यो न जायते ॥७१॥ इति तस्य वचः श्रुत्वा हर्षयुक्ताः शिवादयः। नारदाद्याः प्रणेमुस्तं विस्मितास्तस्य चेष्टितैः ॥७२॥ जगुस्तं हर्षसंयुक्ता वयं संशयवर्जिताः। कृतास्त्वया महाभाग एकमार्गपरायणाः ॥७३॥ नानामतविभेदेन भ्रांतियुक्ता भ्रमंति तु। त्यक्त्वा गणेश्वरं पूर्णं सर्वपूज्यं महामुने ॥७४॥ भ्रांतिनाशार्थमत्यंतं भवान् विघ्नेश्वरेण च। निर्मितो योगमार्गज्ञः सर्वशांतिप्रदायकः ॥७५॥ एवं तैः संस्तुतो दत्तः प्रहस्य प्रययौ ततः। शिवादयो वसिष्ठाद्याः स्वालयं प्रययुः प्रिये ॥७६॥ सर्वसारां समाख्यातां गीतां दत्तमुखाच्च्युताम्। पठनाच्छ्रवणान्नृभ्यः शांतिदां सर्वसिद्धिदाम् ॥७७॥ कश्यपस्य वचः श्रुत्वा हर्षिता तं प्रणम्य सा। जगाद भावगंभीरा दितिर्विघ्नेश्वरे रता ॥७८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खण्डे विघ्नराजचरिते दत्तगीतावर्णनं नाम त्रयोदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ दितिरुवाच। गणेशस्य महाभाग वदोपासनकं प्रभो। तेन विघ्नेश्वरं भक्त्या भजिष्यामि निरंतरम् ॥१॥ मुद्गल उवाच। एवं पृष्टो महायोगी दित्या तस्यै ददौ मनुम्। दशाक्षरं गणेशस्य विधियुक्तं विधानवित् ॥२॥ सा तं प्रणम्य योगींद्रं कश्यपं प्रययौ ततः। वनं वृक्षादिसंयुक्तं तपस्तत्र तताप वै ॥३॥ निराहारेण संयुक्ता गणेशध्यानतत्परा। नासाग्रन्यस्तदृष्टिः सा मंत्रजापं चकार च ॥४॥ त्यक्त्वा सर्वां कामनां सा दितिर्विघ्नेश्वरे रता। तपः-

प्रभावयोगेन भ्रांतिहीनाऽभवद्विधे ॥५॥ पुत्रपौत्रादिके भावे रसहीना बभूव ह। योगेप्सुः पूर्णभावेनाऽभजत्तं द्विरदाननम् ॥६॥ एवं वर्षसहस्रेण योगभूतिपरायणा। शांतियोगं समासाद्य योगिवंद्या बभूव सा ॥७॥ तथा सा दत्तमार्गं तं दितिः सस्मार चेतसि। भक्त्या विघ्नेश्वरं देवी न मुमोच कदाचन ॥८॥ ततः प्रसन्नभावेन तां ययौ गणनायकः। जगादाऽसौ वरान् ब्रूहि ध्यानस्थां मनसेप्सितान् ॥९॥ गणेशवचनं श्रुत्वा दितिर्हर्षसमन्विता। उत्थाय तं नमस्कृत्य पूजयामास भक्तितः ॥१०॥ पुनः प्रणम्य विघ्नेशं सा तुष्टाव कृतांजलिः। गणेशं दक्ष ते पुत्री दितिः साश्रुमुखांबुजा ॥११॥ दितिरुवाच। नमस्ते विघ्नराजाय भक्तविघ्नविदारण। अभक्तेभ्यो महाविघ्नप्रदाय तु नमो नमः ॥१२॥ काश्यपाय परेशाय विनायकाय ढुंढये। लंबोदराय ते सर्वभोगभोक्त्रे नमो नमः ॥१३॥ दीनानां पतये तुभ्यं दीनदीनाय ते नमः। दीनपालकनाथाय हेरंबाय नमो नमः ॥१४॥ परेशाय गणेशाय परात्परतमाय ते। परात्पराणां कर्त्रे ते महोदराय वै नमः ॥१५॥ अनादये च सर्वेषामादिमूर्तिधराय च। आदिपूज्याय सर्वेषामंतःस्थाय नमो नमः ॥१६॥ शिवपुत्राय विष्णोश्च पुत्राय परमात्मने। वरेण्यसूनवे तुभ्यं शेषपुत्राय ते नमः ॥१७॥ सर्वपूज्याय ज्येष्ठाय ज्येष्ठानां ज्येष्ठमूर्तये। ज्येष्ठराजतमायैव मात्रे पित्रे नमो नमः ॥१८॥ ब्रह्मणां पतये तुभ्यं ब्रह्मभ्यो ब्रह्मदायिने। ब्रह्मणां ब्रह्मरूपायैकदंताय नमो नमः ॥१९॥ गजाननाय देवायासुराय समभाविने। योगाकाराय योगिभ्यो योगदाय नमो नमः ॥२०॥ किं स्तौमि त्वां गणाधीश शांतीनां शांतिरूपिणम्। वेदादयः शिवाद्याश्च यत्र शांतिं प्रलेभिरे ॥२१॥ अतस्त्वां प्रणमाम्येव सर्वेऽशं तेन विघ्नप। संतुष्टो भव मे भक्त्या स्वल्पया नाथ ते नमः ॥२२॥ यदि त्वं वरदो मेऽसि तदा मे पुत्र आदरात्। भव स्वामिन् दयासिंधो तेनाऽहं तारिता त्वया ॥२३॥ आसुरी प्रकृतिः प्रोक्ता वेदेषु द्विरदानन। साऽहं कया महाभक्त्या भजिष्यामि निरंतरम् ॥२४॥ त्वं मे पुत्रो यदा नाथ भविष्यसि सुसिद्धिदः। तव मातुः कथं मायामयो बंधः कदाचन ॥२५॥ भक्तिं त्वच्चरणे ढुंढे देहि नित्यं विशेषतः। आसुरीं बधहीनां मां कुरुष्व त्वत्पदप्रियाम् ॥२६॥ एवमुक्त्वा गणाधीशं ननाम दक्षनंदिनी। दितिस्तां गणराजश्च जगाद हर्षसंयुतः ॥२७॥ विघ्नेश उवाच। त्वया कृतमिदं स्तोत्रं मदीयं मत्प्रियं भवेत्। पठते शृण्वते देवि सर्वसिद्धिप्रदायकम् ॥२८॥ तव पुत्रो भविष्यामि आसुरीभावनाशकः। त्वं भजिष्यसि मां नित्यं भक्त्या भावपरायणा ॥२९॥ एवमुक्त्वांऽतर्दधेऽसौ विघ्नेशो ब्रह्मनायकः। दितिः स्वगृहमागत्य प्रणनाम पतिं

स्वकम् ॥३०॥ वृत्तांतं कथयामास कश्यपो हर्षितोऽभवत् । श्रुत्वा तां स समालिंग्य जगाद साश्रुलोचनः ॥३१॥ कश्यप उवाच । धन्याऽसि कृतकृत्याऽसि सफलस्ते भवो मनः । यया दृष्टो गणाध्यक्षः सर्वेभ्यः शांतिदायकः ॥३२॥ अहो ते ससुतो देवि असुर्याः प्रभविष्यति । महद्भाग्यं गणाधीशो योगिवंद्या त्वमंजसा ॥३३ तारितोऽहं त्वया नूनं सुस्त्रिया गणपे रतः । धन्यं मे जन्मकर्मादि आसुरी स्वहिते रता ॥३४॥ एवमुक्त्वा दितिं विप्रः कश्यपो विरराम ह । दितिः प्रणम्य तं विप्रं सेवायां संस्थिताऽभवत् ॥३५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते दितिवरप्रदानं नाम चतुर्दशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ततः सा गणनाथं तं सस्मार हृदि सर्वदा । तन्मयं विश्वमेवेदमालोकयदशेषतः ॥१॥ एकदा माघमासे तु शुक्लपक्षे गजाननम् । पुपूज मध्यगे भानौ चतुर्थ्यां मूर्तिगं परम् ॥२॥ मूर्तिमध्याद्गणाधीशः प्रकटोभूच्चतुर्भुजः । अनंतसूर्यसंकाशतेजोयुक्तः प्रजापते ॥३॥ तं दृष्ट्वा भयभीता सा सस्मार हृदि कश्यपम् । स्वगुरुं तं तथा देवं गणेशं भक्तिसंयुता ॥४॥ गुरोः स्मरणमात्रेण गणेशः सौम्यरूपधृक् । बालरूपो दितिं देवीं जगाद मेघनिःस्वनः ॥५॥ श्रीगणेश उवाच । पुत्रोऽहं ते महाभागे वरदानप्रभावतः । मा भयं कुरु कल्याणि पश्य मां सौम्यरूपिणम् ॥६॥ ततः सोन्मील्य चक्षुस्तं पश्यति स्म भयातुरा । बालं चतुर्भुजं देवं शुंडादंडधरं परम् ॥७॥ परश्वादिमहास्त्रैश्च संयुतं चंद्रशेखरम् । लंबोदरं चैकदंतं शेषनाभिसमायुतम् ॥८॥ शूर्पकर्णं त्रिनेत्रं तु नानाभूषणभूषितम् । अमूल्यवस्त्रसंयुक्तं गले चिंतामणिं धरम् ॥९॥ दृष्ट्वा तं प्रणनामैव कश्यपेन समन्विता । तुष्टावाऽऽपूज्य विघ्नेशमथर्वशिरसा विभुम् ॥१०॥ ततस्तं कश्यपो नत्वा प्रार्थयामास शांतिदम् । बालरूपो भव स्वामिन् येन ते लालनं भवेत् ॥११॥ धन्योऽहं कृतकृत्योऽहं मत्समो न प्रविद्यते । मम त्वं येन पुत्रोऽभूद्ब्रह्मणां गणनायकः ॥१२॥ यस्य रोमांचरंध्रेषु ब्रह्मांडानां हि कोटयः । कथं स मम पुत्रत्वं प्राप्तोऽसीति विडंबनम् ॥१३॥ एवं संप्रार्थितस्तेन दित्या सोऽपि तथाऽभवत् । चतुर्भुजधरो बालो बभूव तत्क्षणात् स्वयम् ॥१४॥

तं प्रणम्य गणाधीशं कश्यपो हर्षसंयुतः। दित्या कर्मपरो भूत्वा ब्राह्मणांश्च समाह्वयत् ॥१५॥ ततश्चतुर्भुजेनैव मायाऽऽक्षिप्ता तयोर्हृदि। पुत्रभावप्रकाशार्थं तथा तौ संबभूवतुः ॥१६॥ स्नापयित्वा दितिर्बालं स्तनपानमकारयत्। जातकर्म चकारैव कश्यपो हर्षसंयुतः ॥१७॥ द्वादशेऽह्नि द्विजास्तत्र नामकर्मार्थमाययुः। पूजिताः कश्यपेनैव तमूचुर्हर्षसंयुताः ॥१८॥ स्वर्गेषु देवपांश्चाऽयं नरान् पृथ्व्यां तथा तले। असुरान् नागकूर्मादीन् स्थापयिष्यति बालकः ॥१९॥ तत्त्वानि चालयन् विप्र तस्मान्नाम्ना चतुर्भुजः। चतुर्णां विविधानां च स्थापकोऽयं मतो बुधैः ॥२०॥ मुद्गल उवाच। ततो वर्षे द्वितीयेऽस्य प्रह्लादप्रमुखाः परे। प्रपेलुर्हन्यमानास्तैर्देवैर्विष्णुमुखैर्विधे ॥२१॥ सर्वं त्यक्त्वाऽसुरेशानाः पातालं विविशुर्भयात्। देवानां च स्वयं विष्णुः क्रोधयुक्तो बभूव ह ॥२२॥ इंद्राद्यैः सहितः सोऽपि सन्नद्धश्चक्रसंयुतः। आययौ दैत्यनाशार्थं पातालेषु महाबलः ॥२३॥ चक्रं तत्याज देवेशस्तेन दैत्या मृता मृधे। केचिद् दुःखसमायुक्ताः प्रपेलुश्छिन्नदेहकाः ॥२४॥ शरणं केशवं चैव केचिज्जग्मुः प्रजापते। तथापि तान् महाविष्णुर्जघान क्रोधसंयुतः ॥२५॥ असुरैर्विगतं विश्वं कर्तुं चैव समुद्यतः। दैत्येंद्रा भयसंयुक्ता दितिं ययुः शरण्यदाम् ॥२६॥ छिन्नभिन्नकृतांगांस्तान् दितिर्दृष्ट्वा शुशोच ह। ततः क्रोधयुतः सोऽपि बभूव गणनायकः ॥२७॥ तत्याज परशुं तीक्ष्णं देवान् हन्तुं चतुर्भुजः। परशोस्तेजसा सर्वं व्याप्तं पातालमंडलम् ॥२८॥ व्यर्थरूपाणि शस्त्राणि चक्रादीन्यभवन् मृधे। देवा दाहसमायुक्ताः प्रपेलुश्च दिशो दश ॥२९॥ ततस्तत्र ययौ ब्रह्मा बोधयामास केशवम्। पातालं त्यज्य सर्वे ते ययुः स्वर्गं भयान्विताः ॥३०॥ परशोस्तेजसा तत्र संदग्धा इव देवपाः। न शांतिं प्रलभंते स्म हाहाकाररवाकुलाः ॥३१॥ ततः शंभू रविर्ब्रह्मा केशवस्तुष्टुवुः परम्। परशुं भयसंयुक्ता देवैर्मुनिगणैः सह ॥३२॥ शांतियुक्तं महास्त्रं तद्बभूव च प्रजापते। ततो देवेंद्रकाः सर्वे चतुर्भुजं ययुः पुरा ॥३३॥ तं प्रणम्य भयोद्विग्ना मुनिभिर्देवनायकाः। नत्वाऽऽपूज्य गणेशानं तुष्टुवुः करसंपुटाः ॥३४॥ देवर्षय ऊचुः। नमस्ते काश्यपायैव चतुर्भुजाय ढुंढये। अनादये गणेशाय विघ्नेशाय नमो नमः ॥३५॥ परेशाय परेषां च पतये परमात्मने। विनायकाय विप्रेभ्यो वरदाय नमो नमः ॥३६॥ लंबोदराय सर्वेषामुदरस्थाय ते नमः। महोदराय ज्येष्ठाय ब्राह्मणाय नमो नमः ॥३७॥ क्षत्राणां क्षात्रधर्माय वैश्यानां वैश्यरूपिणे। शूद्राणां शूद्रधर्माय वर्णहीनाय ते नमः ॥३८॥ गृहस्थानां गृहस्थाय ब्रह्मचर्याय सर्वप। ब्रह्मचारिस्वरूपाणां वनस्थानां तदात्मने ॥३९॥ न्यासिनां न्यासधर्मायाश्रमहीनाय ते नमः। चतुर्षु ते पंचमाय

हेरंबाय नमो नमः ॥४०॥ स्वानंदवासिने तुभ्यं सिद्धिबुद्धिवराय च। एकदंताय देवायासुराय ते नमो नमः ॥४१॥ अनाथानामनाथाय सनाथानां सनाथक। ईश्वराणां महेशाय विष्णवे ते नमो नमः ॥४२॥ ब्रह्मणे भानवे तुभ्यं शक्तये सर्वरूपिणे। देवादिभ्यः प्रदात्रे ते पदानां वै नमो नमः ॥४३॥ किं स्तुमस्त्वां चतुर्णां च चालकं स्वभुजैः परम्। अतस्त्वां प्रणमामो वै चतुर्भुज प्रसीद नः ॥४४॥ एवमुक्त्वा प्रणेमुस्तं देवा मुनिसमन्विताः। स तानुवाच प्रीतात्मा भक्तान् भक्तजनप्रियः ॥४५॥ चतुर्भुज उवाच। वरान् ब्रूत महादेवा मुनयो मत्त ईप्सितान्। दास्यामि स्तोत्रतुष्टोऽहं भवतां भयवर्जिताः ॥४६॥ स्तोत्रं भवत्कृतं देवाः सर्वसिद्धिप्रदं भवेत्। पठतां शृण्वतां चैव भयनाशकरं परम् ॥४७॥ विशेषतः पुत्रपौत्रादिकं सर्वं लभेन्नरः। धनधान्यादिकं चांते मल्लोकं पठनात् परम् ॥४८॥ एवं तस्य वचः श्रुत्वा देवा मुनिसमन्विताः। भयहीनाः प्रणेमुस्तं जगुर्हर्षसमन्विताः ॥४९॥ देवर्षय ऊचुः। यदि प्रसन्नभावेन वरदोऽसि चतुर्भुज। तदा ते पादपद्मे वै भक्तिरस्तु निरंतरम् ॥५०॥ आज्ञां कुरु महाभाग तथा वर्तामहे वयम्। दितिजदैत्यसंत्रासतापिताः सततं वयम् ॥५१॥ चतुर्भुज उवाच। अद्य प्रभृति देवेशाः पातालस्थान् महासुरान्। मा हिंस्यथ महाभागा मया संस्थापितान् पुरा ॥५२॥ स्वर्गेषु चामरस्थानं पृथिव्यां च नृणां सदा। पाताले दानवादीनां स्वधर्मस्था भवंतु ते ॥५३॥ यदि भूत्वा विपथगा इमे गर्वेण मोहिताः। सिद्धिर्न भविता तेषां मद्वाक्यान्नात्र संशयः ॥५४॥ तथेति तं प्रणम्यैव देवाः स्वस्थानमाययुः। तदादि दानवान् देवा न जघ्नुः स्थलसंश्रितान् ॥५५॥ चतुर्भुजश्च दैत्येंद्रान् सर्वानाज्ञापयत् प्रभुः। ते तथेति तमुच्चार्य हर्षिताः स्वस्थलं ययुः ॥५६॥ ततश्चतुर्भुजो देवोऽतर्दधे च प्रजापते। कश्यपो दितिसंयुक्तः शुशोच तमनुस्मरन् ॥५७॥ पितरौ वाक्यमूचे सा वाणी चाऽऽकाशसंभवा। स्थाप्य मूर्तिं गणेशस्य भजतं नित्यमादरात् ॥५८॥ तथा चकार दित्या स कश्यपो ब्राह्मणैः सह। स्थापयामास मूर्तिं वै चतुर्भुजस्य सर्वदाम् ॥५९॥ हृदि चिंतामणिं ध्यात्वा बहिः पूज्य चतुर्भुजम्। संस्थितौ भक्तिसंयुक्तौ दितिकश्यपकौ किल ॥६०॥ आसुरं भावमुत्सृज्य दितिर्भक्तिसमन्विता। गाणपत्यस्वभावेनाऽभजत्तं तु चतुर्भुजम् ॥६१॥ एतच्चतुर्भुजस्यैव चरितं कथितं मया। विघ्नराजकलारूपोऽवतारोऽयमुदाहृतः ॥६२॥ य इदं शृणुयान् मर्त्यः श्रावयेद्वा पठेत् स तु। भुक्तिं मुक्तिं लभेद्ब्रह्म भक्तिं विघ्नेश्वरे पराम् ॥६३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खंडे विघ्नराजचरिते चतुर्भुजावतारविक्रमवर्णनं नाम पंचदशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । ततो बहौ गते काले दैत्येंद्रा बलसंयुताः । देवान् जेतुं प्रसन्नद्धा बभूवुः क्रोधसंयुताः ॥१॥ प्रह्लादं मुख्यकं कृत्वा ब्रह्मशापेन मोहितम् । आययुस्तां प्रणेमुस्ते दितिं कश्यपसंयुताम् ॥२॥ तानुवाच स्वयं देवी दितिः क्रोधसमन्विता । मा गच्छत महादुष्टाः धर्मं संत्यज दैत्यपाः ॥३॥ चतुर्भुजेन देवेशाः स्थापिताः स्वर्गभूमिषु । पाताल-विवरेष्वत्र यूयं राज्यसमन्विताः ॥४॥ प्रणम्य तामनादृत्य दैत्येशा लोभसंयुताः । ययुर्देवजयार्थं ते स्वधर्मेण प्रणोदिताः ॥५॥ दितिः कश्यपसंयुक्ता दैत्यानां सुदुरात्मनाम् । पक्षं त्यक्त्वा गणेशानमभजद् भक्तिसंयुता ॥६॥ एवं वै देवपक्षं सा त्यक्त्वा मुनिसमन्विता । अदितिस्तं स्वपुत्रं चाभजद्विनायकं परम् ॥७॥ दैवीं प्रकृतिमुत्सृज्य मृन्मूर्तिस्थं विनायकम् । योगभावेन भक्त्या तमभजत्प्रेमसंयुता ॥८॥ विनताद्यास्तथा दक्ष कश्यपेनोपदेशिताः । शांतियुक्ता गणेशानमभजन् प्रेमसंयुताः ॥९॥ दक्ष उवाच । दैवीं तु प्रकृतिं त्यक्त्वा तथाऽऽसुरीं महामुने । कथं गणेश्वरं भक्त्या भजंति वद मानवाः ॥१०॥ मुद्गल उवाच । सकामिकं करोति चेन्नरः कर्म यथाविधि । आसुरं तत् समाख्यातं देहसौख्यकरं यतः ॥११॥ निष्का-मिकं करोति चेन्नरः दैवं प्रकीर्तितम् । विधियुक्तं कर्म दक्ष मुक्तिदं तन्मतं बुधैः ॥१२॥ स्वधर्मस्थैर्जनैः कर्म क्रियते विविधं परम् । देहधर्मं समाज्ञाय योगरूपं च तत् स्मृतत् ॥१३॥ तदेव देवप्रीत्यर्थं कर्म भक्तिमयं मतम् । भक्तिभावार्थमानंदात् सस्त्रीको मुनिराकरोत् ॥१४॥ एतत्ते कथितं सर्वं विघ्नराजचरित्रकम् । सर्वसिद्धिप्रदं पूर्णं शांतिदं भक्तिकारणम् ॥१५॥ एवं नानाऽवताराश्च विघ्नराजस्य मानद । तेषां चरित्रकं केन वक्तुं नैव प्रशक्यते ॥१६॥ अयं विघ्नेश्वरो देवः समस्वानंदगो भवेत् । सत्यासत्ये विनिर्माय प्रभुः क्रीडति मायया ॥१७॥ पूर्णयोगमयश्चायं विघ्नराजः प्रकीर्तितः । तस्यार्थं श्रृणु भावेन ब्रह्मबुद्धिप्रकाशकम् ॥१८॥ संप्रज्ञानमयं ब्रह्माऽसंप्रज्ञातगतं तथा । भ्रमयुक्तं महाविघ्नसंयुक्तं नात्र संशयः ॥१९॥ भ्रमहीनं तदेवापि विघ्नहीनं प्रकीर्तितम् । ब्रह्मणि ब्रह्मभूतं चेत्तोभयं तत्र विद्यते ॥२०॥ विश्वेषां विघ्नराजोऽयं विघ्नकर्ता प्रजापते । विघ्नहर्ता स्वयं साक्षाद्ब्रह्मणां च निरंतरम् ॥२१॥ स्वयं विघ्नयुतो नैव विघ्नहीनो न विद्यते । एवं ज्ञात्वा नरो ब्रह्मभूतो भवति विघ्नपम् ॥२२॥ इदं वैघ्नेश्वरं चित्रं चरितं संश्रृणोति यः । पठेद्वा तस्य विघ्नेशः प्रसन्नो जायते सदा ॥२३॥ प्रसन्ने विघ्नराजेंद्रे किं किं वै दुर्लभं भवेत् । सर्वसिद्धियुतः सोऽन्ते नरो ब्रह्मैव जायते ॥२४॥ नानेन सदृशं किंचित् पावनं कुत्र वर्तते । भुक्तिमुक्तिप्रदं दक्ष चरित्रं संश्रुतं त्वया ॥२५॥ पंचाग्निसाधनादीनि तपांसि विविधानि यः ।

कुर्यात्तेभ्योऽधिकं पुण्यमस्य श्रवणतो लभेत् ॥२६॥ तीर्थानि विविधान्येव साधयित्वा फलं लभेत्। तेभ्योऽधिकं लभेत् पुण्यं खंडस्यास्य श्रवान्नरः ॥२७॥ यज्ञानां सांगजातानां फलं तस्मात् प्रजापते। अधिकं श्रवणादस्य लभेत् खंडस्य मानवः ॥२८॥ इष्टापूर्तादिकं सर्वं यः करोति नरोत्तमः। तेभ्योऽधिकं लभेत्तस्य श्रवणान्नात्र संशयः ॥२९॥ पुत्रपौत्रादिसंयुक्तो धनधान्यादिसंयुतः। आरोग्येण नरो युक्तो भवेदस्य तु संश्रवात् ॥३०॥ वंध्यादिदोषभावेन पीडितो यदि मानवः। अस्य श्रवणमात्रेण पीडाहीनो भवेत् सदा ॥३१॥ यस्य गेहे स्थितश्चायं खंडो विघ्नेशभक्तिदः। कदा तस्य पिशाचेभ्यश्चौरादिभ्यो भयं न हि ॥३२॥ नाग्निभूतं न भूतेभ्यो भयं राजभवं कदा। ग्रहेभ्यो राशिसंस्थेभ्यः पूतनादिभयं न च ॥३३॥ धर्मार्थ-काममोक्षाणां दायकोऽयं प्रकीर्तितः। ब्रह्मभूयप्रदः साक्षाच्छ्रवणेन न संशयः ॥३४॥ बहुनाऽत्र किमुक्तेन यत्र विघ्नपतिः स्वयम्। संस्थितस्तेन सामान्यं भविष्यति किमप्यहो ॥३५॥ इति ते कथितं सर्वं विघ्नराजस्य चेष्टितम्। भज त्वं सर्वभावेन गणेशं सुखमाप्स्यसि ॥३६॥ न श्राव्यं दुर्जनायेदं चरित्रं सर्वसिद्धिदम्। साधवे गाणपत्याय श्राव्यं यत्नेन मानद ॥३७॥ सूत उवाच। एवमुक्त्वा महायोगी मुद्गलो विरराम ह। दक्षो हृष्टमनास्तं तु प्रणनाम कृतांजलिः ॥३८॥ मया ते कथितं पूर्णं चरित्रं विघ्नपस्य यत्। यथा मुद्गलवक्त्राच्च निःसृतं तादृशं परम् ॥३९॥ भवतां संगयोगेन पावितोऽहं न संशयः। श्रोतुमिच्छसि किं भूयो वद शौनक ते हितम् ॥४०॥ विघ्नराजसमं नैव यथा विप्र तथा परम्। चरित्रं विघ्नराजस्य सर्व-सिद्धिप्रदायकम् ॥४१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे सप्तमे खण्डे विघ्नराजचरिते चरितमाहात्म्यवर्णनं नाम षोडशोऽध्यायः समाप्तः ॥

॥ इति श्रीमुद्गलपुराणे सप्तमः खंडः समाप्तः ॥

॥ श्रीगजाननार्पणमस्तु ॥



॥ इति श्रीमुद्गलपुराणे सप्तमः खंडः समाप्तः ॥



भाग ८ / चित्र ११ — श्रीधूम्रवर्णावतारे श्रीधूम्रवर्णः। (उपरि) महर्षिर्मुद्गलः अधिकमासमाहात्म्यं वर्णयति। (अधस्तात्) जरत्कारुं मंत्रमुपदिशति।

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । विघ्नराजचरित्रं तु श्रुतं सर्वप्रदं परम् । ममनाशकरं पूर्णं त्वत्तोऽस्माभिर्महामते ॥१॥ धन्योऽसि ज्ञानयुक्तोऽसि व्यासतुल्योऽसि निश्चितम् । व्यासाधिकोऽथवा किं नु शिष्यस्तस्य महात्मनः ॥२॥ श्रुत्वा श्रुत्वा न मे तृप्तिर्जायते तत् कथामृतम् । माहात्म्यं धूम्रवर्णस्याधुना वद सुखप्रदम् ॥३॥ सूत उवाच । शृणु शौनक माहात्म्यं धूम्रवर्णस्य सर्वदम् । यथा व्यासाच्छ्रुतं पूर्णं तथा ते कथयाम्यहम् ॥४॥ श्रुत्वा विघ्नेशमाहात्म्यं दक्षो हृष्टमना अभूत् । प्रणम्य मुद्गलं सोऽपि पप्रच्छ विनयान्वितः ॥५॥ दक्ष उवाच । विघ्नेशस्य श्रुतं पूर्णं माहात्म्यं सर्वसिद्धिदम् । न तृप्तोऽहं महायोगिन्नमृतादधिकं यतः ॥६॥ अधुना धूम्रवर्णस्य माहात्म्यं वद विस्तरात् । कीदृशांऽशमयश्चायं गणेशो धूम्रवर्णकः ॥७॥ कीदृशं ब्रह्म तस्यैव केन योगेन लभ्यते । कति तस्यावताराश्च किं कर्मा कीदृशं महः ॥८॥ केन संसाधितो देवो देहधारी बभूव ह । कं दैत्यं वशमानीय धर्ममास्थापयत् प्रभुः ॥९॥ इत्यादि सर्वमाहात्म्यं वद योगींद्र सत्तम । ब्रह्मांडे त्वत्समं नास्ति ब्रह्मदायकपात्रकम् ॥१०॥ सूत उवाच । एवं पृष्टो महायोगी मुद्गलः शौनकोऽब्रवीत् । दक्षं हृष्टमनाः साक्षात् ज्ञात्वा भक्तियुतं परम् ॥११॥ मुद्गल उवाच । दक्ष त्वं योगिवंद्योऽसि निश्चितं सर्वभावतः । नान्यथा गणनाथस्य कथायां जायते रसः ॥१२॥ धूम्रवर्णावतारस्य चरितं सर्वसिद्धिदम् । कथयिष्यामि भक्त्या ते समासेन प्रजापते ॥१३॥ विस्तरेण शिवाद्याश्च वेदाद्या न बभूविरे । समर्थास्तत्र कोऽहं तु स्वल्पज्ञानप्रधारकः ॥१४॥ अत्र ते कथयिष्यामि चेतिहासं पुरा भवम् । शेषस्य शंकरस्यैव संवादेन समन्वितम् ॥१५॥ प्रणम्य शेषनागश्च एकदा शंकरं पुरा । पप्रच्छ सिद्धिदं पूर्णं सर्वज्ञं करुणानिधिम् ॥१६॥ त्वत्तः परतरं नास्ति वेदश्रुतिप्रमाणतः । त्वं ध्यानसंयुतः स्वामिन् भजसे कं शिवं परम् ॥१७॥ अतः संशययुक्तोऽहं पृच्छामि सर्वभावतः । किं मोहार्थं महेशान करोषि चेष्टितं नवम् ॥१८॥ मुद्गल उवाच । एवं पृष्टः शिवः साक्षात्तमुवाच सुहर्षितः । भक्तं योगप्रियं दृष्ट्वा साधु चेष्टासमन्वितम् ॥१९॥ शिव उवाच । एवं पृष्टोऽहमेकांते सनकाद्यैर्महाप्रियैः । तत्तेऽहं शृणु वक्ष्यामि ज्ञानं गाणेशबोधकम् ॥२०॥ एकदा सनकाद्याश्च दृष्ट्वा मां नियमे रतम् । पप्रच्छुस्त्वं यथा शेष तथा संशयसंयुताः ॥२१॥ सनकाद्या ऊचुः । महेश्वरो भवान् साक्षात्त्वत्तवेशो नैव विद्यते । कं ध्यायसि महादेव मिथ्या मोहप्रदायक ॥२२॥ तेषां तद्वचनं श्रुत्वा हर्षितोऽहं च काश्यप । ऊचे योगं गणेशाख्यं पूर्णशांतिप्रदायकम् ॥२३॥ ईशत्वमनीशत्वं च मायायुक्तं न संशयः । ब्रह्माणि ब्रह्मभूतस्य कथं तद्वर्तते

द्विजाः ॥२४॥ येनेशत्वं च मे दत्तमनीशत्वं तथाऽपरम् । जनेभ्यस्तं गणाधीशं जज्ञेऽहं भक्तिसंयुतः ॥२५॥ अहंकारयुताः सर्वे न जानंति गजाननम् । तं जित्वाऽहं मुनींद्राश्च सेवे तस्य पदद्वयम् ॥२६॥ शिवस्य वचनं श्रुत्वा सनकाद्यास्तमब्रुवन् । विस्मिता भावसंयुक्ता गणेशज्ञानलालसाः ॥२७॥ सनकाद्या ऊचुः । अभिमानं महादेव जेतुं नैव प्रशक्यते । वेदादिभिश्च देवेशैरस्माभिश्चान्ययोगिभिः ॥२८॥ नरोऽहं देवरूपोऽहं आत्माहं स्वस्वरूपकः । ब्रह्माहं च महेशान अहं तेषु प्रतिष्ठितः ॥२९॥ अहं केनैव योगेन सदाशिव जितस्त्वया । वद तस्य चरित्रं नो विस्तरेण सुशांतिदम् ॥३०॥ श्रीशिव उवाच । अहं ब्रह्मणि विप्रेशा गतो ब्रह्मास्मिना सह । महावाक्यमये योगे ब्रह्माऽहं दृश्यते न च ॥३१॥ अहं नास्ति तथा ब्रह्म नेति ब्रह्माहमंजसा । बोधार्थं साधनं वेदं महावाक्यं स्मृतं परम् ॥३२॥ ततः संशयसंयुक्ता सनकाद्यास्तमब्रुवन् । न बुद्धं वचनं नाथ त्वदीयं दुर्गमं परम् ॥३३॥ अतः सुलभयोगेन वद योगं महेश्वर । दयया शिष्यमुख्यांश्च तारणाय सुशांतिदम् ॥३४॥ श्रीशिव उवाच । अत्र वः कथयिष्यामि चेतिहासं पुरातनम् । अहंभावविनाशार्थमहंकारस्य सौख्यदम् ॥३५॥ एकदा ज्योतिषां नाथः सूर्य आत्मा शरीरिणाम् । ब्रह्मणां चाभिषिक्तः स कर्मणां राज्यकर्मणि ॥३६॥ स प्राप्य राज्यमुग्रं तत् कर्मणां ज्योतिषां पतिः । अभिमानयुतोऽत्यंतं बभूव देवदेवपः ॥३७॥ कर्मणा सृष्टिकर्ता वै ब्रह्मा लोकपितामहः । पालकः कर्मणा विष्णुर्हरः संहारकोऽभवत् ॥३८॥ कर्मणाऽन्नप्रभावेण पोषिका शक्तिरेव च । कर्माधीनं जगत् सर्वं सेश्वरं नात्र संशयः ॥३९॥ सोऽहं कर्ममयो देवः कर्मणां चालकः परः । मदधीनमिदं भाति भानुरेवं सुगर्वितः ॥४०॥ अहंकारेण संयुक्तश्छिक्कां चक्रे कदा प्रभुः । तस्य च्छिक्कासमुत्पन्नः पुरुषः सुंदराकृतिः ॥४१॥ स पपात महीपृष्ठे त ज्ञानस्तेन भानुना । महाकायो विशालाक्षो बलयुक्तो व्यराजत ॥४२॥ तत्राकस्मात् समायातः शुक्रः सर्वार्थकोविदः । पप्रच्छ हर्षसंयुक्तस्तं दृष्ट्वा भावसंयुतः ॥४३॥ शुक्र उवाच । कोऽसि त्वं कुत्र ते वासः कर्तुमिच्छसि किं वद । माता पिता च ते त्राता कः किं मत्त इहेच्छसि ॥४४॥ पुरुष उवाच । सूर्यपुत्रो द्विजश्रेष्ठ तस्य च्छिक्कासमुद्भवः । अनाथोऽहं महाभाग पतितो धरणीतले ॥४५॥ त्वं दयायुक्तभावेन मां पृच्छसि न संशयः । त्वदधीनो भविष्यामि शाधि मां मुनिसत्तम ॥४६॥ श्रीशिव उवाच । तस्य तद्वचनं श्रुत्वा शुक्रो योगविदांवरः । ध्यानेनालोक्य तत्कर्म तमुवाच शुभावहम् ॥४७॥ शुक्र उवाच । अहंभावात् समुत्पन्नस्त्वं सूर्यान्नात्र संशयः । अहंनामा भवस्वाद्य तपः कुरु महामते ॥४८॥ एवमुक्त्वा

ददौ तस्मै गाणेशं षोडशाक्षरम् । मंत्रं विधिसमायुक्तं ततः सोऽतर्हितोऽभवत् ॥४९॥ अहं तत्र तपस्तेपे ध्यात्वा गणपतिं हृदि । निराहारपरो भूत्वा जपमंत्रपरायणः ॥५०॥ शीतोष्णवातवर्षादिसहने दृढनिश्चयः । जित्वा खानि प्रयत्नेन तोषयामास विघ्नपम् ॥५१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते अहमुत्पत्तिवर्णनं नाम प्रथमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ श्रीशिव उवाच । एवं वर्षसहस्रेण तं दिव्येन गजाननः । ययौ प्रसन्नभावेन भक्त्या वरार्थमादरात् ॥१॥ आखुवाहस्त्रिनेत्रश्च गजवक्त्रो महोदरः । चतुर्भुजश्च पाशाद्यैः शोभितः सिद्धिबुद्धियुक् ॥२॥ एकदंतः शूर्पकर्णो देवैर्मुनिसमन्वितैः । संस्तुतः स्वगणैश्चैव सेवितः सर्वदायकः ॥३॥ तं दृष्ट्वाऽहं समुत्थाय प्रणनाम कृतांजलिः । पूजयामास विघ्नेशं सिद्धिबुद्धिसमन्वितम् ॥४॥ ततः क्रमेण देवान् स मुनीन् पूज्य पुनः प्रभुम् । प्रणनाम प्रतुष्टाव गणेशं प्रकृतांजलिः ॥५॥ अहमुवाच । नमस्ते गणनाथाय हेरंबाय परात्मने । सर्वेभ्यो वरदात्रे ते वरदाय नमो नमः ॥६॥ ब्रह्मसु ब्रह्मनाथाय निजेषु स्वस्वरूपिणे । सांख्याय ते परत उत्थानस्थेषु नमो नमः ॥७॥ ज्ञानेषु बोधरूपाय सोऽहंदेहिषु ते नमः । देहेषु बिंदुरूपाय विघ्नेशाय नमो नमः ॥८॥ स्रष्टृषु ब्रह्मदेवाय विष्णवे पालकेषु ते । संहर्तृषु शिवायैवैकदंताय नमो नमः ॥९॥ प्रकाशकेषु सूर्याय मोहकेषु च शक्तये । देवेषु देवराजाय विनायकाय ते नमः ॥१०॥ अग्नये ते दाहकेषु यमाय नीतिधारिणाम् । रक्षःसु नैर्ऋतायैव शूर्पकर्णाय ते नमः ॥११॥ वायवे बलयुक्तेषु निधिषु धनपाय ते । रुद्रेषु कालरूपाय नमो लंबोदराय वै ॥१२॥ प्रजापतिषु दक्षाय नागेशे शेषरूपिणे । अनंतविभवायैव किं ते स्तौमि नमो नमः ॥१३॥ यं स्तोतुं न समर्थाश्च वेदाद्या योगिनोऽमलाः । तं किं स्तवीमि विघ्नेशमल्पबुद्धिप्रधारकः ॥१४॥ धन्योऽहं कृतकृत्योऽहं सफलो मे भवः पिता । माता कुलं तथा ज्ञानं त्वदंघ्रियुगदर्शनात् ॥१५॥ एवमुक्त्वा गणेशानं प्रणनाम महासुरः । हर्षेण महता युक्तस्तमुवाच गजाननः ॥१६॥ श्रीगणेश उवाच । त्वया कृतमिदं स्तोत्रं मदीयं सर्वदं भवेत् । पठते शृण्वते चैव मयि भावप्रदायकम् ॥१७॥

पुत्रपौत्रादिकं सौख्यं भुक्तिं मुक्तिं लभेन्नरः । अस्य पठनमात्रेण मद्भक्तिं भ्रमनाशिनीम् ॥१८॥ वरान् वृणु महाभाग मनेप्सितान् ददाम्यहम् । तपसा स्तोत्रमुख्येन तुष्टोऽहं ते महादरात् ॥१९॥ अहमुवाच । प्रसन्नोऽसि यदा नाथ भक्तिं देहि त्वदीयिकाम् । यद्यदिच्छामि तत्तन्मे सफलं सर्वदाऽस्तु च ॥२०॥ मायाविकारयुक्तेभ्यो मरणं नैव मे भवेत् । राज्यं ब्रह्मांड-गोलस्य देहि मे भोगसंयुतम् ॥२१॥ आरोग्यं विजयं द्वंद्वे संग्रामे ह्यतुलं तथा । अमोघास्त्रं सदा मेऽस्तु त्वत्प्रसादाच्च देहि भोः ॥२२॥ तथेति तमहं देवो जगाद गणनायकः । अंतर्धाय स्वमात्मानं निजलोकं जगाम ह ॥२३॥ ततोऽतिहर्षसंयुक्तोऽहं जगाम कविं पुनः । तं प्रणम्य स्ववृत्तांतं कथयामास विस्तरात् ॥२४॥ श्रुत्वा मुनिवरः सोऽपि तं प्रशंस्य महासुरम् । असुरानाह्वयामास श्रेष्ठान् काव्यो महामतिः ॥२५॥ तस्याज्ञया त्वरावंतो मुनिं सर्वे समागताः । असुरांस्तान् महातेजा हितं काव्यो जगाद वै ॥२६॥ अहमासुरवृत्तांतं श्रुत्वा ते शुक्रवक्त्रतः । हर्षितास्तं प्रणम्यादौ जगुर्वचो हितावहम् ॥२७॥ असुरा ऊचुः । आज्ञापय महायोगिन कार्यं चेतोगतं प्रभो । करिष्यामो वयं दासास्त्वत्पादस्य जवान्विताः ॥२८॥ तेषां वचनमाकर्ण्य काव्यः सर्वार्थकोविदः । ब्राह्मणान वेदनिष्ठांश्च समानाय्य पुपूज ह ॥२९॥ तैरहं सिंचयामासासुराणां राज्यकर्मणि । यथाशास्त्रविधानेन दैत्याधीशं चकार ह ॥३०॥ प्रधानास्तस्य पंचाऽसन् सुहृदास्तेजसा युताः । शंखो वेदघ्नकः कालः पैशुनोऽधर्मधारकः ॥३१॥ नगरं निर्ममे सोऽपि विषयप्रियनामकम् । अहमासुरकस्तत्र राज्यं चकार हर्षतः ॥३२॥ समायाता निवासार्थं जना वर्णाश्रमान्विताः । असुरा विविधाश्चैव सुखं लेभुः समास्थिताः ॥३३॥ प्रमादासुरपुत्रीं वै ममतां रूप-शालिनीम् । तस्मै ददौ प्रपादश्च यौवनस्थां महात्मने ॥३४॥ ममतासंयुतो रेमे दैत्येंद्रोऽहं प्रहर्षितः । मोहिता मायया तस्या ममताया वशे स्थितः ॥३५॥ तस्यां पुत्रौ महावीर्यौ जनयामास दैत्यपः । गर्वश्रेष्ठौ तयोर्नाम चक्रुः सर्वे द्विजातयः ॥३६॥ एवं बहौ गते काले तमुवाच प्रमादकः । किं स्थितोऽसि महावीर जय देवादिकान् प्रभो ॥३७॥ वरदानबलेन त्वं निर्भयोऽसि न संशयः । वराणां सफलं सर्वं कुरु भोगपरं महः ॥३८॥ तथेति श्वशुरं सोऽपि जगादाऽहं प्रतापवान् । समानाय्य कविं तत्र पूजयामास दैत्यपैः ॥३९॥ तस्याऽज्ञां गृह्य दैत्येशः परान् दैत्यान् समाह्वयत् । तैः संयुतः स शुक्रेण प्रधानैः शुशुभेऽसुरः ॥४०॥ दिग्जयार्थमहं तत्र सर्वानाज्ञापयत् प्रभुः । सन्नद्धास्ते समाजग्मुर्दैत्या परमदारुणाः ॥४१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते अहमासुरराज्यप्राप्तिवर्णनं नाम द्वितीयोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शिव उवाच । रथारूढः स्वयं तत्राहं निर्जगाम दैत्यपैः । पुत्रौ तथा प्रधानाश्च सन्नद्धा असुरा ययुः ॥१॥ नाना वर्णा महाकूराः कालस्य भयदायकाः । नाना वाहनगाः सर्वे तमनु प्रययुः किल ॥२॥ चतुरंगचमूमध्ये शुशुभे दैत्यनायकः । अपारसेनया युक्तः पृथ्वीं जेतुं मनोदधे ॥३॥ शंखादयो महावीरा नृपान् जग्मुः सुदारुणाः । जित्वा राजकुलं सर्वं समाजग्मुर्महासुरम् ॥४॥ नृपास्तैः किं द्विजा युद्धं करिष्यंति महाबलैः । मृताः केचित् क्षताः केचित् केचित्तान शरणं ययुः ॥५॥ करदांस्तान् नृपान् कृत्वा तेषां राज्ये स्वसेवकान । स्थापयामासुरन्यत्रान् दैत्येंद्रा हर्षसंयुताः ॥६॥ सप्तद्वीपवतीं जित्वा पृथ्वीं पातालमाययुः । दैत्येंद्रा नागमुख्यांस्ते जयार्थं जयशालिनः ॥७॥ शेषो नागयुतस्तेषां शरणं समुपागतः । ज्ञात्वा वरबलं योगी साम चक्रे महासुरैः ॥८॥ वार्षिकं करभारं स स्वीकृत्य स्वस्थलं ययौ । नागेंद्रैः संवृतः शेषो दुःखयुक्तेन चेतसा ॥९॥ तथापि दैत्यमुख्यास्ते दैत्यं दैत्यसमन्वितम् । समीपे तस्य संस्थाप्य ययुरहं महाबलाः ॥१०॥ ततो दैत्येंद्रसंयुक्तः काव्येनाऽहंप्रतापवान् । स्वर्गं ययौ महातेजा वरगर्वसमन्वितः ॥११॥ दूतं संप्रेषयामासाहमिंद्रस्यैव सन्निधौ । स गत्वा देवराजाय प्रणम्यैतद्वचो जगौ ॥१२॥ ततः क्रोधसमायुक्त इंद्रो देवेंद्रमुख्यकैः । विचार्यांगिरसं सर्वैर्जगाम प्रणनाम तम् ॥१३॥ तेनापि सत्कृतः सोऽपि जगाद वचनं परम् । सर्वेषां दुःखदं पूर्णं असुराणां जयावहम् ॥१४॥ इंद्र उवाच । अहं वरसमायुक्तः समायातो महाबलः । दूतेन नो वदत्यत्र शरणं याहि देवपैः ॥१५॥ अतः सुरैः समायुक्तो भवंतं सर्ववेदिनम् । समायातो वद स्वामिन् त्वदाज्ञावशगा वयम् ॥१६॥ गुरुरुवाच । गणेशवरदानेन मत्तोऽसौ नात्र संशयः । जेष्यते सकलं तस्माच्छरणं नैव शोभनम् ॥१७॥ अतो वयं विधातारं व्रजामहे त्वरान्विताः । स श्रेष्ठः सर्वभावेन करिष्यति हितं च नः ॥१८॥ ततः सर्वे विधातारं जग्मुर्देवाः सवासवाः । प्रणम्य तं जगुः सर्वे वृत्तांतं दैत्यसंभवम् ॥१९॥ श्रुत्वा खेदयुतो ब्रह्मा गृह्य तान् शंकरं ययौ । तं प्रणम्य जगौ सर्वं स देवो वृत्तमुल्बणम् ॥२०॥ जगाम सोऽपि निःश्वस्य तैः सार्धं विष्णुमादरात् । प्रणम्य कथयामास वृत्तांतं दुःखदायकम् ॥२१॥ श्रुत्वा क्रोधयुतो विष्णुः समाश्वास्य महेश्वरम् । सदेवं तं जगादाऽसौ पराक्रमयुतं वचः ॥२२॥ श्रीविष्णुरुवाच । हनिष्यामि महादैत्यमहं चासुरसंयुतम् । मायायुक्तस्त्वमेवं यत् मम तत्र प्रबाधते ॥२३॥ एवमुक्त्वा महादेवं तत्रैवासंस्थितोऽभवत् । देवैः सह महाभागः प्रतीक्षन् दैत्यपौरुषम् ॥२४॥ अहंकारासुरस्तत्र ज्ञात्वा वृत्तांतमादरात् । प्रविवेशामरावत्यां दैत्येंद्रैर्हर्षसंयुतः ॥२५॥ इंद्रासनसमारूढः सेव्यमानो-

ऽप्सरोगणैः । गंधर्वैर्गीयमानः स शुशुभे परमश्रिया ॥२६॥ ततो देवपदेषु संस्थापयामास चासुरान् । स्वर्गभोगं चकारैवं दैत्येंद्रैः श्वशुरेण च ॥२७॥ ततः स दैत्यसंघैस्तैः सन्नद्धः प्रययौ द्विजाः । ब्रह्मलोकं महोग्रस्तं विधिहीनं ददर्श ह ॥२८॥ विवेश हर्षयुक्तस्तन्नगरं दैत्यसंयुतः । ब्रह्मासनसमासीनो बुभुजे विविधान् परान् ॥२९॥ ततः स दैत्यपैः सर्वं ज्ञात्व वृत्तांतमंजसा । कैलासं भानुलोकं तु शक्तिलोकं ययौ क्रमात् ॥३०॥ तत्र विलाससंयुक्तो बुभुजे विविधान् परान् । विकुंठ विजयार्थं स प्रययौ दैत्यपैर्वृतः ॥३१॥ दूतं संप्रेषयामास कालं सर्वभयंकरम् । स गत्वा केशवं नत्वा जगौ वै वाक्य मुल्बणम् ॥ ३२ ॥ काल उवाच । अहं त्वसुरसंयुक्त आययौ स महाबलः । तेनाऽहं सामभावार्थं प्रेषितस्ते प्रसन्निधौ ॥३३ त्यक्त्वा विकुंठं देवेशैर्गच्छ त्वं यत्र ते रुचिः । नारायण न हन्मि त्वां नोचेद्युद्धोद्यतो भव ॥३४॥ कालस्य वचनं श्रुत्व केशवः क्रोधसंयुतः । जगाद तं महादैत्यं दहन्निव प्रधर्षयन् ॥३५॥ श्रीविष्णुरुवाच । किं मां पापस्वरूपस्त्वं वदसि मंदविक्रम हनिष्याम्यहमद्यैव दैत्ययुक्तं महासुरम् ॥३६॥ गच्छ दूत स्वभावस्थं न हन्मि त्वां खलाधम । स्वपदं त्यज्य दैत्येशाधीनोऽ किं भवामि तु ॥३७॥ ततोऽहंकारकं गत्वा कालासुरः प्रतापवान् । वृत्तांतं कथयामास दैत्येंद्रैः संयुतं परम् ॥३८॥ श्रुत्व दैत्यगणाः सर्वे क्रोधयुक्ता बभूविरे । अहंकारासुरेणैव युक्ता युद्धोद्यता बभुः ॥३९॥ तान्निवार्य महाबाहुरहं क्रोधसमन्वितः जगाद दैत्यमुख्यान् स वाक्यं सर्वहितावहम् ॥४०॥ अहमुवाच । किमर्थं श्रमसंयुक्ता भविष्यथ महाबलाः । अमोघास्त्र वैरैर्युक्तः करिष्याम्यधुना सुखम् ॥४१॥ एवमुक्त्वा ततो दैत्यः सज्जं कृत्वा महद्धनुः । मुमोचाग्निमयं चास्त्रं संमंत्र क्रोधसंयुतः ॥४२॥ सहसास्त्रं प्रजज्वाल दिशो दश महोज्वलम् । विकुंठं दाहयामास देवान् सर्वान् समंततः ॥४३॥ तत क्षोभयुता देवास्तत्यजुर्वरुणास्त्रकम् । तेनैव तत्र शांतं तु बभूव तेजसान्वितम् ॥४४॥ ततः खेदयुताः सर्वे पपलुर्भयसंयुताः पीडिता अग्निनाऽत्यंतं त्यक्त्वा वैकुंठमेव च ॥४५॥ वरुणश्च स्वयं दृष्ट्वा जगाम रणमूर्धनि । चंद्रेण संयुतः सोऽपि ज सृष्ट्वा व्यवस्थितः ॥४६॥ जलेन न च शांतोऽभूदग्निः परमदारुणः । दाहयुक्तः पपालाऽसौ वरुणश्चंद्रसंयुतः ॥४७॥ तत शक्तिः समायाता महास्त्रं वरुणात्मकम् । मोचयामास तस्मात्तु जलधारा प्रवर्तिता ॥४८॥ घृतेन संयुतस्तत्र यथाग्निर्जल संयुतः । जज्वाल मायया तस्याऽहंकारस्य विशेषतः ॥४९॥ ततो दाहसमायुक्ता शक्तिः पपाल तत्क्षणात् । क्रुद्धो भानु स्वयं तत्राऽजगाम क्रोधसंयुतः ॥५०॥ सोऽपि स्ववीर्यसंयुक्तं वरुणास्त्रं जहौ मृधे । पूर्ववद्दाहसंयुक्तः पपाल च दिवाकर

॥७१॥ ततः शिवः स्वयं तद्रूययौ क्रोधसमन्वितः । हतोऽग्रमः पपालाऽसौ दाहयुक्तः स्वभावतः ॥७२॥ ततोऽतिखेदसंयुक्तो विष्णुः स्वयमुपागतः । तत्याज वारुणं शस्त्रं स्वसत्तासंयुतं परम् ॥७३॥ तथापि न स शांतोऽभूदग्निः परमदारुणः । जज्वालातीव सर्वत्र दाहयामास देवपान ॥७४॥ ततोऽतिदाहसंयुक्तः पपाल च जनार्दनः । विष्णुना संयुताः सर्वे देवेशाः पपलुर्भयात् ॥७५॥ गत्वा गिरिगुहासंस्था बभूवुर्भयसंकुलाः । कंदादिभक्षयंतस्ते दिवमानतिचक्रमुः ॥७६॥ ज्ञात्वा वृत्तांतमेवाहं समाहूय स्वशक्रकम । आग्नेयमगमद्दैत्यैर्विकुंठं हर्षसंयुतः ॥७७॥ तत्र स्थित्वाऽभिमानी स परं मेने कृतार्थताम् । न मत्तः श्रेष्ठ इत्येव गर्वयुक्तो बभूव ह ॥७८॥ ततो गर्वं शिवस्यैव तथा स्थाप्य पदेऽसुरः । श्रेष्ठं विकुंठनाथं च स चक्रे पुत्रमुत्तमम् ॥७९॥ पिशुनं शक्तिलोकस्य वेदघ्नं सर्वलोपकम । प्रमादं ब्रह्मणो नाथं चकार मदसंयुतः ॥८०॥ शंखमिंद्रपदस्यैव नाथं चक्रे महासुरः । कालं यमस्य लोकस्य कमलं वरुणस्य च ॥८१॥ कुबेरस्य पदे स्थाप्याऽधर्मधारक-मादरात् । ततः स्वनगरं सर्वैः समाययौ महाबलः ॥८२॥ तत्रस्थः प्रशशासाऽसौ ब्रह्मांडं लोकसंकुलम् । अहं मेने न किंचिद्वै समं भाग्येन तेजसा ॥८३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते अहमसुरब्रह्मांडजयो नाम तृतीयोऽध्यायः ॥



॥ श्रीगणेशाय नम ॥ शिव उवाच । दैत्योऽहंकारकोऽत्यंतं परस्त्रीलालसस्ततः । बभूव दैत्यपैः सर्वैर्नागकन्याः समानयत् ॥१॥ देवकन्या नराणां च स्त्रियः कन्या विशेषतः । समाहृत्य बलात् सोऽपि बुभुजे सर्वदूषकः ॥२॥ मद्यमांसपरोऽत्यंतं बभूव द्विजसत्तमाः । गणेशं त्यज्य दुष्टात्मा पापकर्मपरोऽभवत् ॥३॥ एकदाऽहं सभासंस्थं जगादाऽधर्मधारकः । दैत्येंद्रैः प्रेरितः सर्वैः कृत्वा करपुटं वचः ॥४॥ अधर्मधारक उवाच । जितं त्वया महाभाग ब्रह्मांडं लोकसंकुलम् । जगदीशस्त्वमेवैको नान्यः कश्चन विद्यते ॥५॥ देवा विष्णुमुखाः सर्वे भवंति वनसंस्थिताः । प्रकीर्तिताः शत्रवो नो वेदेषु च सुरासुराः ॥६॥ शस्त्रादिभिश्च देवेंद्रा मरिष्यंति कदापि न । अमरा वेदवादेषु कथिता पश्य मानद ॥७॥ कर्मान्ना अमराः सर्वे नष्टे कर्मणि दैत्यप । मरिष्यंति न

संदेहः कर्मणः खंडनं कुरु ॥८॥ जित्वा त्रिलोकराज्यं च कर्तारो बहवोऽभवन् । असुराः कालयोगेन देवेन्द्रैर्निहताः पुरा ॥९॥ अनश्छिद्रं समालोक्य त्वां हनिष्यंति देवपाः । अहं तेषां विनाशार्थं यतस्वासुरनायकैः ॥१०॥ अधर्मधारकस्यैव वचः श्रुत्वा महासुराः । साधु साधु ब्रुवंति स्म शंखाद्यास्तत्र संसदि ॥११॥ ततोऽहंकारको हृष्टो जगाद वचनं हितम् । साधु प्रोक्तं त्वया दैत्य कुरु सर्वैः समन्वितः ॥१२॥ हृष्टो दैत्यसमूहैः स युक्तो जगाम हर्षितः । अधर्मधारको भूम्यां चकार कर्मखंडनम् ॥१३॥ कर्मखंडनभावेन हाहाकाररवाकुलाः । जना वर्णाश्रमैर्हीनाः कृतास्तेन दुरात्मना ॥१४॥ देवतायतनादीनि खंडयामास सर्वतः । क्षेत्राणि च गणेशस्य मूर्तीः सर्वास्तथा द्विजाः ॥१५॥ सर्वत्राऽहंप्रतिमाश्च स्थापिता भूमिमंडले । पूजका राक्षसास्तत्र कृतास्तेन सुपापिना ॥१६॥ गृहे गृहेऽभिमानस्य प्रतिमा मानवैः किल । पूज्याः कृता द्विजास्तेनाऽऽसुरं कर्म प्रवर्तितम् ॥१७॥ कृत्वाऽधर्मधरः कार्यं प्रययौ तं सुहर्षितः । तेनातिपूजितः सोऽपि परां मेने कृतार्थताम् ॥१८॥ एवं कर्मणि नष्टे तु वर्णसंकररूपिणः । जना जातास्ततो देवा दुःखयुक्ता बभूविरे ॥१९॥ मुनिभिः सहिताः सर्वे देवाश्चोपोषणान्विताः । विचारं चक्रुरे तस्य नाशार्थं दैत्यपस्य ते ॥२०॥ ततो ब्रह्मा महेशाद्यानुवाच खेदसंयुतः । मायायुक्ता वयं सर्वे जितास्तेन दुरात्मना ॥२१॥ माया नानाविधा विप्र वेदेष्वत्र न संशयः । तया हीनो गणेशानो नान्यः कश्चन विद्यते ॥२२॥ पंचचित्तमयी बुद्धिः पंचभ्रांतिकरी तथा । सिद्धिस्तयोः पतिः सोऽपि मायिको गणनायकः ॥२३॥ सिद्धिबुद्धिः परा माया न तयोर्विद्यते परा । अतो विघ्नेश्वरो दैत्यं हनिष्यति न संशयः ॥२४॥ गणेशवरदानेन मत्तोऽसौ दैत्यनायकः । विस्मृतो गणनाथं तं मंत्रं त्यक्त्वा स्थितोऽभवत् ॥२५॥ गणेशक्षेत्रकाण्येव खंडयामास दुर्मतिः । गणेशपूजनं सर्वकर्मस्वादौ विशेषतः ॥२६॥ अतो विघ्नसमायुक्तं जातं तं देवसत्तमाः । अस्माभिः पूजितो ढुंढिर्हनिष्यति महासुरम् ॥२७॥ अधुनैकाक्षरं मंत्रं जप्त्वा ध्यात्वा गजाननम् । पूजयित्वा तपोयुक्तास्तोषयामो विशेषतः ॥२८॥ श्रीशिव उवाच । ब्रह्मणो वचनं श्रुत्वा देवा मुनिसमन्विताः । साधु साधु ब्रुवंति स्म तथा चक्रुः महेश्वराः ॥२९॥ निराहारसमायुक्ता एकाक्षरविधानतः । तोषयामासुरत्यंतं भक्तियुक्ता गणेश्वरम् ॥३०॥ एवं वर्षशते पूर्णे प्रसन्नो गणनायकः । ययौ तान् देवमुख्यांश्च वरदो मुनिसत्तमान् ॥३१॥ मूषकोपरि संस्थं तं ददृशुर्द्विरदाननम् । प्रणेमुर्हर्षसंयुक्ताः पूजयामासुरादरात् ॥३२॥ पुनः प्रणम्य विघ्नेशं देवा मुनिसमन्विताः । तुष्टुवुर्गणनाथं ते धूम्रवर्णं प्रहर्षिताः ॥३३॥ देवर्षय ऊचुः । धूम्रवर्णाय सर्वेभ्यः सर्वदाय कृपालवे ।

गणेशाय परेशाय परात्पराय ते नमः ॥३४॥ लंबोदराय विघ्नानां पतये ते नमो नमः। विघ्नकर्त्रे च तद्धर्त्रे हेरंबाय नमो नमः ॥३५॥ अनादये विशेषेण ज्येष्ठाय सर्वपूजित। मनोवाणीविहीनाय मनोवाणीमयाय ते ॥३६॥ नमस्ते ब्रह्मरूपाय ब्रह्मणे ब्रह्मदायिने। ब्रह्मणां पतये तुभ्यं मंत्रनाथाय ते नमः ॥३७॥ महोरूपाय देवाय देवदेवेशरूपिणे। देवेभ्यो वरदात्रे ते महोदर नमो नमः ॥३८॥ आदिपूज्याय सर्वेषां मात्रे पित्रे नमो नमः। सर्वरूपाय सर्वात्मन् कर्मरूपाय ते नमः ॥३९॥ शूर्पकर्णाय शूराय वीराय परमात्मने। चतुर्भुजाय धूम्राय गुणेशाय नमो नमः ॥४०॥ कर्त्रे हर्त्रे च भर्त्रे ते परज्ञानस्वरूपिणे। स्वाधीनाय महामोहदात्रे हर्त्रे नमो नमः ॥४१॥ यत्र वेदादयः स्वामिन् शांतिं प्राप्ताश्च योगिनः। गणेश तत्र के नाथ वयं ते स्तवने प्रभो ॥४२॥ वर्णो धूम्रादिना यत्राव्यक्तरूपे पुरा त्वयि। धूम्रवर्णः समाख्यातो वेदेषु वेदवादिभिः ॥४३॥ धन्या वयं महाभाग त्वदंघ्रियुगदर्शनात्। अव्यक्तो व्यक्ततां प्राप्तो भक्तवात्सल्यकारणात् ॥४४॥ एवमुक्त्वा प्रणेमुस्तं धूम्रवर्णं सुरर्षयः। उत्थाप्य धूम्रवर्णस्तान् जगाद मेघनिःस्वनः ॥४५॥ धूम्रवर्ण उवाच। भवत्कृतमिदं स्तोत्रं सर्वसिद्धिप्रदायकम्। भविष्यति महाभागाः पठते शृण्वते परम् ॥४६॥ पुत्रपौत्रादिकं धान्यं धनं लभेन्नरस्तथा। यद्यदिच्छति तत्तत्तु सफलं संभविष्यति ॥४७॥ वृणुत वृणुत देवेशा मुनयो मनसीप्सितान्। दास्यामि तपसा तुष्टः स्तोत्रेण भवतां परान् ॥४८॥ गणेशवचनं श्रुत्वा देवर्षयः प्रणम्य तम्। जगुः प्रकृष्टभावेन देवदेवेशमादरात् ॥४९॥ यदि प्रसन्नभावेन वरदोऽसि गजानन। तदाहंकारकं दैत्यं जहि सर्वज्ञ ते नमः ॥५०॥ सर्वेभ्यो दुःखदाता स कर्मखंडनकारकः। स मृतश्चेद्गणाधीश भविष्यति तदा सुखम् ॥५१॥ मायायुक्तविहीनस्त्वं तव हस्तात् महासुरः। मरिष्यति न संदेहस्तस्मात्तं जहि मानद ॥५२॥ अस्मै त्वयाऽभयं दत्तं तेन सर्वे पराजिताः। वयं ते शरणं प्राप्ता रक्ष रक्ष महाप्रभो ॥५३॥ तव पादे दृढां भक्तिं देहि नोऽव्यभिचारिणीम्। तया विघ्नविहीनास्ते पदं प्राप्स्यामहे वयम् ॥५४॥ एवमुक्त्वा गणेशानं प्रणेमुस्ते सुरर्षयः। तथेति तानथोक्त्वाऽसावंतर्धानं चकार ह ॥५५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते देवमुनिवरप्रदानं नाम चतुर्थोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ श्रीशिव उवाच। ततो देवेंद्रमुख्याश्च देवा मुनिसमन्विताः। हर्षयुक्ता विशेषेण मेनिरे चासुरं हतम् ॥१॥ कालभावं प्रतीक्षंतः स्थितास्तत्रैव विघ्नपम्। अभजंस्ते मुदा युक्ता गाणपत्यप्रियात्मकाः ॥२॥ धूम्रवर्णः स्वयं साक्षाद्रात्रौ स्वप्ने द्विजोत्तमाः। जगाम दैत्यनाथस्य भयदः सर्वभावनः ॥३॥ स शोकसंयुतः प्राप्तः समुत्थाय महासुरान्। समानाय्य स्वयं स्वप्नं कथयामास विस्तरात् ॥४॥ अहमुवाच। शंखमुख्याः शृणुत यत् स्वप्ने दृष्टं भयंकरम्। धूम्रवर्णो गणेशानः क्रोधयुक्तो बभूव ह ॥५॥ तस्य क्रोधसमुत्पन्नोऽग्निः सर्वं नगरं च मे। दाहयामास शस्त्राण्यस्त्राणि कुंठानि चाऽभवन् ॥६॥ पराक्रमविहीनोऽहं कृतस्तेन महात्मना। देवाः स्वस्थानगाः सर्वे कृता मुनिगणैः सह ॥७॥ अतः स्वल्पेन कालेन भविष्यत्यशुभं ध्रुवम्। तदर्थं यत्नसंयुक्ता भवध्वं दैत्यनायकाः ॥८॥ अभिमानवचः श्रुत्वा तं पुनर्दैत्यनायकाः। जगुः खेदसमायुक्ता वचनं हितकारकम् ॥९॥ दैत्येंद्रा ऊचुः। मा कुरुष्व वृथा चिंतामशुभं ते कथं भवेत्। वरदानप्रभावेण निर्भयोऽस्यसुरेश्वर ॥१०॥ स्वप्नः सदा जनानां तु भवत्यत्र न संशयः। जागृतौ नश्वरः सोऽपि तत्र किं दुःखदं भवेत् ॥११॥ स्वप्ने धनादिकं लब्ध्वा मरणादिकमेव वा। जागर्ति चेत् स्वयं जंतुर्न किंचित् पश्यतीत्यहो ॥१२॥ एवं हास्यादिकं कृत्वा समाश्वास्यासुरोत्तमम्। असुराः स्वगृहं गत्वा शौचादिकं प्रचक्रिरे ॥१३॥ अथ शृणुत विप्रेंद्राश्चरितं विघ्नपस्य च। अकस्मात् धूम्रवर्णः स ययौ तत्र महाबलः ॥१४॥ पंचयोजनदूरे स नगराद्दैत्यपस्य च। संस्थितस्तत्र विप्रेंद्रा नारदः सहसाऽऽगतः ॥१५॥ दृष्ट्वा गणेश्वरं देवं तमागत्य प्रणम्य सः। गानं चकार हर्षेण भक्त्या साश्रुप्रलोचनः ॥१६॥ तमुवाच गणाधीशो गच्छ त्वं दैत्यमंदिरम्। अहंकारं वदस्वर्षे वाक्यं सामकरं महत् ॥१७॥ देवाः स्वस्थानगाः संतु जनाः स्वाचारसंयुताः। नागाः स्वराज्यकर्तारो भवंतु मत्प्रसादतः ॥१८॥ राज्यं कुरु महादैत्यैर्नगरस्थो महासुर। नोचेद्युद्धेन जेष्यामि करिष्यामि जगद्धितम् ॥१९॥ तथेति गणनाथं स जगाद नारदो मुनिः। अहंकारासुरं गत्वा कथयामास तद्वचः ॥२०॥ स श्रुत्वा क्रोधसंयुक्तो बभूव तं जगाद ह। गच्छ विघ्नेश्वरं विप्र वद मे वचनं महत् ॥२१॥ सदेवं धूम्रवर्णं च हनिष्यामि न संशयः। तदाज्ञावशगो नाहं भविष्यामि कदाचन ॥२२॥ एवमूचे ततो विप्रं नारदं दैत्यनायकः। नारदो गणनाथं च ययौ जगाद तद्वचः ॥२३॥ नारदस्य वचः श्रुत्वा क्रोधयुक्तो गजाननः। अहं हंतुं मनश्चक्रे शस्त्रं

दधार विप्रपः ॥२४॥ अथ नारदविप्रर्षिस्तं प्रणम्य ययौ सुरान् । जगाद सकलं तेभ्यो वृत्तांतं हर्षसंयुतः ॥२५॥
देवास्तं नत्य सर्वे ते धूम्रवर्णं समाययुः। मुनिभिः शास्त्रसंयुक्ताः स्तुत्वा तं ते जगुर्वचः ॥२६॥ आज्ञां कुरु महाभाग
धूम्रवर्ण नमोऽस्तु ते। दैत्यैर्योद्धुं च देवेशांस्त्वदाशास्ते वशे स्थितान् ॥२७॥ तेषां वचनमाकर्ण्य धूम्रवर्णः प्रतापवान्।
उवाच तान् स्वभक्तांश्च भक्तेशो भक्तवत्सलः ॥२८॥ धूम्रवर्ण उवाच। तिष्ठध्वं देवदेवेशाः पश्यध्वं कौतुकं महत्।
हनिष्यामि महादैत्यं मच्छासनसपराङ्मुखम् ॥२९॥ एवमुक्त्वा गणाधीशो मुमोच पाशमुल्बणम्। स्वशस्त्रं तत् समागत्या-
ऽनंतरूपं बभूव ह ॥३०॥ यत्र तत्रासुरान् धृत्वा क्षणात् कंठे पपात तत्। मृता दैत्याः पुरप्रांतसंस्थाः पाशबलार्दिताः ॥३१॥
हाहाकारश्च सर्वत्र बभूव नगरे तदा। दैत्या गत्वा महादैत्यं कथयामासुरुल्बणम् ॥३२॥ किं स्थितोऽसि महाराज मृता
दैत्याः समंततः। पाशैः सर्वत्र संस्थैश्च धूम्रवर्णस्य मानद ॥३३॥ तेषां वचनमाकर्ण्य दुःखयुक्तो महासुरः। जगाद
सचिवादींश्च वचनं भयसंकुलः ॥३४॥ अहमुवाच। अहो कालमुखा दैत्याः स्वप्नं सत्यं बभूव ह। किं भविष्यति दैत्येशा
विपरीतं तु दृश्यते ॥३५॥ इति तस्य वचः श्रुत्वा पुत्रौ तातं महात्मनः। ऊचतुस्तं भयोद्विग्नं गर्वश्रेष्ठौ महासुरौ ॥३६॥
गर्वश्रेष्ठावूचतुः। किं शोचसि महाभाग भयं ते न भविष्यति। मायायुक्तो धूम्रवर्णः किं करिष्यति तेऽप्रियम् ॥३७॥ देहधारी
समायातो देवपक्षपरायणः। हनिष्यावो न संदेहः सदैव पश्य पौरुषम् ॥३८॥ एवमुक्त्वा महादैत्यं गर्वो गर्वसमन्वितः।
श्रेष्ठः प्रणम्य दैत्येंद्रं ततो युद्धाय जग्मतुः ॥३९॥ प्रधानाद्यैः समायुक्तौ शस्त्रवृष्टिं प्रचक्रतुः। पाशस्य तेजसा तत्र
दग्धास्ते तु समंततः ॥४०॥ ततो भययुताः सर्वे प्रधानाश्च बभूविरे। पाशतेजःप्रदग्धास्ते प्रपेतुः सर्वतोदिशम् ॥४१॥
ततोऽतिक्रोधसंयुक्तौ खड्गं गृह्य महासुरौ। पाशान् विच्छेत्तुमायातौ महाबलपराक्रमौ ॥४२॥ तेजसा दग्धदेहौ तौ
तथाऽपि खड्गधारया। पाशं गृह्य चकर्तुं तौ समुद्युक्तौ बभूवतुः ॥४३॥ ततः पाशेन संबद्धौ रुद्धश्वासौ महासुरौ।
गतप्राणौ च संग्रामे बभूवतुर्महर्षयः ॥४४॥ ततो हाहारवं कृत्वा दैत्याः सर्वे भयातुराः। प्रपेतुर्दशदिग्देशे गतमानाः
सुविह्वलाः ॥४५॥ ततः केचित् समागम्याहंकारं ते वचः परम्। जगुः क्रूरं मृतौ पुत्रौ तव दैत्यपते मृधे ॥४६॥ तेषां
वचनमाकर्ण्य मूर्च्छितः सहसाऽसुरः। सावधानः कृतः सर्वैः शुशोच भयसंकुलः ॥४७॥ धृत्वा धैर्यं ततः सोऽपि युद्धार्थं

संगतोऽभवत् । मुमोचास्त्राणि सर्वाणि छेत्तुं पाशं महोज्ज्वलम् ॥४८॥ पाशस्य तेजसा तानि दग्धानि च समंततः । ततोऽतिभयसंयुक्तो विचारमकरोद् हृदि ॥४९॥ अमोघास्त्रमयं मे तु वरं निष्फलतायुतम् । चकार पाशश्चात्यंतं चित्रं किं वा भविष्यति ॥५०॥ पलायनपरः सर्वैः स्वगृहं दैत्यनायकः । आगत्य स्वगुरुं तत्र समानाय्याब्रवीद्वचः ॥५१॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते अहंकारपराजयो नाम पंचमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ श्रीशिव उवाच । शुक्रं प्रणम्य नीतिज्ञं भयसंकुलितोऽसुरः । अहंकारो जगादेदं वचनं स्वहितार्थकम् ॥१॥ अहंकार उवाच । स्वामिन् मे वरदानं यन्निष्फलं प्रबभूव तत् । अमोघास्त्रमयं किं त्वं वद संशयकं नुद ॥२॥ धूम्रवर्णः समायातो देवपक्षप्रवर्धनः । मायामयः कथं सोऽपि निष्फलं मां चकार ह ॥३॥ शुक्र उवाच । अहं त्वं मूर्खभावेन मन्यसे धूम्रवर्णकम् । मायामयं विशेषेण न जानासि गजाननम् ॥४॥ मायायुक्तविहीनत्वं तत्र नैव प्रवर्तते । योगाकारं गणेशानं वदंते वेदवादिनः ॥५॥ हनिष्यति समाकुद्धस्त्वामयं धूम्रवर्णकः । अतस्तं त्वं गणेशानं शरणं याहि दैत्यप ॥६॥ धूम्रेणावृतमेवं यद् दृश्यते न जनैर्यथा । तथा वस्तु गणेशानं न जानंति शिवादयः ॥७॥ वर्णो वेदस्वरूपाश्च धूम्रा जाता इवाऽऽवभुः । अज्ञानत्वात्ततश्चायमव्यक्तो धूम्रवर्णकः ॥८॥ सहजं ब्रह्म यत् प्रोक्तं स्वाधीनं ब्रह्मगं परम् । तस्य किं वरदानस्योल्लंघनं दुर्घटं भवेत् ॥९॥ स्वेच्छया वरदानं वै सफलं निष्फलं भवेत् । तदेव धूम्रवर्णोऽयं सहजो नेति वाचकः ॥१०॥ अविनाशिपदं यच्च गजाख्यं ब्रह्म कथ्यते । तदेव मस्तकं तस्य गणेशस्य महात्मनः ॥११॥ नाशरूपं जगत् सर्वं देहस्तस्य न संशयः । धूम्रवर्णस्तयोर्योगे देहधारी बभूव ह ॥१२॥ पंचचित्तमयी बुद्धिर्दक्षिणांगे व्यवस्थिता । चित्तभ्रांतिकरी सिद्धिर्वामांगे राजते सदा ॥१३॥ तयोः स्वामी गणेशानो मायाभ्यां क्रीडति प्रभुः । तं गच्छ शरणं तात तदा सौख्यमवाप्स्यसि ॥१४॥ स्वसंवेद्येन योगेन दर्शनं तस्य जायते । योगिनां गणनाथस्य तेन स्वानंदपालकः ॥१५॥ न ते यशो महाराज भविष्यति कदाचन । सुरासुरमयो ढुंढिः शरणं तस्य गच्छतु ॥१६॥ सुराः स्वर्गेषु तेनैव स्थापिता

मानवा भुवि । असुरा विवरेष्वेव त्रिविधं धर्मसंयुतम् ॥१७॥ स्वस्वधर्मं परित्यज्य लोभयुक्ताः सुराऽसुराः । भवंति चेत्तदाऽयं तु तेषां शास्ता भवत्यहो ॥१८॥ देवैर्दैत्या जिताः सर्वे पातालं गत्य मानद । तदा त्वां स विनिर्माय देवविघ्नपरोऽभवत् ॥१९॥ त्वमपि धर्मलोपेन वर्णाश्रमपराङ्मुखः । देवनाशार्थमन्यंतमुद्युक्तोऽसि खलोत्तम ॥२०॥ अतस्त्वां हंतुमेवं स समायातो गजाननः । स्वधर्मस्थस्य ते नाशं न करिष्यति विप्रपः ॥२१॥ त्रिविधं त्रिविधे भावे संस्थितं धर्मसंयुतम् । तदाऽयं बुद्धिनाथश्च बुद्धौ नित्यं स्थितो भवेत् ॥२२॥ अतस्तस्य गणेशस्य शरणं गच्छ दैत्यप । ब्रह्माकारं च सर्वत्र सुरासुरप्रवर्तकम् ॥२३॥ श्रीशिव उवाच । काव्यस्य वचनं श्रुत्वा हर्षयुक्तोऽहमादरात् । प्रणम्य तं पुनः प्राह संशयस्यापनुत्तये ॥२४॥ अहमुवाच । शरणं धूम्रवर्णस्य गमिष्यामि त्वदाज्ञया । सुरासुरमयस्यैव तथाऽपि नुद संशयम् ॥२५॥ सिद्धिबुद्धि समा माया विद्यते नैव निश्चितम् । प्रकृत्या संयुतो नित्यं गणेशानः प्रखेलति ॥२६॥ सर्वपूज्यश्च सर्वादौ संमतो ब्रह्मनायकः । श्रीशब्देन समायुक्तः कथं श्रीमुख्यतां गतः ॥२७॥ सिद्धिं बुद्धिं परित्यज्य श्रियं चौंकारकं तथा । विकल्पेन समागृह्य तिष्ठते गणनायकः ॥२८॥ अन्ये सर्वे तथा विप्र प्रकृत्या श्रीस्वरूपया । युक्ता भवंति शास्त्रेषु किमिदं कौतुकं वद ॥२९॥ अतः श्रीर्यत् समा देवी विद्यते नैव निश्चितम् । भाति सर्वत्र वेदेषु तथौंकारात्मिका परा ॥३०॥ शुक्र उवाच । गकारः सिद्धिरूपश्च णकारो बुद्धिवाचकः । तयोः स्वामी गणेशानो योगाकारः प्रदृश्यते ॥३१॥ यथा मायायुतं ब्रह्म मायाया भिन्नकं न च । माया सैव सदा ब्रह्म ब्रह्म माया न संशयः ॥३२॥ तथा सिद्धिश्च बुद्धिश्च गणेशो दैत्यनायक । एकरूपो न संदेहो योगस्तेनायमुच्यते ॥३३॥ सिद्धिर्बुद्धिर्गणेशानो ज्ञानिनां त्रिविधं परम् । भाति योगमयं चापि विचारय विचक्षण ॥३४॥ अतः सिद्धेश्च बुद्धेश्चोपासनं नात्र विद्यते । भिन्नं गणपतेस्तस्मात् त्रिविधं नास्ति निश्चितम् ॥३५॥ गणेशपूजनेनैव त्रिविधं पूजितं भवेत् । प्रकृतिः पुरुषाकारस्तत्र नैव प्रदृश्यते ॥३६॥ वामांगं प्रकृत्याकारं दक्षिणांगं च पुंमयम् । सिद्धिं बुद्धिं विजानीहि तयोर्योगे गणेश्वरः ॥३७॥ सर्वेषां वामभागे च प्रकृतिः संस्थिताऽभवत् । गणेशस्योभयांगे तु प्रकृतिः परिकीर्तिता ॥३८॥ एकरूपधरा माया सिद्धिबुद्धिमयी परा । भिन्नभोगार्थमानंदात् सृष्टिं कर्तुं मनोदधे ॥३९॥ सिद्धेरंगात् समुत्पन्ना श्रीः सर्वशोभया युता । बुद्धेरंगात्तथौंकारप्रकृतिः प्रबभूव ह ॥४०॥ ताभ्यां तपः कृतं घोरं स्वस्वज्ञानप्रसिद्धये । यस्मै कस्मै नमो नित्यं मंत्रं जप्त्वा स्वमूलकम् ॥४१॥

ततस्तयोर्हृदिस्थं यद्ब्रह्म मायाप्रचालकम् । प्रसन्नं जातमत्यंतं स्वरूपं स्वमदर्शयत् ॥४२॥ तत एकाक्षरं मंत्रं गणेशस्य महात्मनः । दृष्ट्वा ताभ्यां हृदिस्थं स्वं तेजोरूपं सुखप्रदम् ॥४३॥ ततस्तेनैव मंत्रेण तोषयामासतुः परम् । गणेशं ते महाभाग ह्यादिमाय तपोन्विते ॥४४॥ दिव्यवर्षसहस्रेण प्रसन्नो गणनायकः । वरान् दातुं समायातः सिद्धिबुद्धिसमन्वितः ॥४५॥ नरकुंजररूपं तत् दृष्ट्वा विस्मितमानसे । माये बभूवतुस्तत्र विचारं चक्रतुर्हृदि ॥४६॥ गणेशकृपया सद्यो ज्ञानं जातं महाद्भुतम् । तपसोग्रप्रभावेण ज्ञातं ताभ्यां रहस्यकम् ॥४७॥ सिद्धिबुद्धियुतं तं ते वीक्ष्य चोत्थाय सत्वरम् । प्रणेमतुर्गणेशानं पूज्य स्तोत्रं प्रचक्रतुः ॥४८॥ श्र्योंकारावूचतुः । नमस्ते गणनाथाय सर्वसिद्धिप्रदायक । सिद्धिबुद्धियुतायैव गणानां पतये नमः ॥४९॥ स्वानंदपतये तुभ्यं कर्तॄणां कर्तृरूपिणे । अनाथाय सनाथानां नमो नाथाय ते नमः ॥५०॥ परेशाय परेषां च पालकाय परात्मने । आत्मनाममृतायैव विघ्नेशाय नमो नमः ॥५१॥ लंबोदराय देवाय देवदेवेशरूपिणे । देवेभ्यो देवानां दात्रे गजाननाय ते नमः ॥५२॥ ज्येष्ठराजाय सर्वेषामादिपूज्याय ढुंढये । अनामनाय नित्याय सर्वेशाय नमो नमः ॥५३॥ ब्रह्मभ्यो ब्रह्मदात्रे ते ब्रह्मणे ब्रह्मरूपिणे । ब्रह्मणस्पतये तुभ्यं पूर्णयोगाय ते नमः ॥५४॥ योगशांतिमयायैव चिंतामणिस्वरूपिणे । अनंतायादिरूपाय चांतःस्थाय नमो नमः ॥५५॥ किं स्तुवस्त्वां गणाधीश योगशांतिधरं परम् । यत्र वेदादयः शांतिं प्राप्ता योगपरायणाः ॥५६॥ मनोवाणीमयो नैव मनोवाणीविवर्जितः । नैव त्वं ते नमो नाथ प्रसन्नो भव सर्वदा ॥५७॥ एवमुक्त्वा गणाधीशं प्रणेमतुर्महासुर । श्र्योंकारौ तौ समुत्थाप्य जगाद गणनायकः ॥५८॥ श्रीगणेश उवाच । वरान् ब्रूतं महाभागे महामाये हृदीप्सितान् । दास्यामि तपसा तुष्टः स्तोत्रेणाहं विशेषतः ॥५९॥ स्तोत्रं भवत्कृतं मे वै सर्वसिद्धिप्रदायकम् । पठते शृण्वते नित्यं प्रभवेद्भुक्तिमुक्तिदम् ॥६०॥ ब्रह्मभूयकरं पूर्णं श्र्योंकारयशसाऽन्वितम् । मम प्रियकरं पूर्णं भक्तिवर्धनकं भवेत् ॥६१॥ गणेशवचनं श्रुत्वोचतुः श्र्योंकारकौ परम् । गणेशभक्तिसंयुक्तो भक्तेशं भक्तवत्सलम् ॥६२॥ श्र्योंकारावूचतुः । त्वयि भक्तिं स्थिरां देहि योगशांतिप्रदायिकाम् । संकल्पसिद्धिसामर्थ्यं दास्यं ते पादपद्मयोः ॥६३॥ यथा सिद्धिश्च बुद्धिश्च त्वया संमानिते प्रभो । तथाऽऽवां ते प्रिये नाथ कुरुष्व गणनायक ॥६४॥ अस्मदीयं वशे सर्वं जगद्ब्रह्म कुरु प्रभो । आवाभ्यां मोहितं सर्वं भवतु त्वत्प्रसादतः ॥६५॥ त्वदीयभजनेनैव मोहो ह्यस्मत्कृतः परः । नाशं यातु सदा देव नान्यथा योगकारिभिः ॥६६॥ शिवविष्णुमुखा देवा मोहयुक्ता भवंतु च । अस्मदर्थं सदा भ्रांता यत्नयुक्ता भवंतु वै ॥६७॥

श्रीगणेश उवाच । भवनीभ्यां वृताः सर्वे वराः सुदुर्लभाः पराः । दत्ता मया विशेषेण मोहयेनमिदं जगत् ॥६८॥ मायाभ्यां सिद्धिबुद्धिभ्यां रचितं विविधं जगत् । ब्रह्म नानाविधं देव्यौ तत्राऽहं बिंबितोऽभवम् ॥६९॥ बिंबं मे मोहयुक्तं तन्नानाभावपरायणम् । मम भक्तिस्वभावेन मोहहीनं भवेत सदा ॥७०॥ मम बिंबस्य भार्ये तु संशयो न भविष्यथः । तेन युक्ते महामाये बंधमोक्षौ करिष्यथः ॥७१॥ सिद्धिबुद्धियुतोऽहं तु ब्रह्मभूतः सनातनः । न तत्र योगयता देव्यौ भवत्योर्मोहनात्मनोः ॥७२॥ एवमुक्त्वा गणाधीशोंऽतर्धानं वै चकार ह । माये तं मनसा ध्यात्वा संस्थिते तत्र दैत्यप ॥७३॥ ततो गणेशबिंबं यत् पतितं तत्तयोर्हृदि । तेन युक्ते चतुर्भेदं चक्रतुर्भेदनात्मकं ॥७४॥ बाह्यसौख्यकरी माया चतुर्णां जगतां किल । ब्रह्मणां देहरूपा च श्रीः सर्वत्र प्रकीर्तिता ॥७५॥ चतुर्णां जगतां तद्वद्ब्रह्मणां ज्ञानरूपिणी । ओंकारात्मकरूपा सा माया सर्वत्र संस्थिता ॥७६॥ ताभ्यां युक्तो गणेशानः क्रीडते विविधै रतः । मोहयुक्तविहीनत्वान्नानाभेदपरायणः ॥७७॥ अतः सर्वेषु जीवेषु मोहितेषु महासुर । मोहहीनात्मभावेषु श्र्योंकारौ त्वादिसंमतौ ॥७८॥ आदौ प्रकृतिमुच्चार्य पश्चात् पुरुष उच्यते । कृतं विघ्नेश्वरेणैतत् जानीहि दैत्यनायक ॥७९॥ कुत्र श्रीशब्दयुक्तश्च गणेशः पठ्यते बुधैः । तत्रोंकारसमायुक्तो मायाभ्यां खेलनात् परः ॥८०॥ वामांगे श्रीर्धृता तेन दक्षिणांगे महासुर । ओंकारो गणनाथस्य बिंबेन ब्रह्मरूपिणा ॥८१॥ बिंबं सर्वत्र भावेषु तदाकारं बभूव ह । अतः शिवादयः सर्वे जाताः श्र्योंकारसंयुताः ॥८२॥ जीवा श्र्योंकारसंयुक्ताः पठ्यंते वेदवादिभिः । आदिमाये समाख्याते बिंबाधारे विचारय ॥८३॥ अतः श्र्योंकारमोहं त्वं त्यक्त्वा विघ्नेश्वरं भज । सिद्धिबुद्धियुतं तात तेन सौख्यमवाप्स्यसि ॥८४॥ इति ते कथितं सर्वं धूम्रवर्णस्य चेष्टितम् । गच्छतं शरणं दैत्य शांतिदं भुक्तिमुक्तिदम् ॥८५॥ भिन्नभावकरे माये श्र्योंकारौ परिकीर्तितौ । ब्रह्मभूयमयी प्रोक्ता सिद्धिर्बुद्धिर्विचक्षण ॥८६॥ एतत्ते कथितं सर्वं रहस्यं सर्वसंमतम् । वेदगुह्यमहंकार गच्छ तं सर्वसिद्धये ॥८७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते अहंकारासुरज्ञानोपदेशो नाम षष्ठोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शिव उवाच । शुक्रस्य वचनं श्रुत्वाऽहंकारस्तं प्रणम्य च । जगाद ज्ञानसंयुक्तः कृतांजलिः प्रतापवान् ॥१॥ अहमुवाच । त्वयाऽहं बोधितो नाथाऽतो गच्छामि गजाननम् । सुरासुरमयं ब्रह्म सर्वशांतिप्रदायकम् ॥२॥ एवमुक्त्वा स शुक्रेण संयुतः परमार्थवित् । अथोंकाराभ्यां मनः कृष्य योगेशं शरणं ययौ ॥३॥ पुरप्रांते महापाशं दृष्ट्वा नम्य कृतांजलिः । तुष्टाव शस्त्रराजं स गणेशाहंकृतेश्वरः ॥४॥ अहमुवाच । पाशाय शस्त्रराजाय नमस्ते बंधरूपिणे । मोक्षरूपाय वै तुभ्यं गणेशकरभूषण ॥५॥ मोहो मायामयः प्रोक्तो बंधदः सर्वजंतवे । गणेशज्ञानयुक्तश्चेद् बंधहीनो नरो भवेत् ॥६॥ तदेव बंधरूपाख्यं शस्त्रं तस्य महात्मनः । त्वमेव पाशरूपं वै बंधमोक्षकरं महत् ॥७॥ ये त्वां शरणमापन्नास्तेषां न बंधजं भयम् । नास्ति शस्त्र च मां पाहि शरणागतमादरात् ॥८॥ नमस्ते तेजसां नाथ दुष्टनाशकराय ते । पाशाय परमास्त्राय शस्त्राणां ब्रह्मणे नमः ॥९॥ एवं स्तुत्वा महापाशं प्रणनाम कृतांजलिः । अहंकारश्च तं त्यक्त्वा पाशो विघ्नेश्वरं ययौ ॥१०॥ इदं स्तोत्रं पठेद्यस्तु तस्य बंधो विनश्यति । मायापाशमयः साक्षाद्गणेशे स लभेद्रतिम् ॥११॥ गतं पाशं विलोक्यैवाहंकारो गुरुणा युतः । धूम्रवर्णं जगामाऽसौ तं दृष्ट्वा प्रणनाम ह ॥१२॥ पुनरुत्थाय विघ्नेशं पूजयामास भक्तितः । पुनः प्रणम्य सर्वेशं तुष्टाव स कृतांजलिः ॥१३॥ अहमुवाच । धूम्रवर्णाय वै तुभ्यं गणेशाय परात्मने । अव्यक्तायादिबीजाय परेशाय नमो नमः ॥१४॥ लंबोदराय देवाय दैत्यनाथाय ते नमः । हेरंबाय महेशानां पालकाय नमो नमः ॥१५॥ कर्मणे कर्मरूपाय नानाकर्मप्रचारिणे । ज्ञानाय ज्ञानदात्रे ते ज्ञानज्ञानाय वै नमः ॥१६॥ चराय चररूपाय जंगमस्थाय ते नमः । स्थावराय सदा तद्रूपाय तद्रूपधारिणे ॥१७॥ स्थावरजंगमाभ्यां च हीनाय ते नमो नमः । योगाय योगनाथाय योगिने योगदायिने ॥१८॥ योगेभ्यो योगदात्रे ते नमश्चिंतामणे नमः । शांताय शांतचित्तैस्तु प्राप्याय शांतमूर्तये ॥१९॥ ब्रह्मणां पतये तुभ्यं ब्रह्मणे सिद्धिबुद्धिद । सिद्धिनाथाय बुद्धीश तयोर्योगाय ते नमः ॥२०॥ मूषकोपरि संस्थाय मूषकध्वजधारिणे । चतुर्भुजाय स्वानंदपतये ते नमो नमः ॥२१॥ किं स्तौमि त्वां गणाधीश धूम्रवर्णस्वरूपिणम् । अव्यक्तं वेदवादेषु कथितं सततं प्रभो ॥२२॥ स्वरूपं ते कथयितुं वेदा धूम्रायिना बभुः । योगशांतिधरास्ते कथयितुं ध्रुवमक्षमाः ॥२३॥ अतस्त्वां धूम्रवर्णाख्यं वदंते वेदवादिनः । पश्यामि तं धूम्रवर्णमेवाऽहं योगिदुर्लभम् ॥२४॥ धन्योऽहं सकुलो नाथ त्वदंघ्रियुगदर्शनात् । एवमुक्त्वा ननर्ताऽसौ भक्तियुक्तो महासुरः ॥२५॥ निमग्नं तं भक्तिरसे दृष्ट्वा

देवो गजाननः । जगाद तं महाभागं प्रेमयुक्तं प्रसन्नधीः ॥२६॥ धूम्रवर्ण उवाच । वरान वृणु महाभाग दास्यामि स्तोत्रतोषितः । अहंकार न संदेहो न भयं ते भविष्यति ॥२७॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदायकम् । मम भक्तिप्रदं चैव भविष्यति न संशयः ॥२८॥ शृणुयाद्यः पठेद्वत्तस्याहंकारजं भयम् । न भविष्यति दैत्येश भुक्तिमुक्तिप्रदं भवेत् ॥२९॥ यद्यदिच्छति तत्तद्वै दास्यामि स्तोत्रपाठतः । मम प्रियो भवेत् सोऽपि सदा मोहविवर्जितः ॥३०॥ एवं गणेशवाक्यं स श्रुत्वा तं ह्यब्रवीदहम् । प्रणिपत्य महात्मानं धूम्रवर्णं महासुरः ॥३१॥ अहमुवाच । यदि मे वरदोऽसि त्वं धूम्रवर्ण गजानन । तदा ते पादपद्मे वै भक्तिं देहि परां विभो ॥३२॥ गाणपत्यं कुरुष्व त्वं मां गणेशपरायणम् । गाणपत्यप्रियं तात सदा सद्भावभाविकम् ॥३३॥ स्थानं देहि तथा वृत्तिं योगक्षेमकरीं पराम् । तत्रस्थस्त्वां भविष्यामि दासोऽहं ते गजानन ॥३४॥ नान्यं याचे कदा नाथ ह्योंकारमोहमोहितम् । सिद्धिबुद्धियुतं त्वाहं भजिष्यामि विशेषतः ॥३५॥ बोधितो गुरुणाऽन्यंतं तस्य वाक्यपरायणः । योगशांतिमयं रूपं भजिष्यामि महोदर ॥३६॥ धूम्रवर्ण उवाच । मयि भक्तिर्दृढा तेऽस्तु मयि दास्यपरायणः । गाणपत्यप्रियो भूत्वा चरिष्यसि न संशयः ॥३७॥ यत्रादौ मे महादैत्य पूजनं नैव विद्यते । तत्र कर्मसु ते स्थानं भुंक्ष्व कर्मफलं महत् ॥३८॥ कार्यादौ स्मरणं मे न तत्र त्वं सुस्थिरो भव । आसुरेण स्वभावेन भ्रंशयस्व निरंतरम् ॥३९॥ स्वपुरं गच्छ दैत्येंद्र मद्भक्तान रक्ष सर्वदा । मदहंकृतिसंयुक्तान् कुरु त्वं नित्यमादरात् ॥४०॥ यत्र मे स्मरणं चादौ पूजनं सर्वकर्मसु । तत्र साधुस्वभावेन वर्तस्व तदहंकृतिः ॥४१॥ गणेशभक्तिसंयुक्तो मदीयाहंकृतेर्धरः । भविष्यसि न संदेहो गच्छ गच्छ मदाज्ञया ॥४२॥ श्रीशिव उवाच । एवमुक्त्वा गणाधीशस्तमहं विरराम ह । प्रणम्य तमहंकारः ययौ स्वनगरं मुदा ॥४३॥ तादृशं तं परिज्ञाय दैत्येशा दुःखसंयुताः । त्यक्त्वा पातालगाः सर्वे बभूवुर्भयविह्वलाः ॥४४॥ स एव सुखसंयुक्तोऽभजत्तं गणनायकम् । अनन्यमनसा ध्यात्वा धूम्रवर्णधरं परम् ॥४५॥ यथा जगाद विघ्नेशस्तथा चकार भावतः । अहंकारासुरश्चैव शांतरूपो बभूव ह ॥४६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते अहंकारशांतिरूपवर्णनं नाम सप्तमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शिव उवाच । शांतिरूपधरं पूर्णं गाणेशाहंकृतिस्थितम् । अहं दृष्ट्वा सुरा विप्रा विस्मिता अभवन् द्विजाः ॥१॥ ततस्ते धूम्रवर्णं वै पुपूजुर्भक्तिसंयुताः । पुनः प्रणम्य तं सर्वे तुष्टुवुः करसंपुटाः ॥२॥ देवर्षय ऊचुः । अजायाथ सर्वादिपूज्याय नित्यं निरालंबनेति स्वरूपाय ढुंढे । सदाऽव्यक्तरूपाय सर्वांतगाय नमो धूम्रवर्णाय सर्वेश्वराय ॥३॥ सदा मोहहीनाय मोहप्रदाय जनेभ्यः प्रभो मोहहंत्रे निजानाम् । महानंदत्रैविध्यभावैः परेश नमो धूम्रवर्णाय सर्वेश्वराय ॥४॥ नमः सिद्धिबुद्धिप्रदात्रे गणेश पुरे वासकारिन् स्वसंवेद्यनाम्नि । अनाथाय नाथाय सर्वेश्वराणां नमो धूम्रवर्णाय सर्वेश्वराय ॥५॥ सदा स्वेच्छया खेलकाराय तुभ्यं सगौणाय नैर्गुण्यभावाय ब्रह्मन् । महाऽऽखुध्वजायाऽथ हेरंबकाय नमो धूम्रवर्णाय सर्वेश्वराय ॥६॥ गजाकारतुंडाय लंबोदराय त्रिनेत्राय शूर्पश्रुतिक्षोभकारिन् । मदासक्तयोगींद्र भृंगात्मकानां नमो धूम्रवर्णाय सर्वेश्वराय ॥७॥ चतुर्बाहवे चैकदंताय तुभ्यं विचित्रैरनर्घैस्तु संभूषिताय । अलंकारकैर्देवदेवेश पात्रे नमो धूम्रवर्णाय सर्वेश्वराय ॥८॥ त्वया सृष्टमाद्यं समं सर्वभावयुतं मोहदं मायिनां नंदनाद्वै । तदाकाररूपेण तत्स्थाय भूम्ने नमो धूम्रवर्णाय सर्वेश्वराय ॥९॥ त्वया प्रेरितेनाथ तेनाऽपि सृष्टं सदात्मस्वरूपं परं जीवनं यत् । अभेदात्मकं तत्र संस्थाय तुभ्यं नमो धूम्रवर्णाय सर्वेश्वराय ॥१०॥ ततस्तेन सृष्टं सदा भेदकानां निजं दैवतं ब्रह्मभावेन तत्स्थम् । तदाकाररूपेण तत्स्थाय ब्रह्मन् नमो धूम्रवर्णाय सर्वेश्वराय ॥११॥ असद्भावयुक्तेन सृष्टं विदेहं परं ब्रह्म सांख्यात्मकं मूलबीजम् । त्वया प्रेरितेनात्र वामप्रदायिन्नमो धूम्रवर्णाय सर्वेश्वराय ॥१२॥ स्वतोत्थानरूपं विदेहेन सृष्टं त्वदीयप्रबोधेन विघ्नेश्वराय । तदाकाररूपाय तत्रस्थकाय नमो धूम्रवर्णाय सर्वेश्वराय ॥१३॥ ततस्तेन ते सत्तया सृष्टमाद्यं सदैकस्वरूपं परं सोहमेवम् । तथा त्वं च तत्रैव संस्थः परात्मन् नमो धूम्रवर्णाय सर्वेश्वराय ॥१४॥ त्वया प्रेरितेनाथ तेनैव सृष्टं चतुर्णां प्रमूलं महद्बिंदुरूपम् । सदा मोहजेनैव योगेन तत्स्थो नमो धूम्रवर्णाय सर्वेश्वराय ॥१५॥ ततो नादरूपं समं यत्सुषुप्तं परं सूक्ष्मरूपं ततः स्थूलभावम् । चतुर्धा शरीरं विनिर्माय खेलिन्नमो धूम्रवर्णाय सर्वेश्वराय ॥१६॥ नमो विश्वरूपाय सर्वाकराय ह्यनंताननाद्यैः सुचिह्नाय तुभ्यम् । चरैः स्थावरैर्भोगभोगिन्नमस्ते नमो धूम्रवर्णाय सर्वेश्वराय ॥१७॥ चरायाऽथ ते स्थावरायैव तुभ्यं नमो सृष्टिकर्त्रे सुपात्रे हराय । प्रकाशाय सूर्याय देवीमयाय नमो धूम्रवर्णाय सर्वेश्वराय ॥१८॥

नमो देवपक्षाय साध्याय तुभ्यं नगगाऽथ देवेंद्र देवात्मकाय । दिगीशाय वृक्षादिबीजात्मकाय नमो धूम्रवर्णाय सर्वेश्वराय ॥१९॥ नमः सर्परूपाय दैत्यात्मकाय समुद्रादिनानाप्रभेदस्यमूर्ते । अनंतैः स्वरूपैः सदा क्रीडसि त्वं नमो धूम्रवर्णाय सर्वेश्वराय ॥२०॥ तथापि त्वमेवं तदाकारहीनः सदा साहजेनैव योगेन योगिन् । स्वसत्तात्मकायैव तुभ्यं नमस्ते नमो धूम्रवर्णाय सर्वेश्वराय ॥२१॥ अतो वेदवादा विशेषेण धूम्रा भवंति ह्यहो वर्णितुं ते स्वरूपम् । बुधैः कश्यपे धूम्रवर्णस्ततस्त्वं नमो धूम्रवर्णाय सर्वेश्वराय ॥२२॥ सुशांतिं गता वेदयोगींद्रमुख्यास्त्वयि ब्रह्मनाथ सदा धूम्रवर्णे । वयं किं स्तुवीमोऽल्पबोधा नमस्ते नमो धूम्रवर्णाय सर्वेश्वराय ॥२३॥ श्रीशिव उवाच । एवं स्तुत्वा गणेशानं प्रणेमुरमरर्षयः । तानुवाच महाभागान् धूम्रवर्णः प्रतापवान् ॥२४॥ धूम्रवर्ण उवाच । वरान् ब्रूत महाभागा दास्यामि स्तोत्रतोषितः । देवर्षयो हृदि स्थान् वः सुदुर्लभतरानपि ॥२५॥ स्तोत्रं भवत् कृतं मे तु भविष्यति सुसिद्धिदम् । ब्रह्मभूयकरं विप्रा भविष्यति न संशयः॥२६॥ पुत्रपौत्रकलत्रादि सौख्यदं धनधान्यदम् । आयुरारोग्यकैश्वर्यदायकं प्रभविष्यति ॥२७॥ पठते शृण्वते देवा नानाभावप्रपूरकम् । धर्मार्थकाममोक्षाणां दायकं भजतामिदम् ॥२८॥ मारणोच्चाटनादीनि ह्येकविंशतिपाठतः । एकविंशतिभिर्नित्यं दिवसैः प्रभवंति हि ॥२९॥ परकृत्यादिकं सर्वं नाशमेति न संशयः । अनेन स्तोत्रमुख्येन स्तुवतः सर्वदा द्विजाः ॥३०॥ यं यं चिंतयते कामं तं तं दास्यामि सर्वदा । स्तुतोऽनेन महादेवाः स्तोत्रेण तुष्टिमागतः ॥३१॥ श्रीशिव उवाच । देवर्षयो धूम्रवर्णवचः श्रुत्वा प्रणम्य तम् । प्रहृष्टमनसो देवं सर्वसिद्धिकरं जगुः ॥३२॥ देवर्षय ऊचुः । धूम्रवर्ण त्वया नाथ कृतः शांतिधरः सदा । अहं तेन वयं सर्वे वरयुक्ताः कृताः किल ॥३३॥ अहंकारे प्रशांते तु स्वाधिकारे वसामहे । वर्णाश्रमयुता लोका भविष्यंति द्विजादयः ॥३४॥ वृणुमः किं गणाधीश देहि भक्तिं त्वदीयिकाम् । अहंकारभयघ्नीं वै तया तुष्टा वयं प्रभो ॥३५॥ तथेति तानुवाचासौ धूम्रवर्णो गणेश्वरः । अंतर्दधे भवन् देवा मुनयस्तं नतास्ततः ॥३६॥ स्थापयामासुरानंदात् धूम्रवर्णं दिगंतरे । क्षेत्रे तत्र गणेशानं पूजयामासुरादरात् ॥३७॥ स्वे स्वे पदे च ते जग्मुस्ततो हर्षसमन्विताः । सुखिनः स्वस्वकार्येषु वर्तंते गणपे रताः ॥३८॥ एतद्वः कथितं चित्रं चरित्रं सर्वसिद्धिदम् । अहंकारभयघ्नं च पठतां शृण्वतां भवेत् ॥३९॥ एवं नानावतारान् स धूम्रवर्णः प्रतापवान् । धृत्वा चकार विश्वं तु निर्विघ्नं भक्तिभावितः ॥४०॥

धूम्रवर्णावताराश्चानंतास्तेषां चरित्रकम् । कथितुं नैव शक्यं तत् कदा भवति केनचित् ॥४१॥ अतः संक्षेपतः प्रोक्तं मुख्यावतारचेष्टितम् । सनकाद्या गणेशानं भजध्वं भावसंयुताः ॥४२॥ तेनाहंकारनिर्मुक्ता भविष्यथ न संशयः । योगींद्र योगिवंद्याश्च शांतिदाः शांतचेतसे ॥४३॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते धूम्रवर्णावतारसमाप्तिर्नाम अष्टमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सनकाद्या ऊचुः । कुरुक्षेत्रं महादेव धूम्रवर्णस्य सर्वदम् । माहात्म्यं क्षेत्रमुख्यस्य वद संतोषदायकम् ॥१॥ श्रीशिव उवाच । ऐशान्ये हिमवत्प्रांते धूम्रवर्णस्य क्षेत्रकम् । विख्यातं तस्य माहात्म्यं वर्णितुं कः क्षमो भवेत् ॥२॥ संक्षेपेण वदिष्यामि प्रणम्य गणनायकम् । माहात्म्यं क्षेत्रमुख्यस्य शृणुध्वं त्वेकचेतसः ॥३॥ देवर्षिभिः प्रहर्षेण स्थापितो धूम्रवर्णकः । शुंडादंडमुखः श्रीमांश्चतुर्बाहुप्रधारकः ॥४॥ त्रिनेत्र एकदंतश्च परश्वादिसमन्वितः । अहंकारो गणेशानं भजते तत्र नित्यशः ॥५॥ वामे सिद्धिर्दक्षिणांगे बुद्धिः सर्वप्रियंकरी । पुरतो मूषकस्तस्य धूम्रवर्णस्य शोभनः ॥६॥ दशयोजन-विस्तारः क्षेत्रस्य गणपस्य च । चतुरस्रं च तत् क्षेत्रं सर्वसिद्धिप्रदायकम् ॥७॥ पुरतो धूम्रवर्णस्य भक्ता मुद्गलमुख्यकाः । शुकाद्यास्तं भजंते ते स्तुवंति स्म महर्षयः ॥८॥ पृष्ठतः पार्षदास्तस्य प्रमोदामोदकादयः । आत्तशस्त्रा महाभागाः सेवंते धूम्रवर्णकम् ॥९॥ वामांगे तीर्थमुख्यानि प्रयागादीनि मानदाः । क्षेत्राणि काशीमुख्यानि भजंते धूम्रवर्णकम् ॥१०॥ दक्षिणांगेऽमरेशानाः शंभुविष्णुमुखाः सदा । सगणाः सपरीवारा भजंते गणनायकम् ॥११॥ शेषाद्या नागराजाश्च पर्वता हैममुख्यकाः । गंधर्वाश्चारणाः सिद्धा वसवो मनवस्तथा ॥१२॥ आदित्या रुद्रकाद्याश्च विद्याधराप्सरादयः । वसंति तत्र क्षेत्रे ते भजंते द्विरदाननम् ॥१३॥ यद्यच्छ्रेष्ठतमं लोके तत्तत्तत्रैव संस्थितम् । सेवार्थं धूम्रवर्णस्य भक्तिभावसमन्वितम् ॥१४॥ तेषां स्थानादिकं विप्राः कथितुं नैव शक्यते । अपारत्वात्ततः संक्षेपतः प्रोक्तं मया परम् ॥१५॥ तत्र तीर्थं महासिद्धिदायकं वर्तते परम् । धूम्रवर्णस्य तत्रैव स्नानं करोति विप्रपः ॥१६॥ तत्र स्नानेन सद्यश्च वाञ्छितं लभते नरः । अंते मोक्षं न

निल्यं स्नानं प्रकुर्वंति प्रहृष्ट-
संदेहो यत्र कुत्र मृतोऽपि चेत् ॥१७॥ तत्र विष्णुमुखा देवाः कश्यपाद्या महर्षयः । निल्यं स्नानं प्रकुर्वंति प्रहृष्ट-
नांतरात्मना ॥१८॥ अन्यक्षेत्रस्थतीर्थानां त्वत्र स्नानं प्रकुर्वते । जनाः क्षेत्रनिवासार्थं स्थितास्तेऽपि मुदान्विताः ॥१९॥
शिवविष्णुमुखानां च तत्र तीर्थानि मानदाः । स्थितानि स्नानमात्रेण तेषां पदप्रदानि च ॥२०॥ तत्र दर्शनमात्रेण
धूम्रवर्णस्य वै सकृत् । ईप्सितं लभते सद्यो मानवो पुण्यवान भवेत् ॥२१॥ यात्रामात्रेण तत्रैव धर्मार्थकाममोक्षकम् ।
लभते एकवारेण यत्र कुत्र गतोऽपि चेत् ॥२२॥ भाद्रशुक्लचतुर्थ्यां स स्थापितो धूम्रवर्णकः । देवर्षिभिश्च मध्याह्ने सा
तिथिः परमा मता ॥२३॥ वार्षिकः सुमहान्साहस्तत्रैव क्रियते जनैः । भाद्रशुक्लचतुर्थ्यां तु यात्रां कुर्वंति मानवाः
॥२४॥ परस्परं प्रहृष्टास्ते बोधयंति गजाननम् । सरोमांचा भवंत्येव शंकराद्या महर्षयः ॥२५॥ गाणेशा भावसंयुक्ता
यात्रार्थं हर्षसंयुताः । तत्र गच्छंति चान्ये ये वैष्णवाद्याः प्रहर्षिताः ॥२६॥ कृत्वा यात्रां पुनः सर्वे स्वस्वस्थानगता मुदा ।
स्मरंति धूम्रवर्णं तं भक्तिभावसमन्विताः ॥२७॥ अंते स्वानंदगाः सर्वे भवंते नात्र संशयः । शैवाद्याः क्रममार्गेण स्वानंदस्था
भवंति तु ॥२८॥ क्षेत्रे मरणतो विप्राः स्वानंदो लभ्यते जनैः । यत्र कुत्र स्थिताश्चैव गाणपा ब्रह्मरूपकाः ॥२९॥ धूम्रवर्णस्य
क्षेत्रस्य माहात्म्यं लेशतो मया । कथितुं विस्तरेणैवार्हंति को नैव वर्णितुम् ॥३०॥ गाणेशानि च क्षेत्राणि ब्रह्मभूतमयानि
तु । यावंति ब्रह्मगोलेऽस्मिंस्तावंति मुनिसत्तमाः ॥३१॥ धर्मार्थकाममोक्षाणां क्षेत्राणि विविधानि च । चतुःपदमयान्येव
ज्ञातव्यानि न संशयः ॥३२॥ पंचमं यत् पदं प्रोक्तं ब्रह्माकारं महर्षिभिः । क्षेत्रं गणपतेर्विप्रा यत्र तत्र स्थितं किल ॥३३॥
इदं क्षेत्रस्य माहात्म्यं शृणुयाद्यो नरोत्तमः । श्रावयेत् प्रपठेद्वाऽपि स सर्वार्थमवाप्नुयात् ॥३४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते धूम्रमहिमावर्णनं नाम नवमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सनकाद्या ऊचुः । धूम्रवर्णावतारस्य भेदा नानाविधाः स्मृताः । वद तेषु विभो मुख्यांश्चरित्रसंयुतान् परान् ॥१॥ धूम्रवर्णचरित्रं तु श्रुत्वा यामो न तृप्तिकाम् । अहंकारहरं पूर्णं ज्ञात्वा त्वत्तो जगद्गुरो ॥२॥ श्रीशिव उवाच । धूम्रवर्णावतारस्य भेदानां चरितं परम् । कथितुं नैव शक्यं तन्मुख्यानां मुनिसत्तमाः ॥३॥ मुख्येषु मुख्यभूतानां चरित्रं लेशतः परम् । कथयामि शृणुध्वं यत् मनसा निश्चलेन तत् ॥४॥ सहजं यत्पदं प्रोक्तं तेनिरूपं मुनीश्वराः । तेन सृष्टं समाख्यं हि ब्रह्म त्वानंदवाचकम् ॥५॥ तेन सत्यानृते सृष्टे नाभ्यामुत्थानसंयुते । विप्रेशा ब्रह्मणी सृष्टे ते स्वतः परतोऽभिधे ॥६॥ तेन देहिमयं देहप्रचुरं ब्रह्म वै ततः । बिंदु तेनैव संसृष्टं चतुर्देहमयं परम् ॥७॥ स्थूलं सूक्ष्मं समं नादं तैः सृष्टं विश्वरूपकम् । नानाभेदमयं तस्माद्व्यष्टिरूपं मुनीश्वराः ॥८॥ एतानि ब्रह्मरूपाणि ह्युत्पन्नानि महर्षयः । ज्ञानहीनान्यक्षमाणि सर्वतः कार्यजातिषु ॥९॥ ततस्तैश्च तपस्तप्तं यस्मै कस्मै नमो नमः । बीजरूपाणि सर्वेषां मंत्रं जप्त्वा निरंतरम् ॥१०॥ ततो वर्षशते पूर्णे प्रसन्नोऽभूद्गजाननः । दर्शयामास रूपं स्वं तेभ्यो मंत्रमयं परम् ॥११॥ ततस्तत्कृपया तानि ददृशुः स्वहृदि स्थितम् । मंत्रमेकाक्षरं तेजोयुक्तं ज्ञानकरं परम् ॥१२॥ दृष्ट्वा मंत्रं प्रहृष्टानि ब्रह्माणि तेभुरादरात् । मंत्रं संगृह्य तं पूर्वं ध्यात्वा हृदि गजाननम् ॥१३॥ मंत्राकारं गणेशानं ध्यात्वा तेपुः पराणि तु । तोषयामासुरत्यंतं श्रमयुक्तानि विघ्नपम् ॥१४॥ दिव्यवर्षसहस्रेण प्रसन्नोऽभूद्गजाननः । दर्शयामास रूपं स्वं योगिध्येयमनुत्तमम् ॥१५॥ नरकुंजररूपं तु दृष्ट्वा हृदि विसिस्मिरे । ब्रह्माणि तानि वै ढुंढिर्ददौ ज्ञानं सुनिर्मलम् ॥१६॥ तेन तैर्गणराजस्य ज्ञानं रूपं विशेषतः । सगुणनिर्गुणाभ्यां च युक्तं योगमयं परम् ॥१७॥ ततोऽतिहर्षयुक्तानि जातानि मुनिसत्तमाः । नित्यं ब्रह्माणि विघ्नेशं ध्यात्वा जपं समाचरन् ॥१८॥ ततो गणपतिः प्रीतो ययौ तानि सुभक्तितः । शिवरूपधरो भूत्वा पंचवक्त्रस्त्रिलोचनः ॥१९॥ मुंडमालाधरः शंभुर्व्याघ्रेभचर्मधारकः । विभूतिलिप्तः सर्वांगे शेषनागविभूषणः ॥२०॥ वृषध्वजो वृषारूढश्चंद्रचूडस्त्रिशूलधृक् । अर्धांगे गिरिजायुक्तो योगींद्रो योगिवंदितः ॥२१॥ समागतं महेशानं दृष्ट्वा ब्रह्माणि ब्राह्मणाः । विस्मितानि विशेषेण विचारं चक्रुरादरात् ॥२२॥ गणेशकृपया सद्यो ज्ञानं तैः सकलं महः । शिवस्य हृदि बोधेन परस्परमथाऽब्रुवन् ॥२३॥ स्वमहिम्नि स्थितं ब्रह्म सहजं गणपाकृति । वर्णो धूम्रायितास्तत्र तेन धूम्राक्षरः स्मृतः ॥२४॥ तस्य बिंबं विमोहेन पतितं मायया युतम् । जगत्सु ब्रह्मसु प्राज्ञं तदेवायं वृषध्वजः ॥२५॥ बिंबबिंबिप्रभावेण धूम्रवर्णोऽयमुच्यते । न भेदः शास्त्रवादेषु वरदः प्रभविष्यति ॥२६॥

ततस्तानि समुत्थाय ब्रह्माणि गणपं पुनः । प्रणम्य हृदि संस्थं तं शिवं नेमुर्विशेषतः ॥२७॥ संपूज्य विधिना शंभुं प्रहृष्टानि प्रणम्य च । तुष्टुवुर्ब्रह्मरूपाण्यानंदमुख्यानि मानदाः ॥२८॥ ब्रह्माण्यूचुः । नमस्ते धूम्रवर्णाय गणेशाकृतिधारिणे । शिवाय शंकरायैव शंभवे ते नमो नमः ॥२९॥ अमेयशक्तये तुभ्यं पार्वतीपतये नमः । वृषध्वजाय देवाय महजाय नमो नमः ॥३०॥ मायाश्रयाय मायायाश्चालकाय परात्मने । महेश्वराय पूर्णाय हेरंबाय नमो नमः ॥३१॥ जटाजूटधरायैव निर्मोहाय सदाशिव । परेशाय त्रिशूलादिधारिणे ते नमो नमः ॥३२॥ स्वाधीनाय नमस्तुभ्यं पंचवक्त्रधराय च । अनाथाय सनाथाय नाथाय नाथरूपिणे ॥३३॥ परब्रह्मस्वरूपाय ब्रह्मादिपतये नमः । गिरीशाय गिरौ शायिश्चिताभस्मांगधारिणे ॥३४॥ मुंडमालाधरायैव नमस्ते सर्पभूषण । नानाभेदप्रकारेण खेलकाय नमो नमः ॥३५॥ वामभागे ह्यसत्याय सत्याय दक्षिणांगके । तयोरभेदयोगे चानंदाय ते नमो नमः ॥३६॥ समरूपा महामाया देहस्ते नात्र संशयः । तस्य आत्मस्वरूपस्त्व-मर्धनारीधृषे नमः ॥३७॥ एतादृशं महेशानं पश्यामो ब्रह्मरूपिणम् । सर्वेषां नेतिकर्तारं तेन धन्यानि वै वयम् ॥३८॥ धूम्रवर्णस्त्वमेवेह न भेदो दृश्यते कदा । कस्त्वां स्तोतुं समर्थः स्यात् प्रभोऽनस्ते नमामहे ॥३९॥ शिव उवाच । एवमुक्त्वा महेशानं ब्रह्माणि नेमुरादरात् । तान्युवाच प्रहर्षेण शंकरः करुणानिधिः ॥४०॥ आदिशंभुरुवाच । ब्रह्माणि यान् वरान् ब्रूत दास्यामि तपसा परम् । तुष्टः स्तोत्रेण भक्त्या मे संशयो न हृदीप्सितान् ॥४१॥ ब्रह्माण्यूचुः । वरदोऽसि यदा नाथ तदा ते भक्तिमुत्तमाम् । देहि स्मृतिं स्वकार्येषु विधारूपां महेश्वर ॥४२॥ स्वस्वकार्यं तु कृत्वा वै बंधदं बंधहारक । कुरुष्व बंधहीनानि सततं योगधारकः ॥४३॥ श्रीशिव उवाच । यद्यत् संप्रार्थितं मत्तो भविष्यति सुखप्रदम् । भवतां सत्यसंकल्पा दुर्लभं किं न संभवेत् ॥४४॥ अतुलं बंधहीनार्थं योगं शृणुत सौख्यदम् । तं साध्य बंधहीनानि भविष्यथ न संशयः ॥४५॥ सर्वेषां नेतिकर्तारं मां जानीत चतुर्थकम् । चतुर्णां चैव संयोगे स्वस्वरूपं विदुर्बुधाः ॥४६॥ तस्मात् स्वाधीनरूपं च पराधीनं त्रिधा मतम् । समुत्पन्नं कलांशेन तं जानीत गजाननम् ॥४७॥ स्वस्वरूपमयो दुंढिर्मायायुक्तः प्रकीर्तितः । चतुर्णां चालकत्वात्तु संयोगाभेदतः प्रभुः ॥४८॥ अयोगः पंचभिर्हीनः सदा निवृत्तिवाचकः । न तत्र ब्रह्मणां योगो जगतां तस्य तेषु च ॥४९॥ संयोगायोगयोर्योगे गणेशो योगवाचकः । पूर्णशांतिप्रदः साक्षाद्ब्रह्मभूतो गजाननः ॥५०॥ गकारः स्वस्वरूपाख्यो णकारो योग उच्यते । स्वामी तयोर्गणेशानो नरकुंजररूपधृक् ॥५१॥ तं भजध्वं विशेषेण तदा शांतिमवाप्स्यथ । सततं बंधहीनानि भविष्यथ न चान्यथा ॥५२॥ यथा

धूम्रायिनो देशो दृश्यते नैव मानवैः । दृश्यमानस्तथाऽप्येवं धूम्ररोधनभावतः ॥५३॥ तथा चित्तमयी माया पंचधा विविधे रता । तया युक्ता न पश्यंति तं देवं वेदसाधनैः ॥५४॥ वेदा वर्णमयाः प्रोक्ता धूम्रा जाताश्च मायया । गणेशानं स्वशिष्येभ्यो धूम्रवर्णमतो जगुः ॥५५॥ पूर्णशांतिप्रदं योगं धूम्रवर्णात्मकं परम् । जानीत योगयुक्त्या वै भजध्वं तं गजाननम् ॥५६॥ कृत्वा स्वस्वस्वभावस्थं कार्यं नानाविधं सदा । समर्प्य धूम्रवर्णाय बंधहीनानि सर्वदा ॥५७॥ एवमुक्त्वा महादेवस्तत्रै-वांतरधात्ततः । ब्रह्माणि तं नमस्कृत्य ससृजुर्विविधं जगत् ॥५८॥ यथोपदिष्टयोगेन गणेशं नित्यमादरात् । भजंत तानि ब्रह्माणि योगयुक्तानि वै द्विजाः ॥५९॥ अयं शिवात्मकः प्रोक्तोऽवतारः परमाद्भुतः । धूम्रवर्णकलांशश्च सर्वसिद्धिप्रदायकः ॥६०॥ चरित्रं शृणुयाद्यश्चेदिदं पठेद्यदा नरः । भुक्त्वा भोगान् स्वयं चांते गच्छेत् स्वानंदकं पुरम् ॥६१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते शिवात्मकावतारचरितं नाम दशमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शिव उवाच । एकदा संस्थितं विप्राः कैलासे गिरिजायुतम् । गणेशं भजमानं मां दृष्ट्वा नंदी समब्रवीत् ॥१॥ नंद्युवाच । शिव त्वं सर्वरूपश्च सर्वरवेन प्रकीर्तितः । सर्वेभ्यः फलदाता वै कर्मणां कर्मधारकः ॥२॥ योगिभ्यो योगनाथस्त्वं योगसिद्धिप्रदायकः । त्वत्तः परतरं नास्ति भजसे कं गजाननम् ॥३॥ वेदे शिवस्सुतः प्रोक्तो गणेशो नात्र संशयः । तं कथं भजसे नाथ स्वपुत्रं स्वामिनं यथा ॥४॥ ईशस्ते नाम विख्यातं सर्वेशत्वात् सदाशिवः । तवेशो नैव वेदेषु त्वमेकः सर्वभावनः ॥५॥ किं मोहार्थं जनानां च पार्वत्या सह शंकर । भजसे गणनाथं त्वं शैवगुप्तत्वकारणात् ॥६॥ मा कुरुष्व वृथा स्वामिन् गणेशभजनं कदा । शैवानां मोहदं देव व्यभिचारपदप्रदम् ॥७॥ मुद्गल उवाच । नंदिनो वाक्यमाकर्ण्य तमुवाच सदाशिवः । हर्षेणोत्फुल्लनेत्रश्च महापाशुपतं परम ॥८॥ श्रीशिव उवाच । न जानासि गणेशानं नंदिस्त्वं मत्परायणः । तस्याऽहं गणरूपश्च पश्य वेद विचक्षण ॥९॥ गणाः समूहरूपाश्चानंतास्तस्य महात्मनः । ईशानां वै समूहेऽहं गणो गणपतेः स्मृतः ॥१०॥ एक एव गणेशानः सर्वे तस्य गणाः स्मृताः । ब्रह्माकाराश्च विश्वाकारा ब्रह्मेशस्य मानद ॥११॥ विद्या नानात्मिका

प्रोक्ता तस्या नानाविधाः स्मृताः । समुत्पन्ना विशेषेण विद्या ज्ञानप्रकाशकाः ॥१२॥ विद्याधीशोऽहमेकश्च कथितो वेदवादिभिः । योगविद्यां मयाऽऽश्रित्य गणेशः प्रकटीकृतः ॥१३॥ ममाधिजं परं ब्रह्म तदेव पुत्र उच्यते । अतः ममाधिजो यो मे गणेशः पुत्रतां ययौ ॥१४॥ विद्यया ज्ञानसंयुक्ता अन्ये विष्णुमुखाऽमराः । न ते विद्याधिपाः प्रोक्ता मच्छिष्या नात्र संशयः ॥१५॥ तैश्च योगबलेनैव गणेशः प्रकटीकृतः । ममाधिजः सुतस्तेषां बभूव योगिनां तथा ॥१६॥ आदौ मया कृतं ब्रह्म साक्षात्कारि गुरुं विना । विद्याबलेन तस्मात्तु मुख्योऽहं विश्वपो गुरुः ॥१७॥ अतः शिवसुतः प्रोक्तो वेदेषु गणनायकः । विष्ण्वादयो न मुख्याश्च गणेशपितरः स्मृताः ॥१८॥ अतोऽहं योगरूपं तं ब्रह्मेशं ब्रह्मवंदितम् । भजामि स्वामिनं दासो नैव मोहार्थमादरात् ॥१९॥ शिवस्य वचनं श्रुत्वा विस्मितो नंदिकेश्वरः । उवाच तं महादेवं सर्वज्ञं सर्ववंदितम् ॥२०॥ नंदिकेश उवाच । कुलदेवो गणेशानोऽस्माकं न नात्र संशयः । विभो तस्य वद ज्ञानं मंत्रं विधियुतं परम् ॥२१॥ श्रीशिव उवाच । चित्तं पंचविधं प्रोक्तं सा बुद्धिः परमा मता । नानाभ्रांतिकरी सिद्धिर्भेदैश्वर्यमयी हृदि ॥२२॥ तयोर्बिंबं गणेशस्य पतितं मायया युतम् । बिंबभावं परित्यज्य गणेशो जायते नरः ॥२३॥ सरसं चित्तमुत्सृज्य योगिवंद्यो भविष्यसि । एकाक्षरविधानेन भज तं योगसाधनैः ॥२४॥ एवमुक्त्वा ददौ तस्मै मंत्रमेकाक्षरं परम् । सविधिं सोऽपि तं नत्वा तपोर्थी च ययौ वनम् ॥२५॥ निराहारेण तपसाऽऽराधितो द्विरदाननः । नंदिना ध्यानयुक्तेन समाधिना विशेषतः ॥२६॥ गते वर्षशते पूर्णे योगींद्रः स बभूव च । वरदाता गणेशानस्तदाश्रमपदं ययौ ॥२७॥ आगतं गणनाथं स दृष्ट्वा हर्षसमन्वितः । उत्थाय तं प्रणम्याऽऽदौ पूजयामास भक्तितः ॥२८॥ पुनः प्रणम्य विघ्नेशं स्तोतुं समुपचक्रमे । पार्वतीं वामभागे वै दधतं वीक्ष्य विस्मितः ॥२९॥ गणेशकृपया सद्यो ज्ञानं प्राप्तं महाद्भुतम् । तेन सर्वं गणेशस्य चेष्टितं ज्ञातमादरात् ॥३०॥ ततः स नंदिकेशानो विचारमकरोत् हृदि । बाह्यरूपधरश्चायं महादेवो न संशयः ॥३१॥ गिरिजायाः पतिः प्रोक्तः पंचवक्त्रादिचिह्नितः । त्रिनेत्रो नरदेहाख्यो भिन्नभावप्रदर्शकः ॥३२॥ आनंदात्मकरूपा सा पार्वती विष्णुरूपिणी । शिवदेवमयी प्रोक्ता तस्यामात्मा शिवः स्मृतः ॥३३॥ गजाकारः स्वयं शंभुरैक्यभोगपरायणः । अर्धांगप्रकृतिस्थत्वाद्बभौ नारीनरः शिवः ॥३४॥ नरकुंजरयोर्योगे गणेशाकारतां गतः । शिवो ब्रह्ममयः साक्षाद्गिरिजया समन्वितः ॥३५॥ योगमायामयी रम्या गणेशांकव्यवस्थिता । पार्वती पार्वतीनाथो गणेशः प्रबभौ स्वयम् ॥३६॥ स एव वरदानार्थं समाययौ न संशयः । शिवचित्तस्थित-

श्रायमियं शिवस्य मानसी ॥३७॥ ततः प्रणम्य हर्षेण प्रणनाम गजाननम्। पुनः पुनः सरोमांचस्तं तुष्टाव कृतांजलिः ॥३८॥ नंदिकेश उवाच । नमस्ते गणेशाय शांतिप्रदाय सदा शांतिरूपाय शांतेर्धराय। नराणां हृदिस्थाय नागाकृतीनां हृदिस्थाय योगाय योगेश्वराय ॥ ३९॥ हेरंबाय नमस्तुभ्यं सिद्धिबुद्धिविहारिणे । स्वानंदपाय चौरेश वाहनाय नमो नमः ॥४०॥ पार्वतीपतये तुभ्यं शिवचित्तगताय वै। लक्ष्मीपते नमस्तुभ्यं विष्णुचित्तस्थमूर्तये ॥४१॥ संज्ञापते नमस्तुभ्यं भानोर्हृदि स्थिताय च। आदिशक्तिपते तुभ्यं शक्तिचित्तगमूर्तये ॥४२॥ सावित्रीपतये तुभ्यं ब्रह्मणो हृदि खेलक। गायत्रीपतये तुभ्यमोंकारचित्तवासिने ॥४३॥ शचीपते नमस्तुभ्यमिंद्रचित्तगमूर्तये। स्वाहापते परेशायाग्निहृदिस्थाय ते नमः ॥४४॥ नररूपाय वै तुभ्यं भिन्नसौख्यप्रचारिणे । सर्वत्र भिन्नभावेषु नराय ते नमो नमः ॥४५॥ निर्गुणाय नमस्तुभ्यं कुंजराकारमूर्तये। सर्वत्राभेदसौख्येषु निर्गुणेषु स्थिताय च ॥४६॥ नरकुंजररूपाय योगाकाराय ते नमः । योगानां पतये तुभ्यं पूर्णयोगस्वरूपिणे ॥४७॥ धन्योऽहं कृतकृत्योऽहं येन दृष्टो गजाननः। किं स्तौमि ब्रह्म ब्रह्मेश नमस्ते वरदो भव ॥४८॥ एवं स्तुत्वा गणेशानं ननर्त प्रेमसंयुतः। नंदीशस्तं जगादासौ गणेशो भक्तवत्सलः ॥४९॥ श्रीगणेश उवाच। वरान् वृणु महाभाग नंदिस्त मनसीप्सितान्। दास्यामि तपसा तुष्टः स्तुतः स्तोत्रेण मानद ॥५०॥ त्वया कृतमिदं स्तोत्रं योगदं तु भविष्यति। भुक्तिदं कामिकायैव मुक्तिदं मोक्षमिच्छते ॥५१॥ सर्वसिद्धिकरं भावि पठतां शृण्वतां सदा । यं यमिच्छंति तं तं ते लभंतेऽनेन निश्चितम् ॥५२॥ नंदिकेश उवाच। यदि त्वं वरदो मेऽसि भक्तिं देहि त्वदीयिकाम् । गाणपत्यं कुरु स्वामिन् मां विघ्नेशपरायणम् ॥५३॥ क्षेत्रं भवतु ते नाथ यत्र तप्तं तपो मया। तथेति तं गणाधीशो जगादांतरधीयत ॥५४॥ ततः संस्थापयामास गणेशं ब्राह्मणैः सह। नंदिकेशो महाभक्त्या पूजनं प्रचकार ह ॥५५॥ पार्वतीगणपं नाम चक्रे तस्य महर्षयः। सर्वसिद्धिकरं स्थानं बभूव तन्महर्षयः ॥५६॥ ततो नंदीश्वरो नत्वा समागत्य जगाद ह। वृत्तांतं सोऽपि तं श्रुत्वा तं शंसन् हर्षितोऽभवत् ॥५७॥ नंदीविघ्नेश्वरं नित्यमभजद्भक्तिसंयुतः। महायोगींद्रमुख्योऽसौ बभूव शिवसन्निभः ॥५८॥ इदमांबिकविघ्नेशचरितं कथितं मया। धूम्रवर्णात्मकश्चाऽयं गणेशः सर्वसिद्धिदः ॥५९॥ यः पठेच्छृणुयाद्वाऽपि चरितं गणपस्य च। इदं लभेन्नरः सर्वं वाञ्छितं भुक्तिमुक्तिदम् ॥६०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते पार्वतीगणेशचरितं नामैकादशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ श्रीशिव उवाच । त्रिपुरो नाम दैत्योऽभून्महाबलपराक्रमः । ब्रह्मणो वरदानेन जिग्ये सर्वं चराचरम् ॥१॥ कर्मलोपं चकाराऽसौ महाबलपराक्रमः । वर्णसंकरजं कर्म कारयामास मानवैः ॥२॥ तदोपोषणसंयुक्ता देवा मां शरणं ययुः । अहं क्रोधसमायुक्तो योद्धुं तेन गतोऽभवम् ॥३॥ मम तस्य महद्युद्धं बभूव दारुणं परम् । देवानां दानवानां च तुमुलं रोमहर्षणम् ॥४॥ संहारास्त्राणि सर्वाणि मया त्यक्तानि वेगतः । तानि निष्फलरूपाणि बभूवुश्च महर्षयः ॥५॥ अतो विस्मितचित्तोऽहमभवं स्वेदसंयुतः । सहसा दैत्यराजेनाग्निशस्त्रेण जितोऽभवम् ॥६॥ ततः कैलासमुत्सृज्य गतोऽहं गहनं वनम् । निःश्वस्य चिंतया युक्तोऽभवं चैव हतोद्यमः ॥७॥ विचारं मानसे विप्रा अकरवं हितावहम् । मम हस्तेन दैत्योऽयं मरिष्यति न संशयः ॥८॥ तत कथं मोघरूपं मे कृतं हैवेन केन च । ईशोऽहमनीशो जातः पश्चात् सूर्योदयो यथा ॥९॥ तत्रैव सहसा देवमुनिर्नारद आययौ । मां प्रणम्य स्थितो भक्त्या पूजितः स मया तथा ॥१०॥ ततो मयाऽतिखेदेन पृष्टोऽसौ नारदो मुनिः । त्रिपुरस्य वधार्थाय मां जगाद स बुद्धिमान् ॥११॥ नारद उवाच । शिव त्वं मोहसंयुक्तोऽहंकारेण धृतोऽसि वै । विघ्नराजमनर्च्याऽसौ सत्ताहीनोऽसि भो प्रभो ॥१२॥ विप्राः सत्तात्मकाः प्रोक्तास्तेषां स्वामी गजाननः । ईशत्वं तेऽधुना नष्टं ढुंढेरनर्चनात् प्रभो ॥१३॥ सत्तां स्वकीयदेहस्थां धृत्वा मोहपरायणाः । गणेशं ये न जानंति सत्ताहीना भवंति ते ॥१४॥ यस्य कटाक्षपातेन कृपया तृणमेककम् । सृजते पाति हंत्येव ब्रह्मांडं लोकसंकुलम् ॥१५॥ तस्य कृपाविहीनस्त्वमशक्तोऽसि सदाशिव । संहर्तुं तृणकं चैव कुतो दैत्यं प्रजेष्यसि ॥१६॥ अतस्तं शरणं गच्छ तेन सत्तासमन्वितः । हनिष्यसि महादैत्यं त्रिपुरं त्रिविधं रतम् ॥१७॥ मुद्गल उवाच । एवमुक्त्वा महेशानं तं प्रणम्य महामुनिः । नारदो गणपं गायन् ययौ स्वेच्छापरायणः ॥१८॥ ततः शिवो हृदि स्मृत्वा गणेशं ब्रह्मनायकम् । दंडकारण्यदेशे स वनगस्तप आचरत् ॥१९॥ शतवर्षे गते ते स आययौ गणनायकः । मूषकोपरि संस्थो यो दशायुधधरः प्रभुः ॥२०॥ तं दृष्ट्वा सहसोत्थाय शंकरः प्रणनाम ह । पूज्य तुष्टाव हर्षेण गणेशं भक्तिसंयुतः ॥२१॥ श्रीशिव उवाच । गणेशाय परेशाय धूम्रवर्णाय ढुंढये । शिवात्मजाय सर्वेषां मात्रे पित्रे नमो नमः ॥२२॥ गणेशाय गुणानां ते स्रष्ट्रे पात्रे महात्मने । संहर्त्रे देवदेवाय हेरंबाय नमो नमः ॥२३॥ अनंतविभवायैवानंतमायाप्रचालक । अनंतोदरगायैव विघ्नेशाय नमो नमः ॥२४॥ ज्येष्ठराजाय ज्येष्ठाय ज्येष्ठानां ज्येष्ठरूपिणे । सर्वपूज्याय ते सर्वादिपूज्याय नमो नमः ॥२५॥ स्वानंदपतये तुभ्यं मूषकध्वजधारिणे ।

सिद्धिबुद्धिपते नाथेक्षुसागरपते नमः ॥२६॥ मनोवाणीविहीनाय मनोवाणीमयाय ते । योगेशाय महाविष्णुसुताय ते नमो नमः ॥२७॥ शेषपुत्राय त्रैलोक्यक्षेत्रस्थाय नमो नमः । दंडकारण्यदेवाय ब्रह्मेशाय नमो नमः ॥२८॥ यत्र वेदादयो नाथ योगिनः शांतिमाययुः । तं पश्यामि गणाधीशं धन्योऽहं सर्वभावतः ॥२९॥ नेत्राणि धन्यरूपाणि प्रभो त्वत् दर्शनेन मे । मस्तकानि नमस्कारात् स्तवनात् मे मुखानि ते ॥३०॥ हस्ताः पूजनतस्ते मे धन्याः सर्वं मदीयकम् । धन्यं ते पादपद्मस्य दर्शनेन गजानन ॥३१॥ भक्तिं देहि त्वदीयां मे तयाऽहं गणनायक । कृतकृत्यो भविष्यामि शांतियोगपरायणः ॥३२॥ त्रिपुरस्य वधार्थाय सामर्थ्यं देहि शाश्वतम् । महेश त्वं गणाधीश सार्थकं कुरु नित्यदा ॥३३॥ शिवस्य वचनं श्रुत्वा गुणेशास्त-मथाब्रवीत् । भक्तं देववरिष्ठं तु तपसा तोषितो भृशम् ॥३४॥ श्रीगणेश उवाच । त्वयोक्तं सफलं सर्वं भविष्यति सदाशिव । अन्यत् त्रिपुरनाशार्थं वदामि श्रृणु सांप्रतम् ॥३५॥ त्रिविधा परमा माया देहभोगपरायणा । आसुरी त्रिपुराख्या सा नाना-विषयलंपटा ॥३६॥ तस्या जयार्थमत्यंतं तुरीयं गणपाकृति । त्वयाऽऽश्रितं मदीयं च रूपं पुरुषवाचकम् ॥३७॥ पौरुषं बीज-रूपं मे गृहाण त्वं सदाशिव । मायां त्रिगुणरूपां तु मयि क्षिप विचक्षण ॥३८॥ एवमुक्त्वा गुणेशस्तं ददौ मंत्रं तु पौरुषम् । मायां गृह्य तदीयां स निर्मोहमकरोच्छिवम् ॥३९॥ तत्र सोऽन्तर्हितः सद्यो गुणेशो ब्रह्मनायकः । शिवो मंत्रप्रभावेण जघान त्रिपुरासुरम् ॥४०॥ सदा पौरुषभावेन संयुक्तः स बभूव ह । मायां जित्वा विशेषेण स्वाधीनां तां चकार ह ॥४१॥ श्रृणुयाद्यो गणेशस्य स्तोत्रं शिवकृतं पठेत् । निर्मोहः सर्वभावेषु भवेद्देवपरायणः ॥४२॥ पुत्रपौत्रसमायुक्तो धनधान्यसमन्वितः । भुक्त्वा भोगाननेकांश्चांते स्वानंदमवाप्नुयात् ॥४३॥ इदं गुणेशमाहात्म्यं कथितं लेशतो मया । पठनाच्छ्रवणात् नृभ्यः सर्वसिद्धिप्रदायकम् ॥४४॥ धूम्रवर्णात्मकश्चायमवतारः प्रकीर्तितः । पौरुषार्थप्रदः पूर्णो गणेशो भुक्तिमुक्तिदः ॥४५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते गुणेशावतारवर्णनं नाम द्वादशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ श्रीशिव उवाच । बलेः पुत्रोऽभवद्बाणो दैत्यः परमधार्मिकः । शिवभक्तः सदा साधुगुणयुक्तः प्रतापवान् ॥१॥ बाल्यात् प्रारभ्य शंभुं सोऽभजद्भावपरायणः । नान्यं देवं प्रजानाति स्वधर्मपालको बभौ ॥२॥ शुक्रः पंचाक्षरं मंत्रं ददौ तस्मै महात्मने । सविधिं शंकरस्यैवादिदेश तपसे मतिम् ॥३॥ सोऽतपत्तप उग्रं मां ध्यात्वा मद्भक्तिभावितः । प्रगतेषु च वर्षेषु सहस्रे तोषितोऽभवम् ॥४॥ मुद्गल उवाच । जगाम वरदो बाणं शंकरः करुणानिधिः । स तं तुष्टाव गैर्द्विश्च स्तोत्रैः पूज्य यथाविधि ॥५॥ प्रसन्नो भगवान् प्राह वरान् वृणु महामते । दास्यामि तपसा तुष्टो भक्त्या चैवासुराधिप ॥६॥ बाणासुर उवाच । वरदोऽसि महादेव भक्तिं देहि त्वयि स्थिराम् । शैवं मां कुरु देवेश नान्यदेवपरायणम् ॥७॥ बाहूनां तु सहस्रं मे देहि सामर्थ्यमद्भुतम् । न मत्समः प्रसंग्रामे संभवेत सचराचरे ॥८॥ तथेति तं महादेवो जगाद भक्तमुत्तमम् । ययौ स्वनगरं शंभुः पार्वत्या गणसंयुतः ॥९॥ ततो बाणासुरो दैत्यो जित्वा वै विष्णुमुख्यकान् । सुरान् राज्यं चकाराऽसौ धर्मनिष्ठः स्वभावतः ॥१०॥ स्वर्गेषु देवपान् स्थाप्य पातालेषु महासुरान् । नागान् नरान् पृथिव्यां स राज्यं चकार धर्मतः ॥११॥ वर्णाश्रमयुतान् सर्वान् पालयामास दैत्यपः । नित्यं कैलासगो भूत्वा पूजयच्छंकरं प्रभुम् ॥१२॥ तस्य धर्मप्रभावेण भक्त्या तुष्टः सदाशिवः । वासार्थमाययौ शंभुर्नगरे तस्य पार्षदैः ॥१३॥ ततः स शांभवे दैत्यो विचारमकरोत् हृदि । पंचायतनरूपेण शंकरः प्रबभूव ह ॥१४॥ एकनिष्ठतया शंभुं भजिष्यामि विशेषतः । नान्यं जानामि देवेशं शंकरादपरं कदा ॥१५॥ पूजिते शंकरे सर्वं पूजितं सचराचरम् । मया वेदविवादेषु तथा संकथितं बुधैः ॥१६॥ एकनिष्ठा समा भक्तिर्न भूता न भविष्यति । अतोऽहमेकनिष्ठातो भजिष्यामि सदाशिवम् ॥१७॥ तत्राऽऽदौ गणराजश्च पूजनीयः प्रयत्नतः । कथितं सर्वशास्त्रेषु किं करोमि गजाननम् ॥१८॥ ब्राह्मणैर्गाणपत्यैर्यैस्तैः कृतं त्विदमादरात् । द्वितीये पूजिते देवे एकनिष्ठा कथं भवेत् ॥१९॥ एवं विचार्य दैत्येशो त्यक्त्वा गणपतिं परम् । एकनिष्ठतया शंभुं पूजयन्नित्यमादरात् ॥२०॥ एवं वर्षे गते पूर्णे शंकरं पूज्य भक्तितः । शोणिते नगरे संस्थं स ननर्त पुरोऽसुरः ॥२१॥ ततः प्रसन्नतां यातः शिवः कल्याणदायकः । जगाद तं वरं ब्रूहि महापाशुपताऽसुर ॥२२॥ शिवस्य वचनं श्रुत्वा हर्षितो बलिनंदनः । जगाद तं महादेवं प्रणिपत्यातिभक्तितः ॥२३॥ बाणासुर उवाच । योद्धारं देहि देवेश सदृशं बलसंयुतम् । सहस्रभुजवीर्यस्य सहनेऽतिपराक्रमम् ॥२४॥ तच्छ्रुत्वा कुपितः शंभुर्ददौ शापं महात्मने । राज्यं भ्रष्टं भुजानां ते छेदश्चैव भविष्यति ॥२५॥ वासुदेवेन संग्रामं करिष्यस्य-

सुराधम । मत्तो वृणोषि किं दुष्ट भविष्यसि पराजितः ॥२६॥ तच्छ्रुत्वा शोकसंयुक्तो बाणस्तं प्रणनाम ह । पुनः स्वगृहमागत्य काव्यं पूज्य जगाद सः ॥२७॥ शिवस्तं त्यज्य कैलासं ययौ क्रोधसमन्वितः । उन्मत्तं धारयामास मानसे चासुरेश्वरम् ॥२८॥ काव्यस्तं सांत्वयामास श्रुत्वा वृत्तांतमंजसा । बोधयामास दैत्येशं योगीशो द्विजसत्तमाः ॥२९॥ शुक उवाच । गणेशं त्यज्य दैत्येंद्र शंकरं भजसे परम् । वेदे विरुद्धं तत् कर्म करोषि त्वं न संशयः ॥३०॥ ज्येष्ठराज इति प्रोक्तं वेदैः पश्य महामते । सर्वपूज्यादिपूज्यत्वं प्रकाशकारकं शुभम् ॥३१॥ यथा संध्यादिकं कर्मावश्यं तद्वद् गजाननः । एकनिष्ठापरैः पूज्यः सर्वादौ ज्येष्ठभावतः ॥३२॥ त्यक्त्वा गणेश्वरं शंभुं भजसे नित्यमादरात् । कुपितो गणनाथस्तु बुद्धिभेदं चकार ह ॥३३॥ सिद्धिबुद्धिपतिः साक्षाद्गणेशो ब्रह्मनायकः । तं त्यक्त्वा शांभवीं सिद्धिं लभसे कथमप्यहो ॥३४॥ शिवस्य हृदये सोऽपि तव तिष्ठति सांप्रतम् । यदिच्छया शिवाद्याश्च वर्तंते त्वमपि ध्रुवम् ॥३५॥ अतस्त्वं शिवहीनश्च कृतस्तेन महात्मना । संशप्तः शंकरेणैव शैवः परमभाविकः ॥३६॥ गच्छ तं शरणं देवं गणेशं ब्रह्मनायकम् । तदा विघ्नविहीनस्त्वं भविष्यसि न संशयः ॥३७॥ गणाः समूहरूपाश्च समूहा ब्रह्मवाचकाः । बाह्यांतरैकभावेन समूहा जायते ध्रुवः ॥३८॥ तथाऽयं गणराजस्य गण एकः शिवः स्मृतः । समूहाख्यश्च तपसां विचारय महामते ॥३९॥ अथवा शिवसंज्ञोऽयं सहजानां परा गतिः । गणरूपश्चेश्वराणां समूहे सहजः शिवः ॥४०॥ एवं विष्ण्वादयः सर्वे गणास्तस्य प्रकीर्तिताः । पश्य वेदोपनिषदि कथितं तत्त्वथर्वणि ॥४१॥ एवमुक्त्वा महादैत्यं काव्यः स्वगृहमाययौ । बाणः खेदसमायुक्तो विचारमकरोत् हृदि ॥४२॥ ततस्तेन गणेशस्य महो ज्ञानं महाद्भुतम् । चतुर्थीं प्राप्य दैत्येशस्तं पुपूज गजाननम् ॥४३॥ ध्याननिष्ठो गणेशस्य जजाप मंत्रमुत्तमम् । गणानां त्वेति बाणः स क्षमापनं चकार ह ॥४४॥ अथर्वोपनिषद्भिस्तं तुष्टाव स कृतांजलिः । ततः प्रसन्नतां यातो गणेशो भक्तवत्सलः ॥४५॥ उपवासकरं बाणमाययौ द्विरदाननः । वरदो ह्येकवर्षेण मूषकोपरि संस्थितः ॥४६॥ आगतं गणराजं स दृष्ट्वा हर्षसमन्वितः । उत्थाय तं प्रणम्यादौ पुपूज भक्तिलोलुपः ॥४७॥ पुनः प्रणम्य विघ्नेशं तुष्टाव स कृतांजलिः । बाणः परमधर्मात्मा भक्तिनम्रात्मकंधरम् ॥४८॥ बाणासुर उवाच । विघ्नेशाय परेशाय भक्तविघ्नविदारिणे । अभक्तविघ्नकर्त्रे ते विघ्नविघ्नाय वै नमः ॥४९॥ विनायकाय देवेश दैत्येशनायकाय ते । निरंकुशाय सातत्यं गणेशाय नमो नमः ॥५०॥ ज्येष्ठराजाय ज्येष्ठाय ज्येष्ठपूज्याय ते नमः । सर्वपूज्यादिपूज्याय परेशेश नमो नमः ॥५१॥ लंबोदराय

सर्वाय मात्रे पित्रे तदात्मने। आदिमध्यांतहीनाय हेरंबाय नमो नमः ॥५२॥ शूर्पकर्णाय शूराय मोहांधकविदारिणे। ब्रह्मेशाय सुशांताय शांतिदात्रे नमो नमः ॥५३॥ एकदंताय देवाय स्वानंदे वासकारिणे। अमायायाप्रतर्क्याय मायिने ते नमो नमः ॥५४॥ मायामायिकरूपाय मायामायिकवर्जित। अनाथानां प्रणाथाय नाथनाथाय ते नमः ॥५५॥ सिद्धिबुद्धिपते तुभ्यं सदा योगपरायण। योगींद्राणां सुयोगाय कुलदेवाय ते नमः ॥५६॥ त्वदधीनमिदं सर्वं बुद्धिचालकरूपिणे। सिद्ध्या संमोहितं नाथ सिद्धिदात्रे नमो नमः ॥५७॥ शिवादयः समर्थाश्च त्वदीयकृपयाऽभवन। अहंकारेण युक्ताश्चेद्भ्रष्टाः स्वस्वाधिकारतः ॥५८॥ मया तेऽज्ञानभावेन त्वं त्यक्तः शिवकारणात्। मां शप्त्वा त्यज्य सः शंभुर्गतः क्रोधपरायणः ॥५९॥ अतो मां रक्ष विघ्नेश त्वदन्यं नाथवर्जितम्। अपराधान् महाग्रान् मे क्षान्त्वा पाहि निरंतरम् ॥६०॥ एवं स्तुत्वा गणेशानं प्रणनाम करोद च। बाणः परमदुःखार्तः पादं गृह्य महात्मनः ॥६१॥ तमुत्थाप्य गणाधीशस्तं जगाद महासुरम्। स्वमाया-मोहितं दीनं स्वस्यैव शरणार्थिनम् ॥६२॥ श्रीगणेश उवाच। त्वया कृतमिदं स्तोत्रं व्यतिक्रमविदाहकम्। भविष्यति महादैत्य सर्वसिद्धिप्रदायकम् ॥६३॥ अनेन स्तुवतं दैत्य प्रसन्नोऽहं ददामि वै। भुक्तिं मुक्तिं सदा सौख्यं शृण्वते मनसीप्सितम् ॥६४॥ त्वया त्यक्तोऽहमत्यंतक्रोधयुक्तश्च नित्यदा। शिवहीनं प्रकृत्वांऽते नारकं त्वां करोमि वै ॥६५॥ किं करोम्यधुना दैत्य शुक्रशिष्यं महासुरम्। शरणागतमेवं मे मत्पादप्रवणं परम् ॥६६॥ शिवशापो न मिथ्या ते भविष्यति कदाचन। तथापि शृणु मे वाक्यं तुभ्यं सौख्यप्रदायकम् ॥६७॥ वासुदेवं समायुध्य भुजच्छेदो भविष्यति। भ्रष्टराज्यः पुनः सद्यो राज्ययुक्तो भविष्यसि ॥६८॥ एवमुक्त्वा महादैत्यं गणेशो विरराम ह। तमुवाच महादैत्यः प्रणम्य गणनायकम् ॥६९॥ बाण उवाच। तव विस्मरणं नाथ न भवेत् मे तथा कुरु। त्वया युक्तं शिवं नित्यं भजिष्यामि सुभक्तितः ॥७०॥ गाणेशं ज्ञानमाद्यं मे देहि विघ्नेश शाश्वतम्। नान्यदिच्छामि सर्वेश त्वत्पादप्रवणोऽधुना ॥७१॥ श्रीगणेश उवाच। गाणेशज्ञानसंयुक्तो भविष्यसि महासुर। अनेन जडदेहेन गणः शैवो भविष्यसि ॥७२॥ महाकालेति नाम्ना त्वं विख्यातः सर्वमंडले। नष्टे शिवपदे दैत्य स्वानंदे आगमिष्यसि ॥७३॥ एवमुक्त्वा गणाधीशोऽन्तर्दधे मुनिसत्तमाः। बाणो हर्षसमायुक्तो गणेशमभजत्ततः ॥७४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खण्डे धूम्रवर्णचरिते बाणासुरवरप्रदानं नाम त्रयोदशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ श्रीशिव उवाच । कृपया वरदानेन गणेशभजनेन च । बुद्धिभेदः शिवस्यापि बभूव सर्वसंयुतः ॥१॥ ततो गिरिसुतायुक्तः शंकरः स्कंदमुख्यकैः । गणैः समाययौ सद्यो बाणस्य नगरं पुनः ॥२॥ तमागतं समाज्ञाय बाणो हर्षसमन्वितः । ध्यात्वा गजाननं देवं ययौ शंकरसंनिधिम् ॥३॥ प्रणनाम स साष्टांगं शिवं गणसमन्वितम् । रुरोद पूजयित्वा तं क्षमस्वेति जगाद सः ॥४॥ ततस्तं शंकरो भक्तं समुत्थाप्य प्रसस्वजे । जगाद मधुरं वाक्यं हर्षयन् दानवाधिपम् ॥५॥ श्रीशिव उवाच । मा कुरुष्व वृथा चिंतां संतुष्टोऽहं समागतः । वरान् वृणु महाभाग दास्यामि बलिनंदन ॥६॥ बाणासुर उवाच । तव भक्तिं स्थिरां देहि वियोगस्ते न मे क्वचित् । भवेत्तथा महादेव कुरुष्व शिव सर्वदा ॥७॥ तथेत्युवाच शंभुस्तं तस्थौ तन्नगरे सदा । ततस्तस्मात् सुता जज्ञे सर्वलक्षणसंयुता ॥८॥ उषानाम्नीं महाभागामुपयेमेऽनिरुद्धकः । तां स्वप्ने सा शुशोचैव तदर्थं कामपीडिता ॥९॥ चित्रलेखा समानीय ददौ तस्यै पतिं स्वकम् । मायया यादवान् संमोह्य मुमोद ततः परम् ॥१०॥ एकस्तंभस्थितां तां स उपयेमेऽनिरुद्धकः । तया संमोहितोऽन्यत्र रेमे हर्षसमन्वितः ॥११॥ यादवाः संहृतं रात्रौ दृष्ट्वा कामसुतं दृढम् । शुशुचुः परमोद्विग्ना न लेभुस्तद्गतिं च ते ॥१२॥ प्रद्युम्नेन गणाधीशः प्रार्थितस्तपसा परः । तस्य प्रसादयोगेन नारदस्तत्र चाययौ ॥१३॥ तेन संकथितं सर्वं चेष्टितं कामपुत्रजम् । श्रुत्वा संहर्षिताः सर्वे यादवाः प्रबभूविरे ॥१४॥ ततः ईश्वरसंयुक्तं बाणं जेतुं मनो दधे । कृष्णो रामेण संयुक्तो यादवैः परमद्युतिः ॥१५॥ शंकरस्य भयेनैव भीतं तं प्रत्युवाच ह । उद्धवः कुरु कृष्ण त्वं गणेशाराधनं परम् ॥१६॥ तेन विघ्नविहीनस्त्वं भविष्यसि न संशयः । शिवस्त्वां संयुगे जेतुमशक्तः प्रभविष्यति ॥१७॥ तत एकाक्षरस्यैव पुरश्चरणमाकरोत् । कृष्णो गणपतिं ध्यात्वा यथाशास्त्रं विधानतः ॥१८॥ यादवैः प्रययौ तत्र यत्र बाणः स्थितोऽभवत् । शंखं दध्मौ ततः सोऽपि स शिवो योद्धुमाययौ ॥१९॥ ततः शिवो ददौ तस्मै कवचं गणपस्य च । सामवेदभवं शुद्धं बाणाय खेदसंयुतः ॥२०॥ शिवशापानुस्मरणात्त्र हस्तच्छेदस्य कारणात् । कृष्णः संयुयुधे तेन दैत्येंद्रेण महाबलः ॥२१॥ खिन्नं बाणं समालोक्य शंकरो योद्धुमाययौ । कृष्णेन तं समालोक्य कृष्णः सस्मार विघ्नपम् ॥२२॥ महायुद्धं तयोरासीत् त्रिलोकीनाशसंनिभम् । शिवस्य वासुदेवस्य मया वक्तुं न शक्यते ॥२३॥ ततो जृंभास्त्रवेगेन मोहयित्वा सदाशिवम् । कृष्णश्चक्रं मुमोचैव बाणस्य भुजसंछिदे ॥२४॥ चक्रेण क्षुरधारेण भुजाश्छिन्नाः समंततः । अवशिष्टौ भुजौ द्वौ च चक्रं संकुठितं ततः ॥२५॥ ततः खेदसमायुक्तः कृष्णः सस्मार विघ्नपम् । स्वयमाकाश-

वाणीं स शुश्राव गणपतेर्निनाम् ॥२६॥ गणेशकवचेनैव रक्षितं शंकरेण च । बाणं हंतुं रणे कृष्ण न क्षमस्त्वं भविष्यसि ॥२७॥ शिवदत्ता भुजास्तस्य शिवशापेन छेदिताः । जन्मस्थौ द्वौ भुजौ प्राज्ञ कवचेन प्ररक्षितौ ॥२८॥ ततो हर्षेण संयुक्तः कृष्णश्चक्रं निवर्त्य च । संस्थितः संयुगे सर्वो जृंभास्त्रैर्वर्जितोऽभवम् ॥२९॥ ततो मयाऽतिबोधेन ज्ञातं विघ्नेशचेष्टितम् । कृष्णो ननाम मां तत्र स्वस्वजोऽहं जनार्दनम् ॥३०॥ यथाविधि विवाहं स चकार दैत्यनायकः । अनिरुद्धाय पुत्रीं स्वां ददौ प्रेमपरिप्लुतः ॥३१॥ ततः स्वभवनं कृष्णो ययौ हर्षसमन्वितः । बाणो राज्यं परित्यज्य महाकालो बभूव ह ॥३२॥ कैलासं प्रातरुत्थाय पुपूज द्विरदाननम् । शमीमंदारदूर्वादिरक्तपुष्पैर्विशेषतः ॥३३॥ संपूज्यादौ गणपतिं पश्चाच्छंभुं महागणः । सदा ध्यानपरो भूत्वा तोषयामास तौ परौ ॥३४॥ शौनक उवाच । सूत विघ्नेश्वरस्यैव प्रियोऽत्यंतं बभूव ह । रक्तवर्णः कथं तेन तुष्टो भवति सर्वपः ॥३५॥ रक्तवर्णः स्वयं साक्षाद्गणेशो ब्रह्मणां पतिः । रक्तवस्त्रधरो रक्तचंदनेन विराजितः ॥३६॥ रक्तपुष्पधरः पूर्णः सिंधुरांगविलेपनः । रक्तसागरस्थली स वद कारणमुत्तमम् ॥३७॥ सर्ववर्णमयश्चायं कथमेकं समाश्रितः । तन्नः संशयदं साधो नुद सर्वज्ञसत्तम ॥३८॥ सूत उवाच । वर्णाः पंच समुद्भूताः सृष्ट्यादौ श्वेतशामलौ । रक्तः पीतस्तथा नीलः सर्ववर्णमयाः पुरा ॥३९॥ परस्परविभेदेन तथा संमीलनेन च । अनंता वर्णकाः प्रोक्ता जानीहि द्विजसत्तम ॥४०॥ तैस्तपो गणनाथस्य कृतं घोरं तु पंचभिः । वर्षकेषु शते तान् स आययौ गणनायकः ॥४१॥ तं दृष्ट्वा प्रणताः सर्वे वर्णाः संतुष्टुवुः परम् । वरान वव्रुः तथा विप्र स्वस्वशोभासमन्वितान् ॥४२॥ अन्ये गणेश्वरं ते तु जगुस्तं ब्रह्मनायकम् । अस्मदीयस्वरूपस्थो भव स्वामिन्नमोऽस्तु ते ॥४३॥ वयं तेन गणाध्यक्ष कृतकृत्या भवामहे । मायाबंधनहीनास्त्वां भजामहे निरंतरम् ॥४४॥ तथेति तानुवाचैव गणेशोऽन्तर्दधे ततः । वर्णा हर्षयुताः सर्वे स्वस्वकार्यरताः पुरा ॥४५॥ वर्णैः संशोभितं सर्वं नानाभेदैः समंततः । चराचरं विशेषेण वर्णयुक्तं बभूव ह ॥४६॥ काश्यपो गणनाथस्तु नीलवर्णाकृतिं धरः । मयूरेशस्तथा श्वेतवर्णयुक्तो बभूव ह ॥४७॥ वरेण्यस्य सुतो रक्तवर्णयुक्तो गजाननः । धूम्रवर्णस्तथा श्यामवर्णरूपधरो बभौ ॥४८॥ हरिद्रागणपः पीतवर्णाकृतिपरोऽभवत् । नानावताररूपैः स नानावर्णधरोऽभवत् ॥४९॥ एवं वरप्रदानेन वर्णाः सर्वे महामुने । गणेशाराधने सक्ताः स्वस्वकार्यपरायणाः ॥५०॥ ततो रक्तेन वर्णेन पुनस्तप्तं तपो महत् । निराहारेण विप्रेश ध्यात्वा हृदि गजाननम् ॥५१॥ सहस्रवर्षे च गते गणपस्तं समाययौ । वरान् दातुं महाभागं स ननाम गणाधिपम् ॥५२॥

पूजयित्वा प्रतुष्टाव रक्तवर्णः प्रहर्षितः । स्तोत्रैर्नानाविधैस्तं तु गाणेशैर्गणपप्रियैः ॥५३॥ ततः प्रसन्नभावेन विघ्नेशस्तमुवाच ह । वरान् वृणु महाभाग रक्तवर्ण हृदीप्सितान् ॥५४॥ रक्तवर्ण उवाच । रक्तवर्णस्वरूपस्थो भव त्वं गणनायक । सदा रक्तप्रियो नाथ नानावर्णेषु मानद ॥५५॥ तेनाऽहं सर्ववर्णेषु श्रेष्ठो भावी न संशयः । सततं कृतकृत्यश्च तव संनिधिसंस्थितः ॥५६॥ तथेति तमथोक्त्वाऽसौ गणेशोऽन्तर्दधे स्वयम् । तदादि वेदशास्त्रेषु रक्तवस्तुप्रियोऽभवत् ॥५७॥ इदं वाणचरित्रं यः शृणुयाद्वर्णसंभवम् । पठेत्तस्य गणाधीशो वरदश्च भविष्यति ॥५८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते वाणासुरवर्णसंभवचरितं नाम चतुर्दशोऽध्यायः ॥

★

॥ श्रीगणेशाय नमः ॥ सनकाद्या ऊचुः । श्रुत्वा त्वद्वदनांभोजात् कथाममृतरूपिणीम् । जन्ममृत्युहरां पूर्णां सर्वसौख्यकरीं शिव ॥१॥ गाणेशानीं न तृप्ता वै वयं वद महामते । पुनर्गणपतेः सौम्यां कथामवतारजां पराम् ॥२॥ श्रीशिव उवाच । कलिप्रवृत्तिकामार्थं ब्रह्मा विष्णुं ययौ पुरा । तुष्टाव तं रमानाथं जगाद स्वप्रयोजनम् ॥३॥ ब्रह्मोवाच । कलिं पापस्वरूपं च सृजामि स्म जनार्दन । न तं जनाः प्रहर्षेण मानयिष्यंति सर्वदा ॥४॥ द्वापरांते कलिः प्रोक्तस्तस्य कालोऽधुनाऽऽगतः । तं प्रवर्तय देवेश त्वं स्मृतः सर्वपालकः ॥५॥ ब्रह्मणो वचनं श्रुत्वा केशवस्तमुवाच ह । पापरूपं महाघोरं नाभिनंदाम्यहं कलिम् ॥६॥ धर्मपालनभावार्थमवतारं करोम्यहम् । धर्मनाशकरं पापं कलिं नैवाभिनंदये ॥७॥ ततस्तं केशवं देवं जगाद चतुराननः । बुद्धावतारभृत्त्वं वै कथितोऽसि जनार्दन ॥८॥ अवतारचरित्रं ते कलिप्रवर्तकं प्रभो । पश्य पौराणिकीं गाथां स्वधर्मस्थां त्वदाश्रिताम् ॥९॥ ब्रह्मणो वचनं श्रुत्वा निःश्वस्य तमथाऽब्रवीत् । विष्णुस्तथेति दुःखेन ब्रह्मा स्वभवनं ययौ ॥१०॥ ततः स भगवांस्तत्र तताप तप उत्तमम् । षडक्षरेण मंत्रेण ध्यात्वा हृदि गजाननम् ॥११॥ दशवर्षैर्गणाध्यक्षः प्रसन्नो वरदोऽभवत् । तमाययौ महाभक्तं भक्तेशो भक्तवत्सलः ॥१२॥ तमागतं समालोक्य तुष्टावाऽऽपूज्य विघ्नपम् । हेरंबो-पनिषत्तत्त्वैर्भक्त्या नम्रात्मकंधरः ॥१३॥ ततो गजाननस्तुष्टस्तं जगाद कृपान्वितः । वरान् वृणु महाभाग यांस्ते चित्ते

स्थितान् परान् ॥१४॥ गणेशवचनं श्रुत्वा विष्णुस्तं पुनरब्रवीत्। कृतांजलिः प्रणम्यैव गणेशं सर्वसिद्धिदम् ॥१५॥ श्रीविष्णुरुवाच। भक्तिं देहि त्वदीयां मे सर्वसिद्धिप्रदायिनीम्। बुद्धोऽहं धर्मलोपार्थं भविष्यामि कलौ युगे ॥१६॥ धर्मसंस्थापनं नित्यं करोमि गणनायक। धर्मलोपार्थमेवाहं त्वया बुद्धः प्रकीर्तितः ॥१७॥ एतदेव विरुद्धं मे प्राप्तं ढुंढे दयानिधे। तदर्थं शरणं नाथ यातोऽहं ते पदस्य च ॥१८॥ अतो मां रक्ष विघ्नेश विरुद्धाचरणात्प्रभो। विनायकस्त्वमेको वै कुरु मां धर्मपालकम् ॥१९॥ श्रीगणेश उवाच। मा भयं कुरु विष्णो त्वं धर्मयुक्तो भविष्यसि। कलिप्रवर्तने दोषो न ते क्वापि महात्मनः ॥२०॥ मया चतुर्युगाः सृष्टास्त्वविनाः क्रमकारणात्। वरदानेन मे सर्वं स्वस्वकाल्युता बभुः ॥२१॥ कलिस्तेषु महापापी मया संस्थापितोऽभवत्। मदाज्ञापालको भूत्वा भव बुद्धस्त्वमादरात् ॥२२॥ अहंकारं विभो त्यक्त्वा कर्ताहमिति चित्तगम्। समर्प्य मयि कर्माणि कुरु कर्म यथातथम् ॥२३॥ चित्ते चिंतामणिं पश्य तदिच्छावशगं जगत्। ब्रह्म नानाविधं तद्वत्तत्र कर्म्म विचारय ॥२४॥ वेदशास्त्रमयी वाणी गणेशेन विनिर्मिता। तस्या आज्ञां प्रपाल्यैव वर्तितव्यं तु जंतुभिः ॥२५॥ प्रीतो गणेश्वरस्तेन दास्यति स्वपदं परम्। सर्वेषां नात्र संदेहो जीवानामीशभाविनाम् ॥२६॥ कलिस्वल्पकरः सोऽपि गणेशो धूम्रवर्णकः। चकार बुद्धरूपस्थं स्वयं विष्णुं तदर्थतः ॥२७॥ एवं भार्गव महाविष्णो मदाज्ञावशगो भव। कर्म कृत्वा स्वधर्मस्थं मदर्पणं सुखमेष्यसि ॥२८॥ एवमुक्त्वाऽन्तर्दधेऽसौ गणेशो ब्रह्मनायकः। विष्णुर्हर्षसमायुक्तो बुद्धोऽभूच्च महर्षयः ॥२९॥ कृतं तेन महच्छास्त्रं बौद्धं मोहप्रदायकम्। कलिदोषप्रवृद्ध्यर्थं सेविभ्यो नरकप्रदम् ॥३०॥ सनकाद्या ऊचुः। कीदृशं बौद्धशास्त्रं तद्वद सर्वज्ञ ते नमः। ज्ञात्वा मोहविहीनास्तज्जना भवंति नित्यदा ॥३१॥ श्रीशिव उवाच। शृणुध्वं मुनयः सर्वे बौद्धं नरकदायकम्। वर्णाश्रमस्थितेभ्यस्तद्विहीनेभ्यः सुखप्रदम् ॥३२॥ स्वयं बुद्धिपतिः साक्षाद् हृदि तिष्ठति देहिनाम्। ब्रह्मणामीश्वराणां च पंचचित्तप्रचालकः ॥३३॥ स विनायक इत्युक्तः सर्वेषां नायको मतः। नायकेन विहीनत्वात् स्वेच्छाचारी सनातनः ॥३४॥ तदिच्छया स्वयं ब्रह्म नानारूपधरं बभौ। नानाक्रीडासमायुक्तं नानामायाबलाश्रितम् ॥३५॥ तत्र पापादिकं नास्ति न पुण्यादिकमंजसा। ज्ञानाज्ञानसमानैश्च तुर्यं वै नात्र संशयः ॥३६॥ न स्वर्गप्राप्तिदं कर्म ब्रह्मणो नारकं कथम्। भ्रांतिदं सर्वमुत्सृज्य ब्रह्मभूतो नरो भवेत् ॥३७॥ हृदि बुद्धिप्रदातारं सर्वेषां स्वल्पकारकम्। तं ज्ञात्वा मोहहीनो वै भविष्यति सदा नरः ॥३८॥ चित्तस्य सुखदं सर्वं प्रकुर्यान्नात्र संशयः। न वर्णाश्रमधर्मैः

स शरीरं पीडयेत् कदा ॥३९॥ देहो भोगार्थमानंदाद्रचितस्तेन ब्रह्मणा। नानायत्नैः शरीरं तत् पोषणीयं निरंतरम् ॥४०॥ शरीरे कष्टमापन्ने बुद्धिः खेदयुता भवेत् । तत्स्थबुद्धिपतिः साक्षाद् दुःखितश्च तथा भवेत् ॥४१॥ अहं ब्रह्मनि संधार्य सदा स्वेच्छापरो भवेत्। पापपुण्यविहीनः स देहपोषणकारकः ॥४२॥ नानापदार्थभावेषु मनस्तस्य प्रवर्तते। भोक्तव्यास्ते नरेणैव त्यज्य वर्णाश्रमाश्रमम् ॥४३॥ जीवहिंसामयं कर्म कर्तव्यं न कदाचन। तृणांकुरादिकं तद्वत्तच्छेत्तव्यं विचारतः ॥४४॥ देवार्चनादिकं कर्म न कर्तव्यं मनीषिभिः। न स्वाहा न स्वधायं यदहं ब्रह्मनि बोधतः ॥४५॥ ब्राह्मणेभ्यो न दातव्यं दानभोज्यादिकं कदा। सर्वे समानरूपाश्च कथं तत्र द्विजादिकम् ॥४६॥ यत्र चित्तस्य संप्रीतिर्जायते मुनिसत्तमाः। तदेव पात्रमुख्यं वै ज्ञातव्यं श्रेष्ठभावतः ॥४७॥ एवं नानामतैर्युक्तं शास्त्रं बौद्धं महर्षयः । ज्ञातव्यं कलिदोषैश्च युक्तं नरकदं भवेत ॥४८॥ वर्णाश्रमस्थकं धर्मं त्यक्त्वा स्वेच्छापरो भवेत् । अहिंसा परमो भावी ह्येतद्बौद्धरहस्यकम् ॥४९॥ सर्वान संमोह्य विश्वात्मा बुद्धः कलिप्रवर्तकः। संस्थितः कैकटे देशे गुप्तरूपेण मानदाः ॥५०॥ गणेशध्यानसंयुक्तः समर्प्य ढुंढये कृतम्। कर्मयोगयुतः सोऽपि तदाऽऽज्ञापालकोऽभवत् ॥५१॥ तथापि पूजया हीनो बभूव बुद्धरूपधृक्। विष्णुर्वेदविरुद्धस्यमार्गसंसर्जनात् किल ॥५२॥ कलिप्रांते दुराचारा बौद्धमाया विमोहिताः। वर्णाश्रमपरिभ्रष्टा भविष्यंति गृहे गृहे ॥५३॥ लेशमात्रेण धर्मस्तु स्थितस्तत्र महर्षयः। अधर्मेण जितः सोऽपि सदोपोषणसंयुतः ॥५४॥ ततो बुद्धः स्वयं ढुंढिं परं ध्यात्वा तपोन्वितः। प्रार्थयिष्यति विघ्नेशं धर्मसंस्थापनाय वै ॥५५॥ ततो गणेश्वरः साक्षात् प्रसन्नोऽवतरिष्यति। धूम्रवर्ण इति ख्यातो धर्मं संस्थापयिष्यति ॥५६॥ दृष्टो बुद्धश्च तं नत्वा पूज्य स्तुत्वा विशेषतः । अंतर्धानं स्वयं कृत्वा स्वमहिम्नि स्थितो भवेत् ॥५७॥ इदं बुद्धस्य माहात्म्यं कथितं स्वल्पभावतः। पठनाच्छ्रवणात् सद्यो मोहघ्नं कामदं भवेत् ॥५८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते बुद्धावतारवर्णनं नाम पंचदशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शिव उवाच । वर्णाश्रमे कलौ नष्टे देवा दुःखसमन्विताः । प्रार्थयिष्यंति विघ्नेशमुपोषणपरायणाः ॥१॥ नानातपोन्वितान वीक्ष्य प्रादुर्भावं गजाननः । करिष्यत्यमरान विप्राः पुरः परमभक्तितः ॥२॥ समागतं गणेशानं धूम्रवर्णधरं प्रभुम । द्विभुजं वाजिसंस्थं तं खड्गचर्मप्रधारिणम् ॥३॥ नानापुष्पमयीं मालां दधानं गंधचर्चितम् । दृष्ट्वा सुराः प्रणेमुस्तं नत्वा पूज्य प्रतुष्टुवुः ॥४॥ नमस्ते धूम्रवर्णाय नानाखेलकराय च । अमेयशक्तये तुभ्यं मायिने धर्मरक्षिणे ॥५॥ अनाथानां प्रणाथाय नाथनाथाय ते नमः । सगुणाय नमस्तुभ्यं निर्गुणाय नमो नमः ॥६॥ सगुणनिर्गुणाभ्यां च हीनाय योगरूपिणे । योगाकारेण सर्वत्र संस्थिताय नमो नमः ॥७॥ नरकुंजररूपाय धूम्रवर्णधराय च । द्विभुजायाश्ववाहाय हेरंबाय नमो नमः ॥८॥ खड्गचर्मधरायैव नाना चंदनचर्चित । नाना पुष्पधरायैव सर्वाध्यक्षाय ते नमः ॥९॥ पूर्णाय पूर्णरूपाय गणेशाय परात्मने । धर्मरक्ष महाभाग गजानन नमोऽस्तु ते ॥१०॥ धर्माज्ञा अमराः सर्वे सुरश्वर कृतास्त्वया । नष्टे धर्मेऽधुना नाथ मरिष्यामस्त्व-दग्रतः ॥११॥ बुद्धमायासहायेन कलिना निर्जिता वयम । विष्णुशंभुमुख्या देवास्तान पालय महोदर ॥१२॥ सार्धेन द्विसहस्रेण प्रभो वर्षैर्विनिर्जिताः । क्षुद्रदेवाः स्वग्रामस्थाः कलिना पपलुश्च ते ॥१३॥ ततः पंचसहस्रेण वर्षैस्तास्तीर्थदेवताः । तीर्थानि कलिना नाथ जितानि पपलुस्तथा ॥१४॥ ततो दशसहस्रेण जिता विष्णुशिवादयः । कलिना पृथिवीं त्यक्त्वा पपलुर्देवसत्तमाः ॥१५॥ कर्माकर्मविकर्माख्या शक्तिस्तत्र स्थिता भवेत । विकर्मगुणसंयुक्ता बुद्धमायात्मिका प्रभो ॥१६॥ त्वमपि त्वादृशो भूत्वा फलदाता स्थितः स्वयम । देवरूपधरः स्वामिन् सदा कलिप्रवर्तकः ॥१७॥ न ते देवस्वरूपं तु कलिः क्रोधसमन्वितः । छेत्तुं समुद्यतः क्वापि त्वां चिंतयति सर्वदा ॥१८॥ तव चिंतनभावेन वयं सर्वे पराजिताः । कलिना देवदेवेश उपोषणयुताः कृताः ॥१९॥ अधुना लेशमात्रेण धर्मस्तिष्ठति विघ्नप । तं हनिष्यति वेगेन कलिः परमदारुणः ॥२०॥ नष्टे धर्मे गणाधीश अधर्मः केवलो महान् । भविष्यति पुनर्धर्मं किं स्रक्ष्यसि च देवप ॥२१॥ अतो लेशमयं धर्मं रक्षस्व गणनायक । नोचेद्धर्मशरीरास्तु वयं नष्टा भवामहे ॥२२॥ रक्ष रक्ष दयासिंधो धूम्रवर्ण गजानन । मृत्युप्रायाननाथांश्च देवान् धर्मप्ररक्षकान ॥२३॥ एवमुक्त्वा गणाधीशं प्रणेमुरमराः पुनः । रुरुदुर्दुःखसंयुक्तां-स्तान जगाद गजाननः ॥२४॥ धूम्रवर्ण उवाच । मा भयं कुरुत प्राज्ञा धर्मं संरक्षयाम्यहम् । सर्वैरजेयमुग्रं तं कलिं हत्वा विशेषतः ॥२५॥ भवत्कृतमिदं स्तोत्रं कलिदोषहरं भवेत् । पठने शृण्वतें देवाः सर्वसिद्धिप्रदायकम् ॥२६॥ धनधान्यप्रदं चैवारोग्यसंपत्प्रवर्धनम । पुत्रपौत्रकलत्रादिदायकं प्रभविष्यति ॥२७॥ एवमुक्त्वा स्वदेहात् स धूम्रवर्णः प्रतापवान् । निर्ममे

विविधां सेनां नानाशस्त्रसमन्विताम् ॥२८॥ नानावाहनगां पूर्णतेजोयुक्तां महर्षयः। तया युक्तो जनान् सर्वान् जघान मलिनान् प्रभुः ॥२९॥ म्लेच्छप्रायांश्च विविधान् म्लेच्छान् कलिमलैर्युतान्। स्वयं संत्रासयामास कलिं धर्मवधे रतम् ॥३०॥ तस्यांगवायुना स्पृष्टा जना धर्मपरायणाः। भययुक्ता गणेशं तं शरणं जग्मुरादरात् ॥३१॥ कलिर्गुप्तस्वरूपेण युयुधे जनसंश्रितः। गणेशैः संहतः सोऽपि बभूव ह हतोद्यमः ॥३२॥ ततो भयसमायुक्तं त्यक्त्वा हृज्जनिमितां कलिः। देहधारी समागत्य धूम्रवर्णं ननाम सः ॥३३॥ तुष्टाव पूज्य तं नत्वा धूम्रवर्णं महाबलम्। ज्ञात्वा विघ्नेश्वरं भक्त्या हृष्टरोमा महायशाः ॥३४॥ कलिरुवाच। धूम्रवर्ण नमस्तुभ्यं सर्वेभ्यः सुखदायक। नानारूपधरायैव विघ्नेशाय नमो नमः ॥३५॥ अनंतपादहस्तायानंतबाहुधराय ते। अनंतमायया गुप्तप्रचारिणे नमो नमः ॥३६॥ हेरंबाय नमस्तुभ्यं भक्तसंरक्षकाय च। अभक्तभयदात्रे ते गणेशाय नमो नमः ॥३७॥ आदिमध्यांतहीनायादिमध्यांतमयाय ते। आनंदेभ्यः सदानंददायिने वै नमो नमः ॥३८॥ मायाहीनाय मायाया आधाराय परात्मने। मायिभ्यो मायया मोहदायिने ते नमो नमः ॥३९॥ कर्मणां फलदात्रे ते ज्ञानिभ्यो ज्ञानदायिने। आनंदेभ्यः सदानंददायिने वै नमो नमः ॥४०॥ सहजाय नमस्तुभ्यं स्वानंदाय समाधये। योगाय योगनाथाय ब्रह्मेशाय नमो नमः ॥४१॥ कस्त्वां स्तोतुं समर्थः स्याद्यत्र शांतिं गताः प्रभो। वेदादयो नमाम्येव तेन तुष्टो भवाधुना ॥४२॥ रक्ष मां गणनाथ त्वं दासं शरणमागतम्। अज्ञानयुद्धजं दोषं क्षमस्व करुणानिधे ॥४३॥ एवमुक्त्वा कलिस्तस्य पादं गृह्य पपात ह। तमुवाच गणाध्यक्षः स्वभक्तं शरणार्थिनम् ॥४४॥ धूम्रवर्ण उवाच। मा भयं कुरु धर्मघ्न न हन्मि त्वां कदाचन। शरणं मां प्रपन्नं च शृणु मे वच तोहनम् ॥४५॥ स्तोत्रं त्वया कृतं मे यत् कलेर्मलहरं भवेत्। पठते शृण्वते नित्यं सर्वकामफलप्रदम् ॥४६॥ अंते स्वानंददं पूर्णं भविष्यति कले परम्। दृढभक्तिकरं नित्यं योगिभ्यो योगदायकम् ॥४७॥ तिष्ठ त्वं द्वेषमुत्सृज्य धर्मस्य स्वाधिकारतः। कृतप्राप्तिं विजानीहि मदाज्ञावशगो भव ॥४८॥ तथेति तं नमस्कृत्य कलिः स्वस्थानगोऽभवत्। धूम्रवर्णो द्विजान् मुख्यान् वसिष्ठादीन् समानयत् ॥४९॥ पुनस्तान् स्थाप्य सर्वेशः कृतं तैः संप्रवर्तयत्। स्वयमंतर्हितो देवः सर्वेभ्यः सुखदायकः ॥५०॥ धूम्रवर्णावतारस्य चरितं कथितं मया। सर्वसिद्धिप्रदं पूर्णं पठनाच्छ्रवणाद्भवेत् ॥५१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते धूम्रवर्णकलिनिर्जयवर्णनं नाम षोडशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । सूत सूत महाभाग कथां पापापहारिणीम् । वदसे योगदां पूर्णां श्रुत्वा तृप्ता वयं द्विज ॥१॥ पुराणेषु युगानां तु श्रुत्वा चिह्नानि विस्मिताः । महासंशयसंयुक्ता वयं जाता विशेषतः ॥२॥ कृते स्त्रीणां च स्वातंत्र्यं त्रेतायां ब्रह्मणा कृतम् । द्वापरे संस्कृतं श्वेतकेतुनैकपतिनिश्चितम् ॥३॥ गौतमेन कथं शप्ता कृतेऽहल्या महासती । इत्यादिबहवोऽस्माभिर्मार्गा दृष्टाः कृते युगे ॥४॥ अन्यत्र कृतयुगे प्रोक्तं वर्णाश्रमो न विद्यते । एकवर्णाऽऽश्रमस्त्वास्ते भवत् संकीर्तिता जनाः ॥५॥ त्रेतायां क्षात्रधर्मं तु चकार प्रपितामहः । ततोऽभवन्नरा वर्णाश्रमस्यास्ते प्रकीर्तितम् ॥६॥ सौर्यचांद्रभवौ विप्र द्वापरांते स्थितौ नृपौ । पुनः कृतयुगे प्राप्ते राज्यं तौ च करिष्यतः ॥७॥ वर्णाश्रमविभागेन वर्तयिष्यंति मानवाः । किमिदं कौतुकं तत्र विरुद्धवाचकं परम् ॥८॥ युगधर्मेण नष्टास्ताः कलौ पापमयं क्रियाः । वर्णाश्रमविभागस्यास्तत्र सिद्धिः कुतो भवेत् ॥९॥ कलौ चतुर्गुणेनैव कर्मणा सिद्धिमाप्नुयात् । नरः सर्वत्र संप्रोक्तं कथं तच्च भविष्यति ॥१०॥ अतो युगभवं सर्वं कथयस्व विशेषतः । याथातथ्यं महाभाग सुलभं सुगमार्थकम् ॥११॥ सूत उवाच । युगा नानाविधाः प्रोक्ता मुनिभिस्तत्त्वदर्शिभिः । तदर्थज्ञा न मुह्यंत मतभेदप्रमाणतः ॥१२॥ तुरीयदेहगं केचित् कृतं वदंति निश्चितम् । त्रेता सुषुप्तिगा स्वाप्नं द्वापारं जागृतं कलिम् ॥१३॥ तत्रात्मा गुणपः प्रोक्तो सर्वत्रैको महर्षयः । माया सुषुप्तिरूपा सा नानाकारा प्रकीर्तिता ॥१४॥ तस्यां नानाविधायां न व्यभिचारो भविष्यति । यत्र तत्र स्थितं स्वस्य पतिं पश्यति सा शुभा ॥१५॥ सूक्ष्मं स्थूलं विभिन्नं यत्तया सृष्टं विभागतः । तयोर्गुणेशजं रूपं तदाकारं विभाति च ॥१६॥ भिन्नभावात् समुत्पन्नं जागृत्स्वप्नं न संशयः । तयोः पतिकलत्रादि व्यभिचारयुतं भवेत् ॥१७॥ तत्र संस्थापिता तेन मर्यादा श्वेतकेतुना । श्वेतं स्वप्नं ध्वजो यस्य श्वेतकेतुः स वै स्मृतः ॥१८॥ अनेन युगमानेन ज्ञातव्यं तद्विचक्षणैः । तेमे युगा महाविप्राः कथिता मुनिभिः पुरा ॥१९॥ ध्यानं कृतयुगं केचित् यज्ञं त्रेतां वदंति च । आचारं द्वापरं देहविषयं कलिमेव च ॥२०॥ तत्र ध्याने महाभागा एकवर्णाश्रमो भवेत् । ज्ञानं तदेव ज्ञातव्यमेकरूपधरं सदा ॥२१॥ यज्ञः कर्ममयः प्रोक्तस्तत्र वर्णाश्रमो भवेत् । अतो वर्णाश्रमाचारस्त्रेतायां परिकीर्तितः ॥२२॥ एवं नाना विचारेण मुनिभिः कथितं पुरा । न तत्र संशयः कार्यो जनैस्तदर्थयुक्तिभिः ॥२३॥ अधुना युगमाहात्म्यं कथयामि समासतः । कलौ सिद्धिकरं चैव कर्म येन प्रजायते ॥२४॥ आदौ ब्रह्माऽसृजत् कालं धर्माधर्मव्यवस्थया । स चतुर्धाऽभवत्तत्र युगरूपः पुरातनः ॥२५॥ कृतं त्रेता द्वापरश्च कलिश्चेति महर्षयः । तेभ्यः सिद्धिप्रदा-

नार्थं ददौ मंत्रान् प्रजापतिः ॥२६॥ तं प्रणम्य ययुः सर्वे तपसे वनमुत्तमम् । गणेशं चेतसि ध्यात्वा जेपुर्मंत्रं युगानि च ॥२७॥ निराहारप्रभावेण परितुष्टो गजाननः । भक्त्या तेषां ययौ वर्षसहस्रे वरदः पुरः ॥२८॥ तमागतं समालोक्य प्रणेमुस्ते गणाधिपम् । पूज्य तं तुष्टुवुः सर्वे हर्षगद्गदभाषणाः ॥२९॥ युगपुरुषा ऊचुः । गणेशाय नमस्तुभ्यं भक्तसंरक्षकाय च । नानारूपभृते तुभ्यं हेरंबाय नमो नमः ॥३०॥ भक्तेभ्यः सर्वदायैवाभक्तानां नाशनाय च । परेशाय पराणां ते पराय च नमो नमः ॥३१॥ स्वानंदवासिने तुभ्यं नानामायाप्रचारिणे । सदा स्वानंदभोगस्य पालकाय नमो नमः ॥३२॥ अमेयशक्तये तुभ्यं नानामायाप्रहारिणे । मायिभ्यो मोहदात्रे वै मायिने ते नमो नमः ॥३३॥ लंबोदराय लोकानामुदरस्थाय ते नमः । एकदंताय शूर्पाकारकर्णाय नमो नमः ॥३४॥ त्रिनेत्राय गजाकारवक्त्राय परमात्मने । चतुर्भुजाय सर्वेषामादिपूज्याय वै नमः ॥३५॥ देवाय देवरूपाय देवदेवाय ते नमः । देवदेवेशकायैव विघ्नेशाय नमो नमः ॥३६॥ सर्वेषां ज्येष्ठरूपाय मात्रे पित्रे नमो नमः । सततं सर्वपूज्याय ब्रह्मनिष्ठाय ते नमः ॥३७॥ ब्रह्मणे ब्रह्मणां नाथ ब्रह्मभूयप्रदाय च । ब्रह्मभ्यो ब्रह्मदात्रे ते शांतिस्थाय नमो नमः ॥३८॥ किं स्तुमस्त्वां गणेशान यत्र वेदाः शिवादयः । योगरूपा भवंति स्म ततस्ते नमनं शुभम् ॥३९॥ एवमुक्त्वा प्रणेमुस्ते युगा गणपतिं द्विज । स तानुवाच प्रीतात्मा भक्तवात्सल्ययंत्रितः ॥४०॥ श्रीगणेश उवाच । स्तोत्रं भवत्कृतं मे यत् सर्वदं प्रभविष्यति । पठनाच्छ्रवणात् नृभ्यो मत्प्रीतिदायकं भवेत् ॥४१॥ यं यमिच्छति तं तं तु दास्यामि स्तोत्रतोषितः । भुक्तिमुक्तिप्रदं भावि सर्वमान्यं युगाः किल ॥४२॥ वरान् ब्रूत महाभागा ददामि मनसेप्सितान् । तपसा स्तोत्रमुख्येन तुष्टो भक्त्या विशेषतः ॥४३॥ युगा ऊचुः । यथा संरचिता देव गजानन वयं त्वया । सामर्थ्यमतुलं देहि तथा ते भक्तिमुत्तमाम् ॥४४॥ कृत उवाच । सदा सत्त्वयुतं मां त्वं कुरु कर्मपरायणम् । स्वधर्मरुचिसंयुक्तं प्रभो मोक्षार्थमुद्यतम् ॥४५॥ त्रेतोवाच । भुक्तिमुक्तिप्रियां मां च कुरु सत्त्वरजोयुताम् । तदर्थं धर्मनिष्ठत्वं गजानन नमोऽस्तु ते ॥४६॥ द्वापर उवाच । भुक्तिसौख्ययुतं मां त्वं कुरु धर्मपरायणम् । भोगबुद्धिपरार्थं च रजस्तमोयुतं प्रभो ॥४७॥ कलिरुवाच । तामसं देहभोगार्थमुद्यतं सततं प्रभो । विकर्मरुचिसंयुक्तं मां कुरुष्व गजानन ॥४८॥ पुनस्ते तं वदंति स्म युगा हर्षसमन्विताः । एकैकाश्रितभावेन भो कुरुष्व निरंतरम् ॥४९॥ तेषां तद्वचनं श्रुत्वा गणेशस्तानुवाच ह । मेघगंभीरया वाचा सर्वेभ्यः सुखदायकः ॥५०॥ श्रीगणेश उवाच । लक्षांशेन कृते प्राप्ते कलिस्तत्र भविष्यति । शतांशेन च सा त्रेता द्वापरस्त्वयुतांशतः ॥५१॥ यदा

त्रेतायुगं प्राप्तं शतांशेन तदा कृतम् । सहस्रांशेन तत्रैव द्वापरः प्रभविष्यति ॥५२॥ अयुतांशेन पापिष्ठः कलिस्तेन समन्वितः । चरिष्यति न संदेहः परस्परप्रवेशनात् ॥५३॥ द्वापरे समनुप्राप्ते शतांशेन भविष्यति । कलिः सहस्रभागात्त्रेतायुतांशं कृतं भवेत् ॥५४॥ कलौ शतांशरूपेण द्वापरः प्रभविष्यति । सहस्रभागात्त्रेता च लक्षांशेन कृतं भवेत् ॥५५॥ धर्माऽधर्माविचारेण मोहदः स कलिः स्मृतः । धर्मज्ञो मोहकर्माऽसौ द्वापरः परिकीर्तितः ॥५६॥ यज्ञाः प्रिया स्वधर्मस्थास्त्रेता सर्वत्र संमता । मुक्तिप्रियं कृतयुगं स्वधर्मस्थं प्रकीर्तितम् ॥५७॥ एवं क्रमेण सर्वत्र भविष्यथ युगाः प्रियाः । मां ज्ञात्वा बंधहीनाश्च वाञ्छितार्थप्रदायकाः ॥५८॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो गणवल्लभः । युगा हर्षसमायुक्ताः स्वस्वकर्मपराः बभुः ॥५९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते युगवरप्रदानं नाम सप्तदशोऽध्यायः ॥



॥श्रीगणेशाय नमः ॥ सूत उवाच । कृते कलिमुखाश्चैव युगाः संति महर्षयः । कृताज्ञापालकाः सर्वे कृतमानभयार्दिताः ॥१॥ तत्रायुः कृततुल्यं वै सर्वेषां जन्मिनां सदा । पापाचारादियुक्तानां सर्वं कृतसमं भवेत् ॥२॥ शापादिकं नराणां तु सफलं कृतभावतः । भवेत पापिनामेव यथा सुकृतिनां वचः ॥३॥ तत्र भेदं प्रवक्ष्यामि नरोऽपराधसंयुतः । न भवेच्छापभीतः सन् कृते युगप्रमाणतः ॥४॥ तद्वत् त्रेतायुगे विप्र युगास्त्रयः कृतादयः । वर्तंते भयसंयुक्तास्त्रेतायां नात्र संशयः ॥५॥ पापिनां सुकृतिनां चायुरादि तत् समं भवेत् । त्रेतायुगप्रमाणेन ज्ञातव्यं द्विजसत्तम ॥६॥ द्वापारे द्वापराज्ञायां संस्थितास्ते युगास्त्रयः । तेन सर्वं तदाकारं फलं भवति कर्मजम् ॥७॥ आयुरादि नराणां च द्वापरेण समं भवेत् । नानाभावास्तदाकारा मया वक्तुं न शक्यते ॥८॥ कलौ युगास्त्रयस्ते तु तदाज्ञावशवर्तिनः । वर्तंते तेन कर्मादिफलं कलिसमं भवेत् ॥९॥ आयुरादि महर्षे तु कलितुल्यं न संशयः । सुकृतिनां महापापिनां युगस्य प्रमाणतः ॥१०॥ अतो लेशमयी सिद्धिः कलौ सत्कर्मकारिणाम् । भविष्यति तथा सर्वमासुरेण हतं भवेत् ॥११॥ योगः शांतिप्रदः प्रोक्तः स एव मुनिसत्तम । चतुर्षु युगधर्मेषु समरूपो भविष्यति ॥१२॥ कृते कर्म कृतं चैकफलदं शास्त्रसंमते । त्रेतायां तद्दशाधिक्यं द्वापारे तु शता-

धिकम् ॥१३॥ सहस्रगुणसंयुक्तं भवते सर्वमंजसा । कलौ युगेन संदेहो गणेशवरदानतः ॥१४॥ कलौ तावन्मयं प्रोक्तं विकर्मकृतमंजसा । फलदं द्वापरे तच्च दशाधिक्यं भवेत् परम् ॥१५॥ त्रेतायां तच्छताधिक्यं कृते साहस्रकं भवेत् । युगमानस्य माहात्म्यान्निश्चितं मुनिभिः पुरा ॥१६॥ एवं नानाप्रमाणानि युगेषु कथितानि च । कथितं तत् पुरा विप्राः पुराणेषु समासतः ॥१७॥ अथ सिद्धिं प्रवक्ष्यामि कलौ सर्वार्थदायिनीम् । यथाऽऽचारयुतं कर्म फलदं तत् क्षणाद्भवेत् ॥१८॥ आसुरेण स्वभावेन कलिना सर्वमावृतम् । फलं कर्मभवं विप्र तस्मात् न फलदं भवेत् ॥१९॥ कर्मसिद्धिं कलौ तत्र यदीच्छति जनो हृदि । सर्वादावयुतं कुर्यात् गायत्रीसंभवं जपम् ॥२०॥ हविष्यान्नं तु भुक्त्वा स एकभुक्तपरायणः । ब्रह्मचर्ययुतो जंतुः सत्यभाषी जितेंद्रियः ॥२१॥ शौचाचारसमायुक्तो द्वेषादि स परित्यजेत् । मनसाऽपि स्त्रियं नैव भोगार्थं संस्मरेत् कदा ॥२२॥ यदा देहं समागृह्य नरः कर्मपरायणः । मनसा विषयं चेच्छेत्तदा सिद्धिः कथं भवेत् ॥२३॥ एवमादि स्वधर्मस्थां क्रियां कृत्वा महायशाः । गायत्र्याश्च जपं कुर्यात्तेन विप्रत्ववान् भवेत् ॥२४॥ ततः कृच्छ्रं समा कुर्यात्ततः कर्म समाचरेत् । स सर्वकलिदोषेण मुक्तः सिद्धिमवाप्नुयात् ॥२५॥ यथोक्तविधिना कर्म कृतं येन महात्मना । चतुर्गणं कलौ विप्राः सिद्धिदं तत् क्षणाद्भवेत् ॥२६॥ आसुरेण स्वभावेन कृतं कर्म द्विजादिभिः । कथं सिद्धिप्रदं तत्र भविष्यति कलौ युगे ॥२७॥ केवलासुरभावेन सत्कर्म मानवेन च । सहस्रगुणितं हर्षात् कृतमासुरगं भवेत् ॥२८॥ सुरासुरस्वभावेन कृतं कर्म शुभाशुभम् । सुरासुरभवं सौख्यप्रदं तच्च भवेत् नृणाम् ॥२९॥ एवं सर्वं समाख्यातं युगधर्मरहस्यकम् । संक्षेपेण कलौ तद्धत् सिद्धिदं मुनिसत्तम ॥३०॥ शृणुयादिदमाख्यानं युगानां मानवः परम् । पठेद्वा पाठयेत् सोऽपि दोषहीनो भवेत्ततः ॥३१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते युगप्रभावकर्मसिद्धिवर्णनं नाम अष्टादशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । मासानां चरितं ब्रूहि सूत सर्वार्थकोविद । मलमासे गणेशस्य पूजनं कीदृशं भवेत् ॥१॥ सूत उवाच । ब्रह्मणोऽङ्गसमुत्पन्नः संवत्सरः प्रतापवान् । मासा द्वादश तस्यांऽगात् समुत्पन्नाः पुरा मुने ॥२॥ छायाया मलमासश्च समुत्पन्नः शुभप्रदः । सह तैर्गणपं ध्यात्वा तपस्तेपे स वत्सरः ॥३॥ षडक्षरं महामंत्रं जजाप ब्रह्मणोदितम् । गणेशस्य सदा ध्यानं चकार हर्षसंयुतः ॥४॥ एवं वर्षसहस्रेण प्रसन्नो वरदोऽभवत् । तमाययौ गणाधीशो भक्तं भक्तजनप्रियः ॥५॥ उवाच तं समाधिस्थं संवत्सरं गजाननः । ससास त्वं वरान् ब्रूहि परान् मत्तो हृदीप्सितान् ॥६॥ गणेशवचनं श्रुत्वा संवत्सरो बुबोध तम् । समुत्थाय गणेशानं ननाम भक्तिसंयुतः ॥७॥ ससासः पूजयामास यथाविध्युपचारतः । पुनः प्रणम्य विघ्नेशं तुष्टाव करसंपुटः ॥८॥ ससाससंवत्सर उवाच । नमस्ते धूम्रवर्णाय वक्रतुंडाय ढुंढये । हेरंबाय परेशाय विघ्नेशाय नमो नमः ॥९॥ शूर्पकर्णाय सर्वेषां पूज्याय परमात्मने । लंबोदराय सर्वादिपूज्याय तु नमो नमः ॥१०॥ अनाथानां सुनाथाय पात्रे हर्त्रे नमो नमः । कर्त्रे त्रिगुणरूपाय गुणहीनाय ते नमः ॥११॥ आदिमध्यांतसंस्थायादिमध्यांतविवर्जित । गणेशाय गणानां ते पालकाय नमो नमः ॥१२॥ ब्रह्मणां पतये तुभ्यं ब्रह्मभ्यो ब्रह्मदायिने । ब्रह्मणे ब्रह्मभूताय ब्रह्मिष्ठाय नमो नमः ॥१३॥ सिद्धिबुद्धिप्रदात्रे ते सिद्धिबुद्धिमयाय च । सिद्धिबुद्धिपते तुभ्यं सर्वेशाय नमो नमः ॥१४॥ अनंतविभवायैवानंतमाया-प्रचारिणे । मायिने मायिनां मोहदात्रे मायास्वरूपिणे ॥१५॥ शांतियोगमयायैव शांतियोगधराय ते । शांतियोगप्रदात्रे च योगेशाय नमो नमः ॥१६॥ किं स्तौमि त्वां गणाधीश चिंतामणिस्वरूपिणे । योगिनः शांतिमापन्ना वेदा यत्र विशेषतः ॥१७॥ अतो नमाम्यहं नाथ तेन तुष्टो भव प्रभो । वरान् देहि स्वकार्याणां सिद्धिदान् सुखदायकान् ॥१८॥ भक्तिं ते चरणे नित्यं देहि सर्वभयापहाम् । कालमानकरं ढुंढे वीर्यं देहि स्वभावजम् ॥१९॥ कर्म मासादिषु प्राज्ञैः कृतं तच्छुभदं भवेत् । साक्षित्वं कर्मणां देहि साधुपादप्रपूजनम् ॥२०॥ एवमुक्त्वा प्रणेमुस्तं मासाः संवत्सरान्विताः । तानुवाच गणाध्यक्षो वचः स्तोत्रेण तोषितः ॥२१॥ श्रीगणेश उवाच । यद्यत् संप्रार्थितं मासाः संवत्सर तथास्तु वै । सर्वगाः कालरूपस्था भविष्यथ न संशयः ॥२२॥ सूर्येण संयुताः सर्वे द्वादशदेहधारिणा । फलदाः कर्मणां चैव भविष्यथ विशेषतः ॥२३॥ ब्रह्मार्पणतया कर्म यद्भवत्सु कृतं नरैः । अंते सलोकतां तेभ्यो दातारश्च भविष्यथ ॥२४॥ याथातथ्यविभागेन साक्षिणः सर्वजन्मिनाम् । भविष्यथ तथा भक्ता मयि मोहविवर्जिताः ॥२५॥ आदित्येन परित्यक्तोऽधिमासस्त्वं भविष्यसि । देवताऽहं त्वदीये तु

कर्मणां फलदायकः ॥२६॥ सर्वेषु मलरूपं यत् कृतं मासेषु मानवैः । नानाभावयुतं तेभ्योऽहं भवामि फलप्रदः ॥२७॥ त्वदीये कालभावे तु कर्म यत् मानवैः कृतम् । नानाभावयुतं तेभ्योऽहं भवामि फलप्रदः ॥२८॥ भवत्कृतमिदं स्तोत्रं सर्वसिद्धिप्रदं भवेत् । पठतां शृण्वतां नृणां भावपूरं न संशयः ॥२९॥ कालदोषभवं पापं कालस्योल्लंघनादिकम् । हराम्यनेन स्तोत्रेण तुष्टोऽहं भुक्तिमुक्तिदः ॥३०॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो गणवल्लभः । संवत्सरः प्रसन्नात्मा स्वकार्यनिरतोऽभवत् ॥३१॥ मासाः स्वकार्यसामर्थ्ययुक्ता हृष्टा बभूविरे । कालभावधराः सर्वे साक्षिणः सर्वकर्मणाम् ॥३२॥ एतत् संवत्सरस्यैव समासस्य चरित्रकम् । यः पठेच्छृणुयाद्वाऽपि स कालसुखमाप्नुयात् ॥३३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते समासवत्सरचरितं नामैकोनविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । ततो बहौ गते काले मासाः षट् तपसि स्थिताः । निराहारपराः सर्वे गणेशं समतोषयन् ॥१॥ कार्तिको मार्गशीर्षश्च माघो वैशाखश्रावणौ । अधिमासस्तथा विप्र गणेशध्यानतत्परः ॥२॥ दशवर्षेषु विघ्नेशस्तान् ययौ वरदायकः । स्तुतः संपूजितस्तैस्तु वरान् ब्रूत स चाब्रवीत् ॥३॥ गणेशवचनं श्रुत्वा मासास्तं प्रणिपत्य च । ऊचुः प्रहृष्टचित्तास्ते भक्त्या नम्रात्मकंधराः ॥४॥ मासा ऊचुः । यदि विघ्नेश सर्वेश वरदोऽसि तदा प्रभो । अस्मासु यत्कृतं कर्म बहुलं कुरु सर्वदा ॥५॥ तेनास्मत्कालसंप्राप्तौ नरा यत्नपरायणाः । भविष्यंति विशेषेण सदा सत्कर्मकारिणः ॥६॥ तद्भक्तिनिलयान्नित्यं कुरु नो गणनायक । त्वद्दासप्रवणांस्तद्वत् कर्मदोषविवर्जितान् ॥७॥ श्रीगणेश उवाच । अन्येषु सर्वमासेषु कृतं कर्म तदात्मकम् । फलदं संमतं शास्त्रे मदीयवरदानतः ॥८॥ तेभ्यो दशाधिकं कर्म फलदं प्रभविष्यति । मार्गशीर्षे कृतं मासाः शुभदं मानवैः किल ॥९॥ तस्माद्वैशाखमासे तद्भविष्यति दशाधिकम् । तस्मात् कार्तिकिके मासे दशाधिकफलप्रदम् ॥१०॥ तस्माद्दशाधिकं माघे कर्म यन्मानवैः कृतम् । तस्माद्दशाधिकं भावि श्रावणे फलदं भवेत् ॥११॥ तस्माद्दशाधिकं प्रोक्तं ढौंढे मासे फलप्रदम् । एवं क्रमेण श्रेष्ठा वै भविष्यथ यथा तपः ॥१२॥ अधिमासस्य देवोऽहं ढुंढिराजो न संशयः । ढौंढमासः

समाख्यातो मया नाम्नाऽधुना महान् ॥१३॥ अमाचिह्न संयुक्तः श्रावणो मे प्रियोऽधिकः । नानासिद्धिप्रदो भावी अनुष्ठानवतां नृणाम् ॥१४॥ उपासते श्रावणे मां नानायत्नपरायणाः । उपोषणयुता भाद्रे चतुर्दिनानि मानवाः ॥१५॥ समारभ्य प्रतिपदं चतुर्थ्यंतं मदर्चनम् । चतुर्थ्यां जागरं कुर्यात् पंचम्यां पारणं तथा ॥१६॥ यथाशक्ति द्विजान् भोज्य दद्याद्विपुलदक्षिणाम् । स सर्वसुखमाभोज्यांते स्वानंदमवाप्नुयात् ॥१७॥ मुख्यं पंचसु वै स्नानं मासेषु सर्वभावतः । प्रातःकाले विशेषणानुष्ठानं श्रावणे मतम् ॥१८॥ एवं मासा भवंतोऽपि भविष्यंति जनैः सदा । सत्कर्मभिर्महाभागाः सेविताः सततं पराः ॥१९॥ मयि भक्तियुता नित्यं सर्वदेवपरायणाः । भविष्यथ मदीयेन वरेणैव विशेषतः ॥२०॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो भक्तवत्सलः । मासा हर्षसमायुक्ताः स्वस्वकार्यरता बभुः ॥२१॥ शृणोति मासचारित्रमेवं पठति यो नरः । स मासफलसंयुक्तो गाणेशो भवतीत्यहो ॥२२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खण्डे धूम्रवर्णचरिते मलमासादिमासेभ्यो वरप्रदानं नाम विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । षट्सु मासेषु विघ्नेशः पूजनीयो नरैः कथम् । तेषु मुख्यप्रकारेण तुष्टः केन गजाननः ॥१॥ के के सिद्धिं गतास्तेषु गणेशभजनेन वै । तेषां चरित्रकं ब्रूहि सर्वसिद्धिप्रदायकम् ॥२॥ सूत उवाच । अरुणोदयकाले वै स्नानं कुर्यान्नरः सदा । तीर्थेषु व्रतसंयुक्तः स्वस्वशाखाप्रमाणतः ॥३॥ स्वशाखोक्तेन मार्गेण संध्यादिकं समाचरेत् । वैदिकैस्तांत्रिकैर्मंत्रैः पूजयेद्गणनायकम् ॥४॥ पुराणसंभवैर्वाऽपि यथोपचारसंयुतः । एकभुक् स भवेन्नित्यं नक्तभुक् वा भवेन्मुने ॥५॥ हविष्यान्नं फलहारो निराहारोऽथवा पुनः । ब्रह्मचर्यसमायुक्तो नखलोमयुतो भवेत् ॥६॥ पृथ्व्यां शयनकारी स सत्यावाङ् मौनधारकः । यथा स्वधर्मसंयुक्तो व्रतं मासात्मकं चरेत् ॥७॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाऽपि महामुने । स्वस्वधर्मयुतो भूत्वा व्रतं मासात्मकं चरेत् ॥८॥ स्त्रीणां व्रतमिदं पुण्यं सधवानां सुखप्रदम् । विधवानां विशेषेण परं मासात्मकं भवेत् ॥९॥ तेषु पंचकमानंदाचरेत् मुख्यं सदा जनः । गणेशपूजनं विप्र भोजनं दीपदानकम् ॥१०॥ शमीमंदारसेवां च प्रदक्षिणपरा-

यणाम् । गवां शुश्रूषणं तद्वत् सर्वसिद्धिप्रदं भवेत् ॥११॥ एवमादि गणेशस्य प्रियं नानाविधं चरेत् । सदा तन्निष्ठभावेन तिष्ठन् मासव्रती मुने ॥१२॥ अन्यान् शंभुमुखान् देवान् पूजयन् मानवो मुने । स्वस्वेच्छायुतभावेन व्रतं मासमयं चरेत् ॥१३॥ आवश्यकेन भावेन मासाः सेव्या इमे नरैः । धर्मार्थकामामोक्षाणां ब्रह्मभूयस्य दायकाः ॥१४॥ यं यमिच्छति तं तं वै लभते नात्र संशयः । मासात्मकेन मुख्येन व्रतेन मानवः सदा ॥१५॥ अत्रेतिहासमुख्यं ते कथयामि समासतः । मासव्रतेन ये सिद्धिं लेभिरे भक्तिसंयुताः ॥१६॥ शंखासुरो महादैत्यो ब्रह्मांडाधिपतिः पुरा । बभूव स जहारैव वेदान् स्मृतिसमन्वितान् ॥१७॥ ततो हाहा कृतं सर्वैः कर्महीनप्रभावतः । वर्णसंकरजं कर्म बभूव सर्वमंडले ॥१८॥ ततो मुनिगणैर्युक्ता देवा विधिमुखा ययुः । विष्णुं च शरणं सर्वे तुष्टुवुर्वेददेहेनवै ॥१९॥ ततो विष्णुः स्वयं शंभुं जगाम तान् विसृज्य सः । तं जगाद महाभागं विनयेन समन्वितः ॥२०॥ विष्णुरुवाच । शंखं वेदहरं शंभो दुर्जयं देवतादिभिः । जेष्यामि त्वत्प्रसादेन तत्रोपायं वदस्व मे ॥२१॥ श्रीशिव उवाच । समीपे कार्तिको मासो जनार्दन समागतः । तत्र मासव्रतेन त्वं तोषयस्व गजाननम् ॥२२॥ तेन विघ्नविहीनस्त्वं विजेष्यसि महाबलम् । शंखासुरं न संदेहो नान्यथा पुरुषोत्तम ॥२३॥ श्रुत्वा तं शंकरं नत्वा विष्णुः परपुरंजयः । गतो बदरिकारण्यं व्रतार्थं भक्तिसंयुतः ॥२४॥ तत्रैकाक्षर-मंत्रस्य पुरश्चरणमुत्तमम् । चकार गणनाथं स तोषयामास यत्नतः ॥२५॥ कार्तिके पंचकं सेव्यं गाणेशं सर्वसिद्धिदम् । मार्गशीर्षे गणेशानं प्रणम्य प्रययौ सुरान् ॥२६॥ ततो बुद्धिपतिं स्मृत्वा विचारमकरोत् हृदि । केनोपायेन दैत्येशं विजेष्यामि सुदारुणम् ॥२७॥ तत्र स्फूर्तिः समुत्पन्ना गणेशकृपया हृदि । मात्स्येनैव स्वरूपेण विजयो मे भविष्यति ॥२८॥ एतस्मिन्नंतरे तत्र बभूवाऽऽकाशजां पराम् । वाणीं शुश्राव देवेशः केशवः परवीरहा ॥२९॥ मात्स्यरूपेण शंखं तं जहि सर्वभयंकरम् । मां स्मृत्वा नात्र संदेहो विजयस्ते भविष्यति ॥३०॥ ततो गणपतिं स्मृत्वा मत्स्यो भूत्वा जनार्दनः । घोरं युद्धं स कृत्वा तं जघान शंखमुल्बणम् ॥३१॥ सांगान् वेदान् समानाय्य ददौ तान् ब्रह्मणे प्रभुः । स्तुतः संपूजितो देवैर्मुनिभिः स्वस्थलं ययौ ॥३२॥ एवं कार्तिकमासे तु स्नानादिव्रततेजसा । हतः शंखासुरस्तेन विष्णुना मत्स्यरूपिणा ॥३३॥ अन्यच्च शृणु विप्रेंद्र कथां पापप्रणाशिनीम् । कार्तिकव्रतसंयुक्तां पुरातनभवां पराम् ॥३४॥ पौलस्त्यो ब्राह्मणः कश्चित् सोमदत्त इति श्रुतः । स्वधर्मनिरतो नित्यं तपस्वी शुचिमानसः ॥३५॥ जगाम स गणेशस्य भक्त्यर्थं गौतमं मुनिम् ।

पप्रच्छ विनतो भूत्वा भक्त्यर्थं योगिनां वरम् ॥३६॥ सोमदत्त उवाच । केनोपायेन विघ्नेशः सद्यो वै दृष्टिगो भवेत् । क्षणभंगुरदेहत्वात्तदुपायं वद प्रभो ॥३७॥ गौतम उवाच । समीपे कार्तिको मासः समायातो महामुने । व्रतं मासात्मकं कार्यं दर्शनार्थं महाप्रभोः ॥३८॥ एवमुक्त्वा विधिं तस्मै कथयित्वा ददौ परम् । स्थानं स्वस्याश्रमे सोऽपि तत्रारंभं चकार ह ॥३९॥ एकनिष्ठः स्वभावेन परं गाणेशपंचकम् । सेवयामास भक्त्या स कार्तिकव्रतसंयुतः ॥४०॥ उपोषणयुतस्तत्र ध्यात्वा हृदि गजाननम् । जजाप मंत्रराजं स षडक्षरं शुभप्रदम् ॥४१॥ तत्र चित्रं समभवत् समाप्तिसंभवे दिने । तच्छृणुष्व महाविप्र हृदनिश्चयदं भवेत् ॥४२॥ पूजायां संस्थितो विप्रः सोमदत्तो महायशाः । कार्तिक्यां पूर्णिमायां स एकासनविधौ रतः ॥४३॥ तत्र दूर्वाशमीमंदारपुष्पाणि स्थितानि तु । अकस्माद्ब्राह्मणः कश्चित्तानि गृह्य पपाल ह ॥४४॥ सोमदत्तः स्वयं तत्र मौनवानासने स्थितः । नोत्थितो नियमे संस्थः शुशोच गणपं स्मरन् ॥४५॥ ततस्तेन विचारेण तदर्थं ज्ञानमद्भुतम् । लोमानि देहसंस्थानि सर्वौषधिमयानि च ॥४६॥ अतो लोमानि सर्वाणि त्वचायुक्तानि भावतः । दास्यामि गणनाथाय दूर्वा शम्यादिकारणात् ॥४७॥ ततः शस्त्रं समागृह्य शिरश्छेत्तुं समुद्यतः । शिखायुक्तं गणेशाय दूर्वार्थं स्वस्य चार्पयन् ॥४८॥ स्वकंठे शस्त्रघातं स चकार गणनायकः । तावत् समाययौ तत्र ब्राह्मणस्य स्वरूपधृक् ॥४९॥ शमीमंदार-दूर्वादीन् गृह्य तस्मै ददौ पुनः । उवाच पूजय त्वं तु गणेशं हठतत्पर ॥५०॥ दृष्ट्वाऽतिहर्षसंयुक्तः सोमदत्तो महायशाः । नियमं स्वं चकारैव तमुवाच प्रणम्य तु ॥५१॥ सोमदत्त उवाच । त्वं कोऽसि वद मां नाथ हृत्वा दूर्वादिकं पुरा । समायातः पुनः सर्वं दत्तं मे नियमात्मकम् ॥५२॥ न त्वं विप्रोऽसि देवेश साक्षाद्विघ्नेश्वरो भवान् । निश्चयं मे दृढं दृष्ट्वा परीक्षार्थं समागतः ॥५३॥ दर्शयस्व निजं रूपं नोचेद्देहं त्यजाम्यहम् । सत्यं वद महाभाग तेन तृप्तो भवामि च ॥५४॥ ततो व्रतप्रभावेण भक्त्या नियमयुक्तया । संतुष्टो गणराजः स दर्शयामास स्वं वपुः ॥५५॥ चतुर्भुजं त्रिनेत्रं च शुंडादंडविराजितम् । सिद्धिबुद्धिसमायुक्तं परश्वादिसुचिह्नितम् ॥५६॥ नानाभूषणशोभाढ्यं शेषनाभिधरं परम् । चिंतामणिं मणिं हस्तस्थं लंबोदरैकदंतकम् ॥५७॥ मूषकोपरि संस्थं तं दृष्ट्वा वस्त्रविराजितम् । ननाम सोमदत्तः स हर्षनिर्भरमानसः ॥५८॥ सरोमांचो ननर्ताऽसौ साश्रुनेत्रः प्रतापवान् । न विवेद विधिं किंचिद्देहातीत इवाबभौ ॥५९॥ ततो हर्षं समागृह्य पूजयामास तं प्रभुम् । पुनः प्रणम्य हेरंबं तुष्टाव स कृतांजलिः ॥६०॥ सोमदत्त उवाच । गणेशाय परेशाय सदा शांतिप्रदायिने । योगिनां

योगरूपाय हृदिस्थाय नमो नमः ॥६१॥ विघ्नेशाय महाविघ्नविघ्नदाय परात्मने । विघ्नहर्त्रे स्वभक्तानां सत्ताधाराय ते नमः ॥६२॥ अनादये महाकाल कालाय कालरूपिणे । अंते विहारयुक्तायादिनाथाय नमो नमः ॥६३॥ विनायकाय देवाय सर्वेषां नायकाय च । नायकेभ्यः पदादीनां दात्रे तुभ्यं नमो नमः ॥६४॥ लंबोदराय सर्वेषामुदरस्थाय ते नमः । अपारोदारभावाय ब्रह्मेशाय नमो नमः ॥६५॥ आदिमध्यांतहीनाय तदाकारस्वरूपिणे । स्वानंदपतये तुभ्यं स्वसंवेद्याय ते नमः ॥६६॥ सिद्धिदात्रे सुभक्तेभ्यो दुष्टानां सिद्धिहारिणे । सिद्धिपते महासिद्धिरूपाय ते नमो नमः ॥६७॥ बुद्धिपते सुबुद्धीनां दात्रे साधुजनप्रिय । दुर्बुद्धिदायिने तुभ्यं दुष्टेभ्यो वै नमो नमः ॥६८॥ संप्रज्ञातस्वरूपायासंप्रज्ञातं महाशिरः । तयोर्योगे नराकार गजाकाराय ते नमः ॥६९॥ किं स्तौमि गणनाथ त्वां सदा योगस्वरूपिणे । अतस्ते नमनं कृत्वा कृतकृत्यो भवाम्यहम् ॥७०॥ धन्योऽहं सर्वभूतेषु त्वां दृष्ट्वा गणनायकम् । कुलं शीलं यशो धन्यं जनकौ तप आश्रमः ॥७१॥ धन्यं व्रतं गणाधीश महत् कार्तिकमासगम् । तस्याचरणमात्रेण त्वं मे दृष्टिगतः प्रभो ॥७२॥ भक्तिं त्वदीयपादेषु देहि मे द्विरदानन । नान्यथा चेश्वरैर्युक्तं गाणपत्यपरायणः ॥७३॥ तस्य तद्वचनं श्रुत्वा गणेशस्तमुवाच ह । यद्यदिच्छसि तत्तत्ते सफलं प्रभविष्यति ॥७४॥ गाणपत्यप्रियोऽत्यंतं भविष्यसि महामुने । भक्तो मदीयपादस्य सर्वमान्यो भविष्यसि ॥७५॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदायकम् । भविष्यति नृणां विप्र पठतां शृण्वतां सदा ॥७६॥ एवमुक्त्वांऽतर्दधेऽसौ विघ्नेशः करुणानिधिः । सोमदत्तो महाभागो गौतमं प्रणनाम ह ॥७७॥ तदादि स मुनिः ख्यातो बभूव गणपप्रियः । योगी योगविदां श्रेष्ठः सर्ववेदार्थतत्त्ववित् ॥७८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते धूम्रमहिमावर्णनं नाम एकविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । कर्णाटे ब्राह्मणः कश्चिदत्रिगोत्रसमुद्भवः । नाम्ना सर्वप्रियः सोऽपि कार्तिकव्रतमाचरत् ॥१॥ प्रातः स्नानं स कृत्वा तु गणेशपूजने रतः । नियमेन समाविष्टो गाणपत्यप्रियोऽभवत् ॥२॥ तत्रैकः क्षत्रियः शुद्धः स्नानं कृत्वा शमीं पराम् । जलेनासिच्य भीमाख्यः प्रदक्षिणपरोऽभवत् ॥३॥ अन्यः कैवर्तकस्तत्र तथा मंदारकं मुने । पूज्य मघप्रियः स्नात्वा प्रदक्षिणपरोऽभवत् ॥४॥ वैश्यो गवां पुष्पवाहः शुश्रूषायां रतोऽभवत् । स्नात्वा गणपतिं ध्यात्वा गोरूपधरमादरात् ॥५॥ शूद्रः श्यामलसंज्ञस्तु दीपदानं चकार ह । गणेशप्रीतये नित्यं स्नात्वा मासव्रते रतः ॥६॥ अन्यो वैश्यो महाबाहुर्नाम्ना स्नात्वा व्रते स्थितः । ब्राह्मणान भोजयामास नित्यं भावपरायणः ॥७॥ कारुकः पद्मनामा वै स्नात्वा नित्यं ननाम ह । गणेशं भावसंयुक्तः कार्तिकव्रतसंस्थितः ॥८॥ शूद्रः कश्चिन्महीपालो नाम्ना गुणयुतोऽभवत् । तीर्थं कार्तिकमासे स जग्राह गणपस्य तु ॥९॥ एवं नाना जनास्तत्र गणेशप्रीतये मुने । स्नात्वा किंचित् स्वभावेनाभजंस्तं गणनायकम् ॥१०॥ रोगवंध्यादिदोषैस्ते मुक्ता जाता विशेषतः । समाप्ते व्रतमुख्ये तु धनधान्ययुता बभुः ॥११॥ अंते स्वानंदगाः सर्वे गणेशं तस्य तत्क्षणात् । ब्रह्मभूता बभूवुश्च कार्तिकव्रतपुण्यतः ॥१२॥ अतः कार्तिकमासस्थं व्रतं कार्यं विशेषतः । गणेशप्रीतये विप्र सर्वसिद्धिप्रदायकम् ॥१३॥ नियमेन समा भक्तिर्न भूता न भविष्यति । किंचिन्नियम-संयुक्तो गणेशं वशमानयेत् ॥१४॥ नियमेन कृतं किंचिद्गणेशप्रीतये नरैः । भवेत् कोटिगुणं विप्र सर्वसिद्धिप्रदायकम् ॥१५॥ कार्तिके स्नानमत्यंतं मुख्यं विघ्नेशसेवनम् । यथाशक्ति कृतं सर्वसिद्धिदं प्रभविष्यति ॥१६॥ करोति यः कार्तिके चेत् पंचकं गणपप्रियम् । स गणेशप्रियोऽत्यंतं भवत्यत्र न संशयः ॥१७॥ दानं होमादिकं किंचित् कार्तिकेऽनंतपुण्यदम् । भवेत्तु गणनाथाय चार्पितं कर्मजं फलम् ॥१८॥ बहुनात्र किमुक्तेन कार्तिके नमनं सकृत् । गणेशाय कृतं नित्यं तदक्षय्यप्रदं भवेत् ॥१९॥ इदं कार्तिकमासस्य माहात्म्यं कथितं मया । गणेशलोकदं पुण्यं इह सौख्यप्रदं परम् ॥२०॥ यः शृणोति नरो भक्त्या पठते भावसयुतः । सोऽपि कामानवाप्यैव गाणपत्यप्रियो भवेत् ॥२१॥ अन्यदेवपरा ये वै कार्तिकव्रतसंस्थिताः । तेषां लोकसुखं सर्वमंते भुंजंति निश्चितम् ॥२२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते कार्तिकमासमाहात्म्ये नानानियमनिरूपणं नाम द्वाविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । संक्षेपेण महाभाग मार्गशीर्षभवं परम् । माहात्म्यं वद सूत त्वं गणेशभक्तिदायकम् ॥१॥ सूत उवाच । अंधकासुरनामा वै दैत्यः परमदारुणः । जित्वा त्रिभुवनं सर्वं चकार राज्यमुत्तमम् ॥२॥ देवा वनस्थिताः सर्वे भययुक्ताः विशेषतः । वधार्थं तस्य चोद्युक्ता लेभिरे न किमप्यहो ॥३॥ ततः शंभुः परां चिंतामापेदे मुनिभिः सह । जगाम सहसा तत्र नारदः करुणानिधिः ॥४॥ तं दृष्ट्वा हर्षसंयुक्ता देवाः शंकरमुख्यकाः । पप्रच्छुस्ते महाभागं दुःखशोकयुताः परम् ॥५॥ श्रीशिव उवाच । अंधकेन जिताः सर्वे वयं योगींद्रसत्तम । गृहीतुं पार्वतीं पत्नीं भावार्थमुद्यतोऽभवत् ॥६॥ कर्मनाशप्रभावेणोपोषणेन समन्वितान् । देवांस्तान् रक्ष विप्रेश द्विजान् कर्मपरायणान् ॥७॥ अंधकस्य वधोपायं वद त्वं सर्ववित्तम । करिष्यामो वयं तं तु भक्तियुक्ता महामते ॥८॥ नारद उवाच । समीपे मार्गशीर्षस्तु संप्राप्तः सर्वसिद्धिदः । व्रतं मासात्मकं कार्यं गणेशप्रीतये त्वया ॥९॥ ततो व्रतप्रभावेण जेष्यसे दैत्यपुंगवम् । अंधकं नाम संदेहो विघ्नेशस्य प्रसादतः ॥१०॥ एवमुक्त्वा महायोगी नारदो गणपं स्मरन् । वीणागानरतो विप्र नत्वा तं स्वेच्छया ययौ ॥११॥ ततो देवगणैर्युक्तो मुनिभिः शंकरः स्वयम् । मार्गशीर्षभवं मुख्यं व्रतं चकार वैघ्नपम् ॥१२॥ गणेशपंचकं नित्यं सेवयामास यत्नतः । उषः स्नात्वा विशेषेण गणेशमभजत् प्रभुम् ॥१३॥ उपोषणसमायुक्तः शंकरोऽहर्निशं परम् । तमेव चिंतयन् भक्त्या ध्यानसंस्थो बभूव ह ॥१४॥ एवं मासव्रतं पूर्णं शिवः कृत्वा द्विजोत्तमान् । पूज्य भोज्य स्वयं देवश्चकार पारणं मुने ॥१५॥ ततो व्रतप्रभावेण संतुष्टो गणनायकः । आययौ शंकरं तत्र वरदानार्थमादरात् ॥१६॥ सिद्धिबुद्धियुतं वीक्ष्य मूषकोपरि संस्थितम् । विघ्नेशं हर्षसंयुक्तः शंकरः प्रणनाम तम् ॥१७॥ शिवः पूज्य गणाधीशं देवैर्मुनिभिरादरात् । तुष्टाव हृष्टरोमाऽसौ प्रबद्धकरसंपुटः ॥१८॥ श्रीशिव उवाच । गणेशाय नमस्तुभ्यं विघ्नराजाय ढुंढये । परेशाय च हेरंबाय पाशिने नमो नमः ॥१९॥ मूषकवाहनायैव नमः परशुपाणये । दंताभयधरायैव त्रिनेत्राय नमो नमः ॥२०॥ शूर्पकर्णाय वीराय चंद्ररेखाधराय ते । सिंदूरभूषणायैव रक्तांगाय ते नमः ॥२१॥ हेरंबाय महाविघ्नवारणाय गजानन । आदिपूज्याय सर्वेषां पूज्याय ते नमो नमः ॥२२॥ स्वानंदवासिने तुभ्यं स्वानंदमयमूर्तये । सर्वाकाराय सर्वेषां मात्रे पित्रे नमो नमः ॥२३॥ अनंतोदरभावाय ब्रह्मणां पतये नमः । ब्रह्मभूताय देवाय दैत्यदानवमर्दिने ॥२४॥ अनंतविभवायैव भक्तपालनधर्मिणे । अभक्तानां विनाशाय खेलकाय नमो नमः ॥२५॥ योगाय योगनाथाय योगिने योगदायिने । सदा शांतिस्वरूपाय शांतिशाताय ते नमः ॥२६॥

किं स्तौमि त्वां गणेशान ब्रह्मणस्पतिरूपिणम्। योगिनो वेदवेदांताः शांतिं यत्र भजंति च ॥२७॥ धन्योऽहं देवपैर्देवैर्मुनिभिर्गणनायक। दर्शनात्तेऽद्य पादस्य परात्परतरस्य च ॥२८॥ सामर्थ्यं देहि विघ्नेश ज्ञानरूपं त्वयि स्थितम्। आज्ञानांधकनाशार्थं भक्तिं तेऽव्यभिचारिणीम् ॥२९॥ एवमुक्त्वा ननर्नाऽसौ महादेवः सुरर्षिभिः। तं जगाद गणाधीशो भक्तं भक्तजनप्रियः ॥३०॥ श्रीगणेश उवाच। वज्रपंजरकं मे त्वं गृह्य दैत्येंद्रसत्तमम्। जहि ज्ञानमयं शंभो विजयी सर्वदा भव ॥३१॥ भक्तिं मदीयपादे त्वं लभसेऽनन्यवृत्तिजाम्। यद्यदिच्छसि तत्तत्ते सफलं तु भविष्यति ॥३२॥ त्वया कृतमिदं स्तोत्रं मदीयं यः पठेन्नरः। शृणुयात् स लभेत सर्वं वाञ्छितं सर्वदा शिव ॥३३॥ भुक्तिं मुक्तिं पुत्रपौत्रधनधान्यादिकं लभेत्। भक्तिं मे ब्रह्मभूतत्वं श्रवणान्नात्र संशयः ॥३४॥ सूत उवाच। एवं गणेशवाक्यं स श्रुत्वा हर्षसमन्वितः। शिवः प्रणम्य तं वाक्यं जगाद भक्तिलालसः ॥३५॥ श्रीशिव उवाच। वज्रपंजरकं नाथ ब्रूहि मे गणपप्रियम्। ज्ञानमयं महांधस्य नाशकं सुखदायकम् ॥३६॥ श्रीगणेश उवाच। आदौ नित्यविधिं कृत्वा पूजयित्वा गजाननम्। वज्रपंजरकं प्राज्ञं सर्वाज्ञानविनाशनम् ॥३७॥ त्रिनेत्रं गजास्यं चतुर्बाहुधारं परश्वादिशस्त्रैर्युतं भालचंद्रम्। नराकारदेहं सदा योगशांतं गणेशं भजे सर्ववंद्यं परेशम् ॥३८॥ एवं ध्यात्वा गणेशानं मानसैरुपचारकैः। पूजयेत्तं नमस्कृत्य धारयेद्वज्रपंजरम् ॥३९॥ बिंदुरूपो वक्रतुंडो रक्षतु मे हृदि स्थितः। देहांश्चतुर्विधांस्तत्वांस्तत्वाधारः सनातनः ॥४०॥ देहमोहयुतं ह्येकदंतः सोऽहं स्वरूपधृक्। देहिनं मां विशेषेण रक्षतु भ्रमनाशकः ॥४१॥ महोदरस्तथा देवो नानाबोधान् प्रतापवान्। सदा रक्षतु मे बोधानंदसंस्थो ह्यहर्निशम् ॥४२॥ सांख्यान् रक्षतु सांख्येशो गजाननः सुसिद्धिदः। असत्येषु स्थितं मां स लंबोदरश्च रक्षतु ॥४३॥ सत्सु स्थितं सुमोहेन विकटो मां परात्परः। रक्षतु भक्तवात्सल्यात् सदैकामृतधारकः ॥४४॥ आनंदेषु स्थितं नित्यं मां रक्षतु समात्मकः। विघ्नराजो महाविघ्नैर्नानाखेलकरः प्रभुः ॥४५॥ अव्यक्तेषु स्थितं नित्यं धूम्रवर्णस्वरूपधृक्। मां रक्षतु सुखाकारः सहजः सर्वपूजितः ॥४६॥ स्वसंवेद्येषु संस्थं मां गणेशः स्वस्वरूपधृक्। रक्षतु योगभावेन संस्थितो भवनायकः ॥४७॥ अयोगेषु स्थितं नित्यं मां रक्षतु गणेश्वरः। निवृत्तिरूपधृक् साक्षादसमाधिसुखे रतः ॥४८॥ योगशांतिधरो मां तु रक्षतु योगसंस्थितम्। गणाधीशः प्रसन्नात्मा सिद्धिबुद्धिसमन्वितः ॥४९॥ पुरो मां गजकर्णश्च रक्षतु विघ्नहारकः। वाह्न्यां याम्यां च नैर्ऋत्यां चिंतामणिर्वरप्रदः ॥५०॥ रक्षतु पश्चिमे दुंढिर्हेरंबो वायुदिक् स्थितम्। विनायकश्चोत्तरे तु प्रमोदश्चेशदिक् स्थितम् ॥५१॥ ऊर्ध्वं

सिद्धिपतिः पातु बुद्धीशोऽधः स्थितं सदा। सर्वांगेषु मयूरेशः पातु मां भक्तिलालसः ॥५२॥ यत्र तत्र स्थितं मां तु सदा रक्षतु योगपः। परशुपाशसंयुक्तो वरदाभयधारकः ॥५३॥ इदं गणपतेः प्रोक्तं वज्रपंजरकं परम्। धारयस्व महादेव विजयी त्वं भविष्यसि ॥५४॥ य इदं पंजरं धृत्वा यत्र कुत्र स्थितो भवेत्। न तस्य जायते क्वापि भयं नानास्वभावजम् ॥५५॥ यः पठेत् पंजरं नित्यं स ईप्सितमवाप्नुयात्। वज्रसारतनुर्भूत्वा चरेत् सर्वत्र मानवः ॥५६॥ त्रिकालं यः पठेन्नित्यं स गणेश इवापरः। निर्विघ्नः सर्वकार्येषु ब्रह्मभूतो भवेन्नरः ॥५७॥ यः शृणोति गणेशस्य पंजरं वज्रसंज्ञकम्। आरोग्यादिसमायुक्तो भवेत गणपप्रियः ॥५८॥ धनं धान्यं पशून् विद्यामायुष्यं पुत्रपौत्रकम्। सर्वसंपत्समायुक्तमैश्वर्यं पठनाल्लभेत् ॥५९॥ न भयं तस्य वज्रात्तु चक्राच्छूलाद्भवेत् कदा। शंकरादेर्महादेव पठनादस्य नित्यशः ॥६०॥ यं यं चिंतयते मर्त्यस्तं तं प्राप्नोति शाश्वतम्। पठनादस्य विघ्नेश पंजरस्य निरंतरम् ॥६१॥ लक्षावृत्तिभिरेवं स सिद्धपंजरको भवेत्। स्तंभयेदपि सूर्यं तु ब्रह्मांडं वशमानयेत् ॥६२॥ एवमुक्त्वा गणेशानोऽन्तर्दधे मुनिसत्तम। शिवो देवादिभिर्युक्तो हर्षितः संबभूव ह ॥६३॥ लक्षावृत्तिं चकारासौ यथाविधि परायणः। सिद्धपंजरको भूत्वा ययावंधकदैत्यपम् ॥६४॥ गणेशं मनसा ध्यात्वा कृत्वा युद्धं सुदारुणम्। त्रिशूलेनांधकं सोऽपि विव्याध गर्वसंयुतम् ॥६५॥ एवमंधकदैत्येशं जित्वा शंभुः प्रतापवान्। देवान् संस्थापयामास स्वस्थानेषु सुनिर्भयान् ॥६६॥ विश्वं स्वधर्मसंयुक्तं चकार शंकरः स्वयम्। मार्गशीर्षव्रतेनैव पंजरेण समन्वितः ॥६७॥ इदमंधकनाशाख्यं चरितं यः शृणोति वा। पठेद्वा स लभेत् प्रीतिं गणेशे सर्वसिद्धये ॥६८॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते मार्गशीर्षमासमाहात्म्ये वज्रपंजरकथनं नाम त्रयोविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच। भारद्वाजो द्विजः कश्चिन्नाम्ना साधुरिति स्मृतः। गणेशभजने प्रीतिसंयुक्तोऽभून्निरंतरम् ॥१॥ जगाम मुनिमुख्यं स एकदा भक्तिसंयुतः। भरद्वाजं प्रणम्यादौ पप्रच्छ विनयान्वितः ॥२॥ साधुरुवाच। गणेशप्राप्तये स्वामिन् वदोपायं सुसिद्धिदम्। येनात्मानं गणाधीशो दर्शयेन् मे महामुने ॥३॥ भरद्वाज उवाच। मार्गशीर्षव्रतं

पुत्र कुरु शीघ्रं समागमम् । तेन त्वं गणनाथस्य प्रियोऽत्यंतं भविष्यसि ॥४॥ एवमुक्त्वा भरद्वाजो कथयामास भावतः । विधियुक्तं व्रतं पूर्णं गणेशपंचकैर्युतम् ॥५॥ साधुस्तं तस्य तत्रस्थश्चकार व्रतमुत्तमम् । उपोषणपरो भूत्वा तोषयामास विघ्नपम् ॥६॥ समाप्तिसंभवे तत्र दिवसे गणनायकः । द्विजरूपधरो भूत्वा ययौ तस्याश्रमं शुभम् ॥७॥ उवाच तं महाभागं पूजांते मुनिमुख्यकम् । भोजनं देहि मे विप्र तृप्तिकारकमुत्तमम् ॥८॥ तथेति तं प्रणम्यादौ पुपूज भक्तिसंयुतः । भोजयामास भक्त्या स नानारसयुतान्नकैः ॥९॥ स भुक्त्वा सकलान्नं तमुवाच क्षुधितो भृशम् । देहि तृप्तिकरं भक्ष्यं व्रजामि विमुखो न चेत् ॥१०॥ श्रुत्वाऽतिविस्मयाविष्टो विचारमकरोद् हृदि । शतप्रस्थमितं चान्नं भक्षितं मे द्विजेन ह ॥११॥ तथापि तृप्तिहीनोऽयं स्थितः कुर्वे किमप्यहो । स्वयं मां छलितुं यातो गणेशो द्विजरूपधृक् ॥१२॥ पुराणेषु महाविप्रैः कथितं तृप्तिकारकम् । गणेशस्यैकदूर्वाया भक्षणं नात्र संशयः ॥१३॥ अत एवं करिष्यामि तृप्तं दूर्वासमन्वितः । एवं विचार्य साधुः स दूर्वां चिक्षेप चांधसि ॥१४॥ गणेशं हृदि संचिंत्य पायसं गृह्य सत्वरः । दूर्वया संयुतं तस्मै ददावन्नं सुभक्तितः ॥१५॥ तृप्तो द्विजः प्रसन्नात्मा तमुवाच सुहर्षितः । ज्ञातं भक्तिरहस्यं तु गणेशस्य त्वया मुने ॥१६॥ तेनाऽहं तृप्तिसंयुक्तः संशयो न कृतस्त्वया । वरं ब्रूहि महाभाग दास्यामि विनयान्न ते ॥१७॥ साधुरुवाच । यदि त्वं वरदो मेऽसि तदात्मानं प्रदर्शय । गणेशस्त्वं न संदेहो मम भाग्यात् समागतः ॥१८॥ तस्य तद्वचनं श्रुत्वा ब्राह्मणो गणपोऽभवत् । तं दृष्ट्वा हर्षितोऽत्यंतं साधुः साधुगुणान्वितः ॥१९॥ प्रणम्य पूजयामास तुष्टाव स कृतांजलिः । गणेशभक्तिसंयुक्तः साश्रुनेत्रो महायशाः ॥२०॥ साधुरुवाच । हेरंबाय नमस्तुभ्यं त्रिनेत्राय परात्मने । अनाकाराय देवाय साकराय नमो नमः ॥२१॥ लंबोदराय वीराय शूर्पकर्णाय ढुंढये । अनादये परेशाय गणेशाय नमो नमः ॥२२॥ स्वानंदवासिने तुभ्यं भक्तभावस्वरूपिणे । भक्तेशाय सुभक्त्या वै संतुष्टाय नमो नमः ॥२३॥ सर्वाकाराय सर्वादिपूज्याय परमात्मने । ब्रह्मेशाय गणानां ते पालकाय नमो नमः ॥२४॥ निराकाराय सर्वेषां पूज्याय परमप्रिय । विघ्नेशाय महाविघ्नहारिणे ते नमो नमः ॥२५॥ मात्रे पित्रे समस्तानां तत्त्वरूपाय ते नमः । ब्रह्मणे विष्णवे तुभ्यं शंकराय नमो नमः ॥२६॥ शक्तये सूर्यरूपायेंद्राय वायुस्वरूपिणे । चंद्राय वरुणायैव यमाय ते नमो नमः ॥२७॥ अग्नये नैर्ऋतायैव कुबेराय धराधर ।

नराय पशुरूपाय नमो नागासुराय ते ॥२८॥ चराचरमयायैव चराचरविवर्जित । समाय सहजायैव स्वसंवेद्याय ते नमः ॥२९॥ योगाय शांतिनाथाय शांतिदाय नमो नमः । किं स्तौमि त्वां गणाधीश योगाकार नमो नमः ॥३०॥ धन्योऽहं सर्वभावेन तवांघ्रियुगदर्शनात् । वरं देहि गणेशान तव भक्तिं दृढात्मिकाम् ॥३१॥ एवं स्तुत्वा गणाधीशं साधुस्तं प्रणनाम च । तमुवाच गणेशानो भक्तं भक्तजनप्रियः ॥३२॥ श्रीगणेश उवाच । मदीया भक्तिरुग्रा ते भविष्यति महामते । यद्यदिच्छसि तत्तत्ते सफलं प्रभविष्यति ॥३३॥ त्वया कृतं मदीयं यत् स्तोत्रं भक्तिविवर्धनम् । भविष्यति महाभाग पठतां शृण्वतां सदा ॥३४॥ सर्वसिद्धिप्रदं पूर्णं मत्प्रसादादिदं परम् । नानाकार्यकरं भावि अंते स्वानंददायकम् ॥३५॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः । साधुस्तं हृदि सं ध्यात्वाऽभवत्तत्रैव संस्थितः ॥३६॥ एवं नाना जना विप्र सिद्धिं प्राप्ता विशेषतः । मार्गशीर्षव्रतेनैव गाणपत्यपरायणाः ॥३७॥ अन्यच्च शृणु विप्रेंद्र चरित्रं सर्वसिद्धिदम् । मार्गशीर्षभवं चित्रं श्रवणात् पठनान्नृणाम् ॥३८॥ एकः कैवर्तकः कश्चिन्नाम्ना शंबुरिति स्मृतः । स मार्गशीर्षमाहात्म्यं शुश्राव गणपाश्रितम् ॥३९॥ समागते मार्गशीर्षे स्नानं कृत्वा महामतिः । गणेशं प्रणनामाऽथ नित्यं कुटुंबपोषकः ॥४०॥ ततः परं नृपस्यैव चकार सेवनं सदा । पौषे मृतश्च तं धृत्वा गाणेशाः स्वपदं ययुः ॥४१॥ तत्र विघ्नेश्वरं दृष्ट्वा ब्रह्मभूतो बभूव ह । मार्गशीर्षव्रतं तेन कृतमंशप्रकारतः ॥४२॥ तदपि ब्रह्मभूतः स बभूव व्रतसेवनात् । एवं नाना जना ब्रह्मन् सिद्धिं प्राप्ता व्रतेन वै ॥४३॥ इह भुक्त्वाऽखिलान् भोगानंते स्वानंदगामिनः । किंचिन्नियमसंयुक्ताः किं पुनर्विधिचारिणः ॥४४॥ इदं यः शृणुयान्नित्यं मार्गशीर्षे नरोत्तमः । पठेत् स सिद्धिसंयुक्तो भविष्यति निरंतरम् ॥४५॥ मार्गशीर्षव्रतस्यैव माहात्म्यं लेशतो मया । कथितं किं पुनः श्रोतुमिच्छसि मुनिसत्तम ॥४६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते मार्गशीर्षमासमाहात्म्यसाधुचरितवर्णनं नाम चतुर्विंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । माघमासव्रतं ब्रूहि गणेशप्रीतिवर्धनम् । न तृप्यामि कथां शृण्वन् गाणेशीं सर्वसिद्धिदाम् ॥१॥ सूत उवाच । प्रह्लादस्य महातेजाः पुत्रोऽभूद्दैत्यपालकः । विरोचनः समाख्यातः तेजस्विनां शिरोमणिः ॥२॥ स शुक्रमुपसंगम्य प्रणम्य मुनिसत्तमम् । जगाद दुःखसंयुक्तो निःश्वस्यासुरनायकः ॥३॥ विरोचन उवाच । दैत्या देवार्दिताः स्वामिंस्तिष्ठंति भयसंकुलाः । पातालेषु ततो मह्यं शाधि तेषां हिताय भोः ॥४॥ शुक्र उवाच । आकृष्णेनेति मंत्रेण सूर्यमाराधय प्रभुम् । तेन त्वं दानवानां तु पालकः प्रभविष्यसि ॥५॥ तं प्रणम्य महाबाहुर्विरोचनः प्रतापवान् । कामं वनं समाश्रित्य तताप परमं तपः ॥६॥ ध्यात्वा रविं विशेषेणार्घ्यदानं तु चकार ह । उपस्थानपरो भूत्वा सूर्यमाराधयत् सदा ॥७॥ दिव्यवर्षसहस्रेण प्रसन्नः सविता ययौ । वरं दातुं महातेजा विरोचनाश्रमं मुने ॥८॥ तमागतं समालोक्य ननाम ह विरोचनः । पूज्य तुष्टाव देवेशमथर्वशिरसा प्रभुम् ॥९॥ तुष्टो भानुरुवाचेदं वाक्यं भक्तवरप्रदः । वरं ब्रूहि महादैत्य मनसीप्सितमुत्तमम् ॥१०॥ विरोचन उवाच । सर्वेभ्यो मरणं नाथ न भवेत् मे दिवाकर । चराचरमयेभ्यश्च राज्यं देहि त्रिलोकजम् ॥११॥ विस्मितः सविता तस्मै ददौ स्वमुकुटं परम् । जगाद भावगंभीरो वचनं जगदीश्वरः ॥१२॥ भानुरुवाच । मस्तके धारयस्वैनं तेन मृत्युविवर्जितः । भविष्यसि यदाऽन्यस्य हस्तः शिरसि नो पतेत् ॥१३॥ परहस्तः स्पृशेद्दैत्य मस्तके चेत् मरिष्यसि । यदा मुकुटहीनो ते सावधानस्ततो भव ॥१४॥ राज्यं त्रैलोक्यसंभूतं दत्तं तुभ्यं मयाऽधुना । यद्यदिच्छसि तत्तत्ते सफलं प्रभविष्यति ॥१५॥ एवमुक्त्वांऽतर्दधेऽसौ भानुः सर्वार्थकोविदः । विरोचनः प्रसन्नात्मा स्वगृहं प्रययौ ततः ॥१६॥ ततः शुक्रेण दैत्येशोऽभिषिक्तो राज्यकर्मणि । दैत्यैः समावृतः सोऽपि जिग्ये भूमिं महाबलः ॥१७॥ ततः शेषं विनिर्जित्य ययौ स ह्यमरावतीम् । देवेंद्रं वशमानाय्य विकुंठमगमत्ततः ॥१८॥ विष्णोर्विरोचनस्यैव युद्धं बभूव दारुणम् । जित्वा विष्णुं महादैत्यो हर्षितः संबभूव ह ॥१९॥ विष्णुना संयुता देवाः पपलुर्वनमाश्रिताः । दैत्याः स्वर्गभुजः सर्वे कृतास्तेन महात्मना ॥२०॥ ततः स दैत्यपान् स्थाप्य विकुंठादिपदेषु च । आययौ नगरं स्वीयं दैत्यवृंदसमन्वितः ॥२१॥ ततः स दैत्यपैर्युक्तो भोगान्नानाविधान् परान् । बुभुजे पापसंनिष्ठः स्त्रीमांसादिषु लोलुपः ॥२२॥ ततो बहौ गते काले दैत्येशैः प्रेरितः खलः । कर्म वर्णाश्रमस्थं स खंडयामास भूतले ॥२३॥ आसुरं कर्म सर्वत्र कारयामास मानवैः । ततो हाहाकृतं सर्वैर्मुने त्रैलोक्यवासिभिः ॥२४॥ एवं बहौ गते काले देवाश्चोपोषणान्विताः । मुनिभिः केशवं सर्वे तुष्टुवुस्तद्वधाय तम् ॥२५॥

सोऽपि निःश्वस्य देवेशो विचारमकरोत् हृदि । नावाप दैत्यनाशार्थं स्वयं खिन्नो बभूव ह ॥२६॥ ततो विघ्नेश्वरं विष्णुः सस्मार दुःखमुक्तये। गणेशकृपया तत्राऽऽजगाम देवलो मुनिः ॥२७॥ तं प्रणम्यामराः सर्वे पप्रच्छुः कार्यसिद्धये। विरोचनवधार्थाय तानुवाच स हर्षितः ॥२८॥ समीपे ह्यधुना प्राप्तो मासो माघः सुपुण्यदः। तत्र स्नानसमायुक्ताः सेवध्वं गणनायकम् ॥२९॥ एवमुक्त्वा महायोगी देवलोऽकथयत् परम्। विधिं माघभवं सर्वं गाणेशपंचकात्मकम् ॥३०॥ उपदिश्य व्रतं योगी ययौ स्वेच्छापरायणः। देवलः केशवाद्याश्च गणेशभजने रताः ॥३१॥ माघमासव्रतं चक्रुर्गाणेशं सर्वसिद्धिदम्। यथाशास्त्रं विधानेन विघ्नेशमभजत् परम् ॥३२॥ संपूर्णे तद्व्रते तत्र खवाणी तानुवाच ह। विष्णो स्त्रीवेषगो भूत्वा जहि दैत्यं महाबलम् ॥३३॥ गणेशं मनसि स्मृत्वा गच्छ तं दैत्यनायकम्। तवाधीनो महादैत्यो भविष्यति विरोचनः ॥३४॥ श्रुत्वाऽतिहर्षिता देवास्तुष्टुवुर्गणनायकम्। ततो विष्णुं महाभागाः प्रेरयामासुरादरात् ॥३५॥ गच्छ गच्छ महाविष्णो जहि दैत्यं महाबलम्। चराचरं सदा हर्षयुक्तं कुरु जनार्दन ॥३६॥ तथेति तानुवाचाथ विष्णुर्ध्यात्वा गजाननम्। स्त्रीरूपः प्रययौ तत्र यत्र दैत्याधिपोऽभवत् ॥३७॥ पुष्पवृक्षयुतायां स वाटिकायां स्थितोऽभवत्। तत्र नारायणं दैत्या ददृशुः स्त्रीस्वरूपिणम् ॥३८॥ मोहितास्तां समागम्य पप्रच्छुर्विनयान्विताः। काऽसि कस्याऽसि रंभोरु किमर्थं त्वागता वद ॥३९॥ आज्ञां कुरु महाभागे वयं दासा न संशयः। तव पादस्य वामाक्षि पश्य सर्वान् शुचिस्मिते ॥४०॥ एवं तेषां वचः श्रुत्वा तान् जगाद सुरूपिणी। हावभावसमायुक्ता मोहिनी मोहकारिणी ॥४१॥ मोहिन्युवाच। अहं स्वेच्छामयी रम्या तावृता स्वेच्छया गता। मोहिनी सर्वविख्याता चरामि ह्यकुतोभया ॥४२॥ विश्वस्य नायकः कोऽपि भविष्यति महाबलः। वरिष्यामि पतिं दैत्या नान्यं गच्छत मा चिरम् ॥४३॥ तस्यास्तद्वचनं श्रुत्वा क्षुभिता दैत्यदानवाः। तेषु केचिद्ययुस्तत्र विरोचनं मदान्वितम् ॥४४॥ तं प्रणम्य महात्मानं जगुर्वृत्तांतमादरात्। श्रुत्वा सोऽपि महामोहयुक्तो बभूव तत्क्षणात् ॥४५॥ गणेशमायया भ्रांतः प्रययौ तामनिंदिताम्। विरोचनो महादैत्यः संवृतस्तां ददर्श ह ॥४६॥ समागतं महादैत्यं दृष्ट्वा विष्णुः प्रहर्षितः। सस्मार गणपं चित्ते ध्यात्वा तत्रैव संस्थितः ॥४७॥ ततो गणेश्वरः साक्षात्तयोर्हृदि व्यवस्थितः। बुद्धिभेदं चकारासौ तादृशौ तौ बभूवतुः ॥४८॥ अथो विरोचनो देवीं दृष्ट्वा मोहयुतोऽभवत्। समीपे प्रययौ तस्या एकाकी हर्षसंयुतः ॥४९॥ तामुवाच महादैत्यो विनयेन समन्वितः। कृत्वा करपुटं विप्र महामायाप्रमोहितः ॥५०॥ विरोचन उवाच।

ब्रह्मविष्णुमहेशेंद्राद्या जिताः सचराचराः । मया ब्रह्मांडनाथेन तव दासेन भामिनि ॥५१॥ तवाज्ञावशगोऽहं तु भविष्यामि निरंतरम् । पत्नी भव मदीया त्वं गृहमागच्छ मे प्रिये ॥५२॥ एवं तस्य वचः श्रुत्वा तमुवाच सुमोहिनी । यदा वचोऽन्यथा मे त्वं करिष्यसि त्यजाम्यहम् ॥५३॥ तथेति तां समागृह्य ययौ स्वगृहमुत्तमम् । तन्निष्ठस्तत्परः सोऽपि बभूव समीपस्थितः ॥५४॥ नानाचातुर्यभावेन मोहयामास तं हरिः । मोहिनीरूपसंस्थश्च खलं यमितुमुद्यतम् ॥५५॥ तमुवाच महाभागा मोहिनी सर्वमोहिनी । अभ्यंगं कुरु नाथ त्वं मद्धस्तेन महामते ॥५६॥ पश्चात् स्नानं च कृत्वा तु भोजनं कुरु सुव्रत । ततो मां स्पृश दैत्येंद्र तवाधीनां निरंतरम् ॥५७॥ गणेशमायया भ्रांतस्तामुवाच तथेति सः । सुवासितेन तैलेनाभ्यंगं कर्तुं समुद्यतः ॥५८॥ प्रगृह्य मोहिनी तैलमुत्तार्य मुकुटं परम् । मस्तकात्तस्य हस्ताभ्यां मूर्ध्नि हृष्टा व्यमर्दयत् ॥५९॥ हस्तयोः स्पर्शमात्रेण शतचूर्णोऽभवत्तदा । मस्तकस्तस्य दैत्यस्य मोहिनी हर्षिताऽभवत् ॥६०॥ जय लंबोदरेत्युक्त्वाऽन्तर्दधे सा तु मोहिनी । दैत्या मृतं समालोक्य विविशुस्ते रसातलम् ॥६१॥ देवर्षिभिस्ततो विष्णुः स्वलोकमगमच्च तैः । स्वस्वधर्मयुतान् लोकान् कारयामास माधवः ॥६२॥ एवं माघव्रतेनैव गाणेशेन जनार्दनः । जघान दैत्यनाथं तं त्रैलोक्यजयकारिणम् ॥६३॥ इदं यः शृणुयात् जंतुः पठेद्वा गणपं स्मरन् । स सर्वसुखसंयुक्तो भविष्यति निरंतरम् ॥६४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते माघमासमाहात्म्ये विरोचनवधो नाम पंचविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । मौद्गलो ब्राह्मणः कश्चिन्नाम्ना विश्वसहोऽभवत् । गाणपत्यप्रियोऽत्यंतं सदा सत्संगलालसः ॥१॥ स कदाचिन् महाभागो माघव्रतपरोऽभवत् । गाणेशपंचकं नित्यमसेवद्भक्तिसंयुतः ॥२॥ प्रातः काले समुत्थाय स्नानार्थं चागतं द्विजम् । तत्रैका राक्षसी घोरा तं दृष्ट्वा भक्षितुं ययौ ॥३॥ विकरालमुखीं तां स दृष्ट्वा भयसमन्वितः । गणेशेति समुच्चार्य जलं चिक्षेप दूर्वया ॥४॥ दूर्वायुक्तं जलं तस्या देहे लग्नं महामुने । तेन शुद्धा विश्वसहं ननामैव जगाद ह ॥५॥ राक्षस्युवाच । अहं त्वां शरणं प्राप्ता तारयस्व भवार्णवात् । तव दर्शनमात्रेण जाताऽहं शुद्धमानसा ॥६॥

तस्यास्तद्वचनं श्रुत्वा रुदतीं दुःखसंयुताम् । उवाच दयया युक्तो विश्वसहः प्रतापवान् ॥७॥ विश्वसह उवाच । काऽसि त्वं वद पापिष्ठे कर्म किं पापरूपकम् । कृतं त्वया महाघोरं किं रोदिषि सुदुःखिता ॥८॥ राक्षस्युवाच । पूर्वजन्मनि विप्रेश ब्राह्मण्यहं सुरूपिणी । पातिव्रत्यं परित्यज्य देहभोगयुताऽभवम् ॥९॥ यथेष्टं विषये सक्ताऽऽचरं पापपरायणा । मृता यामैर्हता तत्र यातनायां स्थिताऽभवम् ॥१०॥ भुक्त्वा दुःखमपारं तु कृता राक्षस्यहं पुनः । सदा क्षुधा समाविष्टा अभ्रमं यत्र तत्र ह ॥११॥ नीचोच्चमांसमत्यंतमभक्षं नित्यमेव च । तथापि मां पिपीडासौ जठराग्निः समुत्थितः ॥१२॥ अपारं भक्षयाम्येव तथापि क्षुधया युता । विप्रजन्मन आरभ्य न तृप्ताहं कदाऽभवम् ॥१३॥ अधुना त्वां समालोक्य भक्षितुं सहसाऽऽगता । जलस्पर्शेन ते तात जातिस्मरा भवाम्यहम् ॥१४॥ तारयस्व महाभाग त्वं समर्थो न संशयः । नोचेद्देह-परित्यागं करिष्यामि त्वदग्रतः ॥१५॥ तस्यास्तद्वचनं श्रुत्वा विश्वसहो महामतिः । विचार्य दयया युक्तः तां जगाद प्रहर्षितः ॥१६॥ विश्वसह उवाच । गणेशनाममाहात्म्यं कथयितुं न शक्यते । मया श्रुतं पुराणेषु सत्यमेव तदंजसा ॥१७॥ दूर्वायुक्तजलेन त्वं कृता जातिस्मराऽधुना । अधुना तारणार्थं ते ददामि पुण्यमुत्तमम् ॥१८॥ माघस्नानभवं पुण्यमेकाहेन समुद्भवम् । ददामि त्वां महाभाग गच्छ त्वं नगरं निजम् ॥१९॥ एवमुक्त्वा ददौ तस्यै पुण्यं हस्तजलेन सः । एकस्नानभवं पूर्णं माघमासे स मौद्गलः ॥२०॥ ततो गणेश्वरस्यैव दूतास्तत्र समाययुः । तां विमाने विनिक्षिप्य ययुः स्वानंदकं पुरम् ॥२१॥ तत् दृष्ट्वा परमाश्चर्यं विश्वसहो महामुनिः । स्नानं कृत्वा ययौ स्नानमभजद्गणनायकम् ॥२२॥ समाप्ते तद्व्रते तत्राऽऽययौ विनायकः प्रभुः । वरं दातुं द्विजायैव मौद्गलाय विशेषतः ॥२३॥ समागतं गणाध्यक्षं दृष्ट्वोत्थाय ननाम तम् । संभ्रमेण समायुक्तो ननर्त प्रेमविह्वलः ॥२४॥ तं तादृशं समालोक्य जगाद द्विरदाननः । वरान् वृणु महाभाग दास्यामि मनसीप्सितान् ॥२५॥ गणेशवचनं श्रुत्वा प्रतिबुद्धो महामुनिः । जगाद तं प्रपूज्यैव हर्षं संयम्य शौनक ॥२६॥ विश्वसह उवाच । धन्यं मे जन्मकर्मादि जनकौ श्रुतमेव च । धन्यं माघव्रतं मुख्यं येन दृष्टो गजाननः ॥२७॥ त्वां वेदाः सोपनिषदो न जानंति गणेश्वर । योगिनः शंकराद्याः स कथं त्वं स्वयमागतः ॥२८॥ कृतकृत्योऽहमत्यंतं त्वदंघ्रियुगदर्शनात् । किं वृणोमि गणेशान भक्तिं देहि दृढां त्वयि ॥२९॥ विघ्नेशाय नमस्तुभ्यं परात्परतमाय च । हेरंबाय गणेशाय गणानां पतये नमः ॥३०॥ मायाकारशरीराय मायिकशिरसे नमः । तयोर्योगे

सुदेहाय गजानन नमोऽस्तु ते ॥३१॥ राजसाय नमस्तुभ्यं सृष्टिकर्त्रे कृपालवे । सात्त्विकाय सदा सर्वपालकाय नमो नमः ॥३२॥ तामसाय जनानां तु संहर्त्रे कालरूपिणे । कर्मणे त्रिस्वरूपाय नमोऽहंकृतिधारिणे ॥३३॥ चालकाय महामोहदायिने शक्तिरूपिणे । गुणेशाय गुणानां वै सत्ताधाराय ते नमः ॥३४॥ बिंदुमात्रशरीराय सोऽहंकाराय देहिने । बोधाय प्रकृतिस्थाय खेलकाय नमो नमः ॥३५॥ विदेहाय परेशाय स्वानंदाय नमोऽस्तु ते । अयोगाय सुशांताय योगेशाय नमो नमः ॥३६॥ किं स्तौमि त्वां गणाध्यक्ष योगशांतिस्वरूपिणम् । तव दर्शनजेनैव बोधेन स्तुतवानहम् ॥३७॥ एवमुक्त्वा विश्वसहो ननामैव गजाननम् । तमुत्थाप्य गणाधीशस्तं जगाद हितं वचः ॥३८॥ श्रीगणेश उवाच । त्वया कृतं मदीयं तु स्तोत्रं सर्वप्रदं भवेत् । पठतां शृण्वतां नित्यं भक्तिवर्धनमुत्तमम् ॥३९॥ यं यमिच्छति तं तं तु दास्यामि स्तोत्रपाठतः । भुक्ति-मुक्तिप्रदं ब्रह्मदायकं श्रवणाद्भवेत् ॥४०॥ मयि भक्तिर्दृढा ते वै भविष्यति सुखप्रदा । यद्यदिच्छसि तत्तत्ते सफलं ह्यस्तु सर्वदा ॥४१॥ एवमुक्त्वा गणाधीशोऽन्तर्दधे तस्य पश्यतः । विश्वसहो गणेशस्य भजने तत्परोऽभवत् ॥४२॥ गाणपत्याग्रणीः सोऽपि बभूव मुद्गलोपमः । सदा माघव्रते संस्थो गाणेशपंचके रतः ॥४३॥ अन्यच्छृणु महच्चित्रं चरित्रं माससंभवम् । सर्वपापहरं विप्र श्रवणात् सुखदं भवेत् ॥४४॥ चांडालः कोऽपि नीलाख्यः श्रुत्वा गणपतेः कथाम् । माघस्नानपरो भूत्वा व्यवसायं चकार ह ॥४५॥ स्नात्वा प्रातस्ततः सोऽपि व्यवसायपरोऽभवत् । रात्रौ गीतं गणेशस्य गायति स्म निरंतरम् ॥४६॥ एवं गीतं माघमासे गणेशं देवमंदिरे । गत्वा गायन् पुनः सोऽपि कुटुंबभरणे रतः ॥४७॥ एकदा कार्यसंस्थः स माघमासे बभूव ह । याममात्रगतायां तु ययौ रात्रौ गणेश्वरम् ॥४८॥ प्रणम्य विघ्नहर्तारं गीतं गीत्वा स्वमंदिरम् । जगाम मार्गमध्यस्थं पिशाचाः पंच तं ययुः ॥४९॥ दृष्ट्वा क्रूरतरांस्तान् स सस्मार गणनायकम् । गणेशस्मृतिमात्रेण पिशाचाः स्तंभिता बभुः ॥५०॥ ततोऽतिविस्मिताः सर्वे पिशाचास्तमलोकयन् । अवलोकनपुण्येन शुद्धांतरा बभूविरे ॥५१॥ जगुस्तं नीलकं वाक्यं पिशाचा दुःखसंयुताः । तारयस्व महाभाग संसारात्रः पिशाचकान् ॥५२॥ तव दर्शनमात्रेण शुद्धा जाता वयं किल । तव गानफलं देहि तेन मुक्ता भवामहे ॥५३॥ तेषां तद्वचनं श्रुत्वा हर्षयुक्तो जगाद तान् । नीलः परमभावज्ञः पिशाचान् पापनिश्चयान् ॥५४॥ नील उवाच । गणेशगीतसंभूतं फलं वो न ददाम्यहम् । एकगीतफलेनैवोद्धरिष्यति चराचरम् ॥५५॥ अत एकस्य पादस्य फलं दास्यामि शाश्वतम् । तेन मुक्ता भवंतोऽपि भविष्यंति न संशयः ॥५६॥ एवमुक्त्वा ददौ

तेभ्य एकगीतस्य पादजम् । फलं तेनाऽभवन् सर्वे दिव्यदेहधरा मुने ॥५७॥ विमानेषु समारुह्य गताः स्वानंदके पुरे । चांडालो विस्मितो नीलः स्वगृहं प्रययौ ततः ॥५८॥ ततोऽधिकां गणेशस्य भक्तिं चक्रे महामुने । अंते गणेश्वरं सोऽपि ययौ कोटिकुलैः सह ॥५९॥ एवमेकात्मकेनैव नियमेन विशेषतः । माघमासे गणेशानं प्रापुश्चानंतजंतवः ॥६०॥ माघमासभवं चित्रं व्रतजं कथितं मया । माहात्म्यं श्रवणान्नृभ्यः पठनाद्भुक्तिमुक्तिदम् ॥६१॥ धनधान्यप्रदं पुत्रपौत्रसौभाग्यवर्धनम् । नानारोगहरं सद्यः किं भूयः श्रोतुमिच्छसि ॥६२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते माघमासमाहात्म्ये नानाजनोद्धरणं नाम षड्विंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । वैशाखस्यैव माहात्म्यं श्रावणस्य वद प्रभो । मलमासस्य चित्रं त्वं सूत सर्वार्थकोविद ॥१॥ सूत उवाच । वृत्रासुरो महादैत्यो जित्वा त्रैलोक्यमोजसा । कर्मखंडनमार्गेण देवान् हंतुं समुद्यतः ॥२॥ ततो देवगणाः सर्वे भयभीता बभूविरे । शरणं स्वगुरुं जग्मुरुपोषणपरायणाः ॥३॥ तानुवाच महातेजा बृहस्पतिरुदारधीः । सेंद्रान् वैशाखजं देवाः कुरुध्वं व्रतमुत्तमम् ॥४॥ तेन व्रतप्रभावेण समर्थः सुरनायकः । दधीच्यस्थिजवज्रेण हनिष्यति महासुरम् ॥५॥ सुरर्षयस्ततस्ते तं नमस्कृत्य ययुर्वनम् । गुप्तरूपेण वैशाखव्रतं चक्रुः प्रहर्षिताः ॥६॥ गाणेशपंचकं नित्यं सिषेविरे सुरर्षयः । गणेशस्मरणं ध्यानं चक्रुः परमभाविकाः ॥७॥ वैशाखी पूर्णिमायां ते स्वप्ने सर्वसुखावहम् । ददृशुर्गणराजं वै मूर्तिस्थं पूजने रताः ॥८॥ मूर्तिस्तान् प्रत्युवाचेदं वाक्यं वाक्यविशारदा । इंद्रदेहं समाश्रित्य हनिष्यामि महासुरम् ॥९॥ अमरा मुनयः सर्वे प्रबुद्धा विस्मिता जगुः । परस्परं विचार्यैवं सर्वैकस्वप्नभावनः ॥१०॥ ततः क्रोधसमायुक्तो बभूव देवनायकः । देवान् गृह्य ययौ तत्र दधीचिं मुनिभिः पुरा ॥११॥ तं प्रार्थ्य वज्रमादाय तदस्थिजं महाबलः । देवैः समावृतो युद्धं वज्रेणैव चकार सः ॥१२॥ वृत्रेंद्रयोर्महद्युद्धं देवानां दैत्यपैः सह । बभूव दारुणं विप्र मया वक्तुं न शक्यते ॥१३॥ इंद्रो गणपतिं स्मृत्वा तं वज्रेण महासुरम् । जघान तं मृतं दृष्ट्वा दैत्याः पातालमाविशन् ॥१४॥ देवा हर्षसमायुक्ता ब्रह्मणा गणपं पुनः ।

बदरारण्यदेशस्थं समाजग्मुः प्रतुष्टुवुः ॥१५॥ देवर्षय ऊचुः । नमो नमस्ते परमात्मने वै सदा गणानां पतये गणात्मने । अनंतमायामयखेलकारिणे परेश ब्रह्मेश नमो नमस्ते ॥१६॥ नमस्तुभ्यं महाविघ्ननाशनाय महात्मने । विघ्नेशाय सुभक्तानां पालकाय नमो नमः ॥१७॥ हेरंबाय महादीनपालकाय च ढुंढये । लंबोदराय देवाय देवदेवेश ते नमः ॥१८॥ अनाथानां प्रणाथाय नाथहीनाय ते नमः । नाथानां नाथरूपाय वक्रतुंडाय वै नमः ॥१९॥ परात्परतमायैव योगशांतिप्रदाय ते । योगानां पतये तुभ्यं नमो योगाय ते नमः ॥२०॥ सगुणाय नमस्तुभ्यं निर्गुणाय नमो नमः । सगुणनिर्गुणाभ्यां च वर्जिताय नमो नमः ॥२१॥ अनंतमायया देव चारिणे ते नमो नमः । मायाहीनाय मायायै मायिनां मोहकारिणे ॥२२॥ मूषकोपरि संस्थाय मूषकध्वजधारिणे । सिद्धिबुद्धिपते तुभ्यं स्वानंदस्थाय ते नमः ॥२३॥ किं स्तुमस्त्वां गणाध्यक्ष शांतिरूपं परात्परम् । वेदादयः समर्था न योगिनः शास्त्रसंयुताः ॥२४॥ एवमुक्त्वा प्रणेमुस्तं देवर्षयो महामुने । स्वस्वस्थानं ययुः सर्वे हर्षयुक्तेन चेतसा ॥२५॥ वर्णाश्रमयुता लोका बभूवुर्विगतज्वराः । सर्वे देवर्षयस्तत्र भागयुक्ता बभूविरे ॥२६॥ एवं वैशाखमासस्य व्रतेन देवनायकः । हत्वा वृत्रासुरं विप्र देवैः सुखयुतोऽभवत् ॥२७॥ अन्यच्च शृणु माहात्म्यं वैशाखव्रतसंभवम् । सर्वपापहरं दुःखनाशनं श्रवणान्नृणाम् ॥२८॥ गार्ग्यः कोऽपि द्विजो नाम्ना शिवदत्तो बभूव ह । स गणेशपरो नित्यमभजद्गणनायकम् ॥२९॥ स्वधर्मसंयुतो नित्यं भार्यापुत्रसमन्वितः । अग्निहोत्रपरो भूत्वाऽतिष्ठत् स्वतेजसा युतः ॥३०॥ तत्रागतं स योगींद्रं गर्गं सर्वार्थकोविदम् । तं प्रणम्य महाभागं शिवदत्तः पुपूज ह ॥३१॥ नित्यं सेवापरं दृष्ट्वा सुतं विनयसंयुतम् । मुक्तिमिच्छंतमत्यंतं गर्गः संहर्षितोऽभवत् ॥३२॥ उवाच शिवदत्तं स पुत्र वाञ्छसि किं वद । तत्करिष्यामि ते शीलसंतुष्टोऽहं न संशयः ॥३३॥ तस्य तद्वचनं श्रुत्वा शिवदत्तः कृतांजलिः । तं प्रणम्य महात्मानं जगाद सुखदं वचः ॥३४॥ शिवदत्त उवाच । गुह्यं वेदरहस्यं मे वद योगींद्रसत्तम । येनाहं कृतकृत्यश्च भविष्यामि सुसेवनात् ॥३५॥ गर्ग उवाच । लक्षचतुरशीतिषु योनिषु मानवात्मिका । योनिः श्रेष्ठा महाभाग सुज्ञो यदुद्भवो भवेत् ॥३६॥ धर्मार्थकाममोक्षाणां ब्रह्मभूयस्य सर्वदा । पात्रता तस्य संभूता तस्माच्छ्रेष्ठं न विद्यते ॥३७॥ तेषु ब्राह्मणवर्णस्थः श्रेष्ठः शास्त्रेषु संमतः । सर्वकर्माधिकारित्वात्तेषु शास्त्रज्ञ एव च ॥३८॥ तेषु स्वधर्मसंयुक्तोऽधिकस्तेषु तपोयुतः । तेषु ज्ञानी महाश्रेष्ठः सर्वत्रात्मप्रदर्शनात् ॥३९॥ तेषु योगी विशेषेणाधिकस्तेषु महामते । गाणपत्योऽधिको योगी परस्तस्मान्न विद्यते ॥४०॥ यत्र तत्राऽपि

वर्णस्थो गाणपत्योऽधिको मतः। योगी वेदादिषु प्रोक्तं पश्य संशयनाशनम् ॥४१॥ इदं वेदांतसंभूतं सारं ते संप्रकाशिनम्। तस्माद्भज गणेशानं कृतकृत्यो भविष्यसि ॥४२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते वैशाखमासमाहात्म्ये शिवदत्तबोधो नाम सप्तविंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शिवदत्त उवाच । वद तात महायोगिन् सर्वसंशयनाशकृत्। योगिनः प्रवदंतीह नानामतयुतं वचः ॥१॥ केचिच्छिवं तथा विष्णुं रविं शक्तिं गणेश्वरम्। कर्मज्ञानं विदेहं चात्मानं श्रेष्ठं वदंति च ॥२॥ योगं सांख्यमथाऽनंदमव्यक्तं बोधसंज्ञितम्। अन्नं प्राणं मनो योगिन्नित्यादिबहवो मताः ॥३॥ श्रेष्ठं गणेश्वरं त्वं तु वदसे सर्वभावतः। सर्वमान्यं वद स्वामिंस्त्वमस्माकं परा गतिः ॥४॥ गर्ग उवाच। अत्र ते वर्णयिष्यामि चेतिहासं पुरा भवम्। शृणुष्वैकमना वत्स सर्वमान्यं वचो महत् ॥५॥ एकदा नैमिषारण्ये यज्ञं चकार हर्षतः। वसिष्ठस्तत्र विप्रेंद्रा देवेंद्राश्च समायुयः ॥६॥ नानावर्णाश्रमप्रज्ञाः श्रेष्ठाः त्रैलोक्यवासिनः। आययुर्हर्षसंयुक्ता वसिष्ठस्य महोत्सवे ॥७॥ योगिनः शुकमुख्याश्च नागाः शेषादयोऽपरे। सर्वे संमिलितास्तत्र कथां चक्रुः परस्परम् ॥८॥ तत्र वेदांतवादेषु कुशला अवदन् मिथः। नानामतसमायुक्ताः श्रेष्ठं स्वस्वमते स्थिरम् ॥९॥ नानावादपराः सर्वे निश्चयं नैव लेभिरे। ततः शुकं नमस्कृत्योचुः सर्वे शांतिधारकम् ॥१०॥ सर्वश्रेष्ठा ऊचुः। भगवन् सर्वसारज्ञ योगींद्रेषु महामते। श्रेष्ठस्त्वं शास्त्रवादेषु वद सारं हिताय नः ॥११॥ योगींद्रेषु शुकश्रेष्ठो विभूतिपदगो भवान्। त्वयोक्तं निश्चयं सर्वे भजिष्यामो विशेषतः ॥१२॥ तेषां तद्वचनं श्रुत्वा शुको गणपतिं स्मरन्। जगाद सर्वसारज्ञः सभायां सर्वसन्निधौ ॥१३॥ श्रीशुक उवाच। अन्नकोशमयं ब्रह्मान्नसंज्ञं राजसंमतम्। जागृत् स्थूलस्वरूपस्थं ज्ञातव्यं वेदवादतः ॥१४॥ प्राणो ब्रह्म तथा प्राणकोशानां तत् प्रकाशकम्। मनः कोशमयं ब्रह्म मनोमयं प्रकीर्तितम् ॥१५॥ विज्ञानकोशगं ब्रह्म विज्ञानपदवाचकम्। त्रिकोशस्थं क्रमात् सूक्ष्मं स्वाप्नमंतरगं मतम् ॥१६॥ आनंदकोशसंस्थं यद्ब्रह्मानंदमयं बुधैः। सौषुप्तमुभयत्रस्थं समं वेदविचारतः ॥१७॥

चैतन्यं चेतनासंस्थं ब्रह्मात्मप्रत्ययात्मकम् । तुरीयमस्मिताख्यं तत्सादेहप्रकाशकम् ॥१८॥ बिंदुमयं समाख्यातं ब्रह्मदेहात्मधारकम् । चतुर्णां देहभूतानां संयोगे त्वंपदाश्रितम् ॥१९॥ उत्पत्तिस्थितिनाशयुक्तं ब्रह्म चतुर्विधं मतम् । प्रचुराख्यं चतुर्देहैः तस्मात् त्वंपदसंज्ञितम् ॥२०॥ चतुर्विधेषु देहेषु स्मृतो देही सदात्मकः । उत्पत्तिस्थितिनाशेभ्यो हीनः सोऽहंपदाश्रयः ॥२१॥ बिंदुमोहयुतो नित्यं भ्रांत्या नानाऽवभासते । एक एव स्वयं वेद कथितस्तत्पदाश्रयः ॥२२॥ देहाभिमानयुक्तः स जीवः सर्वैः प्रकथ्यते । देहाभिमानहीनश्चेत् परमात्मा स एव तु ॥२३॥ देहदेहिसमायोगे योगोऽसि पदसंज्ञकः । मनोवाणीविहीनत्वात् बोधरूपोऽयमुच्यते ॥२४॥ न बाह्यो नांतरस्थो यत्र समो नास्मितात्मकः । न चतुर्णां हि संयोगे बिंदुमात्रात्मकः स्मृतः ॥२५॥ न सोऽहंकाररूपस्थः सदा भेदविवर्जितः । अतः किं कथनीयं स्यात्तत्रैवं बोधरूपिणि ॥२६॥ बोधेन ज्ञायते सर्वं बोधस्य बोधकं च न । अतो बोधमयं ब्रह्मासिपदाख्यं प्रकीर्तितम् ॥२७॥ प्रकृतिसंगतो बोधो बोधः पुरुषधारकः । प्रकृतिपुंभवं सौख्यं बोधो जानाति सर्वदा ॥२८॥ प्रकृतिपुंभवं सौख्यं ज्ञात्वा सृष्ट्वा स्वयं प्रभुः । द्वैधं तत्र विशेषेण खल्वस्मिपदात्मकम् ॥२९॥ तेनायं स्वत उत्थानवाचकः परिकीर्तितः । बोधादुत्थानभावश्च जायते सुविचक्षणाः ॥३०॥ ततः परं विबोधाख्यं ब्रह्म खलविवर्जितम् । बोधनाशेन योगेन लभ्यते योगिभिर्मुदा ॥३१॥ बोधनाशे प्रसंख्यातुं कः समर्थो भवेन्नरः । अतः सांख्यपरं ब्रह्म संख्यानाशात् प्रकथ्यते ॥३२॥ देहदेहिमये नित्यं ब्रह्मणि द्वैतमास्थितम् । स्वस्वभावविहीनेन तस्मात् परं विबोधकम् ॥३३॥ विषयादिषु बोधेनोत्थानं संजायते नृणाम् । बोधनाशाद्विबोधाख्यमुत्थानवर्जितं मतम् ॥३४॥ ब्रह्मणि ब्रह्मभूतस्योत्थानं नैव प्रवर्तते । उत्थानवर्जितं सांख्यं योगिभिर्ब्रह्म वर्ण्यते ॥३५॥ यदोत्थानयुतं ब्रह्म वर्तते सर्ववित्तमाः । तदोत्थानविहीनत्वं मते भवति योगिनाम् ॥३६॥ अतः परत उत्थानसंयुतं सांख्यसंज्ञितम् । ब्रह्मोत्थानविहीनत्वादुत्थानं जायतेऽन्यतः ॥३७॥ तयोः परं स्वसंवेद्यं ब्रह्म संयोगधारकम् । सर्वेषां ब्रह्मणां विप्राः संयोगस्तत्र तन्मयः ॥३८॥ स्वस्वरूपात् परं ब्रह्म संयोगाख्यं न वर्तते । तदेवोत्थानहीनं न नैवोत्थानविवर्जितम् ॥३९॥ तदेव पंचधा जातं ब्रह्म स्वानंदवाचकम् । असत् सत् समनेनिस्वानंदभेदैः प्रकथ्यते ॥४०॥ अन्नं ब्रह्मेति यत् प्रोक्तं तत्रान्नमयमुच्यते । नाम तस्य न संदेहोऽन्नोपाधित्वाद्विचक्षणाः ॥४१॥ तस्यानुभवरूपं यद्योगिनां हृदि जायते । तदेव रूपकं तस्य नामरूपात्मकं ततः ॥४२॥ समाधिना महायोगी तत्यक्त्वा प्राण-

ब्रह्मणि। गच्छन्ति चेत्तदात्मस्य लयस्तत्र भवेत् स्वयम् ॥४३॥ तद्वत् क्रमेण योगींद्राः स्वानंदस्था भवंति हि। त्यक्त्वा ब्रह्माणि सर्वाणि प्राणाद्यानि समाधिना ॥४४॥ तदा तेषां लयस्तत्र जायते ब्रह्मणां किल। अत उत्पत्तिनाशाभ्यां तानि युक्तानि योगिनः ॥४५॥ उत्पत्तिनाशसंयुक्तमसद्रूपं प्रकथ्यते। अतो सन्मूलकानि स्युर्ब्रह्माणि स्वस्वमोहतः ॥४६॥ बोधसांख्यात्मकं यस्माज्जायते स्वस्वरूपतः। तत्रांते योगभावेन गच्छतो लयमंजसा ॥४७॥ अतोऽसद्रूपस्वानंदो नानाब्रह्मसु संस्थितः। सा शक्तिर्वेदवादेषु शाक्तं ब्रह्म तदुच्यते ॥४८॥ असति जीवनं यच्च सदा खंडमयं परम्। सद्रूपं स्वस्वरूपं तदात्मा भानुः प्रकथ्यते ॥४९॥ तयोः स्रष्टा समः साक्षात् स्वानंदः परिकीर्तितः। विष्णुः स तत् प्रवेशात्तु ब्रह्म वेदे प्रकथ्यते ॥५०॥ त्रयाणां नेति कर्ता स्वस्वाधीनोऽव्यक्तकः शिवः। चतुर्णां मंत्रसंयोगे स्वानंदः पूर्ण उच्यते ॥५१॥ चतुर्विधं प्रसृष्टं तु स्थापितं संहृतं पुरा। स्वानंदेन सदा ब्रह्म तस्मात्तत् मायया युतम् ॥५२॥ ब्रह्मणां जगतां तस्माद्भावस्तेन प्रकथ्यते। भवप्रत्ययसंज्ञं तद्ब्रह्म यत् स्वस्वरूपकम् ॥५३॥ समाधिसंज्ञितं ब्रह्मान्वयात् सर्वत्र कीर्तितम्। भवप्रत्यय-योगस्थं स्वस्वरूपं महौजसः ॥५४॥ ततः परमयोगाख्यं ब्रह्म मायाविवर्जितम्। मायया वर्णनं सर्वं जायते तद्विवर्जितम् ॥५५॥ मायया जगतामत्र ब्रह्मणां खलु उच्यते। तेषां संयोगभावश्चायोगे किं तैः प्रकथ्यते ॥५६॥ यद्युत्थानयुतं ब्रह्म तदा बोधमयं भवेत्। उत्थानवर्जितं चैतद्भवेत् सांख्यविबोधगम् ॥५७॥ समाधिसंज्ञं यदि तत्तदा स्वानंद उच्यते। स्वस्य प्रवेशनाशाद्वै किमयोगे वदन्त्ययम् ॥५८॥ ब्रह्म ब्रह्मणि संस्थं तन्नागतं न गतं भवेत्। व्यतिरिक्तात्मयोगेन गतिर्ब्रह्मणि योगिनाम् ॥५९॥ सदा निवृत्तिसंज्ञं तद्ब्रह्म मायाविवर्जितम्। स्वस्वरूपेण हीनत्वान्निवृत्तिर्लभ्यते ततः ॥६०॥ मायाना-शार्थमत्यंतमुपायो ह्ययमंकलः। उपायप्रत्ययाख्यं तद्ब्रह्मायोगात्मकं परम् ॥६१॥ अयोगात् परमं ब्रह्म योगाख्यं शांति-दायकम्। संयोगायोगयोर्योगे लभ्यते योगिनायकैः ॥६२॥ तदेव गणराजश्च ब्रह्मणस्पतिवाचकः। ब्रह्मणां ब्रह्मरूपः स शांत्या योगेन लभ्यते ॥६३॥ संयोगे गणराजस्तु गकाराक्षरगो मतः। अयोगे स णकाराख्यस्तयोः पतिः प्रकथ्यते ॥६४॥ इदं वेदांतसारं यत् कथितं योगमार्गतः। तं भजध्वं महाभागा यदि शांतिं समिच्छथ ॥६५॥ गर्ग उवाच। एवमुक्त्वा शुको योगी तूष्णीं भावेन संस्थितः। सर्वे विस्मितचित्तास्तं साधु साध्विति चाब्रुवन् ॥६६॥ निःसंशयाः कृतास्तेन त्यक्त्वा स्वस्वमतं ततः। गणेशभजने सक्ता वयं पुत्र महामते ॥६७॥ क्रमेण शांतिमापन्ना गाणपा अभवंश्च ते। गता गणेश्वरं

योगशांतिदं त्वां वदाम्यहम् ॥६८॥ शुकगीता मया तुभ्यं कथिता ब्रह्मदायिनी। शृणुयाद्यः पठेत् सोऽपि ब्रह्मभूतो भविष्यति ॥६९॥ नानेन सदृशं ज्ञानं योगदं कुत्र वर्तते। श्रवणात् सर्वसिद्धिदं भविष्यति क्रमादिदम् ॥७०॥ यं यमिच्छति तं तं स लभते मानवो ध्रुवम्। अंते स्वानंदवासी स ब्रह्मभूतो भविष्यति ॥७१॥ शुकगीतासमं किंचित् विद्यते नैव निश्चितम्। वेदोपनिषदाद्येषु सारभूता हि कथ्यते ॥७२॥ न श्राव्या दुर्जनायेयं वेदगुह्यमयी परा। योगिभिः शुद्धचित्तेभ्यः सुत श्राव्या प्रयत्नतः ॥७३॥

॥ इतिश्री श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते शुकगीताकथनं नामाष्टाविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शिवदत्त उवाच। श्रुत्वा त्वद्वदनांभोजाच्छुकगीतां सुतोषितः। जातोऽधुना गणेशस्य प्राप्त्यर्थं वद मां पितः ॥१॥ गर्ग उवाच। समीपे व्रतमुख्यं यत् समागतं सुसिद्धिदम्। वैशाखमासजं कृत्वा गाणपत्यो भविष्यसि ॥२॥ एवमुक्त्वा महायोगी गर्गस्तस्मै ददौ परम्। गाणेशपंचकेनैकाक्षरं विधिसमन्वितम् ॥३॥ ततस्तेनाभ्यनुज्ञातो गर्गः स्वेच्छाचरो ययौ। शिवदत्तो व्रतं चक्रे गणेशप्रीतये परम् ॥४॥ वैशाखे ध्यानसंयुक्तस्तोषयामास शौनक। गाणेशपंचकेनैव गणेशं सर्वसिद्धिदम् ॥५॥ चतुर्थ्यां गणराजस्तु शुक्लायां प्रययौ मुनिम्। ब्राह्मणस्य स्वरूपेण भिक्षार्थं क्षुधितो भृशम् ॥६॥ तमागतं समालोक्य प्रणनाम कृतांजलिः। जगाद तं द्विजं विप्रः शिवदत्तो महायशाः ॥७॥ शिवदत्त उवाच। आस्यतां किं वद मुने कारणार्थं समागतः। शक्यं चेत्तत् करिष्यामि प्रीतये विघ्नपस्य च ॥८॥ द्विज उवाच। पाराशर्य महाभाग मां जानीहि न संशयः। क्षुधितं वै समायातं त्वद्गेहे भोजनाय तु ॥९॥ तस्य तत् वचनं श्रुत्वा हर्षयुक्त उवाच तम्। तात शुक्लचतुर्थीजं व्रतं वदसि किं मुने ॥१०॥ उपोषणसमायुक्ता देवर्षयो गजाननम्। सेवंते त्वं महाभाग विस्मृतोऽसि वदस्व माम् ॥११॥ तस्य तद्वचनं श्रुत्वा पाराशर्यस्तमब्रवीत्। न जानामि व्रताद्यं तु सदा भक्षणलालसः ॥१२॥ श्रुत्वा प्रणम्य गार्ग्यः स नैवेद्यं गणपस्य च। ददौ तस्मै स भुक्त्वा तं तृप्त्वा जगाद हर्षितः ॥१३॥ पाराशर्य उवाच। तव भावेन संतुष्टो



जातोऽहं द्विजसत्तम । वरं ब्रूहि प्रदास्यामि यत्ते चित्ते भवेन् मुने ॥१४॥ गार्ग्य उवाच । किं वृणोमि महाविप्र सर्वं मायामयं जगत् । गणेशानत्परश्चाहं गच्छ त्वं निजमंदिरम् ॥१५॥ एवं तस्य वचः श्रुत्वा पुनस्तं स द्विजोऽब्रवीत् । नयामि स्वगृहं विप्र वरदोऽहं समागतः ॥१६॥ ततस्तं हठसंयुक्तं दृष्ट्वा गार्ग्य उवाच ह । गणेशं दर्शय स्वामिन्नान्यं याचे वरं परम् ॥१७॥ एवमुक्तो द्विजस्तं संजगाद मोहदं वचः । त्यक्त्वा नानाविधैश्वर्यं किं वृणोषि गजाननम् ॥१८॥ अहं योगींद्रमुख्यश्च दास्यामि सकलं सुखम् । एवमुक्त्वा स गार्ग्याय दर्शयामास चैंद्रकम् ॥१९॥ नानादेवयुतो विप्रमिंद्रस्तं प्रणनाम ह । दासोऽहं ते महाभाग भुंक्ष्व त्वं सुखमैंद्रजम् ॥२०॥ एवमुक्त्वा चकारासौ मायया वैभवं परम् । गार्ग्यस्तं नश्वरं मत्वा न दध्रे गणपे रतः ॥२१॥ ततोऽन्तर्धानमकरोदिंद्रः स्वनगरं ययौ । सत्यलोकसमायुक्तस्तत्र ब्रह्मा समाययौ ॥२२॥ जगाद सत्यलोकस्य गार्ग्यं ब्रह्मा मुदान्वितः । राज्यं कुरु महाभाग भज पश्चाद्गणेश्वरम् ॥२३॥ अनौपम्यं सुखं दृष्ट्वा गार्ग्यो विघ्नेश्वरे रतः । न मुमोह जगादैव भोगं नेच्छामि भो विधे ॥२४॥ ततोऽन्तर्धानमकरोद्ब्रह्मा लोकपितामहः । आययौ केशवस्तत्र वैकुंठेन समन्वितः ॥२५॥ वैकुंठविभवं दृष्ट्वा गार्ग्यो गणपतिं भजन् । प्रार्थयंतं महाविष्णुं त्यक्त्वा योगपरोऽभवत् ॥२६॥ ततः सोऽपि ययौ स्थानमाययौ तत्र शंकरः । कैलासेन समायुक्तो नानाविभवमोहदः ॥२७॥ शिवेन प्रार्थितो गार्ग्यः कैलासे राज्यकारणात् । न चकार स वै तत्र मतिं गणपतौ रतः ॥२८॥ शिवोऽन्तर्धानमकरोत्ततस्तं पुनरब्रवीत् । पाराशर्यो महायोगी गार्ग्यं निंदापरायणः ॥२९॥ पाराशर्य उवाच । मूर्खोऽसि हतभाग्योऽसि गणेशं किं करिष्यसि । ब्रह्माकारमतो भुंक्ष्व भोगान्नानाविधान् परान् ॥३०॥ सत्यसंकल्पजान् भोगान् भुक्त्वा चांते गणेश्वरम् । भजिष्यसि न संदेहो ब्रह्मांडाधिपतिर्भव ॥३१॥ गार्ग्य उवाच । असत्यं दीनजं सौख्यं पराधीनात्मकं मुने । सत्यसंकल्पजं सौख्यं सत्यमनुपमं परम् ॥३२॥ सत्यासत्यादिभेदाश्च मायायुक्ता न संशयः । क्षणभंगुरदेहस्थो नेच्छामि योगिसत्तम ॥३३॥ अथ वेश्वरभावनामृतरूपं करोषि माम । तथापि योगनिपुणः सुखं नेच्छामि चैश्वरम् ॥३४॥ त्वं किमर्थमिहायातश्छलयितुं महाखल । गच्छ स्व भवनं विप्र गणेशे भक्तिखंडक ॥३५॥ एवं तिरस्कृतस्तेन पाराशर्यो महामुनिः । प्रहस्य गणपाकारो बभूव तत्क्षणात् मुने ॥३६॥ जगाद तं महाभागं शिवदत्तं गजाननः । पश्य मां गणनाथं त्वं पराशरसुतं मुने ॥३७॥ स दृष्ट्वा गणराजं तं प्रणनाम कृतांजलिः । साश्रुनेत्रोऽभवत् सद्यो ननर्त प्रेमविह्वलः ॥३८॥ देहभावं समासाद्य तं पुपूज

गजाननम्। मुदा पुनः प्रतुष्टाव शिवदत्तः कृतांजलिः ॥३९॥ शिवदत्त उवाच। गणेशाय नमस्तुभ्यं पराशरात्मजाय ते। शिवपुत्राय शेषस्य पुत्राय वै नमो नमः ॥४०॥ सर्वपुत्राय सर्वेषां मात्रे पित्रे नमो नमः। भ्रात्रे सुहृद्गणायैव स्नुषादिविषधारिणे ॥४१॥ अनंतरूपिणे तुभ्यं नानाभोगविहारिणे। भोगहीनाय देवाय सुराय ते नमो नमः ॥४२॥ अपारगुणधाराय गुणानां पतये नमः। गणेशाय परेशाय पूर्णानंदाय ते नमः ॥४३॥ आदिमध्यांतरूपैश्च स्रष्ट्रे पात्रे प्रहारिणे। आदिमध्यांतहीनाय साक्षिणे ते नमो नमः ॥४४॥ स्वानंदपतये तुभ्यं मूषकवाहनाय च। सिद्धिबुद्धिप्रदात्रे ते सिद्धिबुद्धिपते नमः ॥४५॥ योगानां पतये तुभ्यं योगशांतिस्वरूपिणे। गजाननाय शांतिभ्यः शांतिदात्रे नमो नमः ॥४६॥ परेशाय महादीनपालकाय नमो नमः। सर्वेभ्यः सुखदात्रे ते विघ्नेशाय नमो नमः ॥४७॥ किं स्तौमि त्वां गणाध्यक्ष वेदाः शांतिं गतास्त्वयि। अतो नमो नमो नाथ तुष्टो भव महोदर ॥४८॥ रजांसि क्षितिनास्तारा मेघबिंदूंश्च मानवः। गणयेत् कोऽपि ते नाथ न गुणान् वर्णितुं क्षमः ॥४९॥ धन्योऽहं सर्वभावैश्च येन दृष्टो गजाननः। वेदांतागोचरे गम्यो योगिभिश्च शिवादिभिः ॥५०॥ एवं स्तुत्वा गणेशानं ननाम मुनिपुंगवः। तमुवाच गणाधीशः स्वभक्तं भक्तलोलुपः ॥५१॥ श्रीगणेश उवाच। वरान् वृणु महाभाग ये ते चित्ते ददामि तान्। प्रसन्नोऽहं च ते भक्त्या स्तोत्रेण मुनिसत्तम ॥५२॥ शिवदत्त उवाच। भक्तिं देहि त्वदीयां मे दृढामव्यभिचारिणीम्। नान्यं याचे गणाधीश त्वत्पादप्रवणो ह्यहम् ॥५३॥ श्रीगणेश उवाच। मदीया भक्तिरुग्रा ते भविष्यति महामते। स्मृतिमात्रेण ते कार्यं भविष्यति सुसिद्धिदम् ॥५४॥ त्वया कृतमिदं स्तोत्रं मदीयं पठतान्नृणाम्। श्रवणात् सिद्धिदं सर्वं भविष्यति निरंतरम् ॥५५॥ यद्यदिच्छति तत्तत्तु सफलं प्रभविष्यति। स्तोत्रपाठेन विप्रर्षे मयि भक्तिप्रदं तथा ॥५६॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः। शिवदत्तो गणेशानं संचिंत्य स्वाश्रमे स्थितः ॥५७॥ सदा योगींद्रवंद्यः स बभूव गाणपाग्रणीः। अंते विघ्नेश्वरे योगी लीनो बभूव शौनक ॥५८॥ एवं वैशाखजं मुख्यं व्रतं सर्वार्थदं परम्। कथितं ते महाभाग श्रवणात् सर्वसिद्धिदम् ॥५९॥ वैशाखव्रतसंयुक्तं शिवदत्तचरित्रकम्। यः पठेच्छृणुयाद् वाऽपि स सर्वफलभाग्भवेत् ॥६०॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते वैशाखमासमाहात्म्ये शिवभक्तिप्रदानं नाम एकोनत्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । विश्वावसुश्च नाम्ना को द्राविडे वैश्ययोनिजः । श्रुत्वा वैशाखमाहात्म्यं गाणेशं मुदितोऽभवत् ॥१॥ स कुटुंबपरो नित्यं व्यवसायं चकार ह । स्नात्वा वैशाखमासे तु दीपदानपरोऽभवत् ॥२॥ पूर्णिमायां निशायां स स्वगृहं गंतुमुद्यतः । व्यवसायं परित्यज्य मार्गसंस्थो बभूव ह ॥३॥ तत्र तं भक्षितुं कोऽपि राक्षसः क्रूररूपधृक् । आययौ नगरस्यैव वीथ्यां विश्वावसुं मुने ॥४॥ तमागतं समालोक्य विश्वावसुः सुविह्वलः । सस्मार गणपं चित्ते पपात भूतले भयात् ॥५॥ तमालोक्य धरासंस्थं राक्षसः सहसा मुने । जातिस्मरो बभूवाऽपि रुरोद तं प्रमार्जयन् ॥६॥ ततो विश्वावसुं वैश्यं सावधानं क्षणार्धतः । तं प्रणम्य महाभागं राक्षसस्तु वचोऽब्रवीत् ॥७॥ धूम्र उवाच । धूम्रनामानमेवं मां विद्धि वैश्यकुलोद्भव । तव दर्शनमात्रेण स्मरन् जातिं न संशयः ॥८॥ पूर्वजन्मनि विप्रोऽहं सुरुचिर्नामतोऽभवम् । विश्वामित्रकुलसंस्थः पापकर्मपरायणः ॥९॥ मया शूद्राय दीक्षा वै दत्ता पौराणिकी परा । मात्स्यी स नित्यमेवदं पुराणमपठत् मुदा ॥१०॥ ब्राह्मणैर्निंदितं तत्र स्वधर्मदूषकं परम् । मृतं मां यमदूता वै गृह्य जग्मुः स्वमालयम् ॥११॥ चित्रगुप्त उवाचाऽथ यमं नीतिविशारदम् । स्वधर्मनिरतश्चायं सदाचारयुतोऽभवत् ॥१२॥ मात्स्यं स विप्रः शूद्रायाऽशिक्षापयत् सुमंदधीः । ब्राह्मणैर्वारितः पापी पापकर्मपरोऽभवत् ॥१३॥ तच्छ्रुत्वा धर्मराजस्तमुवाच क्रोधसंयुतः । मां वीक्ष्य ताड्यतां दूतस्तयेति स चकार ह ॥१४॥ भुक्तभोगोऽहमन्यंतं राक्षसो वैश्यसत्तम । जातोऽत्र क्षुधयाऽऽविष्टो भ्रमामि तु दिवानिशम् ॥१५॥ त्वां दृष्ट्वा पूर्वपुण्येन जातिस्मर इहाऽभवम् । अधुना तारयस्व त्वं मां समागत महामते ॥१६॥ नोचेद्देहपरित्यागं करिष्यामि त्वदग्रतः । एवमुक्त्वा प्रणम्यादौ रुरोद राक्षसो महान् ॥१७॥ ततो दयायुतो वैश्यस्तमुवाच सुविस्मितः । किं करोमि वद प्राज्ञ धूम्र त्वं तारणाय माम् ॥१८॥ धूम्र उवाच । वैशाखे दीपदानं त्वं करोषि ढुंढिसन्निधौ । तद्भवं देहि मे पुण्यं तेन मुक्तो भवाम्यहम् ॥१९॥ विश्वावसुरुवाच । दीपदानं गणेशाग्रे चेत् करोति नरोत्तमः । अपारं तद्भवं पुण्यं न दास्यामि कदाचन ॥२०॥ तथापि शृणु मे वाक्यमेकवर्तिजदीपतः । यज्ञातं तद्गृहाण त्वं तेन मुक्तो भविष्यसि ॥२१॥ एवमुक्त्वा ददौ तस्मै पुण्यं दीपसमुद्भवम् । एकवर्तिकृतं पूर्णं गणेशाग्रे महामुने ॥२२॥ ततस्तत्र समायाता विमानवरसंस्थिताः । गाणेशा राक्षसं धूम्रं गृह्य स्वानंदमाययुः ॥२३॥ एवं व्रतस्य माहात्म्यं वैशाखे संभवस्य च । गाणेशानां महाभाग तत्र किं वर्णयाम्यहम् ॥२४॥ अन्यच्च शृणु विप्रर्षे वैशाखमासगं महत् । चरित्रं सर्वपापघ्नं श्रवणात् पठनान्नृणाम् ॥२५॥

कश्चिच्छूद्रो महापापी गणेशालयमाययौ । चौर्यार्थं तत्र रात्रौ स वस्त्रग्रहणलालसः ॥२६॥ समीपे गणराजस्य ययौ वैशाखमासके । दीपं तेजोविहीनं स ददर्श ढुंढिसंनिधौ ॥२७॥ स वर्तिं चालयामास कृत्वा दीपं सुतेजसम् । वस्त्रग्रहणसंसक्तो बभूव जातिदूषकः ॥२८॥ ततोऽकस्मात्तरं तत्र राज्ञः कं च समागतम् । देवालयस्य रक्षणार्थं तं दृष्ट्वा स पपाल ह ॥२९॥ ततो हाहाकृतं तत्र सर्वो लोकैः समागतैः । तैर्हतो योजनं दूरं मृतो यामैर्हतोऽभवत् ॥३०॥ भुक्त्वा नानाविधां याम्यां यातनां यमसंनिधौ । समानीतं यमः प्राह तं शूद्रं क्रोधसंयुतः ॥३१॥ वर्तिस्त्वया गणेशाग्रे चालिता दीपसंस्थिता । तेन प्रकाशकस्तत्र बभूव सुखदायकः ॥३२॥ तस्य पुण्यं त्वया प्राप्तं तद्भोक्ष्यसि पुरोऽथ वा । पापानि वद पापिष्ठ करिष्यामि त्वदीप्सितम् ॥३३॥ शूद्रो यमं जगादाऽऽदौ पुण्यं देहि मे प्रभो । भोक्तुं पश्चात् महत् पापं तथेति स चकार ह ॥३४॥ ततः स वैश्यजो जातो नाम्ना धर्मप्रियो महान् । नानाभोगयुतो नित्यं यौवनस्थो बभूव ह ॥३५॥ गणेशभक्तोऽसौ तत्र प्रीतियुक्तो महामुने । दीपदानं विशेषेण चकार हर्षसंयुतः ॥३६॥ अंते पापविहीनः स जगाम गणनायकम् । ब्रह्मभूतो बभूवापि पूर्वसंस्कारभावनः ॥३७॥ एवं किंचिच्च संस्कारादुद्धरंति जनादयः । वैशाखजात्र संदेहः कति तत्र ब्रुवे मुने ॥३८॥ इदं वैशाखमासस्य चरित्रं भुक्तिमुक्तिदम् । कथितं ते समासेन नानाभोगकरं परम् ॥३९॥ यः पठेच्छृणुयाद्वाऽपि स सर्वार्थयुतो भवेत् । अंते गणपतौ लीनो भवेद्भावपरायणः ॥४० ॥

॥ ॐमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खण्डे धूम्रवर्णचरिते वैशाखमासमाहात्म्ये नानाजनोद्धारवर्णनं नाम त्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । अधुना शृणु माहात्म्यं श्रावणस्य सुखप्रदम् । गणनाथप्रियं विप्र समासेन वदाम्यहम् ॥१॥ रामो दाशरथिः शूरः साक्षाद्विष्णुः प्रतापवान् । सभासनगतस्तत्रागतान् विप्रान्ननाम ह ॥२॥ पूजितास्तेन तं सर्वे जगुर्लवणचेष्टितम् । तद्वधार्थं वयं राम यातास्तं जहि राघव ॥३॥ तथेति तानुवाचाऽसौ द्विजान् पप्रच्छ राघवः । दुर्जयस्य जयः केन भविष्यति च मे द्विजाः ॥४॥ ततस्तं ब्राह्मणाः प्राहुर्गणेशस्याभिषेचनम् । सूक्तैर्गाणेशकैस्तेन विजयी त्वं

भविष्यसि ॥५॥ मासेषु श्रावणो मुख्यः समागतोऽधुना प्रभो । विघ्नेशप्रीतिदोऽत्यंतममायुक्तो व्रतं कुरु ॥६॥ एवमुक्त्वा विधिं तस्मै कथयामासुरादरात् । गणेशमभजत्तत्र शत्रुघ्नः परवीरहा ॥७॥ उपोषणसमायुक्तः स्वयं दुग्धमभक्षयत् । अभिषेकपरो भूत्वा तोषयामास विघ्नपम् ॥८॥ मासमात्रं व्रतं कृत्वा गणेशं नम्य राघवः । शत्रुघ्नो ब्राह्मणैः सार्धं ययौ लवणराक्षसम् ॥९॥ त्रिशूलेन विहीनं संरुध्य तं लक्ष्मणानुजः । स्मृत्वा गणेश्वरं दुष्टं जघान शरघाततः ॥१०॥ महोऽग्रं पतितं युद्धं तयोः सर्वभयंकरम् । ततः खड्गेन शत्रुघ्नस्तस्य चिच्छेद मस्तकम् ॥११॥ ततो देवगणाः सर्वे पुष्पवृष्टिं प्रचक्रिरे । शत्रुघ्नोपरि शत्रुघ्नो जय हेरंब चाब्रवीत् ॥१२॥ ब्राह्मणैः पूजितः सोऽपि प्रणम्य द्विजपुंगवान् । आवासं मथुरं तत्र सुदेशां तां चकार ह ॥१३॥ गते कियति काले संस्थाप्य पुत्रं महामतिः । माथुरे रामचंद्रं तु ययौ भक्तिपरायणः ॥१४॥ एवं श्रावणमासे वै गणेशस्य महात्मनः । अनुष्ठानफलं प्रोक्तं सर्वसिद्धिप्रदायकम् ॥१५॥ अन्यत्त्वं शृणु माहात्म्यं श्रावणव्रतजं महत् । जालंधरवधार्थाय यच्छिवेन कृतं पुरा ॥१६॥ जालंधरेण दैत्येन जितं सर्वं चराचरम् । त्रैलोक्याधिपतिः सोऽपि बभूव वरदानतः ॥१७॥ आसुरं कर्म सर्वत्र कारयामास दैत्यपः । न स्वाहा न स्वधा कुत्र बभूव भूमिमंडले ॥१८॥ एवं बहौ गते काले गृहीतुं पार्वतीं ययौ । जालंधरस्ततो युद्धं बभूव देवदैत्ययोः ॥१९॥ देवैः पराजिता दैत्याः पपलुस्ते दिशो दश । ततो जालंधरः क्रुद्धो युयुधे शस्त्रधारकः ॥२०॥ जितः शंभुः सुरेशानैः पपाल भयसंकुलः । अंतर्दधे महाशक्तिः स ततो विस्मितोऽभवत् ॥२१॥ स्वगृहं दैत्यराजः स समागत्यातिविह्वलः । कामबाणाभिभूतः सन् सस्मार जगदंबिकाम् ॥२२॥ न लेभे कुत्रचिच्छर्म नानाशीतलजातिषु । जज्वाल कामजेनैव वह्निना भृशदुःखितः ॥२३॥ अथ देवगणाः सर्वे पर्वतद्रोणिमाश्रिताः । विचारं तस्य नाशार्थं चक्रुर्जालंधरस्य ते ॥२४॥ ततो बृहस्पतिः प्राह शंकरादीन् सुरेंद्रकान् । श्रावणे गणनाथस्यानुष्ठानं कुरुत प्रियाः ॥२५॥ तथेति गुरुणा युक्ता देवाः शंभ्वादयोऽपरे । मुनयो गणनाथं वै दूर्वाभिरन्वतोषयन् ॥२६॥ दिवा रात्रौ गणाधीशमभजन्नैकचेतसः । समाप्य श्रावणे मासे भाद्रे यात्रां प्रचक्रिरे ॥२७॥ पंचम्यां पारणं कृत्वा प्रणिपत्य गजाननम् । प्रेरिता आकाशगिरा तं महादैत्यमाययुः ॥२८॥ युद्धं कृत्वा महाघोरं जलंधरेण शंकरः । स्मृत्वा गजाननं चित्ते त्रिशूलेन जघान तम् ॥२९॥ स स्मृतः शिवदेहे तु लयं ययौ महासुरः । देवा मुनियुताः शंभुं तुष्टुवुः पूज्य भक्तितः ॥३०॥ जालंधरं महादैत्यमेवं जित्वा सदाशिवः । स्थापयामास देवादीन् स्वस्थानेषु यथा पुरा ॥३१॥ वर्णाश्रम-

युतांल्लोकांन् चकार शंकरः प्रभुः । नित्यवच्छ्रावणे मासेऽनुष्ठानसंयुतोऽभवत् ॥३२॥ एकनिष्ठनया शंभुः सिषेवे गणनायकम् । नित्यं ध्यानपरो भूत्वा तमेवाचिंतयत् प्रभुम् ॥३३॥ एवं श्रावणमासस्य व्रतं ते कथितं मया । येन व्रतप्रभावेण शंभुर्जिग्ये जलंधरम् ॥३४॥ इदं यः शृणुयान्नित्यं श्रावयेद्वा पठेत् स्वयम् । इह भुक्त्वाऽखिलान् भोगानंते स्वानंदमाप्नुयात् ॥३५॥

॥ ओमिति श्रीमदांदि पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते श्रावणमासमाहात्म्ये जालंधरवधो नामैकत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । अवंतीनगरीमध्ये बभूव ब्राह्मणोत्तमः । गालवः सर्वधर्मज्ञः सर्वशास्त्रविशारदः ॥१॥ शापानुग्रहयोः शक्तस्तपस्तेजोयुतो मुनिः । चचार पृथिवीं सर्वां मुने यात्रापरः कदा ॥२॥ स्वगुरुं स समागम्य विश्वामित्रं महामुनिम् । यात्रां समाप्य तत्रैव संस्थितोऽभूत् सुशीलगः ॥३॥ गणेशभजने सक्तं विश्वामित्रं तपोनिधिम् । एकनिष्ठं तया दृष्ट्वा तमुवाच कृतांजलिः ॥४॥ गालव उवाच । पंचभूतात्मको देहो नश्वरः सर्वसंमतम् । देहसंस्थं गणेशानं तं कथं भजसे प्रभो ॥५॥ योगींद्राणां गुरुः साक्षात्त्वं ब्रह्मपदधारकः । ब्रह्मभूतस्वभावं किं त्यक्त्वा भजसि विघ्नपम् ॥६॥ अयं ब्रह्मपतिः साक्षाद्वेदेषु कथितोऽभवत् । कथं देहधरः सोऽपि बभूव च गजाननः ॥७॥ रुच्यर्थं ब्रह्मप्राप्त्यर्थं सेवनं चास्य मुख्यकम् । तदर्थं कथितं स्वामिन् वेदैः किं योगिनां मतम् ॥८॥ गणेशपूजनेनैव शुद्धचित्तो नरो भवेत् । स्वल्पकालेन योगज्ञो योगनिष्ठो न संशयः ॥९॥ सर्वत्रात्मस्वभावेनैकाग्रवृत्तिपरो यदा । त्यक्त्वा गजाननं तात जडोन्मत्तादिवच्चरेत् ॥१०॥ त्वं शांतियोगयुक्तः सन्नधुनाऽपि गजाननम् । भजसे किं महायोगिन् लोकानां संग्रहाय वा ॥११॥ सूत उवाच । एवं वदंतमत्यंतं मुनिर्निर्भर्त्स्य गालवम् । विश्वामित्रः स्वशिष्यं तमुवाच ज्ञानदायकः ॥१२॥ विश्वामित्र उवाच । मूर्खोऽसि नैव जानासि गणेशं ब्रह्मनायकम् । सर्ववत्तं विशेषेण त्वं मा जानीहि गालव ॥१३॥ पंचचित्तमयी बुद्धिः स्वेच्छया देहधारिणी । नानाभ्रांतिकरी सिद्धिर्बभूवे सर्वदा तथा ॥१४॥ तयोः स्वामी गणेशानो देहधारी बभूव ह । स्वेच्छया क्रीडनार्थाय मायाभ्यां मायिको यथा ॥१५॥ देहो जगन्मयो यस्य गजाकारं शिरः प्रभोः । ब्रह्ममयं तयोर्योगे देहधारी गजाननः ॥१६॥

योगिनां हृदये ढुंढिर्वर्तते कथितो मया । अज्ञानिनां निराकारः पंचभूतात्मकस्तथा ॥१७॥ सगुणं निर्गुणं भिन्नं गणेशस्य न विद्यते । नोत्पत्तिनाशभावश्च सर्ववन्मुनिसत्तम ॥१८॥ अयं देहयुतः प्रोक्तः स्वेच्छया देहवर्जितः । अंतर्धाय स्वमात्मानं तिष्ठति योगनायकः ॥१९॥ विश्वं ब्रह्मयुतं सर्वं लयं गतं यदा मुने । ब्रह्मणस्पतिसंज्ञे च योगे तन्मयभावतः ॥२०॥ नरकुंजर-रूपं तदभेदेन समास्थितम् । तत्प्राप्त्यर्थं विभिन्नं च भवति भक्तिलालसम् ॥२१॥ योगी योगबलेनैव भवति ब्रह्मरूपगः । तथापि ब्रह्मसामर्थ्यं तस्य देहे न विद्यते ॥२२॥ ब्रह्मणस्पतिशब्दार्थो सत्ता गाणेशदेहके । वर्तते सर्वदा तस्मात्तं भजंते तु योगिनः ॥२३॥ एवमुक्त्वा महायोगी विश्वामित्रः प्रतापवान । गालवं तूष्णींभावेनाभजत्तं गणनायकम् ॥२४॥ तमुवाच पुनः शिष्यो गालवः प्रणिपत्य च । निंदयन्नात्मनात्मानं संशयस्यापनुत्तये ॥२५॥ गालव उवाच । अज्ञानेनावृतोऽहं त्वां पृच्छामि मुनिसत्तम । शिष्यं तारय योगेन योगयुक्तं तथा कुरु ॥२६॥ गणेशो योगशांतिस्थो सदा योगींद्रसत्तम । कथं देव इति ख्यातः कथितो वेदवादिभिः ॥२७॥ देवाः सत्त्वयुता नाथ नरा राजसतां गताः । तामसा असुराः प्रोक्तास्त्रिलोके वासकारिणः ॥२८॥ एवं मे संशयं स्वामिन्नुद सर्वज्ञ ते नमः । येन संशयहीनोऽहं भजिष्यामि गजाननम् ॥२९॥ विश्वामित्र उवाच । देवाः सत्त्वगुणेनैव युक्ताः स्वर्गनिवासिनः । इंद्रादयो न संदेहस्तेष्विंद्रः परमा गतिः ॥३०॥ ब्रह्मणो दिवसांते ते लयं गच्छंति नित्यदा । अन्ये कर्मकरा देवा भवंति मानवाः पुनः ॥३१॥ कर्मणा लभते स्थानं ब्रह्मणः सृष्टिकारिणः । कर्मरूपः स वै प्रोक्तो न देवसमतां व्रजेत् ॥३२॥ परमेष्ठी समाख्यातः परा सृष्टिस्तदात्मिका । इष्टयास्तस्मात परं किंचिल्लभ्यते नैव मानवैः ॥३३॥ शिवो विष्णुस्तथा भानुः शक्तिश्चत्वार ईश्वराः । अभवन सत्यसंकल्पाः सगुणा निर्गुणा मुदा ॥३४॥ गणेशो ब्रह्मभूतो वै स्वेच्छाचारो महामते । एवं भेदप्रकारेण ज्ञातव्यो निश्चयार्थिभिः ॥३५॥ दिवु क्रीडात्मको धातुः पठ्यते मुनिभिर्मुदा । सर्वत्र क्रीडनाद्देवाः कथिताः सर्वपूजिताः ॥३६॥ स्वधर्मनिष्ठजे स्वस्वकर्मणि क्रीडने रताः । देवा इंद्रमुखास्तेन कथिताः शास्त्रवादिभिः ॥३७॥ सृष्ट्वा चराचरं सर्वं तत्र क्रीडति नित्यदा । ब्रह्मा तेन मुनींद्रैः स देव इत्यभि-धीयते ॥३८॥ अनंतकोटिब्रह्मांडानि रचित्वा स्वमायया । शिवादयश्च चत्वारस्तेषु क्रीडंति देवकाः ॥३९॥ सत्यसंकल्प-कत्वाद्वै ईश्वरास्ते प्रकीर्तिताः । देवाः क्रीडनभावाच्च सगुणनिर्गुणादिषु ॥४०॥ असत् सत् स मनेतीति परं सृष्ट्वा चतुर्विधम् । विश्वं विश्वात्मसंयुक्तं तत्र क्रीडति विप्रपः ॥४१॥ जगत्सु ब्रह्मसु प्राज्ञैः क्रीडनाद्गुणजातिषु । देवो गणेश्वरः प्रोक्तः पश्य

वेदेषु वर्णितम् ॥४२॥ अतो देवसमानास्ते न भवंति कदाचन । ब्रह्मादयो महाभागा देवशब्दप्रधारकाः ॥४३॥ सूत उवाच । विश्वामित्रवचः श्रुत्वा गालवोऽत्यंतविस्मितः । जगाद तं महाभागं संशयेन समन्वितः ॥४४॥ गालव उवाच । देवा हविर्भुजः सर्वे तद्वदिमे महामते । हविर्भुजो महेशाद्या अभवन् भागमिश्रिताः ॥४५॥ दैत्याद्यैः कर्मनाशेन पीडिता अमरा यदि । तदा शंभ्वादयस्तद्वदुपोषणयुताः कृताः ॥४६॥ तेन देवसमानास्ते दृश्यंते नात्र संशयः । वद संशयनाशार्थं शिष्यं योगींद्रसत्तम ॥४७॥ विश्वामित्र उवाच । अज्ञानासुरभावार्थं देवा ब्रह्मादयः किल । उपोषणयुताः सर्वे कृता दैत्यैर्भवं-त्यतः ॥४८॥ अथाऽन्यच्छृणु तत्त्वं त्वं सर्वसंशयनाशनम् । स्वैश्वर्ययुता इंद्रादयो देवाः प्रकीर्तिताः ॥४९॥ मन्वंतरे गते देवा इंद्राद्या भागवर्जिताः । देहत्यागं प्रकुर्वंति तपसा ध्यानशालिनः ॥५०॥ अन्ये देवा भवंति स्मान्यस्मिन् मन्वंतरे मुदा । इंद्राद्यास्तेन ते प्रोक्ताः स्वैश्वर्यात्मका मुने ॥५१॥ स्वस्वमन्वंतरेष्वेव ते भवंति हविर्भुजः । नष्टे मन्वंतरे देवा हविर्भागविवर्जिताः ॥५२॥ तथा ब्रह्मा स्वयं साक्षाद्धविर्भागधरो न च । द्विपरार्धमयं कालं भुनक्ति स हविः प्रभुः ॥५३॥ अत ऐश्वर्यसंयुक्तः कल्पमात्रं न संशयः । कथमिंद्रादिकैरस्य समता भवतीत्यहो ॥५४॥ बुधैः स परमेष्ठीति कथितश्चेष्टि-भक्षणाम् । अखंडैश्वर्यसंयुक्तष्टिश्च सर्वत्र संमता ॥५५॥ शिवादयः समाख्याता हविर्भुजस्ततोऽधिकाः । अत ऐश्वर्य-संयुक्ता अखंडं हि हविर्भुजः ॥५६॥ गालव उवाच । हविर्भुजः समाख्याता देवाः शास्त्रेषु मानद । यज्ञभागविहीनत्वात् कथं देवो गजाननः ॥५७॥ विश्वामित्र उवाच । यज्ञेषु विविधेष्वेव गणेश आदिरुच्यते । पूज्यस्तथा हविर्भोक्ता सर्वसिद्धि-प्रदायकः ॥५८॥ एकभागाश्रिता भावाद्गणेश इति कथ्यते । समूहानां समायोगस्तत्र किं संशयो मुने ॥५९॥ वेदेषु गणराजस्य यज्ञो भिन्नो निरूपितः । ब्राह्मणस्पत्यसंज्ञस्तु हविर्भुक् तत्र विघ्नपः ॥६०॥ एकभागाश्रिता देवा विष्णुशंकर-मुख्यकाः । अतः स्वस्वपदेष्वेव पूजनीयाः प्रयत्नतः ॥६१॥ सर्वकर्मसु विघ्नेश आदिपूज्यः प्रकीर्तितः । सर्वपूज्यो महाविघ्न-समूहानां प्रपालनात् ॥६२॥ गालव उवाच । पंच देवाः समानाश्च सगुणा निर्गुणा मताः । गणेशः सर्वपूज्यादिपूज्यः कथं बभूव ह ॥६३॥ विश्वामित्र उवाच । सगुणा निर्गुणाः प्रोक्ता ईश्वराः शंभुमुख्यकाः । सत्यसंकल्पभावेन योगरूपा न तेऽभवन् ॥६४॥ एकगुणाश्रिताः सर्वे सगुणाः परिकीर्तिताः । महालये लयं ते वै गच्छंति गुणधारणात् ॥६५॥ सगुणा नाशवंतस्ते निर्गुणा नाशवर्जिताः । योगरूपास्तयोर्योगे शिवाद्याः संमता बुधैः ॥६६॥ नरकुंजरयोगत्वात् गणेशो योग-

योगरूपः सदा देवो सगुणो निर्गुणोऽपि वा। स्वेच्छया द्विविधं वाचकः। सगुणो निर्गुणः सोऽपि ताहशस्तन्मयोऽभवत् ॥६७॥ स्वानंदस्य लयो नास्ति वेदादिषु विचारय ॥६९॥ सृष्ट्वा खेलते भाववर्जितः ॥६८॥ स्वानंदनगरे संस्थो देहधारी गजाननः। अंतर्धाय गणेशानो निर्गुणं अतोऽयं नाशहीनोऽपि देहभृच्छोभते स्वयम् । सगुणे योगनाथश्चांतर्धाय निर्गुणे रतः ॥७०॥ अतोऽयं ज्येष्ठराजश्च कथितो वेदवादिभिः। ज्येष्ठानां योगशांतिदः। योगरूपे रतः सद्यः स्वेच्छया नात्र संशयः ॥७१॥ पंचचित्तमयी बुद्धिः सिद्धिश्चांतिप्रदा मता। तयोः स्वामी गणेशानः सेव्यते मे ज्येष्ठभावाद्वै गतः सर्वादिपूज्यताम् ॥७२॥ हृदि स्थितः ॥७३॥ एवमुक्त्वा महायोगी विरराम महामुने। गालवः संशयं त्यक्त्वा प्रणनाम कृतांजलिः ॥७४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते श्रावणमासमाहात्म्ये गालवसंशयनाशनं नाम द्वात्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच। गणेशप्राप्तिकामार्थं गालवो मुनिसत्तमम् । पुनः पप्रच्छ सद्बुद्धिर्विनयेन द्विजोत्तमः ॥१॥ गालव उवाच। द्रष्टुमिच्छामि विघ्नेशं तदुपायं वद प्रभो। तवाज्ञावशगो भूत्वाऽऽचरिष्यामि तदेव च ॥२॥ विश्वामित्र उवाच। प्राप्तं श्रावणमासं त्वं विद्धि गालव सौख्यदम्। तत्रानुष्ठानभावेन गणेशं पश्य सिद्धिज ॥३॥ एवमुक्त्वा ददौ तस्मै मंत्रमेकाक्षरं मुनिः। तं प्रणम्य महाविप्रं गालवस्ताहशो रतः ॥४॥ श्रावणे गणपं ध्यात्वा पुरश्चरणतत्परः। जजाप मंत्रराजं स विधियुक्तं विधानवित् ॥५॥ पयो भुक्त्वा गणेशानं तोषयामास गालवः। सदा ध्यानपरो भूत्वा चिंतयत्तं महामतिः ॥६॥ अमायां गणराजस्तु ययौ भक्तिनियंत्रितः। सिद्धिबुद्धियुतो विप्रं सिंहगः सर्वभाववित् ॥७॥ तमागतं समालोक्य गालवः प्रेमसंयुतः। समुत्थाय प्रणम्यादौ पुपूज विघ्ननायकम् ॥८॥ पुनः प्रणम्य सर्वेशं तुष्टाव स कृतांजलिः। साश्रुनेत्रो गणाध्यक्षं सर्वसिद्धिप्रदायकम् ॥९॥ गालव उवाच। असत्यमायामयरूपधारिणे मायाविहीनाय परात्परात्मने। योगाय योगेश सुयोगदायिने विघ्नेश्वरायैव नमो नमः प्रिय ॥१०॥ अचिंत्यरूपधराय विघ्नेशाय नमो नमः। सिंहगाय चतुर्बाहुधारकाय सुरूपिणे ॥११॥ स्वानंदनगरस्थायिन् सदा स्वानंदरूपिणे। अनंतविभवायैव हेरंबाय नमो नमः ॥१२॥ लंबोदराय देवाय

देवदेवेशरूपिणे । असुरगणां निहंत्रे च असुराय नमो नमः ॥१३॥ सिद्धिबुद्धिविलासस्य कारिणे ब्रह्मरूपिणे । ब्रह्माकार-शरीरायैकदंताय नमो नमः ॥१४॥ सगुणाय नमस्तुभ्यं निर्गुणाय गुणात्मने । सदा शांतिप्रदात्रे ते धूम्रवर्णाय ते नमः ॥१५॥ पाशांकुशधरायैकदंताभयप्रधारिणे । नाभिशेषाय सर्वादौ पूज्याय ते नमो नमः ॥१६॥ किं स्तौमि त्वं गणाध्यक्ष यत्र वेदा विसिस्मिरे । अतो नमनमात्रेण प्रसन्नो भव विघ्नप ॥१७॥ सूत उवाच । एवं स्तुत्वा गणेशानं ननर्त प्रेमविह्वलः । धन्योऽहं कृतकृत्योऽहमुच्चरंश्च पुनः पुनः ॥१८॥ तमुवाच गणाधीशो वरान् वरय गालव । दास्यामि श्रावणस्यैव व्रतेन तुष्टि-मागतः ॥१९॥ त्वया कृतमिदं स्तोत्रं भवेत् सर्वार्थदायकम् । पठतां शृण्वतां विप्र मद्भक्तिवृद्धिकारकम् ॥२०॥ धनधान्यप्रदं पूर्णं भुक्तिमुक्तिप्रदायकम् । आरोग्यादिकरं चास्तु ब्रह्मश्रद्धा प्रवर्धनम् ॥२१॥ एवमुक्त्वा गणेशानो विरराम महामते । गालवस्तं प्रणम्यादौ जगाद करसंपुटः ॥२२॥ गालव उवाच । भक्तिं देहि त्वदीयां मे गाणपत्यं कुरु प्रभो । योगं शांतिप्रदं पूर्णं नान्यं याचे गजानन ॥२३॥ तथेति तमथोक्त्वाऽसौ गणेशोऽन्तरधीयत । गालवः खेदसंयुक्तो वियोगाद्गणपस्य तु ॥२४॥ ततो जगाम विप्रेंद्रं विश्वामित्रं ननाम सः । वृत्तांतं कथयामास सोऽपि संहर्षितोऽवदत् ॥२५॥ विश्वामित्र उवाच । धन्योऽसि कृतकृत्योऽसि मान्योऽसि मे महामुने । मच्छिष्येण त्वया पुत्र तारितोऽहं न संशयः ॥२६॥ एवं प्रशंसितो विप्रो विश्वा-मित्रेण गालवः । तं प्रणम्य ययौ सोऽपि स्वेच्छाचारी यथा तथा ॥२७॥ सदा गणपतिं भक्त्याऽभजदनन्यचेतसा । गालवो योगिवंद्यश्च बभूव परमार्थवित् ॥२८॥ गाणेशानि जगामासौ क्षेत्राणि गणपे रतः । अंते मयूरक्षेत्रे तु वासं चकार हर्षितः ॥२९॥ तत्रैव गणनाथं सोऽभजद्भावसमन्वितः । क्षेत्रसंन्यासविप्रैश्च पूजितोऽकथयत् कथाः ॥३०॥ इदं गालवमाहात्म्यं कथितं पापनाशनम् । पठनाच्छ्रवणात् सर्वसिद्धिदं जनेव भवेत् ॥३१॥ अन्यच्छृणु चरित्रं यत् सर्वसौख्यकरं मुने । महाराष्ट्रेऽन्त्यजः कश्चिच्छुश्राव श्रावणस्य च ॥३२॥ माहात्म्यं गणनाथस्य भक्त्याश्रितं द्विजात् पुरा । तत्र चित्तं समानीय गणराजपरो-ऽभवत् ॥३३॥ आगते श्रावणे मासे स्नात्वा देवालये स्थितम् । ननाम नियमेनैव नित्यं भक्तिसमन्वितः ॥३४॥ ततः स्वव्यवसायेषु कुटुंबपोषणे रतः । चकार विविधान् कामांल्लोकानां द्रव्यकारणात् ॥३५॥ समाप्ते श्रावणे मासे मृतं तं दैवयोगतः । प्रगृह्य गाणपा जग्मुः स्वालयं हर्षसंयुताः ॥३६॥ मार्गे संगच्छतस्तस्यांगाद्वायुः सहसाऽऽययौ । पंचचौरशरीरांगे पस्पर्श दैवयोगतः ॥३७॥ चौराणां बुद्धिभेदोऽथ बभूव तेन ते पुनः । ऊचुः परस्परं चौराः पापकर्मपरायणाः ॥३८॥

चौरा ऊचुः । नित्यं पापसमाचारा वयं चौर्यपरायणाः । लोकेभ्यो दुःखदाः पूर्णा का गतिर्नो भविष्यति ॥३९॥ पापिनां नरकेष्वेव गतिर्दुःखतरा भवेत् । यमस्य यातना तत्र दुःसहा नात्र संशयः ॥४०॥ नरके वासिनो नित्यं भविष्यामो वयं यतः । अतः परं न कर्तव्यं चौर्यं चौराः कदाचन ॥४१॥ एवं निश्चित्य मार्गे ते वनस्थे संस्थिता मुधा । तत्राऽकस्मात् समायाता ब्राह्मणा दश तापसाः ॥४२॥ तान् दृष्ट्वा गोभिरानंदसंयुक्तान् पापनिश्चयाः । चौराः खड्गधरा याता हंतुं तांस्ते द्विजा जगुः ॥४३॥ द्विजा ऊचुः । किमर्थं शस्त्रसंयुक्ताश्चौरा यूयं समागताः । गावो ग्राह्याः सुखेनैव वयं गच्छामहे पुनः ॥४४॥ मा हिंसां कुरुत प्राज्ञा ब्राह्मणवधसंज्ञिताम् । ब्रह्महत्याभवं पापं वज्रलेपसमं भवेत् ॥४५॥ तेषां तद्वचनं श्रुत्वा चौरास्तान् खड्गधारकाः । ऊचुर्नियम्य स्वात्मानं पापत्रासभयातुराः ॥४६॥ चौरा ऊचुः । ब्रह्महत्याभवं पापं तत् कीदृक् यातनाप्रदम् । केनोपायेन पापानि लयं गच्छंति भो द्विजाः ॥४७॥ वयं पापसमाचारा जन्मादारभ्य नित्यदा । नानाविधानि पापानि कुर्महे चाधुनावधिम् ॥४८॥ चराम किं वयं चौरास्तदर्थं पापनाशकम् । उपायं तद्वदध्वं नो दयया ब्राह्मणोत्तमाः ॥४९॥ चौराणां वचनं श्रुत्वा ब्राह्मणास्तानथाब्रुवन् । विस्मिता भयसंयुक्ता लोकोद्धारपरायणाः ॥५०॥ ब्राह्मणा ऊचुः । अनुतापेन पापानि नश्यंति चौरनायकाः । अतः परं च पापानि मा चरध्वं तदा किल ॥५१॥ श्रावणे गणनाथं ते सेवध्वं ब्रह्मनायकम् । तेन पापविहीनाश्च गमिष्यथ परां गतिम् ॥५२॥ एवमुक्त्वा महाभागास्ताननुज्ञाप्य ते ययुः । ब्राह्मणाः स्वाश्रमं गोभिर्युक्ता हर्षसमन्विताः ॥५३॥ समीपे श्रावणं मासं समागतं विलोक्य ते । चौराः स्वगृहमागत्य गणेशमभजन् परम् ॥५४॥ स्नात्वा प्रातर्गणेशानं प्रणम्य भावसंयुताः । प्रदक्षिणपराः सर्वे प्रहरं ह्यभवन् मुने ॥५५॥ ते च एकभुजः सर्वे ब्रह्मचर्यपरायणाः । मासमात्रं व्रतं चक्रुः साधवस्ते बभूविरे ॥५६॥ इह भुक्त्वाऽखिलान् भोगानंते स्वानंदमाययुः । एवं नाना जना विप्र श्रावणे लेभिरे गतिम् ॥५७॥ तेषां चरित्रकं पूर्णं कथने नैव शक्यते । किंचिन्नियमयुक्तानां का कथा व्रतकारिणाम् ॥५८॥ एवं श्रावणमाहात्म्यं गाणपत्यपदप्रदम् । कथितं मुनिशार्दूल समासेन सुखप्रदम् ॥५९॥ शृणुयाच्छ्रावयेद्वाऽपि पठेद्यो स लभेत् पदम् । गाणेशं विविधान् भोगान् भुक्त्वांऽते मुनिसत्तम ॥६०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते श्रावणमासमाहात्म्यवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । मलमासभवं चित्रं चरित्रं कथयाम्यहम् । संक्षेपेण मुनिश्रेष्ठ शृणु सर्वार्थदायकम् ॥१॥ कलिकल्मषरूपेण मलेन पीडिताः सुराः । शरणं केशवस्यैव ययुर्विप्रेंद्रमुख्यकैः ॥२॥ स्तुत्वा नानाविधैस्तोत्रैर्विष्णुं धर्मप्रपालकम् । घोरं कलिभवं पापं तदर्थमब्रुवन वचः ॥३॥ देवर्षय ऊचुः । लेशमात्रेण धर्मस्तु संस्थितोऽधर्मसंहतः । ततोपोषणसंयुक्तान् रक्षस्व शरणार्थिनः ॥४॥ कलिना पापरूपेण जनार्दन जिता वयम् । पृथिवीं त्वमपि त्यक्त्वा किं स्थितोऽसि महाप्रभो ॥५॥ तेषां तद्वचनं श्रुत्वा तानुवाच स्वयं हरिः । मेघगंभीरया वाचा सर्वेषां पालकः प्रभुः ॥६॥ हरिरुवाच । मा भयं देवविप्राद्याः कुरुताहं न संशयः । करिष्यामि भवत् कार्यं कलिं जित्वा सुदुर्जयम् ॥७॥ एवमुक्त्वा महाविष्णुर्देवर्षीन् विससर्ज ह । विचारमकरोच्चित्ते दृष्ट्वा घोरं कलेर्बलम् ॥८॥ कलिमलप्रणाशार्थं समर्थं चिंत्य माधवः । आययौ मयूरक्षेत्रं तपोर्थं गणपे रतः ॥९॥ मलमासं समासाद्य नानामलनिकृंतनम् । गाणेशपंचकं पूज्यं व्रतं चकार मासजम् ॥१०॥ घृतभुक् गणनाथं सोऽसेवयद्यत्नसंयुतः । उषःस्नात्वा यथान्यायं चकार ढुंढिचिंतनम् ॥११॥ ढौंढं मासव्रतं कृत्वा परिपूर्णं जनार्दनः । पारणं ब्राह्मणैः सार्धं निशि निद्रायुतोऽभवत् ॥१२॥ स्वप्ने ददर्श विघ्नेशं धूम्रवर्णं गजाननम् । अश्ववाहं द्विहस्ताभ्यां खड्गचर्मधरं हरिः ॥१३॥ स उवाच महाविष्णुं स्वभक्तं भक्तपालकः । मेघगंभीरनादेन हर्षयन् हर्षवर्धनः ॥१४॥ श्रीगणेश उवाच । नानामलप्रणाशार्थं मलमासव्रतं चरेत् । तदेव सुकृतं विष्णो त्वया मद्भक्तिकारिणा ॥१५॥ मलमासस्य देवोऽहं ढुंढयित्वा विशेषतः । हरामि मलसंभूतं दुःखं पापमयं परम् ॥१६॥ अतस्त्वमीदृशो भूत्वा मां स्मृत्वा हृदि भक्तितः । कलिं जेष्यसि देवेश धर्मं संस्थापयिष्यसि ॥१७॥ एवमुक्त्वा गणेशानस्ततोऽर्धानमाकरोत् । प्रबुद्धः केशवोऽत्यंतं स्मृत्वा हर्षयुतोऽभवत् ॥१८॥ प्रणम्य स मयूरेशं धृत्वा वेषं नराधिकम् । अश्वगः श्यामवर्णस्थो बभूव खड्गधारकः ॥१९॥ कल्किनाम्ना महाबाहुः स्मृत्वा विघ्नेश्वरं हृदि । स्वांगान्नानाविधां सेनां कल्प्य दुष्टवधे रतः ॥२०॥ नाना जनहृदिस्थः स कलिः प्रयत्नसंयुतः । तं जेतुं यतते स्माऽपि हीनवीर्यो बभूव ह ॥२१॥ ततो धर्मयुतांल्लोकांश्चकार स जनार्दनः । हत्वा दुष्टान् महाघोरानानाय्य ब्राह्मणोत्तमान् ॥२२॥ एवं कृत्वांऽतर्दधेऽसौ स्तुतो देवर्षिभिर्हरिः । विकुंठमगमत् सद्यो हर्षनिर्भरमानसः ॥२३॥ शौनक उवाच । धूम्रवर्णावताराख्यो गणेशः कलिना पुरा । युयुधे तं विजित्वा स कलिं कृतमधारयत् ॥२४॥ कल्किर्विष्णुस्तथा दुष्टं कलिं जिग्ये तथाऽधुना । वर्णितं तत्र किं मुख्यं द्विविधं संशयप्रदम् ॥२५॥ सूत उवाच । महाघोरस्वरूपोऽयं

कलिः सृष्टः स्वयंभुवा । पापसेनासमायुक्तो जिग्ये धर्मं क्षणे क्षणे ॥२६॥ तन्नाशार्थं विशेषेण देवा मुनिगणास्तथा ।
नानावताररूपैस्तं जयंति स्म प्रयत्नतः ॥२७॥ गणराजस्य तदपि वरेण मूलवर्जितः । कलिर्न जायते विप्र पुनर्वृद्धिं प्रयाति
सः ॥२८॥ दशवर्षवयोयुक्ता नारी गर्भवती भवेत् । गृहे गृहे तथा त्रिंशत् परमायुर्भवेन्नृणाम् ॥२९॥ वर्णसंकररूपाश्च जनाः
सर्वे धरातले । सार्धैकभागो विश्वस्थो भवद्धर्मो महामुने ॥३०॥ तदा विष्णुः सुराद्यैः संप्रार्थितः कल्किरूपधृक् । जित्वा
कलिं पुनः सोऽपि धर्मं संस्थापयेत् परम् ॥३१॥ यदा पंच वयो वर्षा नारी गर्भवती भवेत् । षोडशाब्दपरं चायुर्मानवानां
गृहे गृहे ॥३२॥ महाघोरं कलिं वीक्ष्य कस्मिन् कल्पे शिवादयः । तं जेतुं न समर्थाश्च बभूवुर्विष्णुमुख्यकाः ॥३३॥ विश्वा-
धर्मोऽत्र रूपेण धर्मस्तिष्ठद्धरातले । हाहाकाररवैर्युक्ता जनास्तत्र सुदुःखिनः ॥३४॥ तदा विघ्नेश्वरं सर्वे गच्छंति स्म शरण्यकम् ।
धूम्रवर्णो गणाध्यक्षो कलिं जिग्ये सुदुर्जयम् ॥३५॥ पुनर्धर्मं समास्थाप्य कृतं तथा महामुने । एवं कलिबलं दृष्ट्वाऽवतारं
कुरुते स्म च ॥३६॥ एवं मत्सभवे मासि व्रतं कृत्वा जनार्दनः । जिग्ये कलिमलं पूर्णं महापापौघरूपिणम् ॥३७॥ अन्यच्छृणु
महाविप्र माहात्म्यं मलसंभवम् । धौम्यः सौम्यतपोयुक्तो बभूव परमद्युतिः ॥३८॥ स ययौ योगप्राप्त्यर्थं दधीचिं योग-
पारगम् । तं प्रणम्य विनीतात्मा संस्थितस्तेन पूजितः ॥३९॥ उवाच तं महाभागं दधीचिं मुनिवंदितम् । कृतांजलिर्नतो
भूत्वा धौम्यश्च तपतां वरम् ॥४०॥ धौम्य उवाच । तपसा स्वर्गभोगाश्च लभ्यते सर्वजंतुभिः । ब्रह्मभूयप्रदं विप्र तपो नैव
प्रकीर्तितम् ॥४१॥ अतो मां शाधि तं योगिन् योगं शांतिपदप्रदम् । संसाध्य कृतकृत्योऽहं भविष्यामि विशेषतः ॥४२॥
ब्रह्मणि तन्मया विप्र कथ्यते ब्राह्मणा बुधैः । अतो मां ब्राह्मणं पूर्णं कुरुष्व कृपया विभो ॥४३॥ धौम्यस्य वचनं
श्रुत्वा हर्षयुक्तो महामुने । दधीचिस्तं महाभागं जगाद हर्षसंयुतः ॥४४॥ दधीचिरुवाच । ब्रह्म नाना विधं प्रोक्तं वेदादिषु
विशेषतः । गाणेशं तेषु मुख्यं च ब्रह्मणां ब्रह्मदायकम् ॥४५॥ अहं पुरा तपोनिष्ठः क्षुपं राजशिरोमणिम् । स्पर्धयित्वा
महाभागाऽभवं शैवो निरंतरम् ॥४६॥ क्षुपार्थमागतं विष्णुं जित्वा योगपरायणः । ब्रह्मणि सहजे विप्र संस्थितोऽहं
सुसौख्यदे ॥४७॥ तत्र स्वाधीनभावं च दृष्ट्वा भ्रांतोऽभवं पुरा । स्वाधीनत्वं पराधीनत्वं ब्रह्मणि न दृश्यते ॥४८॥ ततोऽहं
शांतिप्राप्त्यर्थं शंकरं चागमं प्रभुम् । तं प्रणम्य महादेवमस्तवं विविधैः स्तवैः ॥४९॥ ततो मामब्रवीच्छंभुः स्मयमान इदं
वचः । किमर्थमागतो विप्र दधीचे वद सांप्रतम् ॥५०॥ शिवस्य वचनं श्रुत्वा हर्षयुक्तो महादरात् । पुनः प्रणम्य विश्वेशं

कृतांजलिपुटोऽवदम् ॥५१॥ दधीचिरुवाच । नमस्ते शंकरायैव शिवाय सुखवादिने । ब्रह्मणे सहजायैव नेतिरूपप्रधारिणे ॥५२॥ स्वामिन्नव्यक्तगोऽहं तु ब्रह्मप्राप्त्यर्थमादरात् । घोरं सहजजं तत्र भावं दृष्ट्वाऽतिविस्मितः ॥५३॥ स्वाधीनत्वं कथं तत्र सहजे ब्रह्मणि प्रभो । स्वाधीनान्न परं ब्रह्म लभ्यते योगसेवया ॥५४॥ स्वाधीनत्वं पराधीनत्वं ब्रह्मणि न दृश्यते । कथं स्वाधीनजं मोहं दधते सहजात्मकम् ॥५५॥ अहं शैवः सदा नाथं त्वां जानामि परात्परम् । अतस्त्वां शरणं यातः शांतियोगं वदस्व माम् ॥५६॥ श्रीशिव उवाच । सम्यक् पृष्टं त्वया विप्र सर्वेभ्यः सुखदायकम् । कथयामि महायोगं ब्रह्म तन्मयताकरम् ॥५७॥ स्वाधीनं त्रिविधं तात वर्तते न कदाचन । तुरीयं सहजं ब्रह्म स्वाधीनं नात्र संशयः ॥५८॥ चतुर्णामत्र संयोगे स्वानंदः परिकीर्तितः । स्वसंवेद्येन योगेन लभ्यते योगिभिः परः ॥५९॥ पंचभिर्वर्जितो योगो ह्ययोग इति कथ्यते । न तत्र ब्रह्मणां योगो जगतां जायते कदा ॥६०॥ तयोर्योगे महायोगिन् शांतियोगः प्रकीर्तितः । पंचचित्तभवं भावं त्यक्त्वा शांतिमवाप्स्यसि ॥६१॥ अहं गणेशरूपश्च भिन्नत्वं मे न वर्तते । सदा संयोगता कुत्राऽयोगता भ्रांतिदा भवेत् ॥६२॥ पंचचित्तमयी बुद्धिः सिद्धिर्भ्रांतिकरी मता । मायें त्यक्त्वा स्वयं चिंतामणिः साक्षाद्भविष्यसि ॥६३॥ एवमुक्त्वा स्वयं मंत्रं ददौ शंभुर्महामनुम् । एकाक्षरं गणेशस्य तेनाहं भ्रामितोऽवदम् ॥६४॥ शैवोऽहं सततं नाथ किं मां वदसि मानद । गणेशोपासनं केन मार्गेण तं भजाम्यहम् ॥६५॥ शिव उवाच । गणाः समूहरूपास्तांस्तद्रूपान् भावयाधुना । सहजानां समायोगे गणोऽहं गणपस्य वै ॥६६॥ गणेशाकारभावेन गणाः सर्वे विचारय । तत्र किं व्यभिचारस्ते भवते वद सांप्रतम् ॥६७॥ एवमुक्त्वा स्वयं शंभुर्विरराम महामते । अहं संशयहीनस्त्वं प्रणम्य वनगोऽभवम् ॥६८॥ शंभुना कथितं योगं साधयित्वा परात् परम् । योगशांतियुतोऽहं तु जातः शंभुप्रसादतः ॥६९॥ सदा शांतिसमायुक्तो भजामि द्विरदाननम् । गुरुरूपधरं शंभुं गाणपत्योऽहमादरात् ॥७०॥ एतत्ते कथितं सर्वं ब्रह्मभूयकरं परम् । त्वमपि गणराजं तं भजस्व भावसंयुतः ॥७१॥ एवमुक्त्वा ददौ तस्मै गाणेशं षोडशाक्षरम् । मंत्रं दधीचिः प्रेम्णा संयुतः सकलसिद्धिदम् ॥७२॥ पुनश्चोवाच योगज्ञो दधीचिस्तं विशेषवित् । दधीचिर्गणनाथं तमभजद्भावसंयुतः ॥७३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते मलमाससमाहात्म्ये दधीचिधौम्यसंवादो नाम चतुस्त्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । धौम्यो जजाप मंत्रं तं ध्यात्वा हृदि गजाननम् । क्रमेण योगभूमिस्थः शमदमपरोऽभवत् ॥१॥ ततः समागतं वीक्ष्य मलमासं विशेषतः । अज्ञानमलनाशार्थं चकार तद्व्रतं व्रतम् ॥२॥ उषः स्नात्वा विधानेन गाणेशे पंचके रतः । सदा गणपतिं धौम्यः सस्मार शुद्धचेतसा ॥३॥ आगतं गणराजं तं ततो भक्तो मुनीश्वर । अमायां स समालोक्य हर्षितोऽभूत् महामुनिः ॥४॥ उत्थाय तं प्रणम्याऽऽदौ पुपूज भक्तिसंयुतः । पुनः प्रणम्य विघ्नेशं तुष्टाव कृतसंपुटः ॥५॥ धौम्य उवाच । नमाम्यहं गणेशानं सर्वसिद्धिप्रदायिनम् । भक्तानां भवयुक्तानामन्येषां विपरीतगम् ॥६॥ धन्योऽहं सर्वभावेष्वधुना दृष्ट्वा गजाननम् । किं स्तौमि त्वां महाभाग योगेशं योगरूपिणम् ॥७॥ तव दर्शनमात्रेण ज्ञानयुक्तो वदाम्यहम् । स्तोत्रं ते प्रीतिदं पूर्णं शृणु सर्वज्ञसत्तम ॥८॥ गणेशाय नमस्तुभ्यं योगशांतिप्रदायिने । शांतीनां शांतिरूपाय हेरंबाय नमो नमः ॥९॥ अनामयाय ज्येष्ठाय ज्येष्ठपदप्रदायिने । ज्येष्ठानां ज्येष्ठरूपाय विघ्नेशाय नमो नमः ॥१०॥ नामरूपात्मकेष्वेव शक्तिरूपाय ते नमः । आत्मसु स्वयं तुभ्यं समेषु विष्णवे नमः ॥११॥ अव्यक्तेषु महेशाय संयोगेषु निजात्मने । निवृत्तिषु ह्ययोगाय कलांशेन नमो नमः ॥१२॥ योगेषु शांतिरूपाय ब्रह्मणस्पतये नमः । आदिमध्यांतभेदैस्तु खलकाय नमो नमः ॥१३॥ नानामायाप्रचालाय सिद्धिबुद्धिपते नमः । स्वानंदवासिने तुभ्यं भक्तरक्षणतत्पर ॥१४॥ किं स्तौमि त्वां गणाधीश वेदा योगिन एव च । न समर्था अतो नाथ प्रणमामि गजाननम् ॥१५॥ एवमुक्त्वा गणाधीशं पपाताऽसौ धरातले । दंडवद्गणनाथस्य पादौ गृह्य महामुनिः ॥१६॥ तमुत्थाप्य स्वयं प्राह गणेशो ब्रह्मणां पतिः । वरान् वरय धौम्य त्वं दास्यामि स्तोत्रतोषितः ॥१७॥ स्तोत्रं त्वया कृतं मे यत् पठते शृण्वते सदा । सर्वसिद्धिप्रदं चास्तु नानाभावार्थदायकम् ॥१८॥ योगशांतिप्रदं पूर्णं मयि भक्तिविवर्धनम् । यं यमिच्छति तं तं वै दास्यामि स्तोत्रतोषितः ॥१९॥ सूत उवाच । गणेशवचनं श्रुत्वा धौम्यो हर्षसमायुतः । तं जगाद गणाधीशं भक्तेशं भक्तवत्सलम् ॥२०॥ धौम्य उवाच । प्रसन्नोऽसि यदा नाथ तदा ते भक्तिमुत्तमाम् । देहि मे योगशांतिं तु यत्र त्वं मोदसे सदा ॥२१॥ तथेति गणनाथस्तमुक्त्वा चांतर्हितोऽभवत् । धौम्यः खिन्न इवात्यंतं तत्रैव संस्थितोऽभवत् ॥२२॥ तत्र संस्थापयामास ब्राह्मणैर्मंत्रकोविदैः । गणेशं तं सदा ध्यात्वा पूज्य भक्तिं चकार ह ॥२३॥ शौनक उवाच । अकर्मकारिणः प्रोक्ताः सात्त्विकाः शास्त्रसंमतम् । कर्मकर्तार एवं तु राजसाः परिकीर्तिताः ॥२४॥ विकर्मकारिणः सर्वे तामसाः सूत निश्चितम् । त्रिधा

भेदयुताः सर्वे भवंति भुवि मानवाः ॥२५॥ ब्रह्मार्पणतया मुक्तिं गच्छंति द्विज सात्त्विकाः । सकामाद्राजसा जन्ममृत्युयुक्ता भ्रमंति ते ॥२६॥ तामसा नरकेष्वेव शिश्नोदरपराः किल । गच्छंति त्रिगुणे भावे संस्था जनास्त्रिधा गतिम् ॥२७॥ तत्र तामसभावाख्यः शंकरः परिकीर्तितः । तं भजंति महाभागाश्चतुर्वर्गफलार्थिनः ॥२८॥ तामसस्य तु ये भक्ता नारकाः संमताः पुरा । शिवभक्ताः कथं सर्वे भवंति ब्रह्मभूतकाः ॥२९॥ सूत उवाच । सम्यक् पृष्टं त्वया विप्र सर्वेषामुपकारकम् । कथयामि यथा व्यासाच्छ्रुतं सर्वज्ञसत्तमात् ॥३०॥ तम अज्ञानरूपं यत् सौषुप्तं शास्त्रसंमतम् । अज्ञानात् द्विविधं सर्वं समुत्पन्नं विचारय ॥३१॥ सात्त्विकमांतरं स्वाप्नं जागृद्बाह्यं तु राजसम् । तयोर्मूलस्वरूपत्वात्तामसः शंकरः स्मृतः ॥३२॥ तत्राधिकारकं वक्ष्ये त्रिगुणरूपधारिणाम् । क्षणे क्षणे रजः संस्था ह्यवस्था विविधात्मिका ॥३३॥ सृजति सात्त्विकस्तद्वदवस्थाः पालको मतः । तामसस्ताः समाहृत्य लीनाः करोति सर्वदा ॥३४॥ अतः सर्वमिदं विप्र त्रिभिर्व्याप्तं समंततः । गर्भाधानादिप्रारभ्य मरणांतं सुशोभने ॥३५॥ कर्माकर्मविकर्माणि त्रिगुणैः संयुतानि च । कर्मयोगस्य विप्रेश गुणा इमे प्रकीर्तिताः ॥३६॥ न तत्र शंभुमुख्यास्ते सुरा ग्राह्या बुधैः कदा । अतः शंकरभक्ताश्च लभंते सर्वमंजसा ॥३७॥ अधुना शृणु माहात्म्यं मलमासभवं परम् । वैश्यः कश्चिच्छमो नाम बभूव मालवे मुने ॥३८॥ स श्रुत्वा मलमासस्य माहात्म्यं मलनाशनम् । गणेशभक्तिसंयुक्तश्चकार व्रतमुत्तमम् ॥३९॥ मलमासं समासाद्य स्नात्वा प्रातर्गणाधिपम् । सस्मार स्मरणेनैव ततः कार्यपरोऽभवत् ॥४०॥ एकदा मार्गसंस्थं च वैश्यं निद्रायुतं निशि । तत्र तं भक्षितुं प्रेता दश याता महाबलाः ॥४१॥ तस्मिन् काले शमो दैवादभूज्जागृत् महामुने । ददर्श तान् महाप्रेतान् सस्मार गणनायकम् ॥४२॥ जगाद स्वांतरे सोऽपि गणेश करुणानिधे । रक्ष मां प्रेतपेभ्यस्त्वं त्वत्पादे भक्तिसंयुतम् ॥४३॥ मलमासस्य देवेश दिवसाः सप्त एव च । उर्वरिता व्रतं मेऽत्र भग्नं नोचेद्भविष्यति ॥४४॥ समाप्ते मलमासे मां मारयस्व गजानन । नाधुना व्रतसंस्थं तु रक्ष रक्ष दयानिधे ॥४५॥ मलमासव्रते संस्थं दृष्ट्वा प्रेता भयातुराः । जातिस्मरा बभूवुस्ते रुरुदुस्तं प्रणम्य वै ॥४६॥ ततः स विस्मितो भूत्वा तान् प्रपच्छ महाबलान् । किमर्थं दुःखसंयुक्ता भवंतो मां ब्रुवंतु च ॥४७॥ प्रेता ऊचुः । पूर्वजन्मनि भो वैश्य वयं ब्राह्मणसंभवाः । अनाचाररताः सर्वे मृता यमगृहे गताः ॥४८॥ तत्र नानाविधां पूर्णां यातनां दुःखदां पराम् । भुक्त्वा प्रेताः कृतास्तेन यमेन साधुसत्तम ॥४९॥ अत्र शीतोष्णकाद्येषु नाना द्वंद्वेषु सर्वदा । पतिता

दुःखसंयुक्ता भ्रमामो यत्र तत्र ह ॥५०॥ अधुना दैवयोगेन भक्षितुं त्वां समागताः। त्वद्दर्शनजपुण्येन जातिस्मरा भवामहे ॥५१॥ मलमासव्रतस्थस्त्वं तारयास्मान् दयानिधे। गणेशस्मृतिसंयुक्तः स्नानं करोषि नित्यदा ॥५२॥ एकस्नान-भवं पुण्यं देहि वैश्य वयं तदा। अस्मभ्यं तेन निःपापा गमिष्यामोऽपुनर्भवम् ॥५३॥ प्रेतानां वचनं श्रुत्वा हर्षयुक्तः शमोऽब्रवीत्। प्रेतान् दुःखयुतान् वीक्ष्य दयायुक्तः स्वभावतः ॥५४॥ शम उवाच। किं मया क्रियते प्रेता मलमासभवं व्रतम्। स्नानमात्रं कृतं नित्यं गणेशस्मृतिसंयुतम् ॥५५॥ गणेशस्मरणस्यैव महिमा केन गण्यते। पुराणेषु श्रुतं तस्मात् वचः शृणुत मे हितम् ॥५६॥ एकनामस्मृतेः पुण्यं ददामि स्नानसंभवम्। तेन बंधनहीनाश्च भविष्यथ न संशयः ॥५७॥ एवमुक्त्वा ददौ तेभ्य एकस्नानभवं फलम्। मलमासे गणेशस्य स्मृतियुक्तं महामुने ॥५८॥ ततस्तत्र समायाता गाणेशा यानसंयुताः। प्रेतान् गृह्य ययुः सर्वे स्वानंदं गणपे रताः ॥५९॥ तत्र लंबोदरं दृष्ट्वा ब्रह्मभूता बभूविरे। प्रेताः पश्य महाश्चर्यं शौनक मलमासगम् ॥६०॥ एवं नाना जना विप्र सिद्धिं प्राप्ता विशेषतः। ढौंढे मासे कति ब्रूयां संख्यातुं न क्षमो ह्यहम् ॥६१॥ संक्षेपेण मया तुभ्यं कथितं चरितं शुभम्। मलमासभवं चित्रं श्रवणात् सर्वदायकम् ॥६२॥ यः पठेच्छ्रावयेद्वाऽपि शृणुयात् स लभेत परम्। इह भुक्त्वाऽखिलान् भोगान् स्वजनैः परिवारितः ॥६३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते मलमासमाहात्म्यवर्णनं नाम पंचत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच। प्रसंगात् सर्वमासानां कथयामि चरित्रकम्। गणेशभक्तिदं चित्रं शृणुध्वं मुनयः परम् ॥१॥ प्रातः स्नानं विधायैव गाणेशे पंचके रतः। नित्यं द्वादशमासेषु स सर्वार्थमवाप्नुयात् ॥२॥ असाध्यं साधयेत् मर्त्यः परं यद्यपि दुर्लभम्। लभेत द्वादशमासेषु गणेशे पंचके रतः ॥३॥ अत्र ते कथयिष्यामीतिहासं पूर्वसंभवम्। श्रवणात् पठनात् नृणां पावनं सर्वसिद्धिदम् ॥४॥ नलो नाम महाराजो निषधेषु बभूव ह। धर्मशीलो वदान्यश्च स्वधर्मनिरतः सदा ॥५॥ दमयंत्या युतः सोऽपि विचारमकरोत् हृदि। त्रिलोकगमने शक्तो भविष्यामि कथं नरः ॥६॥ नरदेहधरो यस्तु

स्वेच्छागतिनियुतो भवेत । तदा तस्य यशो धन्यमिह सर्वान्तिगं भवेत ॥७॥ एवं विचार्य विप्रेशं गौतमं स ययौ नृपः । प्रणम्य तं महाभागं पप्रच्छ स्वहितावहम ॥८॥ नल उवाच । नरदेहधरः स्वामिंस्त्रिलोकगः कथं भवेत । तन्मे कथय तत्त्वज्ञ करिष्यामि यथातथम ॥९॥ गौतम उवाच । श्रावणे तु प्रतिपदि शुद्धपक्षे महानृप । प्रातः स्नात्वा स्वशास्त्रोक्तं कर्म नित्यात्मकं चरेत ॥१०॥ ततो गाणेशकं राजन पंचकं भक्तिसंयुतः । नियमेन समापृच्छ्य व्रतयुक्तो भवेन्नरः ॥११॥ आषाढीं स समासाद्यामावास्यां गणपं स्वतः । मंडपे गणनाथं च पूजयेद्ब्रमनिर्मितम् ॥१२॥ द्वादश ब्राह्मणांस्तत्र वरयेद्वेदपारगान । होमं कुर्यात दशांशेन जपस्यैतस्महामते ॥१३॥ वायनं ब्राह्मणायैव प्रदद्यात स बलिं चरेत । ततः पूर्णाहुतिं कृत्वा भोजयेत्तांस्तु पायसैः ॥१४॥ प्रतिपदि पुनः पूज्य गणेशं सर्वसिद्धिदम । सुवासिनीभिः संयुक्तान द्विजान स्त्रीभिस्तु भोजयेत ॥१५॥ एकविंशतिसंख्याकानथवा संख्ययातिगान । दक्षिणां विपुलां दत्त्वा तोषयेत्तान विशेषतः ॥१६॥ योषिद्भ्यः कंचुकादींश्च नानालंकारकांस्तथा । प्रदद्याऽऽत्मस्य स सर्वान गृह्याशिषं विसर्जयेत ॥१७॥ सोपस्कारं गणाध्यक्षं प्रदद्यात गुरवे परम । अन्येभ्यः शक्तिप्राधाण्याद्याद्दानानि हर्षतः ॥१८॥ एवं कुरु महीपाल ज्ञानयुक्तो भविष्यसि । त्रिलोकगस्तथा सर्वं लभसे मनसीप्सितम ॥१९॥ एवमुक्त्वा महायोगी गौतमो विरराम ह । नलस्तं प्रणिपत्यैव स्वगृहं प्रययौ पुरा ॥२०॥ चकार सर्वधर्मज्ञो नलो गणपतौ रतः । यथाविधि व्रतं मुख्यं संवत्सरप्रमाणकम् ॥२१॥ ततः स योगिवंद्यश्च बभूव ज्ञानसंयुतः । त्रिलोक्यां गमने शक्तो भूपालो नरदेहगः ॥२२॥ एवं नाना जना विप्र व्रतं संवत्सरात्मकम् । चक्रुस्ते योगिवंद्याश्च बभूवुर्ज्ञानसंयुताः ॥२३॥ मनेप्सितां प्रलभ्यैव दुर्लभां सिद्धिमुत्तमाम् । अंते स्वानंदगाः सर्वे ब्रह्मभूता बभूविरे ॥२४॥ तेषां चरित्रकं सर्वं मया वक्तुं न शक्यते । अनंतत्वात् महाभाग संक्षेपेण निरूपितम् ॥२५॥ गाणेशपंचकस्यैव सेवने न समर्थकाः । किंचिन्नियमसंयुक्ता व्रतं चक्रुः परे नराः ॥२६॥ तेऽपि सिद्धिं समासाद्य मनेप्सितां मुदा युताः । अंते गणपलोके तु गत्वा ब्रह्म प्रलेभिरे ॥२७॥ शूद्रः कश्चिद् बृहत्कर्मा नाम्ना वंध्यो बभूव ह । पुत्रार्थं प्रयतो भूत्वा नानाकर्मपरोऽभवत् ॥२८॥ न लेभे संततिं सोऽपि ततोऽतिदुःखसंयुतः । प्रजगाम वनं घोरं तत्र विप्रान् ददर्श ह ॥२९॥ तान् प्रणम्य महाभागानपृच्छत् पुत्रदायकम् । उपायं ते समाचख्युर्व्रतं संवत्सरात्मकम् ॥३०॥ श्रुत्वा विधियुतं पूर्णं व्रतं गाणेश्वरं परम्। प्रणम्य तान् समायातः स्वगृहं हर्षसंयुतः ॥३१॥ गाणेशपंचकं पूर्णं सेवितुं न बभूव ह । समर्थः स ततो विप्र

चकार स्वल्पभावनः ॥३२॥ स्नात्वा गणपतेः पूजां चकार पार्थिवीं पराम् । नाममंत्रैः स्वयं नित्यं ब्रह्मचर्ययुतोऽभवत् ॥३३॥ एकभुङ् नियमं संस्थश्चकार व्रतमुत्तमम् । समाप्य तद्व्रतं पूर्णं गणेशमभजन्मुदा ॥३४॥ द्विजातीनां स शुश्रूषां चकार धर्मसंयुतः । मिलितेन तदन्नेन कुटुंबं समपोषयत् ॥३५॥ ततः स्वल्पेन कालेन पुत्रं लेभे महामुने । ज्ञानयुक्तं सरूपं तं दृष्ट्वाऽतिहर्षितोऽभवत् ॥३६॥ क्रमेण पंच पुत्राश्च पुत्र्यस्तिस्रो बभूविरे । शूद्रस्य स गणेशानं मन्यते स्म समर्थकम् ॥३७॥ अंते स्वानंदलोकं स जगाम भार्यया युतः । इह भुक्त्वाऽखिलान् भोगान् ब्रह्मभूतो बभूव ह ॥३८॥ एवं नाना जना विप्र किंचित् कृत्वा व्रतात्मकम् । नियमं सिद्धिसंयुक्ता बभूवुः कति ते ब्रुवे ॥३९॥ उद्यापनं मया प्रोक्तं तदेव सर्वसंमतम् । सर्वमासेषु कर्तव्यं मासात्मकव्रतेऽपि च ॥४०॥ चातुर्मास्यव्रते विप्र उद्यापनमिदं स्मृतम् । मलमासव्रते तद्वदिदं कर्तव्यमादरात् ॥४१॥ सांवत्सरं व्रतं मुख्यं कथितं ते समासतः । पठनाच्छ्रवणादेवं सर्वदं प्रभविष्यति ॥४२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते संवत्सरव्रतमाहात्म्यवर्णनं नाम षट्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । चातुर्मास्य व्रतं ब्रूहि गाणेशं सर्वदायकम् । न तृप्यामि कथां श्रुत्वा नानाश्चर्यविवर्द्धिनीम् ॥१॥ सूत उवाच । अत्र ते कथयिष्यामि पुरातनभवं परम् । इतिहासं महाभाग श्रवणात् सर्वदायकम् ॥२॥ बृहदश्व इति ख्यातो ब्राह्मणः परमार्थवित् । तपोयुक्तो महातेजाः शापानुग्रहणे क्षमः ॥३॥ नानातपःप्रभावेणाऽतज्ज्ञानं संबभूव ह । हृदि तस्य ततः सोऽपि शमदमपरोऽभवत् ॥४॥ सोऽहंब्रह्मणि संस्थोऽभूत् अंते शून्यमये मुनिः । शांतियुक्तः स्वभावेन संस्थितो ब्रह्मवित्समः ॥५॥ तस्याऽऽश्रमे महायोगी विभांडः सहसाऽऽगतः । तं प्रणम्य महाभागं पुपूज भक्तिसंयुतः ॥६॥ विश्रांतं मुनिमुख्यं स जगाद हर्षसंयुतः । विभांडं विनयेनैव युक्तो वचनमुत्तमम् ॥७॥ बृहदश्व उवाच । निरालंबमयं ब्रह्म सदैकरूपधारकम् । ध्यातृध्यानविहीनं यत् तत्त्वमेव न संशयः ॥८॥ महाभाग्येन दृष्ट्वा त्वां साक्षात् योगीश्वरं परम् । अधुना कृतकृत्योऽहं जातस्ते पाददर्शनात् ॥९॥ एवं तस्य वचः श्रुत्वा विभांडस्तमुवाच ह । योगयुक्तं

सुनैपुण्यं ज्ञात्वा शांतिप्रदायकः ॥१०॥ विभांड उवाच अहं गणेशरूपश्चेत्तत्रैकत्वं न विद्यते । निरालंबभवं सौख्यं मुने कुत्र प्रवर्तते ॥११॥ तस्य तद्वचनं श्रुत्वा बृहदश्वस्तमब्रवीत् । सुशांतिदं विस्मितः किं तदर्थं लालसी सदा ॥१२॥ बृहदश्व उवाच । पूर्णशांतिप्रदं नाथ वद मां करुणानिधे । सोऽहंकारात्परं भावं न जानामि कदाचन ॥१३॥ विभांड उवाच । अहं पुरा तपोनिष्ठोऽभवं तत्र समाययुः । इंद्रेण प्रेषिता नार्यस्तपोभंगार्थमादरात् ॥१४॥ नृत्यगानादि चिह्नैर्मां मोहनाय समुद्यताः । अप्सरसस्ततो धैर्यमहं धृत्वा स्थितोऽभवम् ॥१५॥ ततोऽति हठसंयुक्ताः स्त्रियः कामसमन्विताः । हावभावकटाक्षाद्यै-श्चिह्नैर्मां समपीडयन् ॥१६॥ ततो मे विह्वलत्वाद्वै वीर्यं पपात भूतले । तृणयुक्तं सुसंखिन्नोऽगमं त्यक्त्वा स्वमाश्रमम् ॥१७॥ ततस्त्वप्सरसः सर्वा जग्मुः स्वर्गं महामुने । अहं जाजलिकं विप्रमगमं तं ततोऽभवम् ॥१८॥ तेन संमानितो नित्यमवसं तपसा युतः । अवदं गणनाथस्य पूजने सक्तमादरात् ॥१९॥ एकनिष्ठतया स्वामिंस्त्वित्यं भक्तिसमन्वितः । त्यक्त्वा देवेंद्रकान् सर्वान् गणेशं भजसे कथम् ॥२०॥ एवं पृष्टो मया योगी जाजलिः परमार्थवित् । मामुवाच दयायुक्त-स्तत्तेऽहं कथयामि तु ॥२१॥ जाजलिरुवाच । गणेशाख्यं परं ब्रह्म वेद पश्य महामते । ब्रह्मणस्पति संज्ञं तं वदंति वेदवा-दिनः ॥२२॥ अहं पुरा तपोनिष्ठोऽभवं नित्यं महामुने । अत्यंततपसा मेऽभूद् व्याप्तं सर्वं चराचरम् ॥२३॥ ततोऽकस्मात् समायातमाश्रमे मे महामुनिः । लोमशं तं प्रणम्याहमपूजं भक्तिसंयुतः ॥२४॥ ततो मामब्रवीत् विप्रो लोमशः सर्ववित् मुनिः । दयायुक्तः स्वभावेन महायोगींद्रवंदितः ॥२५॥ लोमश उवाच । किं तपोनिष्ठभावेन साध्यं कर्तुमभीप्ससि । योगं साधय तत्त्वज्ञ स्वयं ब्रह्म भविष्यसि ॥२६॥ तपसा सर्वभोगाश्च लभ्यते मानवैः सदा । पुनः पतनभावात्तन्नसत्तं द्वंद्वसंयुतः ॥२७॥ एवं तस्य वचः श्रुत्वा तं प्रणम्य पुनर्मुनिम् । अपृच्छं योगदं मार्गं विनयेन समन्वितः ॥२८॥ केन मार्गेण योगज्ञ लभे योगं महामुने । तं वदस्व करिष्यामि त्वच्छिष्योऽहं विधानतः ॥२९॥ लोमश उवाच । पुराऽहं कर्मयोगेन मूकस्तपःसमन्वितः । प्रणम्य भक्त्या ब्रह्माणमपृच्छं सर्वदं वद ॥३०॥ ततस्तेन समाख्यातं सर्वसारं सुशांतिदम् । गाणेशं सर्वमान्यं तत् पुराणं संश्रुतं मया ॥३१॥ श्रवणस्य च माहात्म्याद्वाणीयुक्तोऽभवं पुरा । ततो हर्षसमायुक्तो मुने विधिं नतो विभुम् ॥३२॥ ततः स्वमाश्रमं गत्वा गणेशकथितं परम् । गीताज्ञानं समाराध्य योगिवंद्योऽभवं मुदा ॥३३॥ ततो गणेश्वरं स्थाप्य स्वाश्रमे तं विधानतः । पूज्य ध्यानपरो भूत्वा तोषयामि स्म विघ्नपम् ॥३४॥ एकाक्षरजपा-

सक्तं मां ज्ञात्वा गणनायकः। शतवर्षैः प्रसन्नोऽभूदाययौ वरदः प्रभुः ॥३५॥ तमागतं समालोक्योत्थाय नत्वा गजाननम्। पूज्य नानाविधैः स्तोत्रैः स्तुतोऽसौ मामुवाच ह ॥३६॥ श्रीगणेश उवाच। वरं वृणु महाभागेप्सितं मनसि लोमश। दास्यामि तपसा तुष्टो भक्त्या ते मुनिसत्तम ॥३७॥ लोमश उवाच। गाणपत्यं कुरुष्व त्वं मां ते भक्तिसमन्वितम्। नान्यं याचे वरं नाथ मिथ्या मायाभ्रमात्मकम् ॥३८॥ आयुष्यं विपुलं देहि तेन युक्तो निरंतरम्। भजिष्यामि गणेशान चरणं ते तदर्थतः ॥३९॥ ततो मामब्रवीद्देवो गणेशो भक्तवत्सलः। गाणपत्यप्रियोऽत्यंतं भविष्यसि स्वयं मुदा ॥४०॥ कल्पे कल्पे च ते रोम लयं गच्छति नित्यदा। एवं क्रमेण सर्वाणि यानि लोमानि नाशकम् ॥४१॥ तदा देहं परित्यज्य मल्लोके आगमिष्यसि। तत्र मां भक्तिभावेन भजिष्यसि न संशयः ॥४२॥ यद्यदिच्छसि योगीश तत्तत्ते सफलं सदा। भविष्यति स्मृतः कार्ये प्रकटोऽहं भवामि ते ॥४३॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः। खिन्नोऽहं तं समास्थाप्य नित्यपूजापरायणः ॥४४॥ ततो बहौ गते काले मुने मन्वंतरात्मके। मघवाऽन्यः समुत्पन्नस्त्रिलोकीराज्यकारकः ॥४५॥ विश्वकर्माणमाहूय जगाद मघवा वचः। गृहं मे कुरु शोभाढ्यं नानाऽऽश्चर्ययुतं परम् ॥४६॥ वाटिकादिकमेवं मे भोगार्थं रचयस्व च। तथेति विश्वकर्माऽसौ चकार दुःखसंयुतः ॥४७॥ तथापि मघवा शांतो न बभूव महामुने। तेनाश्चर्ययुतो नित्यमिदं कुरु महामते ॥४८॥ विश्वकर्मा ततः खिन्नः सस्मार गणनायकम्। इंद्रं त्यक्त्वाऽन्यदेवानां गृहार्थं व्याकुलोऽभवत् ॥४९॥ कदाऽयं गृहकार्यं तु गजाननः समाप्य माम्। मोचयिष्यति देवेशोऽन्यदेवकार्यसिद्धये ॥५०॥ ततोऽहं दैवयोगतागमं देवेंद्रसत्तमम्। मघवा पूज्य मां वाक्यं जगाद हर्षसंयुतः ॥५१॥ इंद्र उवाच। धन्यं मे जन्मकर्मादि त्वत्पादयुगदर्शनात्। किं पत्रं मस्तके विप्र पलाशस्य धृतं वद ॥५२॥ लोमश उवाच। देहो नश्वररूपोऽयं पतिष्यति न संशयः। तदर्थं गृहसंभूतं श्रमं कः प्रसमाचरेत् ॥५३॥ वृष्टिसंवारणार्थायोष्णभावार्थनिवारणात्। पत्रं गृहस्वरूपं तु पुरंदर धृतं मया ॥५४॥ एवं मद्गिरमाकर्ण्य मामुवाच पुरंदरः। कल्पे लोम्नः प्रणाशस्ते भवत्ते नैव लोमशः ॥५५॥ आज्ञां कुरु महाभाग त्वदर्थं गृहमुत्तमम्। कारयिष्यामि विप्रेश तत्र नित्यं सुखी भव ॥५६॥ वयं चतुर्दश प्राज्ञाऽभवन् त्वल्लोमनाशके। तदपि त्वं किमर्थं तं देहं वदसि नश्वरम् ॥५७॥ श्रुत्वाऽहं मघवंतं तमवदं हर्षसंयुतः। इंद्र किं मां त्वं वदसि भ्रांतिदं योगनाशनम्। ॥५८॥ नष्टं देहं समालोक्य कः श्राम्येत्तत्र पंडितः। योगामृतेन संतुष्टोऽहं भ्रमामि यदृच्छया ॥५९॥ पिपीलिका

भवबेंद्रो नरः सुद्युम्नसंज्ञितः। पूर्वसंस्कारयोगेनाश्वमेधशतकारकः ॥६०॥ स त्वं यज्ञफलं भोक्तुं जातोऽसि मघवाऽधुना। पतिष्यसि पुनर्देव तत्र का ते गतिर्भवेत् ॥६१॥ एवमुक्त्वा महायोगी लोमशः स्वप्रभावतः। ददौ जातिस्मरत्वं तु मघवते महायशाः ॥६२॥ मघवा सर्वमालोक्य त्रासयुक्तो बभूव ह। प्रणम्य लोमशं सोऽपि पप्रच्छ हितकारकम् ॥६३॥ इंद्र उवाच। जन्ममृत्युहरं तात वद योगं परात् परम्। येन कामादिकं सर्वं नाशं गच्छति तत्क्षणात् ॥६४॥ लोमश उवाच। गणेशं भज भावेन ततो योगमवाप्स्यसि। ब्रह्मणां ब्रह्मरूपोऽयं सदा शांतिपरायणः ॥६५॥ इंद्र उवाच। नामरूपधरं देवं वदसे किं गणेश्वरम्। योगाकारं महाभाग वद तस्य महो महत् ॥६६॥ लोमश उवाच। योगरूपो गणेशोऽयं योगप्राप्त्यर्थमादरात्। नामरूपधरो जातो भक्तानां क्रीडनोत्सुकः ॥६७॥ संप्रज्ञानमयो देहो मस्तकं गजवाचकम्। असंप्रज्ञानरूपं तत्तयोर्योगे गजाननः ॥६८॥ सिद्धिर्भ्रांतिकरी माया बुद्धिर्भ्रांतिधरा मता। ताभ्यां क्रीडति ब्रह्मेशो जगत्सु ब्रह्मसु प्रभो ॥६९॥ स्वसंवेद्येन योगेन दर्शनं तस्य जायते। तेन स्वानंदवासी स कथितः शास्त्रवादिभिः ॥७०॥ गणाः समूहरूपाश्च बाह्यांतरादियोगतः। ब्रह्माकारो गणेशानस्तेषां स्वामी प्रकीर्तितः ॥७१॥ एवमुक्त्वा महायोगी लोमशो मंत्रमादिशत्। षडक्षरं गणेशस्येंद्रार्थं विधिसमन्वितम् ॥७२॥ इंद्रः प्रणम्य विप्रेशमुवाच विनयान्वितः। वद शीघ्रं गणेशस्य दर्शनं मे कथं भवेत् ॥७३॥ लोमश उवाच। दक्षिणायनरूपा सा रात्रिर्देवी दिवौकसाम्। रात्रौ कर्माधिकारो न नराणां भूनिवासिनाम् ॥७४॥ तज्ज्ञात्वा दुःखसंयुक्ता रात्रिर्ब्रह्माणमावदत्। सत्कर्मसंयुतां नाथ मां कुरुष्व पितामह ॥७५॥ ततो ब्रह्मा ददौ तस्यै मंत्रं षोडशवर्णकम्। गणेशस्य ययौ सा तं प्रणम्य वनमुत्तमम् ॥७६॥ ध्यात्वा हृदि गणाधीशं तताप तप उत्तमम्। आषाढ्यां पूर्णिमायां सा समारेभे ततः परम् ॥७७॥ कार्तिक्यां पूर्णिमायां तां प्रसन्नोऽभूद्गजाननः। आययौ वरदानार्थं रात्रिं भक्तिनियंत्रितः ॥७८॥ समागतं गणाध्यक्षं सा विलोक्य ननाम तम्। तुष्टाव विविधैः स्तोत्रैर्भक्तिनम्रात्मकंधरा ॥७९॥ ततः प्रसन्नतां यातो गणेशस्तामुवाच ह। वरान् वरय रात्रे त्वं दास्यामि हृदि ते स्थितान् ॥८०॥ रात्रिरुवाच। भक्तिं ते चरणे नाथ देहि मेऽनन्यधर्मिणीम्। सत्कर्मसंयुतां मां त्वं कुरुष्व रात्र्यपि प्रभो ॥८१॥ तस्यास्तद्वचनं श्रुत्वा तां जगाद गजाननः। भक्तिर्मदीयपादे ते भविष्यति महामते ॥८२॥ आषाढी पूर्णिमाद्यं च कार्तिकी पूर्णिमांतगम्। चातुर्मास्यं सिद्धिदं च भविष्यति सुधर्मिणाम् ॥८३॥ गाणेशपंचकं सेव्यं चातुर्मास्ये त्वदीयिके। सर्वसिद्धिसमायुक्ता भवि-

ष्यसि न संशयः ॥८४॥ षण्मासेषु महाभागे भव सत्कर्मसंयुता । नाना देवप्रियाऽत्यंतं सत्कर्मणः प्रतापतः ॥८५॥ विवाहादिकमेवं ते समयेन भविष्यति। अन्यन्नानाविधं कर्म देवतोषं तथाऽस्तु च ॥८६॥ चातुर्मास्यव्रतेनैव मां नराः पर्युपासते । सांवत्सरभवं पुण्यं लभंते पूर्णभावतः ॥८७॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो भक्तवत्सलः । रात्रिस्तं प्रणिपत्यैव हर्षयुक्ताऽभवत् सदा ॥८८॥ अतस्त्वं देवराजेंद्र चातुर्मास्यव्रतं कुरु। योगयुक्तो महाभागो भविष्यसि न संशयः ॥८९॥ एवमुक्त्वा महेंद्रं तं पूजितस्तेन चागमम् । स्वस्याश्रमं गणेशानमभजं मुनिसत्तम ॥९०॥ इंद्रस्ततः समाहूय विश्वकर्माणमादरात् । जगाद तं महाभागं गच्छ त्वं स्वगृहं सुर ॥९१॥ विश्वकर्मा ययौ स्थानं स्वकीयं हर्षसंयुतः । अभजद्गणनाथं स विस्मितः सन महामतिः ॥९२॥ इंद्रो राज्यं विनिक्षिप्य देवेषु वनगोऽभवत् । ध्यात्वा हृदि गणेशानमजपत् मंत्रमुत्तमम् ॥९३॥ चातुर्मास्यव्रतं चक्रे गाणेशे पंचके रतः । तेन व्रतप्रभावेण योगयुक्तो बभूव ह ॥९४॥ चित्तमोहं परित्यज्य स चिंतामणितन्मयः । भूत्वा स्वगृहमागत्य चकार राज्यमुत्तमम् ॥९५॥ निःस्पृहः सर्वभोगेषु सदा विघ्नेशतत्परः । बभूव राज्यसंस्थोऽपि महेंद्रः परमार्थवित् ॥९६॥ नित्यव्रतं चकारासौ महेंद्रो भक्तिसंयुतः । चातुर्मास्यभवं विप्र सर्वसिद्धिप्रदायकम् ॥९७॥ भुक्त्वा मन्वंतरस्थं स्वराज्यं निहतकंटकम् । अंते स्वानंदगो भूत्वा ब्रह्मभूतो बभूव ह ॥९८॥ जाजलिरुवाच । देवाः कर्मफलं भुक्त्वा पतंति भूमिमंडले । स्वर्गेषु यत् कृतं कर्म फलहीनं मतं बुधैः ॥९९॥ इंद्रः कथं महाभाग चातुर्मास्यव्रतोद्भवम् । फलं प्राप्य गणेशानं ययावेतं वद प्रभो ॥१००॥ लोमश उवाच । त्वयोक्तं जाजले वाक्यं तदेव सर्वसंमतम् । स्वर्गभूमौ कृतं कर्म निष्फलं जायते सदा ॥१॥ पृथिव्यां भारते खंडे समागत्य महामुने । देवाः कुर्वंति कर्माणि तानि सत्फलकानि तु ॥२॥ कर्मभूमौ कृतं कर्म देवैर्वा दानवैर्नरैः । जंतुभिर्विविधैः सर्वैः सफलं संभवेत् सदा ॥३॥ अतो व्रतं मुख्यतमं कुरु विघ्नेशतत्परः । चातुर्मास्यभवं विप्र गाणेशपंचके रतः ॥४॥ गणेशकृपया सर्वं ज्ञास्यसि नात्र संशयः । अंते तल्लीनतां विप्र गमिष्यसि विशेषतः ॥५॥ जाजलिस्तं प्रणम्याऽऽदौ लोमशं गुरुमुख्यकम् । जगाम स्वाश्रमं त्यक्त्वा बल्लालेशं महामतिः ॥६॥ तत्र गत्वा व्रतं मुख्यं चकार भक्तिसंयुतः । चातुर्मास्ये यथाशास्त्रयुक्तं पयः प्रभक्षयन् ॥७॥ समाप्ते तद्व्रते सद्यः प्रसन्नो गणनायकः । आययौ जाजलिं विप्रं वरदो भक्तवत्सलः ॥८॥ तमागतं समालोक्य जाजलिः प्रणनाम ह । पूज्य तस्य सतुष्टाव कृत्वा करपुटं प्रभुम् ॥९॥ जाजलिरुवाच । नमस्ते ब्रह्मनाथाय

बल्लालेशस्वरूपिणे । बल्लालवरदात्रे ते गणेशाय नमो नमः ॥१०॥ विघ्नेशाय महाविघ्ननाशनाय परात्मने । भक्तानां भक्तनाथायाभक्तानां विघ्नकारिणे ॥११॥ परात्परतरायैव सगुणाय चतुर्भुज । निर्गुणाय नयोगेश हेरंबाय नमो नमः ॥१२॥ वक्रतुंडाय देवायैकदंताय महोदर । लंबोदराय सर्वेषां मात्रे पित्रे नमो नमः ॥१३॥ स्वानंदवासिने तुभ्यं सदा स्वानंदभोगिने । नानामायाप्रचालाय मायिकाय नमो नमः ॥१४॥ सिद्धिबुद्धिपते तुभ्यं सिद्धिबुद्धिमयाय ते । अमेयशक्तये चैव शक्तिहीनाय ते नमः ॥१५॥ देवाय दानवायैव देवदानवमर्दिने । सर्वाकाराय सर्वेभ्यो हीनाय ते नमो नमः ॥१६॥ योगानां योगनाथाय शांतीनां शांतिरूपिणे । ब्रह्मणां पतये तुभ्यं चिंतामणे नमो नमः ॥१७॥ किं स्तौमि त्वां गणाध्यक्ष यत्र वेदा विसिस्मिरे । धन्योऽहं सर्वभावैः पश्यामि त्वां योगरूपिणम् ॥१८॥ एवमुक्त्वा गणेशानं ननाम भक्तिभावनः । तमुत्थाप्य गणेशानो जगाद भक्तवत्सलः ॥१९॥ श्रीगणेश उवाच । त्वया कृतमिदं स्तोत्रं सर्वसिद्धिकरं भवेत् । पठतां शृण्वतां विप्र मयि भक्तिविवर्धनम ॥२०॥ वरान ब्रूहि महाभाग दास्यामि मनसीप्सितान् । तपसा भक्तिभावेन तुष्टो व्रतेन निश्चितम् ॥२१॥ जाजलिरुवाच । तव भक्तिं स्थिरां देहि गाणपत्यपदप्रदाम् । योगशांतिकरीं नाथ नान्यं याचे गजानन ॥२२॥ ओमित्युक्त्वा गणाधीशोऽन्तर्दधे मुनिसत्तम । जाजलिस्तं प्रणम्यैव हर्षयुक्तो बभूव ह ॥२३॥ एवं व्रतस्य माहात्म्यं विभांड कथितं मया । येनाहं योगिनां वंद्योऽभवं योगपरायणः ॥२४॥ तदादि वार्षिकं विप्र चातुर्मास्यभवं व्रतम् । करोमि गणपप्रीत्यै बल्लालेशं समाश्रितः ॥२५॥ त्वमप्येतादृशं विप्र व्रतं कुरु महाद्भुतम् । चातुर्मास्ये महायोगिवंद्यः सद्यो भविष्यसि ॥२६॥ एवमुक्त्वा ददौ तस्मै मंत्रमष्टाक्षरं मुनिः । सविधिं गणराजस्य विभांडाय महात्मने ॥२७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खण्डे धूम्रवर्णचरिते चातुर्मास्यमाहात्म्ये विभांडव्रतोपदेशवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ विभांड उवाच । बल्लालेशचरित्रं मे ब्रूहि योगींद्रसत्तम । बल्लालेशः कथं नाम्ना गणेशोऽभूच्छुभप्रदः ॥१॥ केनासौ स्थापितो देवः पल्लीसामीप्यगोऽभवत् । चरित्रं वद योगीश सर्वसिद्धिकरं परम् ॥२॥ जाजलिरुवाच । सिंधुदेशे समाख्याता पल्ली नाम्नी पुरी पुरा । तत्र कल्याणनाम्नैको वैश्यो धर्मयुतोऽभवत् ॥३॥ इंदुमती महाभागा पत्नी तस्य सुरूपिणी । तस्यां पुत्रोऽभवत्तस्माद्बल्लालो भक्तिसंयुतः ॥४॥ पुत्रस्यैकादशे नाम दिवसे स चकार ह । बल्लालो ब्राह्मणैरुक्तो भक्तिबलसमन्वितः ॥५॥ बल्लालो गणनाथस्य ध्यानयुक्तः सदाऽभवत् । क्षुधां तृषां न जानाति भक्तिभावात् स्म नित्यदा ॥६॥ माता पुत्राय स्तन्यं तु ददौ हर्षसमन्विता । कृत्वा स्मरणमत्यंतमतिविस्मितमानसा ॥७॥ न रुरोद कदा बालस्तन्यार्थं मुनिसत्तम । ततश्चचाल पद्भ्यां स जानुना वैश्यनंदनः ॥८॥ पृथिव्यां गणपं धूलिमयं कृत्वा महामतिः । धूल्योपचारकैस्तं स पूजयामास भक्तितः ॥९॥ ततः पद्भ्यां गतिं चक्रे बल्लालो गणपे रतः । अवदत् स्खलितां वाचं जय विघ्नेश आदरात् ॥१०॥ ततः किंचिद्गते काले स वयस्यैः समन्वितः । पुपूज गणनाथं तं यत्र तत्र महीतले ॥११॥ बालान् संशिक्षयामास मा खेलं कुरुत प्रियाः । नाशभूतं महाभागाः खेलं गाणेशचिह्नितम् ॥१२॥ भजध्वं गणपं नित्यं तेन सर्वं हितं भवेत् । ततस्ते तादृशं चक्रुर्गाणपत्यपरायणाः ॥१३॥ ततः काले गते किंचित्तत्र लोकभवं परम् । विघ्नं भक्तिविघानाख्यं ज्ञात्वा सोऽपि सुदुःखितः ॥१४॥ विचार्य हृदि बालैः स मुदा ग्राममसमीपगम् । पर्वतं वैश्यपुत्रोऽपि जगाम भक्तिकारणात् ॥१५॥ तत्र सुंदररूपं स पाषाणं स्थाप्य बालकैः । पुपूज वनजैः पत्रैः फलैः पुष्पैर्गजाननम् ॥१६॥ त्रिकालपूजनं कृत्वा रात्रौ स्वगृहमाययौ । भुक्त्वा सुष्वाप बल्लालो गाणपत्याग्रणीर्महान् ॥१७॥ पुनः प्रातः समुत्थाय बालकैः स जगाम ह । गणेशं भक्तिसंयुक्तस्तैः पुपूज महामुने ॥१८॥ ततो लोकाः पुरे संस्था बालान् संताड्य तान् जगुः । अभुक्त्वा नित्यमानंदात् कुत्र गच्छथ बालकाः ॥१९॥ निशायामेकभुक्तेन कथं तिष्ठथ नित्यदा । बल्लालसंगसंयुक्ता मा गच्छथ कदाचन ॥२०॥ एवं क्रोधसमायुक्ता जना नगरवासिनः । अशिक्षयन् स्वपुत्रादींस्ते तथापि वनं ययुः ॥२१॥ बल्लालसहिताः सर्वे गणेशभजने रताः । नानाछंदयुतास्ते ते गणेशमभजन परम् ॥२२॥ ततोऽतिक्रोधसंयुक्ताः कल्याणं प्रययुः किल । जनाः श्रेष्ठं महावैश्यं जगुस्ते भयवर्जिताः ॥२३॥ नागरा ऊचुः । बल्लालो बालकान् गृह्य याति नित्यं वनांतरम् । उपोषण-समायुक्तान् रात्रावागच्छति प्रभो ॥२४॥ कृशा नो बालकाः सर्वे कृतास्तेन दुरात्मना । अद्य श्वो वा मरिष्यंति स्वसुतं

नेषां शिक्षयाऽधुना ॥२५॥ नानाप्रयत्नवंतोऽपि वयं सर्वे महामते । नाडयामः सुतान् गृह्य तथापि त्वत्सुते रताः ॥२६॥ महांतं दंडमादाय तद्वचनं श्रुत्वा कल्याणः क्रोधसंयुतः । विसृज्य तान् ययौ शीघ्रं वने हंतुं सुतं शुभम् ॥२७॥ क्रोधयुक्तः स्वभावतः । जगाम बालसामीप्ये ददर्श बालकान् मुने ॥२८॥ तृणकाष्ठादिभिश्चित्रं धातुभी रंजितं परम् । कृत्वा देवालयं देवं स्थाप्य पूजापरायणान् ॥२९॥ कांश्चित् प्रदक्षिणपरान् नामकीर्तनसंयुतान् । ध्याननिष्ठान् तपोनिष्ठान् पुराणवाचकान् परान् ॥३०॥ नानाछंदकरान् वैश्यो गाणेशान् परमार्थकान् । बल्लालं ध्यानसंस्थं तु गणेशस्य पुरः सुतम् ॥३१॥ ततो दंडेन देवस्य देवालयं बभंज ह । दृष्ट्वा बाला भयोद्विग्नाः पपलुः सर्वतो दिशम् ॥३२॥ एक एव स बल्लालो न चचाल दृढाऽऽसनात् । नियमस्थो महाभक्तस्तं जग्राह पिता सुतम् ॥३३॥ दंडेन नाडयामास बल्लालं यमसंनिभः । तस्य देहात् प्रसुस्राव रुधिरं सर्वतो द्विज ॥३४॥ तथापि स गणेशानं न मुमोच हृदि स्थितम् । सस्मार देहसंत्यागे तत्परो वैश्यजः प्रभुम् ॥३५॥ ततो देवं प्रगृह्यैव चिक्षेप गणनायकम् । दूरे पर्वतभागे स वल्लीपाशानथानयत् ॥३६॥ तैः सुतं हस्तपादेषु बबंध दृढमेव सः । ततस्तं क्रोधसंयुक्तो जगाद वैश्यजोऽधमः ॥३७॥ कल्याण उवाच । मामनादृत्य नित्यं त्वं देवपूजापरोऽसि वै । तस्येदं त्वं फलं मुख्यं भुंक्ष्व पुत्र महाद्भुतम् ॥३८॥ लोका मां लज्जया हीना वदंति त्वद्विचेष्टितम् । अयशस्कारिणं पुत्रं मारयस्व महामते ॥३९॥ त्वया पुत्रेण सर्वत्र निंदितोऽहं कृतोऽधुना । वंद्यः पुरा मुदा युक्तः सुयशा नगरेषु तु ॥४०॥ अतो देहं परित्यज्य गच्छ विघ्नेश्वरं सुत । स तं सर्वं शुभं देवः करिष्यति न संशयः ॥४१॥ एवमुक्त्वा महापापी जगाम नगरं पुनः । गृहं समागतस्तत्र विघ्नयुक्तो बभूव ह ॥४२॥ गलत्कुष्ठयुतश्चांधो बधिरः कुब्ज एव च । मूककीटसमायुक्तो बभूव सहसा मुने ॥४३॥ ततोऽतिखेदसंयुक्तो बभूव वैश्यदूषकः । पत्नी तं तादृशं दृष्ट्वा शुशोच दुःखसंयुता ॥४४॥ पप्रच्छ तं पतिं सा तु न स शुश्राव तां गिरम् । मूकत्वान्न स्वयं किंचिज्जगाद दुःखसंयुतः ॥४५॥ ततो जना जगुस्तां ते नागरा भयसंयुताः । वृत्तांतं वनसंभूतं बल्लालताडनात्मकम् ॥४६॥ ततोऽतिदुःखसंयुक्ता सा जगाम वनं जनैः । सुतं द्रष्टुं सती विप्र रुदतींदुमती परम् ॥४७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते कल्याणदुर्गतिवर्णनं नामाष्टत्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ विभांडक उवाच । बल्लालस्य गतिं नाथ वद लेभे स कां पराम् । गाणपत्यो महाभागो दुःखितो मुनिसत्तम ॥१॥ आर्जलिरुवाच । बल्लालो गणनाथं स सस्मार वनसंस्थितः । रक्तस्रावयुतश्चैको बद्धः पित्रा दुरात्मना ॥२॥ विघ्नारिर्नाम देवेश कथं नेऽभूद्गजानन । भक्तविघ्नकरो मे किं विपरीतोऽसि निश्चितम् ॥३॥ मद्भक्तिखंडनार्थं मां यदा छलयसे परम् । मया पुरा पदे नाथ देहोऽयं ते समर्पितः ॥४॥ पततु मे शरीरं तु न मुंचामि कदाचन । त्वां गणेश दयासिंधो भक्तोऽहं भावसंयुतः ॥५॥ यदि मे सुदृढा भक्तिस्तव पादे निरंतरम् । तदा कुष्ठयुतश्चांधः पिता भवतु कुब्जकः ॥६॥ मूको बधिरतायुक्तो भवतु त्वत्प्रसादतः । अहं बंधनहीनश्च विघ्नेश ते नमो नमः ॥७॥ गजाननैकभक्तस्य बल्लालस्य मुखान्मुने । वचनं निःसृतं यावत् स तावत् ताहशोऽभवत् ॥८॥ ततो गणेश्वरः प्रीतो ब्राह्मणस्य स्वरूपधृक् । तमाययौ महाभक्तं भक्तवचनयंत्रितः ॥९॥ बद्धं बल्लालभक्तं स ददर्श ब्राह्मणोत्तमः । तत्क्षणाच्छिथिलान्येव बंधनानि बभूविरे ॥१०॥ अंगानि क्षतहीनानि बभूवुर्मुनिसत्तम । ततः स हर्षितो मेने गणेशं द्विजरूपिणम् ॥११॥ उत्थाय तं स बल्लालः प्रणनाम पुपूज ह । पुनः प्रणम्य विघ्नेशं तुष्टाव करसंपुटः ॥१२॥ बल्लाल उवाच । गणेशाय धाम्ने परेशाय तुभ्यं सदाऽऽनंदरूपाय सर्वादिगाय । अपारस्वरूपाय देवाधिदेव नमस्ते प्रभो भक्तसंरक्षकाय ॥१३॥ हेरंबाय नमस्तुभ्यं विघ्नेशाय परात्मने । ब्रह्मेशाय महायोगदात्रे शांतिमयाय ते ॥१४॥ स्वानंदवासिने तुभ्यं स्वानंदे खेलकाय ते । योगेशाय महोदाररूपधारिन्नमो नमः ॥१५॥ सदा सन्मयकायायाव्यक्तशीर्ष्णे नमो नमः । योगरूपेण सर्वत्र संस्थिताय नमो नमः ॥१६॥ सिद्धिबुद्धिप्रदात्रे ते सिद्धिबुद्धिमयाय च । सिद्धिबुद्धिपते तुभ्यं नमस्ते गजवक्त्रिणे ॥१७॥ लंबोदराय देवाय चतुर्बाहुधराय ते । मूषकध्वजिने तुभ्यं पाशांकुशप्रधारिणे ॥१८॥ द्विजरूपधरायैव भक्तवत्सलभावतः । रक्षितुं भक्तवाक्यं तु समागताय ते नमः ॥१९॥ त्वं माता त्वं पिता नाथस्त्वं सुहृत कुलदैवतम् । द्रव्यं विद्यादिकं मे त्वं सर्वं ते वै नमो नमः ॥२०॥ देहेन वाचा मनसा कृतान् मे सांसर्गिकान् जागृतिस्वप्नजातान् । संसुप्तितो यान् सकलापराधान् क्षमस्व हेरंब दयानिधे त्वम् ॥२१॥ एवमुक्त्वा ननर्तासौ बल्लालो भक्तियंत्रितः । साश्रुनेत्रः सरोमांचो ब्राह्मणाग्रे महामुने ॥२२॥ तमुवाच गणाधीशस्त्यक्त्वा ब्राह्मणरूपकम् । गजाननस्वरूपेण संयुक्तो भक्तमुत्तमम् ॥२३॥ श्रीगणेश उवाच । वरान् ब्रूहि महायोगिन् यांस्ते चित्तगतान् परान् । दास्यामि भक्तितुष्टोऽहं नियमेन महामते ॥२४॥ त्वया कृतमिदं स्तोत्रं सर्वसिद्धिप्रदायकम् ।

भविष्यति नरायैव पठते शृण्वते सदा ॥२५॥ यं यमिच्छति तं तं तु दास्याम्यनेन संस्तुतः। अंते सायुज्यदं मे वै भावि स्तोत्रं विशेषतः ॥२६॥ बल्लाल उवाच। तव भक्तिं स्थिरां देहि संगं मे भावितात्मनाम्। त्वयि विमुखभावानामनादरं गजानन ॥ २७॥ नान्यं किंचिद् वरं याचे दासोऽहं ते विनायक। त्वदेकविलयं नित्यं मां कुरुष्व विशेषतः ॥२८॥ तथेति तमथोवाच गणेशो भक्तवत्सलः। त्वन्नामपूर्वकं नाम भविष्यत्यत्र मे परम ॥२९॥ अत्रैवाहं सदा सर्वान् बल्लालेशो गणेश्वरः। स्थास्यामि भक्तिसंयुक्ता पालयिष्यामि योगिनः ॥३०॥ एवमुक्त्वांऽतर्दधेऽसौ गणेशो ब्रह्मनायकः। तत्र देवालयं चित्रं बभूव तत्क्षणात् मुने ॥३१॥ बल्लालेशयुतं रम्यं दृष्ट्वा बल्लालवैश्यकः। विस्मितस्तं प्रणम्याऽऽदौ पूजार्थं संदधे मनः ॥३२॥ तत्र पूजोपचाराश्च पतिता वै समंततः। बल्लालस्य ततस्तैः पूजयामास वैश्यजः ॥३३॥ नियमं नित्यजं पूर्णं कृत्वा ध्यानपरोऽभवत्। तत उत्थाय हर्षेण ननाम गणनायकम् ॥३४॥ दिव्यज्ञानयुतः सद्यो बभूव परमाद्भुतः। स्वपरभ्रांतिहीनः स बल्लालो गणपप्रियः ॥३५॥ ततो माता समायाता लोकैस्तं सा ददर्श ह । विस्मिता निर्व्रणं दृष्ट्वा मुक्तं देवालये स्थितम् ॥३६॥ वृत्तांतं तन्मुखाच्छ्रुत्वा स तां पुनरुवाच ह। गणेशद्वेषिणं तातं न पश्यामि कदाचन ॥३७॥ नाना जन्मसु मे माता पिता नानाविधोऽभवत्। तेषु केषां धराम्येवाभिमानं तारणात्मकम् ॥३८॥ गच्छ त्वं स्वगृहं नाहं पुत्रो दुष्टस्य निश्चितम्। येन देवालयं भग्नं स देवं भक्तिखंडने ॥३९॥ श्रुत्वा सा शोकसंयुक्ता स्वस्थानं तत आययौ। बल्लालस्तत्र विघ्नेशमभजत् हर्षसंयुतः ॥४०॥ तत्राकस्मात् समायातं ज्योतीरूपं विमानकम्। तेन बल्लालवैश्यस्तु जगाम गणनायकम् ॥४१॥ विभांड उवाच। कर्मणा यंत्रिता लोकाः शुभाशुभपरायणाः। शुभाशुभे प्रकुर्वंति कर्मणा प्रेरिता पुनः ॥४२॥ तत्र योगी स बल्लालः स्वपरभ्रमवर्जितः। कथं कल्याणवैश्यं तं द्वेषिणं प्रददर्श ह ॥४३॥ जाजलिरुवाच। योगिषु गणनाथस्य भक्ताः श्रेष्ठा मता बुधैः। तेषु बल्लालवैश्योऽयं भक्तराजोऽभवत्परः ॥४४॥ गणेशभजने सक्ताः पूज्या मान्या निरंतरम्। भक्तैस्तद्विपरीतास्ते त्याज्या वैरिसमानकाः ॥४५॥ अतो बल्लालवैश्यस्तु पितरं पूज्यमंजसा। गणेशार्थं गणेशस्य निंदकं समभर्त्सयत् ॥४६॥ विभांडक उवाच। कुले यस्य महायोगिन् गाणपत्यो भवेत् कदा। तस्य वंशभुवः कोटिकुलस्योद्धारकारकः ॥४७॥ अयं कल्याणवैश्यस्य पुत्रः स्वानंदगोऽभवत्। तदपि तस्य जनको माता भूमौ स्थितौ कथम् ॥४८॥ अंते तयोर्गतिश्चात्र कीदृशी संबभूव ह। कथां श्रुत्वा महाचित्रामाश्चर्यं मे हृदि स्थितम् ॥४९॥ जाजलिरुवाच। गाणपत्यः कुले जातः कुलोद्धारार्थमादरात्।

यत्नं करोति चेद्विप्र तदा तस्य गतिर्भवेत् ॥५०॥ अथवा गणनाथं स तदा गच्छेत् महामुने । उद्धारं कुलजानां वै भवेत् सद्यो न संशयः ॥५१॥ बल्लालशापरक्षार्थं गणेशस्तस्य भावगः । अन्यजन्मनि चोद्धारं चकार स तयोः पुनः ॥५२॥ इदं बल्लालमाहात्म्यं कथितं ते समासतः । सर्वसिद्धिप्रदं पूर्णं शृण्वते पठते भवेत् ॥५३॥ न बले सदृशो येषां बल्लालास्ते प्रकीर्तिताः । तेषां स्वामी गणाधीशो बल्लालेश इति स्मृतः ॥५४॥ त्वमपि व्रतमुख्यं तत् कुरुष्व भक्तिसंयुतः । चातुर्मास्यभवं विप्र बल्लालेशपरायणः ॥५५॥ तेन योगयुतः पूर्णः प्रसादेन भविष्यसि । बल्लालेशस्य विप्रेश नात्र कार्या विचारणा ॥५६॥ बल्लालेश्वरमाहात्म्यं यः शृणोति नरोत्तमः । पठति स महाभोगान् भुक्त्वा ब्रह्ममयो भवेत् ॥५७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते चातुर्मास्यमाहात्म्ये बल्लालेश्वरवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । जाजलिस्तं विभांडं स ततो ददौ महामनुम् । पंचाक्षरं गणेशस्य विधियुक्तं विधानवित् ॥१॥ मंत्रं प्राप्य महाभागो जाजलेराश्रमे स्थितः । बल्लालेशं समभ्यर्च्य व्रतं चकार भक्तितः ॥२॥ गाणेशपंचकं कृत्वा ध्याननिष्ठो बभूव ह । कार्तिक्यां पूर्णिमायां तु ययौ बल्लालनायकः ॥३॥ तं दृष्ट्वा सहसोत्थाय विभांडः प्रणतोऽभवत् । पूज्य तुष्टाव विघ्नेशं नानास्तोत्रैः सुहर्षितः ॥४॥ ततः प्रसन्नतां यातो बल्लालेशो महामुने । योगशांतियुतं विप्रं कृत्वांऽतर्धानगोऽभवत् ॥५॥ तदादिगाणपत्यश्च विभांडः प्रबभूव ह । बल्लालेशपरो भूत्वा चचार मनसेरितः ॥६॥ विभांडक उवाच । कृत्वैवं योगशांतिस्थोऽभवं सर्वैः सुवंदितः । बृहदश्व कुरुष्व त्वं व्रतं गाणेश्वरं परम् ॥७॥ एवमुक्त्वा ददौ तस्मै मुनिर्मंत्रं दशाक्षरम् । गणेशस्य महायोगी विधियुक्तं महामुने ॥८॥ तं प्रणम्य ययौ स्थानं स्वकीयं बृहदश्वकः । चातुर्मास्यव्रतं चक्रे गाणेशपंचके रतः ॥९॥ बृहदश्वाय विघ्नेशो ददौ योगं सुशांतिदम् । गणेश्वरं सोऽपि नित्यमभजद्भक्तिसंयुतः ॥१०॥ अन्यां च शृणु विप्रेश चातुर्मास्यभवां कथाम् । विभांडस्य च वीर्यं यत् पतितं भूमिमंडले ॥११॥ तद्दृष्ट्वा

च वने संस्था हरिणी तृणसंयुतम्। अमोघं तत्क्षणात् साऽभूद्गर्भयुक्ता महामुने ॥१२॥ तस्यां पुत्रोऽभवत् साक्षाद्ब्रह्मतेजोयुतः परः। ललाटे शृंगधारी स ऋष्यशृंगस्ततः स्मृतः ॥१३॥ नारदेनाभ्यनुज्ञातो विभांडस्तं समानयत्। स्वाश्रमे सर्वसंस्कारान् कारयामास विप्रपैः ॥१४॥ कदा तमृष्यशृंगं स लोमपादो नृपोत्तमः। अप्सरोभिः समाहूय स्वपुरं त्वानयन्मुनिम् ॥१५॥ अनावृष्टिभवं दुःखं जनानां वीक्ष्य भूमिपः। स्वात्मजां प्रददौ तस्मै शांतां गुणयुतां पराम् ॥१६॥ सद्यो वृष्टिः समुत्पन्ना जनानां दुःखनाशिनी। शांतया विप्रपो रेमे हर्षनिर्भरमानसः ॥१७॥ कदा स्वपितरं विप्रो भार्यया प्रजगाम ह। नत्वा विभांडं तत्रैव संस्थितः सेवनोत्सुकः ॥१८॥ विनयेन समायुक्तं पुत्रं दृष्ट्वा तपोयुतम्। जगाद तं महायोगी विभांडः प्रेमसंयुतः ॥१९॥ विभांड उवाच। ब्रह्मणि ब्रह्मभूतो यो ब्राह्मणः परिकीर्तितः। अतस्त्वं पुत्र भावेन भव ब्राह्मण उत्तमः ॥२०॥ एवमुक्त्वा ददौ तस्मै मंत्रं गणपतेः शुभम्। सविधिं तं नमस्कृत्य पुत्रत्वं साधयत् परम् ॥२१॥ शांतया भार्यया सार्धं चातुर्मास्यव्रते रतः। गाणेशपंचकं सेव्य ध्याननिष्ठो बभूव ह ॥२२॥ नित्यं योगपरो भूत्वा प्रार्थयद्गणनायकम्। कुरु योगींद्रवंद्यं मां सभार्यं गणनायक ॥२३॥ व्रतमात्रेण संतुष्टो ध्यानेन तपसा प्रभुः। ददौ योगं गणाधीश ऋष्यशृंगाय धीमते ॥२४॥ ततः स भार्यया सार्धं गाणपत्यो बभूव ह। शांतियुक्तः स्वभावेनाऽभजद्विघ्नेश्वरं मुदा ॥२५॥ एतस्मिन्नंतरे तत्र लोमपादो नृपोत्तमः। आययौ प्रार्थयामास विभांडं प्रीतिसंयुतः ॥२६॥ ऋष्यशृंगं सुतायुक्तं प्रार्थयित्वा समानयत्। स्वपुरं तं समास्थाप्य तदाज्ञावशगोऽभवत् ॥२७॥ नित्यं सोऽपि गणाधीशमभजन्नृपनायकः। उपदिष्टः स्वजामात्रा चातुर्मास्यपरायणः ॥२८॥ अंते जगाम विघ्नेशं राजा धर्मभृतां वरः। एवं नाना जना विप्र व्रतेन सिद्धिमाययुः ॥२९॥ तत्र तेऽहं कति ब्रूयां वक्तुं शक्तो न सर्वदा। चातुर्मास्यसमं मुख्यं व्रतं नैव विनिश्चितम् ॥३०॥ एकः कैवर्तकः कोऽपि नाम्ना नादकरः स्मृतः। स कदाचित् द्विजान् दृष्ट्वा प्रणतोऽभूत् महामुने ॥३१॥ चातुर्मास्यव्रते संस्थान् दृष्ट्वा पप्रच्छ भक्तितः। कीदृशं व्रतमुख्यं मे ब्रूत विप्रेंद्रमुख्यकाः ॥३२॥ ततस्ते विनतं दृष्ट्वा कथयामासुरादरात्। व्रतं गाणेश्वरं मुख्यं सविधि मुनिसत्तम ॥३३॥ श्रुत्वाऽऽनम्य स तान् विप्रान् ययौ स्वगृहमादरात्। चातुर्मास्यव्रते स्नात्वा चक्रे गणेशदर्शनम् ॥३४॥ भजनं घटिकामात्रं ततः स कार्यकारकः। बभूव निंदयन् देहं गणेशे भक्तिवर्जितम् ॥३५॥ ततः कदाचित् मार्गस्थं कार्यार्थं वनगोचरम्। तत्र तं भक्षितुं याता वनस्था दश राक्षसाः ॥३६॥

स गणेशं भयोद्विग्नः सस्मार हृदि सर्वपम्। राक्षसास्तस्य सान्निध्यमाजग्मुर्भक्षणार्थिनः ॥३७॥ दृष्ट्वा स जलमादाय गणेशाय नमो इति। मंत्रमुच्चार्य तान् दुष्टान सिषेच भयसंकुलः ॥३८॥ गणेशनाममंत्रेण मंत्रितेन जलेन ते। स्पृष्टा जातिस्मरा जाता रुरुदुस्तं प्रणम्य तु ॥३९॥ ऊचुः प्रांजलयो भूत्वा नादकरं महामुने। राक्षसा दुःखसंयुक्तास्तं प्रणम्य दयायुतम् ॥४०॥ राक्षसा ऊचुः। वयं ब्राह्मणजातिस्था पूर्वजन्मनि शूद्रज। तत्राचारविहीनाश्चाभवाम स्म निरंतरम् ॥४१॥ यथेच्छं विषये सक्ता मृता यमगृहे गताः। यमेन विविधेष्वेव निक्षिप्ता नरकेषु च ॥४२॥ भुक्त्वा पापभवं दुःखं राक्षसा मानदायक। जाताः क्षुधासमाविष्टा भ्रमामो यत्र तत्र तु ॥४३॥ दैवयोगेन ते साधो दर्शनं भाग्यगौरवात्। प्राप्तं ते जलपानेन वयं जातिस्मराः कृताः ॥४४॥ अधुना तारयास्मां स्त्वं शरणं त्वां समागतान्। देहि पुण्यं महाभाग गणेश-कीर्तनं भवम् ॥४५॥ एवं तेषां नादकरो वचः श्रुत्वा दयायुतः। ज्ञात्वा माहात्म्यमुख्यं तानुवाच नामसंभवम् ॥४६॥ नादकर उवाच। गणेशकीर्तनस्यैव पुण्यं वक्तुं न शक्यते। कथितं गुरुभिः पूर्वं ब्राह्मणैस्तत्त्वकोविदैः ॥४७॥ अतो राक्षसजातिस्था वचः शृणुत मे हितम्। चातुर्मास्ये मया नित्यं कीर्तनं क्रियते परम् ॥४८॥ एकनाम्नो भवं पुण्यं दास्यामि दयया युतः। चातुर्मास्ये कृतस्यापि कीर्तनस्य न संशयः ॥४९॥ तेन बंधनहीनाश्च भविष्यथ विचक्षणाः। एवमुक्त्वा ददौ तेभ्यः पुण्यं नामैकसंभवम् ॥५०॥ दत्ते पुण्ये समायातास्तत्र गाणेशदूतकाः। तान् गृह्य निजलोकं तेऽभवन गता महामुने ॥५१॥ गणेश्वरं तत्र दृष्ट्वा ब्रह्मभूता बभूविरे। एवं व्रतस्य माहात्म्यं कथने नैव शक्यते ॥५२॥ चातुर्मास्यभवं चित्रं चरितं कथितं मया। संक्षेपेण महाविप्र भुक्तिमुक्तिफलप्रदम् ॥५३॥ शृणुयाच्छ्रावयेद्यस्तु पठेद्भावसमन्वितः। सोऽपि व्रतफलं लब्ध्वा मनसेप्सितमाप्नुयात् ॥५४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते चातुर्मास्यव्रतमाहात्म्यनिरूपणं नाम चत्वारिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । गणेशनाममाहात्म्यं वद मे करुणानिधे । एकनामभवेनैव पुण्येन दश चोद्धृताः ॥१॥ सूत उवाच । गणेशनाममाहात्म्यं कथितुं कोऽर्हति प्रभो । अपारं वेदवादेषु कथितं वेदवादिभिः ॥२॥ अत्रेतिहासकं वक्ष्ये सर्वसिद्धिप्रदं परम । श्रवणात पठनाच्चापि नरेभ्यो नात्र संशयः ॥३॥ जरत्कारुरिति ख्यातो ब्राह्मणो ब्रह्मवित्तमः । अपारतपसा युक्तः शापानुग्रहकारकः ॥४॥ तमाययौ महाभागः पुत्रस्तस्य महात्मनः । आस्तिकः पुण्यशीलश्च प्रणनाम कृतांजलिः ॥५॥ सेवायामुत्सुकस्तत्रोवास हर्षसमन्वितः । योगींद्रं पितरं सोऽपि कदा जगाद विप्रप ॥६॥ आस्तिक उवाच । जनमेजययज्ञेऽहं रक्षित्वा पन्नगोत्तमान् । समायातो महाभाग वंदनार्थं पदस्य ते ॥७॥ तत्र सर्पगणानग्नौ मृतांश्च भृशपीडितान् । तान् दृष्ट्वा त्रासंसंयुक्तोऽभवं परमपावन ॥८॥ संसारं दुःखदं वीक्ष्य तं नेच्छामि महामुने । अतः सुशांतिदं मार्गं वद योगप्रदायकम् ॥९॥ एवं पुत्रवचः श्रुत्वा हर्षयुक्तो महामुनिः । जरत्कारुर्जगादेदं वचनं योगभाविनम् ॥१०॥ जरत्कारुरुवाच । ब्रह्मज्ञानं विना पुत्र शांतिर्नैव प्रलभ्यते । नानाब्रह्मसु संस्थैश्चान्नप्राणादिषु मानद ॥११॥ शांतिभ्यः शांतिदं पूर्णं ब्रह्म वेदप्रकाशकम् । ब्रह्मणस्पतिसंज्ञं तं भजस्व विधिसंयुतः ॥१२॥ श्रुत्वा विप्रस्तमास्तीको जगाद तपसा युतः । कथं गणेश्वरं तात श्रेष्ठं वेदा ब्रुवंति वै ॥१३॥ नामरूपधरो भूत्वा ब्रह्मणस्पतिवाचकः । कथं बभूव देवेशो वद तस्य स्वरूपकम् ॥१४॥ जरत्कारुरुवाच । समूह गणधातुश्च समूहा ब्रह्मरूपिणः । बाह्यांतरैकभावाख्यास्तेषां स्वामी गणेश्वरः ॥१५॥ संप्रज्ञानमयो देहोऽसंप्रज्ञानमयं शिरः । गजरूपं तयोर्योगे देहधारी गजाननः ॥१६॥ अज्ञानसंयुतान्यादौ भूतानि विविधानि तु । तेभ्यो ज्ञानप्रदानार्थं देहधारी बभूव ह ॥१७॥ स्वसंवेद्येन योगेन दर्शनं तस्य जायते । योगिनां तेन विघ्नेशो निजलोकनिवासकृत् ॥१८॥ सिद्धिरैश्वर्यरूपा सा भ्रांतिदा सततं मता । बुद्धिर्भ्रांतिधरा प्रोक्ता पंचचित्तस्वरूपिणी ॥१९॥ तयोः स्वामी गणाधीशः खेलते चित्तसिद्धिगः । मायाभ्यां योगरूपोऽयं तदाकारः परात्परः ॥२०॥ अत्र ते कथयिष्यामि पुरातनं महाद्भुतम् । इतिहासं गणेशस्य नाममाहात्म्यसंयुतम् ॥२१॥ त्वां मातुर्जठरे संस्थं प्रत्यज्याहं तु निर्गतः । योगार्थं योगनिपुणं कौंडिण्यं संगतोऽभवम् ॥२२॥ स्थावरे नगरे सोऽपि गाणपत्याग्रणीर्महान् । चिंतामणिं गणेशानमभजद् दूर्वया सदा ॥२३॥ मां दृष्ट्वा हर्षसंयुक्तो जगाद स्वागतं मुने । जरत्कारो निषीद त्वं तापसोग्र महामते ॥२४॥ एवमाभाष्य मां विप्रः कृत्वाऽऽतिथ्यं यथाविधि । पप्रच्छ किं महाविप्र वदेच्छसि शुभप्रदम् ॥२५॥ कौंडिण्यस्य वचः श्रुत्वा हर्षितोऽहं

तमब्रुवम् । तात भ्रमणसंयुक्तो भ्रमामि पृथिवीतले ॥२६॥ नानातपोयुतो नाथ न शांतिमलभं कदा । तवाश्रममतो यातो वद शांतिं सुशांतिद ॥२७॥ कौंडिण्य उवाच । गणेशं भज भावेन तदा शांतिमवाप्स्यसि । नान्यथा त्वं जगत्कारो भ्रमयुक्तो भविष्यसि ॥२८॥ एवं तस्य वचः श्रुत्वा पुनस्तमहमब्रुवम् । नामरूपधरं देवं कथं वदसि शांतिदम् ॥२९॥ ततो मामब्रवीत् सोऽपि दयायुक्तः स्वभावतः । शृणु पुरा भवं चित्रमितिहासं वदाम्यहम् ॥३०॥ अहं योगार्थमत्यंतमक्लिश्यं तपसा युतः । नाविंदं तं ततो देवं ब्रह्माणं संगतोऽभवम ॥३१॥ तं प्रणम्य महाभागं योगशांतिप्रदायकम । अहं योगार्थमत्यंतमक्लिश्यं तपसा युतः ॥३२॥ ब्रह्मोवाच । गणेशं भज भावेन ततः शांतिमवाप्स्यसि । गच्छ स्थावरसंज्ञं त्वं पुरं चिंतामणिं भज ॥३३॥ चंचलं चित्तमाख्यातं स्थिरं यत्र बभूव ह । तेन स्थावरसंज्ञं तत् क्षेत्रं नाम्ना मया कृतम ॥३४॥ पंचचित्तप्रकाशो मे तत्र चिंतामणिः प्रभुः । स्थापितोऽभूत् मया पूर्वं साक्षाच्छांतिप्रदायकः ॥३५॥ सृष्ट्यादौ तपसा तत्र मया संराधितोऽभवत् । तस्य वरप्रभावेण योगिवंद्योऽभवं मुदा ॥३६॥ एवं तस्य वचः श्रुत्वा पुनस्तमहमब्रुवम् । नामरूपधरो नाथ शांतिदः कथमंजसा ॥३७॥ ततो मामब्रवीद्ब्रह्मा हर्षयुक्तेन चेतसा । गणानां पतिभावेन स्थितोऽयं नामधारकः ॥३८॥ देहो जगन्मयस्तस्य गजाख्यं ब्रह्म मस्तकम । नरायोगे स्वरूपस्थो बभूव भक्तकारणात् ॥३९॥ स्वानंदो नगरं यस्य सिद्धिर्बुद्धिः प्रिये मते । लक्षलाभौ सुतौ प्रोक्तौ मूषको वाहनं तथा ॥४०॥ एवं नानाविधानीह ब्रह्माकाराणि तस्य वै । सुहृदश्च ततः प्रोक्तो वेदेषु ब्रह्मणस्पतिः ॥४१॥ मायामोहयुतान्यादौ विश्वानि मुनिसत्तम । ब्रह्माणि योगदानार्थं तेभ्यो देहधरोऽभवत् ॥४२॥ स्वेच्छया देहधारी स स्वेच्छया मायया युतः । स्वेच्छया योगरूपोऽयं विनायकस्ततः स्मृतः ॥४३॥ नास्थिचर्मादिसंयुक्तो देहस्तस्य महात्मनः । तद्वर्जितो वै विप्रेश योगदेहधरोऽभवत् ॥४४॥ अत्र ते कथयिष्यामि चेतिहासं पुरातनम् । भृशुंडिनोऽमरर्षीणां संवादसंभवं महान् ॥४५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते कौंडिण्यब्रह्मसमागमो नामैकचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ कौंडिण्य उवाच । अहो गणेशमाहात्म्यमद्भुतं संश्रुतं मया । भ्रूशुंडिनो वद त्वत्तो देवर्षीणां वचो मिथः ॥१॥ ब्रह्मोवाच । एकदा मुनयः सर्वे ते विचार्य परस्परम् । समाययुर्विधातारं संशयस्यापनुत्तये ॥२॥ प्रणम्य लोकधातारं जगुः सर्वे सुहर्षिताः । मुनयः कश्यपाद्या मां देवेंद्रैर्मुनिमुख्यकैः ॥३॥ देवर्षय ऊचुः । सर्वपूज्यो गणेशोऽयं सर्वादिपूज्य एव सः । नामरूपधरो नित्यो ब्रह्मणस्पतिवाचकः ॥४॥ वेदेषु कथितं ब्रह्मन् ब्रह्म ब्रह्मैव केवलम् । तत्र सागुण्यनैर्गुण्यं विद्यते न कदाचन ॥५॥ देहधारी गणेशानो वेदेषु ब्रह्मणस्पतिः । अतः संशयसंयुक्ताः प्रष्टुं त्वां समुपागताः ॥६॥ त्वं साक्षा-योगिवंद्यश्च सर्वेषां प्रपितामहः । छिंधि संशयकं नाथानुभवेन तदात्मना ॥७॥ ब्रह्मोवाच । तेषां वचनमाकर्ण्य ब्रह्मा चिंतातुरो-ऽभवम् । न किंचिदवदं तत्र मोहयुक्तोऽहमंजसा ॥८॥ सर्वैस्तैः संयुतो वेधा अगमं केशवं पुरा । तं प्रणम्य महाभागा अपृच्छन् संशयं परम् ॥९॥ विष्णुः खेदसमायुक्तो लेभे नैव तदुत्तरम् । तैः सार्धं शंकरं सोऽपि जगाम ज्ञानसिद्धये ॥१०॥ प्रणम्य गिरिजानाथं जगाद संशयं परम् । तच्छ्रुत्वा शंकरस्तत्र निश्चयं कर्तुमक्षमः ॥११॥ शिवस्तान् प्रत्युवाचेदं वचनं सुखदायकम् । भ्रूशुंडिनं च स्वगुरुं चित्ते स्मृत्वा गणेश्वरम् ॥१२॥ श्रीशिव उवाच । आदिमध्यावसानेषु भ्रूशुंडी मुनिपुंगवः । तिष्ठति सर्वभावज्ञो गुरुर्नो हितकारकः ॥१३॥ गणेशनाममाहात्म्यं संपूर्णं कथयिष्यति । जानाति नात्र संदेहो नाम्ना सिद्धेश्वरोऽभवत् ॥१४॥ ततस्तेन समायुक्ता जग्मुर्देवर्षयो मुने । भ्रूशुंडिनं महाभागममलाश्रमसंस्थितम् ॥१५॥ तं प्रणम्य महात्मानं स्थिताः सर्वे सुरर्षयः । स तान् पूज्य जगादेदं वचनं हितकारकम् ॥१६॥ भ्रूशुंड्युवाच । धन्यं मे जन्मकर्मादि येन वो दर्शनं महत् । प्राप्तं वदत वाक्यं मां किमर्थमागताः पराः ॥१७॥ साक्षाद्गणपतेः सर्वे विभूतिपदधारकाः । यूयं गणेश सामान्याः पावनार्थं समागताः ॥१८॥ भ्रूशुंडिवचनं श्रुत्वा जगाद शंकरो वचः । प्रणम्य तं महाभागं योगींद्राणां गुरो-र्गुरुम् ॥१९॥ श्रीशंकर उवाच । गणेशस्य महत्तत्त्वं परिपूर्णं महामते । त्वं जानासि न संदेहः साक्षाच्छुंडाधरो भवान् ॥२०॥ अतः संशयसंयुक्ता वयं सर्वे समागताः । तं तेऽहं शृणु वक्ष्यामि भ्रांतिदायकमुत्तमम् ॥२१॥ नामरूपधरो नित्यः कथं विघ्नेश्वरोऽभवत् । ब्रह्मणस्पतिसंज्ञस्तु वेदवादेषु योगिप ॥२२॥ तेषां वचनमाकर्ण्य तान् जगाद महामुनिः । भ्रूशुंडी सर्वसारज्ञो गाणपत्याग्रणीर्महान् ॥२३॥ भ्रूशुंड्युवाच । गः शक्तिः सूर्य अः प्रोक्तो णो विष्णुरः शिवः स्मृतः । तेषां स्वामी गणेशानस्तेनाऽयं ब्रह्मणस्पतिः ॥२४॥ गणाः समूहवाच्याश्च बाह्यांतरैकभावतः । तेषां स्वामी गणेशानस्तेनायं ब्रह्मणस्पतिः

॥२५॥ गो बोध अविबोधस्थो णः स्वानंदो निवृत्तिकृत् । तेषां स्वामी गणेशानस्तेनाऽयं ब्रह्मणस्पतिः ॥२६॥ विश्वानि ग प्रसूतानि ब्रह्माणि ण गतानि तु । तेषां स्वामी गणेशानस्तेनाऽयं ब्रह्मणस्पतिः ॥२७॥ एवं नानार्थसंयुक्तं नाम तस्य महात्मनः । तदर्थान् देवविप्राद्याः कति त्रयां न शक्यते ॥२८॥ चित्तरूपा महामाया पंचधा परिकीर्तिता । सा बुद्धिर्भ्रांतिदा तत्र सिद्धिर्माया परा स्मृता ॥२९॥ ताभ्यां नानाविधान्यादौ चकार खेलनार्थतः । विश्वानि मोहयुक्तानि ब्रह्माणि ब्रह्मणस्पतिः ॥३०॥ तेषां मोहविनाशार्थं योगदानार्थमादरात् । नामरूपधरो जातो गणेशो गणवल्लभः ॥३१॥ अर्थसत्तासमायुक्तं नाम तस्य सुरर्षयः । कथं नाशविनाशादि भेदास्तत्र भवेत्यतः ॥३२॥ अथ रूपं प्रवक्ष्यामि गणेशस्य सुखप्रदम् । येन संशयहीनास्तं भजिष्यथ निरंतरम् ॥३३॥ समष्टिव्यष्टिरूपाख्ये कुंभस्थले महात्मनः । त्रयी त्रिनेत्ररूपा तु शुंडा तुरीयवाचका ॥३४॥ धर्माधर्मौ गणेशस्याधरौ बिंदुर्ललाकृतिः । देही दंतः सदैकस्तु बोधो जठरवाचकः ॥३५॥ सांख्यं कर्णात्मकं तस्य हस्ताश्च स्वर्थवाचकाः । मायामायिकरूपौ वै पादौ गणपतेः स्मृतौ ॥३६॥ एषां संयोगरूपाख्यो देहस्तस्य सुरर्षयः । स्वसंवेद्यात्मकः प्रोक्तो योगिभिस्तत्त्वदर्शिभिः ॥३७॥ अभिमानेन शून्यत्वादेषामयोगवाचकः । देहो देहधरस्याऽपि गणेशस्य विचक्षणाः ॥३८॥ संयोगायोगयोर्योगे देहधारी गजाननः । बभूव योगदानार्थं जगद्भ्यो ब्रह्मभ्यः पर ॥३९॥ विश्वं कंठादधस्तस्य शिरो ब्रह्म गजात्मकम् । तयोर्योगे गणेशानो देहधारी बभूव च ॥४०॥ एवं नानार्थभावेन ध्यायंते योगिनोऽमलाः । देहं गणपतेः प्राज्ञा मायामोहविवर्जिताः ॥४१॥ शब्दार्थसत्तया युक्तं वपुस्तस्य विराजति । नाशानाशादिभावैश्च वर्जितं तन्मयं तथा ॥४२॥ एतत् सर्वं समाख्यातं नामरूपरहस्यकम् । गणेशस्य महाभागा यथा मुद्गलभाषितम् ॥४३॥ गणेशेति सकृज्जप्त्वा ब्रह्मभूतो भवेन्नरः । द्विवारं चेद्गणेशानः तत्पर्णी नाऽत्र संशयः ॥४४॥ गणेशेति सकृज्जप्त्वा यस्तिष्ठति नरोत्तमः । जगद्ब्रह्मयुतस्तेन संस्मृतो गणनायकः ॥४५॥ अतो गणेशनाम्नश्च स्मरणं न करोति यः । स दुरात्मा परित्याज्यश्चांडालानां शिरोमणिः ॥४६॥ गणेशनमनं कृत्वा नरस्तिष्ठति यो भुवि । तेन नानाविधं विश्वं ब्रह्म संनमितं भवेत् ॥४७॥ गणेशरूपं संध्याते धृतं येन महात्मना । जगद्ब्रह्मयुतो योगो ध्यातस्तेन न संशयः ॥४८॥ गणेशमूर्तिरूपं तु दृष्टं येन सुरर्षयः । नानाब्रह्म तथा विश्वं दृष्टं सोऽपि गजाननः ॥४९॥ अनंतानि महाभागा विश्वानि ब्रह्मकाणि तु । तेषां तु पूजनं केन भवेदानंत्यभावतः ॥५०॥ ततः सुलभभावार्थं तेषां योगमयः प्रभुः । नामरूपधरो ढुंढिर्बभूव भक्तिलालसः ॥५१॥

तस्य पूजादिभावेन पूजितं सर्वमंजसा । जगद्ब्रह्म न संदेहो विविधं शांतिरूपकम् ॥५२॥ इदं सर्वं समाख्यातं रहस्यं गणपस्य च । नामरूपात्मकं पूर्णं संक्षेपेण सुरर्षयः ॥५३॥ भजध्वं तं विशेषेण सर्वसंशयवर्जिताः । तेनैव कृतकृत्याश्च भविष्यथ सुरर्षयः ॥५४॥ एवमुक्त्वा महायोगी विरराम महामुने । भृशुंडी सर्वमाज्ञो गजानन इवापरः ॥५५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते गणेशनाममाहात्म्यकथनं नाम द्विचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ देवर्षय ऊचुः । एतादृशं गणेशस्य माहात्म्यं मुनिसत्तम । दर्शनस्मरणाद्यं तु सर्वसिद्धिप्रदायकम् ॥१॥ जना गणेश्वरस्यैवं दर्शनं नामकीर्तनम् । सकृत् कुर्वंति विप्रेशाऽथ वाऽधिकं न संशयः ॥२॥ ते सर्वे सुखसंयुक्ता भुक्त्वा भोगान् मनोगतान् । ब्रह्मभूता न जायंते वद तत्रापि कारणम् ॥३॥ भृशुंडयुवाच । अविश्वासेन तेषां तु फलमर्धं गतं भवेत् । अभक्त्या पादसंभूतं दंभेन त्रिपदं तथा ॥४॥ अतः संपूर्णभावेन फलहीना जनाः किल । न प्राप्नुवंति पुण्यं ते सर्वशास्त्र-प्रकीर्तितम् ॥५॥ अन्यच्च शृणुत प्राज्ञाः पुण्यं पापं समं मतम् । बलेन तेजसा भावैः शास्त्रेष्वत्र न संशयः ॥६॥ यथा गणेश-नाम्नश्च कीर्तने पुण्यमुत्तमम् । तथा निंदादिजं पापमतुलं जायते किल ॥७॥ यथा जना भजंते तं बाह्यभावपरायणाः । तथा ते तस्य निंदां वै कुर्वते पश्यत प्रियाः ॥८॥ अन्यच्च कथयिष्यामि संशयस्यापनुत्तये । उल्लंघनादिजं पापं मानाच्छतगुणं भवेत् ॥९॥ ज्ञात्वा गणेश्वरं सर्वे कुर्वन्त्युल्लंघनं सदा । तेन भोगविहीनास्ते गच्छंति नरके किल ॥१०॥ नानाविघ्नसमायुक्ता जन्मजन्मसु ते जनाः । भवंति नाऽत्र संदेहो गणेशोल्लंघनेन च ॥११॥ गणेशमानजं पुण्यं स्वल्पं किं सुखदं भवेत् । उल्लंघन-बलेनैव हतं मंदमिव प्रियाः ॥१२॥ यथा विस्मृतिभावेन विस्मृतो गणनायकः । विधेर्यज्ञे भवन् सर्वे जलरूपाः सुरास्तथा ॥१३॥ महानपोयुताभिश्च स्त्रीभिर्देवाः पुनः कृताः । स्वल्पोल्लंघनजं पापं पश्यध्वं तु सुरर्षयः ॥१४॥ अतो दुःखयुता लोका गणेशस्मरणादिभिः । गच्छंति नरके युक्ताः गणेशोल्लंघनादिभिः ॥१५॥ अन्यच्च कथयिष्यामि कर्म शास्त्रे प्रकीर्तितम् । प्रत्यवायाकुलं सर्वं सर्वत्र विविधं पुरा ॥१६॥ प्रत्यवायमनादृत्य कर्म कुर्वंति मानवाः । ते सर्वे सकलं पुण्यं प्राप्नुवंति न निश्चितम् ॥१७॥ इत्यादि बहवो भेदाः कृताः विघ्नेश्वरेण च । अखंडक्रीडनार्थं कथयितुं नैव शक्यते ॥१८॥ अपारमहिमा-

युक्तं माहात्म्यं गणपस्य च । तस्य खंडनभावार्थं निंदादिकं चकार सः ॥१९॥ अतो गणपतिं देवा भजध्वं यत्नसंयुताः । मुनयस्तेन संपूर्णं गणपं परमाप्स्यथ ॥२०॥ मुनय ऊचुः । गणेशो योगरूपोऽयं कथं पुंभावमाश्रितः । एकदेशमयं योगिन् वद तस्य चरित्रकम् ॥२१॥ भृशुंडयुवाच । यथा ब्रह्म महाभागा नपुंसकप्रवाचकम् । स्त्रीपुंभावविहीनं तदेकमार्गपरं मतम् ॥२२॥ स्त्रीपुंनपुंसकं सर्वं त्रिविधं त्रयवाचकम् । आत्मा तुरीयसंज्ञश्च पुंवाचकस्त्रिवर्जितः ॥२३॥ जनानां कथने वेदास्तं वदंति गजाननम् । एकमार्गाश्रितं सर्वं कथने नाभवन् क्षमाः ॥२४॥ अतोऽयं गणनाथस्तैः पुंभावात्मक उच्यते । यथा योगादिकाः शब्दास्तथा देवादयो मताः ॥२५॥ वामांगं प्राकृतं रूपं सिद्धिस्तस्य महात्मनः । दक्षिणांगं महाभागा बुद्धिः पुरुषवाचिका ॥२६॥ तयोर्योगे गणेशानो योगाकारो न संशयः । पुंभावादियुतोऽयं न तेभ्यः संवर्जितो न च ॥२७॥ देवर्षय ऊचुः । चतुर्थी गणनाथस्य प्रियाऽत्यंतं तिथिः परा । कथं रिक्ता तु सा प्रोक्ता विवाहादौ विवर्जिता ॥२८॥ साक्षान् मंगलमूर्तेश्च तिथिर्मंगलदायिका । सर्वदा रिक्तभावेन कथं युक्ता बभूव सा ॥२९॥ भृशुंडयुवाच । पक्षयोरुभयोः संस्था चतुर्थी गणपप्रिया । व्रतानामादिभूता वै गणेशप्राप्तिकारिका ॥३०॥ व्रतं चतुःप्रदं पूर्णं सर्वसिद्धिप्रदायकम् । नित्यवत् मानवैः सर्वैः कर्तव्यं चादिरूपकम् ॥३१॥ तदा चतुः पदार्थास्तैर्लभ्यंते नाऽत्र संशयः । नो चेत् कर्म कृतं सर्वं निष्फलं जायते नरैः ॥३२॥ अतः सा संमता सद्भिः सर्वकार्येषु देवपाः । व्रतभंगो न कर्तव्यो नानाकार्यपरैरपि ॥३३॥ विवाहादिषु कार्येषु भोजनं क्रियते जनैः । नानाविषयसंगश्च व्रतं तत्र कुतो भवेत् ॥३४॥ अतः संशयहीनास्तां भजंते व्रतमार्गतः । मंगलायतनां पूर्णां चतुर्थीं सर्वसिद्धिदाम् ॥३५॥ जन्ममृत्युयुतैर्लोकैः पूरितं सकलं जगत् ॥३६॥ चतुर्थी व्रतकर्तारो जन्ममृत्युविवर्जिताः । त्यक्त्वा कर्मफलं कर्म गच्छंति निजलोककम् ॥३७॥ सर्वसंकटहीनास्ते भुक्त्वा भोगान् मनेप्सितान् । ब्रह्मभूता भवंत्येव चतुर्थीव्रतकारकाः ॥३८॥ व्रतमात्रेण रिक्तं स कुरुते विश्वमंजसा । तेन रिक्ता समाख्याता चतुर्थी नाऽत्र संशयः ॥३९॥ विश्वं त्यक्त्वा गणेशानं गच्छंति व्रतकारिणः । तेन रिक्तं जगत् सर्वं भवते मुनयोऽमराः ॥४०॥ नान्यतिथिसमा देवी मता रिक्ता चतुर्थिका । ब्रह्मभूयप्रदातृत्वात् सर्वेभ्यः सुखदायिका ॥४१॥ एतत् सर्वं समाख्यातं गणेशस्य महात्मनः । रहस्यं व्रतमुख्यस्य किं भूयः श्रोतुमिच्छथ ॥४२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते चतुर्थीरहस्यवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ देवर्षय ऊचुः । ब्रह्म नानाविधं प्रोक्तं क्रमार्थं प्राप्तिहेतवे । गणेशस्य न संदेहः पात्रभेदप्रभावतः ॥१॥ अग्नींद्रकादयः सर्वे ब्रह्मशब्दप्रयाचकाः । पुराणेषु महाभाग तेभ्यो ब्रह्मादयोऽभवन् ॥२॥ पितामहः समाख्यातो ब्रह्मा तेभ्यो मुने कथम् । बभूव शंभुमुख्याश्चाभवन् वद महामते ॥३॥ इति तेषां वचः श्रुत्वा हर्षितो मुनिसत्तमः । भ्रुशुंडी प्रत्युवाचेदं वाक्यं संशयनाशनम् ॥४॥ भ्रुशुंडिरुवाच । तत्त्वरूपा समाख्याता ब्रह्माकारा न संशयः । ब्रह्मादयः समुत्पन्ना देवास्तेभ्यः सुरर्षयः ॥५॥ अश्विनौ नासिकायाश्च देवौ सर्वत्र संस्थितौ । ब्रह्माकारेण नाभ्यां तु पृथ्वीतत्त्वं विनिःसृतम् ॥६॥ प्रकृतिर्भूमिराख्याता गंधः पुरुष उच्यते । तयोर्योगेऽश्विनौ देवौ ब्रह्माकारौ मतौ बुधैः ॥७॥ पृथ्वीतत्त्वमयो देहस्त्रिगुणात्मशरीरिणाम् । ब्रह्मादीनां च नाभ्यां स निःसृतो नाऽत्र संशयः ॥८॥ विराड्रूपं पृथिव्यास्तु नाभ्यां जातं न संशयः । प्रणवो पृथिवीदेहस्तथा जातः सुरर्षयः ॥९॥ अनेन विधिना ब्रह्मा कथ्यते शास्त्रवेदिभिः । तस्माद्विश्वं समुद्भूतं तत्र चित्रं न विद्यते ॥१०॥ ततोऽश्विनौ समाराध्य जित्वा पृथ्वीभवं भ्रमम् । पुनः स जलतत्त्वार्थं वरुणं भजते परम् ॥११॥ तदाऽश्विनौ प्रनष्टौ च दृष्टौ तेन महात्मना । मुख्यं वारुणकं ब्रह्म तस्माज्ज्ञानमिदं जगत् ॥१२॥ एवं परंपरा मार्गो ब्रह्मरूपा मताः परे । इंद्राद्यास्तत्त्वरूपस्थास्तत्त्वैः संभावयंति ते ॥१३॥ शिवादिदेहरूपेषु संस्थितास्तत्त्वधारकाः । देवा इंद्रमुखास्तेन तदाधाराः शिवादयः ॥१४॥ गौणमार्गेण देवेशाः शंभ्वादयो बभूविरे । इंद्रादिभ्यो न संदेहो न मुख्यं तत्प्रकीर्तितम् ॥१५॥ मुख्यभावेन देवेंद्रा इंद्रादयः समुद्भवाः । शिवादिभ्यश्च संपूर्णकलाभिर्नात्र संशयः ॥१६॥ एवमुक्त्वा महायोगी भ्रुशुंडी विरराम ह । देवर्षयः प्रणेमुस्तं जगुर्हर्षसमन्विताः ॥१७॥ देवर्षय ऊचुः । सर्वसंशयहीनाश्च कृता वयं महामुने । त्वया न चित्रमेवेदं गणेशाकाररूपिणा ॥१८॥ देवर्षयस्ततः स्वस्वस्थलं जग्मुः सुहर्षिताः । संशयेन विहीनास्तेऽभजन्नित्यं गणेश्वरम् ॥१९॥ ब्रह्मोवाच । एतत्ते कथितं वत्स रहस्यं शांतिदायकम् । तस्मात्त्वं गणनाथं तं भज शांतिमवाप्स्यसि ॥२०॥ एवमुक्त्वा ददौ तस्मै ब्रह्मा मंत्रं षडक्षरम् । विधियुक्तं गणेशस्य सर्वसिद्धिप्रदायकम् ॥२१॥ कौडिण्य उवाच । ततो ब्रह्माणमानम्यागमं चिंतामणिं मुदा । तपोयोगेन विघ्नेशं मंत्रेणाराधयन् परम् ॥२२॥ गते वर्षशते देवः प्रसन्नो वरदोऽभवत् । आययौ मां वरं दातुं सिद्धिबुद्धिसमन्वितः ॥२३॥ तं दृष्ट्वा सहसोत्थायाऽऽपूज्याऽऽनम्य गजाननम् । स्तौमि हर्षेण संयुक्तः कौथुमेन महामुने ॥२४॥ ततो मे वाञ्छितं दत्वा योगं योगपति स्वयम् । जगाम स्वस्थलं विप्राहं

खिन्न इव संस्थितः ॥२५॥ ततादि गाणपत्योऽहं जातः संपूर्णभावतः । अभजं तं विशेषेण पत्न्या चिंतामणिं सदा ॥२६॥ प्रियां गणेशस्यात्यंतं दूर्वां ज्ञात्वा महामुने । दूर्वाभिर्युतेनाऽपूजयं तं नित्यमादरात् ॥२७॥ मदीयमहगत्वेन किंचिच्छुद्धाऽब्रवीद्वचः । आश्रया मां किमर्थं त्वं तृणानुष्ठानतत्परः ॥२८॥ भार्याया वचनं श्रुत्वा संशयेन समन्वितम् । तस्यै गणेश्वर भक्तिदानार्थं त्वब्रवं वचः ॥२९॥ दूर्वार्पणेन विघ्नेशः संतुष्टो जायते परे । न तथा द्रव्यकार्यैश्च वस्त्रैर्नैवेद्यमुख्यकैः ॥३०॥ विना दूर्वां निराहारो तिष्ठति गणनायकः । निष्फला जायते पूजा कृता नानाविधा किल ॥३१॥ एकदूर्वांकुरं भक्त्या फलं केन न गण्यते । समर्पयेद्गणेशाय तस्मात्तं दूर्वयाऽर्चयेत ॥३२॥ ततस्तस्या हृदि संस्थः संशयो न जगाम ह । एकदूर्वांकुरं गृह्याऽऽददां तस्यै हिताय च ॥३३॥ अवदं गच्छ देवेशं देवेंद्रं दूर्वया समम । सुवर्णं देहि विघ्नेश पूजायां स्थितया प्रभो ॥३४॥ प्रियेत न्यूनमधिकं त्वया ग्राह्यं कदाचन । तथेति तस्य मां सा वै जगाम देवनायकम् ॥३५॥ तेन संपूजिता देवी जगाद मे वचो हितम । स इंद्रो हर्षसंयुक्तस्तथा चकार विप्रप ॥३६॥ त्रैलोक्यं घटमध्ये स समारोप्य क्रमेण च । तथापि दूर्वया तुल्यं न बभूव महामुने ॥३७॥ दृष्ट्वाऽतिखेदसंयुक्तः सस्मार पंच देवतान । तेऽपि स्वपुरसंयुक्ता जग्मुः कार्यप्रसिद्धये ॥३८॥ सर्वे सग्रामसस्त्रीकाः शिवविष्णुमुखाऽमराः । घटे स्थितास्तथा तेऽपि दूर्वया नाभवन समाः ॥३९॥ ततस्तैर्मायया सर्वं ब्रह्मांडं लोकसंकुलम । घटे क्षिप्तं तथा तत्र दूर्वया च समं कदा ॥४०॥ दृष्ट्वा ते भयसंयुक्ता मम शापाच्च विप्रप । आययुश्चाश्रयायुक्ता आश्रमे मे सुदुःखिनः ॥४१॥ प्रणम्य मां विधिस्तत्र सर्वैर्जगाद शोकतः । दासास्ते मुनिशार्दूल दूर्वापुण्येन वै कृताः ॥४२॥ एकदूर्वासमं नैव ब्रह्मांडं भवति प्रभो । गणेशपूजने क्षिप्ता त्वया कौंडिण्यसत्तम ॥४३॥ एकदूर्वांकुराज्जातं फलं चिंतामणिः स्वयम । दास्यति ते महाभाग न वयं तत्समा यतः ॥४४॥ आज्ञापय करिष्यामो दासास्ते कार्यमुत्तमम् । नित्यं कार्यकरान स्वामिन पालयस्व सुरेश्वरान ॥४५॥ तेषां वचनमाकर्ण्य तात पूज्य प्राब्रवं वचः । विधे सर्वैः समायुक्तो गच्छ त्वं स्वपदं प्रभो ॥४६॥ नाहं दूर्वाफले सक्तो भार्याबोधार्थमंजसा । कृतं मया महादेवा दासोऽहं क्षम्यतामिति ॥४७॥ ततस्ते सर्वदेवेशा ययुः स्वस्वपदं मुदा । भार्या मे श्रद्धया युक्ता गाणपत्याऽभवत् सदा ॥४८॥ स्त्रिया नित्यं महाभाग भजामि गणनायकम् । चित्तस्थिरकृते क्षेत्रे स्थितं चिंतामणिं मुदा ॥४९॥ अतस्त्वमपि विप्रेश शांतिमिच्छसि चेत्तदा ।

भज विघ्नेश्वरं तेन योगिवंद्यो भविष्यसि ॥५०॥ एवमुक्त्वा ददौ मह्यं मंत्रं गणपतेः परम् । षडक्षरं विधानेन पुत्र सर्वार्थदायकम् ॥५१॥ तं प्रणम्य महाभागमपृच्छं विनयान्वितः । योगप्राप्त्यर्थमत्यंतं वचनं संशयात्मकम् ॥५२॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते जरत्कारुमंत्रोपदेशवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ जरत्कारुरुवाच । ब्रह्म नानाविधं वेदेषु प्रोक्तं वेदवादिभिः । अन्नप्राणादिभेदैश्च संयुक्तं क्रमसिद्धये ॥१॥ मनोमयं ब्रह्म तेषु मनः कोशप्रकाशकम् । न मुख्यं तत् महाभाग सूक्ष्मं स्वप्नविकारजम् ॥२॥ मनोबुद्धिरहंकारश्चित्तं चतुर्विधं परम् । अंतःकरणमित्युक्तं शास्त्रेषु मुनिसत्तमैः ॥३॥ चित्तमत्र समाख्यातं तत्र चिंतामणिः स्थितः । चित्तप्रकाशकत्वाद्धि मनो ब्रह्म कलात्मकः ॥४॥ प्राणो मनश्च विज्ञानं त्रिविधं स्वप्नमुच्यते । तस्यैकदेशतः सोऽपि ब्रह्माकारो गजाननः ॥५॥ कथं शांतिप्रदं तत्त्वं वदसि ब्रह्मणस्पतिम् । वेदेषु कथितं विप्र कथं तन्नैव बुध्यते ॥६॥ कौंडिण्य उवाच । सम्यक् पृष्टं त्वया विप्र सर्वेषां हितकारकम् । कथयामि महाप्रीत्या प्रणम्य गणनायकम् ॥७॥ सांख्ययोगादिभेदस्थैर्मार्गा नानाविधाः स्मृताः । पदार्थशोधनार्थं ते ज्ञातव्या वेदवादतः ॥८॥ अन्नप्राणादिकाः शब्दा ब्रह्मणो वाचका मताः । तत्र चित्तं समाख्यातमंतःकरणगं परम् ॥९॥ एकभागाश्रितं चित्तं मनो ब्रह्मणि संस्थितम् । पदार्थशोधनाख्ये तद्विधौ जानीहि मानद ॥१०॥ कुत्र वेदविवादेषु मनसः परमा मता । बुद्धिस्तस्याः परं ब्रह्म शांतिदं सर्वसंमतम् ॥११॥ अंतःकरणगा बुद्धिरेकदेशप्रभावतः । न मुख्या सा समाख्याता तद्वच्चित्तं मतं बुधैः ॥१२॥ अत्रान्यं बोधदं मार्गं वदामि वेदगं परम् । समाहितमना विप्र शृणु संशयनाशनम् ॥१३॥ देहः क्रियात्मकः प्रोक्तो मनो बोधात्मकं मतम् । तयोर्योगे स्वयं बुद्धिर्मोहदा द्वंद्वधारिका ॥१४॥ गणेशोपासनेनैव द्वंद्वदुःखहरा भवेत् । ब्रह्माकारात्मयोगेन बुद्धिर्बुद्धिमतां परा ॥१५॥ ततः परं स्वयं लीना जायते गणपे परे । तदा शांतियुतो जंतुर्ब्रह्मभूतो भवेत् स्वयम् ॥१६॥ अहं गणेशरूपश्चेत्तदा मे देहजो भ्रमः । कुत्र मनोमयो मोहो विवेकदायकः परः ॥१७॥ तयोर्योगे योगमयः कुत्र मे संभवेद्भ्रमः । द्वंद्वभावयुतः सोऽपि

द्वंद्वसंवर्जितः स्मृतः ॥१८॥ एवं ज्ञात्वा महायोगी शांतिं संलभते परम्। गणेशो गणनाथोऽयं भवेत मुनिसत्तम ॥१९॥ अनेन विधिना विद्धि चित्तं बुद्धिमयं परम्। तत्र चिंतामणिं ज्ञात्वा ब्रह्मभूतो नरो भवेत ॥२०॥ अन्यच्च शृणु विप्रेश मनो विवेकधारकम। विवेकादभिमानश्चोत्पद्यते विविधेषु वै ॥२१॥ अतो बुधैरहंकारो मनोमय उदाहृतः। कथितं वेदवादेषु मनो बुद्धिर्मनः परा ॥२२॥ बुद्धिर्ज्ञानात्मिका प्रोक्ता सैव द्विधाऽभवत मुदा। जडा देहे क्रियामूला चैतन्यदा मनोमयी ॥२३॥ वृद्धिक्षयादिकं ज्ञानं सदा देहे प्रतिष्ठितम। तदेव बुद्धिजं विद्धि जरत्कारो सुयोगतः ॥२४॥ देहात्मनि विवेकाख्यं ज्ञानं मनसि संस्थितम। बुद्धिजं क्षयवृद्ध्यादिहीनं चैतन्यधारकम ॥२५॥ तयोर्योगे स्वयं बुद्धिर्ज्ञानरूपा ययोः परा। ब्रह्माहमिति शब्दाख्या मनोवाणीविवर्जिता ॥२६॥ बुद्धिरूपं महचित्तं जानीहि तत्स्वरूपकम। कथयाम्यधुना प्रीत्या सर्वसंशयनाशनम ॥२७॥ चित्तं प्रकाशकं प्रोक्तं प्रकाशो बुद्धिगो मनः। अतः चिंतामणिः प्रोक्तो बुद्धीशो गणनायकः ॥२८॥ चित्तं पंचविधं प्रोक्तं क्षिप्तं मूढं महामुने। विक्षिप्तं मुनिभिर्मुख्यैरेकाग्रं च निरोधकम ॥२९॥ देहदेहिमयं चित्तमेकाग्रं शास्त्रसंमतम्। मनः स्वप्नमयं ब्रह्म देहरूपं विचारय ॥३०॥ अतो मनोमयं चित्तं मा जानीहि महत्परम्। प्रकाशकारकं चित्तं सर्वशास्त्रेषु संमतम ॥३१॥ संयोगायोगगं चित्तं निरोधवाचकं मतम। नानाब्रह्माणि चैकाग्रनिरोधमयगानि तु ॥३२॥ देहदेहिप्रकाशत्वादेकाग्रं चित्तमुच्यते। संयोगायोगकाशत्वान्निरोधं चित्तसंज्ञया ॥३३॥ इति सर्वं समाख्यातं भज त्वं गणनायकम। तेन योगींद्रवंद्यो वै भविष्यसि सुशांतिगः ॥३४॥ जरत्कारुरुवाच। एवमुक्त्वा महायोगी कौंडिण्यो विरराम ह। जरत्कारुः प्रणम्यैवागमं तं हर्षसंयुतः ॥३५॥ साधयित्वा महायोगं गाणपत्योऽभवं सुत। गणनाथं त्वमपि तं भज शांत्यर्थमादरात ॥३६॥ सूत उवाच। एवमुक्त्वा महायोगी जरत्कारुर्महामुने। विरराम पुनस्तं वाल्मीक ऊचे विशेषवित ॥३७॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते जरत्कारुयोगप्राप्तिवर्णनं नाम पंचचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ आर्मीक उवाच । बाल्यात्प्रभृति शैवोऽहं पितमन्त्यज्य विघ्नप । कथं भजामि विप्रेश अतः शैवं वदस्व माम ॥१॥ उत्कर्षक उवाच । त्यक्त्वा गणेशं शांतिस्थो न कोऽपि मुन संभवेत । गणेशानं शंभुमुख्या ध्यात्वा शांतियुता बभुः ॥२॥ शिवविष्ण्वादि भावेषु ब्रह्मशब्दः प्रकीर्तितः । एकांशेन गणेशस्य वेदेषु वेदवादिभिः ॥३॥ तेषु योगं समाराध्य शांतिं प्राप्ताः सुयोगिनः । सा शांतिः स्वल्पभावाख्या न मुख्या योगिनां मते ॥४॥ शांतिभ्यः शांतिदः प्रोक्तो गणेशो ब्रह्मणस्पतिः । तं भजस्व विधानेन तदा शांतिमवाप्स्यसि ॥५॥ गणेशो मायया युक्तः पंचधा परिकीर्तितः । पंचभेदविहीनः स निर्मायिक उदाहृतः ॥६॥ मायायुक्तविहीनत्वं शांतिमात्रं प्रकीर्तितम् । तयोर्योगे गणेशानः शांतिरूपो न संशयः ॥७॥ अतो गणेशरूपाद्वै शिवो भिन्नः प्रकीर्तितः । त्यजाज्ञानभवं दुःस्वमभेदं गणपं भज ॥८॥ अत्र ते कथयिष्यामि संवादं शंकरस्य च । उपमन्योर्महाभाग सर्वशांतिप्रदायकम ॥९॥ महापाशुपतो विप्र उपमन्युर्महायशाः । सहजं शंकरं ब्रह्म ज्ञात्वा खेदयुतोऽभवत ॥१०॥ जगाम शंकरं विप्रस्तं प्रणम्य पुपूज ह । स्तुत्वा तस्य जगादाथ कृतांजलिर्महामुनिः ॥११॥ उपमन्युरुवाच । सहजं शांकरं ब्रह्म स्वाधीनं दोषसंयुतम । स्वाधीनं च पराधीनं नैव ब्रह्मणि विद्यते ॥१२॥ ब्रह्मभूयकरं योगं वद शैव सदाशिव । येनाहं शिवतां प्राप्य शांतिस्त्वस्तं भजे सदा ॥१३॥ इति तस्य वचः श्रुत्वा हर्षयुक्तः सदाशिवः । उवाच तं महाभागं योगं गाणेशसंज्ञकम् ॥१४॥ शिव उवाच । एकदा काशीसंस्थं मामुवाच मुनिसत्तमः । जैगीषव्यो यथा त्वं वै तथा पाशुपताग्रणीः ॥१५॥ जैगीषव्य उवाच । शिवः सहजसंज्ञस्थो ब्रह्मणि सहजं कथम् । अतः शैवं परं योगं वद मे शांतिदायकम् ॥१६॥ विश्वनाथ उवाच । गणेशं भज भावेन तदा शांतिमवाप्स्यसि । ढुंढयित्वा मया योगात् हृतो ढुंढिः हृदि स्थितः ॥१७॥ मम श्रुत्वा वचो रम्यं दुःखितो मामुवाच ह । जैगीषव्यो वचो विप्र तदहं कथयामि ते ॥१८॥ जैगीषव्य उवाच । त्यक्त्वा विश्वेश्वरं देवं भजाम्यन्यं न विश्वप । अशांतिशांतिदो वाऽपि शिवो मे परमा गतिः ॥१९॥ विश्वनाथ उवाच । असच्छक्तिश्च सद्भानुः समो हरिरहं शिवः । अव्यक्तश्च चतुर्णां वै योगे स्वानंद उच्यते ॥२०॥ स एव गणनाथोऽयं मायया पंचधा बभौ । मायाहीनो ह्ययोगाख्यः पंचभिर्वर्जितो मतः ॥२१॥ तयोर्योगे गणाधीशः शांतिदः पूर्णवाचकः । अतोऽयं ब्रह्मणां नाथो वयं ब्रह्मप्रवाचकाः ॥२२॥ खेलनाद्गणनाथोऽयमस्मद्रूपधरोऽभवत् । कलया तत्र किं भिन्नं मन्यसे मुनिसत्तम ॥२३॥ भेदबुद्धिं परित्यज्य भज विघ्नेशमादरात् । न भिन्नः शंकरस्तस्मात्तद्रूपं तं विभावय ॥२४॥

एवमुक्त्वाऽददात्तस्मै मंत्रमेकाक्षरं ततः। सविधिं गणनाथस्य ततो ध्यानप्रसिद्धये ॥२५॥ साधयित्वा यथान्यायं योगं गाणेशसंज्ञितम्। ततो यज्ञं समारेभे ब्राह्मणस्पत्यसंज्ञकम् ॥२६॥ कृत्वा यज्ञं मुदायुक्तो द्विजान्नत्वा विसृज्य सः। संस्थितस्तत्र विघ्नेशः प्रययौ वरदायकः ॥२७॥ तं दृष्ट्वा सहसोत्थाय प्रणनाम पुपूज ह। पुनः प्रणम्य तुष्टाव यजुःस्तोत्रेण विघ्नपम् ॥२८॥ योगशांतिं प्रदत्वाऽस्मै जैगीषव्याय धीमते। आचार्यतां तु योगस्य स्वयमंतर्दधे विभुः ॥२९॥ ततो गुरुं शिवं सोऽपि ढुंढिराजं तु दैवतम्। गाणपत्यस्वभावेनाभजत्काशीस्थितो मुनिः ॥३०॥ अतस्त्वं गणनाथं तं भज शांतिप्रसिद्धये। शांतिभ्यः शांतिदः प्रोक्तः सर्वेषां योगधारकः ॥३१॥ जरत्कारुरुवाच। एवमुक्त्वा ददौ तस्मै मंत्रमेकाक्षरं परम्। विधियुक्तं गणेशस्य स्वशिष्यायोपमन्यवे ॥३२॥ तं प्रणम्य ययौ सोऽपि मंत्रध्यानपरोऽभवत्। इष्टिं कृत्वा गणेशस्य शांतिरूपो बभूव ह ॥३३॥ गणराजस्तुतमपि ययौ भक्तं महामुनिम्। दत्वा शांतिं स्तुतस्तेनांऽतर्दधे ब्रह्मनायकः ॥३४॥ अतस्त्वं संशयं त्यक्त्वा भज विघ्नपतिं सुत। व्यभिचारो न ते भावी शांतियुक्तो भविष्यसि ॥३५॥ सूत उवाच। एवमुक्त्वा ददौ तस्मै स्वमंत्रं तु षडक्षरम्। विधियुक्तं गणेशस्यास्तीकाय मुनिसत्तमः ॥३६॥ आस्तीकः साधयामास ध्यात्वा हृदि गजाननम्। इष्टिं कृत्वा गणेशस्य शांतियुक्तो बभूव ह ॥३७॥ गाणपत्यप्रियोऽत्यंतं मातरं स जगाम ह। उपदिश्य गणेशानं शांतियुक्तां चकार ताम् ॥३८॥ अतो गणपतिं नित्यमभजत् प्रीतिसंयुतः। अंते गाणेश्वरे धाम्नि ब्रह्मैव स बभूव ह ॥३९॥ एतत्ते कथितं सर्वं ब्राह्मणस्पत्ययज्ञजम्। माहात्म्यं गाणपत्यानां प्रियं संक्षेपतो मया ॥४०॥ यः शृणोति नरो भक्त्या पठेत तस्य सिद्धिदम्। भविष्यति न संदेहो भुक्तिमुक्तिप्रदायकम् ॥४१॥ ब्राह्मणस्पत्ययज्ञस्थं पुण्यं स लभते परम्। अंते स्वानंदगो भूत्वा ब्रह्मभूतो भवेन्नरः ॥४२॥

॥ ॐतत्सदिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते ब्राह्मणस्पत्ययज्ञमाहात्म्यवर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । कथं दशहरा देवी दशमी चाश्विनेऽभवत् । कथं तत्र शमीपूजां कुर्वंति देवतादयः ॥१॥ सूत उवाच । शंखं हत्वा महावीरं विष्णुः परपुरंजयः । ददौ वेदान् विधात्रे स सांगोपांगसमन्वितान् ॥२॥ तान् दृष्ट्वा हर्षितो ब्रह्मा सस्मार गणनायकम् । ततो गणेश्वरं वेदा ययुः सृष्टाश्च तेन ये ॥३॥ पुरा कपिलरूपेण कर्मसिद्ध्यर्थनिर्मिताः । हृतेषु वेदशास्त्रेषु शंखेन पापरूपिणा ॥४॥ तत् दृष्ट्वा परमाश्चर्यं ब्रह्मा तुष्टाव विघ्नपम् । प्रार्थयामास वेदानां निर्विघ्नार्थं महामुने ॥५॥ ततस्तं प्रत्युवाचैवाकाशवाणी महाद्भुता । सर्वैर्विघ्ने शमीं पूज्य विघ्नहीनो भविष्यसि ॥६॥ या शमी स गणेशानो न भेदस्तत्र वर्तते । अथैव तां महाभाग पूजयस्व विधानतः ॥७॥ ततो वेदान् समास्पृश्य प्रशस्तान् कुरु मानद । एवमुक्त्वा स्ववाणीस्थो विरराम गजाननः ॥८॥ श्रुत्वाऽतिहर्षितो ब्रह्मा वेदैर्देवैः महेश्वरैः । मुनिभिस्तां प्रपूज्यैव वेदान् शस्तांस्तु चकार ह ॥९॥ यस्मिन् काले महाविप्र पूजिता विधिना शमी । आश्विनी दशमी तत्र सायाह्ने सा बभूव ह ॥१०॥ ततो दशहरा जाता सा शमीसंयुता तिथिः । तदर्थं शृणु भावेन सर्वकार्येषु सिद्धिदाम् ॥११॥ दश दिक्षु स्थितान्येव भूतानि भयदानि च । कार्यध्वंसं प्रकुर्वंति क्रूराणि प्रबलानि च ॥१२॥ दशमी हंति सा तानि शमी पूजाबलेन वै । अतो दशहरा प्रोक्ता सर्वकार्यप्रसिद्धये ॥१३॥ शमीपूजाविधिं कृत्वा सायाह्ने तानलोकयत् । सांगोपांगयुतान् वेदांस्ततः सर्वानुपादिशत् ॥१४॥ नानाकार्यप्रसिद्ध्यर्थं दशम्यां शमीपूजनम् । शुक्लाश्विन्यां च सायाह्ने कर्तव्यं सर्वजंतुभिः ॥१५॥ तेन विघ्नविहीनास्ते दशदिक्षु भ्रमंति चेत् । सर्वसिद्धियुताः सर्वे भवंति नात्र संशयः ॥१६॥ दशदिक्षु स्थितान् हंति विघ्नान् दशहरा मता । अद्य प्रभृति देवेशा मुनयो वार्षिकी भवा ॥१७॥ पूजयिष्यंति देवेशा शमीं कार्यप्रवर्धिनीम् । वार्षिकं दुःखमुत्सृज्य स्थास्यंति सुखभोगिनः ॥१८॥ पूजयित्वा शमीं विप्रा वेदान् ये पुस्तकस्थितान् । पठिष्यंति पुराणादींस्तेषां ज्ञानं भविष्यति ॥१९॥ न यो दशहरायां तु शमीं पूजयते कदा । स नाना विघ्नसंयुक्तो नरकेऽंते प्रगच्छति ॥२०॥ एवमुक्त्वा स्वयं ब्रह्मा जगाम वेदसंयुतः । स्वलोकं शंकराद्याश्च जग्मुर्विप्राः सुरा मुने ॥२१॥ तदादि चाश्विनी शुक्ला दशहरा बभूव ह । दशमी शमीसंयुक्ता सर्वार्थं सिद्धिदायिनी ॥२२॥ अतोऽवश्यं स्वभावेन पूजयंति शमीं नराः । देवा नागास्तथा वेदान् पठंते पाठयंत्यपि ॥२३॥ इदं सर्वं समाख्यातं चरितं शमीसंभवम् । यः शृणोति नरः सोऽपि लभते पठतीप्सितम् ॥२४॥ शौनक उवाच । किमाधारमिदं सर्वं वर्तते सूत तद्वद । कर्माधीनं वदंत्येव केचिदत्र मुनीश्वराः ॥२५॥ ईश्वराधीनमेतद्वै केचिद्वदं यदृच्छया । त्रिविधं तेषु किं सत्यं ज्ञायते न मुनीश्वरैः ॥२६॥ सूत उवाच । त्रिविधं प्रवदंत्येव मुनयो ब्रह्मवेदिनः ।

तत्सर्वं सत्यरूपं त्वं जानीहि मुनिसत्तम ॥२७॥ गणेशेन कृतं सर्वं क्रीडार्थं स्वेच्छया मुने। तत्र माया समाख्याता सिद्धिरैश्वर्यदायिनी ॥२८॥ ऐश्वर्यमोहधरा सा बुद्धिर्मायिक उच्यते। मायाभोगार्थमत्यंतमतः श्रमयुतोऽभवत् ॥२९॥ मायामायिकयोगात् स गणेशो ब्रह्मनायकः। क्रीडति स्वस्वभावेनानन्यभावपरायणः ॥३०॥ न कोऽपि तत्र विप्रेशप्रेरकस्तत्र विद्यते। अतो यदृच्छया सर्वं वर्तते योगिनां हृदि ॥३१॥ अन्यच्च शृणु विप्रेश माया नानाभ्रमात्मिका। सा जडा सर्वभावेन कर्तुं नैव क्षमाऽभवत् ॥३२॥ तया संमोहितोऽत्यंतं मायिकस्तां चचाल ह। तदा सत्तायुता माया खेलते विविधे रता ॥३३॥ मायिकेन धृता देवी चचाल विविधात्मिका। मायिकेच्छावशेनैव संस्थिता नाऽत्र संशयः ॥३४॥ यदा त्यक्ता महामाया मायिकेन महामुने। तदा शक्ता न किंचित् सा कर्तुं जडप्रभावतः ॥३५॥ ईश्वराधीनभावेन वर्तते सर्वमंजसा। वदंति मुनयः केचित् ध्यानमार्गपरायणाः ॥३६॥ अन्यच्च कथयिष्यामि माया कर्मस्वरूपिणी। नानाभावयुता नित्यं खेलति त्रिविधा परा ॥३७॥ कर्माकर्मविकर्माण्यचालयत् सर्वरूपिणी। स्वर्गमुक्तिमहावीचिदायिनी त्रिविधे रता ॥३८॥ यादृशं कुरुते कर्म फलं भोक्ष्यति तादृशम्। कर्माधीनमिदं सर्वं वर्तते त्रिविधं किल ॥३९॥ शुभाशुभं कृतं कर्म भोक्तव्यं नात्र संशयः। कल्पकोटिशतैर्वाऽपि कृतं कर्म न तं त्यजेत् ॥४०॥ एवं वदंति विप्रेश ब्राह्मणा देहवादिनः। धारणायां स्थितास्ते वै सत्यं शास्त्रेषु निश्चितम् ॥४१॥ अथैकभावनां वक्ष्ये त्रयाणां शृणु शौनक। गणेशमायया भ्रांता न जानंति कुयोगिनः ॥४२॥ मायामायिकरूपेण संस्थितो गणनायकः। क्रीडति स्वस्वभावेनानन्यभावपरायणः ॥४३॥ तस्येच्छया महाविप्र ईश्वरश्चैव तिष्ठति। मोहितो गणनाथेन जानाति न गजाननम् ॥४४॥ अहं श्रेष्ठः परं ब्रह्म मदाधारमिदं जगत्। मदिच्छया प्रवर्तंते जंतवो नाऽत्र संशयः ॥४५॥ यादृशी गणनाथस्येच्छा भवेत्तादृशं स्वयम्। करोतीश्वर आनंदादतो भेदो न दृश्यते ॥४६॥ कर्मरूपा महामाया गणेशेच्छासमन्विता। चलते तं न जानाति मोहिता भ्रांतिसंयुता ॥४७॥ अहं श्रेष्ठा न संदेहो मदाधारमिदं जगत्। सकलं कर्मभावेन धारयामि चराचरम् ॥४८॥ यादृशी गणनाथस्येच्छा भवेत्तादृशं स्वयम्। कर्म कुर्वंति विप्रेश चराचरात्मजीविनः ॥४९॥ अतस्त्रिविधकं विप्र एकलक्षाश्रितं मतम्। एवं बाधविहीनं तत्त्रिधा सं वर्तते सदा ॥५०॥ मायावादिन एवं तत् कर्माधीनं वदंति हि। अद्वैतवादिनः सर्वे ईश्वराधीनगं तथा ॥५१॥ योगिनः प्रवदंत्येतद्यदृच्छाधीनगं जगत्। एवं सत्यं प्रमाणेन त्रिविधं मुनिसत्तम ॥५२॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते त्रिविधजगदाधारनिरूपणं नाम सप्तचत्वारिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । प्रसंगाच्छृणु मासानां चरितं गणपे रतम् । द्वादशानां सुसंक्षेपात् सर्वसिद्धिप्रदायकम् ॥१॥ श्रावणे पंचकं सेव्य गाणेशं वरुणः स्वयम् । दिगीशत्वं समालेभे ज्ञानं गाणेशसंभवम् ॥२॥ स्वयं भाद्रपदे वायुस्तथा सेव्य मयूरपम् । योगं लेभे दिगीशत्वं गाणपत्योऽभवत् प्रभुः ॥३॥ आश्विने देवगंधर्वाः सेव्य विघ्नेश्वरं पुरा । स्वस्वैश्वर्यसमायुक्ता बभूवुस्ते महामुने ॥४॥ कार्तिके वक्रतुंडं तु सेव्य विद्याधरास्तथा । स्वस्वव्यापारसंयुक्ता बभूवुर्ज्ञानधारकाः ॥५॥ विकटं मार्गशीर्षे चादित्याः संसेव्य सर्वपाः । जातास्तेजस्विनः सर्वे ज्ञानयुक्ता महामुने ॥६॥ पौषे लंबोदरं सेव्य वसवः स्वपदाश्रिताः । बभूवुर्ज्ञानसंयुक्ता नानाभावपरायणाः ॥७॥ माघे रुद्रा गणेशानं सेव्य सर्वत्रगा बभुः । गाणपत्या महाभागाश्चरंति ह्यकुतोभयाः ॥८॥ फाल्गुने निर्ऋतिः सेव्य गणेशं दिक्पतेः पदम् । लेभेऽभिचारभावाख्यं कर्मभोगं महामतिः ॥९॥ चैत्रे अप्सरसः सर्वाः सेव्य तं धूम्रवर्णकम् । नानालावण्यजं लेभुर्गानादि भगमेव च ॥१०॥ हेरंबं सेव्य वैशाखेऽभवन् यक्षजनास्तथा । स्वस्वव्यापारकुशला नानाभोगपरायणाः ॥११॥ ज्येष्ठे विनायकं नागाः सेव्य सामर्थ्यसंयुताः । बभूवुः कार्यकर्तारो नानाभोगपरायणाः ॥१२॥ पक्षिणः पंचकं नित्यं सेव्याऽऽषाढे गजाननम् । अभवन् भोगसंयुक्ताः स्वकार्यकुशलाः किल ॥१३॥ ढुंढिराजं तथा ढौंढे धातुभिः सेव्य पर्वताः । बभूवू रत्नजातीनां धारका भोगकारिणः ॥१४॥ वार्षिकं स्वस्वमासं ते समाश्रित्य गजाननम् । अभवन् स्नानकर्तारो गाणेशे पंचके रताः ॥१५॥ एवं नानाजनाः सिद्धिं लेभिरे मासजेन च । व्रतेन कति ते ब्रूयां नालं वर्षायुतैरपि ॥१६॥ इदं मासभवं सर्वं माहात्म्यं कथितं मया । पठनाच्छ्रवणात् सद्यो भवेत सर्वसिद्धिदम् ॥१७॥ यं यमिच्छति तं तं स लभते नाऽत्र संशयः । अंते गाणेश्वरे धाम्नि लीनः संजायते मुने ॥१८॥ इदं सर्वं समाख्यातं यद्यत् पृष्टं त्वया मुने । श्रोतुमिच्छसि किं भूयो वद तत् कथयाम्यहम् ॥१९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते मासानां माहात्म्यवर्णनं नामाष्टचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । प्रकृतं वद सूत त्वं संवादं शंकरस्य च । सनकादेर्विशेषेण सर्वसिद्धिकरं परम् ॥१॥ नानावतारसंयुक्तं धूम्रवर्णचरित्रकम् । श्रुत्वा सनकमुख्यास्तं किमूचुर्योगसिद्धये ॥२॥ सूत उवाच । धूम्रवर्णावतारस्य श्रुत्वाऽहं वधसंश्रितम् । चरितं हृष्टरोमाणः पप्रच्छुः शंकरं द्विजाः ॥३॥ सनकाद्या ऊचुः । नानावतारसंयुक्तं श्रुत्वा माहात्म्यमुत्तमम् । धूम्रवर्णावतारस्य संतुष्टाः स्म सदाशिव ॥४॥ अधुना शाधि सर्वेश योगप्राप्त्यर्थमुत्तमम् । विधिं सुखकरं शीघ्रं सुगमं योगिनायक ॥५॥ श्रीशिव उवाच । गणेशहृदयं वक्ष्ये सर्वसिद्धिप्रदायकम् । साधकाय महाभागाः शीघ्रं वै शांतिदं परम् ॥६॥ पुराऽहं गणनाथस्य ध्यानयुक्तोऽभवं द्विजाः । तत्र मां सरितां श्रेष्ठा जगाद वाक्यमुत्तमम् ॥७॥ गंगोवाच । वद शंकर कस्य त्वं ध्यानं करोषि नित्यदा । इच्छामि तमहं ज्ञातुं त्वत्तः किं परमं मतम् ॥८॥ श्रीशिव उवाच । गणेशं देवदेवेशं ब्रह्मब्रह्मेशमादरात् । ध्यायामि सर्वभावज्ञे कुलदेवं सनातनम् ॥९॥ तस्य यद् हृदयं देवि गुप्तं सर्वप्रदायकम् । कथयिष्यामि सर्वज्ञे येन ज्ञास्यसि तं विभुम् ॥१०॥ पुराऽज्ञानावृतोऽहं तु तपसि संस्थितोऽभवम् । तत्र तपःप्रभावेण हृत्पद्मे गजाननम् ॥११॥ तस्य दर्शनमात्रेण स्फूर्तिः प्राप्ता मया प्रिये । तथा गणेश्वरं ज्ञात्वा योगिवंद्योऽभवं मुदा ॥१२॥ ततोऽहं शृणु वक्ष्यामि गणेशहृदयं परम् । येन गाणेशयोगे त्वं निपुणा संभविष्यसि ॥१३॥

ॐ ॥ अस्य गणेशहृदयस्तोत्रमंत्रस्य । शंभुर्ऋषिः । नाना छंदांसि । गणेशो देवता । गमिति बीजम् । ज्ञानात्मिका शक्तिः । नादः कीलकम् । श्रीगणपतिप्रीत्यर्थमभीष्टसिद्ध्यर्थं जपे विनियोगः । ॐ । गमित्येकाक्षरात्मकबीजैः करन्यासाः षडंगन्यासाश्च । अथ ध्यानम् । सिंदूराभं त्रिनेत्रं पृथुतरजठरं रक्तवस्त्रावृतं तं पाशं चैवांकुशं वै रदनमभयकं पाणिभिः संदधानम् । सिद्ध्या बुद्ध्या प्रशिष्टं गजवदनमहं चिंतये ह्येकदंतं नानाभूषाभिरामं निजजनसुखदं नाभिशेषं गणेशम् ॥१४॥ एवं ध्यात्वा मानसोपचारैः पूजयेत् । किंचिन्मूलमंत्रं जप्त्वा हृदयं पठेत् ॥ ॐ गणेशमेकदंतं च चिंतामणिं विनायकम् । ढुंढिराजं मयूरेशं लंबोदरं गजाननम् ॥१५॥ हेरंबं वक्रतुंडं च ज्येष्ठराजं निजस्थितम् । आशापूरं तु वरदं विकटं धरणीधरम् ॥१६॥ सिद्धिबुद्धिपतिं वंदे ब्रह्मणस्पतिसंज्ञितम् । मांगल्येशं सर्वपूज्यं विघ्नानां नायकं परम् ॥१७॥ एकविंशति नामानि गणेशस्य महात्मनः । अर्थेन संयुतान्येव हृदयं परिकीर्तितम् ॥१८॥ गंगोवाच । एकविंशतिनाम्नां त्वमर्थं ब्रूहि सदाशिव । गणेशहृदयं येन जानामि करुणानिधे ॥१९॥ श्रीशिव उवाच । ग काररूपं विविधं चराचरं ण कारगं ब्रह्म तथा परात्परम् । तयोः स्थितास्तस्य गणाः

प्रकीर्तिता गणेशमेकं प्रणमाम्यहं परम् ॥२०॥ मायास्वरूपं तु मदैकवाचकं दंतः परो मायिकरूपधारकः। योगे तयोरेकरदं सुमानिनि धीस्थं नतोऽहं जनभक्तिलालसम ॥२१॥ चित्तप्रकाशं विविधेषु संस्थं लिप्तं न लेपादि विवर्जितं तम्। भोगैर्विहीनं त्वथ भोगकारं चिंतामणिं तं प्रणमामि नित्यम ॥२२॥ विनायकं नायकवर्जितं प्रिये विशेषतो नायकमीश्वरात्मनाम्। निरंकुशं तं प्रणमामि सर्वदं सदात्मकं भावयुतेन चेतसा ॥२३॥ वेदाः पुराणानि महेश्वरादिकाः शास्त्राणि योगेश्वरदेवमानवाः। नागासुरा ब्रह्मगणाश्च जंतवो ढुंढंति वंदे त्वथ ढुंढिराजकम् ॥२४॥ मायार्थवाच्यो हि मयूरभावो नाना भ्रमार्थं प्रकरोति तेन। तस्मात मयूरेशमथो वदंति नमामि मायापतिमाममंतात् ॥२५॥ यस्योदराद्विश्वमिदं प्रसूतं ब्रह्माणि तद्वज्जठरे स्थितानि। अनंतरूपं जठरं हि यस्य लंबोदरं तं प्रणतोऽस्मि नित्यम् ॥२६॥ जगद्गलाधो गणनायकस्य गजात्मकं ब्रह्मशिरः परेशम्। तयोश्च योगे प्रवदंति सर्वे गजाननं तं प्रणमामि नित्यम् ॥२७॥ दीनार्थवाच्यस्त्वथ हेजगद्वै ब्रह्मार्थवाच्यो निगमेषु रंबः। तत्पालकत्वाच्च तयोः प्रयोगे हेरंबमेकं प्रणमामि नित्यम् ॥२८॥ विश्वात्मकं यस्य शरीरमेकं तस्माच्च वक्रं परमात्मरूपम्। तुंडं तदेवं हि तयोः प्रयोगे तं वक्रतुंडं प्रणमामि नित्यम् ॥२९॥ माता पिताऽयं जगतां परेषां तस्याऽपि माता जनकादिकं न। श्रेष्ठं वदंते निगमाः परेशं तं ज्येष्ठराजं प्रणमामि नित्यम् ॥३०॥ नाना चतुःस्थं विविधात्मकेन संयोगरूपेण निजस्वरूपम्। पूर्णस्य सा पूर्णसमाधिरूपा स्वानंदनाथं प्रणमामि चातः ॥३१॥ मनोरथान् पूरयतीह गंगे चराचराणां जगतां परेषाम्। अतो गणेशं प्रवदंति चाशाप्रपूरकं तं प्रणमामि नित्यम् ॥३२॥ वरैः समास्थापितमेव सर्वं विश्वं तथा ब्रह्मविहारिणा च। अतः परं विप्रमुखा वदंति वरप्रदं तं वरदं नतोऽस्मि ॥३३॥ मायामयं सर्वमिदं विभाति मिथ्यास्वरूपं भ्रमदायकं च। तस्मात् परं ब्रह्म वदंति सत्यमेतं परेशं विकटं नमामि ॥३४॥ चित्तस्य प्रोक्ता मुनिभिः पृथिव्यो नानाविधा योगिभिरेव गंगे। तासां सदा धारक एक एव वंदे च धरणीधरमादिभूतम् ॥३५॥ विश्वात्मिका ब्रह्ममयी हि बुद्धिस्तस्या विमोहप्रदिका च सिद्धिः। ताभ्यां सदा खेलति योगनाथस्तं सिद्धिबुद्धीशमथो नमामि ॥३६॥ असत्यसत् साम्यतुरीयनैज्यगनिवृत्तिरूपाणि विरच्य खेलकः। सदा स्वयं योगमयेन भाति तं नमाम्यतोऽहं त्वथ ब्रह्मणस्पतिम् ॥३७॥ अमंगलं विश्वमिदं सहात्मभिरयोगसंयोगयुतं प्रणश्वरम्। ततः परं मंगलरूपधारकं नमामि मांगल्यपतिं सुशांतिदम् ॥३८॥ सर्वत्र मान्यं सकलावभासकं सुज्ञैः शुभादावशुभादिपूजितम्। पूज्यं न तस्मान्निगमादिसंमतं तं सर्वपूज्यं

प्रणतोऽस्मि नित्यम् ॥३९॥ भुक्तिं च मुक्तिं प्रददाति तुष्टो भक्तिप्रियो यो निजविघ्नहा च । भक्त्या विहीनाय ददाति विघ्नांस्तं विघ्नराजं प्रणमामि नित्यम् ॥४०॥ नामार्थयुक्तं कथितं प्रिये ते विघ्नेश्वरस्यैव परं रहस्यम् । त्रिः सप्त नाम्नां हृदयं नरो यो ज्ञात्वा परं ब्रह्ममयो भवेदिह ॥४१॥ गंगोवाच । नाम्नां यत् हृदयं प्रोक्तं त्वया ब्रह्मप्रदं परम् । न तत्रानुभवो मे तु तदर्थं वद शंकर ॥४२॥ शंकर उवाच । मंत्रं गृह्य गणेशस्य पुरश्चरणमार्गतः । भज तं तेन ते ज्ञानं भविष्यति न संशयः ॥४३॥ हृदयं मंत्रराजस्य कथयामि समासतः । मंत्र एव गणेशानो न भिन्नस्तत्र वर्तते ॥४४॥ गकारो ब्रह्मदेवश्चाऽकारो विष्णुः प्रकीर्तितः । बिंदुः शिवस्तथा भानुरनुनासिकसंज्ञितः ॥४५॥ तेषां संधिर्महाशक्तिरभिमंत्रः स उच्यते । देवता गणनाथस्तु तेषां संयोगकारकः ॥४६॥ तेभ्यस्तारमयं विश्वं समुत्पन्नं प्रिये पुरा । अतस्तारयुतो मंत्रो गणेशैकाक्षराकृतिः ॥४७॥ तारः स षड्विधः प्रोक्तस्तं निबोध सरिद्वरे । अकारोकारकौ प्रोक्तौ मकारो नादबिंदुकौ ॥४८॥ शून्यं विद्धि महामाये तत्र भेदं वदाम्यहम् । शून्यं देहिस्वरूपं तु बिंदुर्देह इति स्मृतः ॥४९॥ ताभ्यां चतुर्विधं विश्वं स्थूलादिभेदकारकम् । एतादृशं विजानीहि मंत्रराजं गजाननम् ॥५०॥ आगमोक्तविधानेन कृत्वा न्यासादिकं पुरा । ततो गणेश्वरं पूज्य जपं कुर्याद्विचक्षणः ॥५१॥ तद्दशांशेन होमं वै कुर्यादागममार्गतः । तद्दशांशमितं प्रोक्तं तर्पणं गणपस्य च ॥५२॥ तद्दशांशमितं देवि मार्जनं तद्दशांशतः । विप्राणां भोजनं प्रोक्तमेवं पंचांगमुच्यते ॥५३॥ यथाविधि कृतं चैतत्सद्यो हि फलदं भवेत । अतस्त्वं मंत्रराजस्य पंचकं तत समाचर ॥५४॥ एवमुक्त्वाऽददात्तस्यै मंत्रं विधिसमन्वितम् । गणेशस्य प्रणम्यैव मां ययौ सा तपोधनः ॥५५॥ मयूरेशं समासाद्य चकार तपमुत्तमम् । गंगा तत्रैव विप्रेशा मंत्रध्यानपरायणा ॥५६॥ पुरश्चरणमेकं सा चकार सरितां वरा । ततः प्रसन्नतां यातो गणेशो भक्तवत्सलः ॥५७॥ तस्यैव कृपया तस्या हृदि ध्यानं बभूव ह । तेनैक-विंशतिनाम्नामर्थज्ञा तत्क्षणादभूत ॥५८॥ ततो हर्षयुता देवी तत्र वासं चकार सा । नित्यं भक्तिसमायुक्ताऽभजत्तं गणनायकम् ॥५९॥ सनकाद्या ऊचुः । ब्रह्मभूना सरिच्छ्रेष्ठा मयूरेशं कथं प्रभो । अभजत्तस्य मार्गं नो ब्रूहि नाथ नमोऽस्तु ते ॥६०॥ शिव उवाच । ब्रह्मभूतो नरो योगी गणेशमभजत् सदा । नवधा भक्तिभावेन तत्परश्च महर्षयः ॥६१॥ पुत्रः कलत्रं जनकौ सुहृद्गणो द्रव्यं सखा वृत्तिजविद्यया युतम् । स्वर्गस्तु मोक्षो विविधं त्वमेव मे स्वामी गुरुर्विघ्नपतिः परात्परः ॥६२॥ सांसर्गिकं कायिकवाचिकं परं कर्माऽचरं मानसजं त्रिदेहतः । ज्ञानं हृदिस्थं च मया परात्परं विघ्नेश्वरायेति

समर्पितं किल ॥६३॥ योगाकारेण विघ्नेश एकानेकादिसंश्रितः । भुंक्ते स विविधान् भोगान् शुभाशुभसमाश्रितान् ॥६४॥ नाहं नरः स्वयं साक्षात् क्रीडति गणनायकः । स्वामिसेवकभावेन रतो ब्रह्मणि शोभते ॥६५॥ अनेन विधिना विप्रा भजंते गणनायकम् । योगिनः शुकमुख्याश्च मुद्गलाद्या महर्षयः ॥६६॥ एतत्सर्वं समाख्यातं गुह्यं गणपतेर्मया । हृदयं तेन विघ्नेशं तोषयध्वं महर्षयः ॥६७॥ यथा देहेंद्रियाद्येषु मुख्यं स्वहृदयं स्मृतम् । यत्र जीवस्वरूपेण तिष्ठति गणनायकः ॥६८॥ तथा गणपतेरेतत् हृदयं परिकीर्तितम् । अत्र योगपतिः साक्षात्तिष्ठति ब्रह्मनायकः ॥६९॥ अनेन गणनाथं तु यस्तोष्यति नरोत्तमः । स भुक्त्वा सकलान् भोगानंते योगमयो भवेत् ॥७०॥ एवं मदीयवाक्यं ते श्रुत्वा ब्रह्मसुताः परम् । प्रणम्य मां ययुः सर्वे सनकाद्यास्तपोवनम् ॥७१॥ एकाक्षरस्य मंत्रस्य पंचकं सेव्य योगिनः । गणेशहृदयं ज्ञात्वा गाणपत्या बभूविरे ॥७२॥ ततो नित्यं गणेशस्य हृदयं ते महर्षयः । जपंति भक्तिसंयुक्ता भ्रमंति स्वेच्छयेरिताः ॥७३॥ अतस्त्वमपि भावेन गणेशहृदयं परम् । सेवस्व गाणपत्येषु तथा मुख्यो भविष्यसि ॥७४॥ मुद्गल उवाच । एवमुक्त्वा महानागं शेषाय प्रददौ शिवः । मंत्रमेकाक्षरं सांगं स ययौ तं प्रणम्य च ॥७५॥ साधयित्वा यथान्यायं हृदयज्ञो बभूव ह । नित्यं हृदयकेनैव तुष्टाव द्विरदाननम् ॥७६॥ गणेशहृदयं पुण्यं शृणुयाच्छ्रावयेन्नरः । ईप्सितं प्राप्नुयादंते ब्रह्मभूतो भवेदिदम् ॥७७॥ नित्यं पठेन्नरश्चेदं हृदयं गणपस्य यः । स गणेशो न संदेहो दर्शनात् सिद्धिदो भवेत् ॥७८॥ पुत्रपौत्रकलत्रादि लभते पाठतो नरः । धनं सुविपुलं धान्यमारोग्यमचलां श्रियम् ॥७९॥ एकविंशतिवारं यो दिवसानेकविंशतिम् । पठेद्गणपतिं चिंत्यं स लभेदीप्सितं फलम् ॥८०॥ असाध्यं साधयेन् मर्त्यो गणेशहृदयेन यत् । राजबंधात्रिकालेषु मोचयेत् पाठतो विधे ॥८१॥ मारणोच्चाटनादीनि वश्यमोहादिकानि तु । अनेन साधयेन्मर्त्यः परकृत्यं प्रणाशयेत् ॥८२॥ संग्रामे जयमाप्नोति वीरश्रीसंयुतो भवेत् । अस्य पाठेन भो दक्ष न किंचिद् दुर्लभं भवेत् ॥८३॥ विद्यामायुर्यशः प्रज्ञामंगहीनोऽगमाप्नुयात् । यं यं चिंतयते मर्त्यस्तं तं प्राप्नोति निश्चितम् ॥८४॥ नानेन सदृशं किंचित् शीघ्रसिद्धिकरं भवेत् । साक्षाद्गणपतेः प्रोक्तं हृदयं ते मया विधे ॥८५॥ गणेशभक्तिहीनाय दुर्विनीताय विद्विषे । न देयं गणराजस्य हृदयं वै कदाचन ॥८६॥ गणेशभक्तियुक्ताय साधवे च प्रयत्नतः । दातव्यं तेन विघ्नेशः सुप्रसन्नो भविष्यति ॥८७॥ महासिद्धिप्रदं तुभ्यं कथितं गणपस्य च । हृदयं किं पुनः श्रोतुमिच्छसि त्वं प्रजापते ॥८८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते गणेशहृदयकथनं नामैकोनपंचाशत्तमोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । योगिध्येयं गणेशस्य रूपं सर्वत्र संमतम् । ध्यातुं त्वयोगिभिः शक्यं प्रत्यक्षं नाऽत्र संशयः ॥१॥ कथं वेदादिषु प्रोक्तं योगिध्येयमनुत्तमम् । वद तत्र कारणं विप्र संशयस्यापनुत्तये ॥२॥ मुद्गल उवाच । अयोगिनो गणेशानं पंचभूतमयं प्रभुम् । जानंति सर्वतुल्यं तं देहधारिणमंजसा ॥३॥ न तेषां हृदये दक्ष रूपं योगमयं परम् । शोभनं गणराजस्य योगाकारमपि स्फुटम् ॥४॥ योगिनस्तं विशेषेण जानंति योगरूपिणम् । तत्र भेदं प्रवक्ष्यामि शृणुष्वैकाग्रमानसः ॥५॥ समष्टिव्यष्टिरूपाख्यं ब्रह्म वेदे प्रकीर्तितम् । कुंभस्थले गणेशस्य पश्यंति तन्मये च ते ॥६॥ त्रिविधं विविधं दक्ष त्रिनेत्रं संगतं महः । पश्यंति योगिनस्तस्य गणेशस्य महात्मनः ॥७॥ महाकारणरूपा तु शुंडा तस्य प्रकीर्तिता । विंदुः कंठस्तथा दंतः सोऽहं मात्रात्मकः स्मृतः ॥८॥ बोधरूपं गणेशस्य जठरं सांख्यवाचकौ । कर्णौ चतुर्विधं ब्रह्म चतुर्भुजमयं स्मृतम् ॥९॥ मायामोहयुतं ब्रह्म मोहहीनं सुसाक्षिकम् । द्वौ पादौ गणराजस्य पश्यंति योगिनः किल ॥१०॥ संहाराख्यं च यद्ब्रह्म परशुस्तस्य शोभनः । नियंत्राख्यं तथा दक्ष अंकुशश्च महात्मनः ॥११॥ कमलं सृष्टिरूपाख्यं पाशं मोहमयं परम् । बंधमोक्षात्मकं हंत दुष्टनाशकरं मुदा ॥१२॥ अभयं भक्तजातिभ्यो रक्षकं वाञ्छितप्रदम् । वरं सकामकानां तु कामदं तं वदंति ते ॥१३॥ चिंतामणिं मणिं तत्र भुक्तिमुक्तिप्रदं परम् । अक्षीणतेजसं चंद्रममृतं ब्रह्म निश्चितम् ॥१४॥ स्वानंदाख्यं परं ब्रह्म तदेव नगरं प्रभोः । इक्षुसागररूपं च रसाणां ब्रह्म कथ्यते ॥१५॥ पंचचित्तमयी बुद्धिस्तत्रैश्वर्यभ्रमात्मिका । सिद्धिर्मायि वदंत्येव योगिनो योगभावनः ॥१६॥ मूषकं व्यापकाख्यं च परं पश्यंति वाहनम् । धर्माधर्मौ गणेशस्योरःपृष्ठे पार्श्वगे किल ॥१७॥ शुभाशुभेऽथ रोमाणि ओषध्यश्च प्रकीर्तिताः । कल्पा उन्मेषणं तस्य निमेषणं प्रजापते ॥१८॥ लक्षलाभौ सुतौ तस्य सर्वकार्यप्रवर्तकौ । यादृशं क्रियते लक्ष्यं तादृशं फलमश्नुते ॥१९॥ इत्यादि विविधं तस्य ब्रह्माकारं न संशयः । सर्वं तेन गणाध्यक्षो ब्रह्मणस्पतिरुच्यते ॥२०॥ योगिनः शुकमुख्यास्तं ध्यायंते देहधारिणम् । ब्रह्मरूपं सुसाकारं निराकारमयं विभुम् ॥२१॥ सगुणं कंठपर्यंतं निर्गुणं गजवाचकम् । मस्तकं च तयोर्योगं योगं जानंति विप्रपम् ॥२२॥ योगिध्येयमतो वेदादिषु संकथितं विधे । रूपं गणपतेः प्रोक्तं योगाकारं स्वभावतः ॥२३॥ दक्ष उवाच । मूषको वाहनं तस्य कथं बभूव विप्रप । तन्मे ब्रूहि विशेषेण सर्वज्ञोऽसि कृपानिधे ॥२४॥ मुद्गल उवाच । मायया व्यापकं ब्रह्मा मोह्य नानाजनान् परान् । भुंक्ते भोगांस्तत्कृतांस्तच्छुभाशुभविवर्जितम्

||२६|| मुषस्तेये समाख्यातो धातुः स एव मूषकः । व्यापकश्चौरवत् सर्वान् भुंक्ते मोदो हृदि स्थितः ||२६|| तपसाऽऽराधित-स्तेन व्यापकेन गजाननः । प्रसन्नो वाहनं चक्रे तत्प्रीतिवर्धनार्थतः ||२७|| एतत्सर्वं समाख्यातं धूम्रवर्णचरित्रकम् । नानाख्यानसमायुक्तं सर्वसिद्धिप्रदायकम ||२८|| य इदं श्रावयेद्दक्ष शृणुयाद्वा पठेन्नरः। स सर्वसुखसंयुक्तोऽन्ते ब्रह्मणि गतो भवेत् ||२९|| नानेन सदृशं किंचित् सर्वसिद्धिकरं परम । यत्र साक्षाद्गणेशानः कीर्त्यते धूम्रवर्णकः ||३०|| यं यमिच्छति तं तं स लभेदनेन निश्चितम । श्रवणेन न संदेहो मानवः शुभमश्नुते ||३१|| लेखयित्वा गृहे यस्तु पूजयेत पुस्तकं नरः । न तत्र राक्षसादिभ्यो भयं भवति कर्हिचित ||३२|| भोगान भुक्त्वा स विविधान पुत्रपौत्रसुहृद् वृतः । अंते स्वानंदगो भूत्वा गणेशे तन्मयो भवेत ||३३|| धर्मार्थकाममोक्षाणां दायकः श्रवणेन च । पठनेन न संदेहः खंडोऽयं धूम्रवर्णकः ||३४|| तीर्थानि विविधान्येव तपः कुर्यान्नरोत्तमः । विविधं तत् फलं सद्य अस्य श्रवणतो लभेत् ||३५|| इष्टापूर्तादिकं यस्तु कुर्यात् यात्रादिकार्चनम् । विविधं स लभेत् पुण्यमस्य श्रवणतो नरः||३६|| बहुनाऽत्र किमुक्तेन नानेन सदृशं परम् । किंचिन्नाना-विधेष्वेव साधनेषु प्रजापते ||३७|| यत्र योगपतिः साक्षाद्वर्ण्यते धूम्रवर्णकः । तेन किं तुल्यतां यांति विचारय महामते ||३८|| सर्वसिद्धिकरं पूर्णं कथितं ते चरित्रकम् । धूम्रवर्णस्य संक्षेपाद्यथामति प्रमाणतः ||३९|| विस्तरेण शिवाद्याश्च वेदा योगिन एव च । न समर्था भवंतीह तत्र कोऽहं प्रजापते ||४०|| अधुना त्वं गणेशानं भज यत्नपरायणः । अथवा श्रोतुमिच्छा ते वदतां कथयाम्यहम् ||४१|| सूत उवाच । एवमुक्त्वा महायोगी तूष्णीं मुद्गल आदधे । दक्षो हृष्टमनास्तं तु प्रणनाम कृतांजलिः ||४२|| धूम्रवर्णचरित्रं तु कथितं ते महामुने । यथा दक्षाय तेनैव कथितं तादृशं परम् ||४३|| सर्वसिद्धिकरं चित्रं नानाख्यानसमन्वितम् । श्रुतं त्वया महाभाग किं भूयः श्रोतुमिच्छसि ||४४||

|| ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे अष्टमे खंडे धूम्रवर्णचरिते फलश्रुतिवर्णनं नाम पंचाशत्तमोऽध्यायः ||



|| इति श्रीमुद्गलपुराणे अष्टमः खंडः समाप्तः ||

|| श्रीगजाननार्पणमस्तु ||



पुना रोगादिसंयुक्ता भवंति नीचयोनिषु ॥१५॥ काणमूकादिदोषैस्ते संयुक्ताः पापचेतसः । दरिद्रादिसमायुक्ता भोगैर्हीना भवंत्यपि ॥१६॥ पुनः पापसमाचारा भवंति यदि मानवाः । अंते यमस्य गेहे ते नरकस्थाः पुनः पुनः ॥१७॥ अतस्तमोगुणस्थं स्वभावं त्यक्त्वा च मानवाः । धर्मार्थधृतिसंयुक्ता यत्नेन दैवयोगतः ॥१८॥ विद्धि राजसगं भावं नरा भुवि सकामकम् । सततं कर्म कुर्वंति भोगदं धर्मसंयुताः ॥१९॥ वासनासंयुतं कर्म स्वधर्मस्थं भवेत्किल । तदेव राजसं विद्धि नानाभावगतं परम् ॥२०॥ राजसाः सर्वभोगं तु भुक्त्वा पुनः पतंत्यपि । इह ये यादृशं कर्म कुर्वंते तादृशं फलम् ॥२१॥ अथवा स्वल्पभावेन कृतं राजससंभवम् । कर्म तेन नरा भूमौ भवंते तत्क्षणात् पुनः ॥२२॥ अथवा विविधास्ते तु योनिषु संभवंत्यपि । नीचोवासु विशेषेण जन्ममृत्युपरायणाः ॥२३॥ राजसानां प्रजानाथ नरको नैव विद्यते । स्थावरं जंगमं भित्त्वा भवंते जन्मसंयुताः ॥२४॥ तत्र दुःखं सुखं नाना भुंजते नात्र संशयः । एवं राजसगं सर्वं कथितं ते समासतः ॥२५॥ अतः परं प्रवक्ष्यामि सात्त्विकं कामवर्जितम् । स्वधर्मस्था जना विद्धि तत्कुर्वंति निरंतरम् ॥२६॥ ब्रह्मार्पणतया यद्भवति कर्म धर्मजम् । नानाविधं परं तत्तत् सात्त्विकं विद्धि मानद ॥२७॥ तेन शुक्लगतिं भित्त्वा गच्छंति मोक्षसंजसा । अतः सत्त्वगुणेनैव युक्ता भवंति मानवाः ॥२८॥ अतःपरं तुरीयं ते कथयामि समासतः । रसहीनस्वभावेन चित्तं देहसमन्वितम् ॥२९॥ तदा भवति चेत्तुर्यं कर्म संजायते परम् । नानाविधं जगत् सर्वं ब्रह्माकारं न संशयः ॥३०॥ यद्यत्तेन कृतं कर्म तदेव ब्रह्मदं भवेत् । स्तुतिनिंदादिकं किंचिन्नैव तत्र प्रकीर्तितम् ॥३१॥ देवभक्तादिकं दक्ष नैव तुर्ये प्रतिष्ठितम् । ब्रह्मणि समभावेन वर्तते सर्वदा स्वयम् ॥३२॥ अंतरे सर्वभावेषु पश्यति विश्वरूपिणम् । तदा तुरीयगं कर्म क्वचिद्भवति नान्यथा ॥३३॥ एवं सर्वसमत्वेन यद्भवेत्ततुरीयकम् । कर्म प्रारब्धयोगेन ब्रह्मणो रसभावतः ॥३४॥ अंतेऽस्मिन्नामये तेन लीनो भवति मानवः । महाकारणभावेन भवेत् त्रिगुणचालकः ॥३५॥ अतः परमहं कर्म कैवल्यं कथयामि ते । निषेधविधिहीनं यद्भवेत् कर्म स्वेच्छया ॥३६॥ ब्रह्मभूयमयं विद्धि पंचमं योगिसंमतम् । कर्ता देहो न संदेहस्तुरीयं प्रेरकं मतम् ॥३७॥ कृतस्तत्र व्यवस्थाख्यं तुरीयं वर्तते परे । चतुर्विधं येन सृष्टमिदं सर्वं स्वलीलया ॥३८॥ स एव कर्तृभावेन कारयितृप्रभावतः । तत्र तिष्ठति कोऽहं तु कुतो ब्रह्मविचारतः ॥३९॥ नाहं नरो न वै ब्रह्म मया साध्यं निरंतरम् । भ्रांत्या सर्वं न संदेहो दृश्यते मायया मयि ॥४०॥ स्वेच्छया खेलति ब्रह्म चतुर्भेदमयं परम् । शुभाशुभं तस्य नास्ति वृथाऽहंतां

त्यजेन्नरः ॥४१॥ अनेनानुभवेनैव शान्त्या संवर्तनेन नरः। रसं सर्वत्र संत्यज्य ब्रह्मणो रसधारकः ॥४२॥ एवं चतुर्विधं भावं स्थितं देहिस्वरूपकम्। देहभ्रांतिविहीनं तत्कृत्वा सोऽहंपरो भवेत् ॥४३॥ एवं क्रमेण योगीन्द्रो भवेद्योगान्नरोत्तमः। कथितं विस्तरात् सर्वं क्षेत्रक्षेत्रज्ञसाधनम् ॥४४॥ अथ वर्णाश्रमाचारं शृणु सर्वसुखप्रदम्। येन धर्मार्थकामांश्च लभेत् मोक्षं नरोत्तमः ॥४५॥ चित्तेंद्रियाणि वश्यानि क्षमार्जवतपांसि च। शौचं श्रुतिस्मृतीनां वै ज्ञानं यत्र प्रतिष्ठति ॥४६॥ वेदाधार-विहीनं यन्न करोति कदाचन। सदा ब्रह्मपरो यस्माद्ब्राह्मणः स च संस्मृतः ॥४७॥ शौर्यं दाक्ष्यं तथा दार्ढ्यं युद्धे संमुखता सदा। शरण्यरक्षणं नित्यं प्रभुत्वं दंडधारणम् ॥४८॥ धृतिः क्षात्रं सदा तेजश्चित्तमौदार्यसंयुतम्। सुनीत्या पालनं पंच कर्मयुक्तः स बाहुजः ॥४९॥ क्रयविक्रयको नित्यं वस्तूनां भूमिकर्षणम्। गवां पालनकं त्रेधा कर्मयुक्तः स वैश्यकः ॥५०॥ त्रिवर्णसेवनं दानं नाममंत्रं जपेत् परम्। पुराणश्रवणं शौद्रं कर्म पौराणिकं द्विजात् ॥५१॥ अंत्यजानां पुराणोक्तं कर्म विप्रमुखोद्गतम्। नैव शूद्रसमं चान्यदस्पर्शत्वं द्विजादिषु ॥५२॥ कृतोपवीतको विप्रः क्षत्रियो वैश्य एव यः। वेदादिकं समभ्यस्यन् ब्रह्मचर्ययुतो भवेत् ॥५३॥ भिक्षाशनो भवेन्नित्यं गुरोराज्ञावशानुगः। गायत्रीं संजपेन्नित्यं त्रिकालेषु च रोमधृक् ॥५४॥ सायं प्रातश्च जुहुयात् हविर्नित्यं जितेंद्रियः। षोडशाब्दं द्वादशाब्दं ब्रह्मचर्यं चरेत् परम् ॥५५॥ पंचयज्ञपरो नित्यं नैमित्तं स समाचरेत्। कृतदारः प्रजार्थं स ऋतुगामी भवेद् गृही ॥५६॥ स्त्रीसंगं संपरित्यज्य स्त्रिया युक्तो वसेद्वनम्। वन्येन सर्वकर्माणि कुर्यान्नित्यं तपः परम् ॥५७॥ नखलोमयुतश्चैव न ग्रामेषु प्रवेशयेत्। कुर्यादेवं वानप्रस्थो वायुभक्ष्यादिकं चरेत् ॥५८॥ मनसाऽपि स्मरेन्नैव स्त्रीसंगं न्याससंयुतः। चित्तनिग्रहसंयुक्तो भिक्षाशी सततं नरः ॥५९॥ कपर्दिकादिकं किंचिन्न स्पृशेत् स कदाचन। ब्रह्मणि ब्रह्मभूतत्वं तदर्थं श्रमयेत् सदा ॥६०॥ साक्षिवद् देहसंस्थोऽपि मौनादिदंडधारकः। अथवा दंडहीनः स ज्ञानदंडधरो भवेत् ॥६१॥ एवं संन्यासकं कृत्वा सदा तिष्ठेद्यतात्मवान्। मुक्तिमार्गमयं शास्त्रं स्पृशेन्नान्यद्धिनिश्चितम् ॥६२॥ वर्णाश्रमविहीनश्चेद्योगी पंचमगः स्मृतः। विधिनिषेधहीनः स यथा विनायको भवेत् ॥६३॥ एतत्ते सर्वमाख्यातं स्वधर्माचरणादिकम्। येनैव प्राप्यते योगो नरेण ब्रह्मदायकः ॥६४॥ दक्ष उवाच। धर्मार्थकाममोक्षाणां स्वरूपं वद मानद। ब्रह्मीभूतस्य भिन्नं मे भ्रमनाशकरं परम् ॥६५॥ केचिद्धर्मं महाश्रेष्ठमर्थं कामं तु मोक्षकम्। परात्परं वदंत्येव ब्रह्मभूयं तथाऽपरे ॥६६॥ मुद्गल उवाच। धर्मेण ब्रह्मलोकश्च लभ्यते मानवैः परः। ब्रह्मा सर्वसमानश्च स्वधर्माख्यः

प्रकीर्तितः ॥६७॥ अर्थः समर्थभावाख्य ईशलोकप्रदायकः । ईश्वरात्र समर्थोऽन्यः पश्य ब्रह्मांडमंडले ॥६८॥ कामो भोगात्मकः प्रोक्तो विष्णुलोकप्रदायकः । स लक्ष्मीपतिराख्यातो नानाकामप्रदः प्रभुः ॥६९॥ मुक्तिः सौगन्धिका प्रोक्ता सूर्यः पुरुष उच्यते । शुक्लमार्गपरः पूर्णः साक्षात साक्षी विभावसुः ॥७०॥ ब्रह्मीभूतमयः प्रोक्तः स्वानंदः पूर्णयोगदः । वदंति न परं लोकं स्वानंदाद्वेदवादिनः ॥७१॥ अन्यच्छृणु प्रजानाथ पंचैते योगदायकाः । योगार्थवाचकाः सर्वे तत्र भेदं वदाम्यहम् ॥७२॥ योगधर्मेण योगश्च लभ्यते मानवैः परः । न योगादपरः श्रेष्ठस्तेनार्थोऽयं प्रकीर्त्यते ॥७३॥ योगकामेन योगोऽयं लभ्यते सर्वभावतः । मायाया वरणं त्यक्त्वा मोक्षयोगः प्रकीर्त्यते ॥७४॥ ब्रह्म ब्रह्मणि वेदेषु कथितं नात्र संशयः । तत्र योगेन योगी यो ब्रह्मीभूतः स वै स्मृतः ॥७५॥ धर्मार्थकाममोक्षाख्या योगशास्त्रे विशेषतः । भिन्ना मायामयाः प्रोक्ता ब्रह्मीभूतस्तु पंचमः ॥७६॥ ब्रह्मणि ब्रह्मभूतो यो योगी एव स उच्यते । न भिन्नः सर्वथा तस्माद्ब्रह्मणो ब्रह्मगः परः ॥७७॥

॥ ॐ तत्सदिति श्रीमदन्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे चित्तभूमिनिरोधने क्षेत्रक्षेत्रज्ञज्ञानयोगो नाम त्रयोदशोऽध्यायः ॥

॥ इति योगगीतामृतार्थतत्त्वम् मुद्गलमान् नवमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । वक्ष्यामि भावनां चैकां वेदशास्त्रार्थसंयुताम । नानामतभयं त्यक्त्वा तया योगी भवेत्परः ॥१॥ चैतन्यं न्यायशास्त्रज्ञा वदंति ब्रह्ममुख्यकम । चैतन्येन युताः सर्वे स्वस्वकार्यपरायणाः ॥२॥ सर्वप्रकाशकत्वात्तचैतन्यं ब्रह्मसंज्ञितम । चैतन्येन यदा त्यक्तं तदा नाशमुपैष्यति ॥३॥ पंचचित्तात्मयोगेन चैतन्यं ब्रह्मसंज्ञितम् । भवत्यत्र न संदेहः शब्दार्थानामनेकतः ॥४॥ तार्किकाः प्रवदंत्येव सर्वाभेदं परं मतम् । ब्रह्मवेदांतवादेषु विद्यते शास्त्रसंमतौ ॥५॥ पंचचित्तमया भेदा अभेदा योगिना कृताः । योग एकार्थभावाख्यो भवत्यर्थप्रमाणतः ॥६॥ धर्मशास्त्र-

विदः सर्वे बोधात्मैव परं पदम्। ब्रह्म बोधमयं मुख्यं भावाभावविवर्जितम् ॥७॥ पंचचित्तगतो धर्मस्त्यक्तव्यस्तेन योगकः। धर्मो भवेन्न संदेहो ब्रह्मधर्मधरः प्रभुः ॥८॥ सांख्या वदंति सांख्यं यद्ब्रह्म संख्याविवर्जितम्। विबोधान्न परं ब्रह्म खेलहीनप्रभावतः ॥९॥ तत्र पंचविधं चित्तं परं योगेन संख्यया। हीनं तदेव भवति योगाख्यं शब्दमानतः ॥१०॥ मीमांसका वदंत्येव स्वसंवेद्यं परं मतम्। कारणं ब्रह्म तत्रान्यन्नास्ति ब्रह्मणि संस्थितम् ॥११॥ पंचचित्तं परित्यज्य ब्रह्मरूपं करोति तत्। मीमांसया स्वयं योगी योगवाच्यं भवेत् परम् ॥१२॥ एवं नानामतैर्युक्ता वदंति शास्त्रभेदतः। ब्रह्म नानाविधं दक्ष तदेवं योगगं भवेत् ॥१३॥ शक्तिर्ब्रह्मेति शाक्ता वै न वदंति न तत्परम्। संयोगो द्वंद्वयोर्यत्र तदेवं योगगं भवेत् ॥१४॥ शक्तिः पंचमचित्तंगा सा ब्रह्मणि समागता। परिगृह्य निरोधाख्यं चित्तं देवी ततः स्मृता ॥१५॥ सौरं ब्रह्मेति सौराश्च वदंति तु परात्परम्। तस्मात्परं न विद्येत सर्वाधारप्रमाणतः ॥१६॥ भेदात्मकं स संजीव्य नित्यं तिष्ठति चादरात्। तेन योगमयः सूर्यो भवत्यत्र न संशयः ॥१७॥ वदंति विष्णुर्ब्रह्मेति मुख्यं यद्वैष्णवा जनाः। तस्मात् परं पदं नास्ति सदानंदप्रमाणतः ॥१८॥ चित्तं यत् पंचमं तत्र मोहं त्यक्त्वा तदात्मकम्। ब्रह्मयोगे भवेद्योग आनंदो नात्र संशयः ॥१९॥ शैवाः शैवं परं ब्रह्म वदंति मुख्यभावतः। वेदे तस्मात् परं नास्ति किंचिन् मोहविहीनकम् ॥२०॥ निरोधं त्रिविधं दक्ष पराधीनं न संशयः। तत्रस्थं योगरूपाख्यं स्वाधीनं योगगं भवेत् ॥२१॥ एवं नानामतैर्युक्ता स्वस्वदेवपरायणाः। वदंति तत् प्रमाणं वै शब्दानामर्थभावतः ॥२२॥ अनेकार्थमयाः शब्दास्तेषु किं किं न संभवेत्। सर्वे योगार्थवाच्या वै जायंते योगिनः क्रमात् ॥२३॥ अन्नप्राणादिकाः शब्दा एवं ब्रह्मप्रवाचकाः। ते सर्वे योगदा दक्ष भवंति ब्रह्मधारणात् ॥२४॥ वेदांतमथ वक्ष्यामि सर्वमान्यं विशेषतः। शास्त्राणि च तदंगानि तत्प्रमाणानि सर्वदा ॥२५॥ यः सर्वं सर्वभावेषु युतो जानाति मायया। मायाहीनप्रभावेण योगस्तिष्ठति नित्यदा ॥२६॥ तदेव ब्रह्ममुख्यं तु सर्वेभ्यो नात्र संशयः। ब्रह्मभ्य ऋग्जगादैव प्रज्ञानं योगगं स्मृतम् ॥२७॥ पंचचित्तभवं सर्वं यो जानाति तदेव सः। योगस्तद्गतभावैः संवर्जितो भवति प्रभुः ॥२८॥ अहं ब्रह्मेति यद्ब्रह्म सर्वदोषविवर्जितम्। सदैवं यजुषा प्रोक्तं मुख्यं वै परतः परम् ॥२९॥ पंचचित्तभवा भेदास्तेष्वेवं भेदवर्जितम्। योगं विद्धि प्रजानाथ योगशास्त्रप्रमाणतः ॥३०॥ मायामोहयुतं यच्च मायामोहविवर्जितम्। तयोर्योगे परं ब्रह्म साम्ना संकथितं किल ॥३१॥ मायामोहयुतं ब्रह्म स्वानंदाख्यं ततः परम्। अयोगं मायया

हीनं तयोर्योगे तु योगगम् ॥३२॥ ब्रह्म ब्रह्मणि संस्थं यन्मनोवाणीमयं न तत् । मनोवाणीविहीनं नाथर्ववेदो जगाद ह ॥३३॥ मनोवाणीमयः प्रोक्तः संप्रज्ञातो न संशयः । असंप्रज्ञातकस्ताभ्यां हीनो योगस्तयोः परः ॥३४॥ एवं वेदार्थयुक्तानि महावाक्यानि मानद । योगाक्यानि विशेषेण जानीया योगसेवया ॥३५॥ कर्मादयः समाख्याताः शब्दा ब्रह्ममया बुधैः । भवंति योगसंज्ञस्तास्ते सर्वं योगिनां मतं ॥३६॥ सर्वशास्त्रमनैक्यं ते कथितं शब्दधारणात् । तज्ज्ञात्वा मोहहीनः स सदा भवति मानवः ॥३७॥

॥ ॐ तत्सदिति श्रीमदांते पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे चित्तभूमिनिरोधेन नानात्मैक्ययोगो नाम चतुर्दशोऽध्यायः ॥

॥ इति योगगीतामृतनिषत्सु सुगमासु दशमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । अथो लयं प्रवक्ष्यामि येन चित्तं लयं व्रजेत् । ब्रह्मण्यास्थाय योगं च ज्ञात्वा योगं प्रजापते ॥१॥ लयश्चतुर्विधः प्रोक्तो नित्यो नैमित्तिकः परः । तृतीयः प्राकृतो विप्रैः सात्त्वतश्चतुर्थकः ॥२॥ कर्माकर्मविकर्माख्यो नित्यः प्रोक्तो बुधैः पुरा । कर्मानुकूलभावेन जनानां जननादिकम् ॥३॥ क्षणक्रमादिमारभ्यायुषामंतः समास्थितः । गर्भाधानाद्यवस्थानां प्रकाशश्च प्रकथ्यते ॥४॥ ब्रह्मणो दिवसांते स कुंठितो नात्र संशयः । नैमित्तिकलयेनैव त्रिलोकलयकारिणा ॥५॥ शुभाशुभयुताः सर्वे जंतवो लयमाययुः । शुभाशुभफलैर्हीना बभूवुः कर्मकुंठनात् ॥६॥ स्वर्गमंडलपर्यंतं त्रैलोक्यं प्रलयं गतम् । तावता स प्रमाणेन नित्यः संकथितो बुधैः ॥७॥ अथो नैमित्तिकं दक्ष कथयामि समासतः । चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ॥८॥ नैमित्तिको दिनांते यस्तदाऽयं वर्तते लयः । तेन नैमित्तिकः प्रोक्तो नाम्ना सर्वार्थकोविदैः ॥९॥ अधुना प्राकृतं वच्मि व्यवस्थाभिर्युतं लयम् । महाकारणगं चेदं स प्राकृत उदाहृतः ॥१०॥ तत्त्वानामेकभावोऽयं स्थूलसूक्ष्मसमात्मनाम् । प्राकृतः प्रकृतिस्थत्वात् कथ्यते विबुधैः परः ॥११॥ सारस्वतं परं पूर्णं शृणु योगप्रदं प्रभो । निरोधचित्तभावेन पंचचित्तलयात्मकम् ॥१२॥ मनोवाणीमयं सर्वं

विश्वं नानास्वभावगम् । मनोवाणीविहीनं त्वमसंप्रज्ञातं विदुर्बुधाः ॥१३॥ वाण्या संकथ्यते भावो मनस्तत्र प्रगच्छति । नानापदार्थभिन्नत्वात् सर्वेषां प्राणिनां प्रभो ॥१४॥ वाण्या वाणीविहीनं यत् कथितं ब्रह्म हृद्गतम् । चित्तं समाधिना तत्र सदा तिष्ठति तादृशम् ॥१५॥ वाणी सा द्विविधा प्रोक्ता ब्रह्माकारा जगन्मयी । तयोर्नाशे लयः प्रोक्तः परः सारस्वतो बुधैः ॥१६॥ सरस्वतीलयं यत्र योगभावात् प्रगच्छति । महावाक्यादिसंयुक्ता स सारस्वत उच्यते ॥१७॥ सारस्वतलयेनैव चित्तं पंचविधं प्रभो । चिंतामणौ लयं कृत्वा तिष्ठ त्वं योगिसंमतः ॥१८॥ एतत् सर्वं समाख्यातं योगदं ते समासतः । गोपयैनं महायोगं ततो योगी भविष्यसि ॥१९॥ मा योगं कथयस्व त्वमिमं कस्मै प्रजापते । पात्रहीन-प्रभावेण भ्रंशदस्ते भविष्यति ॥२०॥ वासनाहीनभावेन गणेशज्ञानलालसान् । तान् बोधय विशेषेण तदाऽयं शुभदो भवेत् ॥२१॥ अत्र ते कारणं दक्ष कथयामि समासतः । तस्य श्रवणमात्रेण संशयस्तु लयं व्रजेत् ॥२२॥ योगाकारो गणेशानो यदा खेलपरोऽभवत् । तदा तं वचनं मायं सिद्धिबुद्धी समूचतुः ॥२३॥ सिद्धिबुद्धी ऊचतुः । यदि खेलं करोषि त्वमावाभ्यां गणनायक । आवां त्वां छादयिष्यावो नानाभावप्रदर्शनात् ॥२४॥ वेदादिभिस्तत्र वाणीमयी गाथा गजानन । स्वरूपं ते यथातथ्यं कथयिष्यति मानवान् ॥२५॥ तेन त्वां ब्रह्मणां नाथं ज्ञास्यंते मानवादयः । त्वदुपासन-मात्रेण भवेयुर्ब्रह्मभूतकाः ॥२६॥ न त्वां छादयितुं शक्ते वाणीस्थं गणनायक । अतस्तदर्थमानंदात् कुरु किंचिद्गजानन ॥२७॥ एवं तयोर्वचः श्रुत्वा ते जगाद गजाननः । मा खेदं कुरुतं देव्यौ वाणीं संमोहयाम्यहम् ॥२८॥ मोहिता सा मया वाणी वर्णनं भ्रांतिदं च मे । करिष्यति प्रगूढार्थयुतं सत्यार्थभाषितम् ॥२९॥ गूढार्थं नैव देवेशा योगीशास्तत्त्वदर्शिनः । ज्ञास्यंति तेन मां सर्वे न भजिष्यंति भावतः ॥३०॥ सिद्धिबुद्धियुतं ब्रह्म वाणी प्रकटयिष्यति । न गणेशमयीं गाथां कथयिष्यति योगदाम् ॥३१॥ सिद्धिबुद्धिमयं सर्वं जगद्ब्रह्म प्रसेव्य यः । यदा शुद्धो नरो भावी तदा मां ज्ञास्यति प्रिये ॥३२॥ परं सिद्धियुतं ब्रह्म कथितं सिद्धिदायकम् । स एव गणनाथोऽयं पतिः सिद्धेः प्रमाणतः ॥३३॥ परं बुद्धियुतं ब्रह्म परं बुद्धेः प्रकथ्यते । गणेश एव संप्रोक्तः पतिर्बुद्धेः प्रमाणतः ॥३४॥ एवं त्रैविध्यगं वाणी वदिष्यति सदा तु माम् । सिद्धिदं बुद्धिगं ब्रह्म शास्त्रेष्वेतत् त्रयं मतम् ॥३५॥ एवमुक्त्वा गणेशानः पुनस्तूष्णीं बभूव तम् । उवाच प्रणनामादौ भक्तिः परम-दुःखिता ॥३६॥ भक्तिरुवाच । वरो दत्तस्त्वया नाथ सिद्ध्यै बुद्ध्यै गजानन । तेन भक्तिविहीनाश्च भविष्यंति सदा नराः ॥३७॥

अतोऽहं दुःखसंयुक्ता चरिष्यामि निरंतरम् । मां पालय गणाध्यक्ष भक्तियुक्तान् जनान् कुरु ॥३८॥ एवमुक्तो गणाध्यक्षस्तामुवाच सुदुःखिनाम् । भक्तिं भक्तिप्रियः पूर्णः स्मयमानः प्रजापते ॥३९॥ श्रीगणेश उवाच । मा शोकं कुरु कल्याणि नरा मद्भक्तिकारकाः । देवनागासुराद्याश्च भविष्यंति न संशयः ॥४०॥ नानादेवपरा ये तु भक्त्या जन्मनि जन्मनि । संतुष्टा अमरास्तेभ्यो दास्यंत्यपि रुचिं मुदा ॥४१॥ ततस्तेऽपि समागत्य भक्तियुक्ता निरंतरम् । तुष्टं तं वै करिष्यंति नानायज्ञपरायणाः ॥४२॥ ततस्तस्य कृपायोगात् देवीभक्तियुता नराः । भविष्यंति च ते सर्वे तां भजिष्यंति संयताः ॥४३॥ एवं बहौ गते काले संतुष्टा सा प्रदास्यति । तेभ्यः सौरीं महाभक्तिं भजिष्यंति तया रविम् ॥४४॥ ततो बहौ गते काले सूर्यस्तोषसमन्वितः । उग्रां दास्यति भक्तिं तु वैष्णवीं तेभ्य आदरात् ॥४५॥ तया युक्ता भजिष्यंति विष्णुं भावसमन्विताः । नरास्ततः स संतुष्टो बहुकाले भविष्यति ॥४६॥ तुष्टो विष्णुः स्वयं तेभ्यो दाता स्याद्भक्तिमुत्तमाम् । शैवीं तया ततस्ते तं भजिष्यंति सदाशिवम् ॥४७॥ ततो बहौ गते काले तुष्टः शंभुः प्रदास्यति । भक्तिं गाणेश्वरीं तेभ्यो भजिष्यंति तया च माम् ॥४८॥ नराः शांतिं समालभ्य मत्तो योगपरायणाः । ब्रह्मीभूता भविष्यंति भजिष्यंति तथाऽपि ते ॥४९॥ एवं क्रमेण मद्भक्ता भविष्यंति नरादयः । त्वद्युक्ता मां भजिष्यंति तेषां वश्यो भवाम्यहम् ॥५०॥ न भक्ते ते समं मे वै प्रियं किंचिद्भविष्यति । यत्र भक्तिर्गता तत्र यथा स्यास्यामि किंकरः ॥५१॥ स्वानंदं लक्षलाभौ च सिद्धिं बुद्धिं मदीयकम् । सर्वं तेभ्यः प्रदास्यामि भक्तेभ्यो नात्र संशयः ॥५२॥ अयं मदीयदेहश्च भक्त्यधीनो भविष्यति । भक्ताग्रे भक्तरूपेण सदा स्यास्यामि दासवत् ॥५३॥ कर्मभ्यश्चाधिकं भक्ते तपः परमदुश्चरम् । तपोभ्यश्चाधिकं ज्ञानं निःसंगपददायकम् ॥५४॥ ज्ञानाद्योगः समाख्यातोऽधिकः शांतिप्रदायकः । तस्माच्च त्वं महाभक्ते भविष्यस्यधिका प्रिया ॥५५॥ भक्तेः परं न किंचित् मे ह्यधिकं शास्त्रसंमतम् । भविष्यति महाभागे मा चिंतां कुरु सर्वथा ॥५६॥ अन्यद्वाणी मदीयं यद् गूढं रूपं वदिष्यति । तदर्थं ते प्रियं भक्ते करोमि शृणु मे वचः ॥५७॥ मदीयभुजसंस्थोऽयं मुद्गलः सर्वदर्पहा । स एव ब्राह्मणो भूत्वा चरिष्यति निरंतरम् ॥५८॥ कृतं तेन मदीयं वै पुराणं वेदबृंहितम् । गूढार्थयोगतं भावि सर्वेभ्यो भक्तिदायकम् ॥५९॥ स्वरूपं तत्र मे भक्ते प्रकटं पश्यतां नृणाम् । शृण्वतां तत्तदा पूर्णं भविष्यति न संशयः ॥६०॥ तथापि दुर्लभा भक्तिर्मदीया त्वं भविष्यसि । अतोऽल्पप्रज्ञा न मां देवि भजिष्यंति कदा-

चन ॥६१॥ विघ्नं मौद्गलशास्त्रेऽहं करिष्यामि भ्रमप्रदम् । अश्रद्धं तेन नष्टं तद्भविष्यति कदा कदा ॥६२॥ नव भावस्य रक्षार्थं मौद्गलं निर्मितं मया । अतः परं महाभक्त वद किं ते करोम्यहम् ॥६३॥ एवं तस्य वचः श्रुत्वा हर्षिता सा ननाम तम् । गणेशं भावगंभीरा न किंचित् पुनरब्रवीत् ॥६४॥ एतत्ते कथितं दक्ष गुह्यं विघ्नेश्वरस्य यत् । अतो गुप्तं प्रकर्षेण शास्त्रं कुरु मदीयकम् ॥६५॥ त्वं दक्षः सर्वभावेषु दक्षाद्दक्षो न विद्यते । अतस्तुभ्यं मया सर्वं कथितं शास्त्रमुत्तमम् ॥६६॥ हृदिस्थेन गणेशेन प्रेरितोऽहं प्रजापते । तदाज्ञया हृदिस्थं मे कथितं शास्त्रमुत्तमम् ॥६७॥ अनेन विधिना दक्ष भज त्वं गणनायकम् । तेनेप्सितं समासाद्य गाणपत्यो भविष्यसि ॥६८॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे चित्तभूमिनिरोधने गणेशरहस्ययोगो नाम पंचदशोऽध्यायः ॥

॥ इति योगगीतासूपनिषत्सु सुगमासु एकादशोऽध्यायः



॥ श्रीगणेशाय नमः ॥ दक्ष उवाच । धन्योऽहं कृतकृत्योऽहं कृतस्त्वया महामते । त्वदाज्ञावशगः स्वामिन् गुप्तं ग्रंथं करोमि ते ॥१॥ अधुना वद मे भक्तिं गणेशस्य तया परम् । भजिष्यामि विशेषेण सदा भक्तिपरायणः ॥२॥ मुद्गल उवाच । सांख्ययोगौ प्रजानाथ शृणु ते कथयाम्यहम् । ताभ्यां युक्तस्ततो भक्तिं करिष्यसि परां मुदा ॥३॥ चित्तं पंचविधं प्रोक्तं पंचसंख्याविवर्जितम् । कुरु चिंतामणौ लीनभावेन त्वं सुयोगतः ॥४॥ एतत् सांख्यं समाख्यातं गणेशाभेददायकम् । तेन योगी भवेत् सद्यः शांतियुक्तो विशेषतः ॥५॥ पंचचित्तोद्भवेषु त्वं भोगेष्वसि सुसंस्थितः । बिंबरूपेण तान् भुंक्ष्व शांत्या रससमन्वितः ॥६॥ चित्तेषु चित्तभूतेषु कर्म ज्ञानादिकं भवेत् । तद्गणेशार्पणं सर्वं कुरु त्वं नित्यमादरात् ॥७॥ स्वधर्मसंस्थितं देहं चित्तं शांतिसमन्वितम् । कुरुष्व सततं दक्ष ब्रह्मभावपरायणः ॥८॥ अयं योगः समाख्यातः शास्त्रे वै सर्वसंमतः । वेदेषु च पुराणेषु ब्रह्मभूयप्रदायकः ॥९॥ सांख्ययोगौ समाराध्य भजस्व गणनायकम् । योगाकारं समाध्याय तन्निष्ठस्तत्परायणः ॥१०॥ श्रवणं गणनाथस्य गुणानां नित्यमादरात् । कीर्तनं तस्य तद्भक्त्वं कुरुष्वैतद्रसैर्युतम् ॥११॥

गणेशस्य च भावस्य विस्मृतिं मा कुरु प्रभो । गणेशपादजं मोहं धारयेः सत्यभावनः ॥१२॥ मार्गं गणेश्वरस्यैव कुरु सर्वं विशेषतः । गणेशात्र परं श्रेष्ठं तस्मात्तन्निष्ठको भव ॥१३॥ गाणपत्यस्य मार्गस्य सेवनं कुरु सर्वदा । साक्षिरूपं गणेशानं ज्ञात्वा हृत्स्थं भजस्व च ॥१४॥ गणेशान्नैव भिन्नोऽहं भावयस्व निरंतरम् । एवं नवप्रकारैस्त्वं भज त्वं भक्तिसंयुतः ॥१५॥ बाह्यांतरं गणेशार्थं कुरु त्वं कर्म चादरात् । तथा स्वदेहभावेन पूर्णभक्तो भविष्यसि ॥१६॥ अथो चतुर्विधां भक्तिं कथयामि शृणुष्व ताम् । कायिकीं वाचिकीं पूर्णां मानसीं नित्यदा कुरु ॥१७॥ तथा सांसर्गिकीं दक्ष तस्याश्चिह्नं वदाम्यहम् । गणेशार्थं सदा देहश्रमं कुरु महामते ॥१८॥ गणेशभावहीनां यां वाचं मा त्वं वदस्व ताम् । गणेशचिंतनं तद्वद्गणेशे भावकस्य वा ॥१९॥ गणेशभक्तियुक्तानां संगतिं कुरु सर्वदा । एवं भजस्व भक्त्या त्वं भक्तराजो भविष्यसि ॥२०॥ भक्तिः सा द्विविधा दक्ष मानवैः क्रियते परा । पाखंडसंयुता पूर्णा देवप्रीत्यर्थमेव वा ॥२१॥ देहं विषयभोगार्थं भजनं संप्रवर्तते । पाखंडिनां सदा दक्ष लोकमोहकरं परम् ॥२२॥ पाखंडभजनस्यैव चिह्नं मुख्यं वदाम्यहम् । तच्छृणु त्वं हितार्थाय लोकानां लोकनायक ॥२३॥ सर्वालंकारनिर्मुक्तः पाखंडी दृश्यते जनैः । जना मोहयुता येन भवंति भजनं यतः ॥२४॥ यत्र येषां रुचिर्दक्ष यादृशी तादृशं सदा । करोति तत्र यत्नेन सर्वभावं प्रदर्शयन् ॥२५॥ येनैव विषयाणां च प्राप्तिः संजायते परा । तादृशं भजनं तस्य परं भवति सर्वदा ॥२६॥ अथवा चैकनिष्ठः स भवति देवतत्परः । स्वदेवभक्तान् संमोह्य भुंक्ते दुष्टोऽर्थलालसः ॥२७॥ स्वदेवभजने सक्ता जनाः स्वल्पमतो बहु । तेषां रुचिप्रमाणेन भवति भजनं यतः ॥२८॥ जनानां मोहदा भक्तिः कथिता ते प्रजापते । पाखंडिभिः सदा पूर्णा सेव्यते सा रुचिप्रदा ॥२९॥ पाखंडसंयुता नित्यं भक्तिं कुर्वंति शाश्वतीम् । चांडालास्ते मताः शास्त्रे देवानां दुःखदायकाः ॥३०॥ सत्यसंकल्पसिद्ध्या ते संयुतं देवमुत्तमम् । संगृह्य भिक्षुकं दुष्टाः कुर्वतेऽथः प्रगामिनः ॥३१॥ अथ देवप्रियां भक्तिं शृणुष्व सुसमाहितः । विचार्य हृदये भक्तिं कुरुते देवतुष्टये ॥३२॥ सदा देवपरो भूत्वा भजनेऽनन्यमानसः । लोकानां तत्र संभूयाद्रुचिर्वा ह्यरुचिः कदा ॥३३॥ लोका निंदंति तं भक्तमुत्तमाश्च स्तुवंति वा । नानताहत्य देवस्य प्रीत्यर्थं भजते सदा ॥३४॥ स्वकीये हृदये सोऽपि विचार्य कुरुते सदा । भक्तिं यां तां प्रजानाति देवस्तस्य हृदि स्थितः ॥३५॥ यदा देवस्य मार्गस्यापमानं वा ह्यनादरम् । कुर्वंति तान् परित्यज्य तदा भजति सर्वदा ॥३६॥ लोकानां रुचिदं तस्य भजनं जायते कदा । कदा तेषां विरुद्धं वा भक्त्या

नद्देवतुष्टिदम् ॥३७॥ अनेन विधिना दक्ष भजस्व गणनायकम् । गाणपत्यो न संदेहो भविष्यसि परात् परः ॥३८॥ पंच चित्तेषु यज्ज्ञानं तद्विद्धि विपयात्मकम् । तत्र रुचिविहीनस्त्वं भजस्व गणनायकम् ॥३९॥ सदा गणेश्वरे दक्ष रसोत्पत्तिः प्रजापते । चित्तस्य नान्यभावेषु यस्य भक्तः स उच्यते ॥४०॥ एतद्भक्तिरहस्यं ते कथितं भक्तिदायकम् । समासेन भजस्वैव गणेशं ब्रह्मनायकम् ॥४१॥ इमं योगं नरो यस्तु शृणुयाच्छ्रावयेत् परम् । योगिभ्यो वाऽन्यजंतुभ्यः स ईप्सित-मवाप्नुयात् ॥४२॥ नानेन सदृशं किंचिद्योगदं शास्त्रसंमतम् । अस्य श्रवणमात्रेण ब्रह्मीभूतो भवेन्नरः ॥४३॥ महापापोप-पापेभ्यो मुच्यते पठनात् किल । श्रवणादस्य योगस्यांते ब्रह्म प्राप्नुयात् परम् ॥४४॥ पुत्रपौत्रादिसंयुक्तो धनधान्य-समन्वितः । आरोग्यादिसमायुक्तो लभेदंते परं पदम् ॥४५॥ सकामको लभेद्भोगान् पठनादस्य निश्चितम् । अंते ब्रह्ममयो भावी श्रवणान्नात्र संशयः ॥४६॥ योगगीतां पठेद्यस्तु निष्कामः शृणुयादथो । स विघ्नहीनतां प्राप्य ब्रह्मीभूतो भविष्यति ॥४७॥ योगगीतां पठेद्यस्तु स भवेत् शांतिसंयुतः । शृणुयाद्ब्रह्मभूतश्च ज्ञानवान् स्थितिसंयुतः ॥४८॥ कर्म-निष्ठैरियं सेव्या तपोनिष्ठैः प्रजापते । तत्तत्सिद्धिसमायुक्तैरिहांते ब्रह्म चाप्यते ॥४९॥ नित्यं पठेदिमां गीतां स गणेशो धरातले । दर्शनात् पावनो नृणां सर्वसिद्धिप्रदायकः ॥५०॥ एककालं द्विकालं वा त्रिकालं यः पठेदिमाम् । कृत्वाऽवश्यं गणेशानं स भवेत् सर्वदायकः ॥५१॥ शुक्लकृष्णचतुर्थ्योस्तु पठेदेतां नरोत्तमः । स भुक्त्वा सकलान् भोगानंते ब्रह्म लभेत् परम् ॥५२॥ अथवा शुक्लजायां स चतुर्थ्यां भाद्रमाघयोः । ज्येष्ठे माघे च कृष्णायां पठेदीप्सितमाप्नुयात् ॥५३॥ अथवा गणराजस्य तीर्थक्षेत्रादिके गतः । पठेदिमां सुभावेन स ईप्सितमवाप्नुयात् ॥५४॥ वेदशास्त्रपुराणेषु यत् सारं समुदाहृतम् । योगगीतामयं तुभ्यं सर्वसिद्धिप्रदायकम् ॥५५॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते मुद्गलदक्षसंवादे योगामृतार्थशास्त्रे चित्तभूमिनिरोधेन भक्तिरहस्यवर्णनयोगो नाम षोडशोऽध्यायः ॥

॥ इति योगगीतासूपनिषत्सु सुगमासु द्वादशोऽध्यायः ॥

॥ श्रीगजाननार्पणमस्तु ॥

॥ गीताश्लोकसंख्या ॥ ९९८ ॥

॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । एतत्ते कथितं सर्वं रहस्यं परमं मया । गणेशस्य प्रजानाथ समासेन शुभप्रदम् ॥१॥ अतो भज गणाध्यक्षं सर्वेप्सितमवाप्स्यसि । मा शोकं कुरु दक्ष त्वं यज्ञध्वंसभवं परम् ॥२॥ सूत उवाच । एवमुक्त्वा ददौ तस्मै मंत्रमेकाक्षरं परम् । विधियुक्तं विधानेन मुनिर्दक्षाय मुद्गलः ॥३॥ तेन संपूजितो योगी ह्यभवद्दंतमुख्यतः । तस्मिन् काले गणाध्यक्षः प्रकटोऽभूच्छुभप्रदः ॥४॥ मूषकोपरिसंस्थं तं सिद्धिबुद्धिसमन्वितम् । पाशांकुशवरैर्युक्तमभयं धारकं प्रभुम् ॥५॥ गजास्यं रक्तवस्त्रैः संछादितं भूषणैर्युतम् । नाभिशेषं गणैर्युक्तं प्रमोदाद्यैः सुसेवितम् ॥६॥ त्रिनेत्रमेकदंतं च महाकुक्षिं परात्परम् । दृष्ट्वा समागतं दक्षो मुद्गलो हर्षितोऽभवत् ॥७॥ उत्थाय सर्वसंयुक्तो ननाम द्विरदाननम् । दक्षश्च मुद्गलो विप्रो दंडवत् पृथिवीतले ॥८॥ ततोऽतिहर्षसंयुक्तो दक्षस्तं प्रजगाद ह । गणेशं भक्तिसंयुक्तः सरोमांचोऽश्रुसंयुतः ॥९॥ दक्ष उवाच । धन्योऽहं सर्वभावैश्च दर्शनात्ते गजानन । वेदांतागोचरोऽसि त्वं ब्रह्मरूपः समागतः ॥१०॥ धन्योऽयं मुद्गलो योगी पुराणं धन्यमुत्तमम् । मौद्गलं येन विघ्नेशो मया प्राप्तः परात्परः ॥११॥ मुद्गलेन समाख्यातं भक्त्याधीनो गजाननः । तदद्य सत्यरूपं यत् मया ज्ञातं प्रमाणतः ॥१२॥ मुद्गलस्यैव भक्त्या त्वं मोहितः सहसाऽऽगतः । त्वत्तः श्रेष्ठो गणेशान मुद्गलो नात्र संशयः ॥१३॥ एवं प्रवदतस्तस्य दक्षस्यासीत् महात्मनः । भक्ते रसः समुत्पन्नो ननर्त स हि विह्वलः ॥१४॥ भ्रांतस्तत्र स जानाति कृत्यं विघ्नेश्वरस्य सः । जय हेरंब विघ्नेश गणेश मूषकध्वज ॥१५॥ गजानन परेशान जय लंबोदर प्रभो । उच्चरन् साश्रुनेत्रश्च देहातीत इवाऽभवत् ॥१६॥ एतस्मिन्नंतरे सर्वे समाजग्मुः सुरेश्वराः । शिवविष्णुमुख्यास्तत्रागतं ज्ञात्वा गजाननम् ॥१७॥ मुनयो भृगुमुख्याश्च नारदाद्याः सुरर्षयः । शुकाद्याः सनकाद्याश्च कपिलाद्या महामुने ॥१८॥ वसवः साध्यरुद्राश्च गंधर्वाप्सरसस्तथा । अश्विनौ शेषमुख्याश्च नागाः पर्वतनायकाः ॥१९॥ सिद्धाश्चारणमुख्याद्या असुरा धर्मपालकाः । विद्याधराः कामदुघा गावो विप्रा अनेकशः ॥२०॥ प्रणेमुर्गणराजं ते हर्षयुक्ताः प्रतुष्टुवुः । भक्तियुक्ता विशेषेणात्मानं धन्यं च मेनिरे ॥२१॥ ततः स मुद्गलो योगी विस्मितः प्रबभूव ह । पुराणश्रवणस्यैतत् दृष्ट्वा फलमनंतकम् ॥२२॥ बोधयामास दक्षं स ततो दक्षोऽतिहर्षितः । हर्षं नियम्य विघ्नेशं यथाविधि पुपूज ह ॥२३॥ ततो देवेश्वरान् देवान् विप्रादीन् योगिमुख्यकान् । पूजयित्वा पुनः सोऽपि प्रणनाम गजाननम् ॥२४॥ साश्रुनेत्रः प्रतुष्टाव भक्तिनम्रात्मकंधरः । अनु तं देवविप्राद्यास्तुष्टुवुस्तं परेश्वरम् ॥२५॥ सदेवर्षिदक्ष उवाच । नमस्ते गणेशाय सर्वात्मने ते सदा

भक्तिमोहन मोहात्मकाय । महेशादिदेवैः शुकाद्यैः स्तुताय अयोगाय संयोगधारिन्नमस्ते ॥२६॥ गजाननाय वै तुभ्यं नमः परशुपाणये । गदाधराय शंखं वै धारिणे ते नमो नमः ॥२७॥ विघ्नेशाय परेशाय महाविघ्नविदारिणे । अनाथाय सनाथाय हेरंबाय नमो नमः ॥२८॥ नमो नमस्तेऽस्तु महोदराय स्वभक्तसंरक्षणतत्पराय । अभक्तकामान् विनिहंतृकाय सदा सुशांतिप्रद ते नमो वै ॥२९॥ ब्रह्मेशाय नमस्तुभ्यं सदा स्वानंदवासिने । सिद्धिबुद्धिवरायैव मूषकध्वजिने नमः ॥३०॥ दैत्यमस्तकधाराय दितिपुत्राय ते नमः । कंठार्थे देवकार्याय नमो सुरसुराय ते ॥३१॥ योगाय सर्वात्मकसर्वपूज्य मायाविनां मोहकराय तुभ्यम् । मायाप्रचालाय तु सिद्धिदाय धर्मस्यपालाय तु शूलपाणे ॥३२॥ अनंतलीलया नाथ स्वयं खेलसि मायया । तत्र किं वर्णयाम्येवाऽतो ब्रवीमि नमो नमः ॥३३॥ सदा योगस्वरूपाय भक्तिभावप्रदाय ते । भक्तिप्रियाय पूर्णाय भक्तवत्सल ते नमः ॥३४॥ प्रसीद पाहि विघ्नेश दासं ते भक्तिलालसम् । मां मुद्गलस्य शिष्यं वै भक्तराजस्य मानद ॥३५॥ एवमुक्त्वा गणेशानं प्रणनाम प्रजापतिः । अनु तं देवविप्राद्याः प्रणेमुस्तं परात्परम् ॥३६॥ तमुत्थाप्य गणाधीशो जगाद वच उत्तमम् । दक्षं मुद्गलमालोक्य स्वभक्तं भक्तपालकः ॥३७॥ श्रीगणेश उवाच । वरान् वृणु प्रजानाथ दास्ये ते तुष्टिमागतः । श्रवणेन पुराणस्य स्तोत्रेण मनसीप्सितान् ॥३८॥ त्वया कृतमिदं स्तोत्रं भुक्तिमुक्तिप्रदं भवेत् । यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठतः ॥३९॥ ब्रह्मप्रदं सुशांतेश्च दायकं भक्तिवर्धनम् । भविष्यति महाप्राज्ञ परं मत्प्रीतिवर्धनम् ॥४०॥ गणेशवचनं श्रुत्वा दक्षो हर्षसमन्वितः । प्रणम्य तं जगादाऽथ भक्तिनम्रात्मकंधरः ॥४१॥ दक्ष उवाच । वरदोऽसि गणाध्यक्ष तदा ते भक्तिमुत्तमाम् । देहि मे यच्च कृत्यं तदादिशेः करवाणि किम् ॥४२॥ तच्छ्रुत्वा गणनाथस्तं जगाद वच उत्तमम् । ज्ञात्वा भक्तिप्रियं दक्षं हृष्टरोमा महामुने ॥४३॥ श्रीगणेश उवाच । मदीयां भक्तिमत्यंतं करिष्यसि महामते । दक्षाऽद्यप्रभृति प्राज्ञो भविष्यसि यथार्थगः ॥४४॥ यज्ञं कुरु महेशेन मया ध्वस्तं समन्वितः । किंचित् कृष्टं प्रदत्तं ते शापैः शैवैः सुखी भव ॥४५॥ योगशांतियुतो नित्यं मां भजिष्यसि सर्वदा । सर्वमान्यः सर्वमुख्यो भविष्यसि प्रजापतिः ॥४६॥ एवमुक्त्वा गणेशानो विरराम च शौनक । दक्षो हृष्टमना भूत्वा स चक्रे यज्ञमुत्तमम् ॥४७॥ संपूज्यादौ गणाध्यक्षं ततः शंभुमुखान् सुरान् । मुनीन्नागादिकान् सर्वान् विससर्ज सुहर्षितः ॥४८॥ ततो मुद्गलविप्रेशं पूजयन् भक्तिसंयुतः । उवाच तं सरोमांचो दक्षो दक्षगणाग्रणीः ॥४९॥ दक्ष उवाच । किं ददामि महायोगिन् शिष्योऽहं ते नमाम्यतः । शरीरं पादपद्मे ते समर्पितमिदं

प्रभो ॥५०॥ ततो दक्षं समानम्य मुद्गलः प्रययौ मुने । स्वाश्रमं गाणपत्यैः संसेवितं गणपप्रियः ॥५१॥ इदं दक्षस्य माहात्म्यं कथितं ते समासतः । मुद्गलस्य तथा श्रेष्ठं सर्वसिद्धिप्रदायकम् ॥५२॥ पुराणं मौद्गलं पूर्णं कथितं योगभावितम् । सर्वमान्यं विशेषेण सर्वसंशयनाशनम् ॥५३॥ पुराणश्रवणस्यापि फलं प्रोक्तं मया परम् । श्रवणेन प्रजानाथो दक्षो दक्षो बभूव ह ॥५४॥ अधुनाऽहं गमिष्यामि स्वाश्रमं विप्रनायक । त्वदाज्ञया वद स्वामिन् किं करोमि हितं पुनः ॥५५॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते दक्षसिद्धिप्राप्तिवर्णनं नाम सप्तदशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ शौनक उवाच । धन्योऽस्मि सूत सर्वेभ्यो भवान् ज्ञानाधिको मतः । समस्त्रिभुवने नैव संशयानां विनाशकः ॥१॥ सर्वसंशयहीनोऽहं धन्यश्चाद्य त्वया कृतः । अधुना कृतकृत्यश्च जातो मुनिसमन्वितः ॥२॥ न मुद्गलसमं किंचित् मया ज्ञातं परात्परम् । तेनोक्तं मौद्गलं सूत मुद्गलेन सदृक् परम् ॥३॥ वेदशास्त्रपुराणानां नानामतनिकृंतनम् । मौद्गलं मुद्गलाकारं सर्वमार्गप्रकाशकम् ॥४॥ त्रैलोक्ये मुद्गलो योगी मान्यः सर्वैः प्रकीर्तितः । सर्वाभिमानहीनत्वाद्यथार्थकरणात् किल ॥५॥ मुद्गलेन कृतं यद्वै पुराणं मुद्गलाकृति । तस्यापमानभावेन नारकी जायते नरः ॥६॥ यामा मुद्गरहस्तास्ते मारयिष्यंति निश्चितम् । न वक्ता कुत्र योगींद्रो मुद्गलेन सदृक् भवेत् ॥७॥ न भूतो नाधुना कुत्र वर्तते सूत निश्चितम् । निरहंकारसंयुक्तं भाषणं मुद्गलस्य च ॥८॥ पुराणानि च सर्वाणि स्वस्वब्रह्मपराणि वै । अभिमानेन संगोप्य स्वदोषं प्रवदंति हि ॥९॥ यथार्थभाषणं सर्वं पुराणानां न संशयः । मुनीनां देवतादीनां स्थितस्तत्राप्यहं किल ॥१०॥ तेन भिन्नमतादीनां प्रकाशस्तेषु जायते । मौद्गलं सर्वमान्यं वै निरहंकारभावतः ॥११॥ अभिमानो महाघोरो त्यजेयो देवयोगिभिः । मुद्गलेन समाचूर्ण्य कृतो जीवविवर्जितः ॥१२॥ अतोऽयं मुद्गलः प्रोक्त एक एव महर्षिभिः । तत्र चित्रं न वै सूत सर्वमान्यं वदतु परम् ॥१३॥ अहो गणेशहस्तस्थो मुद्गलः पतितो भुवि । नराकारस्वरूपेणांगिरसेन प्रपालितः ॥१४॥ स एव मुद्गलो योगी योगरूपप्रकाशकः । तत्र किं चित्रकं मन्येऽभिमानैर्वर्जितात्मकम् ॥१५॥ मुद्गलस्य च दक्षस्य संवादेन युतं परम् । पुराणं चांगिरःप्रोक्तं श्रुतं शांतिप्रदं मया ॥१६॥ अधुना वद सूत त्वं पुराणस्य प्रविस्तरात् ।

माहात्म्यं श्रवणं चास्य कीदृशं क्रियते जनैः ॥१७॥ विधिना केन कर्तव्यं श्रवणं कैः पुरा कृतम्। के के सिद्धियुता जाताः श्रवणादस्य मानद ॥१८॥ पारायणं पुराणस्य कर्तव्यं कीदृशैः परम्। श्रवणं भिन्नखंडस्य कैः कृतं तद्वदस्व मे ॥१९॥ गणेशस्य पुराणानि चत्वारि कथितानि तु। तेषां श्रवणमात्रेण फलं किं नु लभेत् समम् ॥२०॥ अथवा भिन्नभावाख्यं फलं भवति तद्वद। येन संशयहीना वै भजिष्यामो गजाननम् ॥२१॥ सूत उवाच। एकविंशतिभेदैः स गणेशो ब्रह्मनायकः। क्रीडति प्रणवाकारो ब्रह्मांडस्थे पुराणके ॥२२॥ ब्राह्मे द्वादशभेदैः स क्रीडते बुद्धिचालकः। निर्गुणः सगुणाधारः प्रणवस्य प्रचालकः ॥२३॥ गाणेशे मूर्तिमान् मुख्यः क्रीडति द्वंद्वभावतः। बुद्धिस्थः प्रणवस्थः स तयोर्योगात्मकाकृतिः ॥२४॥ प्रणवात्मकभावस्योपासनाकांड उच्यते। हृदि खेलकरस्यैव क्रीडाकांडः प्रकीर्तितः ॥२५॥ मौद्गलेऽष्टविधः सोऽपि वर्णितो योगधारकः। संयोगायोगयोर्योगाकारः पूर्णः सुशांतिगः ॥२६॥ तेषां फलं प्रवक्ष्यामि गणेशज्ञानकारकम्। तच्छ्रुत्वा मुनयः सर्वे संशयेन विवर्जिताः ॥२७॥ त्रिगुणमयकायाश्च देवाः पंच प्रकीर्तिताः। ब्रह्मा विष्णुः शिवः सूर्यः शक्तिः सर्वत्र पठ्यते ॥२८॥ अपूज्यो विधिरेके तु वदंते शास्त्रसंमतौ। मध्यस्था ये नरा विप्र ब्रह्मणो लोकगामिनः ॥२९॥ चतुर्णां भजने सक्ताः शिवादीनां नरादयः। ये ते तेषां तु लोकेषु भक्त्या गच्छंति संयुताः ॥३०॥ सगुणोपासका येऽत्र शिवादीनां गुणात्मनाम्। ते तेषां लोकमासाद्य भुंजते भोगकान् परान् ॥३१॥ पुनः पतंति भूमौ ते जन्म भाग्यसमन्विताः। भवंति कृपया तेषां प्रणवे रुचिसंयुताः ॥३२॥ ततस्ते प्रणवाकारं भजंते गणराजकम्। ब्रह्मप्राप्त्यर्थमानंदाद्यत्नवंतो न संशयः ॥३३॥ ततस्तत्कृपया युक्ता भवंति ज्ञानसंयुताः। त्यक्त्वा प्रणवसंस्थं ते भजंते बुद्धिधारकम् ॥३४॥ हृदि बुद्धिपतिं पूर्णं भजंते यत्नसंयुताः। शमे दमे परा नित्यं नानाभावैर्विवर्जितम् ॥३५॥ बुद्धिस्थं तं समाराध्य तत्कृपायुक्तचेतसः। भजंते गणनाथं वै शुंडादंडविराजितम् ॥३६॥ एकनिष्ठस्वभावेन तत्परा नित्यमादरात्। योगप्राप्त्यर्थमानंदाच्छमदमपरायणाः ॥३७॥ गणेशोपासनायुक्ता मंत्रध्यानपरायणाः। गाणपत्याभिमानस्य धारकाः संभवंति ते ॥३८॥ न गणेशात् परं भावं मानयंति कदाचन। वेदशास्त्रपुराणेषु विचार्य मनुजोत्तमाः ॥३९॥ ततस्तस्य कृपायोगान् मौद्गलस्थं भजंति ते। योगशांतिपरा भूत्वा योगीशाः संभवंति वै ॥४०॥ एवं क्रमेण विप्रेंद्र भवंति गणपप्रियाः। विभिन्नफलसंयुक्ताः पुराणोपासका मताः ॥४१॥ प्रणवोपासका ये वै परं ते देहधारिणम्। सर्वसामान्यभावेन मानयंति गजा-

ननम् ॥४२॥ सत्यं प्रणवरूपं यत्तत्र देहधरः कथम्। निष्ठन्तु गणनाथोऽवयवादिभिरयं युतः ॥४३॥ सर्वमोंकार एवेदं न भिन्नं तत्र वर्तते। अनेन विधिना तेषां भजनं तस्य जायते ॥४४॥ ततः परं बुद्धिसंस्थं ये भजंति महामुने। गणेशानं सर्वसमं भावयंति न संशयः ॥४५॥ बुद्धेः परं बुद्धिसंस्थं बुद्धेः प्रकाशपदायकम्। ब्रह्म तत्र कुतो भाति प्रणवो ह्यर्थसंयुतः ॥४६॥ मनोवाणीविहीनं यद्ब्रह्म ब्रह्मणि परम्। गणेश्वरोऽन्ये तु तत्र निष्ठंति भ्रांतिजाः कुतः ॥४७॥ एवं भजंति विघ्नेशं परं प्रणववर्जितम्। ब्राह्मे पुराणे संस्थं ते जानीहि मुनिसत्तम ॥४८॥ ततः परं गणेशानं गाणेशास्ते भजंति ये। गणेशार्थरहस्यं ते ज्ञात्वा विश्वासमंयुताः ॥४९॥ प्रणवः प्रणवाकारो गणेशः सगुणः स्मृतः। ओंकारवर्जितोऽयं तु बुद्धिस्थो निर्गुणः स्मृतः ॥५०॥ प्रणवो बुद्धिसंस्थस्तु तत्परो ब्रह्मदो भवेत्। तयोः प्रीत्यर्थमानंदाद्देहधारी बभूव ह ॥५१॥ गकारः प्रणवाकारो णकारो बुद्धिचालकः। तयोः स्वामी गणेशोऽयं गजवक्त्रादिचिह्नितः ॥५२॥ गाणपत्यस्वभावेन भजंते तं निरंतरम्। एकनिष्ठतया भक्त्या भवंत विप्रयोगिनः ॥५३॥ ततस्ते मौद्गले पूर्णं सेवंते भक्तिसंयुताः। त्रयाणां योगकं पूर्णं तेषां योगे गजाननम् ॥५४॥ योगरूपो गणेशोऽयं त्रिरूपधारकोऽभवत्। कार्यार्थं खेलसंयुक्तो मायाभ्यां नात्र संशयः ॥५५॥ प्रणवो जगदाकारश्चिदाकारो हि धीस्थितः। तयोरात्मा ततश्चायं गजवक्त्रादिचिह्नितः ॥५६॥ एवं ज्ञात्वा गणेशानं भजंते त्रिषु संस्थितम्। मौद्गलस्था सदा विप्र योगज्ञा योगरूपिणम् ॥५७॥ तत्र ते भजनं मुख्यं पंचधा कथयाम्यहम्। येन भक्तेंद्र भूपस्त्वं भविष्यसि महामते ॥५८॥ मूर्तिसंस्थं गणेशानं भजेत् पूजादिमार्गतः। मंत्रस्तवनकार्यैश्च देहधारिसुखप्रदैः ॥५९॥ प्रणवं जगदाकारं तत्र जीवमयं प्रभुम्। भजेत् सर्वत्र संस्थं तं सर्वेषां हितमाचरन् ॥६०॥ कस्यचित्त्वशुभं विप्र न कुर्यात् स नरोत्तमः। अनेन विधिना सोऽपि तोषयेद् गणनायकम् ॥६१॥ द्वंद्वभावं समालोक्य साक्षिवद्भाववर्जितः। बुद्धिस्थं तोषयेत् देवं विघ्नेशं भक्तिवत्सलम् ॥६२॥ धर्माधर्मादिकं सर्वं भ्रमं त्यक्त्वा महामतिः। बुद्धिभावं परित्यज्य निःसंगः स भवेत् सदा ॥६३॥ नाहं कर्ता कारयिता न देहस्थो न निश्चितम्। न बुद्धिस्थोऽहमानंदाद्ब्रह्माऽहं निर्मलः सदा ॥६४॥ निर्लिप्तलिप्तहीना या भक्तिः सा परिकीर्तिता। तया गणेश्वरः प्रीतो भवेदात्मा सदाऽमलः ॥६५॥ न गणेशादहं भिन्नो देहधर्मः प्रवर्तते। गणेशभक्तिसंयुक्तो मौद्गलस्थो भजेत् परम् ॥६६॥ स्वयं गणेश्वरो भूत्वा त्रिविधस्थं गजाननम्। त्रिभिर्मार्गैर्भजन्नित्यं शांत्या भक्तिसमन्वितः ॥६७॥ त्रयाणां योगभावे यो गणेशत्रि-

विधो मतः। स्वयं त्रिविधकं पश्यन् भजेच्चानन्यचेतसः ॥६८॥ त्रिभिर्भावैः समायुक्तो भजेद्योगी महायशाः। गणेशं गणपाकारो मौद्गलज्ञो विचक्षणः ॥६९॥ एवं गणेश्वरस्यैव भजनं कुरु मानद। तेन योगींद्रवंद्यस्त्वं गाणपत्यो भविष्यसि ॥७०॥ आदौ देहधरान् शंभुमुख्यान् संसेव्य वै नरः। ततो जीवस्वरूपस्थान् प्रणवाकृतिधारकान् ॥७१॥ ततो बुद्धिगतान् विप्र ततो भक्तिं लभेत् पराम्। गणेशं देहगं सोऽपि सेवतेऽनन्यभावतः ॥७२॥ ततो मौद्गलकं ज्ञात्वा योगी योगपरायणः। भजते त्रिविधं संस्थं गणेशं गणपप्रियः ॥७३॥ एतत्ते कथितं सर्वं भजनं गणपस्य च। स्वरूपं त्रिविधं पूर्णं त्रिमार्गद्योतनं मुने ॥७४॥ शौनक उवाच। अष्टादश पुराणानि कथितानि विशेषतः। अन्यान्युपपुराणानि व्यासेनामितबुद्धिना ॥७५॥ यथा वेदास्तथा सूत उपवेदाः प्रकीर्तिताः। नहि वेदसमा विप्रैर्मन्यंते वै विशेषतः ॥७६॥ तथैवोपपुराणानि तेषु गाणेश्वरं परम्। मौद्गलं कथितं विप्रैः कथं तत्राधिकं भवेत् ॥७७॥ सूत उवाच। यथा देवपतिः प्रोक्त इंद्रः सर्वत्र विप्रपैः। उपेंद्रो विष्णुराद्यो वै कथ्यते च विनायकः ॥७८॥ इंद्रादधिकभावेन मतौ विष्णुविनायकौ। तथैवोपपुराणानि ब्रह्मसायुज्यदानि तु ॥७९॥ आदौ श्रुत्वा पुराणानि ततः साधनसंयुतः। साधयित्वा भवेद्विप्र पात्रं चोपपुराणके ॥८०॥ एवं जानीहि सर्वत्र पुराणेषु विशेषतः। वेदोपवेदवच्चात्र नैव ब्रह्मविनिश्चयात् ॥८१॥ मोहनार्थं जनानां वै भ्रांतिभावप्रकाशनात्। गणेशस्य स्वरूपं यद्वर्ण्यते गूढकं परम् ॥८२॥ अतो गणेश्वरस्यैव मता भक्तिः सुदुर्लभा। पूर्णपुण्यबलेनाढ्यैर्लभ्यते योगिभिः परा ॥८३॥ मौद्गलेन गणेशस्य स्वरूपं ज्ञायते जनैः। परिपूर्णं न संदेहोऽन्यथा भ्रांतिर्भविष्यति ॥८४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे योगामृतार्थशास्त्रे नवमे खंडे दक्षमुद्गलसंवादे गणेशस्वरूपक्रमवर्णनं नाम अष्टादशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । शुचिः स्वधर्मनिष्ठः स एकभुक्तपरायणः । ब्रह्मचर्यसमायुक्तो रात्रौ सुप्यात्तथा भुवि ॥१॥ अनृतादिकमेवं संत्यज्य सर्वं समाहितः । हविष्यान्नं च भुक्त्वा तु शृणुयादिदमुत्तमम् ॥२॥ गणेशसन्निधाने वै वने वा स्वगृहे स्थितः । शृणुयात मौद्गलं पूर्णं योगभक्तिपरायणः ॥३॥ अथवा कामनायुक्तो निःकामो वा भवेन्नरः । शृणुयान्नियमं संस्थः स सदाश्च फलं लभेत ॥४॥ यत्र वक्ता भवेदस्य तत्र गत्वा महामतिः । शृणुयादथवा विप्र पुराणमिदमुत्तमम् ॥५॥ ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा शृणुयादिदम् । शूद्रश्चैव ब्राह्मणं कंचित् पुरस्कृत्य समाहितः ॥६॥ भाद्रशुक्लप्रतिपदमारभ्य च चतुर्दिनम् । पारायणं मौद्गलस्य श्रोतव्यं नैरुपोषितैः ॥७॥ माघसंज्ञे तथा मासे तथा ज्येष्ठे प्रकीर्तितम् । पारायणं मौद्गलस्य श्रोतव्यं सर्वसिद्धये ॥८॥ अथवा भाद्रमासस्य प्रतिपत्तः समारभेत् । आश्विन्यां पूर्णिमायां तत् पुराणं च समापयेत् ॥९॥ एवं माघे तथा ज्येष्ठे मासमासैकमानतः । श्रोतव्यं मौद्गलं पूर्णं सर्वभावपरायणैः ॥१०॥ अथवा भाद्रमासे च प्रतिपत्तः समारभेत । पुराणं मौद्गलं विप्र शृणुयाद्धर्ममात्रतः ॥११॥ पुनर्भाद्रपदं प्राप्य चैकभुक्तपरायणः । प्रतिपद्यां निराहारो भवेद्यावच्चतुर्थिका ॥१२॥ पंचम्यां मौद्गलं पूर्णं समापयेतु नरः । एवं श्रुत्वा फलं सद्यो लभेदीप्सितमंजसा ॥१३॥ विधिं तत्र प्रवक्ष्यामि मंडपं कारयेन्नरः । तोरणादिसमायुक्तं नानाशोभासमन्वितम् ॥१४॥ आदौ गणेश्वरं तत्र पूजयेत् पुस्तकं ततः । ततो मुद्गलविप्रेंद्रं शुकं योगविशारदम् ॥१५॥ पठते मौद्गलं तत्र संस्थितौ शुकमुद्गलौ । ततः पौराणिकं शांतं पूजयेद्भावसंयुतः ॥१६॥ ततः श्रोतृगणान् पूज्य प्रार्थयेत् स्नेहसंयुतः । पौराणिकं ततः पुण्यं शृणुयादिदमुत्तमम् ॥१७॥ अनेन संयुतं सर्वं मौद्गलं शृणुयान्नरः । सर्वार्थनिपुणस्तेन सर्वसिद्धियुतो भवेत् ॥१८॥ यदा चतुर्दिनैः श्राव्यं तदार्थपरिवर्जितम् । पारायणं समाख्यातं सर्वसिद्धिप्रदायकम् ॥१९॥ नित्यमुत्सवसंयुक्तो भवेद्धर्मपरायणः । नानादानरतो भूत्वा ब्राह्मणादींश्च भोजयेत् ॥२०॥ गणेशप्रीतये सर्वं कुर्याद्धीमान्निरंतरम् । विदित्वा धन्यमात्मानं शृणुयादिदमुत्तमम् ॥२१॥ अंते गणेश्वरं सोऽपि पुराणं पूजयेत् परैः । राजोपचारकार्यैस्तु भक्तिभावसमन्वितः ॥२२॥ ततः पौराणिकं पूज्य तोषयेत्तं धनादिभिः । रत्नाद्यैर्हर्षसंयुक्तः प्रार्थयेन्नम्रकंधरः ॥२३॥ तारितोऽहं त्वया नाथ पुराणश्रावकेन वै । अधुना कृतकृत्योऽहं जातस्ते पाददर्शनात् ॥२४॥ एवं प्रार्थ्य नमस्कृत्य ततः सर्वान् समागतान् । दक्षिणाद्यैः समानोष्य ततस्तं स विसर्जयेत् ॥२५॥ पौराणिकं ततो भूयः समानीय महायशाः ।

श्रोतृनन्यान् द्विजादींश्च भोजयेन् मोदकादिभिः ॥२६॥ ततस्तान् स नमस्कृत्य पारणं यः समाचरेत् । एवमीप्सितकं प्राप्येहांते ब्रह्ममयो भवेत् ॥२७॥ अथवा मौद्गलं विप्र शृणुयान्नित्यमादरात् । यथेच्छया समायुक्तः स्वेच्छाभोजनकारकः ॥२८॥ ब्रह्मचर्यादिहीनः स भक्तिभावसमन्वितः । गणेशप्रीतये हर्षात् सर्वसिद्धिं लभेत् पराम् ॥२९॥ अकिंचनोऽपि विप्रेश शृणुयाद्भक्तिसंयुतः । यथाशक्तिविधानेन स पूजादिकमाचरेत् ॥३०॥ शमीमंदारदूर्वाद्यैरथवा यः समर्चयेत् । फलं सर्वं लभेत् सोऽपि पूजादानादिजं परम् ॥३१॥ यादृशो विभवः स्वस्य तादृशं स समाचरेत् । तेन विघ्नेश्वरः प्रीतो भवेत् सर्वप्रदायकः ॥३२॥ श्लोकार्धं श्लोकपादं वा पदं श्लोकस्यमेव वा । शृणुयान्मौद्गलस्यापि स धन्यो नात्र संशयः ॥३३॥ किं पुनः श्रद्धया युक्तः पुराणं शृणुयात् परम् । संपूर्णं तस्य विप्रेश सफलं जननं भवेत् ॥३४॥ नित्यं यः शृणुयाद्भक्त्या सर्वमाप्य स विप्रप । दर्शनात् सर्वजंतूनां तारको भवति प्रभुः ॥३५॥ यथा गणेश्वरो देवस्तथाऽसौ नात्र संशयः । ब्रह्मीभूत इव प्राज्ञस्तिष्ठेद्वै भूमिमंडले ॥३६॥ एतत्ते सर्वमाख्यातं सविधिश्रवणं परम् । पठनं तु पुराणस्य मौद्गलस्य समासतः ॥३७॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे पुराणश्रवणादिविधिवर्णनं नाम एकोनविंशोऽध्यायः ॥



॥ श्रीगणेशाय नम ॥ शौनक उवाच । श्रुत्वा मौद्गलकं पूर्णं के के सिद्धिं प्रलेभिरे । तेषां चरित्रमेवं मे ब्रूहि सूत समासतः ॥१॥ सूत उवाच । आदौ मुद्गलयोगीशाच्छ्रुत्वा दक्षो महामतिः । स सर्वदोषहीनश्च बभूव शांतिधारकः ॥२॥ ततो दक्षेण विघ्नेश नियमः स कृतो भवेत् । मौद्गलं नित्यमेवेदं पठनीयं निरंतरम् ॥३॥ अवकाशानुसारेण अजपन्नित्यमादरात् । अध्यायादेस्तथा तत्र नियमं न चकार ह ॥४॥ भाद्रशुक्लप्रतिपदि प्रारभ्योपोषणान्वितः । चतुर्थ्यां तत् समाप्तं पारायणं स चकार ह ॥५॥ एवं माघे तथा पारायणं ज्येष्ठे महामतिः । चकार देवविप्राद्यैः संयुतो वार्षिकं परम् ॥६॥ एवं क्रमेण भक्त्या स गजाननपरायणः । मौद्गलं सेवतेऽद्यापि गाणपत्यस्वभाववान् ॥७॥ तेनैव बोधिताः सर्वे वसिष्ठाद्या महामुने । सेवंते मौद्गलं नित्यं प्रजापतय आदरात् ॥८॥ तैश्चान्ये बोधिता विप्रा योगमार्गपरायणाः । नानाभावसमायुक्ता असेवन्निद-

मुत्तमम् ॥९॥ एवं परंपराप्राप्तं विदुः सर्वे च जंतवः। नानाभावसमायुक्ता असेवन् मौद्गलं परम ॥१०॥ दक्षयज्ञे समायातैः शिवविष्णुमुखामरैः। नैज्ञानं मौद्गलं पूर्णं योगदं सर्वसिद्धिदम ॥११॥ यज्ञं समाप्य सर्वे ते स्वं स्वं धाम ययुर्मुदा। ततः शिवेन योगीशः प्रार्थितस्तत्र मुद्गलः ॥१२॥ पुराणश्रवणार्थं स प्रणम्यापूज्य भक्तितः। तुष्टस्तेन समायुक्तो जगाम शिवमंदिरम् ॥१३॥ ततः पुराणमाहात्म्यं ज्ञात्वा विष्णुमुखाऽमराः। आययुः श्रवणार्थं ते कैलासं पर्वतेश्वरम् ॥१४॥ शिवेन संयुताः सर्वे ब्रह्माद्याः शुश्रुवुः परम्। पुराणं मौद्गलं पूर्णं मुद्गलाद्योगिसागरात् ॥१५॥ वर्षेणैकेन ते श्रुत्वा पुपूजुस्तं शिवादयः। विसृज्य मेनिरे सर्वे सर्वोकाः कृतकृत्यताम् ॥१६॥ गणेश्वरस्य तत्रांशः शिवपुत्रः स्थितोऽभवत्। स एव मौद्गलं नित्यं जजाप गणपप्रियः ॥१७॥ मूर्तिस्थं गणनाथं स पूज्य नित्यं महायशाः। तत्सन्निधानगो भूत्वा जजाप त्विदमुत्तमम ॥१८॥ विश्वनाथः शिवः साक्षात् काश्यां नित्यं महामुने। जजाप नियमे संस्थो ढुंढिराजस्य सन्निधौ ॥१९॥ माघे शुक्लप्रतिपदि प्रारभ्योपोषणान्वितः। चतुर्थ्यां तत्र समाप्तं पारायणं स चकार ह ॥२०॥ तथा भाद्रपदे मासि मुद्गलः शुकसंयुतः। मयूरेशस्य सान्निध्ये चक्रे पारायणं मुदा ॥२१॥ नित्यं जजाप भावेन गाणपत्यैः समन्वितः। महाभक्तश्च सर्वेषां तारकस्तारकाकृतिः ॥२२॥ ज्येष्ठे मासि स्वयं पारायणं शेषश्चकार ह। मृषकस्थस्य सान्निध्ये नागासुरसमन्वितः ॥२३॥ जजाप नित्यमेवं स सर्वभावसमन्वितः। भक्तियुक्तो महाभक्तः सर्वेषां हितकारकः ॥२४॥ तथा दत्तः स्वयं साक्षाज्ज्ञानेशस्य प्रतुष्टये। ज्येष्ठे परायणं पूर्णं चक्रेऽसौ भक्तिसंयुतः ॥२५॥ नित्यं जपपरो भूत्वा जजाप त्विदमुत्तमम्। नानायोगिसमायुक्तः शंकरेण समन्वितः ॥२६॥ विष्णुर्भानुर्विधिः शक्तिरिंद्रश्चाग्निमुखाऽमराः। नित्यं स्वस्वगृहे संस्थाः सेवंते मौद्गलं परम ॥२७॥ कश्यपाद्या मुनींद्राश्च मुनयः सिद्धमुख्यकाः। कपिलाद्या इदं नित्यं सेवंते भक्तिसंयुताः ॥२८॥ सनकाद्याश्च सेवंतो योगिनो नव एव च। नित्यं जपपराः पूर्णं सेवंते मौद्गलं मुदा ॥२९॥ नारदो गानसंयुक्तश्चचार भुवनेषु च। गायन्नित्यमिदं विप्र मौद्गलं योगशांतिदम् ॥३०॥ एवं नाना जनाः सर्वे मनवश्च महर्षयः। सेवंते नित्यमेवेदं सर्वसिद्धिप्रदायकम् ॥३१॥ व्यासः स्वयं महाभागः सेवते नित्यमादरात्। गाणेशं मौद्गलं चैव भक्तिभावसमन्वितः ॥३२॥ एवं मया न शक्यं तत् कथितुं मुनिसत्तम। भाग्यवंतो विशेषज्ञाः सेवंते मौद्गलं सदा ॥३३॥

॥ ओमिति तदात्त्वे पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे पुराणप्रशस्तिमाहात्म्यवर्णनं नाम विंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । अथ कामयुतानां यत् पुराणश्रवणे फलम् । कथयामि समासेन सर्वसिद्धिप्रदायकम् ॥१॥ अत्रिगोत्रोद्भवः कश्चिद्विप्रः सर्वार्थकोविदः । त्यक्त्वा स्वधर्मजं कर्म पापकर्मपरोऽभवत् ॥२॥ तं ज्ञात्वा पितरौ तस्य दुःखयुक्तौ बभूवतुः । सुशीला सुमुखौ नाम्ना सुमतिं वीक्ष्य दुर्मतिम् ॥३॥ सुमतिं वीक्ष्य पुत्रं तौ शिक्षयंतौ निरंतरम् । स तयोर्वचनं दुष्टो न चकार कदाचन ॥४॥ ततस्तौ दुःखसंयुक्तौ स्थितौ स्वस्याश्रमे कदा । साक्षात् मुनिवरस्तत्र भरद्वाजः समाययौ ॥५॥ संपूज्य मुनिशार्दूलं दुःखवंतावपृच्छताम् । पुत्रं सुशीलं कर्तारमुपायं सुखदायकम् ॥६॥ ततः स करुणाविष्टस्तौ जगाद महामतिः । पुत्रस्ते मौद्गलं श्रुत्वा सुशीलोऽयं भविष्यति ॥७॥ एवमुक्त्वा ययौ स्थानं भरद्वाजो महामुनिः । सुमुखः पुत्रसंयुक्तः स्त्रियाऽत्रिं प्रजगाम ह ॥८॥ तं प्रणम्य महाभागं योगींद्रं योगदायकम् । पप्रच्छ मौद्गलं कुत्र लभ्यते तद्वदस्व मे ॥९॥ तस्य तद्वचनं श्रुत्वा हर्षयुक्तो महामुनिः । अत्रिः संमान्य विप्रेशं जगाद वचनं हितम् ॥१०॥ अत्रिरुवाच । मा चिंतां कुरु पुत्र त्वं स्थीयतामाश्रमे मम । पारायणं करिष्यामि भाद्रमासेऽहमादरात् ॥११॥ तत्र त्वं मौद्गलं श्रुत्वा गच्छ पश्चात् स्वमाश्रमम् । तथेति सुमुखो हर्षात्तं प्रणम्य चकार ह ॥१२॥ अथ स्वल्पेन कालेन भाद्रनामा समाययौ । मासो मुनिगणास्तत्र श्रवणार्थं समाययुः ॥१३॥ क्षत्रियान् वैश्यकान् शूद्रांस्तान् दृष्ट्वा हर्षसंयुतः । सुमुखो विधिवत्तत्र शुश्रुवे विधिसंयुतः ॥१४॥ उपोषणपरो भूत्वा पंचम्यां ब्राह्मणैः सह । चकार पारणं सोऽपि भक्तियुक्तेन चेतसा ॥१५॥ ततस्तस्य सुतः सोऽपि सुमतिः शीलसंयुतः । बभूव धर्मसंयुक्तः स्वाचारस्थो महामतिः ॥१६॥ तत् दृष्ट्वा परमाश्चर्यं सस्त्रीकः पुत्रसंयुतः । गणेशभजने सक्तो योगिवंद्यो बभूव ह ॥१७॥ अंते गणेश्वरं प्राप्य ब्रह्मीभूतोऽभवत् द्विजः । एतत्ते कथितं विप्र शृण्वन्यच्चित्रमुत्तमम् ॥१८॥ तत्र पारायणे कश्चिद् वृषभो दुःखसंयुतः । अशक्तत्वात् स्थितो दूरं शुश्रुवे किंचिदादरात् ॥१९॥ ममार तत्र तं नेतुं गाणपत्याः समाययुः । तान् दृष्ट्वा विस्मिताः सर्वे प्रपच्छुः परिपूज्य वै ॥२०॥ विप्राद्या ऊचुः । केन पुण्येन युष्माभिर्वृषभो नीयतेऽमराः । वदंतु गाणपवराः स्वानंदे चित्रमुत्तमम् ॥२१॥ गाणेशा ऊचुः । अयं भवत्सन्निधाने पतितो दुःखसंयुतः । शुश्राव मौद्गलं पारायणमेव महर्षयः ॥२२॥ मध्ये ममार दुःखेन पीडितोऽतितरां वृषः । अधुना ब्रह्मभूतं तं करिष्यामो न संशयः ॥२३॥ मौद्गलस्य पदं श्रुत्वा लोकस्थश्चेन् मृतो भवेत् । न तस्य पुनरावृत्तिर्भविष्यति न संशयः ॥२४॥ तेषां तद्वचनं श्रुत्वा हर्षयुक्ता महर्षयः । पप्रच्छुस्तान् पुनश्चित्रं संशयेन

समन्विताः ॥२५॥ विप्रा ऊचुः । अयं वृषभयोनिस्थो वयं मानवदेहजाः । अस्माभिः कथितं सर्वं ज्ञायते वृषभेण न ॥२६॥ वृषभेण यदुक्तं तद्वचनं मानवैः कदा । ज्ञायते न विशेषेण योनिभिन्नप्रभावतः ॥२७॥ अयं वृषभयोनिस्थः परं पारायणं कथम् । श्रुत्वा स तस्य माहात्म्यं फलभोक्ता भवेत् परः ॥२८॥ गणेशा ऊचुः । श्रवणं वृषभेणैव कृतं ज्ञानविवर्जितम् । अन्यच्छन्दप्रमातृत्वं श्रद्धाहीनेन निश्चितम् ॥२९॥ ज्ञानतोऽज्ञानतो वाऽपि यथा वह्निकणो दहेत् । संपृष्टश्चेन महाभागा मौद्गलं तु तथा स्मृतम् ॥३०॥ योगामृतमयं पूर्णं मौद्गलं सर्वसंमतम् । सर्वसिद्धिप्रदं प्रोक्तं ब्रह्मीभूतकरं तथा ॥३१॥ एवमुक्त्वा ययुः सर्वे गाणेशा गणपालयम् । वृषभं गृह्य ते चित्रं ब्राह्मणा विस्मिता जगुः ॥३२॥ एवं मौद्गलजं चित्रं माहात्म्यं मुनिसत्तम । तस्य प्रभावजं तेजो वर्णितुं कः क्षमो भवेत् ॥३३॥

॥ ॐमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे पारायणवर्णनं नामैकविंशतितमोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । क्षत्रियो माधवः कश्चित् मालवे संबभूव ह । अवंतीनगरीपालः स्वधर्मनिरतः सदा ॥१॥ कांबोजः कर्णको राजा तत्र युद्धार्थमाययौ । जित्वा भूपमवंत्यां वै राज्यं चक्रे स हर्षितः ॥२॥ सस्त्रीकः पुत्रसंयुक्तः प्रधानैर्वीरमुख्यकैः । बभ्राम स वने राजा यत्र तत्र सुदुःखितः ॥३॥ ततो महावनं वीरो ददर्श व्याघ्रसंयुतम् । नानापशुयुतं तत्र प्रविवेश सुदुःखितः ॥४॥ दृष्ट्वा मुनिवरं तत्र कश्यपं सर्वदायकम् । प्रणनाम स साष्टांगं स रुरोद हि विह्वलः ॥५॥ तं तथा दुःखसंयुक्तं दृष्ट्वा पप्रच्छ कश्यपः । जगाद स यथापूर्वं वृत्तांतं शोकसंकुलः ॥६॥ ततस्तं कश्यपः प्राह मा कुरु त्वं महीपते । चिंतां शृणु स्वराज्यस्य प्रापकं तत् कुरुष्व च ॥७॥ समीपे माघमासः समागतश्च शृणुष्व तत् । मौद्गलं सिद्धिदं पारायणं पूर्णं करोम्यहम् ॥८॥ तस्य तद्वचनं श्रुत्वा हर्षयुक्तश्च माधवः । सर्वैः साकं स्थितस्तत्र पुराणश्रवणाय सः ॥९॥ तथा मुनिगणाद्यांश्च श्रवणार्थं समागतान् । क्षत्रियाद्यान् स तान् दृष्ट्वा हर्षयुक्तो बभूव ह ॥१०॥ विनायकं प्रतिपदि तदा पूज्य महामुनिः । उपोषणसमायुक्तः शुक्ले स्त्रीभिः समारभत् ॥११॥ पारायणं मौद्गलस्य मंडपे

विधिसंयुतः। भक्तियुक्तो महायोगी कश्यपः सर्वतत्त्ववित् ॥१२॥ तत्र चित्रं समुत्पन्नं तच्छृणुष्व महामुने। नकुलो भूमिसंस्थश्च शुश्राव भयसंकुलः ॥१३॥ अकस्माद् दुःखसंयुक्तो ममार स च गाणपाः। आययुस्तान् समालोक्य मुनिः पप्रच्छ कश्यपः ॥१४॥ कश्यप उवाच। किमर्थमागता नाथाः कार्यं वदत चोत्तमम्। वयं दासा गणेशस्य करिष्यामो जवान्विताः ॥१५॥ कश्यपस्य वचः श्रुत्वा जगुस्तं गणपप्रियाः। नकुलं भूमिसंस्थं तु मृतं नेतुं समागताः ॥१६॥ पारायणस्य विप्रेश मौद्गलस्याधुना द्विज। अध्यायः संश्रुतः पूर्णोऽज्ञानतो नकुलेन वै ॥१७॥ द्वितीयेऽत्र समारब्धे ज्वरेण बहुपीडितः। मृतोऽधुना ब्रह्मभूतं करिष्यामो वयं किल ॥१८॥ मौद्गलं सिद्धिदं पूर्णं श्रुतं तेन महात्मना। अंते तेन प्रभावेण जानीहि मुनिसत्तम ॥१९॥ तेषां वचनमाकर्ण्य कश्यपः सर्वसंयुतः। विस्मितस्तान् प्रणम्यैव पारायणपरोऽभवत् ॥२०॥ गाणेशा नकुलं गृह्य ययुः स्वानंदकं पुरम्। गणेश्वरं तत्र दृष्ट्वा ब्रह्मभूतो बभूव सः ॥२१॥ चतुर्भिर्दिवसैः पारायणं योगी महामतिः। कृत्वा समाप्तं विघ्नेशं पूजयामास यत्नतः ॥२२॥ ततः स पारणं चक्रे पंचम्यां सर्वसंयुतः। षष्ठ्यां स्वं स्वं स्थलं जग्मुर्ब्राह्मणाद्या महामुने ॥२३॥ माधवस्तं प्रणम्यादौ प्रधानादिभिरावृतः। निर्जगाम ततः सोऽपि महाराष्ट्रं समाययौ ॥२४॥ तत्र तस्य सखा राजा भद्रको बलसंयुतः। राज्यं चकार देशस्य स्वकीयस्य महाबलः ॥२५॥ तेन सार्धं पुनः सोऽपि माधवः शस्त्रधारकः। सैन्येन संयुतः क्रुद्धः संग्रामाय समाययौ ॥२६॥ गणेशं मनसि स्मृत्वा कश्यपं स्वगुरुं परम्। जिग्ये कांबोजराजं तं युद्धं कृत्वा सुदारुणम् ॥२७॥ पपाल भयसंयुक्तोऽभवत् कर्णः पराजितः। माधवः स्वस्य राज्यं तु चकार स सुहृद्गणः ॥२८॥ भोगान्नानाविधान् राजा बुभुजे पुत्रपौत्रवान्। गणेशमभजन्नित्यं मौद्गलं तत्तथाऽश्रृणोत् ॥२९॥ अंते जगाम विघ्नेशं ब्रह्मीभूतो बभूव ह। पारायणस्य संश्रावमाहात्म्यात् स नरोत्तमः ॥३०॥ एवं नाना जना विप्र सिद्धिं प्राप्ता न शक्यते। वक्तुं केनापि कोऽहं तु मौद्गलश्रवणेन वै ॥३१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे माधपारायणचरितवर्णनं नाम द्वाविंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । ब्राह्मणः सुमतिर्नाम कुष्ठयुक्तो बभूव ह । संभूतो गालवे वंशे पीडां लेभे सुदारुणाम् ॥१॥ सर्वांगे भक्षितः कीटैः सदा दुर्गंधसंयुतः । पूयशोणितधर्मांबैर्व्याप्तः सर्वत्र विप्रप ॥२॥ ततः सोऽपि स्वदेहस्य घातार्थं उद्यतोऽभवत् । सस्मार गणपं चित्ते विघ्नहीनार्थमादरात् ॥३॥ एतस्मिन्नंतरे तत्राजगाम द्विजसत्तमः । धौम्यः सर्वार्थवित् साक्षाज्ज्ञानवेदा इवापरः ॥४॥ तं दृष्ट्वा प्रणनामादौ रुरुदे दुःखसंयुतः । सुमतिं तं प्रहृष्यैव धौम्योऽगादीत् स सौख्यदम् ॥५॥ धौम्य उवाच । मा चिंतां कुरु मा देहघातं कुरु महामते । मौद्गलं शृणु भावेन रोगहीनो भविष्यसि ॥६॥ सर्वसिद्धिकरं पूर्णं ब्रह्मीभूतत्वदायकम् । मौद्गलं श्रवणेनैव चल शीघ्रं मया सह ॥७॥ एवमुक्त्वा जनैस्तस्य तं गृह्य मुनिसत्तमः । जगाम पुलहं धौम्यो नानामुनिजनैर्वृतम् ॥८॥ तत्र ज्येष्ठः समायातो मासः सर्वार्थसिद्धिदः । स्वल्पकालेन योगीशः पुलहो हर्षितोऽभवत् ॥९॥ शुक्लप्रतिपदि पारायणं प्राज्ञः समारभत् । मौद्गलस्य पुराणस्य नानाजनसमन्वितः ॥१०॥ उपोषणसमायुक्ता बभूवुस्ते महामुने । श्रवणे तत्पराः सर्वे पुलहश्च तथाऽभवत् ॥११॥ सुमतिर्धौम्यसंयुक्तस्तथाभूतो महामतिः । गणेशं मनसि ध्यात्वा परं शुश्राव मौद्गलम् ॥१२॥ चतुर्भिर्दिवसैः सोऽपि समाप्तं तच्चकार ह । पंचम्यां पारणं सर्वैश्चकार गणपे रतः ॥१३॥ सुमतिः कुष्ठहीनः स बभूव तत्क्षणात् मुदा । तं दृष्ट्वा हर्षसंयुक्ता विस्मितास्ते बभूविरे ॥१४॥ धौम्येनानस्य पुलहं स्वाश्रमं स समाययौ । तत्र धौम्यं प्रपूज्यादौ जगाद सुमतिर्वचः ॥१५॥ सुमतिरुवाच । अस्य देहस्य कर्ता च पिता माता महामुने । त्वमेव मे न संदेहः किं करोमि त्वदीप्सितम् ॥१६॥ देहोऽयं मे मया विप्र त्वदाधीनः कृतः सदा । शाधि मां तदहं नित्यं करिष्यामि विशेषतः ॥१७॥ धौम्य उवाच । गणेशं भज भावेन मौद्गलेन समन्वितम् । तेन मां कृतकृत्यं त्वं करिष्यसि न संशयः ॥१८॥ एवमुक्त्वा महायोगी धौम्यः स्वाश्रमगोऽभवत् । सुमतिर्गणनाथं स मौद्गलेनाऽभजत् सदा ॥१९॥ अंते ब्रह्ममयो जातो भुक्त्वा भोगान् यथेप्सितान् । एवं ज्येष्ठाभिधे मासे पारायणफलं परम् ॥२०॥ अथान्यच्छृणु धर्मज्ञ वृत्तांतं तत्र संभवम् । पुलहो हर्षसंयुक्तश्चक्रे पारायणं परम् ॥२१॥ तत्र कश्चित्तु चांडाल आययौ स यदृच्छया । दूरे स्थितः पश्यति स्म किमिदं कौतुकं महत् ॥२२॥ दूरस्थेन श्रुतं तेन श्लोकस्य पदमुत्तमम् । एकं संपूर्णभावेन भक्तसंरक्षकस्य च ॥२३॥ ततः स विस्मितो भूत्वा जगाम स्वच्छयेरितः । पापकर्मा पुनः पापं चकार विविधं मुने ॥२४॥ मृतं तं यमदूताश्च गृह्य सर्वे त्वरान्विताः । जग्मुर्देवं

प्रणम्यादौ ददुस्तं पापकारकम् ॥२५॥ तत्रोवाच महाबुद्धिश्चित्रगुप्तो यमं वचः। महापापी महाभाग चांडालोऽयं विशेषतः ॥२६॥ न पुण्यस्य कदा लेशश्चांडालेन कृतः प्रभो। मौद्गलस्य पदं नाथ श्रुतमेकमनेन च ॥२७॥ एतत् सर्वं मया तुभ्यं कथितं तस्य चेष्टितम्। कुरु यद्धर्मसंयुक्तं दंडरूपं महामते ॥२८॥ चित्रगुप्तवचः श्रुत्वा धर्मो ध्यात्वा गजाननम्। विचारमकरोच्चित्ते किं करोमि सुखप्रदम् ॥२९॥ एतस्मिन्नंतरे तत्र सत्या वाक् तमुवाच ह। प्रदर्श्य नरकानेव चांडालाय महामते ॥३०॥ संतर्ज्य स्वर्गभूमीषु स्थापयस्व यथा सुखम्। तथा चकार संहर्षाद्धर्मराजः प्रतापवान् ॥३१॥ स्वस्थाने भोगसंयुक्तं कृत्वा तं स्थाप्य सूर्यजः। संस्थितस्तत्र चित्रं वै बभूवे परमाद्भुतम् ॥३२॥ गाणेशास्तं प्रगृह्यैव ययुः स्वानंदकं पुरम्। धर्मादयस्ततः सर्वे विस्मिताः संबभूविरे ॥३३॥ एवमेकपदस्यैव मौद्गलश्लोकगस्य यत्। श्रवणेन फलं प्रोक्तमतः किं वर्णयाम्यहम् ॥३४॥ एवं ज्येष्ठाभिधे मासि श्रुत्वा पारायणं नराः। इह भुक्त्वाऽखिलान् भोगानंते स्वानंदमाययुः ॥३५॥ तत्र वक्तुं मया विप्र शक्यते न कदाचन। वर्षायुतैस्ततस्तुभ्यं कथितं लेशतः परम् ॥३६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे ज्येष्ठमासपारायणमाहात्म्यवर्णनं नाम त्रयोविंशोध्यायः॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच। चित्रं त्वं सूत वदसि न श्रुतं कुत्रचिन् मया। एकं श्लोकपदं श्रुत्वा नरो ब्रह्ममयोऽभवत् ॥१॥ अहो पापसमाचारश्चांडालः श्लोकसंभवम्। मौद्गलस्य पदं श्रुत्वा ब्रह्मभूतो बभूव ह ॥२॥ अतो मौद्गलजं पूर्णं माहात्म्यं कीदृशं भवेत्। तद्वदस्व दयासिंधो सर्वसंशयनाशनम् ॥३॥ सूत उवाच। चांडालं गृह्य गाणेशा ययुः स्वनगरं प्रति। तत् दृष्ट्वाऽऽश्चर्यसंयुक्तो यमो वेधसमागमत् ॥४॥ प्रणम्य स विधातारं जगदे वाक्यमुत्तमम्। विनयेन समायुक्तस्तेन संमानितो यमः ॥५॥ धर्म उवाच। मौद्गलस्य च माहात्म्यमद्भुतं दृश्यते मया। न दृष्टं न श्रुतं नाथ कुत्रचित् सर्वसिद्धिदम् ॥६॥ चांडालः पापकर्मा कः श्रुत्वैकं श्लोकजं पदम्। ब्रह्मभूतो बभूवाऽपि किमिदं कौतुकं विधे ॥७॥ एवं सर्वजना ब्रह्मब्रह्मज्ञानेन समन्विताः। ज्ञानयुक्ता गमिष्यंति स्वानंदं विविधात्मकाः ॥८॥ विश्वं चराचरं श्रुत्वा क्षीणं

सद्यो भविष्यति । अतो यत्नपरो भूत्वा विश्वं रक्ष सुखप्रदम् ॥९॥ माहात्म्यं कीदृशं चास्य मौद्गलस्य त्वया कृतम् । न ज्ञायते मया स्वामिन् वदाऽपारं किमात्मकम् ॥१०॥ धर्मस्य वचनं श्रुत्वा तं जगाद पितामहः । निःस्वस्य शृणु विप्रेश वचनं देवपालकम् ॥११॥ ब्रह्मोवाच । गणेशेन स्वभक्त्यर्थं रचितं मौद्गलं परम् । भक्त्या संप्रार्थितेनेदं सर्वसिद्धिप्रदायकम् ॥१२॥ तस्य माहात्म्यमुख्यं वै को जानाति रवेः सुत । किं करोमि न जानामि मौद्गलस्य प्रखंडनम् ॥१३॥ एवमुक्त्वा स्वयं ब्रह्मा देवान् सस्मार मुख्यकान् । विप्रेंद्रास्ते समागताः पप्रच्छुः कारणं परम् ॥१४॥ तेषामग्रे यथावृत्तं कथयामास विस्तरात् । धर्मेण संयुतो ब्रह्मा वृत्तांतं मौद्गलं भवम् ॥१५॥ श्रुत्वा ते खेदसंयुक्ता बभूवुर्मुनिसत्तम । तत्र विष्णुश्च तान प्राह विचार्य हितकारकम् ॥१६॥ विष्णुरुवाच । तुलां कुरु विधानस्त्वं मौद्गलेन समं भवेत् । साधनेषु यथा सर्वं हितमात्रं भविष्यति ॥१७॥ तच्छ्रुत्वा विविधान्येव साधनानि प्रगृह्य सः । एकत्र स्थापयामासैकत्र मौद्गलकं परम् ॥१८॥ तानि सर्वाणि तेनैव न समानि बभूविरे । मौद्गलेन महाभाग एकभावप्रधारणात् ॥१९॥ ततः खेदयुताः सर्वे विचारं चक्रुरादरात् । मौद्गलेन जितं सर्वं करिष्यामः किमंजसा ॥२०॥ अस्य सेवनमात्रेण जंतवो विविधात्मकाः । भुक्त्वा भोगान गमिष्यंति यथा ब्रह्मणि योगिनः ॥२१॥ स्वल्पकालेन विश्वं वै नष्टं सर्वं भविष्यति । विहारेण विहीनाश्च भवाम ह वयं ततः ॥२२॥ को विघ्नो मौद्गलस्यैव कर्तव्यो येन मानवाः । त्यक्त्वा पुराणं देवाद्याः भविष्यंत्यन्यचेतसः ॥२३॥ ततः शंभुः स्वयं प्राह भावि यत्तद्भविष्यति । मा कुरुध्वं महाविघ्नं मौद्गलस्य विचक्षणाः ॥२४॥ अस्मै विघ्नप्रदाने तु क्रोधयुक्तो गजाननः । संधक्ष्यति जगत् सर्वं सेश्वरं नात्र संशयः ॥२५॥ शिवस्य वचनं श्रुत्वा भययुक्ताः सुरर्षयः । बभूवुस्तत्र जीवस्तानुवाच गणपं स्मरन् ॥२६॥ बृहस्पतिरुवाच । गणेशेन महेशाद्या इदं रचितमुत्तमम् । विश्वं नानास्वभावस्थं मौद्गलं तु न संशयः ॥२७॥ मौद्गलं गणनाथस्य वचनं वर्तते परम् । महात्म्यांतमेवेदं विश्वं भाति निरंतरम् ॥२८॥ अन्यथा मौद्गलस्यैव कदा विघ्नं भविष्यति । तदेव न भवेन्मिथ्या वचनं मुनिसत्तमाः ॥२९॥ अतो गणेश्वरं प्रार्थ्य विघ्नं कुरुत देवपाः । मौद्गलस्य गणेशानः क्षुब्धो नात्र भविष्यति ॥३०॥ बृहस्पतेर्वचः श्रुत्वा देवा हर्षसमन्विताः । मुनयस्तं महाभागं साधु साध्वब्रुवन् वचः ॥३१॥ ततस्तं विघ्नराजं ते तुष्टुवुः करसंपुटाः । नानास्तोत्रैर्गणाध्यक्षं प्रसन्नं चक्रुरादरात् ॥३२॥ जगाद तान् स्वयं देवः स्ववाणीमयरूपधृक् । सृष्ट्वा विकल्पं देवेशा भविष्यथ सुखे रताः ॥३३॥ ततो ब्रह्मा गणेशानं स्मृत्वाऽसृजत तत्क्षणात् ।

विकल्पं संशयाकारं महातेजोयुतं खलम् ॥३४॥ तं दृष्ट्वा देवमुख्या ये देवा विप्रादयोऽपरे। सर्वस्ते संशयेनैव युक्ता विप्र बभूविरे ॥३५॥ किं मौद्गलेन विप्रेशः प्रसन्नो वा भविष्यति। गणेशो ब्रह्मणां नाथः कथं देहधरोऽभवत् ॥३६॥ रुच्यर्थं कथितं सर्वं वेदादिषु न संशयः। ब्रह्म ब्रह्मणि संस्थं तत् सर्वमान्यं विशेषतः ॥३७॥ एवमुक्त्वा ययुः सर्वे स्वे स्वे स्थाने महामुने। मोहिता मायया तस्य विकल्पस्य महाद्भुतम् ॥३८॥ किमर्थमागताः सर्वे किं कृतं सस्मरुर्न ते। विकल्पेन समायुक्ता बभूवुर्भ्रांतचेतसः ॥३९॥ ततस्ते मौद्गलं त्यक्त्वा स्थिताः सर्वे विशेषतः। नानाभावपरा विप्र चक्रुः स्वस्वक्रियां पुनः ॥४०॥ विकल्पस्तान् विलोक्यैव हर्षयुक्तो बभूव ह। प्रससार त्रिलोकेषु नानासंशयकारकः ॥४१॥ तेन सर्वे जनास्त्यक्त्वा मौद्गलं विप्र संस्थिताः। एवं क्रमेण नष्टं तत् पुराणं प्रबभूव ह ॥४२॥ अन्यानि तु पुराणानि वेदाः सर्वाणि मुख्यकाः। नष्टानि नष्टवत् कुत्र स्थितानि स्वल्पभावतः ॥४३॥ ततः कर्मविहीनं तु बभूव सचराचरम्। देवा दुःखयुताः सर्वे विकल्पं योद्धुमाययुः ॥४४॥ विकल्पेन जिताः सर्वे नष्टवीर्या बभूविरे। ततो गजाननं देवं तुष्टुवुस्तद्ध्याय ते ॥४५॥ पुनराकाशवाणीस्थो जगादैतान् गजाननः। मुद्गलाज्ञावशा भूत्वा क्रियां कुरुत मा चिरम् ॥४६॥ विकल्पो वशगस्तेन भविष्यति न संशयः। एवमुक्त्वा गणाधीशो विरराम च शौनक ॥४७॥ ततस्ते हर्षसंयुक्ताः शिवविष्णुमुखाऽमराः। कश्यपाद्या ययुस्तं तु मुद्गलं योगिनां वरम् ॥४८॥ प्रणम्य भावसंयुक्ताः पप्रच्छुः करसंपुटाः। विकल्पजयदं पूर्णमुपायं स्वहितप्रदम् ॥४९॥ तेषां वचनमाकर्ण्य प्रहस्याऽऽपूज्य तान् स्वयम्। जगाद वचनं योगी मुद्गलो मायया युतान् ॥५०॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे विकल्पविजयो नाम चतुर्विंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ मुद्गल उवाच । आदौ गणेश्वरं स्मृत्वा परं सृष्ट्वा विकल्पकम्। तेजस्विनं महाभागाः कथं नेच्छथ तं पुनः ॥१॥ शरणं मां प्रपन्नानां करिष्यामि प्रियं हि वः। स्थीयतां सन्निधानेऽत्र विकल्पः किं करिष्यति ॥२॥ महर्षयः कश्यपाद्या मुद्गलेन शिवादयः। आश्वासिताः स्थितास्तत्र सुखयुक्ता बभूविरे ॥३॥ मुद्गलस्याश्रमे तस्य प्रवेशो नैव विद्यते। विकल्पस्य महाभाग तेन निःसंशया बभुः ॥४॥ विकल्पेन च वृत्तांतो ज्ञातो देवर्षिसंभवः। क्रोधयुक्तः स्वयं हंतुमाययौ

मुद्गलाश्रमम् ॥६॥ आगतं तं समालोक्य विकल्पं भयदायकम् । देवेंद्रा मुद्गलं तत्र जगुर्भयसमन्विताः ॥६॥ देवेंद्रा ऊचुः । विकल्पः क्रोधसंयुक्त आगतः स महामते । तवाश्रमेऽधुना विप्र यत्करिष्यसि तत् कुरु ॥७॥ तेषां वचनमाकर्ण्य मुद्गलस्तानथाब्रवीत् । चिंतां मा कुरुत प्राज्ञा हनिष्यामि विकल्पकम् ॥८॥ एवमुक्त्वा स्वयं योगी मुद्गलस्तमथाऽऽययौ । विकल्पं तेजसा युक्तं सर्वसंशयकारकम् ॥९॥ उवाच तं महायोगी मुद्गलः परमार्थवित् । दयायुक्तः स्वभावेन प्रेरितो गणपेन सः ॥१०॥ मुद्गल उवाच । किमर्थमागतोऽसि त्वं विकल्पं ब्रूहि सांप्रतम् । तत्र गच्छ रुचिर्यत्र नोचेद्भस्म भविष्यसि ॥११॥ मुद्गलस्य वचः श्रुत्वा विकल्पः क्रोधसंयुतः । जगाद स महाविप्रं प्रदहन्निव तेजसा ॥१२॥ विकल्प उवाच । मां दृष्ट्वा विष्णुशंभ्वाद्या वसिष्ठाद्या महर्षयः । संशयेन समायुक्ता बभूवुस्तत्क्षणात् मुने ॥१३॥ त्वां न जानामि योगींद्रं स्थितः कुत्रासि बाडव । विजनारं वदसि मां सर्वेषां मुख्यवद्वचः ॥१४॥ मया चराचरं सर्वं मदधीनं कृतं किल । अधुना त्वां हनिष्यामि परं मद्दूषकारकम् ॥१५॥ त्वया देवेंद्रमुख्याश्च देवा मुनिसमन्विताः । विकल्पेन विहीना वै कृताः कस्माद्दमस्व माम् ॥१६॥ गर्वं हंतुं समायातं त्वदीयं मुद्गलाश्रमम् । जानीहि त्यज सर्वांस्त्वं नोचेद्भस्म भविष्यसि ॥१७॥ विकल्पस्य वचः श्रुत्वा क्रोधयुक्तो महामुनिः । सस्मार गणपं चित्ते विकल्पस्य वधाय सः ॥१८॥ तस्य स्मरणमात्रेण चित्तात् मुद्गलयोगिनः । अग्निः प्रलयकृत्तत्र निःसृतः सर्वदाहकः ॥१९॥ अग्निर्ययौ महाक्रूरं विकल्पं क्रोधसंयुतः । खलं दर्शनमात्रेण दाहयुक्तं चकार सः ॥२०॥ ततः शांत्यर्थमत्यंतं यत्नं चक्रे स शौनक । विकल्पश्च ततोऽत्यंतमग्निस्तेजोयुतोऽभवत् ॥२१॥ अनिदाहयुतः सोऽपि विकल्पः खेदसंयुतः । गर्वं त्यक्त्वा महाविप्रमनमत् मुद्गलं पुरः ॥२२॥ जगाद भयभीतः स रक्ष मां मुनिसत्तम । तेजसा ते प्रदग्धं तु शरणागतवत्सल ॥२३॥ शिवविष्णुमुखाः सर्वे विप्रा वासिष्ठमुख्यकाः । जिता मया न संदेहः स्वल्पायासेन योगिप ॥२४॥ त्वं किं साक्षाद्गणेशान आगतोऽसि न संशयः । त्वां जेतुं न समर्थोऽहमतस्त्वे शरणं गतः ॥२५॥ रक्ष रक्ष दयासिंधो दाहयुक्तं विशेषतः । तेजसा ते प्रणष्टं मां कृतमागः क्षमस्व मे ॥२६॥ विकल्पं व्याकुलं दृष्ट्वा दयायुक्तो बभूव ह । मुद्गलो गणपाज्ञानमग्निं शांतं चकार ह ॥२७॥ ततः संज्ञासमायुक्तो विकल्पस्तमुवाच ह । स्वस्थचित्तः प्रणम्यादौ मुद्गलं योगिनां वरम् ॥२८॥ विकल्प उवाच । जितोऽहं च त्वया विप्र रक्षितोऽग्नेर्भयात्तथा । अधुना ते समाधीनस्तिष्ठामि त्वत्समीपगः ॥२९॥ स्थानं देहि महाभाग तत्र स्थास्यामि निश्चलः । तवाज्ञावशगो भूत्वा

तव दासोऽहमंजसा ॥३०॥ तस्य तद्वचनं श्रुत्वा ध्यानयुक्तो बभूव ह । ज्ञात्वा विघ्नेश्वरस्यैव कृत्यं तं स मुदाऽब्रवीत् ॥३१॥ मुद्गल उवाच । योगाकारं गणेशानं न जानंति नराधमाः । देहधारिसमं तं ये मानयंति गुणोद्भवम् ॥३२॥ तेषां हृदि बहिः स्थित्वा तिष्ठ त्वं सर्वदा मुदा । नानासंशयसंयुक्तांस्तान् कुर्वन् सविशेषतः ॥३३॥ मौद्गलं संशयेनैव युक्तं कुरु मदाज्ञया । तेषां हृदि समास्थाय योगिनां गणपद्विषाम् ॥३४॥ गणेशं योगरूपं ये मानयंति विकल्पक । योगिनोऽयोगिनो वाऽपि ते त्याज्याः सर्वदा त्वया ॥३५॥ मौद्गले श्रद्धया युक्ता भविष्यंति सदा मुदा । गाणेशा योगिनो नान्ये जानीहि मम वाक्यतः ॥३६॥ एवमुक्त्वा महायोगी मुद्गलो विरराम ह । विकल्पस्तं तथेत्युक्त्वा प्रणम्य स्वस्थलं ययौ ॥३७॥ ततो हर्षयुता देवा मुनयस्तं प्रणम्य च । मुद्गलं स्वस्थलं जग्मुः कर्मयुक्ता जना बभुः ॥३८॥ तदहान् मौद्गलं विप्र सेव्यते नैव जंतुभिः । दोषयुक्तैर्विशेषेण विकल्पेन समन्वितैः ॥३९॥ कलावत्यंतभावेन मौद्गलं नष्टकं भवेत् । दोषयुक्ता जनास्तत्र भविष्यंति गृहे गृहे ॥४०॥ योगिनो मौद्गलं नित्यं सेवंते भावसंयुताः । गणेशरूपबोधे ये चतुराः सर्वपावनाः ॥४१॥ नान्ये पाखंडिनो लुब्धा नाना छद्मधरा भुवि । मोहयुक्ता विशेषेण भविष्यंति तु मौद्गलम् ॥४२॥ एवं देवैः कृतो विघ्नो गणेशानेन प्रेरितैः । मुनिभिर्मौद्गले तेनाऽभवन् जन्मयुता नराः ॥४३॥ एतत्ते कथितं सर्वं रहस्यं परमाद्भुतम् । श्रृणुयाच्छ्रावयेद्यस्तु विकल्परहितो भवेत् ॥४४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे विकल्पप्रतापखंडनं नाम पंचविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । भीमो नामाऽभवद्वैश्यः सर्वधर्मविवर्जितः । अंगदेशे महापापी दर्शनात् पुण्यनाशकृत् ॥१॥ स कदाचिद्वने संस्थो बभूवे चौर्यकारणात् । तत्राऽऽजगाम राजर्षिः सैन्ययुक्तो विदर्भपः ॥२॥ तं दृष्ट्वा त्यज्य शस्त्राणि भीमः पापपरायणः । महावनांतरं गत्वा तस्थौ प्राणपरीप्सया ॥३॥ तत्र मेधातिथिर्माघशुक्लप्रतिपदि द्विजः । प्रारभ्य मुनिसंयुक्तो मौद्गलं कथितुं रतः ॥४॥ तत्राऽऽजगाम तान् दृष्ट्वा वैश्यः पापरतो मुने । भयात् समीपगस्तेषां संस्थितः शस्त्रवर्जितः ॥५॥ राजा समाययौ तत्र ननाम मुनिपुंगवम् । मेधातिथिं ततः सर्वान् मुनीन् भावसमन्वितः ॥६॥ पुनः

प्रणम्य स्वस्थानं ययौ भानुर्विदर्भपः । वैश्यो मुनिवने तत्र सुष्वाप विनयान्वितः ॥७॥ प्रातः काले पुनः स्नात्वा कृत्वा नित्यक्रियां द्विजाः । मौद्गलं श्रोतुकामास्ते आययुर्हर्षसंयुताः ॥८॥ तैः साकं भीमवैश्योऽपि राजभीत्या समागतौ । शुश्राव मौद्गलं तत्र पुराणं विस्मितोऽभवत् ॥९॥ मौद्गलस्य पुराणस्य श्रवणेन दुरात्मनः । बुद्धिभेदो बभूवाऽपि स तत्रैव स्थितोऽभवत् ॥१०॥ विचारमकरोच्चित्ते भीमः पापपरायणः । अहो वैश्योऽहमानंदात् किं करोमि दुरात्मवान् ॥११॥ पापिनो नरकं यान्ति नरा नास्त्यत्र संशयः । नरदेहं समासाद्य धर्मं कुर्यात स मानवः ॥१२॥ एवं विचार्य तत्रैव मौद्गलश्रवणे रतः । त्यक्त्वा स्त्रीपुत्रकार्यं स गणेशे लालसोऽभवत् ॥१३॥ फाल्गुन्यां पूर्णिमायां तत् पुराणं पूर्णमाभवत् । मधातिथिः प्रतिपदि द्विजान् संभोज्य हर्षितः ॥१४॥ स कृत्वा पारणं सर्वान् विसृज्य गणपे रतः । नित्यं गणेश्वरं भक्त्या पूज्य मौद्गल-भक्तिपरोऽभवत् ॥१५॥ भीमः स्वगृहमागत्य त्यक्त्वा पापात्मकं परम् । कर्म स्वधर्मसंयुक्तो बभूव गणपे रतः ॥१६॥ मौद्गल-श्रवणेनैव सर्वपापविवर्जितः । बभूव धर्मशीलश्च गाणपत्यो महायशाः ॥१७॥ शरीरेण गणेशानमगमद्वैश्यजः परम् । ब्रह्मभूतो बभूवाऽपि दृष्ट्वा विघ्नेश्वरं मुने ॥१८॥ मौद्गलं सततं श्रुत्वा चैवं नानाजनादयः । बभूवुः पुण्यशीलाश्च किल ब्रह्मणि तन्मयाः ॥१९॥ तत्राऽहं कति ते ब्रूयां शक्तो वक्तुं न को भवेत् । नानेन सदृशं किंचिज्ज्ञानीहि त्वं महामुने ॥२०॥

॥ ॐ इति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे मार्कंडेयमार्कंडेयनामे मौद्गलपुराणश्रवणमाहात्म्यवर्णनं नाम षड्विंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । महायोगी भाद्रपदे पुलस्त्यो गणपे रतः । प्रतिपत्तो गणेशं संपूज्यारभत मौद्गलम् ॥१॥ तत्र विप्रादयो विप्र श्रवणार्थं समाययुः । यथाविधि जनाः सर्वे शुश्रुवुर्भक्तितत्पराः ॥२॥ अर्थेन संयुतं नित्यं मौद्गलं मुनिसत्तमः । कथयामास हर्षेण गणेशार्थविचक्षणः ॥३॥ तत्र सर्पो बिले संस्थः शुश्राव भयसंयुतः । कस्मिंश्चिद्दिवसे विप्र भार्गवेन प्रेरितः पुरा ॥४॥ मुनयः सुष्वुपुः सर्वे रात्रौ सर्पो बहिः शनैः । निर्जगाम ययौ मार्गे स्वेच्छया सुख-

संयुतः ॥७॥ वनस्थो नकुलः कश्चित्तं ददर्श भुजंगमम्। आययौ हंतुमावेशात्तयोर्युद्धं बभूव ह ॥६॥ नकुलेन बलाढ्येन
हतं सर्पं वनांतरे । तं गृह्य गाणपाः सद्यो ब्रह्मभूतं प्रचक्रिरे ॥७॥ तं ज्ञात्वा विस्मिताः सर्वे देवेंद्राद्या महामते। परस्परं
समूचुस्ते साश्रुनेत्रा महर्षयः ॥८॥ अहो मौद्गलमाहात्म्यं वक्तुं सर्वैर्न शक्यते । सर्पोऽज्ञानाच्च स श्रुत्वा किंचिद्ब्रह्म-
मयोऽधुना ॥९॥ संपूर्णं मौद्गलं यैस्तु संश्रुतं तैः प्रलभ्यते । न ज्ञायते विशेषेण किं विशिष्टमतः परम् ॥१०॥ संपूर्णं मौद्गलं
यैश्च संश्रुतं ते गणेश्वराः । ज्ञातव्या लोकनाथा वै पावनार्थं भवंत्यतः ॥११॥ नरजन्मधरो यः स्यान् मौद्गलं न शृणोति
चेत् । वंचितो मायया पूर्णो वृथा धिक् तस्य जीवितम् ॥१२॥ विघ्नराज नमस्तुभ्यं देहि जन्म धरातले। नित्यं मौद्गल-
संसक्तान् कुरु नो मानवान् किल ॥१३॥ धिक् स्वर्गं देवदेवेशान् यत्र कर्मफलं न च। क्रियते देवदेवेशैः कर्म तद्वयर्थतां
ययौ ॥१४॥ अहो कीटपतंगादि योनौ जन्मधरो भवेत् । भारते साधुसंगेन ब्रह्मीभूतो भविष्यति ॥१५॥ सर्पोऽयं नर-
वाक्हीनो न जानाति किमप्यहो। मनुष्यवाग्भवं भावं तथा शुश्राव मौद्गलम् ॥१६॥ तेनैव ब्रह्मभूतोऽयं ततः स्वानंदके
पुरे । किं पुनर्नरजातिस्थो प्राप्नुयान्न गजाननम् ॥१७॥ एवमुक्त्वाऽमराद्यास्तं स्वं स्वं स्थानकमाययुः। अधुना प्रकृतं वच्मि
सर्वसौख्यकरं परम् ॥१८॥ आश्विन्यां पूर्णिमायां च तत् समाप्तं बभूव ह। मौद्गलं हर्षसंयुक्ताः श्रोतारस्तं पुपूजिरे ॥१९॥
सर्वैः साकं महायोगी पारणं स चकार ह। ततः सर्वान् प्रतिपदि विससर्ज महायशाः ॥२०॥ तदाज्ञया ययुः सर्वे स्वस्व-
माश्रमकं मुने। गणेशभजने सक्ता बभूवुः सर्वभावतः ॥२१॥ इह भुक्त्वाऽखिलान् भोगानंते स्वानंदमाययुः। बभूवुर्ब्रह्म-
भूतास्ते परं दृष्ट्वा गणेश्वरम् ॥२२॥ इति ते सर्वमाख्यातं यशः सार्धैकमासजम् । मौद्गलश्रवणाज्जातं भाद्रमासादि-
संभवम् ॥२३॥ एवं त्वनंतरूपाश्च जंतवो ब्रह्म लेभिरे। न वक्तुं शक्यते तत्र मौद्गलश्रवणेन वै ॥२४॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे मुद्गलदक्षसंवादे भाद्रपदादिसार्धैकमास-
श्रवणमाहात्म्यवर्णनं नाम सप्तविंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । ब्राह्मणो वंध्यभावेन पीडितः कर्मणा पुरा । गार्ग्यवंशभवः कोऽपि नाम्ना शंभुरितीरितः ॥१॥ नानोपायाः कृतास्तेन वांध्यदोषप्रहारिणः । तथापि तस्य पुत्रो वा पुत्री द्विज बभूव न ॥२॥ ततोऽतिदुःखसंयुक्तो गौतमं स जगाम ह । सस्त्रीकः पुत्रकामार्थं तं ननाम महामतिम् ॥३॥ गौतमेन मुनींद्रेण सत्कृतः शंभुरावसत् । सेवार्थं स्वगुरोस्तत्र यत्नयुक्तो बभूव ह ॥४॥ एकदा सुखमासीनं गौतमं तं च भक्तितः । जगाद पुत्रप्राप्त्यर्थं वचनं स्वहितावहम् ॥५॥ शंभुरुवाच । नाना यत्नाः कृताः स्वामिन् पुत्रप्राप्त्यर्थमादरात् । लभ्यते नैव संतानो मया किं वद कारणम् ॥६॥ येनोपायेन मे पुत्रो भविष्यति महामते । तमुपायं वद स्वामिन् करिष्यामि त्वदाज्ञया ॥७॥ त्वं गुरुर्मे परा काष्ठा परं त्वत्तो न विद्यते । तारयस्व महाभाग वांध्यदोषसमन्वितम् ॥८॥ तस्य तद्वचनं श्रुत्वा तं जगाद महामुनिः । गौतमः सर्वतत्त्वज्ञः शंभुं दुःखसमन्वितम् ॥९॥ गौतम उवाच । मा कुरुष्व वृथा चिंतां तव पुत्रा द्विजोत्तम । भविष्यंति त्रयः प्राज्ञा वेदज्ञा गणपप्रियाः ॥१०॥ शृणु त्वं मौद्गलं मत्तः सर्वसिद्धिप्रदायकम् । तेनानंतभवस्थं ते पापं नश्येच्च तत्क्षणात् ॥११॥ पुण्यराशिः स्वयं साक्षाद्भविष्यसि च तारकः । अन्येषां नात्र संदेहः सर्वसिद्धियुतस्तथा ॥१२॥ अंते गणेश्वरं प्राप्य ब्रह्मीभूतो भविष्यसि । तिष्ठात्र ज्येष्ठमासेऽहं कथयिष्यामि मौद्गलम् ॥१३॥ एवं तस्य वचः श्रुत्वा हर्षयुक्तो बभूव ह । सुशीलया स्त्रिया सार्धं तत्रैवं संस्थितोऽभवत् ॥१४॥ ततः स्वल्पे गते काले ज्येष्ठमासः समाययौ । अन्ये मुनिगणास्तत्र श्रवणार्थं समाययुः ॥१५॥ तान् दृष्ट्वा स्त्रीसमायुक्तः शंभुश्चातीव हर्षितः । विधियुक्ततया सर्वे श्रोतारस्तत्परा बभुः ॥१६॥ ज्येष्ठे शुक्ले प्रतिपदि गौतमो योगिनां वरः । समारभत् स हर्षेण मौद्गलं सर्वसिद्धिदम् ॥१७॥ व्याख्यां चकार सर्वज्ञो मौद्गलस्य यथार्थतः । तच्छ्रुत्वा विस्मिताः सर्वे बभूवुः श्रवणे रताः ॥१८॥ नित्यं नियमसंयुक्ताः शुश्रुवुर्भक्तिसंयुताः । तत्र कस्मिन् दिने विप्र बभूव परमाद्भुतम् ॥१९॥ गर्दभस्तत्र दैवेन आययौ त्वतिदुःखितः । ज्वरेण पीडितोऽत्यंतं दूरे तस्थौ महामुने ॥२०॥ शुश्राव मौद्गलस्यैव श्लोकं ज्ञानविवर्जितः । पीडाहीनो बभूवाऽपि तत्र किंचित् स रासभः ॥२१॥ हृदा समन्वितो भूत्वा तस्थौ श्रवणलालसः । ततो गौतमविप्रेण समाप्तं तत्कृतं मुदा ॥२२॥ सर्वे स्वस्वक्रियां चक्रुः पुनः प्रातः समाययुः । गर्दभो दुःखहीनः स बभूव तत्क्षणात् मुने ॥२३॥ स ययौ स्वेच्छया युक्तः कालवेगात् ममार सः । तस्मिन् काले च तं ननुं गाणेशाः प्रययुर्मुदा ॥२४॥ तं गृह्य ब्रह्मभूतं ते चक्रुः श्रवणपुण्यतः । तं दृष्ट्वा देवविप्राद्याः स्वर्गस्था

विस्मयं ययुः ॥२५॥ अथो शृणु महाभाग गौतमो हर्षनिर्भरः । आषाढ्यां पूर्णिमायां स समाप्तं नवकार ह ॥२६॥ द्विजाद्यैः स प्रतिपदि चक्रे वै पारणं पुरा । सर्वे हर्षयुतास्तं ते नत्वा स्वस्वाश्रमं ययुः ॥२७॥ शंभुः सुशीलया सार्धं जगाम स्वाश्रयं ततः । गणेशमनजस्रित्यं ज्ञात्वा योगवपुर्धरम् ॥२८॥ ततः स्वल्पे गते काले सुशीला गर्भसंयुता । बभूव तां प्रहृष्टैवाभवच्छंभुः सुविस्मितः ॥२९॥ ततः शुभे मुहूर्ते सा सुषुवे पुत्रमुत्तमम् । सर्वलक्षणसंयुक्तं सुता एवं त्रयोऽभवन् ॥३०॥ वेदज्ञान सर्वमान्यांश्च गाणपत्यपरायणान् । तान् दृष्ट्वा विस्मितः शंभुर्गुरुं सस्मार गौतमम् ॥३१॥ मौद्गल तत्परः सोऽपि बभूव नित्यमादरात् । अंते विघ्नेश्वरं प्राप तल्लीनः प्रबभूव ह ॥३२॥ नाना जना गणेशानं लेभिरे मौद्गलस्य च । श्रवणेन च पाठेन मुने तेषु कति ब्रुवे ॥३३॥ एतत्ते कथितं विप्र ज्येष्ठात् सार्धैकमासकं । मौद्गलश्रवणस्यैव माहात्म्यं स्वल्पभावतः ॥३४॥

॥ ओमिति श्रीमदंत्ये पुराणोपनिषदि श्रीमौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे सुद्गलदक्षसंवादे महोदरचरितमाहात्म्यवर्णनं नामाष्टाविंशोऽध्यायः



॥ श्रीगणेशाय नमः ॥ सूत उवाच । राजाऽऽसीत् पुंड्रदेशस्य सुग्रीवः सर्वशास्त्रवित् । नानाधर्मपरः सोऽपि शास्त्रार्थज्ञो विचक्षणः ॥१॥ तस्य देशे ह्यनावृष्टिर्बभूव दुःखवर्धिनी । न ववर्ष कदा मेघस्ततो राजाऽतिदुःखितः ॥२॥ इंद्रस्य वरुणस्यैवानुष्ठाने तत्परोऽभवत् । ब्राह्मणैर्नित्यमत्यंतं तोषयामास मेघपम् ॥३॥ ततो वै नव वर्षापि मेघः पापेन वेष्टितः । वीक्ष्यातिदुःखसंयुक्तः सुग्रीवोऽभूत्ततो नृपः ॥४॥ राजा राज्यं परित्यज विश्वामित्रं जगाम ह । पप्रच्छ तं प्रणम्याऽसौ मेघवृष्टिकरं परम् ॥५॥ तेन संकथितं विप्र मौद्गलं शृणु भूमिप । देशे वृष्टिश्च संपूर्णा भविष्यति न संशयः ॥६॥ ततो राजा द्विजैस्तत्र लेखयित्वा च मौद्गलम् । ययौ स्वनगरं हृष्टस्तच्छुश्राव महामतिः ॥७॥ जनैः सार्धं समीपस्थैस्ततो वृष्टिर्बभूव ह । प्रारब्धे मौद्गले तत्र तत् दृष्ट्वा विस्मितो नृपः ॥८॥ सर्वे हर्षयुता लोका जाता पुंड्रनिवासिनः । राजा गणेश्वरं

नित्यमभजद्भक्तिसंयुतः ॥९॥ भाद्रे शुद्धप्रतिपदि समारभ्य स मौद्गलम् । शुश्राव नित्यमानंदात् पुराणं सर्वसिद्धिदम् ॥१०॥ पुनर्भाद्रपदं प्राप्य परां शुक्लचतुर्थिकाम् । समाप्तं तत् स पंचम्यां चक्रे वै हर्षसंयुतः ॥११॥ अतिसंहर्षितो राजा श्रावणं प्राप्य सौख्यदम् । शुक्लप्रतिपदि प्राज्ञैः प्रारभन्मौद्गलं पुनः ॥१२॥ नित्यं शुश्राव सुग्रीवो गाणपत्यपरायणः । आषाढ्यां स समाप्तं तदमायां प्रचकार ह ॥१३॥ पुनः प्रारभ्य सुग्रीवो जनैः श्रेष्ठैः समन्वितः । शुश्राव वर्षमध्ये स एवं वार्षिकमाचरत् ॥१४॥ प्रतिवर्षं महाभक्त्या शुश्रुवुः सर्वनागराः । भक्तियुक्ता गणेशानमभजन् दुःखवर्जिताः ॥१५॥ न तत्र वांध्यदोषेण युक्तः कश्चिद्बभूव ह । न रोगशोकसंयुक्तः सुग्रीवे राज्यकर्तरि ॥१६॥ सर्वसंपत्समायुक्ता जनास्तत्र बभूविरे । रोगदोषादिभिर्भावैर्हीनाश्च भयवर्जिताः ॥१७॥ ततः सर्वैः स राजर्षिर्जगाम नगरस्थितैः । गणेशं ब्रह्मभूतस्तैर्बभूव परमद्युतिः ॥१८॥ गच्छतो निजलोकं वै तस्यांगाद्वायुनाऽपरे । स्पृष्टा रौरवसंस्थास्ते पीडाहीना बभूविरे ॥१९॥ तान् गृह्य गाणपा विप्र ब्रह्मीभूतान् प्रचक्रिरे । यमाद्या विस्मिताः सर्वे प्रशशंसुश्च मौद्गलम् ॥२०॥ विप्रवार्षिकमेवं ते कथितं श्रवणस्य यत् । मौद्गलस्य हि माहात्म्यं सर्वसिद्धिप्रदायकम् ॥२१॥ सुग्रीवदेशगः कश्चिच्छ्रुत्वा वृत्तांतमद्भुतम् । कुष्ठयुक्तो ययौ तत्र पुराणश्रवणार्थतः ॥२२॥ वार्षिकं राजशार्दूलो समारभत भक्तितः । सोऽपि नित्यं प्रशुश्राव कुष्ठनाशार्थमुत्तमम् ॥२३॥ श्रुत्वा कुष्ठविहीनः स बभूव हर्षसंयुतः । जगाम स्वगृहं पत्न्यां गृहकार्यरतोऽभवत् ॥२४॥ भुक्त्वा भोगान् मनोज्ञान् सोऽन्ते जगाम गजाननम् । ब्रह्मीभूतो बभूवाऽपि श्रवणस्य फलेन वै ॥२५॥ एवं सकृत् समाश्रुत्य मौद्गलं विविधा जनाः । इह भुक्त्वाऽखिलान् भोगानंते स्वानंदमाययुः ॥२६॥ तत्रैव कति ते ब्रूयां नालं वर्षशतैरपि । अतः संक्षेपतः प्रोक्तं वर्षश्रवणजं फलम् ॥२७॥

॥ ॐतत्सदिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे वर्षेण मौद्गलश्रवणमाहात्म्यवर्णनं नामैकोनत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । राजाऽभूद्वाभ्रुवे कश्चित् सुमेधो नाम धार्मिकः । नानाधर्मपरो यज्वा दाता मानी महाबलः ॥१॥ सर्वशास्त्रार्थतत्त्वज्ञो द्विजदेवातिथिप्रियः । सप्तद्वीपाधिपो भूत्वा स चक्रे राज्यमुत्तमम् ॥२॥ एवं राज्यपरो राजा सर्वेषां हितकारकः । वार्धक्यदोषसंयुक्तो बभूवातीव दुःखितः ॥३॥ नानोपायांश्चकाराऽसौ पुत्रप्राप्त्यर्थमादरात् । नालभत पुत्रमानंददायकं दुःखितोऽभवत् ॥४॥ पत्न्या विचार्य राजाऽसौ त्यक्त्वा राज्यं तया सह । प्रयातेषु वनं घोरं ययौ शोकसमन्वितः ॥५॥ बभ्राम भ्रांतचित्तोऽसौ सुमेधा यत्र तत्र च । ततो महावनं राजा ददर्श भयदायकम् ॥६॥ मरणे निश्चयं कृत्वा प्रविवेश महावनम् । तत्र व्याला मृगा व्याघ्राः पपलुस्तं निरीक्ष्य ते ॥७॥ ततो राजा प्रियायुक्तो बभ्राम भ्रांतवत्तथा । तत्र क्रतुं ददर्शापि महायोगींद्रमुत्तमम् ॥८॥ कृतांजलिः स्त्रिया विप्रं प्रणनाम पुरः स्थितः । तुष्टाव तं विभुः पुत्रं तेजोयुक्तं प्रजापतिम् ॥९॥ संतुष्टस्तं महीपालं समाश्वास्य जगाद ह । दुःखं किं ते महीपाल किमर्थं वद चागतः ॥१०॥ राजा तस्मै स्ववृत्तांतं कथयामास विस्तरात् । तच्छ्रुत्वा ध्यानसंयुक्तो बभूव मुनिसत्तमः ॥११॥ जगाद नृपतिं विप्र क्रतुस्तं हर्षयन्निव । मौद्गलं शृणु राजंस्त्वं पुत्रयुक्तो भविष्यसि ॥१२॥ मुदितो राजशार्दूलस्तं प्रणम्य तदाज्ञया । ययौ स्वनगरं चित्रं पुरोहितमुवाच ह ॥१३॥ श्रुत्वा वृत्तं गुरुस्तस्य शांडिल्यः सर्वशास्त्रवित् । जगाद तं महीपालं हर्षनिर्भरमानसः ॥१४॥ शांडिल्य उवाच । मौद्गलं वाचयिष्यामि सर्वसिद्धिप्रदायकम् । श्रावयिष्यामि ते राजन् मा चिंतां कुरु निश्चितम् ॥१५॥ एवमुक्त्वा ययौ सोऽपि क्रतुं योगींद्रवंदितम् । तं प्रणम्य यथान्यायं मौद्गलं श्रुतवान् परम् ॥१६॥ लब्ध्वयित्वा स्वयं विप्रः शांडिल्यः सर्वतत्त्ववित् । ययौ सुमेधसं भूपं जगाद वचनं हितम् ॥१७॥ शांडिल्य उवाच । मौद्गलेन समं राजन्न किंचिद्भुवनेन परम् । शास्त्रं योगींद्रवंद्यं तत् सर्वसिद्धिप्रदायकम् ॥१८॥ क्रतोः प्रसाद-माहात्म्यात मया ज्ञातमिदं परम् । शृणु नित्यं महाराज मौद्गलं सर्वमुद्गलम् ॥१९॥ एवमुक्त्वा स्वयं विप्रः समारभत हर्षितः । मौद्गलं तं प्रणम्याऽऽदौ जगाद नृपसत्तमः ॥२०॥ सुमेधा उवाच । मुहूर्तं पश्य विप्रेश शुभदं तत्पुनः प्रभो । मौद्गलं कथयस्व त्वं सर्वसिद्धिकरं परम् ॥२१॥ शांडिल्य उवाच । क्षणभंगुरदेहोऽयं न विश्वास्यो महीपते । विप्रराजं स्मर त्वं वै तेन कालः शुभो भवेत् ॥२२॥ गाणेशं नृपशार्दूल यत्किंचित् सर्वसिद्धिदम् । तत्र द्विविधभावेन स नरोत्तम आचरेत् ॥२३॥ मुहूर्तं शुभमालोक्याथवा तं गणपं स्मरन् । समारंभन्न संदेहो मान्यत्वं तु विचारय ॥२४॥ एवमुक्तो नृपस्तेन तथेत्युक्त्वा

स्त्रिया सह । शुश्राव मौद्गलं नित्यं शांडिल्याद्धर्मसंयुतः ॥२५॥ ततः स्वल्पे गते काले गर्भयुक्तां निरीक्ष्य ताम् । पत्नीं महीपतिः सर्वैर्हर्षयुक्तो बभूव ह ॥२६॥ पुत्रं सा सुषुवे साध्वी सर्वलक्षणसंयुतम् । राजा नित्यं सुहर्षेण शुश्रुवे मौद्गलं परम् ॥२७॥ तदेकनिष्ठभावस्थो बभूव नित्यमादरात् । अंते नगरसंयुक्तो जगाम गणपं परम् ॥२८॥ तत्र दृष्ट्वा गणेशानं ब्रह्मीभूतो बभूव ह । जनैः सार्द्धं सुमेधास्तु पुराणश्रवणेन वै ॥२९॥ शांडिल्योऽपि वनं गत्वा नित्यं विघ्नेशमाभजत् । गणेशाग्रे पुराणं स कथयामास मौद्गलम् ॥३०॥ नित्यं भावसमायुक्तो मौद्गले तत्परोऽभवत् । शांतियोगयुतो भूत्वाऽसेवत्तं गणनायकम् ॥३१॥ सर्वत्र सर्वमान्यः स बभूव ब्राह्मणाग्रणीः । अंते गणेश्वरं प्राप योगिवंद्यो महायशाः ॥३२॥ तस्याश्रमो गणेशस्य क्षेत्रमासीच्च सिद्धिदम् । दर्शनात्तैर्महाविप्र सर्वसौख्यकरं परम् ॥३३॥ एवं नित्यजपे सक्ता मौद्गलस्य महामुने । इह भुक्त्वा प्रभोगांस्ते ब्रह्मभूता बभूविरे ॥३४॥

॥ ॐ तत्सदिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे मौद्गलनित्यश्रवणमाहात्म्यवर्णनं नाम त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । नानातपःपरः कुम्भः साक्षाद् द्विजवरोऽभवत् । तपसा शुद्धभावः स ब्रह्मश्रद्धापरायणः ॥१॥ शमी दमपरो भूत्वा जडोन्मत्तादिकं परम् । चचार स ततः शान्तोऽभवत् ब्रह्मणि तन्मयः ॥२॥ नामरूपात्मकानां तद्ब्रह्मासत्संज्ञकं मतम् । तज्ज्ञात्वा शांतिहीनश्च बभूव खेदसंयुतः ॥३॥ तत्रागतं स योगींद्रं याज्ञवल्क्यं प्रतापिनम् । ननाम तं महाभागं कुम्भो धर्मविदुत्तमः ॥४॥ संपूज्य हर्षसंयुक्तः प्रपच्छ विनयान्वितः । वद योगं महायोगिन शांतिदं योगिनां मतम् ॥५॥ याज्ञवल्क्य उवाच । पंचचित्तमयी बुद्धिः संयोगायोगरूपिणी । तस्यां भ्रांतिप्रदा सिद्धिर्नानासिद्धिप्रदर्शिनी ॥६॥ तत्र बिंबं गणेशस्य पतितं मोहधारकम् । बिंबभावं परित्यज्य ब्रह्मीभूतो भविष्यसि ॥७॥ तदर्थं वक्रतुंडस्याऽऽराधनं कुरु सर्वदा । तेन शांतिसमायुक्तो भविष्यसि न संशयः ॥८॥ बिंबं मायायुतं प्रोक्तं मोहितं

सिद्धिबुद्धिगम । तद्भावं हंति तुंडेन तेनायं वक्रतुंडकः ॥९॥ मायासुखं नराकारं तस्माद्भूकं परं सुखम । तयोर्ब्रह्मसमायोगे वक्रतुंडोऽयमुच्यते ॥१०॥ कंठाधो मायया युक्तो मस्तकं तद्विवर्जितम् । वक्राख्यं तस्य विप्रेश तेनाऽयं वक्रतुंडकः ॥११॥ अनेनार्थेन संयुक्तं वक्रतुंडं भजस्व च । तेन शांतिसमायुक्तो गाणपत्यो भविष्यसि ॥१२॥ एवमुक्त्वा ययौ योगी याज्ञवल्क्यो महायशाः । कुत्सो हर्षसमायुक्तो वक्रतुंडपरोऽभवत् ॥१३॥ ततः स्वल्पेन कालेन शांतिं लेभे महामुनिः । गाणपत्यस्वभावना भजत्तं वक्रतुंडकम ॥१४॥ कुत्सो नित्यं महायोगी वक्रतुंडचरित्रकम् । स्वंडं पपाठ भक्त्या स मौद्गलस्य मुहर्षितः ॥१५॥ तस्य गेहे कदाचित्तु अगमत् शूलसंयुतः । भगंदरयुतः पापी द्विज आंगिरसोद्भवः ॥१६॥ दुःखयुक्तो ननामाऽसौ कुत्सं योगविदां वरम । स्नात्वा सुष्वाप विप्रेश तस्मांनिष्येऽतिदुःखितः ॥१७॥ कुत्सो गणेशं संपूज्याऽपठत्तं वक्रतुंडगम । चरितं सोऽपि शुश्रावानायासेन गृहे स्थितः ॥१८॥ संपूर्णे संश्रुते तत्र रोगहीनो बभूव ह । प्रणम्यांगिरसस्तं च ययौ स्थानं स्वकीयकम ॥१९॥ भुक्त्वा स विविधान भोगान् जगामांते गणेश्वरम् । चित्रमांगिरसोद्भूतं पश्य शौनक ते नमः ॥२०॥ एवं नाना जनाः सिद्धिं ययुः श्रवणमात्रतः । वक्रतुंडचरित्रस्य मौद्गलस्यस्य मानद ॥२१॥ तत्रैवं कति ते ब्रूयां मया वक्तुं न शक्यते । अतः संक्षेपतः प्रोक्तं माहात्म्यं श्रवणे भवम् ॥२२॥

॥ इतिश्री श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे वक्रतुंडचरितश्रवणमाहात्म्यवर्णनं नामैकत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । पिप्पलादः पुरा कश्चिद्बभूव ब्राह्मणोत्तमः । स शैवमार्गसंयुक्तोऽभजत्तं शंकरं सदा ॥१॥ गौतमीतीरसंस्थः स क्रमतो योगसंस्थितः । बभूव सहजे संस्थः स्वाधीनत्वपरायणः ॥२॥ ततो वेदार्थजं योगं ज्ञात्वा शांतिधरं परम । सहजं मोहहीनं तत् दृष्ट्वा दुःखयुतोऽभवत् ॥३॥ जगाम गौतमं विप्रो भक्तिसंयुत आनमत् । पप्रच्छ योगशांत्यर्थमुपायं ब्रह्मदं परम् ॥४॥ जगाद गौतमो विप्रं स पृष्टश्चैकदंतकम् । ब्रह्म तस्यैव भक्त्या त्वं शांतियोग-

मवाप्स्यसि ॥५॥ यद्यन्मायाविकारैश्च संयुक्तं मुनिसत्तम। मायया सह तद्विद्धि एकशब्दप्रवाचकम् ॥६॥ मायाहीनं स्थितं यत्तन्मायिकं वा द्विजोत्तम। दंतसंज्ञं विजानीहि पदयं वेदे विचक्षण ॥७॥ तयोर्योगे गणेशान एकदंत इति श्रुतः। तं भजस्व विधानेन शांतियुक्तो भविष्यसि ॥८॥ एवमुक्त्वा महायोगी गौतमो विरराम ह। पिप्पलादश्च संनम्य ययौ स्वस्याश्रमं परम ॥९॥ तत्रस्थश्चैकदंतं सोऽभजद्भक्तिसमन्वितः। गणेशकृपया विप्रो योगशांतियुतोऽभवत ॥१०॥ ततो नित्यं महाविप्र एकदंतचरित्रकम। अपठमौद्गलं सम्यं गाणपत्यस्वभावतः ॥११॥ कस्मिंश्चित समये योगी पूजयित्वैक-दंतकम। अपठच्चरितं तस्य तस्यान्तिके सुभक्तितः ॥१२॥ तत्र पल्ली स्थिता काचित सा शुश्राव चरित्रकम। ज्वरयुक्ता महाभाग ज्वरहीना बभूव ह ॥१३॥ दर्शने गणनाथं तु जगाम चरितश्रवात। तं दृष्ट्वा ब्रह्मभूता सा बभूव चित्रमद्भुतम ॥१४॥ एवमेकरदस्यैव चरितस्य च सेवने। श्रवणेन नरा नार्यो ब्रह्मीभूता बभूविरे ॥१५॥ तेषां न शक्यते वक्तुं चरितं केनचित मुने। अतः संक्षेपतः प्रोक्तं सर्वसिद्धिप्रदायकम ॥१६॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे एकदंतचरितमाहात्म्यवर्णनं नाम द्वात्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । माध्यंदिनो महाभागो मुनिः सर्वार्थकोविदः। स्वधर्मनिरतो नित्यं नानाबलतपोन्वितः ॥१॥ स शांत्यर्थं जगामैव व्यासं सर्वज्ञमुत्तमम। तं प्रणम्य महाभागं पप्रच्छ विनयान्वितः ॥२॥ माध्यंदिन उवाच । शांत्यर्थं किं नरैः कार्यं तन्मे वद महामते। येन योगयुताः सर्वे ब्रह्मीभूता बभूविरे ॥३॥ व्यास उवाच। संयोगाऽयोगयोर्योगे ब्रह्मभूतो नरो भवेत। तेन शांतियुतो भावी सा शांतिः सर्वसंमता ॥४॥ स एव गणनाथस्तु महोदर इति स्मृतः। तं भजस्व विधानेन तदा शांतिमवाप्स्यसि ॥५॥ संयोगाऽयोगरूपः सन तयोरुदरगान परान। भुनक्ति सकलान भोगान स्मृतस्तेन महोदरः ॥६॥ ब्रह्मसु ब्रह्मसौख्यं यद्भोगरूपं प्रकीर्तितम। भुक्तो भोगः स्थितो यत्र तदेव जठरं स्मृतम् ॥७॥ जगतां

ब्रह्मणां विप्र जठरे संस्थितः सदा। गणेशो भोगभोक्ता वै कोऽपि तस्योदरे न तु ॥८॥ प्रोक्तो महोदरस्तेन वेदेषु गणनायकः। एकस्तं भज भक्त्या वै तया शांतिमवाप्स्यसि ॥९॥ एवमुक्त्वा महायोगी व्यासो योगींद्रसत्तमः। विरराम स तं नत्वा आश्रमं स्वं जगाम च ॥१०॥ महोदरचरित्रं स मौद्गलस्थं विशेषतः। सेव्ययोगपरो भूत्वाऽभजत्तं तु महोदरम् ॥११॥ तस्मै तुष्टो गणाधीशो ददौ योगं सुशांतिगम्। ततः शांतियुतो नित्यमभजद्गणनायकम् ॥१२॥ महोदरचरित्रं यदपठन्नित्यमादरात्। महायोगी स्वयं तत्र स्थापयामास विप्रपम् ॥१३॥ कदाचिद्गणराजं स पूजयित्वा पपाठ तत्। महोदरस्य माहात्म्यं तत्र चित्रं बभूव ह ॥१४॥ मंडूको दैवयोगेन शुश्रावाज्ञानसंयुतः। निर्माल्ये संस्थितस्तत्र भयभीतः समंततः ॥१५॥ ततो बहौ गते काले मृतं तं कुत्रचित् स्थले। मंडूकं च समानेतुमगमन् गाणपा मुदा ॥१६॥ संगृह्य ब्रह्मभूतं ते चक्रुरेकश्रवात् परम्। पाठस्य पश्य विप्रेश माहात्म्यं परमाद्भुतम् ॥१७॥ एवं नाना जना विप्र महोदरचरित्रकम्। संसेव्य भुक्तभोगास्तेऽभवन् ब्रह्ममयाऽमृताः ॥१८॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे महोदरचरितमाहात्म्यवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच। आश्वलायनवंशस्थो ब्राह्मणः सुरुचिः पुरा। नाम्ना स्वधर्मनिष्ठः स ब्रह्मज्ञानपरोऽभवत् ॥१॥ नानायोगक्रमे सक्तः शमी दमपरायणः। चचार योगचर्यां तामंते सहजगोऽभवत् ॥२॥ तत्र स्वाधीनतां दृष्ट्वा विस्मितः प्रययौ स्वयम्। स्वगुरुं तं प्रणम्याऽऽदौ योगं पप्रच्छ उत्तमम् ॥३॥ सुरुचिरुवाच। वद योगं महायोगिन् शांतिदं सर्वभावतः। अस्माकं त्वं परा काष्ठा गुरुवंशधरः प्रभुः ॥४॥ आश्वलायन उवाच। पैलेन कथितो योगो मह्यं शांतिप्रदः परः। तं तेऽहं कथयिष्यामि ब्रह्मीभूतप्रदायकम् ॥५॥ चित्तं पंचविधं त्यक्त्वाऽहं ब्रह्मेति प्रबोधतः। सरसं तेन शांतिस्थो भविष्यसि न संशयः ॥६॥ सरसं चित्तकं यस्मात् संभूतं यन्मयं मतम्। अंते यत्र गतं तत्त्वं गजं जानीहि मानद ॥७॥ तदेवाननकं

यस्य तं भजस्व विधाननः । गजाननं सुशांतिस्थो भविष्यस्यधुना मुने ॥८॥ एवमुक्त्वा महाविप्र आश्वलायन आदरात् । तूष्णीं स्थितः स तं नत्वा ययौ स्वस्याश्रमं पुनः ॥९॥ गजाननपरो भूत्वाऽभजत्तं नित्यमादरात् । गजाननचरित्रं सोऽपठन् मौद्गलसंस्थितम् ॥१०॥ तेन तुष्टो गणाधीशो ददौ योगं प्रशांतिदम् । भक्ताय वै सुरुचये भक्तवाञ्छाप्रपूरकः ॥११॥ ततस्तेन रहस्यं यच्चतुर्वेदसमुद्भवम् । ज्ञानं गजाननाख्यं तत् संस्थितं ब्रह्मणोदितम् ॥१२॥ गच्छंति यत्र सर्वाणि विश्वानि ब्रह्मकाणि तु । योगरूपेण यस्तेषु स गच्छतिग उच्यते ॥१३॥ सर्वगं ब्रह्म सत्प्रोक्तमृग्वेदे सारगं परम् । तदेव गश्च विज्ञेयो मुने नाम्नि गजानने ॥१४॥ जायंते विविधान्येव विश्वानि ब्रह्मकाणि च । तस्माददः स जः ख्यातोऽद्वितीयात्मक एककः ॥१५॥ आदिमध्यांतभावेषु यादृशं तादृशं भवेत् । यजुषि ब्रह्म संप्रोक्तं स्मृतोऽजः स गजानने ॥१६॥ पंचचित्तमयं सर्वं नाशवन्नात्र संशयः । नष्टं नकारगं विद्ध्याऽऽसमंतादा च तत्र वै ॥१७॥ नष्टभावेषु यस्तिष्ठेदासमंतात्तदेव तत् । ब्रह्म साम्ना समाख्यातं स्थित आनो गजानने ॥१८॥ पंचचित्तमयं सर्वं नष्टं ज्ञानव्यमंजसा । तदेव योगभावेन ब्रह्मरूपं प्रकीर्तितम् ॥१९॥ अथर्वणसमाख्यानमहमात्मा न संशयः । अज्ञानेन विनाशाख्यो न स्मृतः स गजानने ॥२०॥ एतद् ब्रह्ममुखेभ्यश्च चतुर्भ्यः सारमीरितम् । गजाननो महाविप्र चतुर्वेदात्मकः स्मृतः ॥२१॥ एवं गजाननं ज्ञात्वाऽभजत्तं सुरुचिः सदा । अपठत्तस्य माहात्म्यं तत्र चित्रं बभूव ह ॥२२॥ कपोतो वृक्षसंस्थः कः तत् शुश्राव चरित्रकम् । स रोगसंयुतः पापी रोगहीनो बभूव ह ॥२३॥ अंते गजाननं गत्वा ब्रह्मीभूतोऽभवत् मुदा । अज्ञानश्रवणेनैवाऽतः फलं किं वदामि ते ॥२४॥ एवं नाना जना खंडं यद्गजाननामकम् । श्रुत्वा पठित्वा भुक्त्वांते भोगान् ब्रह्म प्रलेभिरे ॥२५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे गजाननचरितश्रवणपठनमाहात्म्यवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । भार्गवः कपिलो नाम सर्वशास्त्रविशारदः । कपिलस्य वरेणैव समुत्पन्नः सुधर्मवित् ॥१॥ नानातपःसमायुक्तो योगनिष्ठो बभूव ह । तदर्थं शुनकं सोऽपि जगाम विनयान्वितः ॥२॥ तं प्रणम्य महात्मानं स्थित आर्जवसंयुतः । कदाचित्ते महाभागं पप्रच्छ पितरं मुदा ॥३॥ कपिल उवाच । योगशांतिप्रदं नाथ वद ब्रह्मणि तन्मयम् । त्वं नो गुरुः समाख्यानस्तारयस्व भवार्णवत् ॥४॥ शुनक उवाच । विश्वानि विद्धि तं योगं ब्रह्माणि निःसृतानि च । यदाधारेण वर्तंते ते गच्छंति यदात्मनि ॥५॥ तदेव योगदं ब्रह्म लंबोदरप्रवाचकम् । तस्योदरे स्थितं ब्रह्म विश्वं च भज तं सदा ॥६॥ तेन शांतिसमायुक्तो ब्रह्मीभूतो भविष्यसि । नान्यथा त्वं महाभाग सिद्धिबुद्धिविमोहितः ॥७॥ एवमुक्त्वा महायोगी शुनको विरराम ह । तं प्रणम्य ययौ सोऽपि स्वाश्रमं हर्षसंयुतः ॥८॥ लंबोदरचरित्रं स मौद्गलस्थं जजाप ह । गणेशं पूजयामास नित्यं भक्तिपरायणः ॥९॥ तेन तुष्टो गणाधीशो ददौ योगं सुशांतिदम् । कपिलाय स्वभक्ताय भक्तवात्सल्य-कारणात् ॥१०॥ शांतियुक्तः स्वयं योगी तज्जजाप चरित्रकम् । नित्यं पूजापरो भूत्वा लंबोदरसमीपगः ॥११॥ तत्र चित्रं कदाचिद्वै बभूव शृणु शौनक । बलीवर्दः स्थितः कश्चिद्रोगाक्रांतः पपात ह ॥१२॥ शुश्राव तच्चरित्रं स संपूर्णं ज्ञानहीनतः । सद्यो वै रोगनिर्मुक्तो बभूव हर्षसंयुतः ॥१३॥ नाजानंस्तत् महत् पुण्यं बलीवर्दः कदाचन । कालेन स मृतस्तत्र ब्रह्मीभूतो बभूव ह ॥१४॥ एवमज्ञानतो वाऽपि ज्ञानतो विविधा जनाः । ब्रह्मीभूता बभूवुश्च मया वक्तुं न शक्यते ॥१५॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे लंबोदरचरितवर्णनं नाम पंचत्रिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । अश्वत्थामा महाभागो द्रोणपुत्रः प्रतापवान् । कृपेण मातुलेनैव जगाम वनमुत्तमम् ॥१॥ भारते संस्थितं सारं ज्ञात्वा कृष्णमुखाच्युतम् । बुद्धेः परतरं ब्रह्माऽभवत्तत्रैव लालसः ॥२॥ बुद्धेः पत्युर्गणेशस्य हृदि ज्ञानं कथं भवेत् । परिपूर्णं तदर्थं स गौतमं शरणं ययौ ॥३॥ कृपस्तं विनयेनैव प्रणम्याश्रमसंस्थितः । सेवार्थं भागिनेयेन संयुक्तः परमार्थवित् ॥४॥ कदाचिद्योगिनां मध्ये गौतमः संस्थितोऽभवत् । कथयामास योगं स शांतिदं योगसेवया ॥५॥ तत्र हर्षेण संयुक्तोऽश्वत्थामा विनयान्वितः । पप्रच्छ कृपसंयुक्तः संशयस्यापनुत्तये ॥६॥ अश्वत्थामोवाच । योगप्राप्त्यर्थ-

मानंदात् कस्योपासनमाचरेत्। योगरूपस्य योगीश वद सर्वज्ञ ते नमः ॥७॥ गौतम उवाच। गणेशोपासनं मुख्यं पूर्णशांतिप्रदायकम्। योगाकारः स वै वेदे नरे गजमयत्वतः ॥८॥ पंचचित्तात्ममोहेन तेन सर्वं विमोहितम्। न जानाति परं भावं योगदं गणनायकम् ॥९॥ समोहं चित्तमुत्सृज्य स्वयं चिंतामणिर्भवेत्। तस्माद्विकटभक्त्या स लभ्यते विकटः प्रभुः ॥१०॥ पंचचित्तमयं यद्यत्तस्माद्विकटभावनः। भ्रमं त्यक्त्वा स्वचित्तस्थं तं भजस्व गजाननम् ॥११॥ तच्छ्रुत्वा विस्मिताः सर्वे मुनयस्तं प्रणम्य च। स्वस्वाश्रमं समागम्य विकटे भजने रताः ॥१२॥ अश्वत्थामा कृपश्चैव तं प्रणम्य महामतिम्। स्वस्वाश्रमं समागत्य विकटे भजने रतौ ॥१३॥ मौद्गलस्थं चरित्रं तौ विकटस्य महात्मनः। प्रपेठतुर्महाभक्त्या पूज्य नित्यं गणेश्वरम् ॥१४॥ ततः स्वल्पेन कालेन संतुष्टो विकटोऽभवत्। ददौ योगं स ताभ्यां वै पूर्णशांतिप्रदायकम् ॥१५॥ तथापि तौ महाभागौ पाठं चक्रतुरादरात्। खंडस्य विकटस्यैव विकटं पूज्य नित्यदा ॥१६॥ एकदा पाठसंयुक्तावभूतां च द्विजोत्तमौ। तत्र श्वा च कृपस्याग्रे शुश्रुवे संस्थितो महान् ॥१७॥ अश्वत्थाम्नश्च मार्जारः समीपस्थित आश्रृणोत्। तौ योगार्थविहीनौ च जातावज्ञानतः श्रवात् ॥१८॥ अंते स्वानंदगौ जातावेकश्रवणपुण्यतः। अतः कं महिमानं ते कथयामि ह्यपारकम् ॥१९॥ अश्वत्थामा कृपश्चैव स्वस्वांशे संगतौ मुदा। अंते योगयुतौ विप्र विकटे भजने रतौ ॥२०॥ शौनक उवाच। योगयुक्तौ कथं सूत स्वांशगौ तौ बभूवतुः। गणेशेन तदाकारौ महच्चित्रं वदस्व माम् ॥२१॥ सूत उवाच। देवाः कलांशभावेन भूभारहरणाय वै। भवंति मानवाद्यास्ते नानासामर्थ्यसंयुताः ॥२२॥ इह पापं यदा कृत्वा गच्छंति यमपं मृताः। पतंति नरकेष्वेव यथा दशरथादयः ॥२३॥ अथवा पुण्यमुग्रं ते कृत्वांऽते स्वर्गगा मुदा। भवंति भोगसंयुक्ता यथा रामो यमस्थले ॥२४॥ भवंति योगयुक्तास्ते यदा स्वस्वांशगास्तदा। तदाकारा गणेशानं कल्पांते संगता मुदा ॥२५॥ यथा विदुरकः सद्यः कौरवे यमदेहगः। यमाकारो गणेशानमभजद्भक्तिसंयुतः ॥२६॥ अंते योगसमायुक्तो यमः परमपावनः। ययौ गणेश्वरं विप्र ब्रह्मभूतः स्वभावतः ॥२७॥ एतत्ते कथितं पूर्णं चरित्रं श्रवणात्मकम्। विकटस्यैव खंडस्य सर्वसिद्धिप्रदायकम् ॥२८॥ एवं नानाजनाद्याश्च श्रुत्वा खंडं महाद्भुतम्। विकटस्य सुखं भुक्त्वा ब्रह्मीभूता बभूविरे ॥२९॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते दक्षमुद्गलसंवादे योगामृतार्थशास्त्रे विकटखंडमाहात्म्यवर्णनं नाम षट्त्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । बिभीषणो महाभागो लंकां प्राप्य सुहृद्वृतः । रामं पूज्यं स्वयं नित्यं भक्तियुक्तोऽभजत् परम् ॥१॥ तत्रादौ गणनाथस्य पूजनं वेदसंमतम् । विचार्य विस्मितः सोऽपि दुःखयुक्तो बभूव ह ॥२॥ धारयामास मनसि गणेशं ब्रह्मनायकम् । सर्वपूज्यं गणेशस्योच्छिष्टभुजोऽमरान् परान् ॥३॥ कदाचित्तत्र योगीशो नारदः स्वेच्छयाऽऽगतः । तं प्रणम्य प्रपूज्यैव परं पप्रच्छ हृत्स्थितम् ॥४॥ बिभीषण उवाच । गणेशोच्छिष्टभोक्तारो देवा विष्णुमुखा मुने । अग्रपूज्यप्रभावत्वात् किमिदं वेदसंमतम् ॥५॥ नारद उवाच । ब्रह्माकाराः शिवाद्याश्च नानायोगप्रधारकाः । ब्रह्माण्यत्रमुखान्येव वेदेषु कथितं बुधैः ॥६॥ तेषां स्वामी गणेशानो ब्रह्मणस्पतिसंज्ञितः । ब्रह्मणां पातृभावाद्वै पालयितृप्रभावतः ॥७॥ तेषां योगप्रदानार्थं देहधारी बभूव ह । गजाननादिचिह्नैः स संयुक्तो ब्रह्मरूपकैः ॥८॥ विघ्ना सत्तात्मकाः प्रोक्तास्तेषां स्वामी गजाननः । विघ्नैः सर्वान् प्रमथ्यैव खेलते योगरूपधृक् ॥९॥ ब्रह्माणि विघ्नयुक्तानि भवंते राक्षसाधिप । सत्यसंकल्पहीनानि तदा तमभजन् परम् ॥१०॥ पराधीनस्वभावं च जानन् तानि नित्यदा । स्वकीयं च ततः प्रीतो गणेशो जायते परः ॥११॥ ददाति योगमुख्यं स्वं गणेशस्तेभ्य आदरात् । तदा विघ्नविहीनानि भवंते वीर्यवंति तु ॥१२॥ अतो गणेश्वरः पूर्णः सर्वेषां पूर्णतां गतः । पूर्णसर्वादितां वेद ज्येष्ठराजप्रभावतः ॥१३॥ एवं विघ्नेश्वरं नित्यं भज त्वं शांतिदायकम् । रामः स एव विघ्नेशः कलांशेन न संशयः ॥१४॥ गणेशभजनं कस्य व्यभिचारो भवेन्न वै । समूहानां पतित्वात्तु समूहा विष्णुमुख्यकाः ॥१५॥ एवमुक्त्वा महायोगी नारदो गणपं स्मरन् । ययौ सोऽपि महाबुद्धिर्विचार्य गणपे रतः ॥१६॥ पपाठ विघ्नराजस्य स खंडं मौद्गलस्थितम् । नित्यं भक्तिप्रयुक्तः संपूज्य तं गणनायकम् ॥१७॥ ततः शांतिसमायुक्तो बभूवेह बिभीषणः । गणेशमभजन्नित्यं परं रामैक्यमार्गतः ॥१८॥ एकदा राक्षसाधीशो ह्यगमत् सेतुबंधनम् । महोदरं प्रपूज्यैव तत्रस्थः पाठमाकरोत् ॥१९॥ तत्र भेकी जले संस्था शुश्रुवे खंडमुत्तमम् । विघ्नराजस्य तेनैव सुखयुक्ता बभूव ह ॥२०॥ एतस्मिन्नंतरे तत्र सा सर्पेण धृताऽभवत् । ग्रस्ता ममार गाणेशैर्नीता स्वानंदके पुरे ॥२१॥ भेकीं गृह्य ब्रह्मभूतां चक्रुर्हर्षसमन्विताः । एवमज्ञाननः पुण्यं विघ्नेशचरितोद्भवम् ॥२२॥ नाना जनादयो विप्र श्रुत्वा खंडं ययुर्मुदा । स्वानंदं भुक्तभोगाश्च मया वक्तुं न शक्यते ॥२३॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे विघ्नराजखंडश्रवणपठनमाहात्म्यवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । वरतंतुर्मुनिश्रेष्ठो नानाविधतपः परः । शांतिं न तपसा लेभे ततः खेदयुतोऽभवत् ॥१॥ नश्वरं विश्वमेवं स ज्ञात्वा ब्रह्मपरोऽभवत् । तत्राऽऽजगाम पौलस्त्यो विश्रवा मुनिसत्तमः ॥२॥ तं दृष्ट्वोत्थाय विप्रेशं प्रणनाम पुपूज ह । पप्रच्छाऽऽभोज्य हर्षेण युक्तः परमपावनम् ॥३॥ वरतंतुरुवाच । त्वं साक्षाद्योगिनां वंद्यः पावनो हि समागतः । महापुण्येन ते पादपद्मं दृष्टं मया प्रभो ॥४॥ योगशांतिप्रदं ब्रूहि येन शांतो भवाम्यहम् । नश्वरं सर्वमुत्सृज्य तदर्थं लालसोऽधुना ॥५॥ विश्रवा उवाच । ब्रह्मज्ञानं विना तात न शांतिं लभते नरः । ब्रह्म नानाविधं वेदेषु प्रोक्तं वेदवादिभिः ॥६॥ तेषां पतिं गणाधीशं ब्रह्मणस्पतिसंज्ञिनम् । तं भजस्व विधानेन तदा शांतो भविष्यसि ॥७॥ विश्वं वपुः शिरो ब्रह्म गजं योगं तयोर्मतः । सिद्धिबुद्धिपतिः साक्षात् परः स्वानंदवासकृत् ॥८॥ वर्णो धूम्रायितो यत्र मनसा मुनिसत्तम । तेन धूम्राक्षरः प्रोक्तो ब्रह्मभूयप्रदायकः ॥९॥ धूम्रवर्णं गणाधीशं भज यत्नेन मानद । तस्यैव भजनं कृत्वा शांतिं प्राप्तोऽहमुत्तमाम् ॥१०॥ नान्यथा पूर्णशांतिं तु लभते कोऽपि निश्चितम् । वेदादिभिर्मुनींद्रैश्च वेदाद्यैः पश्य तं विभुम् ॥११॥ पुलस्त्येनोपदिष्टोऽहं नानायोगपरायणः । त्यक्त्वा ब्रह्माणि तन्निष्ठः सदाऽभूवं न संशयः ॥१२॥ एवमुक्त्वा महायोगी विश्रवाः स्वस्थलं ययौ । वरतंतुर्विचार्यैवं गणेशभजने रतः ॥१३॥ खंडं मौद्गलसंस्थं स धूम्रवर्णात्मकं परम् । जजाप नित्यमानंदात् पूज्य विघ्नेश्वरं परम् ॥१४॥ पूर्णशांतियुतो जातो योगींद्रः सर्वपारगः । गणेशकृपया नित्यमभजद्गणनायकम् ॥१५॥ एकदा तीर्थसंस्थः स धूम्रवर्णं पुपूज ह । तस्याग्रे नित्यकं पाठं स चक्रे धौम्रवर्णकम् ॥१६॥ तत्र काकः स्थितः सोऽपि वृक्षशाखापरायणः । शल्ययुक्तः स शुश्राव धूम्रवर्णचरित्रकम् ॥१७॥ सद्यश्च शल्यहीनः स बभूव हर्षसंयुतः । उड्डीय प्रययौ तस्माद् वृक्षात् स्वेच्छापरायणः ॥१८॥ अंते गणेश्वरं गत्वा ब्रह्मभूतो बभूव ह । अज्ञानश्रवणात् पुण्यं पश्य किं कथयाम्यहम् ॥१९॥ एवं नाना जनाः श्रुत्वा धूम्रवर्णचरित्रकम् । ब्रह्मीभूता बभूवुस्ते भुक्त्वा भोगान् विशेषतः ॥२०॥ तेषु किं ते महाविप्र कथ्यते तत्र शक्यते । अतः संक्षेपतः प्रोक्तं श्रवणस्य चरित्रकम् ॥२१॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे मुद्गलदक्षसंवादे धूम्रवर्णचरितमाहात्म्यवर्णनं नाम अष्टत्रिंशोऽध्यायः ॥

॥ श्रीगणेशाय नमः ॥ सूत उवाच । प्रह्लादो नाम विख्यातो योगी योगपरायणः । मयूरेशं समाश्रित्याऽभजत्तं भक्तिसंयुतः ॥१॥ स्वप्ने ददर्श देवेशं मयूरोपरि संस्थितम् । सिद्धिबुद्धिसमायुक्तं गजास्यं भक्तवत्सलम् ॥२॥ तं प्रणम्य ननर्ताऽसौ साश्रुनेत्रो महायशाः । तं जगाद मयूरेशो वरयस्व वरान् परान् ॥३॥ स तं प्रणम्य विघ्नेशमगदद्धर्षसंयुतः । योगशांतिप्रदां देहि भक्तिं तेऽनिनरां प्रभो ॥४॥ तस्य तद्वचनं श्रुत्वा तं जगाद गजाननः । मौद्गलं नवमं खंडं पठस्व योगप्रदायकम् ॥५॥ तेन योगींद्रवंद्यस्त्वं भविष्यसि महामते । भक्तिर्मे भविता ते तु दृढा संपूर्णभावतः ॥६॥ एवमुक्त्वांऽतर्दधेऽसौ मयूरेशो महामतिम् । संजागृतोऽभवत् सोऽपि स्मृत्वा स्वप्नं सुविस्मितः ॥७॥ ततो मौद्गलसंस्थं स खंडं योगात्मकं परम् । पपाठाऽऽलिख्य भक्त्या स नवमं नित्यमादरात् ॥८॥ योगगीतार्थकं योगमलभत्तत्प्रसादतः । ततोऽतिहर्षसंयुक्तोऽभजत्तं नवधा प्रभुम् ॥९॥ क्षेत्रसंन्याससंयुक्तो नित्यं भक्तिसमन्वितः । पपाठ पाठकृत् पूर्णं नवमं मौद्गलं स्थितम् ॥१०॥ कदा दैत्येंद्रमुख्यश्च बहुधा सिंधुसंज्ञितः । क्षेत्रमूर्तिं गणेशस्य खंडयामास संस्थिताम् ॥११॥ सिंधोश्च प्रतिमां तत्र स्थापितां दैत्यपैः पुरा । प्रह्लादो दुःखसंसक्तोऽभवद् दृष्ट्वा च शौनक ॥१२॥ क्षेत्रवासिजनाः सर्वे त्यक्त्वा क्षेत्रं मयूरकम् । प्रपलुर्भयसंयुक्ता यत्र तत्र सुदुःखिनः ॥१३॥ प्रह्लादो योगिवंद्यः स क्षेत्रसंन्यासभक्तितः । उपोषणपरो भूत्वाऽतिष्ठत्तत्रैव नित्यदा ॥१४॥ मानसीमकरोत्तत्र पूजां विघ्नेश्वरस्य सः । तस्योच्छिष्टं बुभोजैव मनसा भक्तिसंयुतः ॥१५॥ दृढाऽऽग्रहं तस्य दृष्ट्वा मयूरेशोऽमृतं सदा । भक्ततालुस्थं तु कृत्वा तोषयामास तेन तम् ॥१६॥ एवं बहौ गते काले शिवपुत्रो बभूव ह । मयूरेशो वधार्याय सिंधोर्देवर्षिभिस्तुतः ॥१७॥ स समागत्य सिंधोश्च खंडयामास मूर्तिकाम् । तत्रस्थां स्वयमेवं तु निवासमकरोत् प्रभुः ॥१८॥ दृष्ट्वा तं पूजयामास प्रह्लादो योगिनां वरः । पारणं स चकारैव हर्षनिर्भरमानसः ॥१९॥ प्रत्यक्षं गणराजस्तं प्रसन्नो वरदोऽभवत् । स वव्रे सन्निधानस्थो भजामि त्वां तथा कुरु ॥२०॥ ब्रह्मैव ब्रह्मकल्पांते मयूरेशश्चकार तम् । अन्यं सन्निधिवासस्थं गणं ब्रह्मप्रियाख्यकम् ॥२१॥ अन्यच्च शृणु विप्रेश विश्वामित्रो महामुनिः । चकार मौद्गलस्यैव भक्त्या पारायणं परम् ॥२२॥ सरठस्तत्र वृक्षस्थः शुश्रावाज्ञानभावतः । ज्वरयुक्तः कदाचिद्वै नवमं खंडमुत्तमम् ॥२३॥ सद्यो हि ज्वरहीनः स बभूवे पुण्यगौरवात् । यथेष्टं विषयान् भुक्त्वांऽते स्वानंदगतोऽभवत् ॥२४॥

गणेश्वरं तत्र दृष्ट्वा ब्रह्मीभूतो बभूव ह । एवं नाना जना ब्रह्म लेभिरे खंडसंश्रवात् ॥२५॥ कति तेषु ब्रवीम्येव केन वक्तुं न शक्यते । भुक्तिमुक्तिप्रदश्चायं खंडो नवमसंज्ञितः ॥२६॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे नवमखंडमाहात्म्यवर्णनं नामैकोनचत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ सूत उवाच । अयं ते कथितः पूर्णः खंडो योगात्मकः परः । नवमः सर्वदः साक्षात् पूर्णयोगप्रदायकः ॥१॥ एकस्य श्रवणेनैव खंडस्यास्य महामते । संपूर्णं मुद्गलस्थं यत् फलं प्राप्नोति मानवः ॥२॥ न शक्यते मया विप्र माहात्म्यं खंडसंभवम् । यत्र योगपतिः पूर्णो वर्णितो गणनायकः ॥३॥ चतुर्वेदभवं पुण्यं श्रवणेन भविष्यति । सांगैः साधनकैश्चास्य खंडस्यात्र न संशयः ॥४॥ अष्टादश पुराणान्युपपुराणानि यस्तथा । शृणुयात् स नरस्तस्मादनंतं त्वस्य संश्रवात् ॥५॥ शब्दब्रह्ममयान्नाना शास्त्राणि निःसृतानि तु । तेषां श्रवणतो जंतुरस्यानंतं फलं लभेत् ॥६॥ तीर्थानि सकलान्येव यः कुर्याद्विधिसंयुतः । तेभ्योऽनंतगुणं पुण्यमस्य श्रवणतो लभेत् ॥७॥ क्षेत्राणि विविधान्येव यः कुर्याद्भक्तिसंयुतः । तेभ्योऽस्य श्रवणेनैव लभेतासंख्यकं फलम् ॥८॥ दानानि विविधान्येव यः कुर्यात् मानवोत्तमः । अस्य श्रवणमात्रेणानंतं तेभ्यः फलं लभेत् ॥९॥ यज्ञान् कुर्याच्च संपूर्णान् यथा शास्त्रप्रमाणतः । तेभ्योऽनंतं फलं प्रोक्तमस्य श्रवणमात्रतः ॥१०॥ इष्टापूर्तादिकान्येव नाना सत्कर्मकानि यः । प्रकुर्यात स फलं तेभ्यो नरोऽनंतं लभेच्छ्रवात् ॥११॥ बहुनाऽत्र किमुक्तेन नानेन सदृशं भवेत् । साधनं योगखंडेन योगो यत्र निरूपितः ॥१२॥ संपूर्णो योगखंडस्ते कथितो व्याससर्वाणितः । अतः परं गमिष्यामि स्वाश्रमं त्वाज्ञया च ते ॥१३॥ संपूर्णं मौद्गलं तुभ्यं कथितं सर्वसिद्धिदम् । अतः परं पुराणं च नास्ति शौनक ते नमः ॥१४॥

॥ ओमिति श्रीमदांत्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खंडे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे नवमखंडमाहात्म्यवर्णनं नाम चत्वारिंशोऽध्यायः ॥



॥ श्रीगणेशाय नमः ॥ शौनक उवाच । पुराणेषु महाभाग संशयैर्विविधैः परैः । प्राप्तैस्तैः संयुतोऽहं च संस्थितः खेदसंयुतः ॥१॥ अन्यस्यैव पुराणस्य संशयाः श्रवणेन मे । गमिष्यंति महाबुद्धे विचार्यैवं स्थितोऽभवम् ॥२॥ आन्त्यं मौद्गलकं श्रुत्वा संशया मे गताः पुरा । निःसंशयः कृतः सूत त्वयाऽहं नात्र संशयः ॥३॥ एको मे संशयश्चैव हृदि तिष्ठति तं नुद । गच्छ पश्चान्निजं स्थानं धन्यं मां कुरु शांतिद ॥४॥ गणेशस्य रहस्यं यज्ज्ञानं व्यासेन धीमता । सर्वातिगं मौद्गलस्थं महच्चित्रं परात्परम् ॥५॥ ततो व्यासेन शास्त्रं तत् कृतं भारतकं परम् । धर्माधर्मव्यवस्थानं ब्रह्मसायुज्यदायकम् ॥६॥ तत्राऽऽदौ गणनाथस्य पूजनं स्मरणं कृतम् । पश्चाद्गणेश्वरस्यैव वर्णनं न कृतं किल ॥७॥ संपूर्णे भारते जाते कृतकृत्यो महामुनिः । अभवन्नात्र संदेहः किमिदं कौतुकं वद ॥८॥ शौनकस्य वचः श्रुत्वा सूतः सस्मार तं गुरुम् । तत्क्षणात्तत्र योगीशोऽभवत् व्यासः समागतः ॥९॥ तं दृष्ट्वा हर्षसंयुक्ताः सूतशौनकमुख्यकाः । उत्थायाऽऽपूज्य ते नेमुः स्थाप्य प्रांजलयोऽभवन् ॥१०॥ ततः समीपे संस्थाप्य जगाद मुनिसत्तमः । व्यासः शौनकमुख्यांस्तु ज्ञात्वा सूतप्रयोजनम् ॥११॥ व्यास उवाच । मया शास्त्रं कृतं विप्र भारतं नात्र संशयः । तत्रायं बुद्धिगः साक्षाद्वर्णितो ब्रह्मसंज्ञितः ॥१२॥ सिद्धिदो ब्रह्मरूपोऽयं मुख्यं तदेव संमतम् । विकुंठादय एवं वै नाशयुक्ताः प्रकीर्तिताः ॥१३॥ सिद्धिबुद्धिवरेणैव मोहितोऽहं न संशयः । गणेशं सर्वभावेन वर्णितुं विस्मृतोऽभवम् ॥१४॥ अन्यं ग्रंथं ततः कर्तुमुद्यतो ह्यभवं मुने । तत्राऽऽकाशभवा वाणी मामुवाच शृणुष्व तत् ॥१५॥ गणेशवर्णनं पूर्णं प्रशस्तं मा कुरुष्व वै । मोहनार्थं गणेशेन जनानां रचितं त्विदम् ॥१६॥ मुद्गलं मुनिमुख्यं च त्यक्त्वा सर्वे मुनींद्रकाः । स्पष्टं गणपते रूपं वर्णितुं न क्षमाः कदा ॥१७॥ श्रुत्वाऽहं तां नमस्कृत्य संस्थितो मौद्गले रतः । अतः संशयहीनस्त्वं मौद्गलं भज भक्तितः ॥१८॥ पुराणेषु गणेशस्य स्वरूपं वर्णितं परम् । ब्रह्मणस्पतिबोधस्य दायकं नात्र संशयः ॥१९॥ तथापि मोहिताः सर्वे विप्राद्या न गजाननम् । जानंति तादृशं तेषु सिद्धिबुद्धिवरेण ते ॥२०॥ गणेशा-वरदानेन भक्त्यै मौद्गलकं परम् । दृष्ट्वा गणेश्वरं पूर्णं ज्ञास्यंते नान्यथा क्वचित् ॥२१॥ अतो मौद्गलमेकं त्वं भज वै नित्यमादरात् । कलिदोषेण हीनः सन् सर्वं च लभसे परम् ॥२२॥ एवमुक्त्वा महायोगी व्यासस्तत्र महामतिः । विरराम च तत्रैव धूम्रवर्णः समाययौ ॥२३॥ तं दृष्ट्वोत्थाय नेमुस्ते गणेशं भक्तिसंयुताः । संपूज्य तुष्टुवुस्ते वै गाणेशै-र्गणपप्रियैः ॥२४॥ धूम्रवर्णः संजगाद तुष्टस्तान् हास्यसंयुतः । स्वभक्तान् गणनाथस्तु वचनं सुखदायकम् ॥२५॥

धूम्रवर्ण उवाच । कलेः पराक्रमः सर्वो मया संपूर्णभावतः । खंडितो मुनिमुख्याश्चाऽधुना चरत निर्भयाः ॥२६॥ एवमुक्त्वा गणाधीशस्तान् गृह्य धरणीतले । स्थापयामास धर्मेण युक्तांश्चक्रे स मानवान् ॥२७॥ जगाद मुनिमुख्यांस्तान् मौद्गलं मे रहस्यदम् । जपध्वं नित्यमानंदात्तेनाऽहं वशगो भवे ॥२८॥ नानेन सदृशं किंचित् प्रियं चोपनिषत् परम् । यत्राऽहं पंचधा संस्थो योगाकारस्वरूपधृक् ॥२९॥ पंचधा मे स्वरूपं तु मौद्गलेन प्रकाश्यते । श्रवणेन पुराणस्य पठनेन तदर्थतः ॥३०॥ मौद्गलं यत्र विप्रेशाः पठ्यते श्रूयते जनैः । तत्राहं संस्थितः सर्वैर्भक्तिग्रहणलोलुपः ॥३१॥ ब्राह्मे बुद्धि-स्थितं रूपं वर्णितं मे तदंशतः । तत्राऽहं संस्थितश्चैव निर्गुणाकृतिलक्षणः ॥३२॥ ब्रह्मांडे प्रणवाकारो नानाखेलसमन्वितः । विश्वाकारप्रभावेणांऽशेन तत्र स्थितो मुदा ॥३३॥ गाणेशे मूर्तिगोऽहं तु तयोर्ज्ञानप्रकाशकः । गजवक्त्रादिचिह्नैः संयुक्त-स्तिष्ठामि सर्वदा ॥३४॥ अन्येषु च पुराणेषु शिवविष्ण्वादिरूपधृक् । संस्थितस्तत्कलांशेन नानाभेदविहारतः ॥३५॥ मौद्गले योगरूपोऽहं तिष्ठाम्युपनिषद्रतः । सर्वेषां मे स्वरूपाणां योगस्तत्र प्रकीर्तितः ॥३६॥ तेषां प्रकाशकं पूर्णं तथा योगप्रकाशकम् । मौद्गलं मे प्रियं तस्मात्तत् समं नैव विद्यते ॥३७॥ भक्त्या संप्रार्थितोऽहं तु सृष्ट्याऽऽदौ मुनिसत्तमाः । तदा मया वरो दत्तो भक्त्यै भक्तिविवर्धनः ॥३८॥ तदर्थं मौद्गलं पूर्णं रचितं च मया पुरा । मुद्गलस्य हृदि क्षिप्तं सर्व-सौख्यप्रदायकम् ॥३९॥ मयाऽसौ प्रेरितो योगी परं दक्षाय मौद्गलम् । कथयामास संपूर्णं पुराणं मे मुदाकृती ॥४०॥ ततः शिवादिभिर्देवैर्मरीचादिमहर्षिभिः । शेषादिभिर्नरैः सर्वैः सेव्यते मे पुराणकम् ॥४१॥ न मौद्गलं विना विप्राः स्वरूपं मे यथार्थतः । ज्ञायते केनचित् क्वापि पूर्णं सर्वप्रकाशकम् ॥४२॥ अन्यत्र मे स्वरूपं तु वर्णितं पूर्णभावतः । तत्र मोहो भवेन्नूनं सिद्धिबुद्धिकृतः परः ॥४३॥ सृष्ट्याऽऽदौ सिद्धिबुद्धिभ्यां प्रार्थितोऽहं विशेषतः । जगतां मोहनार्थं च ब्रह्मणां खेलकारणात् ॥४४॥ तदा मया वरो दत्तो मौद्गलं त्यज्य मां कदा । ज्ञास्यंति न च विश्वानि तेषु ब्रह्माणि संस्थितम् ॥४५॥ अतो मां मौद्गले संस्थं भजध्वं त्वेकचेतसः । तेन मे भक्तिसंयुक्ताश्चरिष्यथ निरंतरम् ॥४६॥ नानेन सदृशं किंचित् मत्प्राप्तौ साधनं परम् । सर्वसिद्ध्यर्थमेवं तु ज्ञातव्यं द्विजसत्तमाः ॥४७॥ अस्य श्रवणमात्रेण कृतकृत्यो नरो भवेत् । न शक्यते फलं वक्तुमपारत्वात् मया कदा ॥४८॥ मौद्गलश्रवणेनैव संतुष्टोऽहं महर्षयः । दास्यामि सकलाभीष्टं वृणुध्वं निर्विशंकया ॥४९॥ शौनकाद्या ऊचुः । भक्तिं देहि त्वदीयां नो योगं शांतिप्रदायकम् । यद्यदिच्छामहे नाथ तत्तत् सिद्ध्यतु सर्वदा ॥५०॥



खण्ड ९, चित्र १३ — श्री गणेशः आत्मनः विराड्ब्रह्मस्वरूपं सर्वान् देवान् दर्शयति ।

गाणपत्यांश्च नः सर्वान कुरु त्वं सर्वदा परान्। इमान् वरान् गुणाध्यक्ष प्रार्थितान् देव देहि नः ॥५१॥ तथेति तानथोक्त्वाऽसौ गणेशो ब्रह्मनायकः। व्यासादींश्च जगादाऽसौ वृणुध्वं वाञ्छितान् वरान् ॥५२॥ तैस्तथैव गणाध्यक्षः प्रार्थितो गणपप्रियैः। तथेति तानथोक्त्वा च सूतमूचे च विघ्नपः ॥५३॥ वरान् ब्रूहि महाभाग त्वया संश्रावितं परम्। द्विजेभ्यस्तेन संतुष्टो दास्यामि स तथाऽब्रवीत् ॥५४॥ तथेति तमथोक्त्वाऽसौ धूम्रवर्णो गजाननः। अंतर्धाय स्वमात्मानं स्वानंदस्थो बभूव ह ॥५५॥ सर्वे संतुष्टचित्तास्ते स्वं स्वं स्थानं ययुस्ततः। मौद्गलं तत् समाश्रित्य गणेशमभजन् परम् ॥५६॥ इमां मुद्गलजां श्लोकैः संहितां वेदबृंहिताम्। त्रयोविंशतिसाहस्रैः सार्धैकशतसंयुतैः ॥५७॥ अष्टाविंशत्यधिकैश्च अध्यायैश्च चतुः शतैः। खंडैश्च नवभिः पूर्णां सर्वसिद्धिमयीं चिताम् ॥५८॥ मुद्गलः कथयामास सर्वेषां हितकारणात्। शब्दब्रह्म-रहस्याख्यां साक्षाद्ब्रह्मप्रदायिनीम् ॥५९॥

॥ ओमिति श्रीमदान्त्ये पुराणोपनिषदि श्रीमन्मौद्गले महापुराणे नवमे खण्डे योगचरिते योगामृतार्थशास्त्रे दक्षमुद्गलसंवादे पुराणसमाप्तिवर्णनं नामैकचत्वारिंशोऽध्यायः ॥

॥ श्रीगजाननार्पणमस्तु ॥

॥ वक्रतुंडाद्यष्टमूर्तिधरः गणेशः प्रसन्नो वरदो भवतु ॥

॥ इति श्रीमुद्गलपुराणं समाप्तम् ॥



